**अङ्गराज्** पु० अङ्गेषु तन्नामकदेशेषु राजते राज-क्विन् ७त०। अङ्गदेशाधिपे कर्णे ।

**अङ्गव** न० अङ्गं स्वावयवं वाति अन्तर्भवति अतिशोषणात् सङ्कुचिताङ्गमिव भवति अङ्ग-वा-ड । शुष्कफले ।

**अङ्गविकृति** पु० वि-कृ-क्तिन् अङ्गस्य विकृतिश्चालनादि- र्यस्मात् ५त०। स्मृगीनाडा इति ख्याते अपस्माररोगे। ६त० । अङ्गस्य विकारे स्त्री० ।

**अङ्गविक्षेप** पु० वि-क्षिप-घञ् अङ्गस्य विक्षेपः चालनं यत्र ब०। अङ्गुल्यादिविन्यासभेदेन विंशद्विधे नृत्ये । ६त०। अङ्गस्य चालनमात्रे ।

**अङ्गवैकृत** न० विकृतस्य भावः विकृत+अण् अङ्गेन अङ्ग- चेष्टया वैकृतं हृद्भावो ज्ञायते यत्र बहु० । आकार इति ख्यातायाम्–हृदयगतभावावेदकचेष्टायाम् । ६त० । अङ्गस्य विकारे न० ।

**अङ्गस्** पु० अनज-असुन् कुलञ्च । पक्षिणि इत्युज्ज्वलदत्तः ।

**अङ्गसंस्कार** पु० अङ्गं संस्क्रियतेऽत्र अङ्ग-सम्-कृ आधारे घञ् । देहसंशोधनादिसंस्कारकारके स्नाने गोधूमचूर्णा- दिनाङ्गमर्द्दने च । भावे घञ् ६त० । अङ्गस्य संस्कारे विलेपनादौ। अङ्गं संस्करोति अङ्ग-सम्-कृ-कर्त्तरि-अण् । कुङ्कुमादौ त्रि० ।

**अङ्गहार** पु० अङ्गं ह्रियते चाल्यतेऽत्र अङ्ग-हृ आधारे घञ् । अङ्गुल्यादिविन्यासभेदेन विंशद्विधे नृत्ये । भावे घञ् ६त० । अङ्गस्य हरणमात्रे ।

**अङ्गाङ्गिभावः** पु०अङ्गस्य अङ्गिनश्च भावः। गौणमुख्यभावे ।

**अङ्गाधिप** पु० अधि पा-क अङ्ग-अधिप ६त० । अङ्गदेशपतौ कर्णे । अत्र अङ्गाधिपतिरित्यपि ।

**अङ्गार** अस्त्री० अङ्ग-आरन् । अर्द्धदग्धे-अग्निसंक्रान्ते अग्निशून्ये वा आङार इति प्रसिद्धे-काष्ठखण्डे । मङ्गल ग्रहे पु० । रक्तवर्णे त्रि० ।

**अङ्गारक** पु० अङ्गार+स्वार्थे क । रक्तवर्णत्वात् मङ्गलग्रहे, कुरण्टकवृक्षे, भीमराज इति ख्याते-भृङ्गराजवृक्षे च । अल्पार्थे क । स्फुलिङ्ग इति विख्याते-अङ्गारक्षुद्रांशे ।

**अङ्गारक** न० तैलमङ्गारकं नाम सर्वज्वरविनाशनमिति वैद्यकपरिभाषिते तैलविशेषे ।

**अङ्गारकमणि** अस्त्री० अङ्गारकस्य मणिः ६त० । प्रवाले तस्य मङ्गलग्रहस्वामिकत्वस्य ज्योतिषे प्रसिद्धिः ।

**अङ्गारधानिका** स्त्री० अङ्गाराणि धीयन्तेऽस्याम् अङ्गार-धा- ल्युआधारे ल्युट् टित्वात् ङीप् ततः स्वार्थे कप् टाप्। अङ्गा- राधारे (आङ्टा) इति (धुनची) इति च प्रसिद्धे पात्रभेदे ।

**अङ्गारपरिपाचित** न० अङ्गारे (ज्वलदग्निव्याप्तकाष्ठखण्डे) परिपाच्यते परि-पच स्वार्थे णिच् क्त । कावाव इति प्रसिद्धे-पक्वमांसादौ ।

**अङ्गारपुष्प** पु० अङ्गारमिव लोहितवर्णं पुष्पं यस्य ब० । जियापुति, इति ख्याते इङ्गुदीवृक्षे ।

**अङ्गारमञ्जरी** स्त्री० अङ्गारमिव रक्तवर्णा मञ्जरी यस्याः ब० समासान्तकबभावाद्ध्रस्वत्वे संज्ञात्वात् । रक्तवर्णे-(कर- मृचा) इति ख्याते करञ्जवृक्षे ।

**अङ्गारवल्ली** स्त्री०अङ्गारमिव रक्तफलत्वात् रक्ता वल्ली क० । रक्तवर्णफलवल्ल्यां-कुँच इति प्रसिद्धायाम्,-गुञ्जालतायां करञ्जवृक्षे च ।

**अङ्गारशकटी** स्त्री० शक्नोति वोढुं शकटम्, अल्पं शकटं, शकटी,गव्यादिवत् अल्पार्थे ङीप् अङ्गारस्य शकटी ६त० । (आङ्टा) धुनाचीति च प्रसिद्धे अङ्गाराधारे पात्रभेदे ।

**अङ्गारि** स्त्री०अङ्गार+मत्वर्थे ठन् पृषोदरादित्वात् कलोपः । अङ्गाराधारे आङ्टा इति प्रसिद्धे पात्रविशेषे ।

**अङ्गारिका** स्त्री० अङ्गारं विद्यतेऽस्याः अङ्गार+मत्वर्थे टन् टाप् । आङ्टा इति ख्याते अङ्गारपात्रे ।

**अङ्गारिणी** स्त्री०अङ्गार+इनि। अङ्गारधानिकायां (आङ्टा इति ख्याते पात्रे) । अङ्गारवति त्रि० ।

**अङ्गारित** पु० अङ्गारमिवाचरतीति अङ्गार+क्विप् ततः कर्त्तरि क्त । पलाशकलिकोद्गमे । अङ्गारं करोतीत्यर्थे णिचि क्त। दग्धप्राये त्रि० ।

**अङ्गिका** स्त्री० अङ्गम् आच्छादयति अङ्ग+इनि-के स्त्रियां टाप् । आङ्राखा इति प्रसिद्धे कञ्चुकवस्त्रे ।

**अङ्गिन्** त्रि० अङ्ग+इनि । प्रधाने,अवयवविशिष्टे, देहवति च ।

**अङ्गिरस्** पु० अङ्ग-असि इरागमः । स्वनामख्याते ऋषिभेदे ब्रह्मणोमुखजाते पुत्रे ।

**अङ्गीकार** पु०अनङ्गम् अस्वकीयम् अङ्गं क्रियते अङ्ग च्वि-कृ- घञ्। स्वीकारे अभ्युपगमे ।

**अङ्गीकृत** त्रि० अङ्ग-च्वि-कृ कर्मणि क्त । अभ्युपगते स्वीकृते

**अङ्गुरि (री)** स्त्री० अङ्ग-उलि-रलयोरेकत्व स्मरणात् रत्वम् । आङुल इति प्रसिद्धायाम् हस्तपादशाखायाम् वा ङीप् अङ्गुरीवोरगच्चतेति रघुः ।

**अङ्गुरीय** न० अङ्गुलौ भवम् अङ्गुलि-छ । वालमूलादित्वात् वा रत्वम् । अङ्गुलिभूषणे आङ्टीति प्रसिद्धे ।

**अङ्गुरीयक** न० अङ्गुलौ भवम् अङ्गुलि-छ । वालमूलादित्वात्

वा स्वे स्वार्थे क । अङ्गुलिभूषणे आङ्टीति ख्याते ।

**अङ्गुल** पु० अङ्ग-उल । हस्तपदशाखायां आंगुल इति ख्यातायाम् वात्स्यायनमुनौ अङ्गुष्ठे च । यवोदरैरङ्गुलमष्टसंख्यैरिति भास्कराचार्य्योक्तेः अष्टयवोदरपरिमाणे तु न० ।

**अङ्गुलि (ली)** स्त्री० अङ्ग-उलि । हस्तपदशाखायाम् आङुल इति ख्यातायाम् । वा ङीपि अङ्गुली च । हातशुंडा इति ख्याते गजकर्णिकारवृक्षे च ।

**अङ्गुलितोरण** न० अङ्गुल्याः तोरणमिव कृतम् । चन्दनादिद्वारा कृते ललाटस्थार्द्धचन्द्राकारतिलके ।

**अङ्गुलित्र** न० अङ्गुलिं त्रायते अङ्गुलि+त्रै-क । चामाटीति प्रसिद्धे ज्याकर्षणक्षतखेदवारणार्थम् अङ्गुलिबद्धे चर्म्मणि बद्धगोधाङ्गुलित्र इति भट्टिः ।

**अङ्गुलित्राण** न० अङ्गुलिस्त्रायतेऽनेन त्रै-क ह्युत० । चामाटीति प्रसिद्धे ज्याकर्षणक्षतखेदनिवारणार्थम् अङ्गुलिबद्धे चर्म्मणि ।

**अङ्गुलिमुद्रा** स्त्री० अङ्गुल्या मुदं राति अङ्गुलि+मुद् रा-क ह्युत० । धारयितुर्नामाक्षरमुद्रासहिते आङ्टीति प्रसिद्धे अङ्गुलीभूषणे ।

**अङ्गुलिमोटन** न० अङ्गुल्योर्मोटनं मर्दनं यत्र ब० । अङ्गुलिद्वयमर्दनजाते तुड़ि इति प्रसिद्धे शब्दे ।

**अङ्गुलिषङ्गा** स्त्री० अङ्गुलौ सङ्गो यस्याः षत्वम् ब० । (याउ) इति प्रसिद्धे अङ्गुलिसंलेपकारके यवागूद्रव्ये ।

**अङ्गुलिसन्देश** पु० अङ्गुल्या अङ्गुलिध्वनिना सन्दिश्यते सं-दिश-घञ् । अङ्गुलिध्वनिद्वारा संज्ञादाने, अङ्गुलिस्फोटनमात्रेऽपि ।

**अङ्गुलिस्फोटन** न० अङ्गुल्योः स्फोटनं ताड़नं यत्र ब० । (तुड़ि) इति प्रसिद्धे अङ्गुलिद्वयमर्दनजाते शब्दे ।

**अङ्गुलीपञ्चक** न० अङ्गुलीनां पञ्चकम् पञ्चसंख्या । हस्तस्थानामङ्गुलीनां समुदाये तात्र अङ्गुष्ठ तर्ज्जनीमध्यमानामिका कनिष्ठानामिकाः । [प्रसिद्धे अङ्गुलिभूषणे ।

**अङ्गुलीयक** न० अङ्गुरीयकवत् वा रत्नाभावः । आंगुटीति

**अङ्गुलीसम्भूत** पु० अङ्गुलौ सम्भूतः सम्-भू-क्त ७त० । नखे । अङ्गुलिसम्भूतमात्रे त्रि० ।

**अङ्गुष्ठ** पु० अङ्गौ पाणौ प्राधान्येन तिष्ठति अङ्ग-स्था-क अम्बाम्बेत्यादिना षत्वम् । वृद्धाङ्गुलौ । अम्बाम्बेति सूत्रेऽङ्गुशब्दप्रयोगात् अङ्गुशब्दोऽपि हस्तवाचीति ज्ञापितम् ।

**अङ्गुष्ठमात्र** त्रि० अङ्गुष्ठ+परिमाणार्थे मात्रच् । अङ्गुष्ठमध्यपर्व्वपरिमिते । अङ्गुष्ठमात्रोह्यवरोऽपि दृष्ट इति श्रुतौ ।

**अङ्गूष** पु० अङ्ग-ऊष । नकुले बाणे च ।

**अङ्घस्** न० अङ्घ-असि । पापे ।

**अङ्घ्रि** पु० अघि गतौ इ । चरणे वृक्षमूले च ।

**अङ्घ्रि** पु० अघि गतौ क्रि । चरणे वृक्षमूले च ।

**अङ्घ्रिप** पु० अङ्घ्रिणा मूलेन पिबति सिक्तजलादिकम् पा-क ३त० । वृक्षमात्रे ।

**अङ्घ्रिपर्णिका** स्त्री० अङ्घ्रौ मूले अङ्घ्रेरारभ्य वा पर्णमस्याः ब० जातित्वात् ङीष् ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति ख्याते वृक्षे । अङ्घ्रिपर्णीत्यपि नाम ।

**अङ्घ्रिवल्लिका** स्त्री० अङ्घ्रेरारभ्य वल्लीव पर्णवत्त्वेन ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति प्रसिद्धे वृक्षे । अङ्घ्रिवल्लीत्यपि नाम ।

**अच** अविस्पष्टकथने उभय० भ्वादि० सक० सेट् । अचति ते । आचीत् आचिष्ट ।

**अच** पूजने गतौ च इदित् पर० भ्वादि० सक० सेट् । अञ्चति आञ्चीत् आनञ्च । अञ्च्यात् गतौ तु अच्यात् ।

**अच** अव्यक्तकथने इदित् उभय० भ्वादि० सक० सेट् । अञ्चति ते । आञ्चीत् आञ्चिष्ट । [चक्षुर्भिन्ने न० ।

**अचक्षुस्** त्रि० चक्ष-उसि ब० । मन्दनेत्रे नेत्रहीने च । न०त० ।

**अचण्डी** स्त्री० चडि कोपने अच् गौरादित्वात् ङीप् न०त० । शान्तस्वभावायां गवि । कोपनभिन्ने त्रि० ।

**अचर** न० न चरति चलति-चर-अच् न०त० । स्थावरे स्थितिशीले पृथिव्यादौ चराणामन्नमचरमिति मनुः । चलनशून्ये त्रि० ।

**अचल** पु० न चलति चल-अच् न०त० । पर्व्वते, गोंज इति ख्याते शङ्कौ, शिवे, ब्रह्मणि च । पृथिव्यां स्त्री० । चलनशून्ये त्रि० ।

**अचलत्विष्** पु० अचला शतधा प्रक्षालनेनापि मालिन्यानपगमात् स्थिरा त्विट् कान्तिर्यस्य ब० । कोकिले । स्थिरकान्तिमति त्रि० । कर्म्म० । स्थिरायां कान्तौ स्त्री० ।

**अचिन्त्य** न० चिन्ति-कर्म्मणि यत् न०त० । चिन्तयितुमियत्तया परिच्छेत्तुमशक्ये परब्रह्मणि । चिन्तयितुमशक्ये वस्तुमात्रे त्रि० । अचिन्त्याः खलु ये भावा इति स्मृतौ ।

**अचिर** न० चि-रक् न०त० । अल्पकाले । अल्पकालस्थायिनि द्रव्यमात्रे त्रि० ।

**अचिरद्युतिः** स्त्री० अचिरा बहुकालस्थायिनी द्युतिर्यस्या ब० । विद्युति । अल्पकालस्थायिद्युतिमति त्रि० । कर्म्म० । अल्पकालस्थायिन्यां कान्तौ स्त्री० ।

**अचिरप्रभा** स्त्री० प्र-भा अङ् अचिरा अचिरस्थायिनी प्रभा यस्याः ब० । विद्युति । च्युता दिवः स्थास्नुरिवाचिरप्रभेति भट्टिः । अल्पकालस्थायिप्रभावति त्रि० । कर्म्म० अचिरायां दीप्तौ स्त्री० ।

**अचिररोचिस्** स्त्री० अचिरं रोचिर्यस्याः ब० । विद्युति । अचिरप्रभावति त्रि० । कर्म्म० । अचिरप्रभायाम् न० ।

**अचिरांशु** स्त्री० अचिरा अंशवोऽस्याः ब० । विद्युति । अल्पकालस्थायिकिरणवति त्रि० । कर्म्म० । अचिरकिरणे पु० ।

**अचिरात्** अव्य० अचिरं अवतीति क्विप् । शीघ्रे, अविलम्बे च ।

**अचिराभा** स्त्री० अचिरप्रभावत् । आ-भा-अङ् । विद्युति

**अचेतन** त्रि० चित-णिच्-युच् चेतना ज्ञानम् ब० । चेतनाशून्ये । चित-ल्यु न०त० । ज्ञानविशिष्टभिन्ने ।

**अचेतस्** त्रि० चित-असि ब० । विवेकशून्ये, दुष्टचित्ते, चित्तशून्ये च । अव्ययी० । चित्ताभावे अव्य० ।

**अचैतन्य** त्रि० चेतनस्य भावः चेतन+यक् ब० । चैतन्यरहिते, ज्ञानशून्ये च । न०त० । ज्ञानभिन्ने न० ।

**अच्छ** अव्य० छो-क न०त० । आभिमुख्ये ।

**अच्छ** त्रि० न छ्यति छिनत्ति दृष्टिम्, न+छो क० । स्वच्छे निर्म्मले च । भल्लूके, स्फटिके च पु० ।

**अच्छभल्ल** पु० अच्छ-आभिमुख्येन भल्लते गच्छति अच्छ+भल्ल-अच् । भालूके । अत्र भल्ल इत्यपि पृथक् नाम ।

**अच्छम्** अव्य० न-छो कमुन् । आभिमुख्ये ।

**अच्छिद्र** त्रि० छिद-रक् ब० । छिद्रशून्ये, अङ्गहानिः छिद्रं तच्छून्ये वैदिककर्म्मणि च ।

**अच्छिद्रावधारण** न० अच्छिद्रतया साङ्गतयावधारणम् अव धारि-ल्युट् । कृतस्य वैदिककर्म्मणोऽच्छिद्रतया अवधारणे कृतैतत्कर्म्माच्छिद्रमस्त्वित्यभिलापरूपे ।

**अच्छोद** त्रि० अच्छम् उदकं यस्य उदकस्योदभावः । निर्म्मलजलवति तडागादौ । तन्नामकप्रसिद्धे सरसि न० ।

**अच्युत** पु० च्योतते च्युत-क न०त० । विष्णौ । च्युतिशून्ये त्रि०

**अच्युताग्रज** पु० अच्युतस्य कृष्णस्य अग्रे जायते अग्र+जन-ड ६त० । बलभद्रे ।

**अच्युताङ्गज** पु० अच्युतस्याङ्गात् जायते अङ्ग+जन-ड । ६त० । कामदेवे । तदङ्गजातमात्रे त्रि० ।

**अच्युतात्मज** पु० आत्मनोऽङ्गात् जायते जन-ड ६त० । कामदेवे ।

**अच्युतावास** पु० आ-उष्यते सेव्यतेऽत्र आ-वस-घञ् ६त० । अश्वत्थवृक्षे । अश्वत्थः सर्व्ववृक्षाणामित्युक्तेस्तस्य तत्रोपास्यत्वात्तदावासत्वम् ।

**अच्युति** स्त्री० च्यु-क्तिन् न०त० । क्षरणाभावे । ब० । नाशशून्ये त्रि० ।

**अज** गतौ क्षेपणे च भ्वादि० पर० सक० सेट् । अजति । अवैषीत् आजीत् । अजिता वेता ।

**अज** दीप्तौ इदित् चुरादि० उभय० सेट् अक० । अञ्जयति ते । आञ्जिजत् त ।

**अज** पु० न जायते जन-ड न०त० । ब्रह्मणि, विष्णौ, हरे, जीवात्मनि ईश्वरे, छागे, मेषराशौ, सूर्य्यवंशीयराजभेदे दशरथपितरि, अात् विष्णोर्जाते कामदेवे च । जन्मरहिते त्रि० । जगत्कारणे सत्त्वरजस्तमोगुणात्मके प्रधाने अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानामिति श्रुतेः । छाग्याञ्च स्त्री० ।

**अजकर्ण** पु० अजस्य कर्ण इव कर्णो यस्य ब० । छागतुल्य लम्बायमानपत्रयुक्ते पियासाल, इति ख्याते छागकर्णे, वृक्षे मरिचपत्रे च ।

**अजकर्णक** पु० अजकर्णइव कायति पत्रद्वारा प्रकाशते कै-क । पियासाल इति ख्याते वृक्षे ।

**अजकव** अस्त्री० अजो विष्णुः को ब्रह्मा च वाति शरत्वेनात्र वा+अधिकरणे क ६त० । शिवधनुषि । वावुइ इति ख्याते बर्व्वरीवृक्षे पु० ।

**अजकाव** अस्त्री० अजकौ विष्णुब्रह्माणौ अवतीति अण् उप०स० । शिवधनुषि ।

**अजक्षीर** न० अजायाः क्षीरं पुंवद्भावः । छागदुग्धे ।

**अजग** पु० अजं छागं यज्ञाङ्गत्वेन गच्छति गम-ड ६त० । विष्णौ । अजेन गन्तरि वह्नौ च ।

**अजगन्धा** स्त्री० अजस्य गन्धइव गन्धोऽस्याः । जोयानीति ख्यातायां वनयमान्याम् ।

**अजगन्धिका** स्त्री० अजस्य गन्ध इव गन्धो यस्याः ब० ततः स्वार्थे के टाप् । वावुइ इति प्रसिद्धे बर्व्वरीशाके ।

**अजगन्धिनी** स्त्री० अजस्य मेषस्य गन्धो लेशः एकदेशः शृङ्गमिति यावत् तद्वस्याः फलाकारेणास्तीति अजगन्ध+इनि ङीप् । गाडरशिङ्गा इति प्रसिद्धे अजशृङ्गीवृक्षे ।

**अजगर** पु० अजं छागं गिरति गिलति गृ अच् । वृहत्सर्पे ।

**अजगव** पु० अजगो विष्णुः शरत्वेन त्रिपुरासुरवधकालेऽस्यास्ति अजग+व । शिवधनुषि । [धनुषि ।

**अजगाव** पु० अजगं विष्णुमवति अव-अण् उप०स० । शिवधनुषि ।

**अजघन्य** त्रि० न जघन्य (अधम) न०त० । अधमभिन्ने श्रेष्ठे च ।

**अजजीविक** त्रि० जीव्यतेऽनया जीवयतीति वा जीव-

वुण्-ण्वुल् वा अजएव क्रयविक्रयादिभ्यां पालनादिना वा जीविका जीवनोपायोऽस्य ब०। छागक्रयविक्रयादिना जीविकावति।

**अजटा** स्त्री० नास्ति जटा शिफा यस्याः ब०। (भुंइआमला) इति प्रसिद्धे शिफारहिते वृक्षभेदे।

**अजडा** स्त्री० अजडयति स्पर्शमात्रादङ्गमर्द्दनार्थं चालयति न+जड-णिच् ततः अच्। आलकुशीति प्रसिद्धे वृक्षभेदे।

**अजथ्या** स्त्री० अजानां समूहः। अज+थ्यन् स्त्रीत्वात् टाप्। अजसमूहे। तद्गन्धानावर्णत्वात् स्वर्णयूथिकायाञ्च।

**अजदण्डी** स्त्री० अजस्य ब्रह्मणोदण्डोऽस्याः ब० गौरा० ङीप्। ब्रह्मदण्डीवृक्षे ब्रह्मणो ब्रह्मार्थदण्डस्य तदीयकाष्ठेन करणात्तथात्वम्।

**अजननि** स्त्री० न+जन-आक्रोशे अनि। आक्रुश्यमाने जन्माभावे। अर्थाभावे अव्ययी०। जनन्या अभावे अव्य०।

**अजन्य** स्त्री० लौकिकहेतुभिर्न जन्यते न+जन-णिच्-यत्। शुभाशुभसूचके दैवकृते भूकम्पाद्युत्पाते। जन्यभिन्ने त्रि०

**अजप** पु० असद् जपति निन्दार्थे नञ्, जप-अच्। कुपाठके। अजं पाति रक्षति अज+पा-क। छागपालके त्रि०।

**अजपा** स्त्री० प्रयत्नेन जपितुमशक्या अयत्नोच्चारिता जप-अच्। श्वासप्रश्वासयोः बहिर्गमनागमनाभ्याम् अक्षरनिष्पादनरूपे जपे, हंसः, सोऽहमिति वा मन्त्रभेदे च। जपशून्ये त्रि०।

**अजपात्** (द) पु० अजस्य पाद इव पादोऽस्य वा अन्त्याकारलोपः। रुद्रभेदे तद्देवताकत्वात् पूर्वभाद्रपदनक्षत्रे च।

**अजभक्ष** पु० अजैर्भक्ष्यतेऽसौ भक्ष घञ् कृत०। वावुइ इति प्रसिद्धे वर्व्वरीवृक्षे तत्पत्रस्याजैरतिप्रीतितो भक्ष्यते।

**अजमीढ** पु० अजो मीढः यत्र सिक्तः यत्र ब०। आजमीर इति प्रसिद्धे देशे। तद्देशाधिपे राजनि अणि। आजमीढः युधिष्ठिरे।

**अजमोदा** स्त्री० अजस्य मोद इव मोदो गन्धो यस्याः अजं मोदयति वा। मुद-घञ् कृत०। मोदि-अन् वा। उग्रगन्धवत्यां वनयमान्याम् यमानीमात्रे च।

**अजम्भ** पु० नास्ति जम्भो दन्तोऽस्य ब०। भेके तस्य दन्ताभावात्। दन्तशून्ये त्रि०।

**अजय** पु० जि-अच् न०त०। वीरभूमिनगरसन्निधाने अजय इति नामके नदविशेषे च। अजेन छागेन याति-या-क ३त०। छागवाहने वह्नौ पु०। अजेये जयशून्ये त्रि०। अव्य० जयाभावे। नास्ति जयो मादकत्वेनास्याम् सिद्धि,भाङ्ग,इति च प्रसिद्धनामिकायाम् विजयायाम् स्त्री०।

**अजय्य** त्रि० जि-शक्यार्थे यत्। जेतुमशक्ये दुर्जये शत्रौ।

**अजरा** स्त्री० जृ-अङ् न०ब०। (घृतकुमारी) इति प्रसिद्धे वृक्षे तस्य जराभावात्। जराशून्ये त्रि०। जराभावे अजरसम् अव्य०।

**अजर्य्य** न० न जीर्य्यति जृ-यत् न०त०। सौहार्दे।

**अजलोमन्** पु० अजस्य लोमेव लोम (मञ्जरी) यस्य उपमानब०। (शूकशिम्बी) इति ख्याते अजलोमवन्मञ्जरीविशिष्टे वृक्षभेदे।

**अजवीथी** स्त्री० अजेन ब्रह्मणा निर्मिता वीथी पदं ३त०। गगनसेतुरूपे(यमनाला) इति ख्याते, छायापथे। यामारभ्य अगस्त्यस्थानपर्यन्तं पितृयानपथः।

**अजशृङ्गी** स्त्री० अजस्य मेषस्य शृङ्गमिव फलमस्याः ब०। (गाड़लशिङ्गा) इति प्रसिद्धे मेषशृङ्गतुल्यफलवति वृक्षे।

**अजस्र** न०। न-जस र। सन्तते विच्छेदरहिते। तथाभूतकालस्थायिनि वस्तुमात्रे त्रि०।

**अजहत्स्वार्था** स्त्री० न जहत् स्वार्थोयाम् न+हा-शतृ २ब०। स्वार्थापरित्यागेन परार्थाववोधिकायां लक्षणायाम्। यथा श्वेतो धावतीत्यादौ श्वेतगुणापरित्यागेन तद्वति लक्षणा।

**अजहल्लिङ्ग** पु० न जहत् लिङ्गं यम् हा-शतृ २ब०। नियतलिङ्गके विशेष्यस्यान्यलिङ्गकत्वेऽपि स्वलिङ्गात्यागेन विशेषणे शब्दे। तथा चान्यत्र विशेषणस्य विशेष्यानुसारिलिङ्गत्वनियमेऽपि अस्य न तथा नियमः। यथा वेदः श्रुतिर्वा प्रमाणम्।

**अजहा** स्त्री० न जहाति शूकान्। न+हा-श। आलकुशीति ख्याते वृक्षे।

**अजागर** पु० जागृ-णिच्-अच् न जागरो यस्मात् ५ब०। सेवनेन निद्राराहित्यकारके यदसेवनात्न्यस्मिन् जागरणकर्तृत्वं नास्ति तादृशे (भीमराज) इति ख्याते भृङ्गराजे। भृङ्गराजः सुजागर इति रभसवाक्यात् तस्य तन्निद्राराहित्यकारित्वम्।

**अजाजी** स्त्री० अजेन छागेन आजीविचेयो गन्धोत्कटत्वात् त्यागो यस्याः अज-घञ् वीभावाभावः ब०। सर्व्वभक्षेणापि छागेन गन्धोत्कटतया त्यज्यमाने, जीरा इति प्रसिद्धे जीरके वृक्षे।

**अजाजीव** पु० अजैस्तद्दुग्धपोषणादिना तत्क्रयविक्रयादिना वा आजीवति। आ-जीव-अच् ३त०। छागपालके तत्क्रयविक्रयाभ्यामाजीविनि च।

**अजातककुद्** पु० न जातं ककुदमंसकूटं यस्य जन-क्त ब० ककुदशब्दस्यान्त्याकारलोपः । अपूर्णककुदवति अल्पवयस्के गवादिवत्से ।

**अजातशत्रु** पु० जातस्य जन्तमात्रस्य न शत्रुः अस्माद्भभोजीत्यादिवत् नञोव्यवहितेन शत्रुशब्देनान्वयात् असमर्थसमासः । युधिष्ठिरे राजनि । एवमजातारिरपि तत्रैव ।

**अजाति** स्त्री० जन-क्तिन् न०त० । अनुत्पत्तौ । ब० । जातिशून्ये जात्यादौ जन्मशून्ये च नित्ये त्रि० ।

**अजादनी** स्त्री० अजैस्तृणाद्यतेऽसौ अन्यस्य दुःस्पर्शत्वेनाजैरेवाद्यते इति वा अद-कर्म्मणि ल्युट् ६त० । दुरालभा इति विचिति इति च प्रसिद्धे स्पर्शेन दुःखदायके वृक्षभेदे ।

**अजानि** पु० नास्ति जाया यस्य ब० जायाया निङादेशः । जायारहिते ।

**अजानेय** पु० अजेऽपि विक्षेपेऽपि आनेयो यथास्थानं प्रापणीयो आरोही येन अज-विक्षेपे अप् वीभावाभावः आ-नी-कर्मणि यत् ततः ब० । वज्रशस्त्रप्रहारेऽपि निर्भयेन यथास्थानमारोहिणः प्रापके अश्वे, उत्तमाश्वे च ।

**अजप्रिया** स्त्री० अजानां प्रिया । कुल इति ख्याते वदरीवृक्षे ।

**अजि** पु० अज-इ । तेजसि । गतिमति त्रि० । तेन पदाजिः ।

**अजिन** न० अज-इनन् वीभावाभावः । चर्मणि ।

**अजिनपत्रा** (त्री) (त्रिका) स्त्री० अजिनं चर्मेव सुश्लिष्टं पत्रं पक्षो यस्याः ब० । चामचिका इति प्रसिद्धे पक्षिभेदे (त्री) इत्यत्र गौरादित्वात् ङीप् । ततः स्वार्थे के ह्रस्वे टापि-पत्रिका इत्यपि ।

**अजिनफला** स्त्री० अजिनं (चर्मविकारत्वात् भस्त्रा) इव फलं यस्याः अजिनपूर्व्वकत्वेन जातिलक्षणं ङीषं बाधित्वा टाप् । टेपारी इति प्रसिद्धे भस्त्राकारफले वृक्षभेदे ।

**अजिनयोनि** स्त्री० अजिनस्य चर्मणः योनिः कारणं ६त० । हरिणमात्रे ।

**अजिर** न० अज-किरन् वीभावाभावः । उठान इति ख्याते [चत्वरे ।

**अजिह्म** त्रि० हा-मन् द्वित्वालोपौ ततः न०त० । सरले

**अजिह्मग** पु० अजिह्मं सरलं गच्छति गम-ड । वाणे । सरलगामिनि त्रि० ।

**अजिह्व** पु० जि वन् हुक् च जिह्वा रसना सा नास्ति यस्य ब० । भेके । जिह्वाशून्ये त्रि० ।

**अजीर्ण** न० जॄ-भावे क्त न०त० । जठरानलमान्द्येन भुक्ताद्यादेरपाके, रोगभेदे च । कर्त्तरि क्ते जीर्णभिन्ने त्रि० ।

**अजीव** त्रि० जीव-भावे घञ् ब० । जीवनरहिते मृते शवे च ।

**अजीवनि** स्त्री० न जीव्यात् न+जीव-आक्रोशे अनि । अभिशापविषये जीवनाभावे ।

**अजेय** त्रि० जेतुमशक्ये न+जि-यत् । जयायोग्ये ।

**अजैकपाद्(द)** पु० अजस्य छागस्य एकः पाद इव पादो यस्य उपमा०ब० वा पादस्यान्त्याकारलोपः । रुद्रविशेषे, तद्दैवतके पूर्व्वभाद्रपदनक्षत्रे च ।

**अज्झूका** स्त्री० अर्जयति या सा अर्ज्जि-उक रकारस्य जत्वम् । नाट्ये नटकर्म तद्विषयकथने वेश्यायाम् ।

**अज्झटा** स्त्री० अचति दोषं नाशयति अच-क्विप् झटति संहन्यते झट्-अच् ततः कर्म्म० । (भुंइ आमला) इति प्रसिद्धे वृक्षे ।

**अज्ञ** त्रि० न जानाति न+ज्ञा-क । ज्ञानशून्ये,मूर्खे, अल्पज्ञे च

**अज्ञान** न० ज्ञा-भावे ल्युट् न०त० । ज्ञानविरोधिनि ज्ञाननाम्ने (अविद्या) इति वेदान्तप्रसिद्धे जगत्कारणे, ज्ञानाभावे च । ब० । ज्ञानशून्ये त्रि० ।

**अञ्चति** पु० अन्च-अति । वायौ ।

**अञ्चल** पु० अन्च-अलच् । प्रान्तभागे वस्त्रप्रान्ते च ।

**अञ्चित** त्रि० अन्च-क्त । पूजिते,आकुञ्चिते च । अञ्चितसव्यपादमिति भट्टिः ।

**अञ्चितभ्रु** स्त्री० अञ्चिता पूजिता वक्रीकृता वा भ्रूर्यया । सुन्दरयोषिति वक्रीकृतभ्रुवि च स्त्रियाम् । कर्म्म० (भ्रू) तथा भूतभ्रूलतायाम् स्त्री० ।

**अञ्ज** (न्ज) मिश्रणे गतौ व्यक्तीकरणे च रुधादि० पर० सक० वेट् । अनक्ति । आञ्जीत् । अञ्जिता अङ्क्ता । वि-व्यक्तीकरणे व्यनक्ति कालवित्तयेऽपि योग्यतामिति माघः ।

**अञ्जन** न० अज्यतेऽनेन करणे ल्युट् । कज्जले । भावे ल्युट् । मिश्रीकरणे, गमने,मालिन्ये, व्यक्तीकरणे च । कर्त्तरि ल्यु । उत्तरदिशोहस्तिन्यां हनुमतो-मातरि च स्त्री० । णिचि युच् । शक्तिलक्षणाभिन्ने शक्यलक्ष्यान्यार्थबोधके शब्दव्यापारे,स्त्री० । अन्यार्थधीकृत्व्याप्टतिरञ्जनेति काव्यप्रकाशः ।

**अञ्जनकेशी** स्त्री० अञ्जनमिव केशो यस्याः ५त० । केशसंस्कारके हट्टविलासिनीनामके गन्धद्रव्ये । यत्संयोगात् केशस्य कृष्णता स्यात् ।

**अञ्जनाधिका** स्त्री० अञ्जनादधिका कृष्णत्वात् ५त० । (आजनाइ) इति ख्याते कीटभेदे ।

**अञ्जनावती** स्त्री० अञ्जनं विद्यतेऽस्याः अधिककृष्णवर्णत्वात् अञ्जन+मतुप् वत्वं दीर्घश्च । ईशानकोणस्य हस्तिन्याम् ।

**अञ्जनिका** स्त्री० अञ्जना स्वार्थे के टाप् कापि पूर्व्वाकारस्य

इत्त्वम् । (आजनाइ) इति प्रसिद्धे अञ्जनाख्ये कीटभेदे ।

**अञ्जनी** स्त्री० अज्यते चन्दनकुङ्कुमादिभिरसौ अनज-कर्मणि ल्युट् ङीप् । कुङ्कुमाद्यनुलिप्तायाम् स्त्रियाम् । करणे ल्युटि कटुकाद्रव्ये, कालाञ्जनद्रव्ये च ।

**अञ्जलि** पु० अनज-अलि । संयुतकरपुटे, कुडवपरिमाणे च ।

**अञ्जलिका** स्त्री० अञ्जलिरिव कायति प्रकाशते अञ्जलि+कै-टाप् । बालमूषिकायाम् ।

**अञ्जलिकारिका** स्त्री० अञ्जलेः कारिका करणं कृ-धात्वर्थनिर्द्देशे ण्वुल् । कृञ्जलिकरणे अञ्जलेरिवकारिका स्पर्शमात्रेण पत्रपुटस्य संपुटीकरणात् कृ-ण्वुल् इत० । लजालु इति ख्यातायाम् लज्जाशीललतायाम् सा हि स्पर्शमात्रात् सङ्कोचेन पत्रपुटं संपुटं कुर्व्वती अञ्जलिमिव करोति । अञ्जलेः कारः करणं नित्ययोगेन अस्त्यस्याः । कृ-भावे घञ् इत० ततः नित्ययोगे मत्वर्थीयः ठन् ठस्येकः टाप् । प्रतिमायां तस्यां हि यत् निर्म्माणसमये अञ्जलिकरणं तत् नित्ययोगेन तिष्ठति । अञ्जलि+कृ-कर्त्तरि ण्वुल् । विनयेनाञ्जलिकारके त्रि० ।

**अञ्जस** त्रि० अनज-असच् । सरले ।

**अञ्जसा** अव्य०अनज-भावे अच् अञ्जं गतिं विलम्बं वा स्यति सो-क्विप् । विलम्बाद्यमे शैघ्रे याथार्थ्ये च ।

**अट** गतौ भ्वादि० सक० पर० सेट् । अटति आटीत् ।

**अटनि** (नी) द्वि० अटति मौर्व्वीम् अट-अनि वा ङीप् । धनुरग्रे गुणारोपणस्थाने ।

**अटरूष** पु० अटति भ्रमति अट-अच् तं रोषति हिनस्ति रुष-क अटद्भिर्वा रुष्यते न युज्यते रुष-क । (वासक) इति ख्याते वृक्षे । [ङीपि दीर्घता । वने ।

**अटवि** (वी) स्त्री० अटन्ति चरमे वयसि यत्र अट-अवि वा

**अटाट्या** स्त्री० अट-यङ्-भावे अ स्त्रीत्वात् टाप् । परिभ्रमणे वृथागमने च ।

**अट्ट** अतिक्रमे वधे च भ्वादि० आत्म० सक० सेट् । अट्टते । आट्टिष्ट । [आट्टिटत् त ।

**अट्ट** अनादरे चुरादि० उभय० सक० सेट् । अट्टयति ते ।

**अट्ट** पु० अट्टयति अनादृियतेऽन्यद्यत्र अट्ट-चु० घञ् । प्रासादस्योपरिगृहे, प्राचीरोपरिस्थसैन्यगृहे, तत्र स्थिता हि नरा अन्यान् हीनतया नादृियन्ते, अतिशये च । तस्मिन् सति च अन्योत्कर्षेऽनादरः ।

**अट्टट्ट** अव्य० अट्टप्रकारः अट्टस्य गुणवाचितया प्रकारे द्वित्वम् शकन्ध्वादि० पररूपम् । अत्युत्कटे हासे ।

**अट्टहास** पु० अट्टेनातिशयेन हासः हस-घञ् ३त० । उच्चहासे ।

**अट्टहासक** पु० अट्टहास इव कायते कै-क । अट्टहासेन दन्तानां वहिर्निर्गमादतिशुभ्रत्वं तद्वत् शुभ्रे कुन्दवृक्षे ।

**अट्टालक** पु० अट्ट इव प्रासादोपरिगृहमिव अलति पर्य्याप्तो भवति अल-ण्वुल् । प्रासादोपरिस्थे इष्टकादिगृहे ।

**अट्टालिका** स्त्री०अट्टाल+स्वार्थे क । इष्टकादिनिर्मिते राजगृहे

**अठ** गतौ भ्वादि० पर० सक० सेट् । अठति । आठीत् ।

**अठ** गतौ इदित् आत्म० भ्वादि० सक० सेट् । अण्ठते ।

**अड** उद्यमे भ्वादि० पर० अक० सेट् । अडति । आडीत् ।

**अड** व्याप्तौ स्वादि० पर० सक० सेट् वेदएवास्य प्रयोगः । अड्णोति । आडीत् । [ अड्डति । आड्डीत् ।

**अड्ड** अभियोगे समाधाने च भ्वादि० पर० सक० सेट् ।

**अण** शब्दे भ्वादि० पर० अक० सेट् । अणति । आणीत् ।

**अण** जीवने दिवा० आत्मने० अक० सेट् । अण्यते आणिष्ट ।

**अण(न)क** त्रि०अणति यथेच्छम् नदति अण-अच् ततः कुत्सायाम् क । अधमे, निन्दिते च । दन्त्यमध्यश्चायम् ।

**अणव्य** त्रि० अण-उन् अणुस्तस्य सूक्ष्मशस्यस्य भवनं क्षेत्रम् अणु+यत् । सर्षपादिसमुत्पत्तियोग्ये (तुनाभूमि) ख्याते क्षेत्रे

**अणि** पु०स्त्री०अणति शब्दायते अण-इन् । आरा इति ख्याते रथचक्राग्रस्थिते कीलके सूच्याद्यग्रभागे च । स्त्रीत्वे वा ङीप् । अत्रादेर्दीर्घतापीष्यते । तेन आणिः आणी ।

**अणिमन्** पु० अणोर्भावः अणु+इमनिच् । सूक्ष्मत्वे सूक्ष्मपरिमाणे, ऐश्वर्य्यभेदे च यद्वशात् सूक्ष्मीभूय सर्व्वत्र गन्तुं शक्नोति । ऐश्वर्य्याणि च । अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वञ्च तथा कामावसायिता इत्युक्तानि । एतेषां स्वरूपाणि ऐश्वर्य्यपदार्थनिरूपणे वक्ष्यन्ते ।

**अणीयस्** त्रि० अणु+ईयसु । अतिसूक्ष्मे अणोरणीयान् महतो महीयानिति श्रुतिः । स्त्रियाम् (सी) ।

**अणु** त्रि०अण-उन् । क्षुद्रे, सूक्ष्मपरिमाणवति,द्रव्ये,लेशे च । स्त्रियाम् अण्वी च । (चिना, काङ्नी, श्यामा) प्रभृति सूक्ष्मधान्ये पु० ।

**अणुक** त्रि० अणु+निपुणार्थे क । निपुणे । स्वार्थे क । सूक्ष्मे अल्पे क । क्षुद्रे ।

**अणुभा** स्त्री० अण्वी सूक्ष्मा भा दीप्तिर्यस्याः ब० । विद्युति ।

**अण्ड** न० अमन्ति संप्रयोगं यान्ति अनेन अम-ड टवर्गादित्वेऽपि डस्य नेत्त्वम् । पुंसोऽङ्गावयवे,पक्षिडिम्बे, वीर्य्ये च ।

**अण्डज** पु० अण्डात् डिम्बात् जायते जन-ड । अण्डजाते

पक्षिणि, सर्पे, मत्स्ये, कांकलास इति ख्याते क्रकलासे च। अण्डजातमात्रे त्रि०। मृगनाभिकस्तूर्य्यान्तु स्त्री०।

**अण्डालु** पु० अण्ड+आलु। डिम्बविशिष्टे मत्स्ये।

**अण्डीर** पु० अण्डः पुमवयवभेदः अस्यास्तीति अण्ड-ईरन्। पुरुषे, समर्थे च।

**अत** बन्धने इदित् भ्वादि० पर० सक० सेट्। अन्तति। आन्तीत्

**अत** बन्धने भ्वादि० पर० सक० सेट्। अतति। आतीत्।

**अत** प्रापणे, सातत्ये, गतौ च भ्वादि० पर० सक० सेट्। अतति। आतीत्। क्त अतितः।

**अतट** पु० तट्यते आहन्यतेऽम्भसा इति तटं जलाघातस्थानं तन्नास्ति यस्य ब०। आड़रीति प्रसिद्धे आलम्बनस्थानशून्ये, पर्व्वताद्युच्चस्थाने, भूमेरधोभागे च।

**अतल** न० अस्य भूखण्डस्य तलं पृषोदरात् इदमोऽत्वम्। सप्तपातालमध्ये प्रथमखण्डे, भूमेरधोभागे। तलशून्ये त्रि०।

**अतलस्पर्श** त्रि० न तलस्याधोभागस्य स्पर्शो यत्र ब०। अतिगभीरे।

**अतस** पु० अत-गतौ असच्। वाते। सातत्यार्थात् अत-असच्। आत्मनि। गौरादित्वात् ङीषि। तिसि, मसिना इति ख्याते अतसीवृक्षे। तत्सूत्रजाते चौमवस्त्रे न०।

**अति** अव्य० अत-इ। पूजायाम्, उत्कर्षे, अतिक्रमणे, अतिशये च।

**अतिकथ** त्रि० अतिक्रान्तः कथाम्। कथनायोग्ये, अश्रद्धेये, नष्टे च। [भके वृक्षे।

**अतिकन्दक** पु० अतिरिक्तः कन्दः यस्य ब०। हस्तिकन्दना-

**अतिकेशर** पु० अतिरिक्तानि केशराण्यस्य ब०। कुब्जकवृक्षे।

**अतिक्रम** पु० अति-क्रम-घञ् ह्रस्वः। उल्लङ्घने। अतिक्रान्तः क्रममिति प्रादि स०। क्रमोल्लङ्घने त्रि०।

**अतिगण्ड** पु० परिभाषया विष्कुम्भाधधि षष्ठे योगे।

**अतिगन्ध** पु० अतिशयितो गन्धो यस्य ब०। चम्पकवृक्षे। अतिशयितगन्धवति त्रि०।

**अतिचरा** स्त्री० अतिक्रम्य चरति दुर्गभूमिजातत्वात् दुःप्रापत्वाच्च अति+चर-अच्। पद्मचारिणीवृक्षे उत्तरदेशभवे, तत्पर्य्याये पद्माभेतिशब्ददर्शनात् स्थलपद्मिन्यामिति केचित्

**अतिचार** पु० अतिशयेन चारः अतिक्रम्य वा चारः अति+चर-घञ्। अतिशयितगमने, ज्योतिःशास्त्रप्रसिद्धे मङ्गलादिग्रहपञ्चकस्य सूर्य्यसंपर्कविशेषात्तत्तेजोऽसहिष्णुतया वक्रशीघ्रादिगत्या स्वस्वभोग्यकालमुल्लङ्घ्य राश्यन्तरगमने, अस्य विशेषस्तु वृहदभिधाने दर्शयिष्यते।

**अतिचारिन्** पु० अति+चर-णिनि। पूर्व्वोक्तातिचारवति ग्रहे। अतिक्रम्य अतिशयेन वा गन्तृमात्रे त्रि०।

**अतिछत्र** पु० अतिक्रान्तश्छत्रम् प्रादि० स०। छातिया इति प्रसिद्धे स्थलतृणविशेषे, तालमाखना इति प्रसिद्धे जलतृणभेदे च। स्वार्थे क। अत्र अतिछत्रकोऽपीति नाम। छत्राकारपत्रपुष्पवति सुलफा इति प्रसिद्धे शाकभेदे स्त्री०। चीरस्वामिमते छत्रा इत्येव नाम। छत्रातिक्रमकारिणि त्रि०। अतिक्रमेऽव्ययी०। छत्रातिक्रमे अव्य०।

**अतिजगती** (ति) स्त्री० अतिक्रान्ता जगती द्वादशाक्षरपादां वृत्तिं प्रा०स०। त्रयोदशाक्षरपादके छन्दोभेदे। जगतीं भुवनमतिक्रान्तवति त्रि०। तत्र पुंसि क्लीवे च (अतिजगति)।

**अतिजव** त्रि० अतिशयितो जवोयस्य ब०। अतिवेगवति। द्रुतगामिनि च।

**अतिजागर** पु० अतिशयितो जागरो निद्राराहित्यं यस्य ब०। नीलवके पक्षिणि तस्य सर्व्वदा जागरूकत्वात्। निद्राराहित्यवति त्रि०। [पक्षिणाम् अतिदीर्घगमने।

**अतिडीन** न० अतिक्रान्तं डीनं पक्षिगतिभेदं प्रा० स०।

**अतितराम्** अव्य० अति+तर-ततः आमु। अत्यन्तातिशये।

**अतितीक्ष्ण** त्रि० अतिशयेन तीक्ष्णः कटुरसो यस्य ब०। मरीचादौ। सजना इति प्रसिद्धे शोभाञ्जने पु०।

**अतितीव्रा** स्त्री० अतिशयेन तीव्रा पाकादौ दुर्ज्जरत्वात् प्रा०स०। ग्रन्थिमत्यां गाँटदूर्व्वा इति ख्यातायां दूर्व्वायाम्। अतितीव्रगुणके त्रि०।

**अतिथि** पु० अतति गच्छति न तिष्ठति अत इथिन्। अध्वयोगेन आगन्तुके गृहागते, विषये च तस्य इन्द्रियेषु संसर्गमात्रकाले एव चेतसि स्थितिर्नोत्तरकालमिति गतिरनुमीयते।

**अतिथिसपर्य्या** स्त्री० अतिथीनां सपर्य्या पूजनम् सपरधातुः कण्ड्वादिः तेन यक् ततो अङ्। प्रत्यहं गृहस्थस्य कर्त्तव्यपञ्चयज्ञमध्ये मनुष्ययज्ञेऽतिथिपूजनादौ।

**अतिदिष्ट** त्रि० अति-दिश-क्त। अतिदेशस्य कर्म्मणि। यथा प्रकृतिवत् विकृतिः कर्त्तव्येति वाक्येन प्रकृतिभूतदर्शयागादेरङ्गकार्य्याणि प्रयाजादीनि विकृतौ पश्वादियागेऽतिदिश्यन्ते। अतिदेशोनाम इतरधर्म्मस्य इतरस्मिन् प्रयोगाय प्राप्तिः इति मीमांसायां स्थितम्। करणव्युत्पत्त्या तदुपदेशवाक्यमपि तथा।

**अतिदीप्य** पु० अतिशयेन दीप्यते अति-दीप-कर्त्तरि यत्। रक्तचित्रके लालचिता इति ख्याते वृक्षे।

**अतिदेश** पु० अति-दिश-घञ्। अतिदिष्टशब्दार्थे व्याख्यात कर्म्मण्यर्थे। अतिदिश्यतेऽनेनेति करणे घञि तत्प्रतिपादक-वाक्येऽपि।

**अतिधन्वन्** पु० अतिरिक्तं धनुर्यस्य ब०। धनुषोऽनङ्। उत्कृष्ट-धनुर्युक्ते योधे। मरुस्थलातिक्रमकारिणि त्रि०।

**अतिधृति** स्त्री० अतिक्रान्ता धृतिम् अष्टादशाक्षरपादिकां धृतिं प्रा० स०। ऊनविंशत्यक्षरपादके छन्दोभेदे। धृतिर्धैर्य्यं सन्तोषो वा तदतिक्रमकारिणि त्रि०।

**अतिनु (नौ)** त्रि० अतिक्रान्तोनावम् प्रा०स० क्लीबे ह्रस्वः। नौकातिक्रमकारिणि। पुंसि स्त्रियां च अतिनौ।

**अतिपतन** न० अति-पत-ल्युट्। अतिक्रमे, अत्यये च। पातातिक्रान्तरि त्रि०।

**अतिपत्ति** स्त्री० अति-पद क्तिन्। अनिष्पत्तौ, अतिक्रमे च। पत्तिं सेनामतिक्रान्ते त्रि०।

**अतिपन्न** त्रि० अति+पद क्त। अतिक्रान्ते।

**अतिपथिन्** पु० अतिशयितः सुन्दरः पन्थाः प्रा०स० अतेः पूजार्थत्वात् न समासान्तः। सत्पथे।

**अतिपातक** न० अतिक्रान्तोऽत्यन्तदुष्टत्वेनान्यत् पातकं प्रा० स०। पुंसां मातृस्नुषादुहितृगमनजन्ये स्त्रीणाञ्च पुत्रपितृ-श्वशुरगमनजन्ये पातकविशेषे। पातकमतिक्रान्तवति पुण्यशीले त्रि०। [प्रातःकाले।

**अतिप्रगे** अव्य० अति प्रगीयतेऽस्मिन् काले गै-के। अत्यन्त

**अतिप्रश्न** पु० अति+प्रच्छ नङ्। निरुत्तरप्रश्ने।

**अतिप्रसक्ति** स्त्री० अति-प्र-सन्ज-क्तिन्। अत्यन्तासक्तौ, प्रसङ्गमतिक्रम्यान्यत्र संबन्धे अतिप्रसङ्गे च। लक्ष्ये लक्षण-संबन्धः प्रसङ्गः अलक्ष्ये तत्सम्बन्धोऽतिप्रसङ्गः। प्रस-ङ्गमतिक्रान्तवति त्रि०।

**अतिप्रसङ्ग** पु० अति-प्र-सन्ज घञ्। अतिप्रसक्तिवदर्थे।

**अतिबल** त्रि० अतिशयितं बलं यस्य ब०। अतिशयितबल-वति। अतिशयितं बलं यस्याः ५ब०। अत्यन्तबलाधायि-कायां पीतवर्णायां बेड़ियाला इति ख्यातायां लतायां, विश्वामित्रेण कृशाश्वमुनितः शिक्षिते रामाय दत्ते अस्त्र-विद्याभेदे च स्त्री०। अतिशयितं बलम् प्रा०स०। अत्यन्ते बले, सामर्थ्ये, सैन्ये च न०।

**अतिभूमि** स्त्री० अतिशयिता भूमिर्मर्यादा प्रा०स०। अति-मर्य्यादायाम्, आधिक्ये च। अतिक्रमेऽव्ययी०। मर्य्या-दातिक्रमेऽव्य०। भूमिं भुवं मर्य्यादां वाऽतिक्रान्तवति त्रि०।

**अतिमङ्गल्य** पु० अतिमङ्गलाय हितम् अतिमङ्गल+यत्। बिल्ववृक्षे। अतिमङ्गल्याढ्ये अतिमङ्गलयुक्ते च त्रि०।

**अतिमर्य्याद** अव्य०। अतिक्रमे अव्ययी०। मर्य्यादातिक्रमे प्रा०स०। मर्य्यादामतिक्रान्तवति त्रि०।

**अतिमाल** त्रि० अतिक्रान्तो मालामल्पं प्रा०स०। अति शयिते, मालातिक्रमकर्त्तरि च।

**अतिमुक्त** त्रि० अतिशयेन मुक्तः विदेहकैवल्यं गतः अति मुच-कर्त्तरि क्त। निर्व्वाणमुक्तिमति। अतिक्रान्ता मुक्तः शौभ्रात् प्रा०स०। माधवीलतायां पु०।

**अतिमुक्तक** त्रि० अतिमुक्त-स्वार्थे क। निर्व्वाणमुक्तिमति। अतिशयितमुक्ते च। अतिशयेन मुक्तं विस्तारोऽस्य मुच-भावे क्त ब०। कप्। अतिविसृते तिन्दुकवृक्षे पु०।

**अतिमोदा** स्त्री० अतिशयितो मोदो यस्याः ब०। नवमल्लि-कायाम्। अत्यन्तमोदवति त्रि०।

**अतिरथ** पु० अतिक्रान्तो रथं रथिनम् प्रा० स०। योध विशेषे "अमितान् योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु स" इत्युक्तलक्षणे। रथातिक्रमकारके त्रि०।

**अतिरसा** स्त्री० अतिशयितो रसो यस्याः ब०। रास्ना इति ख्यातायां मूर्व्वालतायाम्। [यज्ञविशेषे।

**अतिरात्र** पु० अतिक्रान्तोरात्रिम् प्रा०स० अच्-समासान्तः।

**अतिरिक्त** त्रि० अति-रिच्-क्त। अतिशयिते, श्रेष्ठे, भिन्ने, शून्ये च। भावे क्त। अतिशये आधिक्ये न०।

**अतिरुक्ष** त्रि० अतिशयितः रुक्षः प्रा० स०। अत्यन्तरुक्षे स्नेहशून्ये। तथाभूते कङ्गुकोद्रवादिधान्ये पु०। अति-क्रान्तोरुक्षम्। अतिशयस्निग्धे त्रि०। [आधिक्ये च।

**अतिरेक** पु० अति-रिच् घञ्। अतिशये, भेदे, प्राधान्ये,

**अतिरोग** पु० अतिशयितो रोगः रुज घञ्। क्षयरोगे।

**अतिरोमश** पु० अतिशयितः रोमशः अतिरोमन्+श। वनजाते छागे। अत्यन्तरोमाढ्ये त्रि०।

**अतिवक्तृ** त्रि० अति-वच-तृच्। वावदूके, वाचोयुक्तिदक्षे च।

**अतिवर्णाश्रमिन्** पु० अतिक्रान्तोवर्णानाश्रमिणश्च प्रा०स०। ब्राह्मणादिवर्णभिन्ने ब्रह्मचर्य्याद्याश्रमिभिन्ने च परमाश्र-मिणि "यो वेदान्तमहावाक्यश्रवणेनैव केशव। आत्मान-मीश्वरं वेद सोऽतिवर्णाश्रमी भवेदिति" इत्युक्तलक्षणे।

**अतिवर्त्तिन्** त्रि० अति-वृत-णिनि। अतिक्रमकारके।

**अतिवर्त्तुल** पु० अतिशयितः वर्त्तुलः वृत-उल। वाटुलाकलाइ इति ख्याते वर्त्तुलाकारके कलाये। अत्यन्तवर्त्तुले त्रि०।

**अतिवाद** पु० अति-वाद-घञ्। अत्युक्तौ, कठोरवाक्ये, अप्रियवाक्ये च।

**अतिवादिन्** त्रि० सर्व्वानतीत्य वदतीति अति-वद-णिनि। सर्व्वानतिक्रम्य वदनशीले, सर्व्वमतखण्डनेन स्वमतव्यवस्थापके च। [क्रान्ते च।

**अतिवाहित** त्रि० अति+वह-णिच्-क्त। यापिते, अति-

**अतिविकट** पु० अतिशयेन विकटः वि+कटच्। दुष्टहस्तिनि। अतिकराले त्रि०।

**अतिविषा** स्त्री० अतिक्रान्ता विषम् प्रा० स०। आदृच् इति ख्यातायां लतायाम्। विषातिक्रमकारके त्रि०।

**अतिवृत्ति** स्त्री० अ त-वृत-क्तिन्। अतिक्रमे। वृत्तिर्जीविकां तामतिक्रान्ते त्रि०।

**अतिवृष्टि** स्त्री० अति-वृष-क्तिन्। अत्यन्तवृष्टौ शस्योपघातकोपद्रवरूपे ईतिभेदे।

**अतिवेल** त्रि० अतिक्रान्तो वेलां मर्य्यादाम् कूलं वा प्रा०स०। अतिशयिते, निर्मर्य्यादे, समुद्रकूलातिक्रमकारके च। (अतिक्रमे अव्ययी०। वेलातिक्रमे अव्य०)

**अतिव्याप्ति** स्त्री० अतिशयेन लक्ष्यमलक्ष्यञ्चाविशिष्य व्याप्तिः व्यापनम् अति-वि-आप्-क्तिन्। अतिशयव्यापने 'लक्ष्यस्येवालक्ष्यस्यापि व्यापने'। तथाच यत्र यस्य स्थितिरुचिता ततोऽन्यत्रापि तस्य सम्बन्धे अतिव्याप्तिः। यथा पृथिव्याः गन्धो लक्षणं तत्रैव तस्य स्थितिरुचिता तस्य वाय्वादौ सत्त्वप्रसक्तेः अतिव्याप्तिः। यथा वा धूमे वह्नेर्व्यापकता न तु जले, तस्याः जले प्रसक्तौ अतिव्याप्तिः।

**अतिशक्ति** स्त्री० अतिशयिता शक्तिः कर्म्मसाधनसामर्थ्यम् देहजं बलम् वा प्रा०स०। अतिशयिते सामर्थ्ये, अधिकवीर्य्ये च। अतिक्रान्तः शक्तिम् प्रा०स०। सामर्थ्यातिक्रमकारके त्रि०। अतिशयिता शक्तिर्यस्य ब० अतिशयबलवति त्रि०। अतिक्रमेऽव्ययी०। शक्त्यतिक्रमे अव्य०।

**अतिशक्करी** स्त्री० अतिक्रान्ता शक्करीम् चतुर्द्दशाक्षरपादिकां वृत्तिम् प्रा०स०। पञ्चदशाक्षरपादके छन्दोभेदे।

**अतिशय** पु० अति-शीङ्-अच्। आधिक्ये, अतिरेके, च। अतिक्रान्तः शयं हस्तं प्रा० स०। हस्तातिक्रमकारके त्रि०।

**अतिशयित** त्रि० अति-शीङ्-क्त। अधिके, अतिक्रान्ते च।

**अतिशयोक्ति** स्त्री० अतिशयेन उक्तिः निर्द्देशः वच-क्तिन्। अर्थालङ्कारविशेषे अलङ्कारशास्त्रप्रसिद्धे। सा०१०परि०

**अतिशायन** न० अति-शीङ्-ल्युट् अतिशायने मतबिति सूत्रनिर्द्देशात् दीर्घः। आधिक्ये, प्रकर्षे च।

**अतिशीत** न० अतिशयितं शीतम् प्रा० स०। अत्यन्तशीतलस्पर्शे। तद्विशिष्टे त्रि०।

**अतिशोभन** त्रि० अति+शुभ-ल्यु। अत्यन्तशोभान्विते, श्रेष्ठे च।

**अतिसन्ध्या** स्त्री० अत्यासन्ना सन्ध्या प्रा० स०। पूर्व्वदिवसीयरात्रिशेषदण्डादिसूर्य्योदयपर्य्यन्तः, सूर्य्यास्तात् पूर्व्वोत्तरदण्डात्मकश्च कालः सन्ध्या तस्याः आसन्ने काले।

**अतिसर्ग** पु० अति+सृज-घञ्। दाने, कामचारानुज्ञायां यथेच्छं क्रियतामित्याद्यभिलापरूपायाञ्च। सर्गं सृष्टिमतिक्रान्तरि त्रि०।

**अतिसर्ज्जन** न० अति+सृज-ल्युट्। दाने, वधे, विप्रलम्भे च।

**अतिसायम्** अव्य० अत्यासन्नं सायम् प्रा०स०। सूर्य्यास्तकालः सायम् तस्यासन्ने काले।

**अति(ती)सार** पु० अतिशयेन सारयति रेचयति अति+सृ-णिच्-अच्। बहुद्रवीभूतमलनिःसारके उदरामये रोगे। अतेर्दीर्घतापि वा।

**अति(ती)सारकिन्** त्रि० अतिसाररोगोऽस्यास्ति अतिसार+इनि कुक् च। अतिसाररोगवति। अतेर्दीर्घतापि वा।

**अतिसृष्ट** त्रि० अति+सृज-क्त। दत्ते, प्रेरिते।

**अतिसौरभ** पु० सुरभेर्भावः अण् सौरभम्, अतिशयितं तदस्य ब०। अत्यन्तामोदवति आम्रे। सौरभान्विते वस्तुमात्रे त्रि०।

**अतीत** त्रि० अति+इन्-क्त। अतिक्रम्य गते, नाशप्रतियोगिनि भूते काले तत्कालवृत्तिपदार्थमात्रे च।

**अतीन्द्रिय** त्रि० अतिक्रान्तमिन्द्रियं तदविषयत्वात् प्रा०स०। इन्द्रियायोग्ये अप्रत्यक्षे, नेत्रश्रोत्रनासिकारसनात्वक्चेतांसीन्द्रियाणि तैर्ज्ञातुमशक्ये विषये। [ल्पिन्तेऽत्यन्ताश्रये च।

**अतीव** अव्य० अत्येव-इवः अवधारणे प्रा०स०। अवष्टता-

**अतुल** त्रि० तुल-णिच् अ तुला सा नास्ति यस्य ब०। उपमाशून्ये, अत्यन्तशोभाढ्ये च। तिलवृक्षे पु०।

**अतुल्य** त्रि० तुलां सादृश्यमर्हति तुला+यत् न०त०। अनुपमे, सौन्दर्य्यातिशयशालिनि च।

**अतृप्ति** स्त्री० तृप-क्तिन् अत्यन्ताभावार्थे-न०त०। तृप्तिराहित्ये। ब०। तृप्तिरहिते, असन्तोषिणि, लोलुपे, च त्रि०।

**अतृट** वधे भ्वा० आत्म०सक०सेट्। अट्टते आट्टिष्ट। णिचि अट्टयति ते आतिट्टत् त।

**अत्ता** स्त्री० अतति संबधाति अत-तक दृडभावः। मातरि श्वश्र्वाञ्च। स्वार्थे के कापि अत इत्वे। अत्तिका च।

**अत्यन्त** न० अतिक्रान्तोऽन्तं सीमाम् प्रा०स०। अतिशये। तद्युक्ते सर्वपरिच्छेदान्ति क्रान्ते त्रि०। अतिक्रमेऽव्ययी०। परिच्छेदातिक्रमे नाशातिक्रमे च अव्य०।

**अत्यन्तकोपन** त्रि० अत्यन्तं कुप्यति अत्यन्त+कुप-ल्यु २त०स० । अत्यन्तकोपशालिनि ।

**अत्यन्तगामिन्** त्रि० अत्यन्तम् अन्तात्ययं गच्छति अति+अन्त अत्यये अव्ययीभावः ततः-गम-णिनि । आत्यन्तिके, अतिशयगमनशीले च । स्त्रियामत्यन्तगामिनी ।

**अत्यन्तसंयोग** पु० अत्यन्तेन साकल्येन संयोगः संबन्धः व्याप्तिरिति यावत् अन्तमवसानमनिक्रान्तः संयोगो वा अत्यन्त+सम्+युज-घञ् । सन्ततसंबन्धे ।

**अत्यन्ताभाव** पु० अत्यन्तः नित्यः अभावः कर्म्म० । नास्तीति वाक्याभिलप्यमाने नाशप्रागभावभिन्ने संसर्गाभावे । यथा भूतले घटोनास्ति इति वाक्येन न्यायमते भूतले घटाभावः प्रतीयते । स च न नाशः नापि प्रागभावः । नाशप्रागभावयोस्तु न अत्यन्तता प्रतियोगिकाले तयोरसत्त्वात् ।

**अत्यन्तिक** त्रि० अत्यन्तं गच्छति अत्यन्त+ठ ठस्येक । अतिशयितभ्रमणकारिणि ।

**अत्यन्तीन** त्रि० अन्तस्यात्ययः अत्यन्तम् अत्यये व्ययी० अत्यन्तं गामी अत्यन्त+ख । अतिशयितगतिशीले ।

**अत्यम्ल** पु० अतिशयितोऽम्लोरसः फलपत्रादौ यस्य ब० । तत्तुल इति प्रसिद्धे तिन्तिड़ीवृक्षे । अत्यन्ताम्लरसवति वस्तुमात्रे त्रि० । वनवीजपुरे टावालेवु इति प्रसिद्धे वृक्षे स्त्री० ।

**अत्यम्लपर्णी** स्त्री० अत्यम्लं पर्णं यस्याः जातित्वात् ङीष् । अत्यम्लपत्रयुक्ते वनवीजपुरे टावालेवु इति ख्याते वृक्षे ।

**अत्यय** पु० अति+इन्-अच् । अतिक्रमे, अभावे, विनाशे, दोषे, कृच्छ्रे, अतिक्रम्य गमने, कार्य्यस्यावश्यम्भावाभावे च ।

**अत्यर्थ** न० अतिक्रान्तमर्थमनुरूपस्वरूपं गति०स० । अतिशये । तद्विशिष्टे त्रि० । अत्यये अव्य० । अर्थाभावे अव्य० ।

**अत्यल्प** त्रि० अतिशयितोल्पः प्रा०स० । अत्यन्ताल्पे अणुतरे ।

**अत्यष्टि** स्त्री० अतिक्रान्ता अष्टिं षोड़शाक्षरपादिकां वृत्तिं गति०स० । सप्तदशाक्षरपादके छन्दोभेदे ।

**अत्याकार** पु० अतिशयेन आकारः तिरस्कारः अति-आ-कृ-घञ् । तिरस्कारे । अतिशयित आकारो मूर्त्तिः प्रा०स० । महादेहे । अतिशयित आकारो यस्य ब० । तद्विशिष्टे त्रि० ।

**अत्यागिन्** त्रि० त्यज-घिणुन् मन्दार्थे नञ् त० । कर्म्मफलाननुसन्धानेन कर्म्मानुष्ठायिनि, त्यागिभिन्ने च ।

**अत्याचार** पु० अत्युत्कट आचारः आ+चर-घञ् प्रा०स० । अनुचिताचरणे । अतिक्रमे अव्ययी० । अचारातिक्रमे अव्य० ।

**अत्याधान** न० अति-आ-धा ल्युट् । अतिक्रमणे, सम्बन्धमात्रे, उपरिस्थापने च । अव्ययी० । अग्न्याधानातिक्रमे अव्य० ।

**अत्याल** पु० अतिशयेन समन्तात् अलति पर्य्याप्नोति अति+आ+अल-अच् । लालचिता इति ख्याते रक्तचित्रक वृक्षे, तस्य अत्यल्पकालेन समन्तात् व्यापनात् ।

**अत्याश्रम** त्रि० अतिक्रान्तआश्रमान् तद्विहितधर्म्मान् गति०स० । सर्व्वाश्रमत्यागिनि पञ्चमाश्रमिणि संन्यासिनि । तत्रात्याश्रमिन् इत्यपि । अतिशयित आश्रमः प्रा०स० । उत्तमाश्रमे संन्यासे पु० ।

**अत्याहित** न० अत्यन्तमाधीयते तन्निवारणार्थं मनोदीयतेऽस्मिन् आ+धा-क्त । अत्यन्तभीतौ, प्राणहानिशङ्काकरे अनर्थे च ।

**अत्युक्ति** स्त्री० अतिशयेन अनौचित्येन वा उक्तिः अति+वच-क्तिन् । अतिशयोक्तौ, अन्याय्योक्तौ, निर्गुणे जने आरोपितगुणेन स्तवने ।

**अत्युक्था** स्त्री० उक्था एकाक्षरपादिका वृत्तिः अतिक्रान्ता ताम् गति०स० । द्व्यक्षरपादके छन्दोभेदे । उक्थनामकसामभेदातिक्रान्तरि त्रि० ।

**अत्यूह** पु० अतिशयेन ऊहते शब्दायते अति+ऊह-अच् । कालकण्ठे डाहुक इति प्रसिद्धे दात्यूहे पक्षिणि । अतिशयेन ऊहस्तर्कः प्रा०स० । अतिशयवितर्के । नील इति ख्यातौषधौ नीलिकायां स्त्री० । अतिक्रमेऽव्ययी० । वितर्कातिक्रमे अव्य० ।

**अत्र** अव्य० अस्मिन् एतस्मिन् वा इदम्+एतद्+वा सप्तम्यास्त्रल् प्रकृतेरन्भावश्च । अस्मिन् एतस्मिन् वेत्यर्थे ।

**अत्रभवत्** त्रि० इदम्+एतद्+वा प्रथमायास्त्रल् । पूज्यार्थे, श्लाघ्ये, च । स्त्रियामत्रभवती ।

**अत्रि (त्रि)** पु० अद-त्रिन् सप्तर्षिमध्ये मुनिविशेषे । अत्र पक्षे वा तलोपे अत्रिरित्यपि । त्रिभिन्ने त्रि० बहुवचनान्तः ।

**अत्रिजात** पु० अत्रेर्नेत्रात् जातः जन-क्त ५त० । चन्द्रे, अपत्यार्थं तपस्यां कुर्व्वतोऽत्रेर्नेत्रात् जातो हि चन्द्रः ।

**अत्त्रि (त्रि) न्** पु० अद-त्रिनि । सप्तर्षिमध्ये मुनिभेदे । पक्षे तलोपः ।

**अथ** अव्य० सु०-अर्थ-ड पृषो० रलोपः । संशये, आरम्भे, आनन्तर्य्ये, प्रश्ने, विकल्पे, प्रकरणे, समुच्चये, पक्षान्तरे च । मङ्गलं तु नास्यार्थः किन्तु अर्थान्तरप्रयुक्तोऽप्ययं श्रुत्या मङ्गलसाधनं भवति ।

**अथकिम्** अव्य० अथ+क वते कवते वा डिम् । स्वीकारे ।

**अथर्व्वन्** पु० अथ+ऋ-वनिप् । अथर्व्वनामकमुनिविशेषे तन्मुनि दृष्टतया तुरीये वेदे च ।

**अथर्व्वविद्** पु० अथर्व्ववेदं तदुक्तं कर्म्म वा वेत्ति विद-क्विप् ।

अथर्ववेदस्य शन्नोदेवीरभीष्टयइत्यादिकस्य, तद्विहिताभिचारादिकर्मणश्च वेत्तरि वशिष्ठादौ ।

**अथवा** अव्य० अथ+वा-क्विप् । पक्षान्तरे ।

**अथो** अव्य० अथ-डो द्वयो० टलोपः । अथशब्दार्थे आरम्भादौ ।

**अद** बन्धने भ्वा० पर० इदित् सक० सेट् । अन्दति । आन्दीत् ।

**अद** भक्षणे अवने च अदा० पर० सक० अनिट् । अत्ति अघसत् जघास अत्ता अत्स्यति सनि जिघत्सति ।

**अद्** अव्य० अद-क्विप् । आश्चर्य्ये ।

**अदत्ता** स्त्री० न० दा-क्त । अपरिणीतायाम् स्त्रियाम् । अदत्तमात्रे त्रि० । अप्राशस्त्ये न०त० । अदत्तन्त भयक्रोधशोकवेगरुजान्वितैरित्याद्यभिहितलक्षणे दानाभासेनार्पिते दत्तेऽपि प्रत्याहर्त्तुं योग्ये त्रि० । [चौरे ।

**अदत्तादायिन्** त्रि० अदत्तमादत्ते आ+दा-णिनि ६त० ।

**अदभ्र** त्रि० दन्भ रक् दभ्रमल्पं न०त० । अनल्पे अदभ्रदर्भामधिशय्य स स्थलीमिति भारविः ।

**अदर्शन** त्रि० दृश-भावे ल्युट् न०ब० । दर्शनायोग्ये, अतीन्द्रिये, नाशे, व्याकरणशास्त्रपरिभाषिते लोपे च । अव्ययी० । दर्शनाभावे अव्य० ।

**अदल** पु० दल्यते भिद्यते इति दलं पत्रं दल-कर्म्मणि घञ् न० ब० । दलशून्ये हिजल इति ख्याते वृक्षे । पत्रशून्ये वृक्षमात्रे त्रि० । घृतकुमार्य्यां स्त्री० ।

**अदस्** त्रि० न दस्यते उत्क्षिप्यतेऽङ्गुलिर्यत्र इदन्तया निर्द्धारणाय पुरोवर्त्तिन्येवाङ्गुलिनिर्द्देशः सम्भवति नापुरोवर्त्तिनि । न+दस-क्विप् । अपुरोवर्त्तिनि परोक्षे ज्ञाते वस्तुनि ।

**अदाह्य** पु० दग्धुमशक्ये दह-ण्यत् न०त० । निराकारतया दाहायोग्ये परमात्मनि । दाहानर्हे महारोगिप्रभृतौ त्रि० ।

**अदिति** (ती) स्त्री० न+दा-डिति वा ङीप् । दातुं छेत्तुमयोग्यायाम् भुवि, दितिरसुरमाता तद्विरोधिन्यामदितौ सुरमातरि दक्षप्रजापतेः कन्यायाम् कश्यपपत्न्याम्, अदितिदेवताके पुनर्वसुनक्षत्रे च । दो-क्तिन् दितिः खण्डस्तद्रहिते त्रि० ।

**अदितिज** पु० अदितेर्जायते जन-ड ५त० । देवे ।

**अदीन** त्रि० दी-क्त न०त० । कातर्य्यरहिते उदारे ।

**अदृष्ट** न० दृश-क्त न०त० । पुण्यापुण्यरूपे भाग्ये, इन्द्रियायोग्यत्वात् तस्यादृष्टत्वम् । अदृष्टहेतुके भयादौ च । दृष्टभिन्ने त्रि० । [पूर्व्वमदृष्टे ।

**अदृष्टपूर्व्व** त्रि० न पूर्व्वं दृष्टः सह सुपेति स० परनि० ।

**अदृष्टि** स्त्री० विरुद्धा दृष्टिः विरोधार्थे न०त० । क्रूरदृष्टौ, सरोषवक्रदृष्टौ, दर्शनाभावे च । ब० । दृष्टिशून्ये त्रि० ।

**अद्धा** अव्य० अद्यते अत् तं सततं गमनं ज्ञानं वा दधाति क्विप् । याथार्थ्ये, साक्षात्कारे, स्फुटे, अवधारणे, अतिशये च ।

**अद्भुत** न० अततीत्यत् अव्ययमाकस्मिकार्थे तथा भाति भा-डुतच् । आकस्मिके उल्कापातादौ, आलङ्कारिकप्रसिद्धे नवरसान्तर्गतविस्मयस्थायिभावके रसे च । तद्वति त्रि० ।

**अद्भुतस्वन** पु० अद्भुतः स्वनो यस्य स्वन-अच् ब० । महादेवे । कर्म्म० । आश्चर्य्यशब्दे । ब० । तथाशब्दवति त्रि० ।

**अद्य** अव्य० अस्मिन्नहनि इदम्शब्दस्य निपातः सप्तम्यर्थे । अस्मिन् दिवसे । आधारार्थत्वेऽपि अस्य समासान्तरघटकता तेनाद्यदिवसादारभ्य इति, अद्यप्रभृत्यवनताङ्गीति कुमारः ।

**अद्यतन** त्रि० अद्य भवः अद्य+ट्यु तुडागमश्च । अद्यभवे वस्तुमात्रे । स्त्रियामद्यतनी ।

**अद्यत्वे** अव्य० इदम्शब्दस्य इदानीमित्यर्थे निपा० । अधुनार्थे ।

**अद्यश्वीना** स्त्री० अद्य श्वः परदिने वा प्रसोष्यते । अद्यश्वस्+ख टिलोपः । आसन्नप्रसवायां गर्भिण्याम् ।

**अद्रि** पु० अद-क्रिन् । पर्व्वते, वृक्षे, सूर्य्ये, परिमाणभेदे च ।

**अद्रिकर्णी** स्त्री० अद्रिः अद्रिनामिका गिरिर्बालमूषिका तस्याः कर्णः कर्णतुल्यं पत्रं यस्याः गौरादित्वात् ङीष् । बालमूषिकातुल्यपत्रायाम् अपराजितालतायाम् ।

**अद्रिकीला** स्त्री० अद्रयः कुलाचलाः कीलाः शङ्कव इव यस्याः ब० । भूमौ ।

**अद्रिज** न० अद्रौ जायते जन-ड ७त० । शिलाजतु इति ख्यातप्रसिद्धे नव्यद्रव्ये । गेरि इति प्रसिद्धे द्रव्य इति केचित् । पार्व्वत्यां स्त्री० । पर्व्वतभवमात्रे त्रि० ।

**अद्रितनया** स्त्री० अद्रेर्हिमाचलस्य तनया । पार्व्वत्याम् ।

**अद्रिभिद्** पु० अद्रिं भिनत्ति भिद्-क्विप् ६त० । इन्द्रे ।

**अद्रिभू** स्त्री० अद्रावपि भवति भू-क्विप् ७त० । अपराजितालतायाम् तस्याः पर्व्वतेऽप्यतिकठोरभूमिके जायमानत्वात् ।

**अद्रिराज** पु० अद्रीणां राजा टच् । हिमाचले ।

**अद्रिसार** पु० अद्रेः सार इव । लौहे ।

**अद्रीश** पु० अद्रीणां अद्रेर्वा ईशः ६त० । हिमाचले, शिवे च ।

**अद्वय** न० द्वावयवं द्वयं नञा ब० । सजातीयविजातीयस्वगतभेदशून्ये परब्रह्मणि । सजातीयद्वितीयरहिते, द्वयशून्ये च वस्तुमात्रे त्रि० । नास्ति द्वयं यस्य मते ब० । बुद्धभेदे पु० ।

**अद्वयवादिन्** पु० अद्वयं वदति सर्व्वमेव वस्तु चित्स्वरूपं नान्यदतो द्वितीयमस्तीति वदतीति वद-णिनि । अद्वैतवादिनि वेदान्तिके बाह्यार्थाभावेन ज्ञानात्मकं सर्व्वं वस्तु

स्वीकर्त्तरि बौद्धे च। स्त्रियां-वादिनी।

**अद्वितीय** त्रि० न द्वितीयः सदृशो यस्य ब०। सजातीय द्वितीयरहिते। केवले एकस्मिन् परमात्मनि न०।

**अद्वैत** त्रि० द्विधा इतं भेदं गतम् द्वीतम् तस्य भावः द्वैतं तन्नास्ति यस्य ब०। सजातीयादिभेदशून्ये केवले परमात्मनि।

**अद्वैतवादिन्** त्रि० अद्वैतं सर्व्वमेव चिदात्मकं वदतीति वद-णिनि। सर्व्वमेव चिदात्मनि रज्ज्वाव रजतादिवत् आरोपितं सत् प्रतिभाति तद्यथार्थज्ञाने च यथा रजत-बुद्धिर्निवर्त्तते एवं चिदात्मनि याथार्थ्येनावगते सर्व्वं वास्तं वस्तु निवर्त्तते इति वादिनि वेदान्तिके बुद्धविशेषे च।

**अधःक्षिप्त** त्रि० अधो नीचे क्षिप्तम् क्षिप्-क्त शाक०त०। अधोमुखेन स्थापिते न्यञ्चिते न्युब्जीकृतेऽधस्तान्निहिते च।

**अधःपुष्पी** स्त्री० अधोमुखानि पुष्पाण्यस्याः जातित्वात् ङीप्। सुलफा इति ख्याते अवाक्पुष्पीवृक्षे।

**अधन** त्रि० नास्ति धनं स्वाधीनतया यथेष्टमुपयोक्तुं यस्य ब०। भार्य्यापुत्रदासादिषु तेषां धनस्वामित्वेऽपि कार्य्ये यथेष्ट-विनियोगस्य पत्यादिसापेक्षत्वात् अधनत्वम् भार्य्यापुत्रश्च दासश्च त्रयएवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यै ते तस्य तद्धनमिति स्मृत्युक्तेः। निर्धने, अल्पधने च।

**अधम** त्रि० अवर-अम अवरस्याधादेशः। कुत्सिते, हीने च।

**अधमर्ण** त्रि० अवश्यदेयम् ऋणं तत् अधमं शोध्यं यस्य ब०। अवश्यदेयर्णशोधके खातक इति प्रसिद्धे ऋण-ग्रहीतरि।

**अधमाङ्ग** न० अधमम् अङ्गम् कर्म०। चरणे।

**अधर** पु० न ध्रियते धृङ्-अच् न०त०। ठोट इति ख्याते ऊर्द्ध्वे, नीचे वा ओष्ठे। धरणं धरा तत्सम्बन्धरहिते हीने, तले, नीचे च त्रि०।

**अधरात्** अव्य० अधर+प्रथमायाः पञ्चम्याः सप्तम्या वा प्रति। अधोभागे। विवक्षावशात् अधरात्-रमणीयम् आगतो वसति वेत्यर्थानुसन्धानेन प्रथमान्ताद्यर्था बोध्याः।

**अधरेण** अव्य० अधरस्मिन् देशे, काले, दिशि वा अधर+एनप्। आसन्ने नीचे देशादौ अवरस्यां दिशि च।

**अधरेद्युस्** अव्य० अधरस्मिन्नहनि अधर+एद्युस्। अधरदिवसे

**अधर्म्म** पु० ध्रियतेऽनेन धृ-मनिन् विरोधे न०त०। धर्म्मवि-रोधिनि वेदनिषिद्धकर्म्मजन्ये पापे, तद्धेतुभूतप्राणिहिं-सादौ च। पुण्यरूपधर्म्मशून्ये त्रि०। गुणाद्यपरपर्य्यायः धर्म्मस्तद्रहिते ब्रह्मणि न०।

**अधश्चरः** पु० अधःकर्म्मणि सेयादौ चरतीति चर-ट। चौरे। अधःस्थानगामिनि तु त्रि०। स्त्रियाम् ङीप्।

**अधःशय्या** स्त्री० शीङ्-क्यप् शय्या ७त०। भूमिशयने।

**अधस्** अव्य० अधर+असि अवरशब्दस्थाने अधादेशश्च। पाताले, अधःस्थानमात्रे च। तत्रापि अर्थवशात् प्रथमा पञ्चमीसप्तम्यर्था ऊह्नेयाः।

**अधस्तात्** अव्य० अधर+अस्ताति। अधःशब्दवत् नीचार्थे।

**अधि** अव्य० न+धा-कि। अधिकारे, ऐश्वर्य्ये, स्वत्वे, अधि कृत्येत्यर्थे, उपरि, आधिक्ये, अतिशये च। आधीयते दुःख मनेनेति आ+धा-कि वा ह्रस्वः। मनःपीड़ायाम् पु०।

**अधिक** त्रि० अधि+क। अतिरिक्ते, अनेकस्मिन्, अर्थालङ्कार भेदे (सा०।०परि० द्रष्टव्यम्)

**अधिकरण** न० अधि+कृ-ल्युट्। आधारे, व्याकरणशास्त्रे परिभाषिते अधिकरणसंज्ञके कर्तृकर्म्मद्वारा क्रियाश्रये कारके, यथा गेहे स्थाल्यामन्नं पचतीत्यादौ गृहस्य कर्तृद्वारा, स्थाल्याश्च कर्म्मद्वारा, परम्परया पाकक्रिया-श्रयत्वम्. पूर्व्वोत्तरमीमांसाशास्त्रप्रसिद्धे एकार्थप्रतिपादके न्यायसमुदाये अधिक्रियते निर्णयार्थं विचारोऽस्मिन् विषयसंशयपूर्व्वपक्षसिद्धान्तनिर्णयात्मकपञ्चाङ्गबोधकवाक्यस मुदाये च। तत्र विचारार्हं वाक्यं विषयः तस्यार्थविषये सन्देहः इदमित्थं न वेति विकल्पः। तत्र सन्दिह्यमानयो पक्षयोः असत्पक्षे युक्तिप्रदर्शनवाक्यं पूर्व्वपक्षवाक्यं सिद्धान्तः पूर्व्वपक्षोक्तां युक्तिं खण्डयित्वा सत्पक्षे युक्तिप्रदर्शन-वाक्यम्। ततश्चेत्याद्यभिलापेन सिद्धान्तसिद्धार्थोपसंहारकं वाक्यं निर्णायक वाक्यमिति विस्तरस्तु इहदभिधाने।

**अधिकरणविचाल** पु० अधिकरणस्य विचालः अन्यथाकरणं वि-चल घञ् इत०। द्रव्यस्य अवस्थान्तरकरणेन संख्या-न्तरकरणे, विचालो नाम यदेकमनेकं क्रियते अनेकं वैकं क्रियते इति भाष्यम्। एकस्य राशेः पञ्चधाविभागे, पञ्चा त्मकस्य वा एकधा विभागेऽधिकरणस्य संख्याया विचालः।

**अधिकर्म्मिक** पु० (न०) अधिकृत्य हट्ट कर्म्मणेऽलम् अधि-कर्म्म-ठ। हट्टाध्यक्षे, हट्टस्थवणिग्भ्यः शुल्कादानकर्म्मणि नियुक्ते च।

**अधिकाङ्ग** पु० अधिकोऽङ्गात्। वर्म्मधरैर्योधैर्हृदयमध्ये वर्म्मदार्ढ्यार्थं बद्धपट्टिकादौ। ब०। अधिकाङ्गवति त्रि०।

**अधिकार** पु० अधि+कृ-घञ्। आरम्भे, यथेष्टं क्रयविक्रयादि कर्तृत्वसम्पादके स्वामित्वे, विनियोज्यपुरुषेण सम्बन्धे, यथा विहितकर्म्मणि ब्राह्मणादेरधिकारः। राज्ञां छत्रचिह्ना-दिधारणादौ, यथाऽयं छत्रधारणेऽधिकारी, प्रकरणे,

व्याकरणशास्त्रे पूर्वसूत्रोपात्तपदादेरुत्तरत्र सूत्रेषु अनुवृत्तौ च।

**अधिकारविधि** पु० अधिकारे फलस्वाम्ये विधिर्विधानम् वि+धा-कि ७त०। कर्मजन्यफलभोक्तृज्ञापके विधौ यथा यजेत इत्यनेन यागजन्यफलभोक्ता स्वर्गकामीति ज्ञाप्यते।

**अधिकार्थवचन** न० अधिकार्थस्य स्तुतिनिन्दाभ्यामारोपितस्य वस्तुधर्मादतिरिक्तस्य वचनम् वच-ल्युट् ६त०। स्तुत्यर्थवादे, निन्दार्थवादे च।

**अधिकृत** पु० अधि+कृ-क्त। आयव्ययाद्यवेक्षके, अध्यक्षे कर्मजन्यफलसंबन्धिनि च। स्वामित्ववति त्रि०। [च।

**अधिक्षिप्त** त्रि० अधि+क्षिप-क्त। स्थापिते,निन्दिते,कृताधिक्षेपे

**अधिक्षेप** पु० अधि+क्षिप-घञ्। तिरस्कारे।

**अधिगत** पु० अधि+गम-क्त। ज्ञाते,प्राप्ते,स्वीकृते च।

**अधिगम** पु० अधि-गम-घञ्। ज्ञाने, प्राप्तौ, स्वीकारे च।

**अधित्यका** स्त्री० अधि+त्यकन्। पर्वतस्योपरिभूमौ।

**अधिदेवता** स्त्री० देवएव देवता अधिका देवता देवताया अपीश्वरत्वात्। देवानामपि सूर्यादिग्रहादीनामीश्वरे रुद्रादौ। ते च स्मृत्युक्ता बोध्या यदधिष्ठानात् सूर्यादयः स्वस्वकार्यं कुर्वन्ति।

**अधिदैवत** न०देवतैव स्वार्थे अण्। अधिदेवतावत् समासार्थौ। हिरण्यगर्भे, अन्तर्यामिनि पुरुषे च पु०। स च दैवतानि चक्षुरधिष्ठातॄणि सूर्यादीनि तत्तत्कर्मणि नियुज्य चक्षुरादीनीन्द्रियाण्यनुगृह्णातीति तस्य सर्वदेवतेश्वरत्वम्।

**अधिनाय** पु०अधिनीयते वायुना गन्धाधारसूक्ष्मांशनयनद्वारा तत्तत्स्थानं ह्रियतेऽसौ अधि+नी-घञ्। गन्धे।

**अधिप** त्रि० अधि+पा-क। राजनि, प्रभौ च।

**अधिपति** पु० अधि+पा-डति। प्रभौ। [प्रभौ।

**अधिभू** पु० अधिभवति स्वामीभवति स्वाम्यर्थेऽव्ययाधिः भू-क्विप्।

**अधिमांसक** पु० अधिको मांसो यत्र ब० कप्। दन्तरोगविशेषे "हनुस्थे पश्चिमे दन्ते महाशोथोमहारुजः। कालास्रावी कफकृतो विज्ञेयः सोऽधिमांसक इति वैद्यकम्।

**अधिमास** पु० अधिको रविमासादतिरिक्तः शुक्लप्रतिपदादिदर्शान्तश्चान्द्रोमासः प्रा०स०। मलमासे असंक्रान्तमासोऽधिमासो निरुक्त इतिस्मृतेः रविसंक्रान्तिवर्जितो मासोऽधिमासः। तथाहि मीनादिस्थोरविर्येषामारम्भः प्रथमे क्षणे। ते चैत्राद्या इत्युक्तदिशा मेषस्थे रवौ यस्य चान्द्रमासस्यारम्भः स वैशाख इत्येवं वैशाखादिलक्षणे स्थिते यस्मिन चान्द्रमासे रवेः राश्यन्तरसंक्रमो न, तस्य तदुत्तरस्य च चान्द्रमासस्य उभयोर्मेषस्थे रवौ आरम्भात् उभयोरपि वैशाखता, तत्राद्योऽधिमासः संक्रान्तिहीनत्वात् द्वितीयः शुद्धः इति स्मृतौ प्रसिद्धम्।

**अधिराज** पु० अधिको राजा प्रा०स० टच्। सार्वभौमे।

**अधिरोहिणी** स्त्री० अधिरुह्यतेऽनया अधि+रुह-करणे ल्युट्। मइ इति, सिड़ि इति च प्रसिद्धे काष्ठवंशादिनिर्मिते उच्चस्थानारोहणसाधने सोपानद्वन्द्वे।

**अधियज्ञ** पु० अधिकृतः स्वामितया यज्ञो यस्य ब०। विष्णौ।

**अधियोगः** युज-घञ् योगः अधिकोयोगः प्रा०स०। ज्योतिषप्रसिद्धे यात्रिकशुभयोगे। स च गमनसमयलग्ने, तस्माद्वा चतुर्थे, पञ्चमे, सप्तमे, नवमे, दशमे वा स्थाने बुधजीवभार्गवाणां मध्ये द्वयोरेकत्र, उक्तस्थानमध्ये अन्यतमस्थाने वा स्थितौ सत्यां योगः तत्र यातुः क्षेमं शत्रुहानिश्च फलम्। मुहूर्त० या० प्र०।

**अधिवास** पु० अधि+वस-घञ्। निवासे। वासेर्णिज्। गन्धमाल्याद्यैः संस्कारे। अधिवासयति देवता अनेन अधि+वस-णिच् करणे घञ्। यज्ञारम्भपूर्वदिवसे देवतास्थापनादिकर्मणि।

**अधिवासन** न० अधि+वस-णिच् अधिकरणे ल्युट्। यज्ञारम्भात् पूर्वदिवसे देवतास्थापनादौ। भावे ल्युट्। गन्धमाल्याद्यैः पूज्यादेः संस्कारकरणे।

**अधिवासित** त्रि० अधि-वस-णिच्-क्त। गन्धमाल्यादिभिः कृतसंस्कारे, कृतप्रायुक्ताधिवासे देवादौ च।

**अधिविन्न** स्त्री० विद-भावे क्त। अधि उपरि विन्नं विवाहोऽस्याः। कृतसपत्निकायाम् अध्यूढायाम् स्त्रियाम्। कृतपूर्वविवाहायाः उपरि पत्या पुनर्विवाहकरणे प्रागूढाया भार्याया अधिविन्नत्वम्। अधिविन्नस्त्रियै देयमिति स्मृतिः।

**अधिश्रयणी** न० अधि उपरि श्रयणं पाकार्थं स्थापनं श्रीञ्-भावे ल्युट्। चूल्ल्या उपरि स्थापने, तत्पूर्वकपाके च। अधिश्रीयते पच्यतेऽत्र, करणे ल्युट् टित्त्वात् ङीप्। चूल्लाम् आखा इति, चूला, इति च ख्यातायाम् स्त्री०।

**अधिष्ठातृ** त्रि० अधि+स्था-तृच् षत्वम्। अध्यक्षे, नियमितकार्यविशेषाकरणेन कृताकृतावेक्षके च।

**अधिष्ठान** न० अधि-स्था ल्युट्। नियमितकार्यविशेषाकरणेन सान्निध्यमात्रकरणे, स्थितौ, वेदान्तशास्त्रप्रसिद्धे आरोपाधिकरणे च। अधिकरणे ल्युटि। पुरे। करणे ल्युटि। चक्रे, प्रभावे च चक्रेण प्रभावेन च प्रवृत्तत्वादि सम्भवात्।

**अधीत** त्रि० अधि+इङ-क्त । पठिते । भावे क्त । अध्ययने न० ।
**अधीतिन्** त्रि० अधीतमनेन अधीत+इनि । कृताध्ययने ।
**अधीन** त्रि०. अधिगतमिनं प्रभुं गतिस० । आयत्ते धनाधीन इत्यादौ तु धने अध ध-इत वाक्ये समासे अध्युत्तरपदात् ख ।
**अधीर** त्रि० धीरः धैर्य्यान्वितः न०त० । चञ्चले ।
**अधीश** त्रि० अधिक ईशः प्रा०स० । अधिकप्रभौ सार्व्वभौमे ।
**अधीश्वर** त्रि० अधिक ईश्वरः प्रा०स० । सार्व्वभौमे स्त्रियां ङीप ।
**अधीष्ट** न० अधि+दिवा०इष-भावे क्त । सत्कारपूर्व्वकनियोगे । कर्म्मणि क्त । सत्कारपूर्व्वकं नियोजिते त्रि० ।
**अधुना** अव्य० अस्मिन् काले इदम्शब्दस्य नि० । संप्रतीत्यर्थे ।
**अधुनातन** त्रि० भवार्थे अधुना+ट्युल् । इदानीम्भवे स्त्रियां ङीप् ।
**अधृष्ट** त्रि० धृष-निर्लज्जत्वे क्त न०त० । लज्जाशीले । [नीये ।
**अधृष्य** त्रि० धृष-अर्हार्थे यत् न०त० । धर्षणायोग्ये अनभिभव-
**अधोंऽशुक** न० अधर+प्रथमार्थे असि अधरस्य अधादेशश्च । परिधानवस्त्रे ।
**अधोऽक्षज** पु० अक्षात् इन्द्रियात् जायते अक्षज प्रत्यक्षज्ञा-नम् जन-ड ५त० अधरमधःकृतमक्षजं ज्ञानं येन तादृशस्य ब० । अधर-प्रथमार्थे असि अधादेशश्च । इन्द्रियायोग्ये, "अधो न क्षीयते जातु यस्मात्तस्मादधोऽक्षज इत्युक्त" लक्षणे, वा विष्णौ ।
**अधोजिह्विका** स्त्री० अल्पा जिह्वा जिह्विका अल्पार्थे क अधोऽधरा जिह्विका कर्म्म० । आलजिभ इति ख्यातायाम् तालुस्थजिह्विकायाम् । [भागे पाताललोके ।
**अधोभुवन** न० अधोऽधरं भुवनं लोकः कर्म्म० । भूमेरधरे
**अधोमुख** त्रि० अधो मुखं यस्य ब० । अवाङ्मुखे, ज्योतिष-शास्त्रे प्रसिद्धेषु नक्षत्रभेदेषु च । यथा मूलाश्लेषा कृत्तिका च विशाखा भरणी तथा । मघा पूर्व्वात्रयं चैव अधोमुख गणः स्मृत इति । गोजिह्वाख्यवृक्षे स्त्री० टाप् ।
**अधोलोक** पु० अधोऽधरो लोकः कर्म्म० । भूमेरधस्थपाताले ।
**अध्यक्ष** त्रि० अधिगतोऽक्षं व्यवहारं गतिस० । नृपस्य छत्र-धारणादिव्यवहारेऽधिकृते । अध्यक्ष्णोति व्याप्नोति अधि+ अक्ष-अच् । व्यापके । अधिगतं मूलतया अक्षमिन्द्रियम् गति स० । प्रत्यक्षज्ञाने । अर्श आदित्वात् अचि, तद्विषये त्रि० ।
**अध्यग्नि** अव्य० अग्नौ अग्निसमीपे वा विभक्त्यर्थे सामीप्येऽर्थे वा अव्ययी० । अग्नौ अग्निसमीपे वा । तत्र स्थाने विवाहादौ स्त्रीभ्यो दत्ते धनादौ न० । स्मृतिशास्त्रे चास्मि-न्नर्थे पारिभाषास्य कृता यथा विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ । तदध्यग्नि कृतं सद्भिः स्त्रीधनं परिकीर्त्तितमिति ।

**अध्यण्डा** स्त्री० अधिकमण्डं वीजं यस्याः ६त० । अधिक वीजवत्यां, भुंइ आमला इति ख्यातायाम् भूम्यामलक्याम् ।
**अध्यधीन** त्रि० अधिकोऽधीनः प्रा०स० । अत्यधीने गर्भदासे च ।
**अध्ययन** न० अधि+इङ-ल्युट् । पठने, गुरुमुखोच्चारणानुसारि-णि उच्चारणे च । अध्ययनञ्चाक्षरमात्रपाठ इति वैदिकाः सार्थाक्षरग्रहणमिति मीमांसकाः ।
**अध्यर्द्ध** त्रि० अधिकमर्द्धं यस्य ब० । सार्द्धेन सहिते वस्तुमात्रे ।
**अध्यवसाय** पु० अधि+अव+सो-घञ् । इदमेवमेवेति विषय परिच्छेदे निश्चये । स चात्मधर्म्म इति नैयायिकाः बुद्धिधर्म्म इति सांख्यादयः । उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेः रजस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽयमध्यव-साय इति वृत्तिरिति चाख्यायते इति सांख्यतत्त्वकौमुदीप-रिभाषितलक्षणः, कर्त्तव्यमिति योऽयं निश्चयः चित्-सान्निध्यात् प्राप्तचैतन्याया बुद्धेः परिणामः सोऽयमध्य-वसाय इत्युक्तलक्षणो वा निश्चयः । उत्साहे च ।
**अध्यात्म** अव्य० आत्मनि देहे मनसि वा विभक्त्यर्थे अव्ययी० । आत्माधिकरणे देहाधिकरणे चित्ताधिकरणे च । तदधि कृत्य विद्याविषये आत्मतत्त्वे, स्वभावोऽध्यात्ममुच्यते इति गीतावचनात् स्वभावे, भावस्य स्वरूपं प्रत्यक्चैतन्यमिति तस्मिन्, परब्रह्मणि च । अतएव अध्यात्मविद्याशब्दादी-नामेतद्विषयकविद्यार्थत्वं वेदान्तादौ प्रसिद्धम् ।
**अध्यापक** त्रि० अधि+इङ्-णिच्-ण्वुल् । प्रागुक्ताध्ययनकार-यितरि, उपाध्याये च ।
**अध्यापन** न० अधि+इङ-णिच्-भावे ल्युट् । पाठनायाम् । युचि तु स्त्रीत्वात् टापि, अध्यापना तस्मिन्नेवार्थे ।
**अध्याय** पु० अधि+इङ्-घञ् । अध्ययने, वेदादिशास्त्रस्य एकार्थकविषयसमाप्तिद्योतके विश्रामस्थाने अंशविशेषे, 'स-र्गोवर्गः परिच्छेदोद्घाताध्यायाङ्कसंग्रहाः । उच्छ्वासः परि-वर्त्तश्च पटलः काण्डमेव च । स्थानं प्रकरणञ्चैव पर्व्वो-ल्लासाह्निकानि च । पुराणादौ परिच्छेदा अनेके परि-कीर्त्तिता इत्युक्तान्यतमप्रकारे च ।
**अध्यारूढ़** त्रि० अधि+आ-रुह-कर्त्तरि क्त । आरोहण कर्त्तरि अधिके च ।
**अध्यारोप** पु० अधि+आ-रुह-णिच्-पुक् च घञ् । अत-स्मिन् तद्बुद्धिरारोपो मिथ्याज्ञानम् किञ्चिदधिष्ठानमधि कृत्य तादृशारोपः अध्यारोपः यथा असर्पभूतां रज्जुमधि-कृत्य सर्पारोपः तथैव अजगद्रूपे ब्रह्मणि जगद्रूपारोपः । तादृशे मिथ्याज्ञाने ।

**अध्यावाहनिक** न० अध्यावाहनं पितृगृहात् भर्तृगृहागमनकाले लब्धं अधि+आ+वह-ल्युट् ततः लब्धार्थे ठन् ठस्येक। यत् पुनर्लभते नारी नीयमाना हि पैतृकात्। अध्यावाहनिकं नाम स्त्रीधनं परिकीर्त्तितमिति स्मृत्युक्तलक्षणे पितृकुलात् भर्तृकुलगमनकाले तेभ्यः प्राप्ते स्त्रीधने।

**अध्याशन** न० अधि+आ-अश-ल्युट्। भोजनोपरिभोजने।

**अध्यास** पु० अधि+अस-घञ्। अतस्मिन् तद्बुद्धौ अध्यारोपे। अधि-आस घञ्। आसने। [निवेशने च।

**अध्यासित** त्रि० अधि+आस-क्त। अधिष्ठिते। स्थिते।

**अध्याहार** पु० अधि+आ+हृ-घञ्। आकाङ्क्षाविषयपदानुसन्धाने, ऊहे, तर्के, अपूर्वोत्प्रेक्षणे च।

**अध्यूढ** पु० अधि+वह-क्त। प्रभौ समृद्धे च। आरोहणकर्त्तरि त्रि०। ऋच्यध्यूढं साम गीयते इति श्रुतिः। अधि-उपरि ऊढ़ऊढ़ा यस्याः ब०। कृतसपत्निकायां स्त्रियां कृतद्वितीयविवाहस्य प्रागूढयोषिति स्त्री०।

**अध्येषण** न० अधि-इष-प्रेरणे ल्युट्। सत्कारपूर्वकमाचार्य्यादेः प्रेरणे, प्रवर्त्तनमात्रे च। युचि टाप् तत्रिवार्थे स्त्री०। [अस्थिरे च।

**अध्रुव** त्रि० ध्रु-क न०त०। चले, विकारवति, अनित्ये,

**अध्वग** पु० अध्वन्+गम-ड। पथिके, सूर्य्ये, उष्ट्रे च। पथिगामकमात्रे त्रि०। गङ्गायां स्त्री०।

**अध्वगभोग्य** पु० अध्वगेन अतिसौलभ्यात् अयत्नलभ्यफलत्वाञ्च भोग्यं ३त०। आमड़ा इति प्रसिद्धे आम्रातकवृक्षे।

**अध्वजा** स्त्री० अध्वनि जायते जन-ड ७त०। सोना इति ख्याते स्वर्णपुष्पीवृक्षे।

**अध्वन्** पु० अत्ति बलम् अद-क्वनिप् धादेशः। पथि, अधिकदुरारोहणे च। (सर्व्वभक्षकत्वात्) काले, हिंसे च। अद्यते खण्डशो भक्ष्यतेऽनेनेति करणे घञि। अवयवे।

**अध्वनीन** त्रि० अध्वानमलं गच्छति अध्वन्+ख। पथिके।

**अध्वन्य** त्रि० अध्वानमलं गच्छति अध्वन्+यत्। पथिके।

**अध्वर** पु० अध्वानं सत्पथं राति रा+क। यज्ञे। न ध्वरति कुटिला न भवति ध्वृ-अच् न०त०। सावधाने, अष्टवसुमध्ये द्वितीयवसौ च।

**अध्वरथ** पु० अध्वैव रथो यस्य ब०। पथिमग्ने दूते। अध्वने हितो मर्य्यादो रथो यस्य ब०। पथिगमनोपयुक्ते रथे।

**अध्वर्यु** पु० अध्वरमिच्छति अध्वर+क्यच्- युच् ततोऽन्त्याकारलोपः। यजुर्वेदज्ञे होमकारिणि ऋत्विजि।

**अध्वशल्य** पु० अध्वनि शल्यमिवाचरतीति क्विप+अच। पथिकानां पादवस्त्रादौ शल्यवद्वेधकारके आपाङ् इति ख्याते अपामार्गवृक्षे।

**अन** जीवने अदादि०पर० अक०सेट्। अनिति आनीत्।

**अन** जीवने दिवा० आत्म० अक० सेट्। अन्यते आनिष्ट।

**अनक्ष** त्रि० नास्ति अक्षं चक्षुः नेत्रादिकमिन्द्रियं वा यस्य ब०। चक्षुःशून्ये चक्षुरादीन्द्रियशून्ये च।

**अनक्षर** न० अप्रशस्तान्यक्षराणि यत्र ब०। सद्गुणस्याक्षेपके दोषोद्घोषकवाक्ये, अवाच्ये निन्दावचने, गालि इति प्रसिद्धे दुष्टवचने च।

**अनक्षि** पु० अप्रशस्तं मन्दमक्षि न०त०। मन्दनेत्रे। ब०। तद्वति तत्र अनक्ष इत्येव टच् समासान्तः।

**अनग्नि** पु० नास्ति अग्निः श्रौतः स्मार्त्तो वाऽस्य। श्रौतेन स्मार्त्तेन वा विधिना अनाहिताग्नौ गृहस्थादौ, सर्व्वथा अग्निशून्ये प्रव्रजिते च।

**अनघ** त्रि० नास्ति अघं पापं दुःखं व्यसनं कालुष्यं वा यस्य। पापशून्ये, दुःखहीने, व्यसनशून्ये मलशून्ये स्वच्छे च।

**अनङ्ग** न० नास्ति अङ्गमाकारो यस्य। आकाशे चित्ते। कन्दर्पे पु०। अङ्गशून्यमात्रे त्रि०। [विशेषे।

**अनङ्गशेखर** पु० क्रमेण लघुगुरुनिवेशवति दण्डकभेदे,छन्दो-

**अनच्छ** त्रि० न अच्छः निर्म्मलः न०त०। कलुषे, अप्रसन्ने च।

**अनञ्जन** न० न अज्यते लिप्यते अनुज-कर्म्मणि ल्युट् न०त०। निःसम्बन्धे आकाशे, परब्रह्मणि च। अञ्जनं दोषसन्तद्रहिते नारायणे पु०। तथाभूतवस्तुमात्रे त्रि०।

**अनडुह्** पु० अनः शकटं वहतीति नि०। एड़ा इति प्रसिद्धे गवि। स्त्रियां गवि ङीपि अनडुही अनड्वाहीति च।

**अनध्याय** पु० अध्यायोऽध्ययनमभावार्थे न०त०। अध्ययनाभावे। न अधीयतेऽस्मिन् काले इति अधिकरणे घञि, अध्ययनाय निषिद्धे "चातुर्मास्यद्वितीयायाम्। मन्वादिषु युगादिषु। अष्टकासु च संक्रान्तौ शयने बोधने हरेः। अनध्यायं प्रकुर्व्वीतेत्याद्युक्ते काले, निर्घाते भूमिचलने इत्याद्याकालिकानध्यायकाले च।

**अनन्त** पु० नास्ति अन्तः गुणानां यस्य ब०। गन्धर्व्वाप्सरसः सिद्धाः किन्नरोरगचारणाः। नान्तं गुणानां जानन्ति तेमानन्तोऽयमुच्यते इत्युक्तलक्षणे विष्णौ,मेघे च। वसुधैकत्वादपरिच्छिन्ने शेषनागे, तदवतारे बलभद्रे च। अन्तः परिच्छेदः देशतः कालतः वस्तुतश्च यस्य नास्ति तस्मिन् परब्रह्मणि आकाशे च न०। बहुविस्तारवति सिन्दुवारवृक्षे पु०। अवधिशून्ये, इयत्ताशून्ये च वस्तुमात्रे त्रि०।

**अनन्तव्रत** न० अनन्तस्य व्रतमुपासनार्थत्वात् ६त० । भाद्रशुक्लचतुर्दश्यां कर्त्तव्ये स्वनाम्ना ख्याते व्रते ।

**अनन्ता** स्त्री० नास्ति अन्तोऽस्या ब० । विशल्यायामोषधौ अनन्तमूल इति ख्याते मूलभेदे, पार्व्वत्याम्, पृथिव्याम्, दुःस्पर्शायां दुरालभायां,दूर्व्वायां,हरितक्यां आमलक्याम्, गुडूच्याम्, अग्निमन्थवृक्षे, अग्निशिखावृक्षे, श्यामलतायाम्, पिप्पल्यां च ।

**अनन्यज** पु० नास्ति अन्यद्यस्मात् सर्व्ववस्तुभेदानां तदात्मकत्वात् स विष्णुः तस्मात् जायते जन-ड ५त० । कामदेवे ।

**अनन्यवृत्ति** त्रि० न अन्यस्मिन् ध्येयभिन्ने वृत्तिर्यस्य ब० । एकान्तचित्ते । [अर्थालङ्कारभेदे पु० ।

**अनन्वय** त्रि० नास्ति अन्वयो यत्र ब० । अन्वयशून्ये ।

**अनय** पु० अयः शुभावहो विधिस्तदन्यः न०त० । अशुभदैवे द्यूतकारिणामप्रसव्यगमने च । नयो नीतिः नी-अच् न०त० । नयाभावे अनीतौ । ब० । तच्छून्ये त्रि० ।

**अनर्गल** त्रि० अर्गलं द्वाररोधकस्तम्भः ब० । द्वाररोधकस्तम्भशून्ये, प्रतिबन्धकशून्ये च ।

**अनर्घ** त्रि० अर्घो मूल्य न० ब० । अमूल्ये ।

**अनर्थ** पु० अर्थः प्रयोजनं विरोधे नञ् त० । अनिष्टे । ब० । अभीष्टरहिते विष्णौ पु० आप्तकामत्वात् । अर्थोऽभिधेयः प्रयोजनं वा नास्ति यस्य ब० । अर्थरहितमात्रे त्रि० ।

**अनर्थक** न० अर्थोऽभिधेयोऽप्राप्यस्त्ये नञा ब० । उरःप्रभृति० कप् समासान्तः । समुदायार्थशून्ये प्रलापे, असम्बद्धे वाक्ये च । व्यर्थे त्रि० ।

**अनर्थान्तरम्** न० अन्योऽर्थः अर्थान्तरं मयूर०त० ततः न०त० । अभेदे, एकार्थे ।

**अनल** पु० नास्ति अलः पर्य्याप्तिर्यस्य वह्वदाह्यदहनेऽपि तृप्तेरभावात ब० । वह्नौ, अष्टवसुमध्ये पञ्चमे वसौ, अनलदैवतत्वात् कृत्तिकानक्षत्रे च । चिता इति ख्याते चित्रके वृक्षे, पु० तस्य सर्व्वतः पर्य्याप्तत्वेऽपि पर्य्याप्तेः सीमाभावात्, भेला इति ख्याते भल्लातके वृक्षे पित्तनामके देहस्थे वायुद्वारके धातौ च । अव्ययी० । नलाभावे अव्य० । न०त० । नलभिन्ने । अन-कलच् । षष्टिवर्षमध्ये पञ्चाशत्तमख्याते वर्षे ।

**अनलप्रभा** स्त्री० अनलस्य प्रभेव प्रभा यस्य ब० । ज्योतिष्मतीनामिकायां लतायाम् ।

**अनलि** पु० अनितीत्यनु अन-क्विप् अन् अलिर्यत्र ब० । बक वृक्षे तस्य मधुभिर्भ्रमराणां जीवनधारणात् ।

**अनवधानता** स्त्री० अवधीयते मनः संयुज्यते कर्त्तव्यकर्म्मणि यथास्थितं प्रवर्त्ततेऽनेन अव+धा-करणे ल्युट् अवधान चित्तवृत्तिभेदः तन्नास्ति यस्य तस्य भावः । प्रमादे । कर्त्तव्येऽकर्त्तव्यतावोधेन ततोनिवृत्तिः, अकर्त्तव्ये च कर्त्तव्यतावोधेन तत्र प्रवृत्तिः प्रमादः ।

**अनवरत** त्रि० अव+रम्-भावे क्त अवरतम् तन्नास्ति यस्य ब० । निरन्तरे उत्कृष्टे च ।

**अनवलोभन** न० सीमन्तोन्नयनानन्तरं चतुर्थे मासि कर्त्तव्ये गर्भस्य संस्कारविशेषे स्वनाम्ना प्रसिद्धे ।

**अनवसर** त्रि० अवसरत्यत्र अव+सृ-अच् अवसरः उचितः कालः स नास्ति यस्य ब० । उचितकालविहीने । न०त० । अवसराभावे ।

**अनवस्कर** त्रि० अवस्क्रियते शोध्यते अव-कृ-अच सुडागम अवस्करो मलः स नास्ति यस्य ब० । विमले ।

**अनवस्था** स्त्री० अव+स्था-अङ् अवस्थितिः न०त० । अवस्थाभावे, तर्कदोषविशेषे, उपपाद्यस्य समर्थनाय उपपादकस्यानुसरणं तर्कः यत्र तर्के उपपाद्योपपादकयोर्विश्रान्ति र्नास्ति तादृशतर्कस्यानवस्थादोषः तेन स तर्को न ग्राह्यः ।

**अनवस्थान** न० अव+स्था-ल्युट् न०त० । अवस्थानाभावे । ब० । वायौ पु० । चञ्चलमात्रे त्रि० ।

**अनशन** अश ल्युट् न० त० । भक्षणाभावे, उपवासे च । ब० । भोजनशून्ये त्रि० ।

**अनस्** न० अनिति शब्दायते अन-असुन् । शकटे । करणे ल्युट् । ओदने । मातरि स्त्री० ।

**अनसूया** स्त्री० असू-कण्ड्वादित्वात् यक्-अङ् न०त० । असूया गुणेषु दोषारोपस्तदभावे, अत्रिमुनिपत्नीयाञ्च ।

**अनाकुल** त्रि० न आकुलः न०त० । अव्यग्रे, एकाग्रे, स्थिरे, असङ्कीर्णवाक्ये च ।

**अनाक्रान्ता** स्त्री० आक्रमितुमयोग्या सर्व्वतः कण्टकावृतत्वात् आ+क्रम-क्त न०त० । कण्टकारिवृक्षे । आक्रान्तभिन्ने त्रि० ।

**अनागत** त्रि० आ+गम-क्त आगतः न०त० । भाविनि, अज्ञाते, अनुपस्थिते, आगमनकर्त्तृभिन्ने च ।

**अनागतार्त्तवा** स्त्री० ऋतोः स्त्रीपुष्पस्येदं विकाशनम् आर्त्तवम् +ऋत+अण् न आगतमार्त्तवं यस्याः ब० । स्त्रीधर्म्मशून्यायां नग्निकायां कन्यायाम् ।

**अनाचार** पु० आ-चर-घञ् अप्राशस्त्येऽभावे वा नञा त० । कदाचारे, आचाराभावे च । ब० । आचारहीने त्रि० ।

**अनातप** पु० आ+तप-अच् न०त० । आतपस्य रौद्रस्याभावे छायायां च । ब० । आतपशून्ये त्रि० ।

**अनात्मन्** पु॰ अतति सातत्येन तिष्ठति अत-मनिन् अप्राशस्त्ये भेदार्थे च न॰त॰। आत्मभिन्ने, अपकृष्टात्मनि देहादौ "अप्राप्तः प्राप्यते योऽयमत्यन्तं त्यज्यतेऽथ वा। जानीयात्तमनात्मानं वृद्धान्तं वपुरादिकम्" इति प्रतिपादिते च।

**अनादर** पु॰ आ+दृ-अच् आदरः गौरवहेतुका सम्माननमा विरोधे नञ् त॰। परिभवे, तिरस्कारे च तस्य आदरविरोधित्वात्। ब॰। आदरशून्ये त्रि॰। [ब॰।

**अनादि** पु॰ आदिः कारणम् पूर्व्वकालो वास्य नास्ति यस्य परमेश्वरे। नास्ति आदिः प्राथमिकोयस्मात् ५ब॰। हिरण्यगर्भे पु तस्य। सृष्टेः प्रथमोत्पत्तेः। आदिशून्ये त्रि॰

**अनामन्** न॰ अननमनः अन-अच् अनं जीवनम् अमयति रुजति अम-अनि। अर्शोरोगे। नामशून्ये मलमासे पु॰ तस्य वैदिककर्म्मानर्हतयाऽनामत्वात्। नामशून्ये त्रि॰।

**अनामय** पु॰ अम-घञ् आमं तापं यात्यनेन या-क आमयो रोगः न॰ त॰। रोगाभावे आरोग्ये। न॰ ब॰। रोगशून्ये त्रि॰।

**अनामा** स्त्री॰ ब्रह्मणःशिरश्छेदनसाधनतया ग्रहणायोग्यत्वात् नास्ति नाम ग्रहणयोग्यं यस्याः ब॰ मनन्तत्वात् डाप्। स्वनामप्रसिद्धायां मध्यमाकनिष्ठयोः मध्यगायामङ्गुल्याम्। स्वार्थे क अनामिकाप्यत्र। तथा हि शिवेन ब्रह्मशिरश्छिन्नमितिपुराणे प्रसिद्धम् अतएव तस्यां पवित्रीकरणार्थं पवित्रनामककुशधारणं क्रियते।

**अनायास** पु॰ आ-यस घञ् अल्पार्थे न॰त॰। प्रयत्नाभावे, अल्पप्रयासे, अक्लेशे च। ब॰। प्रयत्नशून्ये त्रि॰।

**अनयासकृत** न॰ अनायासेन अल्पप्रयत्नेन कृतं न॰त॰। अल्पायासेन साध्ये कार्यादौ।

**अनारत** न॰ आ-रम-क्त आरतं विरतिः अत्यन्ताभावे न॰त॰। सन्तते, अविरते अविच्छेदे च। ब॰। तद्वति त्रि॰।

**अनार्जव** पु॰ ऋजोर्भाव आर्ज्जवं सरलता स्वाच्छन्द्यं नञा ७ब॰। रोगे। अव्ययी॰। ऋजुताभावे अव्य॰। ६ब॰। कुटिले त्रि॰।

**अनार्य्यक(ज)** न॰। अनार्य्यदेशे आर्य्यावर्त्तादिभिन्ने द्वीपान्तरादौ भव अनार्य्य+क। अगुरुकाष्ठे। जइति पक्षे तस्मिन् जायते जन-ड। अनार्य्यदेशजाते त्रि॰।

**अनार्य्यतिक्त** पु॰ अनार्य्यप्रियस्तिक्तः शाक॰ त॰। चिराता इति ख्याते भूनिम्बे वृक्षे।

**अनावृत्ति** स्त्री॰ आ+वृत-क्तिन् अभ्यासः आगतिश्च न॰ त॰। अभ्यासाभावे, आगमनाभावे च। ब॰। तद्वति त्रि॰।

**अनावृष्टि** स्त्री॰ आ-ईषत्-वृष क्तिन् न॰ त॰। ईषद्वृष्टेरप्यभावे शस्योपघातकोपद्रवे ईतिभेदे।

**अनाशक** पु॰। आ सम्यक् यथेच्छम् आशः अशनम् आ+अश घञ् न॰त॰। यथेच्छभोगाभावे, तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन तपसाऽनाशकेनेति श्रुतिः।

**अनाशिन्** पु॰ न नश्यति नश-णिनि न॰त॰, न अश्नाति कर्म्मफलं अश णिनि न॰त॰ वा। नाशशून्ये, कर्म्मफलाभोक्तरि च परमेश्वरे।

**अनाश्वन्** त्रि॰ न+अश-क्वसु नि॰। अशनमकृतवति।

**अनास्था** स्त्री॰ आ+स्था-अङ् आस्था आदरः न॰त॰। अनादरे। ब॰। आदररहिते त्रि॰।

**अनाहत** न॰ आ-हन-भावे क्त आहतं छेदो भोगो वा न॰ब॰। छेदभोगादिरहिते नवीने वस्त्रे। तन्त्रशास्त्रप्रसिद्धे हृदयस्थिते द्वादशदलपद्मे "शब्दो ब्रह्ममयः शब्दोऽनाहतो यत्र दृश्यते अनाहताख्यं तत् पद्मं मुनिभिः परिकीर्त्तितमित्युक्तलक्षणे च अस्मिन् पक्षे च आहतमाघातः कण्ठताल्वाद्यभिघातः तन्नास्ति यस्य तादृशः शब्दे अस्यास्ति अर्श आदित्वात् अच्। अनाहतशब्देन च परापश्यन्ती मध्यमावैखरीतिप्रसिद्धानां वाग्वृत्तीनां मध्ये मध्यमा वाक कथ्यते तस्याः हृदयपद्मे उत्पन्नत्वात्। ब॰। आघातरहिते वस्तुमात्रे त्रि॰।

**अनिकेत** त्रि॰ नास्ति निकेतः नियमेन वासो यस्य ब॰। नियतनिवासशून्ये परिव्राजके।

**अनिमि(मे)ष** पु॰ नास्ति निमिषः चक्षुःस्पन्दनं यस्य मिष-घञ् कुटादि॰ न गुणः मिष आदि घञ्-वा ६ब॰। चक्षुःस्पन्दनशून्ये देवे मत्स्ये च। निमेषो दृष्टिप्रतिबन्धकस्तच्छून्ये विष्णौ च। न निमिषति चलतीति नि+मिष-क न॰त॰। काले। क्रियाशून्ये वस्तुमात्रे त्रि॰।

**अनियन्त्रित** त्रि॰ नि+यन्त्र चु॰ क्त न॰त॰। अनियमिते, उच्छृङ्खले च।

**अनिरुद्ध** पु॰ न केनापि युद्धेन निरुद्धः नि+रुध-क्त न॰त॰। कामदेवपुत्रे, उषापतौ, वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाख्यचतुर्व्यूहस्य परमेश्वरस्य अनिरुद्धस्य अत्यन्तबलस्य चेतसोऽधिष्ठातरि अनिरुद्धाख्ये अंशे च अप्रतिरुद्धे त्रि॰।

**अनिरुद्धपथ** न॰ न निरुद्धः पन्था यत्र ब॰। आकाशे तत्र कस्यापि गतिरोधनाभावात्। रुद्धवर्त्मभिन्ने ।

**अनिर्द्देश्य** त्रि॰ निर्द्देश्यं जातिगुणक्रियासंज्ञाभिर्निर्द्देष्टुमशक्यम् निर्+दिश-शक्यार्थे ण्यत् न॰त॰। निर्विशेषे निर्धर्म्मके

परमात्मनि तस्य जातिगुणाद्यभावेन इदं तदिति निर्देशायोग्यत्वात् ।

**अनिर्व्वचनीय** पु० निर्वचनं निरुक्तिः लक्षणादिना ज्ञापनं तद्गोचरतया निर्वक्तुमशक्ये वियदादौ, परात्मनि च ।

**अनिल** पु० अनित्यनेन अन-इलच् । वायौ, तेनैव सर्व्वेषां प्राणधारणात्, तद्देवताके स्वातिनक्षत्रे, "वाताः पञ्चाशदूनका" इत्युक्तगणदेवताभेदे, अष्टवसुमध्ये पञ्चमे वसौ च ।

**अनिलघ्नक** पु० अनिलं वातरोगं हन्ति हन्-क ततः स्वार्थे क । वयड़ा इति ख्याते वृक्षे तत्फलस्य वातनाशकत्वात् ।

**अनिलसख** पु० अनिलस्य वायोः सखा टच् । वह्नौ ।

**अनिलान्तक** पु० अनिलो वातरोगस्तस्यान्तकः अन्तं करोतीति अन्त+णिच् ण्वुल् । जीयापुति इति ख्याते वृक्षे ।

**अनिलामय** पु० अनिलकृत आमयः शाक० त० । वातरोगे ।

**अनिवार** त्रि० नास्ति निवारो निवारणं यस्य । अविच्छेदे, सतते, अनिवार्य्ये च ।

**अनिश** त्रि० निशा चेष्टाव्याघातः सा नास्ति यस्य ब० । अविरते, निरन्तरे, सदाभवे वस्तुनि, रात्रिवर्ज्जिते च ।

**अनिष्ट** त्रि० इष-क्त विरोधे नञ् त० । इष्टस्य सुखादेर्विरोधिनि प्रतिकूलवेदनीये दुःखे, तत्साधने, पापे, विषादौ, अपकारे च । नागबलायां स्त्री० ।

**अनीक** न० अनित्यनेन अन-ईकन् । सैन्ये, तस्य हि जीवनरक्षकत्वात् । न नीयते अपसार्य्यतेऽस्मात् । नी-क्विप् ब० कप् ह्रस्वाभावः । युद्धे, ततोहि प्रायोसरणान्नापसारणम् ।

**अनीकस्थ** पु० अनीके युद्धे तिष्ठति स्था-क । युद्धगते सैन्ये ।

**अनीकिनी** स्त्री० अनीकं युद्धं प्रयोजनतया अस्त्यस्याः अनीक+इनि । सेनायाम्, हस्त्यादिसंख्याविशेषवत्यां सेनायाञ्च तत्संख्या च हस्तिनः २१८७ । रथाः २१८७ । अश्वाः ६५६१ । पदातयः १०९३५ समुदिताः २१८७० ।

**अनीश** पु० नास्ति ईशो नियन्ता यस्य ब० । सर्व्वनियन्तरि विष्णौ । न०त० । ईश्वरभिन्ने स्वामिभिन्ने च त्रि० ।

**अनीह** त्रि० ईह-अङ् न०ब० । स्पृहाशून्ये निश्चेष्टे च ।

**अनु** अव्य० अन-उ । सहार्थे, पश्चादर्थे, सादृश्ये, लक्षणे, हीने, व्याप्तौ, कञ्चित्प्रकारप्राप्तिज्ञापने, भागे, अनुक्रमे, आयामे, समीपे च ।

**अनुक** त्रि० अनुकामयते अनु+कम-ड । कामनावति ।

**अनुकम्** अव्य० अनुकामयते अनु-कम् क्विप् । वितर्के ।

**अनुकम्पा** स्त्री० अनु+कम्प-अ । दयायाम्, किञ्चिच्चलने च ।

**अनुकरण** न० सादृश्ये-अनु+कृ-ल्युट् । अनुकरणे । तच्च देशभाषावयवादिभिः सदृशीकरणम् । अनुक्रियतेऽनेनेति करणे ल्युट् । सदृशीकरणसाधने । यथा पटत्पटदित्यादि शब्दाः अव्यक्तशब्दस्यानुकरणानि ।

**अनुकर्ष(ण)** पु० अनुकृष्यते स्वसंबद्धेन चक्रेण अनु+कृष घञ् । रथाधःस्थिते चक्रोपरिबद्धे काष्ठे, पूर्व्वसूत्रोपात्तपदादेरुत्तरत्रान्वयार्थमाकर्षणे च । कर्त्तरि ल्यौ नान्तोऽप्यत्रार्थे ।

**अनुकल्प** पु० कल्प्यते विधीयते इति क्लृप-णिच्-अच् कल्पो-विहितः अनु हीनः कल्पो मुख्यकल्पादधमः प्रा०स० । गौणकल्पे, प्रतिनिधौ च । यथा मध्वभावे गुडः ।

**अनुकामीन** त्रि० कामस्य अभिलाषस्य सदृशमनुकामं सादृश्ये ऽव्ययी० ततः गच्छतीर्थे ख । यथेष्टगमनशीले ।

**अनुकार** पु० अनु-कृ-घञ् । देशभाषादिभिः सदृशीकरणे ।

**अनुकूल** त्रि० कूलमावरणं स्नेहेनानुबन्धमिति यावत् अनुगतस्तं गतिस० । सहचरे, सहाये, स्वपक्षपातिनि, अलङ्कारशास्त्रप्रसिद्धे नायकभेदे च । सा० ३परि० ।

**अनुक्रम** पु० अनु+क्रम-घञ् न वृद्धिः । परिपाट्याम् । आनुपूर्व्ये अव्ययी० । यथाक्रमे अव्य० ।

**अनुक्रमणिका** स्त्री० अनुक्रम्यते यथोत्तरं परिपाट्या आरभ्यतेऽनया अनु+क्रम-करणे ल्युट् स्त्रीत्वात् ङीप् स्वार्थे के ह्रस्वः । अनुक्रमज्ञापके, ग्रन्थाद्यंशे वक्तव्यस्य, ग्रन्थशेषे च उक्तार्थस्य,अर्थसमुदायस्य संग्राहके पुराणादेरंशविशेषे । स्वार्थे काभावेऽनुक्रमणीत्यपि, तत्रैव ।

**अनुक्रोश** पु० अनुक्रोशत्यनेन क्रुश आह्वाने रोदने च घञ् । दयायाम् । अनुगतः क्रोशं गतिस० । प्राप्तक्रोशके त्रि० ।

**अनुग** त्रि० अनु+गम ड । पश्चाद्गामिनि, सहचरे, आनुलोम्यं गते च ।

**अनुगत** त्रि० अनु+गम-क्त । पश्चाद्गते, सहगते, आनुलोम्यं गते, सामान्यधर्म्मग्रहणेन संगृहीतेऽखिले विशेषे च ।

**अनुगम** पु० अनु+गम घञ् वृद्ध्यभावः । पश्चाद्गमने, सहायीभवने, आनुलोम्यकरणे, सामान्यधर्म्मेण सर्व्वेषां विशेषरूपाणां संग्रहे च ।

**अनुगुण** त्रि० अनुकूलो गुणो यस्य । अनुकूले अनुगते च ।

**अनुग्रह** पु० अनु+ग्रह-अप् । अभीष्टसम्पादनेच्छारूपे प्रसादे, आनुकूल्ये, अनिष्टनिवारणपूर्व्वकेष्टसाधनेच्छारूपायामभ्युपत्तौ, "विरूपोन्मत्तनिःस्वानामकृतापूर्व्वकं हि यत् । पूरणं दानमानाभ्यामनुग्रह उदाहृत" इत्युक्तलक्षणे दरिद्रादिपोषणे च । पश्चाद् ग्रहणं सूर्य्यादिग्रहो वा अनुगतत्वम् गति स० । ग्रहणानुगते सूर्य्यादिग्रहानुगते च त्रि० ।

**अनुचर** त्रि॰ अनु+चर-ट । सहचरे, पश्चाद्गामिनि, दासादौ, स्त्रियां ङीप् । अनुगतश्चरं दूतं गतिस॰ । दूतानुगे त्रि॰ ।

**अनुज** त्रि॰ अनु पश्चात् जायते जन-ड । पश्चाज्जाते सहोदरे भ्रातरि । तादृश्यां भगिन्यां स्त्री॰ ।

**अनुजीविन्** अनुजीवितुमाश्रयितुं शीलमस्य अनु+जीव-णिनि । सेवके, आश्रिते च ।

**अनुज्ञा** स्त्री॰ अनु+ज्ञा-अङ् । स्वयंप्रवृत्तस्यान्यस्य प्रवृत्तिविघाताकरणेन प्रवर्त्तमाकृपायामनुमतौ ।

**अनुतर्ष** न॰ अनुतृष्यतेऽनेन करणे घञ् । सुरापानपात्रे, मद्ये, मद्यपाने च । भावे घञ् । अभिलाषे पानेच्छायाम् ।

**अनुताप** पु॰ अनु+तप-घञ् । इदमनुचितं कृतमिति स्वकृतवस्तुनो दुःखजनकतया ज्ञानेन पश्चात्तापे ।

**अनुत्तर** त्रि॰ उत्तरउत्तमः नञ् ५ब॰ । अत्यन्तश्रेष्ठे । ६ब॰ । उत्तरवाक्यरहिते । न॰त॰ । उत्तरदिग्भिन्ने स्त्री॰ ।

**अनुदात्त** पु॰ उच्चैरात्तः उच्चारित उदात्तः न॰त॰ । वर्णोच्चारणस्थानेषु कण्ठादिषु नीचोच्चारणप्रयत्नविशेषे स्वरभेदे ।

**अनुदित** पु॰ उत्+इण्+क्त ईषदर्थे न॰त॰ । किरणमात्रेण ईषदुदितसूर्ये प्रविरलतारके काले । उदितेऽनुदिते चैवेति मनुः ।

**अनुद्रुत** त्रि॰ अनु+द्रु-क्त । पश्चाद्गते, "अर्द्धमात्रं द्रुतं ज्ञेयं द्रुतार्द्धञ्चाप्यनुद्रुतमित्युक्तलक्षणे वादनविषये कालविशेषे च ।

**अनुधावन** न॰ अनु+धाव-ल्युट् । पश्चाद्गमने, तत्त्वनिश्चयायानुसरणे, अनुसन्धाने च ।

**अनुध्या** स्त्री॰ अनु+ध्यै-अङ् । अनुचिन्तने, अनुग्रहे, आसक्तौ च ।

**अनुनय** पु॰ अनु+नी-अच् । विनये, प्रणिपाते, प्रार्थने, सान्त्वने च ।

**अनुनासिक** पु॰ अनुगता नासां गतिस॰ तत्रोचार्य्यमाणार्थे ठ । नासानुगतेन मुखेनोच्चार्य्यमाणेषु वर्ग्यान्त्येषु ङञादिषु ।

**अनुपद** अव्य॰ पदस्य पश्चात् अव्ययी॰ । पश्चाद्गमने, अव्यवधाने च । अनुगतं पदम् गतिस॰ । पश्चाद्गामिनि त्रि॰ ।

**अनुपदिन्** त्रि॰ अनुपदम् अन्वेष्टा अनुपद+अन्वेष्टरीत्यर्थे इनि । अन्वेषणकर्त्तरि । गवामेवान्वेष्टरीत्यन्ये । स्त्रियां ङीप् ।

**अनुपदीना** स्त्री॰ अनु पदस्य आयामतुल्यायामः आयामेऽव्ययी॰ अनुपदं बद्धेत्यर्थे ख । पादतुल्यायामवत्यां पादबद्धायां पादुकायाम् मोजा इत्यादि ख्यातायाम् ।

**अनुपपत्तिः** स्त्री॰ उप+पद-क्तिन् । उपपत्तिर्युक्तिः न॰त॰ । युक्त्यभावे, असङ्गतौ च ।

**अनुपम** त्रि॰ उप+मा-अङ् न॰ब॰ । उपमाशून्ये, सादृश्यरहिते उत्तमे च । कुमुदाख्यस्य दिग्गजस्य योषिति स्त्री॰ ।

**अनुपरत** त्रि॰ उप+रम-क्त न॰त॰ । अविरते अनिवृत्तेच्छे च ।

**अनुपलब्धि** स्त्री॰ उप+लभ-क्तिन् न॰त॰ । लाभाभावे, प्रत्यक्षाभावे च । तत्र च कारणानि "अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् । सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहारादिति सांख्यकारिकोक्तानि ।

**अनुपसंहारिन्** पु॰ न्यायमते परिभाषिते दुष्टहेतुविशेषे । स च दृष्टान्तरहितोऽन्वयी व्यतिरेकी वा दुष्टहेतुः । यथा सर्व्वमनित्यं प्रमेयत्वादित्यनुमाने सर्व्वस्यापि पक्षत्वेन अन्वये दृष्टान्तो नास्ति नापि व्यतिरेके दृष्टान्तः सर्व्वस्यापि प्रमेयतया तदभावस्य कुत्राप्यसिद्धेः ।

**अनुपाकृत** त्रि॰ उप-आ-कृ-क्त न॰त॰ । मन्त्रैर्यज्ञे पशोरर्च्चनादिसंस्कार उपाकरणं तद्रहिते ।

**अनुपात** पु॰ अनु+पत-करणे घञ् । अङ्कशास्त्रे प्रसिद्धे त्रैराशिके, पूर्व्वाङ्कपातानुसारेणापराङ्कपातने च । भावे घञि, पश्चात् पतने ।

**अनुपातक** न॰ अनुपातयति स्वानुरूपं नरकं गमयति अनु+पत-णिच्-ण्वुल् । ब्रह्महत्यादिमहापातकसदृशे वेदनिन्दादिजन्ये पापविशेषे । तानि च पञ्चत्रिंशत्प्रकारहेतुकत्वेन तावत्संख्यातानि प्राय॰ वि॰ अनुपा॰ प्र॰ ।

**अनुपान** न॰ अनु भेषजेन सह पश्चाद्वा पीयते कर्म्मणि ल्युट् । औषधाङ्गे तेन सह, तत्पश्चाद्वा पेये मधुगुडादौ । पानस्य जलस्य समीपे अव्ययी॰ । जलसामीप्ये अव्य॰ ।

**अनुपूर्व्व** पु॰ अनुगतं पूर्व्वं परिपाटीं गतिस॰ । यथाक्रमे ।

**अनुप्रासः** पु॰ अनुगतः रसाद्यनुगुणं प्रकृष्ट मासं वर्णन्यासं समवर्णरचनां समवर्णोच्चारणं वा अनु-प्र-अस् घञ् । अलङ्कारे प्रसिद्धे स्वरवैषम्येऽपि समवर्णानां रचनायाम् ।

**अनुप्लव** पु॰ अनु-प्लु-अच् । सहाये, अनुचरे, दासे च ।

**अनुबन्ध** पु॰ अनु+बन्ध-यथायथं भावादौ घञ् । बन्धने, इच्छापर्व्वकदोषकरणे, वातपित्तादिदोषाणामप्राधान्ये, प्रकृतिप्रत्ययागमादेशानां गुणवृद्ध्यादिकार्य्यविशेषार्थमनुबन्धनीये परिनिष्पन्नपदकालेषु अश्रूयमाणतया नश्वरे इत्संज्ञया कृतलोपे वर्णादौ, मुख्यानुयायिनि अप्रधाने, प्रकृतस्यानुवर्त्तने, संबन्धे, पाश्चात्त्यशुभपरिणामे, शास्त्रस्यादौ वक्तव्येषु अधिकारिविषयप्रयोजनसम्बन्धेषु, लेशे, फलसाधने च ।

**अनुबन्धिन्** त्रि॰ अनुबध्नाति अनु+बन्ध-णिनि । सहचरे अनुचरे, अनुरोधिनि, व्यापके च । स्त्रियां ङीप् ।

**अनुबन्धी** स्त्री॰ अनुबध्यतेऽतिश्वासेन व्याप्रियतेऽनया अनु+

बन्ध-घञ् गौरा० ङीष् । हिक्कारोगे, तृष्णायाञ्च ।

**अनुबन्ध्य** त्रि० बधार्थं बन्धोऽनुबन्धः यत् । बधार्थे बद्धे गवादौ ।

**अनुबोध** पु० अनु-बुध णिच् घञ् । पूर्वलिप्तचन्दनादेर्गन्धोद्दीपनार्थं पुनर्मर्द्दनादौ पश्चाद्बोधे च ।

**अनुभव** पु० अनु+भू-अप् । स्मृतिभिन्ने ज्ञाने ।

**अनुभाव** पु० अनुभावयति उद्बोधयत्यनेन अनु+भू-णिच्-करणे-घञ् । कोषदण्डादिजाते राज्ञां तेजोविशेषे । सामर्थ्ये च । कर्त्तरि अचि । अलङ्कारशास्त्रप्रसिद्धे रस-व्यञ्जके । "भावं मनोगतं साक्षात् स्वगतं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याताः, इत्युक्तलक्षणे भ्रूभङ्गादौ ।

**अनुमत** त्रि० अनु+मन-क्त । स्वयंप्रवृत्ते इदं क्रियतामिति प्रोत्साहनार्थमनुज्ञाते ।

**अनुमति** स्त्री० अनु+मन-क्तिन् । अनुमतौ अनुज्ञायाम् । अनुमन्यते कलाहीनत्वेऽपि पूर्णिमाविहितयागादिकरणायानुज्ञायतेऽस्याम् अधिकरणे क्तिन् । कलाहीनचन्द्रवत्यां शुक्लचतुर्द्दशीयुतपूर्णिमातिथौ ।

**अनुमन्तृ** त्रि० अनु+मन-तृच् । स्वयमुदासीने कार्य्यादौ प्रवृत्तस्यान्यस्योत्साहवर्द्धनार्थमनुज्ञाकर्त्तरि ।

**अनुमरण** न० अनु+मृङ-ल्युट् । भर्त्तरि मृते तद्देशाप्राप्तौ तत्पादुकादिग्रहणेन पृथक्चितारोहणेन स्त्रीणां देहत्यागे ।

**अनुमान** न० अनु-मि-मा-वा भावादौ ल्युट् । व्याप्तस्य दर्शनेन व्यापकस्य निश्चये, यथा वह्निर्धूमस्य व्यापक इति धूमस्य व्याप्य इत्येवं तयोः भूयःसहचार पाकस्थानादौ दृष्ट्वा पश्चात् पर्व्वतादौ उद्धूयमानशिखस्य धूमस्य दर्शने तत्र वह्निरस्तीति निश्चीयते । करणे ल्युटि । तद्धेतुभूते धूमादौ । श्रुतेरेव स्वतः प्रामाण्यं, यत्र श्रुतिः साक्षात् न श्रूयते तत्र स्मृति वाक्यात् श्रुतिवाक्यमनुमीयते इति श्रुत्यनुमापकं स्मृतिवाक्यमप्यनुमानपदेनाभिधीयते इति मीमांसकाः ।

**अनुमिति** स्त्री० अनु+मि-मा-वा क्तिन् । प्राग्दर्शिते भावसाधनानुमानशब्दस्यार्थे ।

**अनुमोद** पु० अनु+मुद-घञ् । प्रकृतकर्मणि प्रवृत्तिविघाताकरणेनान्यप्रोत्साहानुकूलव्यापारे, त्वया यत् कृतं तन्मेऽनुमतमित्याद्यभिलापसाधने ।

**अनुयाज** पु० अनु+यज-घञ् कुत्वाभावः । दर्शपौर्णमासाङ्गे प्रयाजादिषु पञ्चसु यागेषु ।

**अनुयायिन्** त्रि० अनु+या-णिनि । सदृशे, अनुचरे, दासादौ, पश्चाद्गामिनि च । स्त्रियां ङीप् ।

**अनुयोग** पु० अनुयुज्यते कथनाय नियुज्यते अनु+युज-घञ् । प्रश्ने । सति हि प्रश्ने, पृष्टः कथनाय प्रवर्त्तते ।

**अनुराग** पु० अनु+रन्ज+घञ् । अत्यन्तप्रीतौ, स्नेहे च । अनुगतो रागं गतिस० । अतिरागानुगे त्रि० ।

**अनुराधा** पु० अनुगता राधां विशाखां गतिस० । स्वनामप्रसिद्धे सप्तदशनक्षत्रे ।

**अनुरूप** अव्य० रूपस्य सादृश्ये योग्यत्वे वा अव्ययी० । सादृश्ये,योग्यतायाञ्च । अर्शआद्यचि । सदृशे,योग्ये च त्रि० ।

**अनुरोध** पु० अनु+रुध-घञ् । अनुसरणे, आराध्यादेरिष्टसम्पादनेच्छायाञ्च ।

**अनुलाप** पु० अनु वारंवारं लप्यते लप-घञ् । मुहुर्भाषणे ।

**अनुलेप** पु० अनु+लिप-भावे घञ् । चन्दनादिमर्द्दने । कर्म्मणि घञि । अनुलिप्यमाने चन्दनादौ ।

**अनुलोम** पु० अनु+लोमन्+यथाक्रमे अव्ययी० अच् । यथाक्रमे ।

**अनुलोमज** पु० अनुलोमेन यथाक्रमेण जातः जन-ड । परिणीतक्षत्रियादिस्त्रीषु विप्रादिभ्य उत्कृष्टेभ्यो वर्णेभ्यो जाते मूर्द्धाभिषिक्तादौ संकीर्णवर्णे ।

**अनुवर्त्तन** पु० अनुगतो वर्त्तनमाराध्यादेरिष्टसंपादनं गतिस० अनु+वृत-ल्युट् । अनुरोधे, आराध्यादेरिष्टसम्पादने च ।

**अनुवाक** पु० अनु+उच्यते-वच-घञ् कुत्वम् । गानशून्ये ऋग्विशेषे, ऋग्यजुःसमूहे, वेदांशे शास्त्रनाम्ना ख्याते च ।

**अनुवाक्या** स्त्री० अनु-वच-ण्यत् कुत्वम् । ऋग्विशेषः प्रशास्त्रा तत्पाठ्यायां देवताज्ञानसाधने ऋचि ।

**अनुवात** पु० अनु-वा+क्त । शिष्यदेशाद् गुरुदेशगन्तरि वायौ ।

**अनुवाद** पु० अनु+वद-घञ् । ज्ञातार्थस्य प्रतिपादने, सिद्धस्योपन्यासे, प्रमाणान्तरावगतार्थस्य शब्देनोक्तौ, कथितस्य भाषान्तरेण कथने च ।

**अनुवासन** न० अनु+चु०-वस-ल्युट् । धूपादिना सौरभान्वितकरणे, स्नेहयुतकरणे च ।

**अनुवृत्त** त्रि० अनु+वृत-क्त । व्याप्ते, पालिते, अनुगते, प्रीतिविशिष्टे, अनुवृत्तिमति च ।

**अनुवृत्ति** स्त्री० अनु+वृत क्तिन् । प्रवाहरूपेणानुगतौ, अनुरोधे, सेवायाम्, आनुकूल्ये, व्याकरणशास्त्रे प्रसिद्धे पूर्व्वसूत्रोपात्तपदादीनामुत्तरत्र सूत्रेष्वनुकर्षणरूपेऽध्याहारे च

**अनुव्रज्या** स्त्री० अनु+व्रज-क्यप् । अनुसरणादिरूपे सेवने ।

**अनुशय** पु० अनु+शीङ्-अच् । अत्यन्तद्वेषे,पश्चात्तापे, पूर्व्ववैरे च । अनुगतः शयं हस्तं गतिस० । हस्तानुगते त्रि० ।

**अनुशयिन्** पु० अनु+शीङ्-इनि । यावत्कर्म्मक्षयं चन्द्रलोके स्थित्वा सावशेषे एव कर्म्मणि पश्चात्तापान्विते भूमि-

लोके जन्मग्रहणायागन्तुं प्रवृत्ते जीवे। मद्यात्तापयुते त्रि० ।
**अनुशासन** न० अनु+शास-ल्युट्। शासने, आज्ञायाम् उपदेशे, नियोगकरणे च। शिष्यते आख्यायते लक्षणादि नेति करणे ल्युटि। व्युत्पादने। व्युत्पादनञ्च अतथाभूतेभ्यो विशेष्य अनुशिष्याणां बोधनम् यथा व्याकरणे साधुशब्दानामसाधुभ्यो विविच्य प्रबोधनम्।
**अनुशीलन** न० अनु चु० शील-ल्युट्। मुहुरालोचने, पुनः पुनरभ्यासे च।
**अनुशोचन** न० अनु+शुच-ल्युट्। शोके। स्वार्थे णिचि युचि। अनुशोचना तत्रैवार्थे स्त्री०।
**अनुश्रव** पु० अनुश्रूयते गुरुपरम्परयोच्चारणादनु अभ्यस्यते, श्रूयते एव नतु केनापि क्रियते वा अनु+श्रु+अप्। वेदे, तस्य श्रूयमाणतायाएव सर्वसम्मतत्वात्।
**अनुषङ्ग** पु० अनु+स्नञ्ज-घञ् कुत्वम्। दयायाम्, आसक्तौ, एकत्र श्रुतपदस्य अन्यत्रान्वयार्थमनुवृत्तौ, अन्योद्देशेन प्रवृत्तौ तत्क्रियानान्तरीयकतयान्यस्य सिद्धिरूपे स्मृतिशास्त्र प्रसिद्धे प्रसङ्गे च।
**अनुष्टुभ्** स्त्री० अनु+स्तुभ+क्विप् षत्वम्। सरस्वत्याम्, अष्टाक्षरपादके छन्दोभेदे च। [करणे।
**अनुष्ठान** न० अनु-स्था-भावे ल्युट् षत्वम्। विहितकर्मादि
**अनुष्ण** त्रि० उष्णः दक्षः न०त०। अलसे, उष्णभिन्ने शीते च। उत्पले न०। अलसोहि शीतबाधाभावेऽपि शीतबाधामभिनयन् कर्त्तव्यकर्मणि जड़ इव भवति दक्षस्तु शीतेऽपि तदगणयित्वा कर्त्तव्यकरणाय अजड इव सन् व्याप्रियते इति तयोरुष्णानुष्णता। अत्र कारित्वार्थे कनि अनुष्णकोऽपि। [टापि अत इत्त्वम्। नीलदूर्वायाम्।
**अनुष्णवल्लिका** स्त्री० अनुष्णा शीतला वल्लीव इवार्थे क।
**अनुसन्धान** न० अनु+सम्+धाञ्-ल्युट्। अन्वेषणे, चिन्तने च।
**अनुसरण** न० अनु+सृ-ल्युट्। अनुगमने, सदृशीकरणे। भावे घञि अनुसारोऽप्यत्र।
**अनुस्यूत** त्रि० अनु+सिव क्त ऊट्। ग्रथिते, सततसंबन्धे च।
**अनुस्वार** पु० स्वृ-घञ् उदात्तादिस्वरवत्त्वात् स्वरवर्णाएव स्वाराः अनुगतः स्वारान् गतिस०। स्वराश्रयेण उच्चार्यमाणे विन्दुरेखया व्यज्यमानेऽनुनासिके वर्णभेदे अनुस्वारो विसर्गश्चेत्युपक्रम्य आश्रयस्थानभागिनदृत्युक्तेः तस्य तथात्वम्।
**अनुहरण** पु० अनु+हृ ल्युट्। वेशभाषाचेष्टादिना सदृशीकरणे, सादृश्यधर्माविष्करणे च। [शीले च न०।
**अनूक** पु० अनु+उच समवाये क कुत्वं नि०। गतजन्मनि। कुले
**अनूचान** पु० अनु+वच-कान नि०। शिक्षादिषडङ्गसहित वेदाध्ययनकारिणि, वेदार्थोनुवचनसमर्थे च।
**अनून** त्रि० ऊन-क न०त०। परिपूर्णे, समग्रे, अहीने च। नूनं निश्चितं न०त०। अनिश्चिते।
**अनूप** त्रि० अनुगता आपोयत्र ब०व० अच् स० आतउत्त्वम्। जलप्राये देशे, तत्स्वरूपे सर्वदावासिनि महिषे, "बहुस्तम्भक्षीरवृक्षवातश्लेष्मामयान्वितः। देशोऽनूप इति ख्यात" इत्युक्ते देशविशेषे च पु०। अनूपनगर इति प्रसिद्धे देशे वा।
**अनूपज** न० अनूपे जलप्राये देशे जायते जन-ड ७त०। आदा इति ख्याते आर्द्रके, तस्य जलप्रायोद्भवत्वात्। तत् स्थानजातमात्रे त्रि०।
**अनूरु** पु० न स्त ऊरू यस्य ब०। सूर्य्यसारथौ अरुणे विनताज्येष्ठपुत्रे। तस्य अपूर्ण एव गर्भे मात्रा अण्डस्य स्फोटनादूरुप्रभृत्यङ्गविकलत्वं पुराणे प्रसिद्धम्।
**अनूरुसारथि** पु० अनूरुः सारथिः रथनियन्ता यस्य। सूर्य्ये
**अनृच** पु० नास्ति अभ्यस्ततया ऋक् यस्य अच् समासान्तः। ऋक्शून्ये अनुपनीते बालके।
**अनृत** न०ऋतं सत्यं न०त०। सत्यभिन्ने अयथार्थे। अनृतत्वव्यवहारस्तु प्रायेण कथने एव लोके दृश्यते क्वचित् वस्तुन्यपि यथा रङ्गे रजतादिकं,तत्र रजतमिदमिति ज्ञानञ्च। तद्वति त्रि०। ७ब०। वाणिज्ये न० तत्रान्ततबाहुल्यात्।
**अनेक** त्रि० एक+न०त०। एकभिन्नेषु बहुषु। नञ्तत्पुरुषे उत्तरपदानुसारेणैव लिङ्गवचनतानियमेऽपि अत्र बहुवचनान्ततैव तेन पतन्त्यनेके जलधेरिवोर्मय इति माघः।
**अनेकप** पु० अनेकाभ्यां मुखशुण्डाभ्यां द्वाभ्यां पिवति पा-क। द्विपे हस्तिनि। [रूपे।
**अनेकरूप** त्रि० अनेकानि बहूनि रूपाण्यस्य ब०। चित्र-
**अनेकान्त** त्रि० न एकएवान्तः परिच्छेदो यस्य ब०। अनियतरूपे, अनतिशये च। [णिनि ३त०। बौद्धभेदे।
**अनेकान्तवादिन्** पु० अस्ति नास्ति वेत्येकान्तं न वदति वद-
**अनेडमूक** त्रि० एडो बधिरो मूको वाक्शक्तिरहितश्च नास्ति यस्मात् ५ब०। काला, बोवा इति ख्याते श्रवणवचनशक्तिरहिते, शठे च।
**अनेहस्** पु० न हन्यते हन-असि प्रकृतेरेहादेशः। काले।
**अनैकान्तिक** पु० एकान्तं नियतं व्याप्नोति एकान्त+ठक् न त०। व्यभिचारिणि दुष्टे हेतौ। यथा धूमसाधने वह्निर्हेतुः न एकान्तोनियमो व्याप्तिर्यत्र ७ब०। अनेकान्तोऽप्यत्रैवार्थे।
**अनोऽकह** पु० अनसः शकटस्याकं गतिं हन्ति हन-ड। वृक्षे।

**अन्त** न० अम-तन्। स्वरूपे,स्वभावे च। शेषे पु० न०। नाशे,प्रान्ते, सीमायां,निश्चये,अवयवे च पु०। निकटे, मनोहरे च त्रि०।

**अन्तःकरण** न० कृ-करणे ल्युट् अन्तरभ्यन्तरं, तद्वृत्ति पदार्थानां ज्ञानादीनां वा करणं कर्म्म०, ६त० वा। ज्ञान-सुखादिसाधने आभ्यन्तरे इन्द्रिये मनोबुद्धिचित्तादिपदाभि लप्यमाने। अवान्तरभेदस्तु वृहदभिधाने।

**अन्तःकुटिल** पु० अन्तर्मध्ये कुटिलः। वक्राकारमध्यावयववति शङ्खे। वक्रान्तःकरणे त्रि०।

**अन्तःपुर** न० अन्तराभ्यन्तरं पुरं गृहं कर्म्म०। अन्दर इति प्रसिद्धे राज्ञां स्त्रीणां स्थानयोग्ये गृहे। तत्र स्थितत्वात् राजमहिलायामपि। पुर्शब्दसमासे अचि स्त्रीत्वात् ङीप्। अन्तःपुरीत्यपि।

**अन्तःसत्वा** स्त्री० अन्तरभ्यन्तरे गर्भे सत्त्वं प्राणी यस्या ब०। गर्भिण्यां स्त्रियाम्।

**अन्तःस्वेद** पु० अन्तःस्वेदो मदस्यन्दनं घर्म्मजलं यस्य ब०। मदस्राविणि हस्तिनि।

**अन्तक** पु० अन्तं करोति अन्त+तत् करोतीत्यर्थे णि-ण्वुल्। यमे। नाशकारके त्रि०।

**अन्तकर** त्रि०अन्तं नाशं करोति कृ-ट उप०स०। नाशकारके।

**अन्तग** त्रि० अन्तमवसानं गच्छति गम-ड। पारगामिणि अवसानं गते च। क्त अन्तगत इत्यपि तत्रार्थे।

**अन्तर्** अव्य० अम-अरन् तुडागमश्च। मध्ये, माघे, स्वीकारे चित्ते च।

**अन्तर** न० अन्तं राति ददाति रा-क। अवकाशे, अवधौ, परिधानांशुके अन्तर्द्धाने, भेदे, परस्परवैलक्षण्ये विशेषे, तदर्थे, छिद्रे, आत्मीये, विनार्थे, वहिरर्थे, व्यवधाने, मध्ये, सदृशे च। उदाहरणानि तु वृहदभिधाने।

**अन्तरङ्ग** त्रि० अन्तर्मध्येऽङ्गानि यस्य। आत्मीये,व्याकरण-शास्त्रे प्रसिद्धे प्रकृतिप्रत्ययकार्य्यमध्ये प्रकृत्याश्रिते कार्य्ये च।

**अन्तरा** अव्य० अन्तरेति इण्-डा। निकटे,मध्ये, विनार्थे च।

**अन्तरात्मा** पु० अन्तर्वर्त्ती आत्मा। अन्तःकरणे, सर्व्वान्त-र्यामिनि परमेश्वरे, अन्तःकरणाभिमानिनि जीवे च।

**अन्तराय** पु० अन्तरं व्यवधानमयते अय-अच्। विघ्ने। व्यव-धानकारके त्रि०।

**अन्तराल** न० अन्तरं मध्यसीमामाराति गृह्णाति आ-रा क रस्य लत्वम्। मध्ये,अभ्यन्तरे च। स्वार्थे अणि आन्तरालञ्च।

**अन्तरिक्ष** न० अन्तः स्वर्गपृथिव्योर्मध्ये ईक्ष्यते ईक्ष-कर्म्मणि घञ्, अन्तः ऋक्षाणि यस्य वा पृषो० पक्षे ह्रस्वः ऋकारस्य रित्वं वा। पक्षिमेघसञ्चारयोग्ये भूलोकसूर्य्य-मध्यवर्त्तिनि आकाशप्रदेशे। अत्र अन्तरीक्षमपि।

**अन्तरित** त्रि० अन्तर्+इण-कर्त्तरि क्त २त०। अन्तरं व्यवधानं करोतीति णिचि कर्म्मणि क्त वा। व्यवधानं गते, व्यव-धापिते, तिरस्कृते च। [आन्तरीत्त्वम्। द्वीपे।

**अन्तरीप** पु० अन्तर्मध्ये गता आपोऽस्य ब०। अच्स०

**अन्तरीय** न० अन्तरे भवं गहादित्वात् छ। परिधाने वस्त्रे "नाभौ धृतञ्च यद्वस्त्रमाच्छादयति जानुनी। अन्तरीयं प्रशस्तं तदच्छिन्नमुभयान्तयोरित्येवंलक्षणे।

**अन्तरे** अव्य० अन्तरेति इण् विच्। मध्ये।

**अन्तरेण** अव्य० अन्तरेति इण्-ण टवर्गादित्वेऽपि णस्य नेत्त्वम्। विनार्थे, मध्यार्थे च।

**अन्तर्गड** त्रि० अन्तर्मध्ये गडुरिव निरर्थकः। ग्रीवाप्रदेशे जातस्य गलमांसपिण्डस्य गडोर्यथा निरर्थकत्वम् तद्वन्निरर्थके। काव्यान्तर्गडुभूता यानालङ्कारः प्रहेलिकेति साहि०१०परि।

**अन्तर्गृह** न० अन्तर्गृहस्य। गृहमध्ये, वाराणसीस्थे सप्ता-वरणवति स्थानविशेषे च।

**अन्तर्जठर** न० अन्तर्जठरस्य। जठरमध्ये, कुक्षिमध्यस्थकोष्ठे च

**अन्तर्जल** न० अन्तर्जलस्य अव्ययी०। जलमध्ये, जलमध्ये-कर्त्तव्येऽघमर्षणमन्त्रजपे च। होममन्तर्जलादिनीति स्मृतिः।

**अन्तर्ज्योतिः** न० अन्तः ज्योतिरिव प्रकाशकम्। अन्तरात्मनि।

**अन्तर्दधन** न० अन्तर्दध्यते मादकता आधीयतेऽनेन। दध-करणे ल्युट्। किण्वप्रभृतौ मद्यबीजे।

**अन्तर्दाह** पु० अन्तर्मध्ये दाहः दह-घञ्। देहाभ्यन्तरस-न्तापे, कोष्ठसन्तापे च।

**अन्तर्द्वार** पु० अन्तर्मध्ये द्वारम्। गृहमध्यस्थे गुप्तद्वारे।

**अन्तर्द्धान** न० अन्तर्+धा-ल्युट्। तिरोधाने दृश्यपदा र्थस्य दर्शनायोग्यस्थाने स्थितौ, मुन्यादीनां शरीरत्यागे च। अङि। अन्तर्द्धाप्यत्रैवार्थे स्त्री०।

**अन्तर्द्धि** पु० अन्तर्+धा कि। आच्छादने,व्यवधाने,अन्तर्धाने च

**अन्तर्भूत** त्रि०अन्तर्मध्ये भूतः भू+क्त। मध्यस्थिते,अन्तर्गते च

**अन्तर्मनस्** त्रि० अन्तर्गतं वाह्यव्यापाराक्षमतया अन्तरेव स्थितं मनो यस्य। व्याकुलचित्ते, समाहितमनस्के च।

**अन्तर्यामिन्** पु० अन्तर्मध्येऽनुप्रविश्य यमयति स्वस्वकर्म्मणि इन्द्रियादीनि जीवं वा व्यापारयति यम-णिच्+णिनि। वायौ, "अन्तराविश्य भूतानि यो बिभर्त्त्यात्मकेतुभिः। अन्तर्यामीश्वरः साक्षात् भवे"दित्युक्तेः आत्मकेतुभिः निज व्यापारैः प्राणादिवृत्तिभिरित्यर्थः। ईश्वरे, अन्तरेण

वमयतीत्यादिश्रुत्युदाहरणकान्तर्यामिब्राह्मणोक्तेः । अन्तर्गतवस्तुज्ञातरि त्रि० ।

**अन्तर्वेशिक** त्रि० अन्तर्वेशे राजामात्यान्तरगृहे नियुक्तः नियुक्तार्थे ठ । अन्तःपुरे रक्षणार्थं नियुक्ते कुब्जवामनादौ ।

**अन्तर्वत्नी** स्त्री० अन्तरस्य अस्ति गर्भः । अन्तर्+मतुप् नि० । गर्भवत्यां स्त्रियाम् ।

**अन्तर्वमि** पु० अन्तःस्थित एव वामयति उद्गारशब्दं कारयति वमि शब्दे इन् यस्य मलम् । (ढेकुर) इत्यादि ख्यातखोद्गारशब्दस्य कारके अजीर्णनामके रोगभेदे ।

**अन्तर्वाणि** त्रि० अन्तर्गता अन्तःकरणे स्थिता शास्त्रवाक्यात्मिका वाणी यस्य ब० न कप् ह्रस्वश्च । बहुशास्त्रवाक्याभिज्ञे पण्डिते ।

**अन्तर्वेदी** स्त्री० पृथिव्यामध्यस्थितत्वादन्तर्वेदीव । हरिद्वारावधिप्रयागपर्य्यन्ते भूप्रस्थलीति ब्रह्मावर्त्त इति च ख्याते देशे ।

**अन्तर्हित** त्रि० अन्तर्-धा-क्त । गुप्ते, तिरोभूते च ।

**अन्त(न्ते) वासिन्** पु०अन्ते समीपे वस्तुं शीलमस्य वस-णिनि सप्तम्या वा लुक् । शिष्ये । स्त्रियां ङीप् । समीपवर्त्तिनि त्रि०

**अन्तशय्या** स्त्री० शयनं शय्या शीङ्-क्यप् अन्तस्य नाशार्थं शय्या चतुर्थ्यर्थे इत० । मरणार्थं भूमिशय्यायाम्, तद्धेतुत्वात् श्मशाने च । अन्त एव शय्या निर्व्यापारार्थकत्वात् कर्म्म० । मरणे ।

**अन्तःस्था** त्रि० अन्तःस्पर्शोष्मणोर्मध्ये तिष्ठतीति स्था-क्विप् । यरलवाख्येषु वर्णेषु । वा विसर्गलोपतोऽन्तस्था अपि ।

**अन्त्यावसायिन्** पु० नखकेशानामन्तमवसातुं छेत्तुं शीलमस्य अव+सो-णिनि युक् च । नापिते । अन्ते वृद्धे वयसि अवस्यति निश्चिनोति तत्त्वम् । मुनिभेदे । अन्ताय स्वतोपकृते जन्तुनाशाय अवस्यति । प्राणिहिंसके चाण्डालादौ ।

**अन्ति** (का) स्त्री० अन्त्यते संबध्यते अन्त-इ । नटाभिनयनकाले तदुक्तौ ज्येष्ठभगिन्याम् । स्वार्थे के टापि अन्तिकेत्यपि

**अन्तिक** त्रि० अन्त्यते संबध्यते सामीप्येन, अन्त-घञ् सोऽस्यास्तीति मत्वर्थीयः ठन् । सामीप्यवति । स्वार्थे ठनि सामीप्ये पु० । चुल्लग्राम् न० । ओषधिभेदे स्त्री० ।

**अन्तिकाश्रय** पु० अन्तिके समीपे आश्रीयते आ+श्री-अच् । निकटस्थे, अवलम्बनस्थाने च ।

**अन्तिम** त्रि० अन्ते भवः अन्त+डिमच् । अन्तभवे, चरमे च ।

**अन्त्य** पु० अन्ते पर्यन्ते वसतीति अन्त+यत् । चाण्डाले । मुस्ताभाम् स्त्री० । अन्तिमे वस्तुनि त्रि० । यथा नक्षत्राणां मध्ये रेवती, राशीनां मध्ये मीनः वर्णानां मध्ये हकार इत्यादि । संख्याभेदे त० "जलधिश्चान्त्यं परार्द्धमिति दशगुणोत्तरा संख्ये" ति भास्कराचार्य्योक्तेः परार्द्धदशभागे ।

**अन्त्यज** पु० अन्त्योऽधमः जायते जन-ड । शूद्रे, स हि वर्णानां विप्रादीनां चतुर्णां मध्ये अधमो जातः । "रजकश्चर्म्मकारश्च नटो वरुड़ एव च । कैवर्त्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृता" इति स्मृत्युक्तेषु सप्तसु रजकादिषु च । अधमजातमात्रे त्रि० ।

**अन्त्यजन्मन्** पु० अन्त्यं जन्म यस्य । शूद्रे । स हि विप्रचत्रियवैश्यजन्मानन्तरं ब्रह्मणः पादात् शेषे जातः ।

**अन्त्यावसायिन्** पु० "निषादस्त्री तु चण्डालात् पुत्रमन्त्यावसायिनम् । श्मशानगोचरं सूते, इति मनूक्तेः निषादस्त्रियां चण्डालजाते सुरदाफरास इति ख्याते सङ्कीर्णवर्णे । "चण्डालः श्वपचःक्षत्ता सूतो वैदेहकस्तथा । मागधायोगवौ चैव सप्तैतेऽन्त्यावसायिनः, इत्यङ्गिरसोक्तचाण्डालादिषु च ।

**अन्त्येष्टि** स्त्री० इष्टि र्यागः यज-क्तिन् अन्त्या इष्टिः । मृतस्य दाहादिरूपे चरमसंस्कारे "नान्त्येष्टिर्नास्थिसञ्चय "इतिस्मृतिः

**अन्त्र** न० अन्त्यते देहो बध्यतेऽनेन । अति बन्धने ष्ट्रन् । देहबन्धके "उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः अर्द्धव्यामेन हीनानि स्त्रीणामन्त्राणि निर्द्दिशेत् ।" इति वैद्यकोक्तपरिमाणवति नाड़ीभेदे ।

**अन्दुक** पु० अन्द्यते बध्यतेऽनेन अदि बन्धने कू स्वार्थे के ह्रस्वः अभिधानात् पुंस्त्वम् । हस्तिपादबन्धने निगड़े, पादकीले च ।

**अन्दू** स्त्री० अन्द्यते बध्यतेऽनेन अदि+कू । निगड़े स्त्रीपादभूषणे च ।

[न्द्धिधत् त ।

**अन्ध** दृष्टिनाशे अद० चु० उभ० अक० सेट् । अन्धयति ते आ-

**अन्ध** पु० न०अन्धयति चक्षुषा न पश्यति अच् । चक्षुर्दर्शहीने । अन्ध्यतेऽनेनेति करणे घञि । अन्धकारे जले च न० ।

**अन्धक** पु० अन्धयति अन्ध-ण्वुल् । देशभेदे,मुनिभेदे, यदुवंश्य नृपभेदे, हिरण्याक्षसुते दैत्यभेदे च । तमसि न० ।

**अन्धकरिपु** पु० अन्धकासुरस्य रिपुः । शिवे, अन्धकस्य तमसो रिपौ सूर्य्ये, चन्द्रे, वह्नौ च ।

**अन्धकार** पु० न० अन्धं करोति कृ-अण् उप०स० । तेजोऽभावे तमसि ।

**अन्धकूप** पु० अन्धयतीत्यन्धः स चासौ कूपः । साऽन्धकारे कूपे । अन्धः कूपो यत्र ब० । नरकभेदे । अन्धस्य दृष्ट्यभावस्य कूपइव । मोहे । स हि सर्वदृष्ट्यभावस्याकरः ।

**अन्धतमस** न० अन्धयति अन्ध+अच् ताम्यति अनेनेति तम्-असि कर्म्म० अच् समासान्तः । निविड़ान्धकारे ।

**अन्धतामिस्र** न० तमिस्रा तमस्ततिः तमिस्रैव तामिस्रं अन्ध-यतीत्यन्धम् कर्म०। निविडान्धकारे। अन्धम् अन्धकारकं तामिस्रं यत्र ब०। नरकविशेषे। सांख्यशास्त्रे प्रसिद्धे भयविशेषविषयकेऽभिनिवेशे पु०।

**अन्धमूषिका** स्त्री० अन्धं दृश्यभावं मुष्णाति मुष-ण्वुल् दीर्घः। देवताडवृक्षे तत्सेवने हि चक्षुःशक्ता भवतीति वैद्यकप्रसिद्धम्।

**अन्धस्** न० अद्यते अद-असुन् नुम् धश्च। ओदने।

**अन्धिका** स्त्री० अन्धयति अन्ध-ण्वुल्। रात्रौ, द्यूतभेदे सर्षाम्, सिद्धाख्यौषधौ, आन्दुलीति ख्याते नेत्ररोगभेदे च।

**अन्धु** पु० अन्ध-कु। कूपे।

**अन्धुल** पु० अन्ध-उल। शिरीषवृक्षे।

**अन्ध्र** पु० अन्ध-र। देशभेदे, तत्रस्थलोके, जातिभेदे च।

**अन्न** न० अनित्यनेन अन-नन् अद्यते इति वा अद-क्त अन्नार्थतया न जग्धिः। ओदने, सिद्धान्ने, "ग्रासं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते। आमं तु वितुषं ज्ञेयं स्विन्नमन्नमुदाहृतम्" इति स्मृतेः व्रीहियवादावामान्ने, पृथिव्याम्, अन्नहेतुत्वात् तस्या अन्नत्वम् अतएव वेदान्ते तेजोऽबन्नात्मिका प्रकृतिरित्युक्तम्। उपचारात् उपकरणे च।

**अन्नकोष्ठक** पु० अन्नस्य व्रीह्यादेः स्वल्पं कोष्ठमिव अल्पार्थे क। कुठी इति ख्याते धान्यादेः स्थापनस्थाने।

**अन्नगन्धि** पु० अन्नस्य गन्धइव गन्धो यस्य ब० इत्समासान्तः। अतिसारे, उदरामये च रोगे। अन्नस्य गन्धो लेशो यत्र ब० इत्समासान्तः। अल्पान्ने भोजनादौ त्रि०।

**अन्नप्राशन** न० प्रकर्षं विधानेन प्रथममाशनं प्राशनं इत०। षष्ठाष्टममासादौ बालकादेर्विधानेन प्रथममन्नभोजने।

**अन्नमय** पु० अन्नस्य विकारः अन्न+विकारार्थे मयट्। स्थूलशरीरे। अन्नविकृतिमात्रे त्रि०। अन्नमयं हि सौम्य मन इति श्रुतिः।

**अन्नविकार** पु० वि+कृ-घञ् इत०। अन्नस्य विकारे शोणितमांसादिपरिणामजे चरमधातौ शुक्रे। वि+कृ-घञि। अन्नस्य विक्षेपे।

**अन्नाशन** न० अन्नस्य विधानेन आशनम्। अन्नप्राशनार्थे।

**अन्य** त्रि० अन-यत्। भिन्ने, सदृशे च। सर्वनामतास्य।

**अन्यतम** त्रि० अव्य०। बहूनां मध्ये निर्द्धारिते एकस्मिन्।

**अन्यतर** त्रि० अव्य०। द्वयोर्मध्ये निर्द्धारिते एकस्मिन् सर्व०।

**अन्यत्र** अव्य० अन्य+त्रल्। व्यतिरेके, विनार्थे च "अन्यत्र धर्म्मादन्यत्राधर्म्मादिति" श्रुतौ प्रथमार्थे एव त्रल्।

**अन्यथा** अव्य० अन्य-प्रकारार्थे थाल्। विनार्थे, इतरप्रकारार्थे, वितथे, दुष्टे च।

**अन्यथासिद्धि** स्त्री० अन्यथा यस्य कारणतां विनापि सिद्धिः कार्य्यजन्म तस्य अन्यथासिद्धिरिति न्याये परिभाषितरूपे वस्तुनि यथा घटजन्मकाले तत्र गर्द्दभस्य स्थितावपि तस्य कारणतां विनापि घटादिसिद्धिरिति घटादौ गर्द्दभादेरन्यथासिद्धिः।

**अन्यदा** अव्य० अन्यस्मिन् काले दाच्। अन्यस्मिन् काले।

**अन्यपूर्व्वा** स्त्री० अन्यः पूर्व्वो यस्याः। पूर्व्वपतिसरणादौ पश्चात् कृततद्भिन्नपतिकायां पुनर्भुवि। अर्श्आदित्वादचि अन्या पूर्व्वा यस्य वा। तत्परिणेतरि पुनर्भूपतौ पु०।

**अन्यभृत्** पु० अन्येन भ्रियते भृ-कर्म्मणि क्विप्। कोकिले। कर्म्मणि क्ते अन्यभृतोऽप्यत्र। कर्त्तरि क्विपि परपोषके त्रि०।

**अन्यादृश्** त्रि० अन्यस्येव दर्शनमस्य अन्य+दृश् क्विन् आत्वञ्च स्त्री। अन्यसदृशे, अन्यप्रकारे च। टक्ि अन्यादृशः, कसे अन्यादृक्षोऽप्यत्रैवार्थे।

**अन्याय** पु० न्यायो विचारः, सङ्गति, औचित्यं, प्रतिज्ञादिपञ्चकप्रतिपादकवाक्यञ्च न०त०। विचाराभावे, सङ्गत्यभावे, अनौचित्ये, पञ्चाङ्गन्यायभिन्ने च न्यायशब्दार्थे त्वधिकं वक्ष्यते। ब०। विचारशून्ये, औचित्यशून्ये, असङ्गते, प्रतिज्ञादिपञ्चकवाक्यशून्ये च त्रि०।

**अन्योदर्य्य** पु० अन्यस्मिन् स्वमातृभिन्ने उदरे गर्भे भवः उदर+यत्। एकपितृके भिन्नमातृके वैमात्रेये भ्रातरि। अन्योदर्य्यस्तु संसृष्टीति स्मृतिः। तथाभगिन्यां स्त्री०। अन्योदरजातमात्रे त्रि०। अतएव दायभागे तद्वचनव्याख्याने भ्रातृपुत्रादीनामपि अन्योदर्य्यपदार्थतया ग्रहणमित्युक्तम्।

**अन्योन्य** त्रि० अन्य+कर्म्मव्यतिहारे (एकजातीयक्रियाकरणे) द्वित्वम् पूर्व्वपदे सुश्च। परस्परार्थे। कृतद्वित्वस्यापि सर्व्वनामता तेनान्योऽन्यस्मै इत्यादि। अलङ्कारशास्त्रप्रसिद्धे अलङ्कारभेदे न० तच्च साहि १०परि०।

**अन्योऽन्याभाव** पु० अन्योऽन्यस्मिन् अन्योऽन्यस्य अभावः। भेदे भेदो हि यथा घटे पटस्य तथा पटे घटस्य सदाऽस्ति संसर्गाभावस्तु नैवं घटे भूतलस्याभावेऽपि भूतले घटस्य कदाचित् सत्त्वसंभवेनाभावाभावात्।

**अन्योन्याश्रयः** त्रि० अन्योन्यमाश्रयतीति आ+श्री-अच्। परस्परसापेक्षे। न्यायमते तर्कविशेषे पु०। स च एकस्य ज्ञानजननाय यथाऽन्यज्ञानापेक्षा तथा अन्यस्य ज्ञानजननायेतरस्य ज्ञानापेक्षेति स्वापेक्षापेक्षित्वनिमित्तकोऽनिष्टः प्रसङ्गः विस्तरस्तु बृहदभिधाने।

**अन्वक्ष** त्रि० अनुगतमक्षमिन्द्रियं गतिस० । प्रत्यक्षे, अनुपदे,

अक्षगे च। अक्ष्णः समीपेऽव्ययी० टच्। चक्षुर्निकटे अव्य०।

**अन्वच्** त्रि० अनु+अन्च–क्विन्। अनुगामिनि, अनुपदे च।

**अन्वय** पु० अनु+इण्-अच्। सन्ततौ, अनुगतौ, अनुवृत्तौ, आनुकूल्ये, कार्य्य-कारणस्यानुसरणे, कार्य्यसत्तासादकसत्ता कस्य कारणस्य कार्य्योत्थितौ, स्वसत्तानियतसत्तावति, कार्य्ये संबन्धे च पदानां, पदोपस्थाप्यपदार्थानाञ्च परस्परेण संबन्धे च।

**अन्वयबोध** पु० अन्वयस्य पदोपस्थाप्यपदार्थानां संबन्धस्य बोधः ६त०। न्यायमते शब्दजन्ये शाब्द इति नामके प्रत्यक्षानुमानादिभिन्ने बोधे। वैशेषिकमते शब्दजन्ये अनुमित्यात्मके एव बोधे।

**अन्वयव्यतिरेकिन्** त्रि० अन्वयव्यतिरेकौ स्तोऽस्य। साध्यसाधके हेतुविशेषे, यथा वह्निसाधने धूमः। स हि वह्निमति महानसादौ वह्न्यभाववति जलादौ च भावाभावाभ्यां वह्नेरन्वयव्याप्तः व्यतिरेकव्याप्तश्चेति न्यायमते प्रसिद्धम्।

**अन्वयव्याप्ति** स्त्री० अन्वयेन व्याप्तिर्व्यापकं नियततया। स्थितिः ३त०। यत्र धूमस्तत्र वह्निरित्येवं रूपायां व्याप्तौ।

**अन्ववसर्ग** पु० अनु+अव+सृज-घञ्। यथेष्टं क्रियतामित्येवं रूपायामनुज्ञायाम्।

**अन्ववाय** पु० अन्ववायते उत्पत्त्यानुसंबध्यते अनु+अव+अय-घञ्, इण्-अच् वा। वंशे, सन्ताने च।

**अन्वष्टका** स्त्री० अनुगतामष्टकाम् गतिस०। अष्टकानन्तरतिथिषु गौणचान्द्रपौषमाघफाल्गुनमासानां कृष्णनवमीषु। तत्र साग्निकस्य मातृश्राद्धमष्टकाश्राद्धवत् कर्त्तव्यम्।

**अन्वहं** अव्य० अह्नि अह्नि वीप्सार्थेऽव्ययी० अच्। प्रतिदिने

**अन्वाचय** पु० एकस्य प्राधान्यादन्य आचीयते बोध्यते यत्र अनु+आ+चि-अच्। उद्देश्यसिद्ध्यानुद्देश्यसिद्धौ। यथा भिक्षां गच्छ यदि गां पश्येस्ताञ्चानय, अत्र भिक्षायामेव उद्देशः न गमने, तत्सिद्ध्यन्तरं गवानयनमनुद्दिष्टमपि साध्यतया निर्द्दिष्टम्।

**अन्वाजे** अव्य० अनु आजयत्यनेन अनु+आ+जि-डे। दुर्बलस्य बलाधाने। एप्रत्ययान्तप्रतिरूपकोऽयम्।

**अन्वादेश** पु० अनु+आ+दिश घञ्। पूर्वमात्तस्य किञ्चित्कार्य्यान्तरं विधातुं पुनरुपदेशे। यथा अनेन व्याकरणमधीतं न्यायमेनं प्रपाठयेति न्यायपाठनार्थं पुनरुपदेशः। कथितकथने, अनुवादार्थे च।

**अन्वाधेय** न० अनु+आ+धाञ् यत्। "विवाहात् परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया। अन्वाधेयं तु तत्प्रोक्तं लब्धं बन्धुकुलात्तथे"त्युक्तलक्षणे स्त्रीधने। पश्चादाधेये वस्तुनि त्रि०

**अन्वासन** न० अनु+आस-ल्युट्। पश्चादुपवेशनरूपे सेवने, अनुशोचने च। आधारे ल्युटि शिल्पगृहे।

**अन्वाहार्य्य** न० अनु व्याप्तौ, मासिमासि आह्रियते अनु+आ+हृ-ण्यत्। प्रतिमासकर्त्तव्येऽमावास्याविहिते श्राद्धे "पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा" इति स्मृतिः, यागदक्षिणायाञ्च।

**अन्वाहार्य्यपचन** पु० अन्वाहार्य्यं श्राद्धान्नं पच्यतेऽनेन पच+ल्युट्। दक्षिणाग्नौ ऋग्वेदविधिना स्थापितेऽग्नौ।

**अन्विच्छा** स्त्री० अनु+इष-अ नि०। अन्वेषणे।

**अन्विष्ट** त्रि० अनु+इष्-क्त। अन्वेषिते।

**अन्वीक्षा** स्त्री० अनु श्रवणादनु ईक्षा श्रुतार्थस्य युक्तायुक्तत्वपर्य्यालोचना अनु+ईक्ष-अङ्। वेदवाक्यश्रवणानन्तरं तदर्थपर्य्यालोचनायाम्। अतएवैतदुपयोगिनी विद्या आन्वीक्षिकीत्युच्यते।

**अन्वेषण** न० अनु+इष-ल्युट्। अनुसन्धाने; व्यवधानादिना अदर्शनं गतस्य ज्ञानार्थं प्रयत्नोऽत्रानुसन्धानम्। वाञ्छायाञ्च। युचि। अन्वेषणा। तस्मिन्नेवार्थे स्त्री०।

**अप्** स्त्री० बहु० आप-क्विप् ह्रस्वः। जले।

**अप** अव्य० न पाति पा-ड। वियोगे, विकृतौ, विपरीते, निदर्शने, आनन्दे, वर्ज्जने, चौर्य्ये च।

**अपकर्म्मन्** न० अपकृष्टं कर्म्म प्रा०। दुष्टाचरणे। ब०। दुष्टाचरणवति त्रि०।

**अपकर्ष** पु० अप+कृष-घञ्। उचितधर्म्मापेक्षया हीनतायां, स्वकर्त्तव्यकालात् पूर्व्वकालकरणे च।

**अपकार** पु० अप+कृ-घञ्। अनिष्टोत्पादने, तद्धेतौ द्वेषे च।

**अपकारगिर्** स्त्री० अपकारेण द्वेषेण गीर्य्यते गॄ-क्विप्। भर्त्सनवाक्ये। [काले कृते च।

**अपकृष्ट** त्रि० अप+कृष-क्त। अधमे, हीने, स्वकालात् पूर्व्व

**अपक्रम** पु० अपसृत्य क्रमो गतिः क्रम घञ् अवृद्धिः। पलायने।

**अपक्रिया** स्त्री० अप+कृ-श। द्रोहे, अपकारे च।

**अपक्रोश** पु० अप+क्रुश-घञ्। निन्दने। उपक्रोशोऽप्यत्र।

**अपक्षेपण** न० अप-क्षिप-ल्युट्। अधःस्थानसंयोगहेतौ क्रियाविशेषे, अधःपातने च। अवक्षेपणमप्यत्रार्थे।

**अपगत** त्रि० अप+गम-क्त। मृते, पलायिते, गते, द्रवीभूते च

**अपघन** पु० अप+हन अप् घनादेशः। देहे, घने। निविडसदृक्षिते त्रि०। [च।

**अपघात** पु० अप+हन-घञ्। अपकृष्टहनने दुष्टहेतुकमरणे

**अपचय** पु० अप+चि अच्। हानौ, अपहरणे, व्ययने च।

**अपचायित** त्रि० अप+चाय-चि-स्वार्थे णिच्-वा क्त । पूजिते ।

**अपचार** पु० अप+चर-घञ् । अहिताचरणे । अपगतचारे, दूतहीने च त्रि० ।

**अपचित** त्रि० अप+चाय-क्त चायः चिभावः । पूजिते । [चि-क्त । हीने ।

**अपचिति** स्त्री० अप+चाय+क्तिन् प्रकृतेश्चिभावः । पूजायां चि+क्तिन् । हानौ व्ययायाञ्च ।

**अपटान्तर** त्रि० पटेन तिरस्कारिण्या अन्तरमत्र । अव्यवहिते, आसक्ते, संसक्ते च । अपदान्तरमित्यप्यत्रैवार्थे ।

**अपटी** स्त्री० अल्पः पटः पटी न०त० । कानात् इति ख्याते वस्त्रप्रावरणे । [चर्मे च

**अपटु** त्रि० पटुर्दक्षः न०त० । रोगिणि, दक्षतारहिते कार्य्या-

**अपतर्पण** न० अप+तृप-ल्युट् । रोगादौ उपवासे, तृप्त्यभावे च

**अपत्य** न० न पतन्ति पितरोऽनेन पत-यत् न०त० । पुत्रदुहितृरूपे संताने । [ओषधिविशेषे गर्भदायिविद्यादौ च ।

**अपत्यदा** स्त्री० अपत्यं तद्धेतुं गर्भं ददाति । सेवनेन गर्भग्राहके

**अपत्यशत्रु** पु० अपत्यस्य शत्रुः ६त० । कर्कटे ।

**अपत्र** पु० न विद्यते पत्रमस्य । अङ्कुरे तस्य पत्राभावात् ।

**अपत्रप** त्रि० अपगता त्रपा लज्जा यस्मात् ५ब० । लज्जाहीने ।

**अपत्रपा** स्त्री० अप+त्रप-अङ् । अन्यहेतुकलज्जायाम् ।

**अपत्रपिष्णु** त्रि० अप+त्रप-इष्णुच् । स्वभावतो लज्जाशीले ।

**अपथ** न० न पन्थाः न०त०वा अच् । कुपथे, पथोऽभावे च । अत्र वा अचोऽभावे अपथिन् इत्यपि । ब० । पथिशून्ये त्रि० ।

**अपथ्य** त्रि० पथि (रोगिभोजने) हितं पथिन्+यत् न०त० । रोगिभोजनायोग्ये । [अवदानमप्यत्रार्थे ।

**अपदान** न० अप+दैप-ल्युट् । शोधने, (प्रशस्ते) कर्म्मणि

**अपदिश** न० दिशयोर्मध्ये अप+दिशा+अव्ययी० । दिशोर्मध्ये विदिक् इति कोण इति च ख्याते ।

**अपदेश** पु० अप+दिश-घञ् । लक्ष्ये, स्वरूपाच्छादनरूपे, छले, निमित्ते, स्थाने च ।

**अपध्वंसज** पु० अपध्वंस्यतेऽनेन अपध्वंसः वर्णानां भिन्नरूपता संपादकः सङ्करस्तस्माज्जायते जन-ड ५त० । भिन्नवर्णसङ्गमजाते करणादौ सङ्कीर्णवर्णे । [चूर्णिते च ।

**अपध्वस्त** त्रि० अप+ध्वन्स-क्त । निन्दिते, परित्यक्ते, अव-

**अपनयन** न० अप+नी-ल्युट् । दूरीकरणे, खण्डने च ।

**अपनोदन** न० अप+नुद-ल्युट् । दूरीकरणे, खण्डने च ।

**अपभ्रंश** न० अप+भ्रन्श-पतने घञ् । पतने । अपभ्रश्यते अधर्म्महेतुतया पत्यतेऽनेन करणे घञ् । साधुशब्दभिन्ने अपशब्दे भाषाशब्दे यवनादौ तत्कथनस्य पापहेतुत्वात् ।

**अपमान** न० अप+मि-मा-वा ल्युट् । अवज्ञायाम् ।

**अपमित्यक** न०अपमितिरपमानं तेनाकं दुःखं यत्र । अपमानहेतुकदुःखदायके ऋणे, तद्ग्रहणे हि उत्तमर्णसमीपेऽनादरात् दुखं भवति ।

**अपमृत्यु** पु० अपकृष्टो मृत्युः प्रा०स० । मरणहेतुरोगादिकं विना शस्त्रादिना स्वयमन्यतो वा मरणे ।

**अपयान** न० अप+या-ल्युट् । अपसरणे, पलायने च ।

**अपर** न० न पूर्य्यते यतः पृ-अपादाने,अप् । गजस्य पश्चाद्भागे । न पृणाति सन्तोषयति पृ-अच् । शत्रौ । अर्वाचीने, भिन्ने च त्रि० । पश्चिमायां दिशि, ऋग्वेदादिविद्यायां च स्त्री० ।

**अपरक्त** त्रि० अप+रञ्ज-कर्त्तरि क्त । विरक्ते, अननुकूले ।

**अपरति** स्त्री० अप+रम-क्तिन् । विरागे, निवृत्तौ च ।

**अपरत्र** अव्य० अपर+त्रल् । पश्चादर्थे, परकाले च ।

**अपरत्व** न० अपरस्य भावः त्व । अपर इति व्यवहारके न्यायमते गुणभेदे, तच्च द्विविधं कालिकं दैशिकञ्च तत्र माघादपरः पौष इति कालिकं, पाटलिपुत्रादपरा काशीति दैशिकम् ।

**अपरपक्ष** पु० अपरो निकृष्टः पक्षः कर्म्म० । कृष्णपक्षे ।

**अपररात्र** पु० अपरं रात्रेः एक० त० टच् । रात्रिशेषे ।

**अपरस्पर** न०अपरश्च परश्च द्व० पूर्व्वपदे सुट् च । क्रियासातत्ये सन्ततैकरूपक्रियाकरणे ।

**अपराजित** पु० परा+जि-क्त न०त० । शिवे, विष्णौ, ऋषिभेदे च । पराजितभिन्ने त्रि० । दूर्व्वायां, स्वनामख्यातायां लतायां, दुर्गायां, शेफालिकायां, जयन्तीवृक्षे, असनवृक्षे, शङ्खिनीवृक्षे च स्त्री० ।

**अपराद्धपृषत्क** पु० अपराद्धो लक्ष्यात् च्युतः पृषत्को बाणो यस्य अप+राध-क्त ब० । लक्ष्याभ्रष्टशायके धानुष्के ।

**अपराध** पु० अप+राध-घञ् । अकार्य्यादिकरणरूपे दोषे ।

**अपरान्त** पु० अपरस्या अन्तः । पाश्चात्त्यदेशभेदे । तद्देशवासिनि त्रि० ।

**अपराह्ण** पु० अपरमह्नः एक० त० टच् अह्नादेशो णत्वञ्च । त्रिधा विभक्तदिनस्य तृतीये भागे ।

**अपरिग्रह** पु० परि+ग्रह-अप् न०त० । असंग्रहे, स्त्रीदाराभावे च । नास्ति कन्थाकौपीनाद्यतिरिक्तः परिग्रहो यस्य ब० । परिव्राजके । परिग्रहमात्रशून्ये त्रि० ।

**अपरिच्छिन्न** त्रि० परि+छिद-क्त न०त० । इयत्तारहिते ।

**अपरिहार्य्य** त्रि० परि+हृ-ण्यत् न०त० । परिहर्त्तुमयोग्ये

**अपरेद्युस्** अव्य० अपरस्मिन्नहनि अपर+एद्युस् । अपरदिने

**अपरोक्ष** न० परोऽतीतः अक्षाणामिन्द्रियाणां न भवति पर+अक्षि+अस्वर्थेऽ० टच् नि० षत्व । विषयेन्द्रियसन्निकर्ष-

जन्ये प्रत्यक्षरूपे ज्ञाने । अर्थ आद्यचि तद्विषये त्रि० ।

**अपर्णा** स्त्री० न पर्णान्यपि भोजनं यस्याः । हिमाद्रिजायाम् तपसि स्थितया तया पर्णस्याप्यभोजनात् । पर्णशून्ये त्रि० ।

**अपर्य्याप्त** त्रि० परि+आप्-क्त न०त० । असमर्थे, असम्पूर्णे च ।

**अपलाप** पु० अप+लप-घञ् । सतोऽप्यसत्त्वेन कथनरूपे अपह्नवे, प्रेम्णि च ।

**अपवरक** न० अप+चु०-वर-इच्छायां कर्मणि ण्वुल् । वासगृहे ।

**अपवर्ग** पु० अप+वृज-घञ् । दाने, निर्वाणमोक्षे, फलसाधने, समाप्तौ च ।

**अपवर्ज्जन** न० अप+वृज-ल्युट् । दानादावपवर्गार्थे ।

**अपवर्त्तन** न० अप+वृत-णिच्-ल्युट् । परिवर्त्तने, वक्रीभावे, अङ्कशास्त्रे प्रसिद्धे भाज्यभाजकयोरुभयोरपि तुल्यरूपेण केनचिदङ्केन विभाजने च ।

**अपवाद** पु० अप+वद-घञ् । निन्दायाम्, आज्ञायाम्, प्रणये, विश्वासे, विशेषविधिरूपे बाधके, वेदान्तप्रसिद्धे रज्जे प्रतिभातस्य रजतस्य रज्जुमात्ररूपतालाभे च ।

**अपवारण** न० अप+चु० । वृ-ल्युट् । अन्तर्द्धाने ।

**अपविद्ध** त्रि० अप+व्यध-क्त । त्यक्ते, प्रत्याख्याते प्रतिक्षिप्ते, "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते इत्युक्तरूपे पुत्रभेदे च ।

**अपविषा** स्त्री० अपगतं विषं यस्याः ५त० । विषहारिण्याम् ।

**अपवृत्त** त्रि० अप+वृत-क्त । पराङ्मुखीभूते ।

**अपशब्द** पु० अपकृष्टः शब्दः प्रा०स० । संस्कृतभिन्ने शब्दे "तएव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिता इतिहर्युक्तादिशा संस्कृतशब्दएव अन्यथोच्चारणादसाधुत्वं गते भाषाशब्दे ।

**अपशोक** पु० अपगतः शोको यस्मात् ब० । अशोकवृक्षे । शोकरहिते त्रि० ।

**अपष्ठु** अव्य० अप+स्था-कु षत्वम् । निर्दोषे, शोभने, विपरीते, च । प्रतिकूले, विरुद्धार्थे च त्रि० । काले पु० ।

**अपष्ठुल** त्रि० अप+स्था-उलच् षत्वम् । निमित्ते, विपरीते च

**अपसद** त्रि० अपकृष्टइव सीदति सद-अच् । अधमे, नीचे च ।

**अपसर्ज्जन** न० अप+सृज-ल्युट् । दाने, परिवर्ज्जने ।

**अपसर्प** पु० अप+सृप-अच् । गुप्तचरे । घञि अपसरणे ।

**अपसव्य** पु०अपगतं सव्यं यत्र । दक्षिणभागे । पितृतीर्थे न० ।

**अपस्कर** पु० अपकीर्य्यते स्वस्थाने क्षिप्यते अप+कृ-अप् सुडागमः । चक्रभिन्ने रथाङ्गे रथारम्भके काष्ठे ।

**अपस्नात** त्रि० अपकृष्टं स्नातः । मृतमुद्दिश्य स्नाते ।

**अपस्मार** पु० अपगतः स्मारः स्मरणं यस्मात् ५ब० । मिरगीइति ख्याते रोगभेदे । तस्मिन् सति तद्रोगिणः तदानीं सर्व्वविषयस्मृतिर्नश्यति । [अपसारिते ।

**अपहस्त** त्रि० अपसारणार्थो हस्तो यस्मिन् । गलहस्तादिना

**अपहार** पु० अप+हृ-घञ् । अपसारणे, अपचये, चौर्य्ये, सङ्गोपने, धनस्वाम्यनुपयोगिव्यये च ।

**अपह्नव** पु० अप+ह्नु-अप् । सतोऽपि वस्तुनोऽसत्त्वेन कथनरूपेऽपलापे, प्रेम्णि च ।

**अपह्नुति** स्त्री० अप+ह्नु-क्तिन् । अपलापे, अलङ्कारशास्त्रे प्रसिद्धे अर्थालङ्कारभेदे च सा०१०परि० ।

**अपांनाथ** पु० ६त० । अलुक् स० । समुद्रे ।

**अपांनिधि** पु० नि+धा-कि ६त० अलुक् स० । समुद्रे ।

**अपांपति** पु० पा+डति ६त० अलुक् स० । समुद्रे, वरुणे च ।

**अपांपित्त** न० ६त०अलुक् स०वा । अग्नौ, तस्य जलहेतुत्वात् तत्पित्तत्वम् "आकाशाद्वायुर्वायोरग्निरग्नेराप" इति श्रुतिः अत्र वा लुकि अप्पित्तमित्यपि ।

**अपाक** पु० पच-घञ् न०त० । पाकाभावे, भुक्तान्नादेरग्निमान्द्यादिना पाकाभावे च । ७ब० । तत्साधने अजीर्णतारोगे । ६ब० । पाकरहिते आमे त्रि० ।

**अपाकरण** न० अप+आ+कृ-ल्युट् । निराकरणे ।

**अपाकशाक** पु०न पच्यते शाको यस्य । आर्द्रके तस्य मूलमेव भोजनार्थं पच्यते न शाकः ।

**अपाङ्क्तेय** त्रि० सद्भिः सह भोजने पङ्क्तिमर्हति अर्हार्थे ढ न०त० । सद्भिः सह एकपङ्क्तौ भोजनानर्हे स्तेन पतितादौ । अत्र ष्यञि अपाङ्क्त्य इत्यपि ।

**अपाङ्ग** पु० अपाङ्गति तिर्य्यक् चलति नेत्रं यत्र अप+अङ्ग घञ् । नेत्रप्रान्ते, तिलके च । अपगतोऽङ्गात् गत्यादि० स० । अङ्गहीने त्रि० ।

**अपाङ्गक** पु० अपकृष्टमङ्गं यस्य ब० कप् । आपाङ् इति ख्याते अपामार्गे । नेत्रान्ते पु० । अपगताङ्गे त्रि० ।

**अपाङ्गदर्शन** न० अपाङ्गेन नेत्रान्ताभ्यां दर्शनं ३त० । कटाक्षे ।

**अपाटव** न० नास्ति पाटवं पटुता यत्र पटु+भावेऽण् । ७ब० । रोगे । न०त० । पटुताभिन्ने । ६ब० । पटुताशून्ये त्रि० ।

**अपात्र** न० पात्रं श्राद्धभोजनदानादियोग्यं न०त० । विद्यादिहीनेऽनाचारे, दानादियोग्यताहीने कुपात्रे, नटादौ च ।

**अपात्रीकरण** न०अपात्रं श्राद्धभोजनाद्ययोग्यं क्रियतेऽनेन । निन्दितप्रतिग्रहादिजनिते पापभेदे । "निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम् । अपात्रीकरणं ज्ञेयमसत्यस्य च

भाषणं''मिति मनूक्तेः तद्धेतुभूते निन्दितधनादानादौ च ।

**अपादान** न० व्याकरणप्रसिद्धे वियोगक्रियावधिभूते विभाग-जनकतत्क्रियानाधारे तत्क्रियाजन्यविभागाश्रये ।

**अपान** पु० अपसरणेनानित्यनेन अप+अन-घञ् । सततमधो-गमनशीले, गुह्यदेशस्थे, "अधोनयत्यपानस्तु आहारञ्च नृणां पुन''रित्युक्तलक्षणे "मूत्रशुक्रवहोवायुरपान इति कीर्त्त्यते'' इत्युक्तलक्षणे च वायौ । गुह्ये न० ।

**अपामार्ग** पु० अपमृज्यते व्याधिरनेन मृज्-करणे घञ् कुत्-दीर्घौ । आपाङ् इति ख्याते वृक्षे ।

**अपाय** पु० अप+इण-अच् । वियोगे, नाशे, अपसरणे च ।

**अपार** त्रि० उत्तरोऽवधिः पारः न०ब० । उत्तरावधिशून्ये। नद्यादेरर्व्वाचीने अवारे तीरे न० ।

**अपार्थ** त्रि० अपगतोऽर्थोऽभिधेयः प्रयोजनं वा यस्मात् ५ब० । अर्थशून्ये, प्रयोजनशून्ये च । ब०कपि । अपार्थकमप्यत्रार्थे, निष्प्रयोजने, असंबद्धार्थके वाक्ये च ।

**अपावृत** त्रि० अप+आ-वृ-क्त । अनाच्छादिते, अप्रतिबद्धे स्वतन्त्रे, उद्घाटिते च ।

**अपावृत्त** त्रि० अप+आ+वृत-क्त । लुण्ठिते, परावृत्ते च ।

**अपाश्रय** पु० अप+आ+श्री-अच् । आश्रयशून्ये। अपाश्रयतीति कर्त्तरि अचि । अधीने । करणेऽचि। चन्द्रातपे ।

**अपासन** न० अप+अस-णिच्-ल्युट् । मारणे ।

**अपास्त** त्रि० अप+अस-क्षेपे क्त । निरस्ते-अवधीरिते च ।

**अपि** अव्य० न पियति गच्छति पि-गतौ क्विप् न तुक् । अशक्य करणायोद्यमरूपायां, शक्त्युत्कर्षमाविष्कर्त्तुमत्युक्तिरूपायां, वा सम्भावनायां, सन्देहे, निन्दायां, प्रश्ने, समुच्चये, अल्पपदार्थे, कामचारानुज्ञायाम्, अवधारणे, पुनरर्थे च ।

**अपिगीर्ण** त्रि० अपि+गॄ-क्त । स्तुते,वर्णिते,उद्वान्ते च ।

**अपितु** अव्य० अपि+तन्-डु । किन्त्वर्थे, यद्यर्थे, यद्यपीत्यर्थे च ।

**अपिधान** न० अपि+धाञ् ल्युट् । आच्छादने, अत्र अपेर-ल्लोपे । पिधानमपि । [ पिनद्धमप्यत्र ।

**अपिनद्ध** त्रि० अपि+नह-क्त । परिहिते वसनादौ । अपेरल्लोपे

**अपीच्य** त्रि०अपि+न-च्यवते सौन्दर्य्याद्धीयते च्यु-ड। उपसर्ग दीर्घः । अतिसुन्दरे । [ वृक्षे । पुच्छहीने त्रि०।

**अपुच्छा** स्त्री० नास्ति पुच्छमस्य यस्याः । शिखरहीने शिंशपा-

**अपुनरावृत्ति** स्त्री०न पुनरावृत्तिरागमनं यत्र ७ब०। निर्व्वाण मुक्तौ । ६ब० । पुनर्गमनशून्ये त्रि० । न०त० । पुनरागत्यभावे स्त्री० । [६ब० । अत्यन्तमुक्ते । न०त० । पुनर्जन्माभावे ।

**अपुनर्भव** पु० न पुनर्भवो जन्म यत्र ७ब० । निर्व्वाण मोक्षे ।

**अपुष्पफलद** पु० पुष्पं विनापि फलं ददाति दा-क उप०स०। पुष्पशून्ये फल वति पनसोदुम्बरादिवृक्षे ।

**अपूप** पु० न पूयते विशीर्य्यति पू-प । गोधूमादिचूर्णपिष्टके ।

**अपूरणी** स्त्री० न पूर्य्यते सर्व्वतः कण्टकावृततया दुरारोह-त्वात् । शाल्मलिवृक्षे । संख्यापूरणभावनभिन्ने च ।

**अपूर्व्व** त्रि० न पूर्व्वं दृष्टम् । अविदिते आश्चर्य्ये । ६ब० । कारणशून्ये परमात्मनि पु० । वैधनिषेधक्रियाजन्ये काला-न्तरभाविनोः सुखदुःखयोर्हेतुभूतयोः पुण्यपापयोः न० । पूर्व्वकालादिभिन्ने त्रि० ।

**अपूर्व्वविधि** पु० अपूर्व्वं प्रमाणान्तरेणाप्राप्ते विधिर्विधानम् वि+धा-कि । अप्राप्तप्रापके लिङादिपदवेदनीये शब्दवि-शेषे । यथा स्वर्गकामो यजेतेति लिङ्युक्तं वाक्यं प्रमाणान्त-रेणाप्राप्तस्य स्वर्गसाधनतस्य यागे बोधयत् अपूर्व्वविधिः ।

**अपेक्षा** स्त्री० अप+ईक्ष-अङ् । आकाङ्क्षायां, कार्य्यकारणयो-रवश्यसम्बन्धे च । अपेक्षते प्रत्ययमुत्तमं त्वामिति कुमारः

**अपेक्षाबुद्धि** स्त्री० अयमेकः अयमेकइत्याकारिकायां अनेक-त्वादिविषयिण्यां बुद्धौ ।

**अपेक्षाबुद्धिज** त्रि० न्यायमते प्रसिद्धे द्वित्वाद्यारभ्य परार्द्ध-संख्याभेदे, द्वित्वादिकं हि प्रागुक्तापेक्षाबुद्धितोजायते ।

**अपोगण्ड** त्रि० पुनाति पवते वा पू-विच् न पोगण्ड एकदेशो-ऽस्य । शिशौ, वलिभे,विकलाङ्गे, अतिभीरौ च ।

**अपोढ** त्रि० अप-उह-क्त । निरस्ते, बाधिते च ।

**अपोदका** स्त्री० अपगतमुदकं यस्याः ५ब० । पूतिका इति ख्याते शाके ।

**अपोह** पु०अपगत-ऊहो वादिसमुद्भावितस्तर्को यस्मात् ५ब० । वादिसमुद्भाविततर्कनिरासार्थके प्रतिवादिसमुद्भाविततद्वि-रुद्धे तर्कभेदे । अप+उह-क्त घञि गुणे पररूपम् । त्यागे, अतद्व्यावृत्तौ च ।

**अप्पति** पु० अपां पति ६त० । वरुणे समुद्रे च । [कादौ ।

**अप्रकाण्ड** पु० न प्रकाण्डः स्कन्धो यस्य । स्कन्दशून्ये झिण्टि-

**अप्रकाश** त्रि० प्र+काश-घञ् न०त० । नाट्ये रङ्गभूमिस्थ-सामाजिकसन्निधाने एव प्रकाश्ये जनान्तिकपदबोधनीये रङ्गस्थपात्रादिबोधायोग्ये । परब्रह्मणि न० । न०त० । प्रका-शाभावे, गोपने च पु० ।

**अप्रकृष्टगुण** त्रि० न प्रकृष्टः गुणो यस्य न०ब० । व्याकुले ।

**अप्रतिकार** त्रि० न प्रतिक्रियते गोपनार्थं न व्याप्रियते यस्मिन् कृ-आधारे घञ् । विश्वासपात्रे ।

**अप्रतिरथ** न० न प्रतिकूलो रथोयत्र । युद्धार्थयाने, युद्ध-

समये यात्राकालमङ्गले, सामान्ययवभेदे च। न प्रतिपक्षो रथो रथान्तरमस्य ६ब०। अतुल्ये योधे, विष्णौ च पु०।
**अप्रतिरूपकथा** स्त्री० नास्ति प्रतिरूपा प्रत्युत्तरी भूता कथा यस्याः। उत्तरवाक्यरहितायां वाचि।
**अप्रत्यक्ष** त्रि० ज्ञानभेदः प्रत्यक्षं न०७ब०। प्रत्यक्षागोचरे अतीन्द्रिये न०त०। प्रत्यक्षाभावे। न०६ब०। प्रत्यक्षज्ञानशून्ये त्रि०।
**अप्रधान** न०। न०त०। प्रधानभिन्ने गौणे।
**अप्रस्तुतप्रशंसा** अप्रस्तुतस्याप्राकरणिकार्थस्याक्षेपादिना प्रशंसा स्तुतिः। अलङ्कारप्रसिद्धे अर्थालङ्कारविशेषे। सा०१०परि०।
**अप्रहत** त्रि० न प्रहन्यते स्म प्र+हन-क्त न०त०। अनाहते अकृष्टभूम्यादौ खिल इति ख्याते।
**अप्राग्र्य** त्रि० प्राग्र्यं प्रधानं न०त०। अप्रधाने।
**अप्सरस्** स्त्री० बहु०। अद्भ्यः सरन्ति सृ-असि। समुद्रादुत्पन्नत्वात् उर्वश्यादिस्वर्गवेश्यायाम्। पचाद्यचि। अप्सरा।
**अफल** पु० नास्ति फलं यस्य। फलशून्ये रांडा इति ख्याते वृक्षे। निष्फले वृक्षमात्रे, निष्प्रयोजने वस्तुमात्रे च त्रि०। फलशून्यायां घृतकुमार्य्यां, भूम्यामलक्याञ्च स्त्री०।
**अफेन** न० नास्ति फेनं यस्य। वृक्षविशेषनिर्य्यासे आफिङ् इति ख्याते अहिफेने।
**अब** शब्दे इदित् भ्वादि० आत्म० सक० सेट्। अम्बते आम्बिष्ट
**अबद्ध** न० न संबध्यते स्म बन्ध-क्त। समुदायार्थशून्ये निरर्थके वाक्ये। स्वार्थे के। अबद्धकमप्यत्र। संबन्धहीने त्रि०।
**अबद्धमुख** त्रि० न बद्धं नियन्त्रितं मुखमस्य। दुष्टवाक्यवादिनि दुर्मुखे। [वाक्ये न०।
**अबध्य** त्रि० बध+अर्हार्थे यत् न०त०। बधानर्हे। अनर्थक-
**अबन्ध्य** त्रि० बन्धे फलप्रतिबन्धे साधु बन्ध-यत् न०त०। सफले।
**अबल** पु० नास्ति बलं यस्मात् ५ब०। वरुणवृक्षे तत्सेवने हि बलक्षयः। ६ब०। बलरहिते दुर्बले च त्रि०। योषिति स्त्री०
**अबाध** त्रि० नास्ति बाधा यस्य। अप्रतिबद्धे, पीडाशून्ये च।
**अबिन्धन** पु० आपइन्धनं दाह्या यस्य। वाड़वाग्नौ वज्राग्नौ च
**अब्ज** न० अद्भ्यो जायते जन-ड ५त०। पद्मे, "अर्बुदमब्जं खर्व्वनिखर्व्वे"त्यादिभास्कराचार्य्योक्तेः शतकोटिसंख्यायाञ्च। शङ्खे पु०न०। चन्द्रे धन्वन्तरौ च पु०।
**अब्जज** पु० अब्जात् विष्णुनाभिपद्मात् जायते जन-ड। वेधसि। "स्वरायौ, स्वांशगे, सौम्ये तन्वस्थे वा भृगोः सुते। जीवे वाब्जजयोगोऽयं यातुः शत्रुविनाशकृदि"त्युक्तलक्षणे ज्योतिषप्रसिद्धे यात्रिकयोगभेदे च।
**अब्जभोग** पु० अब्जस्य पद्मस्य भोग आकार इवाकारो यस्य। वराटके। अब्जस्य पद्मस्य भोगः देहाकारः। पद्मकन्दे।
**अब्जयोनि** पु० अब्जं योनिरुत्पत्तिस्थानं यस्य। विधातरि।
**अब्जवाहन** पु० अब्जमिव शुभ्रत्वात् वृषभो वाहनमस्य। वृषवाहने शिवे।
**अब्जहस्त** पु० अब्जश्चन्द्रो हस्तात् किरणात् यस्य। सूर्य्ये, सूर्य्यकिरणसंपर्कादेव चन्द्रपादवृद्धिरिति ज्योतिषसिद्धान्तः।
**अब्जिनी** स्त्री० अब्जानि सन्त्यस्मिन् देशे, अब्जानां समूह इति वा इनि स्त्रीत्वम्। पद्मयुक्तलतायां पद्मसमूहे च।
**अब्जिनीपति** पु० अब्जिन्याः पद्मसमूहस्य पतिः प्रकाशकतयाऽनुकूलः। सूर्य्ये।
**अब्द** पु० अपोददाति दा-क। मेघे, जलदे, वत्सरे, मुथा इति ख्याते मुस्तके, शैलभेदे च।
**अब्दसार** पु० अब्दस्य मुस्तस्य सारो रसपरिपाकः। कर्पूरभेदे
**अब्धि** पु० आपो धीयन्तेऽत्र धा-आधारे कि। जलधौ।
**अब्धिकफ** पु० अब्धेः समुद्रस्य कफ इव। समुद्रफेने।
**अब्धिद्वीपा** स्त्री० अब्धिसंख्याता लवणादिसप्तसंख्याता द्वीपा अस्याः। जम्बुप्रभृतिसप्तद्वीपवत्याम् पृथिव्याम्। [चन्द्रे।
**अब्धिनवनीतक** पु० अब्धेः समुद्रस्य नवनीतमिव स्वार्थे क।
**अब्धिमण्डूका** स्त्री० अब्धिं मण्डयति मण्ड-ऊक गौरा० ङीष्। मुक्तासाधने शुक्तौ। [शेते।
**अब्धिशयन** पु० अब्धौ शयनमस्य। विष्णौ, सहि प्रलये अब्धौ
**अब्भक्ष** पु० अपोभक्षयति। सर्पभेदे। नित्यं जलपायिनि त्रि०
**अभ्र** न० अपो बिभर्त्ति भृ-क। मेघे, । न बिभर्त्ति किञ्चित्। बकारहीन एवायं गगने।
**अभ्रंलिह** पु० अभ्रं मेघं लेढि अत्युच्चतया स्पृशति। लिहखश् मुम् च। वायौ। मेघस्पर्शिनि उच्चतमे त्रि०। [भेदे।
**अभ्रक** न० अभ्रमिव कायति राजते कै-क। [आव्] धातु-
**अभ्रङ्कष** न० अभ्रं कषति स्पर्शादिना पीड़यति। कष-खच् मुम् च। वायौ। अत्युच्चे त्रि०।
**अभ्रपुष्प** न० अभ्रस्य पुष्पमिव शुभ्रत्वात् कार्य्यत्वाच्च। जले। अभ्रमिव पुष्पमस्य ब०। वेतसवृक्षे पु०।
**अभ्रमातङ्ग** पु० अभ्रात्मको मातङ्गः शा०त०। ऐरावते गजे।
**अभ्रमु** स्त्री० अभ्रे अभ्रात्मके ऐरावते माति मा-डु। ऐरावतस्य योषिति।
**अभ्रमुवल्लभ** पु० अभ्रमो वल्लभः ६त०। ऐरावते गजे।
**अभ्ररोहस्** पु० अभ्रात् तच्छब्दात् रोहति रुह-असि। वैदूर्य्यमणौ तस्य हि मेघशब्दादुद्भेदः इति प्रसिद्धम्।
**अभ्रोत्थ** न० अभ्रात् तन्निघर्षणादुत्तिष्ठति स्था-क। वज्रे।

**अब्र(ब्र)ह्मण्य** न० ब्र (ब्र) ह्मणि वेदे साधु ब्रह्मन्+यत्। न०ब०। हिंसाया वेदनिन्दितत्वात्। नाट्योक्तौ अयं न वध्य इत्याकारके वाक्ये ब्रह्मण्याभावे च। ब०। ब्रह्मण्यशून्ये त्रि०।

**ब्रा(ब्रा)ह्मण** पु० अप्राशस्त्ये नञा त०। अपकृष्टविप्रे।

**भ्र** ध्वनौ भ्वा०आत्म० इदित् अक० सेट्। अम्भते आम्भिष्ट।

**अभय** न० भी-अच् न०त०। भयाभावे। द्व०। भयशून्ये त्रि० न भयमस्मात् ५ब०। परमात्मनि, तज्ज्ञाने च। अभयं वै जनक! प्राप्नोऽसीति श्रुतिः। हरितक्यां स्त्री०।

**अभयडिण्डिम** पु० अभयार्थं डिण्डिमः। जयढक्कायाम्।

**अभाव** पु० भू-घञ् न०त०। मरणे, अविद्यमानतायाम्। न्यायमते द्रव्यादिषट्कं भावः पदार्थस्तद्भिन्ने।

**अभाषण** न० भाष-ल्युट् न०त०। मौने,कथनाभावे च।

**अभि** अव्य०न भाति भा-कि। कश्चित् प्रकारं प्राप्तस्य द्योतने, आभिमुख्ये, अभिलाषे, वीप्सायां, लक्षणे, समन्तादर्थे च।

**अभिक** त्रि० अभिकामयते अभि+कम-नि०। कामुके।

**अभिक्रम** पु० अभि+क्रम भावे-घञ् अवृद्धिः।आरम्भे,आरोहणे, युद्धे,शत्रुसंमुखयाने। कर्म्मणि इनि। आरब्धे। [च।

**अभिख्या** स्त्री० अभि+ख्या-अङ्। अभिधाने,शोभायां, कीर्त्तौ

**अभिग्रस्त** त्रि० अभि+ग्रस-क्त। शत्रुभिराक्रान्ते।

**अभिग्रह** पु० अभि+ग्रह-अच्। लुट इतिख्याते, प्रकाशहरणे, अभियोगे, आभिमुख्येनोद्यमे, गौरवे च। ल्युटि अभिग्रहणमप्यत्र न०।

**अभिघात** पु० अभि+हन-घञ्। प्रहारे, क्रियाभेदेन द्रव्यस्य द्रव्यान्तरेण संयोगविशेषे, यथा वर्णोच्चारणकाले कण्ठतालुप्रभृतिषु स्थानेषु वायोः संयोगः। संवन्धमात्रे च।

**अभिघातिन्** पु० अभि+हन-णिनि। शत्रौ। प्रागुक्ताभिघातवति त्रि०।

**अभिघार** पु० अभि+घृ-भावे-घञ्। होमे आभिमुख्येन घृतादेः सेचने। कर्म्मणि घञ्। सिच्यमाने घृते।

**अभिचार** पु० अभि+चर-घञ्। हिंसाफलकेषु मारणोच्चाटनस्तम्भनप्रभृतिषु अथर्ववेदतन्त्रादिप्रसिद्धेषु कर्म्मसु।

**अभिजन** पु० अभिजन्यतेऽस्मिन् जन-घञ् अवृद्धिः। कुले, ख्यातौ, जन्मभूमौ, कुलश्रेष्ठे च।

**अभिजात** त्रि० अभि प्रशस्तं जातं जन्म यस्य। कुलीने, पण्डिते, श्रेष्ठे च। अभिजन्मन्नप्यत्र।

**अभिजित्** न० ज्योतिषपरिभाषिते उत्तराषाढ़ानक्षत्रस्य शेषचतुर्थांशसहितश्रवणानक्षत्राद्यकलाचतुष्करूपे राशिचक्रस्योनविंशात्मककक्षांशे। अभिमुखीभूय जयति शत्रूननेन अभि+जि-करणे क्विप्। शत्रुजयिनि, यात्रानुकूलक्षणभेदे, पञ्चदशधाविभक्तदिनस्याष्टमे भागे स्मृतिप्रसिद्धे कुतपकाले च

**अभिज्ञ** त्रि० अभिजानाति अभि+ज्ञा-क०। निपुणे, पण्डिते च

**अभिज्ञा** स्त्री० अभि+ज्ञा-अङ्! प्रथमसमुत्पन्ने ज्ञाने।

**अभिज्ञान** न० अभिज्ञायतेऽनेन। अभि+ज्ञा-करणे ल्युट्। सोऽयमिति ज्ञानसाधने चिह्ने।

**अभितस्** अव्य० अभि+तसिल्। सामीप्ये, आभिमुख्ये, उभयतोऽर्थे, शीघ्रतायाञ्च।

**अभिद्रवण** न० अभि+द्रु-ल्युट्। वेगेन गमने।

**अभिद्रोह** पु० अभि+द्रुह-घञ्। आक्रोशे, अनिष्टचिन्तने, अपकारे च।

**अभिधा** स्त्री० अभि+धाञ्-भावे अङ्। अभिधाने, शब्दनिष्ठअर्थबोधजनकताशक्तिभेदे च। अभिधीयतेऽनेनेति करणे अङि। वाचकशब्दे। भट्टमते अर्थफलजनकव्यापाररूपायां शब्दार्थनिष्ठायां भावनायाञ्च।

**अभिधान** स्त्रीं० अभि+धा-भावे ल्युट्। कथने। करणे ल्युट्। संज्ञायां,शब्दार्थप्रतिपादके निघण्टुकोषादिनामके ग्रन्थे च।

**अभिधेय** त्रि० अभि+धा-कर्म्मणि यत्। वाक्यार्थे, संज्ञिनि च।

**अभिध्या** स्त्री०अभि+ध्यै-अङ्। परधनस्याजिहीर्षायां,जिघृक्षायां,चिन्तने, विषयप्रार्थनायां च।

**अभिनन्द** पु० अभि+नन्द-घञ्। सन्तोषे,प्रतिपाद्यगुणकथनादिप्रवर्त्तके ज्ञाने,प्रशंसायाञ्च। ल्युटि। अभिनन्दनमप्यत्र न०।

**अभिनय** पु० अभि+नी-करणे अच्। हृद्गतभावव्यञ्जके शरीरचेष्टादौ। भावे अचि। अभिनेयपदार्थस्य शरीरचेष्टाभाषणादिभिरनुकरणे। अभिनयति बोधयत्यर्थमत्र आधारे अच्। शरीरचेष्टादिभिर्दृश्यपदार्थज्ञापके रूपकादौ दृश्यकाव्ये।

**अभिनव** पु० अभि-नु-अप्। स्तवने। नूतने त्रि०।

**अभिनवोद्भिद्** (द) पु० अभिनवमुद्भिद्य जायते उद्+भिद्-क्विप् क वा। अङ्कुरे। [च।

**अभिनहन** न० अभि+नह+ल्युट्। अभितोवन्धने, दृढवन्धने

**अभिनिर्मुक्त** पु० अभि सर्व्वतः सायन्तनकर्म्मणा निर्मुक्तः। सूर्य्यास्तकाले निद्रावशात् त्यक्ततत्कालकर्त्तव्यकर्म्मणि।

**अभिनिर्याण** न० अभि-निर्+या+ल्युट्। जिगीषया गमने।

**अभिनिवेश** पु० अभितोनिवेशः घञ्। अवश्यमिदं कर्त्तव्यमित्याग्रहसमन्विते मनःसंयोगभेदे,योगशास्त्रप्रसिद्धे मरणभीतिजनके अज्ञानविशेषे, अनित्यैरपि देहादिभिर्वियोगो मा भूदिति मरणनिवारणार्थमाग्रहे च।

**अभिनीत** त्रि॰ अभि नी-क्त। युक्ते, विनीते, अक्रोधने, क्षमावति, भूषिते च। [आभिमुख्येन गते च।

**अभिपन्न** त्रि॰ अभि+पद्-क्त। अपराधवति, आपद्गते, स्वीकृते,

**अभिप्राय** पु॰ अभि+प्र+इण-अच्। आशये, सम्मतौ च।

**अभिभव** पु॰ अभि+भू-अप्। पराजये, तिरस्कारे, अनादरे, च

**अभिभूत** त्रि॰ अभि+भू-क्त। किं कर्त्तव्यमिति ज्ञानशून्ये, पराभूते, व्याकुले च।

**अभिमत** त्रि॰ अभि+मन-क्त। सम्मते, आदृते, अभीष्टे च।

**अभिमन्त्रण** न॰ अभि+मन्त्र-ल्युट्। मन्त्रपाठेन संस्कारकरणे, निमन्त्रणे, आह्वाने च। [चक्षूरोगभेदे।

**अभिमन्थ** (न्य) पु॰ अभि+मन्थ-अच् मन्थ इति पक्षे मन-घ।

**अभिमर** पु॰ अभिम्रियतेऽत्र मृ-अप्। युद्धे, मरणनिरपेक्षतया कृते युद्धोत्साहे च।

**अभिमर्द्द** पु॰ अभि-मृद-घञ्। युद्धे, मद्ये, पीड़ने च।

**अभिमान** पु॰ अभि+मन-घञ्। आत्मन्युत्कर्षारोपे, मिथ्यागर्व्वे, अर्थादिदर्पे, ज्ञाने, प्रणये, हिंसायाञ्च।

**अभिमुख** त्रि॰अभिगतो मुखं गतिस॰। सम्मुखे। स्त्रियां ङीप्।

**अभिमृष्ट** त्रि॰ अभि+मृष-क्त। संस्पृष्टे, मिलिते, संबद्धे च।

**अभियुक्त** त्रि॰ अभि+युज-क्त। परैः रुद्धे, आसक्ते, व्यवहारविषये, प्रतिवादिनि च।

**अभियोक्तृ** त्रि॰ अभि+युज-तृच्। व्यवहारे अपराधयोजनकर्त्तरि वादिनि, अभियोगकर्त्तरि च।

**अभियोग** पु॰ अभि+युज-घञ्। अन्यकृतस्य निजधर्षणस्य न्यपाय विज्ञापने, युद्धार्थमाह्वाने, अपचिकीर्षयाक्रमणे, आग्रहे, शपथे, उद्योगे च। [प्रिये, मनोहरे च।

**अभिराम** त्रि॰ अभिरम्यतेऽस्मिन् रम-आधारे घञ्। सुन्दरे,

**अभिरूप** पु॰ अभिरूपयति सर्व्वं स्वात्मकं करोति चु॰रूप-अच्। शिवे, विष्णौ च। अभिरूपयति निरूपयति। पण्डिते। उत्कृष्टं रूपं यस्य। कन्दर्पे, चन्द्रे च। मनोहरे त्रि॰।

**अभिलाप** पु॰ अभिलप्यते संकल्प्यतेऽनेन करणे लप-घञ्। देशकालादिकीर्त्तनपूर्व्वकं विहितकर्म्मैतदहं करिष्ये इत्येवं रूपे वाक्ये। कर्म्मणि घञ्। शब्दे।

**अभिलाव** पु॰अभि+लू-घञ्। छेदने।

**अभिलाष** (श) पु॰ अभि+लष(श)-घञ्। इच्छायां, लोभे च। आभिलाषोऽप्यत्रार्थे। [वद-घञ्। प्रणामे।

**अभिवाद** पु॰ अभि+वद-घञ्। अप्रियवाक्ये। अभि+चु॰

**अभिवादन** न॰ अभि+चु॰वद॰ ल्युट्॥ अभिमुखीकरणार्थं वाचिके प्रणामे। आभिमुख्याय आनुकूल्याय वाद्यते आशीः कार्य्यतेऽनेन वद-णिच्-ल्युट्। स्वनामोच्चारणपूर्व्वकं नमने। तत्प्रकारस्तु इहदभिधाने।

**अभिविधि:** पु॰ अभि+वि+धाञ्-कि। व्याप्तौ, सहार्थे च।

**अभिव्यक्त** पु॰ अभि+वि+अनुज-क्त। उत्पत्त्यादिना प्रत्यक्षयोग्यतामापन्ने।

**अभिव्यक्ति** स्त्री॰अभि+वि+अनुज-क्तिन्। प्रत्यक्षयोग्यतायां

**अभिव्याप्ति** स्त्री॰ अभितो-व्याप्तिः वि+आप-क्तिन्। साकल्येन योगे, सर्व्वावयवसम्बन्धे, सर्व्वतोवृत्तौ च।

**अभिशप्त** त्रि॰ अभि+शप-क्त। इदं तेऽनिष्टं भूयादित्येवं रूपस्य गुरुविप्राद्यभिशापस्य उद्देश्ये।

**अभिशस्त** त्रि॰ अभि+शनुस-क्त। अयं परस्त्रियं गच्छतीत्यादिना मिथ्यावाक्येन मैथुनविषयको दोषारोपो यस्मिन् जने क्रियते तस्मिन्। [कृतमिति मिथ्यापवादे।

**अभिशस्ति** स्त्री॰ अभि+शनुस-क्तिन्। स्वर्णस्तेयादिकमनेन

**अभिशाप** पु॰ अभि+शप-घञ्। स्वर्णमनेन हृतमित्यादि मिथ्यादूषकवाक्यकथने। द्विजगुरुप्रभृतिकर्तृके अनिष्टं ते भूयादित्येवमनिष्टस्याशंसने च।

**अभिषङ्ग** पु॰ अभि+सनुज-घञ्। पराभवे, आक्रोशे, शपथे, व्यसने च "अभिषङ्गजडं विजज्ञिवानि" ति रघुः।

**अभिषव** पु॰ अभि+सू-अप्। यज्ञान्तस्नाने, यज्ञे, स्नाने, पीड़ने, सुरोत्पादनादिव्यापारे, सोमलतापाने, तत्कण्डने च।

**अभिषवण** न॰ अभि+सू-ल्युट्। स्नाने, यज्ञान्ते स्नाने, सोमादिकण्डने च।

**अभिषेक** पु॰ अभि+सिच्-घञ्। विधिना शान्त्यर्थं, सेचने, अधिकारप्राप्त्यर्थं स्नाने, यथा राज्याधिकारार्थं राज्येऽभिषेकः वाममार्गे शक्ति दीक्षायामधिकारार्थं शास्त्राभिषेकश्च मन्त्रादिना शिरसि जलप्रक्षेपमात्रेण मार्जने च।

**अभिषेणन** न॰ सेनया शत्रोरभिमुखं यानम् अभि+सेना+णि ल्युट् षत्वणत्वे। सेनया शत्रुं योधयितुं तदभिमुखगमने।

**अभिष्टुत** त्रि॰ अभि+स्तु-क्त। वर्णिते, स्तुते च।

**अभिष्यन्दः** पु॰ अभि+स्यन्द-भावे घञ्। अतिवृद्धौ स्रवणे, जलादिक्षरणे च। कर्म्मणि घञि। अधिके। स्वर्गाभिष्यन्दवमनमिति कुमारः। करणे घञि। नेत्ररोगे।

**अभिष्यन्दनगरं** पु॰ अभिष्यन्देन प्रधाननगरातिवृद्ध्या तदतिवाहेन कृतं नगरम्। शाखानगरे।

**अभिसन्ताप** पु॰ अभि+सम्+तप-आधारे घञ्। युद्धे। भावे घञि। अभितापे, सन्तापे च।

**अभिसन्धान** न॰ अभि+सम्+धा-ल्युट्। वञ्चने, प्रतारणे च।

**अभिसन्धि** पु० अभि+सम्-धा-कि । अभिसन्धाने, उद्देशे च ।
**अभिसम्पात** पु० अभि+सम्-पत-आधारे घञ् । युद्धे । भावे
घञि । पतने । [स्त्रियां ङीप् ।
**अभिसर** त्रि० अभितः सरति सृ+ट । सहाये, अनुचरे
**अभिसर्ज्जन** न० अभि+सृज-भावे ल्युट् । दाने, वधे च ।
**अभिसार** पु० अभि+सृ-घञ् । बले, युद्धे, साहाय्ये, साधने,
स्त्रियाः पुंसो वा संभोगार्थं निर्ज्जनसङ्केतस्थानगमने च ।
**अभिसारिका** स्त्री० अभि+सृ-सारेर्वा ण्वुल् । कान्तप्रार्थ-
नया स्वयं संकेतस्थानगामिन्यां, स्वस्थाने वा कान्तानयन
कारिण्यां स्त्रियाम् ।
**अभिसारिणी** स्त्री० अभि+सृ-णिनि । अभिसारिकायाम् ।
**अभिसृष्ट** पु० अभि+सृज-क्त । दत्ते,उत्सृष्टे, त्यक्ते च ।
**अभिहार** पु० अभि+हृ-घञ् । अपचिकीर्षया अभिगम्याक्र-
मणे,साक्षाच्चौर्य्ये, अभियोगे, कवचादिधारणे च ।
**अभीक** त्रि० अभिकामयते अभि+काम-नि० । कामुके,
स्वामिनि, क्रूरे, निर्भये च । कवौ पु० ।
**अभीक्ष्णम्** अव्य०अभिक्ष्णौति क्ष्णु-अमु दीर्घः । नित्ये,शश्वदर्थे,
भृशे च । तद्वति द्रव्ये शकटे भृशे सतते च त्रि० ।
**अभीरु** स्त्री० भी-रुक् न०त० । शतमूल्याम् असङ्कुचितपत्र-
त्वादभीरुत्वमस्याः । भयशून्ये त्रि० । [शतमूल्याम् ।
**अभीरुपत्री** स्त्री० न भीरूणि असंकुचितत्वात् पत्राण्यस्याः ।
**अभीषङ्ग** पु०अभि+सन्‌ज-घञ् दीर्घः । आक्रोशे, शापे च ।
**अभीषु** पु०अभि+इष-कु । किरणे,लागाम इति ख्याते प्रग्रहे,
कामे, अनुरागे च ।
**अभीष्ट** त्रि० अभि+इष-क्त । वाञ्छिते, दयिते, हृद्ये च ।
**अभेद** पु० भिद्+घञ् न०त० । भेदाभावे, तादात्म्ये, अविशेषे
च । ब० । विशेषशून्ये, भेदशून्ये च त्रि० ।
**अभेद्य** न० कर्म्मणि भिद-ण्यत् न०त० । हीरके । भेदनानर्हे त्रि०
**अभ्यग्र** त्रि० अभिमुखमग्रं यस्य । निकटे, आसन्ने च ।
**अभ्यङ्ग** पु० अभि+अन्‌ज-घञ् कुत्वम् । तैलादिमर्द्दने ।
**अभ्यञ्जन** न० अभ्यज्यतेऽनेन करणे अन्‌ज-ल्युट् । तैलादौ ।
भावे ल्युटि अभ्यङ्गे ।
**अभ्यधिक** त्रि० अभितोऽधिकः । सर्वघोत्तमे ।
**अभ्यन्तर** न० अभिगतमन्तरम् । अन्तराले, मध्यस्थाने ।
**अभ्यमित** त्रि० अभि+अम-रोगे क्त । रोगयुक्ते ।
**अभ्यमित्रीण** त्रि० अभि+अमित्रमलं गामी ख । शत्रुमभि,
सामर्थ्येन गन्तरि । [सामर्थ्येन गामिनि ।
**अभ्यमित्रीय** त्रि० अभि+अमित्रमलं गामी छ । शत्रुमभि,

**अभ्यमित्र्य** त्रि०अभि+अमित्रमलं गामी यत् । शत्रुमभि,सा-
मर्थ्येन गन्तरि । [इस्य नत्वम् । समीपे ।
**अभ्यर्ण** त्रि० अभि+अर्द्द-कर्म्मणि क्त अविदूर्य्ये इडभावः
**अभ्यर्हित** त्रि० अभि+अर्ह-क्त । उचिते,श्रेष्ठे, पूजिते च ।
**अभ्यवकर्षण** न० अभि+अव+कृष-ल्युट् । शल्यादेरुद्धारणे ।
**अभ्यवस्कन्द** पु०अभि+अवस्कन्द-घञ् । शत्रोराक्रमे,शत्रुभिः
क्रियमाणे प्रहारे, आसादने, प्रपाते च । ल्युटि । अभ्यव-
स्कन्दनमप्यत्रार्थे न० ।
**अभ्यवहार** पु० अभि+अव+हृ-घञ् । भोजने । [करणे ।
**अभ्यसन** पु० अभि+अस-ल्युट् । अभ्यासे पौनःपुन्येनैकक्रिया-
**अभ्यसूया** स्त्री० अभि+असू-उपतापे कण्ड्वादि० यक् प्रत्यया-
न्तत्वात् अ, स्त्रीत्वात् टाप् । गुणेषु दोषारोपणे ।
**अभ्याकाङ्क्षित** न० अभि+आ+काङ्क्ष-क्त । मिथ्याभियोगे ।
**अभ्याख्यान** न० अभि+आ+ख्या-ल्युट् । मिथ्याभियोगे,
मिथ्योद्भावने च । [थौ । सम्मुखागतमात्रे त्रि० ।
**अभ्यागत** पु०अभि+आ+गम-क्त । अदृष्टपूर्व्वे गृहं गतेऽति-
**अभ्यागम** पु० अभि+आ+गम-घञ् अवृद्धिः । विरोधे,समरे,
अन्तिके अभिगमने, भोगे, स्वीकारे, फलसंवन्धे च ।
**अभ्यागारिक** त्रि० अभि+अगारे तद्गते व्यापृतः ठक् ।
गृहवृत्तिपुत्रादिपोषणे व्याकुले । [आरम्भे च ।
**अभ्यादान** न० अभि+आ+दा-ल्युट् । आभिमुख्येनादाने,
**अभ्यान्त** त्रि० अभि+अम-क्त नि० । रोगयुक्ते ।
**अभ्यामर्द्द** पु० अभि+आ+मृद-आधारे घञ् । रणे । [च ।
**अभ्याश** पु०अभि+अश्‌-व्याप्तौ घञ् । अवश्यमेवेत्यर्थे अन्तिके
**अभ्यास** पु० अभि+अस-घञ् । आवृत्तौ । गुरोराकर्णनं,
तदर्थे युक्तायुक्तत्वविचारः, पौनःपुन्येन तदावृत्तिः, शिष्ये-
भ्योदानमित्येवंरूपविद्याभ्यासे, पौनःपुन्येन कीर्त्तने, अ-
न्तिके, विजातीयज्ञानानन्तरिते सजातीयैकरूपज्ञानप्रवा-
हरूपे ध्यानादेरभ्यासे च ।
**अभ्यासादन** न० अभि+आ+सद-णिच्-ल्युट् । शस्त्राद्यैः
शत्रोर्निर्वीर्य्यताकरणे,शत्रोः सम्मुखगमने च ।
**अभ्याहार** पु० अभि+आ+हृ-घञ् । अभिहारार्थे ।
**अभ्युत्थान** न० अभि+उत्-स्था-ल्युट् । आदरेणासनादित
उत्थाने गौरवेणोत्थानादिना प्रत्युद्गमने, उत्थितिमात्रे,
उद्यमे, उद्भवे च ।
**अभ्युदय** पु० अभि+उत्-इण्-अच् । अभीष्टकार्य्याणां प्रादु-
र्भावे, वृद्धौ, आधानस्नानचूडादिसंस्कारे च । अतएव
तदर्थकश्राद्धम् आभ्युदयिकमित्युच्यते ।

**अभ्युदित** पु॰ अभितः सर्व्वतः उदितिर्यस्य इतं गतं प्रातर्विहितं कर्म्म यस्मात्। सूर्य्योदयकाले निद्रयाऽकृततत्कालकर्त्तव्ये ब्रह्मचारिणि। उदिते, प्रकाशिते च त्रि॰।

**अभ्युद्यत** त्रि॰ अभि+उत्+यम-क्त। अयाचितोपस्थितेऽन्नादौ

**अभ्युपगम** पु॰ अभि+उप+गम-घञ् अवृद्धिः। स्वीकारे समीपगतौ च।

**अभ्युपपत्ति** स्त्री॰ अभि+उप+पद-क्तिन्। अनिष्टनिवारण पूर्व्वकाभीष्टसम्पादनरूपे अनुग्रहे, सान्त्वने च।

**अभ्युपाय** पु॰ अभि+उप+इण्-अच्। स्वीकारे अधिकोपाये

**अभ्र** गतौ भ्वादि॰पर॰सक॰सेट्। अभ्रति। आभ्रीत्।

**अभ्रि** स्त्री॰ अभ्र-गतौ-इन्। नौकामलापकर्षार्थे काष्ठरचिते कुद्दाले। स्त्रियां ङीपि अभ्रीत्यपि।

**अभ्रेष** पु॰ भ्रेष-चलने घञ् न॰त॰। न्याय्ये, उचिते च।

**अम** रोगे चुरा॰ उभय॰अक॰सेट्। आमयति ते आमिमत् त।

**अम** गतौ,भोजने,शब्दे च भ्वादि॰ अक॰ सेट्। अमति आमीत्

**अम** पु॰ अम-घञ् अवृद्धिः। रोगे। अपक्वफलादौ त्रि॰।

**अमङ्गल** पु॰नास्ति मङ्गलं यत्र। एरण्डवृक्षे। द्व॰। कुशलशून्ये त्रि॰। न॰त॰। मङ्गलाभावे। [पात्रे।

**अमत्र** न॰ अमत्यन्नमत्र अम-भोजने आधारे त्रन्। भोजन-

**अमर** पु॰ मृ-पचाद्यच् न॰त॰। देवे, अष्टशाब्दिकमध्ये अमरसिंहनामके शाब्दिके,स्नुहीवृक्षे,स हि छिन्नोऽपि पुनःपुनः प्ररोहति, सहसा न म्रियते। पारदे, तस्यापि वह्न्यादौ वह्नितापनेऽपि ध्वंसः। अस्थिसंहार्य्ये च स हि बहुकालं भग्नो स्थितोऽपि न जीर्य्यति। द्व॰ मरणशून्ये त्रि॰।

**अमरद्विज** पु॰ अमरपूजकः द्विजः शाक॰ त॰। देवले पूजारीति ख्याते विप्रे। [इन्द्रगव्यायां स्त्री॰।

**अमरपुष्पक** पु॰ अमरमविशीर्णं पुष्पं यस्य। कल्पवृक्षे,

**अमरा** स्त्री॰ मृ-पचाद्यच् न॰त॰। दूर्व्वायां,गुडूच्यां,स्थूणायां, जरायौ, वटवृक्षे, घृतकुमार्य्यां च। अर्श आदित्वादचि। देवनगर्य्याममरावत्याम्।

**अमराद्रि** पु॰ अमराणामद्रिः ष॰त॰। सुमेरुपर्व्वते।

**अमरालय** पु॰ अमराणामालयः। स्वर्गे। [इन्द्रनगर्य्याम्।

**अमरावती** स्त्री॰ अमराविद्यन्तेऽस्यां मतुप् वस्य दीर्घः।

**अमर्त्य** पु॰ मृतिमर्हति यत् मर्त्यः न॰त॰। मरणशून्ये देवे।

**अमर्त्यभुवन** न॰ अमर्त्यानां देवानां भुवनम्। स्वर्गे।

**अमर्ष** पु॰ मृष-क्षान्तौ घञ् विरोधे न॰त॰। क्षमाविरुद्धे कोपे।

**अमर्षण** त्रि॰ मृष-ल्यु न॰त॰। क्रोधने, असहने च।

**अमल** न॰अम+कलच्। अभ्रके। निर्मले, दोषरहिते च त्रि॰ लक्ष्म्यां, भूम्यालक्यां, नाभिनालायां च स्त्री॰।

**अमा** अव्य॰ न माति क्विप्। सहार्थे, निकटे च। अमावास्यायां तिथौ,चन्द्रस्य सर्व्वकलाव्यापकतया स्थितायां सूर्य्यकिरणासंपर्कादप्रदीप्तायां कलायाञ्च स्त्री॰।

**अमांस** त्रि॰नास्ति मांसं यस्य। दुर्बले। मांसहीनो हि दुर्बलः।

**अमात्य** पु॰ अमा सह वसति त्यक्। मन्त्रिणि। तस्य सहचरत्वात्। [मनःकष्टदायके दुःखे।

**अमानस्य** न॰ मानसे साधु न भवति मानस+यत् न॰त॰।

**अमाव(वा)स्या** स्त्री॰ अमा सह वसतश्चन्द्रार्कौ यत्र वस-यत् ण्यद्वा कृष्णपक्षशेषतिथौ तद्दिने चन्द्रार्कावेकराशिस्थौ।

**अमित्र** पु॰ अम-रोगे इत्र। रिपौ। [त्रि॰।

**अमुक्त** न॰मुच-क्त न॰त॰। सदा धार्य्ये क्षुरिकाभेदे। मुक्तभिन्ने

**अमुत** अव्य॰ अदस्+तसिल्। परलोके, जन्मान्तरे च।

**अमूर्त्त** त्रि॰ मूर्त्ति+अर्श आदित्वादच् न॰त॰। मूर्त्तिशून्ये वाय्वादौ। [शून्ये त्रि॰।

**अमूला** स्त्री॰ नास्ति मूलं यस्याः। अग्निशिखावृक्षे। मूल-

**अमृत** न॰मृ-क्त न॰त॰। मोक्षे, होमावशिष्टद्रव्ये, सुधायां,जले, घृते, अमृतं स्यादयाचितमितिमनूक्ते अयाचितलब्धे च। परब्रह्मणि न॰। मरणशून्ये त्रि॰। विभीतके स्त्री॰।

**अमृतजटा** पु॰ अमृता जटा यस्याः। जटामांसीवृक्षे।

**अमृतदीधिति** पु॰ अमृतमिवाप्यायनकरी दीधितिः किरणो यस्य। चन्द्रे। [पटोले पु॰।

**अमृतफला** स्त्री॰ अमृतमिव स्वादु फलं यस्याः। द्राक्षायाम्

**अमृतयोग** पु॰ ज्योतिषप्रसिद्धायां नक्षत्रविशेषयुक्तायां वारविशेष युक्तायाञ्च तिथौ।

**अमृतवल्ली** स्त्री॰ अमृताय जीवनसाधनाय वल्ली। गुडूच्याम्

**अमृतसू** पु॰अमृतं दीधितिरूपमाप्यायनं सूते सू-क्विप्। चन्द्रे। अमृतान् देवान् सूते। देवमातरि स्त्री॰।

**अमृतसोदर** पु॰ अमृतं सोदर एकस्थानजं यस्य। उच्चैःश्रवसि। उच्चैःश्रवसो हि समुद्रादुत्पत्तिः। तज्जातीयत्वात् घोटकमात्रे। [लतायाम्।

**अमृतस्रव** स्त्री॰ अमृतमिव स्रवति स्रु-पचाद्यच्। रुदन्ती-

**अमृतान्धस्** पु॰ अमृतमन्धो भक्ष्यं यस्य। देवमात्रे।

**अमृताशन** पु॰ अमृतमश्नाति अश-ल्यु। देवमात्रे।

**अमृताहरण** पु॰ अमृतमाहरति मातृदास्यनिवारणार्थं स्वर्गात् भूलोकं नयति आ+हृ ल्यु। गरुडे तस्यामृतहरणवृत्तान्तो महाभारते आदिप॰ २२अ॰।

**अमेधस्** त्रि॰ नास्ति मेधा यस्य द॰असिच्। मूर्खे, अल्पबुद्धौ च

**अमेध्य** न० मेध्यं पवित्रं न०त०। पुरीषे । पवित्रभिन्ने त्रि० ।

**अमोघ** त्रि० मोघो निष्फलः न०त०। सफले,अव्यर्थे च। नद-भेदे पु० । पटोललतायां, हरितक्यां विडङ्गे च स्त्री० ।

**अम्ब** गतौ भ्वादि० पर०सक०सेट् । अम्बति आम्बीत् ।

**अम्बक** न०अम्बति गोमे नवलग्रानपर्य्यन्तं गच्छति अम्ब-ण्वुल्। नेत्रे । अम्ब्यते स्नेहेनोपगम्यते घञ् स्वार्थे क । पितरि ।

**अम्बर** न० अबि शब्दे घञ् अम्बः शब्दस्तं रा त धत्ते अम्ब+ रा-क । शब्दाश्रये आकाशे, मर्म्मरशब्दयुक्ते वस्त्रे, स्वनाम ख्याते गन्धद्रव्ये, अभ्रकधातौ च ।

**अम्बरि(री)ष** न० अम्ब्यते पच्यतेऽत्र अम्ब-अरिष नि० वा दीर्घः । भाजनाखोला इति ख्याते भर्ज्जनपात्रे । अम्ब रीषमपि । दीर्घयुक्तस्तु विष्णौ,शिवे,भास्करे,बालके,आम्रा तकवृक्षे, नरकभेदे, अनुतापे, सूर्य्यवंश्यनृपभेदे च पु० ।

**अम्बष्ठ** पु० अम्बाय चिकित्सकशब्दाय तत्प्रख्यापन र्थं तिष्ठते-ऽभिप्रेति स्था क पत्वम् । चिकित्सके,विप्रात् वैश्यकन्यायां जाते सङ्कीर्णवर्णे, देशभेदे,हस्तिपके च । यूथिकाया स्त्री० स्वार्थे के ह्रस्वे अत इत्त्वे अम्बष्ठिकाप्यत्रैव वामनहाटीति प्रसिद्धायां ब्राह्मीलतायाञ्च ।

**अम्बष्ठकी** स्त्री०अम्बष्ठं कायति आदानार्थमाह्वयति कै-क गौरा० ङीप् । (पलाखण्ड) इति ख्यातायां लतायां पाठायाञ्च ।

**अम्बा** स्त्री० अम्ब्यते स्नेहेनोपगम्यते अम्ब-कर्म्मणि घञ् । मातरि,नाट्योक्तावपि तत्रैव, अम्बष्ठालतायां, काशीराज-कन्यायाञ्च ।

**अम्बाला** स्त्री० अम्बेति शब्दं लाति धत्ते ला-क । मातरि ।

**अम्बालिका** स्त्री० अम्बालैव स्वार्थे के ह्रस्वे अत इत्वम् । मातरि, पाण्डुराजमातरि च ।

**अम्बिका** स्त्री० अम्बैव स्वार्थे के ह्रस्वे अत इत्त्वम् । मातरि, धृतराष्ट्रराजमातरि, जगदुत्पादकत्वात् दुर्गायाम्, अम्बष्ठा लतायाम् कट्कीति ख्यातायां लतायाञ्च । [स्त्री० ।

**अम्बु** न० अबि शब्दे -उ । जले । रास्ना इति ख्यातायां लतायां

**अम्बुकण्टक** पु० अम्बुनः कण्टकमिव । कुम्भीरे,शृङ्गाटके च ।

**अम्बुकिरात** पु० अम्बुनि किरात इव हिंस्रः । कुम्भीरे ।

**अम्बुकीश** पु०अम्बुनि कीशः वानर इव । शुशक इति ख्याते शिशुमारे जलजन्तुभेदे ।

**अम्बुचामर** न० अम्बुनि चामरमिव । शैवले ।

**अम्बुज** न० अम्बुनि जायते । पद्मे । चन्द्रे हिजल् इति ख्याते वृक्षे च पु० । शङ्खे पु०न० ।

**अम्बुद** पु० अम्बु ददाति दा-क । मेघे, मुस्तके च ।

**अम्बुधि** पु० अम्बूनि धीयन्तेऽत्र धा-आधारे कि । समुद्रे ।

**अम्बुवाची** स्त्री० "यस्मिन् वारे सहस्रांशुर्यत्कालं मिथुनं व्रजेत् । अम्बुवाची भवेत्तत्र पुनस्तत्कालवारयोरिति" ज्योतिषोक्तेः "रजोयुक् च्चाम्बुवाची स्यादि"ति स्मृतेश्च सूर्य्याक्रान्तार्द्रानक्षत्रप्रथमचरणे जातरजस्कायां भूमौ ।

**अम्बुधिस्रवा** स्त्री० अम्बु धरिव स्रवति स्रु-अच् । घृतान्त-वह्निकायां घृतकुमार्याम् ।

**अम्बुपत्रा** स्त्री० अम्बूनि पत्रे यस्याः । उच्चटावृक्षे ।

**अम्बुप्रसाद** पु० अम्बूनि प्रसीदन्त्यनेन प्र+सद-घञ् । निर्म्म-लीति प्रसिद्धे कतकवृक्षे । [च ।

**अम्बुभृत्** पु० अम्बूनि बिभर्त्ति भृञ्-क्विप् । मेघे समुद्रे मुस्तके

**अम्बुमातृज** पु० अम्बुमातृ जलमातृ जायते जन-ड । शम्बुक इति ख्याते शम्बूके । [झिन्न्यां स्त्री० ।

**अम्बुरुह** न०अम्बुनि रोहति जायते रुह-क । पद्मे । स्थलप-

**अम्बुवासिनी** स्त्री० अम्बुनि जलप्रधाने वसति वस-णिनि । पाटलावृक्षे । [मुस्तके च ।

**अम्बुवाह** पु० अम्बूनि वहति वह-अण् । मेघे, तन्नामनामके

**अम्बुवाहिनी** स्त्री० अम्बूनि वाहयति नौकातः बहिरपसा-रयति वह+णिच्-णिनि । काष्ठादिरचिते नौकाजल-सेचनीपात्रे ।

**अम्बुवेतस** पु० अम्बुजातोवेतसः शाक०त० । जलवेतसे ।

**अम्बुशिरीषिका** स्त्री०अल्पः शिरीषः अल्पार्थे के स्त्रीत्वम् । जलशिरीषे । [इति ख्यातायां जलौकायाम् ।

**अम्बुसर्पिणी** स्त्री०अम्बुनि सर्पति सृप-णिनि ७त० । (जोंक)

**अम्बूकृत** त्रि०अनम्बु अम्बु कृतं अम्बु श्लेष्मात्मकाम्बु उप-चारात्तद्युक्तं ततः च्वि-कृ-क्त । निष्ठीवनयुक्ते वचसि ।

**अम्भस्** न० अभि-शब्देऽसुन् । जले, वाणानामौषधौ च ।

**अम्भःसार** न० अम्भसः सारः वा शरीति वा विसर्गः । मुक्ता-याम् । सत्वे अम्भस्सारमपि ।

**अम्भोज** न०अम्भसि जायते जन-ड ७त० । पद्मे । चन्द्रे पु० । शङ्खे पु०न० । जलजातमात्रे त्रि० । [पद्मसमूहे ।

**अम्भोजख(ष)ण्ड** न० अम्भोजानां समूहः अम्भोज+ख(ष)ण्ड

**अम्भोजयोनि** पु० अम्भोजः हरिनाभिपद्मं योनिः उत्पत्ति-स्थानं यस्य । विधातरि ।

**अम्भोजिनी** स्त्री० अम्भोज+समूहार्थे, तद्वति देशे वा इनि । पद्मसमूहे, पद्मयुक्तदेशे लतारूपे च ।

**अम्भोद** पु० अम्भो ददाति दा-क । मेघे, मुस्तके च । जल-दानकर्त्तरि त्रि० ।

**अम्भोधर** पु० अम्भो धरति धृञ्-धारणे अच्। मेघे। समुद्रे, मुस्तके च।
**अम्भोधि** पु० अम्भांसि धीयन्ते यत्र धा-आधारे कि। समुद्रे।
**अम्भोनिधिः** पु० अम्भांसि निधीयन्तेऽत्र नि+धा-कि। समुद्रे
**अम्भोराशि** पु० अम्भसां राशिरिव एकत्रोपचितत्वात्। समुद्रे
**अम्भोरुह** न० अम्भसि रोहति रुह-क। पद्मे।
**अम्मय** त्रि० अपां विकारः अप्+मयट्। जलविकारे फेनादौ।
**अम्र** पु० अमति सौरभेण दूरं गच्छति अम-रन्। आम्रवृक्षे। फलपत्रादौ न०। एवं प्रायः सर्वत्र वृक्षवाचके।
**अम्रात** पु० अम्लं रसं सर्वत्र पत्रपुष्पादौ अतति व्याप्नोति अत-अण् रस्य वा लत्वम्। (आमड़ा) अम्रातकवृक्षे स्वार्थे के अम्रातकोऽपि। वा रलाभावे अम्लातः। के। अम्लातकश्च।
**अम्ल** न० अम-क्त। (घोल) तक्रे। (टक)रसे पु०। तद्वति त्रि०।
**अम्लक** पु० अल्पोऽम्लः अल्पार्थे क। (मान्दार) लकुचवृक्षे।
**अम्लकेशर** पु० अम्लः केशरोऽस्य। बीजपूरे।
**अम्लचूड़** पु० अम्ला चूड़ा शिखाऽस्य। अम्लशाके।
**अम्लजम्बीर** पु० अम्लो जम्बीरः। (गोंड़ानेबु) जम्बीरवृक्षे।
**अम्लनायक** पु० अम्लं रसं नयति नी-ण्वुल्। अम्लवेतसे।
**अम्लनिशा** स्त्री० अम्लरसे नि शेषेण शेते शीङ्-ड। शठीवृक्षे
**अम्लपत्र** पु० अम्लं पत्रं यस्य। अश्मन्तकवृक्षे।
**अम्लपत्री** स्त्री० अम्लं पत्रं यस्याः। पलाशीलताय म्।
**अम्लपनस** पु० अम्ल पनसः कर्म०। (मान्दार) लकुचवृक्षे।
**अम्लफल** पु० अम्लं फलं यस्य। तेतुल इतिख्याते वृक्षाम्ले।
**अम्लभेदन** पु० अम्लार्थं भिद्यतेऽसौ कर्म्मणि ल्युट्। अम्लवेतसे
**अम्लरुहा** स्त्री० अम्लाय रोहति रुह-क। मालवजनागवल्ल्याम्
**अम्ललोनि(णि)का** स्त्री० अम्लं रसं लाति ग्लह्णाति अम्ललः तमूनयति अल्पाम्लत्वात् हीनयति ऊन-ण्वुल् वा णत्वम्। आमरुल इति ख्याते लताभेदे।
**अम्लवती** स्त्री० अम्लो रसो विद्यतेऽस्याः अम्ल+मतुप् वत्वम्। चटराल इति ख्याते लताभेदे।
**अम्लवन्ध्या** स्त्री० वन्ध-कर्म्मणि ण्यत्। अम्लसंबद्धे, कन्दभेदे।
**अम्लवाटिका** स्त्री० अम्लस्य रसस्य दाटिका स्थानमिव। नागवल्लीभेदे। [पालङ्ग इति ख्याते चुक्रे।
**अम्लवास्तुक** पु० अम्लरसान्वितोवास्तूकः शाकभेदः। चुक्र-
**अम्लवीज** न० अम्लस्य वीजं कारणम्। (तेंतुल) वृक्षाम्ले।
**अम्लवृक्ष** न० अम्लस्य रसस्य वृक्षइवाधारः। (तेंतुल) वृक्षाम्ले।
**अम्लवेतस** पु० अम्लोवेतसइव नम्रस्य। चुका इति ख्याते चुक्रे।
**अम्लशाक** पु० अम्लः शाको यस्य। चुका इतिख्याते चुक्रे।
**अम्लसार** पु० अम्लो रसएव सारः प्रधानं यस्य चुक्रे, निम्बुके, हिन्ताले च। काञ्जिके न०। [इति ख्याते वृक्षे।
**अम्लहरिद्रा** स्त्री० अम्लरसान्विता हरिद्रा। आमहरिद्रा
**अम्ला** स्त्री० अम्लो विद्यतेऽस्या अर्श्वआद्यच्। तिन्तिड्याम्।
**अम्लाङ्कुश** पु० अम्लम् अङ्कुशाकारमग्रं यस्य। चुक्रे।
**अम्लादन** पु० अद्यते अद्-कर्म्मणि ल्युट् कर्म०। कुरण्टक वृक्षे। [वृक्षे। म्लानभिन्ने त्रि०।
**अम्लान** पु० म्लै-क्त न०त०। आमला इति ख्याते महासहा
**अम्लिका** स्त्री० अम्लैव स्वार्थे क। तिन्तिड्याम्। अम्लाम्लीकेत्यपि
**अय** गतौ भ्वा० आत्म० सक० सेट्। अयते आयिष्ट।
**अय** पु० एति सुखमनेन इण्-करणे अच्। प्राक्तने शुभकर्म्मणि, शुभदायके-दैवे विधाने च। [निरक्षभेदे। अयस्पानमप्यत्र।
**अयःपान** न० अयः द्रवीभूतं तप्तलौहं पीयतेऽत्र ल्युट्।
**अयःशूल** न० अय इव शूलम् उपतापकम्। तीव्रे उपताये, लौहशलाकाभेदे च, अयश्शूलमप्यत्र। [माघे पु०।
**अयज्ञिय** त्रि० यज्ञाय साधुर्न भवति यज्ञ+यत्। यज्ञानर्हे।
**अयन** न० अय-भावे ल्युट्। गतौ, दक्षिणत उत्तरस्याम्, उत्तरतश्च दक्षिणस्यां सूर्य्यस्य गतौ, तथाहि द्वादशराश्यात्मकस्य राशिचक्रस्यार्द्धं मकरावधि मिथुनपर्य्यन्तं राशिषट्कं क्रमेण उत्तरावनतं तत्र स्थितोऽर्कः स्वगत्या प्राचीं गच्छन्नपि किञ्चित् किञ्चित्तिर्य्यग्गत्या उत्तरामभिक्रामति ततः कर्कटावधि धनुःपर्य्यन्तं राशिषट्कं क्रमेण दक्षिणावनतं तत्र स्थितोऽर्कः प्राग्वत् दक्षिणामेवाभिक्रामति सेयं गतिरयनशब्देन ज्योतिषे व्यवह्रियते एवञ्च सौरैः षड्भिर्मासैरेकमयनमित्यपि तत्र प्रसिद्धम्। "अयनविष्णुपदी षड्शीतय" इतिव्युक्तेरयनाख्यसंक्रान्तौ, सा हि पारिभाषिकायनशब्दवाच्या। नभोमण्डले प्रवहानिलेन पश्चाद्गत्या संभ्रम्यमाणस्य राशिचक्रस्य निराधारतया दोलायमानत्वेन सप्तविंशांशपर्य्यन्तं प्राक्, पश्चाच्च या गतिर्भवति तत्रापि, तद्धि अष्टमासाधिक ६६।८ षट्षष्टिवर्षैरेकैकमंशमतीत्य प्राक्, पश्चाद्वा चलतीति १८०० अष्टादशशतवर्षैः सप्तविंशांशपर्य्यन्तं प्राक्गत्वा पुनः पश्चात् पश्चाद्गत्वा च प्रागवलम्बते। यदा चैवं राशिचक्रं प्राक् गच्छति तदा राशिचक्रनिर्द्दिष्टमेषादिस्थानात् उक्तकालभेदेनैकैकांशातिक्रमेण क्रमशः प्राचि, प्राक्तरे, प्राक्तमे वा स्थाने रव्यादिग्रहाणां प्रभापुञ्जसञ्चारः, यदा तु पश्चादवलम्बते तदा निर्दिष्टमेषादिस्थानात् तथैव परे, परतरे, परतमे, च स्थाने ग्रहाणां प्रभासञ्चार इति भेदः। इदानीञ्च पश्चिमगयनं ततः पश्चादेव ग्रहप्रभा-

स्नारः। तथाच ज्योतिषोक्तगणितरीत्या मेषादितः पश्चादेकविंशांशे मीनादीनवमांशे एवेदानीं विषुवादिसंक्रान्तिर्भवति एवं विष्णुपद्यादीनामपि तत्तद्दश एव ग्रहप्रभासञ्चारः। अयञ्चायनानुसारेण ग्रहप्रभासञ्चारस्वीकारः दिनमानविशेषस्य लग्नपरिमाणस्य, छायापदविशेषस्य, च बोधार्थमिति सिद्धान्ते प्रसिद्धम्। करणे ल्युट्। उक्तायनज्ञानसाधने शास्त्रे, "ज्योतिषामयनञ्चैवेति" सैन्यनिवेश विशेषरूपव्यूहप्रवेशमार्गे च "अयनेषु च सर्वेषु यथाभागमव स्थिता" इति गीता। आधारे ल्युट्। पथि, गृहे, आश्रये, स्थाने, "ता यदस्यायनं पूर्व्वमिति" मनुः। प्रागुक्तराशि चक्रस्य अंशरूपे गतिस्थानविशेषे च "तत्काले सायनार्कस्येति" नीलकण्ठः।

**अयनसंक्रान्ति** स्त्री० अयनेन राशिचक्रस्य पश्चात्, प्राग्वा-गत्या कृता संक्रान्तिर्ग्रहाणां प्रभापुञ्जस्य सञ्चारः सम्+क्रम-क्तिन्। चलसंक्रान्तौ, मेषादिभिर्द्वादशसु स्थानेषु विभक्तस्य राशिचक्रस्य प्राक्, पश्चाद्वा दोलायमानतया निर्द्दिष्टमेषादिस्थानात् पश्चात् पूर्व्वं वा ग्रहप्रभापुञ्जसंचारः आक्रान्तराशिं विहाय राश्यन्तरे गमनं चलसंक्रान्तिः अनियतस्थानतया चलत्वात्। निर्द्दिष्टराशिस्थानेषु ग्रहाणां मण्डलसञ्चारः अचलसंक्रान्तिः राशिसंक्रान्तिरिति चोच्यते नियतमेकस्थाने एव जायमानत्वादचलत्वम्। अनयैव संक्रान्त्या यथा मासादिव्यवहारे न दोषः चलसंक्रान्त्या तु वहवो दोषास्तथा बृहदभिधाने वक्ष्यते।

**अयस्** न० इण-असुन्। लौहे, तद्धि स्थावरमप्ययस्कान्तसान्निध्यात् चलति।

**अयस्कान्तः** पु० अयसां मध्ये कान्तःरमणीयःकस्कादित्वात् सत्वम्। कान्तिलौह इति ख्याते लौहभेदे। ६त०। सन्निधिमात्रेण लौहाकर्षके चुम्बक इति ख्याते प्रस्तरभेदे च।

**अयस्कार** पु० अयस्-कृ-अण् उप०स०। लौहकारे।

**अयाचित** न० याच-क्त न०त०। अमृताख्यवृत्तौ "अमृतं स्यादयाचित"मिति मनुः। अप्रार्थिते त्रि०।

**अयि** अव्य० इण-इन्। प्रश्ने, अनुनये, संबोधने, अनुरागे च

**अयुक्छद** पु० अयुजः सप्तसप्त छदा अस्य। वृत्तौ संख्याया वीप्सार्थत्वम् (छातिम) इतिख्याते सप्तपर्णवृक्षे।

**अयुक्त** त्रि० न+युज-क्त। विषयासक्ततया कर्त्तव्येष्वनवहिते, अनुचिते, आपद्गते च।

**अयुग्म** न० न युग्मात्मकम्। विजोड़ इति ख्याते विषमे।

**अयुग्मच्छद** पु०अयुग्मानि सप्त सप्त छदा अस्य। सप्तपर्णवृक्षे तस्य हि प्रत्येकपत्रये सप्त सप्त पर्णानि विद्यन्ते।

**अयुत** त्रि० यु-क्त न०त०। असंयुक्ते। दशसहस्रसंख्यायां न०।

**अये** अव्य० इण्-एच्। क्रोधे, विषादे, संभ्रमे, स्मृतौ, संबुद्धौ च

**अयोग** पु० युज-घञ् न०त०। योगाभावे, कुयोगे, वियोगे च। न०ब०। विधुरे, कूटे, कठिनोद्यमे च।

**अयोगवः** पु० अय इव कठिना गौर्वाणी यस्य नि० अच्। शूद्रात् वैश्यायां जाते प्रतिलोमजे सङ्कीर्णवर्णे।

**अयोगवाह** पु० अक्षरसमाम्नायसूत्रेषु अइउण् इत्यादिषु चतुर्दशसु नास्ति योगः पाठादिरूपःसंबन्धो येषां ते तथापि वाहयन्ति षत्वणत्वादिकार्य्यादिकं निष्पादयन्ति वाहिः अच् कर्म्म०। अनुस्वारविसर्गादिषु, "अनुस्वारो विसर्गश्च+क प्रपौ चैव पराश्रितौ। अयोगवाहाविज्ञेया इति शिक्षासूपदिष्टेषु।

**अयोगुल** पु० गुलः गोलाकारः अयसा निर्म्मितोगुलः। गोलीति ख्याते लौहगुटिकायाम्। [इलात्।

**अयोऽग्र** न० अयोऽग्रे मुखे यस्य। मुषले तस्य मुखे लौहव-

**अयोघन** पु० अयांसि हन्यन्तेऽनेन हन-अप् घनादेशश्च नि०। हातुड़ीति ख्याते लौहमुद्गरे।

**अयोध्या** स्त्री० युध ण्यत् न०त०। सरयूतीरे स्वनामख्यातायां नगर्य्याम्। योधनानर्हे त्रि०।

**अयोनिज** पु० योनौ उपचारात् मातरि न जायते। परमेश्वरे। सीतायां स्त्री०। [मले।

**अयोमल** न० अयसो मलइव। लौहगूथ इति ख्याते लौह-

**अर** न० ऋ-अच्। चक्रस्य नाभिनेम्योर्मध्यस्थे काष्ठे, शीघ्रे च शीघ्रतादिगुणवति त्रि०। स्वार्थे के। शैवाले। पर्पटे प्रापडीति ख्याते पु०।

**अरघट्ट(क)** पु० अरं शीघ्रं घट्टते चाल्यतेऽसौ। महाकूपे, तदुपरिनिबद्धजलोत्तोलनकाष्ठे च। स्वार्थे क। तत्रैव

**अरजस्** त्रि० रञ्ज असुन् नलोपः न०त०। रजोगुणकार्य्यकामक्रोधादिशून्ये। अनार्त्तवायां नग्निकायां स्त्री०।

**अरणि** पु०ऋ-अणि। सूर्य्ये,गणियारीति ख्याते वृक्षे। ऋच्छति प्रापयत्यग्निम्। अग्निमन्थनकाष्ठे द्वि०। स्त्रियां ङीप्।

**अरणिक** पु० अरणये अग्निमन्थनकाष्ठाय साधु क। अग्निमन्थनकाष्ठसाधने अग्निमन्थवृक्षे। [वृक्षे पु०।

**अरण्य** पु० अर्य्यते शेषे वयस्यत्र ऋ-अन्य। वने, कट्फल-

**अरण्यकदली** स्त्री० अरण्यस्यैव कदली। गिरिकदल्यां तस्याः ग्रामादावहुत्पत्तेः। [ख्यातायां वनकार्पास्याम्।

**अरण्यकार्पासी** स्त्री० अरण्यस्यैव कार्पासी। वनकापास इति

**अरण्यकुलत्थिका** स्त्री० अरण्यस्य कुलथिका स्वल्पकुलत्था। वनकुलथीति ख्यातायां कुलत्थिकायाम्।

**अरण्यकुसुम्भ** पु० ६त० वनकुसुम्भे।

**अरण्यचटक** पु० ६त० वनचटके।

**अरण्यजार्द्रक** न० अरण्ये जायते जन+ड कर्म्म०। वन आदा इति ख्याते वनार्द्रके।

**अरण्यजीर** पु० ६त० वनजीरके।

**अरण्यधान्य** न० ६त० नीवारादौ वनधान्ये।

**अरण्यमक्षिका** स्त्री० ६त०। डाँश इति ख्याते दंशे।

**अरण्यमुद्ग** पु० ६त०। वनमुद्गे।

**अरण्यवायस** पु० ६त०। दाँड़काक इति ख्याते द्रोणकाके।

**अरण्यवास्तूक** पु० ६त०। वनवेतो इतिख्याते वनवास्तूकशाके।

**अरण्यसूरण** पु० शा०त०। वनभवे ओल इति ख्याते वनसूरणे

**अरण्यश्वा** पु० अरण्ये श्वेव हिंस्रः। वृके।

**अरण्यषष्ठी** पु० अरण्याय गन्तुं षष्ठी। ज्यैष्ठशुक्लषष्ठ्याम्। "ज्यैष्ठे मासि सिते पक्षे षष्ठी यारण्यसंज्ञिता। व्यजनैक-करास्तस्यामटन्ति विपिने स्त्रियः" इति स्मृतिः।

**अरण्यानी** स्त्री०महदरण्यं निं०ङीप् आनुक् च। महारण्ये।

**अरति** पु० ऋ-अति। क्रोधे। रम-क्तिन् न०त०। अनवस्थित-चित्ततायाम्, रागाभावे, रतिविरहे,उद्वेगे,"स्वाभीष्टवस्त्व-लाभेन चेतसो यानवस्थितिः अरतिःसे ’त्येवं रूपे इष्टवि-योगान्मनसोव्याकुलीभावे च स्त्री०। न०ब०। रागहीने त्रि०

**अरत्नि** पु० ऋ-कत्नि रत्निः बद्धमुष्टिकरः स नास्ति यत्र। विस्तृतकनिष्ठे बद्धमुष्टिहस्ते, तत्परिमाणे, कफोणौ च।

**अरम्** अव्य० अल-अम् वा लस्य रत्वम्। वक्ष्यमाणेऽल-मर्थे शीघ्रतायाञ्च।

**अरर** त्रि० ऋ-अरच्। कवाटे, अपिधाने च।

**अररे** अव्य० अरं शीघ्रं राति रा-के। शीघ्रं मत्युत्तर लाभेच्छया कृते अतिव्यग्रतया संबोधने।

**अरलु(लू)** पु० ऋ-अलु वा णत्वम्। (शोना) श्योनाकवृक्षे।

**अरविन्द**न०अराणि चक्राङ्गाणीव दलानि विन्दते विन्द+श।पद्मे

**अराति** पु० न राति ददाति सुखं न+रा-तिच्। शत्रौ।

**अराल** पु० ऋ-विच् अर् अरमालाति आ+ला-क। सर्ज्जरसे मत्तहस्तिनि। कुटिले त्रि०। वेश्यायां स्त्री०।

**अरि** पु० ऋ-इ। शत्रौ रथाङ्गे, चक्रे, विट्खदिरे, कामक्रो-धादिषु षट्सु, तत्संख्यासाम्यात् षट्संख्यायां, ज्योति-षप्रसिद्धे लग्नावधिके षष्ठस्थाने च। [नकाष्ठे।

**अरित्र** न०ऋच्छत्यनेन ऋ-इत्र। हालि इति ख्याते नौकाचाल

**अरिमर्द्द** पु०अरिं रोगरूपं शत्रुं मृद्नाति मृद-अच्। कासमर्द्दवृक्षे

**अरिमेद** पु० अरेर्विट्खदिरस्येव मेदः सारः स्यन्दोऽस्य। (गुइयावावला) वृक्षभेदे। अरिरिव मेद्यति स्नेहात् अलं स्निह्यति मिद-अच्। विट्खदिरे।

**अरिषड़्टक** न०षट्च अष्टौ च द्व० ततः परिमाणार्थे क षडष्ट कम् अरिस्वामिकं षडष्टकं शाक त०। विवाहे वर्ज्जनीये योगविशेषे, तथाहि दम्पत्योः परस्परराश्यपेक्षया परस्परस्य राशेः षष्ठत्वे अष्टमत्वे वा अशुभं, तयोः राश्योर्मित्र-स्वामिकत्वे पुनर्न दोषः शत्रुस्वामिकत्वेऽतीव दोषः

**अरिषड्वर्ग** पु० षण्णां वर्गः समुदायः षड्वर्गः अरीणां कामक्रोधलोभमोहमदमात्सर्य्यरूपाणामन्तःशत्रूणां षड्वर्गः देवीभागवतवत् विष्णुभागवतवच्च गमकतया समासः। कामादिषु षट्स्वान्तरेषु शत्रुषु।

**अरिष्ट** पु० रिष-क्त। न० त०। निपुणे, निम्बे, दृषभासुरे, अचलभेदे, काके, कङ्कपक्षिणि, रीठा इति ख्याते फेनिल वृक्षे च। अशुभे, मरणचिह्ने तक्रे, पञ्चुर्जले,सूतिकागारे, मद्ये च न०। ५ब०। शुभे। स्वार्थे के। निम्बे, फेनिले वृक्षे च पु०।

**अरिष्टताति** पु०अरिष्ट+तातिल्। शुभार्थंसने। शुभङ्करे त्रि०

**अरिष्टसूदन** पु० अरिष्टमसुरं सूदयति सूद+ल्यु। विष्णौ। अशुभनाशके त्रि०। [सम्पादके रोगभेदे।

**अरुचि** पु० न रुचिर्यत्र। सत्यप्यभिलाषे भोजनायोग्यता

**अरुज** पु० न रुजति रुज-क। सोंदाल इति ख्याते वृक्षे।

**अरुण** पु० ऋ-उनन्। सूर्य्ये, सूर्य्यसारथौ, गुड़े,सन्ध्यारागे, निःशब्दे, दानवभेदे कुष्ठभेदे, पुन्नागवृक्षे च अव्यक्तरागे च। कृष्णमिश्रितरक्ते वर्णे पु० तद्वति त्रि०। कुङ्कुमे, सिन्दूरे च न०। मञ्जिष्ठायां श्यामाकायाम्, अतिविषायां नदीभेदे कदम्बपुष्प्याञ्च स्त्री०।

**अरुणलोचन** पु० अरुणे रक्ते लोचने यस्य। पारावतपक्षिणि

**अरुणसारथि** पु० अरुणः सारथिर्यस्य। सूर्य्ये,।

**अरुणानुज** पु० ६त०। गरुड़े। अरुणावरजत्वात्तस्य।

**अरुणोदक** न० अरुणमुदकं यस्य। सरोवरभेदे।

**अरुणोदय** पु०अरुणस्यार्कस्य तत्किरणस्योदयो यत्र।"चतस्रो घटिकाः प्रातररुणोदय उच्यते" इत्युक्ते सूर्य्योदयात् प्राचि काले

**अरुणोदा** स्त्री० अरुणमुदकं यस्या उदकस्योदः। मन्दराद्रि शिखरात् भूमौ पतन्त्यां नद्याम्।

**अरुणोपल** पु० अरुण उपलः। चुनीति ख्याते पद्मरागे।

**अरुन्तुद** त्रि० अरूंषि मर्म्माणि तुदति तुद-खश् मुम् च।

मर्म्मपीडके, हृदयग्रन्थिरूपमर्म्मस्थानस्पर्शकारके च।

**अरुन्धती** स्त्री॰ अव्युत्पन्नः। वशिष्ठपत्नाम्।

**अरुष्क** पु॰ अरुर्म्मर्म्मस्थानं कायति पीडयति कै-क। स्पर्शमात्रेण व्रणकारके भल्लातकवृक्षे।

**अरुष्कर** पु॰ अरुर्व्रणं करोति अरुस्+कृ+अच्। भल्लातकवृक्षे। व्रणकारिणि त्रि॰।

**अरुस्** पु॰ ऋ-उसि। अर्के, रक्तखदिरे च। मर्म्मणि न॰। व्रणे, क्षते च पु॰ न॰।

**अरूहा** स्त्री॰ न किञ्चिन्मूलमाश्रित्य रोहति आकाश एव रोहति। रुह+क। भूम्यामलक्याम्।

**अरे** अव्य॰ ऋ-ए। रोषाह्वाने, नीचसंबोधने, अपकृतौ, असूयायाञ्च

**अरेऽरे** अव्य॰ अरे+वीप्सायां द्विरुक्तिः। नीचसंबोधनादौ।

**अरोक** त्रि रुच-दीप्तौ घञ् रोकश्छिद्रं दीप्तिश्च। न॰ब॰। छिद्रशून्ये, दीप्तिशून्ये च। [कत् त।

**अर्क** तापे, स्तुतौ च चुरा॰उभ॰सक॰सेट्। अर्कयति ते आर्चि-

**अर्क** पु॰ अर्च्च-कर्म्मणि घञ् कुत्वम्। सूर्य्ये, इन्द्रे, ताम्रे, स्फटिके, विष्णौ, पण्डिते, आकन्द इति ख्याते वृक्षे, आरक इति ख्याते काथविशेषे च।

**अर्ककान्ता** पु॰ अर्कोऽर्ककिरणः कान्तोऽनुकूलो यस्याः कप-क। हुड्हुडिया इति ख्याते वृक्षे। इव॰। सूर्य्यप्रियायाम्

**अर्कचन्दन** पु॰ अर्कस्य प्रियश्चन्दनः शाक॰त॰। रक्तचन्दने।

**अर्कतनय** पु॰ इत॰। सुग्रीवे, कर्णे, यमे, शनौ, वैवस्वतमनौ च। यमुनायां स्त्री॰। द्विवचनान्तः। अश्विनीकुमारयोः पु॰।

**अर्कपत्र** पु॰ अर्कः सूर्य्य इव तीक्ष्णं पत्रं यस्य। अर्कवृक्षे। अर्कपर्णोऽप्यत्र। इत॰। अर्कवृक्षस्य पत्रे न॰।

**अर्कपादप** पु॰ अर्कः अर्कवृक्षइव तीक्ष्णः पादपः। निम्बे।

**अर्कपुष्पी** स्त्री॰ अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्पमस्याः। कुटुम्बिनीवृक्षे। [सूर्य्यप्रियायां, छायायाञ्च।

**अर्कप्रिया** स्त्री॰ अर्कं प्रीणाति प्री-क॰। जवायाम्। इत॰।

**अर्कबन्धु** पु॰ अर्कस्य बन्धुरिव। गौतमे सूर्य्यवंश्ये बौद्धे।

**अर्कभक्ता** स्त्री॰ अर्कस्य भक्ता तत्किरणसंपर्के एव तस्याः सौन्दर्य्यम् हुड़हुड़िया इति ख्यातायां लतायाम्।

**अर्कमूला** पु॰ अर्कइव सर्पाणां दुष्प्रसहं मूलं यस्याः। ईश्वरमूल इति ख्यातायां लतायाम्।

**अर्कवल्लभ** पु॰ अर्कस्य वल्लभः समानवर्ण पुष्पत्वात। रक्तपुष्पत्वेम अर्कप्रियपुष्पे बन्धूकवृक्षे।

**अर्कव्रत** पु॰ अर्कस्याराधनार्थं व्रतम्। माघशुक्लसप्तम्यादौ कर्त्तव्ये अर्काराधनार्थे व्रते। अर्कस्येव व्रतं नियमः "सहस्रगुणमुत्स्रष्टुमादत्ते हि रसान् रवि"रित्युक्ते र्यथा रविणा लोकवृद्ध्यर्थं रसस्य ग्रहणमेवं प्रजापालनार्थमेव राज्ञा प्रजाभ्यो यत् करस्य ग्रहणं तादृशे "अष्टौ मासान् यथादित्यस्तोयं गृह्णोति रश्मिभिः। तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तदिति" मनूक्ते व्रते च।

**अर्काश्मन्** पु॰ अर्कस्य अनुगतः, अश्मा। सूर्य्यकान्तमणौ, स हि सूर्य्यरश्मिसंपर्कादुज्ज्वलति ततस्तस्यार्कसम्बन्धित्वम्।

**अर्कोपल** पु॰ अर्कस्यानुगत उपलः। सूर्य्यकान्तमणौ।

**अर्गल** स्त्री॰ न॰ अर्ज्ज-कलट् कुत्वम्। कपाटमध्यस्थे रोधके काष्ठादिदण्डे, सप्तशतीस्तोत्रस्यादौ पाठ्ये स्तोत्रविशेषे च "अर्गलं कीलकं चादौ पठित्वा कवचं पठेत्। जपेत् सप्तशतीं पश्चादित्युक्तेः। कल्लोले, कपाटे च न॰। क्षुद्रार्गले स्त्री॰ गौरा॰ ङीष् अर्गली, स्वार्थे के, अर्गलिकाप्यत्रार्थे।

**अर्घ** मूल्ये भ्वादि॰ पर॰ सक॰ सेट्। अर्घति आर्घीत्।

**अर्घ** पु॰ अर्घ-घञ्। क्रेयवस्तुनो ग्रहणार्थं तुल्यरूपे देये रजतादिद्रव्यरूपे मूल्ये। सामगैरयं सयकारः क्लीवलिङ्गश्च प्रयोक्तव्यः। अर्ह-करणे घञ् न्यङ्क्वादित्वात् कुत्वम्। पूजोपचारे दूर्व्वाक्षतादौ।

**अर्घ्य** अर्घ+देयार्थे यत्। अर्घार्थं दीयमाने जलादौ। अर्घदान योग्ये पञ्चे त्रि॰। [आर्च्चिष्ट।

**अर्च** पूजायाम् उभ॰भ्वादि॰ सक॰सेट्। अर्चति ते आर्चीत्

**अर्च** पूजायां चुरा॰ उभ॰सक॰ सेट्। अर्चयति ते आर्चिचत् त

**अर्च्चा** स्त्री॰अर्च्च-आधारे अङ्। प्रतिमायाम्। भावेऽङि, पूजायाम्

**अर्च्चि** स्त्री॰ अर्च्च-इन्। वह्न्यादिशिखायम्। [त्रि॰।

**अर्च्चिष्मत्** पु॰अर्च्चिर्विद्यतेऽस्य मतुप्। सूर्य्ये, वह्नौ च। दीप्ति

**अर्च्चिस्** न॰पु॰ अर्च्च-इसि। वह्न्यादेः शिखाया, मयूखे च।

**अर्ज** अर्ज्जने भ्वादि॰ पर॰सक॰सेट्। अर्ज्जति, आर्जीत्।

**अर्ज्ज** संस्कारे चुरा॰उभ॰सक॰सेट्। अर्ज्जयति ते आर्जिजत् त।

**अर्ज्जक** पु॰अर्ज्जयति रज्जुम् अर्ज्ज-ण्वुल्। बाबुइ इति ख्याते वृक्षे, तत्त्वक्तन्तुना हि रज्जुर्निर्म्मीयते। अर्ज्जनकर्त्तरि त्रि॰

**अर्ज्जन** न॰ अर्ज्ज-ल्युट्। स्वामित्वसम्पादके व्यापारभेदे सम्पादने च।

**अर्ज्जुन** पु॰ अर्ज्ज-उनन्। स्वनामख्याते वृक्षे, मध्यमपाण्डवे, हैहयाधिपे कार्त्तवीर्य्ये, करवीरे, मयूरे, धवले च। शुभ्रतागुणवति त्रि॰। आर्जुनि इति ख्याते नेत्ररोगे न॰।

**अर्ज्जुनी** स्त्री॰ गौरा॰ ङीष्। उषायां, बाहुदायां नद्यां, स्त्रियां गवि, कुट्टन्याञ्च।

**अर्ज्जुनोपम** पु॰ अर्ज्जुनः स्वनामख्यातः वृक्ष उपमा यस्य।

सेगुन इति ख्याते शाकद्रुमे, महापलाशवृक्षे च ।

**अर्ण** पु० ऋ-न । अकारादौ वर्णे ।

**अर्णव** पु० अर्णांसि सन्त्यस्मिन् अर्णस्+व सलोपः । समुद्रे ।

**अर्णवोद्भव** पु० उद्भवत्यस्मात् उद्+भू-अपादाने अप् ६त० । अग्निजारवृक्षे । चन्द्रे च । अमृते न० । स्त्रियां स्त्री० ।

**अर्णस्** न० ऋच्छति ऋ-असुन् उदके नुट् चेति, नुट् । जले ।

**अ(आ)र्त्तगल** पु० आर्त्तमिव गलति गल-अच् पृषो० वा ह्रस्वः । नीलझिण्टिकायाम् । ह्रस्वाभावे आर्त्तगलश्च ।

**अर्त्तन** न० ऋत-ल्युट् पक्षे इयङभावः । निन्दायाम् ।

**अर्त्ति** स्त्री० अर्द्द-क्तिन् । पीडायाम् । करणे क्तिन् । धनुष्कोट्याम् ।

**अर्थ** याचने अद० चु० आत्म० द्विक० सेट् । अर्थयते आर्त्तथत मतान्तरे अर्थापयते आर्त्तथापत ।

**अर्थ** पु० अर्थ-भावादौ घञ् । विषये, अभिधेये, धने, वस्तुनि, प्रयोजने, निवृत्तौ, हेतौ, प्रकारे, अभिलाषे, उद्देश्ये च ।

**अर्थदूषण** न० अर्थस्य अपहरणादिना दूषणम् ६त० । धनापहरणे, व्यसनस्थाने क्रीडादौ धनव्यये च ।

**अर्थना** स्त्री० अर्थ-युच् । भिक्षायाम् ।

**अर्थपति** पु० अर्थानां पतिः ६त० । नृपे, कुबेरे च ।

**अर्थप्रयोग** पु० अर्थानां प्रयोगः ६त० । वृद्ध्याद्यर्थमधमर्णायार्थदानादौ, वृद्धिलाभार्थं धनप्रयोगे च ।

**अर्थवत्** त्रि० अर्थः सन्निहितोऽस्य मतुप् वत्वम् । सन्निहितधने धनिनि । असन्निहितधने तु न मतुप् किन्तु इनिस्तेन तत्र अर्थीत्येव । प्रयोजनवति, अभिधेयवति च ।

**अर्थवाद** पु० अर्थस्य लक्षणया स्तुत्यर्थस्य, निन्द्यार्थस्य वा वादः वद-करणे घञ् । प्रशंसनीयगुणवाचके, निन्दनीयदोषवाचके च शब्दविशेषे । भावे घञि । तत्कथने ।

**अर्थव्ययज्ञ** त्रि० अर्थस्य धनस्य व्ययं तत्प्रकारं जानाति ज्ञा-क । किं धनं, कथं, कुत्र, कियत्, कस्मै, वा व्ययितव्यमिति विवेचाभिज्ञे ।

**अर्थशास्त्र** न० अर्थस्य भूमिधनादेः प्रापकं शास्त्रं शाक०त० । नीतिशास्त्रे, अभिचारादिकर्म्मप्रतिपादके शास्त्रे च ।

**अर्थागम** पु० अर्थस्य आगमः आ+गम-घञ् अवृद्धिः । आये ।

**अर्थान्तर** न० अन्योऽर्थः अर्थान्तरं मयूर० स० । अन्यार्थे, न्यायमते उद्देश्यसिद्ध्यर्थं प्रयुक्ते शब्दसामर्थ्यादनुद्देश्यसिद्धप्रकृते वाक्ये । तस्य प्रतिवादिनोद्भावने वादिनिग्रहः ।

**अर्थान्तरन्यास** पु० प्रकृतार्थसिद्धये अन्यार्थस्य न्यासः । अलङ्कारप्रसिद्धे अर्थालङ्कारभेदे सा०द०प० ।

**अर्थापत्ति** स्त्री० अर्थेन अनुपपद्यमानेनापादकेनापाद्यस्यापत्तिः कल्पनम् आ+पद-क्तिन् । जीवतश्चैत्रस्य गृहासत्त्वज्ञानेन बहिःसत्त्वकल्पनादौ, मीमांसकादिमते अनुमानातिरिक्तायां आपादकस्यानुपपत्तिज्ञानेनापाद्यस्य कल्पनायाम्, न्यायमते व्यतिरेकव्याप्तिज्ञानजन्यायामनुमितौ, अर्थालङ्कारभेदे च सा०द०प० ।

**अर्थिक** पु० अर्थयते इत्यर्थी याचकः कुत्सितार्थे के । निद्रागतनृपादेर्जागरणार्थं नियुक्ते स्तुतिपाठकादौ ।

**अर्थिन्** त्रि० अर्थ+इनि । याचके, सेवके, व्यवहारे-वादिनि, असन्निहितधने धनस्वामिनि च ।

**अर्थ्य** त्रि० अर्थे साधु यत् । न्याय्ये । अर्थ-कर्मणि यत् । प्रार्थनीये । शिलाजतुनि न० ।

**अर्द्द** वधे भ्वादि०उभ०सक० सेट् । अर्द्दति ते आर्द्दीत् आर्द्दिष्ट ।

**अर्द्द** याचने, गतौ, पीडायां च, भ्वादि०पर०सक० सेट् । अर्द्दति आर्द्दीत् । याचने शरद्घनं नार्द्दति चातकोऽपीति रघुः ।

**अर्द्द** वधे चुरा० उभय० सक० सेट् । अर्द्दयति ते आर्द्दिदत् त ।

**अर्द्दना** स्त्री० अर्द्द-भावे युच् । भिक्षायां गतौ पीडायाञ्च ।

**अर्द्दित** त्रि० अर्द्द-क्त । पीडिते, गते, याचिते च । वातरोगे न० ।

**अर्द्ध** पु० ऋध-घञ् । खण्डे । तुल्यांशे न० । खण्डिते त्रि० ।

**अर्द्धगङ्गा** स्त्री० अर्द्धं गङ्गायाः एकदे०त० । स्नानादौ गङ्गास्नानादेरर्द्धफलदायिन्यां कावेरीनद्याम् ।

**अर्द्धचन्द्र** पु० अर्द्धं चन्द्रस्य एक०त० । चन्द्रस्यार्द्धे, तदाकारे-नखक्षते, गलहस्ते, बाणभेदे, स्त्रीणां तिलकभेदे च । तेओडीति ख्यातायां त्रिवृति स्त्री० । स्वार्थे के ह्रस्वे अतइत्त्वे । अर्द्धचन्द्रिका कर्णस्फोटलतायां चित्रपर्ण्याञ्च ।

**अर्द्धचोलक** न० अर्द्धं चोलस्य न०त० संज्ञायां कन् । काञ्चुलीति ख्याते कूर्पासकवस्त्रे ।

**अर्द्धतिक्त** पु० अर्द्धं तिक्तं यस्य । नेपालनिम्बे ।

**अर्द्धनारीश्वर** पु० अर्द्धाङ्गे या नारी तस्या ईश्वरः । हरगौरीरूपे शिवे ।

**अर्द्धपारावत** पु० अर्द्धेन अङ्गेन पारावतइव । चित्रकण्ठकपोते तित्तिरीति ख्याते पक्षिणि ।

**अर्द्धपुलायित** न० "शताद्धर्द्धिक्रमादूर्द्ध्वं मण्डलायितवल्गितैः । उन्मुखस्याश्वमुख्यस्य गतिरर्द्धपुलायितमिति" परिभाषिते अश्वगतिभेदे ।

**अर्द्धभ्रमक** पु० अर्द्धे श्लोकार्द्धे गतागताभ्यामेकरूपतया भ्रमो [यत्र । काव्यबन्धभेदे शब्दालङ्कारे

**अर्द्धमात्रा** स्त्री० अर्द्धं मात्रायाः बिन्दुयुचन्द्राकारव्यञ्ज्यायां ब्रह्मरूपायाम् वाचि । अर्द्धा मात्रा उच्चारणकालो येषाम् । हलवर्णेषु व्यञ्जनं चार्द्धमात्रकमित्युक्तेः ।

**अर्द्धयाम** पु० अर्द्धं यामस्य । अष्टधा विभक्तस्य दिनस्य रात्रेर्वा अष्टमे भागे यत्र वारवेलाकालवेलाव्यवहारः ।

**अर्द्धरथ** पु० अर्द्धं रथस्य रथनामकयोधविशेषस्य । निकृष्टयोधे

**अर्द्धरात्र** पु० अर्द्धं रात्रेः । द्वितीयप्रहरशेषक्षणे निशीथे ।

**अर्द्धवीक्षण** न० अर्द्धमसंपूर्णं वीक्षणम् वि+ईक्ष-ल्युट् । कटाक्षदर्शने । [इति ख्याते मत्स्यभेदे ।

**अर्द्धशफर** पु० अर्द्धः प्रक्षतशफराद्धीनः शफरः । दाड़का

**अर्द्धासन** न० अर्द्धमासनं यत्र । स्नेहव्यञ्जके सम्मानभेदे । अर्द्धमसनं क्षेपो यत्र । निन्दायाम् ।

**अर्द्धोदय** पु० माघमासीयामातिथिनक्षत्रवारविशेषयुक्ते "माघे मासि सिते पक्षे अमा स्यादर्कसंयुता । नक्षत्रे श्रवणे देवि! व्यतीपातो यदा भवेत् । अर्द्धोदयः स विज्ञेय" इत्युक्ते योगे ।

**अर्द्धोरुक** न० अर्द्धमूरोः अर्द्धोरु तत्र कायते काश-ड । ऊर्वोरधरपर्यन्ताङ्गाच्छादने वस्त्रे, उत्तमस्त्रीणामर्द्धोरु पर्यन्ते चोलकाकारे परिधेयवस्त्रे च ।

**अर्पण** न० ऋ-णिच्-पुक् ल्युट् । निक्षेपे,स्वत्वत्यागे च । करणे ल्युटि । मन्त्रादौ । जुहूप्रभृतौ स्त्री० । संप्रदाने ल्युटि । देवादिषु । अधिकरणे ल्युटि । त्यागाधिकरणे वह्न्यादौ । कर्म्मणि ल्युटि । हविरादौ त्याज्यद्रव्ये ।

**अर्पिस** पु० ऋ-णिच् पुक् च इसन् । हृदये,अग्रमांसे च ।

**अर्ब** (र्व) हिंसने, भ्वादि० पर०सक० सेट् । अर्बति आर्बीत् ।

**अर्बु(र्बु)द** न० अर्ब (र्व) क्विप् तस्मै उदेति अर्ब् (र्व्)+उद्+इण्-ड । आब् इति ख्याते मांसपिण्डाकारे रोगभेदे, दशकोटिसंख्यायां तत्संख्यातेषु च । पर्वतभेदे पु० ।

**अर्भ** पु० ऋ-भ । बालके । [च ।

**अर्भक** पु० अर्भएव स्वार्थे क । बालके, मूर्खे,कृशे,अल्पे,सदृशे

**अर्य्य** त्रि० ऋ-यत् । स्वामिनि । वैश्ये पु० । स्त्रियां टाप् । अर्य्या वैश्यजातिस्त्रियां स्वामिन्याञ्च । वैश्यपत्न्यान्तु ङीप् । अर्य्यी । वैश्यजातीयायां स्त्रियाम् आनुक् ङीप् च । अर्य्याणीत्यपि ।

**अर्य्यमन्** पु० अर्य्यं श्रेष्ठं मिमीते मा-कनिन् । सूर्य्ये, तद्देवताके उत्तरफल्गुनीनक्षत्रे, अर्कवृक्षे, पितॄणां राजनि च ।

**अर्व्वन्** पु० ऋ-वनिप् । घोटके, इन्द्रे, गोकर्णपरिमाणे च । स्त्रियामर्व्वती वडवायां कुट्टिन्यामपि ।

**अर्व्वाच्** अव्य० अवरे काले देशे वा अञ्चति अनुच-क्विन् । पृषो० अर्व्वादेशः । पश्चात्काले मध्यगते । विपर्य्यस्ते च अर्व्वाच्+असि तस्य लुक् । अवरकालादौ मध्ये च अव्य० तद्भवे अर्व्वाक्तन इत्यादि ।

**अर्व्वाचीन** त्रि० अर्व्वाक्काले पश्चात्काले भवः ख । पश्चाद्भवे

**अर्शस्** न० ऋ-असुन् शुक् च । वलिकाकारे गुह्यस्थरोगभेदे वा पृषो० सलोपे । अर्शमप्यत्र ।

**अर्शस** त्रि० अर्शस्+अस्त्यर्थेऽच् । वलिकाकाररुग्गुह्यव्याधियुक्ते

**अर्शोघ्न** पु० अर्शो हन्ति हन-ट । (ओल) सूरणे,भल्लातके च ।

**अर्शोघ्नी** स्त्री० अर्शस् हन-ठ टित्त्वात् ङीप् उप०स० । ताल मूल्याम् भल्लातक्याञ्च । [भल्लातके ।

**अर्शोऽहित** पु० अर्शसोऽहितः सेवनेन तन्नाशकत्वात् । ६त० ।

**अर्ह** पूजने, योग्यत्वे च भ्वादि०पर०सक० सेट् । अर्हति, आर्हीत् आनर्ह । [शक्ते च । योग्ये त्रि० ।

**अर्ह** पु० अर्ह-कर्म्मणि घञ् । पूजाप्रशंसादिभिराराध्ये ईश्वरे,

**अर्हण** पु० अर्ह-ल्यु । बुद्धभेदे । भावे ल्युट् । पूजने न० । करणे ल्युटि । पूजोपकरणे पुष्पादौ, उप,यने च न० ।

**अर्हणा** स्त्री० अर्ह-युच् । पूजायां, योग्यतायाञ्च ।

**अर्हत्** पु० अर्ह-कर्म्मणि शतृ । बुद्धभेदे । पूज्ये त्रि० ।

**अर्हन्त** पु० अर्ह-झच् । बुद्धभेदे ।

**अर्हा** स्त्री० अर्ह-अङ् । पूजायाम् ।

**अल** भूषणे, वारणे, पर्य्याप्तौ च भ्वा० उभ०सक० पर्य्याप्तौ अक० सेट् । अलति ते आलीत् आलिष्ट ।

**अलक** पु० अलति भूषयति मुखम् अल-वुन् । ललाटस्थे छिन्नाग्रे कुटिलकेशे, अङ्गलिप्तकुङ्कुमे च । क्षिपकादित्वात् कापि नेत्त्वम् । कुवेरपूर्य्याम् अष्टमेवर्षावधिदशमेवर्षपर्य्यन्तवयस्कायां कन्यायाञ्च स्त्री० ।

**अलकनन्दा** स्त्री० अलति पर्य्याप्नोति वुन् अलका नन्दयतीति अच् नन्दा कर्म्म० । गङ्गायाम् । अलकै र्नन्दति अच् । कन्यायाम् । सा हि अलकैस्तुष्यति [(पियासाल) पीतसालवृक्षे ।

**अलकप्रिय** पु० अलकान् प्रीणाति चिक्कणीकरोति प्री-क ।

**अलकाधिप** पु० अलकाया अधिपः ६त० । कुवेरे ।

**अलक्त** पु० न रक्तोऽस्मात् ५ब० रस्य लत्वम् । लाक्षारसे, स्वार्थे के । अलक्तकोऽप्यत्र तद्वेतौ लाक्षायाञ्च ।

**अलक्षण** त्रि० नास्ति लक्षणमनुमापकं सुचिह्नं वा यस्य । अननुमेये,सुचिह्नशून्ये च । न०त० । दुर्लक्षणे न०ब० । तद्वति त्रि०

**अलक्षित** त्रि० लक्ष-क्त न०त० । अज्ञाते,लक्षणेनाननुमिते च ।

**अलक्ष्मी** स्त्री० विरोधार्थे नञा त० । लक्ष्मीविरुद्धायां निर्ऋतौ आलक्ष्मीति ख्यातायाम् ।

**अलगर्द** पु० लगति स्पृशति क्विप् लग् अर्दयति अर्द-अच् अल् स्पृशन् सन् अर्दः न भवति । विषशून्ये जलव्याले पृषो०भत्वम् रुधीति वा रुध-अच् वा । अलगर्द्धोऽप्यत्र ।

**अलङ्करण** न० अलम्-कृ-भावे ल्युट् । भूषायाम् । करणे ल्युटि । वलयादौ भूषणे ।

**अलङ्करिष्णु** त्रि०अलम् कृ-इष्णुच् । भूषके मण्डनकरणशीले

**अलङ्कर्मीण** त्रि० अलं समर्थः कर्म्मणे ख । कर्म्मक्षमे ।

**अलङ्कार** पु० अलम्+कृ-घञ् । भूषायाम् । करणे घञि हारादौ भूषणे, साहित्यविषयदोषगुणप्रतिपादके ग्रन्थे, शब्दभूषणे–अनुप्रासादौ, शब्दार्थभूषणे–उपमादौ च ।

**अलङ्क्रिया** स्त्री० अलम्+कृ-श । भूषायाम् ।

**अलम्** अव्य० अल+अम । भूषणे, पर्य्याप्तौ, निवारणे, निषेधे निरर्थे, शक्तौ, अत्यर्थे, अवधारणे च । [योधनसमर्थे ।

**अलम्पुरुषीण** त्रि० अलं समर्थः प्रतिपुरुषाय । प्रतिमल्लादि-

**अलम्बुष** पु० अलं पुष्णाति पुष-क पृषो० पस्य बत्वम् । प्रहस्ते, दमने, राक्षसभेदे च । लज्जालुवृक्षे स्वर्गवेश्यायाञ्च स्त्री० ।

**अलवाल** न०लवमालाति ला-क न०त० । वृक्षसेकार्थं वृक्षमूले मृदादिकृते जलाधारे वेष्टने स्वार्थेऽणि । आलवालमपि ।

**अलस** त्रि० न लसति व्याप्रियते लस अच् । अवश्यकर्त्तव्येषु शरीरायासवर्म्मानभिनीय कृताप्रवासे, क्रियामन्दे च । पाद-रोगभेदे, वृक्षभेदे च पु० । हंसपदीलतायां स्त्री० ।

**अलसक** पु० अलसं करोति कृ-ड । उदरामयरोगभेदे ।

**अलात** पु० न० । ला-क्त न०त० । कोयाला इति ख्याते आङ्गार इति ख्याते च अर्द्धदग्धकाष्ठे ।

**अलाबु** स्त्री० न लम्बते न+लबि-उ णित् नलोपश्च वृद्धिः । (लाउ), तुम्ब्याम् । वा ऊङि । अलाबूरपि ।

**अलि** पु० अलति दंशे, कूजिते, शब्दिते, वा समर्थो भवति अल-इन् । भ्रमरे, वृश्चिके, काके, कोकिले, सुरायाञ्च ।

**अलिक** न० अल्यते भूष्यते अल-कर्म्मणि इकन् । ललाटे ।

**अलिङ्ग** त्रि० नास्ति लिङ्गमनुमापकचिह्नादि यस्य । कार्य्यादि रूपलिङ्गरहिते अननुमेये ।

**अलिञ्जर** पु० अलनमलिः अल-इन् तं जरयति जृ-अच् पृषो० मुम् । (जाला) इति ख्याते मृण्मये जलाधारे पात्रभेदे भणिके । [वृश्चिके, भ्रमरे च ।

**अलिन** पु०अलः पर्य्याप्तिः सर्व्वत्र गतिर्विद्यतेऽस्य अल+इनि ।

**अलिन्द** पु० अल्यते भूष्यते अल-कर्म्मणि किन्दच् । द्वारप्रको-ष्ठाद्वहिर्द्वारवर्त्तिचतुष्के, द्वारबहिर्भागे च ।

**अलिपत्रिका** स्त्री०अलिर्वृश्चिक इव पत्रमस्याः व० कपि अत इत्वम् । वृश्चिकपत्राख्यलतायाम् ; अलिपर्ण्यपत्र ।

**अलिप्रिय** न० अलीनां प्रियमधिकमादकत्वात् । रक्तोत्-पले । पाटलावृक्षे स्त्री० । अलिवल्लभाप्यत्र ।

**अलिमोदा** स्त्री० अलीन् मोदयति मुद-णिच्-अच् । (गणि-आरी), गणिकारीवृक्षे ।

**अलीक** न० अल-ईकन् । अप्रिये, ललाटे, स्वर्गे च । अलति गच्छत्यधोऽनेन । असत्ये । मिथ्याकथने हि नरकपातः ।

**अलौकिक** त्रि० लोके विदितः ठक् न०त० । लौकिकप्रत्यक्षा-गम्ये लोकातीते, चमत्कारिणि च ।

**अल्प** त्रि० अल-प । क्षुद्रे, ईषदर्थे, सूक्ष्मे, मर्त्ये च । स्वार्थे के । अल्पकमप्यत्र । यवासे पु० । [त्रि० ।

**अल्पगन्ध** न० अल्पो गन्धोऽस्य । रक्तकैरवे । स्वल्पगन्धयुक्ते ।

**अल्पतनु** त्रि० अल्पा क्षुद्रपरिमाणा तनुः शरीरं यस्य । खर्व्वे, दुर्बले, स्वल्पास्थियुक्ते च ।

**अल्पप्रमाणक** पु० अल्पं प्रमाणमस्य ब० कप् । (तरमुज) (खरमुज) वा इति ख्याते वृक्षे । अल्पप्रमाणयुक्ते त्रि० ।

**अल्पमारिष** पु० अल्पः मारिषः शाकः कर्म्म० । (नटिया) इति ख्याते शाके । [प्रमाणे सरसि ।

**अल्पसरस्** न० अल्पं सरः कर्म्म० । डोवा इति ख्याते अल्प

**अल्पायुस्** पु० अल्पमायुः जीवनकालो यस्य । छागे पशुषु तस्यैवाल्पायुष्कत्वात् । अल्पायुष्कमात्रे त्रि० ।

**अल्पिका** स्त्री० अल्पैव स्वार्थे के अत इत्वम् । मुद्गपर्ण्याम् ।

**अल्पिष्ठ** त्रि० अतिशयेनाल्पः अल्प+इष्ठ । क्षुद्रतरे ।

**अल्पीयस्** त्रि० अल्प+ईयस । अत्यन्ताल्पे । स्त्रियां ङीप् ।

**अल्ला** स्त्री० अल्यते इत्यल् क्विप् अले भूषायै स्ल्लाति बालम् अल्+ला क । मातरि । अलतीति अल् पर्य्याप्तः लाति सर्व्वानत्ति गृह्णाति जानाति वा । सर्व्वशायां सर्व्वभक्षिकायां परमात्मदेवतायाम् सा च अथर्व्ववेदे अल्ला-ल्लेत्यादिरुक्तौ प्रसिद्धा ।

**अव** रक्षणे, गतौ, स्पृहायां, तृप्तौ, शोभायां, श्रवणे, व्याप्तौ, आलिङ्गने, प्रार्थने, प्रवेशे, सत्तायां, वृद्धौ, ग्रहणे, बधे, सामर्थ्ये, अवगमे, करणे, इच्छोत्पादने च यथायथं सक० अक० च भ्वादि० सेट् पर० । अवति आवीत् ।

**अव** अव्य० अव-अच् । निश्चये, व्याप्तौ अनादरे, ईषदर्थे, आलम्बने, शुद्धौ, परिभवे, नियोगे, निम्नतायां च ।

**अवकर** पु० अवकीर्य्यते संमार्ज्जन्यादिभिः अव-कॄ-अप् । सम्मार्ज्जन्यादिभिः क्षिप्ते धूल्यादौ ।

**अवकाश** पु० अव+काश-घञ् । अवस्थितियोग्यतासम्पादके काले, देशे च । तत्र कालिकोऽवकाशः क्रियान्तरस्थितियो ग्यतासम्पादकः अवसर इत्यप्युच्यते, "कृतावकाश रुचि संक्रम"मिति भट्टिः । द्रव्यान्तरस्थितियोग्यतासम्पादको

देशिकः स चावकाश इत्येव "अवकाशं किलोदन्वानिति" रघुः

**अवकीर्ण** त्रि० अव-कॄ कर्म्मणि क्त । चूर्णिते, ध्वस्ते च ।

**अवकीर्णिन्** त्रि० अवकीर्णं ध्वस्तं व्रतमस्यास्य इनि । क्षतव्रते ।

**अवकृष्ट** त्रि०अव+कृष-क्त । दूरीकृते,अपसारिते,बहिष्कारिते च

**अवकेशिन्** त्रि० अवच्युतं कं सुखं यस्मात् ५ ब०अवकं शून्यतां फलशून्यतामीशितुं शीलमस्य अवक+ईश-णिनि । अफले वृक्षे । अवसन्नाः केशा विद्यन्ते अस्य इनि । अल्पकेशयुक्ते ।

**अवक्रय** पु० अवक्रीयते प्रतिरूपदानेन स्वाधीनं क्रियतेऽनेन अव+क्री-अच् । ग्राह्यस्य प्रतिरूपत्वेन देये मूल्ये, भाटके च

**अवक्षुत** त्रि० अव-क्षु-क्त । उपरि कृतक्षुते । [भर्त्सने च न० ।

**अवक्षेप** पु०अव+क्षिप-घञ् । निन्दायाम् । ल्युटि अवक्षेपणमप्यत्र

**अवगणित** त्रि० अव+गण-क्त । तिरस्कृते, अवज्ञाते च ।

**अवगण्ड** पु० अव+गम-ड डकारस्य नेत्त्वम् । गण्डस्थव्रणे ।

**अवगत** त्रि० अव+गम-क्त । निम्नगते, ज्ञाते च ।

**अवगाढ** त्रि० अव+गाह-क्त । निविडे,अन्तःप्रविष्टे,निमग्ने च

**अवगाह** पु०अव+गाह-घञ् । स्नाने,अन्तःप्रवेशे च । आधारे घञ् । स्नानस्थाने । वा अल्लोपे वगाहोऽप्यत्र । ल्युटि अवगाहनमप्यत्र । [च ।

**अवगीत** त्रि० अव+गै-क्त । निर्व्वादे जनापवादे,दुष्टे, गर्हिते

**अवगुण** पु० अव+गुण-क । दोषे ।

**अवगुण्ठन** न० अव+गुण्ठ-ल्युट् । योषितां शिरःप्रावरण क्रियायाम् । करणे ल्युटि । मुखाच्छादने वस्त्रे ।

**अवगुण्ठिका** स्त्री० अव+गुण्ठ-ण्वुल् स्त्रीत्वात् टापि अत-इत्त्वम् । स्त्रीणां मुखावरणयायाम्, जवनिकायाञ्च ।

**अवगुण्ठित** त्रि० अव+गुण्ठ-क्त । कृतावगुण्ठने, चूर्णिते च

**अवगृह्य** न०अव+ग्रह-क्यप् । व्याकरणे सिद्धे प्रगृह्यसंज्ञके पदे

**अवगोरण** न०अव+गुर-उद्यमे ल्युट् । बधायास्त्राद्युद्यमे ।

**अवग्र(ग्रा)ह** पु० अव+ग्रह-घ,घञ् वा । वृष्टिजलप्रतिबन्धे ।

**अवग्रहण** न० अव+ग्रह-ल्युट् । प्रतिरोधे ।

**अवघट्ट** पु०अव+घट्ट-अच् । वल्मे, (जांता) घरट्टे च । [च ।

**अवघात** पु० अव+हन-घञ् । अवहनने,तण्डुलादेर्वितुषीकरणे

**अवचय** पु०अव+चि-अच् । पुष्पफलादादाने । [वस्त्रे ।

**अवचूड़(ल)** पु०अवनता चूडाग्रं यस्य वा डोलः । ध्वजाधोवद्धे

**अवचूर्णित** त्रि० अव+चूर्ण-क्त । पिष्टे,क्षिप्ते, चूर्णीकृते च ।

**अवचूलक** अवनता चूडा यस्य डस्य लत्वम् संज्ञायां कन् । चामरे । [अवच्छेदकतानिरूपके च ।

**अवच्छिन्न** त्रि० अव+छिद-क्त । सङ्कुचिते, विशिष्टे,व्यायमते

**अवच्छुरित** न० अव+छुर-क्त । अट्टहासे । मिश्रिते त्रि० ।

**अवच्छेद** पु० अव+छिद-घञ् । विरामे,परिच्छेदे एकदेशे च ।

**अवच्छेदक** त्रि०अव+छिद-ण्वुल् । एकदेशे,व्यावर्त्तकविशेषणे च

**अवज्ञा** स्त्री० अव+ज्ञा-अङ् । अनादरे ।

**अवट** पु०अव-अटन् । गर्त्ते, कूपे,ऐन्द्रजालिकजीविकावति च ।

**अवटि** स्त्री०अव-अटि । गर्त्ते, कूपे च । वा ङीप् अवटीत्यपि ।

**अवटीट** त्रि० अवनता नासिका प्रा०स० । नतार्थे नासायाः टीटादेशः अर्शआदित्वादच् । (खांदा) नतनासिके जने ।

**अवटु** पु० अव+टीक-डु । गर्त्ते, वृक्षभेदे,कूपे च । ग्रीवापश्चाद्भागे, ग्रीवाया उन्नतभागे च स्त्री० । [गतिभेदे

**अवडीन** न० अव+डी-ल्युट् । अवरोहणरूपे पक्षिणां

**अवतंस** पु०न० अव+तनुस-घञ् । कर्णपूरे, शिरोभूषाभेदे च ।

**अवतमस** न०अवलष्टं हीनं तमः प्रा०स० अच् । अल्पान्धकारे ।

**अवतार** पु० अव+तॄ करणे घञ् । तीर्थे, (पुष्करिण्यादेः सोपानपद्धतौ) । भावे घञ् । अवरोहणे, देवानामंशावेशवशेन प्रादुर्भावे च ।

**अवतारण** न० अव+तॄ-णिच्-ल्युट् । भूतादीनामावेशनेन प्राद्भावने, अवरोपणे, मन्यप्रस्तावने च । अवतारणमप्यत्र ।

**अवतोका** स्त्री० अवपतितं तोकमस्याः । स्रवद्गर्भायां स्त्रियाम्

**अवदंश** पु०अव+दनुस-घञ् । भर्ज्जिते चर्व्वणद्रव्ये, (मद्यपानोत्साहादिकारके चर्व्वणद्रव्ये) । [मनोज्ञे च त्रि० ।

**अवदात** पु० अव-दै-क्त । शुभ्रे, पीते च वर्णे । तद्वति,विशुद्धे

**अवदान** न० अव+दो-ल्युट् । खण्डने, पराक्रमे, अतिक्रमे, शुद्धिकरणे,वीरणमूले च । [ण्वुल् । भेदनकर्त्तरि त्रि० ।

**अवदारक** पु०अवदारयति दृ-णिच्-ण्वुल् । (खोनता) खनित्रे

**अवदारण** न० अव+दृ-णिच्-करणे ल्युट् । खनित्रे ।

**अवदाह** न० अव+दह्यते दह-कर्म्मणि घञ् । वीरणमूले ।

**अवद्य** त्रि० वद-यत् न०त० । अधमे,पापिनि, निन्द्ये, कथनायोग्ये च । [विषयान्तरतो मनोनिवर्त्तने ।

**अवधान** न० अव+धा-ल्युट् । मनोयोगविशेषे, यद्वशात्

**अवधारण** न० अव+धृ-णिच्-ल्युट् । इयत्तापरिच्छेदे, अयमेवेति विषयपरिच्छेदके निश्चये च । [त्रिवे ।

**अवधि** पु० अव+धा कि । सीमायां,काले च । आधारे कि ।

**अवधीर** अवज्ञायाम् अद०चुरा० उभय०सक०सेट् । अवधीरयति ते आववधीरत् त । मतान्तरे अवादिधीरत् त ।

**अवधूत** त्रि० अव+धू-क्त । अभिभूते निवर्त्तिते, चालिते, अनादृते च । "यो विलङ्घ्याश्रमान् वर्णान् आत्मन्येव स्थितः पुमान् । अतिवर्णाश्रमी योगी अवधूतः स उच्यते" इत्युक्तलक्षणे वर्णाश्रमधर्म्मत्यागिनि सन्न्यासिनि पु० ।

**अवध्वंस** पु० अव+ध्वन्स-घञ् । परित्यागे,चूर्णिते,निन्दायाञ्च
**अवन** न० अव-ल्युट् । प्रीणने, रक्षणे, प्रीतौ च ।
**अवनत** त्रि० अव+नम-क्त । अधोभूते, आनते च ।
**अवनति** स्त्री० अव+नम-क्तिन् । औद्धत्याभावे, विनये, अधोनमने च । [वाद्ये न० ।
**अवनद्ध** त्रि० अव+नह-क्त । खचिते, रोपिते च । मृदङ्गादि-
**अवनय** पु० अव+नी-अच् । अधोनयने ।
**अवनाट** त्रि०अवनता नासिका प्रा०स० नतार्थे नासिकाया नाटादेशः अर्श आद्यच् (खांदा) अवनतनासिके जने ।
**अवनि** (नी) स्त्री०अव-अनि । भूमौ । वा ङीप् अवनीत्यपि ।
**अवनेजन** न० अव+निज-ल्युट् । प्रक्षालने, श्राद्धे पिण्डप्रदानार्थमास्तृतकुशस्थानसेचने च ।
**अवन्ति** (न्ती) पु०स्त्री० अव-झि । मालवदेशे ।
**अवन्तिका** स्त्री० अवन्तिषु कायति प्रकाशते । मालवदेशीयराजधान्यामुज्जयिन्याम् । [काञ्जिके ।
**अवन्तिसोम** न० अवन्तिषु अभिषुतं सोममिव शाक०त०।
**अवपात** पु० अव+पत-घञ् । विले, अधःपतने, निपाते च ।
**अवप्लुत** त्रि० अव+प्लु-क्त । सहसाऽवतीर्णे ।
**अवभास** पु० अव+भास-घञ् । साक्षात्कारे, अन्यधर्मस्यान्यस्मिन्नारोपेण भाने च ।
**अवभृथ** पु० अव+भृ-क्थन् । मुख्ययज्ञसमाप्तौ क्रियमाणे यज्ञाङ्गे कर्मणि, यज्ञाङ्गभूते यज्ञान्ते स्नाने च ।
**अवभ्रट** त्रि०अवनता नासिका प्रा०स०नतार्थे नासिकाया भ्रटादेशः अर्शआद्यच् । अवनतनासिके (खांदा) जने ।
**अवम** त्रि० अवत्यस्मादात्मानम् अव-मम् । कदाचारादौ, कुत्सिते, नीचे च । ज्योतिषप्रसिद्धे एकतिथिद्वयान्तवति एकस्मिन् दिनवारे न० । अवमदिनमप्यत्र ।
**अवमत** त्रि० अव+मन-क्त । अनादृते ।
**अवमर्द** पु० अव+मृद-घञ् । पीडने । [ग्रहभेदे च ।
**अवमर्श** पु० अव+मृश-घञ् । आलोचनायाम्, नाटकस्य सन्ध्यं
**अवमानना** त्रि० अव+चुरा०मन-युच् । अपमानकरणे ।
**अवमानित** त्रि० अव+चुरा० मन-क्त । कृतापमाने ।
**अवमोटन** न० अव+मुट्-णिच्-ल्युट् । (मोचड़ान) परिवर्त्तनेनान्यथापादनरूपे परिमोटने ।
**अवयव** पु० अव+यु-अच् । देहादावङ्गे, उपकरणे, न्यायमते प्रतिज्ञाहेतूदाहरणादिषु पञ्चसु वाक्येषु च ।
**अवर** त्रि०अव+रा-क । चरमे,अधमे,कार्य्ये च । पश्चाद्वर्त्तिनि देशे काले पु० तद्वर्त्तिनि त्रि० । हस्तिजङ्घायाः पश्चाद्देशे न०।
**अवरज** पु०अवरस्मिन् काले जातः । कनिष्ठसोदरे भ्रातरि, शूद्रे च । कनिष्ठसोदरभगिन्यां, शूद्रायाञ्च स्त्री० टाप् ।
**अवरति** स्त्री० अव+रम-क्तिन् । विरामे, निवृत्तौ च ।
**अवरवर्ण** पु० कर्म्म० । शूद्रे,
**अवरीण** त्रि० अव+रीङ-क्त । तिरस्कृते ।
**अवरुद्ध** त्रि०अव+रुध-क्त । आच्छादिते,वस्त्रादिना प्रतिरुद्धे च अन्तःपुरवासिन्यां भोग्यायां दास्यां,राजयोषिति च स्त्री० ।
**अवरूढ** त्रि०अव+रुह-क्त । अवतीर्णे, स्वस्थानादुत्थिते ।
**अवरोध** पु०अव+रुध-भावे घञ् । निरोधे । कर्मणि घञ् । राजान्तःपुरस्थायां योषिति, राजदारेषु च । आधारे घञ् । राजान्तःपुरे । ल्युट् । अवरोधनमप्यत्र न० ।
**अवरोधिक** पु० अवरोधे रक्षणादौ नियुक्तः ठन् । राजान्तःपुररक्षणार्थं नियुक्ते वामनादौ ।
**अवरोपित** त्रि० अव+रुह-णिच्-पुक् च क्त । उत्पाटिते ।
**अवरोह** पु० अव+रुह-घञ् । अवतरणे, ऊर्द्धदेशान्निम्नदेशगमने, आरोहे च । पचाद्यच् । तरोर्मूलादग्रपर्य्यन्तमारूढायां गुडूच्यादिलतायां । अपादाने घञि । स्वर्गे, ततो हि भोगावसाने सर्व्वेऽवतरन्ति ।
**अवरोहशाखिन्** पु० अवरोहति छिन्नोऽपि पुनः प्ररोहति अव+रुह-अच् कर्म्म०,अवरोहति अधोगच्छति मूलमस्याः तादृशी शाखा कर्म्म० ततः बाहुल्ये मत्वर्थीय इनिर्वा । वटवृक्षे, तस्य छेदनेऽपि पुनः प्ररोहः च । शाखातोऽपि बहूनि मूलान्यवतरन्ति ।
**अवरोहिका** स्त्री० अव-रोहति अत्यन्तमधोगच्छति रुह-ण्वुल् टाप् कापि अतइत्त्वम् । अश्वगन्धालतायाम् ।
**अवरोहिन्** पु०अव+रुह-णिनि । वटवृक्षे । अवरोहिशाखोऽप्यत्र
**अवर्ण** पु०वर्ण-घञ् विरोधे नञ्त० । प्रशंसाविरोधिनि अपवादे
**अवलक्ष** अव+लक्ष घञ् श्वेतवर्णे । तद्वति, मूर्खे च त्रि० । अर्शआदेरतो लोमे,वलक्षोऽप्यत्रैवार्थे ।
**अवलग्न** पु० अव+लग-क्त नि० इडभावः । (माजा) देहमध्यभागे । संबद्धमात्रे त्रि०।
**अवलम्ब** पु०अव+लबि-आधारे घञ् । आश्रये । करणे घञि । अवलम्बसाधने दण्डादौ । अवलम्बनमप्यत्र ल्युट् ।
**अवलम्बित** त्रि० अव+लबि-क्त । आश्रिते,वस्त्रादिना बद्धे च
**अवलिप्त** त्रि० अव+लिप-क्त । गर्विते, कृतलेपने च ।
**अवलीढ** त्रि० अव+लिह-क्त । भक्षिते, कृतावलेहे च ।
**अवलीला** स्त्री० अवरा लीला । अनायासे, अनादरे च ।
**अवलेप** पु० अव+लिप-घञ् । गर्व्वे,लेपने,दूषणे,सम्बन्धे च ।

**अवलेपन** न० अव+लिप-भावे ल्युट्। विलेपे, म्रक्षणे, सङ्गत्ते च। करणे ल्युटि। चन्दनादौ।

**अवलेह** पु० अव+लिह-घञ्। जिह्वाग्रेण स्वादने। कर्मणि घञि। तथास्वाद्ये औषधादौ च।

**अवलोकन** न०अव+लुक-ल्युट्। दर्शने,अनुसन्धाने च। करणे ल्युट्। आलोके, नेत्रे च। [लतायाम्।

**अवल्गुज** पु० अवल्गोरशोभनाज्जायते जन-ड। सोमराजी

**अववाद** पु०अव+वद-घञ्। निन्दायाम्, विश्वासे,आज्ञायाम्, अवालम्बने च। [परवशे, पराधीने च।

**अवश** त्रि० नास्ति वशमायत्तत्वं यस्य। असाधीने, कामादि-

**अवशिष्ट** त्रि०अव+शिष-क्त। अतिरिक्ते, परिशिष्टे, अधिके च

**अवश्यम्** अव्य०अव+श्यै-डम्। निश्चये, अशक्यनिवारणे च।

**अवश्याय** पु०अव-श्यै-ण। कुज्झटिकायाम्, अभिमाने च।

**अवश्रयण** न० अव+श्री-अच्। चुल्लीतोऽवतार्य स्थापने।

**अवष्टब्ध** त्रि० अव+स्तम्भ-क्त। आसन्ने, आक्रान्ते, अवलम्बिते,प्रतिरुद्धे च।

**अवष्टम्भ** पु० अव+स्तम्भ-घञ्। स्वर्णे,स्तम्भे,प्रारम्भे, रोधने, गर्वे च "रघोरवष्टम्भमयेन पत्रिणे"ति रघुः।

**अवस्** अव्य० अवर+प्रथमायाः पञ्चम्याः सप्तम्या वाऽर्थे असि अवादेशः। वाह्ये पश्चादर्थे च।

**अवसथ** पु० वस-अथन् न०५व०। निलये,ग्रामे च।

**अवसथ्य** पु० अवसथ+स्वार्थे यत्। आवासे, ग्रामे च।

**अवसर** पु० अव+सृ-अच्। प्रस्तावे, जिज्ञासानिवृत्तयेऽवश्य वक्तव्ये, वत्सरे, मन्त्रभेदे, वर्षणे, क्रियास्थितियोग्यतासम्पादककाले कालिकेऽवकाशे च। [कामचारानुज्ञायां च।

**अवसर्ग** पु०अव+सृज-घञ्। अप्रतिबन्धे, यथेष्टं क्रियतामिति

**अवसर्प** पु० अव+सृप-अच्। चरे। [रूपावसन्नतायाञ्च।

**अवसाद** पु० अव+सद-घञ्। नाशे, विषादे, स्वकार्याक्षमत्व

**अवसादन** न० अव+सद-णिच्-ल्युट्। कार्याक्षमत्वापादने, नाशने च। [स्मृतौ च।

**अवसान** न० अव+सो-ल्युट्। विरामे, समाप्तौ, सीमायां,

**अवसाय** पु० अव+सो-घञ्। समाप्तौ, शेषे, निश्चये च।

**अवसित** त्रि० अव+सो-क्त। समाप्ते, ऋद्धे, ज्ञाते, परिपक्वे, निश्चिते, मर्दितधान्ये च। अव+सि-क्त। संबद्धे।

**अवस्कन्द** पु०अव+स्कन्द-आधारे घञ्। जिगीषूणां सैन्यनिवेशस्थाने शिविरे, आक्रमणे च। [तरणे,आक्रमणे च।

**अवस्कन्दन** न० अव+स्कन्द-ल्युट्। सर्वाङ्गावगाहने,अव

**अवस्कर** पु०अव+कॄ-अप् सुट्। विष्ठादिमले। अपादने अपि गुह्यदेशे उपस्थादौ। [अवादेशः। अवरकालादौ।

**अवस्तात्** अव्य० अवरस्मिन् अवरस्मात् अवरमित्यर्थे अस्ताति

**अवस्तार** पु० अव+स्तॄ-घञ्। परदा इति ख्यातायां जवनिकायाम्, आस्तरणे च। [अवस्थाने च।

**अवस्था** स्त्री० अव+स्था-अङ्। कालकृतायां देहादेर्दशायाम्,

**अवस्थान** न० अव+स्था-ल्युट्। स्थितौ। आधारे वञि। आवासे, प्रतिष्ठायाञ्च।

**अवस्यन्दन** न० अव+स्यन्द-ल्युट्। हिंसने।

**अवस्रंसन** न० अव+स्रन्स-ल्युट्। अधःपतने, च्युतौ च।

**अवहार** पु०अव+हृ-कर्त्तरि ण। चौरे,ग्राहनामके, जलजन्तुभेदे च। भावे घञि। युद्धादिविश्रामे। कर्मणि घञि। निमन्त्रितविप्रादिभ्यो देये द्रव्ये। [भावे।

**अवहित्था** स्त्री० न० न बहिस्तिष्ठति स्था-क ष०। कृहत-

**अवहेल** न०स्त्री०। अव+हेल-अङ् घञर्थे क वा। अनादरे।

**अवाक्पुष्पी** स्त्री० अवाक् अधोमुखं पुष्पमस्याः। (सुलफा) इति ख्यातायाम् शतपुष्पिकायाम्।

**अवाक्शिरस्** त्रि० अवाक् शिरोऽस्य व०। अधोमुखे।

**अवाग्र** त्रि० अवनतमग्रमस्य। नम्रमुखे।

**अवाङ्मुख** त्रि० अवाक् मुखमस्य। अधोमुखे।

**अवाच्** त्रि० अवाञ्चति अव+अन्च-क्विप्। अधोमुखगते, अवरे-देशे, काले च। दक्षिणस्यां दिशि स्त्री० ङीप्। नास्ति वाक् यस्य इव० वाक्यरहिते त्रि०। पूर्व्वार्थे औ अवाञ्चौ,अत्र अवाचौ इत्यादिभेदः। कालाद्यर्थे प्रथमादीनां स्थानेऽस्ताति तस्य लुक्। अवरकालादावर्थे अव्य०।

**अवाच्य** न० वच-ण्यत् कुत्वम् न०त०। दुष्टवचने, वचनानर्हे,निन्दनीये च अवाच्+यत्। अवरकालादौ भवे त्रि०।

**अवान्तर** त्रि० अवगतमन्तरं मध्यम् प्रा०स०। प्रधानान्तःपातिनि अङ्गादौ, सामान्यस्य विशेषे च।

**अवार** न० न वारमत्र। नद्यादेर्जलानतिक्रमेण प्राप्ये तीरे।

**अवारपार** पु० अवारं पारञ्च स्तो यस्य अर्शआद्यच्। उभयकूलवति समुद्रे।

**अवारपारीण** त्रि०अवारपारे गच्छति+ख। पारगामिणि।

**अवारिका** स्त्री० नास्ति वारि यत्र। धन्याके, तस्य अतिशुष्कफलत्वेन जलशून्यत्वात्।

**अवासस्** त्रि० न वासोऽस्य। वस्त्ररहिते नग्ने।

**अवि** पु० अव-इन्। सूर्य्ये, मेषे, छागे, पर्व्वते, मूषिककम्बले, प्रभौ च। ऋतुमत्यां स्त्रियां लज्जायाञ्च स्त्री० वा ङीप्।

**अविकट** पु० अवि+समूहे कटच्। मेषसंघाते। विकट उपः

न॰त॰। उग्रभिन्ने सौम्ये। [अजगन्धाहर्चे।

**अविगन्धा** स्त्री॰ अवेश्छागस्य गन्ध इव गन्धः पुष्पादावस्याः।

**अविग्न** पु॰ विज-क्त न॰त॰। (करमचा) करमर्द्दकवृक्षे।

**अवितथ** न॰ न वितथं मिथ्या न॰त॰। सत्ये।

**अविद्या** स्त्री॰ विद-क्यप् न॰त॰। विद्याभावे, अहङ्कारहेतौ अज्ञाने, विद्याविरोधिन्याम् अयथार्थबुद्धौ च। वेदान्तमते भावाभावाभ्यामनिर्वाच्यायामचेतनायां मायायाम्।

**अविद्धकर्णी** स्त्री॰न विद्धः अच्छिद्रः पर्णरूपः कर्णोऽस्याः। पाठालतायाम्।

**अविनाभाव** पु॰ विना व्यापकम्तते न भावः स्थितिः। व्यापकस्थित्यनुरोधिसत्तारूपायां व्याप्तौ।

**अविनीत** त्रि॰ अव+नी-क्त। उद्धते। कुलटायां स्त्री॰।

**अविप्रिय** पु॰ अवीन् मेषान् प्रीणाति प्री-क। श्यामालते। विप्रियमपकारः न॰त॰। प्रतिकूलभिन्ने। न॰ब॰। अपकारशून्ये त्रि॰। श्वेतालतायां स्त्री॰।

**अविभक्त** पु॰ वि+भज-क्त। संसृष्टे,विभागरहिते द्रव्ये-स्वामिनि च। अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः इति, अविभक्तं स्थावरं यत्सर्वेषामेव तद्भवेदिति च स्मृतिः।

**अविमुक्त** न॰ 'न विमुक्तं शिवाभ्यां यदविमुक्तं ततो विदु'-रित्युक्तलक्षणे काशीक्षेत्रे। वि+मुच-क्त न॰त॰। मुक्तभिन्ने त्रि॰।

**अविरत** त्रि॰ वि+रम भावे-क्त न॰ब॰। विरामशून्ये, अनवरते द्रव्यादौ च क्रियाविशेषणत्वे न॰।

**अविरति** स्त्री॰विरामो विरतिः भावे क्तिन् न॰त॰। विषयादौ स्थिरचित्ततायाम्, विरामाभावे च।

**अविरल** त्रि॰ न विरलः न॰त॰। घने,निविडे।

**अविलम्बित** त्रि॰ वि+लवि-क्त न॰त॰। विलम्बशून्ये त्वरायुक्ते द्रव्यादौ। क्रियाविशेषणत्वे न॰।

**अविवेक** पु॰ वि+विच-घञ् न॰त॰। सदसद्विवेकाभावे,सम्भूयैककार्य्यकरणे, भ्रमे च। न॰ब॰। विवेकशून्ये त्रि॰।

**अविवेकिन्** त्रि॰ वि+विच-घिनुण् न॰त॰। विवेचकभिन्ने, मूर्खे,शास्त्राद्युपदेशशून्ये,विवेकोभेदस्तदहिते च। साङ्ख्यमते प्रधाने, महदादौ च। प्रधानं महदादिभ्यः, महदादयश्च प्रधानात् न विविच्यन्ते (भिद्यन्ते) इत्युक्तम् तत्रैव।

**अविशेष** पु॰ वि+शिष-घञ् न॰त॰। विशेषाभावे, अभेदे च। न॰ब॰। विशेषशून्ये तुल्ये त्रि॰। साङ्ख्यादिमतसिद्धेषु तन्मात्राख्येषु सूक्ष्मभूतेषु तानि च इदमेतदेवंगुणकमिति व्यावृत्ततया नानुभूयन्ते इत्यविशेषाः।

**अविश्रान्त** त्रि॰ वि+श्रम-क्त न॰त॰। विरामरहिते द्रव्ये।

**अविष** पु॰अव-टिषच्। समुद्रे, नृपे च। ङीप्। नद्यां स्त्री विषशून्ये त्रि॰। (आतहन्) विशाखायां स्त्री॰ टाप्।

**अविसोढ़** न॰अवेर्दुग्धम् अवि+सोढ न चलम्। मेध्याद्य

**अविस्पष्ट** न॰ विस्पष्टं स्फुतमात्मेणार्थविबोधकं सुखेन श्रवण योग्यञ्च वि+स्पश-क्त न॰त॰। अस्पष्टवाक्ये। [प्रित

**अवीचि** पु॰नास्ति वीचिः सुखमत्र। नरकभेदे अवीचिमयो

**अवीजा** स्त्री॰ ईषदर्थे नञा ब॰। अल्पबीजवत्यां द्राक्षायाम् वीजशून्ये त्रि॰। [प्रवर्त्तमाने निषेधके अनुमाने

**अवीत** न॰ वि+इण-क्त न॰त॰। न्यायप्रसिद्धे व्यतिरेकहेत

**अवीर** त्रि॰ वीरः पुत्रादि नास्ति यस्य। पुत्रादिशून्ये। न॰त वीर्यवर्जिते। पतिपुत्ररहितायां स्त्री॰। "अजातपुत्रा विधवा साऽवीरा परकीर्त्तितेति" स्मृतेः। [धाने च

**अवेक्षण** न॰ अव+ईक्ष-ल्युट्। दर्शने, प्रतिजागरणे, अव

**अव्यक्त** पु॰वि+अञ्ज-क्त न॰त॰। विष्णौ, कामे, शिवे, सां मते सर्व्वकारणे, प्रधाने, रूपाद्यहीनतया चक्षुराद्यग चरत्वात्तस्य, वेदान्तमते सूक्ष्मशरीरे सुप्तावस्थायां प्र प्रवृत्तिनिमित्तजातिगुणादिभिर्वर्ज्जिते निराकारे ब्रह्म च न॰। अस्पष्टे वस्तुमात्रे त्रि॰। [ईषद्रक्ते अरुणवर्णे

**अव्यक्तराग** पु॰ न व्यक्तोऽलव्यक्तोरागोऽरुणिमा यस्य

**अव्यङ्गा** स्त्री॰ अवेरङ्गं शृङ्गमिवाङ्गमस्याः। शूकशिम्बाम् न विकलमङ्गमस्य इब॰। विकलाङ्गभिन्ने पूर्णाङ्गे त्रि॰।

**अव्यञ्जन** पु॰ नास्ति व्यञ्जनं शुभलक्षणं शृङ्गं यस्य। शृङ्गहीनपशौ, सुलक्षणशून्ये, चिह्नशून्ये च त्रि॰।

**अव्यण्डा** स्त्री॰ न विगतमण्डं वीजमस्याः। शूकशिम्बाम्

**अव्यथ** पु॰न व्यथते मद्यं न सञ्चलति व्यथभयचलनयोः अच् सर्पे। व्यथाशून्ये त्रि॰। नास्ति व्यथा यस्मात् ७त॰ हरितक्याम् गुग्गुलाश्च स्त्री॰। [व्यथाशून्ये त्रि॰।

**अव्यथिन्** पु॰ बहुचलनेऽपि न व्यथते व्यथ-इनि। अश्वे,

**अव्यभिचारिन्** त्रि॰ वि+अभि+चर-णिनि न॰त॰ केनापि प्रतिकूलहेतुना निवारयितुमशक्ये। न्यायमते व्यभिचारो व्याप्त्यभावस्तच्छून्ये हेतौ पु॰।

**अव्यय** पु॰ न॰ वि+इण-अच् न॰त॰। सर्व्वासु विभक्तिषु सर्व्ववचनेषु च एकरूपे शब्दवृत्तिधर्मविशेषे, यथास्वरादयोऽव्ययाः सर्व्वैकरूपाः शिवे, विष्णौ च पु॰। आद्यन्तरहिते विकारशून्ये त्रि॰। परब्रह्मणि न॰। "सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु। वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययमिति श्रुतिः।

**अव्ययीभाव** पु॰ अनव्ययमव्ययं भवत्यनेन अव्यय+च्वि-भू

ञ् । व्याकरणसिद्धे समासविशेषे । तत्र हि उपकुम्भमित्यादौ अनव्ययस्यापि कुम्भादिपदस्याव्ययत्वम् ।

**अव्यवस्था** स्त्री० वि+अव+स्था-अङ् न०त० । इदं कर्त्तव्यमिदं नेति नियमाभावे, शास्त्रादिविरुद्धायां व्यवस्थायाम्, अविधौ च । [भोजनादौ एकत्रावस्थानायोग्ये पतितादौ ।

**अव्यवहार्य्य** त्रि० वि+अव+हृ-ण्यत् न०त० । शयनासन-

**अव्यवहित** त्रि० वि+अव+धा-क्त न०त० । व्यवधानरहिते साक्षात्संबद्धे ।

**अव्याकृत** त्रि० वि+आ+कृ-क्त न०त० । वेदान्तमते अप्रकटीभूते वीजरूपे जगत्कारणेऽज्ञाने । सांख्यादिमते प्रधाने च ।

**अव्याप्यवृत्ति** त्रि० व्याप्य स्वाधिकरणं देशादिकं साकल्येन संबध्य न वृत्तिः स्थितिर्यस्य । स्वाधिकरणे देशादौ प्रदेशविशेषस्थिते वस्तुनि । यथा घटोभूतलादौ एकदेशे एव तिष्ठति इत्यतोऽव्याप्यवृत्तिः । व्याप्यवृत्तिस्तु जात्यादिः घटादौ साकल्येन सम्बध्य स्थित इति न्यायमते प्रसिद्धम् ।

**अव्युत्पन्न** त्रि०वि+उद्+पद-क्त न०त० । समुदायशब्दस्यावयवशोऽर्थबोधकताशक्तिः व्युत्पत्तिस्तच्छून्ये अवयवार्थशून्ये शब्दे, शब्दार्थानभिज्ञे मूर्खादौ च ।

**अश** संहतौ-व्याप्तौ च स्वादि०आत्म० वेट् सक० । अश्नुते आशिष्ट आष्ट आनशे ।

**अश** भोजने क्र्यादि० पर० सक० सेट् । अश्नाति आशीत् ।

**अशकुम्भी** स्त्री० अश्नुते व्याप्नोति अश-अच् अशा स्तुभ्नाति जलमावृणोति स्तुम्भ-ट शपो० सलोपः टित्वात् ङीप् कर्म० । अल्पकालेन जलव्यापके जलोपरिजाते पाना इति ख्याते तृणभेदे ।

**अशन** पु० अश्नुते व्याप्नोति अश-ल्यु । पीतसालवृक्षे दन्त्यमध्योऽप्ययमत्रार्थे । भावे ल्युट् । व्याप्तौ, भोजने च न० । कर्मणि ल्युट् । अन्ने न० ।

**अशनपर्णी** स्त्री० अशनस्य पीतसालस्य पर्णमिव पर्णमस्याः । आराटी इति ख्याते वृक्षभेदे तस्य पीतसालतुल्यपर्णत्वात्

**अशनाया** स्त्री० अतिलोभेनाशनमिच्छति अशन+क्यच्-भावे अ । बुभुक्षायाम् । [बुभुक्षायाम् न० ।

**अशनायित** त्रि०अशन-क्यच्-कर्त्तरि-क्त । क्षुधिते । भावे-क्त ।

**अशनि** पु० स्त्री० अश्नुते संहन्ति अश-अनि । मेघोत्पन्ने ज्योतिषि वज्रे, प्रस्तरवर्षिणि उल्काविशेषे, विद्युति च ।

**अशब्द** त्रि० नास्ति शब्दो, वेदादौ वाचकशब्दो वा यस्य । शब्दहीने, वेदे वाचकशब्दवर्जिते च "अशब्दमस्पर्शमरूपमव्ययमिति" श्रुतिः "ईक्षतेर्नाशब्दमिति" शारीरकसूत्रञ्च

**अशरीर** त्रि० नास्ति शरीरं तदभिमानो वा यस्य । "प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके । नेतिनेतिस्वरूपत्वादशरीरो भवत्ययं"मित्युक्तलक्षणे सकलनिषेधरूपे देहशून्ये परमात्मनि, शरीराभिमानशून्ये जीवन्मुक्ते च "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतइति श्रुतिः ।

**अशास्त्र** न० शास-करणे ष्ट्रन् शास्त्रं वेदादि विरोधे न०त० । वेदादिविरुद्धे नास्तिकागमादौ ।

**अशित** त्रि० अश-कर्म्मणि क्त । भक्षिते । कर्त्तरि क्त । तृप्ते ।

**अशितङ्गवीन** त्रि०अशितास्तृप्ता गावोऽत्र । पूर्व्वगोचारणक्षेत्रे ।

**अशितम्भव** त्रि० अशितस्तृप्तो भवत्यनेन ख मुम् च । तृप्तिसाधने अन्नादौ । [इत्र । चरौ ।

**अशित्र** पु०अश-संहतौ इत्र । चौरे । भोजनार्थात् कर्म्मणि

**अशिर** पु० अश-भोजने इरन् । वह्नौ, राक्षसे, सूर्य्ये, वायौ च । वस्त्रे न० । [याम् । स्वार्थे के ह्रस्वे अशिरिकाप्यत्र ।

**अशिश्वी** स्त्री० नास्ति शिशुर्यस्याः ङीप् । शिशुहीनायां स्त्रि-

**अशीति** स्त्री० दशानामवयवं दशतिः दशकमष्टगुणिता दशतिः नि० अशीत्यादेशः । अष्टगुणिते दशके संख्याभेदे, तत्संख्यान्विते च

**अशुभ** न० नास्ति शुभं यस्मात् ५व० । पापे "प्रयतत्वाद्दोपचितमशुभं नाशयतीति" स्मृतिः । न०त० । अमङ्गले । तद्वति त्रि० ।

**अशेष** त्रि०नास्ति शेषो यस्य । शेषरहिते सम्पूर्णे । क्रियाविशेषणत्वे न० । नञ् त० । शेषाभावे ।

**अशोक** पु० नास्ति शोको यस्मात् ५त० । स्वनामख्याते अशोकवृक्षे, वकुलवृक्षे च । पारदे न० । कटुकवृक्षे स्त्री० । इत० । शोकशून्ये त्रि० । [कटुकीति ख्यातायां कटुकायाम् ।

**अशोकरोहिणी** स्त्री० अशोक इव रोहति रुह-णिनि ।

**अशोच्य** त्रि० शुच-योग्यत्वे ण्यत् न०त० । शोचितुमयोग्ये

**अशौच** न० शुचेर्भावः शौचं न०त० । स्मृतिप्रसिद्धे, विहितकर्म्मानधिकारित्वसम्पादके अधर्म्मे, शुचित्वाभावे च । स्वार्थे ष्यञ् आशौच्यमप्यत्र "आशौच्यादिप्रसक्तेति" स्मृतिः ।

**अश्मकदली** स्त्री० अश्नुते अश-मन् कर्म० । काष्ठकदल्याम् ।

**अश्मकुट्ट** पु० अश्मनि प्रस्तर एव धान्यादिकं कुट्टयति । वानप्रस्थभेदे, तस्योदूखलादिशून्यत्वेन तण्डुलादेर्निस्तुषीकरणं प्रस्तरे एव विहितम् । [मरकतमणौ ।

**अश्मगर्भ** पु०अश्मना कृतो गर्भोऽस्य । पन्ना इति ख्याते

**अश्मगर्भज** पु० अश्मगर्भाज्जायते जन-ड । मरकतमणौ अश्मयोनिरप्यत्र । [वृक्षे ।

**अश्मघ्न** पु० अश्मानं हन्ति भिनत्ति हन-ट । पाषाणभेदके

**अश्मज** न०अश्मनो जायते जन-ड । प्रस्तरजाते शिलाजतुनि,

लौहे च । अश्मजतरप्यत्र । [भेदके टङ्कनामास्त्रे ।
**अश्मदारण** पु० अश्मानं दारयति दृ-णिच्-ल्यु । पाषाण-
**अश्मन्** पु० अश्नुते व्याप्नोति,संहन्त्यनेन वा। कर्त्तरि करणे वा मनिन् । पाषाणे । [चूल्लाद्ध] । अमूनामन्तः। अश्मन्तोऽप्यत्र ।
**अश्मन्त** न० अश्मनोऽन्तोऽत्र मका० पररूपम् । अशुभे क्षेत्रे,
**अश्मन्तक** पु०न० अश्मानमन्तयति । चूल्लाम्, दीपाधारच्छादने, तृणविशेषे च । आवुडेति ख्याते अम्लोटकवृक्षे, अम्लपत्रे कोविदारवृक्षे च पु० ।
**अश्मपुष्प** न० अश्मनः पुष्पमिव। शिलाजतुनि,शैलेये गन्धद्रव्ये
**अश्मभाल** न० अश्मेव भाजयति चूर्णितं करोति । भज-णिच्-अण् पृषो० जस्य लत्वम् । द्रव्यचूर्णकारके हामानदिस्ते इति ख्याते लौहपात्रभेदे ।
**अश्मभिद्** पु० अश्मानमुद्भिद्य जायते । पाषाणभेदके वृक्षे । क । अश्मभिदोऽप्यत्र ।
**अश्मरी** स्त्री० अश्मानं राति रा-क गौरा० ङीष् । मूत्रकृच्छ्ररोगे स हि मूलद्वारे प्रस्तरमिव कठिनमांसं रचयति ।
**अश्मरीघ्न** पु० अश्मरीं मूत्रकृच्छ्रं हन्ति हन-ट । वरुणवृक्षे
**अश्मरीहर** पु० अश्मरीं हरति हृ-ट । (देधान) देवधान्ये ।
**अश्मसार** पु०न० अश्मनः सार इव । लौहे । इव० । तत्तुल्यकठिने त्रि० । [अश्नुते अश-कर्म्मणि रक् अश्ममप्यत्र।
**अश्र(स्र)** न० अश्नुते नेत्रं कण्ठम् वा अश-रक्। चक्षुर्जले,रक्ते च
**अश्र(स्र),प** पु० अश्रं (स्रं) पिबति पा-क । राक्षसे ।
**अश्रान्त** त्रि० श्रम-भावे-क्त न०ब० । सन्तते निवृत्तिरहिते च। कर्त्तरि क्त न०त० । श्रान्तभिन्ने त्रि० । [वा ङीप् ।
**अश्रि(श्री)** स्त्री० अश-रि । अस्त्रादेरग्रभागे गृहादिकोणे च
**अश्रु(स्रु)** पु० अश्नुते अस्यते वा । अश् (अस) क्रुन् । चक्षुर्जले ।
**अश्लील** न० श्रियं लाति गृह्णाति ला-क रस्य लत्वम् श्री+सिध्मादित्वात् लच् वा न०त० । लज्जादिसम्पादिकायाम् ग्राम्यभाषायाम् ।
**अश्लेषा** स्त्री० न श्लिष्यतेऽन्योन्यम् सप्ततारात्मकत्वेऽप्यस्याः योगकारकताराऽन्तराभावात् न परस्परमेलनम् श्लिष-अच् न०त० । अश्विन्यवधिनवमतारायाम् । श्लेषः अलङ्कारविशेषः संबन्धो वा न०ब० । तद्रहिते त्रि० ।
**अश्व** पु० अश-क्वन् । घोटके । [अश्वगन्धाख्यवृक्षे ।
**अश्वकन्दिका** स्त्री० अश्वस्य मेढ्रमिव कन्दो मूलमस्याः ।
**अश्वकर्ण** पु० अश्वस्य कर्ण इव पत्रमस्य । स्वनामख्याते शालवृक्षे । स्वार्थे के अश्वकर्णकोऽप्यत्र ।
**अश्वखरज** पु० अश्वस्य खरी च, अश्वी च खरस्य वा ताभ्यां जायते पुंवद्भावः। खचरे घोटकभेदे । खराश्वजोऽप्यत्र ।
**अश्वखुर** पु० अश्वस्य खुरमिव खुरं मूलमस्य । नखीति ख्याते गन्धद्रव्ये । अपराजितायाम् स्त्री० ।
**अश्वगन्धा** स्त्री० अश्वस्य गन्ध एकदेशो मेढ्रमिव मूलमस्याः । वराहकर्णतुल्यपत्रे स्वनामख्याते क्षुद्रवृक्षभेदे ।
**अश्वघ्न** पु० अश्वं हन्ति हन-ट । करवीरवृक्षे तस्याश्वनाशकत्वात्
**अश्वतर** पु० तनुरश्वः अश्व+तनुत्वे ष्टरच् अश्वायामश्वेनोत्पन्नत्वेऽश्वत्वं तस्य तनुतत्वञ्चान्यपितृकत्वात् । गर्द्दभेनाश्वायामुत्पन्ने, —खचरेऽश्वविशेषे, सर्पभेदे च । जातित्वेन स्त्रियां ङीष् ।
**अश्वत्थ** पु० न श्वःस्थिरं शाल्मलिवृक्षादिवत् तिष्ठति स्था क नि० । स्वनामख्याते वृक्षे, गर्द्दभाण्डवृक्षे, चिरमस्थायित्वात् संसाररूपे वृक्षे च "ऊर्द्धमूलमधःशाखमश्वत्थं प्राहुरव्यय"मिति गीता ।
**अश्वपाल** पु० अश्वान् पालयति पा+णिच्-लन् अण् । घोटकरक्षके । ण्वुल् अश्वपालकोऽप्यत्र जले न० ।
**अश्वपुच्छी** स्त्री० अश्वस्य पुच्छमिव केशरोऽस्य । माषपर्णीवृक्षे
**अश्ववाल** पु० अश्वस्य वालः केशर इव तदाकारपुष्पत्वात् । क्याशा इति ख्याते काशे । इत० । अश्वस्य केशे ।
**अश्वमार** पु० अश्वं मारयति मृ-णिच्-अण् । करवीरे । ण्वुल् अश्वमारकोऽप्यत्र । [पाकारान्ताङ्के किन्नरे । स्त्रियां ङीप्
**अश्वमुख** पु० अश्वस्य मुखमिव मुखमस्य । अश्वाकारमुखे पुरु-
**अश्वमेध** पु० अश्वो मेध्यते बध्यतेऽत्र मेध-घञ् । यज्ञभेदे ।
**अश्वमेधीय** पु० अश्वमेधस्यायं हितो वा छ। अश्वमेधाङ्गाश्वे ।
**अश्वयुज** स्त्री० अश्वं युनक्ति रूपेणानुकरोति क । अश्विनी नक्षत्रे तस्या अश्वतुल्यरूपत्वात् । युज-क्विन् अश्वयुगपि अश्वेन अश्वाकारेण युज्यते यत्र चान्द्राश्विनमासि पौर्णमास्याम् । तस्मिन् चान्द्रमासे च "अश्वयुक् कृष्णपक्षे तु श्राद्धं कुर्यादि"ति स्मृतिः । मत्वर्थीयेऽचि। अश्वयुजोऽप्यत्र
**अश्वरोधक** पु० अश्वं रुणद्धि रुध-ण्वुल् । करवीरे वृक्षे ।
**अश्ववक्त्र** पु० अश्वस्य वक्त्रमिव वक्त्रमस्य । अश्वमुखाकारमुखवति पुरुषाकारान्याङ्के किन्नरे ।
**अश्ववार(ह)** पु० अश्वं वारयति चुरा० वृ-अण् । अश्वारोहिणि । वह-णिच्-अण् । अश्ववाहोऽप्यत्र ।
**अश्वस्तन** त्रि० न श्वोभवं श्वस्+ट्युल् तुट् च। परदिनास्थायिनि एकदिननिर्वाहोचितैः द्रव्यैः "अश्वस्तनविधानेन कर्त्तव्यमि"तिमनुः
**अश्वाक्ष** पु० अश्वस्याक्षीव अच् समा० । देवसर्षपवृक्षे।
**अश्वाभिधानी** स्त्री० अश्वोऽभिधीयतेऽभिधार्यतेऽनया अभि-धा-ल्युट् । अश्वबन्धनरज्ज्वामभिधानीशब्दाच्याम् "इमाम-

मश्वाद्भूयनां स्वतश्चेत्यश्वाभिधानीमादत्ते” इति श्रुतिः ।

**अश्वारि** पु० अश्वस्यारिः ६त० । महिषे ।

**अश्वारोह** पु०अश्वमारोहति रुह-अण् । अश्ववाहके, अश्वारोहणेन युद्धकर्त्तरि च । अश्वगन्धायां स्त्री० । [श्वाष्टके ।

**अश्वावरोहक** पु० अश्वस्तम्भमिवावरोहति ण्वुल् । अश्वग-

**अश्विन्** पु० द्विव० अश्वाः सन्ति ययोः इनि । स्वर्गवैद्ययोः

**अश्विनी** स्त्री० अश्वः अश्वाकारो विद्यते यस्याः अश्व+इनि। सप्तविंशतिनक्षत्रमध्ये प्रथमे नक्षत्रे ।

**अश्विनीकुमार** पु० द्विव० अश्वीभूता संज्ञानाम्नी सूर्य्यपत्नी तस्यामश्वरूपेण सूर्य्येण जातौ कुमारौ । स्वर्गवैद्ययोः ।

**अश्वीय** न० अश्वानां समूहोऽश्वेभ्योहितं वा छ । अश्वसमूहे अश्वहिते त्रि० । [अश्वे ।

**अश्वोरस** न० अश्वानामुर इव मुख्यम् पच्समा० । मुख्ये

**अष** दीप्तौ अक० गतौ, ग्रहणे च सक० भ्वादि०उभ० सेट् । अषति ते आषीत् आषिष्ट ।

**अषडक्षीण** त्रि० न सन्ति षडक्षीणि श्रोत्रेन्द्रियाणि यत्र ख । तृतीयजनकर्णाश्रुते द्वाभ्यामेव कृते मन्त्रादौ ।

**अषाढ़(ड़)** पु० अषाढ़(ड़)या युक्ता पौर्णमासी आषाढी (डी) सा यत्र मासे अण् वा ह्रस्वः । वैशाखादितस्तृतीये मासे आषाढ़मासे । आषाढ़ी पूर्णिमा प्रयोजनमस्य प्रयोजनार्थे अण् । ब्रह्मचारिधार्य्ये दण्डे, तस्य हि आषाढपौर्णमास्यां विहितकर्म्मोपयोगित्वात् आषाडः आषा(डो)ढोऽप्युभयत्र ।

**अषाढ़ा(ड़ा)** स्त्री० षाढिः साहनं सह-णिच्+क्तिन् षत्वम् अर्श आद्यच् न०त० पृषो० वा डत्वम् । अश्विन्यवधिके पूर्व्वादिके विशे, उत्तरादिके एकविंशे च नक्षत्रे । अषाडाप्यत्र ।

**अष्टक** न० अष्टौ अध्यायाः परिमाणमस्य अष्टन्+कन् । पाणिनेरष्टाध्यायीग्रन्थे, प्रत्येकमष्टाध्यायात्मके ऋग्वेदांशे च

**अष्टका** स्त्री० “अष्टका तु समाख्याता सप्तम्यादिदिनत्रयम्” इत्युक्तलक्षणे सप्तम्यादिदिनत्रये, अश्नन्ति पितरोऽस्यां तिथौ अश-तकन् । पौषमाघफाल्गुनानां कृष्णाष्टम्यां, “अष्टका पितृदैवत्ये” इत्यजादिपाठात् न इत्वम् । तद्विहितश्राद्धे च

**अष्टन्** त्रि० बहु० अश-व्याप्तौ कनिन् तुट् च । संख्याभेदे।

**अष्टपदिका** स्त्री० अष्टसु दिक्षु पादा अस्याः अन्त्यलोपः ङीपि पुंवद्भावे संज्ञायां कन् ह्रस्वः। (हापरमालि) लतायाम्

**अष्टपाद्** पु० अष्टौ पादा अस्य ब० वा अन्त्यलोपः मृगविशेषे, शरभे, लूतायाञ्च । अष्टपादोऽप्यत्र ।

**अष्टमङ्गल** पु० अष्टसु स्थानेषु उरःखुरचतुष्टयपुच्छमुखपृष्टस्थकेशेषु श्वेतरूपात्मकं मङ्गलमस्य । तादृशलक्षणयुक्ते अश्वे । अष्टानां मङ्गलद्रव्याणां समाहारः । “लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणोगौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाष्टम” इत्युक्तेषु अष्टसु द्रव्येषु ।

**अष्टमान** न० अष्टौ मुष्टयः मानं परिमाणमस्य । कुडवरूपे अष्टमुष्टिमिते परिमाणभेदे ।

**अष्टमी** स्त्री० अष्टानां पूरणी । पञ्चदशकलात्मकचन्द्रस्य अष्टमकलाक्रियारूपायां स्वनामख्यातायां तिथौ अष्टसंख्या पूरण्याञ्च । अश+क्त अष्टं संघातं व्याप्तिं वा माति मा-अच् क गौरा० ङीष् । कोटालतायाम् ।

**अष्टमूर्त्ति** पु० अष्टौ भूम्यादयो मूर्त्तयोऽस्य । “क्षितिर्जलं तथा तेजो वायुराकाशमेव च । यष्टार्कश्च तथा चन्द्रः मूर्त्तयोऽष्टौ पिनाकिनः” इत्युक्ताष्टमूर्त्तिधारिणि शिवे ।

**अष्टलौहक** न० अष्टानां लौहानां धातूनां समाहारः । “सुवर्णं रजतं ताम्रं सीसकं कान्तिकं तथा । वङ्गं लौहं तीक्ष्णलौहमित्यष्टौ धातवः स्मृता” इत्युक्तेषु अष्टसु धातुषु ।

**अष्टाकपाल** पु०अष्टसु कपालेषु संस्कृतः पुरोडाशः । संस्कारार्थकस्य तद्धितस्य लुक् आत्वम् । अष्टसु कपालेषु संस्कार्य्ये पुरोडाशे, तत्साध्ये यज्ञे च ।

**अष्टाङ्ग** पु० अष्टावङ्गानि यस्य । योगविशेषे, यमनियमासन प्राणायामप्रत्याहारध्यानधारणासमाधिरूपे योगशास्त्रोक्ते एतेषां स्वरूपादि तत्तच्छब्दार्थे वक्ष्यते । “जानुभ्याञ्च तथा पद्भ्यां पाणिभ्यामुरसा धिया । शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरित” इत्युक्तलक्षणे प्रणामे “आपः क्षीरं कुशाग्रं च दधि सर्पिः सतण्डुलम् । यवः सिद्धार्थकश्चैव अष्टाङ्गोऽर्घः प्रकीर्त्तितः” इत्यष्टद्रव्यघटिते पूजोपकरणेऽर्घे, शारीफलके च तस्य प्रत्येकपङ्क्तौ अष्टपदरूपाङ्कत्वात् ।

**अष्टादशन्** त्रि०बहु० । अष्टाधिका दश, अष्टौ च दश चेति वा । संख्याविशेषयुक्ते । पूरणे डटि । तत्पूरणे त्रि० । [पाचले ।

**अष्टादशाङ्ग** पु० न० अष्टादश अङ्गानि यत्र । वैद्यकप्रसिद्धे

**अष्टापद** पु०न० अष्टौ अष्टौ पदानि पङ्क्तावस्य वृत्तौ संख्याशब्दस्य वीप्सार्थत्वाङ्गीकारात् आत्वम् । शारीफलके । अष्टसु धातुषु पदं प्रतिष्ठा यस्य । स्वर्णे । शरभे, लूतायाञ्च पु०, तयोरष्टपदत्वात् । अष्टाभिः सिद्धिभिरापद्यते आ+पद-अच् । अणिमाद्यष्टसिद्धियुक्ते कैलाशे । अष्टसंख्यातेन आपद्यते कप् । काले ।

**अष्टि** स्त्री० अश्यते भूमौ क्षिप्यते अस-क्तिन् पृषो० षत्वम् । आटि इति ख्याते बीजे, षोड़शाक्षरपादके छन्दोभेदे च ।

**अष्टीला** स्त्री० “आध्मापयन् बस्तिगुदं रुद्ध्वा वातचलोन्न-

ताम्। कुर्य्यात्तीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीमिति वैद्यकोक्तलक्षणयुक्ते वातजन्ये व्याधिभेदे।

**अष्ठीवत्** पु० नास्ति अतिशयितमस्थि यस्मिन् मतुप् पृषो० नि०। (आंटु) इति ख्याते जान्वोः सन्धिस्थाने।

**अस** दीप्तौ अक०ग्रहणे गतौ च सक०भ्वादि०उभ०सेट्। असति ते आसीत् आसिष्ट। 'लावण्य उत्पाद्य इवास' इति कुमारः

**अस** विद्यमानतायाम् अदा०अक०पर० सेट्। अस्ति अभूत्।

**अस** क्षेपे दिवा० पर० सक० सेट्। अस्यति आस्यत्।

**असंस्कृत** त्रि०सम्+कृ-क्त सुट् न०त०। गर्भाधानादिसंस्काररहिते, व्याकरणसंस्कारशून्ये अपशब्दे च।

**असकृत्** अव्य० न सकृत् न०त०। पौनःपुन्ये।

**असक्त** त्रि० सन्ज-क्त न०त०। आसक्तिशून्ये फलाभिलाषशून्ये च "असक्तः सुखमन्वभूदि"ति रघुः। "कुर्य्यात् विद्वांस्तथाऽसक्तः" इति गीता। [पथि च पु०।

**असङ्कुल** त्रि०न सङ्कुलः। परस्पराविरुद्धे। ग्रामादिपथे विस्तीर्णे

**असङ्क्रान्तमास** पु० न सङ्क्रान्तः राश्यन्तरं प्राप्तोरवि यत्र चान्द्रमासे। शुक्लप्रतिपदादिदर्शान्ते संक्रमणशून्ये मलमासे।

**असङ्ख्य** त्रि०नास्ति संख्या यस्य। परार्द्धातीते,बहुसंख्यके च

**असङ्ग** पु० सन्ज-घञ् न०ब०। सङ्गरहिते परमात्मनि, हरौ च। न०त०। सङ्गविरोधिनि, पुत्रवित्तलोकैषणात्यागरूपे वैराग्ये। न०ब०। विषयरागाभाववति त्रि०।

**असङ्गत** त्रि०सम्+गम-क्त न०त०। सङ्गतिरौचिती तच्छून्ये, अनन्तराभिधानोत्थापकाकाङ्क्षाविषयभिन्ने च। "नासङ्गतं प्रयुञ्जीतेत्य"भियुक्तोक्तिः। [अर्थालङ्कारभेदे सा०१०परि०।

**असङ्गति** स्त्री० सम्+गम-क्तिन् न०त०। सङ्गतिविरहे।

**असत्** त्रि० अस+शतृ न०त०। सद्भिन्ने, निरुपाख्ये निःस्वरूपे निषेधरूपेण प्रतीयमाने, अभावत्वाश्रये, "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थे"ति गीतोक्ते अश्रद्धया कृते होमादौ च। द्वन्द्वे पु०। दुराचारिणि असाधौ त्रि०। स्त्रियां ङीप् कुलटायाम्।

**असद्ग्रह** पु० असति अविद्यमाने वस्तुनि ग्रहः आग्रहः। बालादीनाम् आबदार इति ख्याते आग्रहभेदे।

**असपर्णी** स्त्री० असनस्य पर्णमिव पर्णमस्याः। वातकवृक्षे।

**असभ्य** त्रि० सभायामर्हः यत् न०त०। सभायामनुपयुक्ते। स्त्रीवर्णनादौ, खले च। [राजस्य ज्येष्ठपुत्रे पु०।

**असमञ्जस** न० समञ्जसं युक्तियुतं न०त०। असङ्गते। सगर-

**असमय** पु० अपकृष्टार्थे न०त०। दुष्टकाले अयोग्यकाले च।

**असमर्थ** त्रि० समर्थः शक्तः न०त०। अशक्ते,दुर्बले च। समर्थः सङ्गतार्थः न०त०। असङ्गतार्थे. व्याकरणशास्त्रे प्रसिद्धायां यत्र यस्यान्वययोग्यता तत्सहचराभावेनापेक्षायाम् अतएव अश्राद्धभोजीत्यादौ असमर्थसमासः नञ्पदस्य श्राद्धेन सहान्वयायोग्यत्वात् भोजनेन च सहचाराभावेन अपेक्षणीयत्वात्।

**असमवायिकारणम्** न० समवैति सम+अय+इण-णिनि न०त०कर्म्म०। न्यायमते समवायिकारणं द्रव्यं तद्भिन्नं द्रव्यवृत्ति यत् गुणादिकं कारणं तस्मिन्नर्थे। यथा कपालद्वयसंयोगरूपो गुणोघटस्य,द्रव्याश्रिता क्रिया संयोगविभागादेः

**असमीक्ष्यकारिन्** त्रि० समीक्ष्य विविच्य न करोतीति कृ+णिनि। विवेचनामकृत्वैव कर्म्मकारके, मूर्खे च।

**असम्बद्ध** न० सम्बद्धं परस्परसन्वितं न भवति सम्+बन्ध-क्त न०त०। अर्थानवबोधकेऽनन्वितार्थके वाक्ये।

**असम्बद्धप्रलाप** पु० ६त०। असम्बद्धस्य असङ्गतस्य कथने, असङ्गतस्य अप्रस्तुतस्य निष्प्रयोजने कथने च।

**असम्बाध** त्रि० नास्ति सम्बाधा अन्योन्यं पीड़ा यत्र। परस्परसंघर्षरूपपीड़ारहिते विरले,बाधारहिते च। "असंबाधा देवनदी" ति भारतम्।

**असम्मत** त्रि० सम्+मन-क्त नास्ति सम्मतो यस्मात् ५ब०। प्रणयिजने। न०त०। अनभिमते "असम्मतः कस्तव मुक्तिमार्ग"मिति कुमारः। [ताभिमानरहिते च।

**असम्मुग्ध** त्रि० सम्+मुह-क्त न०त०। अज्ञातसन्देहे परिज्ञ-

**असरु** पु०सरति सृ-उ न०त०। (कुक्करसोङ्गा) वृक्षे।[शून्ये त्रि०

**असहन** पु० न सहते सह-ल्यु न०त०। शत्रौ। क्षमा-

**असाधारण** त्रि० न०त०। साधारणं सामान्यधर्म्मयुक्तं तद्भिन्ने, तन्मात्रवृत्तिधर्म्मयुक्ते, विशेषे, अधिके च। न्यायमते "यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मतः" इत्युक्ते सपक्षविपक्षव्यावृत्तौ दुष्टे हेतौ पु०। यथा वह्निसाधने गगनादिहेतुः स च पक्षे पर्वतादौ, पक्षभिन्ने जलादौ च न विद्यते गगनादेः कुत्रापि विद्यमानत्वाभावात्।

**असाधु** त्रि० न०त०। साधुभिन्ने, असच्चरिते, संस्कृतशब्दभिन्ने, अपभ्रंशादौ च।

**असाध्य** त्रि० सिध-णिच्-साधादेशः यत् न०त०। "ऊर्द्धं साध्यमधोयाप्यमसाध्यं युगपद्गत"मित्युक्ते प्रतिकारानर्हे रोगभेदे, असाधनीये, दुर्गमे गतौ च।

**असाम्प्रतम्** अव्य० न साम्प्रतम् युक्तं न०त०। अयुक्ते।

**असार** पु० नास्ति सारो यस्य। सारहीने एरण्डवृक्षे। न०त०। सारभिन्ने। न०ब०। निस्सारे त्रि०। "असारः खलु

संसार" इत्युद्भटः । [प्रतिरूपकम् अव्य० ।
असि पु० अस-दीप्तौ क्षेपणे वा इन् । खड्गे । त्वमित्यर्थे विभक्ति
असिक्नी स्त्री० सो-क्त सिता केशादौ शुभ्रा जरती तद्भिन्ना
अवृद्धा क्नादेशः ङीप् च । अन्तःपुरचारिण्यामवृद्धायां
प्रेष्यायाम्, नदीभेदे च । [यत्र । क्षुद्रोपधाने ।
असिगण्ड पु० अस्यते क्षिप्यते अस-इन् असिः क्षिप्तोगण्डो
असित पु० सितः शुभ्रः विरोधे न०त० । शुभ्रवर्णभिन्ने तद्वि-
रुद्धे कृष्णवर्णे । तद्वति त्रि० । कृष्णपक्षे पु० । नीलौषधौ,
अन्तःपुरचारिण्यामवृद्धायां प्रेष्यायाञ्च स्त्री० टाप् ।
असितकार्च्चिस् पु०असितयति णिच्-ण्वुल् सा अर्च्चिः शिखा
यस्य । वह्नौ वह्निस्वाभम्बन्धेन हि सर्व्वेषामसितत्वम् ।
असितफल पु० असितं कृष्णं फलं यस्य । मधुनारिकेले ।
असिदंष्ट्र पु०असिरिव तीक्ष्णा दंष्ट्रा यस्य । मकराख्ये यादसि
असिद्ध त्रि०सिद्धोनिष्पन्नः पक्वश्च न०त० । अपक्वे,अनिष्पन्ने च
न्यायमते आश्रयासिद्धत्वादिभिस्त्रिभिर्दोषैर्दुष्टे हेतौ पु० ।
असिद्धि स्त्री० सिध-क्तिन् न०त०। अनिष्पत्तौ, अपाके,
न्यायमते आश्रयासिद्धिप्रभृतित्रिविधहेतुदोषे च ।
असिधात्र पु० असिं खड्गं धावति मार्ज्जयति धाव-ष्ट्रन् ।
शस्त्राणां मार्ज्जनकरे । ण्वुल् । असिधावकोऽप्यत्र ।
असिधेनुका स्त्री० असिर्धेनुरिव यस्याः ब० वा कप् । असेर्धे-
नुतुल्यत्वेन तद्वत्तत्तुल्यायाम् छुरिकायाम् ।
असिपत्र(क) पु० असिरिव तीक्ष्णं पत्रमस्य वा कप् । इक्षुवृक्षे
गुण्डनामकतृणे च । असिरेव पत्राकारो यत्र । नरक-
भेदे । असेः पत्रमिवाच्छादकम् । खड्गकोषे न० ।
असिपत्रवन न०असिरेव पत्राकारो यस्य कर्म्म० । नरकभेदे
"यस्त्विह वै निजवेदपथादनापदि अपगतः पाषण्डञ्चोपग-
तस्तमसिपत्रवनं प्रवेश्येति भागवतम् । [जन्तुभेदे ।
असिपुच्छ पु०असिरिव धारायुक्तः पुच्छोऽस्य । शिशुमारे जल
असिपुत्रिका स्त्री० असेः पुत्रीव स्वार्थे कन् ह्रस्वे अत
इत्त्वम् । छुरिकायाम् । कनभावे असिपुत्रीत्यप्यत्र ।
असिमेदस् पु०असिरिव तीक्ष्णः मेदो निर्यासो यस्य। विट्खदिरे
असिहेति पु० असिर्हेतिः साधनमस्य । खड्गेन युद्धकर्त्तरि ।
असु पु० अस्यते क्षिप्यते अस-उ । चित्ते। कर्त्तरि उ । तापे।
करणे उ । पञ्चवृत्तिषु वायुभेदेषु पु०बहु० । [त्रि०
असुख न०विरोधे न०त०। सुखविरोधिनि दुःखे। न०ब०। तद्वति
असुधारण न० असूनां प्राणादिपञ्चवायुवृत्तीनां धारणम् ।
जीवने । [उर । सुरविरोधिनि दैत्ये । रात्रौ स्त्री०।
असुर पु० अस-दीप्तौ उर । सूर्य्ये । अस्यति क्षिपति देवान्

असुररिपु पु० असुराणां रिपुः । दानवशत्रौ विष्णौ ।
असुरसा स्त्री० न सुष्ठु रसो यस्याः ५ब० । (वावुइतुलसी)
वर्व्वरीवृक्षे तस्या अतिसुरसत्वात् ।
असूयक त्रि० असूञ् कण्ड्वादि यक्-ण्वुल् । गुणेषु दोषा-
रोपणशीले । [रोपणे ।
असूया स्त्री० असूञ्-यकि अ,स्त्रीत्वात् टाप् । गुणेषु दोषा
असूर्त्त(च)ण न० सुर्त्त-ल्युट् रे परे दीर्घः नास्ति सूर्त्तण
मनादरो यस्मात् न०ब०। पाठान्तरे असूनामुत्तणं तामो-
यस्मात् अनादरे। [त्नगुप्ते सूर्य्यादर्शिनि राजदारादौ।
असूर्य्यम्पश्य त्रि०सूर्य्यमपि न पश्यति दृश-खश् मुम् च । अत्य-
असृक्कर पु० असृजं शोणितं करोति कृ-ट । शरीरस्थे रस-
धातौ, अन्नादेर्गलितस्य प्रथमं रसरूपता, रसस्य रक्त-
रूपतेति वैद्यके प्रसिद्धम् । [त्नधि ।
असृग्धरा स्त्री० असृजं धरति धृ-अच् । शोणितधारिण्यां
असृज न० न सृज्यते इतररागवत् संसृज्यते सदृक्त्वात् न+
सृज् क्विन्, अस्यते क्षिप्यते इतस्ततो नाडीभिः अस
ऋजि वा । रक्ते, कुङ्कुमे, विष्कुम्भावधिके षोडशे योगे ।
असेचनक त्रि० न सिच्यते तृप्यते मनोऽत्र सिच-ल्युट् संज्ञायां
कन् । अत्यन्तप्रियदर्शने यद्दर्शनान्मनो न तृप्यति ।
अस्त पु० अस्यन्ते सूर्य्यकिरणा यत्र आधारे क्त । पश्चिमाचले,
कर्म्मणि क्त । क्षिप्ते अवसिते च त्रि० । स्त्वौ ज्योति-
षोक्ते लग्नात् सप्तमे स्थाने च न० । भावे क्त । अवसाने
क्षेपे च न० । [निर्वाणमोचे ।
अस्तक पु० अस्तं अपुनरावृत्तिम् अवसानं वा करोति कृ-ड ।
अस्तम् अव्य० अस-तमि । नाशे, अदर्शने च ।
अस्तमन न० मननं मनःज्ञान अस्तत्वेन मनोज्ञानं यत्र । सूर्य्या-
देरदर्शनसाधने भूगोलकच्छया तिरोधाने, "तिरोधा-
नञ्च यत्रेति तदेवास्तमनं रवेः । नैवास्तमनमर्कस्य नोदयः
सर्व्वदासतः इति ज्योतिषोक्तेः तत्काले च ।
अस्तमय पु०अस्तोमीयते ज्ञायते यत्र मिन्-अच् । प्रलयादौ,
सूर्य्यस्यातिप्रत्यासत्त्या प्रकाशाभावेनान्यग्रहाणामस्तत्वं वि-
योगे चोदयः "रविणास्तमयोयोगो वियोगस्तूदयो भवेदि-
त्युक्तेः अन्यग्रहाणां रवियोगे च। [माचले अस्तगिरौ।
अस्ताचल पु० अस्यन्ते किरणा यत्र आधारे क्त कर्म्म०। पश्चि-
अस्ति अव्य० अस्-श्तिप् । स्थितौ, विद्यमानतायाञ्च "अस्ति
नास्ति न जानातीत्या'दि ।
अस्तु अव्य० अस् दीप्तौ तुन् । अनुज्ञायां, पीडायाम् प्रतिक्षेपे
असूयायाम्, प्रकर्षे, अङ्गीकारे, प्रशंसायाम्, लक्षणे, असूया-

पूर्व्वकाङ्गीकारे च । [संहतसन्धिन्ने त्रि० ।

**अस्त्यान** न०स्त्यै क्त न०त०। निन्दायाम्, भर्त्सने च । स्त्यानः

**अस्त्र** न०अस्यते क्षिप्यते अस-ष्ट्रन् । क्षेप्यास्त्रे शरादौ । करणे ष्ट्रन् । चापे, रिपुक्षेपणसाधने प्रहरणमात्रे खड्गादावपि ।

**अस्त्रकण्टक** पु० अस्त्रं कण्टकइव । वाणे तस्यापस्य कण्टकाकारत्वात् । [कित्-ण्वुल् इत०। अस्त्रव्रणरोगचिकित्सके ।

**अस्त्रचिकित्सक** पु० अस्त्रस्य अस्त्रजन्यव्रणस्य चिकित्सकः

**अस्त्रिन्** त्रि०अस्त्रं धनुरस्यास्ति इनि । धनुर्द्धरे,अस्त्रधारिमात्रे च

**अस्थान** न० न स्थानं तलस्पर्शो यस्य । अगाधे, मन्दस्थले, अनधिकारिणि च । [स्थाने धातुभेदे ।

**अस्थि** न० असते अस+क्थिन् । मांसाभ्यन्तरस्थे हाड़ इति

**अस्थिकृत्** पु० अस्थि-कृ-क्विप् । अस्थिकारके मेदधातौ ।

**अस्थिज** पु० अस्थ्नो जायते जन-ड । अस्थिपरिपाकाज्जाते तदन्तःस्थे मज्जधातौ । [शिवे ।

**अस्थिधन्वन्** पु०अस्थि अस्थिमयं धनुरस्य ब० अनङ् समा०।

**अस्थिपञ्जर** पु० अस्थि पञ्जर इव । शरीरस्यास्थिसञ्चये पिञ्जराकारे कङ्काले । [कुक्कुरे च ।

**अस्थिभक्ष** पु०अस्थि भक्षयति भक्ष-अण् । (हाड़गिला) पक्षिणि,

**अस्थिमालिन्** पु० अस्थिमयी मालाऽस्त्यस्य इनि । शिवे ।

**अस्थिर** त्रि० न०त० । स्थिरभिन्ने चञ्चले ।

**अस्थिविग्रह** पु० अत्यन्तकृशत्वात् अस्थिसारो विग्रहो देहो ऽस्य । शिवानुचरे भृङ्गरीटे । [ ग्रन्थिमति वृक्षे ।

**अस्थिशृङ्खला** स्त्री० अस्थ्नां शृङ्खलेव योजनहेतुः। (हाड़जोड़ा)

**अस्थिसंहार** पु०अस्थीनि संहरति योजयति सम्+हृ-अण् । (हाड़जोड़ा) ग्रन्थिमति वृक्षे ।

**अस्थिसार** पु० अस्थ्नः सारः रसपरिणामः । अस्थिजाते मज्जधातौ । अस्थ्येव सारो यस्य । रक्तमांसशून्ये त्रि० ।

**अस्नाविर** त्रि० नास्ति स्नावा शिरा यस्य इरच् । शिराव र्ज्जिते, स्थूलशरीरशून्ये च ।

**अस्निग्धदारु** न० अस्निग्धं रूक्षं दारु कर्म्म० । देवदारुभेदे

**अस्मद्** त्रि० अस-मदिक् । अहंप्रत्ययावलम्बनत्वेन वेद्ये प्रत्यगात्मनि, देहाभिमानिनि जीवे च ।

**अस्मि** अव्य०अस्-मिन् । अहमर्थे,"त्वामस्मि वच्मि विदुषा"मिति साहित्यदर्पणे । [पुरुषयोरभेदाभिमाने मोहे ।

**अस्मिता** स्त्री० अस्मि इत्यस्य भावः तल्। सांख्यसिद्धे प्रधान-

**अस्रखदिर** पु० अस्रवर्णः रक्तवर्णः खदिरः । विट्खदिरे ।

**अस्रज्** न० अस्रात् रुधिरात् रसपाकेन जायते । मांसे ।

**अस्रपत्रक** पु० अस्रमिव रक्तं पत्रमस्य संज्ञायाम् कन् । रक्त शाके भिण्डाख्ये । [पा-क । राक्षसे पु० ।

**अस्रपा** पु० अस्रं पिबति पा-क्विप् । (जोंक) जलौकसि ।

**अस्रफला** स्त्री० अस्रमिव लोहितं फलमस्याः । सल्लकीवृक्षे ।

**अस्रबिन्दुच्छदा** स्त्री०अस्रबिन्दुः रुधिरबिन्दुरिव छदो दलं यस्याः । लक्ष्मणानामके वृक्षे ।

**अस्रमातृका** स्त्री० अस्रस्य रुधिरस्य मातेव पोषिका संज्ञायां कन् । अशितान्नादेः रसरूपे देहस्थे प्रथमे धातौ ।

**अस्ररोधिनी** स्त्री० अस्रं क्षतजमाशु रुणद्धि रुध-णिनि । लज्जालुलतायाम् । [श्वेततुलसीवृक्षे ।

**अस्रार्ज्जक** पु० अस्रं रुधिरं सेवनेनार्ज्जयति अर्ज्ज-ण्वुल् ।

**अस्वच्छन्द** त्रि०नास्ति स्वस्य छन्द आयत्तता यस्य । पराधीने

**अस्वतन्त्र** त्रि० न स्वस्य तन्त्रः अधीनः । पराधीने ।

**अस्वन्त** न० असूनाम् अन्तो यस्मात् ५ब०। चूल्ल्यां तदग्नितापाद्धि प्राणक्षयः । अशुभे च । इत० । मरणे पु० ।

**अस्वप्न** पु० नास्ति स्वप्नोनिद्रा यस्य । देवे । निद्रारहिते त्रि०।

**अस्वर्ग्य** त्रि०स्वर्गाय हितं न भवति। स्वर्गहेतुधर्म्मविरोधिनि निषिद्धाचरणादौ । [गोक्षुरवृक्षे अतिक्रमाये ।

**अस्वादुकण्टक** पु० अस्वादुरमधुरः कण्टको यस्य । (गोखुरी)

**अस्वाध्याय** त्रि० न स्वाध्यायो वेदाध्ययनमस्य । वेदाध्ययनहीने "अस्वाध्यायं वषट्कारमि"ति स्मृतिः । न स्वाध्यायो यस्मिन् । अध्ययननिषिद्धकाले अष्टम्यादौ । अधीयते अधि +इङ्-घञ् अध्यायः स्वस्य स्ववर्णानुसारेण अध्यायः स्वाध्यायः"स्वाध्यायोऽध्येतव्य"इति श्रुतिः न०त०स्वाध्यायभिन्ने

**अस्वामिक** त्रि० न स्वामी यस्य । स्वामिरहिते "अटव्यः पर्व्वताः पुण्या नद्यस्तीर्थानि यानि च । सर्व्वाण्यस्वामिकान्याहु र्न हि तेषु परिग्रह" इति स्मृतिः ।

**अस्वैरिन्** पु० स्वैरी स्वाधीनः न०त० । परतन्त्रे ।

**अह** गतौ व्याप्तौ स्वा०पर०सक० सेट् । अह्नते आहिष्ट । [त ।

**अह** दीप्तौ चुरा० इदित् उभ०अक०सेट् । अंहयति ते आञ्जिहत्

**अह** अव्य०अह-अच् । प्रशंसायां, क्षेपे, वियोगे, नियोगे, आचारातिशये, अर्च्चने च । [गर्व्वयुक्ते ।

**अहंयु** त्रि० अहम् अहङ्कारोऽस्त्यस्य अहम्+यु अनादेशः ।

**अहङ्कार** पु० अहमिति कारो यस्मात् कृ-अपादाने घञ् । गर्व्वे "अहङ्कारश्च सर्व्वेषां पापबीजममङ्गलम् ब्रह्माण्डेषु च सर्व्वेषां गर्व्वपर्य्यन्तमुन्नति"रिति पुराणात् गर्व्वबीजत्वम् ।

**अहङ्कृत** त्रि० अहमिति कृतं येन । सगर्व्वे ।

**अहत** न० हन-क्त न०त० । "ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयात् पावनं सर्व्वकर्म्मसि"त्यु-

ज्ञालवणे वस्ते। हतभिन्ने त्रि०। [न+हा कनिन्। दिवसे।

**अहन्** न० न जहाति सर्वथा परिवर्त्तमानत्वात् न त्यजति।

**अहम्** अह-अम्। अहङ्कारार्थे, स्वात्मसम्बन्धितयाऽभिमाने च।

**अहमहमिका** स्त्री० अहमहंशब्दोऽस्त्यत्र वीप्सायां द्वित्वम् ठक् न ठिलोपः। परस्पराहङ्कारे अहमेवाग्रगण्य इत्येवं रूपायामन्योन्योक्तौ च।

**अहंपूर्व्विका** स्त्री० अहं पूर्व्वोऽहं पूर्व्व इत्यभिधानं यत्र। योधानां युयुत्साधिक्येन अहमेव पूर्व्वं यास्यामीत्यध्यवसाये।

**अहम्मति** स्त्री० अहमित्याकारा मतिः ज्ञानं मन+क्तिन्। अविद्यायाम् अन्यस्मिन्नन्यधर्म्मावभासके अज्ञाने।

**अहर्गण** पु० अह्नां गणः समूहः। त्रिंशद्दिनात्मके मासे। ज्योतिषप्रसिद्धे ग्रहाणां स्पष्टतासाधनार्थमा सृष्टेः वर्त्तमान-दिनपर्य्यन्ते दिनसमूहे च।

**अहर्दिव** न० अहनि च दिवा च नि०। प्रतिदिने।

**अहर्पति** पु० अह्नां पतिः। सूर्य्ये, अहर्नाथादयोऽप्यत्र।

**अहर्मुख** पु० अह्नोमुखमादिभागः। प्रत्यूषे। [स्त्री०।

**अहल्य** त्रि० हलेन न कृष्टं। हलाकृष्टे क्षेत्रे। गौतमर्षिपत्न्यां

**अहस्कर** पु० अहः करोति कृ-ट कस्कादित्वात् सत्वम्। दिवाकरे सूर्य्ये, अर्कवृक्षे च। [सूर्य्ये, अर्कवृक्षे च।

**अहस्पति** पु० अहः पतिः इत० कस्कादित्वात् सत्वम्।

**अहह** अव्य० अहं जहाति अहम्+हा-क पृषो०। सम्बोधने आश्चर्य्ये, खेदे, क्लेशे, प्रकर्षे च। [च त्रि०।

**अहार्य्य** पु० हृ-ण्यत् न०त०। पर्व्वते। हर्त्तुमशक्ये, अभेद्ये

**अहि** पु० आहन्ति आ+हन+डिन् टिलोपः आङो ह्रस्वश्च। सर्पे, वृत्रासुरे, सूर्य्ये, धातुभेदे सीसके, राहौ, पथिके, खले, वप्रे, सर्पस्वामिके अश्लेषानक्षत्रे च।

**अहिंसा** स्त्री० हिन्स-अङ् न०त०। वाङ्मनःकायैः पर-पीड़ाभावे, प्राणिपीडानिवृत्तौ, अशास्त्रीयप्राणिपीडनाभावे च "अहिंसा परमो धर्म्म" इति स्मृतिः।

**अहिका** स्त्री० अहिरिव कायति प्रकाशते दुराक्रमत्वात्। शाल्मलिवृक्षे। [नगरीभेदे स्त्री०।

**अहिच्छत्र** पु०अहेः फणाकारः छत्रमाच्छादकः। मेषशृङ्गीवृक्षे,

**अहिजित्** पु० अहिं सर्पं वृत्रासुरं वा जितवान् जि-क्विप् तुक् च। विष्णौ, इन्द्रे च। [जिह्वाख्यलतायाम्।

**अहिजिह्वा** स्त्री० अहेर्जिह्वेव तदाकारशिखत्वात्। नाग-

**अहित** पु०। न०त०। शत्रौ। पथ्यभिन्ने त्रि०।

**अहितुण्डिक** पु०अहेस्तुण्डं मुखं तेन दीव्यति ठन्। व्याल-ग्राहिणि, सर्पखेलके च।

**अहिद्विष्** पु० अहिं सर्पं वृत्रासुरं वा द्विष्टवान् द्विष-भूते क्विप्। गरुड़े, इन्द्रे, मयूरे, नकुले विष्णौ च।

**अहिनिर्लयनी** स्त्री०अहिर्निर्लीयतेऽस्याम् निर्+ली-ल्युट्। (खोलस) इति ख्याते सर्पनिर्म्मोके।

**अहिपुत्रक** पु०अहेः पुत्रः क्षुद्रसर्प इव कायति प्रकाशते कै-क। क्षुद्रसर्पाकारे नौकाविशेषे।

**अहिफेन** पुः अहेः फेनः गरलमिव तीक्ष्णगुणत्वात्। आफिङ् इति ख्याते द्रव्यभेदे। [उत्तरभाद्रपदनक्षत्रे च।

**अहिवुध्न** पु० अहेरिव वुध्नो मूलं यस्य। रुद्रभेदे, तद्देवताके

**अहिभय** न० अहेः, स्वहस्तत्वात् आवृताकारत्वाच्च अहि-तुल्यात् स्वपक्षाच्च भयं भी-अच्। सर्पभये राज्ञां स्वपक्ष-जनिते भये च। [भयनाशिकायाम् भूम्यामलक्याम्।

**अहिभयदा** स्त्री अहिभयं दाति खण्डयति दो-क। सर्प

**अहिभुज्** पु० अहिं भुङ्क्ते क्विप्। गरुड़े, मयूरे, नकुले च।

**अहिमर्द्दनी** स्त्री० अहिर्मर्द्द्यतेऽनया मृद-ल्युट्। गन्धना-कुलीनामलतायाम्।

**अहिमार** पु० अहिं मारयति मृ-णिच्-अण्। अरिमेदकवृक्षे।

**अहिमेदक** पु० अहिं मेदयति स्पर्शमात्रेण गलयति मारयति भिद-णिच्-ण्वुल्। अरिमेदकवृक्षे। [ताम्बूल्याम्।

**अहिलता** स्त्री० अहिलोकस्य पातालस्य लता शाक०त०।

**अहीरणि** पु० अहीन् ईरयति दूरीकरोति ईर-अनि। द्वि-मुखसर्पे तद्दर्शनाद्भीतरे सर्पाः पलायन्ते। [विदपाठे।

**अहुत** पु० नास्ति हुतं हवनं यत्र। धर्म्मसाधनत्वेऽपि अहोमे

**अहे** अव्य-अह-ए। क्षेपे, नियोगे च।

**अहेरु** पु० न हिनोति हि-रु न०त०। शतमूल्याम्।

**अहैतुक** त्रि० हेतुं प्रयोजनमुद्दिश्य कृतं हैतुकं न०त०। फलाभिसन्धानरहिते, कापट्यरहिते च।

**अहो** अव्य० न+हा-डो। शोके, धिगर्थे, विषादे, दयायां, सम्बोधने, विस्मये, प्रशंसायाम्, वितर्के, असूयायाञ्च।

**अहोरात्र** पु० अहश्च रात्रिश्च टच् समा०। सूर्य्योदयद्वय-मध्यवर्त्तिकाले षष्टिदण्डात्मके मानुषे दिने पैत्रादिमानन्तु इहदभिधाने। [अनुकम्पायाञ्च।

**अहोवत** अव्य० अहो च वत च द्व०। खेदे, सम्बोधने,

**अह्नाय** अव्य०ह्नु-घञ् वृद्धिः पृषो० तस्य यत्वं न०त०। शीघ्रे।

## आ

**आ** अव्य० आप् क्विप् पृषो० पलोपः। वाक्ये (वाक्यस्यान्य-थात्वद्योतने) पूर्व्वमेवं मंस्या इदानीमेवमिति प्रतिपादनपरे

स्मृतौ (आ एवं मन्यसे इति स्मृतस्यान्यथापादने) अनु-कम्पायाम्। समुच्चये, अङ्गीकारे, ईषदर्थे क्रियायोगे, सीमायां व्याप्तौ च। वाक्यस्मृतिभिन्नेऽस्य ङित्त्वमिच्छन्ति

**आकम्पित** त्रि॰ आ+कपि-चलने क्त। कम्पयुक्ते,ईषत्कम्पिते च

**आकर** पु॰ आकुर्व्वन्त्यत्र कुर्व्वन्ति व्यवहारमत्र वा कृ-अच्। समूहे, श्रेष्ठे च। आकीर्य्यन्ते धातवोऽत्र कॄ-अप्। रत्ना-द्युत्पत्तिस्थाने। [आकरे करग्रहणार्थं नियुक्ते।

**आकरिक** त्रि॰ आकरे रत्नाद्युत्पत्तिस्थाने नियुक्तः ठक्।

**आकर्ष** पु॰ आकृष्यते विषयान्तरतोऽनेन आ+कृष-घञ्। पाशके, शारिफलके, द्यूते,इन्द्रिये धन्विनो धनुरभ्यासे च। भावे घञि। आकर्षणे। आधारे घञि। निकषे उपले। खलादिगतं धान्यमाकृष्यतेऽनेन करणे घञि। अङ्कुशाकारे आकुड़ा इति ख्याते काष्ठभेदे।

**आकर्षिक** पु॰ आकर्षति सन्निकर्षस्थं लौहं आ+कृष-ण्वुल्। (चुम्बक) इति ख्याते अयस्कान्ते। आकर्षणकर्त्तरि त्रि॰।

**आकर्षणी** स्त्री॰ आकृष्यतेऽनया आ+कृष-ल्युट् टित्वात् ङीप्। उच्चस्थपुष्पाद्याहरणार्थे (आङुशी) यष्ठिकाभेदे।

**आकलन** न॰आ+कल-ल्युट्। आकाङ्क्षायाम् गणनेऽनुसन्धाने च

**आकल्प** पु॰ आ+कृप णिच्-घञ्। वेशरचनायाम्, भूषणे च कल्पपर्य्यन्ते अव्य॰। आकल्पं नरकं भुङ्क्ते इति स्मृतिः।

**आकल्पक** पु॰ आकल्पयति अन्यस्यान्यथात्वं कल्पयति आ+कृप-णिच्-ण्वुल्। अज्ञाने, औत्सुक्ये, हर्षे च।

**आकष** पु॰ आकष्यते यत्र कष-अच्। स्वर्णादिकषणसाधने (कोष्टि) प्रस्तरभेदे। [भवार्थे ठक्। अकस्माद्भवे।

**आकस्मिक** त्रि॰ अकस्मात् कारणसम्पत्तिं विनापि भवति

**आकाङ्क्षा** स्त्री॰ आ+काङ्क्ष-अङ्। अभिलाषे, न्यायमते वाक्यार्थज्ञानहेतौ यत्पदं विना यत्पदस्यानन्वयस्तत्पदे तत्पदवत्त्वरूपे, संबन्धे च।

**आकाय** पु॰ आचीयते यस्मिन् आ+चि यत् नि॰। निवासे।

**आकार** पु॰ आ+कृ-घञ्। मूर्त्तौ, अवयवसंस्थानविशेषे च। आकार्य्यते आविष्कार्य्यते हृद्गतोभावोऽनेन आ-कृ-णिच् करणे घञ्। हृद्गतभावावेदके मुखप्रसादवैवर्ण्यरूपे प्रीत्य-प्रीतिसूचके देहचेष्टने। भावे घञ्। हृद्गते भावे, इङ्गिते च

**आकारगुप्ति** स्त्री॰ गुप-क्तिन् आकारस्य हृद्गतभावस्य गुप्ति गोपनम्। रत्यादिजनितमुखप्रसादस्य भयजनितविषादा-देश्च गोपने। [आह्वाने। युच् स्त्रीत्वात् टाप्।

**आकारण** न॰ स्त्री॰ आ+कृ-णिच् ल्युट्, युच् वा।

**आकालिक** त्रि॰ अकाले भवं ठञ्। असमयोत्पन्ने वस्तुनि।

स्त्रियां ङीप् 'आलिकीं वीक्ष्य मधुप्रवृत्ति'मिति कुमारः। समानकालौ आद्यन्तौ यस्य समानकालस्य अकालादेशः इकञ् च नि॰। आशुविनाशिनि, आद्यन्तयोरभावात्, पूर्व्वदिवसे यत्समये उत्पत्तिः परेद्युस्तत्समये एव नश्वरे, "आकालिकमनध्यायमेतेष्विति" मनुः आशुविनाशित्वात् विद्युति स्त्री॰।

**आकाश** पु॰न॰ समन्तात् काश्यते आ+काश-अच्। गगने।

**आकाशदीप** पु॰आकाशे दीयमानो दीपः शा॰क॰। "तुला-यां तिलतैलेन सायं सन्ध्यासमागमे। आकाशदीपं यो दद्यादित्युक्तलक्षणे दीपभेदे। [(पाना) कुम्भिकायाम्।

**आकाशमूली** स्त्री॰ आकाशे भूमिशून्यदेशे मूलमस्याः।

**आकाशरक्षिन्** पु॰ आकाशे अत्युच्चप्राचीरोपरिस्थितः सन् रक्षति। दुर्गवहिःप्राचीरोपरिस्थिते रक्षके।

**आकाशवल्ली** स्त्री॰आकाशस्य वल्ली शाखेव अत्युच्चशिखत्वात्। अमरबेल इति ख्यातायां लतायाम्।

**आकाशवाणी** स्त्री॰ आकाशे भवा वाणी। अदृश्योत्पा-दकपुरुषत्वेनाकाशादिवोत्पन्नायां वाचि।

**आकीर्ण** त्रि॰आ+कॄ-क्त। व्याप्ते, विक्षिप्ते च। [सम्पादने च

**आकुञ्चन** न॰ आ+कुचि-ल्युट्। सङ्कोचे, प्रसारितस्य संक्षिप्तत्व

**आकुञ्चित** त्रि॰ आ+कुचि-क्त। आभुग्ने सङ्कोचिते च।

**आकुल** त्रि॰ आ+कुल-क। व्याकुले। [अत्यन्ताकुले च।

**आकुलाकुल** त्रि॰ आकुल+प्रकारे द्वित्वम्। आकुलप्रकारे,

**आकूत** न॰ आ+कू भावे क्त। आशये अभिप्राये। [रूपे च।

**आकृति** स्त्री॰ आ+कृ-क्तिन्। आकारे,अवयवसंस्थाने,जातौ,

**आकृतिच्छत्रा** स्त्री॰छादयति छद-णिच् कर्त्तरि ष्ट्रन् ह्रस्वः २त॰। (घोषा) घोषातकीलतायाम्।

**आकेकरा** स्त्री॰ "दृष्टिराकेकरा किञ्चित्स्फुटापाङ्गे प्रसा-रिता। मीलितार्द्धा पुरालोके ताराव्यावर्त्तनोत्तरे"त्युक्त-लक्षणे दृष्टिभेदे पारिभाषिकम्।

**आक्रन्द** पु॰आ+क्रन्द-घञ्। चारावे रोदने, आह्वाने, शब्दे च। कर्म्मणि घञ्। मित्रे, भ्रातरि च। आधारे घञ्। दारुणे युद्धे, दुःखिनां रोदनस्थाने च। आक्रन्दयति अच्। स्वदेशाक्रमणमाचरतः पार्ष्णिग्राहस्य प्रयोजके तत्परवर्त्तिनि नृपे। [आक्रमणमप्यत्र न॰।

**आक्रम** पु॰आ+क्रम-घञ् अवृद्धिः। बलेनातिक्रमणे। ल्युट्।

**आक्रान्त** त्रि॰ आ+क्रम-क्त। कृताक्रमणे अभिभूते व्याप्ते च।

**आक्रीड** पु॰आक्रीडत्यत्र क्रीड-घञ्। क्रीड़ास्थाने उद्यानादौ

**आक्रोश** पु॰ आ+क्रुश-घञ्। विरुद्धचिन्तने,शापे,निन्दायाञ्च

ल्युट् आक्रोशनमप्यत्र न०। [पाशक्रीड़या जाते वैरे।

**आक्षद्यूतिक** न० अक्षद्यूतेन पाशक्रीड़या निर्वृत्तम् ठक्।

**आक्षपाटिक** पु० अक्षपटे क्रीडास्थाने व्यवहारस्थाने वा नियुक्तः ठक्। अक्षदर्शके, व्यवहाराध्यक्षे प्राड्विवेके च।

**आक्षार** पु० आ+क्षर-णिच्-घञ्। अगम्यागमनं कृतं त्वयेति पुरुषं प्रति, अगम्यगमनं त्वया कृतमिति स्त्रियं च प्रतिदूषणे। ल्युट् आक्षारणमप्यत्र न०। युच् टाप्। अत्रार्थे।

**आक्षारित** त्रि० आ+क्षर-णिच्-क्त। आक्षारोमैथुनविषयापवादस्तेन दूषिते।

**आक्षिक** पु० अक्षमिन्द्रियं व्याप्नोति तर्पकत्वात्। रञ्जकवृक्षे।

**आक्षीव** पु० आ+क्षीव-णिच्-अच्। शोभाञ्जनवृक्षे। आ+क्षीव-क्त नि०। मत्ते।

**आक्षेप** पु० आ+क्षिप-घञ्। भर्त्सने, अपवादे, आकर्षणे, धनादिन्यासरूपे निक्षेपे" अर्थालङ्कारभेदे च सा०१०द०।

**आक्षेपक** त्रि० आ+क्षिप-ण्वुल्। निन्दाकारके। "यदा तु धमनीः सर्व्वाः कुपितोऽभ्येति मारुतः। तदा क्षिपत्याशु मुहुर्मुहुर्देहं नभश्वरः। मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृत, इत्युक्तलक्षणे वातरोगभेदे च।

**आक्षोड़** पु० अक्ष-ओड़ स्वार्थे अण्। शैलपीलुवृक्षे आखरोट इति ख्याते। क्षोट। आक्षोटोऽप्यत्र। [नोऽप्यत्र।

**आख** पु० आखनत्यनेन आ+खन-ड। खनित्रे। व। आख-

**आखण्डल** पु० आखण्डयति भेदयति पर्व्वतान् आ+खडि-डलच्। इन्द्रे। [मूषिके च। खननकर्त्तरि त्रि०।

**आखनिक** पु० आ+खन-कर्त्तरि इकन्। चौरे, शूकरे,

**आखनिकवक** पु० आ+खन-करणे इकवक। खनित्रे। डर। आखरोऽप्यत्र।

**आखु** पु० आ+खन-डु। मूषिके, चौरे, शूकरे च। कर्म्मणि डु। देवताडवृक्षे। "विभवे सति नैवात्ति न ददाति जुहोति न। तमाहुराखु"मित्युक्तलक्षणे कृपणे च।

**आखुकर्णी** स्त्री० आखोः मूषिकस्य कर्ण इव पर्णमस्याः। (उन्दुरकाणी) मूषिककर्णतुल्यपर्णवत्यां लतायाम्। [गणेशे।

**आखुग** पु० आखुना मूषिकेण गच्छति। गम-ड। मूषिकवाहने

**आखुपर्णिका** स्त्री० आखोः कर्ण इव पर्णमस्याः ङीप् स्वार्थे कन् अतइत्त्वम्। (उन्दुरकाणी) इति ख्यातायां लतायाम्।

**आखुभुज्** पु० आखुं भुङ्क्ते भुज-क्विन्। मूषिकभक्षके विड़ाले

**आखुविषहा** स्त्री० आखुविषं मूषिकविषं हन्ति हन-ह। मूषिकविषहरे देवताडवृक्षे, देवतालीलतायाञ्च।

**आखेट** पु० आखिद्यन्ते त्रास्यन्ते प्राणिनोऽत्र आ+खिट-घञ्। प्राणित्रासदायां मृगयायाम्। स्वार्थे कन् आखेटकोऽप्यत्र।

**आखेटिक** पु० आखेटे कुशलः ठक्। मृगयाकुशले कुक्कुरे।

**आखोट** पु० आखः खनित्रमिव छटानि पर्णान्यस्य। आखरोट इति ख्याते शैलपीलौ। [च। भावे अङ्। कथने।

**आख्या** स्त्री० आख्यायतेऽनया आ+ख्या-अङ्। संज्ञायां, नाम्नि

**आख्यात** त्रि० आ+ख्या-क्त। कथिते, व्याख्याते, व्याकरण प्रसिद्धे तिङन्ते पदे च "क्रियाप्रधानमाख्यातमि"ति यास्कः।

**आख्यातृ** त्रि० आ+ख्या-तृच्। कथनकर्त्तरि। पाठयितरि "आख्यातोपयोगे" इति पाणिनिः।

**आख्यान** न० आ+ख्या+ल्युट्। प्रसिद्धेतिवृत्तकथने यथा अमृतमन्थनाद्युपाख्यानम्।

**आख्यायिका** स्त्री० आ+ख्या-ण्वुल् कापि अतइत्त्वम्। विदितवृत्तान्तार्थायां कथायाम्, गद्यपद्यप्रबन्धे च। कथके त्रि०।

**आगत** त्रि० आ+गम-क्त। आयाते, उपस्थिते, प्राप्ते च। भावे क्त। आगमने न०।

**आगन्तु** त्रि० आ+गम-तुन्। अनियतस्थायिनि अतिथौ, आगमनशीले च। स्वार्थे कन्। आगन्तुकोऽप्यत्र।

**आगम** न० "आगतं शिववक्त्रेभ्यो गतञ्च गिरिजाश्रुतौ। मतञ्च वासुदेवस्य तस्मादागममुच्यते" इत्युक्तलक्षणे "सृष्टिश्च प्रलयश्चैव देवानां च तथार्च्चनम्। साधनञ्चैव सर्व्वेषां पुरश्चरणमेवच। षट्कर्म्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदोविदु"रित्युक्तलक्षणे च तन्त्रशास्त्रे। "सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र च। आगमं शास्त्रमाप्तानामित्युक्तलक्षणे शास्त्रमात्रे च। भावे घञ् अवृद्धिः उपदेशे आगतौ च पु०। आगम्यते ज्ञायतेऽनेन करणे घञ्। व्यवहारे सन्दिग्धार्थसाधके पत्रलेख्यादौ। आगच्छति प्रकृतिप्रत्ययानुपघातेन प्राप्नोति अच्। व्याकरणप्रसिद्धे प्रकृतिप्रत्ययानुपघातेन तन्मध्ये आगन्तरि इडादौ।

**आगस्** न० आ+इण्-असुन् इणः गादेशः। अपराधे, पापे च।

**आगामिन्** त्रि० आ+गम-णिनि। आगन्तुके, प्रवासिनि। भविष्यति काले, तद्वृत्तौ च। [कृ-अण् वा। गृहे।

**आगार** न० आ+गृ-कर्म्मणि घञ्, आगच्छति आग+आ+

**आगू** स्त्री० आ+गम-क्विप् मलोपे ऊकारादेशः। इदं कर्त्तव्यमेवेत्यङ्गीकारे प्रतिज्ञायाम् च।

**आग्नीध्र** न० अग्निमिन्धे क्विप् नलोपः अग्नीध् होता ततः स्थानार्थे रण्। होतुर्गृहे, मनुवंश्ये नृपभेदे च।

**आग्नेय** न० अग्निर्देवतास्य ढक्। स्वर्णे, घृते च। इदमर्थेऽणि। रक्तवर्णे। "अग्निनोक्तं पुराणं यदाग्नेयं वेदसम्मित"मित्यु-

लक्षणे महापुराणभेदे वह्निपुराणे च। अग्निदेवताके द्रव्यमात्रे त्रि०। दक्षिणपूर्व्वदिशि, अग्नियोषिति स्वाहायाम् अग्निदेवताकायामृचि च स्त्री० ङीप्।

**आग्रयण** न० अग्रहायणे नवशस्ये विहितं इष्टौ० इत्यादिः। नवशस्यनिमित्त के इष्टिरूपे यज्ञे।

**आग्रहायणिक** पु० आग्रहायणी पौर्णमासी यस्मिन् मासे ठक्। चान्द्रे मार्गशीर्षमासि। अण्। आग्रहायणोऽप्यत्र।

**आग्रहायणी** स्त्री० अग्रहायण्या मृगशिरसा नक्षत्रेण युक्ता पौर्णमासी अण् ङीप्। चान्द्रमार्गशीर्षमासपूर्णिमायां तस्या एव पूर्णिमाया मृगशिरसा योगसम्भवात्।

**आग्रहारिक** पु० अग्रस्य मेतोद्देश्यकस्य हारं हरणमर्हति ठक्। अग्रदानीये विप्रे। [पामार्गे।

**आघट्ट** पु० आघट्टयति रोगान् नाशयति अच्। रक्तवर्णेऽ-

**आघाट** पु० आघटयति रोगान् वियोजयति आ+घट-णिच्। घञ् वृद्धिः नि०। रक्तापमार्गे, सीमायाञ्च। [वधस्थाने।

**आघात** पु० आ+हन-घञ्। आहनने। आधारे घञ्।

**आघार** पु०आ+घृ-कर्मणि घञ्। घृते। भावे घञ्। होमादौ, मन्त्रविशेषेण देवताविशेषाय घृतदाने।

**आघूर्णित** त्रि० आ+घूर्ण-क्त। चालिते, भ्रामिते च।

**आघ्राण** न० आ+घ्रा-ल्युट्। गन्धग्रहणे, तृप्तौ च।

**आघ्रात(ण)** त्रि० आ+घ्रा-क्त वा तस्य नत्वम्। गृहीतगन्धे, आक्रान्ते च।

**आङ्गिक** त्रि० अङ्गेन अङ्गचालनेन निर्वृत्तं ठक्। भावव्यञ्जकेऽङ्गनिष्पन्ने भ्रूक्षेपादौ,अङ्गजातमात्रे च। मृदङ्गे वाद्ये न०

**आङ्गिरस** पु० अङ्गिरसो मुनेरपत्यम् अण्। वृहस्पतौ।

**आचमन** न० आ+चम-ल्युट्। विधिना जलप्राशने, मुखादिप्रक्षालने,वैधकर्म्मादौ जलप्राशनपूर्व्वकमष्टाङ्गस्पर्शरूपक्रियायाञ्च,विसरो इत्यभिधाने। [पतद्ग्रहे निष्ठीवनपात्रे।

**आचमनक** पु० आचमनस्य मुखप्रक्षालनस्य कं जलं यत्र।

**आचमनीय** न० आचमनाय मुखक्षालनाय हितम् छ, आ+चम-कर्म्मणि अनीयर् वा। मुखप्रक्षालनार्थे जले। [भक्ष्यमात्रे

**आचाम** पु० आ+चम-भावे घञ्। आचमने। कर्म्मणि घञ्।

**आचार** पु० आ+चर-घञ्। चरित्रे, मन्वाद्युक्ते स्नानाचमनादिव्यवहारे च। [(हेलञ्चा) हिलमोचिकालतायाम्।

**आचारी** स्त्री० सम्यक् चारः प्रसरणं यस्याः गौ० ङीष्।

**आचार्य्य** पु० "उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इति मनूक्तलक्षणे वेदाध्यापयितरि, "आम्नायतत्त्वविज्ञानाच्चराचरसमानतः। यमादियोगसिद्धत्वादाचार्य्य इति कथ्यते इत्युक्तलक्षणे मतप्रस्थापके शङ्कराचार्य्यादौ च। स्त्रियां टाप् आचार्य्या। आचार्य्यपत्न्यान्तु आचार्य्यानी। ङीप् न णत्वम्।

**आचार्य्यक** पु० आचार्य्यस्य कर्म्म कन्। आचार्य्यकर्त्तव्यकर्म्मणि

**आचित** त्रि० आ+चि-क्त। संगृहीते, व्याप्ते, ग्रथिते च। दशभारमितपरिमाणे,शकटपरिमाणे च पु०। [आच्छादिते

**आच्छन्न** त्रि० आ+छद-क्त। आवृते। छद-णिच्-क्त नि०।

**आच्छाद** पु०आच्छाद्यतेऽनेन छद-णिच्-करणे घञ्। वस्त्रे।

**आच्छादन** न० आ+छद-णिच्-ल्युट्। पिधानवस्त्रे।

**आच्छिन्न** त्रि० आ+छिद-बलादपहरणे क्त। बलाद्गृहीते।

**आच्छुरित** न० आ+छुर क्त। सशब्दहासे, नखाघातेन वाद्ये च। स्वार्थे क। आच्छुरितकमप्यत्र। [मृगयायाम्।

**आच्छोदन** न० आच्छिद्यन्तेऽत्र छिद-ल्युट् पृषो० इतओत्।

**आछ** आयामे (दीर्घविस्तारे)। इदित् भ्वादि० पर०अक० सेट्। आञ्छति आञ्छीत्।

**आज** न० आज्यतेऽनेन आ+अन्ज-यजर्थे क। घृते। अजस्येदम् अण्। छागमांसादौ त्रि०।

**आजक** न० अजानां समूहः वुञ्। छागसमूहे। [वृत्ते।

**आजन्मसुरभिपत्र** पु०आ जन्मनः सुरभि पत्रमस्य। मरुवक

**आजानेय** पु० "शक्तिभिर्भिन्नहृदयाः स्खलन्तश्च पदेपदे। आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः" इत्युक्तलक्षणे उत्तमाश्वे। अवयवार्थस्तु अजानेयशब्दे दृश्यः।

**आजि** स्त्री०अजन्त्यस्याम् अज-इण् न वीभावः। समरभूमौ, संग्रामे, आक्षेपे, क्षणे, मर्यादायाम् च।

**आजीव** पु०आजीव्यतेऽनेन आ+जीव-घञ्। आजीविकायाम् कर्त्तरि ण्वुल्। आजीविकाप्यत्र स्त्री०। [कर्म्मकारके।

**आजू** स्त्री० आजवति आ+जु-क्विप् दीर्घः। भृतिं विना

**आज्ञा** स्त्री० आ+ज्ञा-अङ्। निदेशे इदं क्रियतामिति शासने, ज्योतिषप्रसिद्धे लग्नात् दशमे स्थाने च।

**आज्य** न०आ अज्यते अन्ज-क्यप् नलोपः। घृते। [घृते च

**आज्यभाग** पु० आज्यस्य भागो यत्र। होमे आहुतिविशेषे,

**आञ्जनेय** पु०अञ्जना नाम वानरी तस्या अपत्यं ठक्।हनुमति

**आञ्जिनेय** पु० अञ्जन्यां भवः ठक्। (आजनाइ) कीटभेदे।

**आटविक** न० अटव्यां भवः ठक्। आरण्यके सैन्ये।

**आटि(डि)** पु० आ+अट्-इण्। शरारिपक्षिणि। आ+अड-इण्। आडिरप्यत्र,मत्स्यभेदे च। जातित्वेन स्त्रियां वा ङीष्

**आटोप** पु० आ+तुप घञ् पृषो० टत्वम्। दर्पे, संरम्भे, वातजन्ये उदरव्याधिभेदे च।

**आडम्बर** पु० आ+डबि-क्षेपे, अरन् । हर्षे, दर्पे, तूर्य्यस्वने, आरम्भे, संरम्भे, अक्षिलोम्नि, घनगर्ज्जिते, आयोजने च ।

**आढक** पु०न० आढौकते अच् पृषो० । सर्व्वतोदशाङ्गुलमाने, प्रस्थचतुष्टयमिते, पुष्कलचतुष्टयमितेँ च धान्यमानपात्रे, षट्पञ्चाशदधिकद्विशतमुष्टिपरिमाणे, द्रोणस्य चतुर्थभागे च ।

**आढकिक** त्रि० आढक+वापाद्यर्थे ठञ् । आढकमितस्य धान्यस्य वपनयोग्ये क्षेत्रे, तत्पाचके, तत्खादके च । ख । आढकीनोऽप्यत्र

**आढकी** स्त्री० आढौकते अच् पृषो० । (अड्हर) इति ख्याते शमीधान्यभेदे । [धनिनि च ।

**आढ्य** त्रि० आ+ध्यै-क पृषो० । युक्ते, विशिष्टे, सम्पन्ने,

**आणवीन** त्रि० अणुधान्यानां शर्षपादीनां भवनं क्षेत्रम् ख । (सुनाडाङा) शर्षपादिभवनयोग्ये क्षेत्रे । अञ् आणवमप्यत्र

**आणि** पु० स्त्री० आ+अण-इन् । रथचक्राग्रस्थे कीलके, कोटौ, सीम्नि च । [शब्दे, भये च ।

**आतङ्क** पु० आ+तकि-घञ् । रोगे, सन्तापे, सन्देहे, मुरज

**आतञ्चन** न० आ+तन्च-ल्युट् । वेगे, ज्ञापणे, आप्यायने, दुग्धादौ दध्यादिभावापादनाय अम्लद्रव्यप्रक्षेपे, निक्षेपे उपद्रवे, द्रवद्रव्ये प्रक्षेपणोचिते कठिनद्रव्यस्य चूर्णने, गलितस्वर्णादेर्द्रव्यान्तरयोगेन जारणे च ।

**आततायिन्** त्रि० आततं विस्तीर्णम् आयितुं शीलमस्य अत-णिनि । वधोद्यते "अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः" इत्युक्तप्रकारे ।

**आतप** पु० आ+तप-घ । प्रकाशे, उद्द्योते, सूर्य्याद्यालोके च ।

**आतपत्र** न० आतपात् त्रायते । त्रै-क । छत्रे । स्वार्थे कन् । आतपत्रकमप्यत्र ।

**आतपाभाव** पु० ६त० आतपस्याभावरूपायाम् छायायाम् ।

**आतर** पु० आतरत्यनेन तॄ-अप् । नद्यादेःतरणार्थं देये भाटकादौ

**आतर्पण** न० आ-तृप-ल्युट् । प्रीतौ । णिचः-प्रीणने मङ्गलालेपने

**आतायिन्** पु० आ+ताय-णिनि । चिल् इतिख्यातपक्षिभेदे

**आतिथेय** न० अतिथये इदं ढक् । अतिथिनिमित्तके भोजनादौ । तत्र साधुः ढक् । अतिथिसपर्य्यायां कुशले त्रि० ।

**आतिथ्य** पु० स्वार्थे ष्यञ् । अतिथौ, तस्य सेवादिकर्म्म ष्यञ् । अतिथिसेवादौ न० ।

**आतिवाहिक** त्रि० अतिवाहे इहलोकात् परलोकनयने नियुक्तः ठक् । मृतस्य सूक्ष्मदेहादेर्लोकान्तरप्रापणार्थमीश्वरनियुक्ते अर्चिरादिस्थानस्थिते देवभेदे । "अतिवाहिकास्तल्लिङ्गादि"ति वेदान्तसूत्रम् ।

**आतुर** त्रि० आ+तुर-क । रोगयुक्ते ।

**आतृप्य** पु० आतृप्यतेऽनेन आ+तृप-क्यप् । (आता) वृक्षविशेषे

**आतोद्य** न० आसमन्तात् तुद्यते आ+तुद-ण्यत् । वीणादौ चतुर्विधे वाद्ये । [शत्रुणाभिभूते, कार्य्ये च । आत्तगर्व्वोऽप्यत्र ।

**आत्तगन्ध** त्रि० आत्तोगृहीतोऽरिणा गन्धो गर्व्वो यस्य ।

**आत्मगुप्ता** स्त्री० आत्मनैव दुस्पर्शत्वेन गुप्ता इतरमर्दनेभ्यो रक्षिता । (आलकुशी) लताभेदे ।

**आत्मघातिन्** त्रि० "व्यापादयेत् वृथात्मानं स्वयं योऽग्न्युदकादिभिः । अवैधेनैव मार्गेण आत्मघाती स उच्यते" इत्युक्तलक्षणे आत्मनः स्वशरीरस्य प्राणेन सह वियोजयितरि जने

**आत्मघोष** पु० आत्मानं घोषयति स्वशब्दैः । काके, कुक्कुटे च, ताभ्यां (का का) (कु कु) ध्वनिनैवात्मनामैकदेशस्य घोषणात्

**आत्मज** पु० आत्मनो जायते, आत्मा वा जायते जन-ड । पुत्रे, आत्मा वै जायते पुत्र इति श्रुतिः आत्मजन्माप्यत्र । कन्यायां, मनोजन्यायां बुद्धौ च स्त्री० ।

**आत्मदर्श** पु० आत्मा स्वरूपं दृश्यतेऽत्र दृश-घञ् । दर्पणे ।

**आत्मन्** पु० आ+अत्-मनिन् । स्वरूपे, यत्ने, देहे, मनसि, धृतौ, बुद्धौ, अर्के, वह्नौ, वायौ, जीवे, ब्रह्मणि च ।

**आत्मबान्धव** पु० "आत्ममातुः स्वसुःपुत्रा आत्मपितुःस्वसुः सुताः आत्ममातुलपुत्राश्च विज्ञेयाह्यात्मबान्धवा इत्युक्तेषु ।

**आत्मभू** पु० आत्मना स्वयम्, आत्मनि मनसि वा भवति भू-क्विप् । चतुर्मुखे विधातरि, कामे च ।

**आत्ममूली** स्त्री० आत्मैव रक्षणे मूलमस्याः दुस्पर्शतयेतरमर्द्दनाभावेन स्वस्य स्वयं रक्षणात् । दुरालभालतायाम् ।

**आत्मम्भरि** त्रि० आत्मानं बिभर्त्ति ख मुम् च । स्वोदरमात्रपूरके

**आत्मयोनि** पु० आत्मैव योनिः कारणमस्य । हरौ, हरे, विधातरि मनसिजे मदने च । [आत्मनो रक्षणे ।

**आत्मरक्षा** स्त्री० आत्मनो रक्षा यस्याः । वृक्षभेदे । ६त० ।

**आत्महन्** पु० आत्मानं हतवान् हन-क्विप् । "येऽन्यथासन्तमात्मानमकर्त्तारं स्वयं प्रभुम् । कर्त्ता भोक्तेति मन्यन्ते तएवात्महनो जना, इत्युक्तलक्षणे आत्मनो याथार्थ्यज्ञानरहिते, अज्ञे, आत्मघातिनि च जने ।

**आत्माधीन** पु० आत्मनोऽधीनः । पुत्रे, श्यालके । प्राणाधारे च

**आत्माश्रय** पु० आत्मानमाश्रयति आ+श्रि-अच् । स्वस्य स्वापेक्षणरूपे तर्कदोषभेदे ।

**आत्मीय** त्रि० आत्मनोऽयं छ । आत्मसंबन्धिनि ।

**आत्मोद्भवा** स्त्री० आत्मनैवोद्भवति भू-अच् । माषपर्णीवृक्षे आत्मा उद्भवो यस्याः । कन्यायाम् । पुत्रे पु० ।

**आत्यन्तिक** त्रि०० अत्यन्त+भवार्थे ठक् । अतिशयेन जाते ।

**आत्ययिक** त्रि० अत्ययः नाशः प्रयोजनमस्य ठक्। नाशार्थे।
**आत्रेय** पु०अत्रेरपत्यं ढक्। अत्रिमुनिपुत्रे, देहस्थे रसधातौ च
**आत्रेयी** स्त्री० न सन्ति कर्मयोग्यानि त्रीणि दिनानि यस्याः डच् समा० सा अत्रा स्वार्थे ढञ्। ऋतुमत्याम्, नदीभेदे च। पुनः स्वार्थे कनि ह्रस्वे आत्रेयिकाप्यत्र।
**आथर्वण** न० अथर्वणा मुनिना दृष्टो वेदः अण्। तमधीते तत्र विहितं वा पुनरण्। अथर्ववेदज्ञे ब्राह्मणे, तद्वेदविहितेऽभिचारादिकर्मणि च। [पाठके विप्रे।
**आथर्वणिक** त्रि० अथर्वाणं वेदमधीते ठक्। अथर्ववेद-
**आदर** पु० आ+दृ-अप्। समादरे, सन्माने, आरम्भे च।
**आदर्श** पु० आदृश्यतेऽत्र दृश-घञ्। दर्पणे, टीकायां प्रतिरूपपुस्तके च। [ल्युट्। हस्तिवेषोपादाने स्त्री०।
**आदान** न० आ+दा-ल्युट्। ग्रहणे,अश्वाभरणे च। कर्मणि
**आदि** पु० आ प्रथमं दीयते गृह्यते आ+दा-कि। प्रथमे, प्राक् सत्तायाम्, कारणे, सामीप्ये, प्रकारे, अवयवे च।
**आदिकारण** न०आदि पूर्वं कारणं निमित्तम्। पूर्वनिमित्ते
**आदितेय** पु० अदितेरपत्यं ढक्। देवे।
**आदित्य** पु०अदितौ भवः ण्य। सूर्ये,देवे च। आदित्यमण्डलस्थे हिरण्मये विष्णौ, अर्कवृक्षे अदितिदेवताके पुनर्वसुनक्षत्रे च।
**आदित्यपत्र** पु० आदित्यस्य अर्कवृक्षस्य पत्रमिव पत्रमस्य। क्षुपभेदे। ६त० अर्कवृक्षपत्रे न०। [पुष्पे अर्कवृक्षे।
**आदित्यपुष्पिका** स्त्री० आदित्यवर्णं रक्तं पुष्पमस्याः। रक्त-
**आदिदेव** पु० आदौ दीव्यति स्वयं राजते। नारायणे, शिवे, आदिकारणे वेधसि च। [गर्भे नारायणे च।
**आदिपुरुष** पु०आदौ पुरि देहे वसति क। प्रथमजीवे हिरण्य-
**आदिम** त्रि० आदौ भवः मप्। आद्ये। [कार्ये।
**आदिमत्** त्रि० आदिः कारणं विद्यतेऽस्य मतुप्। सकारणे
**आदिवराह** पु०आद्योवराहः। विष्णौ तस्यादिवराहरूपत्वात्
**आदिष्ट** न० आ+दिश-भावे क्त। आज्ञायाम्, उपदेशे च। कर्मणि क्त। उपदिष्टे, व्याकरणप्रसिद्धे स्थानिजाते, यथा इकः स्थाने यण् आदिश्यते इति यणादिष्ट इत्युच्यते।
**आदीनव** पु० आ+दी-भावे क्त आदीनस्य वानम् वा-ड। दोषे, क्लेशे, दुर्दर्शे च।
**आदृत** त्रि० आ+दृ-क्त। पूजिते, सादरे, कृतादरे च।
**आदेश** पु० आ+दिश-भावे घञ्। आज्ञायाम्, शासने, उपदेशे च। कर्मणि घञ्। ज्योतिषशास्त्रोक्ते,फले,व्याकरणसिद्धे प्रकृतिप्रत्ययोपघातके कार्यभेदे (वर्णस्थाने वर्णान्तरोत्पत्तौ) च
**आदेष्टृ** त्रि० पु० आ+दिश-तृच्। ऋत्विजं प्रतिममेदमस्मा-दनार्थं कर्म क्रियतामित्यादेशकर्त्तरि यजमाने, आदेशकर्त्तमात्रे त्रि०। [द्रव्यमात्रे, भाष्ये न०।
**आद्य** त्रि० आदौ भवः यत्। प्रथमे। अद-ण्यत्। अदनीय-
**आद्यमाषक** पु० आदौ भवः आद्यं मुख्यं माप्यतेऽनेन करणे घञ् कर्म०। पञ्चगुञ्जापरिमाणे, माषा इति ख्याते माषकं सप्तलक्षणला इत्युक्तेराद्यत्वविशेषणम् तस्य कार्यविशेषोपयोगितया गौणत्वान्न मुख्यत्वम् अतएव ‘दशार्द्धगुञ्जं प्रवदन्ति माषमिति भास्कराचार्य्येण माषस्यपञ्चगुञ्जत्वमेवोक्तम्।
**आद्यून** त्रि० आदिना जनः। आ.दम्पूर्न्ये। आ+दिव-क्त अविजिगीषायां निष्ठातस्य नत्वम् ऊठ् च। (पेटुक) कर्म्मान्तराकाङ्क्षाविरहेण केवलमुदरपूरके।
**आधमन** न० आधीयते आ+धा-कमनन्। (बन्धकदाने) आधौ, योगाधमनविक्रीतमि'तिस्मृतिः। [परैरिति स्मृतिः।
**आधर्षित** त्रि०आ+धृष-क्त। न्यायेनाक्रान्ते,"मार्गेणाधर्षितः
**आधान** न० आ+धा-ल्युट्। आधौ, मन्त्रादिना वह्निस्थापने, "आधाने सोमपाने" चेति स्मृतिः। गर्भाधाने च।
**आधार** पु० आ+धृ-घञ्। अधिकरणे, आश्रये, व्याकरणप्रसिद्धे औपश्लेषिकवैषयिकाभिव्यापकाख्येऽधिकरणकारके, शस्यसम्पादनार्थं जलरोधनार्थे बन्धने इत्तसेकार्थं जलधारणार्थे आलवाले च। आधारबन्धप्रमुखैरिति रघुः।
**आधि** पु० आधीयते मनोऽत्र। आ+धा-कि। मानसदुःखे अत्याशायाम्, अधिष्ठाने,बन्धके, "आधौ प्रतिग्रहे क्रीते" इति स्मृतिः। व्यसने च। [प्रथिततायाम्।
**आधिक्य** न० अधिकस्य भावः ष्यञ्। अधिकतायाम् अति-
**आधिदैविक** त्रि०देवान् अग्निवाय्वादीन् अधिकृत्य निर्वृत्तम् अधि+देव-ठञ् द्विपदवृद्धिः। अतिवातादिहेतुजाते दुःखे।
**आधिपत्य** न० अधिपतेर्भावः ष्यञ्। प्रभुत्वे।
**आधिभौतिक** त्रि० भूतानि व्याघ्रसर्पादीन्यधिकृत्य जातम्। अधिभूत+ठञ् द्विपदवृद्धिः। व्याघ्रसर्पादिजनिते दुःखे।
**आधिवेदनिक** न० अधिवेदनकाले देयं ठञ्। अधिकं वेदनमधिवेदनं तत्र प्रथमविवाहात्परं द्वितीयविवाहकाले स्त्रियै देये धने। 'अधिविन्नस्त्रियै देयमाधिवेदनिकं समम्'इतिस्मृतिः
**आधुनिक** त्रि० अधुना भवः ठञ्। इदानीन्तने, नव्ये च।
**आधेय** त्रि० आ+धा-यत्। आश्रिते च उत्पाद्ये "आधेयशक्तियुक्तिः" भाष्यकारिका। [र्थेषु हस्तिपके।
**आधोरण** पु० आ+धोर-गतिचातुर्ये ल्यु। हस्तिगतिचातु-
**आध्मात** त्रि० आ+ध्मा-क्त। शब्दिते, दग्धे, वातरोगभावायाम् उदरस्फीततायाम्।

**आध्मान** पु० "आध्मानमिति जानीयाद्घोरं वातनिरोधज"-मित्युक्ते वातव्याधौ। आ+ध्मा-भावे ल्युट्। स्फीततायाम्। नलिकानामगन्धद्रव्ये स्त्री० ङीप्।

**आध्यात्मिक** त्रि० आत्मानं मनःशरीरादिकमधिकृत्य भवः ठञ्। शोकमोहज्वरादिरूपे दुःखे। [स्मरणे च।

**आध्यान** न० आ+ध्यै-ल्युट्। चिन्तायाम्, उत्कण्ठापूर्वक-

**आध्वर्यव** न० अध्वर्योः कर्म, भावो वा अञ्। यजुर्वेद-विहिते अध्वर्युसम्बन्धिनि कर्मणि, तद्भावे च।

**आन** पु० अन-घञ्। अन्तःस्थितस्य प्राणवायोर्नासिकयोर्बहिः

**आनक** पु० आनयति सोत्साहान् करोति अन-णिच् ण्वुल्। पटहे, मृदङ्गे, सशब्दमेघे च। उत्साहके त्रि०।

**आनकदुन्दुभि** पु० आनकः प्रोत्साहकः दुन्दुभिर्देववाद्य-विशेषो यस्य कृष्णजन्मोत्सवे तया वाद्यं तद्गृहे जातम्। कृष्णपितरि वसुदेवे। दुन्दुभिढक्कायां स्त्री० ङीप्।

**आनत** त्रि० आ+नम-क्त। कृतप्रणामे, अधोमुखे, विनयनते च

**आनति** स्त्री० आनमति प्रवणीभवत्यनया आ+नम-क्तिन्। सन्तोषे। भावे क्तिन्। नम्रीभावे, अधोभवने, नम्रतायाञ्च

**आनद्ध** न० आ+नह-क्त। चर्मणा बद्धमुखे पटहमुरजादौ वाद्ये, वेशभूषादिके च। ग्रथिते, व्याप्ते, बद्धे च त्रि०।

**आनन** न० आ अनित्यनेन आ+अन-ल्युट्। मुखे।

**आनन्तर्य्य** न० अनन्तरमेव चतुर्वर्णादित्वात् स्वार्थे ष्यञ्। अनन्तरे अव्यवहिते। अनन्तरस्य भावः ष्यञ्। अव्यवधाने

**आनन्त्य** न० अनन्त+भावे स्वार्थे वा ष्यञ्। बाहुल्ये "आन-न्त्यात् कुलधर्म्माणामि"ति स्मृतिः। देशकालाद्यपरिच्छिन्ने "तदानन्त्यं समश्नुते इति श्रुतिः। अनन्तं सुखमित्यर्थः।

**आनन्द** पु० आ+नन्द-घञ्। हर्षे, सुखे, दुःखाभावे, ब्रह्मणि च। आनन्दवति त्रि० सत्यज्ञानमानन्दं ब्रह्मेति श्रुतिः।

**आनन्दथु** पु० आ+नन्द-अथुच्। आनन्दे।

**आनन्दन** न० आ+नन्द-णिच्-ल्युट्। गमनागमनसमये कुशलप्रश्ने नानन्दोत्पादने।

**आनन्दमय** पु० आनन्देन प्रचुरः तत्प्रकृतवचने मयट्। जीवे, वेदान्तोक्ते सुषुप्तिधर्मचिणि प्राज्ञे च।

**आनन्दार्णव** पु० आनन्दसार्णव इव। परमेश्वरे "सोज्ञा-मृतविकोणस्थाः सौम्याः पापविवर्ज्जिताः आनन्दार्णवयो-गोऽयमित्युक्ते यात्रालग्नभेदे च। हृत०। अत्यन्तानन्दे।

**आनन्दि** पु० आ+नन्द-इन्। हर्षे, कौतुके च। कौशल्यानन्दि-वर्द्धनो राम इति रामायणम्।

**आनर्त्त** पु० आ+नृत्यन्त्यत्र आ+नृत-घञ्। नृत्यशालायाम् रसे, जले, द्वारकाधन्निकृष्टदेशे, तद्देशवासिनि च।

**आनाम्य** त्रि० आ+नम-णिच्-अभिभवे, यत्। अभिभवनीये

**आनाय** पु० आनयति मत्स्याननेन आ+नी-घञ्। जाले। भावे अच् आनयः। आनयने।

**आनाय्य** पु० आनाय्यते गार्हपत्यादानीय संस्क्रियतेऽसौ नी-ण्यत् आयादेशः। वैदिकप्रसिद्धे दक्षिणाग्नौ। [भेदे च

**आनाह** पु० आ+नह-घञ्। दैर्घ्ये विण्मूत्ररोधके वैद्यकोक्ते रोग-

**आनुपूर्व्वी** स्त्री० पर्व्वमनुक्रम्य अनुपूर्व्वं तस्य भावः ष्यञ् ततो वा ङीषि यलोपः। परिपाट्याम् मूलावधिके क्रमे ङीषभावपक्षे। आनुपूर्व्यमप्यत्र न०।

**आनुमानिक** त्रि० अनुमानेन प्राप्तः ठक्। अनुमानमात्रसिद्धे सांख्योक्ते प्रधाने "आनुमानिकमि"ति वेदान्तसूत्रम्।

**आनुश्रविक** पु० गुरुपाठादनुश्रूयते अनुश्रवो वेदस्तत्र विहितः ठक्। स्वर्गादिसाधनतया वेदविहिते कर्मसमूहे "दृष्टव-दानुश्रविक" इति साङ्ख्यकारिका।

**आनृत** त्रि० अनृतं शीलमस्य अण्। असत्यस्वभावे। [अक्रौर्य्ये च

**आनृशंस्य** न० नृशंसो घातुकः न०त० भावे ष्यञ्। दयायां,

**आन्तर** त्रि० अन्तर्मध्ये भवः अण्। आभ्यन्तरे। [सौसाहश्ये

**आन्तरतम्य** न० अन्तरतमस्य अत्यन्तसदृशस्य भावः ष्यञ्।

**आन्त्र** न० अमत्यनेन अम-ष्ट्रन् उपधादीर्घः। नाडीभेदे। अन्त्र स्वेदन् अण्। अन्त्रसम्बन्धिनि त्रि०। स्त्रियां ङीप्।

**आन्दोल** दोलने अद०चुरा० उभय०सक० सेट्। आन्दोलय-ति ते आन्दुदोलत् त। [अनुसन्धाने च।

**आन्दोलन** न० आन्दोल-ल्युट्। पुनःपुनर्दोलने, उच्छलने,

**आन्धसिक** त्रि० अन्धो भक्तं शिल्पमस्य ठक्। पाचके।

**आन्वयिक** त्रि० अन्वये प्रशस्तकुले भवः ठञ्। प्रशस्तकुलजाते

**आन्वाहिक** त्रि० अहनि अहनि अन्वहम् तत्र भवः ठञ्। प्रतिदिनसाध्ये पाकादौ।

**आन्वीक्षिकी** स्त्री० अनु वेदश्रवणानन्तरमीक्षा परीक्षणम-न्वीक्षा सा प्रयोजनमस्याः तत्र साधु वा ठञि ङीप्। तर्क-विद्यायाम् अध्यात्मविद्यायाञ्च। [भेदे पु०।

**आप** न० अपां समूहः अण्। अपां समूहे। आप अच् वसु-

**आपगा** स्त्री० आपं जलसमूहं गच्छति प्राप्नोति। नद्याम्।

**आपण** पु० न० आपणायन्ते विक्रीयन्तेऽत्र पण-घ। हट्टे, क्रयविक्रेयद्रव्यशालायाञ्च। भावे घ। क्रयविक्रयव्यवहारे पु०

**आपणिक** त्रि० आपणो व्यवहारोऽस्यास्ति ठन्। क्रयादि-कर्त्तरि वाणिजे। [प्रसङ्गरूपे तर्कदोषे च।

**आपत्ति** स्त्री० आ+पद-क्तिन्। आपदि, प्रापणे, अनिष्ट-

**आपद्** स्त्री॰ आ+पद-क्विप् । विपत्तौ ।
**आपन** न॰ आप-ल्युट् । प्राप्तौ, मरीचे च कर्मणि ल्युट् । क्लेशे
**आपन्न** त्रि॰ आ+पद क्त । विपद्ग्रस्ते, प्राप्ते च ।
**आपन्नसत्त्वा** स्त्री॰ आपन्नं सत्त्वं यया । गर्भवत्याम् ।
**आपमित्यक** न॰ अपमित्य परीवर्त्य निर्वृत्तम् अप+मे-क्त्वा ल्यप् ततोनिर्वृत्तेऽर्थे कक् कित्त्वात् वृद्धिः । तुल्यरूपद्रव्य विनिमयेन ग्रहणे । [नस्य तृतीयभागभवे पितृश्राद्धादौ
**आपराह्णिक** त्रि॰ अपराह्णे भवः ठञ् । त्रिधा विभक्तस्य दि-
**आपस्** न॰ आप-असुन् । जले, "आपोभिर्मार्ज्जना"मितिस्मृतिः "सर्व्वमापोमयं जगदि"ति देवीमाहात्म्यम् । [लतायाम् ।
**आपस्तम्भिनी** स्त्री॰ आपः स्तभ्नाति स्तम्भ-णिनि । शिङ्गियां
**आपाक** पु॰ आपच्यतेऽत्र आ+पच+घञ् । (पोयान्) कुम्भकारस्य मृत्पात्रपाकस्थाने । [घञ् । तत्काले, मार्गे च ।
**आपात** पु॰ आ+पत-भावे घञ् । सहसा पतने, । आधारे
**आपाततस्** अव्य॰ आपात+तसिल् । अनिश्चये विमेत्यर्थे "आपाततोयदर्थस्ये"ति साहित्यदर्पणे ।
**आपान** न॰ आ सम्भूय पिबन्त्यत्र । सुरापानार्थं सम्भूयोपवेशने, (चक्रे) मद्यपानसभायाञ्च ।
**आपानभूमि** स्त्री॰ आपानस्य भूमिः । सुरापानस्थाने ।
**आपिञ्जर** न॰ ईषत् पिञ्जरवर्णम् । स्वर्णे ।
**आपीड** पु॰ आ+पीड-अच् । शिखामाल्ये शिरोभूषणे, गृहबहिर्निःसृतकाष्ठे च । [पीते त्रि॰ ।
**आपीत** न॰ आपीयते आ+पा-क्त । माक्षिकधातौ । ईषत्-
**आपीन** न॰ आ+प्याय-क्त पीभावः तस्य नत्वम् । (मेड़) ऊधसि । कूपे पु॰ । ईषत्स्फीते त्रि॰ ।
**आपूपिक** न॰ अपूपानां पिष्टकानां समूहः ठक् । पिष्टकसमूहे पिष्टकसम्पादनेन जीव्यतीत्याद्यर्थे ठक् । पिष्टकाजीवे, तद्भक्षणकारके, तद्रचयितरि, तद्भक्षणशीले च त्रि॰ ।
**आपूप्य** पु॰ अपूपार्थं पिष्टःअत्र । सक्तुषु, गोधूमचूर्णादौ च । [च ।
**आपृच्छा** स्त्री॰ आ+प्रच्छ-अङ् । आलापे जिज्ञासायामाभाषणे
**आप्त** त्रि॰ आप-क्त । विश्वस्ते, प्राप्ते, लब्धे, सत्ये, रागद्वेषादिवर्ज्जिते, यथार्थोपदेष्टरि भ्रमादिशून्ये यथार्थज्ञातरि च ।
**आप्तकाम** त्रि॰ आप्तः प्राप्तः कामः कामनाविषयो येन । सम्पूर्णकामे नित्यतृप्ते । परमेश्वरे पु॰ ।
**आप्ति** स्त्री॰ आप-क्तिन् । संबन्धे, योगे, लाभे प्राप्तौ च ।
**आप्तोक्ति** स्त्री॰ आप्तस्य उक्तिः वच-क्तिन् । सन्दिग्धविषय निर्णयार्थं सिद्धान्तिवाक्ये, यथार्थवक्तृवाक्ये च ।
**आप्य** न॰ आप-ण्यत् । (कुड) कुष्ठद्रव्ये । कर्म्माङ्गभूते प्रयत्नादौ प्राप्तव्ये च त्रि॰ । अपां विकारः ष्यञ् । जलविकारे फेनादौ त्रि॰ । [ल्युट् । तर्पणे प्रीणने च । ल्यु । तत्कर्त्तरि त्रि॰ ।
**आप्यायन** न॰ आ+प्याय-ल्युट् । तृप्तौ, प्रीतौ च । णिच्-
**आप्रच्छन** न॰ आ+प्रच्छ-ल्युट् । आनन्दने गमनागमनसमये बन्धूनाम योन्यकुशलजिज्ञासयानन्दसम्पादने ।
**आप्रपद** अव्य॰ प्रपदं पादाग्रं तत्पर्य्यन्तम् अव्ययी॰ । पादाग्रपर्य्यन्ते
**आप्रपदीन** त्रि॰ आप्रपदं पादाग्रान्तं प्राप्नोति ख । पादाग्रान्तं लम्बमाने वस्त्रादौ । [जलानां सर्व्वतः समुच्छलने च ।
**आप्ल(प्ला)व** पु॰ आ+प्लु-घञ्-अप् वा । स्नाने । (छयलाप) ।
**आप्लुत** त्रि॰ आ+प्लु-क्त । स्नाते । भावे क्त । स्नाने न॰ ।
**आप्लुतव्रत** पु॰ आप्लुतं वेदाध्ययनानन्तरं स्नानं व्रतमस्यस्य । अधीतवेदे, अकृतगृहस्थाश्रमे ब्रह्मचारिभेदे स्नातके ।
**आबद्ध** न॰ आ सम्यक् बद्धम् बन्ध-भावे क्त । दृढबन्धने । आधारे क्त । प्रेम्णि । कर्म्मणि क्त । भूषणे । करणे क्त । योक्त्रे पु॰ । बद्धे आप्ते प्रतिरुद्धे च त्रि॰ ।
**आबन्ध** पु॰ आ+बन्ध-घञ् । दृढबन्धे, योक्त्रे च ।
**आबाधा** स्त्री॰ आ+बाध-अङ् । पीडायां क्लेशे च । लीलावत्यादौ प्रसिद्धे । त्रिकोणक्षेत्रे लम्बोभयपार्श्वस्थे क्षेत्रमध्ये रज्जुनिक्षेपाज्जायमाने भूखण्डे !
**आबिल** त्रि॰ आ+बिल भेदने, क । कलुषे, अस्वच्छे च ।
**आबुक** पु॰ आपनमाप् क्विप् आपमुत्तनोति उद्+तन-ड । नाट्योक्तौ भगिनीपतौ ।
**आभरण** न॰ आ+भृ-ल्युट् । भूषणे । [माने, वातरोगभेदे च ।
**आभा** स्त्री॰ आ+भा-अङ् । दीप्तौ, शोभायाम्, कान्तौ उप
**आभाषण** न॰ आ+भाष-ल्युट् । आलापे, परस्परकथने च
**आभाषित** त्रि॰ आ+भाष-क्त । अभिमुखीकृत्य कथिते ।
**आभास** पु॰ आ+भास-घञ् । प्रतिबिम्बे दीप्तौ, मन्यादेरादौ सङ्गतिदर्शनोत्थापने अवतारणे च ।
**आभास्वर** पु॰ आ+भास-वरच् । चतुःषष्टिमिते, द्वादशमिते वा गणदेवताभेदे । दीप्ते त्रि॰ । [पाण्डित्ये च ।
**आभिजात्य** न॰ अभिजातस्य भावः ष्यञ् । कौलीन्ये,
**आभीक्ष्ण** न॰ स्वार्थेऽण् । अत्यर्थे । महति त्रि॰ । क्रियाविशेषणत्वे न॰
**आभीक्ष्ण्य** न॰ अभीक्ष्णस्य भावः ष्यञ् । पौनःपुन्ये ।
**आभीर** पु॰ आ सम्यक् भियं राति रा-क । आहिर इतिख्याते ब्राह्मणादम्बष्ठायामुत्पन्ने वर्णसङ्करभेदे गोपे, देशभेदे च ।
**आभीरपल्लि(ल्ली)** स्त्री॰ आभीराणां पल्लिः । गोपग्रामे, पक्षे ङीप्
**आभील** न॰ आ समन्तात् भियं लाति आभी+ला+क । कष्टे महति, भयानके च त्रि॰ ।

**आभोग** पु० आ-भुज-भावे आधारे वा घञ् । वरुणस्य छत्रे परिपूर्णतायां, यत्ने, गानसमाप्तौ (भणिता) कविनामख्यापने च । [कर्म्मणि तद्वद्गार्थे कर्त्तव्ये श्राद्धे ।

**आभ्युदयिक** त्रि० अभ्युदयार्थं वृद्धर्थं वि हितं ठक् । चूड़ादि

**आम** त्रि० आ ईषत् अम्यते पच्यते आ+अम-घञ् । अपक्वे वैद्यकोक्ते अजीर्णताख्ये रोगभेदे पु० ।

**आमगन्धि** न० आमस्यापक्वस्य गन्ध इव गन्धो यत्र इत् समा० । अपक्वमांसादितुल्यगन्धाढ्ये ।

**आमनस्य** न० अप्रशस्तं मनो यस्य तस्य भावः ष्यञ् । दुःखे ।

**आमन्त्रण** न० आ+मन्त्र-ल्युट् । अभिनन्दने, संबोधने, कामचारानुज्ञाकर्मे स्वनामख्याते च । अवश्यकर्त्तव्ये नियोगो निमन्त्रणं यथा श्राद्धादौ भोजने, अकरणे प्रत्यवायासाधने नियोग आमन्त्रणं यथा स्थलविशेषे शयने ।

**आमन्त्रित** त्रि० आ+मन्त्र-क्त । आमन्त्रिते, संबोधिते च । व्याकरणे संबोधने या प्रथमा तस्यां न० ।

**आमय** पु० आमं रोगं यात्यनेन या-ड । रोगे ।

**आमयाविन्** त्रि०आमयोऽस्यास्ति विनि दीर्घश्च । रोगयुक्ते ।

**आमर्शन** न०आ+मृश ल्युट् । स्पर्शे । [निर्वीर्य्यमित्युक्तः ।

**आमर्ष** पु० न+मृष-घञ् दीर्घः । क्रोधे, "निरुद्योगं निरामर्ष

**आमलक** पु० आ+मल वुन् । वामकवृक्षे । ङीप् । धात्र्याम् तिष्यफलायां च स्त्री० । तस्याः फलं फले लुगिति तद्धितस्य लुक् । धात्रीफले न० । [स्वनामख्याते वातरोगभेदे ।

**आमवात** पु० आमयति पीडयति अम-णिच्-अच् कर्म्म० ।

**आमातीसार** पु० कर्म्म० । स्वनामख्याते रोगभेदे । [स्थाने

**आमाशय** पु० आमस्याशयः । नाभिस्तनयोर्मध्यभागे अपाक

**आमिक्षा** स्त्री०आमिष्यते सिच्यते मिष-सक् । तप्ते पक्वे दुग्धे दधियोगजायां (छाना) विकृतौ । [ख आमिक्षीयमप्यत्र ।

**आमिक्षीय** न० आमिक्षायै हितं छ । आमिक्षोपकरणे दध्नि

**आमिष** न०पु० आ+मिष-क । मांसे, भोग्यवस्तुनि, उत्कोचे, रुचिररूपादौ,लोभसम्बन्धे,लाभे,कामगुणे, भोजने,विषये च

**आमिषप्रिय** पु० ६त० । कङ्कपक्षिणि । मांसाभिलाषिणि त्रि०

**आमिषाशिन्** त्रि० आमिषमश्नाति अश-णिनि । मांसभक्षके

**आमिषी** स्त्री० आमिषनामैकदेशनामिकायां जटामांस्याम् ।

**आमुक्त** त्रि० आ+मुच परिधाने क्त । परिहिते । कर्त्तरि क्त । परिहितकवचे जने । [मुक्तायां नाटकाङ्गे प्रस्तावनायाम्

**आमुख** न० "आमुखं तद्विजानीयात् बुधैः प्रस्तावना मते"

**आमुष्मिक** त्रि० अमुष्मिन् परलोके भवः ठञ् टिलोपश्च । परलोके जन्मान्तरे भवे वस्तुनि । स्त्रियां ङीप् ।

**आमुष्यायण** त्रि० अमुष्याप्रत्यचीकृतस्यापि सद्वंशतेन सच्चरितत्वेन च प्रख्यातस्यापत्यं फक् षष्ठ्या अलुक् । सद्वंशोद्भवे ।

**आमोद** पु० आ समन्तात् मोदयति आ+मुद+णिच्-अच् । अतिदूरव्यापके गन्धे,गन्धमात्रे च । आ+मुद भावे घञ् हर्षे

**आमोदिन्** त्रि० आमोदोऽतिदूरगो गन्धोऽस्त्यस्मिन् । मुखसुगन्धितापादके कर्पूरादौ, हर्षवति च ।

**आम्नाय** पु० आम्नायते अभ्यस्यते आ+म्ना-घञ् । वेदे, आगमे निगमे,गुरुपरम्परागते, सदुपदेशे, वंशे, कुलक्रमेण कथने च । भावे घञ् । अभ्यासे ।

**आम्र** पु० अम-रक् दीर्घश्च । स्वनामख्याते वृक्षे । तत्फलादौ न०

**आम्रातक** पु० आम्रं तद्रसम् आ ईषत् अतति याति आ+अत ण्वुल् । आमड़ा इति ख्याते वृक्षे ।

**आम्रावर्त्त** पु० आम्र इव आ ईषत् तुल्यरसतया वर्त्तते आ +वृत-अच् । आम्रातकवृक्षे ।

**आम्रेडित** न० आ+म्रेड-उन्मादे अच् उन्मत्तेनैवाचर्य्यते आम्रेड+आचारे क्विप् ततः क्त । उन्मत्तेन यथा कथितस्य पुनःपुनः कथनं क्रियते एवं कथितस्य द्विस्त्रिकथने ।

**आम्ला** स्त्री० आ सम्यक् अम्लो रसो यस्याः । तिन्तिड्याम् स्वार्थे कनि आम्लिकाप्यत्र ।

**आय** पु० आ-इण्-अच् । लाभे । प्राप्तौ,धनागमे, ज्योतिषोक्ते एकादशस्थाने,ग्रामादौ स्वामिग्राह्यभागे वनितागारपालके च

**आयःशूलिक** त्रि० अयःशूलेनार्थानन्विच्छति । तीक्ष्णोपायेनाभीष्टसाधके जने । [अतियत्नशालिनि

**आयत** त्रि०आ+यम-क्त । दीर्घे आकृष्टे च । आ+यत-अच् ।

**आयतच्छदा** स्त्री० आयतः छदोऽस्याः । कदल्याम् ।

**आयतन** न० आयतन्तेऽत्र यत-आधारे ल्युट् । देवादिवन्दनस्थाने,आश्रये, विश्रामस्थाने, यज्ञस्थाने च ।

**आयति(ती)** स्त्री० आ+या डति वा ङीप् । उत्तरकाले, प्रभावे, फलदानकाले च । आ+यम-क्तिन् । सङ्गमे, दैर्घ्ये, प्रापणे च ।

**आयत्त** त्रि० आ+यत-कर्त्तरि क्त । अधीने, वशीभूते ।

**आयत्ति** स्त्री० आ+यत-क्तिन् । स्नेहे, वशित्वे, सामर्थ्ये, सीम्नि, शयने, प्रभावे च । [लौहकवचे स्त्री०ङीप् ।

**आयस** न०अयसा निर्मितं तद्विकारो वा अण् । लौहपात्रादौ

**आयस्त** त्रि० आ+यस-क्त । क्षिप्ते, क्लेशिते, हते तीक्ष्णीकृते

**आयाम** पु० आ+यम-घञ् । दैर्घ्ये ।

**आयास** पु० आ+यस-घञ् । परिश्रमे, अतियत्ने च ।

**आयु** पु०इण-उण् । जीवनकाले,'मा वाधिष्ठा जटायुं मामि'ति

भट्टिः। [कर्माध्यक्षे,कुशले च।

**आयुक्त** त्रि० आ+युज-क्त। व्यापारिते, ईषद्युक्ते, नियुक्ते,

**आयुध** न० आ+युध-करणे घञर्थे क। प्रहरणमात्रे।

**आयुधिक** पु० आयुधं शिल्पमस्य ठक्। शस्त्राजीवे। तदर्थे छ आयुधीयस्तत्र। [सोपाङ्गे।

**आयुर्वेद** पु० आयुर्विन्दतेऽनेन घञ्। चिकित्साशास्त्रे वेद-

**आयुर्वेदिन्** त्रि० आयुर्वेदोवेद्यतया विद्यतेऽस्य इनि। आयुर्वेदज्ञे चिकित्सके। [स्मात्वधिकै तृतीये योगे पु०।

**आयुष्मत्** त्रि० आयुर्विद्यतेऽस्य मतुप्। चिरजीविनि। विष्कु

**आयुष्य** त्रि० आयुषे हितम् यत्। आयुषोहितकारके पथ्ये। स्वार्थे यत् आयुषि न०। [रघुः।

**आयुस्** न० इण-असि-णिच्च। जीवनकाले 'आयुषः क्षये' इति

**आयोग** पु० आ+युज-घञ्। गन्धमाल्योपहारे, व्यापारे,रोधे च

**आयोगव** पु०शूद्राद्वैश्यायामुत्पन्ने प्रतिलोमवर्णसङ्करजे जातिभेदे

**आयोजन** न० आ+युज-ल्युट्। उद्योगे, आहरणे च।

**आयोधन** न० आ+युध-आधारे ल्युट्। युद्धस्थाने। भावे ल्युट्। योधने, तत्फले वधे च।

**आर** पु० ऋ-घञ्। मङ्गलग्रहे, शनिग्रहे,मधुराम्लफले वृक्षभेदे च। पित्तले, कोणे, प्रान्तभागे, सुवर्णलोहे च न०।

**आरकूट** पु०न०। आरं पित्तलं कूटयति स्तूपीकरोति अच्। पित्तलाभरणे। 'किमारकूटाभरणेन न प्रिय'इति नैषधम्।

**आरक्ष** पु० आ+रक्ष-अच्। हस्तिकुम्भाधःस्थले, हस्तिमस्तक चर्म्मणि, सैन्ये च। रक्षके त्रि०। भावे घञ्। रक्षायाम्।

**आरग्वध** पु० रगे-शङ्कायां क्विप् आरगं रोगशङ्कामपि हन्ति अच् वधादेशश्च। सोंदाल इति ख्याते वृक्षे।

**आरट्ट** पु० आरट्यते विख्याप्यते आ+रट टच् टस्य नेत्त्वम्। अश्वोत्पत्तिस्थाने (आरव) देशभेदे। [घोटके।

**आरट्टज** पु०आरट्टे देशे जायते जन-ड। (आरव) स्थानजाते

**आरणि** पु०आ+ऋ अणिच्। आवर्त्ते पयसां स्वतोभ्रमे।

**आरण्य** त्रि० अरण्ये भवः यञ्। वनजाते मृगसिंहादौ।

**आरण्यक** पु० अरण्ये भवः ततः स्वार्थे क। पथि, अध्याये, न्याये, विहारस्थाने मनुष्ये, हस्तिनि च। वेदस्यांशविशेषे न०। "आरण्यकमधीत्य चेति" मनुः।

**आरति** स्त्री० आ-रम-क्तिन्। उपरमे, निवृत्तौ च।

**आरनाल** न० ऋच्छतीति आरः ऋ+ण, नल-गन्धे घञ्। आरो नालोगन्धो यस्य। काञ्जिके। वा कप्। आरनालकमप्यत्र

**आरभटी** आरभ्यतेऽनया आ+रभ-अटि ङीप्। नाट्ये रचनाभेदे

**आरम्भ** पु०आ+रभ-घञ् मुम् च। त्वरायाम् वेगे-उद्यमे,दर्पे, उपक्रमे, प्रस्तावनायाञ्च। कर्मणि-घञ्। आरभ्यमाणे।

**आरम्भवाद** पु० आरम्भस्य वादो यत्र। न्यायमते वैशेषिकमते च "पृथिव्यब्वह्निवायूनां क्रियासंयोजिताणवः द्व्यणुकादिक्रमेणैवमारभन्ते इदं जगदिति" तयोः स्वीकारात्

**आर(रा)व** पु० आ+रु-घञ् अप् वा। शब्दमात्रे।

**आरा** स्त्री० आ+ऋ अच्। चर्म्मभेदकास्त्रभेदे। टेको इति ख्याते लौहास्त्रे च।'आरायमातो ह्यवरोऽपीति' श्रुतिः

**आरात्** अव्य० आ+रा-आति। दूरे, समीपे च।

**आरात्रिक** न० अरात्रावपि निर्वृत्तं ठञ् दीपो हि रात्रावेव प्रदर्श्यते इदं दिनेऽपि दर्श्यते। (आरति) नीराजनकर्म्मणि।

**आराधन** न० आ+राध-ल्युट्। पाके, साधने, पूजने, तोषणे, प्राप्तौ च।

**आराधना** स्त्री० आराध-युच् स्त्रीत्वात् टाप्। सेवायाम्।

**आराम** पु० आ+रम-आधारे घञ्। उपवने, कृत्रिमवने, क्रीडार्थवने च। [वक्रगामिनि त्रि०।

**आरालिक** पु० अरालं कुटिलं शिल्पमस्य ठक्। पाचके।

**आरु** पु० ऋ-उण्। वृक्षभेदे, कर्कटे, शूकरे च।

**आरेवत** पु० आरेवयति रेचयति मलं रेव-णिच्-णिच् अतति-अच्। अत्यन्तसारके (सोन्दाल) आरग्वधवृक्षे।

**आरोग्य** न०अरोगस्य भावः ष्यञ्। रोगराहित्ये अनामये।

**आरोग्यशाला** स्त्री० आरोग्यार्थं शाला। चिकित्सागृहे।

**आरोप** पु० आ रुह-णिच्-पुक् घञ्। अन्यस्मिन् अन्यधर्म्मावभासे यथा रज्ज्वां सर्पज्ञानम्। रूपकालङ्कारादौ तु सत्यपि बाधज्ञानेऽभेदावबोधः शाब्दः न प्रतिरुध्यते।

**आरोह** पु० आ+रुह-घञ्। दैर्घ्ये। उत्तमस्त्रीणां नितम्बे, आरोहणे, उच्छ्राये, परिमाणभेदे च।

**आरोहण** न० आ+रुह-करणे ल्युट्। पाषाणादिरचिते उच्चप्रासादारोहणसाधने (सिडि) सोपाने। भावे घञ्। निम्नस्थानादूर्द्ध्व-गमने।

**आर्चिक** पु० ऋचां व्याख्यानं ठक्। ऋचां व्याख्याने। ऋक्षु भवः ठक्। ऋग्वेदभवे त्रि०। ईकारि आर्चीकइत्यप्यत्र त्रि०।

**आर्जव** पु० ऋजोर्भावः अण्। सरलतया परप्रतारणाराहित्ये

**आर्त्त** त्रि० आ+ऋ-क्त। पीड़िते, दुःखिते, अस्वस्थे च।

**आर्त्तव** न० ऋतौ भवम् अण्। स्त्रीपुष्पे, पुष्पे च। ऋतुरस्य प्राप्तः अण्। ऋतुजे फलपुष्पादौ त्रि०। भोधकयाम् स्त्री० ङीप्। [धनुस्त्रीणाञ्च।

**आर्त्ति** स्त्री० आ+ऋ-क्तिन् ऋति धातौ वृद्धिः। पीडायाम्

**आर्त्विज्य** न० ऋत्विजः कर्म्म ष्यञ्। ऋत्विग्योग्ये कर्म्मणि।

**आर्थिक** त्रि० अर्थं गृह्णाति अर्थात् आगच्छति वा ठक्। अर्थ-ग्राहके अर्थागते च। [आरभ्य षष्ठे नचत्रे च स्त्री०न०।

**आर्द्र** न० अर्द्-रक् दीर्घश्च। क्लिन्ने, सजलवस्तुनि। अविनीत

**आर्द्रक** न० आर्द्रायां भूमौ जातं वुन्। (आदा) स्वनाम-ख्याते मूलभेदे।

**आर्य** पु० ऋ-ण्यत्। स्वामिनि, गुरौ, सुहृदि च। श्रेष्ठकुलो-त्पन्ने पूज्ये, श्रेष्ठे, सङ्गते, नाट्योक्तौ मान्ये, उदारचरिते, शान्तचित्ते "कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्। तिष्ठ-ति प्रकृताचारे स वा आर्य्य इति स्मृतः" इत्युक्तलक्षणे जने च त्रि०।

**आर्य्यक** पु० अतिशयेनार्य्यः पितोरपि पूज्यत्वात् प्राशस्त्ये कन्। पितामहे, मातामहे च। स्वार्थे कन्। श्रेष्ठे त्रि०।

**आर्य्यपुत्र** पु०आर्य्यः श्वशुरो गुरुश्च तस्य पुत्रः। पत्यौ,गुरुपुत्रे च।

**आर्य्यावर्त्त** पु०आर्य्याणामावर्त्तोदेशः। 'आ समुद्रात्तु वै पूर्वा-दा समुद्रात्तु पश्चिमात्। हिमवद्विन्ध्ययोर्मध्यमार्य्यावर्त्तं प्रच-क्षते' इति मनूक्ते देशभेदे।

**आर्ष** त्रि० ऋषिभिःप्रोक्तम् स्मृतं वा अण्। ऋषिप्रणीते धर्म्मशास्त्रे, तत्स्मृते वेदे च। "आर्षं धर्म्मोपदेशञ्चेतिमनुः।" आर्षं आदाय गोयुग्ममित्युक्ते विवाहभेदे पु०।

**आर्हत** पु०अर्हन्नेव स्वार्थे अण्। बुद्धविशेषे। तन्मतस्थितिनि त्रि०।

**आर्हन्ती** स्त्री० अर्हतोभावः ष्यञ् नुम् च ङीप् यलोपः। योग्यतायाम्। [ वङ्गेषु च त्रि०।

**आल** न० आलयन्ति भूषयन्ति अच्। हरिताले। अनर्थे,

**आलभन** न० आ+लभ-ल्युट्। स्पर्शे।

**आलम्ब** पु० आ+लवि घञ्। अवलम्बे, आश्रये च।

**आलम्बन** न० आ+लवि-ल्युट्। आश्रये, अलङ्कारमते रसा-श्रये विभावे च। [लम्भमिति स्मृतिः" स्पर्शे च।

**आलम्भ** पु०आ+लभ घञ् मुम् च्। वधे,"अश्वालम्भं गवा-

**आलय** पु० आलीयतेऽस्मिन् अच्। गृहे। अव्ययी०लयपर्य्य-न्ते। अव्य०। "पिवत भागवतं रसमालयमि"ति भागव०।

**आलयविज्ञान** न० आलयं विज्ञानम्। बौद्धमते लयपर्य्यन्त स्थायिनि अहङ्कारास्पदे विज्ञाने तन्मते हि सर्व्वज्ञानानां चणिकतयाऽनुभवजन्यसंस्कारस्य तस्मिन् ज्ञाने एव प्रक-लनात् पूर्व्वानुभूतस्य स्मृतिसम्भवः।

**आलवाल** न० आ समन्तात् जललवमालाति आ+ला-क। वृक्षमूले सेकार्थं मृदादिघटिते जलाधारे सेतौ।

**आलस्य** न० अलसस्य भावः ष्यञ्। सत्यपि सामर्थ्येऽवश्य-कर्त्तव्येऽनुत्साहरूपेऽलसत्वे। अलसएव ब्राह्मणादित्वात्

स्वार्थे ष्यञ्। अलसत्वयुक्ते। [रज्ज्वां, बन्धनमात्रे च।

**आलान** न० आलीयतेऽत्र आ+ली-ल्युट्। गजबन्धनस्तम्भे

**आलाप** पु० आ+लप-घञ्। कथोपकथने, सम्भाषणे च।

**आलाबू** स्त्री० आ+लवि ऊङ् नलोपश्च। तुम्ब्याम्।

**आलावर्त्त** न० आ समन्तात् अलमत्यर्थं वर्त्तते चाल्यते आ+अल+वृत-णिच् घञ्। वस्त्रनिर्म्मिते व्यजने।

**आलि(ली)** स्त्री० आ+अल-इन्। आगन्तुकजलवारणार्थे शस्यसेकजलधारणार्थे च दृतिरूपे सेतौ, सख्यां सम-वयस्कायां, पङ्क्तौ, आरामादिवत्मश्रेण्याम्, सन्ततौ च। वा ङीप् आलीत्यपत्र। शुद्धान्तःकरणे अनर्थे च त्रि०। भ्रमरे, वृश्चिके च पु०।

**आलिङ्गन** न० आ+लिगि-ल्युट्। प्रीतिपूर्व्वकमन्योन्यदेह संश्लेषणे, परिरम्भे च। [मृदङ्गे च।

**आलिङ्ग्य** त्रि० आ+लिगि-ण्यत्। आलिङ्गनीये, यवाकृति-

**आलिञ्जर** पु० अलिञ्जर एव अण्। जाला इति ख्याते मृण्मये जलपात्रे मणिके।

**आलिम्पन** न० आ+लिप-ल्युट् मुम्च। मङ्गलार्थे लेपने।

**आलीढ** न० "नमिता पूर्व्वजङ्घा तु पश्चिमा प्रगुणा भवेत्। अस्मिन्मध्यकायः स्यादालीढस्य च लक्षणमित्युक्तलक्षणे "आलीढं दक्षिणं पादमित्युक्तलक्षणे च धन्विनां पादविन्यास विशेषेणावस्थाने। आ+लिह-क्त। भुक्ते, घाते च त्रि०। 'सेनान्यमालीढमिवासुरास्त्रैरि'ति रघुः। भावे क्त लेहने न०

**आलीनक** न० आर्दयत् प्रयासेन अग्निसंबन्धमात्रेण लीयते द्रवीभवति आ+ली-क्त संज्ञायां कन्। (रां) इतिख्याते रङ्गे

**आलु** पु० आ+लु-डु। स्वनामख्याते कन्दभेदे, भेलके, पेचको पक्षिणि च। भारी इति ख्यातायां क्षुद्रघटिकायां स्त्री०।

**आलुक** न० आलुरेव स्वार्थे कन्। मूलभेदे, काष्ठालुशङ्खालु प्रभृतिकन्दमात्रे च। शेषे नागे पु०। आ-लू-क्विप् संज्ञायां कन् ङीप्। आलूकी रक्तालुभेदे स्त्री०।

**आलेख्य** न० आ-लिख-आधारे-ण्यत्। चित्रपटादौ।

**आलेख्यशेष** त्रि० आलेख्यं चित्रमेव शेषो यस्य ब०। मृते, तस्य चित्रे एव प्रतिकृतिरूपेण अवस्थानात्।

**आलोक** पु०आ+लुक-घञ्। दर्शने,उद्द्योते,वन्दिनामालोकये-त्यादि स्तुतिवाक्ये। "आलोकशब्दं वयसां विरावैरि"ति रघुः

**आलोचन** न० आ+लुच-ल्युट्। कर्त्तव्यतयाऽवधारणे, विवेचने च। "अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विक-ल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्। ततः परं पुनर्वस्तुधर्म्मैर्जात्यादिभिर्यया। बुद्ध्याऽवसीयते सापि

प्रत्यग्रतेन सम्मते'ति सांख्योक्ते निर्द्धर्मके शुद्धवस्तुविषयके प्रायमिके ज्ञाने च।

**आवपन** न० आउप्यते स्थाप्यतेऽत्र ल्युट्। धान्यस्थापनपात्रे (थल्या इति ख्याते। वप-णिच्-भावे ल्युट्। सर्व्वमुण्डने।

**आवरक** न० आ+वृ-करणे अप् संज्ञायां वुन्। अपवरके, आच्छादके वस्त्रादौ।

**आवरण** न० आ+वृ-करणे ल्युट्। (ढाल) चर्म्ममयफलके। भावे ल्युट्। आच्छादने, वेदान्तमतेऽविद्यादिना ज्ञान-प्रकाशाच्छादने च। [मिते च।

**आवर्जित** वि० आ+वर्ज्ज-क्त। आहूते, क्षिप्ते, दत्ते, आन-

**आवर्त्त** पु० आ+वृत-घञ्। चक्राकारेण जलस्य स्वयं भ्रमणे, भुवाख्ये रोमसंस्थानभेदे घोटकचिह्ने वामावर्त्तनामके मणौ आवर्त्तने, चिन्तने च। अच्। मेघाधिपभेदे मांक्षिकधातौ च न०।

**आवर्त्तन** न० आ+वृत-णिच् ल्युट्। (आवटान) दुग्धादेरा-लोडने। आवर्त्तते परिवर्त्तते यस्मिन् काले। मध्याह्नोत्तरं यदा पश्चिमतः पूर्व्वस्यां दिशि सूर्य्यच्छाया प्रथमं गच्छति, तस्मिन् काले 'आवर्त्तनसमीपे वेति स्मृतिः'। धातुद्रव्यस्य द्रवीकरणे च।

**आवर्त्तनी** स्त्री० आवर्त्यते द्रवीकृत्य आलोड्यतेऽत्र आ+वृत णिच्-आधारे ल्युट्। ताम्रादिधातुद्रव्यस्य द्रवीकरणाधारे मृण्मये (मुची) पात्रभेदे, मूषायाम्।

**आवर्त्तित** वि० आ+वृत-णिच्-क्त। अभ्यस्ते, गुणिते च।

**आवर्ह** पु० आ+वृह-घञ्। उत्पाटने। [स्त्रियां ङीप्।

**आवश्यक** वि० अवश्यं भव्यः मनोज्ञा० वुञ्। नियतकृत्ये

**आवसथ** पु० आवसत्यत्र वस-अथच्। वसतिस्थाने, विश्राम-स्थाने, व्रतभेदे च। [मपनीततुषे राशीकृते धान्ये च।

**आवसित** वि० आ+अव+सो-क्त। पक्वधान्ये, मर्दनानन्तर

**आवहमान** वि० आ+वह-शानच्। क्रमागते।

**आवाप** पु० आ+वप-घञ्। आलवाले, (थल्या) पात्रभेदे, प्रक्षेपे, भाण्डे, वलये, शत्रुचिन्तने परराष्ट्रचिन्तने, निम्नोन्नत भूमौ, प्रधानहोमे च। [ग्राभरणे वलयादौ।

**आवापक** पु० आ+वप-कर्म्मणि घञ् संज्ञायां कन्। प्रको-

**आवापन** न० आ+वप-णिच्-ल्युट्। (तांत) सूत्रयन्त्रे।

**आवास** पु० आ+वस-आधारे घञ्। वासस्थाने गृहादौ।

**आवाहन** न० आ+वह-णिच् ल्युट्। सान्निध्याय देवानामाह्वाने

**आविक** न० अविना तल्लोम्ना निर्म्मितं ठक्। कम्बले। अवेर्म्मेषस्य सम्बन्धिनि वि०। [इति ख्याते करमर्द्दवृक्षे च।

**आविग्न** पु० आ+विज कर्त्तरि क्त। उद्विग्ने (पाणिआमला)

**आविद्ध** वि० आ+व्यध-क्त। विद्धे, वक्रे, पराहते, क्षिप्ते, अभिभूते, मूर्खे च।

**आविध** पु० आविध्यतेऽनेन व्यध-घञर्थे क। काष्ठादिवेधनसाधने (भमर) (तुरपिन) सूच्याकाराग्रे अस्त्रे। [व्याप्ते च।

**आविष्ट** वि० आ+विश-क्त। भूतादिग्रस्ते, आवेशयुक्ते, निविष्टे,

**आविस्** अव्य० आ+उ-इस्। प्रकाशे। एतच्छब्देन सह भूधातुः प्रकाशार्थे यथा आविर्भावः। कृञ्धातुः प्रकाश करणेऽर्थे यथा आविष्कारः।

**आवीरचूर्ण** पु० आ समन्तात् विशेषेण ईर्य्यते क्षिप्यते आ+वि+ईर-घञ् कर्म्म०। आवीर इति ख्याते फल्गुनि 'आवीरचूर्णं रुचिरं गृह्यतां परमेश्वरे'ति पुराणम्।

**आवुक** पु० आवति पालयति उण् संज्ञायां कन्। नाट्योक्तौ जनके

**आवृत्** स्त्री० आ+वृत-संपदादित्वात् क्विप्। परिपाट्यामनुक्रमे।

**आवृत** वि० आ+वृ-क्त। वेष्टिते कृताच्छादने।

**आवृत्त** वि० आ+वृत-क्त। निवृत्ते, 'आवृत्तानां गुरुकुलादिति स्मृतिः' अभ्यस्ते, गुणिते च।

**आवृत्ति** स्त्री० आ+वृत-क्तिन्। अभ्यासे, पुनःपुनर्गुणने 'चण्ड्याः शतावृत्तिपाठादि'ति पुराणम्। [वृद्धदारकवृक्षे।

**आवेगी** स्त्री० आवेगोऽस्त्यस्याः अर्श आद्यच् गौरा० ङीप्।

**आवेश** पु० आ+विश-घञ्। अहङ्कारभेदे, संरम्भे, अभि-निवेशे, आसङ्गे, अनुप्रवेशे, यथा भूतावेशः। गृहभये, भूतादिना रोगे च। [भूतावेशे रोगे, सूर्य्येन्दुपरिधौ च

**आवेशन** न० आ+विश-आधारे ल्युट्। शिल्पशालायाम्

**आवेशिक** वि० आवेशे गृहे भवः आगतो वा ठञ्। अतिथौ असाधारणे स्वकीये वाञ्चवादौ च। [(वेड़ा)।

**आवेष्टक** पु० आवेष्टयति ण्वुल्। आवरणकारके प्राचीरादौ

**आशंसा** स्त्री० आ+शंस-अ। अप्राप्तस्य प्राप्तीच्छायाम्, इष्टार्थाशंसने च। [क्त। कथने न०।

**आशंसित** वि० आ+शंसि-क्त। वाञ्छिते, कथिते च। भावे

**आशंसु** वि० आ+शनुस-उ। इच्छावति, इष्टार्थलाभेच्छौ, कथयितरि च।

**आशङ्का** स्त्री० आ+शकि-अ। त्रासे, सङ्कोचे, ईषद्वितर्के च

**आशय** पु० आ+शी-अच्। अभिप्राये, आधारे, विभवे, पनसवृक्षे वैद्यकोक्ते पक्वाजीर्णे स्थाने च। आ फलविपाकात् चित्तभूमौ शेते इति कर्त्तरि अच् कर्म्मजन्ये वासनारूपे संस्कारे, धर्म्माधर्म्मरूपे अदृष्टे च। आधारे अप्। आशयवति चित्ते। भावे अच्। शयने स्थाने च।

**आशर** पु० आशृणाति आ+शॄ-अच्। अग्नौ, राक्षसे च।

**आशा** स्त्री० आ समन्तात् अश्नुते अश-अच् । दिशि, अशक्योपायार्थविषयायाम्, दीर्घाकाङ्क्षायाम् अनधिगतविषयायां तृष्णायां च । [दृत०। तृष्णासंबन्धे दिशां वश्ये च ।

**आशाबन्ध** पु० आशां दिशं बध्नाति अच्। मर्कटजाले, बन्ध-घञ्

**आशास्य** त्रि० आ+शास-ण्यत् । आशीःसाध्ये, आशंसनीये च "आशास्यमन्यत् पुनरुक्तमि"ति रघुः ।

**आशित** त्रि० आ+क्र्यादि०अश-क्त । भुक्ते, अशनेन तृप्ते च ।

**आशितङ्गवीन** अशितङ्गवीनवत् सर्व्वम् । दीर्घादिरिति बहवः

**आशितम्भव** पु० अशितम्भववत् सर्व्वम्। दीर्घादिरिति बहवः

**आशिस्** स्त्री० आ+शास-क्विप् इत्त्वम् । हितप्रार्थने अभीष्टवृद्धिप्रार्थने, सर्पतालुस्थदन्ते, सर्पदंष्ट्रायामाशीत्यपि पृषो०।

**आशीर्व्वाद** पु० आशिषोवादः वद-घञ् । मङ्गलप्रार्थने आशीर्व्वचने च ।

**आशीविष** पु० आशिषि आस्यां वा विषोऽस्य पृषो०। सर्पे।

**आशु** अव्य० अश-उण् । क्षिप्रत्वे । वर्षाभवे षष्टिकादौ धान्ये, पाटले व्रीहौ च पु०न०। क्षिप्रे त्रि०। क्रियाविशेषणत्वे न०

**आशुग** पु०आशु+गम-ड । वायौ, वाणे, सूर्य्ये च। शीघ्रगामिनि त्रि०

**आशुपत्री** स्त्री० आशु पत्रं यस्याः । शल्लकीलतायाम् ।

**आशुशुक्षणि** पु० आ+शुष-सन्+अनि। अग्नौ, वायौ च ।

**आशौच** न० अशौचमेव स्वार्थेऽण् । अशौचसमनार्ये वैदिककर्म्मानर्हावस्थायाम् ।

**आश्चर्य्य** न० आ इति चर्य्यतेऽभिनीयते आ+चर ण्यत् सुट् च । अपूर्व्वे अद्भुते चित्रे, विस्मये च । अद्भुतवति त्रि०

**आश्मन** पु० आ+अश-मनन् । सूर्य्यसारथौ अरुणे । [रघुः

**आश्यान** त्रि०आ+श्यै-क्त। ईषद्घनीभूते 'पथश्चाश्यानकर्द्दमानि'ति

**आश्रम** पु० न० आ+श्रम-आधारे घञ् अवृद्धिः । ब्रह्मचर्य्यादिके शास्त्रोक्ते धर्म्मभेदे, मुनीनां वासस्थाने, मठे, वने च कलौ तु ब्रह्मचर्य्यवानप्रस्थौ न स्तः गृहस्थभिक्षुकाश्रमावेव "गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे" इति स्मरणात् सर्व्वक्लेशप्रहानेन विश्रामस्थाने परमेश्वरे च ।

**आश्रमधर्म्म** पु० आश्रमेषु विहितो धर्म्मः। ब्रह्मचार्य्यादीनां शास्त्रविहिते धर्म्मे ।

**आश्रय** पु० आ+श्रि-अच् । सामीप्ये, आधारे, गृहे, राज्ञां सन्धिप्रभृतिषु षट्सु गुणेषु मध्ये प्रबलयलोराश्रयणरूपे गुणे च

**आश्रयाश** पु० आश्रयमाधारं काष्ठमश्नाति अश-अण्। वह्नौ।

**आश्रव** पु० आ+श्रु-अप् । अङ्गीकारे, क्लेशे च। आशृणोति वाक्यम् पचाद्यच्। प्रवर्त्तयितुं निवर्त्तयितुं वा शक्ये वचनस्थिते

**आश्रित** त्रि० आ+श्रि-क्त। आश्रयप्राप्ते, शरणागते, आधेये च

**आश्रुत** त्रि० आ+श्रु-क्त । अङ्गीकृते, आकर्णिते च ।

**आश्लेष** पु० आ ईषदेकदेशेन श्लेषः संबन्धः आ+श्लिष-घञ् । एकदेशसंबन्धे । [ऽण् । रथादौ त्रि० ।

**आश्व** न० अश्वानां समूहः अण् । अश्वसमूहे । अश्वैरुह्यते-

**आश्वत्थ** न०अश्वत्थस्य फलमित्यणि तस्य न लुक्। अश्वत्थफले।

**आश्वयुज** पु०आश्वयुजी अश्विननक्षत्रयुक्ता पौर्णमासी यस्मिन् मासेऽण् । शुक्लप्रतिपदादिके दर्शान्ते चान्द्रे आश्विने मासे

**आश्वयुजी** स्त्री० अश्वयुजा अश्विनीनक्षत्रेण युक्ता पौर्णमासी 'नक्षत्रेण युक्तः काल'इत्यण् । आश्विनमासीयपौर्णमास्याम्

**आश्वास** पु० आ+श्वस्-घञ् । निर्वृतौ आश्रयदाने भीतस्य भयनिवारणार्थे सान्त्वने च । [चान्द्रे मासि ।

**आश्विन** पु० आश्विनी पूर्णिमा यस्मिन् मासे । स्वनामख्याते

**आश्विनी** स्त्री० अश्विना अश्वाकारवता नक्षत्रेण युक्ता पूर्णिमा नक्षत्राण् । आश्विनमासिकपौर्णमास्याम् ।

**आश्विनेय** पु० द्विव० अश्विन्याः अश्वाकारवत्याः सूर्य्यपत्न्याः संज्ञाया अपत्ये ढक् । स्वर्वैद्ययोः । [गम्ये स्थाने ।

**आश्वीन** त्रि० अश्वेनैकाह्नेनातिक्रम्यते खञ् । अश्वस्य एकाह

**आषाढ** पु०आषाढी पूर्णिमाऽस्मिन् मासेऽण्। स्वनामख्याते मासे

**आषाढी** स्त्री० आषाढया नक्षत्रेण युक्ता पूर्णिमा 'नक्षत्रेण युक्तः काल' इत्यण् । आषाढमासीयपौर्णमास्याम् ।

**आस** उपवेशने अदादि०आत्म०अक०सेट् । आस्ते आसिष्ट

**आस्** अव्य० आस्-क्विप् । स्मरणे, अपाकरणे, कोपे, सन्तापे, पीड़ायां, सगर्वतर्जने च ।

**आसक्त** त्रि० आ+सन्ज-क्त । आसङ्गे युक्ते विषयान्तरनिवृत्त्या तत्परे च । नित्ये सतते च न०। तद्वति त्रि० ।

**आसङ्ग** न० आ+सन्ज-घञ् । अभिनिवेशे, प्राप्तस्योपस्थितस्यापि नाशतो रक्षणाभिलाषे, भोगाभिलाषे, कर्त्तृत्वाभिमाने च । तद्युक्ते त्रि० । सौराष्ट्रमृदि स्त्री० ।

**आसत्ति** स्त्री० आ+सद्-क्तिन् । संसर्गे, लाभे, सन्निधौ । न्यायादिमते यत्पदार्थेन यत्पदार्थस्यान्वयापेक्षा तयोरव्यवधानेन पदेनोपस्थापने च ।

**आसन** न० आस-ल्युट् । उपवेशने । आधारे ल्युट् पीठादौ, हस्तिस्कन्धदेशे, सन्ध्यादिषु षट्सु नृपगुणेषु शत्रुदुर्गादीन्यवरुध्य स्थितौ, यात्रानिवृत्तौ, अष्टाङ्गयोगमध्ये तृतीयेऽङ्गे पद्मासनादौ । अस्यति ल्यु स्वार्थेऽण् । जीरकवृक्षे पु० । युच् टाप् । स्थितौ ।

**आसन्न** त्रि० आ+सद-क्त । निकटस्थे, उपस्थिते च ।

**आसव** पु० आ+सु-अप् । मद्यमात्रे "शीधुरिक्षुरसैः पक्वै-

रपकं रासवो भवेदि''त्युक्तप्रकारे मद्ये च । [तालवृक्षे
**आसवद्रु** पु० आसवस्य (ताड़ी) मद्यस्य कारणं द्रुः शाक०त०।
**आसादन** न० आ+सद-णिच्-ल्युट् । सन्निधापने, स्थापने च
**आसादित** त्रि० आ+सद-णिच्-क्त । लब्धे, सन्निधापिते, आयोजिते च ।
**आसार** पु० आ+सृ घञ् । धारासम्पाते वेगवृष्टौ, प्रसरणे, सैन्यानां सर्वतो व्याप्तौ च । करणे घञ् । सुहृद्बले ।
**आसीनप्रचलायित** न० आसीनेन उपविष्टेनैव प्रचलवत् आचरितम् प्रचल-क्यच् क्त । उपविश्य निद्रावशेन प्रचलन रूपे (ढोला) दोलने । [प्यादने (चोयान) इति ख्याते पाके
**आसुति** स्त्री० आ+सु-क्तिन् । सोमादिनिष्पीड़ने अभिषवे, मद्यनि-
**आसुतीवल** पु० आसुतिरस्त्यस्य वलच् दीर्घः । शौण्डिके । सोमाभिषवशालिनि याज्ञिके त्रि० ।
**आसुर** पु० 'आसुरो द्रविणादाना'दित्युक्तलक्षणे धनदानेन कन्याविवाहे । असुरस्येदम् अण् । असुरसंबन्धिनि त्रि० । स्त्रियां ङीप् 'आसुरी रात्रिरन्यत्रे'ति स्मृतिः ।
**आसुरस्व** न० ६त० । ''अयज्वनान्तु यद्द्रव्यमासुरस्वं तदुच्यते'' इति मनूक्ते अयाज्ञिकधने ।
**आसेचन** त्रि० असेचन+स्वार्थेऽण् । असेचनार्थे अतृप्तिकारकं यस्य दर्शनं तत्र । स्वार्थे कन् आसेचनकमप्यत्र ।
**आसेध** पु० आ+सिध-घञ् । राजाज्ञयाऽन्यत्र गमनादेः प्रतिषेधरूपेऽवरोधे ।
**आसेवा** स्त्री० आ+सेव-अ । अभिलाषपूर्वकं पौनःपुन्येन प्रवृत्तौ । [आधारे घञ् । रणे ।
**आस्कन्दन** न० आ+स्कन्द-ल्युट् । शोषणे, आक्रमणे च ।
**आस्कन्दित** न० आ+स्कन्द-स्वार्थे णिच्-क्त । अश्वगतिभेदे त्वरितगमने च । स्वार्थे कन् । आस्कन्दितकमप्यत्र ।
**आस्तर** पु० आ+स्तृ-करणे अप् । हस्तिपृष्ठस्थकम्बले भुल इति ख्याते । ल्युट् । आस्तरणमप्यत्र न० ।
**आस्तिक** त्रि० अस्ति परलोक इति मतिर्यस्य ठक् । परलोकास्तित्ववादिनि ''अस्तीत्युक्त्वा गतो यस्मादास्तिकस्तेन कथ्यते इति निरुक्तसंज्ञाके जरत्कारुमुनिसुते । आस्तीकोऽप्यत्र।
**आस्तिक्य** न० आस्तिकस्य भावः कर्म वा । वैदिकधर्मे श्रद्धायाम्
**आस्तीकजननी** स्त्री० ६त० । जरत्कारुमुनिपत्न्यां जरत्कारुनाम्न्यां वासुकिभगिन्यां मनसादेव्याम् ।
**आस्था** स्त्री० आ+स्था-अङ् । आलम्बने, अपेक्षायां, श्रद्धायां, स्थितौ यत्ने च । आधारे अङ् । प्रतिष्ठायां, स्थाने च ।
**आस्थान** न० आ+स्था-आधारे ल्युट् । सभायां, विश्रामस्थाने च । स्त्रीत्वमपि तत्र ङीप् । आस्थानीत्यप्यत्रैवार्थे ।
**आस्थित** त्रि० आ+स्था-क्त । आरूढे प्राप्ते, अङ्गीकृतवति च
**आस्पद** न० आ+पद-घ सुट् च । प्रतिष्ठायाम्, पदे, स्थाने, कृत्ये, प्रभुत्वे च । [''ऐरावतास्फालनकर्कशेने'ति कुमारः
**आस्फालन** न० आ+स्फुर-णिच् ल्युट् स्फालादेशः । चालने
**आस्फोट** पु० आ+स्फुट-अच् । स्वयं फलस्य स्फोटनात् अर्कवृक्षे (तालठोका) मल्लादेर्बाह्वादेर्हस्ततालेन शब्दकरणे च । (हापरमाली) वनमल्ल्यां स्त्री० । ल्युट् आस्फोटनमप्यत्र न० ।
**आस्फोटक** पु० आस्फोटोऽस्त्यस्य इव । (आखरोट) शैलपीलौ
**आस्फोटनी** स्त्री० आस्फोट्यते विदार्यतेऽनया आ+स्फुट-णिच्-करणे ल्युट् स्त्रीत्वात् ङीप् । (तरपन) वेधनास्त्रे ।
**आस्फोत** पु० आ+स्फुट-अच् पृषो० टस्य तत्वम् । अर्कवृक्षे कोविदारवृक्षे, भूपलाशवृक्षे च । स्वार्थे कन् । आस्फोतकोऽर्कवृक्षे
**आस्फोता** स्त्री० आ+स्फुट-अच् पृषो० । अपराजितायां, वनमल्ल्याम् (हापरमाली) लताभेदे च ।
**आस्य** न० असते पाषाणोऽत्र+अस-आधारे ण्यत् । मुखे । तन्मध्ये च । आस्ये भवः यति यलोपः । मुखभवे त्रि० ।
**आस्यपत्र** न० आस्यमेव पत्रमस्य । पद्मे ।
**आस्यलाङ्गल** पु० आस्यं लाङ्गलमिव भूविदारकं यस्य । सूकरे
**आस्यलोमन्** न० ६त० । पुरुषमुखजाते लोम्नि (दाढ़ि) ।
**आस्या** स्त्री० आस-ण्यत् टाप् । स्थितौ, आसने च ।
**आस्यासव** पु० आस्यस्यासवः प्रसवः ६त० । लालायाम् (थुथु) (लाल) इति ख्यातायाम् । [अप् । निरन्तरास्रवणे ।
**आस्रव** पु० आस्रवति मनोऽनेन करणे अप् । क्लेशे । भावे
**आस्वाद** पु० आ+स्वद-कर्मणि घञ् । रसे । भावे घञ् । रसानुभवे
**आह** अव्य० आ+हन-ड । आक्षेपे, नियोगे, दृढसम्भाषणे, उवाचेत्यर्थे 'अथाह वर्णी विदितो महेश्वर' इति कुमारः ।
**आहत** त्रि० आ+हन-क्त । गुणिते, ताड़िते, मन्थायुतोऽसीत्यादौ मृषार्थके वाक्ये च । ढक्कायाम् पु० । पुरातने नूतने च वस्त्रे न० ।
**आहतलक्षण** पु० आहतमभ्यस्तं लक्षणं यस्य । गुणैः प्रसिद्धे
**आहर** पु० आ+हृ-अच् । उच्छ्वासे, अन्तःस्थितस्य वायोर्मुखेन बहिर्गतौ ।
**आहव** न० आह्वयन्तेऽरयोऽत्र आ+ह्वे-अप् संप्रसारणे गुणः । युद्धे । आहूयतेऽत्र आ+हु अप् । यज्ञे ।
**आहवनीय** पु० आहवनमर्हति छ । गार्हपत्यादग्नेरुद्धृत्य होमार्थं कृतसंस्कारे वह्नौ । आ+हु-अनीयर् । हवनीये ।
**आहार** पु० आ+हृ-घञ् । आहरणे, द्रव्यमात्रस्य गलाधःक-

रसरूपे भोजने च। 'नीराहाराश्च ये जीवा' इति स्मृतौ जलपानेऽप्याहारशब्दः। कर्म्मणि घञ्। अन्नादौ भक्ष्ये।

**आहार्य्य** त्रि॰ आ+हृ-ण्यत्। आहरणीये, आगन्तुके, कृत्रिमे, आरोप्ये नाट्ये रचिते रसादिव्यञ्जकभूषादौ च।

**आहाव** पु॰ आ+ह्वे-घञ् संप्रसारणे वृद्धिः। कूपसमीपे गवादीनां जलपानाय प्रस्तरादिना रचिते(खाल)जलाशये, युद्धे, आह्वाने च। [कृते, कृताधानसंस्कारे च।

**आहित** त्रि॰ आ+धाञ्-क्त। न्यस्ते, स्थापिते, अर्पिते,

**आहितुण्डिक** त्रि॰ अहितुण्डेन दीव्यति ठक्। व्यालग्राहिणि

**आहुत** त्रि॰ उद्देश्यस्य आभिमुख्येन शास्त्रादेव हुतं हु-क्त। गृहस्थकर्त्तव्येषु पञ्चसु यज्ञेषु। मनुष्ययज्ञे भूतयज्ञे चेत्यन्ये।

**आहुति** स्त्री॰ आ+हु-क्तिन्। देवोद्देशेन मन्त्रेणाग्नौ हविःक्षेपे

**आहेय** न॰ अहेरिदम् ढक्। सर्पसंबन्धिनि चर्म्मविषादौ।

**आहो** अव्य॰ आ+हन-डो। प्रश्ने, विकल्पे, विचारे च।

**आहोपुरुषिका** स्त्री॰ अहमेव पुरुषः शूरः मयू॰ अहो पुरुषः तस्य भावः वुञ् स्त्रीत्वात् टाप्। दर्पजन्ये आत्मनि उत्कर्षसम्भावने।

**आहोस्वित्** अव्य॰ आहो च स्विच्च द्व॰। विकल्पे, प्रश्ने च।

**आह्निक** त्रि॰ अह्ना साध्यं ठञ्। दिनसाध्ये, स्नानसन्ध्यातर्पणादौ च। इदमर्थे ठञ्। दिनसम्बन्धिनि। अध्यायान्तर्गते ग्रन्थस्य प्रकरणसमूहे न॰।

**आह्लाद** पु॰ आ+ह्लद-घञ्। आनन्दे। [च।

**आह्वय** पु॰ आ+ह्वे श। नामनि संज्ञायाम् प्राणिसाधने द्यूते

**आह्वान** न॰ आ+ह्वेञ् ल्युट्। आकारणे आहूतौ च।

## इ

**इ** पु॰ अस्य विष्णोरपत्यम् अ+इञ्। कामे। अस्येदम् अ+इञ्। भेदे, रोषोक्तौ, निराकरणे, अनुकम्पायाम्, खेदे, विस्मये, निन्दायाम्, सम्बोधने च। [मुद्राभञ्जन इत्युक्तटः।

**इ** गतौ भ्वादि॰ पर॰ सक॰ अनिट्। अयति ऐषीत्। अयमुदयति

**इक्** स्मरणेऽधिपूर्व्वक एव किव् अदादि॰ पर॰ सक॰ अनिट्। अध्येति अध्यैषीत् इण इव तिङि न कृति। अधीयन्।

**इक्षु** पु॰ इष-क्सु। मधुररसयुते अतिपत्रे स्वनामख्याते वृक्षे।

**इक्षुकाण्ड** पु॰ इक्षोः काण्ड इव काण्डोऽस्य। काशवृक्षे।

**इक्षुकुट्टक** पु॰ इक्षुं कुट्टयति कुट्ट-ण्वुल्। गुड़कारके कर्षीवलादौ। [क्षुद्रगोक्षुरे च।

**इक्षुगन्ध** पु॰ इक्षोरिव गन्ध एकदेशावयवो यस्य। काशतृणे,

**इक्षुगन्धा** स्त्री॰ इक्षोर्गन्ध इव गन्धोऽस्याः। शुक्लविदार्य्याम्, कृष्णभूमिकुष्माण्डे, काशे, गोक्षुरे च। स्वार्थे के अत इत्वम्। इक्षुगन्धिका भूमिकुष्माण्डे। [धान्यविशेषे।

**इक्षुतुल्या** स्त्री॰ इक्षुणा तुल्या पत्रादिना। (जनार)।

**इक्षुनेत्र** न॰ इक्षुर्नीयते पुनरुत्पादनायारोप्यतेऽनेन नी-ष्ट्रन्। इक्षोर्नेत्रमिव वा इक्षूत्पादके इक्षुनेत्राकारे तद्ग्रन्थौ।

**इक्षुपत्र** पु॰ इक्षोः पत्रमिव पत्रमस्य। (जनार) धान्यभेदे।

**इक्षुप्र** पु॰ इक्षुरिव पूर्य्यते पृ-कर्म्मणि घञर्थे क। शरवृक्षे।

**इक्षुमती** स्त्री॰ इक्षुवद्रसोऽस्त्यास्यां मतुप्। नदीभेदे।

**इक्षुमूल** पु॰ इक्षोर्मूलं ग्रन्थिरिव मूलं ग्रन्थिर्यस्य। वंशवृक्षे। ६त॰। इक्षुमूले तद्ग्रन्थौ न॰। [इक्षुनिष्पीड़ने यन्त्रे।

**इक्षुयन्त्र** न॰ इक्षोस्तन्निष्पीड़नस्य यन्त्रम्। (महाशाल)

**इक्षुर** पु॰ इक्षुमिवगन्धं राति रा-क। (तालमाखना) कोकिलाख्ये वृक्षे, काशे च। ततः स्वार्थे क। तत्रार्थे, स्थूलशरे च।

**इक्षुरस** पु॰ इक्षो रस इव रसो यस्य। (नड़ा) इति ख्याते तृणभेदे। ६त॰। इक्षोः रसे।

**इक्षुरसक्वाथ** पु॰ इक्षुरसस्य क्वाथः पाकभेदः। गुड़े।

**इक्षुवल्ली(ल्लरी)** स्त्री॰ इक्षुरिव सुस्वादा वल्ली वल्लरी वा लता। क्षीरविदार्य्याम्। [इक्षुक्षेत्रे।

**इक्षुव(टि)टीका** स्त्री॰ इक्षोर्वाटीव इवाऽर्थे के वा ह्रस्वः।

**इक्षुवालिका** स्त्री॰ इक्षुरिव वलति ण्वुल्। तालमाखना इति ख्याते वृक्षे, काशे च।

**इक्षुशर** पु॰ इक्षुरिव शृणाति शृ-अच्। काशभेदे तद्वने गन्तुर्गात्रवर्तेईष्टत्वात् तस्येक्षुवत् हिंसकत्वम्।

**इक्षुशाकट** पु॰ इक्षूणां भवनं क्षेत्रम् इक्षु+शाकटच्। (दो) (काल) इति ख्याते इक्षुभवनयोग्ये क्षेत्रे। तदर्थे शाकिन्। इक्षुशाकिनशब्दोऽप्यत्रार्थे।

**इक्षुसार** पु॰ ६त॰। गुड़े। [ख्याम् सूर्य्यवंश्ये आदिराजे च।

**इक्ष्वाकु** पु॰ इक्षुमिच्छामाकरोति इक्षु+आ+कृ-डु। कटुतु-

**इक्ष्वारि** पु॰ इक्षुरिवासमन्तादृच्छति आ+ऋ-इन्। काशतृणे

**इक्ष्वालिका** पु॰ इक्षुरिव अलति व्याप्नोति ण्वुल्। काशे।

**इख** गतौ भ्वादि॰ पर॰ सक॰ सेट्। एखति ऐखीत्।

**इखु** गतौ इदित् भ्वादि॰ पर॰ सक॰ सेट्। इङ्खति ऐङ्खीत्।

**इगि** गतौ इदित् भ्वादि॰ पर॰ सक॰ सेट्। इङ्गति ऐङ्गीत्।

**इङ्** अध्ययने अधिपूर्व्व एव ङित् अदा॰ आत्म॰ सक॰ अनिट्। अधीते अध्यैष्ट अध्यगीष्ट। अधिजगे, अध्यैष्यत अध्यगीष्यत।

**इङ्गित** न॰ इगि-क्त। अभिप्रायव्यञ्जकदैहिकचेष्टायाम्।

**इङ्गुद** पु॰ इः कामः ङ्गुः रोगस्तम् द्यति दो-क। तापसतरौ

गौरा० ङीप् इङ्गुदीत्यप्यत्रैव । [त्रि० ।
इच्छक पु० इष-णक । टावालेवु इति ख्याते वृत्ते । इच्छायुक्ते
इच्छा स्त्री० इष-श । इदं मे भूयादिति मनोधर्मभेदे सुखे तत्साधने च चित्तवृत्तौ न्यायमते,"निदुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्वादिष्टोपाय-त्वधीर्यदि"त्युक्तदिशा सुखादिज्ञानेन तत्साधनत्वज्ञानेन च जायमाने इदं मे भूयादित्येवं रूपे आत्मधर्मे अभिलाषे च ।
इच्छावती स्त्री० इच्छाऽस्त्यस्याः मतुप् मस्य वत्वम् । मैथुने-च्छावत्यां कामुकायाम् इच्छाभावयुक्तायाञ्च ।
इच्छु त्रि०इष-उ नि० । इच्छायुक्ते, इच्छाशीले च । [वृत्ते ।
इज्जल पु० इण्-क्विप् तुक् इत् जलं यस्य । (हिजल) निचुल
इज्य पु०इज्यतेऽसौ यज-क्यप् । सुरगुरौ, नारायणे च । पूज्ये त्रि०
इज्या स्त्री०यज-भावे-क्यप् स्त्रीत्वात् टाप् । यज्ञे,यजेर्दानार्थ त्वात् दाने,सङ्गमे च । कर्म्मणि क्यप् । प्रतिमायां, गवि, कुट्टन्याञ्च । [अच् । पुनःपुनर्यज्ञकारके ।
इज्याशील त्रि०इज्यां यज्ञं शीलयति पुनः पुनराचरति शील-
इट गतौ भ्वादि० पर० सक० सेट् । एटति ऐटीत् ।
इड़ा स्त्री० इल-अच् वा लस्य डत्वम् । गवि, वाचि, भूमौ, स्वर्गे, वामपार्श्वस्थायाम् वक्रायां नाड्याञ्च ।
इण् गतौ णित् अदादि० पर० सक० अनिट् । एति ऐषीत् ।
इतर त्रि० इना कामेन तरः तृ-अ । नीचे भिन्ने पामरे च ।
इतरेतर त्रि० इतर+द्वित्वम् । अन्योन्यार्थे परस्परार्थे ।
इतरेतरयोग पु० इतरेतरस्य परस्परस्य योगः एकपदार्था-न्वयित्वेन संबन्धः । चार्थविशेषे, व्याकरणे यत्र द्वन्द्वसमासे समस्यमानानां पदानां प्राधान्यं तदर्थे ।
इतरेद्युस् अव्य० इतर-एद्युस् । अन्यस्मिन्नहनीत्यर्थे ।
इतस् अव्य० इदम्+तसिल् । अस्मिन्नित्यर्थे ।
इतस्ततः अव्य० इतश्च ततश्च । अस्मिन् तस्मिन्नित्यर्थे ।
इति अव्य० इण-क्तिच् । हेतौ, प्रकाशने, निदर्शने, प्रकारे, अनुकर्षे, समाप्तौ, प्रकरणे, स्वरूपे, सान्निध्ये, विवक्षा-नियमे,मते, प्रत्यक्षे, अवधारणे, व्यवस्थायाम्, परामर्शे, माने, इत्यर्थे,प्रकर्षे, उपक्रमे च ।
इतिकर्त्तव्यता स्त्री० इति इदं कर्त्तव्यं तस्य भावः । इदं कृत्वा इदं कुर्य्यादित्येवं परिपाटीरूपे कर्म्मानुष्ठानक्रमे ।
इतिह अव्य० इति एवं ह किल इ० । उपदेशपरम्परायाम् यथाऽत्र वटे यक्ष इत्युपदेशपरम्परैव न तु केनापि दृष्टा तथा कथितम् ।

इतिहास पु० इतिह पारम्पर्य्योपदेश आस्तेऽस्मिन् इतिह+आस घञ् । "धर्म्मार्थकाममोक्षाणामुपदेशसमन्वितम् । पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते इत्युक्तलक्षणे पुरा-वृत्तप्रकाशके भारतादिग्रन्थे ।
इत्थम् अव्य० इदम्+थमु । इदंप्रकारे अनेन प्रकारेणेत्यर्थे ।
इत्थम्भूत त्रि० इदंप्रकारं भूतः प्राप्तः भू-क्त । एवं प्रकारप्राप्ते ।
इत्वर त्रि० इण् क्वरप् । पथिके,नीचे, क्रूरकर्म्मणि च । षण्ढे पु० । अभिसारिकायां स्त्री० ।
इद ऐश्वर्य्ये इदित् भ्वादि० पर० अक० सेट् । इन्दति ऐन्दीत्
इदम् त्रि० इदि-कमि नलोपश्च । पुरोवर्त्तिनि दृश्ये चराचरे
इदानीम् अव्य० इदम्+दानीम् इश् च । सम्प्रत्यर्थे ।
इद्ध न० इन्ध-भावे क्त । आतपे, दीप्तौ,आश्चर्य्ये च । कर्त्तरि-क्त । दृप्ते,निर्म्मले च त्रि० ।
इध्म न० इन्ध-मक् । समिधि, अग्निसन्दीपने काष्ठे च ।
इन पु० इण-नक् । सूर्य्ये, प्रभौ, नृपविशेषे च ।
इन्दिरा स्त्री० इदि-इर । लक्ष्म्याम् । [नीलोत्पले ।
इन्दि(न्दी)वर न० इन्दिरिन्दी वा लक्ष्मीस्तस्यावरमभीष्टम् ।
इन्दीवरिणी स्त्री०इन्दीवर+समूहे देशे वार्थे इनि । उत्पल-समुदाये, तद्युक्तलतायाञ्च । [शतमूल्याम् ।
इन्दीवरी स्त्री० इन्दीं लक्ष्मीं वृणाति वृ-अच् गौरा० ङीष् ।
इन्दु पु० उनत्ति चन्द्रिकया भुवं क्लिन्नां करोति उन्द-उ आदेरिच्च । चन्द्रे, तद्दैवताके मृगशिरोनक्षत्रे तत्सम-संख्ये एकसंख्यायुक्ते, कर्पूरे च ।
इन्दुकलिका स्त्री० इन्दुरिव शुभ्रा कलिका यस्याः । केतक्याम्
इन्दुकान्तः पु० इन्दुः कान्तोऽभीष्टोऽस्य । चन्द्रकान्ते मणौ ।
इन्दुजनक पु० ६त० । समुद्रे । [नद्याम् ।
इन्दुजा स्त्री०इन्दोर्जायते जन-ड । सोमोद्भवायां नर्म्मदायां
इन्दुपुत्र पु० ६त० । बुधग्रहे । [जाङ्गलीवृक्षे ।
इन्दुपुष्पिका स्त्री०इन्दुरिव शुभ्रं पुष्पमस्याः । (विषलाङ्गला)
इन्दुभृत् पु० इन्दुं बिभर्त्ति भृ-क्विप् । शिवे । [राजपत्न्याञ्च ।
इन्दुमती स्त्री० इन्दु+प्राशस्त्ये मतुप् । पूर्णिमायाम्, अज-
इन्दुरत्न न० ६त० । मुक्तायां तस्याश्चन्द्रदैवताकत्वात् ।
इन्दुलेखा स्त्री० इन्दोर्लेखेव । चन्द्रकलायाम् । तद्दर्शनाप्यायि सोमलतायाम्, तद्वत्प्याप्यायनकारिण्याममृतायां, तद्वद्-वक्रत्वात् यमानिकायाञ्च ।
इन्दुलौहक न० ६त० । इन्दुदेवताके लौहके रौप्ये धातौ ।
इन्दुवल्ली स्त्री० ६त० । चन्द्रनामिकायां सोमलतायाम् ।
इन्द्र पु० इदि+र । देवाधिपे, परमेश्वरे, इन्द्रदैवते ज्येष्ठानक्षत्रे,

द्वादशार्कमध्ये अर्कभेदे, इन्द्रतुल्यसंख्याके चतुर्दशसंख्यान्विते, विष्कुम्भादितः षड्विंशे योगे, कुटजवृक्षे च ।
**इन्द्रक** न० इन्द्रस्य कं सुखमिव कं यत्र । सभागृहे ।
**इन्द्रकील** पु० इन्द्रस्य कीलइव अत्युच्चत्वात् । मन्दरपर्व्वते ।
**इन्द्रकोष** पु० इन्द्रस्य कोषइव सुखदायकत्वात् । मञ्चे,खट्वायाञ्च
**इन्द्रगोप** पु० इन्द्रो गोपो रक्षकोऽस्य वर्षाभवत्वात् । इन्द्ररक्षिते रक्तवर्णे कीटभेदे ।
**इन्द्रजाल** न० इन्द्रेण कौशलाद्यैश्वर्य्येण जालं दृष्टेर्नेत्रावरणम् यथास्थितवस्तुदर्शनाक्षमत्वसाधनात् । मन्त्रौषधादिना अन्यथास्थितस्य वस्तुनोऽन्यथात्वेन दर्शनसाधने कुहके (वाजी)।
**इन्द्रजालिक** त्रि० इन्द्रजालं शिल्पमस्य ठन् । कुहककारिणि
**इन्द्रजित्** पु० इन्द्रं जितवान् जि-भूते क्विप् । रावणसुते मेघनादे
**इन्द्रतूल** न० इन्द्रस्येव तूलमाकाशे उड्डीयमानत्वादिन्द्रस्वामिकत्वम् । आकाशे मरुता चाल्यमाने कार्पासे सूत्रे ।
**इन्द्रदारु** पु० इन्द्रस्य तद्भुवनस्य दारु अत्युच्चायतयाकाशगामित्वादिन्द्रभुवनदारुत्वम् । देवदारुवृक्षे ।
**इन्द्रद्रु** पु० इन्द्रस्य द्रुर्वृक्षः । अर्ज्जुनवृक्षे, कुटजवृक्षे च ।
**इन्द्रधनुस्** न० इन्द्रस्य धनुरिव । "रविकिरणा बहुवर्णा वातेन विलोड़िता नभसि । शक्रायुधसंस्थाना दृश्यन्ते तत्तु इन्द्रधनुरि"त्युक्ते नभसि वायुचालिते शक्रधनुराकारेण परिणते रविकिरणे ।
**इन्द्रध्वज** पु० न० इन्द्रस्य ध्वजः । भाद्रशुक्लद्वादश्यां न्टपैर्या प्रजाहृद्ध्यर्थं पूज्यमाने उच्छ्रिते शक्रदेवताके ध्वजे ।
**इन्द्रनील** पु० इन्द्र इव नील । "क्षीरमध्ये क्षिपेन्नीलं क्षीरं चेत्नीलतां नयेत् । इन्द्रनीलमि"ति ख्यातमित्युक्तलक्षणे (पान्ना) मरकतमणौ ।
**इन्द्रपुष्पा** स्त्री० इन्द्र इव नीलं पुष्पमस्याः (विषलाङ्गला) लाङ्गलीवृक्षे । स० वा कपि । इन्द्रपुष्पिकाप्यत्र । [पुरे ।
**इन्द्रप्रस्थ** न०इन्द्रस्यतत्स्थानमेरोःप्रस्थइव (दिल्लीति) ख्याते
**इन्द्रभेषज** न० इन्द्र इव भेषजं श्रेष्ठत्वात् । (शुंट्) शुण्ठ्याम् ।
**इन्द्रमहकामुक** पु० इन्द्रमहं कामयते कम-उक । कुक्कुरे ।
**इन्द्रयव** न० पु० इन्द्रस्य कुटजवृक्षस्य यवाकृतिबीजत्वात् यवो बीजम् । कुटजवृक्षस्य यवाकारे तिक्तरसे बीजे स्वनामख्याते । [रोगे । इन्द्रेण लुप्तं । त्रि० ।
**इन्द्रलुप्त** न० ३त०। (टाक) इति ख्याते मस्तकोपरि केशनाशके
**इन्द्रलुप्तिक** त्रि० इन्द्रलुप्तमस्यास्ति ठन् । (टाक) रोगयुक्तशीर्षके (टेको इतिख्याते जने ।
**इन्द्रवंशा** स्त्री० वर्णवृत्तेषु द्वादशाक्षरपादके छन्दोभेदे ।

**इन्द्रवज्रा** स्त्री० वर्णवृत्तेषु एकादशाक्षरपादके छन्दोभेदे ।
**इन्द्रवारुणी** स्त्री० इन्द्रं वारयति वृ० ह-उनन् । (राखालससा) तिक्तरसायां श्वेतमूलायां पीतपुष्पायां लतायाम् ।
**इन्द्रवृक्ष** पु० ६त० । देवदारुवृक्षे ।
**इन्द्रवृद्धा** स्त्री० ३त०। व्रणरोगभेदे ।
**इन्द्रव्रत** न०इन्द्रस्येव वर्षणे व्रतम् । "वार्षिकांश्चतुरो मासान् यथेन्द्रोऽप्यभिवर्षति । तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन्नि"ति स्मृत्युक्ते प्रजापालने राज्ञोव्रतभेदे ।
**इन्द्रशत्रु** पु० इन्द्रः शत्रुः शातयिता यस्य । वृत्रासुरे ।
**इन्द्रसावर्णि** पु० चतुर्दशे मनौ । [वालिनामके वानरे च ।
**इन्द्रसुत** पु० ६त० । जयन्ते, मध्यमपाण्डवे पार्थे, अर्ज्जुनवृक्षे,
**इन्द्रसुरस** पु० इन्द्रः कुटजवृक्ष इव सुरसः पथ्यरसः । (निसिन्दा) सिन्धुवारे ।
**इन्द्राणिका** स्त्री०इन्द्रः कुटजइव आनयति सेवनेन जीवयति अन-णिच्-ण्वुल् संज्ञात्वेन णत्वम् । निर्गुण्ड्याम्(निसिन्दा)
**इन्द्राणी** स्त्री० इन्द्रस्य पत्नी ङीष् आनुक् च । शचीनाम्नामिन्द्रपत्न्याम् । इन्द्रः कुटज इव आनयति अन-णिच्-अण् (निसिन्दा) सिन्धुवारे वृक्षे स्थूलैलायां, सूक्ष्मैलायां, गौर्य्यादिषु षोड़शमातृकासु मध्ये आद्यायां मातृकायाञ्च ।
**इन्द्रानुज** पु० ६त०। विष्णौ,स हि कश्यपाददितौ वामनरूपेण इन्द्रस्य पश्चात् जातः ।इन्द्रावरजोऽप्यत्र ।
**इन्द्रायुध** न० इन्द्रस्यायुधं धनुरिव । इन्द्रधनुःशब्दार्थे ।
**इन्द्राशन** पु० इन्द्रेण अश्यते भुज्यते कर्म्मणि ल्युट् । (सिद्धि) भङ्गायाम् ।
**इन्द्रिय** न० इन्द्रस्य सत्वगात्मनः लिङ्गमनुमापकम्, तेन दृष्टं मम चक्षुः मम श्रोत्रमित्येवमभिमतम्,इन्द्रेण ईश्वरेण सृष्टं, प्रीणितं वेत्याद्यर्थे इन्द्र+घ । आत्मनो विषयोपलब्धिकरणतयेश्वरसृष्टेषु ज्ञानकर्म्मसाधनेषु चक्षुरादिषु । [प्रतिबन्धे
**इन्द्रियनिग्रह** पु० ६त०। स्वस्वविषयेभ्यश्चक्षुरादीनां प्रवृत्ति
**इन्द्रियवध** पु० ६त०। इन्द्रियाणां स्वस्वकार्य्याक्षमत्वरूपे "वाधिर्य्यं कुष्ठतान्धत्वं जडताऽजिघ्रता तथा । मूकता कौण्यपङ्गुत्वक्लैव्योदावर्त्तमन्तता" इत्युक्तप्रकारे एकादशेन्द्रियाणां क्रमेणैकादशविधे घाते ।
**इन्द्रियवृत्ति** स्त्री० ६त०। "शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानामि"ति सांख्योक्ते श्रोत्रादीनां शब्दादिषु प्रकाशनार्थे व्यापारे।
**इन्द्रियसंप्रयोग** पु० इन्द्रियाणां संप्रयोगः स्वस्वविषयेषु प्रयोगः व्यापारणम् । इन्द्रियसम्बन्धे । इन्द्रियसन्निकर्षोऽप्यत्र

इन्द्रियार्थ पु० इन्द्रियाणामर्थो विषयः। शब्दस्पर्शरूपरस-गन्धात्मके इन्द्रियवेद्ये विषये।
इन्द्रियायतन न० ६त०। शरीरे।
इन्द्रियार्थसन्निकर्ष पु० इन्द्रियाणामर्थैः स्वस्वविषयैः सह सन्निकर्षः संबन्धः। प्रत्यक्षज्ञानहेतौ इन्द्रियविषयसंयोगे।
इन्ध दीप्तौ रुधादि०आत्म०अक० सेट्। इन्धे, ऐन्धिष्ट।
इन्धन न० इध्यतेऽग्निरनेन इन्ध-करणे ल्युट्। काष्ठे।
इभ पु०इण्-भ किच्च। हस्तिनि,तत्तुल्यसंख्यके अष्टसंख्यान्विते च
इभकणा स्त्री० इभोपपदा कणा शाक०त०। गजपिप्पल्याम्।
इभदन्ता स्त्री० इभस्य दन्तइव शुभ्रं पुष्पमस्याः। शुभ्र-पुष्पवल्यां नागदन्त्याम्, विषौषधौ च।
इभनिमीलिका स्त्री० इभं हस्तिनमपि निमीलयति सेवनात् निद्रापयति। भङ्गायाम्।
इभपालक पु० इभं पालयति। (माहुत) हस्तिपके।
इभया स्त्री० इभैर्यायते भक्ष्यतया प्राप्यते या कर्म्मणि क। स्वर्णक्षीरीवृक्षे। [न्यमे च।
इभ्य त्रि० इभं हस्तिनमर्हति यत्। प्रचुरधनवति आढ्ये,
इभ्या स्त्री० इभावस्थिता इभ+यत्। शल्लकीवृक्षे। [ङीप
इयत् त्रि० इदं परिमाणमस्य इदम्-वतुप्। एतावदर्थे स्त्रियां
इयत्ता स्त्री० इयतो भावः तल्। सीमायां,परिमाणे, संख्यायाञ्च
इरम्मद पु० इरया जलेन माद्यति वर्द्धते इरा-मद्-खश् ह्रस्वः मुम् च। वज्राग्नौ वाड़वानले च।
इरा स्त्री० इण् रक् इं कामं राति रा-क वा। भूमौ,वाचि, सुरायाम्, जले, अन्ने च। [जलचरे, भूचरे च त्रि०
इराचर न० इराया चरति चर-ट। (शिल) करकायाम्।
इराज पु० इरया सुरया वीयतेऽसौ अज-घञ्। कन्दर्पे।
इरावती स्त्री० इरां भूमिम् अवति अव-शतृ ङीप्। वट-पत्रीवृक्षे, सा हि पाषाणभेदनेनापि भूमिमागच्छति।
इरिण न० ऋ-इन किच्च। ऊषरभूमौ,निरालम्बे, शून्ये च
इरेश पु० ६त०। वरुणे, वागीशे, भूमिपतौ, विष्णौ च।
इर्वारु स्त्री० उर्व-आरु पृषो०। (काकुड़) कर्कट्याम्। आलु। इर्व्वालुरप्यत्र। [फुटी (स्वयं भिन्नपक्वकर्कट्याम्)।
इर्व्वारु(लु)शुक्तिका स्त्री० इर्वारुः शुक्तिकेव स्वयं स्फोटनात्
इल शयने अक०गतौ क्षेपे च सक० तुदा० पर०सेट्। इलति
इल क्षेपणे चुरा० उभ०सक० सेट्। एलयति ते ऐलिलत् त।
इलविला स्त्री० पुलस्त्यमुनिपत्न्याम् कुवेरजनन्याम्। एतत्-सम्बन्धेनैव कुवेरस्य ऐलविल इति नाम।
इला स्त्री०इल-क। भूमौ, गवि, वाच, जम्बुद्वीपस्थनववर्षमध्ये वर्षभेदे तत्सीमा चेलावृतशब्दार्थे वक्ष्यते। वैवस्वतमनुक-न्यायां वुधपत्न्याम्। सा हि विष्णुवरात् पुंस्त्वमासाद्य पुनः शङ्करशापात् स्त्रीत्वं गता वुधस्तु तामुपयम्य पुरूरवस-सुतमुत्पादयामासेति पुराणे प्रसिद्धम्।
इलावृत न०इला पृथिवी वृता येन। नववर्षात्मकजम्बुद्वीपस्य वर्षभेदे तत्र वर्षे "पश्चान्माल्यवतः प्राच्यां गन्धमादन-शैलतः। इलावृतं नीलगिरेर्याम्यतोनिषधादुदक्" इत्यु-क्त चतुःसीमावच्छिन्ने देशेऽस्ति।
इली स्त्री० इल-इन् ङीप्। (छातुछुरी) करवालिकायाम्।
इलीश ० इलीव करवालिकेव शोभते शुभ-ड। करवालिका सदृशावयवे स्वनामख्याते मत्स्यभेदे।
इल्वल पु० इल-वलच् नि० गुणाभावः अत्यन्तचञ्चले मत्स्यभेदे, वशिष्ठनाशिते दैत्यभेदे च मृगशिरोदेशस्थपञ्चताराशिर-स्थासु तारासु स्त्री० व०व०।
इव व्याप्तौ इदित् भ्वा०पर०सेट् सक०। इन्वति ऐन्वीत्।
इव अव्य० इवि-क। सादृश्ये,उत्प्रेक्षायाम्, ईषदर्थे,वाक्यालङ्कारे च
इष गतौ सर्पणे च दिवा०पर०सक०सेट्। इष्यति, ऐषीत्।
इष वाञ्छायाम् तुदा०पर०सक०सेट्। इच्छति, ऐषीत् एषिता-एष्टा एषिता इष्टा। इष्टः। [एषितः एषिता।
इष पौनःपुन्ये क्र्यादि० पर० अक० सेट्। इष्णाति ऐषीत्।
इष पु० इष-गतौ क्विप् यात्रा जिगीषूणां यास्मिन् अर्श आद्यच्। आश्विने मासि।
इषि(षी)का स्त्री० ईष गत्यादिषु (इ) ईकन् कित् ह्रस्वश्च। गजनेत्रगोलके। दीर्घमध्यस्य काशे, मुञ्जामध्यवर्त्तितृणे च
इषु पु० स्त्री० ईष्यते हिंस्यतेऽनेन ईष-उ कित् ह्रस्वश्च। वाणे तत्तुल्यसंख्ये पञ्चसंख्यान्विते च।
इषुधि पु० स्त्री० इषवो धीयन्तेऽत्र धा-कि। वाणाधारे तूणे।
इषुपुङ्खा स्त्री० इषोः पुङ्खमिव पुष्पमस्याः। शरपुङ्खावृक्षे।
इष्ट त्रि० इष-क्त। पूजिते, अभिलषिते, प्रिये च। यज-क्त। यज्ञादौ कर्म्मणि, एरण्डवृक्षे च पु०। संस्कारे न०। "एकाग्निकर्म्म हवनं त्रेतायां यश्च हूयते। अन्तर्वेद्याञ्च यद्दानमिष्टं तदभिधीयते। अग्निहोत्रं तपः सत्यं वेदानां-ञ्चार्थपालनम्। आतिथ्यं वैश्वदेवञ्च प्राकरिष्टमित्युच्यते धर्म्मकार्य्ये च।
इष्टका स्त्री० इष-तकन्। (इट्) मृदादिनिर्म्मिते मृत्खण्डभेदे
इष्टकापथ न० इष्टकाभिनिर्म्मितः पन्थाः। इष्टकानिर्म्मिते पथि। इष्टं कापथमपानं यस्य। अधोवायुहेतौ उशीरे।
इष्टगन्ध त्रि० इष्टो गन्धो यस्य। सुगन्धिद्रव्ये। वालुकायां न०

**इष्टा** स्त्री० इज्यतेऽनया यज-करणे क्त । शमीवृक्षे ।

**इष्टापूर्त्त** न० इष्टं च पूर्त्तञ्च द्वयोः समाहारः पूर्व्वपददीर्घः । प्रागुक्ते अग्निहोत्रादौ इष्टे, "वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते" इति मनूक्ते पूर्त्ते च । [इष-क्तिन् । अभिलाषे ।

**इष्टि** स्त्री० यज-क्तिन् । यागे, दर्शपौर्णमासाङ्गयागभेदे च ।

**इष्वसन** पु० अस्यते क्षिप्यतेऽनेन अस-ल्युट् ६त० । धनुषि ।

**इष्वास** पु० इषवः अस्यन्तेऽनेन अस-घञ् ६त० । चापे । इषून् अस्यति अण् । वाणक्षेपके धन्विनि त्रि० ।

**इह** अव्य० इदम्+ह इशादेशः । अस्मिन् काले देशे दिशि वा ।

**इहत्य** त्रि० इह भवः इह+त्यप् । इहकालादिजाते ।

## ई

**ई** स्त्री० अस्य विष्णोः पत्नी ङीप् । लक्ष्म्याम् । [ऐषीत्

**ई** कान्तौ अक०, गतौ व्याप्तौ च सक० अदा० पर० अनिट् । एति

**ई** गतौ दिवा० आत्म० सक० अनिट् । ईयते ऐष्ट ।

**ईक्ष** दर्शने भ्वादि० आत्म० सक० सेट् । ईक्षते ऐक्षिष्ट ।

**ईक्षण** न० ईक्ष-भावे ल्युट् । दर्शने । करणे ल्युट् । नेत्रे ।

**ईक्षणिक** त्रि० ईक्षणं हस्तरेखादीक्षणे शुभाशुभदर्शनं शिल्पमस्य ठन् । शुभाशुभफलकथनेनोपजीविनि दैवज्ञे । स्त्रियां टाप्

**ईक्षा** स्त्री० ईक्ष-अ । दर्शने ।

**ईख** गतौ इदित् भ्वादि० पर० सक० सेट् । ईङ्खति ऐङ्खीत् ।

**ईज** गतौ निन्दायाञ्च भ्वा० आत्म० सक० सेट् । ईजते ऐजिष्ट

**ईज** गतौ निन्दने च इदित् भ्वा० आत्म० सक० सेट् । ईञ्जते ऐञ्जिष्ट

**ईड** स्तुतौ चुरा० उभ० सक० सेट् । ईडयति ते ऐडिडत् त

**ईड** स्तुतौ अदा० आत्म० सक० सेट् । ईट्टे ईडिषे ईडिध्वे ऐडिष्ट

**ईडा** स्त्री० ईड-अ । स्तुतौ ।

**ईडित** त्रि० ईड-क्त । स्तुते कृतस्तवे ।

**ईति** स्त्री० ईयतेऽनया ई-क्तिन् । डिम्बे, उत्पादिते, प्रवासे, "अतिवृष्टिरनावृष्टिः शलभाः मूषिकाः खगाः । अत्यासन्नाश्च राजानः षडेताईतयः स्मृता" इत्युक्ते षड्विधोपद्रवे च । [ईदृशे

**ईदृक्ष** त्रि० अयमेव दर्शनमस्य । इदम्+दृश्-क्स इशादेशे दीर्घः ।

**ईदृश्(श)** त्रि० अयमेव दर्शनमस्य । इदम्+दृश क्विन्-इशादेशः दीर्घः । एतादृशे । ट-ईदृशोऽप्यत्र । स्त्रियां ङीप् । [प्राप्तेच्छायाञ्च ।

**ईप्सा** स्त्री० आप्तुमिच्छा आप् सन्-अ । प्राप्तुमिच्छायामि-

**ईप्सित** त्रि० आप-सन्-क्त । आप्तुमिष्टे, इष्टे अपेक्षिते च ।

**ईर** गतौ वा चुरा० उभ० पक्षे भ्वादि० पर० सक० सेट् । ईरयति ते ईरति ऐरिरत् त ऐरीत् ।

**ईर** कम्पे अक०, गतौ सक० अदा० आत्म० सेट् । ईर्त्ते ऐरिष्ट ।

**ईर्क्ष्य** ईर्ष्यायां भ्वादि० पर० अक० सेट् । ईर्क्ष्यति ऐर्क्ष्यीत् ।

**ईर्म्म** न० ईर-मक् । व्रणे । ह्रस्वादिरयमिति वहवः शब्दार्थ० ह्रस्वः

**ईर्ष्य** ईर्ष्यायां भ्वादि० पर० अक० सेट् । ईर्ष्यति ऐर्ष्यीत् ।

**ईर्ष्या** स्त्री० ईर्ष्य-अ । परोत्कर्षासहिष्णुतायामक्षान्तौ ।

**ईर्ष्यालु** त्रि० ईर्ष्यां लाति ला-डु । ईर्ष्यायुक्ते ।

**ईला** स्त्री० ईड-क डस्य लत्वम् । पृथिव्यां, वाचि, गवि च ।

**ईलित** त्रि० ईड-क्त डस्य लत्वम् । स्तुते ।

**ईश** ऐश्वर्य्ये अदा० आत्म० सक० सेट् । ईष्टे ईशिषे ईशिध्वे ऐशिष्ट

**ईश्** पु० ईश-क्विप् । परमेश्वरे । स्वामिमात्रे त्रि० । [त्रि०

**ईश** पु० ईश-क । महादेवे, परमेश्वरे, हिरण्यगर्भे च । स्वामिनि

**ईशान** पु० ईश-शानच् । महादेवे, परमेश्वरे, शिवस्य अष्टमूर्त्तिमध्ये सूर्य्यमूर्त्तौ च । शमीवृक्षे स्त्री० ङीप् । स्वामिनि त्रि० 'ईशानो भूतभव्यस्ये'ति श्रुतिः । शिवपत्न्याम् स्त्री० ङीप् ।

**ईशिता** स्त्री० ईशिनो भावः तल् । अणिमाद्यष्टैश्वर्यमध्ये सर्व्वेषां स्वामित्वरूपे ऐश्वर्य्ये ईशित्वमप्यत्र न० ।

**ईश्वर** पु० ईश-वरच् । महादेवे, कन्दर्पे, पातञ्जलोक्ते क्लेशकर्म्मविपाकाशयैरपरामृष्टे पुरुषविशेषे चैतन्यात्मनि, "ईश एवाहमत्यर्थं न च मामीशते परे । ददामि च सदैश्वर्य्यमीश्वरस्तेन कीर्त्त्यते" इत्युक्तलक्षणे परमेश्वरे, प्रभवादिमध्ये वत्सरभेदे च । आढ्ये, स्वामिनि च त्रि० स्त्रीत्वे गौरा० ङीष् । 'ईश्वरीं सर्व्वभूतानामि'ति श्रुतिः

**ईश्वरी** स्त्री० ईश्वरस्य शिवस्य स्त्री ङीष् । दुर्गायाम् । ईशवनिप् ङीप् रान्तादेशश्च । लिङ्गिनीलतायां वन्ध्याकर्क्कोट्याम्, क्षुद्रजटालतायाम्, नाकुलीवृक्षे च ।

**ईष** उञ्छे (उद्धृतशस्यक्षेत्रात् कणश आदाने) तुदा० पर० सक० सेट् । ईषति ऐषिष्ट । [ईषते ऐषिष्ट ।

**ईष** दाने ईक्षणे, सर्पणे हिंसने च भ्वादि० आत्म० सक० सेट् ।

**ईषत्** अव्य० ईष-अति । अल्पे, किञ्चिदर्थे च । [त्रि०

**ईषत्कर** पु० ईषत्+कृ-खल् । लेशे, अल्पे च । अल्पप्रयाससाध्ये

**ईषत्पाण्डु** पु० ईषदक्षतेति त० । श्वेतरक्ते धूसरे । तद्वति त्रि०

**ईषदुष्ण** पु० ईषदक्षतेति त० । अल्पतप्ते मन्दोष्णे । तद्वति त्रि०

**ईषद्रक्त** पु० ईषदक्षतेति त० । अव्यक्तरागेऽरुणवर्णे । तद्वति त्रि०

**ईषा** स्त्री० ईष-क । हलयुगयोर्मध्यस्थिते काष्ठे ।

**ईषादन्त** पु० ईषेव दन्तौ यस्य । ईषादीर्घदन्ते हस्तिनि ।

**ईषिका** स्त्री० ईषेव इवे प्रतिकृताविति कन् । गजाक्षिगोलके, तूलिकायाम्, अस्त्रविशेषे च । 'सोऽभिमन्त्र्य शरैषीकामीषिकास्त्रमि'ति रामा० । मक्षरीकादि० नि० ईषीकाप्यत्र

ईह चेष्टने भ्वादि० आत्म० अक० सेट् । ईहते ऐहिष्ट ।

ईहा स्त्री० ईह-अ । चेष्टायाम्, उद्यमे, वाञ्छायाञ्च ।

ईहामृग पु० ईहां मृगयते अण् । वृके (नेकड़ाबाघ) अलङ्कारशास्त्रलक्षिते नाटकभेदे च साहि०दर्पण० ।

## उ

उ शब्दे भ्वादि० आत्म० अक० अनिट् । अवते औष्ट ।

उ अव्य० उ-क्विप् न तुक् । सम्बोधने कोपवचने,अनुकम्पायां, नियोगे,विस्मये च । अव-डु शिवे पु० । [भावे क्त । कथने न०

उक्त त्रि० वच-क्त । कथिते । एकाक्षरपादके छन्दोभेदे स्त्री० ।

उक्ति स्त्री० वच-क्तिन् । कथने ।

उक्थ न० वच थक् । नवविधात्मकशास्त्रोऽवयवभेदे, महाव्रताख्ये यज्ञे प्रधानभूते शस्त्ररूपे सामवेदस्याङ्गे, प्राणे च । यज्ञभेदे पु० । एकाक्षरपादे छन्दोभेदे स्त्री० । उक्तौ त्वन्ये

उक्थशास् पु० उक्थानि सामावयवशस्त्राणि शंसति-शंस् क्विप् नि० । यजमाने । [उच्चाम्बभूव आस चकार ।

उक्ष सेचने भ्वादि० पर० सक० सेट् । उक्षति औक्षीत् ।

उक्षतर पु० तनुरूक्षा उक्षन्+तनुत्वे-ष्टरच् । तृतीयवयःप्राप्ते वृषे । जातौ स्त्रीत्वे ङीप् । [त्रि० ।

उक्षन् पु० उक्ष-कनिन् । वृषे, ऋषभौषधौ च । सेचनकर्त्तरि

उख गतौ भ्वादि० पर० सक० सेट् । ओखति औखीत् उवोख

उख गतौ इदित् भ्वादि०पर०सक० सेट् । उङ्खति औङ्खीत् ।

उखा स्त्री० उख-क । पाकपात्रे पिठरादौ (हांड़ि) ।

उख्य त्रि० उखायां स्थाल्यां संस्कृतं यत् । स्थालीपक्वे मांसादौ

उग्र पु० उच-रक् गश्चान्तादेशः । महादेवे, वायुमूर्त्तिधारिणि शिवे क्षत्रियात् ऊढायां शूद्रायामुत्पन्ने संकीर्णवर्णे (आगुरी) उग्रगुणत्वात् शोभाञ्जनवृक्षे,केरलदेशे, क्रूरसंज्ञके "उग्रः पूर्वमघान्तका" इतिज्योतिषोक्ते नक्षत्रसमुदाये च वत्सनाभाख्ये विषे न० । उत्कटे त्रि० । वचायां, यवान्यां, धन्याके, उग्रजातेः स्त्रियां च स्त्री० टाप् ।

उग्रकाण्ड पु०उग्रः काण्डोऽस्य । (करेला) कारवेल्ले वृक्षभेदे

उग्रगन्ध पु०उग्रः गन्धः पुष्पेऽस्य । चम्पके, कट्फले, अर्जकवृक्षे लशुने च । हिङ्गुनि न० । उत्कटगन्धाढ्ये त्रि० । यवानाम् वचायाम्, अजमोदायाञ्च स्त्री० टाप् ।

उग्रचण्डा स्त्री० उग्रा चण्डा कोपना कर्म० । देवीभेदे ।

उग्रतारा स्त्री० उग्रं दुःप भयात् तारयति भक्तान् । तारारूपायां देव्याम् । [शत्रुभिरसह्यधनुष्के त्रि०

उग्रधन्वन् पु०उग्रं धनुर्यस्य ब० अनङ् समा० । शिवे शक्रे च ।

उग्रनासिक त्रि० उग्रा दीर्घा नासिका यस्य । दीर्घनासिके ।

उग्रश्रवस् पु० उग्रम् उत्कटं श्रुतिधरं श्रवः कर्णौ यस्य । रोमहर्षणसुते पौराणिके सूते । [जनकत्वेन ख्याते नृपे

उग्रसेन पु० उग्रा सेनाऽस्य । यदुवंश्ये आहुकनामके कंसस्य

उच समवाये दि० पर० सक० सेट् । उच्यति औचत्-औचीत्

उचित त्रि० उच-क्त वच-क्तिच् वा । न्यस्ते परिचिते, युक्ते ।

उच्च त्रि० उत्क्षिप्य बाहू चीयते उद्+चि-ड । उन्नते ।

उच्चटा स्त्री० उद्+चट-अच् । लशुनभेदे,गुञ्जायां, चूडालायाम्,भूम्यामलक्यां, नागरमुस्तायां दन्ते (घेंचुया) चञ्चायाञ्च

उच्चण्ड त्रि०उद्+चडि-अच् । अत्यन्तकोपे,त्वरायुक्तेऽविलम्बिते

उच्चतरु पु०कर्म० । नारिकेले । [तया तत उच्चैर्हसतालदानात्

उच्चताल न० उच्चः तालः हस्ततालः यत्र । पानगोष्ठ्यां मत्त-

उच्चन्द्र पु० उच्छिष्टः खल्पावशिष्टश्चन्द्रो यत्र प्रादि० बहु० व० शिष्टशब्दलोपः । रात्रिशेषे । [मुद्गलावचिते नीवारे

उच्चय पु०उत्थाय चयः चि-अच् । पुष्पादेरुत्तोलने । हस्ताभ्या-

उच्चाटन न० उद्+चट-णिच्-ल्युट् । उत्पाटने स्वस्थानात् विश्लेषणे 'उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्तितम्' इति तन्त्रोक्ते षट्कर्मान्तर्गतेऽभिचारभेदे च । [विष्ठायाम् ।

उच्चार पु०उद्+चर-णिच् घञ् । उच्चारणे । कर्मणि घञ् ।

उच्चावच त्रि० उदक् उत्कृष्टञ्च अवाक् अपकृष्टञ्च मयू० नि० । उत्कृष्टापकृष्टात्मके नानाभेदे । [वस्त्रखण्डे ।

उच्चूल पु० उन्नता चूडा यस्य डस्य लत्वम् । ध्वजोर्द्धस्थिते

उच्चैःश्रवस् पु० उच्चैरुन्नतं श्रवोऽस्य । उन्नतकर्णे समुद्रजाते श्वेतवर्णे इन्द्रस्य वाहनभूते अश्वभेदे । उच्चैरुच्चशब्दं शृणोति श्रु-असुन् । वधिरे ।

उच्चैर्घुष्ट न० उच्चैस्+घुष क्त । (ढेंडरा) उच्चघोषणायाम् ।

उच्चैस् अव्य० उद्+चि डैसि । अत्यर्थे,महति, उन्नते च । अकारि उच्चकैरयत्र । [शास्त्रविरुद्धेऽधर्मकृत्ये च ।

उच्छास्त्र त्रि० उद्गतं शास्त्रात् ग०स० । अतिक्रान्तशास्त्रे

उच्छिख त्रि० उन्नता शिखा यस्य प्रा०ब० । उन्नताग्रे ।

उच्छित्ति स्त्री० उद्+छिद-क्तिन् । उच्छेदे, नाशने च ।

उच्छिलीन्ध्र उच्छिखं शिलीन्ध्रम् । छत्राके । विकसितशिलीन्ध्रयुक्ते त्रि० । 'उच्छिलीन्ध्रामवन्ध्यामिति' मेघदूतम् ।

उच्छिष्ट त्रि० उद्+शिष-क्त । भुक्तावशिष्टे, त्यक्ते च ।

उच्छिष्टभोजन पु० पञ्चयज्ञावशिष्टं देवनैवेद्यं वा भोजनमस्य । पञ्चयज्ञाऽवशिष्टस्य देवनैवेद्यस्य च भोक्तरि ।

उच्छिष्टमोदन न० उच्छिष्टं भ्रमरोच्छिष्टं मधु तेन मोदते वर्द्धते मुद ल्यु । (मोम) सिक्थके ।

उच्छीर्षक न० उत्थापितं शय्यातउत्तोल्य स्थापितं शीर्षं यस्मिन्
ब० कप्। शीर्षोपधाने (वालिश)। उन्नतशीर्षके धान्यादौ त्रि०
उच्छून त्रि० उद् श्वि-क्त। स्फीते 'इत्युच्छूनैः किमेभि'रिति
नाटकम् उन्नते च। [नियन्तृरहिते, अप्रतिबन्धे च।
उच्छृङ्खल त्रि० उद्गतं शृङ्खलातः गात स०। बन्धनरहिते,
उच्छेद पु० उद् छिद्-घञ्। छेदने, विनाशने च।
उच्छोषण त्रि० उद्+शुष-णिच्-ल्यु। सन्तापके, ऊर्द्ध्वशोषके च
उच्छ्र(च्छ्रा)य पु० उद्-श्रि-अच् घञ् वा। उच्चतायाम् उन्नतौ
उच्छ्रित त्रि० उद्+श्रि-क्त। उच्चे, प्रवृद्धे, संजाते, समुन्नद्धे च
उच्छ्वसित त्रि० उद्+श्वस-क्त। विकाशिते, जीविते, स्फुरिते च
उच्छ्वास पु० उद्+श्वस-घञ्। अन्तर्मुखश्वासे, आख्यायिका
याः परिच्छेदे, प्राणे, आश्वासे च। [ति औञ्छीत्।
उछ उञ्छे (कणशआदाने) तुदा० इदित् पर० सक० सेट्। उञ्छ
उछ बन्धे समापने च तुदा० पर० सक० सेट्। उच्छति औच्छीत्
उज्जय(यि)नी स्त्री० विक्रमादित्यराजधान्याम् अवन्त्यां पुर्य्याम्
उज्जासन न० उद्+जस-हिंसायां स्वार्थे णिच्-ल्युट्। मारणे
उज्जृम्भ पु० उद+जृभि-घञ्। विकाशे, स्फुटने च। [याम् न०
उज्जृम्भित त्रि० उद्+जृभि-क्त। विकाशिते। भावे क्त। चेष्टा-
उज्ज्वल त्रि० उद्+ज्वल-अच्। दीप्ते, विशदे, विकाशिनि च।
स्वर्णे न०। शृङ्गाररसे पु०। [उज्झाञ्चकारे'ति रघुः।
उज्झ त्यागे तुदा० पर० सक० सेट्। उज्झति 'औज्झीत 'तत्य-
उञ्छ पु० उछि-घञ्। 'अवाधितस्थानेषु पथि, क्षेत्रेषु च अप्र-
तिहतावकाशेषु यत्र यत्रौषधयो विद्यन्ते तत्र तत्राङ्गुली-
भ्यामेकैकं कणं समुच्चिनोतीति स्मृत्युक्ते कणश आदाने।
उञ्छन पु० न० उछि-ल्युट्। आपणादिपतितस्य विक्रीता-
वशिष्टस्य धान्यादेः कणश आदाने।
उञ्छशिल न० उञ्छ+शिल-अपहारे क। क्षेत्रस्वामिना
गृहीतशस्यात् क्षेत्रात्कणशः समुच्चयरूपे उञ्छाचारे।
उट न० उ०-ट नेत्त्वम्। तृणे, पर्णे च। [मुन्यादिरचिते।
उटज पु० न० उटेभ्यो जायते जन+ड। पत्रनिर्म्मितशालायां
उठ उपघाते भ्वा० पर० सक० सेट्। ओठति औठीत्।
उड संहतौ (सौत्रः) पर० अक० सेट्। ओडति औडीत्।
उडु स्त्री०न० उड-उ। नक्षत्रे, जले च। स्त्रीत्वे वा ऊङ्।
उडु(डू)प पु० उडूनि जले पाति पा-क। प्लवे भेलायाम्। उडूनि
नक्षत्राणि पाति। चन्द्रे स हि ताराणां पतिरतो रक्षकः।
उडु(डू)पति पु० उडूनां पतिः। चन्द्रे, जलेशे वरुणे च।
उडुपथ पु० उडूनां पन्थाः। आकाशे।
उडुम्बर पु० उं गर्भं वृणोति खश् उम्बरः उत्कट उम्बरः

पृषो० दस्य वा डत्वम्। (यज्ञडुम्बुर) यज्ञाङ्गे वृक्षे, ताम्रे च
गृहावग्रहण्याम् देहल्याम्. कुष्ठभेदे च न०।
उड्डामर त्रि० उत्कटं डामरम्। अत्यन्तप्रचण्डे।
उड्डीन न० उद्+डी क्त। पक्षिणामूर्द्ध्वगमने।
उत अव्य० उ-क्त। विकल्पे, समुच्चये, वितर्के प्रश्ने अत्यर्थे च।
उत त्रि० वेञ् क्त संप्रसारणम् (बुना) ख्याते।
उतथ्य पु० अङ्गिरसः श्रद्धायां पत्न्यामुत्पन्ने गुरोर्ज्येष्ठभ्रातरि
उतथ्यतनय पु० ६त०। गौतमे मुनौ।
उतथ्यानुज पु० ६त०। वृहस्पतौ 'उतथ्यावरजो'प्यत्र।
उताहो अव्य० उत च आहो च द्व०। विकल्पे प्रश्ने, विचारे च
उत्क त्रि० उद्गतं मनोऽस्य उद्+क नि०। उन्मनस्के अत्युन्मनस्के
उत्कट पु० अतीव उद्+कटच्। इक्षौ, शरे च। त्वक्पत्रे।
गुडत्वचि (दारचिनि) च न०। उद्गतः कटः आवरणं यस्य
प्रादि० ब०। मत्ते विषये, तीव्रे च त्रि०। भिन्नकटे गजे पु०।
उत्कण्ठा स्त्री० उद्+कठि-अ। इष्टलाभे कालाक्षमत्वरूपे औत्सुक्ये
उत्कण्ठित त्रि० उत्कण्ठा जाताऽस्य तारकादि० इतच्।
उत्कण्ठायुक्ते। नायिकाभेदे स्त्री०। साहि०दर्प०
उत्कर पु० उद्+कृ-अप्। धान्यादीनां राशीकरणे, प्रसारणे,
तृणापसारणे च कृषपदादिविक्षेपे च।
उत्कर्ष पु० उद्+कृष-घञ्। अतिशये।
उत्कल पु० 'जगन्नाथप्रान्तदेश उत्कलः परिकीर्त्तित' इत्युक्ते
ओड्रदेशे। उत्कः सन् लाति ला+क। व्याधे, भार-
वाहके च। [जातायां स्मृतौ च।
उत्कलिका स्त्री० उद्-कल-वुन्। उत्कण्ठायाम्, कामादि
उत्कलित त्रि० उद्+कल-क्त। उन्मनस्के उद्भिमति च।
उत्कार पु० उद्+कृ-घञ्। धान्यानां, राशीकरणे, ऊर्द्ध्वक्षेपणे च
उत्कास पु० उत्कासकः कासः। कासभेदे, वमनव्याधौ च।
उत्कीर्ण त्रि० उद्+कॄ-क्त। उल्लिखिते, कृतवेधे च 'मणौ
वज्रसमुत्कीर्णे' इति रघुः।
उत्कुण पु० उद्+कुण-क। केशकीटे (उकुण) इति ख्याते।
उत्कृति स्त्री० षड्विंशत्यक्षरपादके छन्दोभेदे।
उत्कोच पु० उद्+कुच-घञ्। अन्यायकर्म्मकरणार्थं वादि-
प्रतिवादिभ्योऽर्थग्रहणे (घुस) इति ख्याते।
उत्क्रम पु० उद्+क्रम-घञ् अवृद्धिः। व्युत्क्रमे, विपरीतक्रमे
उत्क्रोश पु० उद्+क्रुश-अच्। कुररीपक्षिणि।
उत्क्षेपण न० उद्+क्षिप ल्युट्। ऊर्द्ध्वक्षेपणे। कर्म्मणि ल्युट्।
व्यजने। करणे ल्युट् धान्यमर्द्दने काष्ठभेदे। [इति रघुः
उत्खात त्रि० उद्+खन-क्त। उत्पाटिते 'उत्खातप्रतिरोपिता'

**उत्खातकेलि** पु० 'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इत्युक्तलक्षणे वृषगजादेः शृङ्गादिना मृत्तिकाखनने।

**उत्त** त्रि० उन्द-क्त। क्लिन्ने आर्द्रवस्तुनि।

**उत्तंस** पु० उद्+तसि-अच्। कर्णाभरणे, शिरोभूषणे च।

**उत्तप्त** त्रि० उद्+तप-क्त। संतप्ते, स्नाते च। शुष्कमांसे न०

**उत्तम** त्रि० उद्+तमप्। उत्कृष्टे। प्रियव्रतनृपस्य पुत्रे पु०।

**उत्तमर्ण** पु० उत्तममृणमस्य। ऋणप्रयोजके (महाजन)।

**उत्तमसाहस** न० "साशीतिपणसाहस्रो दण्ड उत्तमसाहसमित्युक्ते दण्डभेदे।

**उत्तमाङ्ग** न० कर्म०। मस्तके। [त्तो निवृत्तौ।

**उत्तम्भ** पु० उद्+स्तम्भ-घञ्। प्रवृत्तिबाधिकायामनिष्टसाधन-

**उत्तर** न० उत्तीर्य्यते प्रकृताभियोगोऽनेन उद्+तॄ-अप्। राजसमीपे वादिकृताभियोगशोधने उत्तराख्ये व्यवहाराङ्गे "प्रश्नशेषधिया पृच्छा तस्य भञ्जनमुत्तर'मित्युक्ते दोषभञ्जनवाक्ये च। विराटराजपुत्रे पु०। उदीच्यां दिशि विराटराजसुतायाञ्च स्त्री०। अनन्तरे देशे, काले च पु०। अनन्तरादिदेशकालवृत्तौ त्रि०।

**उत्तरकाल** पुं० कर्म०। भविष्यत्काले आयतौ।

**उत्तरकुरु** पु० नववर्षात्मकस्य जम्बुद्वीपस्य वर्षभेदे।

**उत्तरकोशला** स्त्री० अयोध्यानाम्न्यां नगर्य्याम्।

**उत्तरङ्ग** न० उत्तरमङ्गम् कर्म० शकन्ध्वा०। द्वारोर्द्ध्वस्थदारुणि। उद्गततरङ्गे त्रि०।

**उत्तरच्छद** पु० कर्म०। शय्याया उपर्य्यास्तरणवस्त्रे।

**उत्तरपक्ष** पु० वादे पूर्व्वपक्षस्य मर्द्दनक्षमे सिद्धान्तपक्षे।

**उत्तरफाल्गुनी** स्त्री० फल्गु मनोहरं नयति। नी-ङी कर्म०। अश्विन्यादिनक्षत्रेषु द्वादशे नक्षत्रे दक्षिणोत्तरस्थिततारकाद्वयात्मके।

**उत्तरभाद्रपद्** स्त्री० भद्राय हितः भाद्रः पद् पादश्चतुर्थांशो यस्याः न० तत: कर्म०। अश्विन्यादिनक्षत्रेषु षड्विंशे नक्षत्रे पदशब्देन समासः टाप्। उत्तरभाद्रपदाप्यत्र।

**उत्तरमीमांसा** स्त्री० कर्म०। ब्रह्ममीमांसायाम् वेदान्तदर्शने।

**उत्तरा** अव्य० उत्तर+आच्। उत्तरस्यां दिशि काले देशे चेत्यर्थे

**उत्तरा** 'प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते उत्तरा हि ता इत्युक्तासु सपिण्डीकरणोत्तरासु श्राद्धक्रियासु। [त्तरस्मादुत्तरस्मिन्नित्यर्थे।

**उत्तरात्** अव्य० उत्तर+आति। दिग्देशकालविषये उत्तरस्मु-

**उत्तराधिकारिन्** त्रि० उत्तरमधिकरोति अधि+कृ-णिनि। पूर्व्वस्वामिस्वत्वोपरमे तत्सम्बन्धाधीनस्वत्ववति जाताधिकारे पुत्रपौत्रादौ दायादे। (अंशी) इति ख्याते। [त्तरे।

**उत्तराभास** पु० उत्तरमिवाभासते आ+भास-अच्। दुष्टो-

**उत्तरायण** न० 'माघादि मासयुग्मैस्तु ऋतवः षट् क्रमादितः। उत्तरायणमाद्यैस्त्रैरि'त्युक्तलक्षणे ऋतुत्रयात्मके माघादिके मासषट्के काले। उत्तरा दिशि सूर्य्यस्य अयनं यस्मिन् काले इति व्युत्पत्तेः। तदारम्भकाले मकरसंक्रमणदिनेऽपि।

**उत्तराषाढ़ा** स्त्री० अश्विन्यादिनक्षत्रेषु एकविंशतितमे नक्षत्रे

**उत्तरासङ्ग** पु० उत्तरे ऊर्द्धभागे आसज्यते आ+सन्ज-घञ्। उत्तरीयवस्त्रे। [स्मिन् उत्तरस्मात् उत्तरमित्यर्थे

**उत्तराहि** अव्य० उत्तर+आहि। दिग्देशकालविषये उत्त-

**उत्तरीय** न० उत्तरस्मिन् देहभागे भवः छ। ऊर्द्ध्वदेहधार्य्ये वस्त्रे

**उत्तरेण** अव्य० आसन्नदिग्देशकालानां प्रथमान्तसप्तम्यन्तानामर्थेषु 'तत्रागारं धनपतिगृहानुत्तरेणास्मदीय'मिति मेघदूतम्

**उत्तरेद्युस्** अव्य० उत्तरस्मिन् दिने उत्तर+एद्युस्। आगामिदिवसे इत्यर्थे।

**उत्तान** त्रि० उद्गतस्तानो विस्तारोऽस्मात्। विस्तारशून्ये, (चित) भूमिलग्नपृष्ठतया ऊर्द्धभावेन स्थिते, ऊर्द्ध्वमुखे च।

**उत्तानक** पु० उद्-तन-ण्वुल्। उच्चटायाम्।

**उत्तानपत्रक** पु० उत्तानमूर्द्धमुखं पत्रमस्य। रक्ते एरण्डवृक्षे

**उत्तानपाद** पु० स्वायम्भुवो मनोः पुत्रे ध्रुवपितरि नृपभेदे।

**उत्तानशय** त्रि० उत्तानः ऊर्द्धमुखः सन्नेव शेते -अच्। अतिशिशौ तस्य च तदानीमवतानेसामर्थ्याभावात्।

**उत्ताप** पु० उद्+तप-घञ्। उष्णतायाम्, सन्तापे च।

**उत्तार** त्रि० उद्गता तारा यस्य। उद्गततारकनेत्रयुक्ते। उत्कृष्टतारः। अत्यन्तोच्चे। [विकरणे, त्वरिते, उन्नते च। प्लवङ्गमे पु०

**उत्ताल** त्रि० चुरा० तल-प्रतिष्ठायाम् अच्। प्रतिष्ठिते महति।

**उत्तीर्ण** त्रि० उद्+तॄ-क्त। मुक्ते, पारंगते च।

**उत्तुङ्ग** त्रि० उत्कटं तुङ्गम्। अत्युन्नते। [(खइ) भ्रष्टधान्ये

**उत्तुष** पु० उद्गतः कण्डनाभावेऽपि तुषोऽस्मात्। लाजाख्ये

**उत्तेजना** स्त्री० उद्+तिज-णिच्-युच्। प्रेरणायाम्, शाणताकरणे, उद्दीपने, तीक्ष्णीकरणे च।

**उत्तेजित** त्रि० उद्+तिज-णिच्-क्त। प्रेरिते, उद्दीपिते च। भावे क्त। उत्तेजनायाम् "उत्तेजितं मध्यवेगं योऽश्वं प्लुतवल्गयेत्युक्ते अश्वगतिभेदे न०।

**उत्तेरित** न० उद्-तॄ भावे इतच् गुणे रत्वम् त्रि०। अश्वगतिभेदे। अर्श आद्यच्। "उत्तेरितोऽतिवेगाढ्यो न गृह्णाति न पश्यती'त्युक्तगतियुक्तेऽश्वे पु०।

**उत्तोलन** न० उद्+तुल-उन्माने ल्युट्। ऊर्द्धं नीत्वा तोलने,

**उत्तोलित** त्रि॰ उद्+चु॰तुल-क्त । उत्क्षिप्ते,कृततोलने च

**उत्त्यक्त** त्रि॰ उद्+त्यज-क्त । ऊर्द्ध्वक्षिप्ते,परित्यक्ते च ।

**उत्थान** न॰ उद्+स्था-ल्युट् । ऊर्द्ध्वपतने, उद्यमे, ऊर्द्ध्वभवनचेष्टायाम्, उद्भवे च । करणे ल्युट् । उत्साहे, पौरुषे, हर्षे च । अधिकरणे ल्युट् । रणे,राज्यचिन्तनरूपे तन्त्रे, प्राङ्गणे, चैत्ये च ।

**उत्थानैकादशी** स्त्री॰ उत्थानस्य हरेः निद्रातः प्रबोधनस्य काल एकादशी। चान्द्रकार्त्तिकशुक्लैकादश्याम् ।

**उत्थित** त्रि॰ उद्+स्था-क्त । वृद्धियुक्ते, उद्यते, उत्पन्ने च ।

**उत्थिताङ्गुलि** पु॰उत्थिता उद्युक्ता अङ्गुलयो यत्र। (चापड़) विस्तृताङ्गुलिके करतले चपेटे ।

**उत्पत** पु॰ उत्पतति ऊर्द्ध्वं गच्छति उद्+पत-अच् । पक्षिणि

**उत्पतन** न॰ उद्+पत-ल्युट् । ऊर्द्ध्वगमने, उत्पत्तौ च ।

**उत्पत्ति** स्त्री॰ उद्+पद-क्तिन् । जन्मनि,जीवस्य देहसम्बन्धे, सांख्यादिमते आविर्भावे च। उद्+पत-क्तिन्। ऊर्द्ध्वगमने ।

**उत्पत्तिविधि** पु॰ मीमांसकमते कर्म्मस्वरूपबोधके विधौ यथा अग्निहोत्रं जुहोतीत्यादि ।

**उत्पल** न॰ उद्+पल-अच् । नीलपद्मे, कुमुदादौ,कुष्ठौषधौ च।

**उत्पलगन्धिक** न॰ उत्पलस्य गन्ध इव गन्धोऽस्य इत् समा॰ संज्ञायां कन् । गोशीर्षाख्ये चन्दने ।

**उत्पलपत्र** न॰उत्पलस्य पत्रमिव । तिलकभेदे,स्त्रीणां स्तनादौ नखक्षते च । ६त॰। इन्दीवरस्य दले ।

**उत्पलिनी** स्त्री॰ उत्पलानि सन्त्यस्मिन् देशे तेषां समूहो वा इनि । उत्पलयुक्तलतायां, कुवलयसमुदाये च ।

**उत्पवन** न॰ उद्+पू-करणे ल्युट् । कुशकण्डिकायां पवित्रेण जलादेरुत्क्षेपणे ।

**उत्पश्य** त्रि॰ उद्+दृश-श । ऊर्द्ध्वदृष्टिकारके, उन्मुखे च ।

**उत्पाटन** न॰ उद्+पट-णिच्+ल्युट् । उन्मूलने ।

**उत्पात** पु॰ उद्+पत-घञ् । उपद्रवे । उद्+पत-ण । अकस्मादागते प्राणिनां शुभाशुभसूचके दैवनिमित्ते भूकम्पादौ ।

**उत्पादक** पु॰ ऊर्द्ध्वस्थिताः पादा अस्य कप् । अष्टपदे शरभाख्ये गजारातौ पशुभेदे तस्य पृष्ठस्थचतुश्चरणत्वादूर्द्ध्वपादत्वम् । उत्-पद-णिच्-ण्वुल् । पितरि पु॰ । उत्पादनकर्त्तरि त्रि॰ । [(टिटिर) टिट्टिभपक्षिणि ।

**उत्पादशय** पु॰ उत्पाद ऊर्द्ध्वक्षिप्तपादः सन् शेते शी-ल्यु ।

**उत्पिञ्जल** त्रि॰ उद्+पिजि-कलन् । अत्यर्थाकुले ।

**उत्प्रास** पु॰ उद्+प्र+अस-दीप्त्यादिषु घञ् । उपहासे ।

**उत्प्रेक्षा** स्त्री॰ उद्+प्र+ईक्ष-अ । उद्भावने अर्थालङ्कारभेदे च सा॰ १०द॰ । [रूपे उन्मज्जने (भासा) ।

**उत्प्लवन** न॰ उद्+प्लु-ल्युट् । उल्लम्फने, जलादेरुपरिस्थिति

**उत्प्लवा** स्त्री॰उत् जलादेरुपरि प्लवते प्लु-अच्। नौकायाम् ।

**उत्फुल्ल** त्रि॰ उत्+फल-क्त । दलानामन्योन्यविश्लेषेण विकाशिते कुसुमादौ । [ज्जले च ।

**उत्स** पु॰ उन्द-स । पर्व्वतादितः स्रवज्जलस्य पातस्थाने, स्रव-

**उत्सङ्ग** पु॰ उद्-सन्ज-घञ् । क्रोडे । सङ्गादुत्क्रान्ते त्रि॰ ।

**उत्सर्ग** पु॰ उद्+सृज-घञ् । व्याकरणोक्ते सामान्यविधाने, न्याये, त्यागे, दाने, यागभेदे, अपानवायोर्व्यापारे च ।

**उत्सर्ज्जन** न॰ उद्+सृज-ल्युट् । दाने त्यागे च । [च

**उत्सर्पण** न॰ उद्+सृप-ल्युट् । उत्सृज्य पुरतोगतौ,उल्लङ्घने

**उत्सव** पु॰ उद्+सू-अप् । आनन्दजनकव्यापारे विवाहादौ ।

**उत्सवसङ्केत** पु॰ उत्सव आनन्दजनकः सङ्केतः स्त्रीपुंसयो रत्यर्थमनुरागादाह्वानम् यस्य। अस्येयं स्त्रीत्येवं दाम्पत्यनियमशून्ये स्त्रीपुंसयोरनुरागमात्रहेतुकस्वैरविहारशालिनि पार्व्वतीये जातिभेदे । 'शरैरुत्सवसङ्केतानिति' रघुः ।

**उत्सादन** उद्+सद-णिच्-ल्युट् । उत्सारणे, उद्वर्त्तने च ।

**उत्सारक** पु॰ उद्+सृ-णिच्-ण्वुल् । द्वारपाले तेन हि प्रभुद्वारतो जना दूरीक्रियन्ते । [स्थानान्तरकरणे च ।

**उत्सारण** न॰ उद्-सृ-णिच्-ल्युट् । दूरीकरणे, चालने,

**उत्साह** पु॰ उद्+सह-घञ् । उद्यमे, अध्यवसाये, कर्त्तव्यकृत्येषु स्थिरतरे प्रयत्ने "उत्साहो मन्त्रमूलं स्यादिति नीतिविदां मतम् । प्रभुशक्तिर्मन्त्रमूला तस्मादुत्साहवान् भवेदि"त्युक्ते राज्ञां गुणविशेषे, कल्याणे, सूत्रे, वीररसस्य भावदे च साहि॰ ३परि॰ ।

**उत्साहवर्द्धन** पु॰ उत्साहं वर्द्धयति वृध-णिच्-ल्यु । वीररसे । वृध-ल्युट् ६त॰। उत्साहस्य वृद्धौ न॰ ।

**उत्साहशक्ति** स्त्री॰ उत्साहएव शक्ति र्बलम् । राज्ञां विक्रमहेतौ बले । [सेकयुक्ते, उपप्लुते, त्यक्तमर्य्यादे च।

**उत्सिक्त** त्रि॰ उद्+सिच-क्त । गर्व्विते उद्धते, वर्द्धिते, उपरि-

**उत्सुक** त्रि॰ उद्+सू-क्विप् कनि ह्रस्वः । इष्टार्थस्याप्तनाय उद्युक्ते, अभीष्टोगमिष्यतीत्युत्कण्ठान्विते च ।

**उत्सृष्ट** त्रि॰ उद्+सृज-क्त । त्यक्ते, कृतोत्सर्गे, दत्ते च ।

**उत्सेक** पु॰ उद्+सिच्-घञ्। गर्व्वे,उद्रेके उद्धृत्य वहिःसेचने च

**उत्सेध** पु॰ उद्+सिध-घञ् । देहे. उन्नतौ 'पयोधरोत्सेधनिपातेति कुमारः ।

**उद्** अव्य॰ उ-क्विप् तुक् पृषो॰ दत्वम् । प्रकाशे, विभागे, प्राकट्ये, ऊर्द्ध्वे, उत्कर्षे,प्राबल्ये, अस्वास्थ्ये,यत्ने,प्राधान्ये,

बन्धने, भावे,मोक्षे, 'तस्य उदिति नामेति' श्रुतेर्ब्रह्मणि च

**उदक** न० उन्द्-ण्वुल् नलोपश्च नि०। जले ष्टयो० कशेरुमे उदमन्थव। [करञ्जभेदे।

**उदकीर्य्य** पु०उदकेन जलेन कीर्य्यते कॄ-क्यप्। (डहरकरमचा)

**उदकुम्भ** पु० उदकेन पूर्णः कुम्भः शाक० त०। जलपूर्णकुम्भे मान्युदकुम्भहस्ता इति भट्टिः। [ऋतुमत्याम्।

**उदक्या** स्त्री०उदकं शुद्ध्यर्थं स्नानजलं चतुर्थदिने अर्हति यत्।

**उदगद्रि** उदगुत्तरस्यामद्रिः। हिमाचले।

**उदगयन** न० उदक् उदीच्यामयनम्। उत्तरायणे माघादिके मासषट्के 'उदगयने आपूर्य्यमाणे' पक्षे इति स्मृतिः।

**उदग्र** त्रि० उद्गतमग्रं यस्य। उच्चे। [तृणादिपात्रे (कुपो)।

**उदङ्क** पु० उदच्यते उद्ध्रियतेऽत्र उद्+अच्-घञ्। चर्म्ममये

**उदच्** अव्य० उदच् दिग्देशकाले वाच्ये प्रथमापञ्चमीसप्तम्यर्थे अस्ताति तस्य लुक्। प्रथमान्ताद्यर्थवृत्तौ उत्तरदिगादौ। उद्+अन्च-क्विन्। उत्तरे देशे काले च पु०। स्वादौ उदङ् उदञ्चौ। दिशि स्त्री० ङीप् उदीची।

**उदज** पु० उद्+अज-अच्। पशुप्रेरणे।

**उदञ्चन** न० उद्+अन्च-करणे ल्युट्। पिधानार्थे पात्रे (ढाकना)। भावे ल्युट्। ऊर्द्ध्वक्षेपणे।

**उदञ्चित** त्रि० उद्+अन्च-क्त। ऊर्द्ध्वक्षिप्ते, पूजिते च।

**उदधि** पु० उदकानि धीयन्तेऽस्मिन् धाञ्-आधारे कि उदादेशः। समुद्रे, घटे च।

**उदधिमल** पु० उदधेर्मल इव। समुद्रफेने।

**उदन्त** पु० उद्गतोऽन्तो निर्णयो यस्मात्। वार्त्तायाम् वृत्तान्ते कुशलादिकथने, साधौ च। [त्रि। पिपासायाम्।

**उदन्या** स्त्री० अतिगार्द्ध्येन उदकमिच्छति क्यच् उदन्भावः

**उदन्वत्** पुः उदकानि सन्त्यस्य मतुप् उदन् भावः मस्य वः। समुद्रे

**उदप** आघाते (चौरा०) पर०सक० सेट्। उदपति। औदापीत्

**उदपान** पु०न० उदकं पीयतेऽस्मिन् पा-ल्युट् उदादेशः। कूपसमीपस्थे खाते क्षुद्रजलाधारे।

**उदमान** पु० 'कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढकः। अस्यार्द्धमतिकोभाग उदमान उदाहृत इत्युक्ते मानभेदे।

**उदय** पु० उद्+इ-अच्। ज्योतिषोक्ते राशेरुदयरूपे लग्ने। आधारे अच्। उदयाचले पूर्व्वपर्व्वते 'यैर्यत्र दृश्यते भास्वान् स तेषामुदयः स्मृत' इत्युक्तलक्षणे दृष्टियोग्यस्थाने च भावे अच्। प्रथमदर्शनयोग्यभवन, वृद्धौ,समुन्नतौ उत्पत्तौ च।

**उदयन** पु० उद्+इ-ल्यु। वत्सराजे, अगस्त्ये मुनौ, कुसुमाञ्जलिप्रभृतिग्रन्थकारके उदयनाचार्य्ये च। भावे ल्युट्। उदये

**उदर** न०उद्+दृ-अप्। जठरे नाभिस्तनयो र्मध्यभागे। आधारे अप्। युद्धे। उद्+दृ-अप् उदो दलोपश्च। उदररोगे।

**उदरग्रन्थि** पु० उदरे ग्रन्थिरिव। गुल्मनामकरोगे।[बन्धवस्त्रे

**उदरत्राण** न० उदरं त्रायतेऽनेन ल्युट्। (कमरबन्ध) उदर-

**उदरपिशाच** त्रि० उदरे तत्पूर्त्तौ पिशाच इव। सर्व्वान्नभक्षके।

**उदरम्भरि** त्रि० उदरं बिभर्त्ति भृ-खि मुम् च। पञ्चयज्ञाद्यकरणेनात्मोदरमात्रपोषके।

**उदररोग** पु० ६त०। उदरी इति ख्याते रोगे। [ख्याते रोगे

**उदरामय** पु० उदरस्यामं रोगं याति नयति या-क। स्वनाम

**उदरावर्त्त** पु० उदरे आवर्त्त इव गभीरत्वात्। नाभौ।

**उदरिणी** स्त्री० उदरे गर्भोऽस्त्यस्याः इनि। गर्भवत्याम्।

**उदरिन्** त्रि० उदरं वृहत अस्यास्ति महत्त्वे मत्वर्थीय इनि। तुन्दिले (भुंडियुक्ते)। इलच्। उदरिलोऽप्यत्र।

**उदर्क** पु० उद्+अर्क-अर्च+वा घञ्। उत्तरकाले भाविफलके शुभाशुभकर्म्मणि च।

**उदर्चिस्** पु० उद् ऊर्द्ध्वमर्च्चिः रश्मिरस्य। उज्ज्वले वह्नौ। उत्कृष्टकान्तित्वात् कन्दर्पे ऊर्द्ध्वरेतस्त्वात् शिवे च। प्रा०स०। उद्गतायां शिखायां न०।

**उदवसित** न० उद्+अव+सि-क्त। गृहे। [जलेन मथिते तक्रे

**उदश्वित्** न० उदेन जलेन श्वयति वर्द्धते श्वि-क्विप्। अर्द्ध-

**उदात्त** पु० उद्+आ+दा-क्त। वर्णोत्पत्तिस्थानेषु उच्चैःस्वरेण उच्चारिते। दृश्ये,महति,दातरि च त्रि०। अलङ्कारभेदे न०

**उदान** पु० उद्+अन-घञ्। ऊर्द्ध्वगमनोत्क्रमणादिवृत्तियुते कण्ठस्थे वायौ, उदरावर्त्ते नाभौ, सर्पभेदे च।

**उदार** त्रि० उद्+आ+रा-क। दातरि, महति, सरले, दक्षिणे, गम्भीरे, असाधारणे च।

**उदावर्त्त** पु० उद्+आ+वृत-घञ्। 'यत्रोर्द्ध्वं जायते वायोरावेगः स चिकित्सकैः। उदावर्त्त इति प्रोक्तो व्याधि'-रित्युक्तलक्षणे वातव्याधौ।

**उदासीन** त्रि० उद्+आस-शानच्। मध्यस्थे, विवदमानयो रेकतरपक्षानवलम्बके, जिगीषोर्नृपतेः शत्रुमित्रभूमितो व्यवहिते परतरे, उपेक्षके च।

**उदास्थित** त्रि० उद्+आ+स्था-क्त। चरे, द्वारपाले, अध्यक्षे, प्रव्रज्यारूपस्थानच्युते नष्टसन्न्यासे परिव्राजके च।

**उदाहरण** न० उद्+आ+हृ-भावे ल्युट्। एकदेशमभिधाय सकलस्याभिधाने कथने। कर्म्मणि ल्युट्। दृष्टसिद्ध्यर्थकथनमात्रे दृष्टान्ते,प्रकृतसिद्ध्यर्थं निदर्शनरूपे उपोद्घाते च। [रि च।

**उदाहृत** त्रि० उद्+आ+हृ-क्त। दृष्टान्ततयोपन्यस्ते, कथि-

**उदित** त्रि०वद्-क्त। कथिते। उद्+इण्-क्त। उत्थिते,उद्गते,दृष्टे च

**उदीच्य** त्रि०उदीचि उत्तरकालादौ भवः यत्। उत्तरकालादिभवे वस्तुनि.शरावत्या नद्याः पश्चिमोत्तरदेशे, (बाला) गन्धद्रव्ये च

**उदीरण** न० उद्+ईर-ल्युट्। कथने, उच्चारणे च।

**उदीर्ण** त्रि० उद्-ऋ-क्त। उदारे, महति,उद्रिक्ते च उदीर्ण-रागप्रतिरोधकमिति माघः।

**उदुम्बर** पु० उडुम्बरवत् सर्व्वम्। डत्वाभावः।

**उदुम्बरपर्णी** स्त्री० उडुम्बरपर्णीवत् सर्व्वम्। न डत्वम्।

**उदुम्बरफला** स्त्री० उडुम्बरफलावत् सर्व्वम्। न डत्वम्।

**उदूखल** न० ऊर्द्ध्वं खं लाति ला-क पृषो०नि०। तण्डुलादि कण्डनार्थं काष्ठादिरचिते द्रव्ये, गुग्गुलौ च।

**उदूढ़** त्रि० उद्+वह-क्त। ऊढे,स्थूले,धृते च। उदूढलोक-त्रितयेनेति माघः।

**उद्गत** त्रि० उद्+गम-क्त। उदिते,उत्पन्ने,ऊर्द्धगते,उद्वान्ते च।

**उद्गमनीय** न० उद्+गम-अनीयर्। धौतवस्त्रद्वये 'गृहीतप-त्युद्गमनीयवस्त्रेति' कुमारः। [त्रि०

**उद्गाढ़** न० उद्+गाह-क्त। अतिशये। अत्यन्ते। अतिशययुक्ते

**उद्गातृ** पु० उच्चैर्गायति साम उद्+गै-तृच्। सामवेदगायके।

**उद्गार** पु० उद्+गॄ-घञ्। उद्वमने। [भेदे च

**उद्गीति** स्त्री० उद्+गै-क्तिन्। उच्चैर्गाने, मात्रावृत्ते आर्या-

**उद्गीथ** पु० उद्+गै-थक्। सामवेदावयवभेदे।

**उद्गूर्ण** त्रि० उद्+गुरी-उद्यमे क्त। उद्यते।

**उद्ग्राहित** त्रि० उद्+ग्रह-णिच्-क्त। उपन्यस्ते, बद्धे, उदीर्णे, प्रत्यायिते, ग्राहिते च। [च। प्रशस्ते त्रि०

**उद्घ** पु० उद्+हन-अप् नि०। हस्तपुटे, वह्नौ,वायौ, प्रशंसायां

**उद्घन** पु० उद्+हन-अप् नि०। काष्ठतक्षणसाधने ऽधःस्थकाष्ठे यदुपरि निधाय काष्ठं तक्ष्यते।

**उद्घर्षण** न० उद्+घृष-ल्युट्। इष्टकया (झामा) गात्रादिघर्षणे।

**उद्घाट** पु० उद्+घट-णिच्-घञ्। राजस्वग्रहणस्थाने घट्टे।

**उद्घाटक** पु० न० उद्+घट-णिच्-ण्वुल्। कूपात् जलोद्धार-णार्थे यन्त्रभेदे (अरघट्) (घुरना) इति ख्याते। करणे ल्युट् उद्घाटनमप्यत्र न०। भावे ल्युट् उद्घाटनम्। प्रतिबन्धनि-रासे, कृतबन्धस्य बन्धापकरणे च न०।

**उद्घात** पु० उद्+हन-घञ्। आरम्भे, पादस्खलने 'प्राणेन प्रेर्य्यमाणेन अपानः पीड्यते यदि। गत्वा चोर्द्धं निवर्त्तेत एतदुद्घातलक्षण'मित्युक्तलक्षणे प्राणायामाङ्गकुम्भकभेदे, उत्कर्षे, मुद्गरे, ग्रस्ते, ग्रन्थपरिच्छेदे च।

**उद्दंश** पु० उद्दशति। मस्तकदंशके (ढकुण) कीटभेदे।

**उद्दान** न० उद् दो-ल्युट्। बन्धे,चुल्ल्याम्,वाड़वानले, मध्यलग्ने च

**उद्दामन्** त्रि० उद्गतं दाम्नः। बन्धरहिते, अप्रतिबन्धे,स्वतन्त्रे, अत्युग्रे च। उत्कृष्टं श्रेष्ठं दाम पाशाख्यमस्त्रं यस्य। वरुणे पु०।

**उद्दाल** पु० उद्+दल+णिच्-अच्। बहुवारकवृक्षे, वनकोद्रवे च। संज्ञायां कन्। वेदप्रसिद्धे ऋषिभेदे।

**उद्दिष्ट** त्रि० उद्+दिश-क्त। उपदिष्टे, अभिलषिते च छन्द शास्त्रे प्रस्तारविशेषज्ञानसाधने न०।

**उद्दीपन** न० उद् दीप-णिच्-ल्युट्। प्रकाशने, उत्तेजने च। ल्यु। अलङ्कारोक्ते रसाद्युद्दीपके चन्द्रादौ विभावे सा०३प०

**उद्देश** पु० उद् दिश-घञ्। अनुसन्धाने, अन्वेषणे,अभिलाषे च

**उद्देशतस्** अव्य० उद्देश+तसिल् एकदेशेनेत्यर्थे संक्षेपार्थे च।

**उद्द्राव** पु० उद्-द्रु-घञ्। पलायने।

**उद्द्योत** पु० उद्+द्युत-घञ्। प्रकाशे। [प्रगल्भे,आहते च त्रि०

**उद्धत** पु०उद्+हन-क्त। राजमल्ले। वाक्यादिचञ्चले,अविनीते,

**उद्धरण** न० उद्+हृ-भावे ल्युट्। मुक्तौ,वमने, ऋणशुद्धौ, उन्मूलने च। कर्म्मणि ल्युट्। वान्तेऽन्नादौ।

**उद्धर्ष** न० पु० उद्+हृष-णिच्-घञ्। उत्सवे।

**उद्धर्षण** न० उद्+हृष-णिच्-ल्युट्। रोमाञ्चे।

**उद्धव** पु० उद्+हु-अप्। यज्ञाग्नौ, कृष्णदयिते यादवविशेषे च

**उद्धान** न०उद्धीयतेऽस्मिन् धाञ्-ल्युट्। चुल्ल्याम्,वमिते,उद्गते च

**उद्धार** पु० उद्ध्रियते उद्+हृ-कर्म्मणि घञ्। ऋणे। भावे घञ्। मुक्तौ, उद्धारे च। [दृढे भारशून्ये च।

**उद्धुर** त्रि० उद्गता धूरस्मात् प्रा० ब० अच् समा०। निर्भरे,

**उद्धूत** त्रि० उद् धू-क्त। उत्क्षिप्ते, उत्कम्पिते च।

**उद्धूनन** न० उद् धू-णिच्-ल्युट्। उत्क्षेपणे।

**उद्धूलन** न० उन्मार्दितं धूलिं करोति उद्धूलि+णिच्-भावे ल्युट्। धूलिमर्द्दने। 'एलालवङ्गकर्पूरकस्तूरीमरिचत्वचाम्। चूर्ण-स्योद्धूलनं देयं भोज्ये क्षीरेक्षुसम्भवे मांसमत्स्यभवेष्वेवा'मि-त्युक्तरूपे व्यञ्जनोपकरणे चूर्णभेदे च।

**उद्धृत** त्रि० उद्-हृ-धृ-वा क्त। उत्क्षिप्ते,भुक्तोज्झिते, कृतो-द्धारे, पृथक्कृते, उच्छेदिते च। [उत्तरीयबहिष्कृतहस्ते।

**उद्धृतपाणि** त्रि० उत्तरीयात् उद्धृतः बहिष्कृतः पाणिर्येन।

**उद्ध्मान** न० उद्धमति वह्निरत्र उद्+ध्मा-ल्युट्। चुल्ल्याम्

**उद्ध्य** पु० उज्झत्युदकम् उज्झ-यत् नि०। नदभेदे।

**उद्बन्धन** न० उद्+बन्ध-ल्युट्। गलरज्ज्वादिनात्मबन्धने 'उद्-बन्धनमृता ये चेति स्मृतिः।

**उद्बुद्ध** त्रि० उद्+बुध-क्त। विकसिते न्यायादिमते ज्ञातवस्तुनः संबन्धिज्ञानादिना कृतोद्दीपने संस्कारे च। यथा हस्ति-

दर्शनात् अनुभूतहस्तिपकसंस्कारस्य उद्बोधरूपे उद्दीपने जाते हस्तिपकः स्मर्य्यते इति प्रबुद्धे जागरिते, उद्बुद्धां च जगद्धात्रीमिति स्मृतिः। [ननाय संस्कारोद्दीपने च

**उद्बोध** पु० उद्+बुध-घञ्। किञ्चिद्बोधे न्यायादिमते स्मृतिज-

**उद्भट** पु० उद्+भट-अच्। कच्छपे,तण्डुलादेः प्रस्फोटनहेतौ शूर्पे,श्रेष्ठाशये महाशये,प्रवरे,ग्रन्थाद्वहिर्भूते श्लोकादौ च

**उद्भव** पु० उद्+भू-अप्। जन्मनि उत्पत्तौ। अपादाने अप्। परमेश्वरे। [चु० भू० ल्युट्। चिन्तने।

**उद्भावन** न० उद्+भू-णिच्-ल्युट्। कल्पने,उत्पादने च। उद्-

**उद्भिज्ज** त्रि० उद्+भिनत्ति क्विप् उद्भित् तथा सन् जायते जन-ड। भूमिमुद्भिद्य जाते तरुगुल्मादौ 'उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिण' इति मनुः।

**उद्भिद्** त्रि० भूमिमुद्भिनत्ति उद्+भिद्-क्विप्। वृक्षतृणगुल्म-वल्लीलतारूपे पञ्चविधे स्थावरभेदे। यागविशेषे पु०।

**उद्भिद** त्रि० उद्+भिद्-क। वृक्षादौ पञ्चविधे स्थावरे।

**उद्भूत** त्रि० उद्+भू-क्त। उत्पन्ने। न्यायमते प्रत्यक्षयोग्ये च

**उद्भेद** पु०उद्भिद्यतेऽङ्गमत्र घञ्। रोमाञ्चे। भावे घञ्। स्फुरणे

**उद्भ्रम** पु० उद्भ्राम्यत्यनेन उद्+भ्रम-घञ् अवृद्धिः। उद्वेगे।

**उद्यत** त्रि०उद्+यम-क्त। उद्युक्ते,ऊर्द्धीकृते,प्रवृत्ते,ग्रन्थाध्याये च।

**उद्यम** पु० उद्+यम-घञ् अवृद्धिः। उद्योगे।

**उद्यान** न० उद्+या-आधारे ल्युट्। आक्रीडे वने। भावे-ल्युट्। निःसारणे। कर्म्मणि ल्युट्। प्रयोजने।

**उद्योग** पु० उद्+युज-घञ्। यत्ने, चेष्टायाम्,उद्यमे च।

**उद्र** पु० उनत्ति क्लिद्यति उन्द्-रक्। जलविड़ाले। (उद्बिराल)

**उद्रथ** पु०उद्गतोरथो यस्मात्। रथकीले। उद्गतरथतुल्यः पक्षो यस्य ( ताम्रचूड़विहगे।

**उद्रिक्त** त्रि० उद्+रिच क्त। अतिशयिते,अधिके,स्फुटे च।

**उद्रेक** पु० उद्+रिच-घञ्। वृद्धौ, अतिशये, उपक्रमे च।

**उद्वर्त्त** पु० उद्+वृत-घञ्। अतिशयिते, अधिके च।

**उद्वर्त्तन** न० उद्वर्त्यतेऽनेन उद्-वृत्-णिच्-ल्युट्। शरीरनिर्म-लीकरणद्रव्यादौ। भावे ल्युट्। विलेपने,घर्षणे च। उद्+वृत-ल्युट्। उत्पतने।

**उद्वह** पु० उद्वहति ऊर्द्ध्वं नयति पितॄन् वह अच्। पुत्रे 'प्रणमामि रघूद्वह'मिति तन्त्रम्। ऊर्द्ध्वेन वहति अच्। प्रवहवायोरूर्द्धस्थिते वायुभेदे,

**उद्वान्त** पु० उद्गतं वान्तमन्तर्जलमस्मात् प्रा० व०। निर्मदे गजे। उद्+वम क्त। उद्गीर्णे उद्गते च त्रि०।

**उद्वासन** न० उद्+चु० वस-ल्युट्। मारणे उद्+वस+णिच्-ल्युट्। विसर्जने। [रूपे परिणये।

**उद्वाह** पु० उद्+वह-घञ्। विवाहे भार्य्यात्वसंपादकव्यापार-

**उद्वाहु** त्रि०उद्गतोबाहुर्यस्य। ऊर्द्धमुत्तोलितबाहौ 'उद्वाहु-रिव वामन' इति रघुः। [तया व्याकुलचित्ते,क्षुभिते च

**उद्विग्न** त्रि० उद्+विज-क्त। उद्वेगयुक्ते. दुःखपरिहाराक्षम

**उद्वृत्त** त्रि० उद्गतो वृत्तात् गति०। दुर्वृत्ते। उद्+वृत-क्त। उत्क्षिप्ते, भुक्तोज्झिते च।

**उद्वेग** पु० उद्+विज-घञ्। व्याकुलचित्ततायाम् विरहजन्ये दुःखोद्गमे, भये च। गुवाकफले न०। उद्गतोवेगो ऽस्मात्। निश्चले, स्तिमिते। शीघ्रगामिनि च।

**उद्वेल** त्रि० उद्गतो वेलाम्। अतिक्रान्तमर्य्यादे।

**उद्वेष्टन** न० उद्+वेष्ट-ल्युट्। हस्तपादयोर्बन्धने, उपश्लेषे च उद्गतं वेष्टनात त्रि०। उन्मुक्तबन्धने त्रि०।

**उभ्रस** उञ्छे क्र्या० पर०अक०सेट्। उभ्रस्नाति औभ्रासीत्

**उभ्रस** उत्क्षेपे उञ्छे च(कणश आदाने) चु०सक०सेट्।उभ्रासयति ते

**उन्द** क्लेदे रुधा०पर०अक०सेट्। उनत्ति। औन्दीत्। [त्वार्थे

**उन्दरु** पु०उन्द्-अरु। मूषिके उर-उरु। उन्दुरः उन्दुरश्चा-

**उन्दुरकर्णी** स्त्री० उन्दुरस्य कर्णइव पर्णमस्याः। आखुकर्ण्याम्

**उन्दूर** पु० उन्द्-ऊरु। मूषिके।

**उन्न** त्रि० उन्द्-क्त क्लिन्ने आर्द्रे (भिजे) दयापरे च।

**उन्नत** त्रि० उद्+नम-क्त। उच्चे, महति च।

**उन्नतानत** त्रि० उन्नतं च तदानतञ्च। उच्चनीचस्थानादौ।

**उन्नति** स्त्री० उद् नम-क्तिन्। वृद्धौ,उदये, गरुड़भार्य्यायाञ्च।

**उन्नद्ध** त्रि० उद्+नह-क्त। उद्बद्धे, उत्कटे च।

**उन्नमित** त्रि० उद्+नम-णिच्-क्त। उत्तोलिते,ऊर्द्धीकृते च।

**उन्न(न्ना)य** पु०उद्+नी-अच् घञ् वा। कूपादितो जलादेरुत्तोलने

**उन्नयन** न० उद्+नी-ल्युट्। वितर्के, ऊर्द्ध्वप्रापणे च।

**उन्नस** त्रि० उन्नता नासा यस्य नसादेशः। उन्नतनासिके।

**उन्निद्र** त्रि० उद्गता निद्रा मुद्रा यस्य। विकसिते।

**उन्मज्जक** पु० उद्+मज्ज-ण्वुल्। 'कण्ठदघ्ने जले स्थित्वा तपः कुर्वन् प्रवर्त्तते। उन्मज्जकः स विज्ञेयस्तापसोलोकपूजित' इत्युक्तलक्षणे तापसे। जलादेरुपरि उत्प्लावके त्रि०।

**उन्मत्त** पु० उद्+मद-करणे क्त। धुस्तूरे मुचकुन्दवृक्षे च। कर्त्तरि क्त। उन्मादवति, ग्रहावेशवति च त्रि०।

**उन्मद** त्रि० उद्गतो मदोहर्षोऽस्य। उन्मादयुक्ते। करणे अच् मादके द्रव्ये। [मनस्के च।

**उन्मनस्** त्रि० उद्भ्रान्तं मनोऽस्य। उत्कण्ठायुक्ते, अन्य-

**उन्मन्थ** पु० उद्+मन्थ-घञ्। वधे।

**उन्माथ** पु० उन्मथ्यतेऽनेन उद्+मथ-करणे घञ्। आमिषदानेन मृगादिबन्धनार्थं निवेशिते कूटयन्त्रे (फांद) इति ख्याते। भावे घञ्। विलोडने, हिंसने च।

**उन्माद** पु०उद्+मद-घञ्। चित्तविभ्रमे, भूताद्यावेशात् चित्तस्यानवस्थितौ, विरहिणां स्मरकृतावस्थाभेदे, वातिकरोगकृते मतिभ्रंशे च। [दिवस्य बाणभेदे।

**उन्मादन** पु० उद्+मद्-णिच्-ल्यु। उन्मत्तताकारके काम-

**उन्मान** न० उद्+मा-करणे ल्युट्। उर्द्धमाने स्वर्णादेस्तुल्यमानसाधने, तोलकादौ, परिमाणमात्रे च। [प्रकाशिते च।

**उन्मिषित** त्रि० उद्+मिष-क्त। प्रफुल्ले, विकसिते किञ्चित्

**उन्मीलन** न० उद्+मील ल्युट्। उन्मेषे, विकाशने च।

**उन्मुख** त्रि० उद्+ऊर्द्धं मुखमस्य। ऊर्द्धास्ये, उद्युक्ते च।

**उन्मुद्र** त्रि० उद्गता मुद्रा यस्मात्। व्यक्तमुद्रे, विकसिते च।

**उन्मूलन** न० उन्मूल+णिच्-ल्युट्। उत्पाटने उद्गतमूलकरणे।

**उन्मेष** पु०उद्+मिष-घञ्। चक्षुरादेरुन्मीलने, किञ्चित्प्रकाशे च

**उप** अव्य०वप-क। अधिकार्थे,हीने, आसन्ने, सामीप्ये, सादृश्ये, प्रतियत्ने-गुणाधाने, व्याप्तौ, पूजायाम् शक्तौ, आरम्भे, दाने, दोषाख्याने, आश्चर्यकरणे अत्यये, निदर्शने च।

**उपकण्ठ** त्रि० उपगतः कण्ठं गति०। निकटे, कण्ठासन्ने च। ग्रामान्ते, अश्वानाम् स्कन्दितगतौ च न०।

**उपकरण** न० उपक्रियतेऽनेन उप-कृ-ल्युट्। प्रधानसाधकगुणेऽङ्गे यथान्नभोजनादौ व्यञ्जनादि, शयने खट्वादि, स्नानेऽनुलेपनादि, पूजायां पुष्पादि। भूपादीनां छत्रचामरादि परिच्छेदे च।

**उपकार** पु० उप-कृ-घञ्। प्रधानस्यानुगुण्यसंपादने, उपकृतौ

**उपकारक** त्रि०उप+कृ-ण्वुल्। उपकारकर्त्तरि। स्त्रीत्वे टापि अतइत्त्वे उपकारिका। नृपालये, पटनिर्म्मितराजसदने च

**उपकार्य्य** त्रि० उप+कृ-ण्यत्। उपकारयोग्ये। राजालये, पटनिर्म्मितराजसदने च स्त्री० टाप्।

**उपकुञ्चि** स्त्री० उप+कुञ्च-इ। कृष्णजीरके। ण्वुलि टापि अतइत्त्वे। उपकुञ्चिकाप्यत्र तत्रार्थे स्थूलैलायाञ्च।

**उपकुर्व्वाण** पु० उप-कृ-शानच्। सावधिकब्रह्मचर्य्यकारिणि वेदाध्ययनार्थं कञ्चित्कालं ब्रह्मचर्य्यव्रतधारिणि।

**उपकुल्या** स्त्री० उप+कुल-क्यप्। पिप्पल्याम् उपगतः कुल्यां सलिलं सरः। कुल्यासन्ने त्रि०। [जलाशये

**उपकूप** पु० उपगतः कूपं गति०। कूपसमीपस्थे खातरूपे

**उपक्रम** पु०उप-क्रम-घञ्। उपायज्ञानपूर्व्वकारम्भे, प्रथमारम्भे चिकित्सायाञ्च।

**उपक्रोश** पु०उप+क्रुश-आह्वाने घञ्। निन्दायाम्। आसन्नक्रोशे त्रि०। अव्ययी०। क्रोशसमीपे अव्य०।

**उपक्रोष्टृ** पु० उप+क्रुश-तृच्। गर्द्दभे। निन्दके त्रि०।

**उपक्लृप्त** त्रि० उप+क्लृप-क्त। विन्यस्ते,उपभोगार्थं प्रस्तुते च।

**उपगत** त्रि० उप-गम-क्त। स्वीकृते, उपस्थिते, ज्ञाते च। [च

**उपगम** पु०उप+गम-घञ् अवृद्धिः। समीपगमने,अङ्गीकारे,ज्ञाने

**उपगीति** स्त्री० उप+गै-क्तिन्। आर्य्याविशेषे छन्दोभेदे।

**उपगूह्य** त्रि० उप+गुह-ण्यत्। आलिङ्ग्ये, ग्राह्ये च। भावे ण्यत्। आलिङ्गने।

**उपगूहन** न० उप+गुह-ल्युट्। आलिङ्गने, ग्रहणे च।

**उपग्रह** पु०उप+ग्रह-अप्। कारावन्धने, बन्दीकरणे, उपयोगे अनुकूलने च। कर्म्मणि घञ्। कारारुद्धे बन्द्याम्। ज्योतिषोक्ते ग्रहतुल्ये गगनस्थे ज्योतिःपदार्थे धूमकेत्वादौ च।

**उपग्राह्य** न० उप+ग्रह-ण्यत्। उपढौकने (भेट)।

**उपघात** पु० उप-हन-घञ्। अपकारे, नाशने, रोगे च।

**उपघ्न** पु० उप+हन-क नि०। आसन्ने आश्रये।

**उपचक्र** पु० उपमितं चक्रेण तुल्यनामत्वात्। चक्रवाकपक्षिणि।

**उपचय** पु० उप+चि-अच्। वृद्धौ, उन्नतौ,ज्योतिषोक्तेषु लग्नतः तृतीयषष्ठदशमैकादशस्थानेषु च।

**उपचरित** त्रि० उप+चर-क्त। उपासिते लक्षणया बोधिते च।

**उपचर्य्या** स्त्री० उप+चर-क्यप्। चिकित्सायां, सेवायाञ्च।

**उपचाय्य** पु० उपचीयते संस्क्रियतेऽसौ नि०। यज्ञे संस्कृताग्नौ।

**उपचार** पु० उप+चर-घञ्। चिकित्सायां, सेवायां, व्यवहारे, उत्कोचे, लक्षणया शक्यार्थत्यागेनान्यार्थपरत्वकल्पने, अयथार्थवाक्येन सन्तोषकरणे च उपचारपदं न चेदिदमिति कुमारः।

**उपचित** त्रि० उप+चि-क्त। दग्धे, समृद्धे, सञ्चिते, समाहिते, अवयववृद्ध्या वर्द्धनीभूते च।

**उपचित्रा** स्त्री०उपगता चित्रं वर्णम्। उन्दुरपर्ण्याम् चित्रातारासमीपस्थायां स्वातौ च।

**उपच्छन्द** पु० उप+छन्द-घञ्। ग्रहणार्थं प्रार्थनेऽनुरोधे च। तस्मिन् उपच्छन्दयति प्रयोज्यमिति रघुः।

**उपजाति** स्त्री० वर्णवृत्ते छन्दोभेदे।

**उपजाप** पु० उप+जप-घञ्। भेदे,विच्छेदे, 'उपजापः कृतस्तेन' इति माघः। उपांशुजपे च।

**उपजिह्वा** स्त्री० उपगता ऊर्द्धमुखी जिह्वा यस्याः। काकीभेदे। प्रा०स०। उपरिस्थायां जिह्वायाञ्च (आलजिभ्)।

**उपजीविका** स्त्री० उपजीवयति उप+जीव-करणे कर्त्तरि वोपचारात् ण्वुल् अत इत्वम्। जीवनोपायभूतायां वृत्तौ।

उपजीविन् त्रि० उप+जीव-णिनि । आश्रिते ।
उपजीव्य त्रि० उप+जीव-ण्यत् । आश्रये ।
उपज्ञा स्त्री० उप+ज्ञा-कर्म्मणि अङ् । विनोपदेशेन स्वयमुद्भाव्ये प्रथमं ज्ञायमाने । भावे अङ् । आद्ये ज्ञाने । [उपायने
उपढौकन न० उप+ढौक-कर्म्मणि ल्युट् । (भेट) उपहारे
उपत्यका स्त्री० उप+त्यकन् । पर्व्वतस्यासन्नायां भूमौ ।
उपदंश पु० उप+दन्श-घञ् । मद्यपानरोचके (चाटनी) भक्ष्य द्रव्ये,भक्ष्यद्रव्योपकरणमात्रे, उपस्यरोगभेदे च ।
उपदर्शक पु०उप+दृश-णिच्-ण्वुल् । द्वारपाले । दर्शयितरि त्रि०
उपदा स्त्री० उप+दा-अङ् । उत्कोचे,उपढौकने च ।
उपदेश पु० उप+दिश-घञ् । मन्त्रादिकथने, अनुशासने, हितकथने,प्रवर्त्तकवाक्ये च ।
उपद्रव पु० उप+द्रु-अप् । उत्पाते शुभाशुभसूचके भूकम्पादौ, रोगजन्येऽन्यस्मिन् पिपासादाहादौ विकारे च ।
उपद्रुत त्रि० उप+द्रु-क्त । व्याकुले, प्राप्तोपद्रवे च ।
उपधा स्त्री० उप-धा-अङ् । 'धर्म्मार्थकाममोक्षैश्च प्रत्येकं परिशोधने । उपेत्य धीयते यस्मादुपधा तेन कीर्त्तिते'त्युक्ते धर्म्मार्थाद्युपन्यासेन मन्त्रिणां परीक्षणे, व्याकरणोक्ते, अन्त्यवर्णात् पूर्व्ववर्णे च ।
उपधातु पु० उपमितः धातुभिः । स्वर्णादिप्रधानधातुसदृशेषु 'सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम् । तुत्थं कांस्यञ्च रीतिश्च सिन्दूरञ्च शिलाजतु' इत्युक्तेषु सप्तसु द्रव्येषु, शरीरस्थेषु रसादिजन्येषु स्तनदुग्धादिषु च ।
उपधान न०उपधीयते शिरोऽत्र । (बालिश) शिरोधाने,प्रणये, व्रतभेदे, विषे च । [शनकृमे कपटे,रथचक्रे च ।
उपधि पु०उप+धा-कि । अन्यथास्थितस्य वस्तुनोऽन्यथा प्रका-
उपधूपित त्रि० उप+धूप-क्त । आसन्नमरणे,सन्तापयुते च ।
उपधृति स्त्री० उप+धृ-क्तिन् । किरणे ।
उप(पा)ध्मानीय पु०उपध्मा ध्मायतेऽनेन उपध्मानमोष्ठस्तत्रोच्चार्य्यमाणः । पफयोः परयोः उच्चार्य्यमाणे विसर्गसदृशे वर्णभेदे तस्य व्यञ्जिका अर्द्धविसर्गाकारा रेखा । उपाध्मानीयश्च
उपनत त्रि० उप+नम-क्त । उपस्थिते, प्राप्ते च ।
उपनय पु० उप+नी-अच् । उपनयने 'गृह्योक्तकर्म्मणा येन समीपं नीयते गुरोः । बालो वेदाय तद्योगाद् बालस्योपनयं विदु'रिति स्मृत्युक्ते संस्कारविशेषे । न्यायमते यो यो धूमवान् स वह्निमान् अयमपि तथेत्यादिवाक्यरूपे न्यायावयवभेदे, ज्ञानलक्षणाजन्ये ज्ञानभेदे च ।
उपनयन न० उप+नी-ल्युट् । स्मृत्युक्ते संस्कारभेदे उपनयार्थे
उपनाह पु०उप+नह-घञ् । वीणायां तन्त्रबन्धनस्थाने,व्रणाद्युपशमार्थे लेपनद्रव्ये च । [द्रव्ये ।
उपनिधि पु० उप+नि+धा-कि । न्यासे विश्वासेन स्थापिते
उपनिषद् स्त्री० उपनिषीदति प्राप्नोति ब्रह्मात्ममावोऽनया । उप+नि+सद-क्विप् । ब्रह्मविद्यायां, तत्प्रतिपादके वेदशिरोभागे वेदान्ते च । [वीथौ राजमार्गे ।
उपनिष्कर न०उपनिष्किरन्ति सैन्यान्यत्र (उप-निस्-कृ+अप् ।
उपनिष्क्रमण न० उप+निस्-क्रम-ल्युट् । राजपथे ।
उपनेत्र न० उपगतं नेत्रम् । नेत्रसमीपे धृते काचादिनिर्म्मिते नेत्रोपकारके द्रव्ये (चसमा) ।
उपन्यास पु० उप+नि+अस-घञ् । वाक्योपक्रमे ।
उपपति पु० उपमितः पत्या । जारे ।
उपपत्ति स्त्री० उप+पद-क्तिन् । युक्तौ, सङ्गतौ च ।
उपपद न० उपोच्चारितं पदम् प्रा०स० । समीपोच्चारिते नामोत्तरे उच्चारिते शर्म्मवर्म्मादिरूपे शब्दे, व्याकरणे प्रत्ययादिविधायकसूत्रे सप्तम्यन्तपदेन निर्द्दिश्यमाने पदे च । यथा कर्म्मण्यण् इत्यादौ कर्म्मणीतिसप्तम्यन्तं पदम् अण्प्रत्ययविधाने उपपदम् । [रघुः ।
उपपन्न त्रि०उप+पद-क्त । युक्तियुक्ते,'उपपन्नं ननु शिवमि'ति
उपपातक न० उपमितं पातकेन । गोवधादिरूपे पापे ।
उपपादन न० उप+पद+णिच्-ल्युट् । युक्त्या समर्थने सम्यक्प्रतिपादने च । [प्रतिपादिते च ।
उपपादित त्रि०उप-पद+णिच्-क्त । युक्त्या समर्थिते, सम्यक्
उपपुर न० उप समीपे पुरम् । पुरसमीपे शाखानगरे ।
उपपुराण न० उपमितं पुराणेन । सर्गप्रतिसर्गाद्युक्तिरूपपुराणलक्षणयुक्तेषु सनत्कुमाराद्युक्तेषु अष्टादशसु ग्रन्थेषु ।
उपप्लव पु० उप+प्लु-अप् । गगनाद् उल्कापातादिरूपे उपद्रवे, चन्द्रार्कग्रहणे च ।
उपप्लुत त्रि०उप+प्लु-क्त । पीडिते,ग्रस्ते-चन्द्रेऽर्के च उपद्रुते च । 'उपप्लुतं पातुमदः' इति माघः । [शोभाकारके ।
उपभूषण न० उपभूष्यतेऽनेन ल्युट् । प्रघटाचामरादौ भूष-
उपभोग पु० उप+भुज-घञ् । भोजनादिजन्ये सुखानुभवे भोगे
उपमर्द्द पु० उप+मृद-घञ् । आलोडने,हिंसने, पूर्व्वधर्म्मविनाशनेन धर्म्मान्तरोत्पादने च । [शा०१०प०
उपमा स्त्री० उप+मा-अङ् । सादृश्ये, अर्थालङ्कारभेदे च ।
उपमान न० उपमीयतेऽनेन उप+मा-ल्युट् । सादृश्यज्ञानसाधने सादृश्यप्रतियोगिनि च, येन सादृश्यं भवति तस्मिन्, यथा चन्द्र इव मुखमित्यादौ चन्द्र उपमानम् । भावे ल्युट् । सादृश्यज्ञाने

**उपमिति** स्त्री० उप+मि-क्तिन् । सादृश्यज्ञाने उपमायाम् ।

**उपमेय** त्रि० उपमीयतेऽसौ उप+मि-यत् । सादृश्याश्रये यथा चन्द्र इव सुखमित्यादौ सुखम् ।

**उपमेयोपमा** स्त्री० अर्थालङ्कारभेदे साहि० १०प० ।

**उपयन्तृ** पु० उप+यम-तृच् । स्त्रियो विवाहकर्त्तरि पत्यौ ।

**उपयम** पु० उप+यम्-घञ् अवृद्धिः । विवाहे । वा वृद्धिः । उपयामश्चात्र । [वैवाहिके मन्त्रे ।

**उपयमन** न० उप+यम-ल्युट् । विवाहे । करणे ल्युट् ।

**उपयाचक** त्रि०उपगम्य याचकः याच-ण्वुल् । समीपे आगम्य याचञाकर्त्तरि । [देवाय देये पश्वादौ च ।

**उपयाचितक** न०उप+याच-क्त स्वार्थे कन् । प्रार्थिते, स्वेष्टसिद्धये

**उपयुक्त** त्रि० उप+युज-क्त । न्याय्ये, रचिते, भुक्ते च ।

**उपयोग** पु० उप+युज-घञ् । आचरणे भोजने, दृष्टसिद्धिसाधने व्यापारे च । [साधनतायाम्, प्रयोजने च ।

**उपयोगिता** स्त्री० उपयोगिनो भावः तल् । आनुकूल्ये, दृष्ट-

**उपयोगिन्** त्रि० उप+युज-घिणुन् । दृष्टसाधने अनुकूले उपयुक्ते च । [सन्नेस्वासक्ते, रञ्जनद्रव्येण रक्ते च ।

**उपरक्त** पु० उप+रन्ज-क्त । राहुग्रस्ते चन्द्रे सूर्य्ये च । त्र्य-

**उपरक्षण** न० उप+रक्ष-ल्युट् । रक्षार्थं सैन्यादिस्थापने ।

**उपरत** त्रि० उप+रम-क्त । विरते, निवृत्ते, मृते, सर्व्वकामनाशून्ये च ।

**उपरतस्पृह** त्रि०उपरता निवृत्ता स्पृहा यस्य । सत्यपि जीवने स्वामित्वे, विषयभोगादौ च अत्यन्तनिवृत्ताभिलाषे । 'पितर्य्युपरतस्पृहे' इति स्मृतिः ।

**उपरति** स्त्री०उप+रम-क्तिन् । विरतौ, लब्धप्राप्तावौदासीन्ये, विषयेभ्य इन्द्रियाणां निवारणे, विहितकर्म्मणाम् विधानतस्त्यागरूपे सन्यासे "पुनर्यः कर्म्मणा नेति धीर्या सोपपरतिर्भवेदित्युक्तरूपायां बुद्धौ च ।

**उपरत्न** न० उपमितं रत्नेन गति० । मणिसदृशेषु 'उपरत्नानि काचश्च कर्पूरोऽश्मा तथैव च । मुक्ताशुक्तिस्तथा शङ्ख इत्युक्तकाचादिषु । [च 'फेनोपरमे दद्यादि'ति वैद्यकम् ।

**उपरम** पु० उप+रम-घञ् अवृद्धिः विषयवैराग्ये, निवृत्तौ ।

**उपराग** पु० उप+रन्ज-घञ् । रविचन्द्रयोर्ग्रहणे । ग्रहणञ्च राहुधिष्ठितभूमिच्छायया चन्द्रस्य, चन्द्रमण्डलेन च रवेर्मण्डलाच्छादनमिति सिद्धान्ते स्थितम् ।

**उपरि** अव्य० ऊर्द्ध+रिल् उपादेशश्च । प्रथमापञ्चमीसप्तम्यन्तार्थवृत्तेः ऊर्द्धशब्दस्यार्थे ।

**उपरिष्टात्** अव्य० ऊर्द्ध-रिष्टाति उपादेशश्च । उपरिशब्दस्यार्थे

**उपरोध** पु० उप+रुध-घञ् । आनुकूल्याय कथनरूपेऽनुरोधे, समीपे रोधने च । [त्रि० ।

**उपरोधक** न० उप+रुध-ण्वुल् । वासगृहे । अनुरोधकर्त्तरि

**उपल** पु०उपनीयते उपलीय्यते गिरिरनेन नी-ड नस्य लत्वम् । प्रस्तरे । अर्श आदित्वादच् । पाषाणचितायां मृदि स्त्री० ।

**उपलक्षण** समीपस्थस्य स्वसंबन्धिनश्च लक्षणं ज्ञानं यस्मात् । स्वस्य स्वान्यस्य च अजहत्स्वार्थया लक्षणया बोधके शब्दे यथा काकेभ्योदधि रक्ष्यतामित्यत्र काकपदं स्वस्य स्वान्यादेः श्वादेश्च बोधकम् । [उपलब्धेरिति' वेदान्तसूत्रम्

**उपलब्धि** स्त्री० उप+लभ-क्तिन् । ज्ञाने, प्राप्तौ च । 'नाभाव

**उपलम्भ** पु० उप+लभ-घञ् मुम् च । लाभे, ज्ञाने च ।

**उपलिङ्ग** न० उपमितं लिङ्गेन । लोकसिद्धसाधनभावेन लिङ्गेनानुमापकेन सदृशे अलौकिकसाधनभावके अरिष्टसूचके भूकम्पादौ उपद्रवे ।

**उपवट** पु० उपमितो वटेन । वटवृक्षसदृशे प्रियासालवृक्षे ।

**उपवन** न० उपमितं वनेन । वनतुल्ये कृत्रिमे आरोपितवृक्षसमूहे उद्याने । [वर्हणमप्यत्र न० ।

**उपवर्ह** पु० उप+वृह-घञ् । शिरोधाने (बालिश) ल्युट् । उप-

**उपवसथ** पु० उप+वस-अथ । ग्रामे ।

**उपवास** पु० उप+वस-घञ् । "तपनोदयमारभ्य यामाष्टकमभोजनम् । उपवास इति ख्यात" इति स्मृत्युक्ते अनाहारे ।

**उपवाह्य** पु० उप+वह-ण्यत् । राजवाहके ।

**उपविष** पु० उपमितं विषेण । 'अर्कक्षीरं स्नुहीक्षीरं तथैव कलिहारिका । धस्तूरः करवीरश्च पञ्च चोपविषाः स्मृता इत्युक्तेष्वर्कक्षीरादिषु ।

**उपवीत** न० उप+व्येञ-क्त-वीभावः । वहिर्भूतदक्षिणहस्ततया वामांशस्थापिते कार्पासे यज्ञसूत्रे ।

**उपवीतिन्** त्रि० उपवीतं विद्यतेऽस्य । यज्ञोपवीतवति ।

**उपवृंहित** त्रि० उप+वृन्ह्-क्त । वर्द्धिते ।

**उपवेद** पु० उपमितः वेदेन । वेदसदृशे आयुर्वेदादौ ।

**उपव्याघ्र** पु० उपमितो व्याघ्रेण । व्याघ्रतुल्ये मृगान्तके (चितावाघ) चित्रकाख्ये पशुभेदे ।

**उपशम** पु० उप+शम-घञ् अवृद्धिः । इन्द्रियाणां निग्रहे, तृष्णानाशे, रोगप्रतीकारे, शान्तौ च ।

**उपशय** पु० उप+शी-अच् । समीपशयने, 'औषधान्नविहाराणामुपयोगं सुखावहम् । विद्यादुपशयं व्याधेरिति' वैद्यकोक्ते उपयोगभेदे च ।

**उपशल्य** न०उपगतं शल्यम् अस्थिस्थानं (भागाड़) । ग्रामान्ते

**उपशाय** पु० उप+शी-घञ् । यामिकभटानां पर्य्यायेण शयने ।
**उपश्रुति** स्त्री० उप+श्रु-क्तिन् । अङ्गीकारे दैवशुभाशुभप्रश्ने च ।
**उपश्लेष** पुः उप ईषत् एकदेशेन श्लेषः संबन्धः । आधाराधेययोरेकदेशसंबन्धे । यथा गृहघटयोः । [श्लिषि वि०
**उपष्टम्भक** न० उप+स्तम्भ-ण्वुल् । स्थूणायाम् । स्तम्भका-
**उपसंग्रह** पु० उप+सम्+ग्रह-अप् । पादस्पर्शपूर्व्वकनमस्कारे
**उपसंयम** पु० उप+सम्+यम-घञ् अवृद्धिः । उपसंहारे ।
**उपसंव्यान** न० उपसंवीयतेऽनेन व्येञ्-ल्युट् । परिधानवस्त्रे ।
**उपसंहार** पु० उप+सम्+हृ-घञ् । समाप्तौ,संग्रहे च ।
**उपसत्ति** स्त्री० उप+सद-क्तिन् । सेवायां,सङ्गमात्ने,प्रतिपादने च
**उपसन्न** त्रि० उप+सद-क्त । उपस्थिते, निकटागते च ।
**उपसम्पन्न** त्रि० उप+सम्+पद-क्त । यज्ञार्थहते प्रोक्षिते पशौ, पाकेन संस्कृते मांसादौ,पर्य्याप्ते, मृते च । [धानायोपगमे ।
**उपसर** पु० उप+सृ-अप् । स्त्रीगव्यादिषु पुंगवादीनां गर्भा
**उपसर्ग** पु० उप+सृज-घञ् । रोगविकारे उपद्रवे, शुभाशुभसूचके महाभूतविकाररूपे उत्पाते, व्याकरणोक्तेषु “निपाताश्चादयोऽन्येयाः प्रादयस्तूपसर्गकाः । द्योतकत्वात् क्रियायोगे लोकादवगताइमे”इत्युक्तलक्षणेषु क्रियायोगे प्रादिषु च
**उपसर्जन** न० उप+सृज-ल्युट् । अप्रधाने गौणे, विशेषणे, व्याकरणोक्ते समासशास्त्रे प्रथमान्तनिर्द्दिष्टे च ।
**उपसर्य्या** स्त्री०उपस्रियतेऽसौ सृ-यत् । गर्भग्रहणयोग्यायाम् ऋतुमत्यां गवि । [क्तिन् । चन्द्रार्कसमीपे मण्डलाकारे परिधौ
**उपसूर्य्यक** न० उपगतं सूर्य्यं सूर्य्यमिव चन्द्रं वा संज्ञायां
**उपसूर्य्यकमण्डल** न० उपसूर्य्यकं मण्डलं वेष्टनम् कर्म्म० । चन्द्रार्कवेष्टने परिधौ । [युक्ते, विसृष्टे च त्रि० ।
**उपसृष्ट** न० उप+सृज-क्त । मैथुने। व्याकरणोक्ते प्राग्नुपसर्ग·
**उपसेक** पु० उप+सिच+घञ् । सेचनेन मृदूकरणे ।
**उपस्कार** पु० उप+कृ-अप् सुट् च । व्यञ्जनादिसंस्कारके पिष्ट धन्याकहरिद्रादौ (बाटना) गृहोपकरणे टपदुदूखलादौ च
**उपस्थाट** त्रि०उप+स्था-ट्टच् । सेवके, उपगते, क्षत्रियभेदे च ।
**उपस्थान** न० उप+स्था-ल्युट् । उपेत्य स्थितौ,नमस्कारे च
**उपस्थित** त्रि० उप+स्था-क्त । समीपस्थिते, प्राप्ते, आगते च
**उपस्पर्श** पु० उप+स्पृश-घञ् । स्पर्शे, स्नाने च। उपस्पृश्यन्ते इन्द्रियाण्यत्र । विधिना जलपानपूर्व्वके मुखादिस्पर्शरूपे वैधाचमने । तथेत्युपस्पृश्येति रघुः ।
**उपस्पृष्ट** त्रि० उप+स्पृश-क्त । आचान्ते कृताचमने, समीपे आमनादौ स्पृष्टे च । [हारसमीपे अव्य० ।
**उपहार** पु० उप+हृ-घञ् । (भेट) उपढौकने । अव्ययी० ।
**उपह्वर** पु० उप+ह्वृ-अप् । वृद्धे । निर्जने निकटे च न० ।
**उपांशु** अव्य० उप+अन्+श-उ । निर्जने अप्रकाशे च । ‘जिह्वोष्ठौ चालयेत् किञ्चित् देवतागतमानसः । निजश्रवणयोग्यः स्यादुपांशुः स जपः स्मृत इत्युक्तलक्षणे मन्त्रदेर्जपे पु० । ‘उपांशुःस्याच्छतगुण इति मनुः ।
**उपाकरण** न० उप+आ+कृ-ल्युट् । उपनयनपूर्व्वकं वेदस्य ग्रहणे, श्रावण्यां पूर्णिमायां कर्त्तव्ये वैधकर्म्मविशेषे, संस्कारपूर्व्वकं यज्ञे पशूनां हनने, आरम्भे च ।
**उपाकर्म्म** न० उप+कृ-मनिन् । उपाकरणशार्थे ।
**उपाकृत** त्रि० उप+आ+कृ-क्त । यज्ञे हननार्थं कृतसंस्कारे पशौ, आरब्धे च ।
**उपाख्यान** न० उप+आ+ख्या-ल्युट् । पूर्व्ववृत्तकथने, ‘रामोपाख्यानमत्रैवे’ति महाभारतम्। कथनमात्ने च। [गमने च।
**उपागम** पु० उप+आ+गम-घञ् अवृद्धिः । स्वीकारे,समीपा-
**उपाङ्ग** न० उपमितमङ्गेन गति०। अङ्गतुल्ये प्रधानोपयोगिनि ‘साङ्गोपाङ्गैरिहोदिता’ इत्यमरः ।
**उपाजे** अव्य० उप+अज-के वीभावाभावः । दुर्बलस्य बलाधाने
**उपात्त** त्रि० उप+आ+दा-क्त । गृहीते, प्राप्ते च ‘क्वयं केचिदुपात्तस्ये’ति स्मृतिः । अन्तर्गतमदे गजे पु० ।
**उपात्यय** पु० उप+अति+इण्-अच् । लोकशास्त्राचारातिक्रमे, व्यतिक्रमे,क्रमोल्लङ्घने, नाशे च ।
**उपादान** न० उप+आ+दा-ल्युट् । ग्रहणे, स्वस्वविषयेभ्य इन्द्रियाणां निवारणरूपे प्रत्याहारे, कार्य्यजननार्थमुपादीयमाने कार्य्यान्विते कारणे, यथा मृदादि घटादेः, स्वर्णादि अलङ्कारादेः, जननार्थं गृह्यते । तच्च सर्व्वदा कार्य्यमनुगतम्
**उपादेय** त्रि० उप+आ+दा-यत् । उत्कृष्टे, ग्राह्ये, प्रधाने, विधेये च उपादेये गुणो भवेदिति भट्टकारिका ।
**उपाधि** पु० उप+आ+धाञ्-कि । धर्म्मचिन्तायाम्, विशेषणे उपाधिर्भिद्यते न तु तद्वानितिसांख्यसूत्रम्। स्वधर्म्मस्यान्यगततयावभासके, यथा दर्पणादि स्वगतं नीलिमादिकं स्वप्रतिविम्बितमुखगततया, जवापुष्पं च स्वगतं रक्तत्वं स्फटिकगततयाऽवभासयति अतोऽत्र दर्पणादि नीलिमाद्यवभासने उपाधिः । न्यायमते हेतुव्यभिचारोद्भावके साध्यव्यापके साधनाव्यापके पदार्थे च ।
**उपाध्याय** पु० उपेत्याधीयतेऽस्मात् उप+अधि+इङ्-घञ् । ‘एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः । ‘योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते’ इति मनूक्तलक्षणे वेदैकदेशतदङ्गाध्यापके। स्त्रियां ङीपि उपाध्याया उपाध्यायीतिरूप-

ह्वयम्। उपाध्यायस्य पत्नीत्यर्थे ङीष् आनुक् वा उपाध्यायानी उपाध्यायी च। [कायाम्।

**उपानह्** स्त्री० उप+आ-नह्-क्विप् उपसर्गदीर्घः। चर्मपादु-

**उपान्त** पु० उपमितमन्तेन प्रा०स०। निकटे, प्रान्ते च।

**उपान्त्य** त्रि० उपान्ते भवः यत्। अन्त्यसमीपभवे।

**उपाय** पु० उप+अय+घञ्। साधने, उपगमे, राज्ञां रिपुनिराकरणहेतुषु सामादिषु च। [गमने च।

**उपायन** न० उप+अय-ल्युट्। तोषकारके उपहारे, समीप-

**उपारत** त्रि० उप+आ+रम-क्त। निवृत्ते 'उपारताः पश्चिमरात्रगोचरादि'ति भारविः।

**उपालम्भ** पु० उप+आ+लभ-घञ् मुम् च। निन्दापूर्व्वकदुष्टवचने, परस्परदूषणे च।

**उपावृत्त** त्रि० उप+आ+वृत-क्त। श्रमापनयनाय पुनःपुनर्भूमिलुठितेऽश्वे, प्रतिनिवृत्ते च। [त्रि०।

**उपासक** त्रि० उप+आस-ण्वुल्। उपासनकर्त्तरि, सेवके च

**उपासङ्ग** पु० उपासज्यन्ते शरा अत्र। उप+आ+सन्ज-घञ्। तूणे। [सेवने। युच्। देवताद्याराधने स्त्री०।

**उपासन** न० उप+अस-क्षेपे ल्युट्। शराभ्यासे। आस+ल्युट्

**उपासित** त्रि० उप+आस-क्त। सेविते, कृतोपासने देवादौ च।

**उपास्ति** स्त्री० उप+आस-क्तिन्। उपासनायाम् 'यदुपास्तिमसावतेति' कुसुमाञ्जलिः।

**उपाहित** पु० उप आसन्नमहितं यतः। उल्कापातादौ अग्न्युत्पातरूपे उपद्रवे। उप+आ+धा-क्त। आरोपिते, योजिते च त्रि०

**उपेक्षक** त्रि० उप+ईक्ष-ण्वुल्। विवादिनोर्जयपराजयासंस्पृष्टे, तत्कृतहर्षविषादशून्ये, उदासीने, प्रतीकाराद्युद्यते च

**उपेक्षा** स्त्री० उप+ईक्ष-अ। त्यागे "इदं न मम स्यादिति"-ज्ञानभेदे, औदासीन्ये, अनपेक्षणे च।

**उपेन्द्र** पु० उपगत इन्द्रम् अनुजत्वात्। विष्णौ। स हि कश्यपात् अदितौ इन्द्रादपरं वामनरूपतया संजातः।

**उपेन्द्रवज्रा** स्त्री० एकादशाक्षरपादके छन्दोभेदे।

**उपेय** त्रि० उप+इण्-यत्। उपायसाध्ये, प्राप्तव्ये च।

**उपोढ** त्रि० उप+वह-क्त। सन्निवेशविशेषयुक्ते व्यूढे सैन्ये निकटे, ऊढे कृतविवाहे च।

**उपोत्तम** त्रि० उपगतमुत्तममन्त्यम्। अन्त्यसमीपे उपान्त्ये।

**उपोदकी** स्त्री० उपगतमुदकमत्र। पूतिकायाम् (पुइशाक)।

**उपोद्घात** पु० उप+उद्+हन-घञ्। प्रकृतोपपादके उदाहरणे प्रकृतार्थं वर्णयितुमर्थान्तरवर्णने, "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा" इत्युक्तलक्षणायां चिन्तायाञ्च।

**उपोषण** न० उप+उष-ल्युट्। उपवासे अहोरात्राभोजने।

**उपोषित** न० उप+वस+भावे-क्त। उपवासे। कर्त्तरि क्त। उपवासकर्त्तरि त्रि०। [धान्यादौ क्षेत्रे।

**उप्त** त्रि० वप-क्त। कृतवापे धान्यादौ। अधिकरणे क्त। उप्त-

**उप्तकृष्ट** त्रि० पूर्व्वमुप्तं पश्चात् कृष्टं पूर्व्वकालेत्यादि स०। वीजवपनानन्तरं कृष्टे क्षेत्रे (वीजाकृते क्षेत्रे)। (काडान)।

**उब्ज** आर्ज्जवे तुदा० पर० अक० सेट्। उब्जति औब्जीत्।

**उभ** त्रि० द्वित्व०। उ-भक्। द्वित्वविशिष्टार्थे। अस्य समासादिवृत्तौ प्रयोगो नास्ति। [ऽर्थे।

**उभय** त्रि० उभौ अवयवौ यस्य उभ+अयट्। द्वित्वविशिष्टे-

**उभयतस्** अव्य० उभ-तसिल् वृत्तौ अयः। उभयपार्श्वे।

**उभयथा** अव्य० उभ+थाच्। वृत्तौ अयः। उभयप्रकारेणेत्यर्थे

**उभयद्युस्** अव्य० उभ-द्युस् वृत्तौ अयः। उभयदिनयोः। एद्युस्। उभयेद्युरप्यत्र।

**उम्** अव्य० उ-डुम्। रोषे, स्वीकारे, प्रश्ने च।

**उमा** स्त्री० ओः शिवस्य मा लक्ष्मीः। दुर्गायाम् 'उमेति मात्रा तपसे निषिद्धा पश्चादुमाख्यां सुमुखी जगामे'तिनिरुक्तायां पार्व्वत्याम्। उं शिवं माति मतित्वेन मन्यते मा+क। शिवपत्न्याम्। वे-मक् संप्रसारणम्। हरिद्रायाम् अतसीवृक्षे (मसिना) कीर्त्तौ, कान्तौ, शान्तौ च।

**उमाकट** पु० उमाया अतस्या हरिद्राया वा रजः कटच्। अतस्या हरिद्रायाश्च रजसि। [मेशाद्योऽप्यत्र।

**उमाधव** पु० उमाया धवः पतिः ६त०। महादेवे। उमाकान्तो-

**उमासुत** पु० ६त०। कार्त्तिकेये। उमापुत्रादयोऽप्यत्र।

**उम्भ** पूर्त्तौ तुदा० पर० सक० सेट्। उम्भति औम्भीत्।

**उर** गतौ (सौत्रः) पर० सक० सेट्। ओरति औरीत्।

**उरग** पु० उरसा गच्छति उरस्+गम-ड सलोपश्च। सर्पे, तद्देवताके अश्लेषानक्षत्रे च।

**उरगाशन** पु० उरगानश्नाति उरग+अश-ल्यु, उप० स०। गरुडे। ल्युट्। उरगाशनम् सीसके न०।

**उरण** पु० ऋ० क्यु, धातोरुश्च। मेषे। [(दादमर्द्दन) वृक्षे।

**उरणाक्ष** पु० उरणस्य मेषस्य अक्षीव अक्षि पुष्पं यस्य। दद्रुघ्ने

**उरभ्र** पु० उरु उत्कटं भ्रमति भ्रम-ड एषो० उलोपः। मेषे।

**उररी** अव्य० वे-ररीक्। अङ्गीकारे, विस्तारे च।

**उररीकृत** त्रि० उररी+कृ-क्त। अङ्गीकृते, विस्तृते च।

**उरश्छद** पु० उरश्छाद्यतेऽनेन छद-णिच्-घ ह्रस्वः। कवचे।

**उरस्** न० ऋ-असुन् धातोरुच्च। वक्षःस्थले।

**उरसिज** पु० उरसि जायते जन-ड त० सप्तम्या अलुक्।

स्त्रीवक्षोजाते स्तने । [प्रशस्तवक्षोयुते ।
**उरसिल** त्रि॰ प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मत्वर्थीय इलच् ।
**उरस्काट** पु॰ उरः कध्यते आच्छ्रियतेऽनेन कट-घञर्थे क ।
बालानामुत्तरीयभेदे तदीये यज्ञोपवीताकारे वस्त्रभेदे च ।
(वुकवाछाड़) । [उरस्त्राणमप्यत्र न॰ ।
**उरस्त्र** न॰ उरस्त्रायते त्रै-क । वक्षोरक्षके कवचे । ल्युट् ।
**उरस्य** पु॰ उरसा निर्म्मितः उरस्+यत् । स्वजाते औरसे पुत्रे
**उरस्वत्** त्रि॰ प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः ।
प्रशस्तवक्षोयुते ।
**उरी** अव्य॰ वेञ् रीक् । अङ्गीकारे, विस्तारे च ।
**उरीकार** पु॰ उरी+कृ-घञ् । स्वीकारे, विस्तारे च ।
**उरीकृत** त्रि॰ उरी+कृ-क्त । अङ्गीकृते, विस्तृते च । [वा ङीप्
**उरु** त्रि॰ ऊर्णु-कु नुलोपो ह्रस्वश्च । विशाले, महति च स्त्रियां
**उरुक्रम** पु॰ उरुर्महान् क्रमः पादोविक्रमो वा यस्य । विष्णौ
**उरुबूक** पु॰ उरु-वै-ऊक आलोपश्च । एरण्डवृक्षे रक्तैरण्डे च
**उरोज** पु॰ उरस् जन-ड त॰ । स्त्रीस्तने । [(माकड़सा) मर्कटके
**उर्णनाभ** पु॰ उर्णेव सूत्रं नाभौ गर्भेऽस्य अच् समा॰ ह्रस्वः ।
**उर्णा** स्त्री॰ ऊर्णूयते आच्छाद्यते ऊर्णु-ड ह्रस्वश्च । मेषादिलोम्नि
**उर्द** माने स्वादे च सक॰ क्रीड़ायाम् अक॰ भ्वा॰ आत्म॰ सेट् । उर्दते
**उद्र** पु॰ उर्द-रक् । जलविड़ाले (उद्बिराल)
**उर्व** हिंसायां भ्वा॰ पर॰ सक॰ सेट् । उर्वति और्वीत् ।
**उर्वरा** स्त्री॰ उरु-ऋ-अच् । सर्व्वशस्ययुक्तायां भूमौ ।
**उर्व्वशी** स्त्री॰ उरून् अश्नुते वशीकरोति उरु+अश-क गौरा॰
ङीष् । स्वर्गवेश्यायाम् ।
**उर्व्वशीरमण** पु॰ इत॰ । चन्द्रवंश्ये बुधपुत्रे पुरूरवोनामके राज्ञि
**उर्व्वारु** पु॰ उरु-ऋ-उण् । कर्कट्याम् । स्वार्थे कन् अत्रैव ।
**उर्व्वी** स्त्री॰ उरु+स्त्रियां गुणवचनत्वात् ङीष् । भूमौ ।
**उल** दाने (सौत्रः) पर॰ सक॰ सेट् । ओलति औलीत् ।
**उलप** पु॰ न॰ वल-कपच् संप्रसारणम् । शाखापत्रप्रचययुतायां
लतायाम् । कोमले तृणभेदे न॰ (उलुखड़) ।
**उलूक** पु॰ वल-संवाये ऊक संप्रसारणम् । पेचके, इन्द्रे, दुर्य्यो
धनामात्यशकुनिपुत्रे च । तृणभेदे न॰ । (उलुखड़)
**उलूखल** न॰ ऊर्द्ध्वं खम् उलूखं पृषो॰ तत् लाति स्पृहाति
ला-क । धान्यादिकण्डनसाधने काष्ठमये पात्रे (उखरी)
गुग्गुलौ च । [शिशुके, (शोयक) मत्स्यभेदे च
**उलूपिन्** पु॰ उल्वोः शम्भोरिव रूपमस्यास्ति इनि रस्य लत्वम् ।
**उलूलु** पु॰ उरु उरु इति रस्य लत्वम् । दृद्धिसूचके माङ्गल्यादौ
स्त्रीध्वनिभेदे 'उच्चैरुलूलुध्वनिरुच्चचार''ति नैषधम् ।

**उल्का** स्त्री॰ उष-दाहे क नि॰ षस्य लः । रेखाकारे गगनात्
पतत्तेजःपुञ्जे । (भेदे (ख्याकशियाली)
**उल्कामुखी** स्त्री॰ उल्केव रात्रौ ज्वलत् मुखं यस्याः । शृगाली
**उल्मुक** न॰ उष-दाहे मुक, षस्य लः । अङ्गारे ।
**उल्लल** त्रि॰ उद्-लल-अच् । बहुरोमयुक्ते ।
**उल्ललित** त्रि॰ उद्-लल-क्त । तरलिते, आन्दोलिते च । [पु॰
**उल्लाघ** त्रि॰ उद्+लाघ-क्त नि॰ । रोगनिर्मुक्ते, दक्षे, शुचौ, च । मरिचे
**उल्लाप** पु॰ उद्+लप-घञ् । काकुवाक्ये, शोकरोगादिना
ध्वनेर्विकारे च । [स्थानीये परिच्छेदे च
**उल्लास** पु॰ उद्+लस+घञ् । प्रकाशे, आह्लादे, ग्रन्थस्याध्याय
**उल्लिखित** त्रि॰ उद्+लिख-क्त । उत्कीर्णे तनूकृते उपरि
लिखिते, चित्रिते च ।
**उल्लेख** पु॰ उद्+लिख-घञ् । उच्चारणे, अलङ्कारभेदे साहि॰ १०प
**उल्लेखन** न॰ उद्+लिख-ल्युट् । वमने, खनने, उच्चारणे च
**उल्लोच** पु॰ उद्+लोच-घञ् । चन्द्रातपे विताने ।
**उल्लोल** पु॰ उद्+लोड़-घञ् डस्य लत्वम् । महातरङ्गे ।
**उल्व** न॰ वल-वक् संप्रसारणञ्च । गर्भवेष्टनचर्म्मणि जरायौ ।
**उल्वण** त्रि॰ उद्+वण-अच् पृषो॰ दस्य लः । व्यक्ते, स्पष्टे ।
**उ(ष)शती** स्त्री॰ उष-शतृ, वश-शतृ संप्रसारणम् वा ।
स्त्रियां ङीप् । अकल्याणायां वाचि ।
**उशनस्** पु॰ वश-कनसि । भार्गवे शुक्रे । सौ उशना संबुद्धौ
उशनन् उशन, उशनः ।
**उशीर** पु॰ न॰ वश-ईरन् किच्च । (खश खश्) वीरणमूले ।
**उष** वधे, दाहे च भ्वादि॰ पर॰ सक॰ सेट् । ओषति, औषीत् ।
**उष** वधे दाहे च भ्वादि॰ पर॰ सक॰ वेट् । ओषति औषीत्, औक्षीत्
**उष** पु॰ उष-क दिने गुग्गुलौ, रात्रिशेषे, क्षारमृत्तिकायां च
कामनायुक्ते त्रि॰ । [च (चइ) ।
**उषण** न॰ उष-क्युन् । मरिचे । पिप्पल्यां, शुण्ठ्यां चव्यके
**उषर्बुध** पु॰ उषसि संध्यायां बुध्यते होमार्थं प्रज्वालने प्रकाशते
उषस्+बुध-क अहरादित्वात् रः । अग्नौ, रक्तचित्रके च ।
**उषस्** न॰ उष-असि किच्च । प्रत्यूषे, पञ्चपञ्चाशद्घटिकोत्तरकाले
**उषसी** स्त्री॰ उषं तापकत्वात् दिवसं स्यति उष+षो-क गौरा॰
ङीष् । सायं सन्ध्यायाम् ।
**उषा** स्त्री॰ उष-क टाप् । "तेजःपरिहाणिरुषा भानोरर्कोदयं
यावदि"ति वराहोक्ते काले बाणराजसुतायाञ्च ।
**उषाकल** पु॰ उषायां कलः शब्दोऽस्य । कुक्कुटे ।
**उषापति** पु॰ उषाया बाणराजसुतायाः पतिः । अनिरुद्धे
कन्दर्पात्मजे कृष्णपौत्रे । उषाकान्तादयोऽप्यत्र ।

**उषित** त्रि॰ उष-क्त। पर्य्युषिते दग्धे च। वस-क्त। स्थिते।
**उष्ट्र** पु॰उष-ष्ट्रन् किच्च। स्वनामख्याते पशुभेदे, वाहुरथे च।
**उष्ण** पु॰उष-नक्। ग्रीष्मे ऋतौ, आतपे, पलाण्डौ नरकभेदे, शीतभिन्ने स्पर्शे च। तद्वति, आलस्यरहिते दक्षे च त्रि॰।
**उष्णक** त्रि॰ उष्णमिव करोति कन्। अनलसे, क्षिप्रकारिणि च उष्णं करोति उष्ण+णिच् । ण्वुल् ज्वरे पु॰।
**उष्णगु** पु॰ उष्णा गावः किरणा अस्य। सूर्य्ये। उष्णरश्मिरप्यत्र
**उष्णनदी** स्त्री॰ कर्म॰ "यमद्वारे महाघोरे तप्ता वैतरणी नदी"त्युक्तायाम् उष्णनद्यां वैतरण्याम्।
**उष्णवारण** न॰ उष्णं वारयति वृ-णिच्-ल्यु। आतपत्रे, छत्रे
**उष्णवीर्य्य** पु॰ उष्णतुल्यं वीर्य्यमस्य। शिशुमाराख्ये जलजन्तौ। उष्णवीर्य्यवति त्रि॰।
**उष्णांशु** पु॰ उष्णा अंशवो यस्य। सूर्य्ये।
**उष्णागम** पु॰ उष्णस्यागमोऽस्मिन्। निदाघकाले।
**उष्णासह** पु॰ उष्णं आसह्यतेऽत्र आ+सह-अच्। हेमन्ते ऋतौ। उष्णं न सहते अच्। असह्योष्णे त्रि॰।
**उष्णिका** स्त्री॰अल्पमन्नमस्याम् अल्पार्थे कन् नि॰ अन्नस्य उष्णादेशः। यवाग्वाम् (याउ)। उष्णकशब्दात् टाप्। दक्षायाम्
**उष्णिह्** स्त्री॰ उत्स्निह्यति क्विन् नि॰ षत्वम्। सप्ताक्षरपादके छन्दोभेदे। स्वादौ उष्णिक् उष्णिग्भ्याम्।
**उष्णीष** पु॰ न॰ उष्णमीषते हिनस्ति ईष-क शक॰ पररूपम्। शिरोवेष्टनवस्त्रे, (पागडी) किरीटे च।
**उष्णोपगम** पु॰ उष्णस्य उपगमोऽत्र। निदाघकाले।
**उष्म** पु॰ उष-मक्। निदाघे, आतपे, ग्रीष्मे ऋतौ च।
**उष्मपा** पु॰ उष्मं पिबन्ति पा-क्विप्। भृगोः पुत्रे पितृगणभेदे।
**उस्र** पु॰ वसन्ति रसा अत्र वस-रक्। किरणे, सूर्यकिरणानां जलहेतुत्वात् रसवत्त्वम्। वृषे च। सुरभ्यां उपचित्रा लतायां च स्त्री॰। [उवोह ऊहतुः
**उह** वधे भ्वादि॰पर॰सक॰सेट्। ओहति औहत्, औहीत्,
**उह** अव्य॰ उ च ह च द्व॰। संबोधने, एवार्थे च।
**उहह** अव्य॰ उह च ह च। सम्बोधने। [कर्मणि च।
**उह्यमान** त्रि॰ वह-कर्मणि शानच्। आलक्ष्यमाणे, वहन-

# ऊ

**ऊ** अव्य॰ वेञ् क्विप्। संबोधने, वाक्यारम्भे, दयायां, रक्षायाञ्च
**ऊ** पु॰अवतीति अव-क्विप् ऊट्। महादेवे चन्द्रे च। पालके त्रि॰
**ऊत** त्रि॰ ऊय-तन्तुसन्ताने क्त। स्यूते, स्वतेषु ग्रथिते च।
**ऊति** स्त्री॰ ऊय-क्तिन्। स्यूतौ। अव-क्तिन् नि॰। रक्षणे, लीलायां, चरणे च। [स्त्रीराधारे आपीने (मेड़)
**ऊधस्** न॰ उन्द्-असुन् निपा॰ उतोदीर्घः। स्त्रीगव्यादेः
**ऊधस्य** न॰ ऊधसि भवम् ऊधस्+यत्। दुग्धे।
**ऊन** परिहाणे अदन्तचुरा॰ उभ॰ अक॰ सेट्। ऊनयति ते औनिन-त् त औनयीत् औनयिष्ट।
**ऊन** त्रि॰ ऊन-हानौ अच्। हीने, असंपूर्णे च।
**ऊम्** अव्य॰ ऊय-मुक्। रोषोक्तौ, प्रश्ने, निन्दायां, सद्भावाञ्च
**ऊय** तन्तुसन्ताने भ्वा॰ आत्म॰सक॰सेट्। ऊयते औयिष्ट।
**ऊररी** अव्य॰ ऊय-ररीक्। अङ्गीकारे, विस्तारे च।
**ऊरव्य** पु॰ ऊरु+भवार्थे यत्। वैश्ये। तस्य ब्रह्मण ऊरुतो जन्म 'ऊरू वैश्य' इति श्रुतेः प्रसिद्धम्। ऊरुसम्भवे त्रि॰।
**ऊरी** अव्य॰ ऊय-रीक्। अङ्गीकारे, विस्तारे च।
**ऊरु** पु॰ ऊर्णूयते आच्छाद्यते ऊर्णु-कर्मणि कु नुलोपश्च। जानूपरिभागे।
**ऊरुज** पु॰ ऊरोर्ब्रह्मण ऊरोर्जायते जन-ड। वैश्ये।
**ऊरुपर्व्वन्** पु॰ ऊरोः पर्वेव। जानुनि (हांटु)
**ऊरुस्तम्भ** पु॰ ऊरुं स्तम्नाति अण्। स्वनामख्याते रोगे।
**ऊरुस्तम्भा** स्त्री॰ऊरोरुपमानभूतः स्तम्भो यस्याः। कदलीवृक्षे।
**ऊर्ज्ज** जीवने बले च चु॰ उभ॰ अक॰ सेट्। ऊर्ज्जयति ते और्ज्जिजत् त।
**ऊर्ज्ज** पु॰ऊर्ज्ज-आधारे घञ्। कार्त्तिके मासि। भावे घञ्। बले, उत्साहे च। अहनि सान्तोऽप्ययमत्रार्थे।
**ऊर्ज्जस्वल** त्रि॰ ऊर्ज्जस्+अस्त्यर्थे वलच्। बलवति। विनि। ऊर्ज्जस्व्यप्यत्र।
**ऊर्ज्जित** त्रि॰ ऊर्ज्ज-क्त। बलातिशययुक्ते, ऋद्धियुक्ते च।
**ऊर्णनाभ** पु॰ ऊर्णेव तन्तुर्नाभावस्य अच् समा॰ ह्रस्वः। मर्कटे (माकडसा) अलभावे ऊर्णनाभिरप्यत्र भ्रुवोर्मध्यस्थे महापुरुषचिह्ने आवर्त्ताकारे लोमसञ्चये च।
**ऊर्णा** स्त्री॰ ऊर्णु-करणे ड। मेषलोमनि।
**ऊर्णायु** पु॰ ऊर्णाः सन्त्यस्य युच्। मेषे, कम्बले, ऊर्णनाभे, बाणभङ्गुरे च।
**ऊर्णु** आच्छादने अदा॰ उभ॰ सक॰ सेट्। ऊर्णोति, ऊर्णुते, और्णावीत् और्णुवीत् और्णवीत् और्णविष्ट और्णविष्ट।
**ऊर्द्ध** त्रि॰ उद् हाङ्-ड पृषो॰ ऊरादेशः। उच्चे उपरि च
**ऊर्द्धक** पु॰ ऊर्द्धः सन् कायति शब्दायते। मृदङ्गभेदे स च गोपुच्छवदाकारस्त्रितालपरिमितः मुखेऽष्टाङ्गुलः ऊर्द्धं कृत्वा वाद्यते। [तुङ्गे उपरि च
**ऊर्द्ध** त्रि॰ उत् उपरि ध्मायते ध्मन-ड आदेरूरादेशः। उच्चे

**ऊर्द्धकण्ठी** स्त्री० ऊर्द्धः कण्ठः मुखमस्याः ब० गौरा० ङीष्। महाशतावरीलतायाम्।

**ऊर्द्धजानु** त्रि० ऊर्द्धे जानुनी यस्य। उपरिभागे स्थूलजानुयुक्ते

**ऊर्द्धज्ञु** त्रि० ऊर्द्धे जानुनी यस्य जानुनो वा ज्ञु। उपरिभागे स्थूलजानुयुक्ते। [गजारातौ पशुभेदे

**ऊर्द्धपाद** पु० ऊर्द्धाः पृष्ठस्थाःचत्वारः पादा अस्य। शरभाख्ये

**ऊर्द्धपुण्ड्र** पु० ऊर्द्धं ऊर्द्धमुखः पुण्ड्रः इक्षुयष्टिरिव। ललाटस्थे ऊर्द्धमुखे पुण्ड्रेक्षुवत् रेखात्रयात्मके तिलकभेदे। तद्धारणे विधिनिषेधादिकं इहदभिधाने वक्ष्यते।

**ऊर्द्धम्** अव्य० उद्-ह्वेञ् डम् आदेरूरादेशश्च। ऊर्द्धशब्दार्थे।

**ऊर्द्धमान** न० ऊर्द्धमारोप्य मीयते येन मा-ल्युट्। पलकर्षादिमिते पाषाणादौ (बाटखारा)। तेन हि तुलादावारोपितेन स्वर्णादेर्गुरुत्वमुन्नीयते। उच्चताया रूच्छेदकपरिमाणे च।

**ऊर्द्धरेतस्** पु० ऊर्द्धं न पतत् रेतो यस्य। महादेवे, सनकादौ सन्न्यासिनि, भीष्मे च।

**ऊर्द्धलिङ्ग** पु० ऊर्द्धमुत्कृष्टं लिङ्गं चिह्नमस्य। महादेवे ऊर्द्धं लिङ्गं विरूपाक्षमिति सन्ध्याङ्गमन्त्रः।

**ऊर्द्धलोक** पु० कर्म्म०। स्वर्गे।

**ऊर्द्धासित** पु० ऊर्द्धमुपरिभागे असितः कृष्णः आसितो वा। कारवेल्ले (करला) ऊर्द्धोपविष्टे त्रि०।

**ऊर्म्मि** पु० स्त्री० ऋ-मि-अर्त्तेरुच्च। तरङ्गे, प्रकाशे, वेगे, वस्त्रसङ्कोचरेखायाम्, पीडायाम्, उत्कण्ठायाम्, बुभुक्षादिषु, षट्सु च 'यथा बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू षडूर्मयः' इति। "पङ्क्तौ ऽश्ववितानामश्वानां नमनोन्नमनाकृतिः। अतिवेग समायुक्ता गतिरूर्म्मिरुदाहृते'त्युक्तलक्षणायामश्वगतौ स्त्री०

**ऊर्म्मिका** स्त्री० ऊर्म्मिरिव कायति कै-क। तरङ्गवत्प्रकाशमाने अङ्गुरीयके। स्वार्थे कन्। तरङ्गादौ च।

**ऊर्म्मिमत्** त्रि० ऊर्म्मिरिव वक्रतास्त्यस्य मतुप् यवा० मस्य न वः। वक्रे तरङ्गवति च।

**ऊर्म्मिमालिन्** पु० ऊर्म्मिमालाऽस्त्यस्य इनि। समुद्रे।

**ऊष** पु० ऊष-रुजायां क। क्षारमृदि, प्रभाते, रन्ध्रे चन्दनादौ च

**ऊषण** न० ऊष-ल्युट्। मरिचे, पिप्पलीमूले, शुण्ठ्याञ्च। (चिता) चित्रके पु०। पिप्पल्यां चव्ये च (चइ) स्त्री०।

**ऊषर** त्रि० ऊष+मत्वर्थीयो रः। ऊषवति क्षारमृत्तिकायुक्ते देशे यत्किञ्चिदुप्तं बीजं न प्ररोहति।

**ऊषरज** न० ऊषराज्जायते जन-ड। (पाङ्गा) लवणभेदे।

**ऊषवत्** त्रि० ऊष-मतुप् मस्य वः। ऊषरभूमौ।

**ऊष्मन्** पु० ऊष-मनिन्। शोष्मे व्याकरणोक्तेषु शोष्मवायुनोच्चार्य्यमाणेषु शषसहरूपेषु वर्णेषु।

**ऊह** वितर्के भ्वादि० आत्म० सक० सेट्। ऊहते औहिष्ट।

**ऊह** पु० ऊह-घञ् वितर्के आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्वपक्षनिवारणेन. उत्तरपक्षव्यवस्थापनेन निर्णयरूपे परीक्षणे, अनन्विततार्थकविभक्तिलिङ्गत्यागपूर्वके अन्वययोग्यविभक्त्यादिकल्पने, यथा पार्व्वणे सौम्यास इति बहुवचनमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम् पदान्तरेणाकाङ्क्षापूरणे च। [च।

**ऊहा** स्त्री० ऊह अ स्त्रीत्वात् टाप्। अध्याहारे ऊहशब्दार्थे

## ऋ

**ऋ** गतौ भ्वा० पर० सक० अनिट्। ऋच्छति। आरत् आर्षीत्।

**ऋ** गतौ जुहोत्यादि० पर० सक० अनिट्। इयर्त्ति आरत्।

**ऋ** हिंसायां स्वा० पर० सक० अनिट्। ऋणोति। आर्षीत्।

**ऋक्थ** न० ऋच-थक्। धने स्वर्णे, स्मृतिप्रसिद्धे दायरूपे धने च

**ऋक्ष** पु० ऋष-स किच्च। भल्लूके। नक्षत्रे मेषादौ च पु० न०।

**ऋक्षगन्धा** स्त्री० ऋक्षान् गन्धयति हिनस्ति गन्ध-अच्। ऋषि जाङ्गलीक्षुद्रे. महाश्वेतायां, क्षीरविदार्य्याञ्च।

**ऋक्षगिरि** पु० कर्म्म०। कुलाचलभेदे ऋक्षनामके पर्व्वते।

**ऋक्षराज** पु० ऋक्षाणां राजा न० टच्। जाम्बवति, चन्द्रे च

**ऋक्षवत्** पु० ऋक्षाः सन्त्यस्मिन् मतुप् मस्य वः। नर्म्मदातीरस्थे पर्व्वतभेदे।

**ऋग्वेद** पु० ऋक्प्रधानो वेदः। देवदैवत्ये स्वनामख्याते वेदभेदे

**ऋच** स्तुतौ तुदा० पर० सक० सेट्। ऋचति आर्चीत्।

**ऋच्** स्त्री० ऋच-क्विप्। अर्थवशेन नियताक्षरपादयुते वेदांशे।

**ऋच्छ** मोहे मूर्त्तौ गमने च तुदा० पर० सक० अक० च। सेट्। ऋच्छति आर्च्छीत्। आनर्च्छ। [आर्ज्जे

**ऋज** गतौ अर्जने च भ्वा० आत्म० सक० सेट्। अर्जते आर्जिष्ट

**ऋजीष** न० ऋज-ईषन् किच्च। भर्ज्जनपात्रे कटाहादौ। धने, नरकभेदे च।

**ऋजु** त्रि० ऋज-कु। सरले। स्त्रियां वा ङीष् ऋज्वी ऋजुः।

**ऋण** गतौ तना० उभ० सक० सेट्। अर्णोति ऋणोति, ऋणुते आर्णीत् आर्णिष्ट।

**ऋण** न० ऋ-क्त नि० नत्वम्। अधमर्णेन उत्तमर्णात् पुनर्देयत्वेनाभ्युपगम्य गृहीते धने, (धार) जले, दुर्गे, दुर्गभूमौ च। देवर्षिपितृगणोद्देशेन यथाक्रमं यज्ञवेदाध्ययनपुत्रोत्पादनरूपे ऽवश्यकार्य्ये तत्त्वे ऋणमस्त्यनपेहीति रघुः।

**ऋणमत्कुण** पु० इदम् ऋणं मम देयमिति कुणति अभ्युपगम्य शब्दायते ऋण+अस्मद् कुण-क। नग्नके प्रतिभुवि (जामिन)

**ऋणमार्गण** ऋणं परकीयमृणमात्मीयत्वेन मार्गयति चुरा० मृग-ल्युट्। प्रतिभुवि। (जामिन)।

**ऋणमुक्ति** स्त्री० मुच-क्तिन् ६त०। ऋणशोधने।

**ऋणादान** न० ऋणस्यादानम्। उत्तमर्णेनाधमर्णात् दत्त-धनतुल्यधनस्य सवृद्धिकग्रहणे अष्टादशव्यवहारमध्ये व्यवहारभेदे। "तेषामाद्यमृणादान"मित्यादि स्मृतिः।

**ऋणिन्** पु० त्रि० ऋण+मत्वर्थीय इनि। ऋणवति अधमर्णे ऋणग्रस्ते 'ऋणी न स्याद् यथा पिते'ति स्मृतिः। [आर्त्तिष्ट

**ऋत** गतौ (सौत्रः) पर० सक०-सेट्। ऋतीयते आर्त्तीयिष्ट

**ऋत** न० ऋ-क्त। 'ऋतमुञ्छशिलं ज्ञेय'मित्युक्तेः ब्राह्मणस्य उपजीव्यवृत्तौ मोक्षे, जले, कर्म्मफले "ऋतं पिबन्ता"विति श्रुतिः सुप्रिये वाक्ये मानसादिसत्ये च। दीप्ते, सत्ये, पूजिते च त्रि०।

**ऋतधामन्** पु० ऋतं सत्यं धाम यस्य। परमेश्वरे, विष्णौ च।

**ऋतम्** अव्य० ऋत-कमि। सत्यमित्यर्थे।

**ऋतम्भरा** स्त्री० ऋतम् बिभर्त्ति ऋतम्+भृ-अच्। योगशास्त्र-प्रसिद्धे विपर्य्यासशून्ये यथार्थज्ञानरूपे चित्तवृत्तिभेदे।

**ऋति** स्त्री० ऋ-क्तिन्। गतौ स्पर्द्धायाम् निन्दायाञ्च। कर्म्मणि क्तिन्। वर्त्मनि मङ्गले च।

**ऋतु** पु० ऋ-तु किच्च। 'शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमः। माघादिमासयुग्मैस्तु ऋतवः षट् क्रमादिमे' इत्युक्ते कालभेदे। शोणितदर्शनयुक्ते गर्भधारणयोग्ये स्त्रीणामवस्थाभेदे "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः" इति मनुः। दीप्तौ मासे च। [अवन्ध्यवृक्षे।

**ऋतुप्राप्त** त्रि० ऋतुस्तद्योग्यः पुष्पादिः प्राप्तोऽनेन, फलेग्रहौ

**ऋतुमती** स्त्री० ऋतु+मतुप्। रजस्वलायां स्त्रीधर्म्मिण्याम्।

**ऋतुराज** पु० ऋतूनां राजा ६त० टच् समा०। वसन्ते ऋतौ।

**ऋतुवृत्ति** पु० ऋतूनां वृत्तिः पर्य्यायेणावर्त्तना यत्र। वत्सरे।

**ऋते** अव्य० ऋत (सौत्रः) के। वर्ज्जने विनार्थे च।

**ऋत्विज्** ऋतु+यज्-क्विन्। याजके, 'अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते' इति मनूक्ते स्वानुष्ठेयवैदिकादिकर्म्मकरे।

**ऋद्ध** न० ऋध-क्त। पक्वमर्द्दितधान्ये सिद्धान्ते च। समृद्ध सम्पन्ने च त्रि०।

**ऋद्धि** स्त्री० ऋध-क्तिन्। वृद्धौ, देवभेदे, औषधिभेदे च।

**ऋध** वृद्धौ दिवा० स्वा० च पर० अक० सेट्। ऋध्यति ऋध्नोति आर्द्धीत् आर्द्धत्। [तुदा० पर० सेट्। ऋफति आर्फीत्।

**ऋफ** दाने हिंसायां निन्दायां युद्धे च सक० श्लाघायां अक०

**ऋभु** पु० अरि स्वर्गे अदितौ वा भवति ऋ+भू-डु। देवे।

**ऋभुक्ष** पु० ऋभवो देवाः क्षियन्ति वसन्त्यत्र क्षि+ड। स्वर्गे वज्रे इन्द्रे च। [स्वादौ ऋभुक्षाः ऋभुक्षाणौ।

**ऋभुक्षिन्** पु० ऋभुक्षः वज्रं स्वर्गोवाऽस्यास्ति इनि। इन्द्रे

**ऋष** गतौ तुदा० पर० सक० सेट्। ऋषति आर्षीत्।

**ऋषभ** पु० ऋष-अभक्। वृषभे, औषधिभेदे, मुनिभेदे च।

**ऋषभतर** पु० तनुः ऋषभः तनुत्वे ष्टरच्। भारवहने मन्दशक्तौ वृषभे। जातित्वेन स्त्रियां ङीप् वृषभतरी।

**ऋषभध्वज** पु० ऋषभो ध्वजो यस्य। शिवे। वृषभध्वजोऽप्यत्र

**ऋषभा** स्त्री० ऋषभ इवाचरति ऋषभ+क्विप्-अच्। पुमाकारायां स्त्रियां, शूकशिम्ब्याम् शिरालतायाञ्च।

**ऋषि** पु० ऋष-इन् किच्च। वेदे, मन्त्रद्रष्टरि मुनौ, अनुष्ठेय-कर्म्मज्ञापकसूत्रकृदाचार्य्ये, गोत्रप्रवरप्रवर्त्तके मुनौ च।

**ऋषियज्ञ** पु० ऋष्युद्देश्यको यज्ञः। ब्रह्मयज्ञे वेदाध्ययने।

**ऋष्टि** स्त्री० ऋष-करणे क्तिन्। उभयतो धारायुक्ते खड्गे।

**ऋष्य** पु० ऋष, क्यप्। मृगभेदे। [वृक्षे

**ऋष्यगन्धा** स्त्री० ऋष्यस्य गन्ध इव गन्धो यस्याः। वृद्धदारके

**ऋष्यप्रोक्ता** स्त्री० ऋषिभिरप्रोक्ता। शतावर्य्याम्, अतिबलायाम्, शूकशिम्बीवृक्षे च।

**ऋष्यमूक** पु० ऋष्यो मृगो मूको यत्र। 'ऋष्यमूकस्तु पम्पायाः पुरतः पुष्पितद्रुम' इति रामायणोक्ते पर्वतभेदे।

**ऋष्यशृङ्ग** पु० ऋष्यस्य मृगभेदस्य शृङ्गमिव शृङ्गमस्य। विभाण्डकपुत्रे लोमपादराजकन्यायाः शान्तायाः पत्यौ।

## ॠ

**ॠ** गतौ जुहो० पर० सक० सेट्। आर्त्ति आरीत्। आर आरतुः।

## ए

**ए** अव्य० इण्-विच्। दयायां, स्मृतौ आमन्त्रणे, असूयायां, आह्वाने च। विष्णौ पु०।

**एक** त्रि० इण्-कन्। एकत्वरूपप्रथमसंख्यान्विते, केवले, मुख्ये, अन्यार्थे, सत्ये, अद्वितीये, समाने, अल्पे च।

**एकक** त्रि० एक+कन्। असहाये। [परस्परकारके छात्रे च।

**एककार्य्य** त्रि० एकं कार्य्यं प्रयोजनमस्य। एकरूपकार्य्यकरे,

**एकगुरु** पु० एकोऽभिन्नो गुरुर्यस्य। समानाध्यापके सतीर्थ्ये।

**एकचक्र** न० एकं चक्रं यत्र। हरिगृहे। सूर्य्यरथे पु०।

**ऐकात्म्य** न० एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ् । ऐक्ये एकस्वरूपत्वे ।

**ऐकान्तिक** त्रि० एकान्तं व्याप्नोति ठञ् । अव्यभिचारिणि, अवश्यं भाविनि । स्त्रियां ङीप् । 'ऐकान्तिकी हरेर्भक्तिरु-त्पातायैव कल्पते इति पुराणम् ।

**ऐकाह्निक** त्रि० एकाहे भवः कालात् ठञ् । एकदिननिष्पन्ने। एकाहमतीत्य भवः । एकाहान्तरं जायमाने ज्वरे दिने दिने एकसमये जायमाने ज्वरे च पु० । ऐकाह्निकं ज्वरं हन्ति तस्य नामानुकीर्त्तनमिति ज्वरनाशकमन्त्रः ।

**ऐक्य** न० एकस्य भावः एक+ष्यञ् । अभेदे एकरूपतायाम् ।

**ऐक्षव** त्रि० इक्षोर्विकारः इक्षु-अण् । इक्षुविकारे गुड़ादौ । "ऐक्षवं गुडवर्ज्जित"मिति स्मृतिः ।

**ऐक्ष्वाक** पु० इक्ष्वाकोर्गोत्रापत्यम् अण् नि० । सूर्य्यवंश्ये नृपे

**ऐङ्गुद** न० इङ्गुद्याः फलम् फले अण् तस्य न लुक् । इङ्गुदी वृक्षफले ।

**ऐण** त्रि० एणस्य कृष्णमृगस्येदम् अण् । कृष्णमृगचर्म्मादौ ।

**ऐणेय** त्रि० एण्या इदम् ढक् । कृष्णमृगीचर्म्मादौ ।

**ऐतिह्य** न० इतिह पारम्पर्य्योपदेशः अनिर्द्दिष्टप्रवक्तृकोप-देश इति यावत् स्वार्थे ष्यञ् । पारम्पर्य्योपदेशे । यथात्र वटे यक्षः प्रतिवसतीत्यादि परम्परापदेशमात्रम् । न तु केनाप्येतदुपलभ्य कथितम् ।

**ऐन्दव** न० इन्दुर्देवताऽस्य । मृगशिरोनक्षत्रे चन्द्रसम्बन्धिनि त्रि० । सोमराज्याम् स्त्री० ङीप् ।

**ऐन्द्र** त्रि० इन्द्रस्येदम् इन्द्र+अण् । शक्रसम्बन्धिनि । ज्येष्ठा-नक्षत्रे न० । स्त्रियां ङीप् । 'ऐन्द्री तमस्तुरेश्वर'मिति दुर्गा-देवतार्येऽण् । इन्द्रदेवताके त्रि० । प्राच्या दिशि स्त्री० ।

**ऐन्द्रजालिक** त्रि० इन्द्रजालेन चरति । मायाकारके । (वाजिकर)

**ऐन्द्रि** पु० इन्द्रस्यापत्यम् इञ् । इन्द्रपुत्रे, जयन्ते, अर्ज्जुने, सुग्रीववानरे, काके च । [प्रकाश्ये ।

**ऐन्द्रियक** त्रि० इन्द्रियेण प्रकाश्यः वुञ् । इन्द्रियजन्यप्रत्यक्षेण

**ऐर** न० इरा अन्नं तद्विकारः । अन्नमये ब्रह्मलोकस्थे सरसि च ।

**ऐरावण** पु० इरा सुरा वनमुदकं यत्र पूर्व्वपदादिति णत्वम् तत्र भवः अण् । इन्द्रगजे ऐरावते ।

**ऐरावत** पु० इरा जलानि सन्त्यस्य इरा+मतुप् मस्य व इरा-वान् समुद्रस्तत्र भवः अण् । समुद्रजाते इन्द्रगजे ।

**ऐरावती** स्त्री० इराः सन्त्यस्य मतुप् मस्य वः इरावान् तत्र समुद्रः भवा अण् । विद्युति ।

**ऐरिण** न० इरिणे ऊषरे भवः । लवणभेदे । (पाङ्गा)।

**ऐरेय** न० इरा अन्नम् तत्र भवः ढक् । अन्नभवे मद्ये ।

**ऐल** पु० इलायाः अपत्यम् । बुधपुत्रे पुरूरवोनामके नृपतौ ।

**ऐलविल** पु० इलविलाया अपत्यम् अण् । कुवेरे ।

**ऐशानी** स्त्री० ईशानो देवताऽस्याः । उत्तरपूर्व्वदिशि ।

**ऐश्वर्य्य** न० ईश्वरस्य भावः । अणिमाद्यष्टविधविभूतिभेदे ।

**ऐषमस्** अव्य० अस्मिन् वत्सरे नि० । वर्त्तमानवत्सरे । [जाते

**ऐहलौकिक** त्रि० इह लोके भवः ठञ् द्विपदवृद्धिः । इहलोक

**ऐहिक** त्रि० इह भवः कालाट्ठञ् । इहलोकभवे गृहीत-शरीरसम्बन्धिनि स्रक्चन्दनादिसुखानुभवादौ च ।

# ओ

**ओक** पु० उच-क नि० चस्य कः । पक्षिणि वृषले च ।

**ओकस्** न० उच-असुन् न्यङ्क्वादित्वात् कुत्वम् । गृहे आश्रय-मात्रे च । [(उकुण) केशकीटे ।

**ओकोदनी** स्त्री०ओक आश्रयः मूर्द्धरूपम् अदनं भक्ष्यं यस्याः ।

**ओख** शोषणे, भूषणे, निवारणे च सक० सामर्थ्ये अक० भ्वा० पर० सेट् । ओखति औखीत् । [दृढतन्त्र्यां च ।

**ओघ** पु० उच-घञ् पृषो० घ । समूहे, जलवेगे, परम्परायां

**ओङ्कार** पु०अव-मन् तस्याकारलोपः, ऊठ् गुणः ओम् ततः स्वरूपे कार । प्रणवे । [औजिजत्-त

**ओज** बले अद० चुरा० उभ०अक० सेट् । ओजय-ति-ते

**ओजस्** न० उब्ज-असुन् बलोपे गुणः । दीप्तौ अवष्टम्भे, प्राणबले, प्रकाशे, सामर्थ्ये, ज्योतिषोक्ते प्रथमतृतीयादौ विषमराशौ, शस्त्रादिकौशले, धातुतेजसि, ज्ञानेन्द्रियाणां पाटवे, काव्यगुणभेदे, गौडरीत्याम्, वैद्यकोक्ते 'भ्रमरैः फलपुष्पेभ्यो यथा सम्भ्रियते मधु । तद्वदोजः शरीरेभ्यो धातुः सम्भ्रियते नृणाम्" इति लक्षणे धातुरसपोषके वस्तुभेदे च । अच् । ओजशब्दोऽप्यत्र ।

**ओजिष्ठ** त्रि० अतिशयेनोजस्वी ओजस्विन् इष्ठन् मतो लुक् । अतितेजस्विनि सारतमे च । [(उड़िधान) नीवारे ।

**ओडिका** स्त्री०उ-ड तस्य नेत्त्वम् गौरा० ङीप् स्वार्थे क ह्रस्वः ।

**ओडी** स्त्री०उ-ड तस्य नेत्त्वम् गौरा० ङीप् । (उड़ीधान)नीवारे

**ओड्र** पु०न०आ+ईषत् उनत्ति उन्द-रक् दस्य डः । जपापुष्पे

**ओड्रपुष्प** पु० ओड्रं पुष्पमस्य । जवावृक्षे ।

**ओण** अपनयने भ्वा० पर०सक० सेट् । ओणति औणीत् ।

**ओत** त्रि० आ+वेञ्+क्त । अन्तर्व्याप्ते 'ओतञ्च प्रोतञ्चेति' श्रुतिः । पटे दीर्घतन्तौ च ।

**ओतु** त्रि० अव-तुन् ऊठ् गुणः। बिड़ाले।
**ओदन** पु० उन्द-युच् नलोपो गुणश्च। भक्ते सिद्धान्ने।
**ओदनपाकी** स्त्री० ओदनस्य पाक इव पाको यस्याः ङीप्। नीलझिण्टिकायाम् ओषधिभेदे च।
**ओदनी** स्त्री० ओदन इवाचरति ओदन+क्विप्-ततः अच् गौरा० ङीप्। (बेलेड्या) बलायाम्।
**ओम्** अव्य० अव-मन् तस्यातोलोपः गुणः। प्रणवे, आरम्भे, स्वीकारे, ओमित्युक्तवतोऽथेति माघः। अनुमतौ, अपाकृतौ, अस्वीकारे. मङ्गले, शुभे, ज्ञेये, ब्रह्मणि च।
**ओल** पु० आ-उनत्ति आ+उन्द्-क नलोपे पृषो० दस्य लत्वम्। सूरणे (ओल) इति ख्याते कन्दे। आर्द्रे त्रि०
**ओलज** क्षेपे इदित् भ्वा०पर०सक०सेट्। ओलञ्जति औलञ्जीत्
**ओलड** क्षेपे वा चुरा० उभ० पक्षे भ्वादि० पर०सक० सेट्। ओलडयति ते ओलडति औलिलडत् त औलडीत्।
**ओष** पु० उष-घञ्। दाहे।
**ओषण** पु० उष-ल्यु। कटुरसे (झाल) इति ख्याते रसभेदे।
**ओषधि** स्त्री० ओषोदाहो धीयतेऽत्र। ओष+धा-कि जातिविषयत्वात् स्त्रीत्वे वा ङीप् ओषधी च। फलपाकान्ते व्रीहियवादौ। [हिमालयपुरे।
**ओषधिप्रस्थ** पु० न०। ओषधिप्रधानः प्रस्थः शाक०।
**ओषधिपति** पु० ६त०। चन्द्रे। ओषधीशोऽप्यत्र। [च्छेदे।
**ओष्ठ** पु० उष्यते उष्णाहारेण उष-कर्म्मणि ठन्। (ओठ) दशन-
**ओष्ठपुष्प** पु० ओष्ठोपमानं पुष्पं यस्य। बन्धूकवृक्षे।
**ओष्ठी** स्त्री० ओष्ठ इवाचरति ओष्ठ+क्विप् ततः अच् गौरा० ङीप्। बिम्बफलनामके (तेलाकुचा) वृक्षे।
**ओष्ठोपमफला** स्त्री० ओष्ठ उपमीयतेऽनेन ओष्ठोपमं फलं यस्याः। बिम्बिकालतायाम्।

## औ

**औक्ष** न० उक्ष्णां वृषाणां समूहः अण् टिलोपः वृषसमूहे। वुञ्। औक्षकमप्यत्र।
**औख्य** त्रि० उखायां पक्वम् यञ्। स्थालीपक्वे मांसादौ।
**औचिती** स्त्री० उचितस्य भावः ष्यञ् स्त्रीत्वपक्षे षित्त्वात् ङीष् यलोपः। न्याय्यत्वे सत्यत्वे च।
**औचित्य** न० उचितस्य भावः ष्यञ्। उचितस्य भावे न्याय्यत्वे
**औडुम्बर** पु० चतुर्दशस्य यमेषु मध्ये यमभेदे, कुष्ठरोगभेदे च।
**औत्कण्ठ्य** पु० उत्कण्ठाया भाव ब्राह्म० ष्यञ्। उत्कण्ठायाम्
**औत्तानपादि** पु० उत्तानपादस्य नृपभेदस्यापत्यम् इञ्। ऐहिकभोगसाधनकर्म्मान्ते ज्योतिश्चक्रे निश्चलतया तारकारूपेण स्थिते ध्रुवनामके नृपतौ।
**औत्सर्गिक** त्रि० उत्सर्गं सामान्यविधिमर्हति ठञ्। सामान्यविधियोग्ये। [कथेन कततरेति रत्नावली'।
**औत्सुक्य** न० उत्सुकस्य भावः ष्यञ्। उत्कण्ठायाम् औत्सु-
**औदनिक** त्रि० ओदनः शिल्पमस्य ठञ्। सूपकारे।
**औदरिक** त्रि० उदरे प्रसितः ठक्। आद्यूने, (पेटुक) उदरमात्रपूरणापेक्षके।
**औदश्वित** न० उदश्विति अर्द्धजलमथिते तक्रे संस्कृतम् अण्। उदश्वित्संस्कृते द्रव्ये। तत्रार्थे ठकि औदश्वित्कमप्यत्र।
**औदार्य्य** न० उदारस्य भावः गुणवचनत्वात् ष्यञ्। उदारतायाम्
**औदासीन्य** न० उदासीनस्य भावः ष्यञ्। शुभाशुभयोरुपेक्षायाम् ताटस्थ्ये।
**औदास्य** न० उदास्ते उद्+आस-अच् भावार्थे ष्यञ्। वैराग्ये अनुरागशून्यतायाम् मनोयोगविरहे।
**औद्दालक** न० 'प्रायो वल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः। कुर्व्वन्ति कपिलं स्वल्पं तत् स्यादौद्दालकं मधु इत्युक्ते मधुनि
**औद्भिद** न० 'उद्भिदं पांशुलवणं यज्जातं भूमितः स्वयमि'त्युक्ते पांशुलवणे, 'विदार्य्य भूमिं निम्नां यत् महत्या धारया स्रवेत्। तत्तोयमौद्भिदं नामे'त्युक्तलक्षणे जले च। उद्भिद्य जायते जन-ड उद्भिज्जं ततः स्वार्थेऽण् औद्भिज्जमप्यत्र।
**औद्वाहिक** न० उद्वाहकाले लब्धं ठञ्। विवाहकाले लब्धधनादौ। 'मैत्रमौद्वाहिकञ्चैवे'ति स्मृतिः।
**औपचारिक** पु० उपचार एव विनयादित्वात् स्वार्थे ठक्। उपचारार्थे।
**औपनिषद** पु० उपनिषत्स्वेव वेद्यः अण्। वेदान्तमात्रवेद्ये परमात्मनि 'तं त्वौपनिषदं पुरुषमि'ति श्रुतिः।
**औपनीविक** त्रि० नीविसमीपे व्याप्टतं ठक्। नीविसमीपे व्याप्टते। "औपनीविकमरुन्ध किल स्त्री"ति माघः।
**औपम्य** न० उपमैव चतुर्वर्णा० स्वार्थे ष्यञ्। सादृश्ये।
**औपयिक** त्रि० उप+अय-घञ् उपायस्तेन लब्धः ठक् ह्रस्वश्च। उपायलब्धे, युक्ते न्यायागतवस्तुनि च।
**औपसर्गिक** पु० उपसर्गेण निष्पादितः ठञ्। वातादित्रिधामातजाते रोगभेदे।
**औरभ्र** न० उरभ्रस्य मेषस्येदम् अण्। मेषादिलोमजाते कम्बले
**औरभ्रक** न० उरभ्राणां समूहः वुञ्। मेषसमूहे।
**औरस** पु० उरसा निर्म्मितः अण्। 'सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम्। औरसं तं विजानीयादि'त्युक्तलक्षणे पुत्रे।

और्द्ध्वदेहिक त्रि० ऊर्द्ध्वो देहः प्रेतदेहः तत्र भवं तस्मै देयं वा श्राद्धादि ठक्। मृतदिनमारभ्य सपिण्डीकरणान्तं क्रियमाणे जलदानश्राद्धादिलक्षणे कर्म्मकलापे। अनुशतादित्वात् द्विपदवृद्धौ और्द्ध्वदैहिकमप्यत्र।

और्व पु० उर्वस्यापत्यम् अण्। वाडवानले तस्यौर्वमुनिजातत्वात् तत्स्थानञ्च भूगोलस्य दक्षिणसीमायाम्। उर्व्यां भवः। पांशुलवणे।

औलूक न० उलूकानां समूहः अण्। पेचकसमूहे।

औलूक्य पु० वैशेषिकदर्शनकारके कणादमुनौ तच्छास्त्रवेत्तरि च।

औशनस न० उशनसा शुक्रेण प्रोक्तम् अण्। शुक्रप्रोक्ते उपपुराणादौ दण्डप्रणयनरूपे शास्त्रे च।

औशीर न० वश-ईरन् किच्च ततः प्रज्ञाद्यण्। समुदितयोः शय्यापीठयोः।

औषध न० ओषधौ भवः अण्। रोगनाशके ओषधिभवे द्रव्ये, रोगहारके द्रव्यमात्रे च।

औष्ट्र न० उष्ट्रस्येदम् अण्। उष्ट्रदुग्धादौ।

औष्ट्रक न० उष्ट्राणां समूहः वुञ्। उष्ट्रसमूहे। [गोदौ

औष्ठ्य त्रि० ओष्ठे भवः यत्। ओष्ठस्थानोच्चार्य्यमाणे उवर्णपव-

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते शब्दस्तोममहानिधौ
स्वरवर्णादिकाः शब्दाः समाप्ताः।

ओंतत्सत्।

---

## क

**क** पु० कै शब्दे कच दीप्तौ, वा ड । ब्रह्मणि, वायौ आत्मनि, यमे दक्षप्रजापतौ सूर्य्ये, अग्नौ विष्णौ, काले कामग्रन्थौ राजनि, मयूरे देहे मनसि, धने, प्रकाशे, शब्दे च । सुखे शिरसि, जले रोगे च न० ।

**कंस** पु० कम-स । उग्रसेनसुते नृपे श्रीकृष्णमातुले । तैजसद्रव्ये, कांस्ये, (त म्रर ङ्ग मिश्रणजनितधातुद्रव्ये । (कांसा) स्वर्णरजतादिनिर्म्मितपानपात्रे । आढ़क इति प्रसिद्धे परिमाणे च अस्त्री० । पृषो० तालव्यान्त इति केचित् ।

**कंसक** न० कंसादिव कं जलं यस्मात् ५ब० । (हीराकस) इति प्रसिद्धे नेत्रौषधौ तत्संयोगाद्धि अग्निसंयोगेन कंसादिव चक्षुरादितो जलं स्रवति । [जातिभेदे

**कंसकार** पु० कंस+कृ-अण् उप० । (कांसारी) इति प्रसिद्धे

**कंसजित्** पु० कंस+जि-क्विप् इत० । कंसनृपजयकारिणि श्रीकृष्णे

**कंसहन्** पु० कंस+हन् क्विप् इत० । कंसदैत्यघातके श्रीकृष्णे ।

**कंसाराति** पु० कंस+अराति इत० । कंसनृपशत्रौ श्रीकृष्णे ।

**कंसास्थि** न० कंसः अस्थीव उपमितसमासः । शुक्लतयाऽस्थिसदृशे (कांसा) इति प्रसिद्धे धातुभेदे ।

**कक** इच्छायाम् भ्वादि० आत्म० सक० सेट् । ककते । अककिट ।

**कक** गतौ भ्वादि० इदित् आत्म० सक० सेट् । कङ्कते । अकङ्किट ।

**ककुत्स्थ** पु० ककुदि असुरवधार्थमिन्द्रेण प्रार्थितः सन् वृषरूपधरस्य इन्द्रस्य ककुदि पृष्ठभागे तिष्ठतीति ककुत्+स्था-क । सूर्य्यवंशीयनृपभेदे यदपत्यतया काकुत्स्थेति संज्ञाभाजः सूर्य्यवंशीया अभवन् ।

**ककुद्** अस्त्री० कं सुखं कौति कुशब्दे क्विप् तुक् च तस्य दः । वृषस्कन्धपृष्ठस्थमांसपिण्डाकारे, (झुंड) इति ख्याते वृषाङ्गे, श्वेतच्छत्रादौ नृपचिह्ने, प्रधाने, पर्व्वताग्रभागे च ।

**ककुद** अस्त्री० कस्य देहस्य सुखस्य वा कुं भूमिं ददाति दा-क । (झुड) इति ख्याते वृषाङ्गे, प्रधाने, नृपचिह्ने, छत्रादौ, पर्व्वताग्रभागे च ।

**ककुद्मत्** पु० ककुदस्यास्तीति मतुप् झयन्तत्वेऽपि यवादित्वात् न मस्य वः । वृषे, वृषोषधिविशेषे च । ककुदिव मांसपिण्डमस्यास्तीति मतुप् ङीप् । कन्याम् स्त्री० ।

**ककुन्दर** न० कस्य शरीरस्य (पृष्ठदेशस्य) कुं भूमिं दारयतीति ककु-दृ-णिच्-अच् पृषो० । पृष्ठवंशाधःस्थगर्त्ताकारे कूपके

**ककुभ्** स्त्री० कं वातं स्कुभ्नाति स्कुन्भ क्विप् पृषो० । दिशि, शोभायाम्, चम्पकमालायाम्, शास्त्रे, रागिणीभेदे च ।

**ककुभ** पु० कं वातं स्कुभ्नातीति क पृषो० । वीणाङ्गे, स्वरगाम्भीर्य्यसम्पादनार्थमधोवक्रालाबुमयभाण्डे । कस्य वातस्य कुः भूमिः भात्यस्मात् ककु+भा-क । विस्तीर्णशाखत्वात् वातभूमिप्रकाशकेऽर्ज्जुनवृक्षे, रागभेदे च । दिशि, रागिणीभेदे च स्त्री० ।

**कक्क** हासे भ्वादि० पर० अक० सेट् । कक्कति । अकक्कीत् ।

**कक्कोल** पु० ककते गच्छतीति क्विप् कक्, कोलति संस्त्यायति अच् कोलः कक् चासौ कोलश्चेति कर्म्म० । गन्धद्रव्यभेदे (कांकोल) इति वङ्गभाषाख्याते वनकपूर इति पाश्चात्त्ये ख्याते ।

**कक्कोलक** न० इदमर्थे कन् । कक्कोलवृक्षजाते गन्धद्रव्ये वनकपूर इति ख्याते । तस्य कोषे फलवत्त्वात् कोषफल इति प्रसिद्धिः

**कक्ष** पु० कष-हिंसायां स । स्त्रीणाम् उत्तरीयवस्त्रस्य पश्चाद्भागस्थे अञ्चले (आंचल) लतायाम्, शुष्कतृणे, शुष्कवने च । पार्श्वभागे, राजान्तःपुरे, बाहुमूले पृष्ठप्रदेशनिहिताधोंऽशुकस्यैकदेशे (काछा) वस्त्राञ्चले, हस्तिबन्धनरज्ज्वाम्, काञ्चाम्, प्रकोष्ठके, गृहभित्तौ, साम्ये, स्पर्द्धास्पदे कक्षरोगभेदे च (कांकविराली) स्त्री० ।

**कक्षावेक्षक** पु० कक्षं वनमुपवनं साम्यं स्त्रीबाहुमूलं वा कक्षां राजशुद्धान्तं वावेक्षते अव-ईक्ष ण्वुल् । शुद्धान्तपालके, उद्यानपाले, रङ्गाजीवे, कवौ, जारे च । [भद्रमुस्तायाम् ।

**कक्षोत्था** स्त्री० कक्षात् शुष्कतृणात् उत्तिष्ठति उद्+स्था-क ।

**कक्ष्या** स्त्री० कक्षे भवा यत् । वृहतिकायाम् हर्म्यादिप्रकोष्ठे, सादृश्ये, वस्त्ररज्ज्वौ, मेखलायाम् गजबन्धनरज्ज्वौ उद्योगे, परार्थवद्धकक्ष्याणां तादृशासुद्यवः वुत इति, उत्तरीयवस्त्रे च । [अकागीत् ।

**कग** क्रियामात्रे भ्वादि० पर० सक० अक० च सेट् । कगति अकगीत्

**कङ्क** पु० ककि गतौ अच् । (कांक) पक्षिभेदे यस्य पक्षेण शरपुङ्खः क्रियते । युधिष्ठिरे च सहि विराटनगरे तां संज्ञां लेभे ।

**कङ्कट** पु० कं देहं कटति क+कट-मुम् च, ककि लौल्ये अटन् वा । कवचे । स्वार्थे कन् । कङ्कटकोऽप्यत्र । [माले च ।

**कङ्कण** न० कं शुभं कणति कम्-कण-अच् । करभूषणे, भूषणकङ्कत न० ककि-अतच् । केशप्रसाधन्याम् (काकुइ) ।

**कङ्कतिका** स्त्री० ककि-अतच् गौरा० ङीष् स्वार्थे कनि ह्रस्वे टाप् । प्रसाधन्याम् (कांकुइ) नागबलायाञ्च ।

**कङ्कती** स्त्री० ककि-अतच् गौरा० ङीष् । प्रसाधन्याम् ।

**कङ्कत्रोटि** पु० कङ्कस्य त्रोटिरिव चञ्चुरस्य । मत्स्यभेदे (काकिला) अच् समा० । कङ्कत्रोटोऽप्यत्र ।

**कङ्कपत्र** पु० कङ्कस्य पत्रेण पत्रं पक्षोऽस्य । पुङ्खे तत्पत्रयुक्ते शरे

**कङ्कमुख** पु० कङ्कस्य मुखमिव मुखमस्य । (सांड़ाशि) संदंशे

**कङ्काल** पु० कं सुखं शिरो वा कालयति क्षिपति कल-अच् ।
त्वङ्मांसरहितशरीरास्थिसञ्चये ।
**कङ्कालमालिन्** पु० कङ्कालानां मालाऽस्त्यस्य इनि । रुद्रे ।
**कङ्गु(कु)** पु० ककि-उ । (काङ्नी) धान्यभेदे । पृषो० कस्य गः
कङ्गुरप्यत्र । [तस्य क्षेत्रे । कङ्गुक्षीरप्यत्र ।
**कङ्केल** पु० कङ्क इव केलति कङ्क+केल-क । अशोकवृक्षे । पृषो०
**कच** रवे भ्वा०पर०अक०सेट् । कचति अकचीत् अकाचीत् ।
**कच** बन्धे,हेषे च भ्वा०पर०इदित् सक०सेट् । कञ्चति अकञ्चीत्
**कच** बन्धे सक० दीप्तौ अक०भ्वादि०आत्म०सेट् । कचते अकचिष्ट
**कच** पु० कच-अच् । केशे, बृहस्पतिपुत्रे, शुष्कव्रणे, मेघे च ।
हस्तिन्यां स्त्री० । भावे घ । बन्धे शोभायाञ्च ।
**कचाचित** त्रि० कच आचितो विकीर्णो यस्य । विकीर्णकेशे ।
'कचाचितौ विष्वगि'ति भारविः ।
**कचामोद** न० कचमामोदयति आ+मुद-णिच्-अच् । (वाला)
इतिख्याते गन्धद्रव्ये । [नवपत्रिकाङ्गे वृक्षे ।
**कचु** स्त्री० कच-उ । स्वनामख्याते (हरिद्रा मानकं कचुरिति)
**कच्चर** त्रि०कुत्सितं चरति कु-चर-अच् कदादेशः । मलिने । तक्रे न०
**कच्चित्** अव्य० काम्यते इति कम् चीयते निश्चीयते अर्थो यस्मात्
कम्+चि-क्विप् पृषो० मस्य दः । स्वाभिलषितज्ञापनाय-
कृते प्रश्ने, हर्षे, मङ्गले च ।
**कच्छ** त्रि० कच-बन्धे-छ, केन जलेन छृणाति दीप्यते छृ-ड वा ।
जलप्राये देशे । तटे, पुन्नागद्रुमे, नौकाङ्गे च पु० । परिधा-
नाञ्चले, (काछा) वाराह्याम्, चीरिकायाञ्च (झिल्ली) स्त्री० ।
**कच्छप** पु० कच्छे पिबति पा-क । कूर्मे । स्त्रियां जातित्वात्
ङीष् । मल्लयुद्धबन्धभेदे च ।
**कच्छरुहा** स्त्री०कच्छे जलप्रायदेशे रोहति रुह-क । दूर्वायाम्
**कच्छर** त्रि०कच्छूरस्यास्ति र ह्रस्वश्च । कच्छूरोगवति । कुत्सितं
छुरति कु+छुर-क कदादेशः । परस्त्रीगामिनि । पुंश्चल्यां स्त्री०
**कच्छू** स्त्री० कषं देहं छ्यति छो-कू । कण्डूकारके रोगभेदे
**कच्छूघ्नी** स्त्री० कच्छूं हन्ति हन-टक् टित्वात् ङीप् । पटो-
लतायाम् । [(आलकुशी) शट्याम्, गन्धशट्याञ्च ।
**कच्छुरा** स्त्री० कच्छूं राति ददाति रा-क । शूकशिम्ब्याम्
**कच्छोटिका** स्त्री० कच्छया उटिका वेष्टनं वट धात्वर्थनिर्देशे
वुञ् संप्रसारणञ्च । कच्छावेष्टने । अर्श आद्यचि स्त्रीत्वात्
टाप् कच्छवेष्टनयुक्तायां शाट्याम् ।
**कज** रोहे (सौत्रः) इदित् पर०अक०सेट् । कञ्जति अकञ्जीत् ।
**कज्जल** न० कुत्सितमीषिद्वा जलं नेत्रस्य यस्मात् कोः कद् ।
अञ्जने । तद्वर्णत्वात् मेघे पु० । मत्स्यभेदे स्त्री० टाप् ।

**कज्जलरोचक** पु० न० कज्जलं रोचयति रुच-णिच्-अच् ।
दीपाधारे (पिलसुज) । इति वङ्गभाषायां प्रसिद्धे ।
**कञ्चिका** स्त्री० कचि ण्वुल् । वंशशाखायाम् (कञ्ची) ।
**कञ्चुक** पु० कचि-उकन् । योधादेः चोलाकृतौ सन्नाहे लौह-
वर्मणि, निर्मोके (खोलस) स्त्रीणां चूलिकायां वस्त्रे च ।
**कञ्चुकिन्** पु० कञ्चुक+इनि । राज्ञामन्तःपुराधिकारिणि द्वार-
पाले, सर्पे जारे, यवे, चणके च । आवद्धकवचे त्रि० ।
**कञ्चुलिका** स्त्री०कचि-उल गौरा०ङीष् स्वार्थे कन् ह्रस्वे टाप् ।
स्त्रीणां कूर्पासवस्त्रे (कांचलो) कनभावे । कञ्चुलीत्यप्यत्र ।
**कञ्ज** पु० कमित्यव्ययं जलादिवाचि तस्मिन् जले मूर्ध्नि वा
जायते जन-ड । पद्मे, केशे, कारणजले विष्णुबीजजातत्वात्
चतुरानने च । [तस्य कृष्णवर्णत्वेन केशतुल्यत्वात् ।
**कञ्जक** पु० कञ्जः केशइव कायति कै-क । (मयना) पक्षिभेदे
**कञ्जार** पु० कं जलं जारयति जृ-अण् । सूर्ये, ब्रह्मणि च ।
उदरे न० । अचि । कञ्जरोप्यत्र ।
**कट** गतौ भ्वादि०पर०सक०सेट् । कटति अकटीत् अकाटीत् ।
**कट** गतौ भ्वा० इदित् पर०सक०सेट् । कण्टति अकण्टीत् ।
**कट** गतौ भ्वा०पर०सक०सेट् । कटति अकटीत् अकाटीत् कटः
**कट** वृतौ वर्षणे च भ्वादि०पर०सक०सेट् । कटति अकटीत् ।
**कट** पु० कट-अच् कर्मणि घ वा । हस्तिगण्डस्थले, कटिपार्श्वे,
नडादिरचिते आसने (माडुर)(दरमा) । अतिशये, काले,
तृणे, शवे, प्रवरणे, ओषधौ, श्मशाने च । क्रिया-
कारके त्रि० । [कटुरोहिण्याम् । कटंवराप्यत्र ।
**कटंवरा** स्त्री० कटं वृणोति कट+वृ-खच् मुम् च । (कटकी)
**कटक** अस्त्री० कट-वुन् । मेखलाख्ये पर्वतमध्यभागे, बाहु-
भूषणे वलये, हस्तिदन्तमण्डले, चक्रे, सामुद्रलवणे, राजधा-
न्याम्, सेनायाञ्च । [कामरूपिणि राक्षसे च ।
**कटप्रू** पु० कटं प्रवते प्रु-क्विप् दीर्घश्च । महादेवे, विद्याधरे,
**कट(टि)प्रोथ** प्रोथ-अच् कटस्य (कट्या वा) प्रोथो मांसपिण्डः ।
स्फिचि कटिदेशस्थमांसपिण्डे, कक्षायाञ्च ।
**कटभङ्ग** पु० भन्ज-घञ् ६त० । सैन्यभङ्गद्वारा राजविनाशे,
धान्यानां हस्तच्छेदने च । [लतायाम्, अपराजिताद्याम् ।
**कटभी** स्त्री० कट इव भाति-ड गौरा० ङीष् । ज्योतिष्मती-
**कटम्भरा** स्त्री० कटं बिभर्त्ति भृ,खच् मुम् च । (गन्धभादाल)
राजबलायाम् । श्योनाकवृक्षे पु० ।
**कटशर्करा** स्त्री० कट्यते आव्रियते कटं फलं तत् शर्करा
शर्करेव यस्याः (लाटा) गाङ्गेरीलतायाम् ।
**कटाक्ष** पु० कटं गण्डं अक्षति व्याप्नोति अच् । अपाङ्गदृष्टौ ।

कटायन न० कटस्य तृणासनस्यायनमुत्पत्तिस्थानम् । वीरणमूले
कटाह पु० कटमाहन्ति आ-हन-ड । महिषीशिशौ, तैलादि-
पाकसाधनपात्रे, खर्परे, नरके च ।
कटि(टी) स्त्री० कट-इन् । श्रोणिदेशे (काकाल) । कृदिकारा-
न्तत्वात् वा ङीष् । [वर्म्मणि च ।
कटित्र न० कटिं त्रायते त्रै-क । काञ्च्याम्, कटिवस्त्रे, कटि-
कटिल्ल पु० कट-इल्ल । कारवेल्ले (करेला) ।
कटिसूत्र न० कटौ धार्य्यं सूत्रं शाक० । कटिधार्य्ये कार्पास-
रचिते धातुमये वा सूत्रे (घुनसी गोट) । [यद्वा धार्य्यते
कटीतल पुं कट्यां तलमास्पदमस्य । वक्रखड्गे यतोऽसौ कटिदेशे
कटीर पु० कट-ईरन् । जघने, कन्दरे, च । कट्यां न० ।
संज्ञायां कन् नितम्बे । तद्वत, तीक्ष्णे, मत्सरिणि च त्रि०
कटु न० कट-उ । दूषणे, दुष्कार्य्ये, रसभेदे (झाल) तद्वति त्रि० ।
चम्पके, चीनकर्पूरे, पटोले, कटुकीलतायाञ्च स्त्री० वा ङीष् ।
कटुक पु० कटु स्वार्थे संज्ञायां वा कन् । पटोले, सुगन्धितृणे,
अर्कवृक्षे, (आकन्द) कुटजवृक्षे, (कुरची) राजसर्षपे, (राइ
सरषा) शुण्ठीपिप्पलीमरिचरूपे त्रिकटुनि न० । [लशूने च
कटुकन्द पु० कटुः कन्दो मूलं यस्य । शिग्रुवृक्षे (सजना) आर्द्रके,
कटुकफल पु० कटुकं फलमस्य । कक्कोले ।
कटुका स्त्री० कटु+संज्ञायां कन् । (कट्की) कटुरोहिण्याम्,
ताम्बूल्यां, राजिकायां, (राइसरषा) तिक्तालावुके च (तितलाउ)
कटुकी स्त्री० कटु+स्वार्थे कन् गौरा० ङीष् । (कट्की) कटुकायाम्
कटुकीटक पु० कटुः कीटः स्वार्थे कन् । मशके । [पक्षिणि ।
कटुक्वाण पु० कटुस्तीक्ष्णः क्वाणो यस्य । (तितिर) टिट्टिभ-
कटुग्रन्थि पु० न० । कटुर्ग्रन्थिरस्य । पिप्पलीमूले, शुण्ठीमूले च
कटुच्छद पु० कटुः छदः पत्रं यस्य । तगरवृक्षे (टगर)
कटुतिक्तक पु० कटुश्चासौ तिक्तश्चेति अल्पार्थे कन् । भूनिम्बे,
शणवृक्षे च कटुतुम्ब्याम् स्त्री० । टाप् अत इत्वम् ।
कटुतुम्बी स्त्री० कर्म्म० । (तितलाउ) लताभेदे । कटु तुण्डं
मुखमस्याः ङीष् कटुतुण्डीत्यप्यत्र । [त्रिकमप्यत्र ।
कटुत्रय न० कटूनां त्रयम् । शुण्ठीपिप्पलीमरिचानां त्रये । कटु-
कटुदला स्त्री० कटु दलं यस्याः । (कांकुड़) कर्कट्याम् ।
कटुफल पु० कटु फलं यस्य । पटोले । श्रीवल्लीवृक्षे स्त्री० ।
कटुभङ्ग पु० कटुः भङ्गः एकदेशो यस्य । शुण्ठ्याम् । कटुरपि
भद्रः हितकारी कर्म्म० कटुभद्रोऽप्यत्र ।
कटुमञ्जरिका स्त्री० कटुर्मञ्जरी यस्याः । अपामार्गे ।
कटुर न० कटुं विपाके कटुरसं राति रा-क । तक्रे ।
कटुरस पु० कटुस्तीक्ष्णो रसो ध्वनिर्यस्य । भेके ।

कटुरोहिणी स्त्री० कटुः सती रोहति णिनि । कटुकायाम्
कटुवार्त्ताकी स्त्री० कर्म्म० । श्वेतकण्टकारिकायाम् ।
कटुबीजा स्त्री० कटुबीजं यस्याः । पिप्पल्याम् ।
कटुस्नेह पु० कटुः स्नेहः तैलादिरूपो निर्यासो यस्य । सर्षपे
कट्टार पु० कटी-क्त कटुमावरणम् ऋच्छति ऋ-अण् । (काटार)
अस्त्रभेदे । ऋ-ण्वुल् कट्टारकोऽप्यत्र ।
कट्फल पु० कट-क्विप् कट् फलं यस्य । (कायफल) श्रीपर्णी-
वृक्षे गाम्भार्य्याम्, (गामार) बृहत्याम्, काकमाच्याम्, वार्त्ताक्याञ्च
कट्वर न० कट-ष्वरन् । तक्रे, दधिसरे, व्यञ्जने च ।
कट्वी स्त्री० कटु+गुणवचनत्वात् ङीष् । (कट्की) कटुकायाम् ।
कठ आध्याने (उत्कण्ठापूर्व्वकस्मरणे) दा चुरा० उभ० पक्षे
भ्वा० पर० सक० सेट् इदित् । कण्ठयति ते कण्ठति ।
अचकण्ठत् त अकण्ठीत् । [अकाठीत् ।
कठ कृच्छ्रजीवने भ्वादि० पर० अक० सेट् । कठति अकठीत्
कठ आध्याने उत्कण्ठापूर्व्वकस्मृतौ इदित् भ्वा० आत्म० सक०
सेट् । प्रायेणोत्पूर्व्वः । उत्कण्ठते उदकण्ठिष्ट । [तरि च ।
कठ पु० कठ-अच् । मुनिभेदे ऋग्वेदीयशाखायाम् तच्छाखाध्ये-
कठाकु पु० कठ काकु । पक्षिभेदे ।
कठिञ्जर पु० कठ-इन् कठिं कठिनं जरयति जॄ+णिच् अच् ।
पृषो० मुम् च । तुलस्याम् पत्राशवृक्षे वर्व्वरायाञ्च । [स्त्री०
कठिन त्रि० कठ-इनच् । क्रूरे, निष्ठुरे, कठोरे, स्तब्धे च स्थाल्याम्
कठिनपृष्ठ पु० कठिनं पृष्ठमस्य । कच्छपे ।
कठिनी स्त्री० कठिन+गौरा० ङीष् । वर्णलेखनसाधने द्रव्ये ।
खटिकायाम् । 'कठिनीः चिपतीति' नैषधम् स्वार्थे कन्
अत्रैवार्थे । [लाञ्छनच्छविरिति माघः ।
कठोर त्रि० कठ-ओरन् । कठिने, पूर्णे च । कठोरताराधिप-
कड भेदने रक्षणे च चुरा० इदित् उभ० सक० सेट् । कण्ड-
यति ते अचकण्डत् त । [ण्डीत् अकण्डिष्ट ।
कड हर्षे भ्वा० उदित् उभ० सक० सेट् । कण्डति ते अक-
कड भक्षणे तुदा० पर० सक० सेट् । कडति अकाडीत् अकडीत् ।
कडक न० कड-अच् संज्ञायाम् कन् । (करकच) लवणभेदे ।
कडङ्गर न० कडं गिरति गृणाति वा अच् नि० मुम् ।
माषमुद्गादिकाष्ठे (आगडा) बुसे ।
कडङ्गरीय त्रि० कडङ्गरमर्हति । बुसभक्षणयोग्ये गवादौ ।
कडम्ब पु० कड-अम्बच् । शाकनाड़िकायाम्, (डांट) कोणे,
प्रान्तभागे च ।
कडम्बी स्त्री० कडम्बो भूयसा विद्यतेऽस्याः अर्श आद्यच्
गौरा० ङीष् । (कलमी) शाकभेदे तस्याः कडम्बभूयस्त्वात् ।

कडार पु० गड-सेचने आरन् गस्यकादेशः। पिङ्गलवर्णे। तद्वति त्रि०। करभकण्टककडारमाशा इति माघः।
कड्ड कार्कश्ये भ्वा० पर० अक० सेट्। कड्डति अकड्डीत्।
कण आर्त्तस्वरे भ्वा० पर० अक० सेट्। कणति अकाणीत् अकणीत्। णिचि अचीकणत् त अचकाणत् त। [णिचि ते
कण गतौ भ्वा०पर०स०क०सेट्। कणति अका(क)णीत्। णिचि कण-
कण पु० कण-निमीलने अच्। धान्यादेरतिसूक्ष्मांशे, लेशे च गौरा० ङीप् वनजीरके स्त्री०। अल्पार्थे टप्। चुद्रांशे, जीरके पिप्पल्याम्, श्वेतजीरके च। [कणत् अचकाणत् त
कण निमीलने चुरा० उभ०अक०सेट्। काणयति ते। अची-
कणजीरक न० कर्म०। चुद्रजीरके।
कणभक्ष पु० भक्ष-अण् उप०। श्यामचटके कणादे मुनौ 'कण-भक्षपक्षानुसारिणा मिति प्रकाशिका। स्वुन् कणभक्षकोऽप्यत्र
कणिक पु० कणो विद्यतेऽस्य अस्त्यर्थे ठन्। गोधूमचूर्णे,(मयदा) अतिसूक्ष्मांशे, अग्निमन्थवृक्षे च स्त्री०।
कणित न० कण आर्त्तस्वरे क्त। पीडितानां शब्दे।
कणिश न० कणो विद्यतेऽस्य इनि कणी तं श्यति शो-क। शस्यमञ्जर्यां धान्यादिशीर्षे च।
कणीयस् त्रि० कण+ईयसु। अत्यन्ताल्पे।
कणे अव्य० कण-के। अभिलाषातिशये।
कणेर पु० कण-एर। कर्णिकारवृक्षे। वेश्यायां, हस्तिन्याञ्च स्त्री०
कण्टक पु०न० कटि ण्वुल्। सूच्यग्रे, चुद्रशत्रौ, रोमाञ्चे, मत्स्याद्यस्थ्नि द्रुमाङ्गे (कांटा) 'लग्नाम्बुद्यूनकर्माणि केन्द्र-सुक्तञ्च कण्टकमिति ज्योतिषोक्ते लग्ने, ततः चतुर्थसप्त-मदशमस्थानेषु च। [(शिमुल)।
कण्टकद्रुम पु० मण्टकाचितो द्रुमः शाक०। शाल्मलीवृक्षे
कण्टकप्रावृता स्त्री० ३त०। घृतकुमार्य्याम्।
कण्टकफल पु० कण्टकाचितं फलं यस्य। पनसवृक्षे (काटाल) कण्टकिफलोऽप्यत्र। [वेगुण) तस्याहन्ते कण्टकाचितत्वात्
कण्टकवृन्ताकी स्त्री० कण्टकाचिता वृन्ताकी। वार्त्ताक्याम्
कण्टकश्रेणी स्त्री० कण्टकानां श्रेणी यत्र। कण्टकार्य्याम्।
कण्टकारिका स्त्री० कण्टकान् इयर्त्ति कण्टक+ऋ-ण्वुल् स्वनामख्याते वृक्षे। फलेऽपि लुक् हरितक्यादित्वात् स्त्री०
कण्टकारी स्त्री० कण्टक+ऋ-अण्। वृहत्याम्। फलेऽपि तस्य लुक् हरितक्यादित्वात् स्त्री०।
कण्टकाशन पु० कण्टकमश्नाति अश-ल्यु। उष्ट्रे।
कण्टकित त्रि० कण्टको रोमाञ्चो जातोऽस्य इतच्। जात-पुलके 'प्रीतिकण्टकितत्वच' इति कुमारः।

कण्टकिन् पु० कण्टक+इनि। मत्स्यभेदे, खर्ज्जूरवृक्षे विक-ङ्कतवृक्षे (वइंची) गोक्षुरे, खदिरवृक्षे, वदरवृक्षे, वंशभेदे, (वेड़ वांश)। वार्त्ताक्यां, शोणझिण्ट्याञ्च स्त्री०।
कण्टकिल पु० कण्टक+इलच्। (वेड़वांश)। वंशभेदे। [याम्
कण्टकिलता स्त्री० कण्टकिनी लता कर्म०। (शशा) त्रपुषीलता
कण्टकी स्त्री० कण्टक+अर्शआदित्वादच् गौरा० ङीप्। वार्त्ताकीभेदे। [वृहत्याम्।
कण्टतनु स्त्री० कटि-अच् कण्टा कण्टकान्विता तनुर्यस्याः।
कण्टदला स्त्री० कटि-अच् कण्टं दलं यस्याः। केतक्याम्।
कण्टपत्र पु० कण्टं कण्टकान्वितं पत्रं यस्य। विकङ्कतवृक्षे।
कण्टपत्रफला स्त्री० कण्टं कण्टकान्वितं पत्रं फलञ्च यस्याः। ब्रह्मदण्ड्याम्। [ङ्कतवृक्षे। (वइंची)
कण्टपाद पु० कण्टः कण्टकान्वितः पादो मूलं यस्य। विक-
कण्टफल पु० कण्टं कण्टकान्वितं फलं यस्याः। गोक्षुरे, पनसे, धूस्तूरे, लताकरञ्जे, एरण्डभेदे च।
कण्टल पु० कण्ट+मत्वर्थीयो लच्। वावुले (वावला)
कण्टवल्ली स्त्री० कण्टा कण्टकान्विता वल्ली कर्म०। श्रीवल्लीवृक्षे
कण्टार्त्तगला स्त्री० कण्टा अर्त्तगला कर्म०। नीलझिण्ट्याम्
कण्टालु पु० कटि+आलु। वृहत्यां, वंशभेदे, वार्त्ताक्याञ्च।
कण्ठ पु० कण-ठ तस्य नेत्वम् कठि-अच् वा। ग्रीवापुरोभागे, मदनवृक्षे, समीपे, होमकुण्डाद्वाह्येऽङ्गुलिमितस्थाने च।
कण्ठतलासिका स्त्री० कण्ठतले अश्वकण्ठस्वरूपस्थाने आस्ते आस-ण्वुल्। अश्वग्रीवावेष्टकचर्मादौ।
कण्ठाग्नि पु० कण्ठे अग्निः पाकाग्निर्यस्य। पक्षिणि, तस्य कण्ठाधःकरणमात्रेणैवाहारेः पाकाद्येप्राप्तित्वात् कण्ठा-ग्नित्वम्। [अरित्रे च। जले,गोणीभेदे च स्त्री०।
कण्ठाल पु० कठि-आलच्। शूरणे (ओल) युद्धे, उष्ट्रे, नौकाङ्गे,
कण्ठिका स्त्री० कठि-ण्वुल्। (एकनरा) कण्ठाभरणभेदे।
कण्ठी स्त्री० चुद्रः कण्ठः अल्पार्थे ङीप्। अश्वकण्ठवेष्टनरज्ज्वाम्
कण्ठीरव पु० कण्ठात् रवो यस्य। सिंहे, मत्तगजे, कपोते च
कण्ठेकाल पु० कण्ठे कालः सप्तम्याः अलुक्। महादेवे।
कण्डन न० कडि-ल्युट्। मुषलादिना तण्डुलादेर्निस्तुषता सम्पादने (कांडान)। [कण्डनी चोदकुम्भश्चेति मनुः।
कण्डनी स्त्री० कण्ड्यतेऽनेन कडि-ल्युट्। मूषले उदूखले च
कण्डिका स्त्री० कडि-ण्वुल्। वेदैकदेशे।
कण्डु स्त्री० कडि-उ। गात्रघर्षणे, तत्कारके रोगे च (चुलकान)।
कण्डु(ड्डू)र पु० कण्डुं कण्डूं वा राति रा-क। कारवेल्ल-लतायाम् (करेला) शूकशिम्ब्याम् (आलकुशी) स्त्री०।

**कण्डू** स्त्री० कण्डूञ् गात्रविघर्षणे संपदादित्वात् क्विप्। कण्डूयने गात्रघर्षणे। 'कपोलकण्डूमिति कुमारः।
**कण्डूकरी** स्त्री० कृ-टक् उप०। शूकशिम्ब्याम् (आलकुशी)।
**कण्डूघ्न** पु० कण्डू-हन-टक्। आरग्वदे, गौरसर्षपे च।
**कण्डूति** स्त्री० कण्डूय-क्तिन्। कण्डूयने गात्रघर्षणे।
**कण्डूयन** स्त्री० कण्डु-यक् ल्युट्। कण्डूाम् गात्रघर्षणे।
**कण्डूया** स्त्री०कण्डु यक् कण्डूय-अ-स्त्रीत्वात् टाप्। कण्डूम्
**कण्डूल** पु० कण्डू+लच्। कण्डूकारके शूरणे। कण्डूयुते त्रि०
**कण्डोल** पु० कडि-ओल। वंशादिरचिते धान्यस्थापनपात्रे। (डोल) उष्ट्रे च। [पोका)
**कण्डूोघ** पु० कण्डूनामोघो यस्मात् ५ब०। शूककीटे (शूया-
**कण्व** पु० कण-क्वन्। मुनिभेदे। पापे न०।
**कतक** पु०तक-हासे कस्य जलस्य तको हासः प्रकाशो यस्मात्। ५ब०(निर्माली) वृक्षभेदे। यस्य फलसम्पर्कात् जलप्रसादः
**कतम** त्रि० किम्+डतमच्। बहूनां मध्ये एकस्य जातिप्रश्नेऽर्थे डतमच्। बहूनां मध्ये एकस्मिन् जा तविशिष्टे विशेषधर्म्म-ज्ञानाय पृष्टे। द्वयोर्मध्ये तथार्थे डतरच्। कतरः।
**कति** त्रि० किम्+डति। संख्याभेदपरिज्ञानाय पृष्टे।
**कतिपय** त्रि०कति+अयच् पुक् च। कतिशब्दार्थे।
**कत्तृण** कुत्सितं तृणं कोः कदादेशः। तृणौ (चाकुलिया) कुम्भिकायां (पाना) सुगन्धितृणे च।
**कत्तोयं** न० कुत्सितमीषद्वा तोयं यत्र। मद्ये।
**कत्थ** श्लाघायां भ्वा०आत्म०अक० सेट्। कत्थते अकत्थिष्ट।
**कत्र** शैथिल्ये अद०चुरा०उभ०अक० सेट्। कत्रयति ते अचकत्रत् त। [अचीकथत् त अचकथत् त।
**कथ** वाक्यरचनायां अद०चुरा०उभ०सक० सेट्। कथयति ते
**कथक** त्रि० कथ-ण्वुल्। तत्त्वनिर्णयार्थं वादरूपकथाकर्त्तरि, कथोपजीविनि नाटकवर्णनकर्त्तरि च। [रमनालम्बे'ति माघः
**कथङ्कारम्** अव्य०कथम्+कृ-णमुल्। कथं कृत्वेत्यर्थे। 'कथङ्का-
**कथञ्चन** अव्य० कथम्+चन। केनांशेनेत्यर्थे।
**कथञ्चित्** अव्य० कथम्+चित्। कथञ्चनार्थे अतियत्नेनेत्यर्थे च प्राणान् कथञ्चिदपि धारयितुमिति रसमञ्जरी।
**कथम्** अव्य० किम्+प्रकारार्थे थमु कादेशः। केन प्रकारेणेत्यर्थे
**कथमपि** अव्य०कथम् च अपि च द्व०। अतियत्नेनेत्यर्थे अतिगौरवेणेत्यर्थे च। [थमु। २त०। किंप्रकारप्राप्ते।
**कथम्भूत** त्रि० कं प्रकारं भूतः प्राप्तः किम्+द्वितीयान्तादपि
**कथा** स्त्री० कथ-अ। कथने, 'प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः। परम्पराश्रया या स्यात् सा मताख्यायिका बुधैरित्युक्तलक्षणे वाक्ये प्रबन्धरचनायां कादम्बर्यादिग्रन्थे, पक्षप्रतिपक्षोपन्यासेन विचारणायां, वादरूपे वाक्ये च।
**कथाप्रसङ्ग** पु० कथायां प्रसङ्गो यस्य। वावदूके। गोष्ठीवचने वातूले, विषवैद्ये 'कथाप्रसङ्गेन जनैरुदीरितादि'ति भारविः
**कद** रोदने, वैक्लवे अक० आह्वाने सक० भ्वा० इदित् पर० सेट्। कन्दति अकन्दीत्। [अकादिष्ट। णिच्-कादयति ते।
**कद** विह्वलीभावे दिवा० आत्म० अक० सेट् घटादि। कद्यते
**कदध्वन्** पु०कुत्सितोऽध्वा कदादेशः गति०। कुपथे। [ल्युट्। युद्धे
**कदन** न० कद-णिच्-ल्युट्। पापे, मर्द्दने,मारणे च। आधारे
**कदम्ब** पु० कद-अम्बच्। स्वनामख्याते वृक्षे। सर्षपे देवताड़वृक्षे। समूहे च न०। स्वार्थे कन्। संघे न०।
**कदम्बगोलकन्याय** पु० कदम्बपुष्पस्य गोलके यथा सर्व्वावयवेषु युगपत्पुष्पाणामुत्पत्तिस्तादृशे एकदोत्पत्तौ दृष्टान्तभेदे
**कदर** पु० कं जलं दृणाति पचाद्यच्। श्वेतखदिरे (काटावावला) वृक्षभेदे च। [ता। विडम्बिते, दूषिते च।
**कदर्थित** त्रि० कुत्सितोऽर्थः कदर्थस्तत् करोतीति णिच्-कर्म्मणि
**कदर्य्य** त्रि०कुत्सितोऽर्य्यः स्वामी कुगति०। सति विभवे अदातरि, क्षुद्रे। 'आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन्। यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृत' इत्युक्तलक्षणेऽर्थसञ्चयकारके च।
**कदल** पु० कद-कलच्। रम्भावृक्षे। अजादित्वात् टाप्। पृश्नीलतायां (चाकुलिया) शाल्मलीवृक्षे च। [पताकायां,मृगभेदे च
**कदली** स्त्री०काय दल्यते त्वगादौ जलबाहुल्यात्। रम्भावृक्षे,
**कदलीकुसुम** न० ६त०। (मोचा) कदलीपुष्पे।
**कदलीदण्ड** पु०६त०। कदलीमध्यस्थे दण्डाकारे पदार्थे (थोड़)
**कदा** अव्य०कस्मिन् काले किम्+दा कादेशः। कस्मिन् काले इत्यर्थे
**कदाख्य** पु० कुत्सिता आख्या यस्य कदादेशः। (कुड़) वृक्षे
**कदाचन** अव्य०कदा+चन। अनिर्द्धारिते कस्मिंश्चित् कालेऽर्थे चित्। कदाचित् अव्य० कदा+चित् कदाचनार्थे कदापीत्यर्थे च। [तद्वति त्रि०।
**कदुष्ण** न०कुत्सितम् ईषदुष्णं कोः कदादेशः। ईषदुष्णे स्पर्शे।
**कद्रु** पु० कद-रु। पिङ्गलवर्णे। तद्वति त्रि० नागमातरि स्त्री०।
**कद्रू** स्त्री० कद्रु+संज्ञायामूङ्। नागमातरि कश्यपपत्न्याम्।
**कद्रू(द्रु)पुत्र** पु० ६त०। सर्पे। कद्रु(द्रू) सुतादयोऽप्यत्रार्थे।
**कद्वद** त्रि० कुत्सितं वदति कु+वद्-अच् कदादेशः। गर्हितवाक्यवादिनि। [अकानीत्
**कन** प्रीतौ अक० गतौ सक० भ्वा०पर० सेट्। कनति अकनीत्
**कनक** न० कन-वुन्। स्वर्णे,किंशुकवृक्षे,दक्षणकुसुमे-धुस्तुरे धुस्तूरे च

**कनकक्षार** पु० कनकस्य तद्द्रावणाय क्षारः । (सोहागा) टङ्क तत्सम्पर्कात् हि झटिति कनकं द्रवति ।

**कनकच्छत्र** न० कनकटखण्डं छत्रं यस्य शाक० । राजच्छत्रे ।

**कनकप्रसवा** स्त्री० कनकमिव प्रसवः पुष्पं यस्याः । स्वर्णकेतक्याम् ।

**कनकरस** पु० कनकमिव रसो यस्य । हरिताले ।

**कनकलोद्भव** पु० कनतीति कना दीप्ता कला अवयवः तया उद्भवति उद्+भू-अच् । (धूना) शालनिर्यासे ।

**कनकाचल** पु० कर्म० । सुमेरुपर्वते, धान्य चलादिषु दयस्य दानीयपर्वतेषु मध्ये दानीये स्वर्णपर्वते च ।

**कनकाध्यक्ष** पु० ७त० । सुवर्णरक्षणादावधिकृते ।

**कनकारक** पु० कनकं दीप्तं यथा तथा ऋच्छति सर्वतो व्याप्नोति ऋ-ण्वुल् । कोविदारवृक्षे ।

**कनकालुका** स्त्री० कनकनिर्म्मिता आलुः संज्ञायां कन् । भृङ्गारे (झारी) सौवर्णकलसे च ।

**कनखल** पु० तीर्थभेदे ।

**कनिष्ठ** त्रि० अयमेषामतिशयेन अल्पो युवा वा इष्ठन् कनादेशः । अतियूनि अल्पतमे अनुजे च । अनुजायां सर्व्वाभ्यः क्षुद्राङ्गुलौ च स्त्री० टाप् । कनिष्ठभ्रातः पत्नामपि अजादित्वात् टाबेव ।

**कनी** स्त्री० कन-अच् गौरा० ङीप् । दुहितरि ।

**कनीनिका** स्त्री० कन-ईन संज्ञायां कन् टाप् अत इत्वम् । अक्षितारायां, कनिष्ठाङ्गुलौ च ।

**कनीयस्** त्रि० अयमनयोरतिशयेन युवा अल्पो वा ईयसु कनादेशः । द्वयोर्मध्ये अल्पतरे, युवतरे, अनुजे च । स्त्रियां ङीप् ।

**कनीयस** न० कनौ दीप्तिः तस्मै यसति यस-अच् । ताम्रे ।

**कन्तु** पु० कम-तु । कामदेवे । हृदये न० । कं सुखमस्तीति कम्+अस्त्यर्थे तु । सुखवति त्रि० । [वस्त्रखण्डे । (कांथा)

**कन्था** स्त्री० कम-थन् । स्यूतमयभित्तौ (कांथ) स्यूतपुरातनजीर्ण-

**कन्थारी** स्त्री० अतिकण्टक इततत्वात् कन्थामपि ऋच्छति वेधनेन प्रविशति ऋ-अण् । दुष्प्रवेशाख्ये वृक्षे ।

**कन्द** पु०न० कन्दति कन्दयति कन्द्यते वा कदि-अच् णिच् अच्, घञ् वा । शूरणे (ओल) शस्यमात्रमूले, लशुने च (गाजर) मेघे पु० । [(सुघ्नी) इति ख्याते कन्दे च ।

**कन्दगुडूची** स्त्री० कन्दोद्भवा गुडूची शाक० । गुडूचीभेदे,

**कन्दट** न० कदि-अटन् । श्वेतोत्पले । [(उच्छा)

**कन्दफला** स्त्री० कन्दात् फलं यस्याः । क्षुद्रकारवेल्लायाम् ।

**कन्दर** पु० स्त्री० कम् जलेन दीर्य्यते कम्+दृ-अच् । गुहाकारे गिरिनितम्बदेशे गुहायाम्, स्त्रीत्वे टाप् ङीप् च । अङ्कुशे पु० । आर्द्रके न० ।

**कन्दराकर** पु० ६त० । पर्व्वते ।

**कन्दराल** पु० कन्दरा+अस्त्यर्थे लच् । गर्द्दभाण्डवृक्षे प्लक्षवृक्षे (पाकुड़) आक्षोट वृक्षे च । [पाषाणभेदीवृक्षे ।

**कन्दरोद्भवा** स्त्री० कन्दरे उद्भवति उद्+भू-अच् । क्षुद्र-

**कन्दर्प** पु० कम् सुखं तेन तत्र वा दृप्यति कम्+दृप+अच्, कम् कुत्सितो दर्पोऽस्मात् वा । कामदेवे ।

**कन्दर्पकूप** पु० कन्दर्पस्य कूप इव । स्त्रीचिह्नभेदे ।

**कन्दर्पजीव** पु० कन्दर्पं जीवयति उद्दीपयति जीव णिच् अण् । कामवर्द्धननामकवृक्षे ।

**कन्दर्पमुषल** पु० कन्दर्पस्य मूषल इव । पुरुषचिह्नभेदे ।

**कन्दल** न० कदि-कलच् । कपाले नवाङ्कुरे, करध्वनौ अपवादे, कन्दलीलतापुष्पे च । कनके, युद्धे कलापे च पु० ।

**कन्दली** स्त्री० कन्दे लीयते ली-ड, कदि-कलच् वा गौरा० ङीष् । मृगभेदे गुल्मभेदे, पताकायाम्, पद्मबीजे, भूमिकदल्याञ्च ।

**कन्दलीकुसुम** न० ६त० । भूमिकदलीपुष्पे, छत्राके च

**कन्दवर्द्धन** पु० कन्देन वर्द्धते वृध-ल्यु । शूरणे (ओल)

**कन्दवल्ली** स्त्री० कन्दात् आरभ्य वल्ली । बन्ध्यकर्कोट्याम् ।

**कन्दशूरण** पु० कन्दप्रधानः शूरणः शाक० (ओल) शूरणे

**कन्दु** पु०स्त्री० स्कन्द् उ सलोपः । (ताओया) स्वेदनीपात्रे कन्दुपक्वं तैलपक्वमिति स्मृतिः तण्डुलादेः भर्ज्जनपात्रमात्रे च गोकुले कन्दुशालायामिति स्मृतिः । [ति कुमारः ।

**कन्दुक** पु० कदि-उक । गेन्दुके 'वा कन्दुकैः कृत्रिमपुत्रकैश्चे'

**कन्दुपक्व** त्रि० जलोपसेकं विना कन्दुपात्रे पक्वं तण्डुलादि । शुष्कतया भ्रष्टतण्डुलादौ । कन्दुपक्वानि तैलेनेत्यादिस्मृतिः

**कन्दोट** पु० कदि-ओटन् । श्वेतोत्पले । नीलोत्पले न० ।

**कन्दोत** पु० कन्दे मूले उतः वेञ्-क्त । कुमुदे ।

**कन्धर** पु० कम् जलम् धारयति धरः । मेघे । कम् शिरस्तस्य धरा । ग्रीवायाम् स्त्री० ।

**कन्धि** पु० कम् शिरो धीयतेऽस्मिन् कम्+धा-कि । ग्रीवायाम् ।

**कन्न** न० कद-क्त । पातके, मूर्च्छायाञ्च ।

**कन्यका** स्त्री० अज्ञाता कन्या कन्या+अज्ञातार्थे कन् क्षिपकादित्वात् नेत्वम् । 'कन्यका दशमे प्रोक्तेति स्मृत्युक्तायां दशवर्षायां कुमार्य्याम् ।

**कन्या** स्त्री० कन-यत् कन्यायाः कनीन् चेति निर्देशात् वयसि प्रथम इति न ङीप् । अनूढायां कुमार्य्याम्, मेषादितः षष्ठे राशौ च ।

**कन्याकुब्ज** पु० कन्याः कुब्जा यत्र । कान्यकुब्जदेशे तत्र हि वायुना कन्यास्तत्र कुब्जत्वं गता'इति रामायणकथा ।

**कन्याट** पु० कन्या अटत्यत्र घञ् । वासभवने ।

**कप** चलने (सौत्रः) पर०अक०सेट् । कपति अकपीत् अकापीत्

**कप** चलने भ्वादि० इदित् आत्म०अक०सेट् । कम्पते अकम्पिष्ट

**कपट** पु०न० के मूर्द्धनि अपि पट इवाच्छादकः । अन्यथास्थितस्य वस्तुनोऽन्यथात्वेनाच्छादने ।

**कपटिन्** त्रि० कपट+इनि । छलयुक्ते । चीनानामगन्धद्रव्ये पु० ।

**कपर्द्द** पु० पर्द्ध पूरणे क्विप् रात् वलोपे पर् पर्त्तिः कस्य गङ्गाजलस्य परा पूर्त्या दायति शुध्यति क+पर्+दैप्-क । हरजटायाम् । केन सुखेन पूर्त्तिं द्यति दा-क । वराटके अल्पार्थे कन् स्त्रीत्वे टाप् अत इत्त्वम् । कपर्द्दिकाप्यत्र ।

**कपर्द्दिन्** पु० कपर्द्द+अस्त्यर्थे इनि । महादेवे ।

**कपाट** स्त्री० न० कं वातं पाटयति बहिर्गमयति पट णिच् अण् । द्वारावरणेन वातरोधके स्वनामख्याते काष्ठादौ । अणन्तत्वात् स्त्रियां ङीप् । कपाटीत्यप्यत्र ।

**कपाल** पु०न० कं जलं पालयति अण् । घटादेरवयवे शिरोस्थ्नि, यतीनां भिक्षापात्रे, कर्परे च । सौत्रकप-कालन् । समूहे, कुष्ठरोगभेदे च ।

**कपालभृत्** पु० कपालं ब्रह्मणः शिरोस्थिमयं पात्रं बिभर्त्ति भृ-क्विप् । शिवे । [शिवे । दुर्गायां स्त्री० ङीप् ।

**कपालमालिन्** पु० कपालानां माला विद्यतेऽस्य इनि ।

**कपालिका** स्त्री० क्षुद्रं कपालमल्पार्थे कन् अत इत्त्वम् । भग्नघटस्थखण्डे (खापरा) । [व । तद्वति त्रि० ।

**कपि** पु० सौत्र कप-इ । वानरे, रक्तचन्दने, वराहे, कपिलवर्णे

**कपिकच्छू** स्त्री० कपीनामपि कच्छूः यस्याः ५ब० । (आल्कुशी) कपिकण्डूहेतौ शूकशिम्ब्याम् ।

**कपिका** स्त्री० कप-वुन् । नीलसिन्धुवारवृक्षे ।

**कपिकेतन** पु० कपिः केतनं ध्वजरूपं चिह्नं यस्य । अर्ज्जुने कपिध्वजोऽप्यत्र । [तथात्वात्

**कपिचूडा** स्त्री० कपीनां चूडेव । आम्रातवृक्षे तस्य तत्कुलेन

**कपिचूत** पु० कपीनां चूत इव प्रियः । आम्रातकवृक्षे ।

**कपिज** पु० कं जलमिव पिञ्जते वर्ण्यते पिजि-क नलोपः । (शिलारस) सिह्लके ।

**कपिञ्जल** पु० कमिव पिञ्जते पिजि-कलच् । गौरतित्तिरौ, चातके च 'कपिञ्जलानालभेते'ति श्रुतिः ।

**कपित्थ** पु० कपिस्तिष्ठत्यत्र तत्फलप्रियत्वात् स्था-क पृषो० । (कएतबेल) वृक्षभेदे 'कपित्थवदराग्नन' इति भागवतम् ।

**कपित्थत्वक्** पु० कपित्थस्य त्वगिव त्वक् वल्कलमस्य । एलवालुकवृक्षे

**कपित्थास्य** पु० कपित्थमिवास्यं यस्य । गोलाङ्गुलाख्ये वानरभेदे

**कपिप्रभा** स्त्री० कपावपि प्रभा स्वगुणप्रकाशोऽस्याः । (आलकुशी) कपिकच्छ्वाम् ।

**कपिप्रिय** पु० ६त० । आम्रातकवृक्षे कपित्थे च ।

**कपिरथ** पु० कपिः हनुमान् रथइव वाहनम् यस्य । रामचन्द्रे कपी रथे यस्य । अर्ज्जुने ।

**कपिल** पु० कव-इलच् पादेशः । अग्नौ, वासुदेवे, सांख्यशास्त्रकारके मुनिभेदे, स च कर्द्दमप्रजापतितो देवहूत्यां भगवदंशेन जातः । कुक्कुरे, दानवभेदे, पिङ्गलवर्णे च तद्वति त्रि० । स्वर्णवर्णायां गवि, नदीभेदे, रक्तपुष्पयोगात् शिंशपायां पुण्डरीकनामदिग्गजकरिण्याञ्च स्त्री० ।

**कपिलधारा** स्त्री० कपिलेव शुद्धा धारा यस्याः । गङ्गायां स्वर्गनद्याम् । कपिलानां धारा दुग्धधारा यत्र । काश्यां प्रसिद्धे तन्नामकतीर्थे ।

**कपिलशिंशपा** स्त्री० कर्म० । पीतपुष्पयुतायां शिंशपायाम् ।

**कपिलाक्षी** स्त्री० कपिलमक्षिवत् पुष्पमस्याः । पीतपुष्पायां शिंशपायाम् । [इन्द्रे ।

**कपिलाश्व** पु० कपिलरूपेणाश्वहरणात् कपिलवर्णाश्वयोगाच्च

**कपिलोमफला** स्त्री० कपिलोमान्यपि फलं कण्डूयनमस्याः । (आलकुशी) दुरालभायाम् ।

**कपिलोह** न० कपितुल्यं पिङ्गलं लोहं धातुः । पित्तले ।

**कपिवल्ल** पु० कपेर्वल्लमिव वल्लमस्य । नारदे तस्य शापकृतकपितुल्यास्यत्वं पुराणे प्रसिद्धम् । [आम्रातकवृक्षे ।

**कपिवदान्य** पु० कपिषु वदान्यो बहुफलवत्त्वेन तत्प्रदानात् ।

**कपिवल्ली** स्त्री० कपिरिव तल्लोमतुल्या वल्ली । गजपिप्पल्याम्

**कपिश** पु० कपिः कपिलवर्णोऽस्त्यस्य अस्त्यर्थे श । (शिलारस) सिह्लके । कृष्णपीतमिश्रे वर्णे च । तद्वति त्रि० । नदीभेदे, कपिशां तीर्त्त्वे'ति रघुः । माधव्यां लतायाञ्च स्त्री० ।

**कपिशी** स्त्री० कपिश+गौरा० ङीष् । माधव्याम् मदिराभेदे च

**कपिशीर्ष** न० कपीनां प्रियं शीर्षमस्य शाक० । प्राकाराग्रे ।

**कपिशीर्षक** न० कपेः शीर्षमिव कायति कै+क । हिङ्गुले ।

**कपीज्य** पु० कपिभिरिज्यते यज-क्यप् । क्षीरिकावृक्षे ।

**कपीतन** पु० कपीनाम् इं लक्ष्मीं तनोति तन-अच् । आम्रातकवृक्षे, शिरीषवृक्षे च ।

**कपीन्द्र** पु० कपिरिन्द्र इव । हनुमति । कपीनामिन्द्रः । सुग्रीवे ।

**कपीष्ट** पु० कपीनामिष्टः । राजादने कपित्थे च ।

**कपूय** त्रि० कुत्सितं पूयते पूयी-विशरणे अच् पृषो० सलोपः ।

कुत्सिते। 'कपूयचरणाः कपूययोनिमापद्यन्ते' इति श्रुतिः।
**कपोत** पु० कोवातः पोतइव यस्य। पारावते पक्षिमात्रे च।
**कपोतक** न० कपोत इव कायति प्रकाशते कै-क। सौवीराञ्जने
**कपोतपालिका** स्त्री० पालयति पाल+ण्वुल्-उप०। समाप्य प्रसारितदारुभेदे सौधादिप्रान्ते काष्ठादिरचिते पक्षिवासस्थाने विटङ्के (पायराखोप)।
**कपोतपाली** स्त्री० कपोतान् पालयति कर्म्मण्यण् उप०। प्रासादप्रान्ते दारुनिर्म्मिते पक्षिस्थाने विटङ्के (पायराखोप)
**कपोतवर्णी** स्त्री० कपोतस्य वर्ण इव वर्णो यस्याः गौरा० ङीष्। सूक्ष्मैलायाम्।
**कपोताङ्घ्रि** पु०कपोतस्याङ्घ्रिरिव रक्तवर्णत्वात्। नलीनामद्रव्ये
**कपोतारि** पु० कपोतस्यारिः ६त०। श्येनपक्षिणि।
**कपोल** पु० कोलकप-ओलच्। गण्डे। गल्ले (गाल)।
**कफ** पु० केन जलेन फलति फल-ड। शरीरस्थे धातुभेदे श्लेष्मणि। [ण्वुन्। लालायाम् आस्यास्रवे (थुथु)।
**कफकूर्चिका** स्त्री० कफं कूर्चति विकरोति कूर्च-विकारे
**कफणि** पु०स्त्री० केन जलेन फणति स्फुरति इन्। भुजमध्यपन्थौ। कूर्परे (कनुइ) स्त्रीत्वे वा ङीप्। [वृद्धिकारके त्रि०।
**कफवर्द्धन** पु०कफं वर्द्धयति वृध-णिच्-ल्यु। पिण्डारकवृक्षे। कफ-
**कफविरोधिन्** पु०न० कफं विरुणद्धि वि+रुध-णिनि। मरिचे, कफविरोधकारके त्रि०। [वर्व्वूरवृक्षे, कफनाशके त्रि०।
**कफान्तक** पु० कफमन्तयति तत्करोतीति अन्त+णिच्-ण्वुल्।
**कफारि** पु० ६त०। शुण्ठ्याम्।
**कफिन्** त्रि० कफोऽस्त्यस्य कफ+इनि। श्लेष्मप्रधाने जने।
**कफोणि** पु० स्त्री० केन जलेन फणति इन् पृषो० ओत्वम्। भुजमध्यपन्थौ कूर्परे (कनुइ) स्त्री० वा ङीप्।
**कबन्ध** पु० कं सुखं बध्नाति बन्ध-अण्, कं बध्यते छिद्यतेऽस्मात् बन्ध-घञ्, केन वायुना बध्यते,कोवायुर्बन्धो वा यस्य यथायथं वाक्यम्। उदरे, धूमकेतौ, राहौ,राक्षसभेदे च। जले न०। 'मनुष्याणां सहस्रेतु हतेषु कृतमूर्द्धसु। तदावेशात् कबन्धः स्यादेकोऽमूर्द्धा क्रियान्वित इत्युक्तलक्षणे शिरःशून्यक्रियायुक्तदेहे अस्त्री०। [वः। कपित्थवृक्षे।
**कवित्थ** पु० कपयस्तिष्ठन्त्यत्र तत्प्रियत्वात् स्था-क पृषो० पस्य
**कम्** अव्य० कम-णिङ्भावपक्षे विच्। पादपूरणे, जले, मस्तके, सुखे, मङ्गले, निन्दायाञ्च।
**कम** वाञ्छायां भ्वादि० आत्म० सक० सेट्। कामयते अचीकमत अचकमत। [अचकमत।
**कम** कामनायाम् चुरा० आत्म० सक० सेट्। कामयते अचीकमत

**कमठ** पु० कम-अठन्। कच्छपे। यतीनां जलपात्रे न०।
**कमण्डलु** पु०न० मण्डनं मण्डः कस्य जलस्य मण्डं लाति ला-कु। करङ्के, संन्यासिनां जलपात्रभेदे, प्लक्षवृक्षे, तद्रसाद्जातौ च। [अशोकवृक्षे पु०।
**कमन** त्रि० कामयते कम-ल्यु। कामुके,अभिरूपे, सुन्दरे च।
**कमनच्छद** पु० कमनः सुन्दरः छदोऽस्य। कङ्कपक्षिणि।
**कमनीय** त्रि० कम-अनीयर्। मनोहरे, कामनायोग्ये च।
**कमल** न० कं जलमलति भूषयति कम्+अल-अच्। पद्मे। कम-कलन्। ताम्रे, क्लोमनि, औषधे, जले च न०। मृगभेदे, सारसविहगे च पु०। [पद्मसमूहे
**कमलख(ष)ण्ड** न० कमलानां समूहः कमल+(ष)खण्डच्।
**कमला** स्त्री० कमलं विद्यतेऽस्याः अर्शआदित्वात् अच्। लक्ष्म्याम्। कम-कलच् वरस्त्रियाम्।
**कमलालया** स्त्री० कमलमालयो यस्याः। लक्ष्म्याम्।
**कमलासन** पु० कमलमासनं यस्य। चतुरानने ब्रह्मणि।
**कमलिनी** स्त्री० कमलानां समूहः देशो वा कमल+इनि। पद्मसमूहे पद्मयुक्तलतायाञ्च।
**कमलोत्तर** न०कमलमिवोत्तरमुत्कृष्टम्। कुसुम्भपुष्पे।
**कमितृ** त्रि० कम-णिङ्भावपक्षे तृच्। कामुके स्त्रियां।कमित्री
**कम्प** पु० कपि-चलने घञ्। गात्रादिकम्पे वेपथौ। [चलने
**कम्पन** त्रि०कपि युच्। कम्पयुक्ते। शिशिरे ऋतौ पु०। भावे ल्युट्
**कम्पिल(ल्ल)** पु० कपि-इलच्। (कमलागुंडा) रोचन्याम्। कपि-इल्लच् करङ्के, 'देवीं कम्पिल्लवासिनी'मिति श्रुतिः।
**कम्पिल्लक** पु० कम्पिल्लएव स्वार्थे कन्। (करमचा) करञ्जभेदे।
**कम्प्र** त्रि० कपि-र। कम्पान्विते।
**कम्ब** गतौ भ्वा० पर० सक० सेट्। कम्बति अकम्बीत्।
**कम्बल** पु० कम्ब कलच्। नागभेदे सास्नायां,प्रावारे, कृमौ च। स्वनामख्याते मेषलोमनिर्म्मिते वस्त्रासनादौ, जले च न०
**कम्बलिन्** पु० कम्बलः गलरोमरूपसास्नास्त्यस्य इनि। वृषभे कम्बलवति त्रि०। [वृषभवाह्ये शकटे गन्त्रीरथे च।
**कम्बलिवाह्य** न० कम्बलिना वृषेण वाह्यम् वह-ण्यत्।
**कम्बि** स्त्री०कम-इन् वुक् च। दर्व्याम् (हाता) वा ङीप्। कम्बी
**कम्बु** पु०न० कम-उ वुक्। शङ्खे गजे च। शम्बूके,वलये,नलके च न०। ग्रीवायां स्त्री०। [स्वार्थे कन् कम्बुकोऽप्यत्र
**कम्बुकण्ठी** स्त्री० कम्बुरिव कण्ठोऽस्याः। कम्बुग्रीवायाम्।
**कम्बुपुष्पी** स्त्री० कम्बुः शङ्ख इव पुष्पमस्याः। शङ्खपुष्प्याम्
**कम्बुमालिनी** स्त्री० कम्बूनां तत्तुल्यपुष्पाणां माला अस्त्यस्याः इनि। शङ्खपुष्प्याम्।

**कम्बोज** पु० कवि-ओज। हस्तिभेदे, शङ्खभेदे "पञ्चनदं समारभ्य म्लेच्छाद्दक्षिणपूर्वतः कम्बोजदेश" इत्युक्तदेशे च।

**कम्बातायिन्** पु० कम्बुरिवातायी। शङ्खलत्यवत्तपूर्वकाये शङ्खचिल्ले। [र्याम् (गांभार)।

**कम्भारी** स्त्री० कं जलं बिभर्ति क+भृ-अण् उप०। गाम्भा-

**कम्र** त्रि० कम-णिङभावपक्षे र। मैथुनेच्छावति कामुके मनोहरे च

**कर** पु० कृ-अप्, कॄ-अच् वा। हस्ते, किरणे, राजग्राह्ये राजस्वे, वर्षोपले, प्रत्यये, हस्तिहस्ते, हस्तनक्षत्रे च। किञ्चित्कर्म्मोपपदे तत्कर्म्मकारके। यथा कर्म्मकरः यशस्करः

**करक** पु० कृ-वुन्। करञ्जवृक्षे, पक्षिभेदे, दाडिमवृक्षे, कोविदारवृक्षे, वकुलवृक्षे, करीरे, नारिकेलास्थ्नि च (नारिकेलेर खोल)। कमण्डलौ पु०न०। कर-स्वार्थे कन्, वर्षोपले (शिल) पु०स्त्री०। स्त्रियां गौरा०ङीष् करकी।

**करकङ्कणन्याय** पु० कङ्कणशब्दस्य करभूषणार्थकत्वेऽपि यथा करशब्दप्रयोगस्तत्र तत्संलग्नताद्योतनार्थः तद्रूपे दृष्टान्ते।

**करकण्टक** पु० करस्य कण्टक इव। नखे।

**करकाजल** न० करकाया जलम् ६त०। (वरफ) करकास्यन्दिजले

**करकाम्भस्** पु० करकाया अम्भ इवाम्भो यस्य। नारिकेले।

**करग्रह** पु० करस्य वधूकरस्य वरेण ग्रहो ग्रहणं यत्र। विवाहे

**करग्रहारम्भ** पु० करस्य राजग्राह्यस्य ग्रहणं प्रजाभ्य आदानं तस्यारम्भः। वार्षिककरस्य प्रथमादानारम्भे (पुण्याह)

**करङ्क** पु० कीर्य्यते द्रव्यमत्र कॄ-अप् करोऽङ्को गर्भोऽस्य शक०। नारिकेलास्थ्नि (खोल), मस्तकखर्परे (माथारखुली), कमण्डलौ पात्रभेदे च 'ताम्बूलकरङ्कवाहिनी'ति कादम्बरी।

**करच्छद** पु० कर इवावरकम्छदोऽस्य। शाखोटवृक्षे (शिहोड़ा)

**करज** पु० करे जायते जन-ड। नखे व्याघ्रनखाख्यगन्धद्रव्ये (नखी) च। कं शिरः जलं वा रञ्जयति रञ्ज-णिच्-अण् नि०। (करमचा) करञ्जवृक्षे। [ख्याते वृक्षे।

**करञ्ज** पु० कं शिरः जलं वा रञ्जयति अण्। (करमचा) इति

**करञ्जफल** पु० करञ्जस्य फलमिवाम्लं फलं यस्य। कपित्थे (कएतवेल)। [दुःखेन दोह्यायां गवि स्त्री० टाप्।

**करट** पु० कृ-अटन्। गजगण्डे, काके, कुसुम्भवृक्षे च।

**करटिन्** पु० करटः गजगण्डः ततः अस्त्यर्थे इनि। हस्तिनि।

**करटु** पु० कृ-अटु। (करकटिया) इति नामके विहगे।

**करण** न० कृ-ल्युट्। क्रियानिष्पत्तौ साक्षात् अव्यवधानेन साधने व्याकरणोक्ते कारकभेदे, वर्णे, क्षेत्रे, चेत्रे, इन्द्रिये, गात्रे च, करणं यत्नव कान्तिमत्तत्रेति कुमारः। भावे ल्युट्। क्रियायाम् न०। ज्योतिषोक्तेषु ववबालवादिषु कायस्थे तिर्य्यक्षु, वश्येन शूद्रायामुत्पादिते जातिभेदे च (करणकायस्थ) पु०।

**करणाधिप** पु० करणानामिन्द्रियाणामधिपः। जीवे आत्मनि।

**करण्ड** पु० कृ-अण्डन्। मधुचक्रे (मौचाक), खड्गे, कारण्डवे विहगे, वंशादिरचिते पुष्पपात्रे (साजी), समुद्गे च (कौटा), यकृति रोगे स्त्री० टाप्।

**करतल** पु० ६त०। हस्तस्य तले, हस्ते च।

**करताल** न० तल-प्रतिष्ठायां घञ् करे तालो यस्य। वाद्यभेदे (करताल), तद्धि करे स्थापयित्वैव वाद्यते।

**करताली** स्त्री० करौ ताड्येते यत्र ताड-घञ् ६त० गौरा० ङीष् डस्य लः। करतलध्वनौ।

**करतोया** स्त्री० करस्य गौरीविवाहकाले शिवकरस्य तोयात् सवह्निवारितः सम्भूतं तोयं यस्याः। कामरूपदेशे स्वनामख्यातायाम् नद्याम्।

**करपत्र** न० करात् पतति-पत ष्ट्रन्। (करात) क्रकचे दारुभेदके अस्त्रभेदे। करायेव पत्रं वाहनं यत्र। जलक्रीडायाम्। तत्र हि हस्ताभ्यां परस्परमुत्तोल्य क्रीड्यते।

**करपत्रवत्** पु० करपत्रमिव पत्रहन्तोऽस्त्यस्य मतुप्। तालवृक्षे। [रिकरण्डे च।

**करपर्ण** पु० करः हस्त इव पर्णं यस्य। (भ्येंट) भिण्डातकवृक्षे

**करपल्लव** पु० करस्य हस्तस्य पल्लव इव। अङ्गुलौ।

**करपात्र** न० कर एव पात्रं जलनिक्षेपपात्रं यत्र। हस्ताभ्यामुत्क्षिप्य परस्परजलदानक्रीडने। कर्म०। हस्तरूपे पात्रे

**करपाल** पु० करं पालयति पाल-अण्। खड्गे। संज्ञायां कन् टाप् अतइत्वम्। कृतयष्टौ। (सेंटा) स्त्री० ङीप्।

**करपीड़न** न० करस्य वधूकरस्य वरेण पीड़नं ग्रहणेन मर्द्दनं यत्र। विवाहे। [गतिर्यस्य। खड्गे।

**करवाल** पु० करस्य वालः शिशुरिव। नखे। करे वालो

**करभ** पु० कृ-अभच्, करे भाति भा-क वा। मणिबन्धात् कनिष्ठपर्य्यन्ते करस्य बाह्यदेशे, करिशावके, उष्ट्रशिशौ (नखी) नामगन्धद्रव्ये, उष्ट्रे च। 'करभकण्टकडार'मिति माघः

**करभप्रिया** स्त्री० करभस्य उष्ट्रस्य प्रिया। दुरालभायाम्। (आलकुशी)।

**करभवल्लभ** पु० ६त०। उष्ट्रप्रिये पीलुवृक्षे, कपित्थवृक्षे च।

**करभादनी** स्त्री० करभैः उष्ट्रैरद्यते अद-कर्म्मणि ल्युट् टित्त्वात् स्त्रियां ङीप्। दुरालभायाम्। (आलकुशी)

**करमर्द्द** पु० करं मृद्नाति मृद-अण्। (करमचा) करञ्जवृक्षे। ण्वुल् करमर्द्दकोऽप्यत्र। तत्सर्गे हि करकण्डूरिति तस्य तथात्वम्

विषं यस्य। मूषिकादौ। तस्य हि विषं कालान्तरे कष्टदम्

**कालायस** न० कर्म्म०। लौहभेदे।

**कालाशुद्धि** स्त्री० कालस्य शुभकर्म्मयोग्यसमयस्य अशुद्धिः। शुभकर्म्माकरणप्रयोजके स्तृत्याद्युक्ते कालदोषे।

**कालिक** पु० काले वर्षाकाले चरति ठक्। वकखगे, कालं कृष्णवर्णमनुसरति ठक्। कृष्णचन्दने कालागुरुणि। प्रकृष्टः दीर्घः कालोऽस्य प्रकृष्टे ठञ्। वैरे। कालेन निर्वृत्ते कालस्येदं वा ठक्। कालभवे कालसंबन्धिनि च त्रि०। कालो वर्णोऽस्त्यस्याः ठन्। देवीभेदे वृश्चिकपत्रवृक्षे, (विछाति) क्रमेण देयवस्तुमूल्ये, नवमेघे, पटोलशाखायां रोमाल्याम् मांस्यां, काक्याम्, शिवायां, मेघावलौ, स्वर्णादिदोषे सुरायां, काकोल्यां, श्यामाख्यविहगे प्रतिमासदेयवृद्धौ कुज्झटिकायां, त्रिशिरायां हरीतक्यां च स्त्री०।

**कालिङ्ग** पु० कुत्सितं लिङ्गमस्य। भूमिकर्कारौ, हस्तिनि, सर्पे, लौहभेदे च। कालिङ्गानां राजा अण्। कलिङ्गदेशपतौ नृपतौ बहुषु तस्य लुक् कलिङ्गाः। 'कलिङ्गदेशमारभ्य पञ्चाष्टयोजनं शिवे!। दक्षिणस्यां महेशानि! कालिङ्गाः परिकीर्त्तिता इत्युक्तदेशभेदे ब०व० गौरा० ङीष्। राजकर्कट्याम्।

**कालिन्दी** स्त्री० कलिन्दाद्रौ भवा अण्। यमुनायाम्।

**कालिन्दीभेदन** पु० भिनत्ति हलेनाकर्षणेन गतिरोधनादिना अन्यथा करोति भिद-ल्यु ६त०। बलभद्रे तत्कथा च हरिवंशे

**कालिमन्** पु० कालस्य भावः इमनिच्। कृष्णतायाम्।

**काली** स्त्री० कालो वर्णोऽस्त्यस्याः अच् ङीप्। देवीभेदे, मत्स्यगन्धायां व्यासमातरि सत्यवत्याम्, नवमेघालौ, परीवादे कालाञ्जन्यां, त्रिवृति, रात्रौ, वृश्चिकाल्याम्, (विछाति) वह्निर्जिह्वाभेदे च।

**कालीयक** पु० कालस्य वर्णस्यायं वृद्धाच्छः संज्ञायां कन्। दारुहरिद्रायाम्। कृष्णचन्दने न०।

**कालेय** पु० कलेरपत्यम् ढक्। दैत्यभेदे, (कालाय कृष्णवर्णताये प्रभवति ढक्। यकृति। कालचन्दने न०। स्वार्थे कन्। कुक्कुरे। कालीयके चन्दने न०। हरिद्रायाम् पु०।

**काल्पनिक** त्रि० कल्पनायाः आगतः ठक्। कल्पिते, आरोपिते, कल्पनाभवे च। [गर्भधारणयोग्यकालप्राप्तायां गवि।

**काल्या** स्त्री० कालः गर्भधारणयोग्यः समयः प्राप्तोऽस्य यत्।

**कावेरी** स्त्री० कस्य जलस्य वेरं शरीरं तस्येदमित्यण्। सरिद्भेदे। कुत्सितमपवित्रं वेरं यस्याः स्वाङ्गात् ङीप्। वेश्यायां पु०न०। हरिद्रायाम्। [कवित्वे च।

**काव्य** पु० कविरेव स्वार्थे ष्यञ्। शुक्रे। कवेः कर्म्म। ग्रन्थभेदे

**काव्यलिङ्ग** न० अर्थालङ्कारभेदे। सा० १०परि०।

**काव्यार्थापत्ति** स्त्री० अर्थालङ्कारभेदे। सा०१०परि०।

**काश** दीप्तौ भ्वा० आत्म० अक० सेट्। काशते अकाशिष्ट, काशामास चकाशे णिच् अचकाशत्-त।

**काश** दीप्तौ दिवा आत्म० अक० सेट्। काश्यते। अकाशिष्ट णिच् अचकाशत्-त।

**काश** पु० काश-अच्। रोगभेदे, क्षुते, तृणभेदे च। तत्पुष्पे न०। स्वुल्। काशकः। काशभेदे।

**काशिराज** पु०६त० टच् समा० ङ्यापोरिति ह्रस्वः। नृपभेदे, दिवोदासे धन्वन्तरौ नृपे च।

**काशी** स्त्री० काश-अच् गौरा० ङीष्। स्वनामख्यातायां नगर्य्यां 'काशीतलवाहिनी गङ्गे'ति प्रश्नोत्तरसमानम्।

**काशीश** न० कं जलमश्नुते व्याप्नोति क+अश-णिनि तेषु मध्ये ईष्टे क। (हीराकस) उपधातुभेदे तत्संयोगात् दन्तादितो जलस्रवणात् तस्य जणव्यापनप्रधानत्वम्।

**काश्मीर** न० कश्मीरदेशेषु भवः अण्। कुङ्कुमे, पुष्करमूले, टङ्के (सोहागा) 'शारदापीठमारभ्य कुङ्कुमाद्रितटान्तकम्। तावत् काश्मीरदेशः स्यात् पञ्चाशयोजनात्मक इत्युक्ते देशे ब०व० च। तेषां राजा अण्। कश्मीरनृपे। तस्य बहुषु लुक्। कश्मीराः।

**काश्मीरज** न० काश्मीरदेशे जायते जन-ड। कुङ्कुमे, कुष्टे, (कुड़) पुष्करमूले च। गौरा० ङीष् गाम्भार्य्याम् अतिविषायाम् स्त्री०। ब०। काश्मीरजन्माप्यत्र।

**काश्यप** पु० कश्यपस्य गोत्रापत्यम् विदाद्यञ्। मुनिभेदे, मृगभेदे, मीनभेदे, गोत्रभेदे, तत्प्रवरान्तर्गतमुनिभेदे च कश्यपात्मजमात्रे द्वि०।

**काश्यपि** पु० कश्यपस्यापत्यम् इञ्। गरुडाग्रजे अरुणे।

**काश्यपी** स्त्री० कश्यपस्येयम् अण् ङीप्। पृथिव्याम्।

**काश्यपेय** पु० कश्यपस्यापत्यम् ढक्। सूर्य्ये। गरुडे च।

**काष्ठ** न० काश-क्थन्। इन्धने दारुणि। [ल्याम्

**काष्ठकदली** स्त्री० काष्ठमिव कठिना कदली शाक०। वनकद-

**काष्ठकीट** पु० ६त०। घुणाख्ये कीटे। [पक्षिभेदे।

**काष्ठकुट्ट** पु० काष्ठं कुट्टयति छिनत्ति अण्। (काठठोकरा)

**काष्ठकुद्दाल** पु० कुमुद्दालयति दल विदारणे अण् शक० कुद्दालः ६त०। नौकादेर्म्मलापनयनार्थं काष्ठघटिते कुद्दाले।

**काष्ठतक्ष्** पु० काष्ठं तक्षति क्विप्। रथकारे वर्द्धकौ (छुतर) ख्याते सङ्कीर्णवर्णे।

**काष्ठतक्षक** पु० काष्ठं तक्षति ण्वुल्। रथकारे वर्द्धकौ (छुतर)

काष्ठलेखक पु० काष्ठं लिखति ण्वुल् । घुणाख्ये कीटे ।
काष्ठा स्त्री० काश-क्थन् । दिशि, दारुहरिद्रायाम् स्थितौ, पर्य्यवसानभूमौ, अष्टादशनिमेषात्मके काले, उत्कर्षे, काष्ठागत स्नेहरसानुविद्धमिति कुमारः सीमायाञ्च परा हि काष्ठा तपसस्तया पुनरिति कुमारः ।
काष्ठाम्बुवाहिनी स्त्री० पुनःपुनरम्बु वहति णिनि, काष्ठस्याम्बु वाहिनी । काष्ठरचितनौकाकृतिजलसेचन्याम् द्रोण्याम् । (सेओनी) ।
कास कुत्सितशब्दे भ्वादि० आत्म० अक० सेट् । कासते अकासिष्ट ण्यन्त काससामास णिच् अचकासत् त ।
कास पु० कास-घञ् । रोगभेदे ।
कासघ्नी स्त्री० कासं रोगं हन्ति टक् । कण्टकार्य्याम् । [भेदे ।
कासमर्द्द पु० कासं मृद्नाति मृद-अण् । (कालकासुन्दे) वृक्ष-
कासमर्द्दन पु० मृद-ल्यु इत० । पटोले ।
कासर पु० के जले आसरति आ+सृ-अच्, ईषत् सरति स्थूलकायत्वात् कोः कादेशः वा । महिषे ।
कासार पु० केन जलेनासस्यक् सारोऽस्य, ईषत् सारोऽस्य वा । सरोवरे, समज्ञे निम्नज्ञे वा महाजलाशये ।
कासारि पु० इत० । कासमर्द्दे, आलुके च ।
कासीश न० चुरः कासः कासी तां श्यति शो-क । (हीराकष)
उपधातुभेदे । [रोगे च ।
कासू स्त्री० कस-ऊ णिञ्च । विकलवाचि, दीप्तौ, बुद्धौ,
काहल पु० कुत्सितं हलति लिखति अच् कोः कादेशः । कुक्कुटे, विडाले च । शब्दमात्रे, महाढक्कायाम्, वाद्यभेदे, महाध्वनौ, अव्यक्तवाक्ये न० । शुष्के, भृशे, खले च त्रि० ।
काहलापुष्प पु० काहलेव पुष्पमस्य । धुस्तूरे ।
कि ज्ञाने जुहो० पर० सक० अनिट् । चिकेति अकैषीत् ।
किंवदन्ति(न्ती) स्त्री० किम्+वद-झिच् वा ङीष् । जनश्रुतौ सत्ये असत्ये वा लोकापवादे ।
किंवा अव्य०किञ्च वा च द्व० । विकल्पे, अथवेत्यर्थे ।
किंशारु पु० कुत्सितं शृणाति किम्+शॄ-ञुण् । धान्याद्यग्रभागे, वाणे, कङ्कपक्षिणि च ।
किकीदिवि पु० किकीति दीव्यति शब्दायते किकि+दिव-इन् नि० दीर्घः । चाषविहगे । [स्त्रियां ङीप् ।
किङ्कर त्रि० किञ्चित् कुत्सितं वा करोति-ट । भृत्ये, सेवके ।
किङ्किणी स्त्री० किञ्चित् किण करोतीति णिच्-अच्-गौरा० ङीष् । कटिभूषणे क्षुद्रघण्टिकायाम् विकङ्कतवृक्षे च ।
किङ्किर पु० किम्+कॄ-क । कोकिले, भ्रमरे, हये, कन्दर्पे च । रक्तवर्णे स्त्री० ।



किङ्किरात पु० किङ्किरां रक्तवर्णमतति गच्छति पुष्पद्वारा अण् । अशोकवृक्षे, शुकपक्षिणि रक्ताम्लवृक्षे (रक्तझाटी) अत-अच् कर्म्म० । कन्दर्पे, कोकिले च । [वनायाञ्च ।
किञ्च अव्य० किञ्च च च द्व० । आरम्भे, समुच्चये, साकल्ये, सम्भा-
किञ्चन अव्य० किम्+चन । असाकल्ये, अल्पे च । पृश्निकर्णपलाशे पु० ।
किञ्चित् अव्य० किम्+चित् । असाकल्ये, अल्पे च ।
किञ्चुलक पु० किञ्चित् चुलुम्पति सौत्र चुलुम्प-ड संज्ञायां कन् । (केँचो) महीलताख्ये कीटभेदे ।
किञ्जल्क पु० किञ्चित् जलति जल-अपवारणे क तस्य नेत्त्वम् । केसरे, पुष्परेणौ, नागकेशरे च पद्ममध्यस्थे केशाकारे । करहाटवेष्टने न० ।
किट गतौ सक० भये अक० भ्वा०पर० सेट् । केटति अकेटीत्
किटि पु० किट-गतौ इन् किञ्च । सूकरे । [मले च (काट)
किट्ट न० किट-क्त इड्भावः । धातूनां मले, तैलाद्यधोभागस्थे
किण पु० कण गतौ अच् पृषो० अत इत्त्वम् । (घँटा) । शुष्कव्रणे, मांसग्रन्थौ, घर्षणजे चिह्ने च ।
किणिही स्त्री० किण-अस्त्यर्थे इनि किणिनो व्रणान् हन्ति ड गौ०ङीष् । अपामार्गे ।
किण्व पु० न० कण-व नि० । सुराबीजे द्रव्ये 'किण्वादिभ्यो मदशक्तिवदि'ति सांख्यसूत्रम् । पापे न० ।
कित संशये रोगापनयने च भ्वा०पर०सक० सेट् । चिकित्सति अचिकित्सीत् । वासे अक० इच्छायां सक० । केतति अकेतीत्
कित ज्ञाने जुहो०पर०सक० सेट् । चिकेत्ति अकेतीत् ।
कितव पु० कि-भावे-क्त कितेन वाति वा-क । द्यूतकारके, वञ्चके, खले, चोरनामकगन्धद्रव्ये, धुस्तूरवृक्षे च ।
किन्तनु पु० किञ्चिन्मात्रा तनुर्यस्य । अष्टपादे (माकड़सा) कीटभेदे । [विरुद्धार्थे, किं पुनरित्यर्थे च ।
किन्तु अव्य०किञ्च तु च द्व० । पूर्ववाक्यसङ्कोचज्ञापने, प्रयुक्त-
किन्नर पु० कुत्सितो नरः कुत्सा च अश्वमुखत्वे नरदेहत्वात् नरमुखत्वे चाश्वदेहत्वात् । देवयोनिभेदे देवानां गायके ।
किन्नरेश पु० इत० ।-कुवेरे धनदे ।
किन्नु अव्य० किञ्च नु च द्व० । प्रश्ने, वितर्के, सादृश्ये, स्थाने च
किम् अव्य० कै डिमु । प्रश्ने, निषेधे, वितर्के, निन्दायाञ्च ।
किमु अव्य० किञ्च उ च द्व० । विमर्षे सम्भावनायाञ्च ।
किमुत अव्य० किञ्च उत च द्व० । प्रश्ने, वितर्के, विकल्पे, अतिशये च ।
किम्पच त्रि० किं पचति अच् । कृपणे सहि आत्मोदरपूर्त्तिः

मात्रं पचति नागन्तुकातिथिभ्योदानार्थम् ।
किम्पचान त्रि० किम्+पच-आनच् । आत्मोदरपूर्त्तिमात्रे पाककर्त्तरि कृपणे । [कृपणे त्रि० ।
किम्पाक पु० निन्दितः पाकोऽस्य (माकाल) इतिख्याते वृत्ते ।
किंपु(पू)रुष पु० कुत्सितः पु(पू)रुषः । देवयोनिभेदे देवगायके । हिमाचलहेमकूटयोर्मध्यस्थे नववर्षात्मकजम्बुद्वीपस्यैकतमे वर्षे
कियत् त्रि० किम्+परिमाणे,वतुप् किमः क्यादेशः वस्य यः । किं-परिमाणे इत्यर्थे । [डित्त्वे टिलोपे खुल् । उद्योगे उत्साहे ।
कियद्देतिका स्त्री० कियत् एतत् आरभ्यमाणं करोति णिचि
किर पु० कृ-क । सूकरे ।
किरण पु० कॄ-क्यु । सूर्य्ये, रश्मौ च ।
किरणमालिन् पु० किरणानां मालाऽस्यस्य इनि । सूर्य्ये ।
किरात पु० कीर्य्यन्तेऽवस्कारा अत्र कॄ-क पर्य्यन्तदेशसमतति अण् । म्लेच्छजातिभेदे पर्य्यन्तदेशाश्रयिणि, अल्पतनौ, 'तस्मकुरुष्वं समारभ्य रामक्षेत्रान्तकं शिवे ! । किरातदेशो देवेशि ! विन्ध्यशैलेऽवतिष्ठति इत्युक्तदेशे च ।
किराततिक्त पु० किरातदेश उत्पत्तिस्थानत्वेनास्त्यस्य अच् । कर्म्म० (चिराता) ख्याते वृक्षे,अश्वगन्धावृक्षे, भूनिम्बे च ।
किरि पु० कॄ-इक् । सूकरे
किरीट पु०न० कॄ-कीटन् । मुकुटे, शिरोवेष्टने च ।
किरीटिन् पु० किरीट+इनि । अर्ज्जुने । मुकुटवति त्रि० ।
किर्म्मी स्त्री० किरति क्विप् किरं माति मा-क गौरा० ङीष् । पलाशवृक्षे, स्तम्भे, स्वर्णपुत्तलिकायाम्, लौहपुत्तलिकायाञ्च ।
किर्म्मीर पु० कॄ-ईरन् कित् मुडागमश्च । नारङ्गवृक्षे, राक्षस-भेदे, चित्रवर्णे च । तद्वति त्रि० ।
किल अव्य०किल-क । वार्त्तायाम्,अनुनयार्थे,निश्चये,संभाव्ये प्रसि-द्धप्रमाणद्योतके,सत्ये, हेतौ,अरुचौ,अलीके,तिरस्कारे च ।
किलकिञ्चित 'हर्षाद्रुदितगीतादिव्यामिश्रं किलकिञ्चितम्' इत्युक्ते स्त्रीणां विलासभेदे 'दमयन्तीकिलकिञ्चितं किबे'ति नैषधम्
किलकिला स्त्री० किलकिलेति वीप्सायां द्वित्वं ततः क्यच् ततः क्विप् । हर्षस्वने, सिंहनादे, वानराणां शब्दानुकरणे च ।
किलाटक पु० 'नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटक' इत्युक्ते क्षीरविकारे ।
किलाटिन् पु० किलति क, अट-णिनि कर्म्म० । वंशे वृक्षे ।
किलास न० किल-क-तमस्यति अस+अण् । सिध्मरोगे (छुली)
किलिञ्ज पु० किल-इन् ततो जातः जन-ड ष्ट० । कटे, सूक्ष्म-काष्ठे च । [धर्म्माधर्म्मफलभूते अनिष्टे संसारे च ।
किल्विष न० किल-टिषच् वुक् । अपराधे, पापे, रोगे,

किशल पु०न० । किं शलति शल-अच् ष्ट० । पल्लवे ।
किशलय पु०न० । किञ्चित् शलति चलति कयन् ष्ट० । पल्लवे ।
किशोर पु० कश-ओरन् नि० । हस्तिशिशौ, सूर्य्ये, तरुणा-वस्थे 'किञ्चिच्छूरः किशोरः स्यात् यतो हि दशमात् परम् । शूरत्वं दृश्यते किञ्चि'दित्युक्ते दशवर्षोत्तरपञ्चदशवर्षवयस्के त्रि० । स्त्रियां ङीप् ।
किष्क वधे चुरा० आत्म० सक० सेट् । किष्कयते अचिकिष्कत
किष्किन्ध(न्ध्य) पु०ओड्रदेशस्थे पर्व्वतभेदे । तत्रत्यगुहायां स्त्री०
किष्कु पु०स्त्री० किष्क-उ । द्वादशाङ्गुलिपरिमाणे, प्रकोष्ठदेशे, हस्तपरिमाणे च । [नले च (नाड़ा) ।
किष्कुपर्व्वन् पु० किष्कुमितं पर्व्व यस्य । इक्षौ, वंशवृक्षे, पाट
किसलय पु०न० किञ्चित् सलति सल-गतौ कयन् ष्ट० । पल्लवे ।
कीकट पु०किञ्चित् कुत्सितं कटति ष्ट० । अश्वे । मगधदेशे ब०व० च 'कीकटेषु गया पुण्येति पुराणम् । कृपणे,निर्द्धने च त्रि० ।
कीकश पु० कीति कशति कश-शब्दे अच् । चण्डाले ।
कीकस पु० कीति कसति कस-गतौ अच् । कृमिजभेदे अस्थि न० कठिने त्रि० ।
कीकि पु० कीति शब्दं कायति डि । चाषपक्षिणि ।
कीचक पु० कीत्यव्यक्तं चकति चक-तृप्त्यादौ अच् । दैत्यभेदे, 'कीचका नाम ते वंशा ये स्वनन्त्यनिलाहताः' इत्युक्ते वेणु-भेदे (तलतावांश) विराटराजश्याले,केकयाधिपे नृपभेदे च
कीचकजित् पु० कीचकं जितवान् जि-भूते क्विप् । भीमसेने एवं कीचकभिदादयोऽप्यत्र । [अचीकिटत्-त ।
कीट बन्धे वर्णे च चुरा० उभ० सक० सेट् । कीटयति ते
कीट पु० कीट-अच् । कृमिभ्यः स्थूले क्षुद्रजन्तुमात्रे । स्वार्थे कन् । तत्रार्थे मगधजातौ च । कठिने त्रि० ।
कीटघ्न पु० कीटं हन्ति हन-टक् । गन्धके ।
कीटजा स्त्री० कीटेभ्यो जायते जन-ड । जतुनि लाक्षायाम् ।
कीटमणि पु० कीटेषु मणिरिव । खद्योते ।
कीदृश पु० किम्+दृश-क्विप् किमः की । किंप्रकारे । ट । कीदृशः । कृष । कीदृक्षोऽप्यत्र ।
कीनाश पु० कुत्सितं नाशयति किन्नाति नि० । यमे, 'कीनाशनि-केतनातिथि'मिति माघः वानरभेदे,कर्षके,पशुघ्ने, क्षुद्रे च ।
कीर पु० कीति ईरयति ईर-अच् । शुकपक्षिणि, देशभेदे ब०व० । मांसे न० ।
कीर्ण त्रि० कॄ-क्त । आच्छन्ने, निहिते,विक्षिप्ते च ।
कीर्त्तना स्त्री० चुरा० कृत-युच् टाप् । यशसि ।
कीर्त्ति स्त्री० चु० कृत-क्तिन् । यशसि ।

**कीर्त्तित** त्रि० पु० हत-क्त । कथिते-ख्याते च ।
**कीर्त्तिशेष** पु० कीर्त्तिरेव शेषः । मरणे । न० । मृते त्रि०
**कील** बन्धे भ्वादि०पर०सक० सेट् । कीलति अकीलीत् ।
**कील** पु०स्त्री०कील-क । अग्निशिखायाम् । करणे घञ् । शङ्कौ, शल्ले, कफोणौ स्तम्भे, लेशे च ।
**कीलक** पु०कील+स्वार्थे संज्ञायां वा कन् । कीलार्थे, गवां दोहनार्थं बन्धनस्तम्भे, गवां कण्डूयनार्थे स्तम्भे च ।
**कीलाल** न० कीलां वह्निशिखामलति वारयति अण् । जले, रुधिरे च । कीलामौर्वाग्नेः शिखां लाति ला-क । अमृते । कीलेन प्रतिबन्धेन अल्यते वार्य्यते अल-घञ् । पशौ पु०
**कीलित** त्रि०कील-क्त । बद्धे । भावे-क्त । बन्धे न० ।
**कीश** पु० कस्य वायोरपत्यम् अत इञ् किः हनुमान् ईशो यस्य । वानरे । [ङीप् । कीशपर्णीत्यप्यत्र ।
**कीशपर्ण** पु० कीशः तल्लोमेव पर्णमस्य । अपामार्गे । जातित्वे
**कु** शब्दे भ्वा०आत्म०सक० अनिट् । कवते अकोष्ट ।
**कु** आर्त्तस्वरे तुदा०आत्म०सक० अनिट् । कुटादि । कुवते अकुत
**कु** शब्दे अदा०पर०अक० अनिट् । कौति अकौषीत् ।
**कु** अव्य० कु+डु । पापे, निन्दायाम्, ईषदर्थे, निवारणे च । भूमौ, धरायाञ्च स्त्री० ।
**कुक** आदाने भ्वा०आत्म०सक० सेट् । कोकते । अकोकिष्ट ।
**कुकील** पु० कोः पृथिव्याः कील इव स्तम्भहेतुत्वात् । पर्व्वते
**कुकुट** पु०कौ कुटति कुट-क । (सुषनि) इतिख्याते शाकभेदे
**कुकुद** पु० सत्कारपूर्व्वकमलङ्कृतकन्यादातरि ।
**कुकुन्दर** पु० कुं भूमिं दारयति अन्तर्भूतण्यर्थे दृ-खच् नि० । कुत्सितं कुन्दरमत्र, स्कुयते कामिनाऽत्र स्कुद् नि० वा । स्त्रीणां नितम्बस्थे आवर्त्ताकारे पृष्ठवंशादधोगर्त्तद्वये ।
**कुकुर** पु० कुं पृथिवीं कुरति कुर-क । यदुवंशीयनृपभेदे तेषां ययातिशापात् राज्यं नाप्नोति पुराणकथा । कुकुरास्त्विव इति माघः । दशार्हे देशभेदे ब०व० ।
**कुकूल** पु०कोः भूमेः कूलं कुत्सितं वा कूलम् कु-कलच् धातोः कुगागमश्च । तुषानले, शङ्कुभिः सङ्कीर्णे गर्त्ते, वर्म्मणि च ।
**कुकोल** न० कुत्सितं कोलति कुल-अच् । कोलिवृक्षे ।
**कुक्कुट** पु० कु-क्विप् कुक् तेन कुटति कुट-क । (कुकड़ा) ख्याते खगे, तृणोल्कायां, वनकुक्कुटे, वह्निस्फुलिङ्गे च स्वार्थे कन् । तत्रैव 'शूद्राज्जातो निषाधान्तु स वै कुक्कुटकः स्मृत' इति मनूक्ते सङ्कीर्णवर्णे । स्त्रियां ङीप् ।
**कुक्कुटमस्तक** पु०कुक्कुटस्येव मस्तकं यस्य । चव्ये (चइ) । [व्रतभेदे
**कुक्कुटव्रत** न० ज्येष्ठभाद्रशुक्लसप्तम्यां सन्तानार्थं स्त्रीभिः कर्त्तव्ये
**कुक्कुटशिख** पु० कुक्कुटस्य शिखेव शिखा यस्य । कुसुम्भवृक्षे तस्य हि पुष्पाणि कुक्कुटशिखातुल्यानि ।
**कुक्कुभ** पु० कुक् इत्यव्यक्तं शब्दं कौति कु-भक् । वनकुक्कुटे ।
**कुक्कुर** पु०कोकते क्विप् कुरति शब्दायते कुर-शब्दे क कर्म्म० । स्वनामख्याते पशौ । ग्रन्थिपर्णे वृक्षे न० । [वृक्षभेदे
**कुक्कुरद्रु** पु० कुक्कुरस्याप्रियो द्रुः वृक्षः शाक० । (कुकुरसोङा)
**कुक्कुवाच्** पु० कुकु इत्यव्यक्ता वाक् यस्य । सारङ्गमृगे ।
**कुक्षि** पु०कुष-क्सि । उदरे, उदरस्य वामदक्षिणपार्श्वयोश्च (कोंक)
**कुक्षिम्भरि** त्रि० कुक्षिं बिभर्त्ति भृ-इन्-मुम् च । देवातिथिवञ्चनेनात्मोदरमात्रपूरके ।
**कुक्षिरन्ध्र** न० कुक्षेरिव रन्ध्रं छिद्रं यत्र । मठे ।
**कुङ्कुम** न० कुक्यते चादीयते कुक-उमक् नि० नुम् । काश्मीरदेशजे स्वनामख्याते गन्धद्रव्ये । [मौलच्छिस्थाने पर्व्वतभेदे ।
**कुङ्कुमाद्रि** पु० कुङ्कुमस्याकरः अद्रिः । काश्मीरदेशस्थे कुङ्कु-
**कुच** रोधे, सम्पर्के, लेखने च सक० कौटिल्ये अक०तु० पर० सेट् कुटादि । कुचति अकुचीत् चुकोच ।
**कुच** उच्चे शब्दे भ्वा०पर०अक० सेट् । कोचति अकोचीत् ।
**कुच** पु० कुच- सम्पर्के-अच् । स्तने ।
**कुचन्दन** न० कुत्सितं गन्धहीनत्वात् चन्दनम् । रक्तचन्दने, (बकम्) वृक्षभेदे च ।
**कुचफल** पु० कुचाविव फलमस्य । दाडिम्ववृक्षे ।
**कुचर** त्रि० कुत्सितं चरति चर-अच् । परदोषकथनशीले ।
**कुचेला** स्त्री० कुत्सितं चेलमिव पत्रमस्याः । विद्धकर्णवृक्षे गौरा० ङीष् । अम्बष्ठायां (आकनादि) । [कोकिला, कृत्ता
**कुज** स्तेये, भ्वा०पर०सक० सेट् उदित् । कोजति अकोजीत्
**कुज** पु०कौ पृथिव्यां जायते जन-ड । मङ्गलग्रहे, नरकासुरे, वृक्षमात्रे च । सीतायां कात्यायन्याञ्च स्त्री० ।
**कुज्झटि(टी)** स्त्री० कु-क्विप् कुत् झट-संहतौ इन्, वा ङीप् । (कुयाशा) नीहारे ।
**कुञ्चन** न० कुञ्च-ल्युट् । कौटिल्ये अनादरे च 'वाताद्यावर्त्तसङ्कोचं जनयन्ति यदा मलाः । तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः' रित्युक्ते नेत्ररोगभेदे च । स्वार्थे कन् नभोरेणौ ।
**कुञ्चि** पु०कुञ्च कौटिल्ये इन् । "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयो ऽष्टौ च पुष्कल" मित्युक्ते मानभेदे ।
**कुञ्चिका** स्त्री० कुञ्च-ण्वुल् टाप् । कृष्णजीरके, (कुचे) इति ख्याते मत्स्यभेदे (कञ्ची) वंशशाखायां, तालकोद्घाटने यन्त्रभेदे (काटी) उद्घाटिनी कुञ्चिकेति मत्स्यराघवम् ।
**कुञ्चित** न० कुञ्च-क्त । तगरपुष्पे । वक्रे, सङ्कुचिते च त्रि०

कुञ्ज पु० कौ पृथिव्यां जायते जन-ड ष०। हस्तिहनौ, समन्ता-ल्लतादिभिराच्छादिते मध्यशून्ये पर्वतादेः स्थानभेदे पु० न०

कुञ्जर पु० कुञ्ज+अस्त्यर्थे र। हस्तिनि।

कुञ्जरच्छाय पु० 'योगोमघात्रयोदश्यां कुञ्जरच्छायसंज्ञकः। भवेन्मघायां संस्थे च शशिन्यर्के करस्थिते' इत्युक्ते योग भेदे। [पिप्पल्याम्।

कुञ्जरपिप्पली पु० कुञ्जर इव स्थूला पिप्पली। गजपि-

कुञ्जराशन पु० कुञ्जरैरश्यते अश-भक्षे ल्युट्। अश्वत्थवृक्षे।

कुञ्जल न० कुत्सितं जलं यत्र ब०। काञ्जिके। (आमानि)।

कुट कौटिल्ये तुदा० पर० सक० सेट् कुटादि। कुटति अकु-टीत् चुकोट।

कुट प्रतापने चुरा० आत्म० सक० सेट्। कोटयते अचूकुटत।

कुट वैकल्ये स्वा० इदित् प० अक० सेट्। कुण्टति अकुण्टीत्।

कुट पु० कुट-अच् दुर्गे (गड़) पर्वते, वृक्षे च। घटे पु० न०। गृहे स्त्री० ङीप्। शिलाकुट्टे अस्त्रे पु०। अत्र कुट्ट इत्येवेत्यन्ये

कुटङ्क पु० कुटं गृहं कपति क ष०। गृहाच्छादने, (चाल) गिरिसमिकटे च।

कुटज पु० कुटे पर्वते जायते जन-ड। (कुरची) वृक्षभेदे यस्य फलम् इन्द्रयवः। कुटे घटे जायते। अगस्त्यमुनौ, द्रोणाचार्ये च

कुटजवीज न० ६त०। इन्द्रयवे।

कुटन्नट पु० कुटन् वक्रीभवन् नटति। श्योनाकवृक्षे। मुस्तके न०

कुटप पु० कुट-कपन्। मुनौ। गृहसमीपस्थोपवने, कुडवरूप-मानभेदे च। पद्मे न०। [ङीप्।

कुटि पु० कुट-इन्। वृक्षे, देहे, जले च। क्षुद्रगृहे स्त्री० वा

कुटिचर कुटौ जले चरति चर-अच्। वारिचरे शूकरे

कुटी(टि)र पु० अल्पा कुटी ईरन्। पर्णशालादौ (कुड़े)

कुटिल त्रि० कुट-इलच्। वक्रे, भङ्गुरे च। तगरपुष्पे न०

कुटिलग पु० कुटिलं गच्छति गम-ड। सर्पे। नद्यां स्त्री० टाप्। वक्रगामिनि त्रि०। [वा क अच्। यतिभेदे।

कुटि(टी)च(र)क पु० कुट्यां कुटौ वा चरति, चकानि तृप्यति

कुटुम्ब पु० न० कुटुम्ब-अच्। पोष्यवर्गे बान्धवे, सन्ततौ, द्वितीय गृहे च। [कुटुम्बत।

कुटुम्ब धृतौ चुरा० आत्म० अक० सेट्। कुटुम्बयते अचु-

कुटुम्बिनी स्त्री० कुटुम्ब+इनि। पतिपुत्रादियुतायां गृहस्थि-तायां स्त्रियाम्। [ति-ते अचुकुट्टत् त।

कुट्ट छेदने, निन्दने च अद० चुरा० उभ० सक० सेट्। कुट्टय-

कुट्ट प्रतापने अद० चुरा० आत्म० सक० सेट्। कुट्टयते अचुकुट्टत।

कुट्टक पु० कुट्ट-ण्वुल्। लीलावत्यादौ प्रसिद्धे गणिते अङ्कभेदे। छेदके त्रि०। [स्त्रियाः समागमकारयित्र्याम्।

कुट्टनी स्त्री० कुट्ट-ल्युट् ङीप्। (कुट्नी) परपुरुषेण सह पर-

कुट्टमित न० 'केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात्। प्राहुः कुट्टमितं नाम शिरःकरविधूननमित्युक्ते स्त्रीणां विलासभेदे।

कुड्मल पु० न० कुट-क्मलच्। मुकुले विकाशोन्मुखकलिकायाम्। नरकभेदे न० यत्र रज्जुभिर्यन्त्रणा नारकिभ्यो दीयते।

कुठ छेदने सौत्रः पर० सक० सेट्। कोठति अकोठीत्।

कुठ वैकल्ये आलस्ये अक० मोचने सक० च इदित् भ्वा० पर० सेट्। कुण्ठति अकुण्ठीत्।

कुठ पु० कुठ-अच्। वृक्षे।

कुठर पु० कुठ-अरन्। मन्थनदण्डयन्त्रनार्थस्तम्भे। [वृक्षे पु०।

कुठार पु० स्त्री० कुठ-कारन्। अस्त्रभेदे (कुड़ाल) स्त्रियां ङीप्।

कुठारु पु० कुठ-कारुन्। वानरे, वृक्षे, शस्त्रकारे च।

कुठेर पु० कुठ-एरक्। श्वेततुलस्याम्, वह्नौ, (वावुइ) इतिख्याते वृक्षे च। स्वार्थे कन्। (वावुइतुलसी) इति वृक्षे।

कुड वैकल्ये भ्वा० इदित् पर० अक० सेट्। कुण्डति अकुण्डीत्

कुड दाहे भ्वा० इदित् आत्म० सक० सेट्। कुण्डते अकुण्डिष्ट

कुड रक्षणे चुरा० इदित् उभ० सक० सेट्। कुण्डयति ते अचुकुण्डत् त।

कुड अदने सक० बाल्ये अक० तुदा० पर० सेट्। कुटादि। कुडति अकुडीत् चुकोड़। [मानभेदे।

कुडप(व) पु० कुड-कपन् (कवन्)वा। प्रस्थचतुर्थांशरूपे परि-

कुड्मल पु० न० कुड-क्मलच्। विकाशोन्मुखकलिकायां, नरकभेदे न०।

कुड्य न० कुड-यत्। भित्तौ, विलेपने च।

कुड्यच्छेदिन् पु० छिद-णिनि ६त०। चौरे येन गृहभित्तिं विदार्य चौर्यं क्रियते।

कुड्यच्छेद्य पु० कुड्यं च्छेद्यं यस्य। खनके।

कुण आभाषणे, मन्त्रणे च अद० चु० उभ० सक० सेट्। कुणयति ते अचुकुणत् त। [अकोणीत्।

कुण उपकरणे शब्दे च तुदा० पर० सक० सेट्। कुणति

कुणप पु० कण-कपन् संप्रसारणञ्च। त्यक्तप्राणे मृतदेहे शवे, पूतिगन्धे च तद्वति त्रि०। गौरा० ङीप्। विट्सारिकायाम् (गुयाशालिक)।

कुणि पु० कुण-इन्। तुन्नवृक्षे (तुंद) कुणितकरे त्रि०।

कुण्ठ त्रि० कुठि-अच्। क्रियासु मन्दे, अकर्मण्ये, मूढे च। स्वार्थे कन्। कुण्ठकः। मूर्खे।

**कुण्ड** पु० कुण्ड्यते कुडि मदे, कुडि-दाहे वा घञ्। जीवति भर्त्तरि जारजे पुत्रे मानभेदे पात्रे,जलाशये च। होमीयाग्निस्थापनस्य नभेदे पु०न०। ङीप्। स्थाल्याम् स्त्री०।

**कुण्डपाय्य** पु० कुण्डेन पीयते सोमोऽस्मिन्। यज्ञभेदे।

**कुण्डल** न० कुडि दाहे रक्षणे वा कलच्। कर्णभूषणे, वेष्टने, पाशके, वलये च।

**कुण्डलना** स्त्री० कुण्डलं वेष्टनं करोति णिच् ततो युच्। वेष्टने 'विषमां कुण्डलनामवापिते'ति नैषधम् तन्त्रप्रसिद्धे मूलाधारस्थिते शक्तिभेदे (जिलिपी) इति ख्याते पक्वान्नभेदे गुडूचीलतायां सर्पजातिस्त्रियाञ्च।

**कुण्डलिन्** पु० कुण्डल+अस्त्यर्थे इनि। सर्पे।

**कुण्डलिनी** स्त्री० कुण्डलं वलयाकारवेष्टनमस्य इनि। सर्पाकारेण त्रिवेष्टनयुते तन्त्रप्रसिद्धे शक्तिभेदे, सर्प्याञ्च। [(कुड़ि)

**कुण्डिका** स्त्री० कुण्ड+संज्ञायां कन्। कमण्डलौ, स्थाल्याञ्च

**कुण्डिन** पु० कुडि-इनच्। मुनिभेदे विदर्भनगरे देशभेदे च

**कुतप** पु० कुत्सितं तपति तप-अच्। सूर्य्ये, वह्नौ, ब्राह्मणे, अतिथौ, गवि, भागिनेये, दौहित्रे च। वाद्ये,नेपालकम्बले, कुशतृणे पञ्चदशधाविभक्तदिनस्याष्टमांशे काले च अस्त्री० स च मध्याह्नात् पूर्व्वोत्तरदण्डद्वयात्मकः मुहूर्त्तरूपः कालः। [छवे च।

**कुतस्** अव्य०किम्+तसिल् कादेशश्च। कस्मादित्यर्थे, प्रश्ने, नि-

**कुतुक** न० कुतूं चर्म्मनिर्म्मितस्नेहपात्रमिव कायति कै-क पृषो० ह्रस्वः। फलनिरपेक्षतया चिकीर्षिते कौतुके।

**कुतुप** पु० ह्रस्वाः कुतूः डुपच्। अल्पे चर्म्ममये घृतादिस्नेहपात्रे (कुपी)

**कुतुम्बुरु** न० कुत्सितं तुम्बुरु कुगति०। कुत्सिततिन्दुकफले।

**कुतू** स्त्री० कुत्सितं तन्यते तन-कू। चर्म्मनिर्म्मिते घृतादिस्नेहपात्रे (कुपा)

**कुतूहल** न० कुतूं चर्म्ममयं स्नेहपात्रं हलति लिखति हल-अच्। अपूर्व्ववस्तुदिदृक्षातिशये चेष्टाभेदे, फलनिरपेक्षतया चिकीर्षिते कौतुके च। प्रशस्ते, अद्भुते च त्रि०।

**कुतृण** न० कुत्सितं तृणं कुगति०। (पाना) कुम्भिकाम्।

**कुत्र** अव्य० किम्+त्रल् कादेशः। कस्मिन्नित्यर्थे। नञ्चित्। कुत्रचिदित्यप्यत्रार्थे।

**कुत्स** निन्दने चुरा० आत्म० सक० सेट्। कुत्सयते अचुकुत्सत

**कुत्सा** स्त्री० कुत्स-अ टाप्। निन्दायाम्, परिवादे च।

**कुत्सित** न० कुत्स-क्त। कुष्ठनामौषधे (कुड)। निन्दिते त्रि०।

**कुथ्** क्लेशे (कोंथ) इदित् भ्वादि०अक०सेट्। कुन्थति अकुन्थीत्

**कुथ** पूतिगन्धे दिवा० पर० अक० सेट्। कुथ्यति अकोथीत्।

**कुथ** पु० स्त्री० कुथ-अच्। हस्तिपृष्ठस्थे चित्रकम्बले 'कुथेन. नागेन्द्रमिवेन्द्रवाहनमिति' माघः स्त्रियां टाप्। कुशतृणे पु०

**कुदाल** पु०कुं भूमिं दलयति विदारयति दल-अण्। (कोदाल) भूमिखननसाधने अस्त्रभेदे।

**कुदृष्टि** स्त्री० कुत्सिता वेदबाह्या दृष्टिस्तर्कादिरूपा कुगति०। वेदबाह्यतार्किककल्पनायाम्। 'याश्च काश्च कुदृष्टय' इति मनुः

**कुद्दाल** पु०न० कुं भूमिमुद्दलयति उद्+दल-अण् शक०। कोविदारवृक्षे, काञ्चनारायाञ्च, भूमिखननसाधनेऽस्त्रे (कोदाल) न०

**कुनख** पु०कुत्सितनखकारके रोगभेदे। तथानखयुक्ते जने त्रि०

**कुनखिन्** त्रि० कुनख+अस्त्यर्थे इनि। कुनखरोगयुक्ते सङ्कुचितनखयुक्ते जने च। [कारके त्रि०।

**कुनट** पु० कुत्सितं नटति नट-अच्। श्योनाकवृक्षे। कुत्सितनाट्य

**कुनटी** स्त्री० कौ नटति अच् गौरा० ङीष्। मनःशिलायाम्

**कुनली** स्त्री० कोः पृथिव्या नलइव गौरा०ङीष्। वकवृक्षे।

**कुनाशक** स्त्री०कुं नाशयति नश-णिच्-ण्वुल्। दुरालभायाम्

**कुन्च** वक्रणे अनादरे च भ्वा०पर०सक०सेट्। कुञ्चति अकुञ्चीत्

**कुन्त** पु०कुं भूमिं उनत्ति उन्द्-त शक०। गवेधुकायां (गड़गड़े) धान्ये, प्रासाख्यायुधे, भल्ले च।

**कुन्तल** पु० कुन्तं कुन्ताग्राकारं लाति ला-क। केशे पानपात्रे, जवे, हले च। जनपदभेदे व०व०।

**कुन्तलवर्द्धन** पु० कुन्तलान् वर्द्धयति वृध-णिच् ल्यु। भृङ्गराजे तद्रससेवनेन हि केशवृद्धिः।

**कुन्ति** पु० कम-झिच् पृ०। देशभेदे। युधिष्ठिरादिमातरि स्त्री० वा ङीप्। सा च शूरसेनराजस्यौरसी पृथानाम्नी कन्या अपुत्राय कुन्तिभोजाय पित्रा अपत्यकृत्याय दत्ता।

**कुन्थ** क्लेशे संक्लेशे च क्र्यादि०पर०अक०सेट्। कुथ्नाति अकुन्थीत्

**कुन्द** पु० कुं-भूमिं दायति द्यति वा दै-दो-वा क नि० ह्रस्। (कुंद) पुष्पवृक्षभेदे कुन्दुरुनामगन्धद्रव्ये भ्रमियन्त्रे, (कुंद) कुवेरस्य निधिभेदे, करवीरवृक्षे च।

**कुन्दुरु** पु० कुं भूमिमुनत्ति जल्वादित्वात् नि०। सुगन्धिद्रव्यभेदे

**कुन्दुरुकी** स्त्री० कुन्दुरुरिव प्रतिकृतिः कन् गौरा०। शल्लकीवृक्षे

**कुप** आच्छादने इदित् वा चुरा०उभ०पक्षे भ्वादि०पर०सक०सेट् कुम्पयति ते कुम्पति अचुकुम्पत् त अकुम्पीत्।

**कुप** द्युतौ चुरा०उभ०अक०सेट्। कोपयति ते अचूकुपत् त।

**कुप** कोपे दिवा०पर०अक०सेट्। कुप्यति अकुपत्-अकोपीत्।

**कुपाणि** त्रि० कुत्सितः पाणिरस्य ब०। वक्रहस्ते।

**कुपिन्द** पु० कुप-किन्दच्। तन्तुवाये।

कुपीलु पु० कुत्सितः पीलुः । काकेन्दौ (कुचला) [दिनिन्दिते

कुपूय त्रि० कुत्सितं पूयते पूय-विसरणे अच् । जात्याचारा-

कुप्य न० गुप-क्यप् नि० । स्वर्णरूप्याभ्यामन्यस्मिन् तैजसादौ उपधातौ. (दस्ता) इति ख्याते धातौ च ।

कुब इदित् स्तृतौ वा० चुरा०उभ० पक्षे भ्वा०पर०सक० सेट् । कुम्बयति ते कुम्बति अचुकुम्बत् त अकुम्बीत् ।

कुवे(बे)र पु०कुम्बति धनं एरक् नलोपश्च । यक्षराजे नन्दीवृक्षे च । कुत्सितं बेरं देहोऽस्य । 'कुत्सायां क्वितिशब्दोऽयं शरीरं बेरमुच्यते। कुबेरः कुशरीरत्वादित्यवर्ण्यवमध्योप्ययम् । कुत्सितशरीरे न०। मन्दे त्रि०। [पाटलावृक्षे,लताकरञ्जे च

कुवे(बे)राक्षी स्त्री० कुवे(बे)रस्याक्षीवाक्षि पुष्पमस्याः षच् समा०।

कुब्ज पु० ईषत् उब्जमार्जवमस्य शक०। खड्गे, अपामार्गे च । 'हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक्। क्रुद्धो वायुर्यदा कुर्य्यात् तदा तं कुब्जमादिशे'दित्युक्तलक्षणरोगवति जने(कुजो) त्रि०

कुब्जक पु० कुब्ज+कन् । कुब्जे । महासहे पुष्पप्रधाने वृक्षे च तत्पुष्पे न०। 'अशोकात् पुष्पमाहृत्य सेवतीपुष्पमुत्तमम् । सेवतीपुष्पसाहस्रात् कुब्जकं पुष्पमुत्तममिति नारसिंहम् ।

कुमार क्रीडौ अद०चुरा०उभ०अक० सेट् । कुमारयति ते अचुकुमारत् त ।

कुमार पु० कुमारयति क्रीडति, कुत्सितो मारो यस्मात्, कौ मारयति दुष्टान् वा । शुके पक्षिणि, कार्त्तिकेये,माद्योक्तौ युवराजे, अश्ववारके, सिन्धुनदे, वरुणवृक्षे, पञ्चवर्षीये, बालके च । स्त्रियां ङीप् ।

कुमारभृत्या स्त्री० भृ-क्यप् इत० । प्रसवकाले गर्भिण्याः परिचर्य्यायाम् । 'कुमारभृत्याकुशलैरिति' रघुः ।

कुमारिका स्त्री० कुमार+वयसि प्रथम इति ङीप् ततः स्वार्थे कन् । पञ्चवर्षीयायां अविवाहितायां कन्यायाम्, नवमल्लिकावृक्षे, भारतवर्षस्य खण्डभेदे च 'वर्णव्यवस्थितिरिहैव कुमारिकाख्ये' इति सिद्धान्तशिरोमणिः ।

कुमारी स्त्री० कुमार+ङीप् । नवमल्लिकायाम्, घृतकुमार्य्यां नदीभेदे, अपराजितायां वन्ध्याकर्कोट्यां स्थूलैलायां वर्षखण्डे 'संप्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते' इति कात्यायनोक्तायां द्वादशवर्षीयायाम् अनूढायां कन्यायाम्, श्यामापक्षिणि च । [अचुकुमालत् त ।

कुमाल क्रीडौ अद०चुरा०उभ०अक०सेट् । कुमालयति ते

कुमालक पु० कुमाल-ण्वुल् । सौवीरदेशे ।

कुमुद् न० कौ मह्यां मोदते मुद-क्विप् । कैरवे, रक्तोत्पले च । लपणे, अप्रीते च त्रि०।

कुमुद न०कौ भूमौ मोदते मुद-क । कैरवे, कह्लारे, (कोर) श्वेतोत्पले च । वानरभेदे, दैत्यभेदे, कर्पूरे च पु० ।

कुमुद्वान्धव पु० इत० । चन्द्रे तस्य कुमुदप्रकाशकत्वेन तद्बान्धवत्वम् एवं तत्पर्य्यायाटयोऽप्यत्र कर्पूरे च ।

कुमुदा स्त्री० कौ भमौ मोदते मुद-क टाप् । (पामा) वारिपर्ण्याम्,गाम्भारीवृक्षे, शालपर्णीवृक्षे धातकीवृक्षे,कट्फले च।

कुमुदाभिख्य न० कुमुदस्येवाभिख्या शोभा यस्य । रजते ।

कुमुदिनी स्त्री० कुमुदानां समूहः इनि। कुमुदसमूहे। अस्त्यर्थे इनि । कुमुदयुक्तपुष्करिण्यादौ कुमुदलतायाञ्च ।

कुमुद्वत् त्रि० कुमुदानि प्रायाण्यस्मिन् ड्मतुप् मस्य वः । कुमुदबहुलदेशे । स्त्री० ङीप् । कुमुदिन्याम् ।

कुम्भ पु० कुं भूमिं कुत्सितं वा उम्भति उम्भ पूरणे अच् शक०। घटे, क्षुद्ररोगभेदे, हस्तिशिरःस्थमांसपिण्डद्वये, 'तैः किं मत्तकरीन्द्रकुम्भकुहरे'इति प्रसन्नराघवम्। कुम्भकर्णस्य पुत्रे, वेश्यापतौ, प्राणायामाङ्गे श्वासरोधके चेष्टाभेदे,'दश द्रोणा भवेत् खारी कुम्भस्तु द्रोणविंशतिरित्युक्ते परिमाणभेदे' धान्यं दशभ्यः कुम्भेभ्योऽहरतोऽप्यधिकमिति श्रुतिः । ज्योतिषप्रसिद्धे मेषावधिके एकादशराशौ च । गुग्गुलौ, त्रिवृति च न० ।

कुम्भक पु० कुम्भ इव कायति निश्चलतया प्रकाशते कै-क । "त्यागसंरोधने हित्वा निरोधः कुम्भकः स्मृत" इत्युक्ते श्वासप्रश्वासत्यागेन प्राणवायोर्निरोधरूपे प्राणायामाङ्गे योगशास्त्रादौ प्रसिद्धे व्यापारे ।

कुम्भकर्ण पु० कुम्भ इव कर्णावस्य । रावणानुजे राक्षसभेदे

कुम्भकार पु० कुम्भं करोति कृ,अण् उप० । जातिभेदे, कुक्कुभपक्षिणि च ।

कुम्भकारिका स्त्री० कुम्भ-कृ-ण्वुल् । कुलत्थायाम् (कुलत्थकलाइ)

कुम्भकारी स्त्री० कुम्भ+कृ-अण् ङीप्। मनःशिलायां, कुलत्थाञ्जने, कुम्भकारपत्न्याञ्च ।

कुम्भतुम्बी स्त्री० कुम्भाकारा तुम्बी । (गोललाउ) अलाबुभेदे

कुम्भयोनि पु० कुम्भो योनिरुत्पत्तिस्थानं यस्य । अगस्त्यमुनौ कुम्भयोनेर्महौजस इति रघुः । द्रोणाचार्य्ये, द्रोणपुष्प्यां च । कुम्भसम्भवादयोऽप्यत्र । [पाकस्थाने (कुमारशाला) ।

कुम्भशाला स्त्री० कुम्भस्य पाकशाला इत० । कुम्भादि-

कुम्भाण्ड पु० कुम्भाकारः अण्डः । कुष्माण्डे, बाणासुरमन्त्रिणि च गौरा० ङीष् कुम्भाण्डी स्त्री० कुष्माण्डे।

कुम्भिका स्त्री० कुम्भ+अल्पार्थे ठन् । (पाना) वारिपर्ण्याम्, पाटलावृक्षे, द्रोणपुष्प्यां च ।

**कुम्भिन्** पु० कुम्भ+अस्त्यर्थे इनि । हस्तिनि, कुम्भीरे गुग्गुलौ च
**कुम्भिल** पु० कुम्भ+अस्त्यर्थे इलच् । चौरे शालमत्स्ये, श्लोकार्थचौरे, श्याले च ।
**कुम्भी** स्त्री० कुम्भ-अच् गौरा० ङीष् । उखायां, पाटलावृक्षे, वारिपर्ण्याम्, पुन्नागे, गणिकारिकायां, कट्फले च ।
**कुम्भीपाक** पु० कुम्भ्यां तैलपूर्णे पाको यस्मिन् । 'परत्र च भागुचरास्तप्ततैले यत्रोपरन्धयति स कुम्भीपाक' इत्युक्तलक्षणे नरकभेदे । [जन्तुभेदे नक्रे ।
**कुम्भीर** पु० कुम्भिनं हस्तिनमपीरयति ईर-अण् । जल-
**कुम्भीरमक्षिका** स्त्री० कुम्भीरोपमदा मक्षिका शाक० त० । (कुमीरे पोका) कीटभेदे ।
**कुर** शब्दे तुदा० पर० अक० सेट् । कुरति अकोरीत् ।
**कुरङ्कर** पु० कुरं शब्दं करोति कृ-अच् पृ० मुम् । सारसपक्षिणि
**कुरङ्ग** पु० कौ रङ्गति रङ्ग-अच् । "कुरङ्ग ईषत्ताम्रः स्यात् हरिणाकृतिको महान्" इत्युक्तचिह्ने मृगभेदे मृगमात्रे च ।
**कुरङ्गम** पु० कौ रङ्गं मिमीते मा-ड । हरिणभेदे ।
**कुरण्ट** पु० कुर्य्यते शब्द्यते कुर-अण्टक् । पीतझिण्ट्याम् स्वार्थे कन् । अत्रैवार्थे ।
**कुरर** पु० कवते कुङ-शब्दे क्ररन् । उत्क्रोशपक्षिणि ।
**कुररी** स्त्री० कुरर-ङीष् । कुररपक्षिस्त्रियां, मेषाञ्च ।
**कुरल** पु० कुर-कलच् । कुररपक्षिणि अलकरूपकेशेषु च ।
**कुरव** पु० अल्पमकरन्दवत्त्वादलीनामीषद् रवो यत्र । रक्तझिण्ट्याम्, कुरवके, सितमन्दारे च । कुत्सितशब्दे, बहु० । तथाशब्दयुक्ते त्रि० । ततः स्वार्थे कन् तेष्वेवार्थेषु (कुडचि) इति ख्याते पुष्पवृक्षे । "कुरवकरवक व्यतिषङ्गिणी"ति माघः ।
**कुरस** पु० कुत्सितोरसोऽत्र । मद्यभेदे । कुत्सितरसयुक्ते त्रि० । गोजिह्वालतायां स्त्री० टाप् । कुग० । कुत्सितरसे पु० ।
**कुरु** पु० कृ-कु । चन्द्रवंशीयराजभेदे. "हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे । पञ्चालपूर्व्वभागे तु कुरुदेशः प्रकीर्त्तित" इत्युक्ते देशभेदे ब० व० । ओदने, कण्टकारिकायाम्,नववर्षात्मकस्य जम्बुद्वीपस्य वर्षभेदे च पु० ।
**कुरुक्षेत्र** न० कुत्सितं रौति कुरु पापं कर्म्म तस्य क्षेपणात् अपाकरणात् क्षेत्रम् 'तरन्तुकारन्तुकयोर्यदन्तरं रामहृदानाञ्च मचक्रुकस्य । एतत् कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते' इत्युक्ते देशे तच्च कुरुपाण्डवानां युद्धभूमिः । [अत्रैवार्थे ।
**कुरुण्ट** पु० कुं रुण्ठति रुटि-स्तेये अच् । पीतझिण्ट्याम् । ण्वुल्

**कुरुवक** पु० ईषत् रौति रु शब्दे संज्ञायां वुन् । रक्तझिण्ट्याम्, पीतझिण्ट्याञ्च ।
**कुरुविन्द** पु० कुरून् विन्दति विद-श मुचादित्वात् मुम् । मुस्तायां, कुल्माषे, दर्पणे, हिङ्गुले च । पद्मरागमणौ न० ।
**कुरुविल्व** पु० कुरुषु बिल्व इव । पद्मरागमणौ (माणिक ।
**कुरुविस्त** पु० कुरुषु विस्तः । चतुस्तोलकमिते स्वर्णे ।
**कुरुवृद्ध** पु० कुरूणां जनपदानां राजानः तद्राजस्य तद्धितस्य बहुषु लुक् तेषु कुरुषु वृद्धः । भीष्मे ।
**कुरूप्य** न० ईषत् रूप्यं शुभ्रत्वेन सादृश्यात् । रङ्गनामके धातौ
**कु(कू)र्द्द** क्रीडायां भ्वा० आत्म० अक० सेट् । कु(कू)र्द्दते अकु(कू)र्द्दिष्ट
**कु(कू)र्द्दन** न० कु(कू)र्द्द-ल्युट् । क्रीडायाम् । [कफोणौ च ।
**कूर्पर** पु० कुर-क्विप् कुर् पिपर्त्ति कृ-अच् परः कर्म० । जानुनि.
**कूर्पास** पु० न० कूर्परे अस्यते आस्ते वा अस् घञ् ष० । स्त्रीणां कञ्चुलिकायां (कांचुली) स्वार्थे कन् । अत्रैवार्थे ।
**कुर्व्वत्** त्रि० कृ-शतृ । कर्मकरे भृत्ये, कारके च ।
**कुर्वद्रूप** पु० कुर्वत् फलोन्मुखं रूपं यस्य । बौद्धमतसिद्धे फलजननाय योग्ये धान्यादौ बीजे ।
**कुल** बन्धे संहतौ च भ्वा० पर० अक० सेट् । कोलति अकोलीत्
**कुल** न० कुल-क । वंशे, सजातीयगणे, देशे, गृहे, देहे, तन्त्रोक्ते जीवादौ, मध्यमहलद्वयेन कृष्यमाणायां भूमौ च "द्वयो कुलन्तु भुञ्जीतेति मनुः । कुले भवे त्रि० । शिल्पिकुलप्रधाने पु० ।
**कुलक** न० कुल-अच् संज्ञायां कन् । पटोले, एकवाक्यतापन्ने पञ्चादिकश्लोकसमुदाये च । वल्मीके, काकतिन्दुके, कुरुबकवृक्षे च पु० ।
**कुलकुण्डलिनी** स्त्री० कुलैः कुलाचारैरुपास्या कुण्डलिनी सार्द्धत्रिवलयवेष्टनाकारवती शक्तिः । तन्त्रशास्त्रप्रसिद्धे मूलाधारस्थिते सर्पीतुल्ये शक्तिभेदे । [पालिकायां स्त्री० टाप् ।
**कुलज** त्रि० कुले सत्कुले जायते जन-ड । सत्कुलोद्भवे । कुल-
**कुलटा** स्त्री० व्यभिचारार्थं भिक्षार्थं वा कुलानि अटति अट-अच् शक० । असतीं पुंश्चल्याम्, भिक्षुक्यां सत्याञ्च ।
**कुलत्थ** पु० कुले-तिष्ठति स्था-क ष० । कलायभेदे (कुलत्थकलाइ) वनकुलत्थे स्त्री० टाप् ।
**कुलत्थिका** न० कुलत्थ इव इवार्थे कन् । कुलत्थाञ्जनाकारे प्रस्तरभेदे । स्वार्थे कन् वनकुलत्थे । [पुंसि ।
**कुलधारक** पु० कुलस्य वंशस्य धारकः धृ-णिच्-ण्वुल् । औरसे
**कुलपति** इत० । 'मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृत' इति पुराणोक्ते

लक्षणशालिनि मुनिविशेषे, सैन्यवर्गाध्यक्षे च ।

कुलपर्व्वत पु० कौ पृथिव्यां लीयते ली-ड कर्म्म० । 'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः । विन्ध्यश्च पारिपा(या)त्रश्च सप्तै ते कुलपर्व्वता' इत्युक्तेषु महेन्द्रादिषु पर्व्वतेषु । कुलाचलादयोऽप्यत्र ।

कुलपालक न० कुलं पालयति पालि-ण्वुल् । (कमलालेबु) नारङ्गभेदे । वंशपालके त्रि० । [तस्यां स्त्रियाम्

कुलस्त्री स्त्री० कुलस्यैव स्त्री नान्यगामिनी । कुलरक्षिकायां

कुलाचार पु० । कुलोचिते धर्म्मे 'जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च । क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते । ब्रह्मबुद्ध्या निर्व्विकल्पमेतेष्वाचरणञ्च यत् । कुलाचारः स एवोक्त इत्युक्तरूपे ज्ञाने च ।

कुलाय पु० कुलं पक्षिसंघातोऽयतेऽत्र अय-घञ् । पक्षिनिलये-नीडे, स्थानमात्रे च । कौ लायोगतिरस्मात् । देहे न० ।

कुलायिका स्त्री० कुलायः पक्षिवासस्थानं विद्यतेऽस्यां ठन् । पक्षिशालायां (चिड़ियाखाना) ।

कुलाल पु० कुल-कालन्, कुलमलति अल-अण्, कुलमालाति आ+ला-क वा । कुम्भकारे, (कुमार) कुक्कुभपक्षिणि च ।

कुलाली स्त्री० कुलमलति अल-अण् । नीलोत्पलभेदे, अञ्जनभेदे, अरण्यकुलत्थिकायाम्, कुम्भकारभार्य्यायाञ्च ।

कुलाह पु० कुलमाहन्ति आ+हन-ड । ईषत् पीतवर्णे कृष्णजानौ अश्वे । ततः संज्ञायां कन् । ककलासे, (राङ्गाकुले (खाड़ा) इति ख्याते शाकभेदे च ।

कुलाहल पु० कुलमाहलति स्पर्द्धते अच् । (कुकरसोङ्गा) वृक्षभेदे

कुलि पु० कुल-इन् । हस्ते । कण्टकार्य्यां स्त्री० वा ङीप् ।

कुलिक पु० कुल+अस्त्यर्थे ठन् । अष्टनागान्तर्गतनागभेदे, (कुलेखाड़ा) इति ख्याते शाके, ज्योतिषोक्ते रव्यादिवारे वेलाभेदे च । कुलश्रेष्ठे त्रि० ।

कुलिङ्ग पु० कौ पृथिव्यां लिङ्गति चरणार्थं गच्छति अच् । चटके, धूम्याटे, (फिङ्गा) भूमिप्रत्यासन्नतया धान्यादिचारिणि खगे च । कुत्सितलिङ्गे न० । ब० । तद्वति त्रि० । स्वार्थे कन् चटके । ङीप् कर्कटशृङ्ग्याम् । [मेटिकाइच्चे ।

कुलिङ्गाक्षी स्त्री०कुलिङ्गस्याक्षि फलमस्याः षच् समा० । (मेटारी)

कुलिन् पु० कुल+अस्त्यर्थे इनि । पर्व्वते । सत्कुलवति त्रि ।

कुलि(ली)र पु० कुल-इरक् ईरक् वा । कर्कटे (कांकड़ा) मेषावधिके चतुर्थे राशौ च ।

कुलिश पु० न० कुलौ हस्ते शेते शी-ड, कुलिनं पर्व्वतं श्यति शो-ड वा । वज्रे । कौ लिशति श्लिष्यति लिश-क । अस्थिसंहारवृक्षे, मत्स्यभेदे च । [भगिन्याञ्च ।

कुली स्त्री० कौ लीयते ली-ड ङीप् । कण्टकार्य्यां, पत्न्या ज्येष्ट-

कुलीन पु० कुले आकरे भवः ख । श्रेष्ठहये । तन्त्रोक्ते कुलाचारवति, सत्कुलोद्भवे च त्रि० ।

कुलीनक पु० कौ भूमौ लीनः ली-क्त संज्ञायां कन् । वनमुद्गे

कुल्माष पु० कोलति कुल-क्विप् कुल् माषोऽस्मिन् ७ब० । 'अर्द्धस्विन्नाश्च गोधूमा अन्ये च चणकादयः । कुल्माष इति कथ्यन्ते इत्युक्तेषु अर्द्धस्विन्नगोधूमादिषु 'स हि कुल्माषान् खादन्तं बिभिक्षे' इति श्रुतिः सूर्य्यस्य पारिपार्श्विकभेदे, शूकधान्ये यवादौ च । काञ्जिके मसीपरिणामे च न० ।

कुल्य न० कुल-संस्त्याने क्यप् । अस्थि, अष्टद्रोणीरूपपरिमाणे, शूर्पे, आमिषे च । कुले भवः, कुलाय हितो वा यत् । सत्कुलोद्भवे कुलहिते च त्रि० । कुल-क्यप् टाप् । कृत्रिमायामल्पनद्याम्, जीवन्त्यामोषधौ, कुलस्त्रियां, स्थूलवार्त्ताकौ च स्त्री० [उत्पले च ।

कुव न० कुं भूमिं वाति गच्छति वा क । जलजे, पुष्पमात्रे,

कुवङ्ग न० कुत्सितं वङ्गम् । सीसके (सीसा) धातुभेदे ।

कुवल न० कौ वलते वल संचलने अच् । उत्पले, मुक्ताफले च । कोलिवृक्षे स्त्री० ङीप् । बदरीफले न० ।

कुवलय न० कोर्वलयमिव शोभाहेतुत्वात् । उत्पले, श्वेतोत्पले नीलोत्पले च, 'कुवलयदलश्यामविस्तीर्णदृष्टे' इत्युद्भटदूतम् ।

कुवलयापीड त्रि० कुवलयमापीडो भूषणं यस्य । नीलोत्पलभूषणवति जने । कंसाचरस्य हस्तिरूपधारिणि दैत्यभेदे पु० ।

कुवाद त्रि० कुत्सितं वदति अण् । परदोषकथनशीले । भावे घञ् कुग० । कुत्सितवाक्ये ।

कुविन्द पु० कुं भूमिं विन्दति विद-श । तन्तुवाये शूद्रीगर्भे विश्वकर्म्मणो जाते वर्णभेदे च (तांति) ।

कुवृत्तिकृत् पु० कोः पृथ्व्याः वृत्तिं वेष्टनं करोति कृ-क्विप् । (कांटाकरञ्जा) ख्याते वृक्षे । कुत्सितवृत्तिकर्त्तरि त्रि० ।

कुवेणि(णी) स्त्री०कुत्सितं वेणन्ते मत्स्या अस्याम् वेण-इन्, वा ङीप् । मत्स्यधान्याम् (खालुइ) ।

कुश पु०न०कौ शेते शी-कु पापं श्यति शो-ड कुशति कुश-क वा । स्वनामख्याते तृणे । कुशोऽस्त्यगर्भके इवति रामसुते च 'रिपुनागाङ्कुशं कुश'मिति रघुः । योक्त्रे, एतसञ्ज्ञद्वेषादृते द्वीपभेदे च पु० । जले न० ।

कुश द्युतौ इदित् भ्वादि० पर० सक० सेट् । कुंशति अकुंशीत् ।

कुश श्लेषे दि० पर० सक० सेट् । कुश्यति । अकुशत्-अकोशीत् ।

कुशध्वज पु० जनकस्य नृपस्यानुजे भ्रातरि ।

**कुशपुष्प** न० कुशाकारं पुष्पमस्य । ग्रन्थिपर्णे वृक्षे ।

**कुशल** न० कुश-कलन् । कल्याणे । तद्वति त्रि० । कुशान् लाति ला क । दक्षे त्रि० । कौ पृथिव्यां शलति चलयति कार्य्याणि शल-अच् । कार्य्यचतुरे त्रि० ।

**कुशलिन्** त्रि० कुशल+अस्त्यर्थे इनि । कल्याणवति । "कुशलिनी वत्सस्य वार्त्तापी"ति साहि० ।

**कुशस्थल** न० ६त० । कान्यकुब्जदेशे । द्वारकायां स्त्री० ङीप् ।

**कुशा** स्त्री० कुश-क । वल्गायां, रज्ज्वां, मधुककोष्ठ्यां, सामगानां स्तोत्रगानार्थौडुम्बरशङ्कुषु च ।

**कुशाकर** पु० कुशैराकीर्य्यते समन्ताद्येण मूलाच्छादनेन वेष्ट्यते आ+कॄ अप् । यज्ञाग्नौ । स हि कुशकण्डिकायां कुशैराश्रियते ।

**कुशाग्रीय** त्रि० कुशाग्रमिव छ । अतिसूक्ष्मे ।

**कुशाल्मलि** पु० कुत्सितः शाल्मलिः । रोहितकवृक्षे ।

**कुशावती** स्त्री० कुश-अस्त्यर्थे मतुप् मस्य वः दीर्घः । रामात्मजकुशस्य राजधान्यां पुर्य्याम् ।

**कुशिक** पु० कुश+अस्त्यर्थे ठन् । जमदग्निपितरि, विश्वामित्रस्य पितरि च मुनिभेदे । कुश+इवार्थे इकन् । फाले, सर्जवृक्षे, विभीतकवृक्षे, अश्वकर्णवृक्षे, तैलशेषे च । केकरे(टेरा) त्रि०

**कुशी** स्त्री० कुश-अयोविकारेऽर्थे ङीप् नि० । लौहविकारे फाले

**कुशीलव** पु० कुत्सितं शीलं कुगति० अस्त्यर्थे व, कुशीलं वाति वा-क-वा । कीर्त्तिसञ्चारके नटे, चारणे, वाचके च । कुशीलववृत्तिनाश्रमचारकत्वात् वाल्मीकौ मुनौ ।

**कुशीलव** पु० द्वि० व० । कुशश्च लवश्च द्व० नि० । रामपुत्रयोः ।

**कुशूल** पु० कुश-ऊलच् । तुषाग्नौ, अन्नकोष्ठके, इष्टकादिनिर्म्मिते धान्यादिस्थापनार्हे स्थाने च ।

**कुशूलधान्यक** पु० कुशूलपरिमितं धान्यं यस्य । यावताधान्येन वर्षत्रयं स्वस्य सकुटुम्बस्य सभृत्यस्य निर्वाहो भवति तावन्मात्रसञ्चितधान्ये विप्रे । [कर्णिकारवृक्षे च ।

**कुशेशय** न० कुशे जले शेते शी-अच् अलुक् । पद्मे, सारसपक्षिणि,

**कुष** निष्कर्षे क्र्यादि० पर० सक० सेट् । कुष्णाति अकोषीत् । निरस्तु वेट् निरकोषीत् निरकुक्षत् ।

**कुषाकु** पु० कुष्णाति कुष-काकु । वानरे, सूर्य्ये, वह्नौ च । परोत्तापिनि त्रि० । [(कुठ) रोगभेदे च ।

**कुष्ठ** न० कुष्णाति रोगम् देहं वा कुष-क्थन् । (कुड) विषभेदे

**कुष्ठगन्धि** न० कुष्ठस्येव (कुड़) गन्धोऽस्य इत् समा० । एलवालुके

**कुष्ठगन्धिनी** स्त्री० कुष्ठस्य गन्धोऽस्त्यस्याः इनि । अश्वगन्धायाम्

**कुष्ठघ्नी** स्त्री० कुष्ठं हन्ति हन क ङीप् । काकोडुम्बरिकायाम्

**कुष्ठनाशन** पु० कुष्ठं नाशयति नश-णिच्-ल्यु । वाराहीकन्दे, गौरसर्षपे, शिरीषवृक्षे च । [सोमराज्याम् ।

**कुष्ठनाशिनी** स्त्री० कुष्ठं नाशयति नश-णिच् णिनि ङीप् ।

**कुष्ठल** न० कुत्सितं स्थलम् अम्बष्ठादित्वात् षत्वम् । कुत्सितस्थले

**कुष्ठसूदन** पु० कुष्ठं सूदयति सूद-ल्यु । आरग्वधे (सोन्दाल)

**कुष्ठहन्तृ** पु० कुष्ठं हन्ति हन-तृच् । हस्तिकन्दे (हातिकान्दा)

**कुष्ठहृत्** पु० कुष्ठं हरति हृ-क्विप् तुक् च । (विट्खदिरे) ।

**कुष्ठारि** पु० ६त० । विट्खदिरे, पटोले, गन्धके च ।

**कुष्ठिन्** त्रि० कुष्ठ+अस्त्यर्थे इनि । कुष्ठरोगयुक्ते ।

**कुष्माण्ड** पु० ईषत् उष्मा पित्तहेतुत्वात् अण्डेषु बीजेषु यस्य शक० । (कुमड़ा) ख्याते वृक्षे, शिवस्य गणदेवताभेदे च । जातित्वात् स्त्रियां ङीप् कुष्माण्डीत्यप्यत्र लताभेदे ऋग्वेदप्रसिद्धेषु ऋग्विशेषेषु कुष्माण्डौ पावमानीश्चेविवृतिः स्वार्थे कन् कुष्माण्डकोऽपि (कुमड़ा) वृक्षे स्त्री० भौ, उमायां, कर्कारौ च ।

**कुस** श्लेषे दिवा० पर० सक० सेट् । कुस्यति अकुसत्-अकोसीत्

**कुसित** पु० कुस-क्त । जनपदभेदे । ईषच्छुभ्रे पु० । तद्वति त्रि० ।

**कुसीद** न० 'कुत्सितात् सीदतश्चैव निर्विशङ्केन गृह्यते । चतुर्गुणं चाष्टगुणं कुसीदाख्यं ततः स्मृत'मित्युक्ते वृद्धिभेदे (सुद) अर्थप्रयोगे, वृद्धि(सुद) जीविकायाम् 'स्थानलाभनिमित्तं यत् दानग्रहणमिष्यते । तत् कुसीदमिति प्रोक्त'मित्युक्ते स्थानस्य मूलधनस्य यथावस्थित्यै, ततोलाभाय चोत्तमर्णाधमर्णाभ्यां दत्ते, स्फीते च धने । अर्शआदित्वादच् । तत्प्रयोगकर्त्तरि त्रि० ।

**कुसीदिक** त्रि० कुसीदाय वृद्ध्यै प्रयच्छति कुसीद+ठन् । वृध्याजीविनि वार्द्धुषिके । स्त्रियां षित्त्वात् ङीप् ।

**कुसुम** न० कुस-उमक् । पुष्पे, फले, स्त्रीरजसि, नेत्ररोगभेदे च

**कुसुमपुर** न० (पाटना) इति ख्याते पाटलिपुत्रे नगरे, पृषो० अन्तलोपे कुसुमपत्र ।

**कुसुममध्य** पु० कुसुमं मध्ये फलमध्ये यस्य । (चालता) वृक्षभेदे । [मिति गीता ।

**कुसुमाकर** पु० ६त० । वसन्ते ऋतौ "विद्धि मां कुसुमाकर"

**कुसुमागम** पु० कुसुमानामागमो यत्र काले । वसन्ते ऋतौ ।

**कुसुमाञ्जन** न० कुसुमाकारमञ्जनं शाक० । पैत्तलमलजाते पुष्पाकारे अञ्जनभेदे । [स्वोत्पत्त्यैव पुष्पाकारत्वम् ।

**कुसुमालक** न० कुसुममिवालका स्वरूपं यस्य । कुङ्कुमे तस्य

**कुसुमाधिप** पु० कुसुमेषु कुसुमप्रधानेषु वृक्षेषु अधिपः श्रेष्ठः सुगन्धित्वात् । चम्पकवृक्षे

**कुसुमायुध** पु० कुसुममायुधमस्य । कामदेवे । [मद्ये च ।

**कुसुमासव** न० कुसुमस्य तद्रसस्यासवम् । पौष्पे मधुनि, तज्जाते

**कुसुमेषु** पु० कुसुमानीषवो यस्य । कामदेवे । [पुष्पसमूहे ।

**कुसुमोच्चय** पु० कुसुमानामुच्चयः समूहो यत्र । स्तवके । इत०

**कुसुम्भ** न० कुष-उम्भ । पुष्पप्रधानद्रव्ये (कुसुम) "कुसुम्भं नाणिकायार्कं वार्ताकुमिति स्मृतिः । स्वार्थे क कमण्डलौ ।

**कुसृति** स्त्री० कुत्सिता सृतिः सृ-क्तिन् । शाठ्ये ।

**कुस्तुभ** पु० कु भूमिम् ईषद्वा स्तभ्नाति स्तनुभ-अच् नलोपः नि० । विष्णौ, समुद्रे च ।

**कुस्तुम्बुरु** न० कुत्सितं तुम्बति तुवि-मर्दने उरु नि०-सुट् । धन्याके

**कुस्म(स्य)** वृद्धौ दर्शने च चुरा० आत्म० सक० सेट् । कुस्म(स्य)यति अचुकुस्म(स्य)त । [अचुकुहत ।

**कुह** विस्मयने अद० चुरा० आत्म० सक० सेट् । कुहयते

**कुह** अव्य० किम्+ह-कु तिहोरिति कादेशः । कुत्रेत्यर्थे ।

**कुहक** न० कुह-ण्वुल् । इन्द्रजालमायया अन्यथास्थितस्य वस्तुनोऽन्यथादर्शने । तद्युक्ते त्रि० ।

**कुहन** न० ईषत् यत्नेन हन्यते हन-कर्मणि अच् । मृद्भाण्डे ईषद् यत्नेन हन्ति कर्त्तरि अच् । सर्पे, चौरे च । कुं भूमिं हन्ति खनति अच् । मूषिके । कुह-युच् टाप् । दम्भ-पर्य्यायां स्त्री० । ईर्ष्यालौ त्रि० ।

**कुहर** पु० कुं हरति हृ-अच् । नागभेदे । कुहं विस्मापनं राति रा-क । छिद्रे । कर्णे, कण्ठे कण्ठशब्दे, समीपे च न०

**कुहलि** पु० कुत्सितं हलति हल-इन् । ताम्बूलाम् (पान)

**कुहा** स्त्री० कुह-अच् । कुज्झटिकायां, कटुकायाञ्च ।

**कुहू(हु)** स्त्री० कुह-कु-वा ऊङ् । नष्टेन्दुकलायां चतुर्दशी-युतायाममावस्यायां, कोकिलालापे च 'त्वमपि चन्द्रविरोधि कुहूरव' इति 'उहूरिति कुहूरवध्वनिभिये'ति चोद्भटः ।

**कुहूकण्ठ** पु० कुहूरितिशब्दः कण्ठे यस्य । कोकिले ।

**कुहूरव** पु० कुहूरिति रवो यस्य । कोकिले । कुहूशब्दादयोऽप्यत्र

**कुहेलिका** स्त्री० कुत्सितं हेलयति ण्वुल् । कुज्झटिकायाम् ।

**कू** आर्त्तस्वरे तुदा० आत्म० अक० सेट् कुटादि । कुयते अकुविष्ट

**कू** शब्दे क्र्यादि० उभ० अक० सेट् प्वादि० । कुनाति कुनीते अकवीत् अकविष्ट ।

**कूकुद** पु० सत्कृत्यालङ्कृतकन्यादातरि ।

**कूचिका** स्त्री० कू-चिक् संज्ञायां कन् । तूलिकायाम् । कभावे वा ङीप् । कूचीत्यप्यत्र ।

**कूज** शब्दे भ्वा० पर० सक० सेट् । कूजति अकूजीत् ।

**कूजित** न० कूज-क्त । पक्षिशब्दे अव्यक्तशब्दे च 'मधुकरनि-करकरम्बितकूजित कुञ्जकुटीरे' इति जयदेवः ।

**कूट** पु० कूट-अच् कर्मणि घञ् वा । अगस्त्यमुनौ । गृहे पु० स्त्री० । निश्चले, धान्यादिराशौ, अयोघने (नेहार) लौह-मुद्गरे, दम्भे, मायायां, यथार्थवस्त्वाच्छादने, अद्रिशृङ्गे, तुच्छे, फालाधारे-लाङ्गलाङ्गे, मूर्खे मृगबन्धनहेतौ-यन्त्रे, भग्नशृङ्गखण्डे, पुरद्वारि च पु० । स्वार्थे कन् फाले । संज्ञायां कन् । कवर्थाम्, उरानामगन्धद्रव्ये च पु० ।

**कूट** अपवादे दानाभावे च चुरा० आत्म० सक० सेट् । कूटयते अचुकूटत-त । [कूटयति ते अचुकूटत्-त ।

**कूट** दाहे मन्त्रणे प्रच्छादने च अद० चुरा० उभय० सक० सेट्

**कूटकार्षापण** पु० कर्म० । मिथ्याभूतरौप्यादि मुद्रायाम्

**कूटकृत्** पु० कूटं मिथ्याभूतं करोति कृ-क्विप् तुक् च । कायस्थे । कितवे त्रि० । कलसादिपाकस्थाने (पोयान) ।

**कूटपालक** पु० कूटं मृत्तिकास्तूपं पालयति ण्वुल् । कुलाले ।

**कूटयन्त्र** न० कूटेन कृतं यन्त्रम् । आमिषादिदानेन मृगपक्षि-धारणार्थं पातिते यन्त्रे ।

**कूटशाल्मलि** पु० कूटः मिथ्याभूतः शाल्मलिः । कृष्णशाल्मलौ

**कूटसंक्रान्ति** स्त्री० 'अर्द्धरात्रे व्यतीते तु यदा संक्रमते रविः । सा ज्ञेया कूटसंक्रान्तिरिति स्मृत्युक्ते रवेरर्द्धरात्रो त्तरं राश्यन्तरसञ्चारे ।

**कूटसाक्षिन्** त्रि० कर्म० । साक्ष्ये मिथ्याभिधायिनि ।

**कूटस्थ** त्रि० कूटोऽयोधनवत् निश्चलं यथा तथा तिष्ठति स्था-क । एकरूपतया सर्व्वकालस्थायिनि परिणामादिकार्य्यान्तरशून्ये-आकाशादौ, मनस्यपि च । व्याघ्रनखाख्यगन्धद्रव्ये पु० ।

**कूटागार** न० कर्म० । रूपागारे, चन्द्रशालिकायाम्, (चिलाघर) क्रीडागृहे च । [मये अस्त्रभेदे ।

**कूटायुध** न० कर्म० । अन्तर्गुप्तनिशितशस्त्रे बहिःकाष्ठादि-

**कूटार्थभाषा** स्त्री० कूटार्थस्य कल्पितार्थस्य भाषा कथा । प्रबन्धकल्पनाप्रायायां कथायाम् ।

**कूड** घनीभावे तुदादि० पर० अक० सेट् । कूडति अकूडीत् ।

**कूण** सङ्कोचे अद० चुरा० उभ० अक० सेट् । कूणयति-ते अचुकूणत् त ।

**कूण** सङ्कोचे चुरा० आत्म० अक० सेट् । कूणयते अचूकुणत ।

**कूणि** त्रि० कूण-इन् । रोगादिना सङ्कुचितनखकरादौ जने

**कू(कु)प** दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कू(कु)पयति-ते अचुकू(कु)पत्-त ।

**कूप** पु० कुत्सिताः ईषत् वा आपो यत्र अप् समा०, कुर्वन्ति मण्डूकाः अस्मिन् कु-पक् दीर्घश्च वा । स्वनामख्याते जला-

धारे, गर्त्ते च। ततः संज्ञायां कन्। नौकादौ गुणाधारे (मास्तुल) काष्ठमये दण्डे। [रोमाञ्चे।

कूपाङ्क(ङ्ग) पु० कूपाकारोऽङ्कश्चिह्नं कूपाकारमङ्गं वास्मिन्।

कूपार पु० कुं पृथिवीं पिपर्त्ति पूरयति अण् पूर्व्वदीर्घः। समुद्रे

कूपी स्त्री०कूप-अच् गौ०ङीप्। स्नेहादिधारणार्थे चर्म्ममये पात्रभेदे

कूर्च्च पु०न० कूर्य्यते कुर-चट् नि० दीर्घः। भ्रुवोर्मध्ये, स्थिते लोमोच्चये, श्मश्रुणि, कैतवे, दर्भे, मयूरपुच्छे, कुशमुष्टौ, अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे, अङ्गुष्ठौ, शीर्षे, आसनभेदे, तन्त्रोक्ते वीजभेदे च (हुम्)। [दयोऽप्यत्र।

कूर्च्चशिरस् न० ६त०। अश्विन्याम्कन्धे (गुडमुडा)। [शेखरा-

कूर्च्चशीर्ष पु० कूर्चं श्मश्रु तद्वत् शीर्षमस्य। नारिकेले। कूर्च

कूर्चिका स्त्री० कूर्च+श्मश्रु अस्त्यर्थे ठन्। (चीरसा) दुग्धविकारे, सूचिकायां, तूलिकायाम्, कुट्मले, कुञ्चिकायाञ्च द्रव्यमार्जनसाधने द्रव्ये,-(कुंचि) तृणगुच्छे च।

कूर्पास पु० कुर्पासवत् सर्व्वम्।

कूर्म्म पु० कुत्सितः कौ वा ऊर्म्मिर्वेगो यस्य ष०। कच्छपे, "उन्मीलने स्मृतः कूर्म्म" इत्युक्ते देहस्थे वायुभेदे च।

कूर्म्मचक्र न० कूर्म्माकारं चक्रम्। ज्योतिषोक्ते कृषिकर्म्मोपयोगिनि,तन्त्रोक्ते जपादिकर्म्मोपयोगिनि च कूर्म्माकारे चक्रभेदे

कूर्म्मपुराण न० कूर्म्मेण कूर्म्मावतारेण भगवता उक्तम् पुराणम्। अष्टादशसु पुराणेषु मध्ये पुराणभेदे।

कूर्म्मपृष्ठक न०कूर्म्मस्य पृष्ठमिव इवार्थे कन्। शरावे (शरा)।

कूल आवृतौ भ्वा० पर० सक० सेट्। कूलति अकूलीत्।

कूल न०कूल-अच्। नद्यादेर्जलसमीपस्थाने तीरे,स्तूपे,शैलपृष्ठे च

कूलक पु० कूल-ण्वुल्। कृमिपर्वते,वल्मीके स्थाने। (उइरढीपि)

कूलङ्कष पु०कूलं कषति कष-खच् मुम् च। समुद्रे। नद्यां स्त्री०

कूवर पु०न० कूङ् शब्दे कुटादि वरच्। रथस्य चक्राकाशस्थके काष्ठे,युगन्धरे, कवचे च। रथे त्रि०।

कूष्माण्ड पु० कुत्सित उष्मा अण्डेषु वीजेषु यस्य। (कुमड़ा) वृक्षभेदे गणदेवताभेदे च। जातित्वात् ङीप् कूष्माण्डीत्यप्यत्र।

कृ कृतौ भ्वा०उभ०सक०अनिट्। करति ते अकार्षीत् अकृत।

कृ कृतौ तना० उभ० सक० अनिट्। करोति कुरुते अकार्षीत् अकृत। कृत्रिमः। [अकृत।

कृ वधे स्वादि उभ० सक० अनिट्। कृणोति कृणुते अकार्षीत्

कृक पु० कृ-कक्। गले।

कृकण पु० कृ इति कणति कण-शब्दे अच्। (कयार) आकर पक्षिणि, क्षुधाकारके देहस्थे वायुभेदे च।

कृकर पु० कृ इति शब्दं करोति। क्षुधाकरे देहस्थे वायौ।

कृकलास पु० कृकं कण्ठं लासयति अण्। सरटे (कांकलास) पक्षिणि। [मयूरे, सरटे च।

कृकवाकु पु० कृकेण वक्ति वच-परिभाषणे ञुण् कुश्च। कुक्कुटे,

कृकाटिका स्त्री० कृकं कण्ठमटति अट-ण्वुल् टाप् कापि-अत इत्त्वम्। ग्रीवायामुन्नतदेशे।

कृच्छ्र न० कृत-रक् छोऽन्तादेशः। कष्टे,दुःखे, तत्कारणे-पापे, कष्टदायके-प्राजापत्यादिव्रते, मूत्रकृच्छ्ररोगे च। तद्वति त्रि०।

कृत छेदे तुदा० पर० सक० सेट्। मुचादि। कृन्तति अकर्त्तीत् कर्त्तिष्यति-कर्त्स्यति कृत्तः।

कृत वेष्टे रुधा०पर०सक० सेट्। कृणत्ति कृन्तः अकर्त्तीत्।

कृत न०कृ-क्त। 'चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युग' मिति मनूक्ते दिव्यमानेन चतुःसाहस्रसितवर्षे, मानुषमानेन १७२८०००मितवर्षे, सत्ययुगे,पर्य्याप्ते,अलमर्थे, फले च। रचिते त्रि०।

कृतक न० कृत-कन्। विड्लवणे। कृत्रिमे,मिथ्याकल्पिते च त्रि०।

कृतकृत्य त्रि० कृतं कृत्यं कर्त्तव्यं येन। कृतार्थे समाप्तकार्य्ये, धन्ये, विदुषि च।

कृतक्षण त्रि० कृतः क्षणः समयो येन। लब्धावकाशे।

कृतघ्न त्रि० कृतं हन्ति हन-क। कृतोपकारस्य जनस्य अपकारे प्रवर्त्तमाने 'कृतघ्ने नास्ति निष्कृति'रिति पुराणम्।

कृतच्छिद्रा स्त्री० कृतं छिद्रं यस्याः। कोषातकीलतायाम्।

कृतज्ञ त्रि० कृतं कृतोपकारं जानाति ज्ञा-क। कृतोपकार ज्ञातरि-मत्युपकारके। कुक्कुरे पु०।

कृतधी त्रि० कृता सम्पादिता धीर्येन। शास्त्राभ्याससंस्कृतान्तःकरणे, स्थिरचित्ते, 'कृतधीः किं प्रभाषेते'ति गीता।

कृतप्रणाश पु० कृतयोः पुण्यापुण्ययोर्भोगमन्तरेण प्रणाशो नाशः। कृतघ्नतौ।

कृतम् अव्य० कृत-कमु। अलमर्थे, निषेधे च।

कृतमाल पु० कृता मालास्य। आरग्वधे,(सोन्दाल) कर्णिकारे च

कृतलक्षण त्रि० कृतानि लक्षणान्यस्य। गुणैर्विख्याते।

कृतवर्म्मन् पु० हृदिकासुते यादवे क्षत्रियभेदे।

कृतश्रम त्रि० कृतः श्रमो येन। महोत्साहान्विते।

कृतवीर्य्य पु० कृतं वीर्य्यमनेन। एकवीरनृपात्मजे कार्त्तवीर्य्यार्ज्जुनजनके नृपभेदे। वीर्य्यान्विते त्रि०।

कृतविद्य त्रि० कृता अभ्यस्ता विद्या येन। अभ्यस्तविद्ये।

कृतसापत्निका स्त्री० कृतं सापत्न्यं यस्याः कप् यलोपः टापि अत इत्त्वम्। अध्यूढायां स्त्रियां यस्या विवाहात् पश्चात् तत्पतिना विवाहान्तरं कृतं तस्याम्।

कृतस्वर पु० कृतः स्वरो यत्र । स्वर्णोत्पत्तिस्थाने स्वर्णाकरे ।

कृतहस्त त्रि० कृतः अभ्यस्तः हस्तो वाणादित्यागमोक्षणलाघवरूपा हस्तशिक्षा येन । सुशिक्षितशरमोक्षणविद्ये जने ।

कृताकृत न० कृतं कार्य्यमकृतं कारणं च समा० द्व० । कार्य्यकारणयोः । कर्म्म० । कृते अकृते च होमादौ । अतएव ऋत्विग्विशेषस्य ब्रह्मणः कृताकृतावेक्षणाय होमादौ वरणम्

कृताञ्जलि पु० कृतोऽञ्जलिरिव पत्रसङ्कोचो येन । लज्जालुवृक्षे । संपुटीकृतहस्ते त्रि० ।

कृतात्मन् पु० कृतः शिक्षितः संस्कृतो वा आत्माऽन्तःकरणं यस्य । शिक्षितचित्ते, शुद्धान्तःकरणे च ।

कृतात्यय पु० कृतस्य कर्म्मजन्यभोगस्यात्ययोऽवसानम् । भोगं विना कृतकर्म्मनाशे 'कृतात्ययेऽनुशयवानि'ति शारीरकसूत्रम्

कृतान्त पु० कृतः अन्तो विपर्य्ययनाशो निश्चयो विषयपरिच्छेदो वा येन । ज्ञातसिद्धान्ते । कृतो नाशो येन । दैवे, पापे यमे च ।

कृतान्न न० कृतं पक्वञ्च तदन्नञ्च । लड्डुकादौ पक्वान्ने, 'कृतान्नमुदकं स्त्रिय' इति स्मृतिः ।

कृतार्थ त्रि० कृतः अर्थः प्रयोजनं येन । कृतकार्य्ये ।

कृतास्त्र त्रि० कृतं शिक्षितमस्त्रं येन । शिक्षितास्त्रे ।

कृति स्त्री० कृ-क्तिन् । पुरुषप्रयत्ने, कर्त्तृव्यापारे, विंशत्यक्षरपादके छन्दोभेदे च । [वति, निपुणे, साधौ, कृतार्थे च ।

कृतिन् स्त्री० कृतमनेन इष्टादित्वादिनि । पण्डिते, योग्ये, पुण्य

कृत्त त्रि० कृत-क्त । छिन्ने, वेष्टिते च ।

कृत्ति स्त्री० कृत-क्तिन् । चर्म्मणि, भूर्जपत्रे च ।

कृत्तिका स्त्री० कृत-तिक् संज्ञायां कन् । अश्विन्यवधिके तृतीये नक्षत्रे । [युक्तकाले सुतो जातः । चन्द्रे ।

कृत्तिकासुत पु० कृत्तिकायाः सुतः । स्कन्दे, कृत्तिकानक्षत्र-

कृत्तिवासस् पु० कृत्तिश्चर्म्म वासो यस्य, कृत्तिं वस्ते वस-असुन् वा । शिवे ।

कृत्य न० कृत-क्यप् । कार्य्ये, व्याकरणोक्तेषु ण्यत्क्यप्तव्यानीयर्यत्केलिमाख्येषु प्रत्ययेषु पु० । कर्त्तव्ये त्रि० ।

कृत्यविद् त्रि० कृत्यं कर्त्तव्यं वेत्ति विद्-क्विप् । कार्य्यज्ञे, विधिज्ञे, कृत्यवित्दिश्यवाचेति रघुः । [देवभेदे च ।

कृत्या स्त्री० कृ-क्यप् टाप् । क्रियायाम्-अभिचारक्रियाजन्ये,

कृत्रिम न० कृ-क्त्रि मप् च । विड्लवणे, काचलवणे, तुरुष्कनामगन्धद्रव्ये, रसाञ्जने च । शिल्पके द्वादशविधपुत्रान्तर्गते पुत्रभेदे च पु० । क्रियया निष्पन्नमात्रे त्रि० ।

कृत्स्न न० कृत-क्स्न । सकले, जले, कुक्षौ च । समस्ते त्रि०

कृन्तन न० कृत-ल्युट् । नि० नुम् च । छेदने, 'कृन्तनं

नखकेशानां छेदनञ्च वनस्पते'रिति स्मृतिः ।

कृप कल्पने भ्वा० आत्म० लुङि लुटि लृटि लृङि च उभ० इतादि अक० वेट् । कल्पते । अकल्पत् अकल्पिष्ट अक्लृप्त । कल्प्तासि कल्पितासे कल्प्तासे कल्प्स्यति कल्पिष्यते ।

कृप दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कृपयति ते अचिकृपत्-त ।

कृप युतौ चित्रीकरणे वा चुरा० पक्षे भ्वादि० पर० । कल्पयति ते कल्पति अचीकल्पत्-त अकल्पीत् ।

कृप पु० कृप-क । शरद्वतः पुत्रे द्रोणश्यालके कृपाचार्य्ये ।

कृपण पु० कृप-क्युन् । कृमौ । मन्दे, क्षुद्रे च 'कृपणाः फलहेतव' इति गीता । दीने, 'कार्पण्यदोषोपहतस्वभाव' इति गीता अदातरि च त्रि० । [पक्षे च्छायाम् ।

कृपा स्त्री० कृप-अङ् । दयायां फलनिरपेक्षतया दीनजनानु-

कृपाण पु० कृपां नुदति नुद-ड । खड्गे । ङीप् । कृपाणीत्यप्यत्र । छुरिकायाम्, कर्त्तर्य्याञ्च ।

कृपालु त्रि० कृपां लाति ला-डु । कृपायुक्ते ।

कृपी स्त्री० द्रोणाचार्य्यस्य पत्न्याम् शरद्वतो दुहितरि ।

कृपीट न० कृप-कीटन् । उदरे, तोये च ।

कृपीटयोनि पु० कृपीटस्य जलस्य योनिः । वह्नौ "वायोरग्निरग्नेराप इति श्रुतेरस्य जलयोनित्वम् ।

कृमि पु० क्रम-इन् सम्प्रसारणञ्च । कीटात् सूक्ष्मे-जन्तौ । तज्जातायां-लाक्षायां, उदरजातकीटयुक्तरोगे च ।

कृमिकण्टक पु० कृमिरिव कण्टकोऽस्य । विडङ्गे उडुम्बरे चित्रायाञ्च । [क । कौषेये (रेशमिवस्त्रे) ।

कृमिकोषोत्थ न० कृमेः कोषात् उत्तिष्ठते उत्पद्यते उद्-स्था-

कृमिघ्न पु० कृमिं हन्ति हन-क । विडङ्गे, पलाण्डौ, कोलकन्दे, भल्लातके च । हरिद्रायाम् स्त्री० टाप् । धूपपत्रायां स्त्री० ङीप्

कृमिज न० कृमिभिर्जन्यते जन-कर्म्मणि ड । अगुरुणि चन्दने । कृमितोजाते त्रि० । लाक्षायां स्त्री० टाप् ।

कृमिफल पु० कृमयः फलेऽस्य । उडुम्बरे ।

कृमिशैल पु० कृमीणां शैल इव । वल्मीके ।

कृमीलक पु० कृमीन् ईरयति जनयति ईर-ण्वुल् रस्य ल । वनमुद्गे । [अकर्षीत् ।

कृश तनूकरणे दिवा० पर० सक० सेट् । कृश्यति अकृशत्-

कृश त्रि० कृश-क्त नि० । अल्पे, सूक्ष्मे च ।

कृशाङ्गी स्त्री० कृशमङ्गमस्याः । प्रियङ्गुवृक्षे । कृशदेहे त्रि०

कृशानु पु० कृश-आनुक् । वह्नौ चित्रकवृक्षे च ।

कृशानुरेतस् पु० कृशानौ वह्नौ रेतोऽस्य । शिवे । देवामोदमयकस्य शिववीर्य्यस्याग्नौ प्रक्षेपः कृतोऽग्निभः

कार्त्तिकेयो जातः इति पुराणकथा अनुसन्धातव्या ।

**कृष** आकर्षणे विलेखने च तुदा० आत्म० सक० अनिट् । कृषते । अकृक्षत-अकृष्ट ।

**कृष** आकर्षणे विलेखने च भ्वा० पर० सक० अनिट् । कर्षति अक्राक्षीत्-अकार्क्षीत्-अकृक्षत् ।

**कृषक** पु० कृष-क्वुन् । फाले, वृषे । कर्षके त्रि० ।

**कृष(श)(स)र** पु० तिलतण्डुलसम्पाकः कृ(श)(स)सर,परिकीर्त्तित इत्युक्ते तिलमिश्रिते पक्के तण्डुलादन्ने ।

**कृषि** स्त्री० कृष-इक् । वैश्यवृत्तिभेदे भूमिकर्षणरूपे शस्योत्पादनव्यापारे । कर्मणि इक् । भूमौ ।

**कृषिजीविन्** त्रि० कृष्या जीवति जीव-णिनि । स्वयमस्वयं वा कृतया कृषिक्रियया जीविनि ।

**कृषीवल** त्रि० कृषिरस्यास्ति वलच् दीर्घश्च । कर्षके ।

**कृष्टपच्य** त्रि० कृष्टे क्षेत्रे स्वयमेव पच्यते पच-क्यप् । धान्यादौ

**कृष्ण** पु० कृष-नक् । भगवतोऽवतारतारभेदे वासुदेवे देवकीनन्दने । "कृषिर्भूवाचकः शब्दः णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्णइत्यभिधीयते" इत्युक्ते परब्रह्मणि, वेदव्यासे, अर्ज्जुने मध्यमपाण्डवे च । कृष्णवर्णत्वात् काके, कोकिले, करमर्द्दके (करमचा) वृक्षे, नीले, वर्णे च तद्वति त्रि० । कालागुरुणि अशुभकर्मणि च न० । द्रौपद्यां, नीलीवृक्षे, कणायां, द्राक्षायां, नीलपुनर्नवायाम्, कृष्णजीरके, गाम्भार्य्यां कटुकायाम्, राजसर्षपे, पर्प्पट्यां, काकोल्यां, सोमराज्याञ्च कृष्णवर्णत्वात् स्त्री० टाप् । नीलाञ्जने, लौहे, मरिचे च पु० ।

**कृष्णकलि** पु० कृष्ण इव चूडालः कलिः कलिकाऽस्य । स्वनामख्याते पुष्पप्रधाने वृक्षे । [त्रि० ।

**कृष्णकाय** पु० कृष्णः कायो यस्य । महिषे । कृष्णवर्णतनुयुक्ते

**कृष्णगन्ध** पु० कृष्ण उग्रो गन्धोऽस्य । शोभाञ्जनवृक्षे ।

**कृष्णगर्भ** पु०कृष्णवर्णोगर्भोऽस्य । कटफले । [ख्यातेपुष्पवृक्षे ।

**कृष्णचूड़ा** स्त्री० कृष्णस्य चूड़ा इव चूड़ाऽस्य । स्वनाम-

**कृष्णचूर्ण** न० कृष्णस्य चूर्णम् । लौहमले (लोहार गु) ।

**कृष्णजटा** स्त्री कृष्णा जटा यस्याः । जटामांस्याम् ।

**कृष्णजीरक** पु० कर्म० । कृष्णवर्णजीरके (कालजीरे)

**कृष्णद्वैपायन** पु० द्वीपे भवः फञ् कर्म० । वेदव्यासे तस्य पराशरात् यमुनाद्वीपे एव जन्मेति पुराणम् ।

**कृष्णधत्तू(धत्तू)र** पु० कर्म० (कनकधुतरा) वृक्षभेदे ।

**कृष्णपर्णी** स्त्री० कृष्णं पर्णमस्याः । कालतुलसी) कृष्णतुलस्याम्

**कृष्णपक्ष** पु० कर्म० । प्रतिपदाद्यमावस्यान्तास पञ्चदशसु तिथिषु "चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मक" इत्युक्ते मासार्द्धे काले । [टस्य । करमर्द्दे ।

**कृष्णपाक** पु० पच्यते इति पाकः फलं कृष्णः कृष्णवर्णः पाको

**कृष्णपाकफल** पु० कृष्णपाकं फलमस्य । करमर्द्दे ।

**कृष्णफल** पु० कृष्णं पाकावस्थायाम् फलमस्य । करमर्द्दे, सोमराज्यां स्त्री० टाप् । [कटुकायाम् ।

**कृष्णभेद** पु० कृष्णोवर्णेन भेदश्छेदः यस्याः । वा ङीप् ।

**कृष्णमुद्ग** पु० कर्म० । (कालमुग) मुद्गभेदे ।

**कृष्णरुह** स्त्री० कृष्णः सन् रोहति रुह-क । जतुकालतायाम्

**कृष्णलवण** न० कर्म० । सौवर्च्चलवणे । (कालालोण) ।

**कृष्णलक** पु० कृष्णं वर्णं लाति स्वीकरोति ला-क संज्ञायां कन् । गुञ्जाफले तस्याईकृष्णत्वात्तथात्वम् 'पञ्चकृष्णलकोमाष'इति मनुः

**कृष्णला** स्त्री०कृष्णं वर्णमईफले लाति ला-क टाप् । गुञ्जायाम्

**कृष्णलौह** न० कर्म० । अयस्कान्ते ।

**कृष्णलोहित** पु० कृष्णः सन् लोहितः वर्णो वर्णेनेति समा० । रक्तकृष्णमिश्रितवर्णे । तद्वति त्रि० ।

**कृष्णवक्त्र** पु० कृष्णं वक्त्रमस्य । वानरे ।

**कृष्णवर्ण** पु० कृष्णो वर्णोऽस्य । राहौ यक्षे । कृष्णः अशुद्धो वर्णः । शूद्रे । व० । कृष्णवर्णवति त्रि० ।

**कृष्णवर्त्मन्** पु०कृष्णं वर्त्म धूमप्रसाररूपगतिस्थानमस्य । वह्नौ, राहौ यक्षे, चित्रकवृक्षे च । कृष्णमपवित्रं वर्त्माचरणं यस्य । दुष्टकर्मकारके त्रि० ।

**कृष्णवल्लिका** स्त्री० कर्म० । जतुकालतायाम् ।

**कृष्णवल्ली** स्त्री० कर्म० । कृष्णतुलस्याम्, कर्कट्याञ्च ।

**कृष्णवीज** पु० कृष्णं वीजमस्य । रक्तशिग्रौ । कालिङ्गे न० ।

**कृष्णवृन्ता** स्त्री० कृष्णं वृन्तमस्याः । पाटलावृक्षे माषपर्ण्याञ्च । संज्ञायां कन् कापि अत इत्त्वम् । गाम्भार्य्याम् ।

**कृष्णशा(सा)र** पु० कृष्णश्चासौ शारः (सारः) शवलश्च वर्णो वर्णेनेति स० । कालसारस्मृगे ।

**कृष्णशालि** पु० कर्म० (कालधान) धान्यभेदे ।

**कृष्णशिम्बिका** स्त्री० कर्म० । काकाण्डाम् ।

**कृष्णशिग्रु** पु० कर्म० । कृष्णशोभाञ्जने (कालसजना) ।

**कृष्णशृङ्ग** पु० कृष्णं शृङ्गमस्य । महिषे ।

**कृष्णसर्षप** पु० कर्म० । (राइ सर्षा) राजसर्षपे ।

**कृष्णसार** पु० कृष्णः सारोऽस्य । शिंशपावृक्षे (शिशु)

**कृष्णस्कन्ध** पु० कृष्णः स्कन्धोऽस्य । तमालवृक्षे ।

**कृष्णागुरु** न० कर्म० । कालागुरुणि, 'कृष्णं गुणाधिकं तत्तु लोहवद्वारि मज्जती'त्युक्तलक्षणे धूपकाष्ठे ।

**कोच** पु० कुच-अच् । देशभेदे, तद्देशस्थे 'तीवरस्यैव स पुत्रः मांसच्छेदसमुद्भवः । कोचजातिरिति ख्यात' इत्युक्ते जातिभेदे च ।

**कोजागर** पु० कोजागर्त्तीति वदत्यस्मिन् पृ० । आश्विनपौर्ण-मास्याम् । 'निशीथे वरदा लक्ष्मीः कोजागर्त्तीतिवादिनी'ति ।

**कोट** पु० कुट-घञ् । कौटिल्ये, दुर्गे च (गड़) ।

**कोटर** पु०न० कोटं कौटिल्यं राति रा-क । वृक्षस्य गह्वरे ।

**कोटवी** स्त्री० कोटं याति वा-क गौरा० ङीष् । नग्निकायां स्त्रियां दुर्गायाञ्च ।

**कोटि** स्त्री० कुट-इञ् । धनुषोऽग्रभागे वस्तुमात्रस्याग्रभागे, टक्कायाम् (पिड़िङ्गशाक) संशयस्यालम्बने, वादे निर्स्यार्थं कृते पूर्व्वपक्षे, शतलक्षमितसंख्यायां, तत्संख्येये च । वा ङीप् कोटीत्यप्यत्र । [गोपकीटे ।

**कोटिक** पु० कोट्या वक्रधा कायति प्रकाशते कै-क । इन्द्र

**कोटिर** पु० कोटिं राति रा-क । इन्द्रे, नकुले, इन्द्रगोपकीटे च

**कोटिवर्षा** स्त्री० कोटिभिरग्रैर्वर्षति मधु वृष-अण् । (पिड़िङ्ग) शाकभेदे ।

**कोटि(टी)श** पु० कोट्या अग्रेण श्यति शो-क । लोष्टभेदनेऽस्त्रे

**कोटीर** पु० कोटिमीरयति ईर-अण् । किरीटे, जटायाञ्च ।

**कोट्ट** पु० कुट्ट-घञ् नि०गुणः । दुर्गे(गड़) राजधानीभेदे च।

**कोट्टवी** स्त्री० कोट्टं वाति वा-क गौरा० ङीष् । नग्नायां स्त्रियाम् मुक्तकेश्याञ्च ।

**कोट्टार** पु० कुट्ट-आरक् ष्ट० । कूपे पुष्करिण्याः पाटके च ।

**कोठ** पु० कुठि-अच् नि० नलोपः । मण्डलाकारे कुष्ठरोगे ।

**कोण** पु० कुण-करणे घञ् कर्त्तरि अच् वा । येन धनुराकृतिना काष्ठेन वीणादयो वाद्यन्ते तस्मिन् वादनसाधने काष्ठे, गृहादीनामेकदेशे, अस्रौ, अस्त्राद्यग्रभागे, लगुडे, मङ्गलग्रहे च । [मत्कुणे (उकुण) ।

**कोणकुण** पु० कोणे गृहस्यैकदेशे कुणति चलति कुण-क ।

**कोदण्ड** न० कु-शब्दे क्विप् कोर्दण्डोऽस्य । धनुषि, भ्रूलतायां, देशभेदे च ।

**कोद्रव** पु० कु-क्विप् कोः द्रवति द्रु-अच् कर्म० (कोदो) धान्यभेदे

**कोप** पु० कुप-भावे घञ् । क्रोधे कामाप्राप्तिजे चित्तवृत्तिभेदे ।

**कोपनक** पु० कुप-युच् कोपनः स इव कायति कै-क । चोरनामकगन्धद्रव्ये ।

**कोपना** स्त्री० कुप-युच् टाप् । प्रकृत्या कोपवत्यां स्त्रियाम् । कोपशीले त्रि० । [कोपशालिनि त्रि० ।

**कोपिन्** पु० आयस्तं कुप्यति णिनि । जलपारावते । आयस्त

**कोमल** न०कु-कलच् मुट् नि०गुणः । जले । मृदौ, अकठिने, मनोहरे च त्रि० । क्षीरिकायां स्त्री० टाप् ।

**कोमलवल्कली** स्त्री० कोमलं वल्कलं यस्याः । लतायाम् ।

**कोयष्टि** पु० कं जलं यष्टिरिवास्य पृ० अत ओत्वम् । जल-कुक्कुभे पक्षिणि । संज्ञायां कन् । (टिटिर) टिट्टिभपक्षिणि

**कोरक** पु०न० । कुर्यते कुर-वुन् । कलिकायाम्,मृणाले,कक्कोले च 'विकारकोरकाणीति' माघः । अमरे पुंस्त्वोक्तिः प्रायिकाभिप्रायेण ।

**कोरङ्गी** स्त्री० कुर-अङ्गच् ङीष् । सूक्ष्मलतायाम्, पिप्पल्याञ्च

**कोरदूष** पु० कोरं दूषयति दुष-णिच् अण् (कोदो) धान्यभेदे

**कोल** पु० कुल-संस्त्याने अच् । क्रोडे-धनिष्ठे, शूकरे, उडुपे (डोङ्गा), भुजान्तरे, भेलके, चितायाम् (चिता),अस्त्रभेदे, टङ्कद्वयमाने, जातिभेदे, देशभेदे च । चव्ये, मरिचे, तोलक माने, बदरफले च न० ।

**कोलक** पु०कुल-ण्वुल् । अङ्कोठवृक्षे,बहुवारवृक्षे (कांकला) च । गन्धद्रव्यभेदे, मरिचे, कक्कोले च न० ।

**कोलकन्द** पु० कोलमिव कन्दोऽस्य । महाकन्दभेदे ।

**कोलदल** न० कोलं बदरीफलमिव दलमस्य । नखीनामगन्धद्रव्ये

**कोलपुच्छ** पु० कोलस्य शूकरस्येव पुच्छोऽस्य । कङ्कपक्षिणि

**कोलमूल** न० कोलस्य बदर्या इव मूलम् । पिप्पलीमूले ।

**कोलम्बक** पु० कुल-अम्बच् संज्ञायां कन् । तन्त्रीभिन्ने अलाबू प्रभृतिसमुदाये वीणायाः काये । [प्पल्याम् ।

**कोलवल्ली** स्त्री० कोल इव वल्ली तत्तुल्यरोमवत्त्वात् । गजपि-

**कोलशिम्बि** स्त्री० कोलपादाकारा शिम्बिरस्याः । 'आलक-शीति ख्यातायां शूकरपादिकायां लतायाम् ।

**कोला** स्त्री० कुल-अच् टाप् । पिप्पल्याम्, चव्यभेषजे, कोलि-वृक्षे, देशभेदे च ।

**कोलाविध्वंसिन्** त्रि० कोलां विध्वंसितं यस्य शीलमस्य विशब्देन धातोरन्यार्थपरत्वम् । पर्व्वतवासिनि म्लेच्छ-भेदे, 'एवं पालयतस्तस्य म्लेच्छाः पर्व्वतवासिनः । कोलावि-ध्वंसिनः प्राप्ता इति देवीभागवतम् । कोलाविध्वंसिनश्-चेति देवीमाहात्म्यम् । कोलाशब्दः कोलाहलवाचकस्तथा च कोलाहलेनैव राज्यविध्वंसं कुर्व्वन्ति ये । तेषु ।

**कोलाहल** पु० कुल-घञ् तमाह्वलति अच् । बहुविधे दूर गामिन्यव्यक्ते शब्दे ।

**कोलि** पु० स्त्री० कुल-इन् । बदर्याम् स्त्रीत्वपक्षे वा ङीप् ।

**कोविद** पु० कुङ् शब्दे-क्विप् कोर्वेदकं वेत्ति विद-क । पण्डिते विदुषि ।

**कोविदार** पु० कुं भूमिं विदयाति-वि+दृ-अण्। रक्तकाञ्चनारे (रक्तकाञ्चन)।

**कोश(ष)** पु० कुश(ष) घञ्। पानपात्रे, कुड्मले, खड्गपिधाने, (खाप) क्षताक्षतयोः स्वर्णरूप्ययोः, अर्थसञ्चये, पेश्याम्, अण्डकोषे, शब्दादिसंग्रहे, योनौ, शिम्बायाम्, शुक्रगेहे, हिरण्यादिस्थापनगृहे, मञ्जूषायाम्, आच्छादके, पनसादिफलस्यान्तःस्थावयवभेदे च (कोया)। [टाप्।

**कोशफल** न० कोषे फलमस्य। कक्कोले, त्रपुष्याम् (शशा) स्त्री०

**कोशल** पु०स्त्री० कुश-कलच् नि० गुणः। अयोध्यापुरे वा टाप्

**कोशलात्मजा** स्त्री० कोशलानां राजा तद्राजस्य लुक् (६त०। रामचन्द्रस्य मातरि। [ठन्। उत्कोचे (घुष)

**कोश(ष)लिका** न० कोषं(षं) धनसञ्चयं लाति ला-क ततः भावे

**कोशाङ्ग** पु०न० कोशाकारमङ्गमस्य। वङ्कमूले वृक्षभेदे।

**कोशा(षा)तकी** स्त्री०कोश(ष)मतति ण्वुल् गौरा०ङीप्।(झिङ्गा) पटोल्यां तत्फलेऽपि हरीतक्यादित्वात् स्त्रीत्वम्।

**कोशिला** स्त्री० कोश+अस्त्यर्थे पिच्छादित्वाद् इलच्। मुद्गपर्ण्याम्। [धान्याद्यग्रभागे च (शुङ्गा)

**कोशी(षी)** स्त्री० कुश (कुष) अच् गौरा०। चर्म्मपादुकायाम्

**कोष** पु० कोशवत्।

**कोषचञ्चु** पु०कोषाकारा चञ्चुर्यस्य। सारसपक्षिणि।

**कोषवृद्धि** स्त्री० कोषस्य धनसञ्चयस्य वृद्धिः। धनवृद्धौ। कोषस्याण्डस्य वृद्धिर्यस्मिन्। रोगभेदे पु०।

**कोषशायिका** स्त्री० कोषे शेते शी-ण्वुल्। छुरिकायाम्।

**कोषिन्** पु० कोष+इनि। आम्रवृक्षे।

**कोष्ठ** पु० कुष-थन्। गृहमध्ये, उदरमध्ये, धान्यादिस्थापने कुसूले च (कुटी) आत्मीये त्रि०। [त्रि०

**कोष्ण** न० ईषदुष्णम् कोः कादेशः। ईषदुष्णस्पर्शे। तद्वति

**कोसल** पु०कौ पृथिव्यां सलति उत्कर्षं गच्छति अच् पृ०गुणः। सरयूतीरनिविष्टे देशे। अयोध्यायां स्त्री०। [भेदे च।

**कोहल** पु०कौ हलति स्पर्द्धते अच् पृ०गुणः। वाद्यभेदे मद्य-

**कौक्कुटिक** पु० कुक्कुटीं मायां, पादपतनदेशञ्च पश्यति ठक्। दाम्भिके, कीटादिवधभीत्या पादक्षेपस्थानद्रष्टरि संन्यासिनि च

**कौक्षेयक** कुक्षौ ततं बद्धः ढकञ्। ततकुक्षिबद्धे खड्गे

**कौट** पु० कूटे अद्रिशृङ्गे भवः अञ्। कुटजे (कुरची) कुट्यां गायभवः। स्वतन्त्रे त्रि०।

**कौटज** पु० कूटमेव कौटं तत्र जातः। कुटजे वृक्षे। [व्याधे

**कौटतक्ष** पु० कर्म्म०। स्वाधीनकर्म्मोपजीविनि। [जीविनि

**कौटिक** त्रि० कूटेन मृगबन्धनयन्त्रेण चरति ठक्। मांसविक्रय

**कौडविक** त्रि० कुडवः सम्भवति (स्वस्मिन् समावेशयति) तस्य वापः वपनयोग्यं क्षेत्रम् वा ठक्। कुडवधान्यस्यापनयोग्ये, पात्रे, तदपनयोग्येक्षेत्रे च।

**कौणप** पु० कुणपः शवः भक्ष्यत्वेन विद्यतेऽस्य अण्। राक्षसे।

**कौतुक** न० कुतुक+प्रज्ञादित्वात् स्वार्थे अण्। अपूर्वदर्शनौत्सुक्ये

**कौतूहल** न० कुतूहल+प्रज्ञादित्वात् स्वार्थेऽण्। कौतुके।

**कौद्रवीण** त्रि० कोद्रवाणां भवनं क्षेत्रम् ख। (कोदो) धान्यभेदभवनयोग्ये क्षेत्रे। [पक्षौ।

**कौन्ती** स्त्री० कुन्तिषु देशेषु भवा अण् ङीप्। भस्मगन्धिचो-

**कौप** त्रि० कूपे भवः अण्। 'भूमौ खातोऽल्पविस्तारो गम्भीरो मण्डलाकृतिः। बद्धोऽबद्धः स कूपः स्यात्तदम्भः कौपमुच्यते' इत्युक्ते कूपोदके, स्त्रियां ङीप्। न विरमाः कौपीरपः पास्यतीति साहि० ३प०।

**कौपीन** न० कूपे पतनमर्हति अकार्य्यार्थे नि०। पापे, तद्वति त्रि०। गोप्यत्वात् पुरुषलिङ्गमपि कौपीनम् तदाच्छादकत्वात्। मेखलानिबद्धे वस्त्रखण्डे च। 'कौपीनवन्तः खलुभाग्यवन्त' इति पुराणम्।

**कौमार** न० कुमारस्य भावः अञ्। 'आतः कुं पृथिवीं पद्भ्यां मारयेत् स कुमारक' इत्युक्तलक्षणायां 'कौमारं पञ्चमाब्दान्तमित्युक्तावस्थायां कौमारं यौवनं जरेति गीता।

**कौमारी** स्त्री० कुमारस्य कार्त्तिकेयस्येयम् अण्। कार्त्तिकेयशक्तौ, पतकुमारीशिफायाञ्च। अपूर्वपतिः कुमारी' सुपमङ्केति कौमारापूर्व्ववचने इत्यण्। भार्य्यायाम्।

**कौमुद** पु०'कौ मोदन्ते जनायस्मिन् कौमुदस्तेन कीर्त्तित इत्युक्तचिह्ने कार्त्तिकमासे।

**कौमुदी** स्त्री० कुमुदानां हर्षहेतुरियम् अण्। ज्योत्स्नायां तत्सम्पर्के हि कुमुदप्रकाशः कविकल्पितः। कौ मोदन्ते जना यस्यास्तेनाभावैः परस्परम्। हृष्टास्तुष्टाः सुखापन्नास्तेन सा कौमुदी मता' इत्युक्तलक्षणायां कार्त्तिकपौर्णमास्याम्। आश्विनपौर्णमास्यामपि।

**कौमोदकी** स्त्री० कोः पृथिव्याः पालकत्वात् मोदकः कुमोदको विष्णुः तस्येयम् अण्। विष्णुगदायाम्।

**कौरव** पु० कुरोरयम् कच्छादित्वादण्। कुरुन्पसन्ततौ धृतराष्ट्रात्मजेषु पाण्डवेषु च उभयोरपि कुरुवंशजातत्वात्।

**कौरव्य** पु० कुरु-ण्य। कुरुवंशजे क्षत्रिये। बहुषु लुक्। कुरवः

**कौल** त्रि० कुले सत्कुले भवः अण्। सत्कुलीने। तन्त्रोक्ते कुलाचाररते च। [सत्या भिक्षुक्याः पुत्रे। स्त्रियां ङीप्।

**कौलटिनेय** पु०स्त्री०भिक्षुक्याः सत्या अपत्यम् ढक् इनादेशश्च।

**कौलटेय** पु० स्त्री० कुलटायाः सत्याः असत्या वा अपत्यम् । ढक् । सत्याः असत्याश्च कुलटायाः पुत्रे । स्त्रियां ङीप् ।

**कौलटेर** पु०स्त्री०कुलटायाः असत्याः अपत्यम् ढ्रक् । बन्धक्याः पुत्रे

**कौलिक** त्रि०कुलाद् गतः ठक् । कुलपरम्परागते । कुलेनाचरितः ठक् । कुलाचारे । कौलं कुलधर्मं प्रवर्त्तयति ठक् । कुलधर्मप्रवर्त्तके तन्त्रोक्ते शिवे, तन्वादौ च ।

**कौलीन** न० कौ पृथिव्यां लीनं यस्मात् अलुक् स० । गुह्ये, परीवादे, दुष्टकार्य्ये च । कुलीनस्य भावः कर्म वा । कुलीन कर्मणि, प्राणिभिर्द्यूते च ।

**कौलेय** त्रि० कुले+भवः ढक् । सत्कुलोत्पन्ने ।

**कौलेयक** पु० कुले भवः श्वा ढकञ् । कुलागते कुक्कुरे ।

**कौवेरी** स्त्री० कुवेरस्येयम् अण् । मातृभेदे, उत्तरदिशि च ।

**कौशल** न० कुशलस्य भावः अण् । क्रियायां नैपुण्ये ।

**कौशलिका** स्त्री० कुशलस्य प्रच्छा ठक् । कुशलप्रश्ने । कुशलाय स्वमङ्गलाय नीयते ठञ् । उपायने उपढौकने ।

**कौशलेय** पु० कौशल्यायाः अपत्यम् ढक् यलोपः । रामचन्द्रे

**कौशल्या** स्त्री० कुशलैव चातुर्वर्ण्यादित्वात् ष्यञ् । राममातरि

**कौशाम्बी** स्त्री० कुशाम्बेन निर्वृत्ता नगरी अण् । वत्सपत्तने

**कौशिक** पु० कुशिकस्य गोत्रापत्यम् ऋष्यण् । विश्वामित्रे मुनौ । कोशे भवः ठक् । नकुले, व्यालग्राहे, पेचके, इन्द्रे, गुग्गुलौ च । कोशेऽधिकृतः ठक् । कोषाध्यक्षे ।

**कौशिकफल** पु० कौशिकेन विश्वामित्रेण सृष्टं फलं यस्य । नारिकेले । [शतुत्वं लोकविद्वम् ।

**कौशिकाराति** पु० ६त० । पेचकशत्रौ काके तस्य पेचक-

**कौशिकी** स्त्री० "शरीरकोशाद्यत्तस्याः पार्व्वत्याः निःसृताम्बिका । कौशिकीति समाख्यातेत्युक्तलक्षणायां दुर्गायाम् नदीभेदे 'कौशिकी चन्द्रभागा चे'ति स्मृतिः नाट्ये वृत्तिभेदे च

**कौशेय** त्रि० कोशादुत्थितम् ढक् । कृमिकोशादिजाते वस्त्रे ।

**कौसल्या** स्त्री० कोसलस्य राज्ञोऽपत्यं ष्यङ् । राममातरि पाणिनिसूत्रे दन्त्यसकारनिर्द्देशात् दन्त्यसकारवानयम् ।

**कौसल्यायनि** पु० कौसल्याया अपत्यं फिञ् । श्रीरामे ।

**कौसुम्भ** पु० कुसुम्भ+स्वार्थे अण् । अरण्यकुसुम्भे शाकभेदे च कुसुम्भेन रक्तम् अण् । कुसुम्भरागरञ्जिते वस्त्रादौ त्रि० ।

**कौसृतिक** त्रि० कुसृत्या चरति ठक् । मायाकारके शाठ्ययुक्ते ।

**कौस्तुभ** पु० कुं भूमिं स्तुभ्नाति कुस्तुभो जलधिः तत्र भवः अण् । विष्णोर्वक्षःस्थे 'कौस्तुभस्तु महातेजाः कोटिसूर्य्यसमप्रभ, इत्युक्तलक्षणे मणिभेदे ।

**कौस्तुभवक्षस्** ६ब० कौस्तुभो वक्षसि यस्य । विष्णौ ।

**क्नथ** वधे वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट् घटादि । क्नथयति-ते क्नथति अचिक्नथत्-त अक्नथीत्-अक्नाथीत् ।

**क्नस** दीप्तौ कौटिल्ये च दिवा० पर० अक० सेट् इ० । क्नस्यति अक्नसीत्-अक्नासीत् क्नसयति-ते क्नसित्वा-क्नस्त्वा ।

**क्नस** दीप्तौ वा०चु०उभ० पक्षे भ्वा० क्नसयति-ते । क्नसति । अचिक्नसत्-त अक्नसीत्-अक्नासीत् । क्नसित्वा-क्नस्त्वा ।

**क्नू** शब्दकरणे क्र्यादि० उभ०सक०सेट् प्वादि० । क्नुनाति क्नुनीते अक्नावीत् अक्नविष्ट ।

**क्नूय** दुर्गन्धे आर्द्रीभावे शब्दे च भ्वा० आत्म० अक०सेट् । क्नूयते अक्नूयिष्ट । क्नोपयति ते । क्नूतः ।

**क्मर** कौटिल्ये भ्वा० पर० अक० सेट् । क्मरति अक्मारीत् ]

**क्रकच** पु० क्र इति कचति शब्दायते कच-शब्दे अच् । ग्रन्थिलाख्ये वृक्षे । करपत्रे (करात) पु० न० । ज्योतिषोक्ते योगभेदे च ।

**क्रकचच्छद** पु० क्रकच इव छदो यस्य । केतकीवृक्षे ।

**क्रकचपाद्**(द) क्रकचमिव पादो यस्य वा अन्त्यलोपः । कृकलासे

**क्रकचपृष्ठी** स्त्री० क्रकच इव पृष्ठं यस्याः । (कइ) मत्स्यभेदे ।

**क्रकण** पु०क्र इति कणति शब्दायते कण-अच् । (कयार) पक्षिणि

**क्रकर** पु० क्र इति शब्दं कर्त्तुं शीलमस्य ताच्छील्येऽच् (कयार) क्रकणे पक्षिणि ।

**क्रतु** पु० कृ-कतु । यूपसहिते, तद्रहिते वा यज्ञे, संकल्पे, 'यथाक्रतुरस्मिन् तथा प्रेत्य भवती'ति श्रुतिः । ब्रह्मणः कराज्जाते मरीच्याद्यन्तर्गते मुनिभेदे, वैश्वदेवभेदे, इन्द्रियेषु च ।

**क्रतुदोषनुद्** पु० क्रतूनामिन्द्रियाणां दोषं नुदति क्विप् । प्राणायामे "दह्यन्ते ध्मायमानानां धातूनाञ्च यथा मलाः । प्राणायामैस्तथा दोषाः प्रशम्यन्तीन्द्रियगं च"इत्युक्तेस्तस्येन्द्रियदोषनाशकत्वम् ।

**क्रतुद्विष्** पु० क्रतुं द्वेष्टि द्विष-क्विप् । असुरे, नास्तिके च ।

**क्रतुध्वंसिन्** पु० क्रतुं दक्षयज्ञं ध्वंसयति ध्वन्स-णिच्-णिनि । शिवे । [दैत्ये ।

**क्रतुभुज्** पु० क्रतुं यज्ञे दत्तहविरादिकं भुङ्क्ते भुज-क्विप् ।

**क्रतुराज** पु० क्रतूनां राजा टच्समा० । राजसूययज्ञे ।

**क्रथ** वधे भ्वा० पर० सक० सेट् घटा० । क्रथति अक्रथीत्-अक्राथीत् । क्रथयति-ते । [यत्-त ।

**क्रथ** प्रतिहर्षे चु० उभय० सक० सेट् क्राथयति-ते अचिक्र-

**क्रथन** न० क्रथ वधे ल्युट् । मारणे छेदने च राज शाखांशकूट क्रथनपटुरिति प्रबोधचन्द्रोदयः । संज्ञायां कन् उष्ट्रे ।

**क्रद** रोदने वैकल्ये अक० आह्वाने सक० भ्वा० पर० सेट् ।

क्रन्दति अक्रन्दीत्। [अक्रदिष्ट क्रदयति।
क्रद वैकल्ये भ्वा० आत्म० अक० सेट् घट दि०। क्रदते
क्रन्द निरन्तरशब्दकरणे चुरा० अक० उभ० सेट्। प्रायेणाङ्-
पूर्व्वः आक्रन्दयति ते आचक्रन्दत् त।
क्रन्दन न० क्रदि-भावे ल्युट्। शोकादिनाश्रुपातने। [क्रपयति
क्रप कृपायाम् भ्वा०अक०आत्म०सेट् घटादि। क्रपते अक्रपिष्ट
क्रम गतौ वा भ्वा० पक्षे दिवा० पर० सक० सेट्। क्रामति
क्राम्यति अक्रमीत् क्रमित्वा क्रान्त्वा।
क्रम पु० क्रम-घञ्। नियतपूर्व्वापरभावरूपे विधाने,अनुक्रमे,
शक्तौ, आक्रमणे, पादे च।
क्रमि पु० क्रम-इन्। कृमिपदार्थे।
क्र(क्रि)मिघ्न पु० क्रमिं हन्ति हन-क। विडङ्गे।
क्रमिज क्रमेर्जायते जन-ड। अगुरुचन्दने। लाक्षायां स्त्री०।
क्रमु पु० क्रम-उ। गुवाके (सुपारी)।
क्रमुक पु० क्रम-उन् ततः संज्ञायां कन्। भद्रमुस्तके ब्रह्म-
दारुणि, गुवाके, पट्टिकालोध्रे च। [कन्। तत्रैवार्थे।
क्रमेल पु० क्रामति क्रम-विच् एलति अच् कर्म०। उष्ट्रे। स्वार्थे
क्रय पु० क्री-भावे अच्। मूल्यदानेन द्रव्यग्रहणे।
क्रयलेख्य न० ६त० "क्षेत्रं चैवादिकं क्रीत्वा तुल्यमूल्याक्षरा-
न्वितम्। पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" इत्यु-
क्तलक्षणे क्रयसूचकपत्रे (कवाला)।
क्रयविक्रयिक पु० क्रयविक्रयाभ्यां जीवति ठन्। वणिग्जने
क्रयिक पु० क्रयेण जीवति ठन्। वणिग्जने।
क्रय्य त्रि० क्रयाय क्रेतारः क्रीणीयुरितिबुद्ध्या प्रसारितम् क्री-
यत् क्रय्यस्तदर्थे इति नि०। क्रयनिमित्तं हट्टे प्रसारिते द्रव्ये
क्रव्य न० क्लव-यत् रलयोरेकत्वात्। आममांसे।
क्रव्याद् पु० क्रव्यमत्ति अद-क्विप्। राक्षसे, श्मादौ च।
क्रव्याद पु० क्रव्यमत्ति अद-अण्। राक्षसे, सिंहे, श्येने, शव-
मांसभक्षकेऽग्नौ 'क्रव्यादोऽस्तभक्षणे' इत्यग्निनामभेदे श्रवणात्
क्रशिमन् पु० कृशस्य भावः इमनिच्। कृशत्वे।
क्रान्त पु० क्रम-क्त। अश्वे। आक्रान्ते अतिक्रान्ते व्याप्ते संक्रान्ते
च त्रि०। [अतीतद्रष्टरि।
क्रान्तदर्शिन् त्रि० क्रान्तमतीतं पश्यति णिनि। पण्डिते
क्रान्ति स्त्री०क्रम-क्तिन्। आक्रमणे, गतौ, खगोलमध्यस्थ-
सूर्य्यगत्यर्थं तिर्य्यग्गोलरेखायाञ्च 'अयनादयनं यावत्
कक्षा तिर्य्यक् तथा परा। क्रान्तिसंज्ञा तया सूर्य्यः सदा
पर्य्येति भासयन्नि'त्युक्तकक्षायामपि।
क्रिमि पु० क्रम-इन् इत्त्वादेः। कृमिशब्दार्थे। [ङीप्

क्रिमिघ्न पु०क्रिमिं हन्ति हन-क। विडङ्गे। सोमराज्यां स्त्री०
क्रिया स्त्री० कृ-भावे श टाप्। आरम्भे,चेष्टायाम्, इन्द्रिय-
व्यापारे, पाकादिशब्दप्रवृत्तिनिमित्ते फलव्यापाररूपे
धातोरर्थे, निष्कृतौ, पूजायाम्, शिक्षायां, चिकित्सायां,
करणे, गर्भाधानादिसंस्कारे, व्यवहारपादविशेषे च।
'सर्व्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिये'ति स्मृतिः।
क्रियापाद: पु० कर्म्म०। व्यवहारे साक्षिलेख्यादिभिः प्रतिज्ञा
तार्थसाधनरूपे तृतीये पादे 'पूर्व्वपक्षः स्मृतः पूर्व्वोद्वितीय
श्चोत्तरः स्मृतः। क्रियापादस्तृतीयः स्यादिति स्मृतिः।
क्रियाफल न० ६त०। 'उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्च
चतुर्विधम्। क्रियाफलं' माङ्करार्थ्या' इत्युक्ते कर्मफले उत्प-
त्त्यादौ, यागादिजन्ये पुण्यापुण्यादौ च।
क्रियायोग पु० योगार्थं क्रियमाणे देवाराधनादौ। 'यस्तु
वाह्यार्थसंयोगः क्रियायोगः स उच्यते। प्रधानं कारणं
योगो मुक्तेर्द्धं निवरोत्तम!। क्रियायोगस्तु यागस्य कारणं
परमं मतमि'ति पुराणम्।
क्रियासमभिहार पु० सम्+अभि+हृ-घञ्। ६त०। क्रि-
यायाः पौनःपुन्ये। क्रियासमभिहारेण विराध्यन्तं क्षमेत क
इति माघः। [क्रीणाति क्रीणीते अक्रैषीत् अक्रेष्ट।
क्री क्रये (मूल्यदानेन द्रव्यग्रहणे) क्र्यादि० उभ०सक०अनिट्।
क्रीड़ खेलने भ्वा० पर० अक० सेट्। क्रीडति अक्रीड़ीत्।
क्रीड़न न० क्रीड़-ल्युट्। परीहासे, क्रीड़ायाञ्च।
क्रीड़ा स्त्री० क्रीड-अ। परीहासे खेलने च।
क्रीत पु० क्री-क्त। द्वादशपुत्रान्तर्गते 'क्रीणीयात् यस्त्वपत्यार्थं
मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्ये'त्युक्ते पुत्रभेदे।
कृतक्रये वस्तुमात्रे त्रि०।
क्रीतानुशय पु०क्रीते अनुशयः दुष्टत्वादिना पश्चात्तापो यत्र।
अष्टादशविवादेषु 'क्रीत्वा मूल्येन यः पण्यं क्रेता न
बहु मन्यते। क्रीतानुशय इत्येतद्विवाद पदमुच्यते' इत्युक्ते
विवादभेदे।
क्रुड वाल्ये दिवा० आ० अक० सेट्। क्रुड्यते। अक्रोडिष्ट।
क्रुञ्च् पु० क्रुन्च-क्विप्। (कोंच) बकभेदे। जातित्वे टाप् क्रुञ्चा।
क्रुञ्च पु०क्रुन्च कर्मणि घञ्। क्रौञ्चपर्व्वते। अच् टाप्। वीणाभेदे
क्रुध्(धा) स्त्री० क्रुध-सम्पदादित्वात् क्विप् वा टाप्। कामा-
प्राप्तिहेतुके चित्तवृत्तिभेदे कोपे।
क्रुध कोपे दिवा० पर० अक० सोपसर्गः सक० अनिट्।
क्रुध्यति भृत्यमभिक्रुध्यति अक्रुधत्। [क्षीत्
क्रुन्च गतौ, वक्रणेऽल्पीभावे च सक० पर० सेट्। क्रुञ्चति अक्रु-

क्रुन्थ क्लेशे शब्दे च क्र्या०पर० अक० सेट् । क्रुन्थति अक्रुन्थीत्

क्रुश रोदने आक्रोशे च सक० भ्वा० पर०अनिट् । क्रोशति अक्रुक्षत् । [आहूते त्रि० ।

क्रुष्ट क्रुश-भावे क्त । रोदने, रवे च । आङ्+कर्म्मणि क्त ।

क्रूर त्रि०कृत-रक् धातोः क्रू । कठिने,निर्दये,परद्रोहकारिणि, नृशंसे, उष्णे च । रक्तकरवीरे श्येनखगे, कङ्कपक्षिणि ज्योतिषोक्ते रविमङ्गलमन्दराहुकेतुरूपे ग्रहे, पूर्व्वात्रय-भरणीमघारूपे नक्षत्रे च पु० ।

क्रूरराविन् पु० क्रूरस्वरं रौति रु-णिनि । द्रोणकाके ।

क्रेय त्रि० क्री-यत् । क्रेतव्ये वस्तुमात्रे ।

क्रोड़ पु० न० क्रुड-घञ् । अङ्के (कोल) । राक्षसे शूकरे च पु० । अश्वानामुरसि भुजान्तरे च स्त्री० टाप् । वाराहीकन्दे पु०स्त्री० ।

क्रोडाङ्घ्रि पु० क्रोड़े अङ्घ्रिर्यस्य । कच्छपे ।

क्रोध पु० क्रुध-घञ् । परापकाराय चित्तवृत्तिभेदे, परानिष्टाभिलाषे, अनिष्टविषयद्वेषहेतुके चित्तवृत्तिभेदे च ।

क्रोधज पु० क्रोधात् जायते जन-ड । मोहे ‘क्रोधात् भवति संमोह इति गीता । ‘पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक इत्युक्ते व्यसनभेदे च ।

क्रोधन पु० क्रुध-ल्यु । कोपयुक्ते, कोपशीले, तन्त्रोक्तेषु अष्टसु भैरवेषु भैरवभेदे, षष्टिसंवत्सरमध्ये ज्योतिषोक्ते ‘रोगोमरणदुर्भिक्षं विरोधो बहुसङ्कुलः । क्रोधने विषमं सर्व्वमित्युक्तफलके वत्सरभेदे च ।

क्रोश पु० क्रुश-घञ् । रोदने आह्वाने च । अष्टसहस्रहस्तमाने (कोश) ‘क्रोशः सहस्रद्वितयेन तेषा’मिति लीलावती । मतान्तरे चतुःसहस्रहस्तमाने । [स्त्रियां क्रोष्ट्री ।

क्रोष्टु पु० क्रोशति क्रुश-तुन् । शृगाले । स्वार्थे कन् अत्रैवार्थे ।

क्रोष्टुकपुच्छिका स्त्री० क्रोष्टुकस्य पुच्छमिव पर्णान्यस्याः । (चाकुलिया) पृश्निपर्ण्याम् । [शृगाल्यां, लाङ्गल्याञ्च ।

क्रोष्ट्री स्त्री०क्रुश-तुन् तृच्वत् ङीप् । भूमिकूष्माण्डे, विदार्य्यां,

क्रौञ्च पु० क्रुञ्च+स्वार्थे अण् । (कोंचवक) वकभेदे कुररपक्षिणि, दैत्यभेदे, दधिसमुद्रेणावृते द्वीपभेदे, पर्व्वतभेदे च ।

क्रौञ्चदारक(ण) पु० क्रौञ्चं दैत्यं पर्व्वतं वा दारयति दृ-णिच् ण्वुल् युच् वा । कार्त्तिकेये स हि ‘क्रौञ्चः क्रौञ्चो हतो दैत्यः क्रौञ्चाद्रौ हेमकन्दरे । स्कन्देन युद्धा सुचिरं चित्रमायी सुमायिना । स शैलस्तस्य दैत्यस्य ख्यातश्चित्रेण कर्म्मणा । केतुताभगमत्तस्य नाम्ना क्रौञ्चः स उच्यते इति पुराणम् ।

क्रौञ्चादन न० क्रौञ्चानां वकभेदानामदनं भक्ष्यम् । मृणाले, (घेंचु) चिञ्चोटके, पिप्पल्याञ्च । पद्मबीजे स्त्री० ।

क्लथ वधे वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् घटादि० । क्लथयति ते क्लथति अचिक्लथत् अक्लाथीत् अक्लथीत् ।

क्लद रोदने अक०आह्वाने सक०इदित्पर०भ्वा०सेट् । क्लन्दति अक्लन्दीत् । [अक्लदिष्ट क्लदयति ते ।

क्लद वैकल्ये दि० आत्म० अक० सेट् घटादि० । क्लद्यते

क्लद रोदने भ्वा० उभ० इदित् अक० सेट् । क्लन्दति ते अक्लन्दीत् अक्लन्दिष्ट । [अचिक्लपत्-त ।

क्लप अव्यक्तवाक्ये चुरा० उभ०अक० सेट् घटा० । क्लपयति-ते

क्लम ग्लानौ दिवा०पर०अक०सेट् । क्लाम्यति अक्लमीत् । क्लमित्वा-क्लान्त्वा । क्लान्तः । [मीत् । क्लमित्वा क्लमितः ।

क्लम ग्लानौ भ्वा० पर० अक० सेट् । क्लामति अक्लमत् अक्ल-

क्लम पु० क्लम-घञ् अवृद्धिः । आयासे, श्रमे च । [क्लूत्वा ।

क्लमथ पु० क्लम-अथच् । आयासे । [विट-क्लवयति क्लवित्वा ।

क्लव भये दिवा० आत्म०अक० सेट् घटादि० । क्लव्यते अक्ल-

क्लान्त त्रि० क्लम-क्त । श्रमार्त्ते । [अक्लेदीत्-अक्लैवीत् ।

क्लिद आर्द्रीभावे दिवा०पर०अक० वेट् । क्लिद्यति । अक्लिदत्-

क्लिद रोदने इदित् भ्वा०उभ०अक०सेट् । क्लिन्दति अक्लिन्दीत्

क्लिन्न त्रि० क्लिद-क्त । आर्द्रे ।

क्लिश उपतापे दि० आत्म० अक० सेट् । क्लिश्यते । अक्लेशिष्ट क्लिशित्वा । क्लिशितः—क्लिष्टः । [अक्लिक्षत्

क्लिश विघाते क्र्या० पर० सक० वेट् । क्लिश्नाति अक्लेशीत्-

क्लिशित त्रि०क्लिश-उपतापे क्त । क्लेशयुक्ते वा । इडभावे क्लिष्टोऽप्यत्र

क्लीतक न० क्लीव-क्विप् नि० वलोपः क्लीं तकति हसते अच् मधुके (यष्टिमधु) । [नील्यामोषधौ ।

क्लीतकिका स्त्री० क्लीतकं कार्य्यत्वेनास्त्यस्याः ठन् टाप् ।

क्लीव(ब) मदे अप्रागल्भ्ये च भ्वा०आत्म०अक०सेट् । क्लीव(ब)ते अक्लीवि(बि)ष्ट । [निरुत्साहे च ।

क्लीव(ब) पु०क्लीव(ब)-अच् । नपुंसके,विक्रमहीने,धर्म्मकत्वादौ,

क्लु गतौ भ्वा० आत्म० सक० सेट् । क्लवते अक्लविष्ट ।

क्लेद पु० क्लिद-घञ् । पूतीभावे, चन्द्रे च ।

क्लेश वधे उपतापे भ्वा०आत्म० सक० सेट् । क्लेशते अक्लेशिष्ट

क्लेश पु० क्लिश-घञ् । दुःखे, रोगादौ, योगशास्त्रोक्तेषु अविद्यास्मितादिषु पञ्चसु । [कौन्तेये’ति गीता ।

क्लैव्य(ब्य) न० क्लीव(ब) भावे-ष्यञ् । निर्वीर्य्यत्वे ‘मा क्लैव्यं गच्छ

क्लोमन् न० क्लुङ् गतौ मनिन् । ‘अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहि शिरामूलं तृष्णास्थानं मतं

वृधै'रित्युक्ते वाह्लीमध्ये स्थानभेदे । [नेति चान्नार्थे ।
**क्व** अव्य० किम्+अ कादेशः । कुत्रेत्यर्थे चिन्तनयोः । क्वचित् क्व-
**क्वण** शब्दे भ्वा०पर०अक०सेट् । क्वणति अक्वाणीत् अक्वणीत्
**क्वाण** पु० क्वण-अण् । वीणायाः शब्दे, ध्वनिमात्रे च ।
**क्वथ** निष्पचने भ्वा०पर०सक०सेट् । क्वथति अक्वथीत् । [च
**क्वथित** त्रि० क्वथ-क्त । अतिशयपक्वे व्यञ्जनादौ, दशमूलपाचनादौ
**क्वाथ** पु० क्वथ-घञ् । दुःखे, द्रव्यमात्रस्यातिशये पाके ।
**क्वाथोद्भव** न० क्वाथादुद्भवति अच् । तुत्थाञ्जने ।
**क्वेल** चालने गतौ च भ्वा०पर०सक०सेट् । क्वेलति अक्वेलीत् ।
क्वेलयति अचिक्वेलत् । [अचक्षञ्जत् त ।
**क्षज** कृच्छ्रजीवने इदित् चुरा० उभ० अक० सेट् । क्षञ्जयति ते
**क्षज** वधे भ्वा०आ०सक०सेट् घटा० । क्षजते अक्षजिष्ट । क्षजयति
**क्षञ्ज** गतौ दाने च भ्वा०आत्म० इदित् सक० सेट् । क्षञ्जते
अक्षञ्जिष्ट । [अक्षणिष्ट ।
**क्षण** वधे तना०उभ०सक०सेट् । क्षणोति क्षणुते । अक्षणीत्
**क्षण** पु० क्षणोति दुःखम् क्षण-अच् । उत्सवे, अवसरे, मध्ये,
दशपलपरिमिते काले, निमेषक्रियाचतुर्थभागे च ।
**क्षणद** पु० क्षणं यान्त्रिकादिशुभं तमुत्सवं वा ददाति दा-क ।
गणके । जले न० । रात्रौ स्त्री० ।
**क्षणप्रभा** स्त्री० क्षणं व्याप्य प्रभा यस्याः । विद्युति ।
**क्षणभङ्ग** पु० क्षणात् भङ्गो यस्य । ऊर्णनाभे, सर्व्वेषां सावय-
वानां प्रतिक्षणमवयववैलक्षण्यापादकस्यावयवभङ्गस्य स्वी-
कारो यस्मिन् मते तादृशे बौद्धादीनां मते ।
**क्षणभङ्गुर** त्रि० क्षणात् भज्यते भन्ज-कर्मकर्त्तरि घुरच् ।
क्षणैकनाश्ये वस्तुमात्रे ।
**क्षणिक** त्रि० क्षणं व्याप्नोति ठन् । एकक्षणमात्रस्थायिनि
पदार्थे । येषां प्रथमक्षणे उत्पत्तिः द्वितीयक्षणे स्थितिस्तृ-
तीयक्षणे नाश इति ते क्षणिका यथा बुद्ध्यादय इति तार्कि-
काः । कार्य्यकरणसमर्थानां सत्पदार्थानामाद्यक्षणे उत्प-
त्तिर्द्वितीयक्षणे नाश इति बौद्धाः 'यत् तत्सत् क्षणिक'मित्युक्तेः
**क्षत** न० क्षण-भावे क्त । स्रवद्रक्तपूयादौ व्रणे । कर्म्मणि क्त ।
व्रणयुक्ते त्रि० ।
**क्षतघ्न** पु० क्षतं हन्ति हन-क । (कुकुरशोंघा) क्षुपभेदे । लाक्षायाञ्च
**क्षतज** न० क्षतात् जायते जन-ड । रुधिरे ।
**क्षति** स्त्री० क्षण-क्तिन् । हानौ, अपचये क्षये च ।
**क्षत्तृ** पु० क्षद-तृच् । शूद्रात् क्षत्रियायामुत्पन्ने सङ्कीर्णवर्णे,
प्रतीहारे, सारथौ, भुजिष्यापुत्रे, नियुक्ते, वेधसि च ।
**क्षत्र** पु० क्षण-क्विप् क्षत् ततस्त्रायते त्रै क । क्षत्रिये 'क्षतात्
किल त्रायत इत्युग्रः क्षत्रस्य शब्द इति रघुः ।
**क्षत्रबन्धु** पु० क्षत्रस्य बन्धुरेव तत्कर्मकर्तृत्वाभावात् न तत्-
कर्त्ता । क्षत्रकार्य्याक्षमे निन्द्ये क्षत्रिये ।
**क्षत्रिय** पु० क्षत्रस्यापत्यं घ । क्षत्रजाति राजन्ये 'क्षतजं सेवते
कर्म्म वेदाध्ययनसंयुतम् । दानादानरतिर्भूतः स वै
क्षत्रिय उच्यते' इत्युक्ते वर्णभेदे ।
**क्षद** संवेषणे सौत्र०आत्म०सक०अनिट् । क्षदते अक्षत्त ।
**क्षप** क्षेपे अद०चुरा०उभ०सक०सेट् । क्षपयति ते अचक्षपत् त
**क्षप** सहने चुरा० इदित् उभ० सक० सेट् । क्षम्पयति ते
अचक्षम्पत् त ।
**क्षप** प्रेरणे चुरा०उभ०सक०सेट् । क्षपयति ते अचिक्षपत् त
**क्षपणक** पु० क्षपयति विषयरागं क्षप-युच् संज्ञायां कन् ।
बौद्धसंन्यासिनि । एकः क्षपणक ! शाकाङ्क्षीत्युद्भटः ।
**क्षपा** स्त्री० क्षपयति चेष्टाम् क्षै-णिच् पुक् च अच् । रात्रौ ।
**क्षपाकर** पु० क्षपायां रात्रौ करो दीधितिर्यस्य । चन्द्रे स हि
रात्रौ सूर्य्यतेजसा दीप्यते ।
**क्षपाट** पु० क्षपायामटति अट-अच् । राक्षसे 'ततः क्षपाटैः
पृथुपिङ्गलाक्षै'रिति भट्टिः । [क्षान्तः ।
**क्षम** सहने भ्वादि०आत्म०सक०वेट् । क्षमते अक्षमिष्ट अक्षंस्त
**क्षम** सहने दिवा० पर०सक०सेट् शमादि० । क्षाम्यति 'कामं
क्षाम्यतु यः क्षमीति माघः । अक्षमीत् ।
**क्षम** न० क्षम-अच् । युक्ते । शक्ते, हिते, क्षमायति च त्रि०
**क्षमता** स्त्री० क्षम+तल् । योग्यतायां, शब्दनिष्ठे अर्थप्रकाशन
सामर्थ्ये च 'क्षमता च लिङ्गमि'ति मीमांसा ।
**क्षमा** स्त्री० क्षम-अङ् । तितिक्षायाम्, 'बाह्ये वाध्यात्मिके चैव
दुःखे चोत्पादिते क्वचित् । न कुप्यति न वा हन्ति सा
क्षमा परिकीर्त्तिता,' 'आक्रुष्टोऽभिहतो वापि नाक्रोशेन्न
च हन्ति वा । अदुष्टैर्वाङ्मनःकायैस्तितिक्षोः सा क्षमा
मतेति चोक्त लक्षणायाम् चित्तवृत्तौ, भूमौ च ।
**क्षमिन्** त्रि० क्षम-घिनुण् तच्छीलार्थे । क्षमावति । 'कामं क्षाम्य
तु यः क्षमीति माघः ।
**क्षय** पु० क्षि-अच् । नाशे, ह्रासे, अपचये, कासरोगभेदे च
गृहे, विरामे, हिंसायाम् ६०वर्षमध्ये 'देशभङ्गश्च दुर्भिक्षं
क्षये संक्षीयते प्रजा'इत्युक्तफलके वत्सरभेदे, रविसंक्रान्ति
द्वययुतशुक्लप्रतिपदादिके अमावास्यान्ते मासे 'द्विसंक्रान्त-
मासः क्षयः कार्त्तिकादौ' । 'सौराद्यदा चान्द्रमसो गरीयान्
मासो द्विसंक्रान्तिरसौ क्षयाख्य' इत्युक्ते मासे च ।
**क्षयथु** पु० क्षि-अथु (कासरोगे) ।

**क्षयनाशिनी** स्त्री० क्षयं कासं नाशयति नश-णिच-णिनि। जीवन्तीवृक्षे। [समा०। कृष्णपक्षे।
**क्षयपक्ष** पु० क्षयस्य (चन्द्रस्य क्षयार्थः) पक्षः अवघाणादिवत्
**क्षर** संचलने भ्वा० पर०अक०सेट्। क्षरति अक्षारीत्।
**क्षर** पु० क्षर-अच्। मेघे। 'कार्य्यकारणरूपन्तु नश्वरं क्षरमुच्यते' इत्युक्ते नश्वरे त्रि०। 'क्षरः सर्व्वाणि भूतानी'ति गीता। जले न०। [यति ते क्षलति अचिक्षलत् त अक्षालीत्।
**क्षल** शोधने वा चु०उभ० पक्षे भ्वा०पर०सक० सेट्। क्षाल
**क्षव** पु० क्षु-अप्। क्षुते, (हांचि) राजिकाभेदे च।
**क्षवक** पु० क्षव+संज्ञायां कन्। राजिकाभेदे, अपामार्गे च।
**क्षवथु** पु०क्षु-अथुच्। क्षुते (हांचि) [हि क्षुतं जायते।
**क्षवपत्रा** स्त्री०क्षवः पत्रेषु यस्याः। द्रोणपुष्प्याम् तत्पत्राघ्राणे
**क्षात्त्र** न०क्षत्त्रस्य कर्म्म भावो वा-अण्। 'शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रकर्म्म स्वभावज'मित्युक्ते क्षत्रियकर्म्मणि 'क्षात्र'. द्विजत्वञ्च परस्परार्थमिति भट्टिः। [सामर्थ्ये तत्प्रतीकारपराङ्मुखे।
**क्षान्त** त्रि० क्षम-क्त। सहिष्णौ केनचित्पीडनेऽपि सति
**क्षान्ति** स्त्री० क्षम-क्तिन्। क्षमायाम् सामर्थ्ये सत्यप्यपकारिणोऽप्यपकाराचिकीर्षायाम्।
**क्षाम** त्रि० क्षै-क्त तस्य म। क्षीणे, दुर्बले च।
**क्षार** पु० क्षर-ण। (खार) इति ख्याते रसे, लवणे, क्षारजाते काचे, भस्मनि, गुडे, धूर्त्ते च। टङ्कणे (सोहागा) यवक्षारे, विड्लवणे, सर्ज्जिकाक्षारे च न०। [पिटके च
**क्षारक** पु०क्षर-ण्वुल्। (जालि) नवकलिकावृन्दे पक्षिमत्स्यादि
**क्षारदला** स्त्री० क्षारो दलेष्वस्याः। क्षुद्रवास्तूकशाके।
**क्षारभूमि** स्त्री० क्षारयुक्ता भूमिः। अम्बुधिसमीपस्थभूमौ किमाश्चर्य्यं क्षारभूमौ माघदा यमदूतिकेत्युद्भटः।
**क्षारमृत्तिका** स्त्री० क्षारसंयुक्ता मृत्तिका। उषरस्थाने।
**क्षारित** त्रि० क्षर-णिच्-क्त। अपवादग्रस्ते,आप्तदोषे,स्राविते च
**क्षालित** त्रि० चु० क्षल-क्त। निर्णिक्ते कृतप्रक्षालने च।
**क्षि** क्षये भ्वा० पर० अक० अनिट्। क्षयति अक्षैषीत्।
**क्षि** हिंसायां स्वा० पर० सक० अनिट्। क्षिणोति क्षिणुतः क्षिण्वः क्षिणुमः। अक्षैषीत्। [अक्षैषीत्।
**क्षि** गतौ सक० निवासे अक० तुदा० पर० अनिट्। क्षियति
**क्षि** हिंसायां क्र्या० पर० सक० अनिट्। क्षिणाति अक्षैषीत्।
**क्षिण** हिंसायां तना० उभ० सक० सेट्। क्षिणोति क्षिणुते अक्षेणीत् अक्षेणिष्ट।
**क्षिति** स्त्री० क्षि-निवासे आधारे क्तिन्। भूमौ, भावे क्तिन् निवासे। क्षि-क्षये भावे-क्तिन्। क्षये,रोचनाख्यगन्धद्रव्ये च।
**क्षितिधर** पु० क्षितिं धारयति धृ-णिच् अच् ह्रस्वः। पर्वते कूर्म्मवासुकिदिग्गजेषु च।
**क्षितिपति** पु० ६त०। राजनि नृपतौ एवं क्षितीशादयोऽप्यत्र
**क्षितिरुह** पु० रोहति रुह-क ७त०। वृक्षे।
**क्षितिवर्द्धन** पु० क्षितिं वर्द्धयति वृध-णिच् ल्यु। शवे 'करोमि क्षितिवर्द्धन'मिति भट्टिः। [क्षिप्।
**क्षिप** प्रेरणे तुदा० उभ० सक० अनिट्। क्षिपति-ते अक्षैप्सीत्
**क्षिप** नोदने दिवा० पर० सक० अनिट्। क्षिप्यति अक्षैप्सीत्।
**क्षिपणि(णी)** स्त्री० क्षिप-अनि वा ङीप्। नौकादण्डे (दाड) शस्त्रे, वडिशे च।
**क्षिप्त** त्रि० क्षिप-क्त। प्रेरिते, त्यक्ते, विकीर्णे अवज्ञाते, रागद्वेषादिवशाद्विषयासक्ते चित्ते, वायुरोगग्रस्ते च।
**क्षिप्र** न० क्षिप-रक्। ज्योतिषोक्ते नक्षत्रभेदे शीघ्रे च तद्वति त्रि०
**क्षिप्रकारिन्** त्रि० क्षिप्रं करोति कृ-णिनि। (चालाक) शीघ्रक्रियाकारके।
**क्षिप्रपाकिन्** पु० क्षिप्रं शीघ्रं पच्यते पिणुन्। (गन्धभादिलिया) द्रुमभेदे। शीघ्रपाकवति त्रि०।
**क्षिव** निरसने भ्वा० पर० सक० सेट्। क्षेवति अक्षेवीत्।
**क्षिव** निरसने दिवा० पर० सक० सेट्। क्षीव्यति अक्षेवीत्। क्षेविता क्ष्यूत्वा। [अक्षेष्ट।
**क्षी** हिंसायां भ्वा० उभ० सक० अनिट्। क्षयति-ते अक्षैषीत्
**क्षीज** अव्यक्तशब्दे भ्वा०पर०अक० सेट्। क्षीजति अक्षीजीत्
**क्षीण** त्रि० क्षि-क्त। दुर्बले,नाशे च 'चतुर्दश्यष्टमे यामे क्षीणो भवति चन्द्रमा इति स्मृतिः।
**क्षीव(व)** मदे भ्वा०आत्म०अक० सेट् क्षीव(व)ति अक्षीवी(वी)त्
**क्षीव(व)** त्रि० क्षीव(व)-क्त नि०। मत्ते। [जले च।
**क्षीर** न० क्षी-घस्मादिलात् क्विप् तामीरयति ईर-अण्। दुग्धे
**क्षीरकण्ठ** पु० क्षीरं कण्ठे यस्य। स्तनन्धये बालके। [क्षाद्य
**क्षीरकन्द** पु०क्षीरमिव कन्दोयस्य। क्षीरविदार्य्याम्, क्षीरव
**क्षीरकाण्डक** पु० क्षीरान्वितं काण्डं यस्य कप्। स्नुहीवृक्षे, अर्कवृक्षे च।
**क्षीरदल** पु० क्षीरं दले यस्य। अर्कवृक्षे।
**क्षीरनाश** पु० क्षीरं नाशयति नश-णिच्-अण्। आक्रोटवृक्षे (सेओड़ा) तत्पत्रादिनिर्यासयोगेन शीघ्रमेव दुग्धं दधिवत् घनीभवतीति तस्य दुग्धनाशकता।
**क्षीरपर्णी** स्त्री० क्षीरं पर्णे यस्याः ङीप्। अर्कवृक्षे।
**क्षीरवल्ली** स्त्री० क्षी रा क्षीरवती वल्ली। क्षीरविदार्य्याम्

स्वार्थे कन् अणोह्रस्वः क्षीरवल्लिका अत्रैवार्थे ।
क्षीरविकृति स्त्री० ६त० 'दध्नासह पयः पक्वं यत् स्यात् सा
दधिकूर्चिकेत्युक्तायाम् । (क्षीरसा) दधिकूर्चिकायाम् ।
क्षीरवृक्ष पु० क्षीरप्रधानो वृक्षः । उडुम्बरे राजादन्याम् ।
क्षीरशर पु० क्षीरं शृणाति शॄ-अच् । (छाना) आमिक्षायाम् ।
क्षीरशाक न० 'अपक्वमेव यन्नष्टं क्षीरशाकं हि तत् पयः'
इत्युक्ते नष्टे दुग्धे राजादने च । भूकुष्माण्डे स्त्री० ।
क्षीरशुक्ल पु० क्षीरमिव शुक्लः । शृङ्गाटके (पानिफल)
क्षीरसार पु० क्षीरस्य सारः । नवनीते 'क्षीरसारमपनीये'त्यु
क्तेः (छाना) आमिक्षायाञ्च । [(फेनी) शर्कराफेने ।
क्षीरहिण्डीर पु० ६त० । दुग्धफेने । क्षीरमिव हिण्डीरः
क्षीराब्धि पु० क्षीरस्य दुग्धरसस्याब्धिः । क्षीरसमुद्रे एवं
क्षीरसागरादयोऽप्यत्र । [ स्त्री० ।
क्षीराब्धिज पु० क्षीराब्धौ जायते जन-ड । चन्द्रे । लक्ष्म्यां
क्षीरावी स्त्री० क्षीरमवति अव-अण् ङीप् । दुग्धिकायाम् (दुधी)
क्षीरिका स्त्री० क्षीर+अस्त्यर्थे ठन् (क्षीरा) राजादन्याम् ।
क्षीरिणी स्त्री० क्षीर+अस्त्यर्थे इनि । तिक्तदुग्धायां पीत-
दुग्धायां च क्षीरलतायाम् ।
क्षीरिन् पु० क्षीर+इनि । स्नुह्याम् वटे, प्लक्षे, उडुम्बरे,
अर्कवृक्षे, राजादने, सोमलतायाम्, स्थालीवृक्षे च ।
क्षीरिवृक्ष पु० कर्म्म० । क्षीरयुक्तेषु न्यग्रोधाश्वत्थोडुम्बरपारिश-
प्लक्षाख्येषु पञ्चसु वृक्षेषु ।
क्षीरोद पु० क्षीरमुदकमस्य उदकस्योदादेशः । क्षीरसमुद्रे ।
क्षु क्षुतौ अदा० पर० अक० सेट् । क्षौति अक्षावीत् चुक्षाव ।
क्षुतः । क्षुत्वा । क्षवथुः । [दुर्गम'मिति माघः ।
क्षुण्ण त्रि० क्षुद-क्त । अभ्यस्ते, विहते च 'अभीक्ष्णमक्षुण्णतयाति-
क्षुत् स्त्री० क्षु-संपदा० क्विप् तुक् च । (हांचि) क्षुते ।
क्षुत न० क्षु-क्त । नासातः वायुनिःसरणजे शब्दे । (हांचि)
क्षुद पेषणे रुधा० उभ० सक० सेट् । क्षुणत्ति क्षुन्ते । अक्षु-
दत् अक्षोदीत् अक्षोदिष्ट । ]मलग्राहिणि च
क्षुद्र त्रि० क्षुद-रक् । नीचे, कृपणे, क्रूरे, दरिद्रे, अल्पे,
क्षुद्रकण्टकी स्त्री० क्षुद्रं कण्टकं यस्याः ङीष् । वृहत्याम् ।
क्षुद्रकण्टिका क्षुद्रं कण्टकं यस्याः टाप् अत इत्त्वम् ।
कण्टकारिकालतायाम् ।
क्षुद्रकम्बु पु० कर्म्म० । शम्बूके । [(घुङ्गुर)
क्षुद्रघण्टिका स्त्री० घण्टेव कन् घण्टिका कर्म्म० । किङ्किण्याम्
क्षुद्रजन्तु पु० कर्म०। 'क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव वा ।
शतं वा प्रसृतौ येषां केचिदा नकुलादपी'त्युक्ते स्वल्पे सत्त्वे ।
क्षुद्रजम्बू(म्बु) स्त्री० कर्म० । भूमिजम्ब्वाम् ।
क्षुद्रजीरक न० कर्म० । कणजीरके, सुगन्धे च ।
क्षुद्रधात्री स्त्री० कर्म० । कर्कटवृक्षे ।
क्षुद्रधान्य न० कर्म० । कङ्गुप्रभृतौ तृणधान्ये ।
क्षुद्रपत्रा स्त्री० क्षुद्रं पत्रं यस्याः टाप् । चाङ्गेर्याञ्च (चुको
पालङ्ग) । ङीप् । वचायाम् ।
क्षुद्रपनस पु० कर्म० । लकुचे (मांदार) ।
क्षुद्रफल पु० क्षुद्रं फलमस्य । जीवनवृक्षे । कण्टकार्य्याम्
अग्निदमन्यां, भूमिजम्ब्वाञ्च स्त्री० टाप् ।
क्षुद्रभण्टाकी स्त्री० कर्म० । वृहत्याम् ।
क्षुद्रमुस्ता स्त्री० कर्म० । कसेरुकन्दे ।
क्षुद्रवार्त्ताकिनी स्त्री० कर्म० । कण्टकार्य्याम् ।
क्षुद्रवार्त्ताकी स्त्री० कर्म० । वृहत्याम् ।
क्षुद्रशङ्ख पु० कर्म० । शम्बूके । [त्रि०
क्षुद्रशीर्ष पु० क्षुद्रं शीर्षमस्य । मयूरशिखावृक्षे, स्वल्पशीर्षवति
क्षुद्रशुक्ति स्त्री० कर्म० । जलशुक्तिकायाम् । स्वार्थे कन् तत्रैवार्थे
क्षुद्रश्वास पु० कर्म० । स्वल्पकासरोगे ।
क्षुद्रसहा स्त्री० सह-अच् क्षुद्रस्य सहा ६त० । कुद्रपर्ण्यां
मार्ज्जारगन्धायाञ्च ।
क्षुद्रसुवर्ण न० कर्म० । पित्तले । [ह्रस्वे टाप् । अत्रैवार्थे ।
क्षुद्रहिङ्गुली स्त्री० कर्म० । कण्टकार्य्याम् । स्वार्थे कन् अणो
क्षुद्रा स्त्री० क्षुद-रक् । वेश्यायाम्, कण्टकार्य्याम्, सरघायां,
मक्षिकामात्रे, चाङ्गेर्य्याम्, हिंसायां, गवेधुकायाञ्च (गड-
गड़ेधान । [कायाम् ।
क्षुद्राग्निमन्थ पु० कर्म० (छोटगणिआरी) स्वल्पगणिकारि-
क्षुद्राम्लपनस पु० अम्लः अम्लरसः पनसः कर्म० । लकुचे
(डेओ) (मान्दार) । [लङ्क) स्वार्थे कन् तत्रैवार्थे ।
क्षुद्राम्ला स्त्री० अम्ला अम्लरसा कर्म० । चाङ्गेर्य्याम् (चुकोपा-
क्षुद्रेर्वारु पु० कर्म० । गोपालकर्कट्याम् ।
क्षुद्रोडुम्बरिका स्त्री० कर्म० । काकोडुम्बरिकायाम् ।
क्षुध बुभुक्षायां दिवा० पर० सक० अनिट् । क्षुध्यति अक्षुधत् ।
क्षुध्(धा) स्त्री० क्षुध-सम्पादित्वात् क्विप् वा टाप् । भोजनेच्छायाम्
क्षुप पु० क्षु-पक् । ह्रस्वशाखाशिफायुक्ते शाखोटादिद्रुमे,
द्वारकापश्चिमदिक्स्थे पर्व्वतभेदे, राजन्यभेदे च ।
क्षुब्ध पु० क्षुभ-क्त नि० । मन्थनदण्डे । क्षुभिते त्रि० ।
क्षुभ सञ्चलने भ्वा० आत्म० सक० सेट् । क्षोभते अक्षुभत्
अक्षोभिष्ट-क्षुब्धः । क्षुभितः । [अक्षोभीत् । क्षुभितः ।
क्षुभ अङ्गचालने वा दिवा० क्र्या० अक० सेट् । क्षुभ्यति क्षुभ्नाति

क्षुभित त्रि० क्षुभ-क्त । आलोडिते, व्याकुले, भीते च ।
क्षुमा स्त्री० क्षु-मक् । (मसिना) (तिसी) अतस्याम् ।
क्षुर विलेखने तुदा० पर० सक० सेट् । क्षुरति अक्षोरीत् ।
क्षुर पु० क्षुर-क क्षु-रक् वा । नापितास्त्रे पश्वादीनां शफे,(खुर) कोकिलाक्षे, गोक्षुरे, महापिण्डीतके, वाणे च ।
क्षुरक पु० क्षुर-क्वुन् । गोक्षुरे,(गोखुरी) कोकिलाक्षे,तिलकद्रुमे च
क्षुर(रि)कर्म्मन् न० क्षुरस्य,क्षुरिणो वा नापितस्य कर्म० । क्षौरे नखकेशादिकर्त्तने 'क्षुर(रि)कर्म न कुर्व्वीत जन्ममासे च जन्मभे' इति स्मृतिः । [क्षुरभाण्डादयोऽप्यत्र ।
क्षुरधान न० क्षुरोऽधीयतेऽस्मिन् नापितास्त्राधारे (भांड़)
क्षुरधार पु० न० क्षुराणां धारेव शरपत्रधारा यत्र । नरकभेदे ।
क्षुरपत्र पु० क्षुर इव पत्रमस्य । वाणे, क्षुरतुल्यपत्रयुक्ते शरवणादौ त्रि० ।
क्षुरपत्रिका पु० क्षुर इव पत्रं यस्याः । पालङ्क्शाके ।
क्षु(खु)रप्र पु० क्षुरः (खुरः)इव प्रणाति छिनत्ति पृ-क (खुरपो) इति ख्याते घासच्छेदनास्त्रे, तत्तुल्याग्रफलके शरे च ।
क्षुरमर्द्दिन् पु० क्षुरं म्रद्नाति घर्षयति म्रद-णिनि नापिते ।
क्षुरमुण्डिन् पु० क्षुरेण मुण्डयति मुण्ड-णिनि ३त० । नापिते
क्षुराङ्ग पु० क्षुर इवाङ्गमस्य । गोक्षुरे (गोखुरी) ।
क्षुरिणी स्त्री० क्षुर+अस्त्यर्थे इनि ङीप् । वराहक्रान्तायाम् नापितभार्य्यायाञ्च ।
क्षुरिन् पु० क्षुर+इनि । नापिते, पशौ च ।
क्षु(खु)ल्ल त्रि० क्षुद्(खुद्) क्विप् क्षुद्(खुत्) तां लाति ला-क । अल्पे, लघौ, कनिष्ठे च । [पामरे, अल्पे च ।
क्षुल्लक त्रि० क्षुधा लक्यते लक-आस्वादने घञर्थे क । नीचे,
क्षेत्र न० क्षि-ष्ट्रन् । देहे, अन्तःकरणे, इन्द्रिये, 'इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः । इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत् क्षेत्रमिति गीतोक्ते इन्द्रियादिसंघाते, शस्याद्युत्पत्तिस्थाने केदारे, सिद्धस्थाने, कलत्रे मेषादिराशिषु च ।
क्षेत्रज पु० क्षेत्रे जायते जन-ड । 'यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा । स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजो मतः' इत्युक्ते द्वादशविध पुत्रमध्ये पुत्रभेदे । क्षेत्रजातमात्रे त्रि० । गोलिकायाम् श्वेतकण्टकार्य्याञ्च स्त्री० ।
क्षेत्रज्ञ पु० क्षेत्रं देहमात्मत्वेन जानाति ज्ञा-क । 'क्षेत्राण्येतानि शरीराणि तेषाञ्चैव यथासुखम् । आत्मानं वेत्ति संयोगादतः क्षेत्रज्ञ उच्यते' इत्युक्ते जीवात्मनि ।
क्षेत्रपति पु० ६त० । 'रुद्रं क्षेत्रपतिं प्राहुः केचिदग्निमथापरे । स्वतन्त्र एव वा कैश्चित् क्षेत्रस्य पतिरुच्यते' इत्युक्तेषु रुद्रादिषु, क्षेत्रस्वामिमात्रे च क्षेत्रपालादयोऽप्यत्र ।
क्षेत्ररुहा स्त्री० क्षेत्रे रोहति रुह-अच् । वालुकर्कट्याम् ।
क्षेत्राजीव पु० क्षेत्रं शस्योत्पादनभूमिराजीवो यस्य । कृषके
क्षेत्रिक त्रि० क्षेत्र+अस्त्यर्थे ठन् । क्षेत्रस्वामिनि ।
क्षेत्रिन् त्रि० क्षेत्र+अस्त्यर्थे इनि । क्षेत्रस्वामिनि ।
क्षेत्रिय पु० परक्षेत्रे देहान्तरे चिकित्स्यः परक्षेत्र+घ नि० । देहान्तरचिकित्सनीये असाध्ये रोगे, 'दण्डोऽयं क्षेत्रियो येन मय्यपाती'ति भट्टिः परक्षेत्रोत्पन्ने क्षेत्रजपुत्रादौ च क्षेत्रजातमात्रे त्रि० । [विलम्बे, हेलायाञ्च ।
क्षेप पु० क्षिप-घञ् । विक्षेपे, निन्दायाम्, गर्वे, प्रेरणे, लङ्घने,
क्षेपक त्रि० क्षिप-ण्वुल् । क्षेपकर्त्तरि । घञ् स्वार्थे कन् । ग्रन्थादौ ग्रन्थकर्त्तुरन्येन क्षिप्तपाठे, गुच्छे च । लीलावती प्रसिद्धे कुट्टके संयोजनीये अङ्कविशेषे च ।
क्षेपण न० क्षिप-ल्युट् । प्रेरणे, यापने च 'आयुषः क्षेपणार्थञ्च दातव्यं स्त्रीधनं सदे'ति स्मृतिः ।
क्षेपणिका स्त्री० क्षिप्यते चाल्यतेऽनया क्षिप-ल्युट् । नौकाचालनदण्डे, (दाँड़) जालभेदे च (क्षेपला) ।
क्षेपणीय क्षिप-अनीयर् । भिन्दिपालेऽस्त्रे, पाषाणादिके वा क्षेप्यास्त्रे च । क्षेप्यमात्रे त्रि० ।
क्षेपिष्ठ त्रि० अयमेषामतिशयेन क्षिप्रः इष्ठन् । अतिशीघ्रगामिनि, 'वायुर्वै क्षेपिष्ठा देवते'ति श्रुतिः ।
क्षेम न० क्षि-मन् । चोरनामगन्धद्रव्ये । लब्धवस्तुनोरक्षणे पु० न० । कुशले न० । तद्वति त्रि० । मुक्तौ न० ।
क्षेमफला स्त्री० क्षेमाय फलान्यस्याः । उदुम्बरद्रुमे ।
क्षेव सेवने भ्वा० पर० सक० सेट् । क्षेवति अक्षेवीत् ।
क्षै क्षये भ्वा० पर० अक० अनिट् । क्षायति अक्षासीत् ।
क्षैत्र न० क्षेत्राणां समूहः भिक्षादित्वात् अ । क्षेत्रसमुदाये ।
क्षैरेय त्रि० क्षीरे संस्कृतः ढञ् । क्षीरसंस्कृते यवाग्वादौ । यवाग्वाम् स्त्री० ङीप् । [क्षौणिरप्यत्र
क्षोणि(णी) स्त्री० क्षु-नि वा ङीप् । धरायाम् । पृ० नि०
क्षोद पु० क्षुद-घञ् । रजसि, चूर्णे, पेषणे च ।
क्षोदक्षम त्रि० क्षोदं क्षमते पच । विचारसहे तत्त्वनिर्णयार्थं विचारणीये व्याकरणदूषणे वाक्ये । [क्षुद्रतरे ।
क्षोदिष्ठ त्रि० अयमेषामतिशयेन क्षुद्रः इष्ठन् क्षोदादेशः ।
क्षोभ पु० क्षुभ-घञ् । व्यर्थमितस्ततः सञ्चलने, चित्तस्य भयादिहेतुके सत्कार्य्यासामर्थ्ये च ।
क्षोभण पु० क्षोभयति क्षुभ-णिच्-ल्यु । कामवाणभेदे

सांख्याद्युक्ते प्रकृतिप्रेरके पुरुषे, ईश्वरे च।
**क्षौद्र** न० क्षुद्राभिः सरघाभिर्निर्वृत्तम् अण्। 'मक्षिका कपिलाः सूक्ष्माः क्षुद्राख्यास्तत्कृतं मधु। मुनिभिः क्षौद्रमित्युक्तमित्युक्ते मधुनि।
**क्षौद्रज** न० क्षौद्राज्जायते जन-ड। मधुजाते (मोम) सिक्थके
**क्षौद्रधातु** पु० कर्म०। माक्षिके मधुनि।
**क्षौद्रप्रिय** पु० क्षौद्रमिव प्रियः साहश्यात्। जलमधुकद्रुमे ६त०। मधुप्रिये त्रि०।
**क्षौद्रेय** न० क्षुद्राभिः कृतम् ढक्। सिक्थके। (मोम)
**क्षौम** पु० न० क्षुमाया अतसाविकारः अण्। अतसी-वल्कलजाते वस्त्रे, दुकूले, शणजे वस्त्रे च। क्षु-मन् प्रज्ञा-दित्वादण् अट्टालिकायाम्। [न्यायाश्च
**क्षौमी** स्त्री० क्षुमैव प्रज्ञाद्यण्। अतसाम् क्षुमानिर्मितक-
**क्षौर** न० क्षुरेण निर्वृत्तम् अण्। क्षुरनिष्पाद्ये वपनादौ।
**क्ष्णु** तेजने अदा० पर०सक० सेट्। क्ष्णौति अक्ष्णावीत्।
**क्ष्मा** स्त्री० क्षमते भारं क्षम-अच् उपधालोपश्च। धरायाम्।
**क्ष्माभृत्** पु० क्ष्मां पृथिवीं बिभर्त्ति पालयति वा भृ-क्विप् तुक् च। नृपे, पर्वते च। भूभृदादयोऽप्यत्र।
**क्ष्माय** विधूनने भ्वा० आत्म०सक० सेट्। क्ष्मायते अक्ष्मायिष्ट
**क्ष्मील** निमेषे भ्वा० पर० अक० सेट्। क्ष्मीलति अक्ष्मीलीत्।
**क्ष्विड** स्नेहे भ्वा०आत्म०अक०सेट्। क्ष्वेडते अक्ष्विडत् अक्ष्वेडिष्ट
**क्ष्विद** मोहने स्नेहे अक० भ्वा० आत्म० सक० सेट्। क्ष्वेदते अक्ष्विदत् अक्ष्वेदिष्ट। [अक्ष्विदत्
**क्ष्विद** कूजने दिवा० पर० अक० सेट्। क्ष्विद्यति अक्ष्वेदीत्-
**क्ष्विद** कूजने भ्वा० पर० अक० सेट्। क्ष्वेदति अक्ष्वेदीत्।
**क्ष्वेड** पु० क्ष्विड-अच्। पीतघोषाद्रुमे, विषे, वर्षात्मके ध्वनौ च घोषातकीपुष्पे न०। दुरासदे, कुटिले च त्रि०। [शलाकायाम्।
**क्ष्वेडा** स्त्री० क्ष्विड-अच् टाप्। घोषातक्याम्, सिंहनादे वंश-
**क्ष्वेडित** न० क्ष्वेड-क्त। सिंहनादे।
**क्ष्वेल** संचालने, गतौ सक० क्रीडायाम् अक० भ्वा०पर० सेट्। क्ष्वेलति अक्ष्वेलीत् णिचि लुङि अचक्ष्वेलत्।
**क्ष्वेला** स्त्री० क्ष्वेल-अ। क्रीडायाम्।

## ख

**ख** पु० खर्व-ड। सूर्ये। इन्द्रिये, देहे, पुरे, शून्ये, अभ्रे, बिन्दौ, आकाशे, स्वर्गे, सुखे च न०।
**खक्खख** हासे भ्वा० पर० अक० सेट्। खक्खति अखक्खीत्
**खग** पु० खे आकाशे गच्छतीति गम-ड। सूर्ये, देवे, ग्रहे, विहगे, वायौ, सूर्यचन्द्रादिषु ग्रहेषु च।
**खगगति** स्त्री० ६त०। 'डीनं प्रडीनमुड्डीनं संडीनं परिडीनकम्। विडीनमवडीनञ्चातिडीनं डीनडीनकम्। गतागतं प्रपतितं सम्पातः पक्षिणां गतिरित्युक्ते विहगगमने।
**खगप** पु० खगान् पाति पा-क। गरुडे खगपत्यादयोऽप्यत्र।
**खगस्थान** न० ६त०। द्रुमस्य कोटरे। [श्येनविहगे।
**खगान्तक** न० अन्तयति अन्तं करोति णिच्-ण्वुल् ६त०
**खगोल** पु० खं गोल इव। भूगोलोपरिस्थिते मण्डलाकारे आकाशे तत्र संस्थितिमानविशेषो बृहदभिधाने द्रष्टव्यः।
**खच** भूतौ उत्पत्तौ च क्र्या०पर०सक० सेट्। खच्ञाति अख-चीत्-अखाचीत्। [अखचत् त।
**खच** बन्धने अद० चुरा० उभ० सक० सेट्। खचयति-ते अच-
**खचर** पु० खे आकाशे चरति चर-ट। राक्षसे स्त्रियां ङीप्। सूर्ये, वायौ, ग्रहे अश्वतरे च। आकाशगामिनि त्रि०।
**खचित** त्रि०खच-क्त। बद्धे, संयुक्ते च।
**खज** मन्थे भ्वा० पर० सक० सेट्। खजति अखाजीत्-अखजीत्
**खज** मकुतायां भ्वा०इदित् पर०अक०सेट्। खञ्जति अखञ्जीत्
**खज** पु०स्त्री० खज-अच्। दर्व्याम् (हाता) मन्थदण्डे च।
**खजाका** स्त्री० खज-आक। दर्व्याम्। (हाता)
**खज्योतिस्** पु० खे आकाशे ज्योतिरस्य। खद्योते कीटे।
**खञ्ज(क)** पु० खजि गतिवैकल्ये अच् ण्वुल्। (खोंड़ा) पादविकले।
**खञ्जखेट** पु० खञ्ज इव खेटति अच्। खञ्जनविहगे।
**खञ्जखेल** पु० खञ्ज इव खेलति अच्। खञ्जनखगे। [वार्थे
**खञ्जन** पु० खञ्ज, ल्यु। खनामख्याते विहगे। स्वार्थे कन् तत्रै-
**खञ्जरीट** पु०खञ्ज इव ऋच्छति ऋ-गतौ कीठन्। खञ्जनविहगे
**खट** काङ्क्षे भ्वा०पर०सक०सेट्। खटति अखाटीत्-अखटीत्
**खट** पु० खट-अच्। अन्धकूपे कफे, टङ्के, तृणे लाङ्गले च।
**खटिक** पु० खट+ठन्। कुब्जपाणौ। (खड़ि) लेखनद्रव्ये स्त्री०। खटिका लिखतीति नैषधम्। [ससम्भ्रमा यस्तेत्फुटः
**खटिनी** स्त्री०खट+इनि लेखनद्रव्ये (खड़ी)। न ददाति खटिनी
**खटी** स्त्री० खट-अच् गौरा०ङीष्। (खड़ी) लेखनसाधनद्रव्ये
**खट्ट** हतौ चुरा०उभ०सक०सेट्। खट्टयति ते अचखट्टत् त।
**खट्वा** स्त्री० खट-क्वन्। 'अष्टाभिः काष्ठखण्डैश्च कृता खट्वे ति' कथ्यते इत्युक्तायां शय्यायाम्।
**खट्वाका** स्त्री० क्षुद्रा-खट्वा अल्पार्थे कन् अभाषितपुंस्कत्वात् मा अत इत्वम्। क्षुद्रखट्वायाम्।
**खट्वाङ्ग** पु०राजभेदे। खट्वाया अङ्गमिव। नरपञ्जरे, ईशायुध विशेषे, पृष्ठवंशे च। ६त०खट्वाया अङ्गे न०। खट्वाङ्गधर-

धारक इति वटुकस्तोत्रम्। [वटुकभैरवे च।
खट्वाङ्गभृत् पु० खट्वाङ्गं बिभर्त्ति भृ-क्विप् तुक् च। शिवे,
खट्वारूढ पु० खट्वा अम् आरुह-क्त नित्यस०। प्रमादवति।
खट्वाश्रिते। त्रि०। [अश्वविशिष्ट।
खड मन्थने भञ्जने च भ्वा० आत्म० इदित् सक० सेट्। खण्डते
खड भेदे चुरा०उभ०सक०सेट्। खडयति ते अचीखडत् त।
खड न० खड-अच्। तृणभेदे (खड) पानान्तरे, भेदे च पु०
खडक्की स्त्री० खडक् इत्यव्यक्तशब्दं करोति क-ड गौ० ङीष्।
पक्षद्वारे (खिड़्कि)। [ख्याते लेखनद्रव्ये।
खडी स्त्री० खडि अच् नि० नलोपः गौरा० ङीष्। खनाम
खड्ग पु० खडि-ग नि०नलोपः। गण्डकस्कन्धे तद्वति गण्डकपशौ
च। (गाण्डार) चोरनामगन्धद्रव्ये, असौ च। लौहे न०
खड्गकोष पु० ६त०। चर्म्मादिमये असिपिधाने (खाप) वस्तुनि
(ढाल) खड्गावरके च। [खड्गकोषे (खाप) च
खड्गपत्र पु० खड्गस्य पत्रमिवाच्छादकम्। (ढाल) खड्गावरके
खड्गपिधान न० खड्गः पिधीयतेऽनेन। (खाप) खड्गकोषे।
खड्गिन् पु०खड्ग+अस्त्यर्थे इनि। गण्डारे। खड्गधारिजने त्रि०
खण्ड पु०खडि-घञ्। भेदे 'खण्डं खण्डं ययुर्घना' इति देवी-
माहात्म्यम्। विड्लवणे, इक्षुविकारे (खांड) च न०।
कर्म्मणि घञ्। एकदेशे पु०न०। [भेदे।
खण्डकर्ण पु०खण्डइव कर्णः कन्दोयस्य। (शकरकन्द) आलु-
खण्डकालु पु० खण्डइव कायति कै-क कर्म०। (शकरन्द)
आलुभेदे। [(कांड्ची)
खण्डधारा स्त्री० खण्डे एकदेशे धारा यस्याः। कर्त्तर्याम्
खण्डन न० खडि-ल्युट्। भञ्जने,भेदने, छेदने,निराकरणे च
खण्डपरशु पु० खण्डयति खण्डः परशुरस्य। शिवे,तच्छिष्ये
जामदग्न्ये च। खण्डपशुरप्यत्र।
खण्डिक पु०खण्ड+अस्त्यर्थे ठन्। कलाये,ऋषिभेदे,कक्षे च। क्रुद्धे
त्रि०। खण्डिकोपाध्यायः शिष्याय चपेटं ददातीति भाष्यम्
खण्डित त्रि० खडि-क्त। भेदिते छिन्ने,द्विधाकृते च 'ज्ञातान्य
सङ्गविकृतेः खण्डितेर्ष्याकषायितेत्युक्तचिह्नायां स्त्रियां स्त्री०
खण्डी स्त्री० खण्डयते गौरा०। वनमुद्गे।
खण्डीर पु० अपकृष्टा खण्डो शुण्डादित्वात् र। पीतमुद्गे।
खतमाल पु० खे तमाल इव। धूमे, मेघे च। [अखदीत्।
खद स्थैर्ये अक०वधे सक०भ्वा०पर०सेट्। खदति अखादीत्-
खदिर पु० खद-किरच्। (खएर) द्रुमभेदे, इन्द्रे,चन्द्रे च।
खदिरपत्रिका स्त्री०खदिरस्येव पत्रमस्याः ङीप् ततः संज्ञायां
कन् कापि ह्रस्वः। अरिखदिरे लज्जालुलतायाञ्च। कनभावे
खदिरपत्रीत्यप्यत्रैव। [विना खदिरसारेणेत्युद्भटः।
खदिरसार पु० ६त०। खदिरद्रुमस्य निर्यासजे सारे (खएर)
खदिरिका स्त्री०खदिरः खदिररसोऽस्त्यस्याः ठन्। लाक्षायां
तस्या हि खदिरतुल्यनिर्यासः।
खदिरी स्त्री०खद-किरच् गौरा०ङीष्। लज्जालुलतायाम्,
शाकभेदे, (हाथजोडा) लतायाञ्च। [भेदे
खदिरोपम न० खदिर उपमा यस्य। (कांटावावला) द्रुम-
खद्योत पु०खे द्योतते द्युत-अच्। सूर्य्ये,कीटभेदे च (जोनाकेपोका)
खधूप पु० खमाकाशं धूपयति धूप-अण्। (ह्वाउइ) प्रभृतौ
अग्निक्रीडने 'मुमुचुः खधूपानि'ति भट्टिः।
खन विदारे भ्वा०उभ०सक०सेट्। खनति अखानीत्-अखनीत्
अखनिष्ट खायात्-खन्यात्। [(कोड़ा) त्रि०
खनक पु० खन-वुन्। मूषिके, सन्धिचौरे च। भूमिदारके
खनि(नी) स्त्री० खन-इ वा ङीप्। धातुरत्नाद्युत्पत्तिस्थाने।
आकरे भूविदारणे च।
खनित्र न० खन-इत्र। (खोन्ता) अस्त्रभेदे।
खपुर पु० खमिन्द्रियमाकाशं वा पिपर्त्ति पृ-क। गुवाकद्रुमे,
(सुपारी) भद्रमुस्तके,व्याघ्रनखे च। जन्धर्वगते पुरे, घटे च
न०। अलसे त्रि०। [पर्य्याम्(पाना)।
खमूली स्त्री० खे आकाशे भूमिमन्तरेणापि मूलमस्याः। वारि
खम्ब गतौ भ्वा०पर०सक०सेट्। खम्बति अखम्बीत्।
खर पु०खं सुखविलमतिशयेनास्त्यस्य र खमिन्द्रियं राति-रा-क
वा रलयोरैकत्वम्। गर्द्दभे,अश्वतरे राक्षसभेदे च 'चेरतः
खरदूषणावि'ति भट्टिः। कण्टकिवृक्षभेदे,काके,कङ्कविहगे,
कुररपक्षिणि, ६० संवत्सरमध्ये वत्सरभेदे रवेः पार्श्वचरे,
तिग्मस्पर्शे च। तद्वति, कठिने च त्रि० 'खरविशदमभ्य-
वहार्य्य'मिति भाष्यम्। देवताडवृक्षे स्त्री० टाप्।
खरकाष्ठिका स्त्री० खरमुग्रं काष्ठं यस्याः। बलायामौषधौ
खरगन्धा स्त्री० खरोगन्धो यस्याः। नागबलायाम्। [रामे च
खरघातन पु०खरमुग्ररोगं घातयति हन-णिच्-ल्यु। नागकेशरे,
खरच्छद पु० खरः छदः पत्रमस्य। (उलुखड़) तृणभेदे।
खरणस(स) त्रि० खरा कठिना नासिकास्य नासिकाया नस
वान्त्यलोपः। णत्वञ्च। कठिननासिके।
खरत्वच् पु० खरा कठिना त्वक् यस्य। लज्जालुभेदे।
खरदण्ड न०खरः पुष्पाद्यपेक्षया कठिनोदण्डोनालो यस्य। पद्मे
खरदला स्त्री० खरं दलं यस्याः। काकोडुम्बरे।
खरदूषण पु० खरस्युग्रं दूषणमुन्मादकतारूपदोषो यत्र।
धत्तूरे (धुतरा) यक्षदोषे त्रि०।

**खरध्वंसिन्** पु० खरं खरनामानं राक्षसं ध्वंसयति ध्वन्स-णिच् णिनि । रामे ।

**खरनादिनी** स्त्री० खरं नदति नद-णिनि । रेणुकानामगन्धद्रव्ये

**खरपत्र** पु० खराणि पत्राण्यस्य । शाकद्रुमे, मरुवके, अल्पपत्रतुलस्याञ्च । गोजिह्वायां स्त्री० टाप् ।

**खरपत्रक** पु० खरपत्र+संज्ञायां कन् । तिलकद्रुमे ।

**खरपादाढ्य** पु० खरैः पादैः मूलैराढ्यः । कपित्थद्रुमे ।

**खरपुष्पा(ष्पी)** स्त्री० खराणि पुष्पाण्यस्याः वा ङीप् । वर्वराख्ये (वावुइ तुलसी) ।

**खरमञ्जरी** स्त्री० खरा मञ्जरी यस्या गौरा० ङीष् । अपामार्गे

**खरवल्लिका** स्त्री० खरा वल्ली सैव स्वार्थे कन् । नागवल्ल्याम् (पान) । [गर्दभमब्दे । कर्म० उग्रशब्दे ।

**खरशब्द** पु० खर उग्रः शब्दोऽस्य । कुररखगे । इत०

**खरस्कन्ध** पु० खरः स्कन्धोऽस्य । प्रियालद्रुमे । खर्जूर्य्यां स्त्री०

**खराश्वा** स्त्री० खरैरश्यते भुज्यते अश-व । मयूरशिखायाम् (रुद्रजटोलता) ।

**खरु** पु० खन-उ रश्चान्तादेशः । दर्पे, अश्वे, दन्ते, कामदेवे श्वेतवर्णे च । श्वेतवर्णवति, निषिद्धरुचौ, निर्बोधे, क्रूरे च त्रि० पतिम्वरायां कन्यायां स्त्री० । [अखर्ज्जीत् ।

**खर्ज्ज** व्यथायां अक० मार्ज्जने सक० पर० सेट् । खर्ज्जति

**खर्ज्जन** न० खर्ज्ज-ल्युट् । कण्डूयने । [रोद्रुमे च ।

**खर्ज्जु(र्ज्जू)** स्त्री० खर्ज्ज-उ वा जङ् । कण्डूयने, कीटभेदे, खर्ज्जू-

**खर्ज्जु(र्ज्जू)घ्न** पु० खर्ज्जुं(र्ज्जूं) कण्डूयनं हन्ति हन-टक् । चक्रमर्द्दे, (दादमर्द्दन) अर्कद्रुमे च ।

**खर्ज्जूर** पु० खर्ज्जूं राति स्पर्शने कण्डूं ददाति । कीटभेदे (स्वर्णपोका) (खेजूर) द्रुमभेदे पु० स्त्री० । स्त्रीत्वे ङीष् । तत्फले, रूप्ये च न० ।

**खर्द्द** दंशने भ्वा० पर०सक० सेट् । खर्द्दति अखर्द्दीत् ।

**खर्पर** पु० कर्परशब्दवत् पृ० खत्वम् । तस्करे, धूर्त्ते, भिक्षापात्रे कपाले भिन्नस्य घटस्य खण्डे च । धातुभेदे, तुत्थाञ्जनभेदे च न०

**खर्ब(र्व)** गतौ भ्वा०पर०सक० सेट् । खर्ब(र्व)ति अखर्बी(र्वी)त् ।

**खर्ब(र्व)** पु० खर्ब(र्व)-अच् । कुवेरे, निधिभेदे, संख्याभेदे (सहस्रकोटौ) "अर्बुदमब्जं खर्व्वनिखर्व्व"मिति लीलावती तत्संख्याते च । नीचे, वामने च त्रि० ।

**खर्ब(र्व)ट** पु० खर्ब(र्व) अटत् । 'एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् । मिश्रं तु खर्ब(र्व)टोनाम नदीगिरिसमाकुल' इत्युक्तचिह्ने ग्रामे ।

**खर्वशाख** त्रि० खर्वा शाखाः करपादादयोऽस्य । वामने, हस्वशाखावति द्रुमे पु० । [लताफलभेदे ।

**खर्वू(र्बू)ज** न० खर्ब(र्व) ज तस्मात् जायते जन-ड । (खरमुज)

**खर्व** गर्वे भ्वा० पर० अक० सेट् । खर्वति अखर्वीत् ।

**खल** चलने सञ्चलने च भ्वा०पर०अक०सेट् । खलति अखालीत्

**खल** न० खल-अच् । धान्यमर्द्दनस्थाने, (खामार) भुवि, तिलकल्के च (खड्ल) । नीचे, अधमे, क्रूरे च त्रि० । खे लीयते ली-ड । सूर्य्ये । खं वर्षतः लाति ला-क । तमालद्रुमे ।

**खलति** पु० स्खल सञ्चलने अति पृ० । इन्द्रलुप्तरोगे (माथार टाक) तद्वति त्रि० । [(फराश) ।

**खलपू** त्रि० खलं भूमिं पुनाति पू-क्विप् । स्थानशोधनकारिणि

**खलाधारा** स्त्री० खल आधारो यस्याः । (तेलापोका) तैलपायिकायाम् ।

**खलि** पु० खल-इ । तैलकीट्टे (खइल)

**खलि(ली)न** पु०न० खे मुखच्छिद्रे लीनं पृ०वा ह्रस्वः । अश्वमुखस्थायां कविकायां (कड़िआल)

**खलिनी** स्त्री० खलानां धान्यमर्द्दनस्थानानां समूहः इनि । धान्यमर्द्दनस्थानसंघे । [मत्स्यभेदे ।

**खलिश** पु० खे आकाशे जलादूर्द्धभागे शियति क । (खल्सा)

**खलीकार** पु० अखलं खलं करोति च्वि-कृ-घञ् । अपकारे तत्करणे हि अखलोऽपि खलो भवति ।

**खलु** अव्य० खल-उ । प्रश्ने, सान्त्वने, वीप्सायां, माने, निषेधे, अनुनये, वाक्यस्य भूषणपूरणयोः, निश्चये, हेतौ च ।

**खलेकपोत** पु० खले धान्यमर्द्दनस्थाने यथा कपोता युगपत् पतन्ति एवं विशेषणानामेकत्र युगपदन्वयरूपे न्यायभेदे ।

**खलेवाली** स्त्री० खले वाल्यन्ते चाल्यन्ते वृषभा यस्याः । धान्यमर्द्दनभूमिमध्यस्थे काष्ठे (मेढ़िकाठ) ।

**खल्या** स्त्री० खलानां समूहः यत् । धान्यमर्द्दनस्थानसमूहे ।

**खल्ल** पु० खलतीति क्विप् खल् तं लाति ला-क । वस्त्रभेदे, कर्मठे, गर्त्ते, चातके, हतौ (मशक) औषधमर्द्दनपात्रे च (खल)

**खव** सम्पत्तिप्रविलयोः-प्रादुर्भावे, क्र्या० पर० अक० सेट् । खव्नाति अखावीत्-अखवीत् । [कृमौ (ग्योत) ।

**खवाष्प** न० ६त० । रजन्यां आकाशात् निपतन्ति जले

**खश** पु० देशभेदे, हिमालयप्रान्तदेशे, तद्देशस्थे 'शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गता लुप्तक्रम्य मनुना दर्शिते पतिते क्षत्रियभेदे च ।

**खष** वधे भ्वा० पर० सक०सेट् । खषति । अखाषीत्-अखषीत्

**खस** पु० खानि इन्द्रियाणि स्यति निश्चलीकरोति सो-क । (खोस) (पाचड़ा) रोगभेदे ।

**खसखस** पु० (पोस्ता) नामकफलके द्रुमभेदे यस्य निर्यासः अहिफेनः (आफिङ्) ।

**खाजिक** पु० खे आकाशे वीयते अज-वञ् आजोगतिः सोऽस्यास्ति ठन् । लाजेषु (खइ) ईषद्वायुयोगे हि तेषामाकाशगतिः

**खाटि** पु०स्त्री० खट-इन । शवरथे । स्त्री० वा ङीप् असद्वृत्ते।

**खाण्डव** पु० इन्द्रप्रस्थनगरसन्निकृष्टस्थे वने ।

**खात** न० खन-क्त । गर्त्ते, पुष्करिण्यादौ च 'पूर्त्तं खातादिकर्म चे'ति स्मृतिः ।

**खातक** पु० खन-घञ् स्वार्थे कन् (खाइ) परिखायाम् । खात इव कायति कै-क । अधमर्णे (ऋणी) 'खात(द)कोवित्तहीनः स्यात्तन्मको वित्तवान् यदी'ति स्मृतिः ।

**खातभू** स्त्री० खातस्य भूः स्थानम् । परिखायाम्,अल्पकूपे च।

**खाद्** भक्षणे भ्वा० पर० सक० सेट् । खादति अखादीत् ।

**खादक** पु० खादति खाद-ण्वुल् । ऋणग्राहके अधमर्णे 'खादकोवित्तहीनः स्यादि'ति स्मृतिः । भक्षके त्रि० ।

**खादिर** त्रि० खदिरस्य विकारः अञ् । खदिरकाष्ठनिर्मिते यूपादौ ''खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्येति श्रुतिः । खदिरनिर्य्यासे (खएर) पु० ।

**खारि(री)** स्त्री० खमाराति रा-क गौरा० ङीष् वा ह्रस्वः । द्रोणचतुष्टयरूपे धान्यादिमानभेदे ।

**खारीक** त्रि० खार्य्याम् वापः,खारीपरिमाणमस्य वा ईकञ् । खारीमितधान्यवपनयोग्ये क्षेत्रे, खारीमिते धान्यादौ च।

**खिट** भये भ्वा० पर० अक० सेट् । खेटति अखेटीत् ।

**खिद्** दैन्ये दिवा० रुधा० च आत्म० अक० अनिट् । खिद्यते खिन्ते अखित्त । खिन्नः । [खिन्दतः । अखैत्सीत् खिन्नः

**खिद्** परिघाते तुदा० पर० सक० अनिट् मुचादि । खिन्दति

**खिन्न** त्रि० खिद-क्त । दैन्ययुक्ते, अलसे, खेदयुक्ते च ।

**खिल** कणश आदाने तुदा०पर०सक०सेट्। खिलति अखेलीत्।

**खिल** त्रि० खिल-क । हलादिना अकृष्टे क्षेत्रादौ सारतः संक्षिप्ते पूर्व्वानुक्तपरिशिष्टे, यथा ऋग्वेदादौ श्रीसूक्तम्, यजुर्वेदे शिवसंकल्पादि,महाभारते हरिवंशः। खिलेषु हरिवंश इति पुष्पिकाव्याख्याने 'खिलो नारायणः प्रोक्तस्तद्गुणा इमवः स्मृता इति नीलकण्ठेनोक्तेः नारायणे च ।

**खु** ध्वनौ भ्वा० आत्म० अक० अनिट् । खवते अखोष्ट।

**खुज** स्तेये भ्वा० पर० सक० सेट् । खोजति अखोजीत् ।

**खुज्जाक** पु० खुज-आक उ० । देवताडवृक्षे । [ण्डिष्ट

**खुड** खञ्जे इदित् भ्वादि० आत्म० अक० सेट् । खुण्डते अखु

**खुड** भेदने चुरा०उभ०सक०सेट् । खोडयति-ते अचुखोडत्-त

**खुड** भेदने चुरा०उभ०इदित् सक०सेट् । खुण्डयति-ते अचुखुण्डत्-त

**खुर** विलेखने तुदा० पर० सक० सेट् । खुरति अखोरीत् ।

**खुर** पु० खुर-क । स्वनामख्याते पशूनां शफे, कोलदले,नखीनामगन्धद्रव्ये, नापितास्त्रे, खट्वादीनां पादे च (खुरा)।

**खुरक** पु० खुर इव कायति कै-क । तिलवृक्षे ।

**खुरणस्(स)** त्रि० खुर इव नासिकाऽस्य नसादेशः वा अन्त्यलोपः णत्वञ्च । चिपिटनासिके ।

**खुरली** स्त्री० खुर इव लाति ला-क गौरा० ङीष् । शराभ्यासे

**खुरालिक** पु० खुराणामालिभिः कायति प्रकाशते कै-क । (भांड़) नापितास्त्रभाण्डे, नाराचास्त्रे, उपधाने च ।

**खु(खू)र्द्द** क्रीड़ायां भ्वा०आ०अक०सेट् । खु(खू)र्द्दते अखु(खू)र्द्दिष्ट

**खेचर** पु० खे चरति चर-ट अलुक्स० । शिवे, सूर्य्यादिग्रहे, विद्याधरे च स्त्रियां ङीप् । 'चित्तं हरति खे यस्मात् जिह्वा हरति खे गता । भ्रुवोरन्तर्गता जिह्वा खेचरी नाम मुद्रिकेति' तन्त्रोक्ते मुद्राभेदे स्त्री० ।

**खेट** भोजने अद०चु०उभ०सक०सेट्। खेटयति ते अचिखेटत् त

**खेऽट** पु० खेऽटति । सूर्य्यादिग्रहे 'यस्मिन्नृक्षे स्थिताः खेटा' इति ज्योतिषम् । कफे, ग्रामभेदे च । मृगयायां पु०न० । अधमे त्रि० । कर्म्मणि तृणे च न० । [दुर्गाध्यानम् ।

**खेटक** पु० खेट-ण्वुल् । फलके (ढाल) खेटकं पूर्णचापञ्चेति

**खेड** भोजने अद०चु०उभ०सक०सेट् । खेडयति ते अचखेडत् त

**खेद** पु० खिद-घञ् । शोके, अवसन्नतायाञ्च ।

**खेदिनी** स्त्री० खेदयति खिद णिच् णिनि । अशनपर्ण्णीद्रुमे

**खेय** न० खन-यत् । परिखायाम् (गड़खाइ) खननीये त्रि० ।

**खेल** चालने गत्याञ्च भ्वा०पर०सक० सेट् । खेलति अखेलीत्। अचिखेलत् त । [शारिफलके स्त्री०

**खेलन** न० खेल ल्युट् । क्रीडायाम् । आधारे ल्युट् ङीप् ।

**खेला** स्त्री० खेल-अ । क्रीड़ायाम् ।

**खेव** सेवने भ्वा०आ०सक०सेट् । खेवते अखेविष्ट अचिखेवत ।

**खेसर** पु० खे आकाश इव शीघ्रगामित्वात् सरति सृ-ट अलुक् स० । गर्द्दभादश्वीजाते अश्वाद्गर्द्दभीजाते वा अश्वतरे पशुभेदे

**खै** स्थैर्य्ये अक० खनने हिंसायाञ्च सक० भ्वा०पर०अनिट् । खायति अखासीत् ।

**खोट** गतिप्रतिघाते भ्वा०पर०सक०सेट् । खोटति अखोटीत् ।

**खोट** क्षेपे अद०चु०उभ०सक०सेट् । खोटयति ते अचुखोटत् त

**खोटि(टी)** स्त्री० खोट-इ वा ङीप् । चतुरायां स्त्रियां पालङ्क्यौषधे च । [अचुखोडत् त

**खोड** गतिप्रतिघाते भ्वा०पर०सक०सेट् । खोडति अखोडीत् ।

खोड चेपे अद०चु०उभ०सक०सेट्। खोडयति ते अचुखोडत् त
खोड त्रि० खोड गतिप्रतिघाते अच्। खञ्जे। (खोँडा)।
खोर गतिवैकल्ये भ्वा०पर०सक०सेट्। खोरति अखोरीत्
खोल गतिवैकल्ये भ्वा०पर०सक०सेट्। खोलति अखोलीत्
खोर(ल) त्रि० खोर(ल) अच्। खञ्जे।
ख्यात त्रि० ख्या-क्त। ख्यातियुक्ते, कथिते च। [अख्यत्।
ख्या कथने अदा०पर०सक०सेट्। आर्द्धधातुकमात्रविषयोऽयम्।
ख्याति स्त्री० ख्या+क्तिन्। प्रशंसायाम्, प्रसिद्धौ, कथने च

## ग

ग पु० गै-क। गन्धर्व्वे, गणेशे, छन्दोग्रन्थोक्ते एकगुरुवर्णे च।
गगन न० गम-युच् गोऽन्तादेशः। शब्दं मामादिकम्। आकाशे।
गगनध्वज पु० गगनस्य ध्वजइव। मेघे, सूर्य्ये च।
गगनेचर पु० गगने चरति चर-टक्। सूर्य्यादिग्रहे, नक्षत्रे च
गग्ध हसने भ्वा० पर०सक०सेट्। गग्धति अगग्धीत्।
गङ्गा स्त्री० गम-गन्। स्वनामख्याते नदीभेदे।
गङ्गाज पु० गङ्गायां जायते जन-ड। भीष्मे, कार्त्तिकेये च स हि अग्नौ निषिक्तस्य शिववीर्य्यस्य सोढुमशक्यतया वह्निना गङ्गायां संक्रमणे तस्माज्जात इति पुराणकथा।
गङ्गाधर पु० गङ्गां धरति धृञ्-अच् इत०। शिवे, स हि जटायां तामधारयदिति पुराणम्। समुद्रे च।
गच्छ पु० गम-श। द्रुमे, लीलावतीप्रसिद्धे अङ्कभेदे च।
गज मदे स्वने च भ्वा०पर०अक०सेट्। गजति अगाजीत्-अगजीत्
गज स्वने भ्वा० इदित् पर०अक०सेट्। गञ्जति अगञ्जीत्।
गज पु० गज-अच्। हस्तिनि, अष्टसंख्यायां दिग्गजानामष्टत्वात् तथात्वम्। 'अरत्नीनां शतान्यष्टावेकपञ्चविकानि च। गजप्रमाणमाख्यातमित्युक्ते 'साधारणनवाङ्गुल्या त्रिंशदङ्गुलिको गज' इत्युक्ते च परिमाणभेदे, ज्योतिषोक्ते वास्तुभेदे, वैद्यकोक्ते गजपुटाख्ये गर्त्तभेदे च।
गजच्छाया स्त्री० 'यत्रेन्दुः पितृदैवत्ये सूर्य्यश्चैव करे स्थितः। याम्या तिथिर्भवेत् सा हि गजच्छायेति कीर्त्तितेत्युक्ते, 'कृष्णपक्षे त्रयोदश्यां मघास्विन्दुकरे रविः। यदा तदा गजच्छाये'त्युक्ते च योगभेदे 'द्विगुणा ह्यात्मनश्छाया दर्शेस्यादपराह्णिकी गजच्छायेति सा प्रोक्ते'त्युक्ते दर्शापराह्णे च
गजता स्त्री० गजानां समूहः तल्। हस्तिसमूहे।
गजदन्त पु० गजस्य दन्ताविव दन्तावस्य। गणेशे। हस्तिदन्ततुल्यदन्तवति त्रि०। इत० करिदन्ते पु०।
गजपिप्पली स्त्री० गजोपपदा पिप्पली शाक०। स्वनामख्यातायां चिभात्ख्याम्। [इत्युक्ते औषधपाकार्थे गर्त्तभेदे।
गजपुट पु० 'हस्तप्रमाणो गर्त्तो यः पुटः स तु गजाह्वय'
गजप्रिया स्त्री० इत०। शल्लकीद्रुमे। [लायाम् (हातियाला)
गजबन्धनी स्त्री०गजा बध्यन्तेऽत्र ल्युट् ङीप्। हस्तिबन्धनशा-
गजभक्ष्या स्त्री० गजैर्भक्ष्या। शल्लकीद्रुमे।
गजवल्लभा स्त्री० इत०। वङ्गबीजायां गिरिकदल्यां, शल्लक्याञ्च
गजसाह्वय न० गजेन हस्तिनामकनृपेण सहित आह्वयो यस्य। हस्तिनापुरे (दिल्ली)। [हस्तिपालके
गजाजीव पु० गजैस्तत्पालनादिभिराजीव्यते जीव-अच्।
गजानन पु० गजस्येवाननं यस्य। गणेशे स हि शनिदृष्ट्या छिन्नमस्तकः पश्चात् गजमस्तकेन तन्मुखमिति पुराणम्।
गजारोह पु० गजमारोहति रुह-अण्। हस्तिपाले (माहुत)
गजा(द)शन पु० गजैरश्य(द्य)ते कर्म्मणि ल्युट्। अश्वत्थद्रुमे। शल्लक्यां स्त्री० ङीप्। [गजाह्वयमप्यत्र
गजाह्व न० गजसहिता आह्वायस्य शाक०। हस्तिनापुरे।
गजेष्टा स्त्री० गजानामिष्टा। विदार्य्याम् (भूमिकुष्माण्डे)
गञ्ज पु० गजि-घञ्। अवज्ञायाम्। आधारे घञ्। भाण्डागारे खनौ, कोषागारे च। ग्रामरक्षणे, हट्टस्थाने, मद्यभाण्डे, मदिरागृहे च स्त्री० टाप्।
गड सेके भ्वा० पर० सक० सेट् घटा०। गडति अगाडीत्-अगडीत्। गडयति-ते। [गण्डति अगण्डीत्।
गड वदनैकदेशे (गण्डनव्यापारे) इदित् भ्वा०पर० अक० सेट्।
गड पु० गड-अच्। मत्स्यभेदे (गडुइ) विघ्ने, परिखायां, व्यवधाने, देशभेदे च। स्वार्थे कन् गडुक(मत्स्ये)। [लवणे
गडदेशज न० गडदेशे शाम्बरदेशे जायते जन-ड। शाम्बर
गडि(लि) पु० गड(ल)-इन्। सति सामर्थ्ये दुष्टतया भारवहन भीत्या शयाने (गवो) गवादौ 'सुखं स्वपिति गोगडि(लि)'रिति
गडु पु० गड-उ। रोगे घाटामस्तकयोर्मध्ये मांसवर्द्धके रोगे, गलगण्डे, कुब्जे, शल्याख्ये विषमग्रन्थौ च काव्यान्तर्गडुभूतत्वान्नालङ्कारः सहेलिकेति साहि १०प०।
गडुर(ल) पु० गडुः कुब्जरोगोऽस्त्यस्य र ल वा। कुब्जे।
गडेर पु० गड-एरक्। मेघे (गाड़ोल)।
गड्डुर(ल) पु० गड-उर (डल) दा डस्य नेत्त्वम्। मेषे।
गड्डुरि(लि)का स्त्री० गड्डुरं(लं) मेषमनुधावति ठन्। मेषानुगन्त्र्यां मेषपङ्क्तौ। तस्मादस्यादविच्छिन्नगतौ।
गण संख्याने अद० चु० उभ० सक० सेट्। गणयति ते अजीगणत् त अजगणत् त।
गण पु० गण-अच् अच् वा। शिवानुचरे भूते, समूहे, संख्यायां,

सकफेन वायुना यथास्थानानुच्चारणात् संजाते अव्यक्तध्वनौ ।
तद्वति त्रि० । [समूहे न० ।
**गद्य** त्रि० गद्-यत् । कथनीये । पद्यभिन्ने कविकृते अपादे पद-
**गन्त्री** स्त्री० गम्यतेऽनया ष्ट्रन् ङीप् । वृषवहनीये शकटे ।
**गन्त्रीरथ** पु० गन्त्री रथ इव अभीष्टस्थानप्रापकत्वात् । शकटे
**गन्ध** द्योते चुरा० आ० अक० सेट् । गन्धयते अजगन्धत ।
**गन्ध** पु० गन्ध-अच् । संबन्धे, लेशे, गन्धके, गर्व्वे, शोभाञ्जने, घृष्ट-
चन्दनादीनां घ्राणग्राह्ये गुणभेदे स च गन्धः पञ्चविधः
'चूर्णीकृतो वा घृष्टो वा दाहाकर्षित एव वा । रसः सम्म-
र्द्दजो वापि प्राण्यङ्गोद्भव एव वेति' पञ्चविधकारणभेदात्
घृष्टचन्दनादौ च ।
**गन्धकन्दक** पु० गन्ध+अर्श आद्यच् गन्धयुक्तः कन्दोऽस्य कप् ।
कशेरुणि । [पदार्थे ।
**गन्धकचूर्ण** पु० गन्धकप्रधानश्चूर्णः । (बारुद) इति ख्याते
**गन्धकाष्ठ** न० गन्धयुक्तं काष्ठम् कर्म्म० । अगुरुचन्दने ।
**गन्धकुटी** स्त्री० गन्धस्य कुटीवाधारः । मुरानामगन्धद्रव्ये ।
**गन्धकुसुमा** स्त्री० गन्धयुक्तं कुसुमं यस्याः । (गणिवारी)
गणिकारीवृक्षे । [वेणा) गन्धवति भूतृणे ।
**गन्धखेडक** न० गन्धस्य खेडा यत्र कप् डलयोरैक्यात् ।
**गन्धजात** न० गन्धो जातो यत्र । तेजपत्रे ।
**गन्धज्ञा** स्त्री० गन्धं जानात्यनया करणे क । नासिकायाम् ।
**गन्धतैल** न० गन्धयुक्तस्य चन्दनस्याग्निसंयोगेन जनितं
तैलम् । गन्धपाकेण जनिते तैले । (आतर) प्रभृतौ
**गन्धत्वच्** स्त्री० गन्धान्विता त्वक् यस्याः । एलायाम् ।
**गन्धदला** स्त्री० गन्धयुक्तं दलं यस्याः । अजमोदायाम् ।
**गन्धन** न० गन्ध-भावादिषु ल्युट् । उत्साहे, प्रकाशने, सूचने,
हिंसायाञ्च ।
**गन्धनाकुली** स्त्री० गन्धान्विता नाकुली रास्ना । रास्नाभेदे
**गन्धनिलया** स्त्री० गन्धस्य निलयो यत्र । नवमल्लिकायाम्
**गन्धपत्र** पु० गन्धयुक्तं पत्रं यस्याः । तुलस्याम् । शठीभेदे स्त्री०
**गन्धपत्रिका** स्त्री० गन्धयुक्तं पत्रं यस्याः कप् कापि अत
इत्वम् । अजमोदायाम् ।
**गन्धपत्री** स्त्री० गन्धयुक्तं पत्रं यस्याः गौरा० ङीष् । अश्व-
गन्धायाम्, अम्बष्ठायाम्, अजमोदायाञ्च ।
**गन्धपलाशिका** स्त्री० गन्धयुक्तं पलाशं यस्याः कप् । हरिद्रायाम्
**गन्धपाषाण** पु० गन्धयुक्तः पाषाणः । गन्धके ।
**गन्धपुष्प** पु० गन्धः पुष्पेषु यस्य । वेतसे, अङ्कोटवृक्षे, वङ्गवारे
अशोके च । केतक्यां, नील्याम्, गणिकारीवृक्षे च स्त्री० टाप्
**गन्धफल** पु० गन्धयुक्तं फलं यस्य । विल्वे, कपित्थे च । विदा-
र्य्यां, शल्लक्याञ्च स्त्री० टाप् । प्रियङ्गौ स्त्री० ङीप् ।
**गन्धबन्धु** पु० ६त० । आम्रवृक्षे । [(गन्धभादाल) लताभेदे ।
**गन्धभद्रा** स्त्री० गन्धेन लेशमात्रसेवनेन भद्रं यस्याः ५ब० ।
**गन्धभाण्ड** पु० गन्धस्य भाण्ड इव । (गन्धभादाल) लताभेदे
**गन्धमांसी** स्त्री० गन्धयुता मांसी कर्म्म० । जटामांसीभेदे ।
**गन्धमादन** पु०न० गन्धेन मादयति मद-णिच् ल्यु । पर्व्वत-
भेदे । भ्रमरे, वानरे, गन्धके च पु० ।
**गन्धमादिनी** स्त्री० गन्धेन मादयति मद-णिच्-णिनि । लाक्षा
याम्, मुरानामगन्धद्रव्ये च । [द्रव्ये ।
**गन्धमालिनी** स्त्री० गन्धमालाऽस्त्यस्या इनि । मुरानामगन्ध
**गन्धमुखा** स्त्री० गन्धो मुखेऽस्याः । छुछुन्दर्याम् (छुंचा)
**गन्धमुण्ड** पु० गन्धं मुण्डयति मुण्ड+तत्करोति णिच्-अण् ।
(गन्धभादाल) लताभेदे ।
**गन्धमूल** पु० गन्धो मूले यस्य । शल्लकीवृक्षे-शट्याम् । पु०-
स्त्री० वा ङीप् । स्वार्थे कन् अत्रैवार्थे । [ख्यातेपुष्पवृक्षे च ।
**गन्धमृग** पु० गन्धप्रधानो मृगः । गन्धयोनौ कस्तूरीमृगे । [स्वनाम
**गन्धराज** न० गन्धेन राजते राज-अच् । चन्दने, कणागुग्गुलौ,
**गन्धराजी** स्त्री० गन्धानां राजा टच् ङीप् । नखीगन्धद्रव्ये
**गन्धर्व्व** पु० गन्धमर्व्वति अर्व्व-गतौ अच् शक० । मृगभेदे,
अश्वे, कोकिले, स्वर्गगायके देवयोनिभेदे, गायनमात्रे च ।
**गन्धर्व्वनगर** पु० न० गन्धर्व्वाणां नगरमिव । शून्याधिष्ठाने
पुराकारे नीलपीतादिमेघरचनाभेदे, इन्द्रजाले च ।
गन्धर्व्वपुरमप्यत्र । [र्योनिविष्टे स्थाने ।
**गन्धर्व्वलोक** पु० ६त० । गुह्यकलोकोपरि विद्याधरलोकस्या
**गन्धर्व्ववेद** पु० ६त० । सामवेदस्योपवेदे सङ्गीतविद्यायाम् ।
**गन्धर्व्वहस्त** पु० गन्धर्व्वस्य मृगभेदस्य हस्तः पाद इव
पत्रमस्य । एरण्डवृक्षे । स्वार्थे कन् तत्रैवार्थे । [भेदे ।
**गन्धलता** स्त्री० गन्धान्विता लता । प्रियङ्गौ । [ख्याते जाति-
**गन्धवणिज्** पु० गन्धोपजीवी वणिक् । (गन्धबेनिया) इति
**गन्धवती** स्त्री० गन्ध+मतुप् मस्य व । व्यासमातरि, भूमौ,
वायुवरुणयोर्नगर्य्याम्, सुरायाञ्च ।
**गन्धवल्कल** न० गन्धो वल्कलेऽस्य । (दारचिनि) त्वचे ।
**गन्धवल्लरी** स्त्री० गन्धान्विता वल्लरी । सहदेवीलतायाम्
गन्धवल्लीत्यप्यत्र । [नायकादौ त्रि०
**गन्धवह** पु० गन्धं वहति वह-अच् ६त० । वायौ । गन्धयुक्ते
**गन्धवारि** न० गन्धवासितं वारि । गन्धद्रव्येण वासिते जले ।
**गन्धवाह** पु० गन्धं वहति वह-अण् उप० । वायौ । नासिकायां स्त्री०

**गन्धविह्वल** पु० गन्धेन विह्वलयति ह्वल-णिच्-अच् । गोधूमे
**गन्धवीजा** स्त्री० गन्धो वीजे यस्याः । मेथिकायाम् ।
**गन्धव्याकुल** पु०न० गन्धेन व्याकुलयति वि+आ+कुल-णिच्-अच् । कक्कोले । [(वासमति) प्रभृतौ ।
**गन्धशालि** पु० गन्ध प्रधानः शालिः । आमोदवति धान्यभेदे
**गन्धसार** पु० गन्धयुक्तः सारो यस्य । चन्दनवृक्षे ।
**गन्धसारण** पु० गन्धं सारयति सृ-णिच्-ल्यु । वृहच्छ्वाम्
**गन्धसोम** न० गन्धार्थं सोमोविधुर्यस्य । कुमुदे चन्द्रोदये हि तस्य गन्धः ।
**गन्धा** स्त्री० गन्ध-णिच् अच् । गन्धहेतौ चम्पककलिकायाम्
**गन्धाखु** स्त्री० गन्धयुक्त आखुः । छुछुन्दर्याम् (छुंचा)
**गन्धाजीव** पुं० गन्धेन गन्धद्रव्येणाजीवति आ+जीव-अच् । (गन्धवेने) गन्धवणिजि ।
**गन्धाढ्य** पु० गन्धेनाढ्यः । चन्दनवृक्षे, नागरङ्गवृक्षे च । गन्धयुक्ते त्रि०। 'गन्धाढ्यः सुमनोहर' इति तन्त्रम् । स्वर्णयूथ्यां, गन्धपत्रायाञ्च स्त्री० ।
**गन्धाम्ला** स्त्री० गन्धयुक्तः अम्लो यस्याः । वनवीजपूरके ।
**गन्धार** पु० गन्धमृच्छति ऋ-अण् उप० । रागे, सिन्दूरे, स्वरभेदे च । देशभेदे व० व० । [लताभेदे ।
**गन्धाली** स्त्री०गन्धमलति पर्य्याप्नोति अल-अण्। (गन्धभादाल)
**गन्धालीगर्भ** स्त्री० गन्धश्रेणी गर्भे यस्याः । सूक्ष्मैलायाम्
**गन्धाष्टक** न० गन्धानां गन्धद्रव्याणामष्टकम् । चन्दनाद्यष्टसु गन्धद्रव्येषु प्रपञ्चस्तु वृहदभिधाने द्रष्टव्यः ।
**गन्धिनी** स्त्री० गन्धोविद्यतेऽस्याः इनि । मुरानामकगन्धद्रव्ये ।
**गन्धिपर्ण** पु०गन्धि गन्धयुक्तं पर्णं यस्य। सप्तच्छदद्रुमे (छातिम)
**गन्धोत्कटा** स्त्री० गन्धेन उत्कटा उग्रा । दमनकवृक्षे ।
**गन्धोत्तमा** स्त्री० गन्धेन उत्तमा उत्कृष्टा । मदिरायाम् ।
**गन्धोली** स्त्री० गन्धयति अर्द्दयति गन्ध-ओलच् गौरा० ङीष् । वरटायाम् (बोलता) ।
**गभस्ति** पु० गम्यते ज्ञायते गम-ड गः विषयस्तं बभस्ति भासयति भस-क्तिच् । किरणे, सूर्य्ये च । स्वाहायां वह्निपत्न्यां स्त्री० वा ङीप् ।
**गभस्तिमत्** पु०गभस्ति+मतुप् । सूर्य्ये । [सूर्य्ये
**गभस्तिहस्त** पु० गभस्तयो हस्ता इव जलाकर्षकत्वात् यस्य ।
**गभीर** त्रि० गच्छति जलमत्र गम-ईरन् भान्तादेशश्च । निम्नस्थाने,अतलस्पर्शे,गहने, दुष्प्रवेशे, दुर्वारे च ।
**गम** गतौ भ्वा० पर० सक० अनिट् । गच्छति अगमत् ।
**गम** पु० गम-अप् । द्यूतभेदे,विजिगीषोर्यात्रायाम्, गमने, पथि, सदृशपाठे च। [कत्वात् समास इति भाष्यम्। गमयितरि च ।
**गमक** त्रि०गमयति बोधयति गम-णिच्-ण्वुल् । बोधके, गम-
**गम्भारी** स्त्री० कं जलं बिभर्त्ति भृ-अण् ङीप् पृ० कस्य गः । (गामारी) द्रुमभेदे ।
**गम्भीर** त्रि० गच्छति जलमत्र गम ईरन् भुगागमः नि० । निम्नस्थाने, मन्द्रे गभीरार्थे च। जम्बीरे,पद्मे, ऋग्मन्त्रभेदे च पु० । स्वरे सत्त्वे च नाभौ च त्रिषु गम्भीरता शुभा ।
**गम्भीरवेदिन्** पु० गम्भीरं मन्दं वेत्ति विद-णिनि । 'चिरकालेन यो वेत्ति शिक्षां परिचितामपि 'गम्भीरवेदी विज्ञेयः स गज इत्युक्तचिह्ने, 'त्वग्भेदात् शोणितस्रावात् मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्यात् गम्भीरवेदितेत्युक्तचिह्ने च गजे । तृच् गम्भीरवेदिताप्यत्र
**गय** पु० असुरभेदे,वानरभेदे,नृपभेदे च । तीर्थभेदे स्त्री०टाप्
**गर** पु० गॄ-निगरणे अच् अप् वा । विषे, रोगे, ववावधिके पञ्चमे करणे च । [ङीप् ।
**गरघ्न** पु० गरं विषं हन्ति । वर्वरे । मत्स्यभेदे (गड़ुइ) स्त्री०
**गरल** न० गिरति जीवनं गॄ-अलच् । विषे, सर्पविषे, तृणपूले च
**गरागरी** स्त्री० गरं मूषिकविषमागिरति आ+गॄ-अच् गौ० ङीष् । देवताडीद्रुमे: ।
**गरिमन्** पु०गुरोर्भावः इमनिच् गरादेशः। गौरवे । [यानपात्र
**गरिष्ठ** त्रि० अतिशयेन गुरुः इष्ठन् । गुरुतरे । ईयसुनि गरी-
**गरी** स्त्री० गॄ शब्दे अच् गौरा० ङीष् । देवताड़ीद्रुमे ।
**गरुड़** पु० गरुद्भ्यां डयते डी-ड पृ० तलोपः । काश्यपात्मजे विनतागर्भजाते पक्षिराजे ।
**गरुडध्वज** पु० गरुडो ध्वजः चिह्नमस्य। विष्णौ ।
**गरुडपुराण** न० गरुड़ेन प्रोक्तं पुराणम् । पुराणभेदे ।
**गरुडाग्रज** पु०६त०विनतायाः ज्येष्ठपुत्रे सूर्य्यसारथौ अरुणे।
**गरुत्** पु० ऋ-गॄ-वा उति। खगानां नभोगतिहेतौ पक्षे (पाखा)
**गरुत्मत्** पु० गरुत् अस्त्यस्य मतुप् यवादित्वात् न मस्य वः । गरुड़े, विहगमात्रे च ।
**गर्ग** पु० ऋ-ग । ब्रह्मणः पुत्रे मुनिभेदे ।
**गर्गरी** स्त्री० गर्ग इति शब्दं राति रा-क गौ० ङीष् । दधिमन्थनपात्रे, कलसे च। मत्स्यभेदे, तरुणपर्णौ च पु० ।
**गर्ज** अव्यक्तशब्दे भ्वा० पर० सक० सेट् । गर्ज्जति । अगर्ज्जीत् 'गर्ज्ज गर्ज्ज क्षणं मूढे'ति देवीमाहात्म्यम् ।
**गर्ज** रवे चुरा० उभ०सक० सेट् । गर्ज्जयति ते अजगर्जत्-त
**गर्जर** न०गॄ-विच् गरं जरयति जॄ-णिच् अच् ।(गाजर) मूलभेदे
**गर्जित** न० गर्ज्ज-क्त । मेघशब्दे । कर्त्तरि क्त । मत्तहस्तिनि

**गर्त्त** पु० गृ-तन् । भूमिच्छिद्रे, स्त्रीनितम्बस्थे कूपाकारेऽंशे, रोगभेदे च 'धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दधरा गर्त्तास्ताः' इत्युक्ते खाते स्त्री० टाप् ।

**गर्त्तिका** स्त्री० गर्तोऽस्त्यस्याः ठन् । तन्तुवपनशालायां (तांतघर)

**गर्द्द** रवे वा चुरा०उभ० पक्षे भ्वा०पर०अक० सेट् । गर्द्दयति-ते गर्द्दति अजगर्द्दत्-त अगर्द्दीत् । [विडङ्गे च न०

**गर्द्दभ** पु० गर्द्द अभच् (गाधा) गर्द्दभे, गन्धभेदे च । श्वेतकुमुदे,

**गर्द्दभशाक** पु० स्त्री० गर्द्दभस्य भक्ष्यः शाकः । ब्रह्मयष्टिद्रुमे (वामनहाटी) भार्य्याम् स्त्री० ङीप् ।

**गर्द्दभाण्ड** पु० गर्द्दभं गन्धविशेषमणति अण-ड डस्य नेत्त्वम् । पत्रादिभिः श्वत्थतुल्याकारे द्रुमे (पाकुड़) प्लक्षे ।

**गर्द्दभाह्वय** पु० गर्द्दं गन्धविशेषमाह्वयति ह्वे-श । गर्द्दभ इति आह्वयो यस्य वा । कुमुदे ।

**गर्द्दभी** स्त्री० गर्द्द-अभच् गौ० ङीष् । गोमयकीटे, श्वेतकण्टकार्य्यां, अपराजितायाञ्च । गर्द्दभ+पु० योगे ङीष् । रासभ्याम्

**गर्द्ध** लिप्सायां चु० उभ० सक० सेट् । गर्द्धयति ते अजगर्द्धत् त

**गर्द्ध** पु० गृध-घञ् अच् वा । अतिशयस्पृहायां, गर्द्दभाण्डद्रुमे च

**गर्द्धन** त्रि० गृध-युच् । लुब्धे ।

**गर्ब्ब** गतौ भ्वा० पर० सक० सेट् । गर्ब्बति अगर्ब्बीत् ।

**गर्व** दर्पे अद० चुरा० आत्म० सेट् । गर्वयते अजगर्वत ।

**गर्व** पु० गर्व-दर्पे घञ् । अहङ्कारे ।

**गर्भ** पु० गृ-भन् । भ्रूणे देहजन्मकारणे शुक्रशोणितानुबन्धजन्ये 'गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकम् । प्रकृतिः सविकारा च तत्सर्वं गर्भसंज्ञित'मित्युक्ते मांसपिण्डे, शिशौ, कुक्षौ, नाटकसन्धिभेदे, पनसकण्टके, अपवरके, 'भाद्रकृष्णचतुर्द्दश्यां यावदाप्लवते जलम् । तावद् गर्भं विजानीयादित्युक्ते भाद्रकृष्णचतुर्द्दश्यां गङ्गाजलाप्लावनस्थाने, अन्ने; अग्नौ, पुत्रे, च ।

**गर्भक** पु० गर्भे केशमध्ये कायति कै-क । केशमध्यस्थे माल्ये ।

**गर्भगृह** न० गर्भ इव गृहम् । गृहमध्यभागे ।

**गर्भघातिनी** स्त्री० गर्भं हन्ति हन-णिनि । लाङ्गलिकावृक्षे ।

**गर्भद** पु० गर्भं ददाति दा-क । पुत्रजीववृक्षे । क्षुपभेदे स्त्री० टच् ङीप् । गर्भदात्रीत्यपि अत्रार्थे । [(पटेयान) ।

**गर्भपाकिन्** पु० गर्भे पाकोऽपि द्यतेऽस्य इनि । षष्टिकधान्ये

**गर्भपातक** पु० गर्भं पातयति पत-णिच्-ण्वुल् । रक्तशोभाञ्जने (लालसजना) । [कर्णिकारीद्रुमे ।

**गर्भपातनी** स्त्री० गर्भः पात्यतेऽनया पत-णिच्-ल्युट् ङीप् ।

**गर्भपातिनी** स्त्री० गर्भं पातयति-पत-णिच्-णिनि ङीप । विशल्यावृक्षे । [गर्भायां स्त्रियाम्

**गर्भवती** स्त्री० गर्भोविद्यतेऽस्या मतुप् मस्य व । आपन्न

**गर्भशय्या** स्त्री० गर्भस्य शय्येव स्थानम् । 'शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रकीर्त्तिते'त्युक्तलक्षणे गर्भोत्पत्तिस्थाने । 'गर्भशय्यां गतोवे'ति वेणीसंहारः । [गर्भस्य पतने

**गर्भस्राव** पु० स्रु-घञ् ६त० । प्रसूतिकालात् पूर्व्वं रोगादिना

**गर्भस्राविन्** पु० गर्भं स्रावयति स्रु-णिच्-णिनि । हिन्तालवृक्षे

**गर्भागार** न० गर्भ इवागारम् । गृहमध्यभागे वासगृहे । गर्भ एवागारम् । गर्भस्थाने ।

**गर्भाधान** न० गर्भः शुद्धतया आधीयतेऽनेन । दशविधसंस्कारान्तर्गते गर्भपात्रस्य संस्कारपूर्व्वकं गर्भनिषेके ।

**गर्भाशय** पु० गर्भ आशेतेऽत्र शी-अच् । गर्भवेष्टनचर्म्मणि जरायौ

**गर्भाष्टम** पु० गर्भात् गर्भग्रहणसमयादष्टमः । गर्भग्रहणावधिकेऽष्टमे मासि वर्षे वा 'गर्भाष्टमेऽब्दे कुर्व्वीतेति मनुः ।

**गर्भिणी** स्त्री० गर्भोऽस्त्यस्याः इनि । गर्भवत्यां सगर्भायां स्त्रियाम्

**गर्भोपघातिनी** स्त्री० गर्भमुपहन्ति, उप+हन-णिनि । गर्भपातिन्यां गवि । [तृणभेदे च ।

**गर्मुत्** स्त्री० गृ-उति मुट् च । स्वर्णे, लतायां, (मयना)

**गर्व** मदे भ्वा० पर० सक० सेट् । गर्वति अगर्वीत् ।

**गर्व** पु० गर्व-घञ् । अभिमाने, 'ऐश्वर्यरूपतारुण्यकुलविद्यावलैरपि । इष्टलाभादिनान्येषामवज्ञा गर्व ईरित'त्युक्तेऽवज्ञाभेदे च । [अजगर्हत । पक्षे भ्वादिरूपम् ।

**गर्ह** निन्दायां वा चुरा० पक्षे भ्वा० आत्म० सक० सेट् । गर्हयते

**गर्ह** कुत्सायां भ्वा० आत्म० सक० सेट् । गर्हते अगर्हिष्ट ।

**गर्ह्य** त्रि० गर्ह-ण्यत् । निन्द्ये, अधमे च ।

**गर्ह्यवादिन्** त्रि० गर्ह्यं वदति वद-णिनि । कुत्सितवादिनि कद्वदे

**गल** भक्षणे स्रावे च भ्वा० पर० सक० सेट् । गलति अगालीत्

**गल** चारणे चुरा० आत्म० सक० सेट् । गालयते अजीगलत

**गल** पु० गल-अच् । कण्ठे (गला) सर्ज्जरसे (धुना) वाद्यभेदे, गडकमत्स्ये च ।

**गलक** पु० गल-वुन् । सल्लकुलमत्स्ये । [मांसपिण्डे

**गलकम्बल** पु० गले कम्बल इव । सास्नायां गवां गलस्थिते

**गलगण्ड** पु० ७त० । (गरगण्ड) । रोगभेदे ।

**गलग्रह** पु० 'आरम्भानन्तरं यत्र प्रत्यारम्भो न दृश्यते । गर्गादिमुनयः सर्व्वे तमेवाहुर्गलग्रह'मित्युक्ते प्रत्यारम्भाभाववति पदार्थे, 'कृष्णपक्षे चतुर्थी' च सप्तम्यादिदिनत्रयम् । 'त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहा' इत्युक्ते तिथ्यष्टके च

**गलन्तिका** स्त्री० गल-शतृ ङीप् अल्पार्थे कन् स्वल्पवारिधारायुतायां (झारा) कर्कर्य्यां 'देवे देया गलन्तिकेति स्मृतिः ।
**गल(ले)स्तनी** स्त्री० गले स्तनो यस्याः वा अलुक्स० । छाग्याम् ।
**गलहस्त** पु० गले हस्तः । अपसारणार्थं गलेऽर्पिते हस्ते (गलाटिपि)
**गला** स्त्री० गल-अच् । लज्जालुलताभेदे, अलम्बुषायाञ्च ।
**गलित** त्रि० गल-क्त । पतिते स्खले, च्युते, हस्तादितो भ्रष्टे च ।
**गलेगण्ड** पु० गलेगण्ड इव यस्य । पक्षिभेदे (हाड़गेला)
**गलोद्देश** पु० गलस्य उद्देशः समीपम् । गलसमीपस्थे ऽवयवे ।
**गल्भ** धाष्टर्ये, प्रागल्भ्ये, भ्वा० आ० सक० सेट् । गल्भते अगल्भिष्ट
**गल्या** स्त्री० गलानां काण्डानां समूहः । काण्डसमुदाये ।
**गल्ल** पु० गल-ल तस्य नेत्त्वम् । (गाल) गण्डे ।
**गल्लक** पु० गलति क्विप् गल् तं लाति गल्लाति ततः स्वार्थे कन् । चषके मद्यपानपात्रे । [भेदे च
**गवय** पु० गु-अयच् । गोसदृशे गलकम्बलहीने पशुभेदे, वानर-
**गवल** पु० गुङ् शब्दे अप् तं लाति ला-क । वनमहिषे । तत्सम्बन्धित्वात् तच्छृङ्गे न० ।
**गवाक्ष** पु० गवां किरणानामक्षि रन्ध्रमिव । जालाकारे कुलवधूदृष्टिस्थाने वातायने ।
**गवाक्षी** स्त्री० गां भूमिमक्ष्णोति अण् ङीप् । (गोमुक) लताभेदे, (गेन्दोड़ा) शाखोटे, अपराजितायाञ्च । [ङीप् ।
**गवादन** न० गोभिरद्यते अद-ल्युट् । घासे । इन्द्रवारुण्यां स्त्री०
**गवेडु** पु० गवे दीयते दीङ् रक्षणे डु छन्दस ङ अलुक् स० । (गड़गड़े) धान्यभेदे । [कनि स्त्रीत्वेन टाप् अत्रैवार्थे ।
**गवेधु** पु० गवे धीयते धाञ्-धारणे डु । (गड़गड़े) धान्यभेदे,
**गवेरुका** स्त्री० न० । गवामीशः गोरवः तथाभूतः इव कायति कै क गौरा० ङीप । (गोरक्षचाकुलिया) लताभेदे ।
**गवेष** अन्वेषणे, अद० चुरा० आत्म० सेट् । गवेषयते अजगवेषत ।
**गवेषणा** स्त्री० गवेष-युच् टाप् । अन्वेषणे । ल्युट् अत्रैवार्थे न० ।
**गव्य** त्रि० गोर्विकारः गवि भवं, गोर्हितं, गोरिदं, वा सर्व्वत्र यत् गोसम्बन्धिनि, गोर्हितादौ च । ज्यायां रागद्रव्ये च न० ।
**गव्यूति** स्त्री० गोर्यूतिः । क्रोशद्वये क्रोशे च ।
**गह** गहने अद० चु० उभ० सक० सेट् । गहयति ते अजगहत् त
**गहन** न० गाह-युच ह्रस्वः । कानने, गह्वरे, दुःखे च । दुर्गमे, दुष्प्रवेशे च त्रि० । 'गहना कर्मणोगतिरि'ति गीता
**गह्वर** पु० गाह-वरच् नि० । निकुञ्जे । दम्भे, वने, रोदने, विषमस्थाने, अनेकानर्थसङ्कटे च न० । गुहायां न० स्त्री० स्त्रीत्वपक्षे ङीप् ।
**गा** गतौ भ्वा० आत्म० सक० अनिट् । गाते अगास्त ।
**गा** स्तुतौ सक० जन्मनि अक० जुहो० । जगाति अगासीत ।
**गाङ्गेय** पु० गङ्गा+ढक् । भीष्मे, कार्त्तिकेये च । 'यं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्बं पर्व्वते न्यस्तं हिरण्यं समपद्यते'त्युक्ते स्वर्णे, तन्नामनामके धुस्तूरे, मुस्तके, कशेरुणि च
**गाङ्गेरुकी** स्त्री० गाङ्गं जलमीरयति क्षिपति ईर-कु स्वार्थे कन् गौरा० ङीप् । नागबलायाम् ।
**गाजर** न० गां जरयति जॄ-णिच्-अच् । गृञ्जने (गाजोर) ।
**गाढ** न० गाह-क्त । अतिशये दृढे । तद्युते, अवगाढे, सेविते च त्रि० । तपस्विगाढां तमसां प्राप्येति रघुः ।
**गाणिक्य** न० गणिकानां समूहः ष्यञ् । वेश्यासमूहे ।
**गाण्डि** पु० गण्ड-इन् पृ० वृद्धिः । ग्रन्थौ ।
**गाण्डि(ण्डी)व** पु० न० । गाण्डिर्ग्रन्थिरस्यास्ति वा पूर्व्वपद-दीर्घः । अर्ज्जुनचापे, चापमात्रे च । [मात्रे, अर्ज्जुनवृक्षे च
**गाण्डी(ण्डि)विन्** पु० गाण्डी(ण्डि)व-इनि । अर्ज्जुने, धानुष्क
**गात्र** शैथिल्ये अद० चु० आत्म० अक० सेट् । गात्रयते अजगात्रत
**गात्र** न० गा-ष्ट्रन् । देहे, गजाद्यजङ्घादौ च ।
**गात्रभङ्गा** पु० भञ्ज-घञ् गात्रस्य भङ्गोऽवसादो यस्याः । शूकशिम्ब्याम् । इत० । अङ्गभङ्गे (गामोड़ा) स्त्री० ।
**गात्रानुलेपनी** स्त्री० गात्रमनुलिप्यतेऽनया लिप-ल्युट् । अनुलेपनवर्त्तिकायाम् ।
**गायक** त्रि० गै-ण्वुल् । गायके गानोपजीविनि ।
**गाथा** स्त्री० गै-थन् । आर्य्याछन्दसि प्राकृतादिभाषारचिते पद्ये, श्लोके च । [अगाधिष्ट । अजगाधत्
**गाध** प्रतिष्ठायां ग्रन्थे लिप्सायाञ्च भ्वा० आ० अक० सेट् । गाधते
**गाध** पु० गाध-घञ् । स्थाने, लिप्सायां, तलस्पर्शे च । [नृपभेदे
**गाधि** पु० गाध इन् । चन्द्रवंश्ये कान्यकुब्जाधिपे, विश्वामित्रपितरि
**गाधिज** पु० गाधेर्जायते जन-ड । विश्वामित्रे ।
**गाधेय** पु० गाधि+अपत्ये ढक् । विश्वामित्रे मुनौ ।
**गान** न० गै-ल्युट् । गीतौ, ध्वनौ च ।
**गान्दिनी** स्त्री० गङ्गायां, यादववंश्यस्य अक्रूरस्य मातरि च ।
**गान्धर्व** त्रि० गन्धर्व्वस्येदम् अण् । गन्धर्व्वसम्बन्धिनि । 'इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्व्वः स तु विज्ञेय' इत्युक्ते विवाहभेदे, भारतवर्षीयोपद्वीपभेदे च पु० । सामवेदस्योपवेदे सङ्गीतशास्त्रे, पदस्वरसंघातकालेन सङ्गतमाधा। प्रयुक्तावधमेन गान्धर्व्वमभिधीयते'इत्युक्ते गाने च न० ।
**गान्धार** पु० गन्धं धौरभ्यमृच्छति अण् मध्याद्यण् । सिन्दूरे गीतिविषये रागभेदे, स्वरभेदे च । कन्दार इति ख्याते देशोद्भवे त्रि० । गन्धके न० ।

**गान्धारराज** पु० गान्धाराणां जनपदानां राजा टच्। दुर्य्योधनमातामहे सुबले, तत्सुते शकुनौ च।

**गान्धारी** स्त्री० गान्धारस्य स्त्र्यपत्यम् अण्। दुर्य्योधनस्य मातरि धृतराष्ट्रस्य पत्न्याम्।

**गान्धिक** पु० गन्धेन जीवति ठक्। गन्धवणिजि।

**गायत्री** स्त्री० गायन्तं त्रायते त्रै-क। वेदोक्ते, मन्त्रभेदे, षड्-क्षरपादके छन्दोभेदे च।

**गायन** त्रि० गै-ल्युट्। गानोपजीविनि। स्त्रियां ङीप्।

**गारुड** न० गरुडो देवताऽस्य। मरकतमणौ, विषमन्त्रे, स्वर्णे च। तेन प्रोक्तमित्यण्। गरुडेनोक्ते पुराणभेदे च।

**गारुडिक** पु० गारुड़ेन विषमन्त्रेण जीवति ठक्। विषवैद्ये।

**गारुत्मत** न० गरुत्मान् देवतास्य अण्। मरकतमणौ।

**गार्ध्रपक्ष** पु० गृध्रस्यायं गार्ध्रः अण् स पक्षः पत्रं यस्य। गृध्रपक्षरचितपत्रके वाणे। [गार्भिणमप्यत्र।

**गार्भिण** न० गर्भिणीनां समूहः अञ्। गर्भिणीसमूहे। यञ्।

**गार्हपत्य** पु० गृहपतेः नाम्ना युक्तः। यज्ञियाग्निभेदे।

**गार्हस्थ्य** न० गृहस्थस्य भावः कर्म वा। गृहस्थाश्रमकर्त्तव्ये कर्म्मणि, तद्धर्म्मे च।

**गालव** पु० सु० गल-घञ् तं वाति वा-क। मुनिभेदे, लोध्रवृक्षे च

**गालि** पु० स्त्री० गल-इन्। शापे, आक्रोशे च। [अगाढ

**गाह** विलोडने भ्वा० आत्म० सक० वेट्। गाहते अगाहिष्ट-

**गि(र्)रा** स्त्री० गॄ क्विप् वा टाप्। वाक्ये।

**गिरि** पु० गॄ-कि। पर्व्वते। 'यद्योर्द्ध्वसार्ध्योर्वीरो सक्तकेशो दिगम्बरः। सर्व्वत्र समभावेन भावयेद्यो नरोत्तमः। दृष्ट्वा देवीधिया नारीं स गिरिः परिकीर्त्तित इत्युक्तलक्षणे संन्यासिनि, परिव्राजकोपाधिभेदे च। यथा आनन्दगिरिः। गिलति लोकम् गॄ-अच्। वालमूषिकायां स्त्री० वा ङीप्।

**गिरिकदली** पु० ७त०। वज्रनीजायाम् वनरम्भायाम्।

**गिरिकर्णी** स्त्री० गिरिर्वालमूषिकेव कर्णः पत्रं यस्याः। अपराजितायाम्। स्वार्थे कन् गिरिकर्णिकाप्यत्र।

**गिरिका** स्त्री० गिरि+संज्ञायां कन्। वालमूषिकायाम्।

**गिरिज** न० गिरौ जायते जन-ड। अभ्रे, शिलाजतुनि, लौहे, गैरिके च। मधुकभेदे पु०। पार्व्वत्यां मातुलङ्ग्याञ्च स्त्री०

**गिरिदुर्ग** न० गिरिरेव दुर्गम्। राज्ञां शत्रुभ्यो निःशङ्कतया वासस्थानं दुर्गम् (गड़)। पर्व्वतरूपे तादृशे स्थाने, 'सर्व्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेदिति मनुः।

**गिरिनिम्ब** पु० ७त०। महानिम्बवृक्षे।

**गिरिपीलु** पु० ६त० (फालसा) इति वृक्षभेदे।

**गिरिपुष्पक** न० गिरेः पुष्पमिव इवार्थे कन्। शैलेये, शिलाजतुनि

**गिरिभिद्** पु० गिरिं भिनत्ति भिद्-क। पाषाणभेदके वृक्षे, इन्द्रे च

**गिरिमल्लिका** स्त्री० गिरौ मल्लीव इवार्थे कन्। कुटजवृक्षे।

**गिरिश** पु० गिरौ शेते शी-ड, गिरिरस्त्यस्य लोमा० श वा। शिवे। [शिनि। अपराजितायाम्।

**गिरिशालिनी** स्त्री० गिरिणा वालमूषिकाकर्णेनेव शलते शल-

**गिरिसुत** पु० ६त०। मैनाकपर्व्वते। पार्व्वत्याम् स्त्री०।

**गिरीश** पु० गिरेः कैलासस्य ईशः। महादेवे।

**गिल** पु० गिलति गॄ-मूल० क लत्वम्। जम्बीरे।

**गिलित** त्रि० गॄ-क गिलो जातोऽस्य तारका० इतच्। भक्षिते

**गीत** न० गै-क्त। गाने तत्तु लक्षणादिकं वृहद्भिधाने।

**गीता** स्त्री० गै-कर्म्मणि क्त। गुरुशिष्यकल्पनया उपदेशात्मके कथाविशेषे सा च भगवद्गीतारामगीतादिभेदात् बहुला किन्तु भगवद्गीतायामेव प्रसिद्धिः। गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्मात् विनिःसृतेति श्रीधरस्वामिधृतवचनम्।

**गीति** स्त्री० गै-क्तिन्। गाने, आर्य्याच्छन्दोभेदे च।

**गीर्णि** स्त्री० गॄ-क्तिन्। गिलने, स्तुतौ च।

**गीर्व्वाण** पु० गीरेव वाणो यस्य। देवे।

**गीष्पति** पु० गिरां पतिः इदुपधत्वात् षत्वम्। वृहस्पतौ। वा रत्वे विसर्गे च। गीर्पतिः गीःपतिरप्यत्र।

**गु** ध्वनौ भ्वा० आत्म० अक० अनिट्। गवते अगोष्ट।

**गु** विशेत्सर्गे तुदा० कुटा० पर० अक० अनिट्। गुवति अगुत

**गुग्गुल(लु)** पु० गुज-क्विप् गुक् व्याधिः ततो गुडति रक्षति उ-गुड-क वा डलयोरैकत्वम्। स्वनामख्यातनिर्य्यासके वृक्षभेदे, रक्तशोभाञ्जने च।

**गुच्छ** पु० गु-संप० क्विप् गुतं द्यति दो-क। कलिकाकुसुमादि समूहवति स्तवके, काण्डमूल्ये मूलत एव शाखाप्रधान-संघातके धान्यमल्लिकादेः स्तम्बे, द्वात्रिंशद्यष्टिके हारभेदे, मयूरपुच्छे च। स्वार्थे कन्। उक्तार्थेषु। संज्ञायां कन्। रीठाकरञ्जे पर्ण्यिपर्णे न०।

**गुच्छकरञ्ज** पु० गुच्छाकृतिः करञ्जः। करञ्जभेदे।

**गुच्छदन्तिका** स्त्री० गुच्छीभूता दन्ताः पुष्परूपाः सन्त्यस्याः ठन्। कदल्याम् तस्या हि मोचकरूपे पुष्पे गुच्छाकृतिद-न्तरूपत्वम्। [प्रत्येकपत्रस्य गुच्छात्मत्वम्।

**गु(त्स)च्छपत्र** पु० गुच्छाकृतीनि पत्राण्यस्य। तालवृक्षे तस्य हि

**गु(त्स)च्छपुष्प** पु० गु(त्सा)च्छाकृतीनि पुष्पाण्यस्य। सप्तच्छदवृक्षे। संज्ञायां कन्। रीठाकरञ्जे धातक्यां स्त्री० ङीप्।

गु(ल)च्छफल पु० गु(ला)च्छाजतीनि फलान्यस्य । रीठाकरञ्जे. राजादन्यां, कतके च । अग्निदमन्यां, काकमाच्यां, द्राक्षायां, कदल्याञ्च स्त्री० टाप् ।

गु(ल)च्छार्द्ध पु० गु(ल)च्छ इव अर्ध्यति ऋध-अच् । चतुर्विंशतियष्टिके हारभेदे । ६त० गुच्छ(ल)स्यार्द्धे पु०न० । [जुगोज

गुज ध्वनौ तुदा० कुटा० पर० अक० सेट् । गुजति अगुजिष्ट

गुज कूजने भ्वा० पर० अक० सेट् । गोजति अगोजीत् ।

गुज कूजने भ्वा० पर० सक० सेट् इदित् । गुञ्जति अगुञ्जीत् न जुगुञ्ज यः कलमिति भट्टिः ।

गुञ्जा स्त्री० गुजि-अच् । लताभेदे (कुंच) तत्फलेऽपि हरितक्यादित्वादणो लुक् । 'तुल्या यवाभ्यां कथितात्र गुञ्जे'ति लीलावती । गोधूमद्वयमाने, चतुर्धान्यमाने, पटहे, मदिरापट्टे, मधुरध्वनौ, चर्चायाञ्च ।

गुटि(टी) स्त्री० गु-टिक् वा ङीप् । गोलाकारायां वटिकायाम् । स्वार्थे कन् । तत्रैवार्थे गुटिकापातादिना व्यञ्जन'मितिदायभागः । [अजुगुण्ठत्-त ।

गुठ वेष्टने चुरा० उभ० इदित् सक० सेट् । गुण्ठयति-ते

गुड वेष्टने रक्षणे चूर्णने च चुरा० उभ० इदित् सक० सेट् । गुण्डयति-ते अजुगुण्डत्-त ।

गुड रक्षणे व्याघाते च तुदा० कुटा० पर० सक० सेट् । गुडति । अगुडीत् । जुगोड ।

गुड पु० गुड-क । गोले, इक्षुविकारे, 'इक्षोरसो यः सम्पक्वो जायते लोहवद् दृढः । स गुडः गौडदेशे तु मत्स्यण्डीत्र गुडोमत इत्युक्ते स्वनामख्याते इक्षोरसपाकजाते पदार्थे (फेनी) इति ख्याते पदार्थे, ग्रासे, कार्पासाञ्च । [स्तिः

गुडतृण न० गुडस्य गुडार्थं तृणम् । इक्षौ तत्र हि गुडो

गुडत्वक्(च) पु० गुड इव मधुरा त्वक्(चा) यस्य । त्वचे (दारचिनि)

गुडदारु पु० गुडप्रधानो दारुः शाक० । इक्षौ ।

गुडधेनु स्त्री० गुडनिर्म्मिता धेनुः । दानार्थं धेनुत्वेन शास्त्रानुसारेण कल्पिते गुडादिपदार्थे । [(मऊया)

गुडपुष्प पु० गुड इव मधुरं पुष्पमस्य । मधूकवृक्षे (मौल)

गुडफल पु० गुड इव मधुरं फलमस्य । पीलुवृक्षे ।

गुडबीज पु० गुड इव मधुरं बीजमस्य । मसूरे ।

गुडशिग्रु पु० गुड इव मधुरः शिग्रुः । रक्तशोभाञ्जने ।

गुडाका स्त्री० गुड-व्याघाते आक । निद्रायाम् ।

गुडाकेश पु० गुडाकाया निद्रायालस्यस्य ईशः वशित्वात् । शिवे, अर्जुने च ।

गुडाशय पु० गुड इव मधुरः आशयः फलमध्यं यस्य । आक्षोटवृक्षे (आखरोट) ६त० गुडाभिलाषे । [लतायाम् ।

गुडु(डू)ची स्त्री० गुड-रक्षणे उ (ऊ) चट् । स्वनामख्यातायां

गुण मन्त्रणे आम्रेडने इत्येके अद० चु० उभ० सक० सेट् । गुणयति-ते अजुगुणत्-त ।

गुण पु० गुण-अच् घञ् वा । धनुषो मौर्व्याम् धनुराकर्षणदामनि, रज्जुमात्रे, सगुणोऽपि पूर्णकुम्भो यथा कूपे निमज्जतीत्युद्भटः । शौर्यादिधर्मे, राज्ञां सन्धिविग्रहादिषु षट्सु साधनेषु, 'षाड्गुण्यमुपयुञ्जते' इति माघः । ज्ञानविनयादिषु, गुणा गुणानुबन्धित्वादिति रघुः । सांख्यमते पुरुषोपभोगोपकरणभूतत्वात् तद्बन्धनोपयोगित्वाच्च सत्त्वरजस्तम आदिषु पदार्थेषु । 'प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मस्वि'ति गीता । अप्रधाने, न्यायमते रूपादिषु चतुर्विंशतिपदार्थेषु, व्याकरणोक्ते 'सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुण', इत्युक्ते द्रव्यमात्राश्रिते द्रव्यभिन्ने उत्पाद्यानुत्पाद्यता समानाधिकरणे सिद्धरूपे वस्तुधर्मे, व्याकरणे परिभाषिते अदेङ्गुण इत्युक्ते अकारे,एकारे, ओकारे च अलङ्कारोक्तेषु माधुर्यादिषु, आवृत्तौ,तन्तौ,उत्कर्षे, दूर्वायाञ्च ।

गुणक पु० गुण—आम्रेडने ण्वुल् । आवर्त्तके पूरके 'गुण्यान्त्यमङ्कं गुणकेन हन्यादिति लीलावती । [पक्षपातिनि ।

गुणगृह्य त्रि० ग्रह-पक्षार्थे क्यप् ६त० । गुणानां पक्षे

गुणनिका स्त्री० गुण-आम्रेडने युच् स्वार्थे कन् । अभ्यासे निश्चयार्थं पाठस्य ग्रन्थस्य पुनःपुनरनुशीलने, वक्तृ,गुणनिकेव सेति माघः । शून्ये, नृत्ये, मालायाञ्च ।

गुणवृक्षक पु० वृक्ष इव कायति कै-क गुणानां नौकाकर्षणरज्जूनां बन्धनाधारः वृक्षः । नौकाकर्षकदामाद्याधारे काष्ठे । (मास्तुल) । [पूरिते ।

गुणित त्रि० गुण-आम्रेडने कर्म्मणि क्त । आहते ताडिते

गुणिन् पु० गुणोऽस्त्यस्य इनि । धनुषि । गुणविशिष्टे त्रि० 'गुणी गुणं वेत्ती'त्युद्भटः ।

गुणीभूत त्रि० अगुणः गुणः भूतः च्वि भू-क्त । अप्रधानीभूते

गुणीभूतव्यङ्ग्य न० गुणीभूतं वाच्यार्थादप्रकृष्टं व्यङ्ग्यं यत्र । अलङ्कारोक्ते मध्यमे काव्ये । [कशेरु ।

गुण्ड पु० गुडि-वेष्टने अच् । असिपत्रे तृणभेदे यस्य कन्दः

गुण्डकन्द पु० ६त० । कशेरुणि (केशुर) ।

गुण्डारोचनिका स्त्री० गुण्डा सती रोचना हरिद्रेव इवार्थे कन् (कमलागुंडि) वृक्षभेदे ।

गुण्डिक पु० गुण्ड+अस्त्यर्थे ठन् । चूर्णीकृते तण्डुलादौ ।

**गुण्डित** त्रि० गुडि-वेष्टने क्त । रजसाकीर्णे, रूषिते ।

**गुत्स** पु० गुध-स किच्च । स्तवके, विकाशोन्मुखकलिकायाम्, गुच्छार्थे, ग्रन्थपरिच्छेदे च । गुत्सकादयः गुच्छकादिवत् ।

**गुद** खेले भ्वा० आत्म० अक० सेट् । गोदते अगोदिष्ट ।

**गुद** न० गुद-क । मलत्यागद्वारे अपानवायुनिःसारणद्वारे ।

**गुदकील** पु० गुदे कील इव । अर्शोरोगे । गुदाङ्कुरादयोऽप्यत्र

**गुदग्रह** पु० गुदं गृह्णाति ग्रह-अच् । उदावर्त्तनामके रोगे।

**गुद्र** मिथ्या कथने चुरा० उभ० सक० सेट् इदित् । गुन्द्रयति ते अजुगुन्द्रत्-त ।

**गुध** रोषे क्र्या० पर० अक० सेट् । गुध्नाति अगोधीत् ।

**गुध** क्रीडे भ्वा० आत्म० अक० सेट् । गोधते अगोधिष्ट ।

**गुध** वेष्टने दिवा० पर० सक० सेट् । गुध्यति अगोधीत् ।

**गुन्द्र** पु० गुन्द्र-अच् । शरतृणे (गोदपटेरा) ख्याते वृक्षे च ।

**गुन्द्रमूला** स्त्री० गुन्द्रस्येव मूलमस्याः । एरकाख्ये तृणभेदे ।

**गुन्द्रा** स्त्री० गुद्रि-पचाद्यच् । एरकायाम् । गां जलं द्रावयति द्रा-क ष०। भद्रमुस्तके, प्रियङ्गौ, गवेधुकायाञ्च ।

**गुप** गोपने कुत्सने च भ्वा० आत्म० सक० सेट् । निन्दायां जुगुप्सते अजुगुप्सिष्ट । गोपने गोपते अगोपिष्ट । [पीत्-अगौप्सीत्

**गुप** रक्षणे भ्वा० पर० सक० वेट् । गोपायति-अगोपायीत्-अगो-

**गुप** व्याकुलीभावे दिवा० पर० सक० सेट् । गुप्यति अगुपत्-अगोपीत्

**गुप्त** त्रि० गुप-रक्षणे गोपने वा क्त । रक्षिते, त्राते, गूढे, संवृते च । वैश्यसंज्ञायां पु० ।

**गुप्तगति** पु० गुप्ता गतिर्यस्य । अपसर्पे, गुप्तचरे ।

**गुप्तस्नेह** पु० गुप्तः स्नेहस्तैलादिर्यत्र । अङ्कोटवृक्षे ।

**गुप्ति** स्त्री० गुप-क्तिन् । रक्षणे, गोपने च राज्ञामात्मनगर्य्यां, परनगर्य्याञ्च रक्षायां (पहारा) गुप्तावपि मनोहरमिति कुमारः । कारागारे, भगर्त्ते, अवस्करस्थाने, नौकाच्छिद्रे, यमे, गर्त्तार्थं क्षितेः खनने च । [गुफितः ।

**गुफ** ग्रन्थे तुदा० पर० सक० सेट् मुचा० । गुम्फति अगोफीत् ।

**गुम्फ** ग्रन्थे तु० पर० सक० सेट् । गुम्फति अगुम्फीत् । गुम्फितः

**गुम्फ** पु० गुम्फ-घञ् । ग्रन्थने, बाहोर्भूषणे, श्मश्रुणि च ।

**गुम्फना** स्त्री० गुम्फ-युच् । 'वाक्ये शब्दार्थयोः सम्यग्रचना गुम्फना स्मृते'त्युक्तायां रचनायाम् ।

**गुम्फित** त्रि० गुम्फ-क्त । ग्रथिते, प्रथिते च । [गूर्णः गोरणम्

**गुर** वधे गत्याञ्च दिवा० आत्म० सक० सेट् । गूर्यते अगोरिष्ट ।

**गुर** उद्यमे तुदा० कुटा० आत्म० अक० सेट् । गुरते अगुरिष्ट । गुरणम् गूर्णः ।

**गुरु** पु० गिरत्यज्ञानं ग्रणाति उपदिशति वा धर्मं गॄ-कु उच्च । 'निषेकादीनि कर्म्माणि यः करोति यथाविधि । सम्भावयति चान्नेन स विप्रो गुरुरुच्यते' इति मनूक्ते निषेकादिकर्त्तरि पित्रादौ, 'स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छती'त्युक्ते आचार्य्ये, शास्त्रोपदेष्टरि, सम्प्रदायप्रवर्त्तके, उपाध्याये, तान्त्रिकमन्त्रोपदेष्टरि, बृहस्पतौ, तदधिदैवे पुष्ये, द्विमात्रे दीर्घे स्वरवर्णे, बिन्दुविसर्गयुक्ते-एकमात्रे, संयुक्तवर्णात् पूर्व्वस्थिते एकमात्रेऽपि वर्णे, द्रोणाचार्य्ये, कपिकच्छ्वाञ्च । बलवति, महति, पूज्ये, 'गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः । पतिरेको गुरुः स्त्रीणां सर्व्वत्राभ्यागतो गुरु'रिति पुराणम् । दुर्ज्जरे, गुरुत्ववति च त्रि० स्त्रियां वा गुर्व्वी ।

**गुरुक्रम** पु० ६त० गुरुपरम्परोपदेशे । [विमातृगन्तरि ।

**गुरुतल्पग** पु० गुरोः पितुस्तल्पं दारान् गच्छति गम-ड ।

**गुरुपत्रा** स्त्री० गुरु पाके दुर्ज्जरं पत्रमस्याः । तिन्तिडीवृक्षे

**गुरुवर्च्चोघ्न** पु० गुरुवर्चः रोगभेदं हन्ति हन-क । निम्बाके (पातिलेबु) । [शिंशपायाम्

**गुरुसारा** स्त्री० गुरुः गुरुत्ववान् सारो यस्याः । (शिशु)

**गुरुस्कन्ध** पु० गुरुः स्कन्धो यस्य । श्लेष्मातकवृक्षे ।

**गुर्ज्जर** पु० देशभेदे (गुजराट) तद्देशवासिनि ब० व० ।

**गु(गू)र्द्द** कूर्दने भ्वा० आत्म० अक० सेट् । गु(गू)र्दते अगु(गू)र्दिष्ट ।

**गु(गू)र्द्द** निवासे कूर्दने च चुरा० उभ० अक० सेट् । गु(गू)र्दयति ते अजुगु(गू)र्दत् त ।

**गुर्व्व** उद्यमे भ्वा० पर० अक० सेट् । गुर्वति अगुर्वीत् । गूर्णः ।

**गुर्व्विणी** स्त्री० गुरुर्गर्भोऽस्त्यस्याः व्रीह्यादित्वात् इनि नि० णत्वाभावः । गर्भिण्याम् ।

**गुर्व्वी** स्त्री० गुरु-ङीप् । गर्भवत्यां 'नहि वन्ध्या विजानाति गुर्व्वीप्रसववेदना'मिति । गौरववत्यां स्त्रियां, गुरुस्त्रियाञ्च ।

**गुल्फ** पु० गल-फक् नि० अस्योत्व । पादग्रन्थौ ।

**गुल्म** पु० गुड-रक्षणे वेष्टने वा मक् । डलयोरैक्यात् । प्रधानपुरुषाधिष्ठिते रक्षके पुरुषवर्गे, (गजाः ९, रथाः ९, अश्वाः २७ पदातयः ४५) एतत्संख्यान्विते सैन्यसमुदाये, स्वनामख्याते रोगभेदे, बहुदेशे रक्षणार्थं स्थापिते सैन्ये, अप्रकाण्डे लताप्रतानादौ वृक्षे, 'एकमूलेषु सङ्घातजातेषु शरेक्षुप्रभृतिषु तृणभेदेषु, प्लीहरोगे च ।

**गुल्ममूल** न० गुल्माकृति मूलमस्य । आर्द्रके ।

**गुल्मवल्ली** स्त्री० गुल्माकारा वल्ली । सोमलतायाम् ।

**गुल्मिनी** स्त्री० गुल्म+इनि । द्राक्षातालूलीप्रभृतौ लतायाम्

**गुल्मी** स्त्री० गुल्माकारफलत्वात् गुल्मरोगहन्तृत्वाद्वा अच् गौ० ङीष् । आमलक्यां, कक्ष्याम्, एलायाम्, वनानि-

स्थितगृहे, वन्याम्, गृध्रनखीवृक्षे, (गुड़काओंली) ।

**गु(गू)वाक** पु० गु-पिनाकादित्वात् आक नि० (सुपारी) क्रमुके

**गुह** संवरणे भ्वा०उभ०सक०वेट् । गूहति ते अगूहीत् अघुक्षत् अगूहिष्ट अगूढ ।

**गुह** पु० गुह-क । कार्त्तिकेये, अश्वे, रामभित्रे शृङ्गवेराधिपे चण्डालनाथे, गर्त्ते, विष्णौ च । सिंहपुच्छीलतायाम् अकृत्रिमे देवखाते पर्वतगर्त्ते, हृदये च स्त्री० । गुहां प्रविष्टाविति श्रुतिः ।

**गुहाशय** पु० गुहायां गर्त्ते आशेते शी-अच् । अज्ञाने । 'सिंहव्याघ्रवृकाऋक्षतरक्षुद्वीपिनस्तथा । वभ्रुजम्बुकमार्ज्जारा इत्याद्याः सुगुहाशया इत्युक्तेषु सिंहादिषु, हृदये, बुद्धौ च स्थिते जीवे,ईश्वरे च 'गुहाशयं गह्वरेष्ठ'मिति श्रुतिः ।

**गुहिल** न० गुह-इलच् किच्च । धने, वने च ।

**गुह्य** त्रि० गुह-क्यप् । कच्छपे, दम्भे,परमात्मनि च । रहसि, भगे, लिङ्गे च न० । रहस्ये,गुहामर्हति दण्डादित्वात् यति । अप्रकाश्ये च त्रि० । [कुवेरधनरक्षके देवयोनिभेदे ।

**गुह्यक** पु० गुह्यं कं सुखं यस्य,गुह्यं कुत्सितं कायति कै-क वा ।

**गुह्यकेश्वर** पु० ६त० । कुवेरे ।

**गुह्यपुष्प** पु० गुह्यं पुष्पमस्य । अश्वत्थवृक्षे । [जगाव । गूनः

**गू** विष्ठात्यागे तुदा०कुटा०पर०अक०सेट् । गुवति अगुविष्ट

**गू** स्त्री० गच्छत्यपानेन देहात् गम-कू टिलोपश्च । विष्ठायां, मले च । गूधातु क्षप्रत्ययान्ततःकथनं पुंलिङ्गताकथनञ्च प्रामादिकम् ।

**गूढ** त्रि० गुह-क्त । गुप्ते, संवृते, गहने च । रहसि न० ।

**गूढज** पु०गूढं गुप्तं यथा तथा जातः-गूढः सन् वा जातः जन ड । द्वादशपुत्रमध्ये पुत्रभेदे । [हि केनापि न दृष्टचरम्

**गूढनीड** पु०गूढं नीडं वासस्थानं यस्य । खञ्जनखगे तद्वासस्थानं

**गूढपत्र** पु०गूढं पत्रमस्य । अङ्कोठे, करीरे च ।

**गूढपाद्(द)** पु० गूढाः पादा अस्य वा पाद्भावः । सर्पे ।

**गूढपुरुष** पु० कर्म० । गुप्तचरे, प्रणिधौ ।

**गूढपुष्प** पु० गूढानि संवृतानि पुष्पाण्यस्य । वकुलवृक्षे ।

**गूढफल** पु० गूढं यथा तथा फलति अच् । वदरे ।

**गूढमैथुन** पु० गूढं केनाप्यदृश्यं मैथुनं यस्य । काके ।

**गूढवल्लिका** स्त्री० कर्म० । अक्षोटवृक्षे ।

**गूढसाक्षिन्** पु०कर्म०।'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् । यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते' इत्युक्ते साक्षिभेदे

**गूढाङ्ग** पु० गूढान्यङ्गान्यस्य । कच्छपे ।

**गूढोत्पन्न** पु०'उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः । स गृहे गूढ उत्पन्न स्तस्य स्यात् यस्य तल्पज' इत्युक्ते पुत्रभेदे ।

**गूथ** पु०न० । गू-थक् । विष्ठायाम् ।

**गूर** उद्यमे चुरा०आ०अक०सेट् । गूरयते अजूगुरत ।

**गूर** बधे गतौ च दिवा०आत्म०सक०सेट् । गूर्य्यते अगूरिष्ट ।

**गृ** सेके भ्वा०पर०सक०अनिट् । गरति अगार्षीत् ।

**गृज** ध्वनौ भ्वा०पर० अक०सेट् । गर्जति अगर्जीत् ।

**गृज** ध्वनौ भ्वा०पर०अक०सेट् इदित् । गृञ्जति अगृञ्जीत् ।

**गृञ्जन** पु० गृञ्ज्यते भक्ष्यत्वेन कथ्यते रोगेषु गृजि-ल्युट् । 'गन्धाकृतिरसैस्तुल्यः सूक्ष्मनालः पलाण्डुने'त्युक्तलक्षणे मूलभेदे (रसुन) इति ख्याते मूलभेदे च । विषदग्धपशुमांसे न० । [अगर्द्धीत् । गर्द्धित्वा-गृद्धा ।

**गृध** लिप्सायां दिवा० पर०सक० सेट् । गृध्यति अगृधत्-

**गृध्नु** त्रि० गृध-क्नु । लुब्धे ।

**गृध्र** पु० गृध-क्रन् । (शकुनि) खगभेदे ।

**गृध्रनखी** स्त्री० गृध्रस्य नखइव पत्रादि अस्याः ङीष् । वदर्याम् (कुलेखाडा) कुलिकवृक्षे च ।

**गृध्रराज** पु० ६त० । गरुडात्मजे जटायुखगे ।

**गृष्टि** स्त्री० सकृत् गर्भं गृह्णाति ग्रह-क्तिच्-पृ०नि० । सकृत्-प्रसूतायां गवि,वराहक्रान्तायां,वदरायामोषधौ,काश्मर्याञ्च

**गृह** ग्रहणे अद०चु०आत्म०सक० सेट् । गृहयते अजगृहत

**गृह** न० ग्रह गेहार्थे क । इष्टकामृत्तिकादिरचिते गेहे । गृह-ग्रहणे अच् । कलत्रे 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति स्मृतिः । नामनि, मेषादिभवने राशौ च । अर्द्धर्चादित्वादयमुभयलिङ्गः तत्र एकगृहे न० पुंलिङ्गस्तु बहुवचनान्तएव 'तत्रागारं धनपतिगृहा'-निति मेघदूतम् । कलत्रेऽपि दारशब्दवत् ब०व० ।

**गृहकच्छप** पु० गृहे कच्छप इव । पेषणशिलायाम् ।

**गृहकन्या** स्त्री० गृहे कन्येव । घृतकुमार्य्याम् ।

**गृहकारक** पु० गृहं करोति कृ-ण्वुल् । (घरामि) गृहनिर्म्माणकारके वर्णसङ्करभेदे । [चित्रकण्ठे (घुघु)

**गृहनाशन** पु० गृहं नाशयति नश-णिच् ल्यु । वनकपोते

**गृहगोधा** स्त्री० गृहस्य गोधेव । (टिक्टिकी) ज्येष्ठ्याम् । स्वार्थे कन् तत्रैवार्थे ।

**गृहपति** पु० ६त० । गृहस्वामिनि, गृहस्थे, मन्त्रिणि,धर्म्मे च

**गृहभूमि** स्त्री० गृहयोग्या भूमिः । वास्तुभूमौ ।

**गृहमणि** पु० गृहे मणिरिव । प्रदीपे ।

**गृहमृग** पु० गृहस्य मृगइव । कुक्कुरे । [गृहस्थे ।

**गृहमेधिन्** पु० गृहैर्दारैर्मेधते सङ्गच्छते मेध-सङ्गमे णिनि ।

**गृहमेधीय** पु० गृहमेधिनोऽयं छ। गृहस्थकर्त्तव्ये धर्म्मे।
**गृहयालु** त्रि० गृह-आलु। ग्रहीतरि। [समीपस्थोपवने।
**गृहवाटिका** स्त्री० गृहसमीपे वाटिका आरामः। गृह-
**गृहस्थ** पु० गृहेषु दारेषु तिष्ठति अभिरमते स्था-क। गृहिणि
**गृहागत** पु० गृहमागतः आ+गम-क्त। आगन्तके, अतिथौ।
गृहागते त्रि०। [पक्षे उपवने।
**गृहाराम** पु० गृहे गृहसमीपे आरामः। गृहसमी-
**गृहावग्रहणी** स्त्री० गृहमवगृह्यते अनेन अव+ग्रह-करणे
ल्युट् ङीप्। देहल्याम् (देओयाल)।
**गृहिणी** स्त्री० गृह-अस्त्यर्थे इनि। भार्य्यायाम् गेहकर्म्म-
कुशलायाम्। 'गृहिणी सचिवो मिथः सखी'ति रघुः।
**गृहिन्** पु० गृहा दाराः सन्त्यस्य इनि गृहस्थे।
**गृहीत** त्रि० ग्रह-क्त। स्वीकृते, ज्ञाते, प्राप्ते, धृते च।
**गृहेनर्द्दिन्** पु० गृहे एव नर्द्दति न युद्धे, पात्रे समितादि०
स०। कापुरुषे रणभीरौ गृहे आस्फालयितरि।
**गृह्य** पु० ग्रह-पदास्वैरीत्यादिना क्यप्। गृहासक्ते खगे मृगे
च भलङ्कारे, वेदोदितकर्म्मप्रयोगज्ञापके गोभिलसूत्रादौ
ग्रन्थभेदे च। अस्वैरिणि आयत्ते, स्वपक्षीये पक्ष्ये च
त्रि०। गृहे भवः यत्। गृहभवे, वस्तुनि त्रि०। स्वार्थे कन्
तत्रैवार्थे। नगरवाह्यस्थे ग्रामे स्त्री० टाप् गृह्या।
**गॄ** विज्ञापने चुरा०आत्म०सक०सेट्। गारयते अजीगरत।
**गॄ** शब्दे क्र्यादि० पर० प्वादि० सक०सेट्। गृणाति अगारीत्
**गॄ** निगरणे तु० पर०सक०सेट्। गिरति-गिलति अगारीत्-
अगालीत्। [गेदत्। गेदित्वा गेत्वा।
**गेट्** गतौ भ्वा० आत्म०सक०सेट्। गेदते अगेदिष्ट। अजि-
**गेन्दु(ण्डु)क** पु० गच्छतीति ग इन्दुरिव इवार्थे कन्। कन्दुके
वस्त्रनिर्म्मिते गोलाकारे क्रीड़नके। पृषो०वा डत्वे गेण्डुकश्च
**गेय** त्रि० गे-भव्यगेयेत्यादिना कर्त्तरि यत्। गायने। भावे यत्।
गीतौ 'गेये केन विनीतं वा'मिति रघुः। कर्म्मणि यत्।
गातव्ये त्रि० पूर्वाह्णे गेयं सामेति भाष्यम्।
**गेव** सेवने भ्वा०आ०सक०सेट्। गेवते अगेविष्ट। अजिगेवत्
**गेष** अन्वेषणे भ्वा०आत्म०सक०सेट्। गेषते अगेषिष्ट। अजिगेषत्
**गेह** न० गो गणेशो गन्धर्वो वा ईहः ईप्सितो यत्र। गृहे।
**गेहेनर्द्दिन्** पु० गृहेनर्द्दिवत् सर्व्वम्। [रणभीरौ।
**गेहेशूर** पु० गृहएव शूरः। पात्रेसमितादि स०। कापुरुषे
**गै** गाने भ्वा०पर०सक०सेट्। गायति। अगासीत्।
**गैरिक** न० गिरौ भवः ठक्। (गिरि) इति ख्याते पर्व्वतजाते
उपधातुभेदे, स्वर्णे च।

**गैरिकाक्ष** पु० गैरिकमिवाक्षि पुष्पमस्य। जलमधूके वृक्षे।
**गैरी** स्त्री० गिरौ जाता अण्। (विषलाङ्गली) लाङ्गलीवृक्षे।
**गैरेय** न० गिरौ भवः ढक्। (शैलज) शिलाजतुनि।
**गो** पु० गम-डो। वृषभे, स्वर्गे, किरणे, वज्रे जले, पशौ, चन्द्रे, वायौ,
सूर्य्ये, ऋषभनामौषधौ च। सौरभेय्याम् दृष्टौ, वाणे,
दिशि, मातरि, वाचि, भूमौ च स्त्री०।
**गोकण्टक** पु० गोर्धेनोः पृथिव्या वा कण्टकः। क्षुरे, पिष-
मोन्नते स्थपुटे, विकङ्कतवृक्षे च (वैइचि)।
**गोकर्ण** पु० गौरेव कर्णो यस्य। सर्पे, 'ध्नन्ति गोकर्ण-
शरीरभक्षा' इति चौरः। गोरिव कर्णावस्य। अश्वतरे,
मृगभेदे, गणदेवताभेदे, अनामिकायुतवितस्ताङ्गुष्ठमाने,
शैवे तीर्थभेदे च।
**गोकर्णी** स्त्री० गौः कर्ण इव यस्याः। मूर्व्वालतायाम्।
**गोकील** पु० गोः पृथिव्याः कीलइव। लाङ्गले, मुसले च।
**गोकुल** न० गवां कुलं यत्र। गोस्थाने गोष्ठे, 'गोकुले कन्दु-
शालाया'मिति स्मृतिः। व्रजनामके प्रसिद्धे स्थाने 'गोकुले
रामकेशवाविति पुराणम्। ६त०। गोसमूहे।
**गोखुर** पु० गोः खुरइव। गोक्षुरवृक्षे ६त०। गवां क्षुरे।
**गोग्रन्थि** पु० गोर्ग्रन्थिरिव। करीषे (घवा) गवां ग्रन्थिः यद्भक्ति
र्यत्र। गोष्ठे। गोर्ग्रन्थिरिव, गोजिह्विकौषधौ।
**गोघ्न** पु० गौर्हन्यते यस्मै हन-सम्प्रदाने टक्। अतिथौ तदा-
गमने हि मधुपर्कार्थं गोवधो विहितः। कर्त्तरि ठक्।
गोघातके त्रि०।
**गोचर** पु० गावः इन्द्रियाणि चरन्त्यस्मिन् नि० क। इन्द्रिय-
विषये रूपरसादौ। गावश्चरन्त्यस्मिन्। गवां प्रचार-
स्थाने, देशमात्रे, ज्योतिषोक्ते जन्मराश्यवधिके तत्तत्
स्थाने सूर्य्यादिग्रहगमनेषु च। 'गोचरे वा विलग्ने वा ये
ग्रहारिष्टसूचका इति ज्योतिषम्।
**गोचर्म्मन्** न० ६त०। गवां चर्म्मणि, 'सप्तहस्तेन दण्डेन त्रिंशद्दण्डैः
निवर्त्तनम्। दश तान्येव गोचर्म्म'त्युक्ते भूमिपरिमाणभेदे च
**गोच्छाल** पु० गां भूमिमाच्छादयति छद-णिच् अण् पृ०।
भूकदम्बे (चाकुलिया)। [त्वम्। व्रीह्यादिषु।
**गोजा** स्त्री० गवि पृथिव्यां व्रीह्यादिरूपेण जायते विट् आ-
**गोजिह्वा** स्त्री० गोर्जिह्वेव। (गोजिया) लताभेदे। स्वार्थे कन्
अत्रैवार्थे। [गवादन्यां। अञ्च (तरमुज) शीर्णवृन्ते पु०
**गोडुम्बा** स्त्री० गां भूमिं तुम्बति अर्द्दते तुबि-क पृ०। (गोडुक)
**गोणी** स्त्री० गुण-घञ् नि० गुणः गोण+आवपनेऽर्थे ङीप्।
धान्याधारे (गुण) ख्याते आवपनपात्रे छिद्रवस्त्रे, धाप्यां,

'द्विसूर्पं गोणमुदाहृतेति मानभेदे, द्रोणीपरिमाणे च ।
गोण्ड पु० गोरख इव । नीचजातिभेदे (गोंड) वृद्धनाभौ च तद्वति
गोतम पु० महर्षयः पुत्रे स्वनामख्याते मुनिभेदे ।
गोतीर्थ न० गोष्ठतुल्यं तत्स्थित्या तीर्थमिव । गोष्ठे ।
गोत्र पु० गां पृथिवीं त्रायते त्रै-क । पर्वते । नामनि, कानने, क्षेत्रे, पथि, छत्रे, सजातीयगणे, पौत्रप्रभृत्यपत्ये वंशे, ऋषिशब्दवाच्येषु आदिपुरुषेषु शाण्डिल्यादिषु चतुर्विंशतौ मनुजेषु च । विस्तरो वृहदभिधाने ।
गोत्रज त्रि० गोत्रे समाने गोत्रे जायते जन-ड । एकगोत्रोत्पन्ने
गोत्रभिद् पु० गोत्रान् पर्वतान् भिनत्ति भिद-क्विप् । इन्द्रे ।
गोत्रा स्त्री० गोत्राः पर्वताः सन्त्यस्याः अर्श आदित्वादच् । धरायाम् । गो+समूहे त्रल् । गोसमूहे । [दन्ते पु०
गोदन्त न० गोर्दन्त इवावयवो यस्य । हरिताले । ६त० । गवां
गोदान न० गावः केशा दीयन्ते छिद्यन्तेऽत्र दो-ल्युट् । केशान्तरूपसंस्कारभेदे 'अथास्य गोदानविधेरनन्तर'मिति रघुः ।
गोदारण न० गां भूमिं दारयति दृ-णिच्-ल्यु । लाङ्गले, कुद्दाले च । [तीर्थावाहनमन्त्रः
गोदावरी स्त्री० नदीभेदे । गोदावरि । सरस्वति । इति जले
गोधन न० गवां धनं समूहः । गोसमूहे । गौरेव धनमस्य । गोरूपधनवति त्रि० । गौरेव धनम् । गोरूपे धने न० ।
गोधा स्त्री० गुध्यते वेष्ट्यतेवाहुरनया करणे घञ् । धनुर्गुणाघातवारणाय प्रकोष्ठे बद्धे चर्मणि । कर्त्तरि अच् । (गोसाप) इति ख्याते सर्पभेदे 'शशकः शल्लकी गोधेति' मनुः । स्वार्थे कन् अत्र वार्थे ।
गोधापदी स्त्री० गोधेव पादो मूलमस्याः स्वाङ्गत्वात् जातित्वाच्च ङीपि पद्भावः । (गोयालिया) लताभेदे । स्वार्थे कन् अत्रैवार्थे
गोधास्कन्ध पु० गोधेव स्कन्धोऽस्य । विट्खदिरे ।
गोधि पु० गुध-इन् । ललाटे, गोधायां च ।
गोधिनी स्त्री० गुध-णिनि । वृहतीभेदे ।
गोधूम पु० गुध-ऊम । व्रीहिभेदे (गोङम) नागरङ्गे च ।
गोधूलि पु० गोभ्य उत्थिता धूलिर्यत्र काले । (सन्ध्यातपारुणित पश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । रुद्धे गवां खुरपुटोद्गलितैरजोभिर्गोधूलिरित्युक्ता काले ।
गोनर्द पु० गां जलं नर्दयति नर्द-अण् । सारसपक्षिणि, पर्वतभेदे च । कैवर्त्तीमुस्तके न० ।
गोनर्दीय पु० गोनर्दे तत्समीपे देशे भवः । पाणिनौ मुनौ ।
गोनस पु० गोरिव नासास्य नसादेशः । सर्पभेदे ।
गोप पु० गां भूमिं वा पाति रक्षति पा-क । (गोयाला) जातिभेदे । ग्रामाधिकृते भूस्वामिके, उपकारके च त्रि० ।
गोपघोण्टा स्त्री० गोपप्रिया घोण्टा । हस्तिकोली, 'वदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् । अटव्यामेव सा घोण्टा गोपघोण्टेति कीर्त्तितेत्युक्तवृक्षे च ।
गोपति पु० ६त० । गवां पत्यौ वृषे, (साँड) वृषपतौ शिवे, भूमिपतौ, नृपे, श्रीकृष्णे, किरणपतौ सूर्ये, स्वर्गपतौ शक्रे, वृषभनामौषधौ च ।
गोपदल पु० गोपदंशलस्थानं लाति ला-क । गुवाके ।
गोपभद्र पु०न० गोमेभ्यो भद्रमस्मात् ५ब० । शालूके । [गाम्भार्याम्
गोपभद्रिका स्त्री० गोमेभ्योभद्रं यस्मात् ५ब० कप् अतइत्त्वम् ।
गोपवल्ली स्त्री० गां पाति पा-क कर्म०। मूर्वालतायां श्यामालतायां (श्यामावास) ।
गोपा स्त्री० गां पाति पा-क टाप् । श्यामालतायाम् ।
गोपानसी स्त्री० गवां किरणानां पानं शोषणं गोपानं स्यति सो-क गौरा० ङीष् । कुड्येषु छादनार्थं वक्रे वक्रकाष्ठे, (मुदनी) वन्धनाधारे पटलाधारे वंशपञ्जरे च । [कृष्णे च
गोपाल पु० गां सुरभीवृषभादिकं भूमिं वा पालयति । गोपार्थे,
गोपालकर्कटी स्त्री० । पाल-अण् गोपालस्य गोरक्षकस्य प्रिया कर्कटी । क्षुद्रकर्कट्याम् ।
गोपुच्छ पु० गोः पुच्छ इव पुच्छो यस्य । गोलाङ्गूलवानरे । गोपुच्छाकारत्वात् हारभेदे । ६त० । गोलाङ्गूले न० ।
गोपुर न० गावः पूर्य्यन्ते यत्र पृ-मूल०क । पुरद्वारे, कैवर्त्तीमुस्तके च
गोप्य पु० गुप-यत् । रक्ष्ये दासीपुत्रे । रक्षणीयमात्रे, गुह्ये च त्रि०
गोमती स्त्री० नदीभेदे, वेदमन्त्रभेदे च । [अनुगोमत्-त ।
गोम लेपने अद० चुरा० उभ० सक० सेट् । गोमयति-ते
गोमन्त पु० विन्ध्यपर्व्वतस्य प्रत्यन्तपर्व्वते ।
गोमय पु०न० गवां पुरीषम् गो+मयट् । गोपुरीषे (गोवर)।
गोमयच्छत्र न० गोमये तदाधारस्थाने छत्रमिव । शिलीन्ध्रे (छातिया) । [रियापोका) कीटभेदे
गोमयोत्था स्त्री० गोमयादुत्तिष्ठति उद्+स्था-क टाप् । (गुव-
गोमायु पु० गां विकृतां वाचं मिनोति मा-उण् । शृगाले, गन्धर्व्वभेदे च ।
गोमिन् त्रि० गो+अस्त्यर्थे मिनि । गवां स्वामिनि । शृगाले पु०
गोमुख पु० गोरिव मुखमस्य । यक्षभेदे, नक्रे, कुटिलाकारे वाद्यभाण्डे, चौरकृतसन्धिभेदे, लेपने, तन्त्रोक्ते जपमालास्थापनार्थे पट्टसूत्रादिनिर्मिते यन्त्रभेदे च । हिमालयैकदेशात् गङ्गापतनगुहायां स्त्री० ङीप् ।
गोमूत्रिका स्त्री० गोमूत्र साधनत्वेनास्त्यस्याः ठन् । गोमूत्रजातायां

लतायां गोमूलतुल्यसन्निवेशविशेषवति काव्यवर्म्मे च ।
गोमेद पु० मणिभेदे, द्वीपभेदे च । 'गोमेदे गोपतिर्नाम इत्यु-
पक्रम्य यत्रवाटे हृता गावो दग्धाः कोपाग्निना तदा ।
तन्मेदसा मही छन्ना गोमेदः स ततोऽभवदिति पुराणेऽस्य
गोमेदता निरुक्ता ।
गोमेध पु० गावो मेध्यन्ते यत्र मेध-आधारे घञ् । यज्ञभेदे ।
गोरक्ष पु० रक्षतीति रक्ष-अच् । नारङ्गवृक्षे (गोरक्षचाकुलिया)।
लताभेदे च । गोरक्षके त्रि० ।
गोरक्षकर्कटी स्त्री० कर्म्म० । क्षुद्रकर्कट्याम् (राखालकांकुड़)।
गोरक्षजम्बु स्त्री० गोरक्षे गोमे जम्बुरिव । घोण्टाफले
गोधूमे च । [(गोरक्षचाकुलिया) क्षुपभेदे ।
गोरक्षतण्डुली स्त्री० गोरक्षं तण्डुलं वीजं यस्याः ।
गोरक्षतुम्बी स्त्री० गोरक्षी तुम्बी । कुम्भाकारतुम्ब्याम् ।
गोरोच न० गोः किरण इव रोचते रुच-अच् । हरिताले
गोरोचना स्त्री० गोभ्यो जाता रोचना हरिद्रा । स्वनाम-
ख्याते गन्धद्रव्ये 'गोरोचनालक्ताककुङ्कुमेनेति तन्त्रम् ।
गोर्द न० गुर अव्यादित्वात् नि० । मस्तिष्के मस्तकस्य स्नेहे
गोल पु० गुड-घञ् डलयोरैक्यम् । वर्तुलवर्तुले, मदनद्रुमे,
भर्त्तरि मृते जारजे पुत्रे, ज्योतिषोक्ते भूगोले, खगोले,
एकराशौ ग्रहद्वयोगे च । मण्डले न० । स्वार्थादौ कन्
मृते भर्त्तरि जारजाते पुत्रे, मणिके,(जाला) गुडे, पिण्डे,
गन्धरसे कलाये च ।
गोला स्त्री० गां दीप्तिं लाति ला-क । गोदावरीनद्याम्
सख्यां, कुनद्यां, पत्राञ्जने, मणिके, मण्डले, बालक्रीडनके च
गोलाङ्गूल पु० गोरिव कृष्णं लाङ्गूलमस्य । कृष्णमुखे वानर-
भेदे न्यायभेदे च । [गिलीम्ब्रं च (छातिया)
गोलास पु० गवि गोमये लासो जन्म यस्य । गोमयकीटे,
गोलिह पु० गोभिर्लिह्यते लिह-घञर्थे क । घण्टापाटली
(घण्टापारुलि) । [पारुलि) ।
गोलीढ पु० गोभिर्लिह्यते लिह-क्त । घण्टापाटली (घण्टा-
गोलोक पु० न० ६त० । वैकुण्ठस्य दक्षिणभागस्थे स्थानभेदे,
विष्णुनिवासस्थाने पु० ।
गोलोमिका स्त्री० गोः गोसदृशं लोमास्य ङीप् ततः
स्वार्थे कनि ह्रस्वः । (पापुरी) (गोधुमा) इति च
ख्यातायां प्रसारिण्याम् क्रोष्टुकपुच्छायाञ्च ।
गोलोमी स्त्री० गोरिव गोलोमसदृशं लोमास्य ङीप् । श्वेत-
दूर्वायाम् । गोलोमस्तु जाता अण् । वचायाम् । गोलोमा-
मियम् अण् । वेश्यायाम् ।

गोवन्दनी स्त्री० गवि भूमौ वन्द्यते ल्युट् । प्रियङ्गौ, पीतदण्डो
त्पले च । [भेदे पाषाणादिद्वारा तस्य हि गोवर्द्धकत्वम् ।
गोवर्द्धन पु० गां वर्द्धयति वृध-णिच् ल्यु । वृन्दावनस्थे पर्वत-
गोवर्द्धनधर पु० गोवर्द्धनं पर्व्वतं धारयति धृ-अच् । श्रीकृष्णे
नन्दनन्दने । [गवाध्यक्षे त्रि० ।
गोविन्द पु० गां विन्दति विद-श । श्रीकृष्णे, वृहस्पतौ च ।
गोविष्ठा पु० न० ६त० । गोमये ।
गोशीर्ष न० गोः शीर्षमिव 'गोशीर्षः पर्व्वत स्तत्रजातत्वात् ।
मलयैकदेशे जाते चन्दने । ६त० गोमस्तके न०।
गोशीर्षक पु० गोशीर्षमिव कायति कै-क । द्रोणपुष्पीवृक्षे
कमभाद्रिजाते गोरोचनातुल्ये चन्दनभेदे च । [शृङ्गे
गोशृङ्ग पु० गोः शृङ्गमिव शृङ्गमयं यस्य । वर्वुरवृक्षे । ६त० । गोः
गोष्ठ संघाते भ्वा० आत्म० अक० सेट् । गोष्ठते अगोष्टिष्ट ।
गोष्ठ न० गावस्तिष्ठन्त्यत्र घञर्थे क सत्वम् । गवां स्थाने ।
गोष्ठी स्त्री० गावोऽनेका वाचस्तिष्ठन्त्यत्र घञर्थे कः षत्वं गौरा०
ङीप् । सभायाम् ।
गोष्पद न० गोः पदम्. गावः पद्यते यस्मिन् देशे वा सुट् ।
गोः पदजाते गर्त्ते, गोपदप्रमाणे च । गोभिः सेवितो
देशः । गोप्रधाने देशे त्रि० ।
गोसंख्य पु० गावः संचष्टे संचक्ष-अच् । गोपे ।
गोसम्भवा स्त्री० गोरिव सम्भवो लोमादिरूपाकारो यस्याः ।
श्वेतदूर्वायां । गोजाते त्रि० ।
गोसव पु० गावः सूयन्ते बध्यन्तेऽत्र सु-अप् । गोमेधयज्ञे ।
गोस्तन पु० गोः स्तना इव गुच्छो यस्य । चतुर्यष्टिकहारे ।
गोस्तनी स्त्री० गोरिव स्तनः फलमस्याः । द्राक्षाभेदे ।
गोस्थानक न० गवां स्थानं स्वार्थे कन् । गोष्ठे ।
गोहरितकी स्त्री० गोः हरितकीव हितकारित्वात् । विल्वहक्षे
गोहित पु० गवां हितं यस्मात् ५ब० । विल्वे, घोषकलतायाञ्च ।
गोहितकारके त्रि० ।
गौड पु० । 'वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे! । गौडदेशः
समाख्यात इत्युक्ते देशे । तद्देशस्थे जने ब०व० । 'सार-
स्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः पञ्च गौडा इति
ख्याताविन्ध्यस्योत्तरवासिन इत्युक्ते विन्ध्यपर्व्वतोत्तरभा-
गवासिषु ब्राह्मणभेदेषु च ।
गौडवास्तु(स्तू)क पु०न० 'तदेव चेत् वृहत्पत्रं रक्तं स्याद्गौड-
वास्तुकमित्युक्ते वास्तूकभेदे । [काव्यरीतिभेदे च ।
गौडी स्त्री० गुडस्य विकारः अण् । सुराभेदे अलङ्कारोक्ते
गौण त्रि० गुणादागतः अण् । गुणयोगात् प्रवृत्ते शब्दे अप्रधानस्य

शक्त्योपपादितेऽर्थे च । शब्दनिष्ठे अर्थबोधकताशक्तिरूपे वृत्तिभेदे स्त्री० ङीप् ।

**गौतम** पु० गोतमस्यापत्यम् शिष्यो वा अण् । शतानन्दे नाचिकेतसो जनके मुनिभेदे, शाक्यसिंहे च । [वरीनद्याम्

**गौतमसम्भवा** स्त्री० गौतमात् सम्भवतीति अच् । गोदा-

**गौतमी** स्त्री० गोतम+इदमर्थे अण् ततो ङीप् । गोतमप्रणीतायां षोडशपदार्थोद्धपायाम् शाक्यसिंहप्रणीतायाञ्च विद्यायां, गोदावरीनद्याम्, राक्षसीभेदे, कण्वभगिन्याञ्च ।

**गौधार** पु० गोधायाः अपत्यम् । आरक् । गोधापुत्रे ।

**गौधेय** पु० गोधा+ढक् । गोधासुते हक् गौधेरोऽप्यत्र ।

**गौर** पु० गुर-र नि० । श्वेतसर्षपे, चन्द्रे, धवदृक्षे, अरुणवर्णे, श्वेतवर्णे च तत्तद्वर्णवति, विशुद्धे च त्रि० । स्त्रियां गौरी । केशरे, पङ्कजे, कुङ्कुमे, स्वर्णे च न० ।

**गौरजीरक** पु० कर्म० । श्वेतजीरके ।

**गौरत्वच्** पु० गौरी त्वक् यस्य । इङ्गुदीवृक्षे (जीवपुति)

**गौरव** न० गुरोर्भावः अण् । गुरुत्वे अभ्युत्थानादिसम्माने च ।

**गौरवित** त्रि० गौरवं जातमस्य तार० इतच् । पूज्ये ।

**गौरशाक** पु० गौरः शाकोऽस्य । मधूकभेदे ।

**गौरी** स्त्री० गौर+ङीष् 'शङ्खेन्दुकुन्दधवला ततो गौरी तु सा मतेत्युक्तायां पार्वत्याम् 'अष्टवर्षा भवेद्गौरी'त्युक्तायाम् अष्टवर्षायाम् असञ्जातरजस्कायां कन्यायां, हरिद्रायाम् दारुहरिद्रायां, गोरोचनायाम्, प्रियङ्गौ, भूमौ, नदीभेदे, मञ्जिष्ठायां, श्वेतदूर्वायां, मल्लिकायाम्, तुलस्याम्, सुवर्णकदल्याम्, आकाशमांस्यां रागिणीभेदे च । [कुमारः ।

**गौरीपुष्प** पु० गौरीव पीतं पुष्पमस्य । प्रियङ्गुवृक्षे । [भिति

**गौरीशिखर** न० पार्वती तपस्यास्थाने 'जगाम गौरीशिखरं-

**गौष्ठीन** न० पूर्वं भूतं गोष्ठं खञ् । भूतपूर्वगोष्ठे । [श्लिष्ट

**ग्रथ** कुटिलीकरणे भ्वा० आत्म० इदित् सक० सेट् । ग्रन्थते अग्र-

**ग्रथित** त्रि०ग्रन्थ संदर्भे-क्त । गुम्फिते, हिंसिते, आक्रान्ते च ।

**ग्रन्थ** संदर्भे वा चु० पक्षे क्र्या०उभ०सक०सेट् । ग्रन्थयति-ते ग्रथ्नाति ग्रथ्नीते अजग्रन्थत्, अग्रन्थीत् अग्रन्थिष्ट ।

**ग्रन्थ** पु० ग्रन्थ-घञ् । गुम्फने,धने च । करणे घञ् । शास्त्रे । अनुष्टुप्छन्दस्के पद्ये च ।

**ग्रन्थि** पु० ग्रन्थ-इन् । वंशादिसन्धौ (गांट) ख्याते कौटिल्ये, 'ग्रन्थग्रन्थिरिह क्वचिदि'ति नैषधम् । ग्रन्थिपर्णवृक्षे, बन्धने,रोगभेदे च । [गग्गुलौ, करीरे च । दैवते पु० ।

**ग्रन्थिक** न० ग्रन्थ-अस्त्यर्थे ठन् । पिप्पलीमूले । ग्रन्थिपर्णे,

**ग्रन्थिदूर्वा** स्त्री० ग्रन्थिमती दूर्वा (गांटदूर्वा) दूर्वाभेदे ।

**ग्रन्थिपर्ण** न० ग्रन्थियुक्तं पर्णं यस्य । चोरनामगन्धद्रव्ये ।

**ग्रन्थिफल** पु० ग्रन्थि ग्रन्थियुक्तं फलमस्य । कपित्थवृक्षे, मदनवृक्षे, कुक्कुरे च (कुकुरसोङा) ।

**ग्रन्थिभेद** पु० ग्रन्थिं भिनत्ति भिद-अण् (गांटकाटा) चौरभेदे 'अङ्गुलिं ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे' इति स्मृतिः ।

**ग्रन्थिमत्** पु० ग्रन्थिः सन्धिरस्यास्ति मतुप् (हाड़जोड़ा) अस्थिसंहारकवृक्षे । ग्रन्थियुक्ते त्रि० ।

**ग्रन्थिमत्फल** पु० ग्रन्थिमत् फलं यस्य । (मान्दार) लकुचे ।

**ग्रन्थिमूल** न० ग्रन्थियुतं मूलमस्य । गृञ्जने (गाजर)

**ग्रन्थिमूला** स्त्री०ग्रन्थि ग्रन्थयुतंमूलमपि यस्याः।मालादूर्वायाम्

**ग्रन्थिल** न० ग्रन्थिं लाति ला-क । पिप्पलीमूले, आर्द्रके च । विकङ्कतवृक्षे, (वइचि) करीरे, तण्डुलीयशाके (पोदिना) भद्रमुस्तायां,मालादूर्वायाञ्च स्त्री० । छितावल्ल्याम् पिण्डालौ चोरनामगन्धद्रव्ये पु० । ग्रन्थिमति त्रि० । [ग्रस्ता ।

**ग्रस** भक्षणे भ्वा०आत्म०सक०सेट् । ग्रसते अग्रसिष्ट ग्रसित्वा-

**ग्रस** भक्षणे वा० चुरा० उभ० पक्षे भ्वा० सक० सेट् । ग्रासयति-ते ग्रसति अजिग्रसत्-त अग्रासीत् अग्रसीत् ।

**ग्रस्त** न० ग्रस-क्त । लुप्तवर्णपदे वाक्यविशेषे, भक्षिते त्रि० ।

**ग्रह** ग्रहणे क्र्या० उभ० सक० सेट् । गृह्णाति गृह्णीते अग्रहीत् अग्रहीष्ट ।

**ग्रह** आदाने वा चुरा०उभ०पक्षे भ्वा०पर०सक०वेट् । ग्राहयति-ते ग्रहति । अजिग्रहत्-त अग्राहीत्-त अग्राक्षीत् ।

**ग्रह** पु० ग्रह-अच् । सूर्यादिषु नवसु । अनुग्रहे, निर्बन्धे, ग्रहणे, रणोद्यमे, बालारिष्टकारकेषु पूतनादिषु, चन्द्रसूर्ययोर्ग्रासे च 'तदा सम्भाव्यते ग्रह' इति ज्योतिषम् ।

**ग्रहण** न० ग्रह-भावादौ ल्युट् । स्वीकारे, आदाने, आदरे, करे, ज्ञाने, बन्धने,चन्द्रसूर्ययोर्ग्रासे, इन्द्रिये च ।

**ग्रहणि(णी)** स्त्री० ग्रह-अनि वा ङीप् । स्वनामख्याते रोगभेदे । [रोगहारिणि त्रि० ।

**ग्रहणीहर** न० ग्रहणीं हरति हृ-अच् । लवङ्गे, ग्रहणी-

**ग्रहनाश** पु० ग्रहं ग्रहजन्यारिष्टं नाशयति नश-णिच्-अण् । (छातियान) वृक्षभेदे ।

**ग्रहपति** पु० ६त० । सूर्ये एवं ग्रहनायकादयोऽप्यत्र ।

**ग्रहयाग** पु० ग्रहेभ्यो यागः । अरिष्टनिवारणार्थं पुण्यार्थं वा । ग्रहोद्देश्यके यागभेदे ।

**ग्रहाधार** पु० ६त० । ध्रुवमत्स्ये ।

**ग्रहवह्नि** पु० ग्रहाणां वह्निः । 'कपिलः पिङ्गलो धूमकेतुस्त जठराग्निकः । शिखी च हाटकश्चैव महातेजा हुताशनः'

कृतायमस्य विशेषो नवैते प्रकृत्यन्यदस्युक्तौ सूर्यादि क्रमेण वह्निभेदे ।

ग्राम पु० ग्रस-मन् आदन्तादेशः 'विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इतिप्रोक्तः शूद्राणां वास एव वा' 'तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः क्षेत्रोपयोगभूमध्ये वसति ग्रामसंज्ञिकेत्युक्तलक्षणे विप्रादीनां वासस्थाने, यथा कुटुम्बिनः सर्व्वेयेकीभूता भवन्ति हि। तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते' इत्युक्ते स्वरभेदे, किञ्चिच्छ-ब्दोपपदे तदर्थसंघाते च यथा शब्दग्रामः अर्थग्राम इत्यादि

ग्रामघट्टा स्त्री० ग्रह-वाह्यार्थे क्यप् । ग्रामवहिर्भूतायां सेनायाम् ।

ग्रामणी पु०ग्रामं नयति नी-क्विप् णत्वम् । नापिते । पत्यौ, प्रधाने च त्रि० । ग्रामगम्यायां वेश्यायां,नीलिकायाञ्च स्त्री० ।

ग्रामता स्त्री० ग्रामाणां समूहः तल् । ग्रामसमूहे ।

ग्रामधर्म्म पु० ग्रामे भवः अण् कर्म० । मैथुने व्यवाये ।

ग्राममुख पु० ग्रामस्य मुखं यत्र । हट्टे ।

ग्राममृग पु० ६त० । कुक्कुरे । [विमे

ग्रामयाजक पु०६त० । ग्रामस्य नानावर्णानां याजके अयाजक

ग्रामान्त न० ६त० । ग्रामस्य समीपस्थे ग्रामनिकटे ।

ग्रामीण पु० ग्रामे भवः खञ् । कुक्कुरे, काके, ग्राम्यशूकरे च । ग्रामोद्भवे त्रि०। ग्रामीणस्य प्रथमत इति भाषापरि० नीलिकौषधौ, पालङ्क्यशाके च स्त्री० ।

ग्राम्य त्रि० ग्रामे भवः य । प्राकृते, मूढे, ग्रामभवे, ज्योति-षोक्ते मिथुनादिराशिभेदे 'छागमेषवृषाश्वाद्या ग्राम्याः प्रोक्ता' इत्युक्तेषु पशुभेदेषु, अश्लीलव्यञ्जके भण्डादिवाक्ये, च । तलायां नील्याञ्च स्त्री० ।

ग्राम्यकन्द पु०-कर्म० । कन्दभेदे (ग्रामेर ओल) ।

ग्राम्यकर्कटी स्त्री० कर्म० । कुष्माण्डे ।

ग्राम्यकुङ्कुम न० कर्म० । कुसुम्भे ।

ग्राम्यपशु पु० कर्म० । 'गौर्मेषोऽश्वो मनुष्यश्च अश्वाश्वतर-गर्द्दभाः' इत्युक्तेषु सप्तसु पशुषु ।

ग्राम्यवल्लभा स्त्री० ६त० । पालङ्क्यशाके (पालङ्ग)

ग्राम्याश्व पु० कर्म० । गर्द्दभे ।

ग्रावन् पु० ग्रसते ग्रस-ड ग्रः आवनति वन-संभक्तौ विच् कर्म० । प्रस्तरे, पर्व्वते, मेघे च । दृढे त्रि०।

ग्रास पु० ग्रस-घञ् । पिण्डाकारे चरुादेः कवले 'कुक्कुटाण्ड-प्रमाणं वा यावद्वा प्रविशेन्मुखम्। एतं ग्रासं विजानीयादि त्युक्ते सम्पूरणयोग्याग्नादौ ।

ग्राह पु० ग्रह-भावे घञ् । आदाने,ज्ञाने, ग्रहणे च । कर्त्तरि ण । जलजन्तुभेदे (हाङ्गर) । [तरि त्रि० ।

ग्राहक पु० ग्रह-ण्वुल् । श्येनपक्षिणि विषवैद्ये च । ग्रही-

ग्राहिणी स्त्री० ग्रह-णिनि । क्षुद्रदुरालभायाम् (छिरटा) ताम्बूलादके, ग्रहीलायाञ्च । [कारके च त्रि० ।

ग्राहिन् पु० ग्रह-णिनि । कपित्थे । ग्राहके, मलवन्ध-

ग्राहिफल पु० ग्राहि मलबन्धकं फलं यस्य । कपित्थवृक्षे ।

ग्राह्य त्रि० ग्रह-ण्यत् । ग्रहीतुमुचिते, ग्रहणयोग्ये,उपादेये, स्वीकार्य्ये, ज्ञेये च ।

ग्रीवा स्त्री० गॄ-व नि० । कन्धरायाम् ।

ग्रीष्म पु० ग्रस-म नि० । निदाघे, घर्म्मजनके आतपादौ तदा-धारकाले ज्यैष्ठाषाढ़मासे, ऊष्मणि च तद्वति त्रि० ।

ग्रीष्मजा स्त्री० ग्रीष्मे जायते जन-ड । (ग्रीष्म जाता) लवल्याम् नवमल्लिकायाञ्च ।

ग्रीष्मपुष्पी स्त्री० ग्रीष्मे पुष्पं यस्याः । करुणपुष्पवृक्षे ।

ग्रीष्मभवा स्त्री० ग्रीष्मे भवति भू-अच् । नवमल्लिकायाम् ।

ग्रीष्मसुन्दर पु० ७त० । (गिमा) शाकभेदे ।

ग्रुच चौर्य्ये गतौ च भ्वा० पर० सक० सेट् । ग्रोचति अग्रु-चत्-अग्रोचीत् । ग्रुचित्वा-ग्रुक्त्वा ।

ग्रैव न० ग्रीवायां भवम् अण् । ग्रीवाभरणे ।

ग्रैवेय न० ग्रीवायां भवं ढञ् । ग्रीवाभूषणे ढकञ् ग्रैवेयकम-प्यत्र । 'ग्रैवेयकं नोज्ज्वल'मिति साहि० ।

ग्लस भक्षणे भ्वा० आत्म० सक० सेट् । ग्लसते अग्लसिष्ट । ग्लसित्वा-ग्लस्त्वा ।

ग्लह आदाने वा चुरा० उभ० पक्षे भ्वा० सक० वेट् । ग्लाह यति-ते ग्लहति अजग्लहत्-त अग्लहीत् ।

ग्लह पु० ग्लह-अ । द्यूतादौ ह्रते पणे, द्यूते च ।

ग्लास्नु त्रि० ग्लै-स्नु । ग्लानियुक्ते ।

ग्लुच चौर्य्ये गतौ च भ्वा० पर० सक० सेट् । ग्लोचति अग्लु-चत्-अग्लोचीत् । क्त्वा वेट् । [अग्लुचत्-अग्लुञ्चीत् ।

ग्लुन्च चौर्य्ये गतौ च भ्वा०पर०सक०सेट् क्त्वा वेट्। ग्लुञ्चति

ग्लेप दैन्ये गतौ चाले च भ्वा० आत्म० सक० सेट् । ग्लेपते अग्लेपिष्ट । अजिग्लेपत् ।

ग्लेव सेवने भ्वा०आ०सक०सेट् । ग्लेवते अग्लेविष्ट । अजिग्लेवत

ग्लेष अन्वेषणे भ्वा० आ० सक० सेट् । ग्लेषते अग्लेषिष्ट अज ग्लेषत् । [अग्लासीत् ।

ग्लै क्षये हर्षक्षये च भ्वा० पर० अक० अनिट् । ग्लायति

ग्लौ पु० ग्लै-डौ । चन्द्रे, कर्पूरे च ।

# घ

**घ** पु० घट-ड । घण्टायां, घर्घरशब्दे च ।

**घग्घ** हसने भ्वा० पर०अक० सेट् । । घग्घति अघग्घीत् ।

**घट** चेष्टायां भ्वा० आत्म० अक० सेट् घटादि। घटते अघटिष्ट

घटयति । घटा । [घटत्-त ।

**घट** हिंसे सक० संघाते अक० चु० उभ०सेट्। घाटयति-ते अजी

**घट** द्युतौ वा चु०उभ०पक्षे भ्वा०पर०अक० सेट् । घाटयति ते

घटति । अजीघटत्-त अघाटीत् अघटीत् । [घण्टत् त

**घट** शब्दकरणे चुरा०उभ०अक०सेट इदित् । घण्टयति-ते अज-

**घट** पु० घट-अच् । कलसे, कुम्भशब्दार्थे परिमाणभेदे च ।

**घटक** त्रि०घटयति स्वविशिष्टतया निरूपयति घट णिच्-ण्वुल् ।

वाक्यलक्षणादिषु मध्यपातिनि पदार्थे, योजके च ।

**घटना** स्त्री० चु० घट-युच् । संहतकरणे, योजने, मेलने,

करिणां समूहे च । [डम्बरे च ।

**घटा** स्त्री० घट-अ । घटने, सभायां, समूहे, गजसंहतौ, मेघा-

**घटिका** स्त्री० 'गुर्व्वक्षराणाङ्दितं च षष्ट्या पलं पलानां घटि-

का किलैके'ति ज्योतिर्विदाभरणोक्ते षष्टिपलात्मके दण्डरूपे

काले । घटयति विहितकार्य्यकरणाय घट-णिच्-ण्वुल् ।

दण्डद्वयरूपे मुहूर्त्तात्मके काले। अल्पो घटः कन् । स्वल्पे

घटे । इवार्थे कन् । नितम्बे न० ।

**घटी** स्त्री० घटेन कालमानज्ञापकेन सच्छिद्रेण कुम्भेन माप्या ।

दण्डात्मके काले । अल्पार्थे ङीप् । क्षुद्रे घटे ।

**घटीयन्त्र** न० ६त० । कूपादितो जलोद्धारणयन्त्रे अरघट्टे,

उद्घाटने, ग्रहणीरोगभेदे च । [भेदे ।

**घटोत्कच** पु० हिडिम्बायां राक्षस्यां भीमसेनाज्जाते राक्षस-

**घट्ट** चालने भ्वा० आत्म० सक० सेट् । घट्टते अघट्टिष्ट ।

**घट्ट** चालने चुरा० उभ० सक० सेट् । घट्टयति-ते अजघट्टत्-त

**घट्ट** पु० घट्यतेऽत्र घञ् । स्नानायावतरणस्थाने (घाट) शुल्क-

ग्रहणस्थाने च । भावे घञ् । चालने । [जातिभेदे ।

**घट्टजीविन्** पु० घट्टं जीवति जीव-णिनि । (पाटुनि) प्रसिद्धे

**घट्टित** त्रि० घट्ट-क्त । निर्म्मिते, चालिते, चित्रपटादेरञ्जनार्थम्

शङ्खचूर्णखण्डेन लिप्ते वसनादौ (कलप दिए घोटा) ।

**घण** दीप्तौ तना० उभ० अक० सेट् । घणोति घणुते । अघा-

णीत्-अघणीत् अघणिष्ट । घणित्वा-घण्ट्वा ।

**घण्टा** स्त्री० हन-ट तस्य नेत्त्वम् नि० घः । कांस्यादिनिर्मिते

वाद्यभेदे । अतिबलायां, नागबलायां, घण्टापाटल्यां च ।

**घण्टाकर्ण** पु० घण्टेव कर्णोऽस्य । शिवानुचरभेदे (घेंटु)।

**घण्टापथ** घण्टोपलक्षितः, घण्टावतां हस्त्यादीनां गमनयोग्यो

वा पन्थाः टच् । 'दशधन्वन्तरो राजमार्गो घण्टापथः

स्मृत' इत्युक्तपरिमाणे नगरप्रधानवर्त्मनि ।

**घण्टापाटलि** पु० हन्यते स्म हन-कर्म्मणि ट टस्य नेत्त्वम्

घत्वं नि०, पट गतौ घञ् पाटस्तं लाति ला-डि कर्म० ।

(घण्टापारुलि) वृक्षभेदे ।

**घण्टारवा** स्त्री० घण्टेवारौति आ+रु-अच् । (वनशण)

वृक्षभेदे यस्य फलं पक्वं सत् झञ्झायते ।

**घण्टाली** स्त्री० घण्टां तच्छब्दमलति अल-अण् ङीप् । कोषा-

तक्याम् । ६त०। घण्टाश्रेणौ ।

**घण्टावीज** पु० घण्टेव वीजमस्य । जयपाले वृक्षे ।

**घण्टिका** स्त्री० क्षुद्रा घण्टा स्वल्पार्थे कन् । क्षुद्रघण्टायां

तत्तुल्याकारत्वात् (आलजिव) तालुस्थजिह्वायाम् । [पुत्रे

**घण्टेश्वर** पु० व्रणदायके मङ्गलस्य मेधानाम्न्यां पत्न्यां जाते

**घन** पु० हन-अप् घनादेशः । मेघे, मुस्तायां, ओघे, दार्ढ्ये,

काठिन्ये, विस्तारे, देहे, लौहमुद्गरे, कफे, अभ्रके, 'समत्रिघातश्च

घनः प्रदिष्ट' इत्युक्ते सजातीयाङ्कत्रयस्यान्योन्यगुणने च

यथा त्रयाणां घनः २७ चतुर्णां ६४ । निविड़े, सान्द्रे, पूर्णे,

दृढे च त्रि० । कांस्यतालादिवाद्ये, मध्यमनृत्ये लौहे च न०

**घनकफ** पु० घनस्य मेघस्य कफ इव । मेघोपले करके ।

**घनच्छद** पु० घनो निविडश्छदो यस्य । शिग्रौ ।

**घनत्वच्** पु० घना निविडा त्वक् यस्य । लोध्रे ।

**घनद्रुम** पु० कर्म० । विकण्टकवृक्षे ।

**घननाभि** पु० ६त० । धूमे तस्य मेघयोनित्वात् तन्नाभित्वं धूम-

ज्योतिः सलिलमरुतामिति मेघदूते तद्धेतुतोक्ता । [तथात्वम्

**घनपत्र** पु० घनानि पत्राण्यस्य । पुनर्नवायाम् । [स्थानतया च

**घनपदवी** स्त्री० ६त०। आकाशे तस्य मेघाधारतया तत्सञ्चार-

**घनरस** पु० घनस्य रसो निष्यन्दः । जले । कर्म०। सान्द्रनिर्या

सादौ । कर्पूरे पीलुपर्ण्याम् पु० । ब० निविड़रसे त्रि० ।

**घनवल्लिका** स्त्री० घना निविड़ा वल्ली । अमृतस्रवालतायाम्

**घनवल्ली** स्त्री० घनस्य मेघस्य वल्लीव । विद्युति ।

**घनसार** पु० घनस्य सार इव शीतलत्वात् । कर्पूरे, दक्षिणावर्त्ते

पारदे, जले च ।

**घनस्कन्ध** पु० घनः स्कन्धो यस्य । कोशाम्रवृक्षे ।

**घना** स्त्री० रुद्रजटायां माषपर्ण्याम् । [राजपथे इति नैषधम्

**घनागम** पु० घनानां मेघानामागमो यत्र । वर्षाकाले 'घनागमे

**घनाघन** पु० हन-अच् नि० । इन्द्रे वर्षुकमेघे मत्त-घातुके-

गजे, चक्रे, अन्योन्यघट्टने च । निरन्तरघातुके त्रि० ।

**घनात्यय** पु० घनानामत्ययो यत्र काले । शरत्काले ।

घनामय पु० घनो दृढः आमयो यस्मात् ५ब०। खर्ज्जूरवृक्षे।

घनामल पु० घनोऽमलः विशेषणस०। वास्तूकशाके।

घनोपल पु० ६त०। घनस्य उपल इव संहत्य कठिनत्वात्। करके (शिल)।

घस्र गतौ भ्वा० पर० सक० सेट्। घस्रति अघस्रीत्।

घरट्ट पु० घृ-अच् घरोऽट्टः यस्मात् ५ब०शक०। (जाता) 'प्रतिहट्टपथे घरट्टजादि'ति नैषधम्।

घर्घर पु० पुनःपुनः घरति यङ् लुक् अच्। चलद्वारिध्वनौ नदभेदे, हारे, स्वरभेदे च। क्षुद्रघण्टिकायाम् स्त्री०।

घर्घरिका स्त्री० घर्घर+अस्त्यर्थे ठन्। क्षुद्रघण्टायाम् वाद्यभेदे। भ्रष्टधान्ये, नदभेदे च पु०।

घर्व गतौ भ्वा० पर०सक० सेट्। घर्वति अघर्वीत्।

घर्म्म पु० घृ-सेके मक् नि०गुणः। श्रमार्त्तस्य गात्रात् निष्यन्दिनि-जले, आतपे, ग्रीष्मे च। [क्षतौ व्रणभेदे।

घर्म्मविचर्चिका पु० घर्मोत्था विचर्चिका। (घामाचि) राजिका

घर्षणाल पु० घर्षणाय अलति पर्य्याप्नोति अल-अच्। शिलापुत्रके (लोडा)

घर्षणी स्त्री० घृष-कर्म्मणि ल्युट् ङीप्। हरिद्रायाम्।

घष(स) क्षरणे भ्वा० आत्म० अक० सेट् इदित्। घंष(स)ते अघंषि(सि)ष्ट। [घत्स्यति।

घस भक्षणे भ्वा०पर०सक० अनिट्। घसति। अघसत्। घस्ता

घस्मर त्रि० घस-क्मरच्। भक्षणशीले।

घस्र पु० घस-रक्। दिवसे। हिंस्रे त्रि०।

घाट पु० चु० घट०-अच्। ग्रीवायाः पश्चाद्भागे। तत्रैवार्थे स्त्री० टाप्। स्वार्थे कन् अत्रैवार्थे।

घाण्टिक पु०घण्टया चरति ठक्। 'राज्ञां प्रबोधसमये घण्टाशिल्पास्तु घाण्टिका' इत्युक्तलक्षणेषु राज्ञां प्रबोधनाय घण्टां वादयित्वा स्तुतिपाठकेषु, धुस्तूरे च। घण्टावादके त्रि०।

घात पु० हन-घञ्। प्रहारे,मारणे, अङ्कस्य पूरणे, गुणने च। करणे घञ्। वाणे।

घातिन् त्रि० हन-तच्छीलार्थे णिनि। हननकरणशीले।

घातुक त्रि० हन-उकञ्। हिंस्रे, क्रूरे च।

घार पु० घृ-सेके घञ। सेचने। [भक्ष्यभेदे (घिओड़)।

घार्त्तिक पु० घृतेन निर्मितः तस्य विकारो वा ठक्। घृतपूरे

घास पु० घस-कर्म्मणि घञ्। गवादीनां भक्ष्ये तृणभेदे।

घिण्ण ग्रहणे भ्वा० आ० सक० सेट् इदित्। घिण्णते अघिण्णिष्ट

घु ध्वनौ भ्वा० आत्म० अक० अनिट्। घवते अघोष्ट।

घुट आवर्त्तने भ्वा० आत्म० सक० सेट्। घोटते अघुटत् अघोटिष्ट। [जुघोट।

घुट प्रतिघाते तु० कुटा० पर० सक० सेट्। घुटति अघुटीत्

घुट पु० तु० घुट-अच्। चरणग्रन्थौ गुल्फे। इन्। तत्रैवार्थे स्त्री० वा ङीप्। स्वार्थे कन् अत्रैवार्थे। [जुघोड।

घुंड व्याघाते तु० कु० पर० सक० सेट्। घुडति अघुडीत्

घुण भ्रमणे तु० पर० सेट्। घोणते अघोणिष्ट।

घुण भ्रमणे तु० पर० सेट्। घुणति अघोणीत्।

घुण ग्रहणे भ्वा० आत्म० सक० सेट्। घुणते अघोणिष्ट।

घुण पु० घुण-क। स्वनामख्याते काष्ठभक्षकक्रमौ।

घुण्ट पु० घुट-क नि० नुम्। गुल्फे। स्वार्थे कन्। तत्रैवार्थे।

घुर ध्वनौ भीमभवने च तु०पर० अक० सेट्। घुरति अघोरीत्।

घुर्घुर पु० घुरित्यव्यक्तं ध्वनिं घुरति घुर-क। (घुर्घुरिया) कीटभेदे शूकरशब्दे च 'न घुर्घुरायितघुरीति सा० २परि०

घुष कान्तौ क्षतौ च भ्वा०आत्म०सक० सेट् इदित्। घुंसते अघुंसिष्ट

घुष वधे भ्वा० पर० सक० सेट्। घोषति अघुषत्।

घुष स्तुतौ आविष्करणे च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। घोषयति ते घोषति अजूघुषत् त। अघुषत्।

घुसृण न० घुस-ऋणच्। कुङ्कुमे। 'घुसृणैरिव जलाशयोदरे' इति नैषधम्।

घूक पु० घू इति कायति कै-क। उलूके पेचके।

घूकारि पु० ६त०। काके तस्य पेचकवैरित्वं लोकसिद्धम्।

घूकावास पु० ६त०। शाखोटवृक्षे तस्य निविडह्रस्वशाखायुतत्वेन कोटरतुल्यत्वात् दिवाभीरोर्घूकस्यावासस्थानत्वम्।

घूर हिंसायां सक० जीर्णतायाम् अक० दि० आत्म० सेट्। घूर्य्यते अघूरिष्ट। घूर्णः। [घूर्णितः।

घूर्ण भ्रमणे तु०उभ०सक० सेट्। घूर्णति ते अघुर्णीत् अघूर्णिष्ट

घृ सेके भ्वा० पर०सक०अनिट्। घरति अघार्षीत्। [घारितः

घृ सेके चु०उभ०सक०सेट्। घारयति ते अजीघरत् त। घारयिता

घृ भासे अक० सेके सक० जु० पर० अनिट्। जिघर्त्ति अघार्षीत्।

घृण दीप्तौ तना०उभ०अक० सेट्। घर्णोति घर्णुते अघर्णीत्।

घृण ग्रहणे भ्वा०आत्म०सक० सेट् इदित्। घृणते अघृणिष्ट।

घृणा स्त्री० घृ-सेके नक्। कारुण्ये, दयायां, जुगुप्सायाञ्च।

घृणि पु० घृ-नि नि० गुणाभावः। किरणे, ज्वालायां, तरङ्गे, सूर्य्ये च।

घृत न० घृ-भासे भावे क्त। दीप्तौ। कर्त्तरि क्त। दीप्ते त्रि०। सेकार्थस्य कर्त्तरि क्त। जले, पक्वनवनीते सर्पिषि च न०।

घृतकुमारी स्त्री० घृतप्रधाना कुमारी। स्वनामख्यातायामोषधौ तस्या हि दले दलिते घृतमिव स्रवति।

**घृतपूर** पु० घृतेन पूर्य्यते पूर-घञ् । पक्वान्नभेदे (घिओड) ।
**घृताची** स्त्री० अप्सरोभेदे ।
**घृष** संघर्षे सक० हर्षे अक०भ्वा०आत्म० सेट् । घर्षते अघर्षिष्ट
**घृष्टि** पु० घृष-क्तिच् । वराहे । क्तिन् । घर्षणे,स्पर्द्धायां,विष्णुक्रान्तायां,वाराह्याञ्च स्त्री० ।
**घृष्टिला** स्त्री०घृष्टिं लाति ला-क । पृश्निपर्ण्याम् । (चाकुलिया)
**घोट(क)** पु० घुट-अच् ण्वुल् वा । अश्वे । [लोके प्रसिद्धः ।
**घोटकारि** पु० ६त० । महिषे तस्य महिषेण सह वैरिभावस्य
**घोणा** स्त्री० घुण-अच् । अश्वनासिकायां, नासामात्रे च ।
**घोणिन्** पु० घोणा नासाऽस्त्यस्य व्रीह्यादित्वात् इनि । वराहे तस्य दीर्घनासत्वात् तथात्वम् ।
**घोण्टा** स्त्री० घुण-ट तस्य नेत्त्वम् ।(सेयाकुल) बदरीभेदे ।
**घोर** पु० घुर-अच् । शिवे, ऋषिभेदे, सांख्योक्तेषु रजःप्रधानेषु आकाशादिविशेषधर्म्मेषु । विषे न० । दारुणे, भयानके, दुर्गमे च त्रि० ।
**घोरवासन** पु० घोरं वासनं शब्दोऽस्य । शृगाले ।
**घोरा** स्त्री० घुर-अच् । देवताडीलतायां, भयानकायां रात्रौ, सांख्योक्तायां राजस्यां मनोवृत्तौ,ज्योतिषोक्ते 'रवावुग्रभे संक्रमे भास्करस्य भवेद्घोर'नाम्नीत्युक्ते रविसंक्रान्तिभेदे च।
**घोल** पु०न० घुड-कर्म्मणि घञ् डस्य ल । तक्रे मथितदध्नि ।
**घोष** पु० घोषन्ति गावोऽत्र घुष-आधारे घञ्।आभीरपल्लिग्रामे भावे घञ्।ध्वनौ,अम्बुदनादे च। कर्त्तरि अच्। अपामार्गे, व्याकरणोक्ते वर्णविशेषोत्पत्तौ वाह्यप्रयत्नभेदे च। कांस्ये न०।
**घोषणा** स्त्री०घुष-णिच्-युच्। लोके ख्यापनार्थमुच्चैःशब्दकरणे।
**घोषा** स्त्री० घुष्यते भ्रमरैरियं कर्म्मणि घञ् । शतपुष्पायां, मधुरिकायां, कर्कटशृङ्ग्यां, कोशातक्याञ्च ।
**घ्रा** गन्धोपादाने भ्वा०पर०अक०तद्ग्रहणमात्रे सक०अनिट्। जिघ्रति अघ्रात-अघ्रासीत् । घ्रायः-घ्रातः । [आघ्राते त्रि०
**घ्राण** न० घ्रायतेऽनेन घ्रा-ल्युट् । नासिकायाम् । घ्रा-क्त ।
**घ्राणतर्पण** पु०घ्राणं नासिकां तर्पयति तृप-णिच्-ल्यु। सुगन्धौ

## ङ

**ङ** पु० ङु-ड । विषये, विषयस्पृहायाम् ।
**ङु** ध्वनौ भ्वा० आत्म० अक० अनिट् । ङवते अङविष्ट ।

## च

**च** अव्य० चि-ड । अन्वाचये (एकस्य प्राधान्येनेतरस्यानुषङ्गेबोधौ) यथा ग्रामं गच्छ अजाञ्चानय अत्र ग्रामगमनमेव मुख्यमजानयनन्त्वानुषङ्गिकम् । समुच्चये (परस्परानिरपेक्षस्यानेकस्य एकस्मिन् कर्म्मादौ अन्वये) यथा पिता पुत्रश्च ग्रामं गच्छति । अत्र कस्मिन् गमने कर्म्मणि पितुरिव पुत्रस्यापि अन्वयः । इतरेतरयोगे (परस्परसापेक्षाणामेकस्मिन् कर्म्मादावन्वये) तत्र च द्वन्द्वसमास एव यथा पितापुत्रौ गच्छतः। अत्रोभयोरपि एकस्मिन् प्रत्येकरूपेण गमने परस्परसापेक्षतयैवान्वयः अन्वाचयादयमेवास्य विशेषः । सापेक्षता च स्वघटितनामोत्तरवर्त्ति विभक्त्यन्वयित्वेन । समाहारे (मिलितानामन्वये) यथा हस्तपादं वादयति अत्र हस्तादीनां मिलितानामेवान्वयः इतरेतरयोगे तु प्रत्येकस्यान्वयः अथवा तद्वृत्ति पदसमुदयोपस्थाप्यतत्तत् पदार्थसंहतिरेव तत्र प्रधानं संहतेश्चैकत्वात् तत्रैकवचनता। व्यासवाक्ये च चकारेणोभयत्र इतरेतरयोगस्य समाहाररूपसंहतेश्च प्राधान्यं द्योत्यते। पक्षान्तरे,अवधारणे,हेतौ, तुल्यत्वे, विनियोगे, पादपूरणे च। चण्डेशे, चन्द्रे, कच्छपे, चौरे च पु०। दुर्जने निर्बीजे च त्रि० ।
**चक** भ्रान्तौ सौ० पर०अक०सेट् इदित् । चङ्कति अचङ्कीत्।
**चक** प्रतिघाते सक० तृप्तौ अक० भ्वा० उभ० सेट् घटा० । चकति-ते अचकीत्-अचाकीत् अचकिष्ट । चकयति ।
**चकास** दीप्तौ अदा० जक्षा० पर० अक० सेट् । चकास्ति अचकासीत् । अचचकासत् ।
**चकित** न० चक-भावे क्त । भये, । कर्त्तरि क्त । भीते त्रि० । षोड़शाक्षरपादके छन्दोभेदे स्त्री० ।
**चकोर** पु० चक-तृप्तौ ओरन् । स्वनामख्याते-पक्षिभेदे चकोर मारयंकरीति हरारिः ।
**चक्क** आर्त्तौ चुरा० उभ० सक० सेट्। चक्कयति-ते अचचक्कत्-त
**चक्र** पु० क्रियतेऽनेन कृ-घञर्थे क नि० द्वित्वम् । चक्राङ्के पक्षिणि, (चका) रथाङ्गे,(चाका) सैन्ये, समुदाये,राष्ट्रे,दम्भभेदे, कुम्भकारोपकरणे, 'कलसे निजहेतुदण्डजः किमु-चक्रभ्रमिकारिते'ति नैषधम् अस्त्रभेदे। पुटभेदे, जलावर्त्ते, ग्रामजाले, तगरपुष्पे, व्यूहभेदे, तन्त्रोक्तेषु मूलाधारादिषु स्थितेषु षट्सु पद्मेषु, सर्व्वतोभद्रादिषु. देवार्च्चनयन्त्रेषु.'श्रीचक्रमेतदुदितमि'ति तन्त्रम् । मन्त्रदीक्षोपयोगिषु अकडमादिषु, वीरादिचक्रेषु, 'प्रवृत्ते भैरवीचक्रे सर्व्वे वर्णा द्विजोत्तमा' इति तन्त्रम् अलङ्कारोक्ते काव्यबन्धविशेषे च न० । अर्द्धर्चादित्वात् द्विलिङ्गत्वेऽपि लक्ष्यभेदेनवास्य लिङ्गनियमः
**चक्रक** पु० चक्रमिव कायति कै-क । स्वापेक्षापेक्ष्यापेक्षितनिबन्धनेऽनिष्टप्रसङ्गरूपे तर्कभेदे ।

**चक्रकारक** न० नखाकृतित्वेन चक्रवत् वेष्टनं करोति कृ-ण्वुल्
६त०। व्याघ्रनखाख्ये गन्धद्रव्ये।
**चक्रकुल्या** स्त्री० चक्रस्य तद्वद्वेष्टनाकारस्य कुल्येवाधारः।
(चाकुलिया) पृश्निपर्ण्याम्। [चक्रमर्द्दे। (दादमर्द्दन)
**चक्रगज** पु० चक्रे चक्राकारे दद्रुरोगे गजइव मर्द्दकत्वात्।
**चक्रगुच्छ** पु० चक्रमिव वेष्टनाकारो गुच्छःस्तवको यस्य।
अशोकवृक्षे। [विष्णौ, सर्पे च।
**चक्रधर** पु० चक्रमस्त्रभेदं फणमण्डलं वा धारयति धृ-अच्।
**चक्रधारा** स्त्री०चक्रस्य धाराग्रम्। चक्रापि यदंशेऽस्य तीक्ष्णता
सा चाग्रे एवेत्यग्रमेव धारा। [नखाख्ये गन्धद्रव्ये।
**चक्रनख** पु० चक्राकारो नखइव शुभ्रादि० न णत्वम्। व्याघ्र-
**चक्रपद्माट** पु० पद्मं पद्मवन्नमटति अण् पद्माटोगजश्चक्रे
चक्राकारे दद्रुरोगे पद्माटः गजइव मर्द्दकत्वात्। चक्रमर्द्द
वृक्षे (दादमर्दन) [पृश्निपर्ण्याम्
**चक्रपर्णी** स्त्री० चक्रमिव पर्णमस्याः ङीप्। (चाकुलिया)
**चक्रपाणि** पु० चक्रं प्रहरणं पाणौ यस्य। विष्णौ।
**चक्रपाद** पु० चक्रं पाद इव गतिसाधनत्वात् यस्य। रथे
चक्रमिव पादोऽस्य। हस्तिनि।
**चक्रपुष्करिणी** स्त्री० हरिचक्रेण निखाता पुष्करिणी।
काशीतीर्थस्थे मणिकर्णिकास्थे चक्रतीर्थे। [योगः।
**चक्रबन्धु** पु०चक्रयोः मेलकत्वात् बन्धुरिव। सूर्य्ये दिवाहि तयो
**चक्रभेदिनी** स्त्री० चक्रौ भिनत्ति परस्परं वियोजयति भिद्-
णिनि। रात्रौ तत्र हि तयोर्वियोगः लोकप्रसिद्धः।
**चक्रभ्रम** पु०चक्रमिव भ्रमति अच्। कुन्दाख्ये शिल्पिनां यन्त्रभेदे
**चक्रमर्द्द** पु० चक्रं चक्राकारं दद्रुरोगं मृद्नाति मृद-अण्।
(दादमर्दन) क्षुपभेदे। ण्वुल् चक्रमर्दकोऽप्यत्र।
**चक्रला** स्त्री० चक्रं रोगभेदं लाति ला-क। उच्चटायाम् मुस्ताभेदे
**चक्रवर्त्तिन्** पु० चक्रे भूमण्डले, वर्त्तितुं, चक्रं सैन्यचक्रं वा
सर्व्वभूमौ वर्त्तयितुं शीलमस्य वृत-वृत-णिच् वा णिनि।
समुद्रपर्य्यन्तक्षितेरधीश्वरे, वास्तूकशाके च। चक्रात् वर्त्तिनि
त्रि०। जतुकायां,जटामांस्याम् अलक्तके च स्त्री०ङीप्।
**चक्रवाक** पु० चक्रशब्देन उच्यते वच-परिभाषणे कर्म्मणि
घञ्। स्वनामख्याते खगे। [पर्व्वते। मण्डले न०
**चक्रवाड(ल)** पु० चक्रमिव वाडते वेष्टयति अच्। लोकालोक
**चक्रवृद्धि** स्त्री० 'वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृते'ति स्मृत्युक्ते
वृद्धिभेदे (सुदेर सुद)।
**चक्रव्यूह** पु० चक्रमिव व्यूहः सैन्यस्थितिरचनाविशेषः।
युद्धार्थं मण्डलाकारे सैन्यस्थापने।

**चक्रा** स्त्री० चक्र लभ्नौ टाप्। नागरमुस्तायां, कर्कटशृङ्ग्याञ्च।
**चक्राङ्ग** पु० चक्रस्याङ्गमङ्गचक्रमिवाङ्गं यस्य। हंसे। चक्रमङ्ग-
मस्य। रथे। [मोचिकायां, मञ्जिष्ठायाञ्च
**चक्राङ्गा** स्त्री० चक्रं लग्निकरमङ्गमस्याः। कटुरोहिण्यां, छिन्न-
**चक्रिन्** पु० चक्र+अस्त्यर्थे इनि। विष्णौ, सर्पे, चक्रवाके,
कुम्भकारे, सूचके, तैलिकभेदे चक्रवर्त्तिनि, चक्रमर्द्दे व्याल-
नखे, खरे, ग्रामजालिके च। चक्रवति त्रि०।
**चक्रीवत्** पु० चक्रवत् भ्रमणमस्यास्ति मतुप् मस्य वः नि० अत
ईत्त्वम्। गर्द्दभे, नृपभेदे च।
**चक्ष** कथने त्यागे च अदा०आत्म०सक० सेट्। चष्टे। अख्यत्
अख्यत भाष्यमते अक्शासीत् अक्शास्त। त्यागे तु
समचक्षिष्ट। [(चाकना)।
**चक्षण** न० चक्ष-ल्यु न ख्यादेशः। मद्यपानरोचके अवदंशे
**चक्षुःश्रवस्** पु० चक्षुषा शृणोति श्रु-असुन् चक्षुरेव श्रवः
कर्णौ यस्य वा। सर्पे।
**चक्षुष्य** पु०चक्षुषे हितः यत्। केतके,पुण्डरीकवृक्षे,शोभाञ्जने.
रसाञ्जने च। सौवीराञ्जने स्थलपद्मे.खर्परीतुत्थे च न०।
प्रियदर्शने, चक्षुर्हिते च त्रि०। कुलत्थिकायां, सुभगायाम्;
अजशृङ्ग्याम्, वनकुलत्थिकायाञ्च स्त्री०।
**चक्षुस्** न० चक्ष-उसि शिच्च तेन न ख्यादेशः। लोचने।
**चघ** घातने स्वादि०पर०सक०सेट्। चघ्नोति अचघीत् अचाघीत्
**चङ्कुर** पु०सौ० चकि उरच्। रथे, वृक्षे च। यानमात्रे न०।
**चङ्क्रमण** न० क्रम-यङ्-ल्युट्। पुनःपुनर्भ्रमणे, अतिशयभ्रमणे,
इतस्ततो भ्रमणे, कुटिलभ्रमणे च।
**चञ्चरी** स्त्री०चनुच-गतौ घञ् तं लाति ला-क रस्य लः चञ्च+
अत्यर्थे र वा गौरा० ङीष्। भ्रमर्य्यां, तिन्तिडीवृक्षे च।
**चञ्चरीक** पु० चर-ईकन् पर्फरीकादित्वात् नि०। भ्रमरे।
**चञ्चल** पु० चनुच-अलच् चञ्चं गतिं वा लाति ला-क वा।
कामुके, वायौ च। चपले, अस्थिरे च त्रि०। विद्युति,
लक्ष्म्याञ्च स्त्री०।
**चञ्चा** स्त्री०चनुच-अच्। नलनिर्म्मिते कटभेदे (चांच) चञ्चेवेति
इवार्थे कन् 'लुप् मनुष्ये' इति तस्य लुप्। तृणमयपुरुषे।
**चञ्चु** पु० चनुच-उ। एरण्डके, रक्तैरण्डे, नाडीचशाके च।
पक्षिणामोष्ठे (ठोंट)। अत्र वा ऊङ् इत्येके। चञ्चूः।
**चञ्चुसूचि** पु०स्त्री० चञ्चुः सूचिरिव यस्य। कारण्डवपक्षिणि
स्त्रीत्वपक्षे वा ङीप्। वा कप् अत्रैव।
**चट** भेदे भ्वा०पर०सक०सेट्। चटति अचटीत्-अचाटीत्।
**चट** वधे भेदे च चु०उभ०सक०सेट्। चाटयति ते अचीचटत् त

चटक पु॰ चटति भिनत्ति धान्यादिकम् क्वुन् । कलविङ्के (चडुइ) स्वार्थे कन् चटककोऽप्यत्र । जातौ स्त्रियामजादित्वात् टाप् न तु ङीप् । कनूपत्ये चटकिका ।

चटकाशिरस् पु॰ चटकायाः शिर इव । पिप्पलीमूले ।

चटु पु॰ चट-कु । प्रियवाक्ये, व्रतिनामासनभेदे, उदरे च । क्लीवत्वमपीत्यन्ये ।

चटुल त्रि॰ चट-उलच् । चञ्चले, चपले । विद्युति स्त्री॰ ।

चड कोपे भ्वा॰आत्म॰अक॰सेट् इदित् । चण्डते अचण्डिष्ट ।

चड कोपे चुरा॰ उभ॰अक॰ सेट् इदित् । चण्डयति ते अचचण्डत् त । [चाणयति ।

चण शब्दे भ्वा॰ पर॰सक॰ सेट् । चणति अचाणीत्-अचणीत्

चण गतौ हिंसे च भ्वा॰पर॰सक॰ सेट् वा घटा॰ । चणति अचाणीत्-अचणीत् । चणयति-चाणयति ।

चण दाने भ्वा॰ पर॰ अक॰ सेट् घटा॰ । चणति अचणीत्-अचाणीत् । चणयति । [यस्य गोत्रापत्यं चाणक्यः ।

चणक पु॰चण-दाने क्वुन् । शस्यभेदे (बुट)(छोला) मुनिभेदे च

चण्ड पु॰ चडि-कोपे-अण् । तिन्तिडीवृक्षे,यमदूते दैत्यभेदे च । तीक्ष्णे न॰ । तीक्ष्णतायति अतिकोपने च त्रि॰ । स्त्रियां ङीप् । चण्डी । 'मल्लिकामुकुले चण्डी त्वड्ङ्गटः ।

चण्डा पु॰ चडि-अच् टाप् । चोरनामगन्धद्रव्ये, शङ्खपुष्प्याम्, लिङ्गिनीलतायां, कपिकच्छ्वां, आखुपर्ण्यां, श्वेतदूर्वायां, पद्मावतीनद्याञ्च ।

चण्डांशु पु॰ चण्डास्तीव्रा अंशवो यस्य । सूर्ये ।

चण्डात पु॰ चण्डमतति अत-अच् । करवीरे ।

चण्डातक पु॰न॰ चण्डां कोपनामतति अत-ण्वुल् । वरस्त्रीणां मर्वोरूपर्यन्ते वस्त्रे । [ब्राह्मण्यादुत्पादिते सङ्कीर्णवर्णे

चण्डाल पु॰ चडि-आलच् । स्वनामख्याते जातिभेदे, शूद्रेण

चण्डिमन् पु॰ चण्डस्य भावः इमनिच् । उग्रत्वे ।

चण्डी स्त्री॰ चडि-अच् गौरादित्वात् ङीप् । कोपवत्यां,दुर्गायां तन्माहात्म्ययुक्तत्वात् सप्तशतीनामके स्तोत्रे च 'चण्ड्याः शतावृत्तिपाठादिति स्मृतिः ।

चण्डीकुसुम पु॰ चण्डीप्रियं कुसुमं यस्य । रक्तकरवीरवृक्षे ।

चत याचने भ्वा॰उ॰ द्विक॰ सेट् । चतति-ते अचतीत् अचतिष्ट

चतुःपत्री स्त्री॰चत्वारि चत्वारि पत्राण्यस्याः । क्षुद्रपाषाणभेदे ।

चतुःपर्णी स्त्री॰ चत्वारिचत्वारि प्रतिपर्वं पर्णान्यस्याः । क्षुद्राम्लिकायाम् (आमरुल)

चतुःफला स्त्री॰ चतुर्धा विभक्तं फलमस्याः । नागबलायाम्

चतुःशाला न॰ चतस्रः अन्योन्याभिमुख्यः शाला यत्र । अन्योन्याभिमुखस्थचतुष्कायुतभवने, 'एकग्रामे चतुःशाले, दुर्भिक्षे इति ज्योतिषम् ।

चतुःसम न॰ चत्वारि समानि यत्र । 'लवङ्गं जीरकं पथ्या यमानी च चतुःसममित्युक्ते लवङ्गादितुल्यचतुर्द्रव्यात्मके औषधे, 'कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु । कुङ्कुमस्य त्रयश्चैव शशिनश्च चतुःसम मित्युक्तेषु मिलितेषु तत्तत्परिमाणान्वितकस्तूरीचन्दनकुङ्कुमकर्पूरेषु च । वा सत्त्वे चतुस्सममप्युभयत्र ।

चतुर् त्रि॰ ब॰व॰ चत-उरन् । चतुःसंख्यायाम्, चतुःसंख्यान्विते च । स्त्रियां चतस्रः । [नेत्रगोचरे च त्रि॰ ।

चतुर पु॰ चत-उरच् । हस्तिशालायाम् । कार्यकुशले, दक्षे,

चतुरङ्ग न॰ चत्वारि अङ्गानि यस्य । हस्त्यश्वरथपदातिरूपाङ्गचतुष्टययुते सैन्ये । रक्तहरितपीतश्यामलरूपाणि चत्वारि बलरूपाणि क्रीड़ासाधनान्यङ्गान्यस्य । (चतुराजी)क्रीड़ाभेदे

चतुरङ्गुला स्त्री॰ चतस्रोऽङ्गुल्यः प्रमाणमस्य पर्णस्य । अच् समा॰ । आरग्वधे (सोन्दाल) ।

चतुरस्र त्रि॰ चतस्रः अस्रयः कोणाः यस्य सुप्रातेत्यादि नि॰ । चतुष्कोणे, ज्योतिषोक्तयोः लग्नाच्चतुर्थाष्टमस्थानयोश्च । दन्त्यगर्भं चतुरस्रमित्यन्ये । [मुखादयोऽप्यत्र ।

चतुरानन पु॰ चत्वारि आननानि यस्य । ब्रह्मणि एवं चतु

चतुर्थ त्रि॰चतुर्णां पूरणः । येन चतुःसंख्या पूर्यते तादृशे तुरीये । [हिराः सुता' इति स्मृतिः ।

चतुर्थांश पु॰ चतुर्थोऽंशः । चतुर्भागैकभागे पादे, 'चतुर्थांश-

चतुर्थी स्त्री॰ चन्द्रस्य चतुर्थकलायाः प्रवेशनिर्गमनरूपक्रियात्मकतिथौ, व्याकरणोक्तेषु ङे भ्याम् भ्यस् इति प्रत्ययेषु च

चतुर्दन्त पु॰ चत्वारो दन्ता अस्य । ऐरावते इन्द्रगजे ।

चतुर्दशन् त्रि॰ ब॰व॰ । चतुरधिका दश । संख्याभेदे तत्संख्याते पदार्थे च । तत्संख्यापूरणे तु डट् । चतुर्दशः स्त्रियां चतुर्दशी । चन्द्रस्य चतुर्दशकलाक्रियायां चतुर्दशी ।

चतुर्दोल न॰ चतुर्भिः वाह्यते यत्तु चतुर्दोलं तदुच्यते इत्युक्ते द्विपदैश्चतुर्भिर्वाह्ये यानभेदे (चौदोल) ।

चतुर्धा अव्य॰ चतुःप्रकारम् धाच् । चतुःप्रकारे ।

चतुर्भद्र न॰ चत्वारि भद्राणि धर्मार्थकाममोक्षरूपाणि कल्याणानि अन्यूनातिरेकेण समाहृतानि । मिलिते धर्मादिचतुष्टये ।

चतुर्भुज पु॰ चत्वारो भुजा हस्ता अस्य । नारायणे ।

चतुर्युग न॰ चतुर्णां युगानां समाहारः पात्रादित्वान्न ङीप् । सत्यत्रेताद्वापरकलिरूपयुगचतुष्टये 'मिलितं तच्चतुर्युगमितिमतः

चतुर्वर्ग पु॰ चतुर्णां धर्मार्थकाममोक्षाणां वर्गः समुदायः ।

धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु ।
**चतुर्विंशति** स्त्री० चतुरधिका विंशतिः । (चव्विश) चतुर्युत-
विंशतिसंख्यायाम्, तत् संख्याते च ।
**चतुर्विद्य** पु० चतस्रो विद्या वेदज्ञानरूपा यस्य । चतुर्वेद-
वेत्तरि । प्रज्ञाद्यणि द्विपदवृद्धिः । चातुर्वैद्योऽप्यत्र ।
**चतुर्विधशरीर** न० कर्म० । जरायुजाण्डजस्वेदजोद्भिज्जेषु
शरीरेषु । चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रश इति
**चतुर्व्यूह** पु० सृष्ट्यादिकार्यार्थं चत्वारो व्यूहा विभागा यस्य ।
वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धात्मके विष्णौ । [चतुर्द्वे च
**चतुष्क** न० चतुर्भिः स्तम्भैः कायति कै-क । चतुःस्तम्भयुक्तमण्डपे
**चतुष्टय** त्रि० चत्वारोऽवयवा विधा अस्य तयप् । चतुर्विभाग-
वति चतुष्के च । स्त्रियां ङीप् 'प्रवृत्तिरासीच्छब्दानां चरितार्था
चतुष्टयी'ति कुमारः । [ङीप् । (कुसुनी) शाकभेदे ।
**चतुष्पत्री** स्त्री० चत्वारि चत्वारि प्रत्येकपत्रे पत्राण्यस्याः
**चतुष्पथ** पु० चत्वारः पन्थानः ब्रह्मचर्य्यादयः आश्रमा यस्य
अच् समा० । ब्राह्मणे । चतुर्णां पथां समाहारः अच् ।
(चौमाथा) चतुर्मुखे पथि ।
**चतुष्पद** पु० चत्वारि पदानि चरणा यस्य । गवादौ पशौ ।
ज्योतिषोक्ते करणभेदे, मेषवृषसिंहधनुरन्त्यार्द्धमकरपूर्व्वा
र्द्धरूपराशिभेदे च । पादशब्दस्य पाद्भावे चतुष्पादप्यत्र ।
**चतुष्पदी** स्त्री० चत्वारः पादा अस्याः पादस्य पाद्भावे ङीपि
पद्भावः । चतुश्चरणात्मके पद्ये । [रुल) क्षुद्राञ्जलिकायाम्
**चतुष्पर्णी** स्त्री०चत्वारि चत्वारि प्रतिपर्णं पर्णान्यस्याः । (आम-
**चतुस्त्रिंशत्** स्त्री० चतुरधिका त्रिंशत् । चतुरधिकायां त्रिंशति
(चौतिश) तत्संख्याते च चतुश्चत्वारिंशदादयोऽप्येवम् ।
**चत्वर** न० चत-ष्वरच् । स्थण्डिले, यागार्थं संस्कृतभूमौ, अङ्गने
च (उठान) । [(चल्लिश) संख्याभेदे तत्संख्याते च ।
**चत्वारिंशत्** स्त्री० चत्वारि दशतः परिमाणमस्य नि० ।
**चत्वाल** पु० चत-वालच् । होमकुण्डे, दर्भे च ।
**चद** याचने भ्वा० उभ० द्विक० सेट् । चदति-ते अचदीत् ।
**चदि** आह्लादे दीप्तौ च भ्वा० पर० अक० सेट् इदित् ।
चन्दति अचन्दीत् ।
**चन** हिंसायां श्रद्धाप्रतिघाते च भ्वा० पर० सक० सेट् घटा०
चनति । अचानीत्-अचनीत् । चनयति ।
**चन** शब्दे तुदा० पर० अक० सेट् । चनति । अचानीत्-अच-
नीत् । चानयति । [अप्यर्थे च ।
**चन** अव्य० चन-शब्दे-अच् । असाकल्ये यथा किञ्चन ।
**चञ्च** गतौ भ्वा० पर० सक० सेट् । चञ्चति अचञ्चीत् 'चञ्च
द्भुजङ्गमिते'ति वेणी० । [वानरभेदे, औषधिभेदे च ।
**चन्दन** चदि-णिच्-ल्यु । मलयजाते गन्धसारे, रक्तचन्दने,
**चन्दनधेनु** स्त्री० चन्दनेनाङ्किता धेनुः । 'पतिपुत्रवती नारी
म्रियते भर्त्तुरग्रतः । चन्दनेनाङ्किता धेनुस्तस्याः स्वर्गाय
दीयते' इति स्मृत्युक्तायां चन्दनाङ्कितायां देयधेन्वाम् ।
**चन्दनपुष्प** न० चन्दनस्येव पुष्पमस्य । लवङ्गे ।
**चन्द्र** पु०चदि-रक् । इन्दौ, मृगशिरानक्षत्रे, कर्पूरे, काम्पिल्ले,
हीरके, जले, काम्ये, सुन्दरे, कृष्णवर्णे मयूरचन्द्रके,
शोणमुक्ताफले च । आह्लादकद्रव्ये त्रि० स्वर्णे, शुक्रे च न०
**चन्द्रक** पु० चन्द्र इव कायति कै-क इवार्थे कन् वा । मयूरस्य
पक्षस्थिते चन्द्राकृतौ पदार्थे, मत्स्यभेदे (चांदा) शिग्रु-
वीजे, शुभ्रमरिचे च ।
**चन्द्रकला** स्त्री०६त० । चन्द्रस्य षोडशे भागे, द्रविड़वाद्यभेदे च
**चन्द्रकान्त** पु० चन्द्रः कान्तोऽभीष्टो यस्य । स्वनामख्याते
मणिभेदे तद्दर्शने हि तस्य जलस्रावात् तत्कान्तत्वम् ।
कैरवे, श्रीखण्डचन्दने च न० । रात्रौ, ज्योत्स्नायां,
चन्द्रशोभायां,चन्द्रपत्न्याञ्च स्त्री० ।
**चन्द्रकान्ति** न० चन्द्रस्येव कान्तिरस्य शुभ्रत्वात् । रजते रूप्ये,
६त० चन्द्रस्य दीप्तौ । [पदद्दीर्घः । मयूरे ।
**चन्द्रकावत्** पु० चन्द्रक+अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्व
**चन्द्रकिन्** पु० चन्द्रक+अस्त्यर्थे इनि । मयूरे ।
**चन्द्रकूट** पु० कामरूपस्थे पर्व्वतभेदे ।
**चन्द्रगुप्त** पु० मगधनन्दस्य मुरानाम्न्यां दास्यां जाते चाणक्येन
योगानन्दं हत्वा कृतराज्याभिषेके राजभेदे ।
**चन्द्रपुष्पा** स्त्री०चन्द्र इव शुभ्रं पुष्पमस्याः । श्वेतकण्टकार्य्याम्
**चन्द्रबाला** स्त्री० चन्द्रस्य कर्पूरस्य बालेव तत्सुगन्धित्वात् ।
स्थूलैलायाम् । अत्यन्तवमथ्य इत्यन्ये ।
**चन्द्रभागा** स्त्री० काश्मीरदेशस्थे नदीभेदे ।
**चन्द्रमण्डल** न० ६त० । चन्द्रस्य मण्डलाकारे विम्बे ।
**चन्द्रमस्** पु० चन्द्रमाह्लादं मिमीतेमि असिमाहेशः चन्द्रं कर्पूरं
माति तुलयति मा-असि वा । चन्द्रे ।
**चन्द्रमौलि** पु० चन्द्रो मौलौ यस्य । चन्द्रशेखरे शिवे ।
**चन्द्रवल्लरी** स्त्री० ६त० । सोमलतायाम् । [माधवीलतायाम्
**चन्द्रवल्ली** स्त्री० चन्द्र इव वल्ली सुधातुल्यमधुस्राविलात् ।
**चन्द्रव्रत** न० चन्द्रस्य चन्द्रलोकप्राप्तये व्रतम् नियमः । चा-
न्द्रायणसंज्ञके व्रते ।
**चन्द्रशाला** स्त्री० चन्द्रः शालेवाधारो यस्याः । ज्योत्स्नायाम्।
चन्द्र इवाह्लादिका शाला । प्रासादोपरिस्थे गृहे (चिलेघर)

स्वार्थे कन् तत्रैव । [देशस्थे पर्व्वतभेदे च।

**चन्द्रशेखर** पु० चन्द्रः शेखरं शिरोभूषणं यस्य । शिवे पूर्व्व-

**चन्द्रसम्भव** पु० सम्भवत्यस्मात् सम्भवः चन्द्रः सम्भवो यस्य । बुधे एवं सोमसुतादयोऽप्यत्र। नर्म्मदायां, स्थूलैलायाञ्च स्त्री० ।

**चन्द्रहास** पु० चन्द्र इव हासः प्रभाऽस्य चन्द्रं हसति वा शितत्वात् अण् वा । खड्गे । रौप्ये न० गुडूच्यां स्त्री० ।

**चन्द्रा** स्त्री० चदि-रक् । एलायां, चन्द्रातपे च (चान्दोया) ।

**चन्द्रातप** पु० चन्द्रस्य आतो गमनं ततः पाति पा-क । (चांदोया) विताने चन्द्रस्य आतप इव किरणः । ज्योत्स्नायाम् । [तारापीडसुते न्टपभेदे च ।

**चन्द्रापीड** पु० चन्द्र आपीडः शिरोभूषणं यस्य । शिवे,

**चन्द्रिका** स्त्री० चन्द्रः स्वाश्रयत्वेन अस्त्यस्याः ठन् । ज्योत्स्नायां, स्थूलैलायाम्, कर्णस्फोटायाम्, त्रयोदशाक्षरपादके छन्दोभेदे च । [कान्तमणौ ।

**चन्द्रिकाद्राव** पु० चन्द्रिकया द्रावोनिष्यन्दो यस्य । चन्द्र-

**चन्द्रिकापायिन्** पु० चन्द्रिकां पिबति पा-णिनि । चकोरपक्षिणि । [न्यास् ।

**चन्द्रेष्टा** स्त्री० चन्द्रइष्टो यस्याः । उत्पललतायाम् उत्पलि-

**चन्द्रोपल** पु० चन्द्रप्रियः उपलः । चन्द्रकान्तमणौ ।

**चप** चूर्णीकरणे चु० उभ० सक० सेट् घटा० । चपयति-ते अचीचपत्-त । चिप्रातोरेव स्वार्थे णिजित्यन्ये ।

**चप** सान्त्वने भ्वा० पर० सक० सेट् । चपति अचापीत्-अचपीत् । चपयति ।

**चप** गतौ चु०उभ०सक०सेट् इदित् । अम्पयतिते अचचम्पत् त

**चपल** पु० चप-णिच् घञ् चपं सान्त्वनं लाति ला-क । पारदे, मीने, चोरनामगन्धद्रव्ये, प्रस्तरभेदे,राजमाषे च । तरले, चञ्चले, क्षणिके, विकले, दुर्विनीते च. त्रि० लक्ष्म्यां विद्युति, पुंश्चल्याम्, पिप्पल्यां, विजयायां, मदिरायां, जिह्वायां, आर्य्याभेदे च स्त्री० ।

**चपेट** पु० चप-चनर्थे क चपाय सान्त्वनाय इटति गच्छति इट-क। विस्तृताङ्गुलिके हस्ते प्रहते (चापड़) स्त्रीमप्येके खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति भाष्यप्रयोगात । स्वार्थे कन् अत्रैवार्थे ।

**चम** भक्षणे भ्वा०स्वादि०च पर०सक०सेट् । चमति आचामति विचमति चम्नोति । अचमीत् । चमित्वा-चान्त्वा ।

**चमत्कार** पु० चमदित्यव्यक्तं क्रियते कृ-घञ् । लोकातीतवस्तु दृष्ट्वा चित्तस्य आनन्दहेतौ प्रकाशे विस्मये, अपामार्गवृक्षे च

**चमर** पु० चम-अरच् । महिषाकृतौ मृगभेदे, यस्य पुच्छेन च मराख्यं व्यजनं भवति, दैत्यभेदे च । जातौ स्त्रियां ङीप् चमरी। चमरव्यजने चामरे न०। [काञ्चनारे च।

**चमरिक** पु० चमरमिव पुष्पमस्त्यस्य ठन्। कोविदारवृक्षे रक्त-

**चमस** पु०न० चम-असच् । काष्ठजाते यज्ञिये पात्रभेदे, सोमरसपानमात्रे च । पिष्टकभेदे लड्डुके च पु० ।

**चमीकर** पु० क्षतस्वराभिधे स्वर्णस्योत्पत्तिस्थाने यद्योगात् स्वर्णं चामीकरमित्युच्यते ।

**चमू** स्त्री० चम ऊ । सेनामात्रे (गजाः ७२६, रथाः ७२६ अश्वाः २१८७, पदातयः ३६४५), एतत्संख्याभेदान्विते सैन्यभेदे च । [चर्म्मणेति माघः ।

**चमूरु** पु० चम-ऊरच् । मृगभेदे, कोविदारवृक्षे च । चारु चमूरु

**चम्पक** पु० चपि-गतौ क्वुन् । (चांपा) इति नामके वृक्षभेदे । कदलीफलभेदे न० (चांपाकला) ।

**चम्पकमाला** स्त्री०६त० । स्वर्णचम्पकैः निर्म्मितायां स्त्रीणां कण्ठाभरणे (चांपकली) दशाक्षरपादके पङ्क्तिच्छन्दोभेदे च ।

**चम्पकरम्भा** स्त्री० चम्पक इव रम्भा । स्वर्णकदल्याम् ।

**चम्पकोष** पु०चपि-अच् कर्म्म०। पनसे तस्य हि कोषोभक्ष्यते

**चम्पा** स्त्री० चपि-अच् । नगरीभेदे नदीभेदे तीर्थभेदे कर्णस्य भार्य्यायाञ्च ।

**चम्पाधिप** पु० ६त० । कर्णे । [नगर्य्याम् ।

**चम्पावती** स्त्री० चम्पा+मतुप् मस्य व । कर्णराजधान्यां

**चम्पू** स्त्री० 'गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते इत्युक्ते काव्यभेदे ।

**चम्ब** गतौ भ्वा० पर० सक० सेट् चम्बति अचम्बीत् ।

**चय** गतौ भ्वा० आ० सक० सेट् । चयते अचयिष्ट ।

**चय** पु० चि-अच् । प्राकारमूले प्राकाराधारवेदिकायाम्, समूहे समाहृतौ च। [पुञ्जादेर्द्वयादितो ग्रहणे च।

**चयन** न० चि-ल्युट् । इष्टकादीनामूर्द्ध्वाधोनयनरूपे रचनाभेदे.

**चर** गतौ भ्वा० पर० सक० सेट् । चरति अचारीत् ।

**चर** संशये चुरा० उभ० सक० सेट् । चारयति-ते अचीचरत् त

**चर** पु० चर-अच् । स्वपरराष्ट्रवृत्तान्तज्ञानार्थं राजनियोगेन इतस्ततो भ्रमणकर्त्तरि चारे प्रणिधौ, कपर्द्दके, ज्योतिषोक्तेषु मेषकर्कटतुलामकरराशिषु च। स्वातिपुनर्वस्वश्रवणादित्रिकरूपे नक्षत्रभेदे सोमवारे च न०। चले जङ्गमे त्रि०।

**चरक** पु० चर-क्वुन् स्वार्थे कन् वा । चारे राजदूते,पर्पटे भिक्षौ, वैद्यकशास्त्रकर्त्तरि मुनिभेदे तत्कृते तदाख्ये ग्रन्थे च । देवाकर्ण्य सुश्रुतेन चरकस्योक्तेन ज्ञाने ऽखिलमिति नैषधम्।

**चरण** पु०न० । चर-करणे ल्युट् । पादे, वेदैकदेशे शाखा-

रूपे ग्रन्थे, तदध्येतरि जने, गोत्रे च । भावे ल्युट् । गतौ, भक्षणे, आचारे, गौडे च न० ।

चरणग्रन्थि पु० ६त० । गुल्फे ।

चरणायुध पु० चरणाभ्यामायुध्यति आ+युध-क । कुक्कुटे ।

चरणव्यूह पु० चरणानां वेदशाखानां व्यूहो विशेषेणोहो निरूपणं यत्र । व्यासकृते ग्रन्थभेदे ।

चरम त्रि० चर-अमच् । अन्ते अवसाने, पश्चिमे च ।

चरमाचल पु० चरमः पश्चिमः अचलः कर्म्म० । अस्ताचले । चरमशैलादयोऽप्यत्र । [एक व० । कपर्दके पु० ।

चराचर न० चर-अच् नि० । जगति । समा०द्व० । जङ्गमेऽजङ्गमे

चरित(त्र) न० चर-क्त (इत्र वा) । अनुष्ठाने, सञ्चारे, व्रतकर्म्मादौ, चेष्टिते, लीलादौ च ।

चरु पु० चर-उ । हव्यान्ने, होमार्थं पाच्यान्ने, 'अनवस्रावितान्तरूष्मपाक्यओदनश्चरुरिति याज्ञिकाः । चरुपाकपात्रे भाण्डे च । [चर्च्चित-त । चर्च्चितः चर्च्चा ।

चर्च्च अध्ययने चुरा० उभ० सक० सेट् । चर्च्चयति-ते अचचर्च्च-

चर्च्च उक्तौ भर्त्सने च तु० पर० सक० सेट् । चर्च्चति अचर्च्चीत् ।

चर्च्चरी स्त्री० चर्च्च-अरन् गौरा० ङीष् । गीतिभेदे, कुटिलकेशे, हर्षक्रीड़ायाम्, साटोपवाक्ये, छन्दोभेदे च ।

चर्च्चा स्त्री० चर्च्च-अ । विचारे, चिन्तायां, चन्दनादिना देहलेपने च । [लिपने

चर्च्चित त्रि० चर्च्चा जातास्य इतच् । चन्दनादिना कृतगात्रानु-

चर्ब्ब गतौ भक्षणे च भ्वा० पर० सक० सेट् । चर्ब्बति अचर्ब्बीत् ।

चर्म्मकार पु० चर्म्म तन्मयं पादुकादिकं करोति कृ-अण् । (चामार) पादुकाकारे एवं चर्म्मकृदादयोऽप्यत्र ।

चर्म्मण्वती स्त्री० चर्म्माण्यस्याम् मतुप् नि० । नदीभेदे ।

चर्म्मदण्ड पु० चर्म्मणा कृतो दण्डः । कशायाम् (कोड़ा)

चर्म्मन् न० चर-मनिन् । रक्तधरायां कलायां, इन्द्रियभेदे येन स्पर्शउपलभ्यते तस्मिन् 'शरीरावरकं शस्त्रं चर्म्म इत्यभिधीयते' इत्युक्ते (ढाल) फलके च ।

चर्म्मपादुका स्त्री० चर्म्म निर्म्मिता पादुका । उपानहि (जुता)

चर्म्मप्रभेदिका स्त्री० प्रभिनत्ति प्र+भिद्-ण्वुल् ६त० । चर्म्मवेधनेऽस्त्रभेदे ।

चर्म्मप्रसेविका स्त्री० चर्म्मणा प्रसीव्यते सिव-ण्वुल् । अग्निसन्दीपनार्थं चर्म्म निर्म्मिते भस्त्राख्ये यन्त्रे ।

चर्म्मिन् पु० चर्म्म-फलकमस्यास्ति व्रीह्यादित्वादिनि । फलकास्त्रवति, त्वक्प्रचर्मवति, भूर्ज्जवृक्षे, भृङ्गरीटे, कदल्याञ्च ।

चर्य्या स्त्री० चर-यत् । नियमपरित्यागे गुरूपदिष्टव्रताद्यनुष्ठाने

चर्व्व भक्षे (दन्तैश्चूर्णने) वा चुरा० उभ० पक्षे भ्वा० पर० । चर्व्वयति-ते चर्व्वति अचचर्व्वत्-त अचर्व्वीत् ।

चर्षणि पु० कृष-अनि ष० आदेशत्वम् । जने 'स चर्षणीनामुदगादि'ति भागवतम् । [चिलःचालः ।

चल गतौ भ्वा०पर० सक० सेट् ज्वला० दि० । चलति अचालीत्

चल विलासे तु०पर०अक०सेट् । चलति अचालीत् ।

चल प्रेषणे चुरा० उभ०सक० सेट् । चालयति अचीचलत्-त

चल त्रि० चल-ज्वलादित्वात् वा अच् । तरले, चञ्चले, कम्पयुक्ते । भावे क । कम्पे । [पलादयोऽप्यत्र ।

चलद्दल पु० चलानि चञ्चलानि दलान्यस्य । अश्वत्थवृक्षे चलं-

चला स्त्री० चल-अच् । लक्ष्म्यां, सिह्लके च ।

चलाचल त्रि० चल-अच् नि० । अत्यन्तचञ्चले । काके पु०

चवि स्त्री० चर्व-इन् ष० । (चइ) चव्ये । [सिध्यतार्थे ।

चविका स्त्री० चर्व क्वुन् ष० । चव्ये (चइ) इकन् ष० । चविक-

चव्य न० चर्व्यते चर्व-यत् ष० । (चइ) वृक्षे, वचायां, कार्पास्याञ्च

चव्यजा स्त्री० चव्यमिव जायते जन-ड । गजपिप्पल्याम् ।

चष भक्षे भ्वा० उभ० पर० सक सेट् । चषति-ते अचाषीत्-अचषीत् अचषिष्ट ।

चष वधे भ्वा०पर० सक० सेट् । चषति अचाषीत्-अचषीत् ।

चषक पु०न० चष-करणे क्वुन् । मद्यपानपात्रे । कर्म्मणि क्वुन् । मधुनि, मद्यभेदे च न० ।

चषाल पु० चष-आलच् । यज्ञियपशुबन्धनार्थे काष्ठे यूपमध्येद्देये वलयाकारे काष्ठमये लौहमये वा पदार्थे ।

चह प्रतारणे भ्वा० पर० सक० सेट् । चहति अचहीत् ।

चह प्रतारणे वेद० चुरा० उभ० सक० सेट् । चहयति-ते अचचहत् त । [चहत्-त ।

चह प्रतारणे चुरा० पर० सक० सेट् घटा० चहयति अची-

चाकचक्य न० चक-अच् चकः प्रकारे द्वित्वं चकचकस्तस्य भावः । उज्ज्वलतायाम् । चाकचक्यादिसादृश्यसंदर्शनसमुद्भूतेति वेदान्तपरिभाषा । [मनौ च ।

चाक्षुष न० चक्षुषा निर्वृत्तम् अण् । चक्षुर्जन्ये ज्ञाने, षष्ठे

चाक्रिक पु० चक्रेण समूहेन चरति ठक् । संहत्य स्तुतिपाठके घाण्टिकार्थे ।

चाङ्गेरी स्त्री० 'चाङ्गस्तु शोभने दन्ते' इत्युक्ते चाङ्ग-शोभनदन्ततामीरयति ईर-अण् गौरा० ङीष् । (आमरुल) क्षुपभेदे ।

चाट पु० चु० चट-भेदे अच् । आदौ विश्वासमुत्पाद्य पश्चात् धनापहर्त्तरि चौरे "चाटचारणदासेषु दत्तं भवति निष्फलमि"ति स्मृतिः ।

**चाटकेर** पु० घटकायाः चटकस्य वाऽपत्यम् एरक् । चटकापत्ये ।

**चाटु** पु०न० चट-ञुण् । प्रियवाक्ये मिथ्याप्रियवाक्ये च स्वार्थे कन् । अत्रैवार्थे 'विस्रब्धचाटुकशतानी'ति साहि० ३परि० ।

**चाटुपटु** पु० चाटौ मिथ्यापरितोषणे वाक्ये पटुः । (भाण्ड) (खोसामुदे) जने । ष्ट०म्रस्य वः चाटुवटुरप्यत्र विदूषके च ।

**चाणकीन** त्रि०चणकस्य भवनं क्षेत्रम् खञ् । चणकभवनयोग्ये क्षेत्रादौ । [हत्वा चन्द्रगुप्ताय राज्यं दातरि विष्णुगुप्ते

**चाणक्य** पु० चणकस्य मुनेर्गोत्रापत्यम् यञ् । नव नन्दान्

**चाणूर(र)** पु० चण(न)-ऊरण् । कंसासुरस्य प्रधानमल्ले ।

**चाणू(नू)रसूदन** पु० चाणू(नू)रं सूदयति ल्युट् । श्रीकृष्णे ।

**चाण्डाल** पु० चण्डाल एव प्रज्ञाद्यण् । श्वपचे चण्डालार्थे ।

**चातक** पु० चतति याचते सततमम्भो मेघम् चत-ण्वुल् । स्वनामख्याते पक्षिभेदे । [चातुरी तुरी'ति नैषधम् ।

**चातुरी** स्त्री० चतुरस्य भावः तस्येदं वा अण् । 'चातुर्य्ये

**चातुर्मास्य** न० चतुर्षु मासेषु विहितम् ण्य । चतुर्माससाध्ये यज्ञभेदे व्रतभेदे च 'आषाढ़शुक्लद्वादश्यां पौर्णमास्यामथापि वा चातुर्मास्यव्रतारम्भ'मित्युपक्रम्य 'कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत् समापयेदि'त्युक्तं वाराहे ।

**चातुर्वर्ण्य** न० चत्वारो ब्राह्मणादयोवर्णा एव स्वार्थे ष्यञ् । ब्राह्मणादिषु चतुर्षु वर्णेषु 'चातुर्वर्ण्यं मया सृष्ट'मिति गीता । भावे-ष्यञ् । चतुर्वर्णधर्म्मे ।

**चान्द्र** पु० चन्द्रोदेवताऽस्य, तस्येदमिति वा अण् । चन्द्रकान्तमणौ, त्रिंशत्तिथ्यात्मके पौर्णमास्यन्ते, अमान्ते वा मासे च । चान्द्रायणव्रते न० । चन्द्रलोके पु० । चन्द्रेण प्रोक्तमण् । व्याकरणभेदे । तदधीते पुनरण् । चान्द्रव्याकरणाध्यायिनि त्रि० । [भिस्यैऽ'त्युक्तलक्षणे मासि ।

**चान्द्रमास** पु०कर्म० । 'तत्त्रिंशता भवेन्मासश्चान्द्रस्तु तिथि-

**चान्द्रायण** चान्द्रश्चन्द्रलोकोऽयतेऽनेन अय-ल्युट् णत्वम् । व्रतभेदे

**चान्द्री** स्त्री० चन्द्रस्येयम् अण् । चन्द्रपत्न्यां ज्योत्स्नायाञ्च । तत्तुल्यशुभ्रत्वात् श्वेतकण्टकार्य्याम् । [नवमे राशौ च ।

**चाप** पु० चपस्य वंशभेदस्य विकारः अण् । धनुषि, मेषाग्धिके

**चापल** न० चपलस्य भावः कर्म वा अण् । अविमृष्यकारितारूपे, प्रयोजनं विनाऽपि पाण्यादेश्चालनरूपे वा चपलकर्माणि 'मात्सर्य्यद्वेषरागादेश्चापलं त्वनवस्थिति'रित्युक्तलक्षणेऽनवस्थाने च । ष्यञ् । चापल्यमप्यत्र ।

**चामर** पु०न० चमरस्य विकारः तत्पुच्छनिर्मितत्वात् । चमरपुच्छकृतव्यजने । [आम्रे च

**चामरपुष्प** पु० चामरमिव पुष्पमस्य । क्रमुके, काशे, केतके,

**चामीकर** न० चमीकरे आकरभेदे भवः अण् । स्वर्णे धुस्तूरे च

**चामुण्डा** स्त्री० चमूं सेनां विपदादिसमूहरूपां लाति आदत्ते ला-क ष्ट० । दुर्गायाम् 'यस्माच्चण्डञ्च मुण्डञ्च गृहीत्वा त्वमुपागता चामुण्डेति ततो लोके ख्याता देवी'त्युक्ते वा चण्डमुण्डानयित्र्यां दुर्गायाम् ।

**चाम्पेय** न० चम्पायां भवः ढक् । चम्पके, नागकेशरे, स्वर्णे, किञ्जल्के च । स्वार्थे कन् किञ्जल्के ।

**चाय** दर्शने भ्वा० उभ० सक० वेट् । चायति ते अचायीत्-अचासीत् अचायिष्ट-आचास्त ।

**चार** पु० चर एव स्वार्थे अण् । चरे 'चारैः पश्यन्ति राजान' इति नीतिशास्त्रम् । चर-भावे घञ् । गमने बन्धे च । आधारे घञ् । कारागारे । कृत्रिमविषे न० ।

**चारण** पु० चारयति कीर्त्तिं चर-णिच् ल्यु । कीर्त्तिसञ्चारके नटे 'चाटचारणदासेष्वि'ति स्मृतिः ।

**चारित्र** न० चरित्रमेव स्वार्थेऽण् । चरित्रे ।

**चारु** पु० चर-ञुण् । बृहस्पतौ । मनोज्ञे मनोहरे त्रि० ।

**चारुकेशरा** स्त्री० चारूणि केशराण्यस्याः । नागरमुस्तायाम् ।

**चारुनालक** न० चारु-नालं यस्य कप् कुम्रा० । रक्तपद्मे ।

**चारुपर्णी** चारूणि पर्णान्यस्याः ङीप् । (गन्धभादाल) प्रसारिण्याम् ।

**चारुफला** स्त्री० चारूणि स्वादूनि फलान्यस्याः । द्राक्षायाम्

**चार्च्चिक्य** न० चर्च्च-भावार्थे ण्वुल् चर्चिकैव स्वार्थे ष्यञ् । चन्दनादिना गात्रलेपने । [वेष्टिते रथे ।

**चार्म्म** पु० चर्म्मणा परिवृतो रथः अण् । चर्म्मणा सर्व्वतो

**चार्म्मण** न० चर्मणां समूहः अण् । चर्म्मसमुदाये ।

**चार्म्मिण** चर्मिणां समूहः अण् । चर्मिसमुदाये (ढालि) समूहे

**चार्व्वाक** पु० चारुर्लोकसिद्धोवाको वचनं यस्य ष्ट० । प्रत्यक्षप्रमाणवादिनि लौकायतिके यस्य मतप्रस्थापकोबृहस्पतिः

**चार्व्वी** स्त्री० चारु-ङीप । चारुत्वगुणवत्याम्, स्त्रियां ज्योत्स्नायाम्, दीप्तौ, कुबेरपत्न्याञ्च ।

**चाल** पु० चल-ण । स्वनामख्याते गृहाच्छादने तृणादौ ।

**चालनी** स्त्री० चाल्यते शस्यादिरनया चल-णिच्-करणे ल्युट् स्वनामख्याते बहुच्छिद्रे शस्यादिचालनसाधने पदार्थे ।

**चाष** पु० चष-भक्षणे णिच्-अच् । स्वर्णचूड़े नीलाङ्ग खगे (नीलकण्ठ) ।

**चास** पु० चस-णिच्-अच् । इक्षौ चाषे पक्षिणि च ।

**चि** चयने स्वादि० उभ० द्विक० अनिट् । चिनोति चिनुते । अचैषीत् अचेष्ट चिकाय-चिचाय । चाययति चपयतीत्येके ।

**चि** चयने वा चु० पक्षे भ्वा० उभ० द्वि० अनिट् घटादि। चपयति-ते चयति ते। अचीचयत् त अचैषीत् अचेष्ट।

**चिकित्सक** पु० कित-रोगापनयने स्वार्थे सन्-ण्वुल्। रोगापनयनकर्त्तरि वैद्ये। [करणे।

**चिकित्सा** स्त्री० कित-स्वार्थे सन्-अ। रोगप्रतीकारोपाय-

**चिकित्स्य** त्रि० चिकित्सयितुं योग्ये अर्हार्थे यत्। साध्ये रोगे रोगात् मोचनयोग्ये जने च।

**चिकुर** पु० चि इत्यव्यक्तं शब्दं कुरति कुर-क। केशे, वृक्षभेदे, पर्वते, सरीसृपे च। चपले, तरले, चञ्चले च त्रि०।

**चिक्क** पीड़ने चु०उभ०सक०सेट्। चिक्कयति ते अचिचिक्कत् त

**चिक्कण** पु० चिक्क-क्विप् चिक् तं कणति कण शब्दे अच्। गुवाकवृक्षे। तत्फले न०। मसृणे स्निग्धे (चिकन) त्रि०। चिक्कणगुणवत्यां उत्तमायां गवि स्त्री०।

**चिच्छक्ति** स्त्री० चिदेव शक्तिः। 'चिच्छक्तिः परमेश्वरस्य विमलं चैतन्यमेवोच्यते' इत्युक्ते चैतन्ये। [स्वार्थे कन् अत्रैव।

**चिञ्चा** स्त्री० चिमित्यव्यक्तं शब्दं चिनोति चि-ड। तिन्तिड़ीवृक्षे।

**चिञ्चाम्ल** न० चिञ्चेवाम्लम्। अम्लशाके।

**चिट** प्रेषणे भ्वा०पर०सक० सेट्। चेटति अचेटीत्।

**चिट** प्रेषणे चु०उभ०सक० सेट्। चेटयति ते अचीचिटत् त

**चित** ज्ञाने भ्वा०पर० सक० सेट्। चेतति अचेतीत्। चित्तम्।

**चित** ज्ञाने चु०आत्म०सक०सेट्। चेतयति ते अचीचितत् त।

**चित** स्मृतौ चु०उभ०सक०सेट् इदित्। चिन्तयति ते अचिचिन्तत् त

**चित्** स्त्री० चित-संपदा० क्विप्। ज्ञाने चेतनायाम् चैतन्ये।

**चित्** अव्य० चित-क्विप्। असाकल्ये यथा किञ्चित् जातुचित्।

**चित** त्रि० चि-क्त। कृतचयने पुष्पादौ छन्ने च। शवदाहार्थकाष्ठचुल्ल्यां स्त्री०।

**चिति** स्त्री० चि-क्तिन् चितायां, समूहे, वेदान्तोक्ते निर्विषयसंवेदने, 'निर्विशेषचितिरेव केवले'ति संक्षेपशारीरकम्। प्रासादादिषु इष्टकादिसंख्याज्ञानार्थं अङ्कशास्त्रोक्ते (थर) इति ख्याते पदार्थे, अग्निस्थानभेदे च।

**चित्त** न० चित्यते ज्ञायतेऽनेन चित-क्त। मनसि, वेदान्तोक्ते ऽनुसन्धाननामकवृत्तिमति अन्तःकरणे, चिताकाष्ठे च।

**चित्तविक्षेप** पु० चित्तं विक्षिपन्ति योगात्प्रनयन्ति क्षिप-अण्। योगशास्त्रोक्तेषु योगप्रतिपक्षेषु व्याध्यादिषु नवसु। [दरोगे

**चित्तविप्लव** पु० चित्तस्य विप्लवोऽनवस्थानं यस्मात् ५ब०। उन्मा-

**चित्तविभ्रम** पु० चित्तस्य विभ्रमो विशेषेण भ्रमणमनवस्थानं यस्मात् ५ब०। उन्मादरोगे।

**चित्तसमुन्नति** स्त्री० सम्+उद् नम-क्तिन् ६त०। चित्तस्य सम्यगुन्नमने तद्धेतौ गर्व्वे च चित्तोन्नतिरप्यत्र गर्व्वे च।

**चित्ताभोग** पु० सम्यग् भोग आभोग एकविषयता ६त०। एकविषये स्थिरचित्ततायाम्।

**चित्य** पु० चीयतेऽसौ चि-क्यप्। अग्नौ। चितायां स्त्री०।

**चित्र** चणिके-लेख्ये अद्भुते च अद०चु०उभ०सक०सेट्। चित्रयति ते अचिचित्रत् त।

**चित्र** पु० चित-क्विप् त्रायते त्रै-क वा तलोपः चित्र-अच् वा। यमभेदे 'वृकोदराय चित्राये'ति तर्पणमन्त्रः। अशोकवृक्षे, (चिता) चित्रकवृक्षे, एरण्डवृक्षे, आकाशे, कुष्ठभेदे, नानावर्णे च। तद्वति अद्भुते च त्रि०। लेख्ये तिलके शब्दालङ्कारभेदे च न०। स्वार्थे कन् उत्तार्थे (चिराता) वृक्षभेदे। चित्रइव कायति कै-क व्याघ्रभेदे पु०। [च (घुघु)।

**चित्रकण्ठ** पु० चित्रः कण्ठोऽस्य। पारावते तद्भेदे वनकपोते

**चित्रकम्बल** पु० कर्म्म०। कम्बलभेदे। [चित्रकारोऽप्यत्र।

**चित्रकर** पु० चित्रं करोति कृ-टच्। वर्णसङ्करभेदे। अण्

**चित्रकाय** पु० चित्रः कायो यस्य। (चितावाघ) व्याघ्रभेदे।

**चित्रकूट** पु० चित्रं कूटमस्य। पर्व्वतभेदे।

**चित्रगुप्त** पु० यमभेदे 'चित्रगुप्ताय वै नम' इति तर्पणमन्त्रः।

**चित्रतण्डुला** स्त्री०न० चित्रस्तण्डुलोऽस्याः। विडङ्गे।

**चित्रत्वच्** पु० चित्रा त्वक् यस्य। भूर्जत्वचे।

**चित्रदण्डक** पु०चित्रोदण्डः काण्डो यस्य कप्। (ओल) शूरणे

**चित्रपट** पु० कर्म्म०। (छिट) प्रभृतौ वस्त्रे।

**चित्रपत्रिका** स्त्री० चित्राणि पत्राण्यस्याः संज्ञायां कन् कापि अत इत्त्वम्। द्रोणपुष्प्यां, कपित्थपर्ण्यां च।

**चित्रपत्री** स्त्री० चित्राणि पत्राण्यस्याः ङीप्। जलपिप्पल्याम्

**चित्रपदा** स्त्री० चित्रं पदं स्वाधिष्ठानस्थानं यस्याः। गोधालतायां, अष्टाक्षरपादके छन्दोभेदे च। [पर्ण्याम्

**चित्रपर्णी** स्त्री० चित्राणि पर्णान्यस्याः। (चाकुलिया) पृश्निप-

**चित्रपादा** स्त्री० चित्रौ पादौ यस्याः। सारिकापक्षिणि।

**चित्रपुष्पी** स्त्री० चित्राणि पुष्पाण्यस्याः ङीप्। अम्बष्ठालतायाम्

**चित्रपृष्ठ** पु० चित्रं पृष्ठमस्य। कलविङ्कपक्षिणि।

**चित्रफला** स्त्री० चित्रं फलं यस्याः। कण्टकार्यां वार्त्ताक्याम्

**चित्रभानु** पु० चित्रा भानवो यस्य। अग्नौ, सूर्य्ये, चित्रकवृक्षे, अर्कवृक्षे च। [डुम्बरिकायाम्।

**चित्रभेषजा** स्त्री० चित्रमाश्चर्य्यं भेषजं यस्याः ५ब०। काको-

**चित्ररथ** पु० चित्रो रथोऽस्य। सूर्य्ये, गन्धर्व्वभेदे च।

**चित्रलता** स्त्री० कर्म्म०। मञ्जिष्ठायाम्।

**चित्रलेखा** स्त्री० अप्सरोभेदे कुम्भाण्डसुतायाम् उषासख्यां,

अष्टादशाक्षरपादके छन्दोभेदे च ।
**चित्रवीर्य्य** पु० चित्रमाश्चर्य्यं वीर्य्यमस्य । रक्तैरण्डे ।
**चित्रशिखण्डिज** पु० चित्रशिखण्डिनोऽङ्गिरसो जायते जन-ड । वृहस्पतौ ।
**चित्रशिखण्डिन्** पु० चित्रः शिखण्डः अस्त्यस्य इनि । 'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिन' इत्युक्तेषु सप्तसु मुनिषु
**चित्राङ्ग** पु० चित्रमङ्गमस्य । रक्तचित्रके, सर्पे च । [भेदे च
**चित्राङ्गद** पु० शान्तनुराजसुते विचित्रवीर्य्यभ्रातरि, गन्धर्व्व-
**चित्राङ्गी** स्त्री० चित्रमङ्गमस्याः । मञ्जिष्ठायां कर्णजलौकसि च
**चित्रायस** न० कर्म्म० अच्समा० । तीक्ष्णलौहे (इस्पात) ।
**चिद्रूप** पु० चिदेव रूपमस्य । आत्मनि, स्फूर्त्तिमति च ।
**चिदाकाश** न० चिद् आकाशमिव निर्लेपत्वात् सर्व्वाधारत्वाच्च । शुद्धे ब्रह्मणि ।
**चिदाभास** पु० चित आभासः प्रतिविम्बः । बुद्धावात्मप्रतिविम्बे जीवे बुद्धिवृत्तिचिदाभासाविति वेदान्तः । [इष्टपदार्थस्मरणे
**चिन्ता** स्त्री० चिति-अ । प्रागनुभूतज्ञानजन्ये संस्कारोद्बोधे पूर्व्व-
**चिन्तामणि** पु० चिन्ताविषयस्य (तदुद्भवार्थे) मणिः । चिन्तामात्रेण चिन्तितवस्तुदायके मणौ, स्पर्शमणौ च । 'यथा चिन्तामणिं स्पृष्ट्वा लौहं काञ्चनतां व्रजे'दिति ।
**चिन्न** पु० चित-न इ० तस्य नः । (चिना) शस्यभेदे ।
**चिन्मय** पु० चिदेव चित्+मयट् । चैतन्यरूपात्मके परमेश्वरे 'चिन्मयस्याद्वितीयस्ये'त्यादि । [स्वार्थे कन् । अत्रैवार्थे
**चिपिट** पु० चि-पिटच् किच्च । (चिडा) इति ख्याते पृथुके
**चिर** न० चि-रक् । दीर्घकाले । तद्वर्त्तिनि पदार्थे त्रि० ।
**चिरक्रिय** त्रि० चिरकालेन क्रिया यस्य । दीर्घसूत्रे ।
**चिरजीवक** पु० चिरं जीवति जीव-ण्वुल् । जीवकवृक्षे ।
**चिरजीविन्** पु० चिरं जीवति णिनि । काके, जीवकवृक्षे, शाल्मलिवृक्षे, मार्कण्डेये, 'अश्वत्थामा बलिर्व्यासो हनुमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविन' इत्युक्तेषु सप्तसु च । चिरजीविनि त्रि० ।
**चिरञ्जीविन्** पु० चिरं जीवति जीव-णिन् । चिरजीविपदार्थे
**चिरण्टी** स्त्री० चिरेण अटति पितृगृहात् भर्त्तृगेहम् अट-अच् इ० । यौवनवत्यां पितृगेहस्थायां स्त्रियाम् ।
**चिरतिक्त** पु० चिरस्तिक्तो रसो यत्र । (चिराता) भूनिम्बे ।
**चिरत्न** त्रि० चिरे भवः त्न । चिरन्तने पुरातने ।
**चिरन्तन** त्रि० चिरम्+ट्युल् तुट् च । पुरातने । स्त्रियां ङीप् ।
**चिरपाकिन्** पु० चिरेण पाकोऽस्त्यस्य दुर्ज्जरत्वात् । कपित्थे

**चिरपुष्प** पु० चिराणि पुष्पाण्यस्य । वकुलवृक्षे ।
**चिरम्** अव्य० चि-रमुक् । वहुकालार्थे ।
**चिररात्र** पु० चिरा रात्रिः अच् । वहुकाले ।
**चिररात्राय** अव्य० चिररात्रान् अयते अय-अण् । वहुका
**चिरबिल्व** पु० चिरं बिलति बिल-भेदने व । करञ्जवृक्षे ।
**चिरसूता** स्त्री० चिरं प्रसूता । वहुकालप्रसववत्यां गवादौ । स्वार्थे कन् अत्रार्थे ।
**चिरस्य** अव्य० चिरमस्यति अस-ण्यत् शक० । दीर्घकाले ।
**चिरात्** अव्य० चिरमतति अत-क्विप् । दीर्घकाले, गरुडे पु० ।
**चिराय** अव्य० चिरमयते अण् । चिरकाले दीर्घकाले ।
**चिरायुस्** पु० चिरमायुर्यस्य । देवे । चिरजीविनि त्रि० ।
**चिरि** हिंसे स्वादि० पर० सक० सेट् । चिरिणोति अचिरायीत् ।
**चिरेण** अव्य० चिर+एनप् । दीर्घकालार्थे । [चिर्भिटोऽप्यत्र ।
**चिर्भटी** स्त्री० चिरेण भटति अच् ङीप् इ० । कर्कट्याम् ।
**चिल** वासे तु० पर० अक० सेट् । चिलति अचेलीत् ।
**चिलिचिम** पु० चिल इन् चिलिं वासं चिनोति चि-मक् । (बेलेगुड़गुडिया) मत्स्यभेदे ।
**चिल्ल** शैथिल्ये भावकृतौ च भ्वा० पर० अक० सेट् । चिल्लति अचिल्लीत् । [चिल् । क्लिन्ननेत्रे त्रि० ।
**चिल्ल** पु० चिल्ल-अच् । (चिल) पक्षिभेदे । क्लिन्न+ल क्लिन्नस्य
**चिल्लक** पु० चिल्ल-ण्वुल् । लोध्रे । झिल्लिकायां स्त्री० ।
**चिल्लाभ** पु० चिल्ल इव प्रसह्यहारित्वादाभाति भा-क । ग्रन्थिभेदके चौरे । [वास्तूकशाके च ।
**चिल्ली** स्त्री० चिल्ल-अच् गौरा० ङीष् । झिल्लीकीटे, लोध्रे,
**चिवु(क)** न० चीव-संवरणे उ इ० ह्रस्वः । ओष्ठाधोभागे । स्वार्थे कन्-तत्रैवार्थे । मुचकुन्दवृक्षे पु० ।
**चिह्न** लक्षणे अ० चु० उभ० सक० सेट् । चिह्नयति ते अचिचिह्नत् त । [लक्षणे ।
**चिह्न** न० चिह्न-अच्, चह-न उपधाया इत्त्वम् वा । लाञ्छने
**चीक** मर्षणे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चीकयति ते चीकति अचीचिकत् त अचीकीत् ।
**चीन** पु० चि-नक् इ० दीर्घः । 'मानसेशात् दक्षपूर्व्वे चीनदेशः प्रकीर्त्तित' इत्युक्ते देशे, तद्देशस्थे जने व० व० । तन्त्रोक्ते तद्देशाचारभेदे च । तद्देशोद्भववस्त्रे न० 'चीनचीनस्तनवसनदशान्दोलने'त्युद्भटः । कङ्गुतुल्यव्रीहिभेदे सूत्रे, मृगभेदे च पु० । पताकायां, सीसके च न० । स्वार्थे कन् । कङ्गुधान्यभेदे । [ध्वनिभेदे ।
**चीत्कार** पु० चीदित्यव्यक्तशब्दस्य कारः कृ-घञ् । भयहेतुके

**चीनपिष्ट** न० पिष-क्त पिष्टं चूर्णं ६त० । (चीनेर सिन्दूर) सिन्दूरभेदे । [अचिचीभत् त ।

**चीभ** प्रशंसायां भ्वा०आत्म०सक० सेट् । चीभति अचीभीत् ।

**चीर** न० चि-क्रन् दीर्घश्च । वल्कखण्डे 'चीराणि किंपथि न सन्ती'ति भागवतम् । लेखनभेदे, चूडायां, सीसके दृच-त्वचः खण्डे, वस्त्रभेदे च । [ष्ठत्वम् । चञ्चुशाके

**चीरपत्रिका** स्त्री० चीरमिव पत्रमस्याः स्वार्थे कन् अत

**चीरपर्ण** पु० चीरमिव पर्णमस्य । शालवृक्षे ।

**चीरितच्छद** पु० चीरवदाचरितः छदो दलं यस्य । पालङ्कशाके

**चीर्ण** त्रि० चर नक् ष्ठ० अत ईत्त्वम् । कृते, शीलिते, खण्डिते च

**चीव** ग्रहणे संवृतौ च भ्वा०उभ०सक०सेट् । चीवति ते अचीवीत् अचीविष्ट । अचिचीवत् त ।

**चीव** दीप्तौ चुरा०उभ०सक०सेट् । चीवयति ते अचीचिवत् त ।

**चीवर** न० चि ष्वरच् दीर्घश्च । भिक्षुवस्त्रे, कौपीनादौ ।

**चुक्क** पीडने चु०उभ०सक०सेट् । चुक्कयति ते अचुचुक्कत् त ।

**चुक्र** पु० चक-रक् अत उत्त्वञ्च । अम्लवेतसे (चुकापालङ्ग) शाकभेदे, शुक्रभेदे च । स्वार्थे कन् (आमरुल) शाके, तिन्तिड्याञ्च स्त्री० । [चिञ्चायां, काञ्जिकभेदे च स्त्री० ।

**चुक्राम्ल** पु० चुक्रमिवाम्लम् । वृक्षाम्ले । अम्ललोणायां,

**चुक्रिका** स्त्री० चुक्रैव स्वार्थे कन् । (चुकापालङ्ग) शाकभेदे ।

**चु(चू)चुक** न० चु(चू)चु इत्यव्यक्तं शब्दं कायति यत्र कै-क । कुचाग्रे स्तनवृन्ते । [सेट् । चुच्यति अचुच्यीत् चुक्रः ।

**चुच्य** स्नाने मन्थने पीड़ने सुरादिसन्धाने च भ्वा०पर०सक०

**चुट** अल्पीभावे भ्वा०पर०अक० सेट् । चोटति अचोटीत् ।

**चुट** अल्पीभावे भ्वा०पर०अक०सेट् इदित् । चुण्टति अचुण्टीत्

**चुट** छेदने वा०चु०उभ० पक्षे तुदा०कुटा०पर०सक० सेट् । चोटयति-ते अचूचुटत्-त पक्षे चुटति अचुटीत् चुचोट ।

**चुट** छेदने चुरा० उभ० सक० सेट् इदित् । चुण्टयति-ते अचुचुण्टत् त । [चुट्टत्-त ।

**चुट्ट** अल्पीभावे चुरा० उभ० अक० सेट् । चुट्टयति-ते अचु-

**चुड** छेदने चुरा० उभ० सक० सेट् इदित् । चुण्डयति-ते अचुचुण्डत्-त । [अचुण्डीत् ।

**चुड** अल्पीभावे भ्वा० पर० अक० सेट् इदित् । चुण्डति

**चुड्ड(ड्ड)** कृतौ हावे च भ्वा०पर०सक०सेट् । चुड्डति अचुड्डीत्

**चुण** छेदने तु०कु०पर०सक०सेट् । चुणति अचुणीत् चुचोण ।

**चुत** क्षरणे भ्वा० प०अक० सेट् । चोतति अचुतत्-अचोतीत्

**चुद** नोदने चु० उ०सक० सेट् । चोदयति-ते अचूचुदत्-त । चोदना चूडा ।

**चुप** मन्दगतौ भ्वा० पर० अक० सेट् । चोपति अचोपीत् ।

**चुम्ब** चुम्बने वा०चु०उभ० पक्षे भ्वा०पर० सक० सेट् इदित् । चुम्बयति-ते चुम्बति अचुचुम्बत्-त अचुम्बीत् ।

**चुम्बक** पु० चुबि-ण्वुल् । स्वनामख्याते अयस्कान्ते मणौ । धूर्त्ते, चुम्बनकर्त्तरि, ग्रन्थैकदेशाभिज्ञे च त्रि० ।

**चुर** स्तेये (परद्रव्यापहरणे) वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट् । चोरयति-ते चोरति अचूचुरत्-त अचोरीत्

**चुरा** स्त्री० चुर-क टाप् । चौर्य्ये ।

**चुल** समुच्चये चुरा० उभ०सक०सेट् । चोलयति-ते अचूचुलत् त

**चुलुक** पु० चुल-उकक् । प्रसृतौ निविडपङ्के, भाण्डभेदे च । नापमात्रमज्जनयोग्ये जले न० ।

**चुलुकिन्** पु० चुलुक+अस्त्यर्थे इनि । शिशुमाराकारे मत्स्यभेदे

**चुलुम्प** लौल्ये भ्वा० पर० अक० सेट् । चुलुम्पति अचुलुम्पीत्

**चुल्ल** भावकृतौ भ्वा०पर०अक० सेट् । चुल्लति अचुल्लीत् । [त्रि०

**चुल्ल** पु० क्लिन्नस्य चुलादेशः लच्प्रत्ययः क्लिन्ने नेत्रे तद्युक्ते जने

**चुल्लि(ल्ली)** स्त्री० चुल्ल-इन् वा ङीप् चुद-लिक् वा । पाकार्थमग्निस्थापनस्थाने (चुला) चुल्ली चिरं रोदितोलूखलैः । अच् । चुल्लाप्यत्र ।

**चूडा** स्त्री० चुद-अङ् नि०, चुल-समुच्चये दीर्घः अङ् डस्य लः वा । मयूरशिखायां मस्तकमध्यस्थशिखामात्रे, कुटिकायां, बाहुभूषणे, शिखायाम्, (अग्रे), भूषणमात्रे, कूपे, दशविधसंस्कारान्तर्गते संस्कारभेदे च । 'प्रथमेऽब्दे तृतीये वा चूडा कार्य्येति मनुः ।

**चूडामणि** पु० ६त० । शिरोरत्ने 'चूड़ामणीकृतविधुरि'ति ।

**चूडाम्ल** न० चूड़ायामग्रेऽम्लम् । वृक्षाम्ले ।

**चूडाल** न० चूडा शिखास्त्यस्य ल । मस्तके । शिखायुक्तजने त्रि० श्वेतगुञ्जयां, नागरमुस्तायाम्, उच्चटाख्ये च स्त्री०टाप् ।

**चूण** सङ्कोचे चुरा० उभ० सक० सेट् । चूणति अचूणीत् ।

**चूत** पु० चुष-क्त ष्ठ० । आम्रे, 'नवचूतप्रसवोगमिष्यतीति कुमारः च्यु-क्त ष्ठ० । गुह्यद्वारे न० । स्वार्थे कन् आम्रे, कूपके च ।

**चूर** दाहे दिवा० आत्म० सक०सेट् । चूर्य्यते अचूरिष्ट । चूर्णः

**चूर्ण** पेषणे चु० उभ०सक० सेट् । चूर्णयति-ते अचुचूर्णत्-त ।

**चूर्ण** पु० चूर्ण-घञ् । पेषणजाते रजसि धूलौ (आवीर) ख्याते द्रव्ये, ताम्बूलचर्वणोपयोगिद्रव्ये च चूर्णमानीयतां तूर्णमिति

**चूर्णक** पु० चूर्ण-ण्वुल् । सक्तुषु । स्वार्थे कन् चूर्णार्थे च । 'अकठोराक्षरं स्वल्पसमासं चूर्णकं विदु'रित्युक्ते गद्यभेदे न० ।

**चूर्णकार** पु० चूर्णं करोति कृ-अण् । चुनारी) जातिभेदे ।

**चूर्णकुन्तल** द० चूर्ण्यते इति चूर्णः कर्म० । शिरःस्थे क्षुद्रकेश

(अलके) । [महाभाष्ये, कपर्दके च ।

**चूर्णि(र्णी)** पु० चुर-चर-वा क्तिच् नि० । पतञ्जलिकृते

**चूला** स्त्री० चुल-अ दीर्घः । प्रासादोपरिस्थे गृहे (चिलाघर)
चूडायाञ्च । [मूले, नाटकाङ्गभेदे च ।

**चूलिका** स्त्री० चुल-समुच्छ्राये ण्वुल् पृ० दीर्घः । हस्तिकर्ण-

**चूष** पाने भ्वा० पर० सक० सेट् । चूषति । अचूषीत् ।

**चृत** हिंसे ग्रन्थने च तुदा० सक० सेट् । चृतति अचर्तीत्

**चृत(प)** संदीपने वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् ।
चर्त्त(र्प)यति-ते । अचीचृत(प)त्-त अचचर्त्त(र्प)त् त । पक्षे
चर्त्त(र्प)ति अचर्त्ती(र्पी)त् ।

**चेट(ड)** पु० चिट-परप्रैष्ये अच् वा टस्य डः । दासे उभयत्र
ङीप् । दास्याम् । ण्वुल् । दासे, उपनायके च स्त्रियां
चेटि(डि)का । [ख्यतया कथने च ।

**चेत्** अव्य० चित-विच् । यद्यर्थे पक्षान्तरे, असन्देहेऽपि सन्दि

**चेतकी** स्त्री० चित-वुन् । हरितक्याम्. तत्फलेऽपि स्त्री० ।

**चेतन** पु० चित-युच् । आत्मनि, जीवे परमेश्वरे प्राणिनि
च । चैतन्ययुक्ते त्रि० ।

**चेतनकी** पु० चेतनं करोति कृ-ड गौ० ङीष् । हरितक्याम् ।

**चेतना** स्त्री० चु० चित-युच् । बुद्धौ ज्ञाने ।

**चेतनीया** स्त्री० चेतनाय हिता छ । ऋद्धिनामौषधे ।

**चेतस्** न० चित-असुन् । चित्ते । आत्मनि पु० 'साक्षी चेताः
केवलो निर्गुणश्चे'ति श्रुतिः । [जीवे ।

**चेतोसुख** पु० चेतो सुखं द्वारमस्य । वेदान्तोक्ते सुषुप्त्यभिमानिनि

**चेदि** पु० देशभेदे । तद्देशस्थे जने ब०व० ।

**चेदिपति** पु० चेदीनां पतिः । शिशुपाले उपरिचरवसुनामके
न्यपे च । चेदिराजादयोऽप्यत्र । [अचिचेलत् त ।

**चेल** लौल्ये गतौ च भ्वा० पर०सक० सेट् । चेलति अचेलीत्

**चेल** न० चिल-आच्छादने कर्म्मणि घञ् । वस्त्रे । चेल-लौल्ये
अच् । अधमे त्रि० ।

**चेल्ल** चालने गतौ च भ्वा० पर० सक० सेट् । चेल्लति अचेल्लीत्

**चेष्ट** ईहायां भ्वा० आ० अक० सेट् । चेष्टते अचेष्टिष्ट । अच-
चेष्टत्-अचिचेष्टत् ।

**चेष्टा** स्त्री० चेष्ट-अङ् । 'आत्मजन्या भवेदिच्छा इच्छाजन्या
भवेत् कृतिः । कृतिजन्या भवेच्चेष्टे'त्युक्ते कायिके व्यापारे ।

**चैतन्य** न० चेतन+भावे स्वार्थे वा ष्यञ् । चेतनायां, ब्रह्मणि,
प्रकृतौ च । [स्कन्धमात्रे ।

**चैत्त** न० चित्तस्येदम् अण् । बौद्धमते विज्ञानातिरिक्ते

**चैत्य** न० चित्याया इदमण् । ग्रामादिप्रसिद्धे महावृक्षे, देवा-
वासे वृक्षे, जनानां सभास्थतरौ, बुद्धभेदे, आयतने,
चिताचिह्ने, जनसभायां, यज्ञस्थाने, जनानां विश्राम-
स्थाने, देवस्थाने च । [हिते गृहे ।

**चैत्यगृह** न० चैत्यस्य समीपे गृहम् । चतुष्पथस्थे चैत्यसन्नि-

**चैत्यवृक्ष** पु० कर्म्म० । अश्वत्थादिप्रसिद्धे वृक्षे ।

**चैत्र** पु० चित्रानक्षत्रेण युक्ता पौर्णमासी चैत्री सास्मिन् मासे
ऽण् । स्वनामख्याते शुक्लप्रतिपदादिदर्शान्तरूपे मासे ।
ठक् । चैत्रिकः । कन् । चैत्रकोऽप्यत्र पर्व्वतभेदे च ।

**चैत्ररथ** पु० चित्ररथेन गन्धर्व्वेण निर्वृत्तम् अण् । कुवेरोद्याने

**चैत्रावली** स्त्री० चैत्रे सम्यक् वलिरस्याम् । चैत्रपौर्णमास्याम्

**चैत्री** स्त्री० चित्रानक्षत्रेण युक्ता पौर्णमासी अण् । चैत्र-
मासपौर्णमास्याम् तत्रैव तद्योगसम्भवात् ।

**चैद्य** पु० चेदीनां जनपद नामयम् ष्यञ् । शिशुपाले ।

**चोदना** स्त्री० चु० चुद-युच् । 'चोदना चोपदेशश्च विधिश्चै-
कार्थवाचिनः' इति भट्टोक्ते प्रवर्त्तनावाक्ये 'चोदनालक्षणा-
र्थो धर्म्म' इति मीमांसासूत्रम् । प्रेरणायां, तर्ज्जनायां,
प्रवर्त्तनायाञ्च । [त्रि० ।

**चोद्य** न० चुद-ण्यत् । प्रश्ने, पूर्व्वपक्षे, अद्भुते च । प्रेरणार्हे

**चोपन** न० चुप-ल्युट् । मन्दगमने, तूष्णीम्भवने मौने च ।

**चोर** पु० चुर-अच् । स्तेयकर्त्तरि परद्रव्यापहारके गन्धद्रव्य-
भेदे, कृष्णशट्याञ्च । [ग्रन्थिपर्णवृक्षे ।

**चोरक** पु० चोरः स्वनामख्यातवृक्षइव कायति कै-क ।

**चोरपुष्पी** स्त्री० चोर इव पुष्पमस्याः रात्रिविकाशित्वात् ।
शङ्खिन्याम् । स्वार्थे कन् अत इत्त्वम् । चोरपुष्पिकाप्यत्र ।

**चोरा** स्त्री० चोरतुल्यं रात्रिविकाशित्वेन पुष्पमस्त्यस्याः अर्श
अद्याच् । शङ्खपुष्पिकायाम् ।

**चो(चौ)रिका** स्त्री० चोर+कर्मणि ठन् ठक् वा । चौर्य्ये ।

**चोल** न० चुल-घञ् । स्त्रीणां कञ्चुकाख्ये आप्रपदीने वस्त्रे ।
(चोला) इति ख्याते पुंसां वस्त्रभेदे च द्राविडकलिङ्गयोर्मध्ये,
देशभेदे पु० । [किम्पुपर्व्वणि च ।

**चोलकी** पु० चुल-ण्वुल् गौरा० ङीष् । करीरे, नागरङ्गे,

**चोली** स्त्री० अल्पचोलः ङीप् । कूर्पासके वस्त्रभेदे ।

**चोष्य** त्रि० चूष-ण्यत् पृ० । इक्षुदण्डादौ भक्ष्यभेदे ।

**चौड(ल)** न० चूडा प्रयोजनमस्य अण् । चूडाकर्म्मणि संस्कार-
भेदे । वा डस्य लः । [प्रहारके । चोरनामगन्धद्रव्ये पु० ।

**चौर** त्रि० चुरा शीलमस्य चोरएव वा अण् । प्रच्छन्नपरद्रव्या-

**चौर्य्य** न० चोरस्य भावः कर्म्म वा ष्यञ् । परद्रव्यापहरणे ।

**च्यवन** पु० च्यु-युच् । मुनिभेदे ।

च्यु गतौ भ्वा०आत्म०सक०अनिट्। च्यवते अच्योष्ट।
च्यु हासे सहने च चुरा० उभ० सक० अनिट्। च्यावयति ते अचुच्यवत् त।
च्युत क्षरणे भ्वा०पर०अक०सेट्। च्योतति अच्युतत्-अच्योतीत्
च्युति स्त्री० च्यु-क्तिन्। क्षरणे नाशे च अपादाने क्तिच्। भगे

## छ

छ त्रि० छो-क। छेदनकर्त्तरि, निर्म्मले, तरले च। छदे न०
छगल पु० छो-कलच् गुट् च। पशुभेदे छागे। जातौ ङीप्।
नीलवस्त्रे न०। वृद्धदारकवृक्षे स्त्री० टाप्। स्वार्थे कन्।
पशुभेदे छागे।
छगलान्त्री(न्घ्री) स्त्री० छगलस्येवान्त्रम् अङ्घ्रिर्वा अस्याः
गौरा०ङीष्। वृद्धदारकौषधे,वृके च। स्वार्थे कन्। अल्पार्थे
छटा स्त्री० छो-अटन्। दीप्तौ, परम्परायाञ्च।
छटाफल पु० छटेव परम्पराम्वितं फलं यस्य। गुवाके।
छत्र पु० छद-णिच्-ष्ट्रन् ह्रस्वः। छत्राकारमूलपत्रे (छातारिया)
क्षुपभेदे। आतपत्रे न०। अतिछत्रायां (सुल्फा) वृक्षे स्त्री०।
छत्रक पु० छत्रमिव कायति कै-क। (राङ्गाकुलेखाडा) वृक्षे,
मत्स्यरङ्गे पक्षिणि च। स्वार्थे कन् छत्रे न०।
छत्रपत्र न० छत्रमिव पत्रमस्य। स्थलपद्मे, भूर्जपत्रवृक्षे पु०
छत्रपुष्प पु० छत्रमिव पुष्पमस्य। तिलकवृक्षे।
छत्रभङ्ग पु०छत्रस्य भङ्गो यत्र। नृपनाशे,वैधव्ये अस्वातन्त्र्ये च
छत्राक न० छत्रा अतिच्छत्रेव कायति कै-क। शिलीन्ध्रे
'छत्राकं विड्वराहञ्चे'ति मनुः।
छत्राकी स्त्री० छत्रमकति अक-कुटिलगतौ अण्। रास्नायाम्
छद संवृतौ अद०चु०उभ०सक०सेट्। छदयति ते अचिच्छदत् त
छद बलाधाने जीवने च भ्वा० पर० अक० सेट्। छदति-
अच्छदत्-अच्छदीत्-अच्छादीत्।
छद संवरणे वा० चुरा० पक्षे भ्वा०उभ० सकर्म० सेट् इदित्।
छन्दयति-ते अचच्छन्दत्-त। छन्दति-ते अच्छन्दीत्
अच्छन्दिष्ट। [अच्छादीत् अच्छदिष्ट।
छद अपवरणे भ्वा०उभ०सक०सेट्। छदति छदते। अच्छदीत्-
छद पु० छद-क। पत्रे, पक्षिणां पक्षे, ग्रन्थिपर्णवृक्षे, तमाल-
वृक्षे च। [ल्युट्। पिधाने।
छदन न० छद-ल्युट्। पत्रे, पक्षे,(तेजपात) त्वचे च। भावे
छदपत्र पु० छदार्थं पत्रमस्य। भूर्ज्जपत्रे। [दलपुञ्ज।
छदि पु० छद-इन्। पटले (चाल) इति ख्याते स्त्रहाच्छादके
छदिस् स्त्री० छद-इसि। पटले (चाल)

छद्मतापस पु० छद्मना छलेन तापसः। लोकप्रतारणार्थं
तापसताख्यापनाय तापसलिङ्गधारिणि तत्कर्म्मानुष्ठा-
यिनि वैडालव्रतिके।
छद्मन् न० छाद्यते स्वरूपमनेन छद-मनि। कपटे छले।
छन्द पु० छदि संवरणे धातोरनेकार्थत्वात् इच्छायाम् घञ्।
अभिलाषे, वशतायाम्, विषभेदे च।
छन्दस् न० छदि-असि। वेदे, स्वैराचारे अभिलाषे, निय-
ताक्षरवर्णमालादिसंनिवेशवशात् चतुष्पदादौ उक्थादि-
भेदे गायत्र्यादौ छन्दसि, पद्ये च।
छन्दोग पु०छन्दः सामवेदं गायति गै-क। सामवेदगे विप्रादौ
छन्न त्रि० छद-णिच् क्त नि०। आच्छादिते। निर्ज्जने
रहसि न०।
छप गतौ वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्।
छम्पयति ते छम्पति अचच्छम्पत् त अच्छम्पीत्। [छमित्वा
छम भक्षणे भ्वा०पर०सक०सेट्। छमति अच्छमीत्। छमित्वा-
छर्द वमने चुरा०उभ०सक०सेट्। छर्दयति ते अचच्छर्दत् त।
छर्दन पु० छर्द-णिच्-ल्यु। निम्बवृक्षे मदनवृक्षे च। भावे
ल्युट्। वमने न०। [अलंबुषे
छर्द्दि र्द्दी) स्त्री० छर्द-णिच्-इन्। वमनरोगे वा ङीप्।
छर्द्दिका स्त्री० छर्द-णिच्-ण्वुल्। उत्कासिकायां, विष्णुक्रा-
न्तायाञ्च। धात्वर्थे ण्वुल्। वमने।
छर्द्दिकारिपु पु० ६त०। क्षुद्रैलायाम्। छर्दिनाशके त्रि०।
छर्द्दिघ्न पु०छर्दिं हन्ति-हन्-टक्। निम्बभेदे। छर्दिनाशके त्रि०
छर्द्दिस् स्त्री० छर्द-इसि। वमने।
छल न० छो कलच्। शाठ्ये, स्वरूपाच्छादने छद्मनि, न्यायोक्ते
तात्पर्य्यान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरकल्पनेन वादयुक्तौ
प्रतिवादिना दत्तदूषणे च। यथा नेपालादागतोऽयं नवक-
म्बलवत्त्वादिति वादिना उक्तौ नवशब्दस्य नूतनत्वार्थपरत्वे
स्थिते प्रतिवादिना तस्य नवसंख्यायुक्तार्थत्वकल्पनेन नास्य
नवसंख्यककम्बलवत्त्वमिति यद्दूषणं दीयते।
छलना स्त्री० छल+तत्करोति णिच्-भावे-युच्। प्रतारणायाम्। [(छाल) त्वचायाम्, सन्ततौ च।
छल्ली स्त्री० छद-क्विप् तां लाति ला-क गौ० ङीष्। वल्कले
छवि स्त्री० छ्यति अन्धकारं छिनत्ति छो वा वि०। शोभायां
कान्तौ च। [अच्छविष्ट।
छष वधे भ्वा०उभ०सक० सेट्। छषति ते अच्छाषीत् अच्छषीत्
छाग पु० छो-गन्। छागके। जातौ स्त्रियां ङीप्। पुरोडाशे च।
इदमर्थे अण्। छाग्यादुग्धे छागमांसे च न०।

**छागल** पु० छगलएव प्रज्ञाद्यण्। स्वनामख्याते पशौ, छगलस्यापत्यम् अण्। ऋषिभेदे।

**छागवाहन** पु० छागो वाहनमस्य। अग्नौ।

**छात** त्रि० छो-कर्मणि कर्त्तरि वा क्त। छिन्ने, दुर्बले च। छाततराम्बुच्छटेति काव्य० प्र० १उ०।

**छात्र** पु० गुरोर्दोषावरणं छत्त्रं तच्छीलमस्य ण। शिष्ये,'वरटाः कपिलाः पीताः प्रायोहिमवतो वने। कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृत'मित्युक्ते मधुभेदे न०।

**छादन** पु० छद-णिच्-ल्यु। नीलाम्लानवृक्षे। भावे ल्युट्। छादने। करणे ल्युट। पत्ने न०।

**छान्दस** पु० छन्दोवेदमधीतेऽण्। वेदाध्ययनकर्त्तरि।

**छान्दोग्य** न० छन्दोग+आम्नायाद्यर्थे ञ्य। सामगानां धर्मे आम्नाये, (मन्त्रब्राह्मणात्मके शास्त्रे) समूहे च।

**छाया** स्त्री० छो-य। आतपाभावे, कान्तौ,प्रतिविम्बे,पालने, उत्कोचे पङ्क्तौ, संज्ञाप्रतिरूपायां सूर्यभार्यायाम्, उनविंशाक्षरपादके छन्दोभेदे च।

**छायातनय** पु० ६त०। शनैश्वरे 'छायासुतादयोऽप्यत्र।

**छायापुरुष** पु० छायया पुरुष इव। आकाशे दृष्टव्ये निजच्छायातुल्ये छायात्मके पुरुषे।

**छायावृक्ष** पु० छायाप्रधानो वृक्षः शाक०। वटादौ वृक्षे।

**छिक्कनी** स्त्री० छिक् इत्यव्यक्तं नासिकाशब्दं कनति शब्दायते अच् गौरा० ङीष्। (नाक्छिक्नी) वृक्षभेदे।

**छिक्का** स्त्री० छिक् इत्यव्यक्तं शब्दं करोति क्र ड। क्षुते।

**छित्वर** त्रि०छिद-ष्वरप् पृ० तुक्च। वैरिणि, धूर्त्ते, छेदके च। स्त्रियां ङीष्। छेदने न०। [अच्छिदत् अच्छित्त,छिदा।

**छिद्** द्वैधीकरणे रुधा०उ०सक०अनिट्। छिनत्ति छिन्ते अच्छैत्सीत्-

**छिदिर** पु० छिद-किरच्। कुठारे पावके,रज्जुभेदे, करवाले च

**छिदुर** त्रि० छिद-कुरच्। वैरिणि, धूर्त्ते, छेदके, छेदनद्रव्ये च

**छिद्र** भेदने अद० चुरा० उभ० सक० सेट्। छिद्रयति ते अचिच्छिद्रत् त। [ज्योतिषोक्ते लग्नतोऽष्टमस्थाने च।

**छिद्र** न० छिद-रक् छिद्र-अच् वा। दूषणे, गर्त्ते, अवकाशे

**छिद्रान्तर** पु० छिद्रमन्तर्मध्यं यस्य। नले।

**छिद्रित** त्रि० छिद्र-क्त। विद्धे कृतच्छिद्रे।

**छिन्नपत्री** स्त्री०छिन्नं पत्नं यस्याः। अम्बष्ठायाम्।(आकनादी)

**छिन्नमस्ता** स्त्री० छिन्नं मस्तं यस्याः। महाविद्यायां विद्याभेदे

**छिन्नरुह** पु० छिन्नोऽपि रोहते रुह-क। तिलवृक्षे। गुडूच्यां, गन्नक्यां, केतक्याञ्च स्त्री०।

**छिन्नोद्भवा** स्त्री० छिन्नाप्युद्भवति उद्+भू-अच्। गुडूच्याम्।

**छुछुन्दरी** स्त्री० छुछु इत्यव्यक्तं द्यति अच् पृ०। (छुछु) जन्तुभेदे गन्धमूषिके।

**छुट** छेदने वा चुरा० उभ० पक्षे तु० कुटा० पर०सक० सेट्। छोटयति ते छुटति। अचुच्छुटत् त अच्छुटीत्।

**छुड** छेदने तु०कु०पर०सक० सेट्। छुडति अच्छुडीत् चुच्छोड

**छुप** स्पर्शे तु०पर०सक०अनिट्। छुपति अच्छौप्सीत्।

**छुप** पु० छुप-क। क्षुपे, स्पर्शे, चपले, युद्धे च।

**छुर** छेदे भ्वा०पर०सक०सेट्। छोरति अच्छोरीत्।

**छुर** लेपने तु०कु० पर०सक०सेट्। छुरति अच्छुरीत्।

**छुरिका** स्त्री० छुर-कुन्। अस्त्रभेदे (छुरि)। छुर-क गौ० ङीष्। छुरीत्यप्यत्र।

**छृद** सन्दीपने वा चु०उ०पक्षे भ्वा०पर०सक०सेट्। छर्दयति ते छर्दति। अचच्छर्दत्-अचिच्छृदत् त अच्छर्दीत्।

**छृद** देवने दीप्तौ च अक० वमने सक० रुधा० उभ० सेट्। छृणत्ति छृन्ते अच्छृदत्-अच्छर्दीत्।

**छृप** याचने द्विक० शब्दे अक० वा चुरा०उभ० पक्षे भ्वा०पर० सेट्। छर्पयति ते छर्पति। अचिच्छृपत् त-अचच्छर्पत् त। अच्छर्पीत्। [नागरे च त्रि०।

**छेक** पु० छो-ईकन्। गृहासक्ते पक्षिणि, मृगे च। विदग्धे,

**छेकानुप्रास** पु० छेकस्य विदग्धस्य प्रियोऽनुप्रासः शाक०। अनुप्रासभेदे शब्दालङ्कारे। [ङ्कारभेदे।

**छेकोक्ति** स्त्री०छेकायाः विदग्धाया उक्तिः। वक्रोक्तिरूपेऽल-

**छेद** छेदने अद०चु०उभ०सक०सेट्। छेदयति ते अचिच्छेदत् त

**छेद** पु० छिद-घञ्। छेदने छेदके, भाजके च 'छेदं गुणं गुणं छेदमिति लीलावती। कर्म्मणि घञ्। खण्डे, 'वलाहकच्छेदविभक्तरागा'मिति कुमारः।

**छेदिक** पु० छेदं नित्यं अर्हति ठक्। वेतसे।

**छो** छेदने दि०पर०सक० अनिट्। छ्यति अच्छात् अच्छासीत्।

**छोटिका** स्त्री० चु० छुट-ण्वुल्। तर्जन्यङ्गुष्ठजनिते शब्दे।

**छ्यु** गतौ भ्वा०आत्म०सक०अनिट्। छ्यवते अच्छ्योष्ट।

## ज

**ज** पु० जि-जन-वा ड। शिवे, विष्णौ, जनके, वेगे, मुक्तौ विषे, छन्दोग्रन्थोक्ते गुरुमध्यगे वर्णत्रये च।

**जक्ष** भक्षणे सक० हासे अक० अदा० जक्षा० पर० सेट्। जक्षिति अजक्षीत्।

**जगच्चक्षुः** पु० जगतां चक्षुरिव सर्व्वपदार्थदर्शकत्वात्। सूर्ये

**जगत्** पु० गम-क्विप् नि०। वायौ। जङ्गमे त्रि०। विश्वे लोके न०।

**जगत्प्राण** पु० जगतां प्राणो जीवनहेतुत्वात्। वायौ।

**जगत्साक्षिन्** पु० जगतां साक्षीव सर्व्वस्य साक्षाद्दर्शनात्। सूर्य्ये

**जगती** स्त्री० गम-क्विप् नि०। पृथिव्यां, भुवने, जने, जम्बु चेत्रे, वास्तुभेदे, द्वादशाक्षरपादके छन्दोभेदे च।

**जगदाधार** पु० ६त०। वायौ, जगतामाश्रये च 'कालो हि जगदाधार' इति स्मृतिः। [द्धात्री'मिति स्मृतिः

**जगद्धात्री** स्त्री० धा-तृच् ६त०। दुर्गाभेदे। 'उद्धृद्धाच जग-

**जगद्योनि** पु० जगतां योनिरुत्पत्तिः यस्मात्। शिवे, विष्णौ, हिरण्यगर्भे, कुमारे च। ६त० पृथिव्याम्। [भैरवभेदे च।

**जगन्नाथ** पु० ६त०। विष्णौ, तदीयक्षेत्रभेदे, विमलापीठस्थे

**जगल** पु० गल-अदने यङ् अच् नि०। मद्यकल्के (मदेर गोडा) मदनवृक्षे, पिष्टमद्ये धूर्त्ते च।

**जग्ध** त्रि० अद-क्त। भुक्ते।

**जग्धि** स्त्री० अद-क्तिन्। भोजने, सहभोजने च।

**जघन** न० वक्रं हन्ति हन-यङ् अच् पृ०। स्त्रीणां श्रोणिपुरो भागे, श्रोणौ च। 'पीनस्तनजघनाया' इत्युद्भटः।

**जघनेफला** स्त्री० जघने इव मध्यभागे फलमस्याः अलुक्स०। काकोडुम्बरिकायाम्।

**जघन्य** त्रि० हन-यङ् अच् पृ०, जघनमिव इवार्थे यत् वा। अधमे, चरमे, गर्हिते च। शूद्रे पु०। जघनमनुशीलितं यस्य। पुंसां लिङ्गे।

**जघन्यज** पु० जघन्ये चरमे जायते जन-ड। शूद्रे, कनिष्ठे त्रि०

**जङ्गम** त्रि० गम-यङ्-अच्। गतिशक्तियुते।

**जङ्गल** न० गल-यङ्-अच् पृ०। वने, रहसि च। मांसे पु०

**जङ्घा** स्त्री० जंघन्यते कुटिलं गच्छति गत्यर्थकस्य हन्तेः कौटिल्ये यङ्-अ पृ०। गुल्फजान्वोरन्तराले अवयवे।

**जङ्घाकरिक** त्रि० कृ-अप् करः विक्षेपः ६त० ततः अस्त्यर्थे ठन्। जङ्घाच लनेनाजीववति धावके (धाउड़े)

**जङ्घाल** त्रि० जङ्घा वेगवती अस्त्यस्य लच्। धावके जङ्घाजीविनि। 'हरिणैणकुरङ्गर्श्यपृषतन्यङ्कुशम्बराः। राजीवश्च तथा मुण्डी जङ्घालाः परिकीर्त्तिता' इत्युक्तेषु मृगेषु पु०।

**जङ्घिल** त्रि० अतिशयवेगवती जङ्घास्त्यस्य इलच्। वेगवज्जङ्घाविशिष्टे धावके।

**जज** युद्धे भ्वा० पर० अक० सेट्। जजति अजाजीत्-अजजीत्

**जञ्ज** योधने भ्वा० पर० सक० सेट् इदित्। जञ्जति अजञ्जीत्

**जट** संहतौ भ्वा० पर० अक० सेट्। जटति अजाटीत् अजटीत्।

**जटा** स्त्री० जट-अच्। अन्योन्यसंलग्ने केशे, व्रतिनां शिखायाम्, संह्वादेः सटायाम्, वृक्षादेर्मूले, (जड़) जटामांस्यां, वेदस्य पाठभेदे, रुद्रजटायाम् लतायाम् शतावर्य्याञ्च।

**जटाजूट** पु० ६त०। जटानां जूटे (वन्धे) समूहे च 'जटाजूटसमायुक्ता'मिति दुर्गाध्यानम्। [गन्धद्रव्यभेदे।

**जटामांसी** पु० जटां मन्यते मन-स दीर्घश्च। स्वनामख्याते

**जटायु(स्)** पु० जटां याति या-कु, जट-संहतौ अच् जटं संहतमायुरस्य वा। स्वनामख्याते खगभेदे, गुग्गुलौ च।

**जटाल** पु० जटास्त्यस्य लच्। गुग्गुलौ, वटे, कर्पूरे, मुष्कके च। जटायुक्ते त्रि०। जटामांस्यां स्त्री०।

**जटावल्ली** स्त्री० जटेव वल्ली। रुद्रजटायाम्। [वा ङीप्।

**जटि(टी)** पु० जट-इन्। वटवृक्षे, समूहे च। जटामांस्यां स्त्री०

**जटिन्** पु० जटा अस्त्यस्य इनि। प्लक्षे (पाकुड़) अश्वत्थतुल्यपत्रयुक्ते वृक्षभेदे। जटावति त्रि०।

**जटिल** पु० जटा अस्त्यर्थे इलच्। सिंहे, ब्रह्मचारिभेदे च जटायुक्ते त्रि०। जटामांस्यां, पिप्पल्यां, वचायां, दमनवृक्षे च स्त्री०। [भेदे पिप्लौ (जड़ुल)।

**जटु(डु)ल** पु० जट-उलच् पृ० टस्य ड वा। देहस्थे कृष्णचिह्न

**जठर** पु० जायते जन्तुर्गर्भो वास्मिन् जन-अर ठान्तादेशः। कुक्षौ। वृद्धे, कठिने च त्रि०।

**जड** त्रि० जलति घनीभवति जल-अच् डस्य लः। इष्टानिष्टानभिज्ञे, हिमार्त्ते, मूके, बुद्धिहीने, अप्रकाशे, वेदग्रहणासमर्थे मूर्खे च। जले, सीसके च न०। जडयति तत् करोति णिच्-अच्। शूकशिम्ब्यां भूम्यामलक्याञ्च स्त्री० टाप्

**जतु** न० जन-उ तोन्तादेशः। अलक्ते, लाक्षायाञ्च।

**जतुका** स्त्री० जतु+इवार्थे कन्। (चामचिका) पक्षिभेदे गन्धद्रव्यभेदे, जन्यां, पर्पट्यां, तिर्य्यक्फलायां, निशान्धायाञ्च।

**जतुकारी** स्त्री० जतु करोति कृ-अण् ङीप्। जतुकालतायाम्

**जतुरसः** पु० ६त०। अलक्तके।

**जत्रु** न० जन-रु तान्तादेशः। स्कन्धकक्षयोः सन्धौ, कण्ठस्याधोभागस्थितयोरस्थ्नोश्च।

**जन** जनने जुहो० पर० अक० सेट् घटा०। जजन्ति। अजनत्-अजनीत् अजानीत्। जनयति जनितः। [यति जातः

**जन** जनने दि० आ० अक० सेट् घटा०। जायते अजनिष्ट। जन-

**जन** पु० जन-अच्। लोके, पामरलोके, महोलोकादूर्द्ध्वलोके च

**जनक** पु० पु० जन-णिच्-ण्वुल्। पितरि, मिथिलाधिपे राजभेदे च। कारणे त्रि०। [रामपत्न्याम्

**जनकसुता** स्त्री० जनकस्य सुततया ख्याता। सीतादेव्यां

**जनता** स्त्री० जनानां समूहः तल्। जनसमूहे।

**जननि(नी)** स्त्री० जन-अनि वा ङीप्। मातरि, जनिनाम-

गन्धद्रव्ये, दयायां, कटुकायां, मञ्जिष्ठायाम्, अलक्तके, जटामांस्याञ्च ।

**जनपद** पु० जनाः पद्यन्ते गच्छन्ति यत्र पद-घ । देशे ।

**जनमेजय** पु० जन+एज-णिच्-खश् मुम् च् । परीक्षिद्राजपुत्रे, नृपभेदे । पु० । जन्मेजयोऽप्यत्र ।

**जनयितृ** पु० जन-णिच्-तृच् । पितरि । मातरि स्त्री० ङीप्

**जनलोक** पु० महोलोकोपरि भुवनभेदे ।

**जनवल्लभ** पु०६त० । श्वेतरोहितवृक्षे । जनप्रिये त्रि० ।

**जनश्रुति** स्त्री० जनेषु श्रुतिरेव न दृष्टिर्यस्याः । सत्यमिथ्यासाधारणलोकप्रसिद्धौ किम्वदन्त्याम् ।

**जनस्थान** न० दण्डकारण्यस्य समीपे स्थानभेदे, जनाधारस्थाने च । जनस्थाने भ्रान्तमित्युद्भटः ।

**जनान्तिक** न०६त० । जनसमीपे,अप्रकाशे, त्रिपताककरेणान्यानपवार्य्यान्तिके जनान् । अन्योन्यामन्त्रणं यत् स्यात् जनानां तज्जनान्तिकमित्युक्ते नाटकेऽभिनयकर्त्तोरन्योन्यसम्भाषणे च ।

**जनार्द्दन** पु० जनैरर्द्यते याच्यते स्वाभिष्टमसौ अर्द्द-याचने कर्म्मणि ल्युट्, जनं जननमर्द्दयति वा अर्द्द-हिंसायां ल्यु वा । विष्णौ ।

**जनाश्रय** पु० जनानां लोकानामाश्रयः । मण्डपे ।

**जनि(नी)** स्त्री० जन-भावे इन् वा ङीप् । उत्पत्तौ अभूतप्रादुर्भावे, जायते गर्भोऽस्याम्, नार्य्याम् । मातरि, स्नुषायां, जायायाञ्च । जायते आरोग्यमनया । ओषधिभेदे जतुकायाञ्च

**जनुस्** न० जन-उसि । उत्पत्तौ ।

**जनु(नू)** स्त्री० जन-उ वा ऊङ् । उत्पत्तौ ।

**जनेष्ट** पु० जनानामिष्टः। मुद्गरवृक्षे । वृद्धिनामोषधौ,जातीपुष्पे, हरिद्रायां जतुकायाञ्च स्त्री० । [स्वाभिमानिनि जीवे ।

**जन्तु** पु० जन-तु । जननशीले प्राणिनि अविद्यादोषात् देहा-

**जन्तुका** स्त्री० जन्तुभिः कायति प्रकाशते कै-क । लाक्षायां, तस्याहि कीटैः प्रकाशः । हिङ्गुले च ।

**जन्तुघ्न** पु० जन्तून् क्रमीन् हन्ति टक् । वीजपूरे । विड़ङ्गे, हिङ्गुनि च न० । प्राणिघातके त्रि० ।

**जन्तुफल** पु० जन्तवः फलेऽस्य । उडुम्बरे ।

**जन्तुमारी** स्त्री०जन्तून् क्रमीन् मारयति मृ-णिच्-अण् उप०। निम्बूके (निमकी) । [तत्र हि बहुकीटानां स्थितिः ।

**जन्तुला** स्त्री० जन्तून् कीटान् लाति ला-क । काशतृणे

**जन्मन्** न० जन-मनि। उत्पत्तौ, आद्यक्षणसम्बन्धे,गर्भवासयोनिनिःसारणेन देहग्रहणे, न्यायाद्युक्ते अपूर्व्वदेहादिभिः सम्बन्धे, ज्योतिषोक्ते जन्मनक्षत्रे, स्वावधिके दशमे उनविंशे च नक्षत्रे, जन्मलग्ने च ।

**जन्ममास** पु०६त० । 'आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनानि च । जन्ममासः स विज्ञेय वर्ज्जितः सर्व्वकर्म्मसु'इत्युक्ते जन्मदिनावधिके त्रिंशद्दिनात्मके मासे ।

**जन्मान्तर** न० अन्यत् जन्म मयू० । भवान्तरे परलोके ।

**जन्माष्टमी** स्त्री० श्रीकृष्णस्य जन्मतिथौ मुख्यचान्द्रे वा श्रावणस्य कृष्णाष्टम्याम् ।

**जन्मिन्** पु० जन्मास्त्यस्य व्रीह्यादि० इनि । प्राणिनि जीवे ।

**जन्य** त्रि० जन-कर्त्तरि यत् । जायमाने । जन-णिच्-यत् । उत्पाद्ये, जनके च । जनीं वधूं वहति नयति वा यत् । नवोढाज्ञातिमित्रभृत्यस्निग्धेषु त्रि० । अट्टे, परीवादे, प्रीतौ, युद्धे, देहे च पु० । भावे यत् । जनने न० । मातृवयस्यायां स्त्री० । [पीत्-अजपीत् ।

**जप** उच्चारणे वाचि च भ्वा०पर० सक० सेट् । जपति अजा-

**जप** पु० जप-अच् । वेदमन्त्रादेरावृत्तौ अस्फुटमुच्चारणे 'जपस्त्रायणं ध्येयसम्मुखीकरणं सुने' इत्युक्ते मन्त्रादिभाषणे च ।

**जपा(वा)** स्त्री०जप-अच् वा पस्य वः । स्वनामख्याते वृक्षे तत्पुष्पे च

**जभ** मैथुने भ्वा० पर० सक० सेट् । जभति अजभीत् ।

**जभ** मैथुने भ्वा० पर० सक० सेट् इदित् । जम्भति अजम्भीत्

**जभ** जृम्भणे भ्वा० आत्म०अक०सेट् इदित् । जम्भते अजम्भिष्ट

**जभ** नाशे चुरा०उभ०सक०इदित् । जम्भयति-ते अजजम्भत् त

**जभ** जृम्भणे भ्वा०आत्म०सेट् । जभते अजभिष्ट । [जान्त्वा

**जम** भक्षे भ्वा०पर०सक० सेट् । जमति अजमीत् । जमित्वा-

**जमदग्नि** पु०। परशुरामस्य पितरि मुनिभेदे ।

**जम्पती** पु० द्वि० व० । जाया च पतिश्च द्व० जायाया जम् । दम्पत्योः स्त्रीपुरुषयोः । [पङ्के, शैवाले, केतक्याञ्च ।

**जम्बाल** पु० जम्ब-घञ् जम्बमालाति आदत्ते आ+ला-क ।

**जम्बालिनी** स्त्री० जम्बाल+अस्त्यर्थे इनि । नद्याम् ।

**जम्बीर** पु० जम-विच् वीर-विक्रान्तौ क कर्म० । (गोड़ानेबु) वृक्षभेदे, मरुवके, सिताज्र्जके च ।

**जम्बु(म्बू)** स्त्री० जम-कू नि० बुक् द्वस्व० वा ऊङ् (जाम) । इति ख्याते वृक्षे । तस्याः फले अण् तस्य वा लुप् । जाम्बवम् । वा ह्रस्वे । जम्बु चाप्यत ।

**जम्बुक** पु० जम्बुरिव कायति कै-क । (गोलावजाम) इति ख्याते वृक्षे, श्योनाकभेदे च । स्वार्थे कन् जम्बुशब्दार्थे

**जम्बुद्वीप** पु० जम्बुवृक्षचिह्नितो द्वीपः शाक० । सप्तद्वीपमध्ये स्वनामख्याते द्वीपभेदे ।

जम्बुक पु० जम-उलुकादि० नि० । शृगाले, नीचे, वरुणे, जम्बुकार्ये च (गोलापजाम) द्राचाभेदे स्त्री० ।

जम्भ पु०जभि-घञ्।दैत्यभेदे,दन्ते,जम्बीरे,अंशे,तूणे, हनौ च। भावे घञ् । भक्षणे जृम्भणे च । अ। जृम्भायां स्त्री० ।

जम्भभेदिन् पु० जम्भं दैत्यं भिनत्ति भिद-णिनि। इन्द्रे जम्भभेदनादयोऽप्यत्र ।

जम्भला स्त्री०जम्भं जृम्भां लाति ला-क । राक्षसीभेदे तस्याः स्मरणे ज्वरनाशात् ज्वरनाशे च तत्पूर्व्वाङ्गजम्भाया अपि नाशः 'समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी'ति ।

जय पु० जि-भावे अच् । शत्रूणामभिभावने, नारायणपार्श्वचरे, 'एतौ द्वौ पार्श्वगौ मह्यं जयो विजय एव चे'ति भागवतम् विराटपुरस्थे गुप्तसंज्ञके युधिष्ठिरे च ।

जयढक्का स्त्री० जयसूचिका ढक्का। वाद्यभेदे ।

जयद्रथ पु० जयन् रथो यस्य । सिन्धुराजे दुर्योधनभगिनीपतौ स्वनामख्याते नृपे, सूर्य्ये, भीमे च ।

जयन्त पु० जि-झच्। इन्द्रस्य पुत्रे चन्द्रे, शिवे, विराटपुरस्थे गुप्तसंज्ञके भीमे च ।

जयन्ती स्त्री० जयति रोगान् अन्या यौ धानि वा जि-शतृ ङीप्।जरायाम्; नादेयाम् दुर्गाभेदे 'जयन्ती मङ्गला कालीति मन्त्रः। पताकायाम्, जयन्तीवृक्षे, 'रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी। अर्द्धरात्रादधश्चोर्द्ध्वं कलयापि यदा भवेत् जयन्ती नाम सा प्रोक्ते'त्युक्तलक्षणे योगभेदे च ।

जयपत्र न०। जयसूचकं पत्रम् । 'पूर्व्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृप । प्रदद्यात् जयिने लेख्यं जयपत्रं तदुच्यते' इत्युक्ते पत्रे ।

जयपाल पु० जयेन मलजयेन पालयति पाल-अच् । स्वनामख्याते सारकफलके वृक्षे। ६त०। विष्णौ, नृपे च।

जया स्त्री०जि-अच् । हरितक्याम्,जयन्त्याम्, दुर्गायां, तत्सहचर्य्यां, गणिकारिकायां, विजयायां (भङ्गा) पताकाभेदे, नीलदूर्व्वायाम्,शान्ताद्वृक्षे, ज्योतिषोक्ते 'त्रयोदश्यष्टमी चैव तृतीया च जया मते'त्युक्ते तिथिसमुदाये च ।

जय्य त्रि०जेतुं शक्यः जि-यत् क्षय्यजय्यौ तदर्थे नि०। जेतुं शक्ये

जरठ त्रि० जृ-अरठच्। कर्कशे, कठिने, पाण्डौ, जीर्णे च ।

जरण पु० न०। जृ णिच्-ल्यु । जीरके, हिङ्गुनि, सौवर्च्चले, कृष्णौषधौ च । कासमर्द्दे पु० । कृष्णजीरके स्त्री० ।

जरत् त्रि० जृ-अतृन् । वृद्धे, जीर्णे, जरायुक्ते, पुरातने च । स्त्रियां जरती ।

जरत्कारु पु० मनसादेव्याः पत्यौ मुनिभेदे। मनसादेव्यां स्त्री०

जरद्गव पु० जरन् गौः पच् समा० । वृद्धोक्षे, नृपभेदे च ।

जरन्त पु० जृ-झच् । महिषे । जीर्णे त्रि० ।

जरा स्त्री० जृ-अङ् । शैथिल्यापादकावस्थाभेदे ।

जरायु पु० जरामेति अण् । गर्भावरणचर्म्मणि गर्भाशये, जटायौ पक्षिणि च ।

जरायुज त्रि० जरायुतो जायते जन-ड। 'पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः । रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजा' इत्युक्ते पश्वादिमनुष्यान्तेषु 'यःतु चर्म्माकृतिः सूक्ष्मा जरायुः सा निगद्यते। शुक्रशोणितयोर्योगस्तस्मिन् संजायते यतः । तत्र गर्भो भवेद्यस्मात् तेन प्रोक्तो जरायुज इत्युक्ते गर्भे च । [दिव्युक्तनिरुक्तौ नृपभेदे ।

जरासन्ध: पु० 'जरया सन्धितो यस्मात् जरासन्धस्ततोऽभय-

जरूथ पु०न० जृ-ऊथन्। स्थूलमांसे । [अजर्च्चीत्(अजर्झीत्)(अजर्जीत्)

जर्च(र्झ)(र्ज) उक्तौ भर्त्सने च तु०पर०सक०सेट्। जर्च(र्झ)(र्ज)ति

जर्ज्जर पु०न०। जर्ज्ज-अरन् । शक्रध्वजे,शैलजे,गन्धद्रव्ये च। जीर्णे त्रि० । [दृव्ये । जीर्णे त्रि०

जर्ज्जरीक त्रि० जर्ज-ईकन् पर्फरीकादि०नि० । बहुच्छिद्रे

जर्भ उक्तौ निन्दायाञ्च तु०पर०सक०सेट् । जर्भति अजर्भीत्

जर्त्तिल पु० जृ-विच् कर्म्म० । अरण्यतिले । [अजर्त्सीत् ।

जर्त्स भर्त्सने उक्तौ रक्षणे च भ्वा०पर०सक०सेट् । जर्त्सति

जल आच्छादने चुरा० उभ० सक० सेट् । जालयति ते अजीजलत् त । [अजालीत् । जलः जालः ।

जल तीक्ष्णतादिभवने भ्वा०पर०सक०सेट् ज्वलादि । जलति

जल त्रि० जल-अच्। जडे । उदके, ह्रीवेरे, गन्धद्रव्ये,ज्योतिषोक्ते लग्नावधिके चतुर्थस्थाने, पूर्व्वाषाढानक्षत्रे च न०

जलकण्टक पु० जलस्य कण्टकरव । शृङ्गाटके । (पानफल) कुम्भीरे च ।

जलकपि पु०जले कपिरिव। शिशुमारे जलजन्तुभेदे (शोसक)

जलकरङ्क पु० जलस्य करङ्क इवाधारः । नारिकेले,मेघे च। जले करङ्क इव । शङ्खे जललतायाञ्च ।

जलकाक पु० जले काकइव । (पानकौडी) पक्षिभेदे ।

जलकुन्तल पु० जलस्य कुन्तलः केश इव । शैवाले ।

जलचर पु० जलेचरति चर-टक्। ग्राहादिषु जलजन्तुषु ।

जलज पु० जले जायते जन-ड । शैवले, वानीरवृक्षे हिज्जलवृक्षे,मत्स्ये,ज्योतिषोक्तेषु कर्कटमीनमकरान्त्यार्द्धराशिषु च। चारभेदे,पद्मे च न०। शङ्खे पु०न०।जलजातमात्र त्रि० ।

जलजन्तु पु०६त० जलस्थेषु ग्राहादिषु प्राणिषु । [(जोंक)

जलजन्तुका स्त्री० जलजन्तु+अल्पार्थे कन् । जलौकायाम्

**जलद** पु० जलं ददाति दा-क । मेघे, कर्पूरे च जलदातरि त्रि०

**जलदागम** पु० जलदानामागमो यस्मिन् काले । वर्षाकाले

**जलधर** पु० जलानां धरः धृ-अच् । मेघे-कर्पूरे,समुद्रे,तिलि-
घष्टक्षे च । जलधारिणि त्रि० । [छन्दोभेदे च ।

**जलधरमाला** स्त्री० ६त० । मेघपङ्क्तौ, द्वादशाक्षरपादके

**जलधि** पु० जलानि धीयन्तेऽत्र धा-कि । समुद्रे । तोयधि-
प्रभृतयोऽप्यत्र, चतुःसङ्ख्यायां संख्याभेदे, 'जलधिश्चान्त्यं
मध्यं परार्द्ध'मि'ति लीलावती । [याञ्च ।

**जलधिजा** स्त्री०जलधेर्जायते जन-ड । लक्ष्म्याम् । [सङ्ख्या-

**जलनिधि** पु०जलानि निधीयन्तेऽत्र नि+धा-कि । समुद्रे चतुः-

**जलनिर्गम** पु०जलानां निर्गमः । नद्यादे र्जलभ्रमणे,अधःस्थि-
तस्य जलस्योर्द्ध्वगतौ, प्राकारादिषु जलनिस्सारणजालके च

**जलनीली** स्त्री० जलं नीलयति नील+तत्करोति णिच्-अण् ।
शैवाले । स्वार्थे कन् जलनीलिकाप्यत्र ।

**जलपृष्ठजा** स्त्री० जलस्य पृष्ठे उपरि जायते जन-ड। शैवाले

**जलप्राय** न० जलं प्रायं यत्र । जलबहुले देशे ।

**जलप्लव** पु० जले प्लवते प्लु-अच् । (उदविराल) जलजन्तुभेदे

**जलबुद्बुद** न० ६त० । जलविम्बे । [मत्स्यरङ्कविहगे

**जलमद्गु** पु० जले मद्गुरिव निरन्तरमज्जनोन्मज्जनत्वात् ।

**जलमार्ग** पु० ६त० । प्रणाल्याम् (नाला) (नरदमा)

**जलमुच** पु० जलानि मुञ्चति मुच-क्विप् । मेघे ।

**जलमोद** न० जलेन जलयोगेन मोदयति सेविनं मुद-णिच्-
अच् । उशीरे (वेणारमूल) । [धारायन्त्रे ।

**जलयन्त्र** न० जलानामुत्क्षेपणार्थं यन्त्रम् । (फोह्वारा) ख्याते

**जलवल्कल** पु० जलानां वल्कल इव । कुम्भिकायाम् ।

**जलविषुव** न० रवेः तुलाराशिसंक्रान्तौ ।

**जलवेतस** पु० जले जातो वेतसः शाक० । वेतसभेदे । [च

**जलव्याल** पु०जलस्थो व्यालो हिंस्रः । सर्पभेदे,क्रूरकर्म्मणि जन्तौ

**जलशायिन्** पु० जले समुद्रजले शेते शी-णिनि । नारायणे ।

**जलशुक्ति** स्त्री० जलस्य शुक्तिरिव । शम्बूके ।

**जलस्थूक** न० जलस्य स्थूकमग्रम् । शैवाले ।

**जलस्थूकर** पु० जलस्य स्थूकर इव । कुम्भीरे । [(जोंक)

**जलसर्पिणी** स्त्री० जले सर्पति सृप-णिनि । जलौकायाम्

**जलहस्तिन्** पु० जले हस्तीव । ग्राहाख्ये जलजन्तौ । ७त० ।
जलस्थे हस्तिरूपे जन्तुभेदे ।

**जलहास** पु०जलानां हास इव शुभ्रत्वात् । फेने, समुद्रफेने च

**जलाधार** पु०६त० । तडागादौ जलाशये, समुद्रे च । जलमा-
धारो यस्य । शृङ्गाटके । उशीरे न० । जलस्थिते त्रि०

एवं जलाशयादयोऽपि शब्दा अत्रार्थे बोध्याः ।

**जलार्द्रा** स्त्री० जलेनार्द्रा । जलेनार्द्रीकृते व्यजने ।

**जलालूक** न० ६त० । शालूके, पद्मादिकन्दे मृणालमूले च ।

**जलावर्त्त** पु०आ+वृत-णिच्-अच् ६त० । खतो जलानां भ्रमणे

**जलूका** स्त्री० जलमोको यस्याः पृ० । जलौकायाम् ।

**जलेचर** ज० जले चरति चर-टक् अलुक् स० । हंसादौ ।

**जलेन्धन** पु० जलान्येवेन्धनानि यस्य । वाड़वानले । [इक्षे

**जलेरुहा** स्त्री० जले रोहति-रुह-अच् अलुक् स० । कुटुम्बिनी

**जलेशय** पु० जले शेते शी-अच् अलुक् स० । मत्स्ये ।

**जलेश्वर** पु० ६त० । वरुणे. समुद्रे च ।

**जलोच्छ्वास** पु० जलानुच्छ्वसन्त्येभिः उद्-श्वस-घञ् । प्रवृद्ध-
जलस्य निर्गममार्गे, अधिकजलस्य सर्व्वतोवहने च ।

**जलोदर** न०जलप्रधानमुदरं यस्मात् ५ब०। उदरामयरोगभेदे।

**जलोद्भवा** स्त्री०जले उद्भवति उद्+भू-अच् । स्वल्पब्राह्मीशाके

**जलौकस्** स्त्री० जलमोको वसतिरस्याः । (जोंक) ख्यातायां
रक्तपायाम् । अमरमते ब०व० ।

**जलौकस** पु० जलमोकोऽस्यस्य अच् । (जोंक) रक्तपायां
जलौकसेनेव रक्ताकर्षिनिपुणेन वेश्याजनेनेति वासवदत्ता

**जलौका**. स्त्री० उच क नि० क जलमोकः स्थानं यस्याः ।
(जोंक) रक्तपायाम् ।

**जल्प** वाग्विशेषे भ्वा० पर०सक० सेट् । जल्पति अजल्पीत् ।
'मयि जल्पति कल्पनाधिनाथे' इति न्यायशिरोमणिः ।

**जल्प** पु० जल्प-घञ् । परमतनिराकरणपूर्व्वकं स्वमतस्थापन
रूपे वाक्यभेदे, तत्त्वबुभुत्सोः कथारूपे वादे, कथने च ।

**जल्पाक** त्रि० अल्प-षाकन् । बहुकुत्सितवाक्यवदनशीले(वाचाल)

**जव** संघाते चुरा०उभ०अक०सेट्इदित् । जम्बयति-ते अजजम्बत्

**जव** पु० जु-अप् । वेगे ।

**जवन** पु० जु-युच् । वेगवति शीघ्रगे घोटके । देशभेदे, जाति-
भेदे च । [(परदा) ख्याते वस्त्रभेदे ।

**जवनिका** स्त्री० जवन्त्यस्यां जु-ल्युट् स्वार्थे कन् । (कानात्)

**जवस** न० जु-असच् । घासे ।

**जविन्** पु० जवोऽस्यस्य इनि । घोटके,उष्ट्रे च । वेगवति त्रि०

**जष** बधे भ्वा०उभ०सक०सेट् । जषति ते अजाषीत्-अजषीत्

**जस** मोक्षणे दिवा०पर०सक०सेट् । जस्यति अजसत्-अजा-
सीत् अजसीत् । [अजीजसत त ।

**जस** बधे अनादरे च चुरा० उभ०सक०सेट् । जासयति ते

**जस** रक्षणे चु०उभ०सक०सेट् इदित् । जंसयति ते अजजंसत् त

**जहत्स्वार्था** स्त्री०जहत् स्वार्थोयाम् । लक्षणाभेदे,यथा आयुर्घृत

**जहदजहल्लक्षणा** स्त्री० जहच्च अजहच्च स्वार्थो यां तादृशी लक्षणा। वाच्यार्थैकदेशत्यागेनैकदेशवृत्तौ लक्षणायाम् यथा सोऽयं देवदत्त इत्यत्र तत्कालतत्कालरूपार्थत्यागेन केवलदेवदत्तमात्रार्थबोधनात् वाच्यार्थैकदेशवृत्तिता।

**जहल्लक्षणा** स्त्री० जहत् स्वार्थो यास्याम् उत्तरपदलोपः कर्म्म०। जहत्स्वार्थायां लक्षणायाम्। यथा आयुर्घृतम्।

**जह्नु** पु० चन्द्रवंशीये राजर्षिभेदे येन गङ्गावतरणकाले गङ्गा-पीतेतिपुराणम्। [गङ्गायाम्।

**जह्नुतनया** स्त्री० जह्नोस्तनयेव तदुदरं गत्वा ततो निःसरणात्।

**जह्नुसप्तमी** स्त्री० वैशाखशुक्लसप्तम्याम्।

**जागर** पु० जागृ-अप्। निद्राभावे जागरणे, कवचे च।

**जागरित** न० जागृ-क्त। इन्द्रियैर्विषयोपलब्धियोग्यावस्था-याम्। जीवो हि स्वप्नादिहेतुकर्म्मनाशे इन्द्रियविषयान् अनुमेयांश्च स्थूलविषयान् व्यवहारिकांश्च पदार्थान् यस्यामवस्थायामनुभवति तज्जागरितम्। कर्त्तरि-क्त। जागरणयुक्ते त्रि०। [विश्वसंज्ञे जीवे।

**जागरितस्थान** पु० जागरितं स्थानमस्य। वेदान्तोक्ते

**जागरूक** त्रि० जागृ-ऊक। जागरणशीले, अप्रमत्ते च।

**जागर्य्या** स्त्री०जागृ-श। जागरणे।अ। जागराथत। [रीत्

**जागृ** निद्राभावे अदा०पर०अक० सेट् जक्षा०। जागर्त्ति अजाग-

**जागृवि** पु० जागृ क्विन्। अग्नौ, नृपे च।

**जाग्रत्** न० जागृ-शतृ। इन्द्रियादिभिः विषयज्ञानयोग्या-वस्थायाम्। तद्वति त्रि० स्त्रियां ङीप्।

**जाङ्गल** पु० जङ्गले भवः, तत् शीलितं यस्य वा अण्। कपिञ्जले खगे निर्जलदेशे हरिणादिषु पशुषु कुरुदेशसमीपस्थे देशे च तद्देशस्थे त्रि० ब०व०।

**जाङ्गलि** पु० जङ्गलं परिशीलितमस्य जङ्गल-इञ्। विषवैद्ये।

**जाङ्गलिक** पु० जाङ्गल्याविषविद्यया चरति ठक्। विषवैद्ये।

**जाङ्गली** स्त्री० जाङ्गलेरियम् अण् ङीप्। विषविद्यायाम्, शूकशिम्बायाञ्च।

**जाङ्गुली** स्त्री० गम-यङ् उलच् नि० ङीप्। विषविद्यायाम्।

**जाङ्घिक** त्रि० जङ्घाभ्यामाजीवति वेतनादि० ठक्। धावके, जङ्घाजीविनि। उष्ट्रे पु०। [च त्रि०।

**जात** न० जन-क्त। समूहे, व्यक्तौ, जन्मनि च। उत्पन्ने,प्रशस्ते

**जातक** न० जातस्य हितम् कन्। जातस्य शुभाशुभनिर्णायके इइज्जातकादौ ग्रन्थे, जातकर्म्मरूपे संस्कारभेदे च।

**जातकर्म्मन्** न० जातस्य कर्म्म मन्त्रवत् सर्पिःप्राशनादि। संस्कारभेदे।

**जातमात्र** त्रि० जात एव मयूर०। सद्योजाते बालकादौ।

**जातरूप** न० जातं रूपमस्य। प्रशस्तवर्णे, स्वर्णे।

**जातवेदस्** पु०जातान् प्राणिनः विन्दते जठरानलत्वेन विद्-लाभे असुन्। वह्नौ, चित्रकवृक्षे च।

**जाति** स्त्री० जन-क्तिन्। जन्मनि, अनुगतैकाकारबुद्धिजनन समर्थे,अवयवव्यङ्ग्ये सकृदुपदेशव्यङ्ग्ये च धर्मभेदे, यथा गोत्व-मनुष्यत्वादि ब्राह्मणत्वशूद्रत्वादि च। व्याकरणोक्ते गोत्रा-द्यपत्यात्मके गोत्रे, वेदशाखाभेदे च। न्यायोक्ते साधर्म्य वैधर्म्याभ्यां व्याप्तिनिरपेक्षाभ्यां वादिवाक्येषु दूषणा-दानरूपे वाक्ये, षड्जादिषु सप्तसु स्वरेषु, अलङ्कारभेदे, चुल्लाम्, आमलक्यां, काम्पिल्ले, छन्दसि, जातिफले, मालत्यां,(चामेली) पुष्पप्रधानवृक्षे च।

**जातिकोष** न० जात्याः कोषमिव (जायफल) जात्याम् जय-न्त्याम् स्त्री० ङीप्।

**जातिब्राह्मण** पु० जात्या ब्राह्मणः। 'तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव स' इत्युक्ते निन्द्ये विप्रे।

**जातिशस्य** न० जात्याः शस्यम् (जायफल) जातिफले।

**जातिस्मर** त्रि० जातिं पूर्व्वजन्म स्मरति स्मृ-अच्। अतीत-जन्मवृत्तान्तस्मृतियुक्ते जने।

**जाती** स्त्री० जन-क्तिच् ङीप्। मालत्याम् (चामेली) तत्पुष्पेऽपि लताभेदे च यस्याः फलं (जायफल)।

**जातीफल** न० ६त० (जायफल) इतिख्याते फले।

**जातीय** त्रि० जातौ भवः छ। समानजातियुक्ते सजातीये किञ्चिच्छन्दात् जातीयप्रत्ययः। प्रकारार्थे। यथा तार्किक-जातीयः तार्किकप्रकारः। [अविकल्पे, निषेधे च।

**जातु** अव्य० जै-क्षये तुन्। कदाचिदित्यर्थे, प्रश्ने, निन्दायाम्

**जातुधान** पु० जातु कदाचिद्रन्ध्रं प्राप्य धनं सन्निधानमस्य। राक्षसे। [निर्म्मिते पदार्थे।

**जातुष** त्रि० जतुनो विकारः अण् षुगागमः। जतुविकार-

**जातूकर्ण** पु० मुनिभेदे।

**जातेष्टि** स्त्री० यज-क्तिन् इष्टिः जातस्य संस्कारार्थं कर्त्तव्या इष्टिः यागभेदः। जातकर्म्माख्ये संस्कारभेदे।

**जातोक्ष** पु० जातः प्राप्तद्रम्यावस्थः उक्षा टच् समा०। युवबृषे

**जात्य** त्रि० जातौ भवः यत्। कुलीने, श्रेष्ठे, कान्ते च।

**जात्यन्ध** त्रि०जातौ जन्म एवान्धः। जन्मान्धे 'जात्यन्धोबधि-रस्तथे'ति मनुः।

**जात्युत्तर** न० जात्या व्याप्तिविधुराभ्यां साधर्म्यवैधर्म्याभ्या मुत्तरम्। न्यायोक्ते असदुत्तरे।

जानकी स्त्री० जनकस्येयम् दुहितृत्वेन अण् । सीतायाम् ।

जानपद त्रि० जनपदे भवः, तत आगतो वा अण् । देशस्थे देशादागते च । जनपदानां वृत्तौ स्त्री० ङीप् ।

जानु न० जन-ञुण् । ऊरुजङ्घयोर्मध्यभागे (आंठु) स्वार्थे कन् अत्रैवार्थे । [रामे ।

जामदग्न्य पु० जमदग्नेरपत्यम् यञ् । जमदग्निपुत्रे परशु-

जामातृ पु० जायां माति मिनोति मिमीते वा तृच् । दुहितृ पतौ, वल्लभे, स्वामिनि च ।

जामि स्त्री० जम-मिण् नि०वृद्धिः । भगिन्यां दुहितरि, स्नुषायां, कुलस्त्रियां, सन्निहितस्त्रियाम् 'जामयो यानि गेहानी'ति मनुः

जाम्बवत् पु० रामायणप्रसिद्धे भल्लूकराजे ।

जाम्बवती स्त्री० जाम्बवतोऽपत्यं स्त्री । कृष्णस्य भार्याभेदे जाम्बवतकन्यायाम् 'शाम्ब ! शाम्ब ! महाबाहो ! शृणु जाम्बवतीसुते'ति सूर्यस्तवः । नागदमन्याञ्च ।

जाम्बूनद न० जम्बूनदे भवम् अण् । स्वर्णे 'तीरमृत् तद्रसं प्राप्य सुखवायुविशोषिता । जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणमित्युक्तौ सुवर्णभेदे (तद्रसं जम्बुरसम्) धुस्तूरे च

जायक न० जयति गन्धान्तरं जि-ण्वुल् । पीतवर्णे सुगन्धिकाष्ठे

जाया स्त्री०जन-यक् । 'पतिर्भार्यां संप्रविश्य गर्भोभूत्वेह जायते जायायास्तद्धि जायात्वं यदस्यां जायते पुन'रित्युक्तायां स्त्रियाम्, ज्योतिषोक्ते लग्नतः सप्तमे स्थाने च ।

जायाजीव पु० जायया जीवति जीव-क । नटे ।

जायानुजीविन् पु० जायामनुजीवति अनु+जीव-णिनि । नटे, वेश्यापतौ, बके, दुःस्थे च ।

जायु पु० जयति रोगान् जि-उण् । औषधे ।

जार पु० जीर्यतेऽनेन जॄ-करणे घञ् । उपपतौ ।

जारज त्रि० जारात् जायते जन-ड । अनियुक्तायामुपपति-जाते कुण्डे गोलके च पुत्रे ।

जारणी स्त्री० जारयत्यनया जॄ-णिच्-करणे ल्युट् । स्थूलजीरके

जाल पु०न० जल सम्वरणे घञ्,जल-घातने णिच्-अच्,जले-न्नियते इत्यण् वा । कदम्बवृक्षे गवाक्षच्छिद्रे 'गवाक्षजालैर-भिनिष्पतन्त्य' इति भट्टिः । मत्स्यधारणार्थे शणसूत्रनिर्मिते स्वनामख्यात आनाये, अस्फुटकलिकायां,क्षुद्रफले, मृग-पक्ष्यादिधारणार्थे पाशे च । दम्भे, दर्पे, समूहे, इन्द्रजाले च न० । स्वार्थे कन् । गवाक्षच्छिद्रे पु० । मोचकफले नव-कलिकासमूहे, चारके च न० ।

जालकारक पु० कृ-ण्वुल् इत० । जालस्य मक्षिकादिपातनाय प्रागकारके-मर्कटे (माकड़सा) शाखोट वृक्षे तत्तिमस्य च कर्त्तरि त्रि०

जालन्धर पु० त्रिगर्त्ताख्ये देशे तद्देशस्थे जने ब०व० ।

जालपाद् पु० जालमिव पादावस्य पाद्भावः । हंसे (शरारि) पक्षिभेदे च । [भेदे ।

जालवर्वुरक पु० जालाकारो वर्वुरकः । (कांटाबाबला) वृक्ष

जालिक पु० जालेन चरति जाल+ठक् । वागुरिके जाल-जीविनि, कैवर्त्ते, मर्कटके च । जालोपजीविनि त्रि० ।

जालिनी स्त्री० जाल+अस्त्यर्थे इनि । चित्रशालायां,कोषात क्याम्, (झिङ्गा) तस्याः पक्वफलकोषे हि जालवत्त्वम् ।

जाली स्त्री० जालं विद्यतेऽस्याः अच् गौरा० ङीष् । (झिङ्गा) लताभेदे । [आमलक्याञ्च ।

जाल्म त्रि० जालयति अपवारयति म । पामरे, मूर्खे, क्रूरे,

जावाल पु० जवालाया अपत्यम् अण् । मुनिभेदे ।

जाह्नवी स्त्री० "जानुद्वारा पुरादात्तां अह्नुःसंपीय कोपतः । तस्य कन्यास्वरूपा च जाह्नवी तेन कीर्त्तिते"त्युक्तनिर्वच-नायां गङ्गायाम् ।

जि जये भ्वा० पर० सक० अनिट् । जयति अजैषीत् ।

जिगीषा स्त्री० जि-सन् अ । जयेच्छायां, प्रकर्षे, उद्यमे च ।

जिघ्रासु त्रि०ज्ञातुमिच्छुः ज्ञा-सन् उ । जातुमिच्छौ,मुमुक्षौ च

जित न० जि-भावे क्त । जये । कर्मणि क्त । अभिभूते पराजिते जयलब्धे, वशीकृते, आयत्तीकृते च ।

जितकाशिन् त्रि० जितेन जयेन काशते प्रकाशते णिनि । जिताहवे, जयिनि च । [जितेन्द्रिये ।

जितात्मन् त्रि० जित-वशीकृत आत्मा इन्द्रियं मनो वा येन ।

जितेन्द्रिय त्रि० जितानि वशीकृतानीन्द्रियाणि येन । 'श्रुत्वा दृष्ट्वा तथा स्पृष्ट्वा भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रिय' इत्युक्ते हर्षविषादशून्ये शान्ते जने । कामवृद्धितृणे पु० ।

जित्य पु० जि-क्यप् । हलहले कृष्टभूमिसमीकरणार्थं स्थूलकाष्ठे (मइ) । अस्य स्त्रीत्वोक्तिः प्रामादिकी ।

जित्वर जि-क्वरप् । जयशीले । स्त्रियां ङीप् ।

जिन पु० जयति संसारं जि-नक् । बुद्धे,विष्णौ च । जित्वरे त्रि०

जिम भक्षे भ्वा० पर० सक० सेट् । जेमति अजेमीत् ।

जिरि हिंसायां स्वा०पर०सक०सेट् । जिरिणोति अजिरायीत्

जिव प्रीणने भ्वा०पर०सक०सेट् इदित् । जिन्वति अजिन्वीत्

जिष सेके भ्वा० पर० सक० सेट् । जेषति अजेषीत् ।

जिष्णु पु० जिष-ग्स्नु । अर्ज्जुने, इन्द्रे, विष्णौ, सूर्य्ये, वसौ च । जित्वरे त्रि० ।

जिह्म त्रि० हा-मन् द्वित्वादि नि० । कुटिले, मन्दे, तगरवृक्षे च

**जिह्मग** पु० जिह्मं गच्छति गम-ड। सर्पे,मदनवृत्ते च। मन्दगे, कुटिले च त्रि०।

**जिह्वा** स्त्री० लेढि अनया लिह-व नि०। रसज्ञानेन्द्रिये रसनायाम्। [विसर्गरेखालेख्ये विसर्गभेदे

**जिह्वामूलीय** पु० जिह्वामूले भवः छ। कखाभ्यां प्राक् अर्द्ध-

**जिह्वारद** पु० जिह्वैव रदोदनचर्वणसाधनं यस्य। दन्तहीने जिह्वयैव चर्वणकरे खगे। [वृद्धे, जरति,चर्म्मपुटे च।

**जीन** त्रि० ज्या-वयोहानौ कर्त्तरि क्त संप्रसारणं दीर्घश्च।

**जीमूत** पु० ज्या-क्विप् जीः तया जरया मूतो बद्धः मू-बन्धने क्त, जयति नभः, जीयते वायुना वा जि-क्त मूट् दीर्घश्च वा। मेघे, मुस्तके, पर्व्वते, भृतिकरे, देवताडवृक्षे, इन्द्रे घोषातकीलतायाञ्च। [(जीरा) ख्याते पदार्थे

**जीर** पु० ज्या-रक्। जीरके,खड्गे,अणौ च। संज्ञायां कन्।

**जीर्ण** पु० जॄ-क्त। जीरके। शैलजे न०। जरायुक्ते त्रि०। स्थूलजीरके स्त्री०।

**जीर्णपर्ण** पु० जीर्णानि पर्णानि यस्य। कदम्बे। पुरातनपत्र युक्ते त्रि०। कर्म्म०। पुरातनपत्रे न०।

**जीर्णि** स्त्री० जॄ-क्तिन्। जीर्णतायाम्।

**जीर्णोद्धार** पु०जीर्णस्य भग्नमन्दिरादेरुद्धारो यत्र।संस्कारभेदे

**जीव** प्राणधारणे भ्वा० पर०अक०सेट्। जीवति अजीवीत्। णिच् अजिजीवत् त अजीजिवत् त।

**जीव** पु० जीव-क। देहाभिमानिनि आत्मनि मनुष्यावधि कीट पर्य्यन्ते चेतने 'प्राणान् येवतरूपेण धारयन् जीव उच्यते इत्युक्ते प्राणिनि। करणे घञ्। जीवनोपाये। जीव-णिच् अच्। वृक्षभेदे। भावे घञ्। प्राणधारणे।

**जीवक** पु० जीवयति जीव-णिच् ण्वुल्। औषधभेदे। पीतशाले वृक्षे, क्षपणे च। सेवके, वृद्ध्याजीविनि, जीव्यात् आशिषि वुन्। आशास्यमानजीवने जने त्रि०।

**जीवघन** पु० जीवएव घनोमूर्त्तिः सैन्धवशिलाशकलइव यस्य। हिरण्यगर्भे। [चकोरपक्षिणि

**जीवजीव** पु० जीवान् जीवयति दर्शनेन तृप्तिकरत्वात् क।

**जीवञ्जीव** पु० जीवान् जीवयति खच्। चकोरे, वृक्षभेदे च

**जीवन** न०जीव्यतेऽनेन जीव-ल्युट्। वृत्तौ, जले, मज्जनि, हैयङ्गवीने च। भावे ल्युट्। प्राणधारणे। जीवयति णिच्-ल्यु। पुत्रे, जीवकौषधे, वायौ, क्षुद्रफलकवृक्षे च पु०

**जीवनयोनि** स्त्री० ६त०। न्यायोक्ते देहे प्राणसञ्चारकारणे यतीन्द्रिये यत्नभेदे।

**जीवनहेतु** पु० ६त०। 'विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः। वृत्तिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः' इत्युक्तेषु विद्यादिषु जीवनोपायेषु दशसु।

**जीवनी** स्त्री० जीव्यतेऽनया जीव-ल्युट् ङीप्। जीवन्त्याम्, काकोल्यां, स्वर्णहरितकीभेदे, शम्यां,गुडूच्याम् वन्द्यायाञ्च

**जीवन्तिका** स्त्री० जीव-झ ङीप् स्वार्थे कन् ह्रस्वे अत इत्त्वम्। गुडूच्याम्, जीवाख्यशाके, वन्दायां, हरितक्याञ्च

**जीवन्ती** स्त्री० जीव-झ ङीप्। जीवन्त्यां, मधुस्रवाख्यौषधौ, शम्यां, गुडूच्यां, वन्दायां, हरितक्याञ्च।

**जीवन्मुक्त** त्रि० जीवन्नेव मुक्तः त्यक्तसंसारः। तत्त्वज्ञानात् कारे प्रारब्धकर्म्मक्षयपर्य्यन्तं सुषुप्तिवत् व्यवहर्त्तरि आत्मज्ञे जीवे 'सुषुप्तिवद् जाग्रति यो न पश्यति द्वयन्तु पश्यन्नपि चाद्वयत्वतः। तथाच कुर्व्वन्नपि निष्क्रियश्च यः सत्मज्ञः विज्ञान्य इतीह निश्चयइत्युक्ते ब्रह्मात्मज्ञानयुक्ते।

**जीवन्मुक्ति** स्त्री० जीवतएव मुक्तिः कर्तृत्वभोक्तृत्वादिव वात्। जीवतो बन्धनिवृत्तौ।

**जीवपुत्रक** पु० जीवयतीति क जीवः पुत्र इव हर्षहेतुत्वात् इवार्थे कन्। (जीयापुता) वृक्षभेदे।

**जीवपुष्पा** स्त्री० जीवं पुष्पं यस्याः। बृहज्जीवन्त्याम्।

**जीवप्रिया** स्त्री० ६त०। हरितक्याम्। [वृद्धिनामौषधे च

**जीवभद्रा** स्त्री० जीवानां भद्रं यस्याः ५ब०। जीवन्तीलतायां

**जीववल्ली** स्त्री० जीवयतीति जीवा कर्म्म०। क्षीरकाकोल्याम्

**जीवस्थान** न० ६त०। मर्म्मणि।

**जीवा** स्त्री० जीव-अच् जीवयतेरच् वा टाप्। धनुषो गुणे, जीवन्तिकायामौषधौ, वचायां, शिञ्जिते, भूमौ, जीवनोपाये च। [सञ्जीवनौषधे च

**जीवातु** पु०न०। जीव-आतु। अन्ने,जीविते,जीवनौषधे, मृत-

**जीवात्मन्** पु० कर्म्म०। देहाभिमानिनि जीवे।

**जीवाधार** पु०६त०। हृदये, देहे च। [आजीवने

**जीविका** स्त्री० जीव-अ कन् अत इत्त्वम्। जीवनोपाये

**जीवितकाल** पु० जीव-भावे क्त तस्य कालः। जीवनावधि काले आयुषि।

**जीवितेश** पु० ६त०। यमे, प्राणस्वामिनि, 'जीवितेशवसतिं जगाम से'ति रघुः। जीवातौ,चन्द्रे सूर्य्ये च। प्रियनाथे त्रि०

**जीवोपाधि** पु०६त०। स्वप्नसुषुप्तिजाग्रदवस्थासु।

**जीव्या** स्त्री० जीवाय हिता यत्। हरितक्याद, जीवन्त्यां, गोचुरङ्गन्धायाञ्च।

**जु** रंहसि भ्वा०पर०अक०अनिट्। जवति। अजौषीत्। जवः

**जु** गतौ सौ०आत्म०सक०अनिट्। जवते। अजोष्ट।

**जुग** त्यागे भ्वा॰ पर॰ सक॰ सेट् इदित् । जुङ्गति । अजुङ्गीत्
**जुगुप्सा** स्त्री॰ गुप-निन्दायां स्वार्थे सनु-अ टाप् । निन्दायाम्
**जुङ्ग** पु॰ जुगि-अच् । वृद्धदारकवृक्षे वा स्त्री॰ इति केचित् ।
**जुटिका** स्त्री॰ जट-संहतौ टाप् पृ॰। शिखायां,संहतकेशे च ।
**जुड** प्रेरणे चु॰ उभ॰ सक॰ सेट् । जोडयति ते अजूजुडत् त
**जुड** बन्धे तुदा॰ कुटा॰ पर॰ सक॰ सेट् । जुडति अजुडीत् जुजोड
**जुड** गतौ तु॰ पर॰ सक॰ सेट् । जुडति अजोडीत् । [जोतत् त
**जुत** दीप्तौ भ्वा॰ आत्म॰ अक॰ सेट् । जोतते अजोतिष्ट । अजु-
**जुन** गतौ तु॰ पर॰ सक॰ सेट् । जुनति अजोनीत् ।
**जुर्व** वधे भ्वा॰ पर॰ सक॰ सेट् । जूर्वति अजूर्वीत् । जूर्त्तः जूर्त्तिः
**जुल** पेषणे चु॰ उभ॰ सक॰ सेट् । जोलयति ते अजूजुलत् त
**जुष** तृप्तौ तर्के च वा चु॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् । जोष-
यति ते जोषति अजूजुषत् त अजोषीत् ।
**जुष** हर्षे अक॰, सेवने सक॰ तुदा॰ आत्म॰ सेट् । जुषते अजोषिष्ट ।
**जुष्ट** न॰ जुष-क्त । उच्छिष्टे । सेविते त्रि॰ ।
**जुहू** स्त्री॰ जुहोत्यनया हु-क्विप् नि॰ । पलाशकाष्ठनिर्मिते
अर्द्धचन्द्राकृतिरूपे यज्ञपात्रभेदे, पर्णमये यज्ञपात्रभेदे च
'यस्य पर्णमयी जुहूर्भवती'ति श्रुतिः ।
**जूट** पु॰ जट बन्धे घ पृ॰ । बन्धे, समूहे, जटायाञ्च ।
**जूति** स्त्री॰ जु-क्तिन् नि॰ दीर्घः । वेगे ।
**जूर** वयोहानौ अक॰ वधे सक॰ दिवा॰ आत्म॰ सेट् । जूर्य्यते
अजूरिष्ट । जूर्णः ।
**जूर्ण** पु॰ जूर-क्त । (उलुखड़) तृणभेदे ।
**जूर्त्ति** स्त्री॰ ज्वर-क्तिन् संप्रसारणम् । ज्वरे ।
**जूष** वधे भ्वा॰ उभ॰ सक॰ सेट् । जूषति ते अजूषीत् अजूषिष्ट
**जूष** पु॰ न॰ जूष-घञ् अच् वा । मुद्गादीनां क्वाथे (यूष) ।
**जूषण** न॰ जूष-ल्यु । धातकीपुष्पाम् (धाइफुल) ।
**जृ** न्यग्भावे भ्वा॰ पर॰ सक॰ अनिट् । जरति अजार्षीत् ।
**जृभ** जृम्भणे (हाइतोला) भ्वादि॰ आत्म॰ सक॰ सेट् इदित् ।
जृम्भते अजृम्भिष्ट ।
**जृम्भ** जृम्भे भ्वा॰ आत्म॰ सक॰ सेट् । जर्भते अजर्भिष्ट ।
**जृम्भ** पु॰ जृभि-घञ् । मुखविकाशे (हाइतोला) अ टाप् । अत्रैव
स्त्री॰। ततः स्वार्थे सन् अत इत्वम् जृम्भिकाप्यत्रैव ।
**जृम्भकास्त्र** न॰ जृभि-णिच्-ण्वुल् कर्म्म॰ । विपक्षस्य जृम्भोप-
लक्षितनिद्राकारकेऽस्त्रे ।
**जृम्भिणी** स्त्री॰ जृभि-णिनि । एलापर्ण्याम् ।
**जॄ** जरायां दिवा॰ पर॰ अक॰ सेट् प्वादि॰ । जीर्य्यति अजरत्
अजारीत् । जीर्णः । जरा । जरयति ।

**जॄ** जरायां वा चुरा॰ उभ॰ पक्षे क्र्यादि॰ प्वादि॰ अक॰ सेट् ।
जारयति ते जृणाति । अजीजरत् अजरत्-अजारीत् ।
**जेमन** न॰ जिम-ल्युट् । भक्षणे ।
**जेय** त्रि॰ जि-कर्म्मणि यत् । जेतव्यमात्रे ।
**जेष** गतौ भ्वा॰ आत्म॰ सक॰ सेट् । जेषते अजेषिष्ट । णिच्
अजिजेषत् त । [अजिजेहत् त
**जेह** यत्ने भ्वा॰ आत्म॰ अक॰ सेट् । जेहते अजेहिष्ट । णिच् ।
**जै** क्षये भ्वा॰ पर॰ अक॰ अनिट् । जयति अजासीत् । जानः ।
**जैत्र** त्रि॰ जेतैव जेतृ प्रज्ञादि॰ अण् । जयशीले । पारदे पु॰।
औषधे न॰ ।
**जैत्री** स्त्री॰ जेत्रेव जेतृ+स्वार्थे अण् ङीप् । जयन्तीवृक्षे ।
**जैन** पु॰ जिनो देवतास्य अण् । बौद्धधर्म्मावलम्बिनि अर्हदुपासके
**जैमिनि** पु॰ वेदमीमांसाशास्त्रकर्त्तरि व्यासशिष्ये मुनिभेदे ।
**जैवातृक** पु॰ जीव-आतृच् ततः-कण् इद्विश । चन्द्रे, औषधे,
कर्पूरे च । दीर्घायुष्के त्रि॰ ।
**जोङ्गक** पु॰न॰ । जुगि-वर्ज्जने ण्वुल् नि॰ । अगुरुचन्दने ।
**जोषम्** अव्य॰ जुष-अम् । सुखे, प्रशंसायां, तूष्णीमर्थे, लङ्घने च ।
**जोषा** स्त्री॰ जुष्यते जुषते वा जुष-घञ् । नार्य्याम् ।
**जोषित्** स्त्री॰ जुष-इति । नार्य्याम् ।
**ज्ञ** पु॰ ज्ञा-क । ब्रह्मणि, पण्डिते, सोमपुत्रे, बुधे च ।
**ज्ञप** मारणे, आलोके, निशाने, तोषणे, स्तुतौ च चुरा॰ उभ॰
सक॰ सेट् घटा॰ । ज्ञपयति-ते अजिज्ञपत्-त ।
**ज्ञपित** त्रि॰ ज्ञप क्त । मारिते, ज्ञापिते च नि॰ ज्ञप्तोऽप्यत्र ।
**ज्ञप्ति** स्त्री॰ ज्ञप-क्तिन् । बुद्धौ ।
**ज्ञा** बोधे क्र्या॰ पर॰ सक॰ अनिट् । जानाति अज्ञासीत् ।
**ज्ञा** ज्ञपधात्वर्थे चुरा॰ उभ॰ सक॰ सेट् घटा॰ । ज्ञपयति ते
अजिज्ञपत् त ।
**ज्ञा** प्रेरणे चुरा॰ उभ॰ सक॰ सेट् । ज्ञापयति ते अजिज्ञपत् त
**ज्ञातसिद्धान्त** पु॰ ज्ञातः सिद्धान्तः तत्त्वार्थो येन । सिद्धान्तज्ञे.
**ज्ञाति** पु॰ ज्ञा-कर्त्तरि करणे वा क्तिच् । पितरि पितृवंश्ये सपिण्ड
सकुल्यसमानोदकसगोत्रजरूपे एकगोत्रोत्पन्ने पितृव्यादौ ।
**ज्ञातेय** न॰ ज्ञातेर्भावः ढक् । ज्ञातित्वे ।
**ज्ञान** न॰ ज्ञा-भावे ल्युट् । सामान्यविशेषरूपे बुद्धिमात्रे,
'ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्व्विकल्पकम् । सविकल्पन्तु
संज्ञादिद्योतकत्वादनेकधा । संकल्पसंशयभ्रान्तिस्मृतिसाद-
श्यनिश्चयाः, ऊहोऽनध्यवसायश्च तथान्येऽनुभवादय' इत्युक्तेषु
नानाविधेषु बुद्धिपरिणामेषु । [ब्रह्मलाभोपाये निष्ठाभेदे ।
**ज्ञानयोग** पु॰ ज्ञानमेव योगः कौशलं ब्रह्मप्राप्त्युपायो वा ।

**ज्ञानलक्षणा** स्त्री॰ज्ञानमेव लक्षणं स्वरूपं यस्याः प्रत्यासत्तेः। न्यायमते ज्ञानसाधनाय अलौकिके सन्निकर्षभेदे। सम्प्रति यद्विषयस्य ज्ञानं जननीयं पूर्व्वं तद्विषयज्ञानमेव तत्र पूर्व्व-ज्ञातवस्तुनः प्रत्यासत्तिः।

**ज्ञानवापी** स्त्री॰ काश्यां स्थिते तीर्थभेदे।

**ज्ञानसाधन** न॰ सिध-णिच्-करणे ल्युट् ६त॰। इन्द्रिये।

**ज्ञानापोह** पु॰ अप+ऊह-घञ् ६त॰। विस्मरणे।

**ज्ञानाभ्यास** पु॰ ६त॰। 'तच्चिन्तनं तत्कथनमन्योन्यं तत्-प्रबोधनम्। एतदेकपरत्वञ्च ज्ञानाभ्यासं विदुर्बुधा'इत्युक्ते ध्येयविषयचिन्तादौ।

**ज्ञानिन्** त्रि॰ ज्ञानमस्यास्ति इनि। ज्ञानसामान्यवति, तत्त्व-ज्ञानिनि च 'तेषां ज्ञानी नित्ययुक्त'इति गीता। दैवज्ञे पु॰

**ज्ञानेन्द्रिय** न॰ ६त॰। श्रवणदर्शनादिज्ञानसाधने श्रोत्र-नेत्रनासिकाजिह्वात्वग्रूपेन्द्रिये, अन्तःकरणे च।

**ज्या** जरायां क्र्या॰प्रा॰पर॰अक॰अनिट्। जिनाति अज्यासीत्

**ज्या** स्त्री॰ ज्या-अङ्। धनुषो गुणे मौर्व्याम्, मातरि,भूमौ च

**ज्यानि** स्त्री॰ ज्या-क्तिन्। जीर्णतायां, हानौ, नद्याञ्च।

**ज्यायस्** त्रि॰अतिशयेन वृद्धः ईयसु ज्यादेश इत आत्त्वञ्च। अतिशयवृद्धे। स्त्रियां ङीप्।

**ज्यु** गतौ भ्वा॰आत्म॰सक॰अनिट्। ज्यवते अज्योष्ट।

**ज्युत** दीप्तौ भ्वा॰पर॰सक॰सेट्। ज्योतति अज्युतत् अज्योतीत्

**ज्युत** दीप्तौ भ्वा॰ आत्म॰अक॰ सेट्। ज्योतते अज्योतिष्ट। णिचः। अजुज्योतत् त।

**ज्येष्ठ** त्रि॰ वृद्ध+इष्ठन् ज्यादेशः। अतिवृद्धे, श्रेष्ठे च। अग्रजे पु॰। ज्येष्ठभगिन्याम्, वयोज्येष्ठायां, ज्येष्ठस्य पत्न्यामपि स्त्री॰ अजादित्वात् टाबेव। गङ्गायाम् अलक्ष्म्याम्, अश्वि-न्यवधिके अष्टादशे नक्षत्रे च स्त्री॰ गृहगोधिकायां (टिक-टिकी) स्त्री॰ ङीप् 'ज्येष्ठीरुते चुतेश्येव'मिति स्मृतिः।

**ज्येष्ठतात** पु॰ तातस्य ज्येष्ठः राजदन्तादि॰। पितुरग्रजे(जेठा)

**ज्येष्ठश्वश्रू** स्त्री॰ ज्येष्ठत्वात् पत्न्याः अग्रजत्वेन अविवाह्यत्वात् पत्नीमातृत्वयैवात्मनो मान्यत्वाच्च श्वश्रूरिव। पत्न्याज्येष्ठ-भगिन्याम्। [सामाङ्गे व्रते च।

**ज्येष्ठसामन्** न॰ मूर्द्धानं दिवइत्यस्यामृचि गीते सामनि, तत्-

**ज्येष्ठाश्रम** पु॰ ज्येष्ठ आश्रमो यस्य। 'यस्मात् त्रयोप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्। गृहस्थेनैव धार्य्यन्ते तस्मात् ज्येष्ठाश्रमो गृही'त्युक्ते गृहस्थाश्रमे। इनि। गृहस्थाश्र-मीत्यप्यत्र। [अण्। स्वनामख्याते चान्द्रे मासे।

**ज्यैष्ठ** पु॰ ज्येष्ठानक्षत्रेण युक्ता पौर्णमासी ज्यैष्ठी सास्मिन् मासे

**ज्यैष्ठी** स्त्री॰ ज्येष्ठायुक्ता पौर्णमासी अण्। चान्द्रज्यैष्ठमास-पौर्णमास्याम् तत्रैव तद्सम्भवात्।

**ज्यैष्ठ्य** न॰ ज्येष्ठस्य भावः ष्यञ्। ज्येष्ठत्वे 'विप्राणां ज्ञानतो ज्यैष्ठ्य'मिति मनुः। [ज्यवते अज्यास्त।

**ज्यो** नियमे उपनये व्रतोपदेशे च भ्वा॰आत्म॰सक॰ अनिट्।

**ज्योक्** अ॰ ज्यो-डोकि। सम्प्रत्यर्थे, कालभूयस्त्वे, शीघ्रतायां, प्रश्ने च। [युच्। ज्योतिरिङ्गणोऽप्यत्र

**ज्योतिरिङ्ग** पु॰ ज्योतिरिव इङ्गति इगि-गतौ अच्। खद्योते

**ज्योतिर्विद्** पु॰ ज्योतिषां सूर्य्यादीनां गत्यादिकं वेत्ति विद्-क्विप्। ज्योतिःशास्त्राभिज्ञे।

**ज्योतिश्चक्र** न॰ ६त॰। सूर्य्यादीनां ज्योतिषां मण्डले, 'सप्त-विंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगमि'त्युक्ते सप्तविंशति-नक्षत्रात्मके राशिचक्रे च।

**ज्योतिश्शास्त्र** न॰ ६त॰। ग्रहनक्षत्रादीनां गतिस्वरूपादि-निर्णायके 'पञ्चस्कन्धमिदं शास्त्रं होरागणितसंहिताः। केरलिः शकुनं चेति ज्योतिश्शास्त्रमुदीरितमित्युक्ते पञ्चाङ्ग-शास्त्रे। [तिःशास्त्रे। वृद्धौ। ज्यौतिषमप्यत्र

**ज्योतिष** न॰ज्योतिरधिकृत्य कृतो ग्रन्थः नि॰ न वृद्धिः। ज्यो-

**ज्योतिष्क** पु॰ ज्योतिरिव इवार्थे कन्। चित्रकवृक्षे, मेथिका-बीजे, गणिकारीवृक्षे च। स्वार्थे कन्। ग्रहनक्षत्रादिषु ब॰ व॰। ज्योतिष्मतीलतायाम् स्त्री॰ मेरोः शृङ्गान्तरे न॰।

**ज्योतिष्टोम** पु॰ ज्योतींषि स्तोमायस्य यत्नम्। षोडशर्त्विक्-साध्ये यज्ञभेदे।

**ज्योतिष्मत्** पु॰ ज्योतिरस्त्यस्य मतुप्। सूर्य्ये कुशद्वीपस्थे पर्व्वतभेदे च (मालकाङ्गनी) लताभेदे। रात्रौ, योगशास्त्रोक्ते चित्तवृत्तिभेदे च स्त्री॰ ङीप्। ज्योतिर्युक्ते त्रि॰।

**ज्योतिस्** पु॰ द्योतते द्युत्यतेऽनेन वा द्युत-इसुन् आदेरश्च-जः। सूर्य्ये, अग्नौ, मेथिकावृक्षे च। नेत्रकनीनिकाम-ध्यस्थे दर्शनसाधने, प्रदीपे, नक्षत्रे, प्रकाशे, स्वयंप्रकाशे, सर्व्वावभासके चैतन्ये च न॰।

**ज्योत्स्ना** स्त्री॰ज्योतिरस्त्यस्याम् न उपधालोपश्च। कौमुद्याम् चन्द्रकिरणे च। ङीप्। ज्योतिर्युक्तरात्रौ, (झिङ्गा) पटो-लिकायां रेणुकानामगन्धद्रव्ये च स्त्री॰।

**ज्यौतिषिक** पु॰ ज्योतिषं शास्त्रं वेत्त्यधीते वा ठक्। दैवज्ञे।

**ज्रि** अभिभवे भ्वा॰पर॰सक॰अनिट्। ज्रयति अज्रैषीत्।

**ज्री** वयोहानौ वा॰चुरा॰उभ॰पक्षे क्र्या॰प्रा॰प॰अक॰अनिट्। ज्राययति ते ज्रिणाति अजिज्रयत् त अज्रैषीत्।

**ज्वर** रोगे भ्वा॰प॰अ॰सेट् घ॰। ज्वरति अज्वारीत्। ज्वरयति ते

ज्वर पु० ज्वर-घ । स्वनामख्याते रोगभेदे ।

ज्वरघ्न पु० ज्वरं हन्ति हन-टक् । गुडूच्याम्, वास्तूके च । ज्वरनाशके त्रि० । मञ्जिष्ठायां स्त्री० ङीप् ।

ज्वरान्तक पु० अन्तयति अन्त+तत् करोति णिच् ण्वुल् ६त० । नेपालनिम्बे, आरग्वधे, लौहघटितौषधभेदे च । ज्वरनाशके त्रि०

ज्वरापहा स्त्री० ज्वरमपहन्ति अप+हन-ड । (बेलशुरठ) बिल्वशुण्ठ्याम्, बिल्वपत्रयाञ्च । ज्वरनाशके त्रि० ।

ज्वरित त्रि० ज्वरः संजातोऽस्य तारका० इतच् । ज्वरयुक्ते ।

ज्वल दीप्तौ चलने च भ्वा० पर० अक० सेट् घटा० ज्वला० । ज्वलति अज्वालीत् । ज्वलयति । ज्वलः ज्वालः ।

ज्वलन पु० ज्वलति ज्वल+युच् । वह्नौ, चित्रकवृक्षे च । भावे ल्युट् । दीप्तौ दाहे च ।

ज्वलनाश्मन् पु० ज्वलतीति ज्वलनो देदीप्यमानोऽर्ककिरण सम्पर्कात् अश्मा उपलः । सूर्यकान्तमणौ ।

ज्वलित त्रि० ज्वल-क्त । दग्धे, दीप्ते, उज्ज्वले, भास्वरे च ।

ज्वाल पु० ज्वल-ण । अग्निशिखायाम् । स्त्रीत्वमपि टाप् । दग्धान्ने दाहे च । दीप्ते त्रि० । [त्वात् । वह्नौ ।

ज्वालजिह्व पु० ज्वालः शिखेव जिह्वा यस्य दाह्यवस्तु लेहक-

ज्वालामुखी स्त्री० पीठस्थानभेदे । (ज्वालामुख्यां महाजिह्वो देव उन्मत्तभैरवः । अम्बिका सिद्धिकानाम्नी स्तनो जाल-न्धरे ममेति तन्त्रम् ।

## झ

झ पु० झग संहतौ यद्दे पिधाने वा ड । झञ्झावाते, सुर-गुरौ, इन्द्रे, ध्वनौ च । नष्टद्रव्ये त्रि० ।

झङ्कार पु० झमित्यव्यक्तशब्दस्य कारः क्र-घञ् । भ्रमरादिशब्दे

झङ्कृति स्त्री० झन् इत्यव्यक्तशब्दस्य कृतिः क्र-क्तिन् । कांस्यादेर्ध्वनौ । [ध्वनियुक्ते प्रचण्डानिले च

झञ्झा स्त्री० झमितिकृत्वा झच्यते यत्र ड । ध्वनिभेदे, तथा-

झञ्झानिल पु० झञ्झाप्रधानोऽनिलः शाक० । प्रचण्डानिले झञ्झावातादयोऽप्यत्र ।

झट संहतौ भ्वा० पर० अक० सेट् । झटति अझाटीत् अझटीत्

झटा स्त्री० झट-अच् । शीघ्रे ।

झटिति अव्य० झट क्विप् झट् इण-क्तिन् ६त० । शीघ्रे

झन(ण)त्कार पु० झन(ण)दित्यव्यक्त शब्दस्य कारः क्र-घञ् । कङ्कणादिध्वनौ । [झान्तः

झम भ्वा० पर० सक० सेट् । झमति अझमीत् । झमित्वा-झान्त्वा

झम्प पु० झम-पन्, झमिति कृत्य पतति पत-ड वा । वेगेनोर्द्धा-दिदेशादास्फालनपूर्वकपतने, लम्फे च । स्त्रीत्वमपीच्छति । पातालझम्पाश्च ताः इति वीरचरितम् । [टाप् । तत्रैवार्थे

झर पु० झृ-अप् । निर्झरे उत्सान्निर्गते जलप्रवाहे । अङ्

झर्च(र्छ)(र्झ) उक्तौ भर्त्सने च तु० पर० सक० सेट् । झर्च(र्छ)-(र्झ)ति अझर्चीं(र्छीं)(र्झीं)त् ।

झर्झर पु० झर्झ-अरन् । (झांज) इति ख्याते वाद्यभेदे पटहे, कलियुगे, नदभेदे च । वाद्यभेदे स्त्री० ङीप् ।

झलज्झला स्त्री० जलन्तं जलति अच् पृ० । हस्तिकर्णास्फालने ।

झल्ल पु० जातिभेदे ।

झल्लक पु० न० झर्झ-ण्वुल् पृ० । कांस्यवाद्यभेदे 'शिवागारे झल्लकञ्चे'ति स्मृतिः । [क्लेदे च स्त्री० टाप् ।

झल्लरी स्त्री० झर्झति झर्झ-अरन् पृ० । वाद्यभेदे । शुद्धे,

झष वधे भ्वा० पर० सक० सेट् । झषति अझाषीत् अझषीत्

झष ग्रहणे पिधाने च भ्वा० उभ० सक० सेट् । झषति-ते अझाषीत् अझषीत् ।

झष पु० झष्यते कर्म्मणि घ । मत्स्ये, मीनराशौ च । भावे-घ । तापे । अच् । खिले, वने च न० । नागवलायां स्त्री०

झषकेतु पु० झषो मीनो मकरो वा केतुर्यस्य । मदने । झषकेतनादयोऽप्यत्र ।

झाट पु० झट-णिच्-अच् । निकुञ्जे, कान्तारे, व्रणादीनां मार्ज्जने, भूम्यामलक्यां यूथिकायाञ्च स्त्री० टाप् ।

झाटल पु० झट-णिच् अलच् । शुण्ठीपारुलौ । [याम् ।

झामक न० झम-कर्म्मणि ण्वुल् । (झामा)) अतिशयपक्वेष्टका-

झावु पु० झा-इति वाति गच्छति वा-ड्डु । (झाउ) वृक्षभेदे स्वार्थे कन् । तत्रैव ।

झिङ्गाक न० लिगि-आक पृ० । (झिङ्गा) फलभेदे ।

झिङ्गिनी स्त्री० लिगि-णिनि पृ० । जिङ्गिनीवृक्षे, उल्कायाञ्च ।

झिङ्गी स्त्री० लिगि-अच् गौरा० ङीप् । जिङ्गिनीवृक्षे । (झिङ्गा)

झिञ्झी स्त्री० झिञ्झा अस्त्यस्याः अच् गौरा० ङीप् । झिल्ल्याम् (झिजिपोका) ।

झिण्टी स्त्री० झिमिति रटति अच् पृ० गौ० ङीप् । (झाटि) वृक्षभेदे । स्वार्थे कन् । अत्रैवार्थे । [(झिझिपोका)

झिरिका स्त्री० झिरीति कायति शब्दायते कै-क । झिल्ल्याम् ।

झिल्ली स्त्री० चिल्लति चिल-अच् पृ० गौरा० ङीप् । (झिझि पोका) कीटभेदे । संज्ञायां कन् । आतपरुचौ वर्त्त्याञ्च ।

झुण्ट पु० लुण्ट-अच्-पृ० । अकाण्डे द्रुमे, स्तम्बे, गुल्मे च ।

झॄ वयोहानौ दिवा० पर० अक० सेट् । झीर्य्यति अझारीत् झरा

झ्यु गतौ भ्वा० आत्म० सक० अनिट् । झ्यवते अझ्योष्ट ।

## ञ

ञ पु० वृषे, शुक्रे कुटिलगतौ, गायने, घर्घरध्वनौ च ।

## ट

ट पु० टल-ड । वामने, पादे, निस्वने च । करङ्के-टङ्कारे च न०
टक बन्धे चु० उभ० सक० सेट् इदित् । टङ्कयति-ते अटटङ्कत्-त ।
टङ्क पु० टकि घञ्-अच् वा । कोपे, कोषे, खड्गे पाषाण भेदनेऽस्त्रे च । चतुर्माषकरूपे परिमाणे जङ्घायां नील कपित्थे, खनित्रे, दर्पे च पु०न० ।
टङ्कक पु० टङ्क्यते घञ् सञ्ज्ञायां कन् । (तङ्का) रजतमुद्रायाम्
टङ्कन पु० टकि-युच् । क्षारभेदे (सोहागा) ।
टङ्कानक पु० टङ्क कोपमानयति उद्दीपयति आन-णिच् ण्वुल् । मन्दारवृक्षे (वामनगाछा) ।
टङ्कार पु० टङ्कित्यव्यक्तशब्दस्य कारः कृ-घञ् । ध्वनिभेदे धनुर्ज्याकर्षणजे शब्दे, विस्मयहेतुके शब्दे च ।
टङ्ग पु० टकि-अच् पृ० । (टाङ्गि) अस्त्रभेदे, जङ्घायाञ्च
टङ्गन पु० टकि-युच् पृ० । (सोहागा) क्षारभेदे ।
टङ्गिनी पु० टकि-णिनि पृ० । (आकनादी) पाठायाम् ।
टल विक्लवे भ्वा० पर० अक० सेट् ज्वला० । टलति अटालीत् । टलः टालः ।
टिटि(ट्टि)भ पु० टिटि(ट्टि) इत्यव्यक्तशब्दं भाषते भाष-ड । (टिटिर) पक्षिभेदे । स्वार्थे कन् अत्रैवार्थे ।
टिप नोदने चुरा० उभ० सक० सेट् । टेपयति-ते अटीटिपत्-त ।
टिप्पनी स्त्री० टिप्-क्विप् टिपा पन्यते स्तूयते अच् । टीकायाम्
टीक गतौ भ्वा० आत्म० सक० सेट् । टीकते अटीकिष्ट ।
टीका स्त्री० टीक-क । विषमपदव्याख्यानरूपायां वृत्तौ ।
ट्वल विक्लवे भ्वा० पर० अक० सेट् । ट्वलति अट्वालीत् ।

## ठ

ठ पु० महाण्डले चन्द्रबिम्बे शून्ये महेश्वरे बृहद्ध्वनौ च ।
ठक्कुर पु० देवप्रतिमायां, द्विजोपाधिभेदे च ।

## ड

ड पु० डी-ड । वाड़वाग्नौ, शब्दे, त्रासमत्स्ये, शिवे च ।
डङ्ग(ङ्गा)री स्त्री० कर्कटीभेदे ।
डप संहतौ वा चुरा० उभ० पक्षे भ्वा० आ० अक० सेट् । डपयति-ते डपते अडीडपत्-त । अडपिष्ट ।
डम्ब राशीकरणे वा चुरा उभ० पक्षे भ्वा० आत्म० सक० सेट् इदित् । डम्बयति-ते डम्बते अडडम्बत्-त अडम्बिष्ट ।
डव प्रेरणे वा० चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । इदित् । डम्बयति-ते डम्बति अडडम्बत् अडम्बीत् ।
डभ संहतौ वा चुरा० उभ० पक्षे भ्वा० आत्म० सक० सेट् इदित् । डम्भयति-ते डम्भते अडडम्भत्-त अडम्भिष्ट ।
डमरु पु० डम् इति शब्दम् ऋच्छति ऋ-उन् । वाद्यभेदे कापालिकयोगिवाद्ये, चमत्कारे च ।
डल्लक न० वंशादिरचिते पात्रभेदे (डाला) ।
डवित्थ पु० काष्ठमये मृगे ।
डह्(ह्व) पु० दह उ(ज) न्यग्वादि० नि० । लकुचे (मान्दार)
डाकिनी स्त्री० डाकानां समूहः इनि । काल्या गणभेदे ।
डामर पु० शिवोक्ते तन्त्रशास्त्रभेदे ।
डिण्डिम पु० डिण्डि इति शब्दं मिनोति प्रकाशयति मि-ड । वाद्यभेदे (धान आमला) वृक्षभेदे च । [समुद्रफेने ।
डिण्डि(ण्डी)र पु० डिण्डि इति शब्दोऽस्त्यस्य रः पृषो० दीर्घः
डित्थ पु० काष्ठमये गजे 'श्यामरूपो युवा विद्वान् सुन्दरः प्रियदर्शनः । सर्वशास्त्रार्थवेत्ता च डित्थ इत्यभिधीयते' इत्युक्ते पुरुषभेदे च ।
डिप संहतौ वा चुरा० उभ० पक्षे भ्वा० आत्म० अक० सेट् । डेपयति-ते डेपते अडीडिपत्-त ।
डिप प्रेरणे वा चु० उभ० पक्षे तुदा० कुटा० च पर० सक० सेट् । डेपयति-ते डिपति अडीडिपत्-त अडिपत् अडिपीत् ।
डिप संहतौ वा चुरा० उ० पक्षे भ्वा० आत्म० अक० सेट् इदित् । डिम्पयति-ते डिम्पते । अडिडिम्पत्-त अडिम्पिष्ट
डिव प्रेरणे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । डिम्बयति-ते डिम्बति अडिडिम्बत्-त अडिम्बीत् ।
डिभ संहतौ वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । डिम्भयति-ते डिम्भति । अडिडिम्भत् त अडिम्भीत् ।
डिम हिंसने सौ० पर० सक० सेट् । डेमति अडेमीत् ।
डिम पु० डिम-क । दृश्यकाव्यरूपनाटकभेदे ।
डिम्ब पु० डिबि-घञ् । शिशौ, अण्डे, प्लीहनि, विप्लवे, अस्त्रकलहे, एरण्डे, भयहेतुके-ध्वनौ, भये, भ्रमरे पुक्रमे च न०
डिम्बाहव पु० डिम्बतुल्य आहवः । नृपतिशून्ये युद्धे ।
डिम्भ पु० डिभि-अच् । मूर्खे, शिशौ च । स्वार्थे कन् अत्रैव अतिशिशौ स्त्री० ।
डी नभोगतौ भ्वा० आ० अक० सेट् । डयते अडयिष्ट डीनः
डी नभोगतौ दि० आ० अक० सेट् । डीयते अडयिष्ट डीनः ।
डीन न० डी-भावे क्त । पक्षिणां गतौ तद्विशेषो बृहदभिधाने ।
डुण्डुभ पु० डण्डु-इत्यनुकरणशब्दं भणति तेन भाति वा

भण-भा-वा ड (ढोडा) इति ख्याते सर्पभेदे । [अत्रैव ।

**डोर** न० दोप्+रा-ड ष०। हस्तवाह्वादौ वन्धनसूत्रे स्वार्थे कन्

## ढ

**ढ** पु० ढक्कायाम्, शुनि, तल्लाङ्गूले, निर्गुणे, ध्वनौ च । [वाद्यभेदे

**ढक्का** स्त्री० ढक् इति कायति कै-क । यशःपटहे स्वनामख्याते

**ढुण्ट** अन्वेषणे भ्वा० पर० सक० सेट् । ढुण्टति अढुण्टीत् ।

**ढुण्टि** पु० ढुण्ट-इन् । गणेशे काश्यां प्रसिद्धे ढुण्ढिराजे ।

**ढोल** पु० दोलायमानो वाद्यते ष०। स्वनामख्याते वाद्यभेदे ।

**ढौक** प्रेरणे गत्याञ्च भ्वा० आत्म० सक० सेट् । ढौकते अढौकिष्ट । णिच् अडुढौकत्-त ।

## ण

**ण** पु० णख गतौ ड ष्टणो० णत्वम् । विन्दुदेवे, भूषणे, गुणवर्ज्जिते, जलस्थाने, निर्णये, ज्ञाने च ।

**णक्ष** गतौ भ्वा० पर० सक० सेट् । नक्षति प्रणक्षति अनक्षीत् णोपदेशत्वात् सति निमित्ते णत्वम् एवमन्येषामपि ।

**णख** गतौ भ्वा० पर० सक० सेट् । णोपादेशत्वात् णत्वम् । नखति प्रणखति । अनखीत् अनाखीत् ।

**णट** नृत्ये साभिनये नटकार्य्ये हिंसयामयं न णोपदेशी । भ्वा० पर० अक० सेट् । नटति प्रणटति अनाटीत् अनटीत् । हिंसायाम् प्रनटति ।

**णट** नटकृत्ये भ्वा० पर० घटा० । नटति प्रणटति अनाटीत्-अनटीत् । णिच् नटयति अनीनटत् । [दीत् अनदीत् ।

**णद** अव्यक्तशब्दे भ्वा० पर० अक० सेट् । नदति प्रणदति अना-

**णद** भासे चु० उभ० सक० सेट् । नादयति-ते प्रणादयति अनीनदत्-त । [अनभिष्ट ।

**णभ** हिंसे भ्वा० आत्म० सक० सेट् । नभते प्रणभते अनभत्

**णभ** हिंसे दिवा० क्र्या० च पर० सक० सेट् । नभ्यति प्रणभ्यति नभ्नाति प्रणभ्नाति । अनाभीत्-अनभीत् ।

**णम** शब्दे अक० नतौ सक० भ्वा० पर० अनिट् । नमति प्रणमति अनंसीत् नत्वा नतः । [यति अनयीत् ।

**णय** गतौ रक्षणे च भ्वा० पर० सक० सेट् । नयति प्रण-

**णर्द** शब्दे भ्वा० पर० अक० सेट् नर्दति प्रणर्दति अनर्दीत् ।

**णल** वन्धे भ्वा० पर० सक० सेट् ज्वला० । नलति प्रणलति । अनालीत् । नलः नालः ।

**णश** अदर्शने नाशे च दिवा० पर० अक० वेट् । नश्यति प्रणश्यति अनेशत् अनशत् । अशान्तत्वे न णत्वम् प्रनष्टः

**णस** कौटिल्ये भ्वा० आत्म० अक० सेट् । नसते प्रणसते । अनसिष्ट । [ते । अनात्सीत् अनद्ध ।

**णह** वन्धने दिवा० उभ० सक० अनिट् । नह्यति-ते प्रणह्यति-

**णास** ध्वनौ भ्वा० आत्म० अक० सेट् । नासते प्रणासते अनासिष्ट । अननासत्-त ।

**णिक्ष** चुम्बने भ्वा० पर० सक० सेट् । निक्षति प्रणिक्षति । क्षत्सु वा णत्वमिति पाणिनिः । [अनिक्षिष्ट

**णिज** शोधने अदा० आत्म० सक० सेट् इदित् । णिङ्क्ते प्रणिङ्क्ते

**णिज** शोधने जु० उभ० सक० अनिट् । नेनेक्ति प्रणेनेक्ति । नेनिक्ते अनिजत्-अनैक्षीत् अनिक्त ।

**णिद** सन्निधाने अक० निन्दने सक० भ्वा० उभ० सेट् । नेदति-ते प्रणेदति-ते । अनेदीत् अनेदिष्ट ।

**णिद** कुत्सने भ्वा० पर० सक० सेट् इदित् । निन्दति प्रणिन्दति अनिन्दीत् । क्षत्सु वा णत्वमिति पाणिनिः ।

**णिल** दुर्वोधे तुदा० पर० सक० सेट् । निलति प्रणिलति । अनेलीत् । [अनिन्वीत् ।

**णिव** सेके भ्वा० पर० सक० सेट् इदित् । निन्वति प्रणिन्वति ।

**णिश** समाधौ भ्वा० पर० सक० सेट् । नेशति प्रणेशति अनेशीत् ।

**णिष** सेके भ्वा० पर० सक० सेट् । नेषति प्रणेषति अनेषीत् ।

**णिस** चुम्बने अदा० सक० सेट् इदित् । निंस्ते प्रणिंस्ते अनिंसीत् । क्षत्सु वा णत्वमिति पाणिनिः । [अनैषीत्

**णी** प्रापणे भ्वा० उभ० द्विक० अनिट् । नयति प्रणयति

**णील** नीलताकरणे भ्वा० पर० सक० सेट् । नीलति प्रणीलति अनीलीत् । [अनीवीत् ।

**णीव** स्थौल्ये भ्वा० पर० सक० सेट् । नीवति प्रणीवति ।

**णु** स्तुतौ अदा० पर० सक० वेट् । नौति प्रणौति अनावीत्-अनौषीत् नुनुविव । [अनौत्सीत् अनुत्त ।

**णुद** प्रेरणे तुदा० उभ० सक० अनिट् । नुदति-ते प्रणुदति

**णू** स्तुतौ तु० कु० पर० सक० सेट् । नुवति प्रणुवति अनुवीत्

**णेद** सन्निधाने उभ० सक० सेट् । नेदति-ते प्रणेदति-ते ।

**णेष** गतौ भ्वा० आ० अक० सेट् । नेषते प्रणेषते । अनेषिष्ट अनिनेषत् त । एते धातवः नादिका अपि सति हेतौ णत्व कार्य्यद्योतनार्थं गणे णोपदेशितया पठिताः प्रयोगे तु दन्त्यनादय एव पुनः प्रादियोगे णत्वमुपयान्ति ।

## त

**त** पु० तक-सहने हासे वा ड । चोरे, अन्दते, पुच्छे, क्रोडे, म्लेच्छे, रत्ने, शृगालपुच्छे च । तरले, पुण्ये स्त्री० न० ।

तक सहने हासे च भ्वा०पर०सक०सेट्। तकति अताकीत् अतकीत्

तक दैःस्थ्ये भ्वा० पर० अक० सेट् इदित्। तङ्कति अतङ्कीत्

तक्र न० तक-रक्। चतुर्थांशजलयोगेन मथिते दधि।

तक्रकूर्चिका स्त्री० (छाना) पक्वे उष्णदुग्धे तक्रयोगेण जातायाम् आमिक्षायाम्।

तक्ष कार्श्ये वा भ्वा० पक्षे स्वा० पर० सक० वेट्। तक्षति तक्ष्णोति अतक्षीत्-तक्षिता अताक्षीत् तष्टा। भर्त्सने तु संतक्षति

तक्षक पु० तक्ष-ण्वुल्। विश्वकर्म्मणि, वर्द्धकौ, (छुतार) कश्यपस्य सुते नागभेदे च।

तक्षणी स्त्री० तक्ष्यतेऽनया ल्युट्। वास्याम्, (वाइस) काष्ठतक्षणसाधने अस्त्रभेदे च। [नक्षत्रे च।

तक्षन् पु० तक्ष-कनिन्। त्वष्टरि, वर्द्धकौ, विश्वकर्मणि, चित्रा-

तक्षशिला स्त्री० सिन्धुदेशे नगरीभेदे।

तग गतौ भ्वा० पर० सक० सेट् इदित्। तङ्गति अतङ्गीत्

तगर पु० गॄ-अच् तस्य क्रोड़स्य गरः। (टगर) इति ख्याते।

तङ्कन न० तकि-ल्युट्। दुःखेन जीवने।

तच्छील त्रि० तत् शीलं यस्य। स्वभावतः फलनिरपेक्षतया प्रवर्त्तमाने तत्स्वभावे जने।

तट उच्छ्राये भ्वा० पर०सक०सेट्। तटति अताटीत्-अतटीत्

तट त्रि० तट-अच्। कूले नद्यादेस्तीरे। अमरमते स्त्रियां ङीप्।

तट आहतौ चु० उभ०सक० सेट्। ताटयति-ते अतीतटत् त

तटस्थ त्रि० तटे तिष्ठति स्था-क। तीरस्थे, समीपस्थे, मध्यमप्रविश्यैवान्तिकस्थे, स्वरूपातिरिक्ते विशेषणे च।

तटाक पु० तटमकति अक-वक्रगतौ अण्। तड़ागे।

तटाग पु० तटमगति अग-वक्रगतौ अण्। जलाशयभेदे तडागे

तटिनी स्त्री०तट+अस्त्यर्थे इनि। नद्याम्। [तड़त् त

तड दीप्तौ आहतौ च चु०उभ०सक० सेट्। ताड़यति ते अती-

तड आहतौ भ्वा०आत्म०सक०सेट् इदित्। तण्डते अतण्डिष्ट

तडाक पु० ताड्यते आहन्यते तटोऽनेन तड-आकन् नि०। जलाशयभेदे तड़ागे।

तडाग पु० तड-नि०। 'प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः। जलाशयस्तडागः स्या'दित्युक्ते 'शतेन धनुर्भिः पुष्करिणी, त्रिभिर्दीर्घिका, चतुर्भिर्द्रोणः, पञ्चभिस्तड़ाग' इति वशिष्ठोक्ते पञ्चशतान्यूनधनुर्मिते द्विसहस्रान्यूनहस्तचेत्फलके पञ्चचत्वारिंशद्धस्तान्यूनदीर्घविस्तारे जलाशये, कूटयन्त्रे च।

तडा(टा)घात पु०'उच्चैः करिकराघातं तडा(टा)घातं विदुर्बुधा इत्युक्तायां वप्रक्रीडायाम् अभ्यसन्ति 'तडा(टा)घातमिति कु०

तडित् स्त्री० ताड़यत्यभ्रम् उणा० तड़-इति निः ह्रस्वः। विद्युति

तडित्वत् पु० तड़ित् अस्त्यस्य मतुप् मस्य वः। मेघे, मुस्तके च।

तण्डक पु० तडि-ण्वुल्। खञ्जने, फेने, समासप्राये वाक्ये, गृहदारुणि, तरुस्कन्धे च। मायाबहुले, उपघातके च जने त्रि०। परिष्कारे पु० न०।

तण्डुल पु० तडि-उलच्। धान्यादिसारे-निस्तुषे धान्यादौ, तण्डुलीयशाके च। विडङ्गे पु०स्त्री० टाप्।

तण्डुलीय पु०तण्डुलाय हितं छ। (तुड्नटे) (चापानटे) शाकभेदे, विडङ्गे च। स्वार्थे कन् उक्तशाके। [विडङ्गे

तण्डुलीयिका स्त्री० तण्डुलाय हिता छ संज्ञायाम् कन्।

तण्डुलेय तण्डुलाय हिता ढ। तण्डुलीयशाके। यत्। तण्डुल्योऽप्यत्र

तत् अव्य० तन-क्विप्। हेतौ। [श्यौ च त्रि०

तत न० तन-क्त। वीणादिवाद्ये। वायौ पु०। व्याप्ते, विस्तृते,

ततपत्री स्त्री० ततं पत्रं यस्याः। कदल्याम्।

ततस्त्य त्रि० अव्ययात् त्यप्। तत्र भवे।

तति स्त्री० तन-क्तिन्। श्रेणौ।

तत्काल पु० सः कालः। वर्त्तमानकाले।

तत्कालधी त्रि० तस्मिन् उचिते काले धीर्बुद्धिर्यस्य। अनिष्टादिनिवारणाय झटिति प्रत्युत्पन्नबुद्धौ जने।

तत्क्रियः त्रि० वेतनं विना स्वभावतः सा क्रिया कर्म्म यस्य। कर्म्मकरणशीले, वेतनं विना कर्म्मकारे।

तत्क्षण पु० स चासौ क्षणः कालः। सद्योऽर्थे।

तत्त्व(त्व) न०तन-क्विप् ततो भावः तस्य भावो वा त्व वा तलोपः। याथार्थ्ये, स्वरूपे, अनारोपितस्वरूपे, परमात्मनि, ब्रह्मणि 'तदिति सर्व्वनाम सर्व्वं च ब्रह्म तस्य नाम सर्व्वनाम तस्य भावः। ब्रह्मत्वे। विलम्बिते नृत्यवाद्यादौ, चेतसि, वस्तुनि, साङ्ख्योक्तेषु प्रकृत्यादिषु पञ्चविंशतौ पदार्थेषु।

तत्त्वज्ञान न० ६त०। यथार्थज्ञाने, ब्रह्मज्ञाने च।

तत्पर त्रि० तत्परमुत्तमं यस्य। तद्गते, सदासक्ते च।

तत्परायण त्रि० तदेव परमयनं यस्य स्थलम्। तदासक्ते।

तत्पुरुष पु० व्याकरणोक्ते समासभेदे।

तत्फल पु० तनोति क्विप् तत् विस्तीर्णं फलति विकाशते अच्। पुष्पमात्रविकाशिनि कुवलये, हपुषौषधौ चोरकौषधौ च।

तत्र अव्य० तस्मिन् कालादौ त्रल्। तस्मिन्नित्यर्थे।

तत्रत्य त्रि० तत्र भवः अव्ययात् त्यप्। तत्रभवे वस्तुनि।

तत्रभवत् त्रि० सः पूज्यो भवान् प्रथमार्थे त्रल् ततः कर्म०। पूज्ये स्त्रियां ङीप्। तत्रभवती 'तत्रापि तत्रभवती'ति नैषधम्।

तथा अव्य० तेन प्रकारेण प्रकारे थाल्। साम्ये, अभ्युपगमे, प्रश्नप्रतिवाक्ये, समुच्चये, निश्चये च।

**तथागत** पु० यथा पुनरावृत्तिर्न भवति तथा गतो ज्ञातः । बुद्धमुनौ
**तथाच** अव्य० तथेति चिनोति चि-ड । पूर्व्वोक्तार्थदृढीकरणे
**तथाहि** अव्य० तथा च हि च द्व० । निदर्शने प्रसिद्धमेवेत्यर्थे
**तथ्य** न० । तथा तत्र साधु यत् । सत्ये । तद्वति त्रि० ।
**तद्** त्रि० तन-अदि डिच्च । पूर्व्वोक्ते बुद्धिस्थे, परामर्शयोग्ये विप्रकृष्टविषये च । ब्रह्मणि न० । 'ओं तत्सदिति निर्द्देशो ब्रह्मण' इति गीता ।
**तदा** अव्य० तस्मिन् काले दाच् । तस्मिन् काले इत्यर्थे ।
**तदात्मन्** त्रि० स आत्मा यस्य । तत्स्वरूपे ।
**तदात्व** न० तदेत्यस्य भावः तदा+त्व । तत्काले ।
**तदानीम्** अ० तस्मिन् काले-तद्+दानीम् । तदेत्यर्थे ।
**तद्गत** त्रि० तस्मिन् गत आसक्तः । तत्परे एकान्तचित्ततया तत्रासक्ते
**तद्गुण** पु० अलङ्कारोक्ते अर्थालङ्कारभेदे ।
**तद्गुणसंविज्ञान** पु० तत्र बहुव्रीहौ गुणस्य गुणीभूतस्य (विशेषणस्य) संविज्ञानं विशेष्यपारतन्त्र्येण बोधनं यत्र । व्याकरणोक्ते बहुव्रीहिसमासभेदे भवति च लम्बकर्णमानयेत्यादौ गुणीभूतस्य कर्णस्याप्यानयनम् ।
**तद्धन** त्रि० तदेव धनं यस्य । कृपणे स हि सर्व्वमेव धनमप्यर्प्पितयावधार्य्य आत्मनि तद्धनत्वमेवाभिमन्यते ।
**तद्धर्म्मन्** त्रि० उद्देश्यान्तरं विनाऽपि स एव धर्म्मो यस्य अनिच् समा० । स्वधर्म्मोऽयमिति बुद्ध्या धर्म्माय प्रवर्त्तमाने जने ।
**तद्धित** पु० तेभ्यो विग्रहस्थतत्तत्प्रकृतीनां स्वविशिष्टतया प्रयोगेभ्यः हितः । व्याकरणोक्ते प्रत्ययभेदे । [न्द्रीत् ।
**तद्रि** अवसादे मोहे सौ०पर०अक०सेट् इदित् । तन्द्रति अतन्द्रीत् ।
**तद्वत्** अव्य० तेन तुल्यं या तुल्या सा चेत् क्रियेत्यर्थे वति । तत्सदृशक्रियावति । तस्य तत्र वा तुल्यमित्यर्थे वति । तत्तुल्येऽर्थे यथा तद्वत् शिवस्य विभुता, तद्वत् शिवे भक्तिरित्यादि । तद्-अस्त्यर्थे मतुप् मस्य वः । तद्विशिष्टे त्रि० ।
**तन** विस्तृतौ तना०उभ०सक०सेट् । तनोति तनुते अतानीत्-अतनीत् अतत-अतनिष्ट ततान तेने । तनित्वा-तान्त्वा ।
**तन** उपकारे श्रद्धायां शब्दे आघाते च वा० चुरा ०उभ० पक्षे भ्वा०सक०सेट् । तानयति ते तनति अतीतनत् त अतानीत-अतनीत् । उपसर्गात् दैर्घ्ये । आतानयति दीर्घो भवति ।
**तनय** पु० तनोति कुलम् तन-कयन् । पुत्रे । दुहितरि, चक्रकुल्यायां, लतायां, घृतकुमार्य्याञ्च स्त्री०टाप् ।
**तनिमन्** पु० तनोर्भावः इमनिच् । तनुत्वे, कार्श्ये च ।
**तनु** स्त्री०तन-उ । देहे, मूर्त्तौ वा ऊङ्, तनूः । अल्पे, विरले, कृशे च त्रि० । स्त्रियां वा ङीप् तन्वी तनुः ।
**तनुच्छाय** पु० तन्वी छाया यस्य । वर्व्वुरवृक्षे । इत० । देहच्छायायां स्त्री० न० । [स्त्री० देहजातमात्रे त्रि० ।
**तनु(नू)ज** पु०तनोः तन्वा वा जायते जन-ड । पुत्रे । दुहितरि
**तनुत्र** न०तनुं देहं त्रायते त्रै-क । कवचे । ल्युट् । तनुत्राणमप्यत्र
**तनुत्वचा** स्त्री० तन्वी त्वचा वल्कलं यस्याः । क्षुद्राग्निमन्थे ।
**तनुपत्र** पु० तनूनि कृशानि पत्राणि यस्याः । इङ्गुदीवृक्षे ।
**तनुभस्त्रा** स्त्री० तनोर्देहस्य भस्त्रेव । नासिकायाम् । कर्म्म० । क्षुद्रभस्त्रायाम् ।
**तनुभृत्** पु० तनुं देहं बिभर्त्ति आत्मत्वेनाभिमन्यते भृ-क्विप् । जीवे 'या दुस्त्यजा तनुभृतामिति भागवतम् ।
**तनुमध्या** स्त्री० तनु कृशं मध्यं यस्याः । कृशमध्यायां स्त्रियां, षड्क्षरपादके छन्दोभेदे च । [च
**तनुवार** न० तनुं देहं वृणोति वृ-अण् उप० । कवचे, सन्नाहे
**तनुवीज** पु० तनूनि कृशानि वीजानि यस्य । वीजवदरे ।
**तनुस्** न० तन-उसि । देहे ।
**तनूनपात्(द्)** पु० तनूं न पातयति पत-णिच्-क्विप् । अग्नौ, जठरस्थत्वेऽपि भुक्तान्नपाचनादस्य देहापातकत्वम् । तनूं न पाति रक्षति पा-शतृ । वह्नौ । अत्र पक्षे तनूनपान्तौ इत्यादिभेदः तन्वा ऊनं कृशं पाति तनूनपं घृतादि तदत्ति अद-क्विप् । वह्नौ अस्मिन् पक्षे तनूनपादौ इत्यादिभेदः ।
**तनूरुह** न० तनौ रोहति रुह-क । लोमनि पक्षिणां पक्षे च तनुसत्फुल्लतनूरुहीकृतामिति नैषधम् । [तञ्चा
**तञ्च** गतौ भ्वा० पर० सक० । तञ्चति अतञ्चीत् । तञ्चित्वा
**तञ्च** सङ्कोचने रुधा०पर० सक०वेट् । पाणिनीयगणे अनूक् साहचर्य्यादयं वेडेव वोपदेवगणे उदित्करणं प्रामादिकम् । तनक्ति अतञ्चीत् अताङ्क्षीत् ।
**तञ्ज** सङ्कोचने रुधा० पर० सक० । पाणिनीयगणे (तनञ्चू) इत्यत्र तनञ्जू इति पाठान्तरम् अनञ्जूसाहचर्य्यात् अयमुदित्त्वात् वेडेव । तनक्ति अतञ्जीत् अताङ्क्षीत् ।
**तन्तु** पु० तन-तुन् । ग्राहे, अपत्ये, सन्ततौ, सूत्रे च ।
**तन्तुकीट** पु० तन्तोः कीटः । (गुटिकोका) कीटभेदे ।
**तन्तुनाभ** पु०तन्तुर्नाभावस्य अच् समा० । (माकड़सा)लूतायाम्
**तन्तुनिर्य्यास** पु० तन्तुरिव निर्य्यासो यस्य । तालवृक्षे ।
**तन्तुपर्व्वन्** न० तन्तोः यज्ञोपवीतस्य दानरूपं पर्व्व । चान्द्रश्रावणपौर्णमास्याम् तद्दिने हि वामनाय यज्ञोपवीतदानोत्सवः स्मृतौ विहितः ।
**तन्तुभ** पु० तन्तुना सन्तत्या भाति भा-क । सर्षपे, वत्से च ।
**तन्तुर(ल)** न० तन्तुर्विद्यतेऽस्य र-लच् वा । मृणाले ।

**तन्तुवाप** पु० तन्तून् वपति वप-अण् उप० । तन्तुवाये (तांति)

**तन्तुवाय** पु० तन्तून् वयति वे-अण् । (तांति) जातिभेदे ।

**तन्तुविग्रहा** स्त्री० तन्तवो विग्रहे यस्याः । कदल्याम् । तत्-त्वचि हि बहुसूत्राणि प्रादुर्भवन्ति । [गृहे

**तन्तुशाला** स्त्री० तन्तूनां वपनाय शाला ।(तांतघर) तन्तुवपन

**तन्तुसन्तत** त्रि० तन्तुभिः सन्ततं व्याप्तम् । सूतवस्त्रे ।

**तन्तुसार** तन्तवइव सारो मज्जास्य । गुवाकवृक्षे ।

**तन्त्र** न० तन-ष्ट्रन् । सिद्धान्ते, ओषधौ, कुटुम्बकार्य्ये, प्रधाने, तन्तुवाये, परिच्छदे, हेतौ, उभयार्थं सकृत्प्रवृत्तौ, इति कर्त्तव्यतायाम् राष्ट्रे, परच्छन्दे, करणे, अर्थसाधके, तन्त्रौ, स्वराष्ट्रचिन्तायाम् परिजने, तन्त्रवायशलाकायाम् प्रबन्धे, शपथे, धने, गृहे, वपनसाधने, कुले, वेदशाखाभेदे, वेदादिशास्त्रे, स्वनामख्याते शिवाद्युक्ते शास्त्रे च ।

**तन्त्रक** न० तन्त्रादचिरादपहृतम् कन् । नवीने वस्त्रे ।

**तन्त्रता** स्त्री० तन्त्रस्य भावः तल् । अनेकोद्देशेन सकृत्प्रवृत्तौ यथा तर्पणपूजनाद्यनेककर्म्मोद्देशेन सकृत्स्नाने कृते सर्व्व कर्म्माङ्गस्नानसिद्धिः ।

**तन्त्रवाप(य)** पु० तन्त्राणि तन्तून् वप(य)ति वप-वे-वा अण् उप० । तन्तुवाये (तांति) । [गुडूच्याम्

**तन्त्रिका** स्त्री०तन्त्रयते तन्त्र-ई ततः स्वार्थे कन् अणो ह्रस्वः।

**तन्त्री** स्त्री० तन्त्रि-ई । गुडूच्याम्, वीणाभेदे, देहशिरायाम्, रज्ज्वाम्, नदीभेदे, युवतीभेदे च ।

**तन्द्रा** स्त्री० सौ० तद्रि-अ । आलस्ये, निद्रायाम्, प्रमीलायाम्

**तन्द्रालु** त्रि० सौ०तद्रि-आलुच् । निद्राशीले ।

**तन्द्रि(न्द्री)** स्त्री०सौ०तद्रि-इन् वा ङीप । आलस्ये निद्रायाम्

**तन्मय** त्रि० तदेव मयट् । तद्भावापन्ने अभेदे ।

**तन्मात्र** त्रि० तदेव मयूर० । तदात्मके । सा मात्रा यस्मिन् । साङ्ख्योक्तेषु 'तस्मिंस्तस्मिंश्च तन्मात्रा तेन तन्मात्रता स्मृता । तन्मात्राण्यविशेषाणि अविशेषास्ततोहि ते । न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः, इत्युक्तेषु पञ्चसु शब्दादि-कारणीभूतेषु भूतेषु ।

**तन्वी** स्त्री० तनु+ङीप् पृश्निपर्ण्याम् । तनुत्वगुणयुक्तायाम् कृशाङ्गस्त्रियाञ्च । [अतपिष्ट ।

**तप** दाहे भ्वा०उभ०सक० सेट् । तपति-ते अतापीत्-अतपीत्

**तप** उपतापे सक० ऐश्वर्य्ये अ० दि०आ०अनिट् । तप्यते अतप्त।

**तप** दाहे चु० उ०सक०सेट् । तापयति-ते अतीतपत-त ।

**तप** उपतापे सक० ऐश्वर्य्ये अक० भ्वा० पर० अनिट् । तपति अताप्सीत् ।

**तप** पु० तप-अच् । ग्रीष्मे ज्यैष्ठाषाढ़ात्मके ऋतौ ।

**तपती** स्त्री०तप-शतृ नि० । छायागर्भजाम् सूर्य्यपत्न्यां, नदीभेदे, सूर्य्यसुतायाञ्च यद्योगात् कुरवस्तापत्या उच्यन्ते ।

**तपन** पु० तप-ल्यु । सूर्य्ये, तापे, भल्लातकवृक्षे, नरकभेदे, ग्रीष्मऋतौ, अर्कवृक्षे, क्षुद्राग्निमन्थवृक्षे, सूर्य्यकान्तमणौ च ।

**तपनतनय** पु० ६त० । यमे । यमुनायां, शमीवृक्षे च स्त्री०।

**तपनी** स्त्री० तप-ल्यु गौरा० ङीष् । गोदावरीनद्याम् ।

**तपनीय** न० तप-अनीयर् । स्वर्णे । स्वार्थे कन् । अत्रैवार्थे ।

**तपस्** पु० तप-असुन् ।चान्द्रे माघे मासि, शिशिरे ऋतौ, जनलोकोपरिस्थे लोकभेदे च। आलोचने, स तपोऽकुरुतेति श्रुतिः स्वाश्रमविहितधर्म्मे, वेधे क्लेशजनके चान्द्रायणादौ कर्म्मणि, ज्योतिषोक्ते लग्नतोनवमस्थाने च न० ।

**तपस्य** पु० तपसि तपश्चरणाय साधुः अनतिशीतोष्णत्वात् यत् । फाल्गुने मासि। तपसि माघे भवः यत्। कुन्दपुष्प वृक्षे तपश्चरणे साधुर्यत् । तपस्यभिरते त्रि० । [याञ्च

**तपस्या** स्त्री० तपश्चरति तपस्+क्यच्-अ । तपश्चरणे, व्रतचर्य्या

**तपस्विन्** त्रि० तपस्+अस्त्यर्थे विनि । तापसे, चान्द्रायणादिव्रतधारिणि, अनुकम्प्ये, दीने, प्रशस्ततपोवति च। घृतकरञ्जे, मत्स्यभेदे, चटके च पु० ।

**तपस्विनी** स्त्री० तपस्+विनि ङीप् । तपोयुक्तायां स्त्रियां, जटामांस्यां, कटुरोहिण्याम्, दीनायाम्, तुकम्प्यायां, स्त्रियाञ्च

**तपात्यय** पु० तपस्य ग्रीष्मस्यात्ययोऽवसानं यत्र काले । वर्षाकाले 'तपात्यये वारिभिरुक्षिते'ति कुमारः ।

**तपोधन** पु०तपोधनमतीवेष्टत्वात् यस्य। तापसे, दमनवृक्षे च

**तपोवन** न० ६त०। तापससेव्ये वनभेदे, तन्नामके तीर्थभेदे च

**तप्तकुम्भ** पु० तप्तः कुम्भो यत्र । नरकभेदे ।

**तप्तकृच्छ्र** न० 'षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत्। पलमेकं पिबेत् सर्पिस्तप्तकृच्छ्रं विधीयते इत्युक्ते व्रतभेदे, 'पयो घृतमुदकं वायुं तप्तं प्रतित्र्यहं पिबेत् स तप्तकृच्छ्र इति गौतमोक्तेः पुंस्त्वमपि । [यत्र । नरकभेदे ।

**तप्तपाषाणकुण्ड** न० तप्ताः पाषाणा यत्र तादृशं कुण्डं

**तप्तवालुक** न० तप्ता वालुका यत्र । नरकभेदे ।

**तप्तमुद्रा** स्त्री० तप्ता मुद्रा चिह्नम् । वैष्णवोचितधर्मारूपेऽग्नितापितलौहशलाकादिनां कृते भगवदायुधाकारे 'कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम्। चक्रादिचिह्नितं भूप! धारयेत् वैष्णवो नर इति मल्लारखण्डोक्ते चिह्नभेदे ।

**तप्तसुराकुण्ड** न०तप्तायाः सुरायाः कुण्डं यत्र।नरकभेदे।

**तप्तसूर्म्मिकुण्ड** न० तप्तसूर्म्याः कुण्डं यत्र । नरकभेदे ।

**तम** खेदे अक० इच्छायां सक० दिवा० शमा० पर० सेट् । ताम्यति । अतमत्-अतमीत् । तमित्वा तान्त्वा ।

**तम** पु० ताम्यति तम-अच् । तमोगुणे, मतान्तरे, राहौ च । तमालवृक्षे च रात्रौ स्त्री० । अन्धकारे पादाग्रे च न० ।

**तमःप्रभ** पु० तमस इव प्रभा यस्य । नरकभेदे । नरकभूमौ स्त्री०

**तमस्** न० तम-असुन् । नेत्रवृत्तिरोधके नैशादिध्वान्ते, शोके, पापे, कार्य्याकार्य्याविवेके, विशेषदर्शनविरोधिदोषे सांख्योक्ते गुरुवरणकमेव तम इत्युक्ते गुणभेदे राहौ च । [इति रघुः

**तमस** न० तम-असच् । अन्धकारे । नदीभेदे स्त्री० तमसापगाया

**तमस्विनी** स्त्री० तमस् अस्त्यर्थे विनि । रात्रौ ।

**तमाल** पु० तम-कालन् । स्वनामख्याते वृक्षे, तिलके, वरुणवृक्षे, खड्गे, कृष्णखदिरे च । वंशत्वचि पु०न० । ताम्बूलवल्लग्राम्, वरुणवृक्षे च स्त्री० ङीप् ।

**तमालक** पु० तमाल+स्वार्थे कन् । तमालवृक्षे, सुनिषण्णशाके, न० । पत्रके (तेजपात) पु० न० । [च । तमालवृक्षे पु०

**तमालपत्र** न० तमालस्य पत्रमिव । तिलके, (तेजपात) पत्रके

**तमि(मी)** स्त्री० तम-इन् वा ङीप् । रात्रौ ।

**तमिस्र** न० तमोऽस्त्यत्र र नि० । अन्धकारे, कोपे, सर्व्वाहङ्कारमूले अज्ञाने च । सान्धकाररात्रौ स्त्री० ।

**तमिस्रपक्ष** पु० तमिस्रप्रधानः पक्ष शाक० । कृष्णपक्षे । प्रथमतोऽन्धकारस्याविर्भावात् तस्य तत्प्रधानत्वम् ।

**तमोघ्न** पु० तमोऽन्धकारं मोहमज्ञानं वा हन्ति हन-टक् । सूर्य्ये, वह्नौ, चन्द्रे, बुद्धे, विष्णौ, शिवे च ।

**तमोज्योतिस्** पु० तमसि अन्धकारे ज्योतिरस्य । खद्योते कीटे

**तमोऽपह** पु० तमोऽन्धकारमज्ञानं वापहन्ति अप+हन-ड । सूर्य्ये, चन्द्रे, वह्नौ, ज्ञाने च । तमोनुदादयोऽप्यत्र ।

**तम्ब** गतौ भ्वा० पर० सक० सेट् । तम्बति अतम्बीत् ।

**तय** गतौ रक्षणे च भ्वा० आ० सक० सेट् । तयते अतयिष्ट ।

**तरक्षु** पु० तरं गतिं मार्गं वा क्षिणोति मितद्रु० डु । मृगादने क्षुद्रव्याघ्रे । [तिर्य्यगूर्द्धादिप्लवने ।

**तरङ्ग** पु० तॄ-अङ्गच् । (ढेउ) ऊर्म्मौ वायुना जलस्य सञ्चालनेन

**तरङ्गिणी** स्त्री० तरङ्ग+अस्त्यर्थे इनि । नद्याम् । [चञ्चले च

**तरङ्गित** त्रि० तरङ्गः संजातोऽस्य तार० इतच । जाततरङ्गे,

**तरण** पु० तॄ-ल्यु । भेलके (डोङ्गा) स्वर्गे च । भावे ल्युट् । पारगमने, प्लवने च न० ।

**तरणि** पु० तॄ-अनि । सूर्य्ये, भेलके, अर्कवृक्षे, किरणे, ताम्रे च । नौकायां, घृतकुमार्य्याम् स्त्री० वा ङीप् । ङीबन्तः पद्मचारिण्यामपि ।

**तरण्ड** पु० न० तॄ-अण्डच् । वड़िशीसूत्रबन्धनकाष्ठे, (छिप) प्लवे च । देशभेदे पु० । नौकायां त्रि० स्त्रीत्वपक्षे ङीप् ।

**तरतम** त्रि० न्यूनाधिकभावान्वितेऽर्थे । तारतम्येन वर्त्तमान इति शारीरकभाष्यम् । [स्त्री० ङीप् ।

**तरन्त** पु० तॄ-झच् । समुद्रे, प्लवे, भेके राक्षसे च । नौकायां

**तरपण्य** न० तरस्य नद्यादिपारयानस्य पण्यं शुल्कम् । नद्यादेः पारयानार्थे देये शुल्के ।

**तरल** पु० तॄ-अलच् । हारमध्यस्थे मणौ, हारे, तले च । चपले, कामुके, विस्तारे, भास्वरे, सध्यन्तून्ये-द्रव्ये, द्रवीभूतपदार्थे च त्रि० । यवाग्वाम्, सुरायाञ्च स्त्री० ।

**तरलित** त्रि० तरलइवाचरति तरल+क्विप्-क्त । आन्दोलिते कम्पिते, धूते, लुलिते च । [भेदे ।

**तरवारि** पु० तरं शत्रूणां गतिं वारयति वृ-णिच् इन् । खड्ग-

**तरस्** न० तॄ-कारणादौ असुन् । जले, वेगे, सवेगगमने, रोगे, तीरे, वानरे च । [णस्य बलप्रदत्वात् तथात्वम्

**तरस** न० तरो वेगोपलक्षितं बलमस्त्यस्मिन् अच् । मांसे, तद्भक्ष-

**तरसा** अव्य० तॄ-असाच् । झटितीत्यर्थे शैघ्र्ये ।

**तरस्विन्** पु० तरस्+अस्त्यर्थे विनि । वायौ, गरुड़े च । वेगवति, शूरे च त्रि० । [वसनदशायाञ्च ।

**तरि(री)** स्त्री० तॄ-इ वा ङीप् । नौकायाम्, वसनपेटके,

**तरिक** पु० तराय पारगमनाय हितः ठन् । प्लवे, भेलके । नौकायां स्त्री० टाप् ।

**तरी** स्त्री० तॄ-ई । नौकायाम् । अङीबन्तत्वान्न सुलोपादि ।

**तरु** पु० तॄ-उ । वृक्षे । [एवं वृक्षखण्डादयोऽप्यत्र ।

**तरु(ष)खण्ड** पु० तरूणां समूहः तरु+(ष)खण्ड । वृक्षसमूहे

**तरुण** पु० तॄ-उनन् । एरण्डवृक्षे, स्थूलजीरके च । कुब्जपुष्पे न० । नूतने यूनि च त्रि० । युवत्यां स्त्री० ङीप् । ङीबन्तस्तु घृतकुमार्य्यां, दन्तीवृक्षे (सेओती) पुष्पवृक्षे च ।

**तरुणज्वर** पु० 'आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः' इत्युक्ते सप्तरात्रपर्य्यन्ते ज्वरे ।

**तरुरुहा** स्त्री० तरुषु रोहति रुह-क । वन्दाके (परगाछा)

**तरुवल्ली** स्त्री० तरोर्वल्लीव । वन्दाके ।

**तरुविलासिनी** स्त्री० तरोर्विलासिनीव । नवमल्लिकायाम् ।

**तर्क** पु० तर्क-घञ् । आकाङ्क्षायां, वितर्के, बुद्धिसाध्ये विचारे, व्याप्यारोपणेन व्यापकप्रसञ्जने, यथा अत्र यदि वह्निर्न स्यात् धूमोऽपि न स्यात् । मीमांसादिशास्त्रे, आगमाविरोधिन्यायेन आगमार्थपरीक्षणे, व्यभिचारशङ्कानिवर्त्तके न्यायोक्ते आत्माश्रयादिपञ्चके, अविज्ञातार्थे कारणोप-

पतितसत्त्वज्ञानार्थे-ऊह्ये, उत्प्रेक्षायाञ्च। [अततर्कत्-त।
तर्क दीप्तौ अक० वितर्के सक० चुरा०उभ० सेट्। तर्कयति ते
तर्कविद्या स्त्री० तद्व०। गौतमोक्तानां प्रमाणप्रमेयादीनां षोड़शानां पदार्थानां विद्यायां, काणादाद्युक्तषट्पदार्थादिविद्यायाञ्च।
तर्कारी स्त्री० तर्कमृच्छति ऋ-अण्। जयन्तीवृक्षे।
तर्कु पु० कृत-उ नि०। (टेको) इति ख्याते यन्त्रभेदे।
तर्कुलासक पु० तर्कुं लासयति चालयति लस-णिच्-ण्वुल्। तर्कुचालके यन्त्रे (चरका)।
तर्ज्ज भर्त्सने भ्वा० पर० सक० सेट्। तर्ज्जति अतर्ज्जीत्।
तर्ज्ज भर्त्सने चु०आ० सक० सेट्। तर्ज्जयते अततर्ज्जत।
तर्जनी स्त्री०तर्ज्जतेऽनया तर्ज-ल्युट्। अङ्गुष्ठान्तिकस्थे अङ्गुलौ
तर्ण पु० तृण-अच्। वत्से। ण्वुल्। गोवत्से, 'कृष्णसनाथा तर्णकपङ्क्तिरिति छन्दोम०। सद्योजाते-शिशौ च।
तर्द्द हिंसे भ्वा०पर०सक०सेट्। तर्द्दति अतर्द्दीत्।
तर्दू स्त्री० तर्द्द-ऊट्-श च। काष्ठनिर्म्मितायां दर्व्याम्।
तर्पण न० तृप-ल्युट्। तृप्तौ। णिच्-ल्युट्। प्रीणने, गृहस्थकर्त्तव्ये पञ्चयज्ञान्तर्गते पितृयज्ञे, यज्ञकाष्ठे च।
तर्पिणी स्त्री० तर्पयति प्रीणयति णिनि। पद्मचारिण्योषधौ
तर्ब गतौ भ्वा०पर०सक०सेट्। तर्बति अतर्बीत्।
तर्म्मन् न०तृ-मनिन्। यूपाग्रभागे। [माना'दिति भागवतम्
तर्ष पु० तृष-घञ्। अभिलाषे तृष्णायाञ्च 'निवृत्ततर्षैरुपगीय-
तर्हि अव्य० तद्+र्हिल्। तस्मिन् काले इत्यर्थे।
तल प्रतिष्ठायां वा चुरा०उभ०पक्षे भ्वा०पर० अक० सेट्। तालयति ते तलति। अतीतलत् त अतालीत्।
तल पु० न० तल-अच्। स्वरूपे, यथा भूमितलं करतलम्। अधोभागे, चपेटे, तालवृक्षे च। खड्गमुष्टौ, आधारे, स्वभावे च पु०। वने न०। ज्याघातवारणे, गर्त्ते च स्त्री०न०।
तलप्रहार पु० तलेन चपेटेन प्रहारः प्र+हृ-घञ्। (चापड़मारा) चपेटाघाते।
तलातल न० अतलादिषु मध्ये पञ्चमे पाताले।
तलित न० तल+तारका० इतच्। भ्रष्टमांसे। [खले च लि०
तलिन न० तल-इनन्। शय्यायाम्, विरले, स्तोके, तुच्छे,
तलुन पु० तृ-उनन् रस लः। वायौ। यूनि, तरुणे च लि० युवत्यां स्त्री० ङीप्।
तल्प पु०न०तल-पक्। शय्यायाम्, अट्टालिकायां, दारेषु च।
तल्पकीट पु० ६त०। (छारपोका) कीटभेदे।
तल्लज पु० लज-कान्तौ अच् तद्वत् लजः। प्रशस्ते उत्तरपदस्थोयम् प्रशंसावचनैश्चेति समासेऽपि नियतलिङ्गएव तेन ब्राह्मणीतल्लज इत्येव।
तष्ट त्रि० तक्ष-क्त। तनूकृते द्विधाकृते, गुणिते च।
तष्टृ पु०तक्ष-तृच्। (छुतार) जातिभेदे, विश्वकर्म्मणि, वर्द्धकौ च
तस अलङ्कारे वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्। तंसयति-ते तंसति अततंसत्-त अतंसीत्।
तस उत्क्षेपे दिवा०पर०सक० सेट्। तस्यति अतसीत् अतासीत्। तसित्वा तस्त्वा।
तस्कर पु० तत् करोति तद्+कृ-अच् नि०। चौरे, प्रकाशाप्रकाशाभ्यां परद्रव्यापहारके,दमनकवृक्षे,श्रुक्काशाके च। कोपवत्यां स्त्रियां स्त्री० ङीप्।
ताच्छील्य न० तत् शीलमस्य ष्यञ्। नियततत्स्वभावे।
ताट(ड)ङ्क पु० ताड्यते ताडः वा डस्य टः अङ्कः चिह्नं यस्य प्रक०। कर्णभूषणभेदे।
ताटस्थ्य न० तटस्थस्य भावः ष्यञ्। औदासीन्ये, नैकट्ये च।
ताडका स्त्री०। राक्षसीभेदे। [(कोड़ा) (चाबुक)।
ताडनी स्त्री० ताड्यतेऽनया तड-आघाते ल्युट्। कशायाम्
ताडपत्र न० ताडयति अच् ताडं पत्रमिव। कर्णभूषणभेदे।
ताडि(डी) स्त्री० पु० तड-इ। (ताडियात) ख्याते वृक्षभेदे।
ताण्डव न० तण्डुना मुनिना प्रोक्तमनुष्ठानं यस्य अण्। 'पुंनृत्यं ताण्डवं प्रोक्तं स्त्रीनृत्यं लास्यमुच्यते' इत्युक्ते पुंसां नृत्ये, तृणभेदे, उद्धतनृत्ये च।
ताण्डवप्रिय पु० ताण्डवं प्रियं यस्य। शिवे,नृत्यप्रियमात्रे त्रि०
तात पु०तन-क्त दीर्घश्च। पितरि। अनुकम्प्ये, पूज्ये च त्रि०।
तात्पर्य्य न० तत्परस्य भावः ष्यञ्। वक्तुरिच्छायाम्, अभिप्राये, तत्परतायाञ्च। [तदुद्देशे च।
तादर्थ्य न० तस्मै इदम् तदर्थं तस्य भावः ष्यञ्। तदर्थत्वे,
तादात्म्य न०स आत्मा स्वरूपं यस्य तस्य भावः ष्यञ्। अभेदे, स्वरूपे च। [तादृक्। टक्। तादृशः। एतावदर्थुक्तार्थे
तादृच्च त्रि० तस्येव दर्शनमस्य दृश-क्स। तथाविधेऽर्थे। क्विप्।
तान पु०तन-घञ्। 'विस्तार्य्यन्ते प्रयोगाय मूर्च्छनाशेषसंश्रयाः। तानास्तेऽप्यूनपञ्चाशत् सप्तस्वरसमुद्भवा' इत्युक्ते गानाङ्गे स्वरभेदे 'तानप्रदायित्वमिवोपगन्तुमि'ति कुमारः विस्तारे च। ज्ञानविषये न०।
तान्त्रिक त्रि० तन्त्रं सिद्धान्तं तन्नामकशास्त्रं वाधीते वेद वा ठक्। ज्ञातसिद्धान्ते, मन्त्रवादिनि, तन्त्रशास्त्राभिज्ञे च।
ताप पु० तप-घञ्। सन्तापे, दुःखे च।
तापस न० तपसि साधु यत्। दमनकपत्रे (तेजपात)। तपः

अस्त्यस्य अच् । तपस्विनि त्रि० । दमनकवृक्षे, मरुवृक्षे च पु० ।
**तापसतरु** पु० तापसोपयुक्तस्तरुः । इङ्गुदीवृक्षे तत्तैलादिना तापसानां सर्वकर्मनिर्वाहात् ।
**तापसप्रिय** पु० तापसानां प्रियः छायाप्रदत्वात् । प्रियालवृक्षे
**तापिञ्छ(ञ्ज)** पु० तापिनं छादयति जयति वा छद्-जि-वा ड पृषो० । तमालवृक्षे । [पश्चिमवाहिनदीभेदे ।
**तापी** स्त्री० तापयति अच् गौरा० ङीष् । विन्ध्याचलस्थे
**तामरस** न० तामरे जले सस्ति सस-ड । पद्मे, ताम्रे, स्वर्णे, धुस्तूरे, द्वादशाक्षरपादके छन्दोभेदे च ।
**तामलकी** स्त्री० ताय-क्विप् ताः कर्म० । भूम्यामलक्याम् ।
**तामस** पु० तमसि अन्धकारे अविद्यागुणे वा रतः अण् । सर्पे, उलूके, खले च । तमसा गुणभेदेन निर्वृत्तम् अण् । सांख्योक्ते तमोजन्ये अहङ्कारादौ त्रि० । तमसः राहोरपत्यम् अण् । राहुसुतेषु ज्योतिषोक्तेषु केतुषु । तमसा व्याप्ता अण् ङीप् । रात्रौ, जटामांस्याम्, तमोधिकायां स्त्रियाञ्च स्त्री०
**तामिस्र** पु० तमिस्रमस्त्यस्मिन् अण् । सांख्योक्ते अष्टादशविधे विपर्ययरूपाज्ञानभेदे, भोगेच्छाप्रतिघातजे क्रोधे, तमिस्रा चास्त्यस्य राक्षसे च । अन्धकारमये नरकभेदे न० ।
**ताम्बूल** न० तम-ऊलच् बुगागमः दीर्घश्च । (पान) ख्याते नागवल्लीदले गुवाके च ।
**ताम्बूलकरङ्क** पु० ६त० । (पानबाटा) ताम्बूलाधारपात्रे ।
**ताम्बूलपत्र** पु० ताम्बूलमिव पत्रमस्य । पिण्डालौ ।
**ताम्बूलवल्ली** स्त्री० तम-क्विप् ताम्, बुल-मज्जने क ष० दीर्घः कर्म० ताम्बूलाख्या वल्ली । (पान) नागवल्ल्याम् स्वार्थे कन् अत्रैवार्थे । [विक्रयोपजीविनि जातिभेदे ।
**ताम्बूलिक** त्रि० ताम्बूलं पण्यमस्य ठक् । (तामूलि) ताम्बूल-
**ताम्बूलिन्** त्रि० ताम्बूल+अस्त्यर्थे इनि । (तामूलि) जातिभेदे
**ताम्र** न० तम-रक् दीर्घश्च । धातुभेदे (तांबा) कुष्ठरोगभेदे च अरुणवर्णे पु० तद्वति त्रि० ।
**ताम्रकर्णी** स्त्री० ताम्रौ अरुणौ कर्णौ यस्याः । पश्चिम दिग्हस्तिन्याम् । [जातिभेदे ।
**ताम्रकार** पु० ताम्र ताम्रमयं करोति कृ-अण् । (कांसारि)
**ताम्रकूट** न० ताम्रस्य ताम्रवर्णस्य कूटमिव (तामाकु) इति ख्याते पदार्थे, 'संविदा कालकूटञ्च ताम्रकूटञ्च धुस्तुरमि'तितन्त्रम्
**ताम्रचूड** पु० ताम्रा चूडा यस्य । कुक्कुटे ।
**ताम्रत्रपुज** न० ताम्रञ्च त्रपु च ताभ्यां जायते जन-ड । कांस्ये तस्योभयधातुजन्यत्वात् ।
**ताम्रपट्ट** न० ताम्रमयं पट्टम् । (पाटी) ताम्रमये लेखनपत्रे ।
**ताम्रपत्र** पु० ताम्रवर्णं पत्रमस्य । जीवशाके । कर्म० । ताम्रमये लेखनपत्रे न० । [महोदधे'रिति रघुः ।
**ताम्रपर्णी** स्त्री० नदीभेदे 'ताम्रपर्णीसमेतस्य मुक्तासारं
**ताम्रपल्लव** पु० ताम्राणि पल्लवानि यस्य । अशोकवृक्षे ।
**ताम्रपाकिन्** पु० पच्यते पाकः फलपुष्पादि ताम्रः पाकः अस्त्यस्य इनि । गर्द्दभाण्डवृक्षे ।
**ताम्रपुष्प** पु० ताम्राणि रक्तानि पुष्पाण्यस्य । भूमिचम्पके ।
**ताम्रपुष्पिका** स्त्री० ताम्राणि पुष्पाण्यस्याः ङीप् संज्ञायां कन् ह्रस्वः । रक्तत्रिवृति (नालतेओडि) । [धातक्याञ्च ।
**ताम्रपुष्पी** स्त्री० ताम्राणि पुष्पाण्यस्याः ङीप् । जवायाम्,
**ताम्रफल** पु० ताम्रं फलमस्य । अङ्कोठवृक्षे । [आलकुशी ।
**ताम्रमूला** स्त्री० ताम्रं मूलमस्याः टाप् । दुरालभायाम्
**ताम्रवल्ली** स्त्री० कर्म० । मञ्जिष्ठायाम् ।
**ताम्रवीज** पु० ताम्रं वीजं यस्य । कुलत्थे ।
**ताम्रवृक्ष** पु० कर्म० । रक्तचन्दनवृक्षे, कुलत्थे च ।
**ताम्रवृन्त** पु० ताम्रं वृन्तमस्य । कुलत्थे, स्त्रीत्वमपि टाप् ।
**ताम्रशिखिन्** पु० ताम्रवर्णा शिखास्त्यस्य इनि । कुक्कुटे ।
**ताम्रसार** पु० ताम्रवर्णं सारमस्य । रक्तचन्दनवृक्षे । कर्म० । तत्सारे न० । [रक्तचन्दने च
**ताम्रसारिक** पु० ताम्रः सारोऽस्त्यस्य ठन् । रक्तखदिरे,
**ताम्रिक** पु० ताम्रघट्टनं शिल्पमस्य ताम्रस्यायं वा ठक् । कांस्यकारे (कांसारि) जातिभेदे, ताम्रनिर्म्मिते कर्पमिते पदार्थे च
**ताय** पालने विस्तारे च भ्वा० आत्म० सक० सेट् । तायते अतायि-अतायिष्ट । णिच् अततायत्-त ।
**तार** पु० तॄ-स्वार्थे णिच् अच्, प्रेरणे णिच्-करणादौ घञ् वा । वानरभेदे, शुद्धमुक्तायाम्, प्रणवे, देवीप्रणवे,(ह्रीँ) तरणे, शिरोजातध्वनौ च । नक्षत्रे नेत्रमध्यस्थकनीनिकायाञ्च स्त्री०न० । रूप्ये न० । अत्युच्चनादे, अत्युच्चे निर्म्मले च त्रि० महाविद्याभेदे, वालिपत्न्यां, बृहस्पतिभार्य्यायाञ्च स्त्री० ।
**तारक** पु० तारयति तॄ-णिच्-ण्वुल् । नाविके, भेलके, दैत्यभेदे च । नक्षत्रे, नेत्रमध्यस्थकनीनिकायाम् स्त्री० टाप् क्षिपा० नेत्त्वम् तारका । तारणकर्त्तरि त्रि० तत्र स्त्रियां तारिका । [तारकव्रह्मद्योमन्त्र ।
**तारकजित्** पु० तारकं जितवान् जि-भूते क्विप् । कार्त्तिकेये
**तारकित** न० तारका जाताः अस्य इतच् । नक्षत्रयुक्ते आकाशे
**तारण** पु० तारयत्यनेन ल्युट् । भेलके । ६० वर्षमध्ये 'शस्यं भवति सामान्यं तारणे सुरवन्दिते' इत्युक्ते वत्सरभेदे च । तारयितरि त्रि० ।

**तारतम्य** न० तरतमयोर्भावः ष्यञ् । न्यूनाधिक्ये । निर्द्धनं निधनमेतयोर्द्वयोस्तारतम्यविधिस्तत्त्वचेतसामि’त्युद्भटः ।

**तारपुष्प** पु० तारं निर्म्मलं शुभ्रत्वात् पुष्पमस्य । कुन्दवृक्षे ।

**तारमाक्षिक** न० तारस्य रूप्यस्य माक्षिकम् उपधातुभेदः । रजततुल्ये उपधातुभेदे ।

**तारशुद्धिकर** न० तारस्य रजतस्य शुद्धिं धात्वन्तरयोगात् जातमलशुद्धिङ्करोति कृ टक् । सीसके तत्सम्पर्काद्धि रजतस्य मलशुद्धिर्लोकसिद्धा । [सुग्रीवे च ।

**तारापति** पु० ६त० । शिवे, चन्द्रे, बृहस्पतौ, वालिवानरे,

**तारापीड** पु० तारापीडमिव यस्य । चन्द्रे, कादम्बरीकथाप्रसिद्धे नृपभेदे च । [त्वात् । कर्पूरे ।

**ताराभ्र** पु० तारो निर्म्मलः जलशून्यः अभ्रः मेघइव शुभ्र-

**तारिणी** स्त्री० तारयति तॄ+णिच्-णिनि । शिवपत्न्यां द्वितीयायां महाविद्यायाम्, तारणकर्त्र्यां स्त्रियाञ्च ।

**तार्किक** त्रि० तर्कं वेत्त्यधीते वा ठक् । तर्कशास्त्राध्येतरि, तद्भिज्ञे च । तर्कशास्त्रञ्च गौतमकणादबृहस्पत्यादिप्रणीत शास्त्रम् ।

**तार्क्ष** पु० । कश्यपमुनौ । [रथे, अश्वकर्णवृक्षे, रसाञ्जने च ।

**तार्क्ष्य** पु० तार्क्षस्यापत्यम् यञ् । गरुड़े, अरुणे, सर्पे, अश्वे, सुवर्णे,

**तार्त्तीयीक** त्रि० तृतीय+स्वार्थे ईकक् । तृतीये ।

**ताल** पु० तल-घञ्, णिच्-अच् वा । स्वनामख्याते वृक्षे, विस्तृताभ्याम् अङ्गुष्ठमध्यमाभ्यां, परिमिते दीर्घपरिमाणभेदे, करतले, करास्फोटे, (ताल) कांस्यमयवाद्यभेदे, (करताल) खड्गमुष्टौ च । लेख्यपत्रे न० ‘तालोद्वादशभिर्ज्ञातुभ्रमणात् परिकीर्त्तित’ इत्युक्ते द्वादशधा हस्तेन जानुमण्डलपरिभ्रमणोपलक्षिते कालरूपे मानभेदे, गीतादौ द्विमात्रादिकालक्रियामाने च ।

**तालक** न० तल-ण्वुल् । द्वारपिधानयन्त्रे, हरिताले, आढक्याञ्च

**तालध्वज** पु० तालचिह्नितो ध्वजो यस्य । बलभद्रे ।

**तालनवमी** स्त्री० भाद्रशुक्लनवम्याम् । तद्दिने देवेभ्योविधानेन तालदानं स्मृतौ विहितम् ।

**तालपत्र** न० तालस्य पत्रमिव । कर्णभूषणभेदे ताडङ्के ।

**तालपत्रिका** स्त्री० तालस्य पत्रमिव पत्रमस्याः ङीप् संज्ञायां कन् ह्रस्वः । तालमूलीवृक्षे ।

**तालपत्री** स्त्री० तालस्य पत्रमिव पत्रमस्याः । मूषिकपर्ण्याम्

**तालपर्ण** न०स्त्री० तालस्य पर्णमिव पर्णमस्य । मुरानामगन्धद्रव्ये । स्त्रीत्वे ङीप् । आढ़क्यां स्त्री० ङीप् ।

**तालमूली** स्त्री० तालस्य मूलमिव मूलमस्याः । मुषल्याम् स्वार्थे कन् । तालमूलिकाप्यत्र ।

**तालवृन्त** न० ताले करतले वृन्तं बन्धनमस्य, तालस्येव वृन्तमस्य वा । व्यजने (पाखा) स्वार्थे कन् । अत्रार्थे ।

**तालाङ्क** पु० तालस्तालचिह्नितः अङ्कः ध्वजोऽस्य । बलदेवे ।

**तालिक** पु० तालेन करतलेन निर्वृत्तः ठक् । चपटे (चापड़) (हाततालि) । ताली+स्वार्थे कन् । तालमूल्याम् स्त्री० ।

**ताली** स्त्री० तालेन तन्निर्यासेन निर्वृत्ता अण् । (ताड़ी) तालजातसुरायाम् । तल-णयन्तात् अच् गौरा० ङीष् । (ताड़ियात्) वृक्षभेदे, तालमूल्याम्, (भूइआमला) वृक्षभेदे, आढ़क्याम्, (अड़र) तालीशपत्राख्ये वृक्षे, तालकोद्घाटनयन्त्रे (काटि) कुञ्चिकायाञ्च ।

**तालीश** न० तालीव रोगान् श्यति शो-ड । स्वनामख्याते वृक्षे

**तालीशपत्र** न० तालीशं तालीवद् रोगनाशकं पत्रं यस्य । स्वनामख्याते वृक्षे, भूम्यामलक्याञ्च ।

**तालु** न० तरन्त्यनेन वर्णाः तॄ-ञुण् रस्य लः । जिह्वेन्द्रियाधिष्ठाने (तेलो) स्थानभेदे । स्वार्थे कन् तालुकमप्यत्र ।

**तालुजिह्व** पु० तालु एव जिह्वा यस्य । कुम्भीरे तस्य जिह्वाशून्यत्वेऽपि तालुनैव रसास्वादात् ।

**तावत्** अव्य० तत्परिमाणमस्य नि० । साकल्ये, अवधौ, माने, अवधारणे, प्रशंसायां पक्षान्तरे, वाक्यभूषणे, तदेत्यर्थे च । ‘भर्त्तापि तावत् क्रथकैशिकाना’मिति रघुः । तत्परिमाणवति त्रि० स्त्रियां ङीप् तावती । [ तेकत् त

**तिक** गतौ भ्वा०आत्म०सक०सेट् । तेकते अतेकिष्ट णिच् अत

**तिक** आस्कन्दे वधे च स्वा०पर०सक०सेट् । तिक्नोति अतेकीत्

**तिक्त** पु० तिज-क्त । वरुणद्रुमे, कुटजे, रसभेदे (तेत) च । तद्वति त्रि० । पर्पटौषधौ न० । कटुकायां पाठायां, छिक्कण्याञ्च स्त्री० टाप् ।

**तिक्तक** पु० तिक्त+संज्ञायां कन् । भूनिम्बे, (चिराता) चिरतिक्ते कृष्णखदिरे, निम्बे, इङ्गुदीवृक्षे, तिक्तार्थे, पटोले च । कटुतुम्ब्यां स्त्री० टाप् । [न्नायाम् ।

**तिक्तगन्धिका** पु० तिक्तो गन्धो लेशोऽपि यस्याः । वराहक्रा-

**तिक्तगुञ्जा** स्त्री० गुञ्जेव तिक्ता राजदन्ता० । करञ्जे ।

**तिक्ततण्डुला** स्त्री० तिक्तस्तण्डुलोऽन्तःशस्यं यस्याः । पिप्पल्याम्

**तिक्ततुम्बी** स्त्री० कर्म० । कटुतुम्ब्याम् (तितलाउ) [वृजन्यङ्गयाञ्च

**तिक्तदुग्धा** स्त्री० तिक्तं दुग्धं निर्यासो यस्याः । क्षीरिण्याम्,

**तिक्तपत्र** पु० तिक्तं पत्रमस्य । (काकरोल) कर्कोटके ।

**तिक्तपर्व्वन्** स्त्री० तिक्तं पर्व्व ग्रन्थिर्यस्याः । ग्रन्थिदूर्वायाम्

**तिक्तपुष्पा** स्त्री० तिक्तानि पुष्पाण्यस्याः । (आकनादी) पाठायाम्

**तिक्तफल** पु० तिक्तानि फलानि अस्य । कतकवृक्षे (निर्म्मली)

**तिक्तभद्रक** पु० भद्रं करोति णिच्-ण्वुल् तिक्तोऽपि भद्रकः कर्म्म० । पटोले ।

**तिक्तरोहिणी** स्त्री० तिक्ता सती रोहति रुह-णिनि कर्म्म० । कटुकायाम् (कट्की) स्वार्थे कन् अत्रार्थे ।

**तिक्तवल्ली** स्त्री० कर्म्म० । मूर्वालतायाम् ।

**तिक्तबीजा** स्त्री० तिक्तानि बीजानि यस्याः । कटुतुम्ब्याम् ।

**तिक्तशाक** पु० तिक्तः शाकोऽस्य । वरुणद्रुमे,खदिरवृक्षे च

**तिक्तसार** पु० तिक्तः सारो निर्यासोऽस्य । खदिरे ।

**तिक्तिका** स्त्री० तिक्ता स्वार्थे कन् ह्रस्वे अतइत्त्वम् । कटुतुम्ब्याम् । [अतेगीत् ।

**तिग** आस्कन्दे हिंसायाञ्च स्वा० पर०सक० सेट् । तिग्नोति

**तिग्म** न० तिज-मक् जस्य गः । तीक्ष्णे, तद्वति त्रि० ।

**तिग्मरश्मि** पु० तिग्मारश्मयोऽस्य । सूर्य्ये । तिग्मांश्वाद्योऽप्यत्र

**तिघ** घातने स्वा०पर०सक० सेट् । तिघ्नोति अतेघीत् ।

**तिज** तीक्ष्णीकरणे,चु०उभ०सक०सेट् । तेजयति ते अतीतिजत् त

**तिज** क्षमायां स्वार्थे सन् निशाने न सन् भ्वा०आत्म०सक०सेट् । तितिक्षते तेजते । अतितिक्षिष्ट अतेजिष्ट । [चालन्याम्

**तितउ** पु० तन-डउ 'सक्तून् इव तितउना' इति निर्देशात् न सन्धिः ।

**तितिक्षा** स्त्री० तिज-क्षान्तौ स्वार्थे सन् अ टाप् । क्षमायां परापमानादिसहने, शीतोष्णादिद्वन्द्वसहने च ।

**तितिक्षु** त्रि० तिज-सन् उ । शापवियोगफलकभिन्नशीतादि सहनशीले । [(तितिर) पक्षिभेदे ।

**तित्ति(र)रि** पु० तित्ति इत्यव्यक्तशब्दं राति रा-क, डि वा ।

**तिथि(थी)** पु० स्त्री० अत-इथिन् इः वा ङीप् । पञ्चदशसु चन्द्रकलाक्रियारूपासु प्रतिपदादिषु, पञ्चदशसङ्ख्यायाञ्च ।

**तिथिक्षय** पु० तिथीनां तिथ्युपलक्षित चन्द्रकलानां क्षयः क्षया रम्भो यस्मिन् । दर्शे अमावास्यायाम् । ६त० । तिथीनां नाशे

**तिथिप्रणी** पु० तिथीन् प्रणयति स्वगत्या निष्पादयति प्र+ णी-क्विप् । चन्द्रे 'सायन्तनीं तिथिप्रण्यः' इति भट्टिः ।

**तिन्तिडीक** न० तिम-आर्द्रीभावे अनीकादयश्चेति नि० । चुक्रे (तेतुल)वृक्षभेदे पु० । कलोमे । तिन्तिड्यपत्रार्थे स्त्री० । ङस्य वा लत्वे तिन्तिलीकादयोऽप्यत्र ।

**तिन्दु** पु० तिज-कु-न्यग्वादि० नि० । (तेंदु) ख्याते वृक्षे स्वार्थे कन् (गाव) इति ख्याते वृक्षे पु०स्त्री०स्त्रीत्वे ङीप् ।

**तिप** क्षरणे भ्वा०आत्म०सक० वेट् । तेपते अतेपिष्ट अतिप्त ।

**तिम** आर्द्रीभावे भ्वा०पर०अक०सेट् । तेमति अतेमीत् ।

**तिम** आर्द्रीकरणे दिवा०पर०सक०सेट् । तिम्यति अतेमीत् ।

**तिमि** पु० तिम-इन् । मत्स्ये, समुद्रे, तद्भवे महाकाये मत्स्यभेदे च । 'अस्ति मत्स्यस्तिमिर्नाम तथाचास्ति तिमिङ्गिलः । तिमि ङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति लक्ष्मणे'ति रामायणम् ।

**तिमिङ्गिल** पु० तिमिं मत्स्यं गिरति गॄ-निगरणे खश् मुम् च । मत्स्यभेदे, तं गिरति तिमिङ्गिलगिलः महामत्स्ये

**तिमित** त्रि० तिम-कर्त्तरि क्त । निश्चले, क्लिन्ने च (भिजे)

**तिमिर** न० । तिम-किरच् । अन्धकारे, नेत्ररोगभेदे च ।

**तिमिष** पु० तिम-इषक् । आम्यकर्कट्याम्, नाटाम्ले च ।

**तिरश्चीन** त्रि० तिर्य्यक्+स्वार्थे ख । तिर्य्यग्भूते । 'गतं तिर- श्चीनमनूरुसारथेरिति माघः । [तिर्य्यगर्थे च

**तिरस्** अव्य० तॄ-असुक् । अन्तर्द्धाने, तिरस्कारे, अवज्ञायाम्,

**तिरस्करिणी** स्त्री० तिरस्+कृ णिनि नि० । जवनिकायां (परदा) 'तिरस्करिण्यो जलदा भवन्ती'ति कुमारः ।

**तिरस्कार** पु० तिरस्+कृ-घञ् । अनादरे, अधिक्षेपे च ।

**तिरीट** पु० तॄ-ईटक् । लोध्रवृक्षे ।

**तिरोधान** न० तिरस्+धा-ल्युट् । अन्तर्द्धाने ।

**तिरोहित** त्रि० तिरस्+धा-क्त । अन्तर्हिते, आच्छादिते च ।

**तिर्य्यक्** अव्य० तिरस्+अन्च क्विप् तिर्य्यादेशः । वक्रे, निरुद्धे च । पशुषु, पक्षिषु, वक्रगामिनि च त्रि० ।

**तिल** गतौ भ्वा०पर०सक०सेट् । तेलति अतेलीत् ।

**तिल** स्नेहे तु०पर०अक०अनिट् । तिलति अतेलीत् ।

**तिल** स्नेहे चुरा० उभ०अक०सेट् । तेलयति ते अतीतिलत् त

**तिल** पु० तिल-क । स्वनामख्याते वृक्षे, तत्फलेऽपि पु० ।

**तिलक** पु० तिल-क्वुन् तिल+इवार्थे स्वल्पे वा कन् वा । तिल वृक्षे, अश्वभेदे, रोगभेदे, मरुवके च । सौवर्चले, मातु- लाङ्गे न० । स्वनामख्याते ललाटादौ धार्य्ये चन्दनादिविशेषके पु०न० । प्रधाने त्रि० । रघुकुलतिलक इति नाटकम् ।

**तिलकट** न० तिलस्य रजः तिल+कटच् । तिलानाम् चूर्णे ।

**तिलकल्क** पु० तिलस्य कल्कः । पिण्याके (खल) ।

**तिलकालक** पु० तिल इव कालकः कृष्णः । देहस्थे तिला- कारे चिह्ने, रोगभेदे च ।

**तिलकिट्ट** न० ६त० । (काट) तैलमले, पिण्याके च (खल) ।

**तिलतैल** न० तिलस्य स्नेहः तिल+तैलच् । तिलस्नेहे । तिल- रसोऽप्यत्र । [क्तायां धेनौ

**तिलधेनु** स्त्री० तिलनिर्म्मिता धेनुः । दानार्थं विधानेन तिल-

**तिलपर्णी** स्त्री० तिलस्येव पर्णान्यस्याः ङीप् । रक्तचन्दने ।

**तिलपिञ्ज** पु० निष्फलस्तिलः तिल+पिञ्ज । निष्फलतिले मेज । तिलपेजोऽप्यत्र । [अजगरे सर्पभेदे ।

**तिलित्स** पु० तेलनं तिलिर्गतिस्तं त्सरति छद्मना गच्छति ड ।

**तिलोत्तमा** स्त्री० 'तिलं तिलं समानीय रत्नानां यद्विनिर्मिता। तिलोत्तमेति तत् तस्या नामेत्युक्तनिर्वचने अप्सरोभेदे।

**तिलौदन** न० तिलमिश्रित ओदनो यत्र। कृसरे।

**तिल्य** न० तिलानां भवनं क्षेत्रम् यत्। तिलभवनयोग्ये क्षेत्रे

**तिल्ल** गतौ भ्वा०पर०सक०सेट्। तिल्लति अतिल्लीत् [अत्रैव।

**तिल्व** पु० तिल्यतेऽनेन तिल-स्नेहने वक्। लोध्रे स्वार्थे कन्।

**तिष्ठद्गु** अव्य० तिष्ठन्ति गावो यत्र नि०। दोहनकाले 'आ-तिष्ठद्गु जपन् सन्ध्या'मिति भट्टिः। अव्ययीभावनिष्पन्न त्वादव्ययत्वमेव पुंलिङ्गतोक्तिः प्रामादिकी।

**तिष्य** पु० तुष्यन्त्यस्मिन् तुष-क्यप् नि०। पुष्यनक्षत्रे त्विष-दीप्तौ यक् अस्यादि० नि०। कलियुगे। तिष्ये नक्षत्रे जातः अण् तस्य लुक्। पुष्यनक्षत्रजाते त्रि०।

**तिष्यफला** स्त्री० तिष्ये कलियुगेऽपि फलं यस्याः ५ब०। 'नित्यमामलके लक्ष्मी'रित्युक्तेः आमलक्याम्। [तीकते-त।

**तीक** याचने भ्वा०आत्म०द्विक०सेट्। तीकते अतीकिष्ट अति-

**तीक्ष्ण** न० तिज-क्स्न दीर्घश्च। मरणे, युद्धे, विषे, लौहे, शस्त्रे, ग्रीष्मे, सामुद्रलवणे, मुष्कके, चणके, उष्णे, (झाल) रसे च, तद्वति त्रि०। यवक्षारे, श्वेतकुशे, कुन्दुरुके। ज्योतिषोक्ते आर्द्राश्लेषाज्येष्ठामूलनक्षत्रे च पु०। तीव्रे आत्मत्यागिनि, निरालसे सुसक्तौ योगिनि च पु०।

**तीक्ष्णक** पु०तीक्ष्ण+संज्ञायां कन्। गौरसर्षपे, मुष्कके च।

**तीक्ष्णकण्टक** पु० तीक्ष्णः कण्टकोऽस्य। धुस्तूरे, वर्वुरे, इङ्गुदीवृक्षे, वंशे च। कन्थारीवृक्षे स्त्री० टाप्।

**तीक्ष्णकन्द**पु० तीक्ष्णः कन्दो मूलमस्य। पलाण्डौ। [अत्रैवार्थे

**तीक्ष्णगन्ध** पु० तीक्ष्णःगन्धोऽस्य। शोभाञ्जनवृक्षे। वा कप्।

**तीक्ष्णगन्धा** स्त्री० तीक्ष्णः गन्धोऽस्याः। वचायां,राजिकायाम्, कन्थार्यां, सूक्ष्मैलायाम्, जीवन्त्याञ्च।

**तीक्ष्णतण्डुला** स्त्री० तीक्ष्णास्तण्डुला यस्याः। पिप्पल्याम्।

**तीक्ष्णतैल** न०तीक्ष्णस्य स्नेहः तैलच्। स्नुहीक्षीरे,सर्ज्जरसे,मद्ये च

**तीक्ष्णपत्र** पु० तीक्ष्णानि पत्राण्यस्य। तुम्बुरुवृक्षे।

**तीक्ष्णपुष्प** न०तीक्ष्णं पुष्पमस्य। लवङ्गे। केतक्यां स्त्री०टाप्।

**तीक्ष्णफल** पु० तीक्ष्णं फलमस्य। तुम्बुरुवृक्षे।

**तीक्ष्णमूल** पु० तीक्ष्णं मूलमस्य। शोभाञ्जने, कुलञ्जने च।

**तीक्ष्णरस** पु० तीक्ष्णो रसोऽस्य। यवक्षारे।

**तीक्ष्णशूक** पु० तीक्ष्णः शूकोऽस्य यस्य। यवे।

**तीक्ष्णसारा** स्त्री० तीक्ष्णः कठिनः सारोऽस्याः। शिंशपायाम् (शिशु)। [अत्यम्लपर्ण्याञ्च।

**तीक्ष्णा** स्त्री० वचायाम्, कपिकच्छ्वाम्, महाज्योतिष्मत्याम्,

**तीक्ष्णायस** न० तीक्ष्णमयः अच् समा०। (इस्पात) लौहभेदे।

**तीम** क्लेदने दिवा० पर०अक० सेट्। तीम्यति अतीमीत्।

**तीर** पारगतौ कर्म्मसमाप्तौ अद० चुरा० उभ० अक० सेट्। तीरयति-ते अतितीरत् त।

**तीर** न० तीर-अच्। नद्यादेः कूले,सायके च। सीसके पु०।

**तीरभुक्ति** पु० (त्रिहोत्) विदेहदेशे।

**तीर्ण** त्रि० तॄ-क्त। उत्तीर्णे, अभिभूते, आप्लुते च।

**तीर्थ** न० तॄ-थक्। शास्त्रे, यज्ञे, क्षेत्रे, उपाये, स्त्रीरजसि, नद्यादेरवतरणे, घट्टादौ, 'कृततीर्थः पयसामिवाशय' इति भारविः। विद्यादिगुणयुतपात्रे, उपाध्याये, मन्त्रिणि, योनौ, दर्शने, ब्राह्मणे, आगमे, निदाने,अग्नौ, उपकूप-जलाशये, दैहिके मानसिके, भौमिके च त्रिविधे पवित्र-स्थाने च। तत्र दैहिकानि तीर्थानि 'अङ्गुल्यग्रे दैवं तीर्थं स्वल्पाङ्गुल्योर्मूले कायम् (प्राजापत्यम्)। मध्येऽङ्गुष्ठाङ्गुल्योः पैत्रं मूलेऽङ्गुष्ठस्य ब्राह्म'मित्युक्तानि, मानसानि,यथा 'सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः। सर्व्वभूतदया तीर्थं सर्व्वत्रार्ज्जवमेव च। दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थ-मुच्यते। ब्रह्मचर्य्यं परं तीर्थं तीर्थञ्च प्रियवादिता। ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम्। तीर्थानामपि तत्तीर्थं विशुद्धिः मनसः परे'त्युक्तानि। भौमानि यथा 'यथा शरीरस्योद्देशाः केचित् मेध्यतमाः मताः। तथा पृथिव्या-उद्देशाः केचित् पुण्यतमाः स्मृताः। प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसः। परिग्रहात् मुनीनाञ्च तीर्थानां पुण्यता स्मृते'त्युक्तानि। [मकपिलादिषु।

**तीर्थकर** पु० तीर्थं हितशासनमागमं करोति कृ-टक्। गौत-

**तीव** स्थौल्ये भ्वा० पर० अक० सेट्। तीवति अतीवीत्।

**तीवर** पु० तॄ-ष्वरच् नि०। समुद्रे, व्याधे, वर्णसङ्करजाति-भेदे (तेओर)।

**तीव्र** पु० तीव-रक्। शिवे। लौहे, सीसके, तीक्ष्णे च न०। तद्वति,दुःसहे, अत्यर्थे, नितान्ते च त्रि०। कटुरोहिण्यां, राजिकायां,गण्डदूर्व्वायां,महाज्योतिष्मत्यां,नदीभेदे च स्त्री०

**तीव्रकण्ठ** पु० तीव्रः कण्ठो यस्मात् ५ब०। सेवनेन कण्ठपी-ड़के शूरणे (ओल) तस्य कण्ठोद्वेजितालोक प्रसिद्धा।

**तीव्रगन्धा** स्त्री० तीव्रो गन्धोयस्याः। यवान्याम्।

**तीव्रज्वाला** स्त्री० तीव्रं यथा तथा ज्वालयति उद्वेजयति सेविनम् ज्वल-णिच्-अ। धातक्याम्। तत्स्पर्शने गात्रे व्रणजन्म लोकप्रसिद्धम्।

**तीव्रवेदना** स्त्री० कर्म्म०। अत्यन्तपीड़ायां यातनायाम्।

तु वृत्तौ अक० हिंसायां पूर्त्तौ च सक० अदा० पर० अनिट् । तौति तवीति । अतौषीत् ।

तु अव्य० तुद--मित० डु । समुच्चये, अवधारणे, नियोगे, प्रशंसायाम्, विनिग्रहे, उक्ताशङ्कानिवृत्तौ, पादपूरणे च ।

तुगा(क्षा) स्त्री० तुज-तुन्ज वा घञ् । वंशरोचनायाम् ।

तुङ्ग पु० तुन्ज-घञ् । पर्व्वते, पुन्नागवृक्षे, नारिकेले, ज्योतिषोक्तेषु सूर्य्यादीनाम् अंशविशेषोपलक्षितमेषादिषु राशिषु च । उन्नतायुक्ते उच्चे प्रधाने च त्रि० । किञ्जल्के न० ।

तुङ्गभद्र पु० मदोत्कटे हस्तिनि । दक्षिणदेशस्थे नदीभेदे स्त्री०

तुङ्गिनी स्त्री० तुन्ज-णिनुन् जस्य गः । महाशतावर्य्याम् ।

तुच्छ न० तुद-सम्प०क्विप् तुदा व्यथया छ्यति छो-क । पुलाके शस्यशून्ये धान्ये (तुष) । हीने, अल्पे शून्ये च त्रि० ।

तुच्छद्रु पु० कर्म्म० । एरण्डवृक्षे तस्य निःसारत्वात् तुच्छत्वम् ।

तुच्छधान्यक न० कर्म्म० । पुलाके (भुसी) ।

तुज दीप्तौ चु०उभ०अक०सेट् इदित् । तुञ्जयति-ते अततुञ्जत्-त

तुज प्राणे बले च भ्वा०पर०अक०सेट् इदित् । तुञ्जति अतुञ्जीत्

तुज हिंसे भ्वा० पर० सक० सेट् । तोजति अतोजीत् ।

तुट कलहे तु०कु०पर०अक०सेट् । तुटति अतुटीत् तुतोट ।

तुड भेदे तु०कु०पर०सक०सेट् । तुडति अतुडीत् तुतोड ।

तुड निष्पीडने भ्वा०आ०सक०सेट् इदित् । तुण्डते अतुण्डिष्ट

तुड द्विधाकरणे भ्वा० पर० सक० सेट् । तोडति अतोडीत् अतुतोडत्-त ।

तुड्ड अनादरे भ्वा०पर०सक०सेट् । तुड्डति अतुड्डीत् ।

तुण कुटिलीकरणे तु०पर०सक० सेट् । तुणति अतोणीत् ।

तुणि पु० तुण-इन् । तुन्नवृक्षे (तुन्द)

तुण्ड न० तुडि-तोडने अच् । मुखे ।

तुण्ड(िण्ड)केरी स्त्री० प्रशस्तं तुण्डं(िण्ड) कन् तद्-ईरयति ईर्त्ते वा ईर-अण् । कार्पास्याम् तस्याः फलस्य विदारे हि विस्तीर्णसूत्राङ्ककार्पासोत्पत्तेः । विम्बिकायाम् (तेलाकुचा) तस्याः फलेन हि मुखाङ्गोष्ठसादृश्यदानात् । स्वार्थे कन् ह्रस्वः । तुण्ड(िण्ड)केरिकाप्यत्र ।

तुण्ड(िण्ड)केशी स्त्री० तुण्डे(ण्डी)मुखे कायति कै-क तुण्ड(िण्ड)कः ओष्ठः तत्र ईष्टे तत्तुल्यशोभावत्त्वात् ईश-अच् गौरा० ङीप् । विम्बिकायाम् (तेलकुचा) ।

तुण्डि पु०तुण्ड-इन् । मुखे, चञ्चौ च । विम्बिकायां, वन्द्यायां, नाभौ च स्त्री०वा ङीप् । स्वार्थे कन् उभयत्र । [(भुंडियुक्ते)

तुण्डिभ(ल) त्रि० तुण्डि+वलि० भ सिध्मा० लच् वा । तुन्दिले

तुत्थ स्तृतौ अद०चु०उभ०सक० सेट् । तुत्थयति-ते अतुतुत्थत्-त ।

तुत्थ पु० तुद-थक् । अग्नौ । तुत्थ-अच् । (तुंते) अञ्जनभेदे न० । नील्याम्, सूक्ष्मैलायाञ्च स्त्री० । स्वार्थे कन् अत्रैव ।

तुत्थाञ्जन न०कर्म्म० । अञ्जनभेदे (तुंते) । तद्वर्णत्वात् मयूरकण्ठे

तुद व्यथने तुदा०उभ०सक०अनिट् । तुदति-ते अतौत्सीत् अतुत्त

तुन्द न० तुण-अदने अब्दादि० नि० । उदरे कुक्षौ ।

तुन्दकूपी स्त्री० ह्रस्वः कूपः कूपी तुन्दस्य कूपीव । नाभौ । स्वार्थे कन् । तुन्दकूपिकाप्यत्र ।

तुन्दमृज त्रि०तुन्दमुदरं मार्ष्टि मृज-क । अलसे, मन्दे च ।

तुन्दि पु० तुद-इन् नि० । गन्धर्व्वभेदे,उदरे च । नाभौ स्त्री० वा ङीप् । स्वार्थे कन् अत्रार्थे ।

तुन्दिक त्रि० तुन्दमतिशयितमस्त्यस्य ठन् । बृहत्कुक्षौ । [कुक्षौ च

तुन्दिभ(ल) त्रि० तुन्दि-अस्त्यर्थे भ लच् वा । वृहन्नाभौ-वृहत्-

तुन्दिलफला स्त्री०तुन्दिलं वृहत्फलमस्याः । त्रपुष्याम् (शशा)

तुन्न पु०तुद-क्त । (तुंद) वृक्षे । व्यथिते, छिन्ने च त्रि० । स्वार्थे कन् अत्रैवार्थे । [जीविनि (दरजी) ।

तुन्नवाय पु० तुन्नं छिन्नं वयति वे-अण् । सौचिके सूच्या-

तुन्प वधे सक० पर०सेट् । तुम्पति अतुम्पीत् । [अतुम्पीत् ।

तुन्प वधे सक० क्लेशे अक० तु० पर० सेट् । तुपति-तुम्पति

तुन्फ वधे भ्वा० पर० सक० सेट् । तुम्फति अतुम्फीत् ।

तुन्फ वधे सक० क्लेशे अक०तुदा० पर० सेट् । तुफति तुम्फति अतुम्फीत् ।

तुप वधे भ्वा० पर० सक० सेट् । तोपति अतोपीत् ।

तुप वधे सक० क्लेशे अक०तु०सु०पर० सेट् । तुप्यति अतोपीत्

तुप अर्द्दने चुरा० उभ० सक० सेट् । तुम्पयति ते अतुतुम्पत्-त

तुफ वधे सक०क्लेशे अक०तु०सु०पर०सेट् । तुफ्यति अतोफीत् ।

तुफ वधे भ्वा०पर०सक०सेट् । तोफति अतोफीत् ।

तुब अर्द्दने वा चुरा० उभ०सक० पक्षे भ्वा० पर०सेट् इदित् । तुम्बयति-ते तुम्बति अतुतुम्बत्-त अतुम्बीत् ।

तुभ हिंसे भ्वा० आत्म० लुङि उभ०सक० सेट् । तोभते । अतुभत् अतोभिष्ट । [अतोभीत्

तुभ हिंसे दिवा० क्र्या० च पर० सक० सेट् । तुभ्यति तुभ्नाति

तुमुल पु० सौ० तु-उलक् । कलिद्रुमे (बयड़ा) व्याकुले युद्धे च । सङ्कुले-युद्धे न० ।

तुम्ब पु०तुम्बति अर्द्दयति तुबि-अर्द्दने अच् । अलाब्वाम् तुबि इन् वा ङीप् तुम्बीत्यप्यत्र, वृहत्फलायाम्, आमलक्यां, गवि च स्त्री० । [गौ० ङीप् । तुम्बुरीत्यप्यत्र स्त्री० ।

तुम्बुरु पु० तुबि-उरुच् । गन्धर्व्वभेदे, धन्याके च । उरन्

तुर वेगे जु०पर०अक०सेट् । तुतोर्त्ति अतोरीत् । [दर्शनात्

तुर न० तुर-क । तूर्णे शीघ्रे । वेगे स्त्रीत्वमपि तुरापाडिति-
तुरग पु० तुरेण वेगेन गच्छति गम-ड । घोटके, चित्ते च ।
तुरगस्कन्ध पु० तुरग+समूहे स्कन्धच् । अश्वसमूहे । ६त० ।
अश्वस्कन्धे । [अश्वगन्धायाम् ।
तुरगी स्त्री० तुरगस्तुरगगन्धोऽस्त्यस्याः अच् गौरा० ङीप् ।
तुरङ्ग पु० तुरेण गच्छति गम-ख सुम् वा डिच्च । घोटके, चित्ते
डित्त्वाभावे तुरङ्गमोऽप्यत्र ।
तुरि(री) स्त्री० तुर-इन् वा ङीप् । तन्तुवायस्य कार्पासादिनि-
र्मिते वयनसाधने (माकु) तन्नटचातुरीतुरीति' नैषधम् ।
तुरीय त्रि० चतुर+पूरणे तीय नि० । चतुर्थे वेदान्तोक्ते
शुद्धे निर्गुणे ब्रह्मणि ।
तुरीयवर्ण पु० कर्म० । शूद्रे । [दयोऽप्यत्र ।
तुरङ्गवदन पु० तुरङ्गस्येव वदनमस्य । किन्नरे, तुरङ्गवक्त्रा-
तुरङ्गारि पु० ६त० । करवीरे वृक्षे, महिषे च ।
तुरासाह् पु० तुरां वेगं सहते तुरं वेगवन्तम् आसाहयते अभि
भवति वा क्विप् उत्वपक्षे पत्वम् । इन्द्रे ।
तुरुष्क पु० तुर-उषिक् स्वार्थे कन् इसुसोरिति षत्वम् ।
गन्धद्रव्यभेदे (शिलारस) ।
तुर्य्य त्रि० चतुर्णां पूरणः यत् नि० । चतुर्थे ।
तुर्व्व हिंसे भ्वा०पर०सक०सेट् । तूर्वति अतूर्वीत् । तूर्णः ।
तुर्वसु पु० ययातिनृपतिपुत्रभेदे ।
तुल उन्माने वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् । तोलयति
ते तोलति अतूतुलत् त । तुलयति तु तुलाशब्दात् णिच्
तुलसी स्त्री० तुलामस्यति अस-अण् शक० । ''यस्या देवि ! तुला
नास्ति विश्वेषु चाखिलेषु च। तुलसी तेन सा ख्याते'' त्युक्ते
स्वनामख्याते वृक्षे ।
तुला स्त्री० तुल-भिदा०अङ् । सादृश्ये, माने, गृहाणां दारु-
बन्धकाष्ठे, पलशते, भाण्डे, मेषावधितः सप्तमे राशौ, तोलन
दण्डे, दिव्यप्रमाणरूपे 'विप्रवर्जं ब्राह्मणस्य सर्व्वेषान्तु
तुला स्मृते'ति नारदोक्ते परीक्षाभेदे च ।
तुलाकोटि(टी) स्त्री० तुलया तुलां वा कोटयति कुट-परि-
तापे-इ वा ङीप् । नूपुरे, तुलाकोटिक्वाणैरित्युक्तः ।
तुलाधर त्रि० तुलाया मानदण्डस्य धरः धृ-अच् । वणि-
जके, तुलाराशौ, तुलादण्डधारके-गुणे च ।
तुलापुरुष पु० षोड़शमहादानान्तर्गते दानभेदे विस्तरस्तु
मत्कृततुलादानादिपद्धतौ । [तुलादण्डे
तुलामान न० तुलार्थं तोलनार्थं मानं मीयतेऽनेन मा-ल्युट् ।
तुलावीज न० तुलायाः वीजं मूलम् । गुञ्जायाम् तदाश्यैव हि
मानं शास्त्रे दर्शितं यथा 'दशार्द्धगुञ्जं प्रवदन्ति माषमिति।
तुलित त्रि० तुला+तत्करोति णिच्-कर्मणि क्त । परिमिते
सदृशीकृते ।
तुल्य त्रि० तुलया सम्मितं यत् । सदृशे । [भिरेकत्र पाने
तुल्यपान न० तुल्येन सजातीयेन सह पानम् । सजातीयैर्बन्धु
तुल्ययोगिता स्त्री० अलङ्कारोक्ते अर्थालङ्कारभेदे ।
तुवर पु० तरति हिनस्ति रोगान् बौ० तृ-ष्वरच् नि० गुणा-
भावः । धान्यभेदे, कषायरसे च तद्वति त्रि० । आढक्याम्
सौराष्ट्रमृत्तिकायाञ्च स्त्री० । षित्त्वात् ङीप् । स्वार्थे कन्
तुवरिकाप्यत्रैव । [रक्तचक्रमर्द्दे
तुवरीशिम्ब पु० तुवर्य्या आढक्या इव शिम्बा यस्य ।
तुष तोषे दिवा०पर०अक०अनिट् । तुष्यति अतुषत् ।
तुष पु० तुष-क । विभीतकवृक्षे (वयडा) धान्यत्वचि स्वनाम-
ख्याते द्रव्ये च ।
तुषानल पु० तुषस्यानलः । तुषजाते अग्नौ । [तद्वति त्रि० ।
तुषार पु० अन्तर्भूतण्यर्थे तुष-आरक् । हिमे, कर्पूरे, शीते च
तुषित पु० तुष-कितच् । 'तोषः प्रतोषः सन्तोषो भद्रः शान्ति
रिड़स्पतिः । इध्मः कविर्विभुः स्वाह्वः सुदेवो रोचनो
द्विषट् । तुषिता नाम ते देवा आसन् स्वायम्भुवोऽन्तरे' इत्यु-
क्तेषु द्वादशसंख्येषु मतान्तरे षट्त्रिंशत्संख्यकेषु गणदेवेषु ।
तुष्टि स्त्री० तुष-क्तिन् । सन्तोषे 'अकृतार्थस्य लोकस्य कृतार्थोऽ
स्मीति या मति''रित्युक्तायां बुद्धौ तुष्टिर्नवधेति साङ्ख्योक्तासु
आध्यात्मिकबाह्यभेदेन नवभेदासु सिद्धिषु मातृकाभेदेषु च।
तुस ध्वाने भ्वा०पर०सक०सेट् । तोसति अतोसीत् ।
तुह वधे भ्वा०पर०सक०सेट् । तोहति । अतुहत्-अतोहीत् ।
तुहिन न० तुह-इनन् । हिमे, चन्द्रतेजसि च ।
तुहिनांशु पु० तुहिनमंशवो यस्य। चन्द्रे । हिमांशुप्रभृतयोऽप्यत्र
तूड अनादरे भ्वा०पर०सक०सेट् । तूडयति अतूडीत् । णिच्
अतूतुडत् त ।
तूण सङ्कोचे अद०चु०उभ०सक०सेट्। तूणयति ते। अतुतूणत् त
तूण सङ्कोचे चु०उभ०सक०सेट् । तूणयति ते अतूतुणत् त ।
तूण पूरणे चु०आ०सक०सेट् । तूणयते, अतूतुणत् त ।
तूण(णी) पु०स्त्री० तूण-क स्त्रीत्वपक्षे गौ०ङीष् । वाणाधारे
स्वनामख्याते इषुधौ । तूण-इ वा ङीप् सङ्कोचे स्त्री० ।
तूणीर पु० तूणीं सङ्कोचं राति ददाति रा-क । तूणे, इषुधौ
तूर हिंसे, सक० वेगे अक० दिवा०आत्म० सेट् । तूर्य्यति अतूरिष्ट
तूर्ण न०त्वर-क्त ऊठ् तस्य नः । शीघ्रे, मत्वरे तद्वति त्रि०।
तूर्य्य न० तूर-यत् । वाद्यभेदे ।

**तूल** पूरणे चुरा०आ०सक०सेट्। तूलयते अतूतुलत।

**तूल** इयत्तापरिच्छेदे निष्कर्षणे च भ्वा० पर० सक० सेट्। तूलति अतूलीत्।

**तूल** पु०न०। तूल-क। कार्पासभेदे (तुला) "तूलराशिमिवानलः" इति स्मृतिः। आकाशे, (तुंद) वृक्षभेदे च न०। कार्पास्यां स्त्री०। स्वार्थे कन् अत्रैव न०। [योग्यत्र।

**तूलकार्मुक** न०६त०। तूलस्फोटनार्थे धनुषि। तूलचापाद-

**तूलनाली** स्त्री० तूलनिर्मिता नाली। पिञ्जिकायाम् (पाइज) स्वार्थे कन् अत्रैवार्थे। [(तुलार गाछ)

**तूलपिचु** पु० पिच-मर्द्दने कुन् तूलप्रधानः पिचुः। तूलवृक्षे

**तूलवृक्ष** पु० तूलसाधनं वृक्षः शाक०। शाल्मलिवृक्षे।

**तूलि(ली)** स्त्री० तूल-इन् वा ङीप्। चित्रसाधने स्वनामख्याते पदार्थे।

**तूलिका** स्त्री०तूल+अस्त्यर्थे ठन्। (तोषक) शय्योपकरणभेदे। तूलयति ण्वुल्। चित्रसाधने(तूली)द्रव्ये "उन्मीलितं तूलिकयेव चित्र"मिति कु० सुवर्णादेरावर्त्तनपरीक्षोपयोगिपदार्थे वीरणादिशलाकायाञ्च।

**तूलिनी** स्त्री० तूल+इनि। शाल्मलिवृक्षे।

**तूलिफला** स्त्री० तूलि तूलवत् फलं यस्याः। शाल्मलिवृक्षे।

**तूवर** पु० तु-वरच् दीर्घश्च। कालेऽजातशृङ्गे गवि, अजातश्मश्रुके पुरुषे, कषायरसे च। तद्वति त्रि०। आढक्यां, सौराष्ट्रमृत्तिकायाञ्च स्त्री० ङीप्।

**तूष** तुष्टौ भ्वा०पर०सक० सेट्। तूषति अतूषीत्।

**तूष्णींशील** त्रि० तूष्णीं शीलं यस्य। मौनावलम्बिनि।

**तूष्णीक** त्रि० तूष्णीं शीलं यस्य शीलेऽर्थे कन् मलोपश्च, मौनावलम्बिनि। [तूष्णीकामप्यत्र।

**तूष्णीम्** अव्य० तूष-नीमु। मौने। अकच्प्रतिरूपे कामि।

**तूस्त** न०तुस-तन् दीर्घश्च। जटायां, संहतकेशेषु, धूलौ, सूक्ष्मे च

**तृक्ष** गतौ भ्वा०पर०सक०सेट्। तृक्षति अतृक्षीत्।

**तृण** भक्षे तना० उभ० सक० सेट्। तृणोति तर्णोति तृणुते-तर्णुते। अतर्णीत् अतर्णिष्ट। तर्णित्वा-तृण्ट्वा।

**तृण** न० तृह-नक् हलोपश्च। नडादौ, खटे (खड़)

**तृणकाण्ड** न० तृणानां समूहः दूर्वा० काण्डच्। तृणसमूहे

**तृणकेतु** पु० तृणेषु केतुरिव श्रेष्ठत्वात्। वंशवृक्षे, तालवृक्षे, असारत्वेन तृणद्रुमतृणध्वजावप्यत्र।

**तृणजाति** स्त्री० तृणमेव जातिः। उलपादौ (खड़)।

**तृणद्रुम** पु० तृणजातीया द्रुमा असारत्वात् शाक०। नारिकेले, ताले, गुवाके, ताल्यां, केतक्यां, खर्ज्जूरे, खर्ज्जूर्य्याञ्च।

**तृणधान्य** न० तृणमिव धान्यं अकृष्टोत्पन्नत्वात् शाक०। नीवारे, श्यामाकादौ च।

**तृणराज** पु०तृणेषु राजते राज-अच् ६त०टच् वा। तालवृक्षे

**तृणबीज** न०६त०। श्यामाके धान्ये।

**तृणसारा** स्त्री० तृणमेव सारोऽस्याः। कदल्याम् तस्याः सर्व्वथाऽसारत्वात्तथात्वम्। [धारपत्रयुक्ते तृणभेदे

**तृणेक्षु** पु० तृणमिक्षुरिव तीक्ष्णधारत्वात्। वल्वजायाम् तीक्ष्ण-

**तृणौकस्** न०तृणनिर्मितमोकः। तृणनिर्मिते गृहे (खड़ेरघर)

**तृणौषध** न० तृणात्मकमौषधम्। एलवालुकाख्ये गन्धद्रव्ये

**तृण्या** स्त्री० तृणानां समूहः पाशा० य। तृणसमूहे।

**तृतीय** त्रि० त्रयाणां पूरणः त्रि+तीय सम्प्रसारणञ्च। त्रयाणां पूरणे-येन त्रित्वसंख्या पूर्य्यते तस्मिन् पदार्थे।

**तृतीयप्रकृति** स्त्री० स्त्रीपुंसावपेक्ष्य तृतीया प्रकृतिः प्रकारः। नपुंसके क्लीवे।

**तृतीया** स्त्री० चन्द्रमण्डलस्य तृतीयकलायाः सूर्य्यमण्डलप्रवेशनिर्गमान्यतररूपक्रियात्मिकायां तिथौ।

**तृतीयाकृत** त्रि०तृतीयं कृतं त्रिगुणार्थे तृतीय+डाच्+कृ-क्त। त्रिवारकृष्टे क्षेत्रे।

**तृद** अनादरे रु०उभ०सक० सेट्। तृणत्ति तृन्ते। अतर्द्दीत्-अतृदत् अतर्द्दिष्ट। तर्द्दित्वा-तृत्त्वा।

**तृनुप(म्प)** प्रीणने तु०पर०सक०सेट्। तृपति तृम्पति अतर्पीत्।

**तृन्फ(म्फ)** प्रीणने तु०प०सक०सेट्। तृफति तृम्फति अतर्फीत्

**तृन्ह** हिंसे तु०प०सक०सेट् क्त्वावेट्। तृंहति अतृंहत्।

**तृप** प्रीणने स्वा०पर०सक०सेट्। तृप्नोति अतर्पीत्।

**तृप** सन्दीपने प्रीणने च वा चुरा०उभ० पक्षे भ्वा०पर०सक० सेट्। तर्पयति ते तर्पति अततर्पत् त अतीतृपत् त। अतर्पीत्। [अताप्सीत्-अतृपत्।

**तृप** प्रीणने दि०पर०सक० वेट्। तृप्यति अतर्पीत्-अताप्सीत्-

**तृप** प्रीणने तु०सु०पर०सक०सेट्। तृपति अतर्पीत्।

**तृप्ति** स्त्री० तृप-क्तिन्। अतिशयभक्षणेन भक्षणेच्छानिवृत्तौ।

**तृफ** प्रीणने तु० पर०सक०सेट्। तृफति। अतर्फीत्।

**तृ(त्रि)फला** स्त्री० त्रयाणां फलानां समाहारः वा सम्प्रसारणञ्च। हरितक्यामलकीवयस्थाख्यफलत्रये।

**तृष** तृष्णायां दिवा०पर०सक०सेट्। तृष्यति अतृषत् अतर्षीत्

**तृष(षा)** स्त्री० तृष-क्विप्। भागुरिमते हलन्तत्वात् वा टाप्। तृष्णायां, स्मरपुत्र्याम्; लाङ्गलिकीवृक्षे च।

**तृषाभू** स्त्री० ६त०। क्लोमनि हृदयस्थे स्थानभेदे।

**तृषित** त्रि० तृषा जातास्य तार० इतच्। तृष्णान्विते।

**तृष्णाज्** त्रि० तृष-नजिङ्। तृष्णायुक्ते लुब्धे च। [च।

**तृष्णा** स्त्री० तृष-न किञ्च। पिपासायां, लोभे, अप्राप्ताभिलाषे

**तृष्णाक्षय** पु० तृष्णाया लोभस्य क्षयो यस्मात् ५ब०। शमे, 'तृष्णाक्षयसुखस्यैते नार्हन्तीति स्मृतिः।

**तृह** हिंसे तु० पर० सक० वेट्। तृहति अतर्हीत् अतृक्षत्।

**तृह** हिंसे वा चु०उ०पक्षे रुधा०पर०सक०वेट्। तर्हयति तृणेढि अततर्हत् त अतीतृहत् त अतार्हीत् अतृक्षत्।

**तॄ** तरणे प्लवने अभिभवे च भ्वा०प०सक०सेट्। तरति अतारीत्

**तेज** निशाने पालने च भ्वा०पर०सक०सेट्। तेजति अतेजीत्

**तेजःफल** पु० तेजस्करं फलं यस्य। (तेजवल) वृक्षभेदे।

**तेजन** पु० तेजयति मस्तमग्निं वा तिज-णिच्-ल्यु। वंशे मुञ्जे च। संज्ञायां कन्। शराभिधे तृणे, मूर्व्वायां, ज्योतिष्मत्याञ्च स्त्री० ङीप्।

**तेजपत्र** न० तेज-अच् तेजं पत्रं यस्य। त्वचे (तेजपाता)

**तेजवती** स्त्री० तेजनं तेजः अस्त्यर्थे मतुप् मस्य वः। गजपिप्पल्याम्।

**तेजस्** न० तिज-असुन्। उष्णस्पर्शवति अग्न्यादौ द्रव्यभेदे सांख्यमते शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रादुत्थिते भूते दीप्तौ, प्रभावे,पराक्रमे, वीर्य्ये,नवनीतोद्भवे-घृतादौ, तापके ज्योतिषि सूर्य्यादौ, शरीरकान्तौ, सुवर्णादौ-धातुद्रव्ये, मज्जनि, पित्ते, 'अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतमित्युक्ते अपमानादेरसहने 'तेजो निसर्गजं सत्वं वाजिनां स्फुरणं रज इत्युक्ते अश्वानां स्वाभाविके वले, चैतन्यात्मके परमज्योतिषि ब्रह्मणि, सांख्योक्ते सत्वगुणे च।

**तेजस्वती** स्त्री० तेजस्+अस्त्यर्थे मतुप् मस्य वः। गजपिप्पल्याम्, चव्ये,(चइ) महाज्योतिष्मत्यां,वह्नेः पुर्य्यां, (तेजवल) वृक्षभेदे च।

**तेजस्विनी** स्त्री० तेजस्+विनि। तेजोयुक्तायां स्त्रियां, ज्योतिष्मत्यां लतायाम् (तेजवल) तेजःफलायाञ्च।

**तेजीयस्** त्रि० तेजस्विन्+अतिशायने ईयसुनि विनेर्लुक्। तेजोयुक्ते 'तेजीयसां न दोषाय वह्नेः सर्व्वभुजोयथे'ति भागवतम्।

**तेजोमन्थ** पु० तेजो मथ्नाति मन्थ-अण्। गणिकारिकायाम्।

**तेजोमय** त्रि० तेजस्+प्रचुरार्थे मयट्। तेजःप्रचुरे तेजःप्रधाने ज्योतिर्म्मये च। स्त्रियां ङीप्। 'तेजोमयी वागि'ति स्मृतिः

**तेजोमात्रा** स्त्री० तेजसां सत्त्वगुणानां मात्रांऽशः। इन्द्रियेषु भूतानां सात्विकांशेभ्य एव तेषामुत्पत्तिः सांख्यसिद्धा।

**तेप** कम्पे, च्युतौ च भ्वा०आ०अक०सेट्। तेपते अतेपिष्ट।

**तेम** पु० तिम-घञ्। आर्द्रीभावे।

**तेमन** न० तिम-ल्युट्। आर्द्रीकरणे। कर्मणि ल्युट्। व्यञ्जने।

**तेव** क्रीड़ने भ्वा० आ०अक०सेट्। तेवते अतेविष्ट।

**तैजस** न०तेजसोविकारः अण्। घृते,धातुद्रव्ये च। सांख्योक्ते सत्वगुणोत्पन्ने त्रि०।

**तैजसावर्त्तनी** स्त्री० तैजसं धातुद्रव्यमावर्त्त्यतेऽत्र आ-वृत णिच्-आधारे ल्युट् ङीप्। मूषायाम्। (मुची)।

**तैतिल** पु० गण्डकपशौ। ववादितस्तुर्थे करणे न०।

**तैत्तिरीया** स्त्री० तित्तिरिभ्योऽधिगता छण्। यजुर्वेदीयशाखाभेदे कृष्णयजुषि। याज्ञवल्क्येन हि गुरुतोऽधीत्य तेन सह विवादे मूर्तिमानेव यजुर्वेद उद्वान्तः तत्त्वस्याचान्ये तस्यान्तेवासिनस्तित्तिरिरूपं धृत्वा तं भक्षितवन्तस्तेभ्यस्तित्तिररूपेभ्य एव विप्रेभ्यो या शाखा गृहीता सा तैत्तिरीया शाखेति पुराणादौ प्रसिद्धम्।

**तैत्तिरीयि(य)क** त्रि० तैत्तिरीयां शाखां वेत्त्यधीते वा ठक् कन् वा। तैत्तिरीयशाखाध्यायिनि। [भेदयुक्ते।

**तैमिरिक** न०तिमिरं नेत्ररोगभेदः अस्त्यस्य ठन्। नेत्ररोग-

**तैर्थिक** त्रि० तीर्थं दर्शनशास्त्रं कृतमनेन ठक्। शास्त्रकारे कपिलकणादादौ।

**तैल** न०तिलस्य विकारः अण्। 'तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतं'मित्युक्ते तिलसर्षपातसीप्रभृतीनां स्निग्धवस्तूनां स्नेहरूपे विकारे। (तैल) सिह्लुके च (शिलारस)।

**तैलकार** पु० तैलं करोति कृ-अण् (तेली) (कलु) इति प्रसिद्धे वर्णसङ्करे चाक्रिके वैलिनि। [च।

**तैलकिट्ट** न०६त० (कीट) इति ख्याते तैलमले (खल)पिण्याके

**तैलङ्ग** पु० 'श्रीशैलं तु समारभ्य चोलेशान्मध्यभागतः तैलङ्गदेशोदेवेशि!'त्युक्ते देशे। तत्रस्थे जने ब०व०।

**तैलधान्य** न० तैलोपयोगि धान्यं सतुषं शस्यम्। तिलातसी च तोरी (डी) च त्रिविधश्चापि सर्षपः। द्विधा राजी कुसुम्भस्य वीजं कौसुम्भसम्भवम्। एतानि तैलधान्यानीत्युक्तेषु तिलादिषु। [प्रपर्णवृक्षे।

**तैलपर्णी** पु० तैलाक्तमिव पर्णं यस्य मध्यपदलोपि स०। प्रन्थि-

**तैलपा** स्त्री० तैलं पिबति पा-क। (तेलापोका) कीटभेदे।

**तैलपायिका** स्त्री० पा-ण्वुल् ६त०। (तेलापोका) (आरसुला कीटभेदे।

**तैलफला** स्त्री०तैलं फले यस्याः। इङ्गुदीवृक्षे, विभीतके च।

**तैलभाविनी** स्त्री० तैलं भावयति चु० भू-शुद्धौ णिनि।

जातिपुष्पवृक्षे, तत्पुष्पेण वासितं हि गन्धतैलं भवति ।

**तैलस्पाता** स्त्री० तिलस्य पातोऽत्र ज नि० सुमृच् । स्वधा-याम्, तदुपलक्षिते श्राद्धे च । [गन्धद्रव्यभेदे ।

**तैलसाधन** न० तैलं साधयत्यनेन सिध-णिच्-ल्युट् (काकला)

**तैलीन** त्रि०तिलानां भवनं क्षेत्रं ख । तिलभवनयोग्ये क्षेत्रे ।

**तैष** पु० तिष्यनक्षत्रयुक्ता पौर्णमासी तैषी सास्मिन् मासे अण् । चान्द्रपौषमासे । [पौषस्य पौर्णमास्याम् ।

**तैषी** स्त्री० तिष्येण नक्षत्रेण युक्ता पौर्णमासी अण् । चान्द्र-

**तोक** न० सौ० तु-क तस्य नेत्त्वम् । अपत्ये पुत्रे,दुहितरि च ।

**तोटक** न० द्वादशाक्षरपादके छन्दोभेदे । [अतुतोड त् ।

**तोड** अनादरे भ्वा०पर०सक०सेट् । तोडति अतोडीत् । णिच्

**तोडी(री)** स्त्री० तुड-अच् गौरा०ङीष् वा डस्य रः । स्वनाम ख्याते तैलसाधने धान्यभेदे । [चालनदण्डे च ।

**तोत्त्र** न० तुद-ष्ट्रन् । गवादिताडनदण्डे (पाचुनि) गजादि-

**तोदन** न०तुद्यतेऽनेन ल्युट् । तण्डे सुखे । भावे ल्युट् । व्यथायाम्

**तोमर** पु०न० तु-विच् तोर्गतो म्रियतेऽनेन मृ-अच् । हस्तक्षेप्ये शल्याये दण्डाकारेऽस्त्रभेदे (रायबांश) । [त्रि च ।

**तोमरिका** स्त्री० तोमर+संज्ञायां कन् । आढक्याम् । [नक्ष-

**तोय** न० सौ० तु विच् तवे पूर्त्यै याति या-क । जले पूर्व्वाषाढा

**तोयकाम** पु० तोयं कामयते कम-अण् । जलवेतसे । जला-भिलाषुके त्रि० ।

**तोयकृच्छ्र** न० जलमात्रपानरूपे व्रतभेदे । [जलदातरि त्रि०

**तोयद** पु० तोयं ददाति दा+क । मेघे,मुस्तके च । घृते न०।

**तोयधि** पु० तोयानि धीयन्तेऽत्र धा-कि । समुद्रे तोयनिध्या दयोऽप्यत्र । [लाङ्गल्याम् ।

**तोयपिप्पली** स्त्री० तोये पिप्पलीव । (कांचड़ा) शाकभेदे

**तोयपुष्पी** स्त्री० तोयेन बहुजलदानेन पुष्पाण्यस्याः । पाटला वृक्षे । [स्त्री । कतके (निर्म्माल्य)

**तोयप्रसादन** पु० तोयं प्रसादयति फलयोगेन प्र+सद-णिच्-

**तोयफला** स्त्री० तोयप्रधानं फलं यस्याः । इर्व्वारौ कर्कटीभेदे

**तोयवल्ली** स्त्री० तोयसन्निहितस्थाने वल्ली । कारवेल्ले (उच्छे)

**तोयसूचक** पु० तोयं तोयवर्षं सूचयति रवेण सूच-ण्वुल् । भेके

**तोरण** पु०न० तुर-युच् । बहिर्द्वारे, सम्भोपरिस्थे सिंहाकारे काष्ठे द्वारवाह्यभागे च । कन्धरायां न० ।

**तोल** पु० न० तुल-अच् । गुञ्जाशीतिपरिमाणे कर्षे । स्वार्थे कन् ण्वुल् वा । तोलकमप्यत्र ।

**तौर्य्य** न० तूर्य्ये मुरजादौ वाद्ये भवम् अण् । मुरजादिध्वनौ ।

**तौर्य्यत्रिक** न०त्रयः परिमाणमस्य कन् तौर्य्योपलक्षितं त्रिकम् । नृत्यगीतवाद्येषु समुदितेषु 'वनेऽपि तौर्य्यत्रिकमि'ति नैषधम्

**तौलिक** पु० तूल्या जीवति ठक् । चित्रकरे ।

**त्यज** हानौ दाने च भ्वा०पर०सक०अनिट् । त्यजति अत्याक्षीत् ।

**त्यद्** त्रि० त्यज-अदि डिच्च । तच्छब्दार्थे 'योषा स्योषा भवास्य इषमि'ति वेदवाम् ।

**त्यागिन्** त्रि० त्यज-घिणुन् । दातरि, शूरे, वर्ज्जनशीले, कर्म्मफलत्यागिनि च 'यस्तु कर्म्मफलत्यागी स त्यागीत्यभि-धीयते' इति गीता ।

**त्रक** गतौ भ्वा० आत्म० सक० सेट् । त्रकते अत्रकिष्ट ।

**त्रख** गतौ भ्वा० पर०सक०सेट् । त्रखति अत्रखीत अत्राखीत्

**त्रङ्ख** गतौ भ्वा०पर०सक०सेट् इदित् । त्रङ्खति अत्रङ्खीत् ।

**त्रग** गतौ भ्वा० पर०सक० सेट् इदित् । त्रङ्गति अत्रङ्गीत् ।

**त्रद** चेष्टायां भ्वा०पर०अक०सेट् इदित् । त्रन्दति अत्रन्दीत् ।

**त्रप** लज्जायां भ्वा०आ०अक० वेट् वा ष० । त्रपते अत्रपिष्ट अत्रप्त । णिच् । त्रपयति त्रापयति । त्रपा

**त्रपा** स्त्री० त्रप-भावे अङ् । लज्जायाम् । अच् । कुलटायाम् । कुले कीर्त्तौ च । [सीसके, रङ्गे च ।

**त्रपु** न० अग्निं दृष्ट्वा त्रपते लज्जते इव लज्जया द्रवीभवति वा

**त्रपुटी** स्त्री० त्रप-उटङ् गौरा०ङीष् । सूक्ष्मैलायाम् ।

**त्रपुष** स्त्री० त्रपते क्विप् त्रप् उष-दाहे क क० । कर्कटीवृक्षे गौरा० ङीष् । (क्षीरा) (शशा) ख्याते वृक्षे ।

**त्रपुस्** न० त्रप-उसि । रङ्गे ।

**त्रय** न०स्त्री० त्रयाणामवयवः त्रयोऽवयवा येषां वा अयच् । त्रित्वसंख्यायाम् 'ऋणत्रयमपाकृत्ये'ति मनुः । स्त्रीत्वपक्षे ङीप् । 'असौ नरशिखित्रयी'ति माघः । त्रित्वसङ्ख्या-विशिष्टे त्रि० स्त्रियां ङीप् । ऋगादिवेदत्रये, 'त्रयीव नीताङ्गगुणेन विस्तर'मिति नैषधम् । ब्रह्मादिमूर्त्तित्रये, पुरन्ध्र्याम्, सुमतौ, सोमराजीवृक्षे च ।

**त्रयीधर्म्म** पु० त्रय्या वेदत्रयेण विधीयमानो धर्म्मः शाक० । वैदिके धर्म्मे ज्योतिष्टोमादौ ।

**त्रयोदशन्** त्रि० त्रयश्च दश च, त्राधिका वा दश । त्र्यधिक दशसङ्ख्यान्विते । ततपूरणे तु डट् । त्रयोदशः त्रि० । चन्द्रस्य त्रयोदशकलाक्रियारूपे तिथौ स्त्री० ङीप् ।

**त्रस** धृतौ ग्रहे निषेधे च चुरा०उभ० सक० सेट् । त्रसयति ते अतित्रसत् त ।

**त्रस** भासे वा० चुरा०उभ० पक्षे भ्वा०पर०अक०सेट् इदित् । त्रंसयति ते त्रंसति अतत्रंसत् त अत्रंसीत् ।

**त्रस** भये वा दिवा० पक्षे भ्वा० फणा०पर०अक०सेट् । त्रसति

त्रसति अत्रसीत् अत्रासीत् त्रेसतुः तत्रसतुः।

**त्रस** न० त्रस-भये घञर्थे क। वने। त्रस छतौ अच्। जङ्गमे त्रि०

**त्रसरेणु** पु० त्रसः चलो रेणुः क०। 'जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः। प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते' इत्युक्ते गवाक्षान्तर्गतसूर्यकिरणेषु दीप्यमाने परमाणुषट्कात्मके द्व्यणुकत्रयात्मके रजसि।

**त्रस्त** त्रि० त्रस-क्त। भीते चकिते। शीघ्रे न०।

**त्रस्नु** त्रि० त्रस-क्नु। भीरौ त्रासशीले।

**त्रापुष** त्रि० त्रपुणा निर्वृत्तम् अण्। रङ्गमये पात्रादौ।

**त्रायन्ती** स्त्री० त्रै-सम्प० क्विप् त्रा अयति श्वा० इ-ई-वा शतृ। (वला) ख्यातायाम् लतायाम्।

**त्रायमाण** स्त्री० त्रायते त्रै-शानच्। (वला)ख्यातायां लतायाम्

**त्रि** त्रि० ब०व० तॄ-ड्रि। त्रित्वसंख्याविशिष्टे। स्त्रियाम् तिस्रः देव्यः। तिस्र इत्यादि।

**त्रिंश** त्रि० त्रिंशत्+पूरणे डट्। त्रिंशत्पूरणे, त्रिंशत्तमे, 'त्रिंशांशकस्तथाराशे र्भाग' इत्यभिधीयते इति ज्योतिषम्।

**त्रिंशक** त्रि० त्रिंशता क्रीतः वुन्। त्रिंशत्संख्यान्वितद्रव्येण क्रीते वस्तुनि। [र्यां, तत्सङ्ख्यान्विते च।

**त्रिंशत्** स्त्री०त्रयोदशतः परिमाणमस्य नि०। त्रिदशकसङ्ख्या-

**त्रिंशत्पत्र** न० त्रिंशत्सङ्ख्यानि पत्राणि दलानि प्रतिपुष्पमस्य। कुमुदे।

**त्रिक** न० त्रयाणां संघः कन्। त्रित्वसङ्ख्यायाम् पृष्ठवंशाधो भागे, कटिभागे, त्रिफलायाम् (हरितकामलकीवयस्याफलत्रये) त्रिकटुनि, (शुण्ठीपिप्पलीमरिचत्रये)। वातादिषु मिलितेषु च। त्रिषु कायति कै-क। गोक्षुरे वृक्षे पु०।

**त्रिककुद्** पु०त्रीणि ककुदतुल्यानि शृङ्गाण्यस्य ककुदस्य अन्त्यलोपः। त्रिकूटाख्ये पर्वतभेदे। [गोक्षुरवृक्षे।

**त्रिकट** पु० त्रीन् वातादिदोषान् कटति आवृणोति अच्।

**त्रिकटु** न०त्रयाणां कटुरसानां समाहारः। मिलितेषु शुण्ठीपिप्पलीमरिचेषु। [वृक्षे, मत्स्यभेदे च (टेङ्गरा)।

**त्रिकण्ट** पु० त्रयः कण्टाः कण्टका अस्य। गोक्षुरे, स्नुही-

**त्रिकाल** न०त्रयाणां कार्य्यकालभूतभविष्यत्कालानां समाहारः। भूतभविष्यद्वर्त्तमानकालत्रये प्रातर्मध्याह्नसायाह्नरूपकालत्रये च। 'त्रिकालं पूजयेद्देवीमिति तन्त्रम्।

**त्रिकालज्ञ** पु० त्रिकालवर्त्तिपदार्थान् जानाति ज्ञा-क। सर्वज्ञे त्रिकालविदादयोऽप्यत्र। [पर्वते।

**त्रिकूट** पु० त्रीणि कूटान्यस्य। लङ्कापुरसन्निहिते सुवेलाख्ये

**त्रिकोण** त्रि०त्रयः कोणायस्य। त्रिकोटियुक्ते पदार्थे, ज्योतिषोक्ते लग्नात् नवमपञ्चमस्थाने न०। 'त्रिकोणगान् गुरुः पश्यतीति ज्योतिषम्।

**त्रिकोणफल** न० त्रिकोणं त्रिकोणाकारं फलम्। शृङ्गाटके (पानीफल)। [कन् तत्रैव।

**त्रिगर्त्त** पु० सुशर्म्माख्यन्टपतेर्देशे। तद्देशस्थे जने ब०व०। स्वार्थे

**त्रिगुण** न० त्रयाणां गुणानां समाहारः। सांख्योक्ते प्रधाने। त्रिभिर्गुण्यते गुण-संख्याने घञ्। त्रिभिर्गुणिते त्रि०।

**त्रिगुणाकृत** त्रि० त्रिगुणं कृत्वा कृष्टं डाच् कृ-क्त। त्रिधाकृतेन कृष्टे क्षेत्रादौ।

**त्रिगुणात्मक** न० त्रयो गुणाः सत्त्वादयआत्मा स्वरूपं यस्य कप्। सांख्यमतोक्ते प्रधाने, वेदान्तोक्ते अज्ञाने च।

**त्रिजटा** स्त्री० रामायणप्रसिद्धे राक्षसीभेदे।

**त्रिणाचिकेत** पु० त्रिः कृतो नाचिकेतोऽग्निश्चितो येन। अध्वर्य्युभेदे 'पञ्चाग्नयो ये च त्रिणाचिकेताः' इति श्रुतिः

**त्रिणे(ने)त्र** पु० त्रीणि नेत्राण्यस्य। शिवे। पूर्व्वपदात् संज्ञायामिति णत्वे प्राप्ते गिरिनद्यादित्वात् वा णत्वमिति केचित्। क्षुभ्नादि० नेत्यन्ये।

**त्रितय** न० त्रयाणामवयवः त्रयोऽवयवा येषाम् वा तयप्। त्रयशब्दार्थे त्रित्वसंख्यायाम्। त्रित्वसंख्यान्विते त्रि०।

**त्रिदण्ड** न० त्रयाणां दण्डानां समाहारः। वाङ्मनःकायदण्डेषु, तथादण्डोपलक्षिते संन्यासाश्रमे च।

**त्रिदण्डिन्** त्रि० त्रिदण्डमस्त्यस्य इनि। 'वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च। यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते इति मनूक्ते संन्यासिभेदे।

**त्रिदला** स्त्री० त्रीणि त्रीणि दलानि प्रतिपत्रं यस्याः। (गोयालिया) गोधापदीलतायाम्।

**त्रिदश** पु० त्रिस्रो दशा जन्मसत्ताविनाशाख्या न तु वृद्धिपरिणामक्षया मर्त्त्यानामिव दशाः येषाम्। देवेषु। अथ वा त्रयधिकात्रिंशद्दत्त्वाय दश परिमाणमेषां डट् शाक० अधिकाद्दत्तशब्दलोपः एकस्यैव त्रिशब्दस्य तन्त्रतयोच्चारणात् उभयार्थपरत्वम्। त्रयस्त्रिंशत्सङ्ख्यगणवति देवे यथा अर्का द्वादश, रुद्रा एकादश, वसवोऽष्टौ, विश्वे देवौ द्वाविति। अयमेव पक्षः श्रुत्यनुगुणः त्री च दश चेति छान्दोग्येऽभिहितात् त्र्यधिकाद्दत्तताद्योतनार्थं त्री चेति द्विवचनान्ततया निर्देशः।

**त्रिदशाधिप** पु० 6त०। इन्द्रे।

**त्रिदशाध्यक्ष** पु०त्रिस्रः दशानां जाग्रत्स्वप्नसुषुप्तीनां त्रिदशानां देवानां वाऽध्यक्षः। सर्व्वसाक्षिणि ब्रह्मणि,विष्णौ च

त्रिदशालय पु० ६त० । स्वर्गे । त्रिदशावासादयोऽप्यत्र ।
त्रिदिव पु० त्रयो ब्रह्मादयोदीव्यन्त्यत्र घञर्थे आधारे क, त्रिधा सत्त्वादिभेदेन दीव्यन्ति प्रकाशन्ते दिव-क वा । स्वर्गे, आकाशे, सुखे च न० ।
त्रिदिवेश पु० ६त० । देवे त्रिदिवौकसादयोऽप्यत्र ।
त्रिदोष पु० त्रयाणां वातपित्तश्लेष्मणां सन्निपातेन दोषः । वातादिसन्निपातजे विकारकारके रोगभेदे ।
त्रिधा अव्य० त्रि+प्रकारे धाच् । त्रिप्रकारे ।
त्रिधामन् पु० त्रीणि धामानि भूरादीनि स्थानानि, तेजांसि अनलादीनि वा यस्य । शिवे, विष्णौ, अग्नौ च ।
त्रिधारक पु० त्रिषु भागेषु धारा यस्य कप् । गुण्डतृणे ।
त्रिधारस्नुही स्त्री० त्रिषु भागेषु धारा यस्याः कर्म० । (तेकांटासिजु) स्नुहीभेदे ।
त्रिनयन पु० त्रीणि नयनानि यस्य । क्षुभ्नादिषु पाठात् संज्ञायामपि न णत्वम् । शिवे । नेत्रत्रयवति त्रि० । दुर्गायाम् स्त्री० टाप् । त्रिनेत्रादयोऽप्यत्र तत्र वा णत्वमिति भेदः
त्रिनेत्रा स्त्री० त्रीणि नेत्राणीव यस्याः । वाराहीकन्दे ।
त्रिपताक न० तिस्रः पताका इव यत्र । पताकाकाररेखात्रयान्विते ललाटे, मध्यमानामिकासङ्कोचेनावशिष्टाङ्गुलित्रयोन्नतत्वेन त्रिपताकाकारितकरे पु० । 'त्रिपताकं करं कृत्वेत्यादि' अलङ्कारे जनान्तिकशब्दनिर्वचने स्थितम् ।
त्रिपथगा स्त्री० त्रयाणां पथां समाहारः अच्समा० तेन गच्छति गम-ड । गङ्गायाम् ।
त्रिपदा स्त्री० त्रयः पादा अस्य पादस्य पद्भावः टाबृचीति टापि भत्वात् पद्भावः । छन्दोभेदे ।
त्रिपदी स्त्री०त्रयः पादा अस्याः पादस्य पद्भावे ङीपि पद्भावः । (गोयालिया) गोधापदीलतायाम् । छन्दोभेदे, हंसपद्यां, हस्तिगात्रबन्धे, तत्पादबन्धने,'त्रिपदीच्छेदिनामपी'ति रघुः अर्घ्यादिपात्राधारे च (तेपाया) । स्वार्थे कन् ह्रस्वः त्रिपदिकाप्यत्र ।
त्रिपर्णी त्रीणि त्रीणि प्रतिपत्रं पर्णान्यस्याः । किंशुके । लतका पर्णां स्त्री० वा टाप् । ङीप् शालपर्ण्यां, पृश्निपर्णीभेदे च
त्रिपाद् पु० त्रयः पादा अस्य पादभावः । विष्णौ 'पादोऽस्य सर्व्वाभूतानि त्रिपादस्यामृतं दिवी'ति श्रुतिः । ज्वरे च ।
त्रिपिबत् पु० त्रिभिः कर्णाभ्यां जिह्वया च पिबति सृगति जलं पा-शतृ । वार्धीणसे लम्बकर्णे छागभेदे ।
त्रिपि(वि)ष्टप पु० मर्त्यपातालापेक्षया तृतीयं पि(व)ष्टपं भुवनम् इत्तौ त्रिशब्दस्य पूरणार्थता । स्वर्गे ।
त्रिपुट पु० त्रयः पुटा यस्य । (खेसारी) कलायभेदे शरे, तालकयन्त्रे, गोक्षुरे, हस्तभेदे च । सूक्ष्मैलायां, मल्लिकायां (तेओडि) त्रिवृदोषधौ, कर्णस्फोटायां, देवीभेदे च स्त्री० टाप् । त्रिवृति एरण्डे वा ङीप् । त्रयाणां पुटानां समाहारः । पुटत्रये स्त्री० ङीप् ।
त्रिपुटीफल पु० त्रिपुटी पुटत्रयं फलेऽस्य । एरण्डवृक्षे ।
त्रिपुण्ड्र न० त्रयाणां पुण्ड्राणां इक्षुवदाकाराणां समाहारः । ललाटस्थे तिर्य्यग् रेखात्रयात्मके, ऊर्द्ध्वरेखात्रयात्मके च तिलकभेदे । स्वार्थे कन् । 'वक्राः' ललाटगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रक'मित्युक्ते तिलकभेदे ।
त्रिपुर पु० त्रीणि स्वर्गादिस्थानि पुराण्यस्य । असुरभेदे । समाहार द्विगुः पात्रा० न ङीप् । पुरत्रयमात्रे न० ।
त्रिपुरान्तक पु० ६त० । शिवे । त्रिपुरहादयोऽप्यत्र ।
त्रिपुषा स्त्री० त्रीन् वातादिदोषान् पुष्णाति पुष-क । कृष्णत्रिवृति (कालतेओड़ि)
त्रिपुष्कर न० ज्येष्ठादिभेदेन त्रिधा स्थिते ब्राह्मे तीर्थे 'वाराः क्रूरास्तिथिर्भद्रा नक्षत्रं भग्नपादकम् । जातेऽथ जारजो योगः मरणे च त्रिपुष्कर' इति ज्योतिषोक्ते योगभेदे पु० ।
त्रिभण्डी स्त्री०त्रीन् वातादिदोषान् भण्डति भण्ड परिभाषणे अण् । त्रिवृति (तेओड़ि) । [योग' इति लीलावती
त्रिभुज न० त्रयो भुजा अस्य । त्रिकोणक्षेत्रे 'त्रिभुजे भुजयो
त्रिभुवन न० त्रयाणां भुवनानां लोकानां समाहारः पात्रा० न ङीप् । त्रिलोक्यां मिलितेषु स्वर्गमर्त्त्यपातालेषु ।
त्रिमधु न० त्रयाणां मधूनां मधुराणां समाहारः । 'घृतं सिता माक्षिकं च विज्ञेयञ्च मधुत्रय'मित्युक्ते मधुरत्रये । ऋग्वेदोक्ते मधुवाता' इत्यादिके मन्त्रत्रिकभेदे तदभिज्ञे च पु० ।
त्रिमार्गगा स्त्री०त्रिभिर्मार्गैर्गच्छति गम-ड । गङ्गायां 'त्रिमार्गगेव त्रिदिवस्य मार्ग' इति कुमारः । (पामड़ा) क्षुपभेदे
त्रियष्टि स्त्री०त्रिषु वातादिषु यष्टिरिव विद्रावकत्वात् । (श्वेत-
त्रियामा स्त्री०त्रयो यामाः प्रहरा अस्याः । 'त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टय'मित्युक्तायां रात्रौ, हरिद्रायाम्, नील्यां, कृष्णत्रिवृति च ।
त्रिरात्र न० तिसृणां रात्रीणां समाहारः अच् समा० । रात्रित्रये, तदुपलक्षिते दिनत्रये च'त्रिरात्रमशुचिर्भवेदि'ति स्मृतिः
त्रिरेख पु० तिस्रो रेखा यत्र । शङ्खे ।
त्रिलोकी स्त्री० त्रयाणां स्वर्गादीनां लोकानां समाहारः ङीप् । लोकत्रये 'यदि त्रिलोकी गणनापरेति' नैषधम् ।
त्रिलोकेश पु० त्रयाणां लोकानामीशः उत्तरपदद्विगुः । सूर्ये,

शिवे, विष्णौ च। [रजततास्राभिधधातुत्रये।

त्रिलौहक न० त्रयाणां लौहानां धातूनां समाहारः। सुवर्ण-

त्रिवर्ग पु० त्रयाणां धर्म्मार्थकामानां वर्गः। धर्म्मार्थकाम-
रूपेषु पुरुषार्थेषु, त्रिफलायां, कटुत्रिके, साङ्ख्योक्ते सत्त्व-
रजस्तमोरूपगुणत्रये। 'क्षयः स्थानं च वृद्धिश्च त्रिवर्गो
नीतिवेदिना'मित्युक्ते आयव्ययवृद्धिरूपेषु पदार्थेषु च।

त्रिवर्णक पु० त्रयो वर्णाः पुष्पेऽस्य कप्। गोक्षुरे। समा० द्वि०
पात्रा० स्वार्थे कन्। त्रिफलायां, त्रिकटौ, ब्राह्मणक्षत्रियवैश्य-
रूपे द्विजातिवर्णत्रये च न०। [त्रिवर्षवयस्कायां गवि।

त्रिवर्षिका स्त्री० त्रीणि वर्षाणि वयोऽस्याः स्वार्थे कन्।

त्रिविक्रम पु० त्रीन् लोकान् विशेषेण सामस्त्येन क्रामति वि+
क्रम-अच्। विष्णौ, 'त्रिरित्येव त्रयो लोका कीर्त्तिता मुनि-
सत्तमैः क्रमते तांस्तथा सर्व्वान् त्रिविक्रमो जनार्द्दन' इति
हरिवंशः बलिबन्धनसमये हि तस्य तथारूपत्वम्।

त्रिवीज पु० त्रीणि त्रीणि वीजानि प्रतिफलं यस्य। श्यामाके

त्रिवृत्(ता) पु० त्रीन् अवयवान् वृणोति वृ-क्विप् त्रिभिरवयवै
र्वृता वा। (तेओडि) ओषधिभेदे, वर्त्तनं वृत् तिस्रः वृतो
यत्र। त्रिगुणे त्रि०'त्रिप्रसोर्द्धवृतं त्रिवृ'दिति स्मृतिः। तासां
त्रिवृतमेकैकां करोतीति श्रुत्युक्तेषु मिश्रितेषु तेजोजलान्नेषु च

त्रिवृत्पर्णी स्त्री० त्रिवृत् त्रिदोषघ्नम् पर्णमस्याः। (हिलञ्चा) हिल
मोचिकायाम्। [युक्तप्रवाहे च दक्षिणे उत्तरे च प्रयागे।

त्रिवेणी स्त्री० तिस्रः वेण्यः प्रवाहा यत्र कप्। युक्तप्रवाहे

त्रिवेणु पु० त्रयो वेणवो यत्र। रथमुखस्थे ऽवयवभेदे।

त्रिवेदिन् पु० त्रयो वेदाः पाठ्यत्वेन सन्त्यस्य इनि। ऋगादि-
वेदत्रयपाठके।

त्रिशङ्कु पु० सूर्य्यवंशीयन्टपभेदे। त्रिषु अवयवेषु शङ्कुरिव।
शलभे, मार्ज्जारे, चातके, खद्योते च।

त्रिशाखपत्र पु० तिस्रः शाखा अस्य तादृशं पत्रं यस्य। विल्वे

त्रिशिख पु० तिस्रः शिखाः प्रतिपत्रमस्य। विल्वे। राक्षसभेदे
च। त्रिशूले, मणुलान्तरे च न०। शिखात्रयवति
माणवकादौ त्रि०।

त्रिशिरस् पु० त्रीणि शिरांस्यस्य। राक्षसभेदे, ज्वरे, कुवेरे च

त्रिशीर्षक न० त्रीणि शीर्षाण्यस्य कप्। त्रिशूले।

त्रिशूल न० त्रीणि शूलानि शिखारूपाणि यत्र। स्वनाम-
ख्याते अस्त्रभेदे। [शूल त्रि० स्त्रियां ङीप्

त्रिशूलिन् पु० त्रिशूलमस्त्यस्य इनि। शिवे। त्रिशूलधारि

त्रिशृङ्ग पु० त्रीणि शृङ्गाण्यस्य। त्रिकूटपर्व्वते।

त्रि(ष)ष्टुप् स्त्री० त्रिषु स्थानेषु स्तुभ्नाति स्तुभ-क्विप् षत्वम्

त्रेः संप्रसारणं वा। एकादशाक्षरपादके छन्दोभेदे।

त्रिसन्ध्य न० तिसृणां सन्ध्यानां समाहारः। त्रिकाले प्राह्ण
पराह्णमध्याह्नरूपकालत्रये। 'त्रिसन्ध्यं यः पठेन्नित्य'मिति।

त्रि(ष)सवन न० त्रीणि सवनानि यत्र काले वा षत्वम्।
त्रिकाले। समाहारद्विगुः। त्रैकालिके स्नानत्रये च।
'वाग्यतस्त्रि(ष)सवनं चरेदि'ति स्मृतिः।

त्रिस्रोतस् स्त्री० त्रिषु लोकेषु स्रोतो यस्याः। गङ्गायाम्

त्रिहल्य त्रि० त्रिवारं हलेन कृष्टं यत्। त्रिवारकृष्टे क्षेत्रे

त्रिहायणी स्त्री० त्रयो हायना वयोमानमस्याः ङीप् णत्वम्।
त्रिवर्षायां गवि। [अत्रुटीत्।

त्रुट छेदने दिवा० तुदा० कु० पर० सक० सेट्। त्रुट्यति त्रुटति

त्रुट छेदने चुरा० आ० सक० सेट्। त्रोटयते अतुत्रुटत।

त्रुटि(टी) स्त्री० त्रुट-इन् किच्च वा ङीप्। लेशे, संशये, सूक्ष्मै-
लायां, निमेषद्वयरूपे कालभेदे, हानौ च।

त्रुन्प(म्प) वधे भ्वा० पर० सक० सेट्। त्रुम्पति अत्रुम्पीत्।

त्रुन्फ(म्फ) वधे भ्वा० पर० सक० सेट्। त्रुम्फति अत्रुम्फीत्।

त्रुप(फ) वधे भ्वा० पर० सक० सेट्। त्रोप(फ)ति अत्रोपी(फी)त्

त्रेता स्त्री० त्रीन् इता नि०। दक्षिणाग्निगार्हपत्याहवनीयात्मके
समुदिते अग्नित्रये, सत्ययुगानन्तरवर्त्तिनि युगभेदे, द्यूत-
क्रीड़ासाधनस्याक्षस्य यस्मिन् पार्श्वे त्रयोऽङ्कास्तस्य पार्श्वस्य
उत्तानतया पतने, द्यूतविशेषे वराटकानां मध्ये त्रयाणामु-
त्तानतया पतने च 'त्रेताहृतसर्व्वस्व'मिति मृच्छकटिकटीका

त्रेधा अव्य० त्रि+प्रकारार्थे धाच् त्रेस्त्रे इत्यादेशः। त्रिप्रकारे

त्रै पालने भ्वा० आ० सक० अनिट्। त्रायते अत्रास्त।

त्रैगुणिक त्रि० त्रिगुणार्थं प्रयच्छति त्रिगुणं यद्धेतुमेकगुणं
प्रयुङ्क्ते 'तत्प्रयच्छति गर्ह्य'मि'ति ठक्। एकगुणं दत्त्वा
त्रिगुणं ग्रहीतरि वार्द्धुषिकभेदे।

त्रैगुण्य न० त्रयाणां गुणानां सत्त्वरजस्तमसां समाहारः ततः
स्वार्थे ष्यञ्। सत्त्वादिषु गुणेषु 'त्रैगुण्यविषया वेदा' इति
गीता। गुणत्रयकार्य्यपुण्यापुण्यकर्मफलयुक्ते संसारे च।

त्रैध न० त्रिप्रकारम् त्रि-धमुञ्। त्रिप्रकारार्थे।

त्रैलोक्य न० त्रयाणां लोकानां समाहार ततः स्वार्थे ष्यञ्।
स्वर्गमर्त्त्यपातालात्मके लोकत्रये।

त्रैलोक्यविजया स्त्री० त्रैलोक्यं विजयते सेवने स्वाधीनं
करोति वि+जि-अच्। भङ्गायाम् (भाङ)

त्रैविद्य पु० तिस्रो विद्याः समाहृताः ऋग्यजुःसामरूप
त्रिविद्यं तदधीते वेद वा अण्। वेदत्रयाभिज्ञे।

त्रैष्टुभ न० त्रिष्टुबेव स्वार्थे अण्। एकादशाक्षरपादके छन्दोभेदे।

तोटि(टी) स्त्री० पु० तुट-इ वा ङीप् । कट्फले, चञ्चाम्, (पचिर ठोठ) पक्षिभेदे मत्स्यभेदे च ।
तोत्त्र न० । तै-ष्ट्रन् । गवादिताड़ने (पांचनि) लगुडे ।
तौक गत्यां भ्वा० आत्म० सक० सेट् । तौकते अतौकिष्ट । णिच् । अततौकत् त ।
त्र्यम्बक पु० त्रीणि अम्बकानि नेत्राण्यस्य व्युतपत्त्यन्तरं हृहद्-भिधाने । शिवे । क्वचित् भामायामपि इयङादेशस्येष्ट-त्वात् त्रियम्बकोऽप्यत्र 'त्रियम्बकं संयमिनं ददर्शेति कु०।
त्र्यम्बकसख पु० ६त० मचसमा०। कुबेरे ।
त्र्यहस्पर्श पु० त्रयाणामह्नां तिथीनां स्पर्शो यत्रैकस्मिन् सौर दिने । तिथित्रयस्पर्शयुक्ते एकस्मिन् सौरदिने ।
त्र्यहस्पृश् पु० त्रीणि अह्नानि वारान् स्पृशति स्पृश-क्विन् । वारत्रयस्पर्शकारिण्यामेकस्यां तिथौ ।
त्र्येणी स्त्री० त्रीणि एतानि कर्बुराणि यस्या ङीप् तस्य न । (सजारुलोम) श्वाविल्लोमनि ।
त्व त्रि० तन-विच् अंनस्य वः । भिन्ने अन्यस्मिन्नर्थे सर्व्वनामायम्
त्वक्पञ्चक न० त्वचः पञ्चकम् । 'न्यग्रोधोडुम्बराश्वत्थशिरीष प्लक्षपादपाः । पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्चकं मत-मित्युक्तें न्यग्रोधादिवल्कले ।
त्वक्पत्र न० । त्वगिव पत्रमस्य गुड़त्वचि (दारचिनि) तेज-पत्रे च । हिङ्गुपत्र्यां स्त्री० ङीप् । [स्त्रीत्वे ङीप्
त्वक्पुष्प न० त्वचः पुष्पमिव । रोमाञ्चे । किलासरोगे पु०स्त्री०
त्वच .कार्श्ये भ्वा०पर०सक०वेट् । त्वचति अत्वचीत् अत्वाचीत्
त्वच्च संवृतौभ्वा०पर०सक०सेट्। त्वचति अत्वचीत् ।[(दारचिनि)
त्वक्सार पु० त्वचि, त्वक् वा सारोऽस्य । वंशे, गुडत्वचि च
त्वग्गन्ध पु० त्वचि फलवल्कले गन्धोऽस्य । नारङ्गे, जम्बीरे ।
त्वग्दोषान्त पु० त्वग्दोषस्यान्तो यस्मात् ५बं० । हस्तिकन्दे ।
त्वच संवरणे तु०पर०सक०सेट् । त्वचति अत्वाचीत् अत्वचीत्
त्वच्(चा) स्त्री० त्वच-संपा० क्विप् वा टाप्। वल्कले, चर्म्मणि, गुड़त्वचि च ।
त्वच न०त्वच-अच् । चर्म्मणि, वल्कले,त्वक्पत्रे च (तेजपात्)।
त्वचिसार पु० त्वचि सारोऽस्य हलदन्ता० सप्तम्या अलुक्। वंशे
त्वत् त्रि० तन-क्विप् अनो वः तुक् च । अन्यार्थे सर्व्वनामायम्
त्वञ्च गतौ भ्वा०पर०सक० सेट् । तञ्चति अतञ्चीत्। तञ्चित्वा तक्त्वा । [ईदित् मतान्तरे क्त्वावेट् अन्यत्र सेट् ।
त्वञ्च सङ्कोचे रुधा०पर०सक० वेट् । तनक्ति अतञ्चीत् अता-
त्वर वेगे भ्वा० आत्म० अक० सेट् घटा० । त्वरते अत्वरिष्ट । णिच-त्वरयति । त्वरा ।
त्वरा स्त्री० त्वर-अङ् । वेगे, अभीष्टलाभार्थं विलम्बासहने च
त्वरित न० त्वर-क्त । शीघ्रे । तद्वति त्रि० ।
त्वरितोदित त्रि० त्वरितं शीघ्रं यथा तथोदितमुच्चारितम् वद-क्त । शीघ्रोच्चारिते।
त्वष्टृ पु० त्वक्ष्-तृन् । देवशिल्पिनि विश्वकर्म्मणि, द्वादशादित्य मध्ये आदित्यभेदे, तक्षणकारिणि (छुतार) वर्णसङ्करभेदे, चित्रानक्षत्रे च । [क्विप् । ताद्दक् । एतान्यत्रार्थे
त्वादृश त्रि० तवेव दर्शनमस्य कञ् । त्वत्सदृशे, ट। तादृशः ।
त्वाष्ट्र पु० त्वष्टुरपत्यम् । वृत्रासुरे संज्ञानाम्न्यां सूर्यपत्न्याम् स्त्री० ङीप् । त्वष्टा देवताऽस्य अण् । चित्रानक्षत्रे ।
त्विष्(षा) स्त्री० त्विष-सम्प०क्विप् वा टाप्। दीप्तौ । [अत्विक्षत
त्विष दीप्तौ भ्वा०उभ०अक०अनिट् । त्विषति ते । अत्विषत्
त्विषांपति पु० ६त० अलुक्स० । सूर्य्ये ।
त्सर छद्मगतौ भ्वा०पर०सक०सेट् । त्सरति अत्सारीत् ।
त्सरु पु० त्सर-उ । खड्गमुष्टौ ।

## थ

थ पु० थुड-ड । पर्व्वते, भयत्रारके, व्याधिभेदे, भयचिह्ने भक्षणे च । रक्षणे, मङ्गले, भये च न० ।
थुड संवृतौ तु०कु०पर०सक०सेट् । थुडति अथुडीत् ।
थुत्कार पु० थुदित्यव्यक्तशब्दस्य कारः कृ-घञ् । निष्ठीवन-त्यागानुकरणशब्दे ।
थुर्व्व वधे भ्वा०पर०सक०सेट् । थूर्वति अथूर्व्वीत् । थूर्त्तः ।

## द

द पु० दा-दैप-दो-वा क । पर्व्वते, दत्ते खण्डने च। भार्य्यायाम् स्त्री०। दातरि त्रि० 'दे! वःपतिर्विदुषो'ति नैषधम् ।
दंश पु० दन्श-अच् । वनमक्षिकायाम् (डांश) दन्श-करणादौ घञ् । वर्म्मणि, मर्म्मणि, दोषे, खण्डने, सर्पाघाते, दन्ते च ।
दंशन न० दन्श-भावे ल्युट् । दन्तादिना खण्डने । करणे ल्युट् । वर्म्मणि ।
दंशित त्रि० दंशः वर्म्म संजातोऽस्य । कृतसन्नाहे धृतवर्म्मणि
दंष्ट्रा स्त्री० दश्यतेऽनया दन्श-ष्ट्रन् अजा०न ङीप्। दन्तभेदे दन्तपङ्क्तिद्वयप्रान्तस्थायां द्विगुणाकृतायां दन्तावलौ ।
दंष्ट्रिन् पु०दंष्ट्रा+अस्त्यर्थे इनि । सूकरे, सर्पे च। दंष्ट्रायुक्ते त्रि०
दक्ष वृद्धौ शीघ्रार्थे च भ्वा०आत्म०अक०सेट् । दक्षते अदक्षिष्ट ।
दक्ष त्रि० दक्ष-अच् । निपुणे कार्य्यकुशले, शिक्षिते, अनलसे च कुक्कुटे, शिवद्दषे, मुनिभेदे, ब्रह्मणः दक्षाङ्गुष्ठाज्जाते प्रजा-

प्रतिभेदे च पु० । [संख्यकास्तु । दक्षजाद्योऽप्यत्रैव ।
**दक्षकन्या** स्त्री० ६त० । अश्विन्यादितारासु सतीषु प्रसूतिषु
**दक्षिण** पु० दक्ष-इनन् । सर्व्वनायिकासु समानुरागे नायक-
भेदे । मध्यदेशात् दक्षिणे देशे शरीरस्य दक्षिणभागे
च । अनुत्तरे, सरले, परच्छन्दानुवर्त्तिनि अवामभागस्थे
औदार्य्यवति च त्रि० । [कालिकायाम् ।
**दक्षिणकालिका** स्त्री० दक्षिणचरणेन शिवहृदयारूढायां
**दक्षिणतस्** अव्य० दक्षिण+अतसु । दक्षिणे देशे दिशि वा ।
**दक्षिणपूर्व्वा** स्त्री० दक्षिणपूर्व्वयोरन्तराला दिक् ब० । अग्नि-
कोणे विदिशि । [रूपे मार्गे तन्त्रोक्ते आचारभेदे च ।
**दक्षिणमार्ग** पु० कर्म्म० । पितृयानरूपे कर्म्मिणां गतागतस्य-
**दक्षिणस्थ** पु० दक्षिणे तिष्ठति स्था-क । सारथौ ।
**दक्षिणा** अव्य० दिग्देशकालवृत्तेर्दक्षिणशब्दात् प्रथमापञ्चमीसप्तम्यर्थे
आच् । प्रथमाद्यर्थविशिष्टे दक्षिणदिग्देशार्थे । याम्यदिशि,
यज्ञशेषे कर्मणः साङ्गतार्थं देये द्रव्ये,यज्ञपत्न्याम्,'अध्वरस्येव
दक्षिणे'ति रघुः । प्रतिष्ठायाम्, दक्षिणकालिकायाम्, रुचि-
प्रजापतेः कन्यायां, परिक्रयद्रव्ये, नायिकाभेदे च स्त्री० ।
**दक्षिणाग्नि** पु० कर्म्म० । अन्वाहार्य्यपचनाख्ये यज्ञियाग्निभेदे
**दक्षिणाचार** पु० कर्म्म० । 'स्वधर्मनिरतो नित्यं पशुतत्त्वेन
पूजयेत् । सएव दक्षिणाचारः शिवोभूत्वा शिवां यजे'दि-
त्युक्ते आचारभेदे ।
**दक्षिणात्** अव्य० दक्षिणा आति । प्रथमापञ्चमीसप्तम्यर्थवृत्ते
दिग्देशवृत्तिदक्षिणशब्दस्यार्थे । आहि दक्षिणाहीत्यत्र ।
**दक्षिणापथ** पु०७त० । इन्द्रप्रस्थादवन्तिनगरीमतिक्रम्य दक्षिणदि-
ग्वर्त्तिदेशभेदे ।
**दक्षिणामूर्त्ति** पु०क० । न पुंवद्भावः । शिवस्य मूर्त्तिभेदे ।
**दक्षिणायन** न० दक्षिणस्यामयनम् गमनं, तत् यस्मिन् काले
वा । कर्कटे रविसंक्रमणे, तदादिषण्मासे काले च ।
**दक्षिणारुस्** पु० दक्षिणे भागे अरुर्म्मर्मस्य । व्याधक्षत
दक्षिणाङ्गव्रणे मृगे ।
**दक्षिणावर्त्त** त्रि० दक्षिणे आवर्त्तते आवृत-अच् । दक्षिणा-
वृत्तियुक्ते पदार्थे 'दक्षिणावर्त्तशङ्खोऽय'मिति नाटकम् ।
**दक्षिणेर्म्मन्** पु० दक्षिणे ईर्म्मं व्रणं यस्य नि० अनिष् । व्याध-
कृतव्रणयुक्तदक्षिणाङ्गके मृगे । [दक्षिणीयोऽप्यत्र ।
**दक्षिण्य** त्रि० दक्षिणामर्हति यत् । दक्षिणार्हे ऋत्विगादौ । छ ।
**दग्ध** त्रि० दह-क्त । भस्मीकृते । कृत्ते न० । [रोहिषाख्य
दग्धरुह पु० दग्धोऽपि रोहति रुह-क । तिलकवृक्षे, भस्म-
**दग्धिका** स्त्री० कुत्सिता दग्धा कुत्सिते कन् । (पोड़ाभात)

दग्धान्ने । दग्धा+स्वार्थे कन् अतइत्त्वम् । दग्धाहारे ।
**दग्धेष्टका** स्त्री० कर्म्म० । आमके (झामा) ।
**दघ** त्यागे पालने च स्वा०पर०सक०सेट् । दघ्नोति । दङ्घितिअदङ्घीत्
**दघ** घातने स्वा० पर०सक०सेट् । दघ्नोति अदाघीत्-अदघीत्
**दण्ड** दण्डपातने अद० चुरा० उभ०सक०सेट् । दण्डयति-ते
अददण्डत्-त ।
**दण्ड** पु० न०दण्ड-अच् । लगुड़े (लाठि) । व्यूहभेदे, प्रकाण्डे
अश्वे,कोणे, मन्थनदण्डे, सैन्ये च पु० । दम्यतेऽनेन दम-ड
तस्य नेत्त्वम् । षष्टिपलात्मके काले, भूमिमानभेदे, (काठा)
सूर्य्यानुचरे च पु० । दण्ड-भावे घञ् । अर्थापहाररूपे
राज्ञां चतुर्थोपाये । दण्ड-कर्त्तरि अच् । यमे पु० ।
**दण्डका** स्त्री० दण्डकारण्ये जनस्थाननामके वने ।
**दण्डकाक** पु० दण्डाकारः काकः । द्रोणकाके ।
**दण्डकारण्य** दण्डकनामन्पतेर्देशे शुक्रशापाद् वनतां गते
जनस्थाने वने, तीर्थभेदे च ।
**दण्डधर(धार)** पु० दण्डं धारयति धृ णिच्-अच् ह्रस्वः
अण् वा । यमे, नृपे, कुम्भकारे च । दण्डहस्ते त्रि० ।
**दण्डनायक** पु० ६त० । चतुरङ्गसेनाध्यक्षे । [युक्तनीतिशास्त्रे
**दण्डनीति** स्त्री० दण्डोनीयते बोध्यते यया नी-क्तिन् । शुक्रा
**दण्डपारुष्य** न० दण्डेन पारुष्यं यत्र । अष्टादशविवादमध्ये
विवादभेदे, राज्ञां व्यसनभेदे च ।
**दण्डविष्कम्भ** पु० दण्डं विष्कम्भाति विरुणद्धि वि+स्कम्भ
अच् यत्वम् । दधिमन्थनकाष्ठभेदे (घोलमन्थोया खुटि)
**दण्डवृत्तक** पु०दण्डाकारः पत्रादिहीनत्वात् वृक्षः । स्नुहीवृक्षे
**दण्डादण्डि** अव्य० दण्डैश्च दण्डैश्च प्रहृत्येदं प्रवृत्तं युद्धम्
क्रियाव्यतिहारे इच् समा० पूर्व्वपददीर्घः । परस्परदण्डक-
रणकप्रहारपूर्व्वकं प्रवृत्ते युद्धे ।
**दण्डाहत** न० दण्डेनाहन्यते आ+हन क्त । तक्रे (घोल)
**दण्डिन्** पु० दण्ड+अस्त्यर्थे इनि । यमे, नृपे, द्वारपाले,
मञ्जुघोषे रवेः पार्श्वचरभेदे, जिनभेदे, दमनवृक्षे, चतु-
र्थाश्रमविशिष्टे,काव्यादर्शकर्त्तरि कविभेदे च । दण्डधारके
त्रि० । स्त्रियां ङीप् ।
**दत्त** त्रि०दा-क्त । वितीर्णे,त्यक्ते, रक्षिते च । द्वादशपुत्रमध्ये पुत्र-
भेदे (दत्तक) वैश्यस्योपाधिभेदे । 'भूतिर्दत्तश्च वैश्यस्येति स्मृतेः
दत्तात्रेयाख्ये भगवतोऽवतारभेदे च । भावे क्त । दाने,
'दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् । पण्यमूल्यं भृतिः
स्तुष्ट्या स्नेहात् प्रत्युपकारतः । स्त्रीशुल्कानुग्रहार्थं च दत्तं
सप्तविधं स्मृत'मित्युक्ते दानभेदे च न० । स्वार्थे कन् स्वनाम-

ख्याते 'दद्यात् माता पिता वा यं स पुत्रो दत्तको भवेदि'त्युक्ते पुत्रभेदे पु० ।

**दत्ताप्रदानिक** न० दत्तस्याप्रदानं पुनरादानमस्त्यस्मिन् ठन् । अष्टादशविवादान्तर्गते दत्तवस्तुनः पुनरुपादानविषये 'दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम व्यवहारपदं हि तदि'ति नारदोक्ते व्यवहारभेदे ।

**दत्तात्मन्** पु०दत्त आत्मा येन । 'दत्तात्मा तु स्वयं दत्त'इत्युक्ते पुत्रभेदे ।

**दत्त्रिम** त्रि० दानेन निर्वृत्तः दा-क्त्रि-त्रिमप् च । दाननिर्वृत्ते । 'माता पिता वा दद्याद्वा यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुत' इत्युक्ते दत्तकपुत्रे पु० ।

**दद** दाने धृतौ च भ्वा०आ०सक०सेट् । ददते अददिष्ट दददे

**दद्रु** पु० दद-रु । रोगभेदे (दाद) कच्छपे च ।

**दद्रुघ्न** पु० दद्रुं हन्ति हन-टक् । चक्रमर्द्दके । (दादमर्द्दन) ।

**दद्रुण** त्रि० दद्रु-अस्त्यर्थे न । दद्रू-न ह्रस्वश्च वा । दद्रुरोगवति

**दद्रू** पु० दरिद्रा-ऊ नि० । त्वग्रोगभेदे (दाद्) ।

**दध** दाने धारणे च भ्वा०आ०सक० सेट् । दधते अदधिष्ट ।

**दधि** न० दध-इन् । (दइ) दुग्धविकृतिभेदे, वस्त्रे च । धा-कि द्वित्वम् । धारणकर्त्तरि त्रि० ।

**दधिकूर्चिका** स्त्री०'दध्ना सह पयः पक्वं यत् स्यात्दधिकूर्चिके'त्युक्तायामामिक्षायाम् (छाना) । [(कएतबेल)

**दधित्थ** पु० दधिवद्वर्णस्तिष्ठत्यस्मिन् स्था-क पृ० । कपित्थे

**दधिपुष्पिका** स्त्री०दधिवत् शुभ्रं पुष्पमस्याः कप् अत इत्त्वम् । श्वेतापराजितायाम् । कवभावे ङीप् । कोलशिम्ब्याम् ।

**दधिफल** पु० दधिवत् द्रवः फलेऽस्य । कपित्थे ।

**दधिमण्ड** पु० ६त० । दध्नः मस्तुनि (मात) ख्याते पदार्थे ।

**दधिसक्तु** पु० ब०व० । दध्युपसिक्ताः सक्तवः । दधिमिश्रितसक्तुषु

**दधिसार** न० ६त० । नवनीते ।

**दधीच(चि)** पु० अथर्वमुनेरौरसे कर्द्दमप्रजापतिकन्यायां जाते मुनिभेदे, वृत्तासुरबधार्थं यस्यास्थिभिः देवैर्वज्रं निर्मितम्

**दधीचास्थि** न० ६त० । तेन निर्मितत्वेन तत्त्वारोपः । वज्रे तन्नामके हीरके च ।

**दध्न** पु०दध-न । यमभेदे 'औडम्बराय दध्नायेति यमतर्पणमन्त्रः

**दनु** स्त्री० कश्यपपत्न्याम् दक्षप्रजापतेः कन्यायां दानवमातरि

**दनुज** पु०दनोर्जायते जन-ड । असुरे,दनुजस्तुप्रभृतयोऽप्यत्र

**दन्त** पु० अन्तर्भावितण्यर्थे दम-तन् । चर्वणसाधनेऽस्थिभेदे (दांत) कुञ्जे, पर्वतनितम्बे, सानुनि, द्वात्रिंशत्संख्यायाञ्च ।

**दन्तक** त्रि० दन्ते प्रसितः कन् । दन्तमार्ज्जनोपजीविनि । नागदन्ते, गिरिप्रदेशात् तिर्य्यग्बहिर्गते पाषाणे च पु० । स्वार्थे कन् दन्तार्थे पु० ।

**दन्तकर्षण** पु० दन्तान् कर्षति कृष-ल्यु । जम्बीरे ।

**दन्तकाष्ठ** न० दन्तधावनार्थं काष्ठम् । दन्तधावनसाधने काष्ठे । तत् यस्मात् ५ब० । विकङ्कतवृक्षे पु० । [(ठोंट)

**दन्तच्छद** पु० दन्ताम्छाद्यन्तेऽनेन छद-णिच्-घ ह्रस्वः । ओष्ठे

**दन्तच्छदोपमा** स्त्री० दन्तच्छदओष्ठ उपमीयतेऽनया अङ् । विम्बीलतायाम् (तेलाकुचा) तत्फलेन हि ओष्ठसादृश्यं प्रसिद्धम्

**दन्तधावन** पु० दन्तान् धावयति शोधयति धाव-ल्यु । खदिरवृक्षे, गुञ्जकरञ्जे, वकुले च । भावे ल्युट् । दन्तशुद्धौ ।

**दन्तपत्रक** न० दन्तइव शुभ्रं पत्रं दलं यस्य । कुन्दपुष्पे ।

**दन्तपुष्प** न० दन्तइव शुभ्रं पुष्पमस्य । कुन्दे, कतकफले च ।

**दन्तफल** न० दन्तइव शुभ्रं फलम् । कतकफले । दन्तवत् फलमस्य । कपित्थे पु० । पिप्पल्याम् स्त्री० टाप् ।

**दन्तमूलिका** स्त्री० दन्तइव शुभ्रं मूलं यस्याः कप् । दन्तीवृक्षे

**दन्तवक्त्र** पु० दन्तप्रधानं वक्त्रमस्य । कृष्णद्वेष्ये नृपतिभेदे ।

**दन्तवीजक** पु० दन्तवत् वीजानि यस्य । दाड़िमे वृक्षे ।

**दन्तशठ** पु० दन्तान् शठति छेदयति अच् । जम्बीरे, कपित्थे कर्म्मरङ्गे, नागरङ्गे च । चाङ्गेर्य्यां चुक्राम्लिकायां स्त्री० ।

**दन्ताघात** पु० दन्तमाहन्ति आ+हन-अण् । निम्बूके । भावे घञ् । दन्तैराहनने ।

**दन्तालिका** स्त्री० दन्तान् अलति भूषयति, तेभ्यो वा पर्याप्नोति अल+अण्-ण्वुल् वा । वल्गायाम् । (लागाम)

**दन्तावल** पु० दन्त+अस्त्यर्थे वलच् पूर्व्वदीर्घः । हस्तिनि ।

**दन्तिका** स्त्री० दम-तन्+गौरा०ङीष् स्वार्थे कन् । दन्तीवृक्षे ।

**दन्तिन्** पु० दन्त-इनि । हस्तिनि ।

**दन्तिनी** स्त्री० दन्त-इनि । दन्तीवृक्षे । [सोमधौत ।

**दन्ती** स्त्री०दम-तन् गौरा०ङीष् । उदुम्बरपर्ण्यां, मत्स्यपर्ण्यां-

**दन्तीवीज** न० ६त० । रेचके फलभेदे जयपाले ।

**दन्तुर** त्रि० उन्नताः दन्ताः सन्त्यस्य दन्त+उरच् । उन्नतदन्तयुक्ते, उन्नतानते विषमे स्थाने च ।

**दन्तुरच्छद** पु० दन्तुर उन्नतानतःछदो यस्य । वीजपूरे ।

**दन्तोलूखलिक** पु० दन्ताएव उलूखलः कण्डनसाधनं विद्यतेऽस्य ठन् । तापसभेदे स हि दन्तैरेव ब्रीह्यादीन् कण्डयित्वा खादति । इनि । दन्तोलूखलीत्यप्यत्र ।

**दन्त्य** त्रि० दन्ते दन्तमूले वा भवः यत् । दन्तदन्त्यमूलयोर्जाते तवर्गादौ वर्णे । दन्तेभ्यो हितः यत् । दन्तहितकारके ।

दन्दशूक पु० गर्हितं दशति दंश-गर्हार्थे यङ्-ऊक । राक्षसे, सरीसृपे, सर्पे च । [दम्भिता दब्ध्वा ।
दन्भ दम्भे स्वा० प० अक० सेट् । दभ्नोति अदम्भीत् ।
दन्भ संघाते चु० आत्म० अक० सेट् । दम्भयते अददम्भत ।
दन्श दंशने भ्वा० पर० सक० अनिट् । दशति अदाङ्क्षीत् ।
दभ प्रेरणे चु०उभ०सक०सेट् इदित् । दम्भयति ते अददम्भत् त
दभ प्रेरणे चु०उभ०सक०सेट् । दभयति ते अदीदभत् त ।
दभ्र न० दन्भ-रक् । अल्पे, 'अदभ्रदर्भामधिशय्य'ेति भारविः
दम शमे दण्डे च दि० शमा० अक० सेट् । दाम्यति अदमत्-अदमीत् । दमित्वा दान्त्वा ।
दम पु० दम०-घञ् । दण्डे, बाह्येन्द्रियाणां ध्येयविषयव्यतिरिक्तेभ्यो निवर्त्तने, 'निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते' इत्युक्ते बाह्येन्द्रियव्यापाररोधे, विकारहेतुसन्निधानेऽपि मनसः स्थैर्ये, 'कुत्सितात् कर्म्मणो विप्र ! यच्च चित्त निवारणम् । स कीर्त्तितो दम'इत्युक्ते कुकर्म्मभ्यो मनसो निवारणे, कर्द्दमे, दमने च । [घोषज' इति माघः
दमघोष पु० शिशुपालपितरि चन्द्रवंश्ये नृपभेदे, 'सुदमोदम-
दमघोषसुत पु०६त० । शिशुपाले । दमघोषजादयोऽप्यत्र ।
दमनक पु० दम-ल्यु स्वार्थे कन् । (दोना) वृक्षभेदे,कुन्दवृक्षे च
दमनी स्त्री० दम्यतेऽनया ल्युट् । अग्निदमनीवृक्षे ।
दमयन्ती स्त्री० दम-णिच्-शतृ । नलराजपत्न्याम्, भद्रमल्लिकायाञ्च ।
दमित त्रि० दम-क्त नि० । दान्ते, भारवहनादिक्लेशसहे च ।
दमु(मू)नस् पु० दम-उनसि वा दीर्घः । अग्नौ,शुक्राचार्य्ये च
दम्पती पु०द्वि०व० । जाया च पतिश्च द्वन्द्वे जायाशब्दस्य दमादेशः । मिलितयोः जायापत्योः ।
दम्भ पु० दम्भ-घञ् । कपटे शाठ्ये ।
दम्भोलि पु० दभ्नोति खेदयति दन्भ-ओलि । वज्रेऽस्त्रे ।
दम्य पु० दम-यत् क्यप् वा । प्राप्तभारवहनयोग्यवयस्के वत्से, अनडुहि च । दमनीये दमनार्हे शास्ये च त्रि० [अदयिष्ट ।
दय गतौ वधे, दाने पालने च भ्वा०आत्म०सक० सेट् । दयते
दया स्त्री० दय-भिदा० अङ् । 'यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते । इच्छा भूमिसुरश्रेष्ठ ! सा दया परिकीर्त्तिते'त्युक्तलक्षणेच्छाभेदे । [इत्युद्भटः ।
दयालु त्रि० दय-आलुच् । कृपायुक्ते । 'दयालुरपि स कृप्यः'
दयित पु० दय-क्त । पत्यौ । प्रियमाते त्रि० । भार्य्यायां स्त्री०
दर अव्य० दृ-अप् । ईषदर्थे । भये,गर्त्ते च पु०न० । 'दरादराभ्यां दरकम्पिनी'ति नैषधम् । कन्दरे पु०स्त्री० स्त्रीत्वे ङीप् ।
दरकण्टिका स्त्री० दरः कण्टः यस्याः स्वार्थे कन् । शतावर्य्याम्
दरत् स्त्री० दृ-अदि । प्रपाते, भये, पर्व्वते, शरे, म्लेच्छजाति भेदे, हृदये च ।
दरद पु० भये, देशभेदे च । तद्देशस्थे ब०व० । दरदाः खशा इति मनुः । दरं भयं ददाति दा-क । भयप्रदे त्रि०।हिङ्गुले पु०न०
दरिद्र पु० दरिद्रा-अच् आलोपः । निर्द्धने, दीने च ।
दरिद्रा दुर्गतौ अदा० लभा० जक्षा० पर० अक० सेट् । दरिद्राति अदरिद्रीत्-अदरिद्रासीत् ।
दर्दुर पु० दृणाति कर्णौ शब्दैः उरच् नि० । मेघे, भेके, वाद्यभेदे, पर्व्वतभेदे, दक्षिणमलयपालभेदे च । ग्रामजाले न० ।
दर्द्रू स्त्री० दरिद्रा-ऊ नि० । (दाद) रोगभेदे ।
दर्प पु० दृप-घञ् अच् वा । कस्तूरीमृगमदे, गर्व्वे, अहङ्कारे च ।
दर्पक पु० दर्पयति दृप-णिच् ण्वुल् । कामदेवे ।
दर्पण पु० चु० दृप-संदीपे ल्यु । रूपप्रतिबिम्बदर्शनाधारे, आदर्शे, पर्व्वतभेदे च । नेत्रे न० ।
दर्भ पु० दृभ-ग्रन्थे घञ् दृ-भ वा । 'कुशाः काशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः । मौञ्जाश्च शाद्वलाश्चैव षड् दर्भाः परिकीर्त्तिता' इत्युक्तेषु काशादिषु षट्सु तृणेषु ।
दर्वि(र्वी) स्त्री० दृ-विन् वा ङीप् । व्यञ्जनादिचालके (हाता) काष्ठादिनिर्मिते पदार्थे । स्वार्थे कन् । अत्रार्थे गोजिह्वालतायाञ्च । [वा क-अच् । सर्पे ।
दर्व्वीकर पु० दर्व्वीव करः फणो यस्य दर्व्वीमिव फणां करोति
दर्श पु० दृश्यते शास्त्रे चन्द्रार्कसङ्गमो यत्र दृश-घञ् । अमावस्यायां तिथौ 'अन्योन्यं चन्द्रसूर्य्यौ तु दर्शनाद्दर्श उच्यते, इत्युक्तेः । तत्साध्ये यागभेदे च । दर्शपौर्णमासाभ्यां यजेतेति श्रुतिः । भावे घञ् । दर्शने । दृश-अच् । द्रष्टरि त्रि० ।
दर्शक पु० दर्शयति राजानम् आगतान् । दृश-णिच्-ण्वुल् । द्वारपाले । दर्शयितरि त्रि० । दृश-ण्वुल् । द्रष्टरि त्रि० ।
दर्शन न० दृश-ल्युट् । नेत्रे, स्वप्ने, बुद्धौ, धर्म्मे, उपलब्धौ, दर्पणे, अध्यात्मज्ञानोपायेषु न्यायादिषु शास्त्रेषु च ।
दर्शनीय त्रि० दृश-अनीयर् । मनोहरे, दर्शनयोग्ये च ।
दर्शयितृ पु० दृश-णिच्-तृच् । द्वारपाले स हि द्वारागतान् राजानं दर्शयति । दर्शनकारयितरि त्रि० ।
दल भेदने भ्वा०पर०सक० सेट् वा घटा० । दलति अदालीत् णिचि दलयति दालयति ।
दल भेदे चुरा०उभ०सक० सेट् । दालयति-ते अदीदलत् त ।
दल न० दल-अच् । शस्त्रच्छेदे, अपकृष्टद्रव्ये, पत्रे, तमालपत्रे, उत्सेधायाम्, षट्के, अर्द्धे च । खण्डे, उत्सेधवद्वस्तुनि च पु० ।

दलकोष पु० दलान्येव कोषोऽस्य । कुन्दपुष्पवृक्षे तस्य पुष्पे कोषान्तराभावात्तथात्वम् ।

दलनिर्म्मोक पु० दलतीति दलं वल्कलं निर्मोक इव यस्य । भूर्जपत्रवृक्षे तस्य हि वल्कलस्य निर्मोकाकारत्वम् ।

दलपुष्पा स्त्री० दलं स्वयं विदीर्णं पुष्पमस्याः । केतक्याम् ।

दलाढक पु० दलेनाढक इव । स्वयंजाततिलवृक्षे, पृश्निग्राम, कुन्दे, नागकेशरे, शिरीषे, करिकर्णे, फेने, खातके, गैरिके च

दलामल न० दलेनामलम् । मरुवके । मदनवृक्षे, दमनवृक्षे च पु०

दलाम्ल न० दलेनाम्लम् । चुक्रे (चुकापालङ्ग) ।

दलित त्रि० दल-क्त । प्रफुल्ले, खण्डिते, अर्द्धीकृते च 'व्येका-दलिता विभाजितेष्टेनेति लीला० । [सप्तच्छदवृक्षे ।

दलेगन्धि पु० दले गन्धो यस्याः इत् समा० सप्तम्याअलुक् ।

दव गतौ भ्वा०पर०सक०सेट् इदित् । दन्वति अदन्वीत् ।

दव पु० दुनोति दु-अच् । वने, वनानले च । भावे अप् । उपतापे

दवथु पु० टु-दु- उपतापे अथुच् । संतापे, गात्रादिदाहे च ।

दवाग्नि पु० दवस्य वनस्याग्निः । दावानले ।

दविष्ठ त्रि० अतिशयेन दूरः-इष्ठन् अन्त्यलोपः गुणश्च । अति दूरे । ईयसुनि दवीयस् । अत्रैवार्थे स्त्रियां ङीप् ।

दश दीप्तौ चु०उभ०अक०सेट् इदित् । दंशयति-ते अददंशत्-त

दश दंशने चुरा०आत्म०सक०सेट् इदित् । दंशयते अददंशत ।

दशक न० दश परिमाणमस्य कन् । दशति, दशसङ्ख्यायाम् ।

दशकण्ठ पु०दश कण्ठा यस्य । रावणे । दशकन्धरादयोऽप्यत्र

दशत् पु० दश परिमाणमस्य अति । दशानां वर्गे-दशके दश-सङ्ख्यायाम् ।

दशधा अव्य० दशप्रकारम् धाच् । दशविधे ।

दशन् त्रि० दन्श-कनिन् । (दश) सङ्ख्याविशेषे ।

दशन पु० दश्यतेऽनेन नि० नलोपः । दन्ते, शिखरे च । करणे ल्युट् । कवचे । भावे ल्युट् । दंशने, दन्तादिनाघाते च ।

दशनोच्छिष्ट न० दशनेनोच्छिष्टं यत्र । अधरादिचुम्बने 'रेवतीदशनोच्छिष्टपरिपूतपुटे' इति माघः । निश्वासे पु० । दन्तोच्छिष्टे त्रि० ।

दशपुर न० दश दिश पिपर्त्ति पृ-क । कैवर्त्तीमुस्तके । दश पुरो यत्र अच् समा० । मालवदेशैकखण्डे ।

दशबल पु० 'दानशीलक्षमावीर्य्यध्यानप्रज्ञाबलानि च । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै' इत्युक्तानि दश बलानि यस्य । बुद्धमुनौ ।

दशभुजा स्त्री० दश भुजा यस्याः । 'इतिहृत्तं पुराकल्पे मनोः स्वयम्भुवोऽन्तरे प्रादुर्भूता दशभुजा देवी'त्युक्तायां दुर्गायाम्

दशम त्रि० दशानां पूरणः डटि मट् । येन दश सङ्ख्या पूर्य्यते तस्मिन् । स्त्रियां ङीप् ।

दशमिन् त्रि० नवतेरूर्द्धं दशमी साऽवस्थाभेदोऽस्त्यस्य पूरणा-र्थात् इनि । नवत्यूर्द्ध्ववयस्के अतिवृद्धे ।

दशमी स्त्री० दशानां पूरणी । शतायुर्वै पुरुष इत्युक्ते नराणां शतायुष्यनियमात् तस्यायुषो दशधाविभागे नवत्यधिकाया-मवस्थायामतिवृद्धावस्थायाम्, चन्द्रस्य दशमकलायाः प्रवेश-निर्गमान्यतररूपात्मके तिथिभेदे 'आरभ्य तस्यां दशमींच यावदि'ति स्मृतिः 'उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्यु'रिति विरहावस्थाभेदे मरणरूपावस्थायाञ्च ।

दशमीस्थ त्रि० दशम्यामवस्थायां तिष्ठति स्था-क । अतिवृद्धे नवत्यधिकवयस्के-क्षीणरागे-स्मृतिहीने, विच्छेदवशात् मर-णावस्थाप्राप्ते कामिजन्ते च ।

दशमूल न० दश मूलानि यत्र । पाचनभेदे । दशानां मूलानां समाहारः पात्रा० । 'विल्वश्योनाकगाम्भारीपाटलागणि-कारिकाः । शालपर्णी पृश्निपर्णी वृहतीद्वयगोक्षुरम् । उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृत'मित्युक्तेषु विल्वादि-दशकमूलेषु ।

दशरथ पु० दशसु दिक्षु गतो रथो यस्य । सूर्य्यवंश्ये नृपभेदे

दशरथसुत पु० ६त० । रामे एवं दशरथात्मजादयोऽप्यत्र ।

दशहरा स्त्री० दशविधानि दशजन्मार्जितानि च पापानि हरति हृ-ठक् । गङ्गाजन्मदिने ज्यैष्ठशुक्लदशम्याम् ज्येष्ठ-शुक्लदशमीमधिकृत्य 'दशपापहरा यस्मात्तस्मात् दशहरा' स्मृतेत्युक्तायाम् ।

दशा स्त्री० दन्श-अङ् नि० नलोपः । अवस्थायां, दीपवर्त्त्याम् 'अमेवन्ते न च स्नेहं न पात्रं न दशान्तरम् । परोपकार-निरता मणिदीपा इवोत्तमा' इत्युद्भटः । चित्ते, कालकृत-विशेषरूपायां गर्भवासजन्माद्यवस्थायां बाल्ययौवनादि-रूपायाञ्च, कामकृते विरहिणां नेत्ररागाद्यवस्थादशके, ज्योतिषोक्ते नक्षत्रानुसारेण सूर्य्यादिग्रहाणां स्वामित्वेन भोग्यकाले च विस्तरो वृहदभिधाने ।

दशाकर्ष पु० दशया तैलादिकमाकर्षति आ+कृष-अच् । प्रदीपे वस्त्राञ्चले पु० स्त्री० पुंस्त्वे व०व० ।

दशाङ्गधूप पु० 'मधु मुस्तं घृतं गन्धो गुग्गुल्वगुरुशैलजम् । सरलं सिह्लसिद्धार्थं दशाङ्गोधूप उच्यते' इत्युक्ते धूपभेदे प्रकारान्तरमप्यस्ति विस्तरो वृहदभिधाने । [खण्डे ।

दशापवित्र न०दशा वस्त्राञ्चलं पवित्रमिव । श्राद्धादिदेये वासः-

दशारुहा स्त्री० दशसु दिक्षु आरोहति आ+रुह-क । कैव-

सौराष्ट्रके। [वृद्धिः। देशभेदे। नदीभेदे स्त्री०।

**दशार्ण** पु० दश-ऋणानि दुर्गाणि जलानि वा यत्र ऋणशब्द

**दशार्ह** पु० यदुराजदेशे। तद्देशस्थे ब०व०।

**दशावतार** पु०दश मीनादयोऽवतारायस्य। विष्णौ ते चावतारा दृहदभिधाने दर्शयिष्यन्ते।

**दशाश्व** पु० दश अश्वा रथे यस्य। 'रथस्त्रिचक्रः सोमस्य कुन्दाभास्तत्र वाजिनः। वामदक्षिणतो युक्ता दश तेन चरत्यसावि'त्युक्ते चन्द्रे। [काशीस्थे तीर्थभेदे।

**दशाश्वमेधिक** पु०दश अश्वमेधा ब्रह्मणा कृताः सन्त्यत्र ठन्।

**दशाह** पु० दशानामह्नां समाहारः टच् समा० नाह्वादेशः। दशसु दिनेषु 'दशाहं सूतकी भवेदि'ति स्मृतिः।

**दशेन्धन** पु० दशा वर्त्तिकैव इन्धनं यस्य। प्रदीपे।

**दशेरक** पु० मरुदेशे। तद्देशस्थे व०व०।

**दस** उपक्षेपे दि०पर०सक०सेट्। दस्यति। अदसत्-अदासीत्-अदसीत्। दसित्वा-दस्त्वा।

**दंस** भासे चु० उभ०सक०सेट् इदित्। दंसयति-ते अददंसत् त

**दंस** दर्शने दंशने च चु०आ०सक०सेट् इदित्। दंसयते अददंसत

**दस्यु** पु० दस-युच् नानादेशः। चौरे,रिपौ, महासाहसिके च

**दस्र** पु० दस-रक्। गर्द्दभे। अश्विनीकुमारयोः,द्वि०व०। अश्विनी तारके च। [अददंहत् त।

**दंह** दीप्तौ अक० दाहे सक०चु०उभ० सेट् इदित्। दंहयति ते

**दह** दाहे भ्वा०पर०सक०अनिट्। दहति अधाक्षीत्।

**दहन** पु० दह-ल्यु। अग्नौ, चित्रकवृक्षे, भल्लातके, दुष्टचेतसि च। भावे ल्युट्। दाहे न०।

**दहर** पु० दह-अरन्। मूषायाम् धातुद्रव्यद्रावणपात्रे (मुचि) सूक्ष्मे 'दहरोऽस्मिन् अन्तराकाश'इति श्रुतिः। अल्पे च त्रि०

**दहराकाश** पु० कर्म०। चिदाकाशे ईश्वरे।

**दाण** दाने भ्वा०पर०सक०सेट् ण इत्। यच्छति अदात्।

**दा** दाने जुहो० उभ०सक० सेट्। ददाति दत्ते अदात् अदित

**दा** छेदने अदा०पर०सक० अनिट्। दाति अदात्।

**दाक्षायणी** स्त्री० दक्षस्यापत्यं स्त्री फिञ् गौरा०ङीष्। अश्विन्यादितारासु, सतीनाम्न्यां शिवपत्न्याञ्च।

**दाक्षिणात्य** पु० दक्षिणस्यां दिशि भवः दक्षिण+त्यक्। नारिकेले। दक्षिणदिग्भवमात्रे त्रि०।

**दाक्षिण्य** न० दक्षिणस्य भावः ष्यञ्। अनुकूलत्वे। दक्षिणा मर्हति ण्य। दक्षिणार्हे ऋत्विजि। [मुनेर्मातरि।

**दाक्षी** स्त्री० दक्षस्य गोत्रापत्यं स्त्री०इञ् ङीष्। पाणिनि-

**दाक्षीसुत** पु० ६त०। व्याकरणकर्त्तरि पाणिनिमुनौ।

**दाडि(लि)म** द्वि० दल-घञ् दालः तेन निर्वृत्तः इमप् वा लस्य डः। दाडिम्ववृक्षे स्त्रियां ङीप् 'वियोगिनीमैक्षत दाडिमीमसावि'ति नै०। [वृक्षे। ६त०। दाडिम्बपुष्पे न०।

**दाडिमपुष्प** पु० दाडिमस्य पुष्पमिव पुष्पमस्य। रोहितक

**दाडिम्ब** पु० दा-डिम्ब डस्य नेत्त्वम्। स्वनामख्याते वृक्षे।

**दात** त्रि० दो-क्त। छिन्ने। दैप-क्त। शुद्धे।

**दात्यूह** पु० दो-क्तिन् दितिं खण्डनं वहति दितिवाट् स एव अण् वाह ऊठ्-आदेरिति आत्त्वम्। कालकण्ठके पक्षिभेदे।

**दात्र** न०दा-ष्ट्रन्। छेदनसाधने(दा)शस्त्रे। [अदीदांसिष्ट

**दान** ऋजुताकरणे, छेदने च। भ्वा०अक०स्वार्थे सन्। दीदांसते

**दान** न० दो-दै-दा-वा ल्युट्। हस्तिमदजले, पालने, छेदने, शुद्धौ, त्यागे च।

**दानव** पु० दनोरपत्यम् अण्। असुरे।

**दानवारि** पु०६त०। देवे,विष्णौ च। कर्म०। हस्तिमदजले न०

**दानशील** त्रि० दानं शीलं सततमनुष्ठानं यस्य। बहुदातरि।

**दानशौण्ड** त्रि०दाने शौण्डः दक्षः। बहुप्रदे। [दण्डिते च

**दापित** त्रि० दा-णिच्-क्त। साधिते, धनादिना वशीकृते,

**दामन्** स्त्री०न० दो-मनिन्। दोहनकाले पशुबन्धनरज्ज्वौ रज्जुमात्रे, मालायाञ्च। स्त्रीत्वे वा ङप्। दामा दामे।

**दामनपर्व्वन्** न०६त०। दमनभञ्जनतिथौ चैत्रशुक्लचतुर्द्दश्याम्

**दामनी** स्त्री० दामैव प्रज्ञा०अण् वा ङीप्। पशुबन्धनरज्ज्वौ

**दामोदर** पु० 'दामानि लोकनामानि तानि यस्योदरान्तरे। तेन दामोदरो देव' इत्युक्ते विष्णौ।

**दाम्भिक** त्रि० दम्भेन चरति धर्मं ठक्। लोकेषु कीर्त्त्यादिख्यापनार्थं धर्माचारिणि वैडालव्रतिनि, दम्भयुक्ते च। बकपक्षिणि पु०। [अददायत्-त

**दाय** दाने भ्वा० आ० सक० सेट्। दायते अदायिष्ट णिच्-

**दाय** पु० दा-कर्मणि घञ्। 'विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्पते' इत्युक्ते पित्रादिसम्बन्धवति तदुपरमे तत्सम्बन्धिभिः पुत्रादिभि र्विभजनीये द्रव्ये, विवाहकाले जामातादिभ्यो देये धने च। भावे घञ्। दाने। दो-भावे घञ्। खण्डने। दैप-करणादौ घञ्। अम्बुनि, स्थाने, लये, सोल्लुण्ठनवाक्ये च।

**दायभाग** पु०दायस्य सम्बन्धिस्वामिकधनस्य तत्सम्बन्धिमरणादौ तस्य सम्बन्धिभिः पुत्रादिभिर्भागः विभजनं गुटिकापातादिना व्यञ्जनम्। अष्टादशविवादान्तर्गते विवादभेदे, तादृशविवादविषये पुत्रादिभिः पित्रादिधनस्य विभजने च।

**दायाद** पु० दायं विभजनीयधनमादत्ते आ+दा-क। पुत्रे।

दायमत्ति अद-अण् उपपदसमासः। सपिण्डे।

**दार** पु० ब०व० दारयन्ति भ्रातृस्नेहम् दृ-णिच्-अच्। पत्न्याम् सा हि पत्युः भ्रातृस्नेहं भिनत्तीति लोकप्रसिद्धम्

**दारक** पु० दृणाति भिनत्ति उदरं दृ-ण्वुल्। बालके बालिकायां स्त्री० टाप् अत इत्वम्। भेदके त्रि०। ग्रामसूकरे पु०।

**दारकर्मन्** पु० दारोपयिकं दारसम्पादकं कर्म०। विवाहे 'सवर्णाये द्विजातीनां दारकर्मणी'ति स्मृतिः।

**दारद** पु० दरदि देशे भवः अण्। विषभेदे,पारदे,हिङ्गुले च दरदा देशेन एकदिक् अण्। दरदूदेशसन्निकृष्टे समुद्रे।

**दारु** न० दृ-उण्। काष्ठे, पित्तले, देवदारौ च। शिल्पिनि, दारके च त्रि०। [काष्ठे च न०।

**दारुक** पु० कृष्णसारथौ। दारु-स्वार्थे कन्। देवदारुवृक्षे,

**दारुगन्धा** स्त्री० दारुरिव गन्धो यस्याः। (चीडा) गन्धद्रव्ये।

**दारुण** पु० दारयति चित्तं दृ-भये उनन्। चित्रके,रौद्ररसे, भयानकरसे च। भयावहे,दुःसहे,भीषणे, भयहेतौ च त्रि०

**दारुनिशा** स्त्री० दारुमयी-निशा पात्वम्। दारुहरिद्रायाम्

**दारुपत्री** स्त्री० दारुमयं पत्रं यस्याः ङीप्। हिङ्गुपत्र्याम्।

**दारुपुत्रिका** स्त्री० दारुमयी पुत्रिका। काष्ठपुत्तलिकायाम्।

**दारुसार** न० दारुषु सारं श्रेष्ठम्। चन्दने। [पदार्थे।

**दारुसिता** स्त्री० दारुमयी सिता मधुरत्वात्। (दारचिनी)-

**दारुहरिद्रा** स्त्री० दारुमयी हरिद्रा। स्वनामख्यातायाम् हरिद्रायाम्।

**दारुहस्तक** पु० हस्त इव कन् दारुमयः हस्तकः। काष्ठनिर्मिते हस्ताकारे (हाता) पदार्थे।

**दार्वट** न० दारुवत् निश्चलतया निरूपणीयविषयनिश्चयार्थमटन्त्यत्र अट-घञर्थे क। चिन्तागृहे, मन्त्रगृहे च।

**दार्व्याघाट(त)** पु० दारूणि आहन्ति हन-अण् वा टान्तादेशः। (काटठोकरा) पक्षिभेदे।

**दार्विका** स्त्री० दारयति उत्वादि० नि० दार्वी दारुहरिद्रा तस्या विकारः ठक्। दारुहरिद्राक्वाथोद्भवे तुत्थे। दार्वी +संज्ञायां कन् अणो लुकः। गोजिह्वालतायाम्।

**दार्वी** स्त्री० दृ-उण् गौ० ङीष्। देवदारुणि। उत्वा०नि०। हरिद्रायाम् गोजिह्वायाम् दारुहरिद्रायाञ्च।

**दाल** पु० पु० दल-अच्। कोद्रवे (कोदो) धान्यभेदे,मधुभेदे च। देवताडीलतायां स्त्री० ङीप्।

**दाव** पु० दुनोति दु-ण। वने, वनभवेऽग्नौ, अग्निमात्रे च भावे घञ्। तापे। [खाद्योपल।

**दावाग्नि** पु० दावस्य वनस्याग्निः। वनोद्भवेऽग्नौ। दावान-

**दाविक** त्रि० देविकायां नद्यां भवः। अण् देविकादेरेत आत्वम्। देविकानदीभवे। [ग्री(ग्री)त्।

**दाश(स)** हिंसने स्वा० पर० सक० सेट्। दाश्नो(स्नो)ति अदा-

**दाश** दाने चु०उभ०सक० सेट्। दाशयति-ते अदिदाशत्-त

**दाश** दाने भ्वा०उ०सक०सेट्। दाशति-ते अदाशीत् अदाशिष्ट। णिच् अदिदाशत्-त।

**दाश(स)** पु० दशति मत्स्यान् दन्श-घञ् नि०, दास्यते मूल्यमस्मै दास-घञ् वा। मत्स्योपजीविनि धीवरे।

**दाश(स)पुर** न० दाशा(सा)न् कैवर्त्तान् पिपूर्त्ति पालयति पॄ-क। कैवर्त्तमुस्तके। [रघाय मैथिली'ति नाटकम्।

**दाशरथ** पु० दशरथस्येदम् अण्। श्रीरामे 'प्रदीयतां दाश-

**दाशरथि** पु० दशरथस्यापत्यम् अत इञ्। दशरथस्यापत्येषु श्रीरामादिषु चतुर्षु। [वा। विष्णौ, दशार्हदेशजे त्रि०।

**दाशार्ह** पु० दाशं दानमर्हति अर्ह-अण् दशार्हवंशे भवः अण्

**दाशेरक** पु० मालवदेशे। तद्देशस्थे जने ब०व०।

**दास** दाने भ्वा०उभ०सक० सेट्। दासति ते अदासीत् अदासिष्ट। णिच् अददासत् त।

**दास** पु० दास-अच्। शूद्रे, ज्ञातात्मनि, धीवरे, दानपात्रे शूद्रस्योपाधौ 'शूद्रे दासं प्रयोजयेदि'ति स्मृतिः। दास्यते देयतेऽस्मै भक्तादि दास-घञ्। भृत्ये सेवके च हि०। स्त्रियां ङीप् दासी।

**दासी** स्त्री० दस क्षेपे कर्मणि घञ्। झिण्ट्याम्, काकजङ्घायाम्, नीलझिण्ट्यां, वेश्यायाञ्च। दासस्य पत्नी ङीप्। शूद्रपत्न्यां, कैवर्त्तभार्यायाञ्च।

**दासेय** पु०दास्या अपत्यं ढक्। दासीगर्भजाते दासे। दासस्य धीवरस्यापत्यम् ठक्। व्यासजनन्यां स्त्री०।

**दासेर** पु० दास-एरक्। उष्ट्रे। दास्या अपत्यं ढक्। दासीपुत्रे दासे। स्वार्थे कन्। अत्रैवार्थे।

**दाह** पु० दह-घञ्। भस्मीकरणे, गात्रादिसन्तापे च।

**दाहक** पु० दह-ण्वुल्। चित्रकवृक्षे, रक्तचित्रके च। दाहकर्त्तरि त्रि०। स्त्रियां दाहिका।

**दाहहरण** न० दाहो ह्रियतेऽनेन ल्युट् णिच्-कर्त्तरि ल्यु वा। वीरणमूले (बेणार मूल)। दाहनाशके त्रि०।

**दिकर** पु० दिशु कीर्यतेऽसौ कॄ-अप्। तरुणे। युवत्यां स्त्री०

**दिक्पति** पु०६त०। दिशामधीश्वरेषु 'इन्द्रो वह्निः पितृपति नैर्ऋतो वरुणो मरुत्। कुबेर ईशः पतयः पूर्वादीनां मधीश्वरा' इत्युक्तेषु इन्द्रादिषु 'सूर्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च पूर्वादीनां

मधीश्वरा' इत्युक्तेषु सूर्यादिषु च। 'पवनो दिक्पतिर्भूमि रिति मन्त्रः। एवं दिक्पालादयोऽपि इन्द्रादिष्वेव।

**दिगम्बर** पु० दिक् शून्यमेवाम्बरं यस्य। शिवे, क्षपणकभेदे, 'दिगम्बरा मध्यमलमाङ्करापादमस्तकम्। चैतन्यसाम्भि-संहर्ष रा नखापम्बुतेरपी'त्युक्ते जीवस्य देहपरिमाणाङ्गी-कारके,बौद्धभेदे च। नग्ने त्रि०। कालिकायां स्त्री०ङीप्। दिशामम्बरमिवावरकत्वात्। तमसि न०।

**दिग्गज** पु०६त०। 'ऐरावतः पुण्डरीकः वामनः कुमुदोऽञ्जनः पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजा'इत्युक्तेषु पूर्वा-दिदिक्षु भूमिधारणाय स्थितेषु ऐरावतादिषु गजेषु।

**दिग्ध** पु० दिह-क्त। विषाक्तबाणे, वह्नौ,प्रबन्धे च। भावे क्त। लेपे, लेपने च न०। कर्मणि क्त। लिप्ते त्रि०। [भावे त्रि०

**दिङ्मात्र** न० दिशोरीतेर्मात्रा अंशः। एकदेशे। ६त०। अल्प-

**दिति(ती)** स्त्री० दो-अवखण्डने क्तिच् वा ङीप्। दैत्यमा-तरि काश्यपपत्न्याम्। भावे क्तिन् न ङीप्। खण्डने।

**दितिज** पु० दितेर्जायते जन-ड। असुरे। दितिसुतादयोऽप्यत्र

**दिधिषु(षू)** पु० दिधिषूमात्मन इच्छति क्यच्-क्विप् इ० वा ह्रस्वः। द्विरूढायाः स्त्रियाः स्वामिनि।

**दिधिषू** स्त्री० दधाति पापं धिष्यते वा धा-धिष-वा ऊ नि०, दिधिं धैर्यं स्यति सो-ऊ वा षत्वम्। द्विरूढायां स्त्रियां पुनर्भू स्त्रियाम्, 'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः' स्मृतेत्युक्तायां ज्येष्ठायामनूढायां सत्याम् ऊढायां कनिष्ठभगिन्याञ्च।

**दिधिषूपति** पु० ६त०। 'भ्रातुर्मृतस्य भार्य्यायां योऽनुरज्येत कामतः। धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपति'रि-त्युक्ते पुनर्भूपतौ। ज्येष्ठाविवाहाभावे ऊढायाः कनिष्ठाया भगिन्याः पत्यौ च।

**दिन** न० द्यति तमः। सूर्यकिरणोपलक्षिते षष्टिदण्डात्मके तद्विशिष्टे वा चतुर्यामात्मके काले। तच्च मनुष्याणां षष्टि-दण्डात्मकम्, पितॄणाम् गौणचान्द्रमासात्मकं तेषां हि चन्द्रलोकोपरिस्थितेः कृष्णाष्टमीतएव सूर्य्यस्य तल्लोके किरणस्पर्शसम्भवः शुक्लाष्टम्यां पुनर्भूछेनाच्छादनाच्च न तत्सम्पर्कः। देवानामसुराणाञ्च सौरवर्षकालात्मकं तद् विस्तरस्तु वृहदभिधाने। ब्रह्मणो दिव्यमानेन युगसहस्र-रूपकालात्मकमिति विवेकः।

**दिनकर** पु० दिनं करोति स्वोदयेन कृ-टक्, दिने-करः किरणो यस्य वा। सूर्य्ये।

**दिनक्षय** पु० 'एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा तदा दिनक्षयः प्रोक्त' इत्युक्ते एकसावनदिनस्पृक्तितिथि त्रयरूपे काले।

**दिनपति** पु० ६त०। सूर्य्ये, अर्कवृक्षे च। दिनेशादयोऽप्यत्र।

**दिनमणि** पु० दिने मणिरिव प्रकाशकत्वात्। सूर्य्ये, अर्कवृक्षे च

**दिन्भ** संघाते चु०आत्म०अक०सेट्। दिम्भयते अदिदिम्भत

**दिनादि** पु० ६त०। प्रातःकाले।

**दिनान्त** पु० ६त०। दिवावसाने सायंकाले। [अदिदिम्भत् त

**दिभ** प्रेरणे चुरा० उभ० सक० सेट् इदित्। दिम्भयति-ते

**दिम्प** संघाते चुरा०उभ०सक०सेट्। दिम्पयति ते अदिदिम्पत्-त

**दिलीप** पु० सूर्य्यवंश्ये नृपभेदे रघोः पितरि।

**दिव** प्रीतौ भ्वा०पर०सक०सेट् इदित्। दिन्वति अदिन्वीत्।

**दिव** जिगीषायां पणे व्यवहारे इच्छायां आघ्रायाञ्च दिवा० पर०अक०सक०च सेट्। दीव्यति अदेवीत्। देवित्वा द्यूत्वा

**दिव** कूजने चु०आत्म०सक०सेट्। देवयते अदिदेवत।

**दिव** अर्द्दे चु०उभ०सक०सेट्। देवयति ते अदीदिवत् त।

**दिव्** स्त्री० दिव-डिवि। स्वर्गे,आकाशे च। [दिवसे, वने च

**दिव** न०दिव-क। स्वर्गे, 'दिवौकस' इत्यत्रादन्तता। आकाशे,

**दिवस** पु० दीव्यन्त्यत्र दिव-असच् किच्च। 'नाडीषष्टितम स्तत्र सावनो दिवसः स्मृतः। त्रिंशभांशोऽर्कराशेस्तु दिवसः सौर उच्यते। चान्द्रस्तु तिथ्यवच्छिन्नो भौमो भूपरिवे-र्मत' इत्युक्तेषु सावनादिषु दिनेषु।

**दिवसमुख** न० ६त०। प्रभाते।

**दिवस्पति** पु० ६त० अलुक् स० षत्वञ्च। इन्द्रे।

**दिवस्पृथिवी** स्त्री० द्वि०व०। दिवञ्च पृथिवी च नि० सुट्। मिलितयोः भूमिस्वर्गयोः रोदस्योः।

**दिवा** अव्य० दिव-का। दिवसे।

**दिवाकीर्त्ति** पु० दिवैव कीर्त्तिः लभ्यं यस्य रात्रौ क्षुरकर्म्म-निषेधात्। नापिते। ['पङ्कजानां दिवातनी'मितिभट्टिः

**दिवातन** त्रि०दिवा भवः ट्यु तुट् च। दिवाभवे। स्त्रियां ङीप्।

**दिवान्ध** पु० दिवा दिने अन्धः दर्शनाभावात्। 'पेचकादौ 'दिवान्धाः प्राणिनःकेचि'दिति चण्डी।

**दिवाभीत** पु० दिवा दिवसे भीतः। चौरे, चन्द्रे, पेचके च। 'दिवाभीतमिवान्धकारमि'ति कुमारः।

**दिवि** पु० दिव-क्रि। चाषपक्षिणि।

**दिविज** पु० दिवि जायते जन-ड इल० अलुक् स०। स्वर्गीये दिविभवादयोऽप्यत्र। [दिविष्ठादयोऽप्यत्र।

**दिविषद्** पु० दिवि सीदति क्विप् सुषमादि० षत्वम्। देवे

**दिवो(वौ)कस(स्)** पु० दिवि दिवम् वा ओकस् यस्य प्र०

अद्गन्तत्वम्। देवे। 'तारकेण दिवौकस' इति कुमारः

**दिवोदास** पु० चन्द्रवंशीये काशिराजे नृपभेदे।

**दिव्य** न० दिवि भवं यत्। लवङ्गे चन्दने, शफथद्रुमे, अलौकिक प्रमाणभेदे गुग्गुलौ, तन्त्रोक्ते भावभेदे च। नायकभेदे पु०। दीव्यतेऽनेन दिव-क्यप्। मनोहरे द्योतनात्मके च त्रि०

**दिव्यगन्ध** पु० दिव्यो मनोहरो गन्धोऽस्य। गन्धके। लवङ्गे न०। स्थूलैलायां स्त्री०। कर्म०। उत्तमगन्धे पु०।

**दिव्यगायन** पु० कर्म०। गन्धर्व्वे।

**दिव्यतेजस्** स्त्री० दिव्यं तेजो यस्याः। ब्राह्मीलतायाम्।

**दिव्यदोहद** न० 'यत् दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये। उपयाचितकं दिव्यदोहदं तद्विदुर्बुधा' इत्युक्ते अभीष्टसिद्धये देवेभ्यो देये द्रव्ये।

**दिव्यपुष्प** पु० दिव्यं पुष्पमस्य। करवीरे। महाद्रोणायां स्त्री०

**दिव्यलता** स्त्री० कर्म०। मूर्व्वालतायाम्।

**दिव्यसार** पु० दिव्यः सारो यस्य। शालवृक्षे।

**दिव्या** स्त्री० दीव्यतेऽनेन दिव-क्यप्। बन्ध्याककोंट्यां शतावर्य्याम्, महामेदायां, ब्राह्म्याम्, श्वेतदूर्वायां, श्वेतजीरके, हरितक्याञ्च।

**दिव्योदक** न० कर्म०। मेघजले।

**दिव्योपपादुक** पु० उपपद्यते मातृपित्रादिदृष्टकारणमनपेक्ष्यैव अदृष्टसहकृताणुभ्य एव उत्पद्यते उप+पद-उकञ् पिशाचादिव्यावृत्तये दिव्य इति विशेषणं तेषाञ्च मातृपित्रादिदृष्टकारणापेक्षाभावेऽपि दिव्यत्वाभावान्न तथात्वम्। देवे

**दिव्यौषधि** स्त्री० कर्म०। मनःशिलायाम्।

**दिश** दाने आज्ञापने च तु० उभ० सक० अनिट्। दिशति अदिक्षत

**दि(श)शा** स्त्री० दिश्-क्विप् वा टाप्। आशायाम् ककुभि।

**दिश्य** त्रि० दिशि भवं दिग्भ्य उपनीतं वा यत्। दिग्भवे, दिग्भ्य उपनीते च। [काले पु०। उपदिष्टे त्रि०।

**दिष्ट** न० दिश-क्त। भाग्ये 'न दिष्टमिष्टं कुरुते' इति माघः।

**दिष्टान्त** पु० दिष्टस्य भाग्यस्यान्तः। भाग्यस्यान्तोपलक्षिते मरणे

**दिष्ट्या** अव्य० दिश-यक् अभ्रादि० नि०। मङ्गले, हर्षे, भाग्येनेत्यर्थे च। [अधिक्षत-अदिग्ध।

**दिह** लेपने अदा० उभ० सक० अनिट्। देग्धि दिग्धे अधिक्षत्

**दी** क्षये दि० आत्म० अ० अनिट्। दीयते अदास्त। दिग्ये। दीनः

**दीक्ष** मौण्ड्ये, यागे, उपनयने, नियमव्रतयोरादेशे च भ्वा० आ० सक० सेट्। दीक्षते अदीक्षिष्ट।

**दीक्षणीया** स्त्री० दीक्ष-अनीयर्। सोमसाध्ये यज्ञभेदे।

**दीक्षा** स्त्री० दीक्ष-अ नियमे, संस्कारे 'विवाहदीक्षां निरवर्त्तय द्गुरु' रिति रघुः। 'दीयते विमलं ज्ञानं क्षीयते कर्म्मवासना तेन दीक्षेति सा प्रोक्ते'ति तन्त्रोक्ते अभीष्टमन्त्रग्रहणे, तदुपदेशे, यागे च।

**दीक्षागुरु** पु० दीक्षायां गुरुरुपदेष्टा। मन्त्राद्युपदेष्टरि।

**दीक्षान्त** पु० दीक्षायाः प्रधानयागस्य अन्तः अन्तोपलक्षितः तत्समापको यागभेदः। अवभृथद्रुमे यागभेदे।

**दीक्षित** त्रि० दीक्ष-क्त। सोमयागादौ संकल्पं विधाय कृतनियमे। दीक्षा तन्त्रोक्ता संजाताऽस्य इतच्। तान्त्रिकदीक्षायुते।

**दीदिवि** पु० दिव-क्विन् अभ्यासोदीर्घश्च। बृहस्पतौ। अन्ने पु० न०। उदिते त्रि०। [किरणे

**दीधिति** स्त्री० दिधी-क्तिन् यहादित्वादिट् इकारलोपश्च।

**दीधी** देवने दीप्तौ च अदा० जक्षा० आत्म० अक० सेट्। दीधीते अदीधिष्ट। [मूषिकायां स्त्री०।

**दीन** त्रि० दी-क्त तस्य नः। दुःखिते, भीते च। तगरपुष्पे न०।

**दीनार** पु० दी-आरक् नुट् च। स्वर्णभूषणे, मुद्रायां, सुवर्णकर्षद्वये, निष्कमाने, द्वात्रिंशद्रक्तिकापरिमितकाञ्चने च।

**दीप** दीप्तौ दि० आत्म० अक० सेट्। दीप्यते-अदीपि-अदीपिष्ट। दीप्तः। णिच् अदीदिपत् त अदिदीपत् त। [क्षिते

**दीप** पु० दीप-क। प्रदीपे तैलादिसंयोगेन वर्त्तिकादाहकशिखा

**दीपक** पु० दीप+स्वार्थे कन्। प्रदीपे, श्येनपक्षिणि, रागभेदे च। कुङ्कुमे अर्थालङ्कारभेदे च न०। दीपयति णिच् ण्वुल्। यमान्याम्, स्त्री०। कार्य्यप्रकाशके, कुशले च त्रि०। स्त्रियां टाप् अत इत्वम् यन्यमभेदे।

**दीपन** पु० दीपयति भक्षणात् जठराग्निमुत्तेजयति दीप-णिच् ल्यु। पलाण्डौ, काशमर्द्दने, मयूरशिखायां शालिकशाके, तगरमूले, कुङ्कुमे च। दीपनकर्त्तरि त्रि०। पाठायां, मेथिकायां, तान्याञ्च स्त्री० ङीप्।

**दीपपुष्प** पु० दीप इव पुष्पमस्य। चम्पकवृक्षे।

**दीपमालिका** स्त्री० दीपानां माला यत्राम् कप् अत इत्वम्। दीपान्वितायाममावस्यायाम्। ६त०। दीपसमूहे।

**दीपवृक्ष** पु० स्वार्थे कन् दीपस्याधारो वृक्षः। (पिलसुज) दीपाधारे तैजसे काष्ठादिनिर्म्मिते वा पदार्थे।

**दीपान्विता** स्त्री० दीपैरन्विता। गौणचान्द्रेण कार्त्तिकस्य मुख्यचान्द्रे णाश्विनस्यामावस्यायाम्।

**दीप्त** पु० दीप-क्त। निम्बुके, सिंहे च। स्वर्णे हिङ्गुनि च न०। ज्वलिते, दग्धे, भासिते, दीप्तिमति च त्रि०। लाङ्गलिकायाम्, अग्निशिखौषधौ, ज्योतिष्मत्याञ्च स्त्री० टाप्।

**दीप्तजिह्वा** स्त्री० दीप्ता ज्वलन्ती जिह्वा यस्याः। उल्कामुख्यां

शृगालीभेदे तस्या हि रात्रौ जिह्वा ज्वलतीति प्रसिद्धम् ।

**दीप्ताग्नि** पु० दीप्तः अग्निर्जठरानलो यस्य । अगस्त्ये । तीक्ष्णजठराग्निमति त्रि० ।

**दीप्ति** स्त्री०दीप-क्तिन् । कान्तौ, 'कान्तिरेव वयोभोगदेशकाल-गुणादिभिः । उद्दीपिताऽतिविस्तारं प्राप्ता दीप्तिरिहो-च्यते' इत्युक्ते स्त्रीणां गुणभेदे ।

**दीप्तिक** स्त्री० दीप्त्या कायति कै-क । दुग्धपाषाणवृक्षे ।

**दीप्य** पु०दीप-यत् । जीरके। श्वेतजीरके न०। दीपने साधुर्यत् । यमान्यां पु० स्त्री० । [स्वरवर्णे च । आयते त्रि० ।

**दीर्घ** पु० दॄ-घञ् घस्य नेत्त्वम् । शालतालवृक्षे, उष्ट्रे, द्विमात्रे

**दीर्घकणा** स्त्री० दीर्घः कणो लेशो यस्याः। श्वेते जीरके ।

**दीर्घकण्टक** पु० दीर्घः कण्टको यस्य । वर्वुरे (वावला) ।

**दीर्घकण्ठ** पु० दीर्घः कण्ठो यस्य। वके। आयतकण्ठमात्रे त्रि०

**दीर्घकन्द** न० कर्म्म० । मूलके । दीर्घः कन्दो यस्याः कप् अत इत्त्वम् । मुषल्याम् स्त्री० । [तत्रैवार्थे ।

**दीर्घकील** पु० दीर्घः कीलो यत्र । अक्षोटके । स्वार्थे कन् ।

**दीर्घकोषिका** स्त्री० दीर्घः कोषो यस्याः कप् अत इत्त्वम् । (भिनुक) दुर्णामायाम् । तालव्यमध्योऽपि ।

**दीर्घग्रन्थि** पु० दीर्घो ग्रन्थिः पर्व्व यस्य । गजपिप्पल्याम् ।

**दीर्घग्रीव** पु० दीर्घा ग्रीवा यस्य । उष्ट्रे, नीलक्रौञ्चे च ।

**दीर्घच्छद** पु० दीर्घाश्छदा यस्य। इक्षौ ।

**दीर्घजङ्घ** पु० दीर्घा जङ्घा यस्य । उष्ट्रे, वके च ।

**दीर्घजिह्व** पु० दीर्घा जिह्वा यस्य । सर्पे ।

**दीर्घतरु** पु०कर्म्म० । तालवृक्षे । [ह्यां स्त्री० ङीप् ।

**दीर्घदण्ड** पु० दीर्घो दण्ड इव काण्डेन। एरण्डवृक्षे। गोर-

**दीर्घदर्शिन्** पु० दीर्घात् पश्यति दृश-णिनि । दूरदर्शिनि पण्डिते, भल्लूके च । आगामिकार्य्यज्ञे, दूरदर्शिमात्रे त्रि०

**दीर्घदृष्टि** पु०दीर्घा दृष्टिरस्य । पण्डिते। दीर्घा दूरगा दृष्टि-र्यया ६ब० । दूरवीक्षणे यन्त्रभेदे । [न णत्वम् । शङ्खे

**दीर्घनाद** पु० दीर्घो दूरगामित्वात् विस्तीर्णो नादोऽस्य क्षुभ्ना०

**दीर्घनिद्रा** स्त्री०कर्म्म० क्षुभ्ना० न णत्वम्। मृत्यौ, बहुकालिक निद्रायाञ्च । 'दीर्घनिद्रामवापित' इति रघुः । [लताभेदे

**दीर्घपटोलिका** स्त्री० कुत्सिता पटोली कन् कर्म्म०। (धुधुल)

**दीर्घपत्र** पु० दीर्घाणि पत्राण्यस्य। राजपलाण्डौ, विष्णुकन्दे, हरिदर्भे, कुन्दरे, ताले, कुपीलौ वा अम्लजम्बूवृक्षे, गन्ध-पत्रायाञ्च स्त्री० टाप् । संज्ञायां कन् अत इत्त्वम् । घृत-कुमार्य्यां, श्वेतवचायाञ्च । चञ्चुशाके, पलाशीलतायाञ्च स्त्री० ङीप् । [(चाकलिया) ।

**दीर्घपर्णी** स्त्री० दीर्घाणि पर्णान्यस्याः ङीप् । पृश्निपर्ण्याम्

**दीर्घपल्लव** पु० दीर्घः पल्लवोऽस्य । शणवृक्षे। कर्म्म०। दीर्घच्छदे पु० न० । दीर्घच्छदयुक्तमात्रे त्रि० ।

**दीर्घपादप** पु० कर्म्म० । ताले, पूगे च ।

**दीर्घपृष्ठ** पु० दीर्घं पृष्ठमस्य । सर्पे ।

**दीर्घफल** पु०दीर्घाणि फलानि यस्य। आरग्वधे (सोन्दाल) संज्ञायां कन्। अगस्त्यवृक्षे पु०। कपिलद्राक्षायां, जतुकायाञ्च स्त्री०

**दीर्घमूल** पु० दीर्घं मूलं यस्य । मोरटालतायां, बिल्वभेदे च । वीरणे न०। कर्म्म०। संज्ञायां कन् । मूलके । श्यामालतायां स्त्री० टाप् । दुरालभायां स्त्री० ङीप् ।

**दीर्घरागा** स्त्री० दीर्घो बहुकालस्थायी रागो रञ्जनं यस्याः । हरिद्रायाम् । [चिरकाले ।

**दीर्घरात्र** न०कर्म्म०। दीर्घायां रात्रौ। ७ब०। बहुरात्रियुक्ते

**दीर्घरोमन्** पु० दीर्घाणि रोमाण्यस्य। भल्लूके ।

**दीर्घवल्ली** स्त्री०कर्म्म०। पलाश्यां, पातालगरुडीलतायां, माहेन्द्र वारुण्याम्, आयतायां लतायाञ्च ।

**दीर्घवृन्त** पु० दीर्घं वृन्तमस्य । श्योनाके वृक्षे । स्वार्थे कन् । तत्रार्थे । इन्द्रचिर्भट्यां स्त्री० टाप् । संज्ञायां कन् अत इत्त्वम् । एलापर्ण्याम् स्त्री० ।

**दीर्घशाख** पु० दीर्घा शाखा यस्य । शालवृक्षे। संज्ञायां कन् अत इत्त्वम् । एलापर्ण्याम् स्त्री० टाप् । [राजान्ने ।

**दीर्घशूक** पु०दीर्घः शूकोऽग्रमस्य। शालिभेदे। संज्ञायां कन्।

**दीर्घसत्र** न० कर्म्म०। दीर्घकालिके यज्ञभेदे ६ब० । तत्कर्त्तरि त्रि०। 'हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतस' इति रघुः

**दीर्घसूत्र** त्रि० दीर्घेण चिरकालेन सूत्रमीप्सितकर्म्म यस्य । चिरकालेन प्रारब्धकर्म्मानुष्ठातरि। कर्म्म०। आयततन्तौ न०

**दीर्घस्कन्ध** पु० दीर्घः स्कन्धः काण्डोऽस्य। तालवृक्षे ।

**दीर्घायुष** पु०दीर्घमायुष्यं यस्य श्वेतमन्दारकवृक्षे,मार्कण्डेये च

**दीर्घायुस्** पु०दीर्घम् आयुर्जीवनकालोऽस्य। काके,शाल्मलिवृक्षे च

**दीर्घिका** स्त्री० दीर्घैव विस्तारमपेक्ष्य आयतैव । जलाशयभेदे अस्या लक्षणं तड़ागशब्दे द्रष्टव्यम् । [न०

**दीर्ण** त्रि०दॄ-क्त । विदारिते,भीते च भावे क्त। विदारे, भये च

**दु** गतौ भ्वा०पर०सक०अनिट् । दवति अदौषीत् केचित्तु सेड-यमित्याहुस्तेन अदावीदित्यपि । [दूनः। दवथुः ।

**दु** उपतापने भ्वा०पर०सक०वेट् । दुनोति अदावीत् अदौषीत्

**दुःख** दुःखकरणे अद० चुरा०उभ०सक० सेट् । दुःखयति ते अदुदुःखत्-त ।

**दुःख** न० दुःख-अच्-घञ् वा । प्रतिकूलवेदनीये चित्तधर्म्मभेदे,

न्यायमते आत्मधर्मभेदे,पीड़ायां, कष्टे च । दुःखसाधने पदार्थे, तद्वति च त्रि० । [दुःखानां त्रितये ।

**दुःखत्रय** न० द्वत० । आध्यात्मिकाधिदैविकाधिभौतिकरूपे

**दुःशासन** पु० दुःखेन शिष्यतेऽसौ शास-खलर्थे युच्। भारते प्रसिद्धे दुर्योधनस्यानन्तरानुजे धृतराष्ट्रसुते ।

**दुःषमस्** अव्य० दुष्टं सममत् तिष्ठद्गु० अव्य०मलम् । गर्हे द्वन्द० अपलम् । असमञ्जसे त्रि० ।

**दुःसहा** स्त्री० दुःखेन सह्यते दुर्+सह-खल् । नागदमन्याम्

**दुःस्थ** त्रि० दुःखेन तिष्ठति स्था-क । दीने,मूर्खे, लुब्धे च ।

**दुःस्थित** त्रि० दुर्+स्था-क्त । अनवस्थिते, दुःखेन स्थिते च

**दुःस्पर्श** पु०स्त्री० दुःखेन स्पृश्यतेऽसौ दुर् स्पृश-खल् । दुरालभायाम् । लताकरञ्जे पु० । कण्टकार्य्याम्, कपिकच्छ्वाम्, आकाशवल्ल्याञ्च स्त्री० । दुःस्पर्शवस्तुमात्रे त्रि० ।

**दुकूल** न० दु-जलच् कुक् च दुष्टं कूलति कूलआवरणे क वा ष० । क्षौमाम्बरे, श्लक्ष्णवस्त्रे, सूक्ष्मवस्त्रे च ।

**दुग्ध** न० दुह-क्त । पयसि क्षीरे, स्त्रीजातिस्तननिष्यन्दिद्रव-द्रव्ये । कर्मणि क्त । कृतदोहायां धेन्वादौ स्त्री० । प्रपूरिते त्रि० । भावे क्त । दोहने न० ।

**दुग्धपाषाण** पु० दुग्धं निर्यासः पाषाणइव यस्य । (गिर गोला) ख्याते वृक्षभेदे! स्वार्थे कन् । अत्रैवार्थे ।

**दुग्धिका** स्त्री०दुग्धं क्षीरमिव निर्यासोऽस्त्यस्याः ठन् । (दुधि) (क्षीरा) इति ख्याते वृक्षभेदे ।

**दुग्धी** स्त्री० दुग्धमिव निर्यासोऽस्त्यस्य अर्शआद्यच् गौ० ङीष् । दुग्धिकायाम् (दुधि) ।

**दुद्रुम** पु० दुष्टो द्रुमः ष० । हरित्पत्रे पलाण्डौ ।

**दुन्दुभि** पु० दुन्दु इति शब्देन उभति पूरयति उभ-क शक० । दृहड्ढक्कायां, भेर्य्यां, वरुणे दैत्यभेदे, राक्षसभेदे, विषे, द्व०वर्षमध्ये 'प्राणिनां जायते हर्षो दुन्दुभौ वरवर्णिनी' इत्युक्तलक्षणे वत्सरभेदे च । पाशके स्त्री० ।

**दुर(स्)** अव्य०दु रुक् सुक् वा । दुष्टे निन्दायां, निषेधे,दुःखे च

**दुरक्ष** पु० दुष्टोऽक्षः प्रा० । कपटपाशके । दुष्टोऽक्षो यत्र । दुष्टद्यूते

**दुरत्यय** त्रि० दुःखेनातीयते दुर्+अति-इ-खल् । दुरतिक्रमणीये, दुस्तरे च । [दुर्गमे, दुर्ज्ञेये च ।

**दुरदृष्ट** न० दुष्टमदृष्टं प्रा० । दुर्भाग्ये पापे । [दुष्प्राप्ये

**दुरधिगम** त्रि० दुःखेनाधिगम्यते दुर् अधि+गम-खल् ।

**दुरध्व** पु० दुष्टोऽध्वा प्रा० अच् । दुष्टवर्त्मनि ।

**दुरन्त** त्रि० दुष्टोन्तोऽवसानं यस्य । मृगयाद्यूतपानादिषु व्यसनेषु तानि हि प्रथमं सुखयित्वा अन्ते दुःखयन्ति । दुर्ज्ञेयोऽन्तः परिच्छेदो यस्य । दुर्ज्ञेये, गभीरे च ।

**दुरभिग्रह** पु० दुःखेनाभिमुख्येन गृह्यतेऽसौ खल् । अपामार्गे दुःखेन ग्राह्ये त्रि० । दुरालभायां, कपिकच्छ्वाञ्च स्त्री० ।

**दुराग्रह** पु० दुष्टआग्रहः निर्बन्धः । युक्तिरहितेऽभिनिवेशे, द्वन्द० । तद्युक्ते त्रि० ।

**दुराचार** पु०दुष्ट आचारः प्रा० । विरुद्धाचरणे । द्वन्द० । तदाचारवति त्रि० । 'अपि चेत् सुदुराचारः' इति गीता ।

**दुरात्मन्** त्रि० दुष्ट आत्मा चित्तं यस्य । दुष्टचित्ते जने ।

**दुराधर्ष** पु० दुष्टान् राक्षसान् आधर्षयति अच् । श्वेतसर्षपे तत्क्षेपणे हि वेतालादीनामपधर्षणं स्मृतौ दर्शितम् । दुःखेन ईषदपि धर्षयितुमशक्यम् दुर्+आ+धृष-खल् । धर्षयितुमशक्ये त्रि० । कुटुम्बिनीवृक्षे स्त्री० ।

**दुरारुह** पु०दुःखेनारुह्यतेऽसौ दुर्+आ+रुह-घञर्थे कर्मणि क । बिल्वे,नारिकेले च । खर्ज्जूर्य्यां स्त्री० ।

**दुरारोह** पु० दुःखेनारुह्यते दुर्+आ+रुह-खल् । शाल्मलिवृक्षे । जीवन्त्यां स्त्री० । दुरारोहमात्रे त्रि० ।

**दुरालभा(म्भा)** स्त्री० दुःखेनालभ्यते स्पृश्यते असौ दुर्+आ+लभ-खल् वा मुम् । (आलकुशी) लतायाम् ।

**दुरालाप** पु० दुष्ट आलापः प्रा० । दुष्टवचनकथने ग्लानिप्रकाशे च । द्वन्द० । तद्वति त्रि० ।

**दुरासद** त्रि०दुःखेनासद्यते गम्यतेऽसौ दुर्+आ+सद-खल् । दुर्गम्ये, दुर्धर्षे च 'स बभूव दुरासदः' इति रघुः ।

**दुरित** न० दुष्टमितं गमनं नरकादिस्थानप्राप्तिरनेन । पापे ।

**दुरुक्त** न० दुष्टमुक्तम् । शापे । [दुर्निवारे ।

**दुरुच्छेद** त्रि० दुःखेन उच्छिद्यतेऽसौ दुर्+उद्+छिद-खल् ।

**दुरुत्तर** त्रि० दुःखेन उत्तीर्य्यते दुर्+उद्+तॄ-खल् । दुस्तरे दुष्टमुत्तरम् प्रा० । दुष्टे उत्तरे न० ।

**दुरूह** त्रि० दुःखेन ऊह्यते वितर्क्यते ऊह-खल् । दुर्विज्ञेये ।

**दुरोदर** पु० दुष्टम् समन्तादुदरमस्य । द्यूतकारे, पणे, अक्षे च । द्यूते न० । 'दुरोदरच्छद्मजितामि'ति भारविः ।

**दुर्ग** पु० दुःखेन गम्यतेऽसौ कर्मणि ड । असुरभेदे, तद्धन्त्र्यां देव्यां स्त्री० । 'तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् दुर्गादेवीति विख्यातमिति चण्डी । अपराजितायां, नील्याञ्च । गुग्गुलौ पु० । दुःखेन गच्छत्यत्र दुर्+गम-आधारे ड । पर्व्वतादिभिर्दुर्गमे पुरे, कोट्टे (केल्ला) (गड़) ख्याते न० । दुर्गमदेशे, उच्छ्रिते,दुःखेन सम्पाद्ये च त्रि० । कामक्रोधादिदुःखेन दुस्तरे संसारे न० ।

**दुर्गत** त्रि० दुर्गच्छति दुर्+गम क्त । दरिद्रे दोषंगते च ।

दुर्गति स्त्री० दुर्+गम-क्तिन् । नरके, दारिद्र्ये, दुष्टायां गतौ च
दुर्गन्ध पु० दुष्टोगन्धः। पूतिगन्धे। ६ब०। तद्वति त्रि०। पलाण्डौ पु०
दुर्गसञ्चय पु० दुर्गे देशे सञ्चरत्यनेन । (सांको) संक्रमे ।
दुर्गानवमी स्त्री० ६त० । जगद्धात्रीनामकदुर्गापूजाकालरूपायां कार्त्तिकशुक्लनवम्याम् ।
दुर्ज्जन त्रि० दुष्टो जनो यस्मात् यदाचरणेन साधुरपि दुष्यति । खले । दुष्टः जनः प्रा०स० । खले पु० ।
दुर्जर त्रि० जृ-अङ् जरा दुःखेन जरा जीर्णता यस्य । दुःखेन जीर्य्यति पदार्थे । ज्योतिष्मतीलतायां स्त्री० ।
दुर्जात न० दुष्टं जातम् प्रा० । व्यसने, आपदादौ । ६ब० । असम्यग्जाते अनुचिते च त्रि० ।
दुर्णामा स्त्री० दुष्टं निन्दितं नामास्य ङीप् णत्वम् । दीर्घकोषिकायाम् (झिनुक) ।
दुर्दान्त पु० दुष्टं दान्तं दमनं यत्र । कलहे । दुःखेन दम्यते क्त दम-क्त । अशान्ते वत्सतरे त्रि० ।
दुर्दिन न०द्यति तमः इति दिनं दुष्टं मेघाच्छादनादिना तमोनाशकतारूपहीनं दिनं प्रा० । मेघाच्छन्ने दिवसे । दुष्टं स्वरूपहीनं दिनं यस्मात् ५ब०। मेघान्धकारे, वर्षणे च ।
दुर्द्धर पु० दुर्+धृ-खल् । नरकभेदे, ऋषभौषधौ, भल्लातके दैत्यभेदे च 'दुर्द्धरं दुर्मुखश्चैवेति' चण्डी। दुःखेन सुसमुभिर्हृदये धार्य्यते,केनापि न धार्य्यते वा खल् । विष्णौ।दुःख धार्य्ये दुर्द्धर्षे च पदार्थे त्रि० । [कन्यारीद्रचे च स्त्री०।
दुर्द्धर्ष त्रि०दुःखेन धृष्यते । अक्षोभ्ये, अप्रधृष्ये च। नागदम न्यां
दुर्बल त्रि० दुष्टं बलं यस्य । बलशून्ये, कृशे, अल्पमांसे च ।
दुर्भग त्रि० दुष्टं भगं भाग्यं यस्य । अल्पभाग्ये । पतिस्नेहशून्यायां स्त्रियां स्त्री० ।
दुर्भाग्य न०दुष्टं भाग्यं प्रा०। दुरदृष्टे पापे । ६ब०। तद्वति त्रि०
दुर्भिक्ष अव्य० भिक्षाया अभावः अर्थाभावेऽव्ययीभावः अदन्तत्वादम् तृतीयासप्तम्योर्वा तेन 'दुर्भिक्षे राष्ट्रविप्लवे' इति दुर्भिक्षमलमित्यादि च सिद्धम् । भिक्षाया अभावे, तदुपलक्षिते काले अलाभकाले च ।
दुर्मति त्रि० दुष्टा मतिर्यस्य । विवेकप्रतिबन्धकपापेन कलुषित बुद्धौ जने, ६०वर्षमध्ये 'भवेद्वै मध्यमा दृष्टिर्दुर्मतौ ससुपस्थिते इत्युक्तलक्षणे वर्षभेदे पु०। प्रा०स०। दुष्टायां बुद्धौ।
दुर्मनस् त्रि० दुष्टं चिन्तादिना व्याकुलं मनोऽस्य । विमनस्के । शतावर्य्यां स्त्री० ।
दुर्मरा स्त्री० दुःखेन म्रियते मृ-अच् । दूर्वायाम् ।
दुर्मुख पु० दुष्टं मुखमस्य । अश्वे,वानरे, नागभेदे, दैत्यभेदे च। अप्रियवादिनि त्रि० । [कासमर्दचित्ते ।
दुर्मेधस् त्रि० दुष्टा मेधाऽस्य असिच् समा०। मन्दबुद्धौ विवदुर्योधन पु० दुःखेन युध्यतेऽसौ युध-खलर्थे युच् । धृतराष्ट्रनृपतेर्ज्येष्ठपुत्रे नृपभेदे । दुःखेन योध्ये त्रि० ।
दुर्लभ पु० दुर्-लभ-खल् । कर्चूरे । दुष्प्रापे त्रि० 'मानुष्यं दुर्लभं लोके विद्या तत्र सुदुर्लभे'ति पुराणम् । दुरालभायां, श्वेतकण्टकार्यांश्च स्त्री० ।
दुर्ललित न०दुष्टं ललितम् इष्टम् लल-ईप्से क्त। चन्द्रप्रार्थनादिरूपे अलभ्यविषये आग्रहे। (आवादार) दुश्चेष्टिते च।'दुष्टं ललितं यस्य। तादृशाग्रहवति (आवदेरे)। दुश्चेष्टे च त्रि०।
दुर्व्व वधे भ्वा० पर० सक०सेट् ।दूर्वति अदूर्वीत् । दूर्त्तः ।
दुर्वर्ण न० दुष्टोऽपि वर्ण्यते रज्यतेऽनेन दुष्टं मलिनं वा वर्णयति शुभ्रतापादनेन रूपान्तरं करोति । रजके, एल वालुके च । दुष्टवर्णवति मलिने त्रि० ।
दुर्वासस् त्रि०दुष्टं वासोऽस्य । मलिनवस्त्रे । अत्रिपुत्रे शङ्करांशजाते मुनिभेदे पु० । [विधर्मिन्'ति नैषधम् खले मूर्खे च
दुर्विध त्रि० दुष्टा विधा यस्य । दरिद्रे 'विदधाति रुचिगर्व्वदुदुर्हृद् त्रि० दुष्टं हृदयं यस्य शत्वार्थे नित्यं हृदादेशः । शत्रौ । दुष्टचित्ते त्रि० अत्र दुर्हृदयोऽपि ।
दुल उत्क्षेपे चुरा० उभ० सक० सेट् । दोलयति-ते अदूदुलत्
दुलि(ली) स्त्री० दुल-इन् नि० षिलुक् वा ङीप् । कमठ्याम् । मुनिभेदे पु० ।
दुश्चर्म्मन् पु० दुष्टं चर्म्म यस्य । अप्रावृतमेढ्रे 'दुश्चर्म्मा गुरुतल्पी स्यात्' इति स्मृत्युक्ते महापातकजचिह्नवति ।
दुश्च्यवन पु० दुःखेन च्यवनं पतनं यस्य, दुष्टः क्रुद्धः च्यवनो मुनिरस्य वा। इन्द्रे, स हि च्यवनेन कदाचित् कोपात् स्वपदात् पातितः ।
दुष वैकृते दिवा०पर०अक० अनिट् । दुष्यति अदुषत् अदुक्षत्
दुष्कर न० दुःखेन क्रियते कृ-खल् । आकाशे । कृ-खल् । दुःखेन कार्य्ये त्रि० ।
दुष्कर्म्मन् न० दुष्टं कर्म्म प्रा०स०। पापे। ६ब०। तद्वति त्रि०
दुष्कृत न०दुष्टं कृतं कृतिः।पापे । 'सुकृतं दुष्कृतं लोके गच्छन्तमनुगच्छती'ति क्तिन् दुष्कृतिरप्यत्र। ६ब०। तद्वति त्रि०
दुष्ट त्रि० दुष-क्त । दुर्बले, अधमे, दुर्ज्जने, दोषयुक्ते च। (कुड़) कुष्ठे पु०। पुंश्चल्याम् स्त्री० । [स्थाने च।
दुष्ठु अव्य० दुर्+स्था-कु षत्वम् । निन्दायां, निकृष्टतायां, दुःदुष्पत्र पु० दुष्टानि पत्राण्यस्य । चोरनामगन्धद्रव्ये ।
दुष्प्रधर्षणी स्त्री० दुःखेन प्रधृष्यते कर्म्मणि ल्युट्। वार्त्ताकयाम्

**दुष्प्रवेशा** स्त्री० दुःखेन प्रवेशो यत्र। कन्थारीवृक्षे। [प्रतौ।
**दु(ष्य)ष्मन्त** पु० चन्द्रवंशीये राजभेदे भरतराजपितरि शकुन्तला-
**दुह** दोहे अदा० उभ० द्विक० अनिट्। दोग्धि दुग्धे। अधुक्षत् अधुक्षत अदुग्ध।
**दुह** वधे भ्वा० पर०सक० सेट्। दोहति अदुहत्-अदोहीत्।
**दुहितुःपति** पु० ६त० अलुक् स०। जामातरि।
**दुहितृ** स्त्री० दुह-तृच् गुणाभावः इट् च नि०। सुतायाम्
**दू** खेदे दिवा०आत्म०अक० सेट्। दूयते अदविष्ट। दूनः।
**दूत** पु० दु-क्त दीर्घश्च। सन्देशहरे वार्त्ताहरे।
**दूति(ती)** स्त्री० दू-क्तिच् वा ङीप्। स्त्रीपुंसयोः सन्देशहारिकायां स्त्रियाम्। 'रतिदूतिपदे निवेशिते'ति कुमारः।
**दूत्य** न० दूतस्य दूत्या वा भावः कर्म वा यत्। दूतकर्मणि दूतस्वभावे च। [दूने रसने सितापी'ति नैषधम्।
**दून** त्रि० दू-क्त। अध्वगत्यादिना श्रान्ते, सन्तप्ते च 'चित्तेन
**दूर** त्रि० दुःखेनेयते प्राप्यते दुर्+इण्-रक् इणो लोपश्च। विप्रकृष्टे अगोचरे च।
**दूरदर्शन** पु० दूरात् पश्यति दृश-युच्। गृध्रे।
**दूरदर्शिन्** पु० दूरात् कार्योत्पत्तेः प्राक् पश्यति दृश-णिनि। पण्डिते। दूरात् दर्शके त्रि०।
**दूरमूल** पु० दूरपर्य्यन्तं मूलमस्य। मुञ्जतृणे (मुज)।
**दूर्व्वा** स्त्री० दुर्व्व-हिंसायां अ। स्वनामख्याते घासभेदे।
**दूर्व्वाकाण्ड** न० दूर्व्वाया समूहः काण्डच्। दूर्व्वासमूहे।
**दूर्व्वाष्टमी** स्त्री० भाद्रशुक्लाष्टम्यां तद्दिने दूर्व्वया देवार्च्चनस्य स्मृतौ विधानात्तथात्वम्। दूर्व्वाप्यत्र 'श्रावणी दौर्गनवमी दूर्व्वा चैव हुताशनीति स्मृतौ तत्रार्थे दूर्व्वाशब्दप्रयोगात्।
**दूषण** पु० रावणस्य मातृष्वस्रेये राक्षसभेदे। दूष-णिच-ल्युट्। दोषदाने न०। [नेत्रमले (पिचुटि)
**दूषिका** स्त्री० दूषयति नेत्रं क्लिन्नं करोति दुष-णिच्-ण्वुल्।
**दूषित** त्रि० दुष-णिच्-क्त। अभिशस्ते, निन्दिते, दत्तदोषे च
**दूष्य** न० दुष-णिच्-य। वस्त्रनिर्म्मिते गृहे। दूषणीये त्रि० 'दूष्यं वचो मम पुनर्निपुणं विभाव्ये'ति शिरोमणिः। कक्षायां गजमध्यबन्धनरज्ज्वाञ्च स्त्री०।
**दृ** वधे स्वा०पर०सक०अनिट्। दृणोति अदार्षीत्।
**दृ** आदरे तुदा०आ०सक०अनिट् आङ्पूर्व्वः। आद्रियते आदृत
**दृक्प्रसाद** स्त्री० दृशं प्रसादयति प्र+सद-णिच-अच्। कुलत्थायां तदञ्जनेन हि दृशः प्रसादो भवति।
**दृढ़** न० दृह-क्त नि० दृढभावः। लौहे रूपककाव्यभेदे, अतिशये, नितान्ते च। तद्वति, स्थूले, प्रगाढे, बलवति, शक्ते, कठिने च त्रि०। [युक्ते वृक्षभेदे
**दृढ़कण्टक** पु० दृढ़ः कण्टकोऽस्य। (धलाआकड़ा) क्षुद्रकण्टक
**दृढ़काण्ड** पु० दृढः कठिनः काण्डः स्कन्धोऽस्य। वंशवृक्षे दीर्घरोहितके न०।
**दृढ़क्षुरा** स्त्री० दृढं क्षुरमिवाग्रं यस्याः। बल्वजायाम् तृणभेदे
**दृढ़ग्रन्थि** पु० दृढो ग्रन्थिः पर्व्वास्य। वंशे।
**दृढ़तृण** पु० दृढं कठिनं तृणं कर्म०। मुञ्जतृणे। बल्वजायां स्त्री०
**दृढ़नीर** पु० कालेन दृढतां प्राप्तं नीरं यस्य। नारिकेले तस्य जलेनैव हि क्रमशः तच्छस्यमुत्पद्यते।
**दृढ़पत्र** पु० दृढं पत्रं यस्य। वंशे। बल्वजायां स्त्री० गौरा० ङीष्। [वृक्षभेदे।
**दृढ़पादा** स्त्री० दृढः पादो मूलमस्या ङीप्। (भुइ आमला)
**दृढ़प्ररोह** पु० दृढः प्ररोहः अङ्कुरोऽस्य। प्लक्षवृक्षे।
**दृढ़फल** पु० दृढानि फलानि यस्य। नारिकेले। [श्यामायाम्
**दृढ़बन्धिनी** स्त्री० दृढं बध्नाति प्रध्नाति स्वाश्रयं णिनि।
**दृढ़भूमि** त्रि० दृढा भूमिरस्य। योगविशेषेण संस्कृतान्तःकरणे विषयसुखरागादिना चालयितुमशक्ये चित्ते।
**दृढ़मुष्टि** पु० दृढ़ा मुष्टिः यत्र, यस्मात् वा। खड्गे तद्धारणे हि मुष्टेर्दृढता। दृढा अशिथिला मुष्टि, र्यस्य। कृपणे। स हि धनादिकं मुष्टौ निधाय अदित्सया दृढतरं बध्नाति।
**दृढ़मूल** पु० दृढं मूलमस्य। मुञ्जतृणे, नारिकेले च।
**दृढ़वल्कल** पु० दृढं वल्कलमस्य। पूगवृक्षे। अम्बष्ठायां स्त्री० तत्र दृढत्वचापि।
**दृढ़वीज** पु० दृढं वीजमस्य। वदरे, चक्रमर्द्दे, वर्व्वुरे च।
**दृढ़व्रत** त्रि० दृढं व्रतं नियमोऽस्य। आफलोदयं प्रारब्धकार्य्यात्यागिनि। [संहते
**दृढ़सन्धि** त्रि० दृढः सन्धिः सन्धानं यस्य। निश्छिद्रतया
**दृढ़सूत्रिका** स्त्री० दृढं सूत्रं यस्याः स्वार्थे कन् अत इत्वम्। मूर्व्वालतायाम्।
**दृढ़स्कन्ध** पु० दृढः स्कन्धोऽस्य। क्षीरिकावृक्षे।
**दृता** स्त्री० द्रियते दृ-क्त। जीरके।
**दृति** पु० दृ-क्तिच्। चर्म्मनिर्म्मितोदकपात्रे, चर्म्मनोदनचर्म्मयन्त्रे (भिस्ति) मत्स्यभेदे च।
**दृतिहर** पु० दृतिं चर्म्मपात्रं हरति हृ-ट। कुक्कुरे।
**दृन्फ** क्लेशे तु० पर०अक०सेट्। दृफति दृम्फति अदृम्फीत्।
**दृन्भू** पु० दृभ-ऊ नि०। दम्भे, वज्रे, सूर्य्ये, सर्पे, चक्रे च
**दृप** बाधने तु०पर०सक०सेट्। दृपति अदर्पीत्।
**दृप** सन्दीपने वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट्। दर्प-

यतिते दर्पति । अदीदृपत्-त अदर्दर्पत्-त अदर्पीत् ।

**दृप** हर्षे गर्वे च दिवा०पर०अक०सेट् । दृप्यति अदृपत् अदर्पीत् दर्पित्वा दृप्त्वा । दृप्तः । [चरान्' इति रामकवचम् ।

**दृप्त** त्रि०दृप-क्त । गर्व्विते 'वरदृप्तान् जघानैव रावणादिनिशा

**दृफ** क्लेशे तु०सु०पर०अक०सेट् । दृम्फति अदर्फीत् ।

**दृब्ध** त्रि० दृभ-क्त । ग्रथिते,भीते च ।

**दृभ** ग्रथने वा चुरा० उभ०पक्षे तु०पर० सक०सेट् । दर्भयति ते दृभति अदीदृभत् त अददर्भत् त अदर्भीत् ।

**दृभ** भये वा चुरा उभ०पक्षे भ्वा० पर०अक० सेट् । दर्भयति-ते दर्भति । अदीदृभत् अददर्भत् त । अदर्भीत् ।

**दृम्प** राशीकरणे चुरा० उभ०सक०सेट् । दृम्पयति ते अद-दृम्पत्-त । [अद्राक्षीत् ।

**दृश** चाक्षुषज्ञाने भ्वा०पर०सक० अनिट् । पश्यति अदर्शत्-

**दृश(शा)** स्त्री० दृश-सम्प० भावे क्विप् वा टाप् । दर्शने ज्ञाने । करणे क्विप् । नेत्रे, द्विसंख्यायाञ्च । कर्त्तरि क्विप् । साक्षिणि, द्रष्टरि ज्ञातरि च त्रि०।

**दृश(ष)द्** स्त्री० दृ-विदारे अदि सुक् (शुक्) वा ह्रस्वः । पाषाणे निम्पेषणशिलायाञ्च (शिल) । [दृषद्वत्यो'रितिमनुः ।

**दृश(ष)द्वती** स्त्री० दृषद्+मतुप् मस्य वः । नदीभेदे 'सरस्वती

**दृष्ट** न० दृश-क्त । स्वपरचक्रभये । वीक्षिते, लौकिके च त्रि०।

**दृष्टरजस्** स्त्री० दृष्टं रजो यया । प्रौढायां स्त्रियाम् ।

**दृष्टान्त** पु० दृष्टोऽन्तो नाशोऽवसानं परिच्छेदश्च यस्मिन् । मरणे, शास्त्रे, प्रतिपाद्यप्रतिपादकयोः बुद्धिसाम्यविषयरूपे उदाहरणे, यथा यो धूमवान् स वह्निमान् यथा पाकस्था-नमित्यादौ धूमवह्निमत्त्वयोर्व्याप्तौ पाकस्थानमुदाहरणम् अलङ्कारोक्ते अर्थालङ्कारभेदे च ।

**दृष्टि** स्त्री० दृश-भावे क्तिन् । दर्शने, बुद्धौ च । करणे क्तिन् । नेत्रे, द्विसंख्यायां 'चक्षुर्जन्यमनोवृत्तिर्यियुक्ता रूपभा-षिका दृष्टिरित्युच्यते' इत्युक्तायां मनोवृत्तौ च ।

**दृष्टिविष** पु० दृष्टौ विषं यस्य । सर्पभेदे ।

**दृह** वृद्धौ भ्वा० पर० अक० सेट् । दर्हति अदर्हीत् अर्यामदिश तत्र दृंहति अदृंहीत् । [दरयति ।

**दृ** भये भ्वा० पर० सक० सेट् घटा० । दरति अदारीत् णिच्-

**दृ** विदारे दिवा० क्र्या० ष प्रा० पर० सक० सेट् । दीर्यति दृणाति । अदारीत् ।

**दृ** भये क्र्या० प्रा० पर०अक०सेट् । दृणाति अदारीत् ।

**दे** पालने भ्वा० आत्म० सक०अनिट् । दयते अदास्त ।

**देव** क्रीड़ने भ्वा० आत्म०अक०सेट् । देवते अदेविष्ट ।

**देव** पु० दिव-पचाद्यच् । अमरे । द्योतनात्मके आत्मनि 'दीव्यति क्रीडते यस्माद्रोचते द्योतते दिवि । तस्माद्देव इति प्रोक्तः स्तूयते सर्व्वदैवतैरित्युक्ते परमेश्वरे ब्राह्मणक्षेपाधौ च । इन्द्रिये न० । पूज्ये त्रि० । नाट्योक्तौ राजनि पु० ।

**देवक** पु० श्रीकृष्णस्य मातामहे देवक्याः पितरि नृपभेदे ।

**दे(दै)वकी** स्त्री० देवकस्य नृपतेः आत्मजा पुंयोगे केकयीति वद्ङीप् । श्रीकृष्णस्य मातरि वसुदेवस्य भार्य्यायाम् । अपत्यार्थेऽण् दैवकीति तत्रैव । सुतादयोऽप्यत्र ।

**दे(दै)वकीनन्दन** पु० ६त० श्रीकृष्णे वसुदेवात्मजे दे(दै)वकी-

**देवकुसुम** न० देवानां प्रियं योग्यं वा कुसुमम् शाकं । लवङ्गे

**देवखात** न० देवेन खातं खन-क्त । अकृत्रिमे जलाशये । ७३० देवसमीपस्थे खाते च ।

**देवखातविल** न० देवेन खातं विदारितं विलम् । गुहायाम्

**देवगायन** पु० ६त० । गन्धर्व्वे ।

**देवगिरि** पु० देवानां प्रियःगिरिः । पर्व्वतभेदे ।

**देवगुरु** पु० ६त० । वृहस्पतौ । [यष्टिके हारे ।

**देवच्छन्द** पु० देवैश्छन्द्यते प्रार्थ्यते छन्द-कर्म्मणि घञ् । शत

**देवजग्धक** न० देवैरद्यते स्म अद-क्त जग्धादेशः स्वार्थे कन् । कतृणे, गन्धतृणे च । [चन्दनेषु पञ्चसु वृक्षेषु ।

**देवतरु** पु० ६त० । मन्दारपारिजातसन्तानकल्पवृक्षहरि

**देवता** स्त्री० देव+स्वार्थे तल् 'क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते, इति भाष्योक्तेः स्त्रीत्वम् । इन्द्रादौ सुरे । [वृक्षभेदे, अग्नौ, राहौ, मेघे च ।

**देवताड** पु० देवमिन्द्रियं ताडयति ताड-अण् । (देताड)

**देवदण्डा** स्त्री०देवमिन्द्रियं दण्डयति दण्ड-अच् । नागबलायाम्

**देवदत्त** पु०देवा एनं देयासुः आशिषि क्तच् । देवार्पिते तन्ना-मके जने, अर्जुनशङ्खे 'देवदत्तं धनञ्जय' इति गीता जृम्भणकरे वायौ च । देवाय दत्तः । देवोद्देशेनत्यक्ते त्रि० ।

**देवदारु** न० देवानां प्रियं दारु यस्य तत्काष्ठचन्दनस्य देव-प्रियत्वात् । स्वनामख्याते वृक्षे अयं पुमानप्यत्र 'अमुं पुरः पश्यसि देवदारुमिति रघुः । [वीजपूरके, वेश्यायाञ्च ।

**देवदासी** स्त्री० देवमिन्द्रियं दासयति दास-वधे अण् । वन-

**देवदीप** पु० देवेषु इन्द्रियेषु दीप इव रूपप्रकाशकत्वात् । लोचने

**देवदुन्दुभि** पु० देवानां दुन्दुभिरिव हर्षप्रदत्वात् । रक्ततुल-सीम् । ६त० देवढक्कायाम् ।

**देवदूती** स्त्री० देवानि इन्द्रियाणि दूयन्ते खिद्यन्तेऽनया दू-क्तिच् ङीप् । वनवीजपूरके ।

**देवदेव** पु० देवेषु मध्ये दीव्यति दिव-अच् । महादेवे ।

देवधान्य न० देवानां योग्यं धान्यम् । (देधान) धान्यभेदे ।

देवन पु० दीव्यत्यनेन दिव-करणे ल्युट् । पाशके । भावे ल्युट् । क्रीड़ायां, दीप्तौ, व्यवहारे, जिगीषायां, स्तुतौ च न० । दीव्यत्यत्राधारे ल्युट् । लीलोद्याने, पद्मे च ।

देवनदी स्त्री० ६त० । गङ्गायाम्, 'असंबाधा देवनदी'ति महाभा०

देवनिर्म्मिता स्त्री० देवैः निर्म्मिता । गुडूच्याम् ।

देवपथ पु० देवैरर्च्चिरादिभिरातिवाहिकैरुपलक्षितः पन्थाः अच् समा० । उत्तरमार्गे । देवानां पन्थाः । छायापथे (यमनाला)

देवपुरोधस् पु० ६त० । वृहस्पतौ ।

देवप्रिय पु० ६त० । पीतभृङ्गराजे । वकपुष्पे न० ।

देवबला स्त्री० देवानामिन्द्रियाणां बलं यस्याः ५व० । सहदेवीलतायाम् ।

देव(ब)ल्लभ पु० ६त० । पुन्नागवृक्षे ।

देवभवन न० देवानां भवनमिव । अश्वत्थवृक्षे । ६त० । स्वर्गे

देवभूय न० देवस्य भावः भू-क्यप् । देवत्वे देवसायुज्ये ।

देवमणि पु० देवेषु मणिरिव प्रकाशकत्वात् । शिवे, अश्वस्य कण्ठस्थे रोमावर्त्ते, कौस्तुभमणौ, महाश्वेतायाञ्च ।

देवमातृक त्रि० देवः पर्ज्जन्यरूपीन्द्रःमातेव पालकोऽस्य । वृष्टिजलसम्पन्नव्रीहिपालिते देशे ।

देवयान न० ६त० । देवरथे देवैरुपलक्षितं यानं मार्गः । अर्च्चिरादिमार्गे शुक्राचार्य्यकन्यायां स्त्री० ङीप् । [देवांशभूते ।

देवयोनि पु० देवा एव योनिः कारणमस्य । विद्याधरादौ

देवर पु० देव-अर । पत्युः कनिष्ठभ्रातरि ।

देवरथ पु०६त० । देवानां नभोगमनसाधने विमानादौ याने ।

देवराज पु० देवानां राजा टच् समा० । इन्द्रे देवाधिपादयोऽप्यत्र

देवरात पु०देवा एनंरायासुः क्तच् । अभिमन्युसुते परीक्षिन्नृपे

देवर्षि पु० वेद द्रष्टा ऋषिः देव एव सन् ऋषिः । नारदादिमुनौ

देवल पु० मुनिभेदे व्यासशिष्ये धौम्यस्य ज्येष्ठभ्रातरि, देवान् जोविकार्थं लाति ला-क । देवोपजोविनि । स्वार्थे कन् अत्रैव 'देवकोपोपजीवी च नाम्ना देवलको भवे'दित्युक्ते विप्रे ।

देवलता स्त्री० दीव्यति प्रकाशते देवा कर्म्म० । नवमल्लिकायाम्

देवलोक पु०६त० । स्वर्गे । देवस्य ईश्वरस्य सम्पद्रूपोलोकः । 'भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः । तपः सत्यञ्च सप्तैते देवलोकाः प्रकीर्त्तिता' इत्युक्तेषु भूरादिषु सप्तसु लोकेषु

देववर्द्धकि पु० ६त० । विश्वकर्म्मणि । [वृक्षेषु, गुग्गुलौ च ।

देववृक्ष पु० दीव्यति देवः कर्म्म० । सप्तपर्णवृक्षे,६त० मन्दारादि

देवव्रत पु० देवम् इन्द्रियसंयमनं व्रतमस्य । भीष्मे । [धीने च

देवसात् अव्य० देवेभ्यो देयं तदधीनं साति वा देवेभ्योदेये, तद-

देवसायुज्य न० युनक्ति युज-क सह युजेन सयुजः तस्य भावः सायुज्यं देवेन सायुज्यमेकासनयोगिता । देवसहयोगे ।

देवसेना स्त्री० इन्द्रस्य सुतायां षष्ठीनाम्न्यां कार्त्तिकेयपत्न्याम्, मातृकाभेदे । ६त० । देवानां सेनायाञ्च ।

देवसेनापति पु०६त० । कार्त्तिकेये । इन्द्रसुते, देवसेनानामीप्यत्र

देवस्व न० 'यज्ञनंयज्ञशीलानां देवस्वं तद्विदुर्बुधा' इत्युक्ते धने

देवहूति स्त्री० स्वायम्भुवमनोः कन्यायाम् ।

देवा स्त्री० दिव-अच् । पद्मचारिण्यां लतायाम्, अशनपर्ण्याञ्च ।

देवागारिक त्रि० देवागारे नियुक्तः ठन् । देवागारे नियुक्ते

देवाजीव त्रि० देवं देवप्रतिमाद्रव्यमाजीवति जीव-अण् । (पूजारी) देवले । णिनि देवाजीवीत्यप्यत्र ।

देवात्मन् पु० देवो विष्णुरात्मा यस्य । अश्वत्थे तस्य विष्णुरूपत्वम् अश्वत्थरूपी भगवानिति मन्त्रात् सिद्धम् ।

देवानांप्रिय पु० । अलुक् समासः । छागे । मूर्खे त्रि० ।

देवापि पु० चन्द्रवंश्ये नृपभेदे ।

देवार्ह न० देवानर्हति अण् । सुरपर्णे । सहदेवीलतायां स्त्री० । देवयोग्यमात्रे त्रि० । [देवायतनमप्यत्र ।

देवालय पु० देवानामालयः । स्वर्गे, देवप्रतिमादीनां गृहे च

देवावास पु० ६त० । अश्वत्थवृक्षे ।

देविका स्त्री० दिव-ण्वुल् । "अर्द्धयोजनविस्तारां पञ्चयोजनमायताम् । एतावद्देविकामाङ्ग"रित्युक्ते नदीभेदे धुस्तूरे च ।

देवी स्त्री० दीव्यति दिव अच् गौ० ङीष् । दुर्गायाम्, मूर्व्वायां, पृक्कायाञ्च । देवस्य पत्नी ङीप् । देवपत्न्यां, नाग्न्योक्तौ कृताभिषेकायां राजवनितायां, विप्रस्त्रीणामुपाधौ च देव्यन्ता विप्रयोषित' इत्युक्तेः ।

देवृ पु० दिव-ऋ । देवरे स्वामिनः कनिष्ठ भ्रातरि ।

देवेश न० ६त० । महादेवे । तत्पत्न्यां दुर्गायां स्त्री० ङीप् ।

देवेष्ट पु० देवानामिष्टः । गुग्गुलौ । दैत्यमेदजातत्वात् देवप्रियत्वमस्य । वनवीजपूरके स्त्री० ।

देवोद्यान न० ६त० देवोद्यानानि वैभ्राजं मिश्रकं चैत्ररथम् । नन्दनञ्चेति चत्वारीत्युक्तेषु चतुर्षु वनेषु ।

देश पु० दिश-अच् । भूगोलविभागमात्रे कुरुपञ्चालादिषु प्रसिद्धजनपदभेदेषु स्थानमात्रे च ।

देशरूप न० देशनं देशः प्रशस्तदेशः उचिते समञ्जसे ।

देशिनी स्त्री० दिशति दिश-करणस्य कर्त्तृत्वविवक्षायां णिनि । तर्ज्जन्याम् ।

देशान्तर न० अन्योदेशः मयूर० । 'वाचो यत्र विच्छिन्ने गिरि र्वा व्यवधायक । महानद्यन्तरं यत्र तद्देशान्तर-

रुच्यते, इत्युक्ते देशभेदे, ज्योतिषोक्ते सुमेरुलङ्कयोर्मध्यरेखावर्त्ति देशावधिके देशे तदवधिके अन्तरयोजनादौ च।

**देशिक** पु० देशेषु प्रसितः ठन्। पथिके। देशोदेशनोपदेश स्तत्र साधु ठन्। गुरौ। [तर्ज्जन्याम्।

**देशिनी** स्त्री० दिशति दिश-करणस्य कर्त्तृत्वविवक्षायां णिनि।

**देश्य** न० दिश-ण्यत्। पूर्व्वपक्षे। देशमर्हति यत्। देशयोग्ये त्रि०। [ज्योतिषोक्ते लग्ने च। भावे घञ् लेपने पु०।

**देह** पु०न० दिह-घञ्। स्थूलसूक्ष्मकार्य्यकारणरूपे शरीरे

**देहधारक** पु०न० देहं धारयति धृ-णिच् ण्वुल्। अस्थि।

**देहभृत्** पु० देहं बिभर्त्ति भृ-क्विप्। जीवे।

**देहयात्रा** स्त्री० देहो याति गच्छत्यनेन या-करणे ष्ट्रन् न ङीप्। शरीररक्षासाधने भोजने। ६त०। मरणे तदुपलक्षिते यमपुरीगमने च।

**देहली(लि)** देहं लेपनं लाति गृह्णाति ला-क गौरा० ङीष् पृ० वा ह्रस्वः। लेपनयोग्यायां द्वारपिण्डिकायां, (देयाल) कपाटस्याधःकाष्ठखण्डे च।

**देहसार** पु० ६त०। मज्जनि। [चार्व्वाके।

**देहात्मवादिन्** पु० देहमेव आत्मतया वदति वद-णिनि।

**देहिन्** त्रि० देह+अस्त्यर्थे इनि। प्राणिनि देहात्माभिमानिनि जीवे

**दैप** शोधने भ्वा०पर०सक०सेट् षित्। दायति अदासीत् दायात्

**दैतेय** पु० दितेरपत्यम् दिति-ढक्। असुरे। ण्य। दैत्योप्यत्र।

**दैत्यगुरु** पु० ६त०। शुक्राचार्य्ये, दैत्याचार्य्यादयोप्यत्र।

**दैत्यनिसूदन** पु० दैत्यान् निसूदयति हिनस्ति सूद-णिच् ल्यु। विष्णौ।

**दैत्यमेदज** पु० दैत्यानां मेदाज्जायते जन-ड। गुग्गुलौ। पृथिव्यां। स्त्री० मधुकैटभमेदजातत्वात्तस्यास्तथात्वम्।

**दैत्या** स्त्री० दैत्यस्य प्रिया यत्। दैत्यभार्य्यायाम्, सुरायां, सुरानामगन्धद्रव्ये, चण्डौषधौ च।

**दैत्यारि** पु० ६त०। विष्णौ। [त्रि०।

**दैन** न० दीनस्य भावः। दीनत्वे। दिने भवं अण्। दिनभवे

**दैनन्दिन** त्रि० दिनं दिनं प्रतिदिनम् तत्र भवम् अण् नि०। प्रतिदिनभवे।

**दैनन्दिनप्रलय** पु० ७त०। ब्रह्मणः स्वमानानुसारेण प्रतिदिनावसाने सर्व्वदृश्यवस्तूनां क्षये। विवरो वृहदभिधाने।

**दैन्य** न० दीनस्य भावः ष्यञ्। दीनत्वे, कार्पण्ये च।

**दैव** न० देवादागतम्, देवो देवताऽस्य, देवस्येदं वा अण्। भाग्ये फलोन्मुखे शुभाशुभकर्म्मणि, 'प्रागजन्मनि कृतं कर्म्म शुभं वा यदि वाऽशुभम्। दैवशब्देन निर्द्दिष्टमिह जन्मनि तद् बुधै'रित्युक्ते पूर्व्वजन्मार्ज्जिते कर्म्मणि, दक्षिणाङ्गुष्ठाङ्गुलीनामग्ररूपे देवतीर्थे, मन्त्राणामनुष्ठापकदेवताज्ञाने, उत्पातज्ञाने च। विवाहभेदे, त्रिविधभूतादिसर्गे च पु०। देवसम्बन्धिनि श्राद्धहोमादौ त्रि०।

**दैवज्ञ** पु० दैवं पूर्व्वजन्मार्जितशुभाशुभं जनानां जन्मलग्नादिना जानाति ज्ञा-क ६त०। गणके ज्योतिर्विदि। लक्षणादिना शुभाशुभज्ञायां स्त्रियां स्त्री० टाप्।

**दैवत** पु०न०। देव एव देवता ततः प्रज्ञाद्यण्। देवे। देवतानां समूहे अण्। देवसमूहे न०।

**दैवतन्त्र** त्रि० दैवस्यैव तन्त्रमायत्तम्। भाग्याधीने।

**दैवपर** त्रि० दैवमेव परं श्रेष्ठं यस्य। दैवसारे यत्नविमुखे।

**दैवप्रश्न** पु० 'नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः। श्रूयते तद्विदुर्धीरा दैवप्रश्न'मित्युक्ते रात्रौ अकस्मात् आकाशादौ श्रूयमाणे शुभाशुभसूचके वाक्ये।

**दैवलेखक** पु० दैवं लिखति। गणके। [संस्कृतवाण्याञ्च।

**दैववाणी** स्त्री० देवस्येयम् अण् कर्म्म०। आकाशवाण्याम्

**दैवसर्ग** पु० देवस्य सत्वगुणस्य सर्गः। सांख्योक्तभूतसर्गमध्ये सात्विकाष्टसृष्टौ।

**दैवात्** अव्य० दैवमतति क्विप्। हठादित्यर्थे।

**दैविक** न० देवो देवताऽस्य ठक् 'देवानुद्दिश्य यच्छ्राद्धं दैविकं तत् प्रचक्षते' इत्युक्ते देवोद्देश्यके श्राद्धे। देवस्येदं देवादागतं वा ठक्। देवादागते देवसम्बन्धिनि च त्रि०।

**दैवी** स्त्री० देवस्येयम् अण्। सात्विकप्रकृतौ, 'दैवी सम्पद्विमोक्षाये'ति गीता। देवसम्बन्धिन्याञ्च।

**दैवोदासि** पु० दिवोदासस्यापत्यम् अत इञ्। प्रतर्द्दने नृपे।

**दैव्य** न० देवेन कृतम् देवानामिदम् वा यञ्। भाग्ये। देवसम्बन्धिनि त्रि०।

**दैशिक** त्रि० देशेन निर्वृत्तं देशस्येदं वा ठक्। देशसम्बन्धिनि न्यायोक्ते देशकृतस्वरूपभेदे विशेषणसम्बन्धे च। स्त्रियां ङीप्

**दैष्टिक** त्रि० दिष्टं भागधेयमेव सर्व्वसाधनमिति यस्य मतिः ठक्। भाग्याधीनतावादिनि।

**दो** छेदे दिवा०पर०सक०अनिट्। द्यति अदात्।

**दोःशिखर** न० ६त०। स्कन्धे। [गवि स्त्री० ङीप्।

**दोग्ध** पु० दुह-तृच्। वत्से, गोपाले, दोहनकर्त्तरि त्रि०।

**दोर्दण्ड** पु० दोर्दण्ड इव दीर्घत्वात् कार्य्यसाधकत्वाच्च। बाहुदण्डे। एवं भुजदण्डादयोऽप्यत्र।

**दोर्मूल** न० ६त०। कक्षे बाहुमूले। [दोलयात्रा दोलोत्सवश्चात्र

**दोल** पु० दुल-भावे घञ्। श्रीकृष्णस्य दोलनरूपे उत्सवभेदे।

**दोला** स्त्री० दुल-अच् टाप् अ वा। (डोली) यानभेदे, उद्यानादौ क्रीडार्थं दोलनयन्त्रे च। स्वार्थे कन्। अत्रार्थे।

**दोलायमान** त्रि० दोलां दोलनमामयते अय-शानच्। दोलनं कुर्वति दोलायन्त्रारूढे।

**दोष** पु० दुष-घञ्। दूषणे पापे च 'वातः पित्तः कफश्चेति त्रयो-दोषाः समासतः' इत्युक्तेषु वातादिषु, अलङ्कारोक्ते रसापकर्षाधायके दुष्टशब्दादिभेदे न्यायाद्युक्तेषु रागद्वेषमोहेषु च

**दोषग्राहिन्** त्रि० दोषानेव गृह्णाति न गुणान् ग्रह-णिनि। दोषग्राही गुणत्यागी चालनीव हि दुर्ज्जन' इत्युक्ते दुर्जने

**दोषज्ञ** त्रि० दोषान् जानाति ज्ञा-क। पण्डिते, वातादि-दोषज्ञे चिकित्सके च।

**दोषत्रय** न० दोषाणां त्रयम्। वातपित्तकफेषु।

**दोषा** अव्य० दुष-अच्। रात्रौ।

**दोषाकर** पु० दोषा रात्रिं करोति तस्मिन् करः किरणो यस्य वा। चन्द्रे। दोषाणामाकरः दोषाश्रये पु०। [रिकायाम्

**दोषाक्लेशी** स्त्री० दोषा रात्रौ क्लिश्यति अच् टाप्। वनवर्वु

**दोषैकदृक्** त्रि० दोषे एव न गुणे एकादृग् यस्य। खले।

**दोस्**(षा) पु० दम करणे डोसि। भुजे, भागुरिमते टापि पाक्षम्

**दोह** पु० दुह-कर्म्मणि घञ्। दुग्धे 'संदोहस्याहमेष्टनी'ति स्मृतिः। आधारे घञ्। दोहनपात्रे। भावे घञ्। दोहने।

**दोहद** पु० न० हृदयोः गर्भिणीतद्गर्भयोर्हृदयमत्र नि०। गर्भे सदक्षिणा दोहदलक्षणमिति रघुः। दोहमाकर्षं ददाति दा-क। (साद) गर्भिण्यभिलाषे लालसायाञ्च। चिह्ने, गर्भ लक्षणे च न०। ष्ट० औत्। दौहृदमप्यत्र।

**दोहदिनी** स्त्री० दोहदोऽस्त्यस्याः इनि। गर्भिण्याम् 'ताञ्च द्विहृदयां नारीमाहुर्दोहदिनीमित्युक्तेः।

**दोहनी** स्त्री० दुह्यतेऽत्र आधारे ल्युट् ङीप्। दोहनपात्रे।

**दोहा** स्त्री० मात्रावृत्तभेदे। [श्रेणि च।

**दौत्य** न० दूतस्य भावः कर्म्म वा ष्यञ्। दूतस्य भावे तत्क-

**दौर्भागिनेय** पु० दुर्भगाया अपत्यम् ढक् इनङादेशः द्विपदवृद्धिः। दुर्भगापुत्रे।

**दौर्मनस्य** न० दुर्मनसो भावः ष्यञ्। वाह्याभ्यन्तरकारणैर्मनसः दौस्थ्ये, सन्तोभावे दुःखहेतुके चित्तस्यावसादे च।

**दौवारिक** पु० द्वारे नियुक्तः ठक्। द्वारपाले। प्रतीहार्य्यांस्त्री०

**दौष्कुलेय** त्रि० दुष्कुलस्यापत्यम् ढक्। निन्दितकुलजादौ।

**दौहित्र** पु० दुहितुरपत्यम् अण्। दुहितुः सुते 'दौहित्रं खड्गमित्याहुरपत्यं दुहितुस्तिलाः। कपिलाया घृतञ्चैव दौहित्रमिति चोच्यते इत्युक्तेषु खड्गादिषु न०।

**द्यावापृथिवी** स्त्री० द्वि०व०। द्यौश्च पृथिवी च द्व० द्यावादेशः। स्वर्गपृथिव्योर्मिलितयोः एवं द्यावाभूम्यादयोऽप्यत्र द्यावाभूमी जनयन्निति श्रुतिः।

**द्यु** अभिसर्पणे अदा०पर०सक०अनिट्। द्यौति अद्यौषीत्।

**द्यु** पु० दिव-क्विप् ष्ट० ह्रस्वः। अग्नौ, सूर्य्ये, अर्कवृक्षे च आकाशे, दिवसे च न०।

**द्युत** दीप्तौ भ्वा०आत्म०सक०सेट्। द्योतते अद्युतत् अद्योतिष्ट

**द्युति**(ती) स्त्री० द्युत-इन् वा ङीप्। कान्तौ, दीप्तौ, शोभायाम् प्रकाशे च। [द्युमण्यादयोऽप्यत्र।

**द्युपति** पु० ६त०। सूर्य्ये अर्कवृक्षे च एवं दिवोमणिरिव

**द्युम्न** न० दिव मनति म्ना-क। धने, बले च।

**द्यूत** न० दिव-क्त। (जुया) पाशकक्रीड़ायाम् अप्राणिकरणक क्रीड़ायां, कैतवे च।

**द्यूतकर** त्रि० द्यूतं करोति क-ठक्। पाशकादिक्रीड़ाकारके (जुयारी) ण्वुल्। द्यूतकारकोऽप्यत्र। क्विप्। द्यूतकृदप्यत्र

**द्यूतपूर्णिमा** स्त्री० द्यूतस्य द्यूतार्थं पूर्णिमा। आश्विनपौर्णमास्यां कोजागरपौर्णमास्याम्।

**द्यूतप्रतिपद्**(दा) स्त्री० चतुर्थ्यर्थे ६त०। कार्त्तिकशुक्लप्रतिपदि। 'द्यूतप्रतिपदा नाम तत्र भावी महोत्सव' इति स्मृतिः

**द्यूतवृत्ति** पु० द्यूतमेव वृत्तिर्जीविका यस्य। सभिके।

**द्यै** तिरस्कारे भ्वा०पर०सक० अनिट्। द्यायति अद्यासीत्।

**द्यो** स्त्री० द्युत-डो। स्वर्गे, आकाशे च।

**द्योत** पु० द्युत-घञ्। प्रकाशे, आतपे च। [दार्ढ्ये।

**द्रढिमन्** पु० दृढस्य भावः इमनिच् द्रढादेशः। दृढत्वे

**द्रप्स**(स) न० दृप्यत्यनेन स(स) अम् च। घनभिन्ने द्रवीभूते दध्नि

**द्रम** गतौ भ्वा० पर० सक० सेट्। द्रमति अद्रमीत्।

**द्रम्म** पु० 'वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणस्ततस्ते षोड़श द्रम्म' इत्युक्ते परिमाणभेदे (काहन)।

**द्रव** पु० द्रु-अप्। रसे पलायने, गतौ, वेगे परीहासे च।

**द्रवज** पु० द्रवात् रसात् जायते जन-ड। गुड़े। द्रवजातमात्रे त्रि०।

**द्रवत्व** न० द्रवति स्यन्दते द्रु-अच् तस्य भावः। न्यायोक्ते स्यन्दनकारणे पृथिवीजलतेजोवृत्तौ गुणभेदे।

**द्रवद्रव्य** न० द्रवतीति द्रवं कर्म्म०। दुग्धदधिघृतादौ निष्यन्दिनि द्रव्ये। [पर्य्यायश्च।

**द्रवन्ती** स्त्री० द्रु-शतृ। नद्याम्। शतमूलिकायां मूषिक-

**द्रविड** पु० देशभेदे। तद्देशस्थे व०व०।

**द्रविण** न० द्रु-इनन्। वित्ते, काञ्चने, पराक्रमे, बले च।

द्रविणनाशन पु० द्रविणं धनं नाशयति नश-णिच् ल्यु । शोभाञ्जनवृक्षे ।

द्रव्य न० द्रु-यत् । पित्तले, वित्ते, विलेपनद्रव्ये, भेषजे, भव्ये, जतुनि, विनये, मद्ये, न्यायोक्तेषु पृथिव्यादिषु गुणवत्सु नवसु । व्याकरणोक्ते लिङ्गसंख्यान्वयिनि पदार्थे । द्रोर्वृक्षस्य विकारः तस्येदम् वा यत् । वृक्षविकारे तत्सम्बन्धिनि च त्रि० ।

द्रष्टृ त्रि० दृश-तृच् । विचारकुशले-चेतने, साक्षिणि, द्रष्टा दृष्टेः कर्त्तरीत्युक्तौ दर्शनकर्त्तरि च ।

द्रा स्वप्ने पलायने अदा०अक०अनिट् । द्राति अद्रासीत् ।

द्राक् अव्य० द्रा-कु । शीघ्रे झटितीत्यर्थे । [अद्राङ्क्षीत् ।

द्राक्ष काङ्क्षायां भ्वा० पर० सक० सेट् इदित् । द्राङ्क्षति

द्राक्षा स्त्री० द्राक्षि-अ नि० नलोपः । मृद्वीकायाम् (किसमिस्) 'द्राक्षे ! द्रक्ष्यन्ति के त्वामिति जयदेवः ।

द्राख शोषणे अलमर्थे च भ्वा०पर०सक०सेट् । द्राखति अद्राखीत् । णिच् अदद्राखत् । [अद्राघीत् । णिच् अदद्राघत्

द्राघ आयासे शक्तौ भ्रमे च भ्वा० पर०सक०सेट् । द्राघति

द्राघिमन् पु० दीर्घस्य भावः इमनिच् द्राघादेशः । दीर्घत्वे ।

द्राघिष्ठ त्रि० अतिशयेन दीर्घः इष्ठन् द्राघादेशः । अतिदीर्घे । ईयसुन् द्राघीयस् तत्रार्थे । स्त्रियां ङीप् ।

द्राड विभेदे भ्वा०आ०सक० सेट् । द्राडते अद्राडिष्ट ।

द्रावक पु०द्रु-ण्वुल् । चन्द्रकान्तमणौ, जारे विङ्गे रसभेदे च।

द्राविडी स्त्री० द्रविडे जाता अण् । सूक्ष्मैलायाम् ।

द्राह्ट जागरे भ्वा०आत्म०अक० सेट् । द्राहते अद्राहिष्ट णिच् अदद्राहत् ।

द्रु गतौ भ्वा०पर०सक०अनिट् । द्रवति अदुद्रुवत् त ।

द्रु अनुभावे स्वा० पर० सक०अनिट् । द्रुणोति अद्रौषीत् ।

द्रु पु० द्रवत्यूर्द्ध्वं द्रु-डु डु वा । वृक्षे, शाखायाञ्च । गतौ स्त्री० ।

द्रुघण पु० द्रुं-हन्ति अनेन हन-करणे अप् ह्रस्वः घुत्वञ्च । मुद्गरे, परश्वधे, ब्रह्मणि चतुर्मुखे, भूमिचम्पके च ।

द्रुड मज्जने भ्वा० पर० सक० सेट् । द्रोडति अद्रोडीत् ।

द्रुड मज्जने तु० कु० पर० सक० सेट् । द्रुडति अद्रुडीत् ।

द्रुण कुटिलीकरणे तु० पर०सक० सेट् । द्रुणति अद्रोणीत् ।

द्रुणस् त्रि० द्रुरिव दीर्घा नासिकास्य नसादेशः णत्वञ्च । दीर्घनासिके जने । [कच्छप्याम्' कर्णनलीकादाञ्च ।

द्रुणी स्त्री० द्रुण-क गौरा० ङीष् । काष्ठाम्बुवाहिन्याम्

द्रुत पु० द्रवत्यूर्द्ध्वम् द्रु-क्त । वृक्षे । शीघ्रेषु नृत्यगीतवाद्येषु, शीघ्रे च न० । शीघ्रतावति, द्रवीभूते, पलायिते च त्रि० ।

द्रुपद पु० चन्द्रवंश्ये युधिष्ठिरादेः श्वशुरे नृपभेदे ।

द्रुम पु० द्रुः शाखास्त्यस्य म । वृक्षे, पारिजाते, कुवेरे च ।

द्रुमामय पु० द्रुमस्यामय इव । लाक्षायाम् । [कर्णिकारे ।

द्रुमोत्पल पु० द्रुमेषु मध्ये उत्पलमिव तदाकारपुष्पमस्य ।

द्रुमसल्लक पु० द्रुषु सल्लक इव । प्रियालवृक्षे ।

द्रुह अनिष्टचिन्तने दिवा० पर० वेट् । द्रुह्यति अद्रुहत् । द्रोहिता-द्रोग्धा-द्रोढा ।

द्रुहिण पु० द्रुह-इनन् किच्च । जगत्स्रष्टरि चतुर्मुखे ।

द्रू वधे गतौ च स्वा०क्र्या०च । उ०सक सेट् । द्रूणोति द्रूणुते द्रूणाति द्रूणीते अद्रावीत् अद्रविष्ट । [किट । णिच् अदिद्रेकत्

द्रेक स्वने उत्साहे च भ्वा० आत्म० अक० सेट् । द्रेकते अद्रे-

द्रै स्वप्ने भ्वा०पर०अक० अनिट् । द्रायति अद्रासीत् ।

द्रोण पु०द्रुण-अच्, द्रु-न वा । भारतप्रसिद्धे स्वनामख्याते योद्धृभेदे. द्रोणकाके, (डाडकाक) वृश्चिके, मेघभेदे (घलघलिया) वृक्षभेदे आढ़कचतुष्टयरूपे परिमाणे जलाशयभेदे च तडागशब्दे लक्षणं द्रष्टव्यम् ।

द्रोणकाक पु०कर्म्म० । काकभेदे (डाडकाक) । [राज्ञायाम् ।

द्रोणगन्धिका स्त्री० द्रोणपुष्पस्येव गन्धो यस्याः स्वार्थे कन् ।

द्रोणि(णी) स्त्री० द्रुण-इन् वा ङीप् । जलाद्याधारे पात्रभेदे, नदीभेदे. शैलजनामगन्धद्रव्ये, काष्ठाम्बुवाहिन्याम् ।

द्रोणीदल पु० द्रोणीव दलमस्य । केतकीवृक्षे ।

द्रोह पु० द्रुह-घञ् । अनिष्टचिन्तने ।

द्रोहचिन्तन न० द्रोह एव चिन्तनम् । परानिष्टचिन्तने ।

द्रौणायन पु० द्रोणस्यापत्यं फक् । अश्वत्थाम्नि ।

द्रौणिक त्रि० द्रोणं स्वस्मिन् समावेशयति पचति वा ठक् । द्रोणमितधान्यवपनयोग्ये क्षेत्रे द्रोणपचनयोग्ये पात्रे च ।

द्रौपदी स्त्री०द्रुपदस्यापत्यम् स्त्री अण् । द्रुपदराजात्मजायाम्

द्वन्द्व पु० द्वौ द्वौ सहाभिव्यक्तौ 'द्वन्द्वं रहस्यमर्य्यादेत्यादिना नि० । व्याकरणोक्ते उभयपदार्थे प्रधाने समासभेदे । 'क्षुत्पिपासे शोकमोहौ रागद्वेषौ तथैव च । कामक्रोधप्रभृतयो द्वन्द्वशब्देन वर्णिता इत्युक्ते परस्परविरुद्धे, शोकाशोकादौ, शीतोष्णादौ, रहस्ये, कलहे, युद्धे, मिथुने, दुर्गे च ।

द्वन्द्वचर पु० द्वन्द्वीभूय चरति चर-पचाद्यच् । चक्रवाके

द्वय न० द्वाववयवावस्य द्व्यवयवं वा द्वि-अयट् । द्वित्वसंख्यायां न०स्त्री० ङीप् 'अतद्द्वयीजित्वरे'ति नै० 'स्तनद्वयं चारुतये'ति कु० द्वित्वसंख्यान्विते त्रि० । द्वयं गतं सम्प्रतीति कु० स्त्रियां ङीप् । [स्था कर्त्तरि-क्त । द्वाः(द्वा)स्थितोऽप्यत्र

द्वाः(द्वा)स्थ पु० द्वारि तिष्ठति स्था-क वा विसर्गलोपः । द्वारपाले

द्वाचत्वारिंशत् स्त्री० अधिका चत्वारिंशत् द्वौ च चत्वारिंशच्च वा आत्वम्। (बेयालिश) संख्याभेदे द्वात्रिंशदादयोऽप्यत्र।

द्वादश त्रि० द्वादशानां पूरणः डट्। येन द्वादशसंख्या पूर्य्यते तस्मिन्। [संख्याभेदे द्विरावृत्ता दश विंशतिसंख्यायाम्

द्वादशन् पु० द्वौ च दश च अधिका वा दश आत्वम् (बारो)

द्वादशकर पु० द्वादश करा हस्ता यस्य। कार्त्तिकेये वृहस्पतौ च द्वादशहस्तादयोऽप्यत्र। [द्वादशलोचनादयोऽप्यत्र।

द्वादशनेत्र पु० द्वादश नेत्राण्यस्य। षडानने कार्त्तिकेये।

द्वादशाङ्गुल पु० द्वादश अङ्गुलयः प्रमाणमस्य तद्धितार्थे द्विगुः तद्धितस्य लुकि अच् समा०। वितस्तिप्रमाणे। [च।

द्वादशात्मन् पु० द्वादश आत्मानो मूर्त्तयोऽस्य। सूर्य्ये, अर्कवृक्षे

द्वादशायुस् पु० द्वादश वर्षमायुर्यस्य। कुक्कुरे।

द्वापर पु० द्वौ परौ प्रकारौ विषयौ वा यस्य पृ० आत्त्वम्। संशये सत्यत्रेतानन्तरे युगभेदे। अङ्कसङ्ख्यान्वितपाशकपार्श्वे च।

द्वापराय पु० पाशकस्य अङ्कसङ्ख्यान्वितं पार्श्वं द्वापरं तस्य अयः उत्तानतया पतनम्। द्यूतभेदे अङ्कान्वितपार्श्वस्योत्तानतया पतने। [गौतमे मुनौ च।

द्वामुष्यायण पु० द्वयोरमुयोरपत्यम्। नि०। द्वयोः पुत्रे।

द्वार् स्त्री० द्वृ-वरणे णिच्-विच्। गृहादि निर्गमनस्थाने, प्रतीहारे, उपाये, मुखे च। [उपाये, मुखे च

द्वार न० द्वृ-णिच् अच्। गृहादिनिर्गमनस्थाने, प्रतीहारे,

द्वारका स्त्री० द्वारेण प्रशस्तद्वारेण कायति कै-क। समुद्रसन्निकृष्टे तीर्थभेदे द्वारवत्यादयोऽप्यत्र।

द्वारकेश पु० ६त०। श्रीकृष्णे। [ण्वुल् च। एतावमुक्तार्थे।

द्वारप त्रि० द्वारं पाति रक्षति पा-क। द्वारपाले। पाल-अण्,

द्वारयन्त्र न० ६त०। तालके। (ताला) (कुलुप) ख्याते पदार्थे

द्वारावती स्त्री० द्वाराणि मोक्षोपायाः सन्त्यस्याम् मतुप् पूर्व्वदीर्घः। तीर्थभेदे पुरी द्वारावती चैव सप्तैता इति पुराणम् द्वार+अस्त्यर्थे ठनि। द्वारिकाप्यत्र।

द्वारिन् त्रि० द्वारं पालयत्वेनास्त्यस्य इनि। द्वारपाले।

द्वाविंशति स्त्री० अधिकाविंशतिः द्वौ च विंशतिश्च आत्त्वम्। (बाइश) सङ्ख्याभेदे।

द्वि त्रि० द्वि०व०। द्वृ-ड। द्वित्वसङ्ख्यान्विते।

द्विक पु० द्वौ कौ ककारौ यत्र। काके, कोके, अवयवम् कन् द्वित्वसङ्ख्यायाम् तद्वति च न०। एकं द्विकं त्रिकञ्चैवेति कारिका।

द्विककुद् पु० द्वे ककुदे यस्य अन्त्यलोपः। उष्ट्रे।

द्विगु पु० व्याकरणोक्ते समासभेदे। ६त०। गोद्वयस्वामिनि त्रि०

द्विगुण त्रि० द्वाभ्यां गुण्यते गुण-कर्म्मणि क। द्वाभ्यां गुणिते

द्विगुणाकृत त्रि० द्विगुणं कृत्वा कृष्टम् डाच्+कृ-क्त। द्विवारकृष्टे क्षेत्रे।

द्विज पु० द्विर्जायते जन ड वृत्तौ सङ्ख्याया वारार्थत्वम्। ब्राह्मणे ब्राह्मणादिवर्णत्रये, 'जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते' इति स्मृतिः। दन्ते, अण्डजे विहगादौ, तुम्बुरुवृक्षे च

द्विजकुत्सित पु० ३त०। श्लेष्मातकवृक्षे तत्फलस्य द्विजानामभक्ष्यत्वात् तन्निन्द्यत्वम्।

द्विजदेव पु० द्विजेषु देवइव। ब्राह्मणे, ऋषौ च।

द्विजन्मन् पु० द्वे जन्मनी यस्य। ब्राह्मणक्षत्रियवैश्यरूपवर्णत्रये, 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने,' इति स्मृतिः दन्ते, अण्डजे च।

द्विजबन्धु पु० द्विजो बन्धुर्यस्य तद्वोत्रोत्पन्नत्वात्। स्वकार्य्यरहितेषु जन्ममात्रोपजीविषु अधमेषु ब्राह्मणक्षत्रियवैश्येषु

द्विजराज पु० ६त० टच् समा०। चन्द्रे, अनन्ते, गरुडे च।

द्विजवर पु० द्विजेषु वरः। विप्रे। द्विजवर्य्यद्विजोत्तम.दयोऽप्यत्र

द्विजशप्त पु० ३व०। राजमाषे (बरवटी)। [कागरुद्रव्ये च।

द्विजा स्त्री० द्विर्जायते जन-ड टाप्। पालङ्क्यां भार्य्यां, रेणु-

द्विजाति पु० द्वे जाती जन्मनी यस्य। 'ब्राह्मणः क्षत्रियोवैश्यस्त्रयोवर्णा द्विजातय' इति मनूक्ते वर्णत्रये 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने' इत्युक्तेस्तेषां तथात्वम्।

द्विजिह्व पु० द्वे जिह्वे यस्य। सर्पे। खले, चौरे, दुःसाध्ये च त्रि०

द्वितय त्रि० द्वाववयवावस्य अवयवं वा द्वि-तयप्। द्वित्वसङ्ख्यान्विते 'यदि वायौ द्वितयेऽपि तेऽचला' इति भारविः स्त्रियां ङीप्। द्वित्वसङ्ख्यायाञ्च न०।

द्वितीय त्रि० द्वयोः पूरणःतीय। द्वयोः पूरणे। चन्द्रस्य द्वितीयकलाक्रियारूपे तिथौ स्त्री० भागार्थेऽण्। द्वितीये भागे। [कृष्टे क्षेत्रे।

द्वितीयाकृत त्रि० द्वितीयं कृत्वा कृष्टम् डाच्+कृ-क्त। द्विवा

द्विदत् त्रि० द्वौ दन्तावस्य वयसि दन्तस्य दत्रादेशः। द्विदन्तोपलक्षितवयस्के वृषादौ स्त्रियां ङीप्।

द्विदैव पु० द्वौ देवावस्य अण् उत्तरपदवृद्धिः। विशाखानक्षत्रे तस्याः शक्राग्निदेवतात्वात् तथात्वम्।

द्विधा अव्य० द्विप्रकारम् द्वि+धाच्। द्विप्रकारे।

द्विधालेख्य पु० द्विधा लेखां रेखामर्हति यत्। हिन्तालवृक्षे। द्विप्रकारलेखनीये त्रि०।

द्विप पु० द्वाभ्यां मुखशुण्डाभ्यां पिबति पा-क। हस्तिनि।

द्विपद पु० द्वे पदे यस्य। मनुष्ये, देवे, पक्षिणि, राक्षसे, च

'मिथुनतुलाघटकन्याद्विपदाख्या चापपूर्वभागश्चेति' ज्योतिषोक्ते राशिभेदे च ।

**द्विपदा** स्त्री० द्वौ पादावस्याः पादस्यान्त्यलोपः टापि भत्वात् पदादेशः । ऋग्विशेषे । छन्दोभेदे ङीप् द्विपदी ।

**द्विपर्णी** स्त्री० द्वे द्वे पर्णे प्रतिपर्णमस्याः ङीप् । वनकोल्यां शालपर्ण्यां, पृश्निपर्ण्याञ्च । पर्णद्वययुक्ते त्रि० । स्त्रियां टाप् । [जरासन्धे च ।

**द्विमातृक** पु० द्वे मातरावस्य । दुर्गाचामुण्डापालिते गणेशे,

**द्विमुख** पु० द्वे मुखे यस्य । राजसर्पे । मुखद्वयवति त्रि० । जलौकायां स्त्री०ङीप् । एवं द्विमूर्द्धादयोऽप्यत्र असुरभेदे च ।

**द्विरद** पु० द्वौ रदौ यस्य । हस्तिनि ।

**द्विरागमन** न० द्विराहत्तमागनम् शाक० । 'वृत्ते पाणिग्रहे गेहात् पितुः पतिगृहं प्रति । पुनरागमनं यत् स्यात्तत् द्विरागमनं विदु'रित्युक्ते विवाहानन्तरं कन्यायाः पुनर्गमने ।

**द्विरुक्त** त्रि० विवादादिना द्विरुच्चारितम् । 'विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे । प्रसादने सम्भ्रमे च द्विस्त्रिरुक्तं न दुष्यतीत्युक्तेः विवादादिभिः द्विवारमुक्ते व्याकरणोक्ते अभ्यस्तसंज्ञके च ।

**द्विरूढा** स्त्री० द्विवारमूढा वह-क्त । पुनर्भूस्त्रियाम् ।

**द्विरूप** पु० द्वे रूपे यस्मिन् । कोषभेदे । रूपद्वयवति त्रि० ।

**द्विरेफ** पु० द्वौ रेफौ वाचकनाम्नि यस्य । भ्रमरे तच्छब्दस्य रेफद्वयवत्त्वेन तद्वाच्यमधुकरपदार्थेऽपि द्विरेफवत्त्वम् ।

**द्विवचन** न० द्वौ वक्ति द्वौ वा उच्येते अनेन ।व्याकरणोक्ते द्वित्वबोधके औतप्रभृतिप्रत्यये ।

**द्विवर्षा** स्त्री० द्वे वर्षे वयः परिमाणमस्य आर्हीयः ठक् अध्यर्द्धेति स्वार्थे कन् तस्य लुक् । द्विवर्षवयस्कायां गवि ।

**द्विवार्षिक** त्रि० द्वयोर्वर्षयोः भवः ठक् उत्तरपदवृद्धिः । द्विवर्षभवे तण्डुलादौ ।

**द्विशफ** पु० द्वौ शफौ यस्य । 'गौरजोमहिषः कृष्णःसूकरो गवयो रुरुः । द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सप्तम' इत्युक्तेषु पशुषु । [द्वयोर्व्याघ्रौ ।

**द्विशस्** अव्य० द्वौ द्वौ ददाति करोति वा । एकक्रियया

**द्विष** वरे अदा०उभ०सक०अनिट् । द्वेष्टि द्विष्टे अद्विक्षत् अद्विक्षत

**द्विषत्** पु० द्विष-शतृ । शत्रौ । [शत्रुतापने ।

**द्विषन्तप** पु० द्विषन्तं तापयति तप-णिच्-खच् ह्रस्वः मुम् च ।

**द्विष्ठ** त्रि० द्वयोस्तिष्ठति स्था-क सुपमा० षत्वम् । द्वयोः स्थिते संयोगादौ पदार्थे । [द्विवारार्थे ।

**द्विस्** अव्य० द्वि+क्रियावृत्तिगणने सुच् । द्विरावृत्तक्रियायाम्

**द्विसप्तति** स्त्री० अधिका सप्ततिः द्वौ च सप्ततिश्च वा नात्वम् । (बाहात्तर) संख्याभेदे । [तण्डुले ।

**द्विस्विन्न** न० द्विरावृत्तं स्विन्नं पक्वम् । (सिद्धचाउल) सिद्ध

**द्विहल्य** त्रि०द्विवारं हलेन कृष्टम् यत् । द्विवारं हलेन कृष्टे क्षेत्रे

**द्विहायनी** स्त्री० द्वौ हायनौ वयोमानं यस्याः ङीप् । द्विवर्षवयस्कायां गवि । [गर्भहृदयेन च तस्यास्तथात्वम् ।

**द्विहृदया** स्त्री० द्वे हृदये यस्याः । गर्भिण्याम् । स्वहृदयेन

**द्वीन्द्रियग्राह्य** पु० द्वाभ्यां नेत्रत्वगिन्द्रियाभ्यां गृह्यतेऽसौ । न्यायोक्ते 'संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च । एते तु द्वीन्द्रियग्राह्या' इत्युक्ते गुणभेदे ।

**द्वीप** न० द्वयोर्गता आपोऽत्र अच् आदेरत ईच्च । जलमध्यस्थे स्थलभागे 'जम्बुशाककुशक्रौञ्चशाल्मलिप्लक्षपुष्कराः' इत्युक्तेषु लवणसमुद्राद्यावृतेषु भूमिप्रदेशभेदेषु द्विवर्णे चर्म्मणि च ।

**द्वीपवत्** पु० द्वीप+अस्त्यर्थे मतुप् मस्य वः । नदे । समुद्रे च । नद्यां भूमौ च स्त्री० ङीप् ।

**द्वीपिन्** पु० द्वौ वर्णावयते ई-पक् द्वीपं द्विवर्णं चर्म्म तदस्त्यस्य इनि । व्याघ्रभेदे (चितावाघ) ।

**द्वीपिशतु** पु० ऋत० । शतमूल्याम् तद्भक्षणे हि तस्य नाशः ।

**द्वृ** संवरणे भ्वा० पर० सक० अनिट् । द्वरति अद्वार्षीत् ।

**द्वेधा** अव्य० द्वि+प्रकारे धाच् एदादेशः । द्विधार्थे ।

**द्वेष** पु० द्विष-घञ् । विरोधे, अनिष्टसाधनताज्ञानजन्ये रागप्रतिबन्धिचित्तवृत्तिभेदे ।

**द्वेषण** त्रि० द्विष-युच् । शत्रौ । भावे ल्युट् । द्वेषे न० ।

**द्वेष्य** त्रि० द्विष-ण्यत् । शत्रौ । [जीवे वार्द्धुषौ ।

**द्वैगुणिक** त्रि० द्विगुणं गृहीतमेकगुणं प्रयच्छति टक् । वृद्ध्या-

**द्वैत** न० द्विधा इतम् द्वीतं तस्य भावः अण् । द्विधाभेदे, द्वित्वसंख्यायाञ्च । स्वार्थेऽण् । द्विधाभेदवति त्रि० ।

**द्वैतवन** न० द्वे-इते गते यस्मात् कर्म्म० । शोकमोहादिद्वन्द्वरहिते वनभेदे ।

**द्वैतवादिन्** त्रि० द्वैतं वदति वद-णिनि । जीवेश्वरयोर्भेदाभ्युपगन्तरि नैयायिकादौ । [ऽर्थे ।

**द्वैतीयीक** त्रि० द्वितीय एव स्वार्थे ईकक् । द्वित्वसंख्यापूरणे

**द्वैध** न० द्वि+प्रकारे धमुञ् । द्विप्रकारे ।

**द्वैप** पु० द्वीपिनो विकारः अञ् । व्याघ्रविशेषचर्म्मणि । तेन परिवृतो रथः पुनरञ् । द्वीपिचर्म्मणा परिवेष्टिते रथे ।

**द्वैपायन** पु० द्वीपमयनं जन्मभूमि यस्य द्वीपायनः स एव प्रज्ञाद्यण् । 'द्वीपे न्यस्तस्तया बालस्तस्मात् द्वैपायनोऽभव'दित्युक्ते व्यासे ।

**द्वैमातुर** पु० द्वयो मात्रोरपत्यम् अण् उत्त्वं रपरत्वम् । दुर्गा-
चासुख्याभ्यां पालिते गणेशे, जरासन्धे नृपे च ।

**द्व्यणुक** न० द्वयोरण्वोः संयुक्तयो र्भवः कन् । परमाणुद्वय-
जाते द्रव्यभेदे ।

**द्व्यष्ट** न० द्वे हेमरूप्ये अश्नुते व्याप्नोति अश-क्त । ताम्रे ।

**द्व्यामुष्यायण** पु० असुष्य प्रसिद्धस्यापत्यम् फक् आमुष्यायणः
द्वयोरामुष्यायणः ६त० । 'उभयोरप्यसौ रिक्थी पिण्ड-
दाता च धर्मत' इत्युक्ते तत्र, मम चायमिति समयेन परि-
गृहीते पुत्रभेदे । [द्व्यहजाते ज्वरादौ ।

**द्व्याह्निक** त्रि० द्वयोरह्नोः समाहारः द्व्यहः तत्र भवः ठञ् ।

## ध ।

**ध** पु० धे धा-वा ड । धर्मे, कुवेरे, ब्रह्मणि च । धने न० ।

**धक्क** नाशने चुरा०उभ०सक०सेट् । धक्कयति-ते अदधक्कत्-त

**धट** पु० धन अच् टान्तादेशः । तुलायां (तराजु) दिव्यप्रमाण-
रूपे परीक्षाभेदे च।

**धटक** पु० द्विचत्वारिंशद्रक्तिकात्मके परिमाणभेदे ।

**धण** ध्वाने भ्वा०पर०सक०सेट् । धणति अधाणीत् अधणीत् ।

**धत्तूर** पु० धयति धात्तृन् धा-उर ष्ट० । धुस्तूरे । [अधनीत्

**धन** धान्योत्पादने जुहो० पर०अक० सेट् । दधन्ति अधानीत्

**धन** रवे भ्वा० पर० अक० सेट् । धनति अधानीत् अधनीत् ।

**धन** न० धन-अच् । वहुनि अर्थे, स्नेहे, धनिष्ठानक्षत्रे च ।

**धनञ्जय** पु० धनं जयति जि-खच् मुम् च । अर्ज्जुने, वह्नौ,
नागभेदे, पोषणकरे देहव्यापिवायौ, ककुभवृक्षे चित्रकवृक्षे च

**धनद** पु० धनं दयते दे-पालने । कुवेरे हिज्जलवृक्षे च ।
दा-क धनदातरि त्रि०। [तदनुचरत्वम्

**धनदानुचर** पु० ६त० यक्षे कुवेरस्य यक्षराजतया यक्षाणां

**धनदानुज** पु० ६त० । रावणे ।

**धनपति** पु० ६त० । कुवेरे ।

**धनपिशाची** स्त्री० धने पिशाचीव । धनाशायां धनलोभे

**धनहरी** स्त्री० धनं हरति अच् गौरा० ङीष् । चोरनामक
गन्धद्रव्ये । [प्रत्यादयोप्यत्र ।

**धनाधिप** पु० ६त० । कुवेरे । धनानामधिपे त्रि० । धनाधि-

**धनिक** पु० न० धनिवत् कायति कै-क । धन्याके । धने पु०।
धनं विद्यतेऽस्यस्य ठन्। धनस्वामिनि उत्तमर्णे त्रि०
'धनिकस्य यथारुची'ति स्मृतिः । स्त्रियां टाप् । सा च
प्रियङ्गुवृक्षे, वध्वाञ्च । [ख्याते नक्षत्रभेदे ।

**धनिष्ठा** स्त्री० अतिशयेन धनवती इष्ठन् इनेर्लुक् । स्वनाम

**धनुष्पाट** पु० धनुरिव पाटो विस्तारोऽस्य । पियालवृक्षे ।

**धनुर्गुण** पु० ६त० । मौर्व्याम् ।

**धनुर्द्रुम** पु०६त० । वंशे, तत एव धनुर्योजननात् ।

**धनुर्द्धर** पु० धनुर्धारयति धृ-अच् । धानुष्के (तीरन्दाज)

**धनुर्वृक्ष** पु० धनुषः साधनं वृक्षः । भल्लातके, वंशे, अश्वत्थे च

**धनुर्वेद** पु०धनुषः उपचारात् तत्प्रचोपयोगीयास्त्रप्रयोगादेः उप-
योगी वेदः। यजुर्वेदस्योपवेदे शस्त्रास्त्रप्रयोगोपसंहारप्रति-
पादकमन्त्रसहिते शास्त्रभेदे ।

**धनुष्क** पु० धनुःकरे यस्य मत्वम् । धानुष्के (तीरन्दाज)

**धनुष्मत्** पु० धनुरस्त्यस्य मतुप् षत्वम् । धानुष्के ।

**धनुस्** पु० धन-उसि । पियालवृक्षे धनुर्द्धरे त्रि० । चापे,
मेषादितो नवमे राशौ च न० ।

**धन्य** पु० धनाय हितम् धनं लब्धा धनस्य निमित्तं संयोगः
उत्पातो धनं प्रयोजनमस्य वा यत् । अश्वकर्णवृक्षे ।
श्लाघ्ये, कृतार्थे, पुण्यशीले, धनोपयोगिन्यर्थशास्त्रे, धनाय
हिते, धनस्य कारणे च त्रि० । आमलक्याम्, धन्याके च
स्त्री० टाप् । [ख्याते वृक्षे ।

**धन्याक** न० धन-आकन् पिण्याकादि० नि० । (धनिया) इति

**धन्वदुर्ग** न० धन्वना मरुणा कृतं दुर्गम्। चतुर्दिशं पञ्चयोजन
मरुभूमिवृते दुर्गभेदे ।

**धन्व** न० सौ० धन्व अच् । चापे ।

**धन्वन्** न०सौ० धन्व कनिन् । धनुषि, मरुदेशे च ।

**धन्वन्तरि** पु० धन्वन् शिल्पशास्त्रं तस्यान्तमियर्ति ऋ-इन्
शक० । 'नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान् ।
पुरा समुद्रमथने समुत्तस्थौ महोदधे'रित्युक्ते स्वर्गवैद्यभेदे,
दिवोदासे काशिराजे, विक्रमादित्यसभासदे पण्डित-
भेदे च 'धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टे'त्यादि ।

**धन्वन्तरिग्रस्ता** स्त्री० ३त० । (कट्की) कटुक्याम् रोगोपशम
नाय तेन तस्याग्रासः कृतः । [लभायाम् ।

**धन्वयवास** पु० धन्वनो मरुभूमेर्यवासः तत्रोत्पन्नत्वात् । दुरा-

**धन्वयास** पु० धन्वनो यासो निर्यास इव । दुरालभायाम् ।

**धन्वी** पु० धनं विद्यतेऽस्य इनि । अर्ज्जुने, ककुभद्रुमे, दुरा-
लभायाम्, वकुले च । विदग्धे, धानुष्के त्रि० ।

**धन्विस्थान** न० ६त० । 'वैष्णवं समपादञ्च वैशाखं मण्डलं
तथा । प्रत्यालीढं तथालीढं स्थानान्यानेतानि धन्विनामि-
त्युक्तेषु धानुष्कस्थितिभेदेषु ।

**धम** ध्वाने सौ०पर०सक०सेट् । धमति अधमीत् । [त्रि०

**धमन** पु० ध्मायतेऽनेन धम-ल्युट् । नले, भस्त्राध्मापके,क्रूरे च

**धमनि(नी)** स्त्री० धम-अनि वा ङीप् । नाड्यां, शिरायां,हट्टविलासिन्यां, ग्रीवायां, हरिद्रायाञ्च । [(खोपा)

**धम्मिल्ल** पु० स्त्री० धम-विच् मिल-क ष० कर्म० । संयतेषु केशेषु

**धर** पु० धृ-अच् । पर्व्वते,कूर्म्मराजे, वसुभेदे, कार्पासतूले च ।

**धरण** पु० धृ-युच् । पर्व्वतभेदे, लोके, गुणे, धान्ये दिवाकरे, सेतौ च । चतुर्विंशतिरक्तिकामाने दशरक्तिकापरिमाणे च ।

**धरणि** पु० धृ-अनि वा ङीप् भूमौ, कन्दविशेषे, कन्दालौ वनकन्दे च स्त्री० ।

**धरणि(णी)धर** पु० धरणिं(णीं) धरति धृ-अच् । पर्व्वते, विष्णौ, कच्छपे च । [नाड्याम्

**धरा** स्त्री० धृ-अच् । पृथिव्याम्, गर्भाशये-जरायौ, मेदोवहायां-

**धराधर** पु० धरां धारयति धृ-अच् । पर्व्वते वराहरूपे विष्णौ च

**धरामर** पु०धरायाममर इव । ब्राह्मणे एवं भूदेवादयोऽप्यत्र ।

**धरित्री** स्त्री० धृ-इत्र गौरा० ङीप् । भूमौ ।

**धर्म्म** पु०न० । धृ-मन् । शास्त्रविहितकर्म्मानुष्ठानजन्ये भाविफलसाधनभूते शुभादृष्टे,'श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्म' इत्युक्ते श्रौतस्मार्ते कर्म्मणि । 'विहितक्रियया साध्यो धर्म्मः पुंसां गुणो मत' इत्युक्ते कर्म्मजन्ये अदृष्टे च आत्मनि, देहधारणात्, जीवे, आचारे, वस्तुगुणरूपे, स्वभावे, उपमायाम्, यागादौ, अहिंसायां, न्याये, उपनिषदि, यमे, सोमाध्यायिनि, सत्सङ्गे, धनुषि, ज्योतिषोक्ते लग्नात् नवमस्थाने च । दानादौ न० ।

**धर्म्मक्षेत्र** न०'ब्रह्मवेदिः कुरुक्षेत्रं पञ्चरामहृदान्तरम् । धर्म्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधी'त्युक्ते कुरुक्षेत्रे । इत० । धर्म्मस्थाने

**धर्म्मघट** पु० धर्म्मार्थो घटः । सौरवैशाखे प्रत्यहं दातव्ये सुगन्धोदकपूर्णे घटे । [भार्य्यायाम्

**धर्म्मचारिणी** स्त्री० धर्म्मं दाम्पत्यधर्म्मं चरति चर-णिनि ।

**धर्म्मदान** न० 'पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् । केवलं धर्म्मबुद्ध्या यत् धर्म्मदानं प्रचक्षते' इत्युक्ते प्रयोजनान्तरानुद्देशेन दाने ।

**धर्म्मद्रवी** स्त्री०धर्म्मजनको द्रवो यस्याः । 'विष्णुपादाब्जसंभूते ! गङ्गे त्रिपथगामिनि ! धर्म्मद्रवीति विख्याते' इत्युक्तायां गङ्गायाम् । [जटादिधारिणि

**धर्म्मध्वजिन्** त्रि० धर्म्मोध्वजमिवास्त्यस्य इनि । जीविकार्थं

**धर्म्मपत्नी** स्त्री० धर्म्मार्थं पत्नी । प्रथमं समूढायां सवर्णायाम् स्त्रियां,कीर्त्तौ, वाचि, स्मृतौ, मेधायां,धृतौ,क्षमायाञ्च ।

**धर्म्मपुत्र** पु०इत० । युधिष्ठिरे । [क्षमा० । यमे, युधिष्ठिरे च ।

**धर्म्मराज** पु०धर्म्मेण राजते पचाद्यच् । धर्म्मस्य राजा वा टच्

**धर्म्मलक्षण** न० धर्म्मो लक्ष्यतेऽनेन लक्ष-ल्युट् । 'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधः दशकं धर्म्मलक्षण'मित्युक्ते धृत्यादौ दशके ।

**धर्म्मवाणिजिक** पु० वणिगेव स्वार्थे ठक् वाणिजिकः ७तः । पुण्यकर्म्मफलाभिलाषुके । [नाय दातरि

**धर्म्मवैतंसिक** पु० पापेन धनमुपार्ज्यात्मनो धार्म्मिकत्वख्याप-

**धर्म्मशास्त्र** न० धर्म्मप्रतिपादकं शास्त्रम् । मन्वादिप्रयुक्ते स्मृतिशास्त्रे ।

**धर्म्मशील** त्रि० धर्म्मः शीलं सततमनुष्ठेयं यस्य । धार्म्मिके ।

**धर्म्मसंस्थापन** न० धर्म्मस्य सम्यक् अधर्म्मनिराकरणेन स्थापनम् ।' वेदोदितधर्म्मव्यवस्थापने धर्म्मसंस्थापनार्थाय सम्भवामि युगेयुगे इति पुराणम् ।

**धर्म्मसंहिता** स्त्री०धर्म्मार्थं संहिता बद्धा रचिता सम्+धाक्त । मन्वादिभिरोक्ते धर्म्मप्रतिपादनार्थे शास्त्रे ।

**धर्म्मात्मन्** पु० धर्म्म आत्मा स्वभावो यस्य । धर्म्मानुगतचित्ते ।

**धर्म्माधिकरण** पु० धर्म्मार्थमधिक्रियतेऽसौ कर्म्मणि ल्युट् । 'समः शत्रौ च मित्रे च धर्म्मशास्त्रविशारदः । 'विप्रमुख्यः कुलीनश्च धर्म्माधिकरणो भवे'दित्युक्ते धर्म्माध्यक्षे । इत० । 'धर्म्मशास्त्रानुसारेण अर्थशास्त्रनिरूपणम् । 'यत्राधिक्रियते स्थाने धर्म्माधिकरणं हि त'दित्युक्ते विचारस्थाने न० ।

**धर्म्माध्यक्ष** पु० 'कुलशीलगुणोपेतः सर्व्वकर्म्मपरायणः । प्रवीणः प्रेषणाध्यक्षो धर्म्माध्यक्षोऽभिधीयते'इत्युक्ते धर्म्माधिकरणे । इत० । सर्व्वधर्म्मस्य साक्षिणि परमेश्वरे च ।

**धर्म्माभास** पु०धर्म्मइवाभासते अशास्त्रोक्तत्वात् । 'श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्मः प्रकीर्त्तितः । अन्यशास्त्रेषु यः प्रोक्तो धर्म्माभासः स उच्यते' इत्युक्ते अन्यशास्त्रोक्ते अप्रशस्ते धर्म्मे ।

**धर्म्मासन** न० इत० । राज्ञोधर्म्मतोदर्शनार्थमासने ।

**धर्म्मिन्** त्रि० धर्म्म+अस्त्यर्थे इनि । पुण्यवति वस्तुगुणस्वरूपधर्म्मयुक्ते त्रि० ।

**धर्म्मिष्ठ** त्रि० अतिशयेन धर्म्मी इष्ठन् इनेर्लुक् । अत्यन्तधर्म्मवति

**धर्म्य** त्रि० धर्म्मादनपेतः धर्म्मेण प्राप्यो वा यत् । धर्म्मयुक्ते, धर्म्मलभ्ये च । [हिंसायाञ्च ।

**धर्ष** पु० धृष-घञ् । प्रागल्भ्ये, अमर्षे, शक्तिबन्धने, संहतौ,

**धर्षण** न० धृष-भावे ल्युट् । परिभवे, रमणे धर्षशब्दार्थे च । कर्म्मणि ल्युट् । अभिसारिकायां स्त्रियाम् स्त्री०ङीप् ।

**धर्षित** न० धृष-भावे क्त । मैथुने । कर्म्मणि क्त । कृतधर्षणे तिरस्कृते च त्रि० । असत्यां स्त्रियाम् स्त्री० ।

**धव** गतौ भ्वा०पर०सक० सेट् इदित् । धन्वति अधन्वीत् ।

धव पु० धवति धुवति धुनोति धुनाति वा धु-धू-वा अच्। पत्यौ, धूर्त्ते, नरे, स्वनामख्याते वृक्षे च। भावे अप्। कम्पने।

धवल पु० धवं कम्पं लाति ला-क। धववृक्षे, वीरणवृक्षे श्वेतमरिचे, वृषश्रेष्ठे, चीनकर्पूरे, श्वेतवर्णे च। तद्वति, सुन्दरे च त्रि०। शुक्लवर्णायां गवि स्त्री० टाप् गौरा०ङीष् वा।

धवलपक्ष पु० धवलौ पक्षौ यस्य। हंसे। कर्म०। शुक्लपक्षे

धवलमृत्तिका स्त्री० कर्म०। खटिन्याम्। (खड़ि)

धवलोत्पल न० कर्म०। कुमुदे।

धवित्र न० धूयतेऽनेन ध-इत्र। व्यजने।

धा धारणे पोषणे दाने च जुहो०उभ०सक०अनिट्। दधाति धत्ते अधात् अधित। धत्तिमम्। [(धाइ) गुल्मभेदे।

धातकी स्त्री० धातुं करोति णिच् कुन् पिप्पल्यादि० ङीष्।

धातु पु० धा-तुन्। 'धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रयः' इत्युक्तेषु वातादिषु 'रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः' इत्युक्तेषु, रसादिषु, 'सुवर्णरूप्यताम्राणि हरितालं मनःशिला। गैरिकाञ्जनकासीससीसलोहं सहिङ्गुलम्। गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवा' इत्युक्तेषु स्वर्णादिषु, 'हेमतारारनागाश्च ताम्ररङ्गे च तीक्ष्णकम्। कांसकं कान्तलौहञ्च धातवो नव कीर्त्तिता इत्युक्तेषु हेमादिषु नवसु, 'हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च। रङ्गमायसं रैत्यञ्च धातवोऽष्टौ प्रकीर्त्तिता इत्युक्तेषु अष्टसु, 'सुवर्णं रजतं ताम्रं लौहं कुप्यञ्च पारदम्। रङ्गञ्च सीसकञ्चैव इत्यष्टौ देवसम्भवा' इत्युक्तेषु अष्टसु वस्तुषु, लोकेषु सर्व्वधारणात् परमेश्वरे स एष चिद्धातुरिति श्रुतिः। व्याकरणोक्ते गणपठिते क्रियावाचके भूप्रभृतौ शब्दभेदे च।

धातुघ्न न० धातून् हन्ति हन-टक्। काञ्जिके।

धातुद्रावक न० धातून् द्रावयति स्वसम्बन्धात् द्रु-णिच् ण्वुल्। (सोहागा) टङ्कणे।

धातुपुष्पिका स्त्री० धातुरिव पुष्पमस्त्यस्य ठन्। (धाइफुल) धातपुष्प्याम्। [पुष्प्याम्।

धातुपुष्पी स्त्री० धातुरिव पुष्पमस्या ङीष्। (धाइफुल) धात-

धातुभृत् पु० धातून् बिभर्त्ति भृ-क्विप्। पर्व्वते देहस्य धातपोषके रसरूपे प्रथमे धातौ च।

धातुमाक्षिक न० धातुषु मध्ये माक्षिकम्। माक्षिके उपधातुभेदे

धातुमारिणी स्त्री० धातून् स्वर्णादीन् मारयति मृ-णिच् णिनि। सर्ज्जिकायां (सोहागा)

धातुवैरिन् पु० ६त०। गन्धके।

धातुशेखर न० धातूनां शेखरमिव। कासीसे उपधातुभेदे।

धातृ पु० दधाति धा-तृच्। चतुर्मुखे ब्रह्मणि विष्णौ च। धारणकर्त्तरि, पालके च त्रि०।

धातृपुष्पी स्त्री० धातृपोषकं पुष्पं यस्याः। (धाइफुल) वृक्षभेदे। स्वार्थे कन् ह्रस्वः। अत्रैवार्थे।

धात्री स्त्री० धीयते पीयतेऽसौ धा-ष्ट्रन् षित्त्वात् ङीष्। मातरि, आमलक्याञ्च। स्वार्थे कन्। आमलक्याम्।

धात्रीपत्र न० धात्र्या इव पत्रमस्य। तालीशपत्रे। ६त०। आमलकीदले। [स्वार्थे कन् ह्रस्वः। तत्रैवार्थे।

धात्रेयी स्त्री० धात्री+इवार्थे ढक्। उपमातरि (धाइमा)

धानक न० धीयते कर्म्मणि ल्युट् संज्ञायां कन्। धन्याके।

धाना स्त्री० धा-न-टाप्। धन्याके, अङ्कुरे, चूर्णे सक्तुषु च। भृष्टयवे ब०व०।

धानाचूर्ण न० धानानां भृष्टयवानां चूर्णम्। सक्तुषु (छातु)

धानी स्त्री० धीयतेऽस्याम् आधारे-ल्युट् ङीप्। आधारे यथा राजधानी मत्स्यधानीत्यादि। पीलुवृक्षे च।

धानुष्क त्रि० धनुःप्रहरणमस्य ठक् धनुषा जीवति ठञ् वा। धनुर्द्धरे। अपामार्गे स्त्री०।

धानुष्य पु० धनुषे हितः यञ्। वंशे।

धानेय न० धानाय साधु ढक्। धन्याके।

धान्य न० धाने पोषणे साधु यत्। सतुषे तण्डुलादौ शालितिलयवादौ च तद्भेदो वृहदभिधाने। धन्याके, चतुस्तिलपरिमाणे पूर्व्वद्वारगृहे च।

धान्यकोष्ठक न० ६त०। धान्यरक्षार्थे गृहे (गोला)।

धान्यत्वच् स्त्री० ६त०। तुषे।

धान्यपञ्चक न० ६त०। 'शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम्। शिम्बिधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चक मित्युक्तेषु शाल्यादिषु।

धान्यराज पु० धान्येषु राजा टच् समा०। यवे। [वार्द्धुषिकत्वे

धान्यवर्द्धन न० धान्यस्य ऋणप्रयुक्तस्य वर्द्धनं यत्र। (बाड़ी)

धान्यवीर पु० धान्येषु वीर इव बलहेतुत्वात्। माषे।

धान्यशीर्षक न० ६त०। धान्यस्य मञ्जर्य्याम धान्याग्रादयोऽप्यत्र

धान्याक न० धान्यमिवाकति अक-कुटिलगतौ अच्।

धान्याचल पु० दानार्थं विधानेन धान्यनिर्म्मिते पर्व्वते। तत् प्रकारस्तु वृहदभिधाने।

धान्याम्ल न० धान्येषु अभिषुतमम्लम् शाक०। काञ्जिके।

धान्योत्तम पु० धान्येषूत्तमः। शालिधान्ये।

धामन् न० धा-मनिन्। गेहे, देहे, रश्मौ, आश्रये, स्थाने

जन्मनि, त्विषि, ज्योतिषि, प्रभावे, स्वयं प्रकाशे च ।
धामनिधि पु० धामानि तेजांसि निधीयन्तेऽत्र नि+धा-कि । सूर्य्ये, अर्कवृक्षे च । [याम्, घोषके च
धामार्गव पु० धाम्नोऽर्गं वाति वा-क । अपामार्गे,पीतघोषा-
धाय्या स्त्री० धीयते पुष्यतेऽग्निरनया, धीयतेऽर्थ्यते समिदनया वा धा-ण्यत् नि०।अग्निज्वालनार्थायामृचि सामिधेन्याम् ।
धार न० धाराभिर्निर्वृत्तम् अण् । 'धाराभिः पतितं तोयं गृहीतं स्फीतवाससा' शिलायां वसुधायां वा धौतायां पतितञ्च यत्' इत्यु पक्रम्य 'भाजने स्वर्णमये वापि स्थापितं धारमुच्यते' इत्युक्ते शिलादिभाजनधृते वर्षोद्भवे जले ।
धारणा स्त्री०धृ–णिच्–युच्।'यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदै'रित्युक्तायामात्मनि चित्तस्य स्थितौ,मर्य्यादायां न्याय्यपथस्थितौ, निश्चये च। धृ-णिच्-ल्युट्।नाड्यां, श्रेणौ च स्त्री० ङीप् ।
धारा स्त्री० धृ-णिच्-अङ्। घटादिच्छिद्रे,सन्ततौ, द्रवद्रव्यस्य सन्तत्या पतने, खड्गादेर्निशिताग्रे, उत्कर्षे, यशसि, अतिवृष्टौ,समूहे, मेघस्रासारवर्षणे,स्तुत्ये,पुरीभेदे,'अश्वानान्तु गतिर्धारा विभिन्ना सा च पञ्चधे'त्युक्ते अश्वानां गतिपञ्चके, 'इतीव धारामवधीर्य्ये'ति नै०। सैन्याग्रिमस्कन्धे च ।
धाराकदम्ब पु० धाराकालिकः कदम्बः शाक०। प्रावृषेण्ये कदम्बभेदे । धारायां कदम्बं समूहो यत्र । मेघे ।
धाराट पु० धारार्थमटति धारां, धारया वा अटति अच् । चातके, अश्वे, मेघे, मत्तमातङ्गे च।
धाराधर पु० धारां धारयति धृ-णिच्-अच् ह्रस्वः । मेघे 'धाराधर ! धरा वारिधारये'ति चातकाष्टकम् ।
धाराफल पु०धारायुक्तानि श्रेणीवद्धानि फलान्यस्य।मदनवृक्षे
धारावाहिन् त्रि०धारया सन्तत्या वहति वह-णिनि । सन्तत्या पातुके, क्रमेणाविच्छेदेन जायमाने च । स्वार्थे कन् । धारावाहिकोप्यत्रार्थे ।
धारासम्पात पु० धाराणां सम्पातः पतनम् । महावृष्टौ ।
धारास्नुही स्त्री० धारायुता स्नुही शाक० । त्रिधारायां स्नुह्याम् (तेकाटासिजु) ।
धारिणी स्त्री० धृ-णिनि । भूमौ, शाल्मलिवृक्षे च।
धारिन् पु० धृ-णिनि । पीलुवृक्षे । धारणकर्त्तरि त्रि० ।
धार्त्तराष्ट्र पु० धृतराष्ट्रे सुराजदेशे भवः अण् । सर्पभेदे कृष्णवर्णचञ्चुचरणोपलक्षिते श्वेतकाये हंसे च। धृतराष्ट्रस्यापत्यम् अण्। दुर्य्योधनादौ 'निपतन्ति धार्त्तराष्ट्रा' इति वेण्याम् ।
धार्म्मिक त्रि०धर्म्मं चरति सततमनुशीलयति ठक्। धर्म्मशीले
धार्ष्ट्य न० धृष्टस्य भावः ष्यञ् । निर्लज्जत्वे ।
धाव जवे सक० शुद्धौ च भ्वा०आत्म० शीघ्रगतौ अक०सेट् । धावते अधाविष्ट । सर्त्तेर्धावादेशस्तु पर० ।
धावक पु० धाव-णिच्-ण्वुल् । रजके। धाव-ण्वुल् । शीघ्रगे। धावनकर्त्तरि त्रि० (धाओड़िया) ।
धावन न० धाव-ल्युट्। शोधने,शीघ्रगमने च । [कार्य्यास्त्र
धावनि(नी) स्त्री० धाव-अनि वा ङीप् । पृश्निपर्ण्यां कण्ट-
धि धृतौ तु०पर०सक०अनिट् । धियति अधैषीत् ।
धिक् अव्य० धा-धक्क-वा डिकि । अनिष्टशब्दैर्भयजनने, निर्भत्सने निन्दायाम्, 'धिगधिक् शक्रजितमि'ति नाटकम् । निन्दनीये च। तदर्थे तु न द्वितीया 'धिक् च कविते'त्युद्भटः।
धिक्कार पु० धिक्+कृ-घञ् । तिरस्कारे ।
धिक्कृत त्रि० धिक् निन्दनीयः कृतः कृ-क्त ।निर्भर्त्सिते ।
धिक्ष सन्दीपने सक० क्लेशे जीवने अक० भ्वा० आत्म० सेट् । धिक्षते अधिक्षिष्ट । [धिनोति अधिन्वीत् ।
धिव प्रीणने अक० गतौ सक० स्वा० पर० सेट् इदित् ।
धिष रवे जु०पर०अक० सेट् । दिधेष्टि अधेषीत् ।
धिषण पु० धृष-क्यु धिषादेशः । वृहस्पतौ ।
धिषणा स्त्री० धृष्णोत्यनया धृष-क्यु धिषादेशः । बुद्धौ ।
धिष्ण्य न० धृष-ण्य नि० । स्थाने, गृहे, शक्तौ, नक्षत्रे च । अग्नौ, अग्निभेदे, शुक्रे च पु० । [अधेष्ट । धीनः ।
धी अनादरे आराधने च दिवा०आत्म०सक०अनिट् । धीयते
धी स्त्री० ध्यै-क्विप् संप्रसारणञ्च । बुद्धौ ज्ञाने ।
धीगुण पु० ६त० । 'शुश्रूषा श्रवणञ्चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणा' इत्युक्तेषु अष्टसु बुद्धिधर्म्मेषु । [पण्डितादौ त्रि०
धीमत् पु० धीः प्रज्ञास्त्यस्य मतुप् । वृहस्पतौ । बुद्धिमति
धीर अवज्ञायां अद० चुरा०उभ०सक०सेट् । नित्यमवपूर्वः । अवधीरयति-ते अवादिधीरत् त । अवधीर्य्य।
धीर त्रि०धियं राति रा-क, धियमीरयति ईर-अण् धी-क्रन् वा । धैर्य्यान्विते, विनीते,बलयुते,पण्डिते च। ऋषभौषधौ, बलिराजे, बुद्धिप्रेरके बुद्धिसाक्षिणि परमेश्वरे च पु० । कुङ्कुमे न० । नायिकाभेदे, काकोल्यां, महाज्योतिष्मत्यां, स्थिरायां चित्तवृत्तौ च स्त्री० ।
धीराधीरा स्त्री० धीरा च अधीरा च। नायिकाभेदे ।
धीरोदात्त पु० नायकभेदे ।
धीवर पु० दधाति मत्स्यान् धा-ष्वरच् नि० । कैवर्त्ते ।

**धीशक्ति** स्त्री० ६त० । शुश्रूषादिषु अष्टसु धीगुणशब्दे दर्शितेषु बुद्धिगुणेषु ।

**धीसख** पु० धियः सखा टच्समा० । अमात्ये धीसचिवे ।

**धु** कम्पने स्वा० उभ०सक० अनिट् । धुनोति धुनीते । अधौषीत् अधोष्ट ।

**धुक्ष** सन्दीपने भ्वा०आत्म०सक०सेट् । धुक्षते । अधुक्षिष्ट ।

**धुत** त्रि०धु-क्त । त्यक्ते, कम्पिते च ।

**धुनि(नी)** स्त्री० धुनोति वेतसादीन् धु-निक् वा ङीप् । नदीमात्रे

**धुन्धुमार** पु० इक्ष्वाकुवंश्यनृपभेदे, इन्द्रगोपे कीटे, गृहधूमे (झुल)च

**धुर्(रा)** स्त्री०धुर्व-क्विप् वा टाप् । चिन्तायाम्, रथाद्यग्रभागे, यानमुखे, भारे च ।

**धुरन्धर** त्रि० धुरं धारयति धृ-णिच्-खच् मुम् ह्रस्वश्च । भारवाहके वृषादौ, भारसहे च । धवलवृक्षे पु० ।

**धुरीण** त्रि० धुरं वहति ख । भारवाहके, श्रेष्ठे च ।

**धुर्य्य** त्रि० धुरं वहति यत् । भारवाहके, श्रेष्ठे च ।

**धुर्व्व** हिंसे भ्वा० पर०सक०सेट् । धूर्व्वति अधूर्व्वीत् । धूर्त्तः ।

**धुवित्र** न० कु०धु-इत्र । यज्ञादौ वह्निसंधुक्षणे ।

**धु(धू)स्तू(स्तु)र** पु० धूस-क्विप् तूर-क कर्म्म० ष० वा ह्रस्वः । (धुतुरा) ख्याते वृक्षे । [अधोष्ट

**धू** कम्पने भ्वा० उभ० सक० वेट् । धवतिते अधावीत् अधविष्ट

**धू** कम्पने वा०चुरा०उभ० पक्षे तुदा० कु०पर०सक० सेट् । धूनयति ते धुवति अदूधुनत् अधुवीत् ।

**धू** कम्पने स्वा० क्र्यादि० शादिश्च उभ० सक०वेट् । धूनोति धूनुते धुनाति धुनीते । अधावीत् अधविष्ट अधोष्ट 'धूनोति चम्पकवनानि धुनोत्यशोक'मिति । 'वायुर्विधूनयती'ति च कविरहस्यम् ।

**धूत** त्रि० धू-क्त । भर्त्सिते, कम्पिते, तर्किते, त्यक्ते च ।

**धूनक** पु० धूनयति संधुक्षते वह्निम् चु० धू-ण्वुल् नुगागमः । यक्षधूपे (धुना) । [अदूधुपत्-त ।

**धूप** दीप्तौ चुरा०उभ० अक० दीपने सक० सेट् । धूपयति-ते ।

**धूप** तापे अक०तापने सक०भ्वा०पर०सेट् । धूपायति अधूपायीत् अधूपीत् । [गन्धद्रव्योत्थे धूमे, तत्साधनद्रव्ये च ।

**धूप** पु० धूपयति रोगान् दोषान् वा धूप-अच् । गुग्गुलुप्रभृति

**धूपन** पु० धूप-ल्यु । यक्षधूपे (धुना) ।

**धूपवृक्ष** पु० ६त० सरलवृक्षे । धूपोऽङ्गमस्य । धूपाङ्गमप्यत्र ।

**धूपित** त्रि० धूप-क्त वा आयाभावः । अध्वादिगमनेन श्रान्ते, सन्तापिते च । [ध्वजे पदार्थे ।

**धूम** पु० धू-मक् । आर्द्रकाष्ठजाते मेघकज्जलयोः कारणे वह्नि

**धूमकेतन** पु० धूम-केतनो यस्य । वह्नौ । धूम इव केतनः । तारापुञ्जात्मके धूमकेतौ उत्पातभेदे ।

**धूमकेतु** पु० धूमइव केतुः । उत्पातरूपेऽशुभसूचके तारापुञ्जभेदे । ६ब० । वह्नौ धूमध्वजादयोऽप्यत्र ।

**धूमगन्धिक** न० धूमस्येव गन्धोऽस्त्यस्य ठन् । रोहिषतृणे ।

**धूममहिषी** स्त्री० धूमस्य महिषीव । कुज्झटिकायाम् ।

**धूमयोनि** पु० धूमोयोनिरस्य । मेघे,मुस्तके च । ६त० । वह्नौ आर्द्रकाष्ठे च । [तद्वति त्रि० ।

**धूमल** पु० धूमं धूमवद्वर्णं लाति ला-क । कृष्णलोहिते वर्णे ।

**धूमाभ** पु० धूमस्येवाभा यस्य । धूम्रवर्णे । तद्वति त्रि० ।

**धूमावती** स्त्री० महाविद्याभेदे । [हितं यत् । धूमसाधने त्रि०

**धूम्या** स्त्री० धूमानां समूहः पाशादि० य । धूमसमूहे । धूमाय-

**धूम्याट** पु० धूम्या इव अटति अट-अच् । (फिङ्गा) पक्षिभेदे

**धूम्र** पु० धूमं तद्वर्णं राति रा-क०ष० । सिह्लके, खरलोमवर्णाभे कृष्णलोहिते वर्णे च । तद्वति त्रि० ।

**धूम्रक** पु० धूम्रइव कायति कै-क । उष्ट्रे । [पतिभेदे च

**धूम्रलोचन** पु०धूम्रे लोचने यस्य । कपोते, महिषासुरसेना-

**धूम्रवर्ण** पु० धूम्रो वर्णोऽस्य । सिह्लके, कृष्णलोहितवर्णे च । तद्युक्ते त्रि० । [वृक्षे तस्य धूम्रसारत्वात्तथात्वम् ।

**धूम्रिका** स्त्री० धूम्रोवर्णः सारेऽस्त्यस्य ठन् । (शिशु) शिंशपा

**धूर** वधे गतौ च दि०आ०सक०सेट् । धूर्य्यते अधूरिष्ट । धूर्त्तः

**धूर्ज्जटि** पु० जट-संघाते इन् धुरस्त्रैलोक्यचिन्ताया जटिः सङ्घातोऽत्र । शिवे ।

**धूर्त्त** पु० धुर्व्व-धूर-वा क्त । धुस्तूरवृक्षे, चोरकवृक्षे, नायकभेदे, 'धूर्त्तोऽपरां चुम्बती'ति सा० ३प० । लौहकीटे, विड्लवणे च । द्यूतकारके, वञ्चके च त्रि० ।

**धूर्त्तक** पु० धूर्त्तइव वञ्चकइव इवार्थे कन् । शृगाले ।

**धूर्वह** त्रि० धुरं वहति वह-अच् रेफे इणो दीर्घः । भारवाहके धुरन्धरे । धुर्वह इति ह्रस्वयुक्तकल्पनं प्रामादिकम् ।

**धूलि(ली)** स्त्री० धू-लिक् वा ङीप् । रजसि परागे ।

**धूलिध्वज** पु० धूलिरेव ध्वजोऽस्य । वायौ ।

**धूलिपुष्पी** स्त्री० धूलिप्रचुरं पुष्पमस्या ङीप् । केतक्याम् । स्वार्थे कन् ह्रस्वः । अत्रार्थे ।

**धूलिकदम्ब** पु० धूलीनां कदम्बं यत्र । कदम्बवृक्षे, वरुणवृक्षे, तिलिशवृक्षे च । ६त० । धूलीसमूहे न० ।

**धूश(ष)(स)** शोभने चुरा०उभ०सक०सेट् । धूश(ष)(स)यति ते अदूधुश(ष)(स)त् त ।

**धूसर** पु० धू-सर किञ्च न पत्वम् । गर्द्दभे, उष्ट्रे, कपोते,

तैलकारे, ईषत्पाण्डुवर्णे, कृष्णश्वेतवर्णे, शुक्लपीतवर्णे च तद्वर्णवति त्रि० । [हस्तिशुण्डच्चे ।

**धूसरपत्रिका** स्त्री० धूसरं पत्रमस्याः टप् । (हातिशुंड़ा)

**धृ** पतने भ्वा०आ०अक० अनिट् । धरते अधृत ।

**धृ** स्थितौ अक० धृतौ सक० भ्वा० उभ० अनिट् । धरति ते अधार्षीत् अधृत ।

**धृ** स्थितौ अक० धृतौ सक०तुदा०आ०अनिट् । ध्रियते अधृत

**धृ** धारणे, चुरा०उभ०सक०अनिट् । धारयति ते अदीधरत् त

**धृज** गतौ भ्वा०पर०सक०सेट् इदित् । धृञ्जति अधृञ्जीत् [चि

**धृतराष्ट्र** पु०चन्द्रवंश्ये दुर्योधनपितरि न्यपभेदे,नागभेदे,पक्षिभेदे

**धृति** स्त्री० धृ-क्तिन् । तुष्टौ, धारणे, यागे, विष्कम्भावधिके अष्टमे योगे, सुखे, धारणायाम्, अवसादेऽपि शरीरादेः सम्भ्रमयत्नौ,अष्टादशाक्षरपादके छन्दोभेदे, अष्टादशसङ्ख्यायाञ्च । [धर्षिता धृष्टा ।

**धृष** संहतौ अक० हिंसे सक०भ्वा०पर०सेट् । धर्षति अधर्षीत्

**धृष** प्रागल्भ्ये स्वा०पर०अक० सेट् । धृष्णोति अधर्षीत् । धृष्टः

**धृष** सामर्थ्यबन्धने चुरा०आत्म० अक०सेट् । धर्षयते अदीधृषत अदधर्षत ।

**धृष** क्रोधे अभिभवे च वा चु० उभ० पक्षे भ्वा० सक० सेट् । धर्षयति ते धर्षति अदीधृषत् त अदधर्षत् त अधर्षीत् ।

**धृष्णज्** त्रि० धृष-नजिङ् । प्रगल्भे निर्लज्जे वेशुद्दले च (कच्ची)

**धृष्णु** त्रि० धृष-क्नु । प्रगल्भे निर्लज्जे च ।

**धृष्ट** त्रि० धृष-क्त । निर्लज्जे, प्रगल्भे, नायकभेदे च ।

**धृष्टद्युम्न** पु० धृष्टं प्रगल्भं द्युम्नं बलं यस्य । द्रुपदन्टपपुत्रे ।

**धेनु** स्त्री० धयति सुतान् धे—नु इच्च । नवप्रसूतायां गवि ।

**धेनुक** पु० धेनुरिव इवार्थे कन् । असुरभेदे । हस्तिन्यां स्त्री० । स्वार्थे कन् । धेनी । धेनुकाद्यायोष्यत

**धेनुकसूदन** पु० धेनुकं सूदयति हिनस्ति सूद-ल्यु । श्रीकृष्णे

**धेनुदुग्धकर** पु० धेनोर्दुग्धमिव किरति कृ-अच् । गर्जरे (गाजर)

**धेनुष्या** स्त्री० धेनु+संज्ञायां यत् सुक् च । ऋणशोधनार्थमुत्तमर्णाय बन्धकत्वेन दीयमानायां धेनौ ।

**धैनुक** न० धेनूनां समूहः ठक् । धेनुसमूहे ।

**धैर्य** न०धीरस्य भावः ष्यञ् 'स्थिरचित्तोन्नतिर्या तु तद्धैर्यमिति गीयते'इत्युक्ते मनसः स्थैर्ये, कौन्नत्ये, 'मनसो निर्विकारत्वं धैर्यं सत्स्वपि हेतुषि'त्युक्ते मनसो विकाराभावे' अव्याकुलत्वे, विघ्नाद्युपस्थितावपि प्रारब्धापरित्यागहेतौ चित्तवृत्तिभेदे च ।

**धैवत** पु० 'गत्वा नाभेरधोभागं वस्तिं प्राप्योर्द्धगः पुनः । धावन्निव च यो याति कण्ठं देशं स धैवतः' इत्युक्ते कण्ठोत्थिते स्वरभेदे । [थिच् अदुधोरत् त

**धोर** गतिचातुर्ये भ्वा०पर०अक०सेट् । धोरति अधोरीत् ।

**धोरण** न० धोरत्यनेन धोर-ल्यु ल्युट् वा । हस्त्यश्वरथादौ याने । भावे ल्युट् । अश्वगतिभेदे ।

**धोरणि(णी)** स्त्री० धोर-अनि वा ङीप् । परम्परायाम् 'सद्यः स्खलन्नुमाधुरीधाराधोरणिधौतधामनी'त्युद्भटः ।

**धौत** त्रि० धाव-क्त ऊठ् । मार्जिते, प्रक्षालिते, उत्तेजिते, शुभ्रे च । रजते न० ।

**धौतकौषेय** न० कर्म० । प्रक्षालिते कृमिकोषजाते वस्त्रे ।

**धौरित** न० धोर-क्त प्रज्ञाद्यण् । अश्वानां चतुरायां गतौ । स्वार्थे कन् । तत्रैवार्थे ।

**धौरेय** त्रि० धुरं वहति ढक् । भारवाहके वृषादौ ।

**ध्मा** अग्निसंयुतौ दीर्घश्वासहेतुके शब्दभेदे भ्वा०पर० ताहृश शब्देन वादने सक० अनिट् । धमति अध्मासीत् ।

**ध्मात** त्रि० ध्मात-क्त । संधुक्षिते दीर्घश्वासहेतुकशब्दयुक्ते ।

**ध्माङ्क्ष** आकाङ्क्षे सक० घोररवे अक० भ्वा० पर० सेट् इदित् । ध्माङ्क्षति । अध्माङ्क्षीत् । [काकोलिकायां स्त्री०गौ०ङीष्

**ध्माङ्क्ष** पु० ध्माङ्क्ष-अच् । काके, मत्स्यभक्षके, पक्षिभेदे, भिक्षुके च

**ध्माङ्क्षोली** स्त्री०ध्माङ्क्ष-ओल गौ० ङीष् । काकोलीलतायाम्

**ध्यान** न०ध्यै-ल्युट् । चिन्तने, ध्येयवस्तुविषयचिन्तने, चित्तस्यैकतानप्रवाहे,'ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः । ध्यानशब्देन विख्याता परमानन्ददायिनी'ति वेदान्तोक्ते ब्रह्मविषये चित्तस्थैर्ये, 'ध्यै चिन्तायां स्मृतो धातुश्चिन्ता तत्त्वेन निश्चला । एतद् ध्यानमिह प्रोक्त'मिति तन्त्रोक्ते ध्येयस्य चित्तस्थिरतया निश्चये च ।

**ध्याम** न० ध्यायते पशुभिः ध्यै-मन् । गन्धतृणे दमनकवृक्षे च । संज्ञायां कन् । रोहिषतृणे ।

**ध्यै** चिन्तने भ्वा०पर०सक०अनिट् । ध्यायति अध्यासीत् ।

**ध्रज** गतौ भ्वा० पर०सक०सेट् । ध्रजति अध्राजीत् अध्रजीत् अयमिदिञ्च ध्रञ्जति अध्रञ्जीत् ।

**ध्रण** ध्वाने भ्वा०पर०अक०सेट् । ध्रणति अध्रणीत्-अध्राणीत्

**ध्रस** कणश आदाने क्र्या०पर०सक०सेट् । ध्रस्नाति अध्रसीत् अध्रासीत् । ध्रसित्वा ध्रस्त्वा । [यति ते अदिध्रसत् त

**ध्रस** उत्क्षेपे कणश आदाने च चुरा०उभ०सक० सेट् । ध्रास-

**ध्राक्ष** काङ्क्षे घोररवे च भ्वा० प०स०सेट् इदित् । ध्राङ्क्षति अध्राङ्क्षीत् । [अध्राक्षीत । षडि अदध्रासत् ।

**ध्राख** शोषणे अलमर्थे च भ्वा० पर०सक० सेट् । ध्राखति

ध्राघ शक्तौ भ्वा०आ०अक०सेट् । द्राघते अद्राघिष्ट । चङि अदध्राघत् ।

ध्राड विभेदे भ्वा०आत्म०सक०सेट् । द्राडते अद्राडिष्ट ।

ध्रिज गतौ भ्वा०पर०सक०सेट् । ध्रेजति अध्रेजीत् ।

ध्रु स्थैर्य्ये अक० सर्पणे सक० तु० कु० पर० अनिट् । ध्रुवति अध्रुवीत् दुध्राव ।

ध्रु स्थैर्य्ये अक०सर्पणे सक०भ्वा०पर०अनिट् । ध्रवति अध्रौषीत्

ध्रुव पु०कु० ध्रु-अच् । शङ्कौ,विष्णौ, हरे, उत्तानपादन्टपपुत्रे वसुभेदे, ज्योतिषोक्ते योगभेदे,नासाग्रे, स्थाणौ, ललाटस्थे आवर्त्तभेदे, भूगोलस्योत्तरदक्षिणकेन्द्रद्वयोपरिस्थे, स्थिरे ताराभेदे च । निश्चिते, तर्के, आकाशे,उत्तरात्रयरोहिणी नक्षत्रेषु च न० । सन्तते, अपरिणामिनित्ये, स्थिरे च त्रि० । मूर्व्वायाम्, शालपर्ण्याञ्च स्त्री० । शरारिपक्षिणि पु०स्त्री० । स्वार्थे कन् । गीतिभेदे न० (ध्रुया)

ध्रेक उत्साहे शब्दे च भ्वा० आत्म० अक०सेट् । ध्रेकते अध्रेकिष्ट । चङि न ह्रस्वः ।

ध्रै तृप्तौ भ्वा० पर०अक० अनिट् । ध्रायति अध्रासीत् ।

ध्रौव्य न० ध्रुवस्य भावः ष्यञ् । स्थैर्य्ये ।

ध्वंस पु० ध्वन्स-घञ् । विनाशे ।

ध्वंसन न० ध्वन्स ल्युट् । अधःपतने, गमने, नाशे च ।

ध्वज गतौ भ्वा०पर०सक०सेट् । ध्वजति अध्वजीत् अध्वाजीत् अयमिदिदपि । ध्वञ्जति अध्वञ्जीत् ।

ध्वज पु० ध्वज-अच् । शौण्डिके, सर्पे च । चतुष्कोणाकारे वंशदण्डोपरिस्थे वस्त्रखण्डे, खट्वाङ्गे, मेढ्रे च पु० न० ।

ध्वजद्रुम पु० ध्वजाकारः द्रुमः । तालवृक्षे ।

ध्वजभङ्ग पु० ध्वजस्य मेढ्रस्य भङ्गः स्वसामर्थ्यहीनता यत्र । क्लीवत्वसूचके रोगभेदे ।

ध्वजाहृत न० ध्वजेन सहाहृतः । 'संग्रामादाहृतं यत्तु विजित्य द्विषतां कुलम् । स्वाम्यर्थं जीवितं त्यक्त्वा तद् ध्वजाहृत मुच्यते' इत्युक्ते धनविशेषे । तादृशे दासे पु० ।

ध्वजिन् पु० ध्वज+अस्त्यर्थे इनि । न्टपे, रथे, ब्राह्मणे, तुरङ्गे, सर्पे, मद्यविक्रयोपजीविनि शौण्डिके, मयूरे च ।

ध्वजिनी स्त्री० ध्वजः अस्त्यस्याः इनि । सेनायाम् ।

ध्वण ध्वाने भ्वा०पर०अक०सेट् । ध्वणति अध्वाणीत् अध्वणीत्

ध्वन रवे भ्वा०पर०अक०सेट् वा घटादि । ध्वनति अध्वानीत्- अध्वनीत् । ध्वनयति ध्वानयति । [अध्वनयीत् ।

ध्वन शब्दे अद०चु० उभ०सक०सेट् । ध्वनयति अदिध्वनत्

ध्वन पु० चु० ध्वन-घञ् । शब्दे ।

ध्वनि पु० ध्वन+इन् । अव्यक्ते म्टदङ्गादिशब्दे, अलङ्कारोक्ते उत्तमकाव्ये च । [विकारे काक्वादिप्रभृतौ ।

ध्वनिविकार पु० ध्वनेर्विकारः । शोकादिना शब्दस्य

ध्वन्स गतौ भ्रंशे अधःपतने च भ्वा०आत्म०अक०सेट् । ध्वंसते अध्वंसत् । क्त्वा वेट् ।

ध्वस्त त्रि० ध्वन्स-क्त । च्युते,नष्टे, गलिते च । [अध्वाङ्क्षीत्

ध्वाक्ष(ङ्क्ष) घोररवे च भ्वा०पर०सक० सेट् इदित् । ध्वाङ्क्षति

ध्वाङ्क्ष पु० ध्वाक्षि-अच् । काके, वके, भिक्षुके, गृहे च ।

ध्वान पु० ध्वन-घञ् । शब्दे ।

ध्वान्त न० ध्वन-क्त नि० । अन्धकारे ।

ध्वान्तारि पु० ६त० । सूर्य्ये अर्कवृक्षे, चन्द्रे, वह्नौ च ।

ध्वान्तोन्मेष पु० ध्वान्ते अन्धकारे उन्मेषोऽस्य । खद्योते ।

## न

न अव्य० नह-बन्धने ड । निषेधे । तत्र क्रियायोगे अभावे तद्भिन्न योगे भेदे उपमायाञ्च । बन्धे, प्रस्तुते, रत्ने च पु० ।

नकुल त्रि० नास्ति कुलमस्य । निष्कुले । सर्पवैरिणि वभ्रौ, शिवे, चतुर्थपाण्डवे च पु० । कुक्कुट्यां जटामांस्यां शङ्खिन्यां कुङ्कुमे च स्त्री० ङीप् ।

नकुलेष्टा स्त्री०६त० । रास्नायां तस्या नकुलप्रियत्वात्तथात्वम्

नक्क नाशने चु०उभ०सक०सेट् । नक्कयति-ते अननक्कत्-त ।

नक्त न०नज-क्त । रात्रौ,पूर्व्वदिनातिक्रमेण रात्रिभोजनरूपे व्रते च

नक्तक पु० नज-तकन् । (न्याकड़ा) कर्पटे जीर्णवस्त्रखण्डे ।

नक्तचारिन् पु० नक्तं रात्रौ चरति चर-णिनि । मेचके, विडाले च । रात्रिचारिमात्रे त्रि० ।

नक्तच(ञ्च)र पु० नक्ते, नक्तं वा चरति टक् । राक्षसे, चौरे, मेचके, विड़ाले च । रात्रिचरे त्रि० स्त्रियां ङीप् ।

नक्तन्दिव न० नक्तञ्च दिवा च नि० । सप्तम्यर्थवृत्तौ अहोरात्रे ।

नक्तम् अव्य० नज-क्रीड़े तम् । रात्रौ ।

नक्तमाल पु० नक्तम् रात्रौ आ अलति अच् । करञ्जवृक्षे ।

नक्तव्रत न० 'नक्तं निशायां कुर्व्वीत गृहस्थो विधिसंयुतः । निशि व्रतं तु विज्ञेयं यामार्द्धे प्रथमे सदे'त्युक्तलक्षणे दिवा-भोजनाभावविशिष्टे रात्रौ प्रथमयामार्द्धे भोजनरूपे व्रते ।

नक्र पु० न क्रामति दूरस्थलम् न+क्रम-ड । कुम्भीरे । (भाराकाट) द्वारापकाष्ठे, नासिकायाञ्च न० ।

नक्रराज पु० ६त० टच् समा० । (हाङ्गर) जलजन्तुभेदे ।

नक्षत्र न० नक्ष-अत्रन् । अश्विन्यादितारकासु ।

नक्षत्रचक्र न० नक्षत्रघटितं चक्रम् । अश्विन्यादिसप्तविंशति

नक्षत्रात्मके खगोलस्थे राशिचक्रे। तन्त्रोक्ते मन्त्रग्रह-योपयोगिचक्रभेदे च। [विष्णौ च

**नक्षत्रनेमि** पु० नक्षत्राणां नेमिरिव। ध्रुवाख्ये तारके,चन्द्रे,

**नक्षत्रमाला** स्त्री० नक्षत्राणामिव माला। सप्तविंशतिमौक्तिकैर्निर्म्मिते हारभेदे। ६त०। नक्षत्रपङ्क्तौ।

**नक्षत्रसूचक** पु० नक्षत्राणि शुभाशुभतया सूचयति ण्वुल्। 'अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते। स पङ्क्तिदूषकः पापी ज्ञेयो नक्षत्रसूचकः' इति 'तिथ्युत्पत्तिं न जानन्ति ग्रहाणां नैव साधनम्। परवाक्येन वर्त्तन्ते ते वै नक्षत्रसूचकाः' इत्युक्ते सिद्धान्तानभिज्ञे ज्योतिर्विदि। णिनि नक्षत्रसूचीत्यप्यत्र।

**नक्षत्रेश** पु० ६त०। चन्द्रे नक्षत्रपत्यादयोऽप्यत्र।

**नख** सर्पणे भ्वा०पर०सक०सेट्। नखति अनखीत् अनाखीत्।

**नख** पु०न०। न खं छिद्रमत्र। करजे अङ्गुल्यग्रस्थे कण्टके।

**नखकुट्ट** पु० नखान् कुट्टयति कुट्ट-अण्। नापिते।

**नखनिकृन्तन** न० नखानि कृत्यन्तेऽनेन कृत-ल्युट् ३त० सम्। नखच्छेदनार्थे नापितास्त्रभेदे।

**नखर** पु०न० न खं राति रा-क। नखे। [नखायुधोऽप्यत्र।

**नखरायुध** पु० नखरमायुधं यस्य। सिंहे, व्याघ्रे, कुक्कुटे च

**नखशङ्ख** पु० नख इव शङ्खः। क्षुद्रशङ्खे।

**नखाङ्क** पु० नखमङ्क इव यस्य। व्याघ्रनखे म्।

**नखी** स्त्री० नखमस्त्यस्य अर्श आदित्वादच् गौरा०ङीप्। स्वनामख्याते, गन्धद्रव्ये।

**नग** पु० न गच्छति गम-ड। पर्व्वते,वृक्षे च।

**नगण** पु० छन्दोग्रन्योक्ते लघुरूपवर्णत्रये। न गण्यते गण-अच् (मालकांकनी) वृक्षभेदे, पारावतपद्याम् स्त्री०टाप्।

**नगनन्दिनी** स्त्री० ६त०। हिमालयपुत्र्यां दुर्गायाम्।

**नगभिद्** पु०नगान् भिनत्ति भिद-क्विप्। इन्द्रे। पर्व्वतभेदने त्रि०। [भेदायाम्।

**नगभू** स्त्री० नग एव भूरुत्पत्तिस्थानं यस्याः। क्षुद्रपाषाण

**नगर** न०नगाः वृक्षाः पर्व्वता वा सन्त्यस्मिन् नग+र। 'पुण्यक्रियादिनिपुणैश्चातुर्वर्ण्यजनैर्युतम्। अनेकजातिसंबद्धं नैकशिल्पिसमाकुलम्। सर्व्वदैवतसंबद्धं नगरं त्वभिधीयते इत्युक्तलक्षणे पुरभेदे। वा गौरा०ङीप्। नगरीत्यप्यत्र।

**नगरन्ध्रकर** पु० नगस्य क्रौञ्चपर्व्वतस्य रन्ध्रं करोति कृ-अच्। कार्त्तिकेये 'स नगरं नगरन्ध्रकरौजस' इति रघुः।

**नगरोत्था** स्त्री० नगरादुत्तिष्ठति उद्+स्था-क। नगरस्थायां स्त्रियां, नागरमुस्तायाञ्च।

**नगरौषधि** स्त्री० ६त०। कदल्याम्।

**नगाट** पु० नगेषु वृक्षेषु अटति अच्। वानरे।

**नगाधिप** पु० नगानामधिपः। हिमालयपर्व्वते।

**नगाश्रय** पु० नगः पर्व्वतः आश्रयोऽस्य। हस्तिकन्दवृक्षे। पर्व्वतवासिनि त्रि०।

**नगौकस्** पु० नग ओको यस्य। पक्षिणि,शरभे, सिंहे च।

**नग्न** त्रि०नज-क्त। विवस्त्रे। 'दिगम्बराख्ये बौद्धभेदे पु०। 'द्विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च। एकवासा अवासाश्च नग्नः पञ्चविधः स्मृत' इत्युक्तेषु द्विकच्छादिषु, 'ऋग्यजुःसामसंज्ञेयं त्रयी वर्णावृतिर्द्विज!। एतामुज्झति यो मोहात् स नग्नः पातकी स्मृत' इत्युक्ते वेदत्रयोक्ताचारत्यागिनि जने च।

**नग्निका** स्त्री० नग्नैव स्वार्थे कन्। अदृष्टरजस्कायां स्त्रियाम्

**नज** व्रीडायां भ्वा०आ०अक० सेट्। नजते अनजिष्ट। नग्नः

**नञ्** अव्य० न+अञ् ञिदनुबन्धो नलोपसुडर्थः तेन अजितोन नादिलोपः नैकधेत्यादि। अभावे, निषेधे,अल्पत्वे, अप्राशस्त्ये, अतिक्रमे, ईषदर्थे, सादृश्ये, विरोधे, भेदे च। तत्र सादृश्ये अब्राह्मणः। अभावे अपापम्। भेदे अघटः पटः। ईषदर्थे अनुदरी कन्या। अल्पत्वे अकेशा। विरोधे असुरः।

**नट** पु० नटति नट-अच्। नाटकादिदृश्यकाव्याभिनयकर्त्तरि नर्त्तकभेदे, जायाजीविनि वर्णसङ्करभेदे, अशोकवृक्षे,शोनाकवृक्षे, नले, किष्कुपर्व्वणि, गोदन्तहरिताले च।

**नट** नृत्ये हिंसने च भ्वा० पर०सक-सेट्। नटति अनटीत् अनाटीत् अणोपदेशतया न णत्वम् प्रणिनटति। [णत्वम्।

**नट** भ्रंशे च्युतौ च चु०उभ०अक०सेट्। नाटयति-ते अनीनटत्। न

**नटन** न० नट-ल्युट्। नृत्ये। [नाट्योऽप्यत्र।

**नटभूषण** नटान् भूषयति भूष-ल्यु। हरिताले। नटमण्डन

**नटी** स्त्री० नट-अच्। गौरा० ङीष्। नलीनामगन्धद्रव्ये, वेश्यायाञ्च। नट+पुंयोगे ङीष्। नटयोषिति स्त्री०।

**नड** भ्रंशे चु०उभ०अक० सेट्। नाडयति-ते अनीनडत्-त। णोपदेशत्वाभावान्न णत्वम्।

**नड** पु० नड अच्। नलतृणे।

**नडकीय** त्रि० नडाः सन्त्यस्य छ कुक् च। नड्वति देशे।

**नडप्राय** पु० नडः प्रायो यत्र। नडबहुले देशे।

**नड्या** स्त्री० नडानां समूहः पाशा० य। नडसमूहे। [ङीप्।

**नड्वत्** त्रि०नडाः सन्त्यस्य ड्मतुप् मस्य वः। नडयुक्ते देशे स्त्रियां

**नड्वल** त्रि० नडाः सन्त्यस्य ड्वलच्। नडयुक्ते देशे।

**नत** त्रि० नम-क्त। कृतनमने ज्योतिषोक्ते दिनार्द्धान्तरित-

जन्मनाडिकायां पु०। विसरस्त्वहृद्भिधाने। तगरमूले न०।
**नतद्रुम** पु० कर्म्म०। लतायामहृच्चे।
**नतनासिक** त्रि० नता नासिकाऽस्य। चिपिटनासिके (खान्दा)
**नताङ्गी** स्त्री० स्तनजघनभारात् नतमङ्गमस्याः ङीप्। नार्य्याम्
**नति** स्त्री० नम-क्तिन्। नम्रतायाम् 'त्रिकोणमथ षट्कोणमर्द्ध-चन्द्रं प्रदक्षिणम्। दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षण-मि'त्युक्ते सप्तभेदे नमनभेदे च एतल्लक्षणं हृद्भिधाने।
**नद** समोमे भ्वा०पर०अक० सेट् इदित्। नन्दति अनन्दीत् नन्द्यथुः। प्रनन्दति।
**नद** पु० नद-अच्। सिन्धुभैरवशोणादौ अकृत्रिमे जलप्रवाहे
**नदी** स्त्री० नद-अच् नदट् इति निर्द्देशात्। टित्त्वात् ङीप्। गङ्गायमुनादिषु गुरुलघुजलप्रवाहेषु 'धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा' इत्युक्ते धनुः-सहस्राष्टकान्यूनदेशवाहिन्यामेव नदीशब्दप्रवृत्तिः। तासु च 'सर्व्वा गुर्व्वी प्राङ्मुखी वाहिनी स्यात् नदी पश्चा-द्वाहिनी निश्चयेन' इति 'प्रायो म्रदुवहा गुर्व्वी लघ्वः ग्रीष्मवहाः स्मृता' इति च विशेषः।
**नदीकान्त** पु० नदी कान्ता यस्य। समुद्रे, हिज्जलवृक्षे, सिन्धु-वारके च। जम्बूवृक्षे काकजङ्घौषधौ च स्त्री०।
**नदीकूलप्रिय** पु० नदीकूलं प्रियं यस्य। जलवेतसे।
**नदीज** पु० नद्याः समीपे जायते जन-ड। अर्ज्जुनवृक्षे धनिमन्थवृक्षे च। हिज्जलवृक्षे, स्रोतोजले च न०। नदी-जातमात्रे त्रि०। 'नदीज! लङ्केशवनारिकेतु'रिति भारतम्
**नदीन** पु० ६त०। समुद्रे. वरुणे च। नदीभिन्ने त्रि०।
**नदीमातृक** त्रि० नदी मातेव पोषिकाऽस्य। नदीजलसम्पन्न व्रीहिपालिते देशे।
**नदीष्ण** त्रि० नद्यां स्नातुं जानन्ति स्ना क षत्वम्। नदी स्नानकुशले यस्यां यस्यां नद्यां यथावतरणीयं तज्ज्ञानयुक्ते
**नदीसर्ज्ज** पु० नद्यां सृज्यतेऽसौ सृज-अप्। अर्ज्जुनवृक्षे।
**नद्ध** त्रि० नह-क्त। बद्धे, उद्वृत्ते च।
**नद्ध्री** स्त्री० नह्यतेऽनया ष्ट्रन् ङीप्। चर्म्मनिर्मितरज्ज्वाम्।
**ननन्दृ** स्त्री० न नन्दति कृतायामपि सेवायां न तुष्यति न+नन्द-ऋन्। भर्त्तृभगिन्याम् (ननद) पु० षष्ठी। ननान्दरित्यत्र।
**ननु** अव्य०न नुदति नुद-डु। प्रश्ने, अवधारणे, निश्चये, अनुमतौ अनुनयायाम्, अनुनये, वाक्ये, सम्बोधने, आमन्त्रणे, पर-कृतौ, अधिकारे, उपक्रमे, दृष्टोक्तौ, सम्यगर्थे, स्तुतौ, आक्षेपे, प्रत्युक्तौ, उपलक्षायाञ्च।
**ननुच** अव्य० ननुच चच समाहार द्व०। विरोधोक्तौ।

**नन्द** पु० नन्द-अच्। श्रीकृष्णस्य पितरि गोपभेदे, महानन्दि सुते नृपतिभेदे, आनन्दे, निधिभेदे, प्राग्दक्षिणद्वारगृहे, वास्तुभेदे च।
**नन्दक** पु० नन्दयति नन्द-णिच् ण्वुल्। हरेः-खड्गे, भेके च। आनन्दजनके, कुलपालके च त्रि०।
**नन्दकिन्** पु० विद्यामयोनन्दकोऽसिरस्य ठन्। विष्णौ।
**नन्दगोपित** स्त्री० ३त०। रास्नायाम्। [भक्तिः
**नन्दथु** पु० नन्द-अथुच्। आनन्दे 'यस्यासौ तस्य नन्दथु'रिति
**नन्दन** पु० नन्दयति नन्दि-णिच्। पुत्रे, भेके, पर्व्वतभेदे 'वङ्क-चौरास्तथा गावो नन्दनं नन्दने प्रिये!' इत्युक्ते ६०वर्षमध्ये वत्सरभेदे च। इन्द्रोद्याने न०। आनन्दकारके त्रि०।
**नन्दनन्दन** पु०नन्दस्य नन्दनः। श्रीकृष्णे, नन्दसुतादयोऽप्यत्र
**नन्दनन्दिनी** स्त्री० ६त०। दुर्गायाम् 'नन्दगोपगृहे जाता यशोदागर्भसम्भवे'ति चण्डी। नन्दसुतादयोऽप्यत्र।
**नन्दा** स्त्री०नन्द-अच्। 'नन्दते सुरलोकेषु नन्दने वसतेऽथवा। हिमाचले महापुण्ये नन्दा देवी ततोऽभव'दित्युक्तायां गौर्य्याम् अलिञ्जरे, (नाद) सम्पदि, 'प्रतिपदेकादशी षष्ठी नन्दा-ख्येवा मनीषिभिरि'त्युक्तासु तिथिभेदेषु, 'स्थिरे जीववारे तु नन्देति संज्ञेति, सूर्य्यसंक्रान्तिभेदे, ननन्दरि, तीर्थभेदे च।
**नन्दि** पु० नन्द-इन्। स्वनामख्याते वृक्षे आनन्दे 'कौशल्या-नन्दिवर्द्धनो रामः इति रामायणम्। महादेवस्य पार्श्व-चरभेदे नन्दिकेश्वरे। द्यूताङ्गे पु०न०।
**नन्दिकेश्वर** पु० शिवस्य पार्श्वचरभेदे। तेन प्रोक्तमण् तस्य लुक्। पुराणभेदे। [नन्दिवृक्षादयोऽप्यत्र।
**नन्दितरु** पु० नन्दयति णिच्-णिनि कर्म्म०। धववृक्षे।
**नन्दिन** पु०नन्द-णिनि। शिवद्वारपाले। गर्द्दभाण्डे, वटद्रुमे च
**नन्दिनी** स्त्री०नन्दयति नन्द-णिनि। वशिष्ठधेनौ,सुतायाम्, उमायां, गङ्गायां, ननन्दरि, व्याडिमातरि, रेणुकौषधौ च
**नन्दिनीसुत** पु०६त०। व्याकरणस्य संग्रहकारके व्याडिमुनौ
**नन्दिपुराण** न० नन्दिना प्रोक्तं पुराणम्। उपपुराणभेदे।
**नन्दिवर्द्धन** पु० नन्दिं नन्दं नन्दिनं वा वर्द्धयति वृध-णिच् ल्यु। तनये, मित्रे, शिवे च। आनन्दवर्द्धके त्रि०।
**नन्दीवृक्ष** पु० नन्द-इन् वा ङीप् कर्म्म०। अश्वत्थभेदे, तुन्ने, (तुद) कुवेरके, भेषज्याञ्च। [नन्दीश्वरादयोऽप्यत्र।
**नन्दीश** पु० नन्दी ईश इव। शिवद्वारपाले। ६त०। शिवे
**नन्द्यावर्त्त** पु० 'दक्षिणानुगतालिन्दलयं यत् पश्चिमाननम्। पूजनीयोत्तरच्छायं नन्द्यावर्त्तं वदन्ति त'दित्युक्ते गृहभेदे, तगरवृक्षे, मत्स्यभेदे च।

**नपुंसक** पु०न० न स्त्री न पुमान् नि० । 'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः । उभयोरन्तरं यच्च तदभावे नपुंसक'मित्युक्तलक्षणे क्लीबे । शब्दे तद्व्यवहारस्तु सत्वरजोभ्यां साम्यावस्थापन्नाभ्यामुत्पन्नत्वात् अनादिसंस्कारविशेषवत्त्वाद्वा

**नप्तृ** पु० न पतन्ति पितरोऽनेन न+पत-तृच् नि० । पौत्रे, दौहित्रे च । पौत्र्यां, दौहित्र्याञ्च स्त्री० ङीप् ।

**नभ** न० नभ-अच् । आकाशे । श्रावणे मासि पु० ।

**नभः(स्र)सद्** पु० नभसि सीदति सद-क्विप् । देवे ।

**नभश्चर** पु० नभसि चरति अच् । मेघे,वायौ,पक्षिणि, विद्याधरे,सूर्यादिषु ग्रहेषु, राक्षसे च । आकाशगामिनि त्रि०

**नभस** न० नभ-असच् । आकाशे । [आकाशे न० ।

**नभस्** पु० नभ-असि । श्रावणे मासि, मेघे, घ्राणे च ।

**नभसङ्गम** पु० नभसं गच्छति गम-खच् मुम् च् । पक्षिणि ।

**नभस्य** पु० नभसि मेघे साधु यत् । भाद्रपदमासि ।

**नभस्वत्** पु० नभोऽस्यस्याश्रयत्वेन मतुप् मस्य व । वायौ ।

**नभोमणि** पु०नभस आकाशस्य मणिरिव प्रकाशकत्वात् ।सूर्य्ये

**नभोरजस्** न० नभसो रज इव दृष्ट्यावरकत्वात् । अन्धकारे

**नभ्राज्** पु० न भ्राजति भ्राज-क्विप् । मेघे ।

**नमस्** अव्य० नम-असि । नतौ, त्यागे, स्तुते च ।

**नमस्कार** पु० नमस्+कृ-घञ् । कराभ्यां शिरःसंयोगविशेषेण ज्ञापकर्षसूचके व्यापारभेदे ।

**नमस्य** त्रि० नमस् करोति नमस्+क्यच्-नमस्य-कर्म्मणि यत् । नमस्करणीये । भावे अ । नतौ,पूजायाञ्च स्त्री० ।

**नमुचि** पु० न मुञ्चति न+मुच-कि । शुम्भनिशुम्भयोः कनिष्ठानुजेऽसुरभेदे ।

**नमुचिद्विष्** पु०६त० । इन्द्रे, नमुचिसूदनादयोऽप्यत्र ।

**नमेरु** पु० नम-एरु । सुरपुन्नागवृक्षे, रुद्राक्षे च ।

**नम्ब** गतौ भ्वा०पर०सक० सेट् । नम्बति अनम्बीत् ।

**नम्र** त्रि० नम-र । नते, विनयान्विते च ।

**नम्रक** पु० नम्र इव कायति कै-क । इवार्थे कन् वा । वेतसे स्वार्थे कन् । नम्रे त्रि० ।

**नय** गतौ भ्वा० आत्म० सक० सेट् । नयते अनयिष्ट ।

**नय** पु० नी-अच् । नीतौ शुक्राचार्य्यादिप्रणीते शास्त्रभेदे,द्यूतभेदे च।कर्त्तरि अच्। नेतरि न्याय्ये च त्रि०। [प्रापणे ।

**नयन** न०नीयतेऽनेन करणे ल्युट् । नेत्रे चक्षुषि । भावे ल्युट्

**नर** पु०नृ-नृ-वा अच्। परमात्मनि 'आपो वै नरसूनव' इति मनुः । विष्णौ, नरावतारे, अर्ज्जुने, ऋषिभेदे, मनुष्ये, गणितशास्त्रोक्ते छायामानज्ञानोपयोगिनि, शङ्कौ पु० ।

**नरक** पु० नृ-वुन् । भूमिगर्भे वराहाज्जाते दैत्यभेदे, पापिनां दुःखभोगस्थानभेदे रौरवप्रभृतौ च । तेषां विभेदो हृहदभिधाने । [हृहदभिधाने ।

**नरककुण्ड** न०६त० । पापिनां यातनाभोगकुण्डेषु । विस्तरस्तु

**नरकजित्** पु० नरकं नरकासुरं जितवान् जि-भूते-क्विप् । श्रीकृष्णे । नरकान्तकादयोऽप्यत्र ।

**नरदेव** पु० नरोदेव इव । नृपतौ ।

**नरनारायण** पु०द्वि० । नरश्च नारायणश्च द्व० । 'कृष्णार्ज्जुनावतारिणोः मुनिभेदयोः । भगवतोऽवतारभेदे एकरूपभेदेवे व०

**नरपति** पु० ६त० । राजनि । नरेशादयोऽप्यत्र ।

**नरपुङ्गव** पु० पुमान् गौः पुङ्गवः वृषः नरः पुङ्गव इव भारवहनयोग्यत्वात् । मनुष्यश्रेष्ठे, नृपे च ।

**नरमाला** स्त्री० नराणां तन्मुण्डानां माला । नरमुण्डनिर्म्मितायां मालायां 'नरमालाविभूषणे'ति चण्डी ।

**नरमेध** पु०नरो मेध्यते वध्यते प्रोक्षणादिभिः संस्क्रियते वात्र । नरमांसरूपहव्यकरणके यागभेदे ।

**नरवाहन** पु० नरा वाहनान्यस्य । कुवेरे, स हि मनुष्यैरुह्यते । मनुष्यवाह्यमाने त्रि० ।

**नरसिंह** पु० नरश्चासौ सिंहश्च । अवयवभेदेन नरसिंहयोराकारयुक्ते हिरण्यकशिपोर्नाशार्थमाविर्भूते भगवदवतारभेदे नरहर्य्यादयोऽप्यत्र । नरःसिंह इव शौर्य्यादिमत्त्वात् । नरश्रेष्ठे । [दयोऽप्यत्रार्थे ।

**नरस्कन्ध** पु० नर+समूहे स्कन्ध । नरसमूहे एवं मनुष्यस्कन्धा-

**नरेन्द्र** पु० नर इन्द्र इव । राजनि, विषवैद्ये, एकविंशत्यक्षरपादके छन्दोभेदे च ।

**नरोत्तम** पु० नरेषु उत्तमः । पुरुषोत्तमे नारायणे, 'यः स्वकात् परतो वेह जातनिर्वेद आत्मवान् । हृदि कृत्वा हरिं गेहात् प्रव्रजेत् स नरोत्तम' इत्युक्ते वैराग्यवति पुरुषे नृपे च 'नराणाञ्च नरोत्तम' इति गीता ।

**नर्त्तक** पु० नृत-ण्वुल् । चारणे, नलवणे च 'यादृशं नृत्यमात्र स्यात् गीतं योज्यं च तादृशम् । नृत्यस्य धारणात् पात्रं नर्त्तकः परिकीर्त्तित' इत्युक्ते नृत्याभिज्ञे नटे त्रि० : षित्त्वात् स्त्रियां ङीष् ।

**नर्त्तन** न० नृत-ल्युट् । नृत्ये । [न सत्वम् प्रनर्दति ।

**नर्द्द** शब्दे अक० गतौ सक० भ्वा० पर० सेट् । नर्द्दति अनर्द्दीत्

**नर्म्मद** पु० नर्म्म परिहासं ददाति दा-क । केलिसचिवे । परिहासदायके त्रि० । सोमोद्भवायां दक्षिणस्थायां नद्यां स्त्री०

**नर्म्मन्** न० नृ-मनिन् । परीहासे केलौ ।

नल बन्धे भ्वा०पर०सक०सेट् वा घटा० । नलति अनालीत् । णिच् नलयति नालयति ।

नल पु० नल-अच् । तृणभेदे, चन्द्रवंश्ये, नृपभेदे, वानरभेदे, आद्रदेवे, पितृगणभेदे, 'कव्यवालस्तथा नल' इति पुराणमन्त्रः दैत्यभेदे च । पद्मे न० । [पदार्थे, पर्व्वणि च

नलक न० नल इव इवार्थे कन् । शाकास्थि, नाडीवत् सच्छिद्रे

नलकिनी स्त्री०नलकं सच्छिद्रमस्थि अस्य इनि । जङ्घायाम्

नलकूवर पु० नलः कूवरो युगन्धरोऽस्य । कुवेरपुत्रे ।

नलद न० नलं बन्धं गतिं वा द्यति दो-क । उशीरे । 'स्यादस्या नलदं विने'ति नैषधम् । पुष्परसे, जटामांस्यां च स्त्री० ।

नलपट्टिका स्त्री० नलनिर्म्मिता पट्टिकेव । (दरमा) । कटभेदे ।

नलमीन पु० नलाश्रयः मीनः । (चिङ्गुड़ी) मत्स्यभेदे । [च

नलिका स्त्री०नल-स्वार्थे कन् टाप् । नाड्याम्,सुगन्धिद्रव्यभेदे

नलित पु० नल-क्त । (नालता) शाकभेदे ।

नलिन न० नल-इनन् । पद्मे,शैवाले,तोये च । [नलिकायाञ्च

नलिनी स्त्री० नलाः सन्त्यस्या इनि । पद्मसंघे, पद्मयुक्तदेशे,

नलिनीखण्ड न० नलिनी+समूहे खण्ड । पद्मिनीसमूहे ।

नली स्त्री० नल-अच् गौरा० ङीप् । मनःशिलायां, विद्रुमलतायाम्, नलिकायाञ्च । (नालताशाक) ।

नल्व पु० नल-व । चतुःशतहस्तमितदेशे, हस्तचतुःशते च ।

नव पु० नु-अप् । स्तवे, रक्तपुनर्नवायाञ्च । अच् । नूतने त्रि० ।

नवग्रह पु० कर्म्म० संज्ञात्वात् न द्विगुः । 'सूर्य्यचन्द्रौ मङ्गलश्च बुधश्चापि बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतवश्च नवग्रहा' इत्युक्तेषु नवसु ग्रहेषु तेषां स्नानादि बृहदभिधाने

नवति स्त्री० नव दशतः परिमाणमस्य नि० ।(नब्बइ) सङ्ख्याभेदे

नवदल न०कर्म्म० । कमलकर्णिकासमीपस्थे दले, नूतने पत्रे च

नवदुर्गा स्त्री०कर्म० संज्ञायात् न द्विगुः । 'प्रथमा शैलपुत्री च द्वितीया ब्रह्मचारिणी । तृतीया चन्द्रघण्टेति कुष्माण्डेति चतुर्थिका । पञ्चमी स्कन्दमातेति षष्ठी कात्यायनीति च । सप्तमी कालरात्रिश्च महागौरीति चाष्टमी । नवमी सिद्धिदा प्रोक्ता नव दुर्गा मता भुवी'त्युक्तासु शैलपुत्र्यादिषु नवसु दुर्गामूर्त्तिषु ।

नवद्वारपुर न०नव द्वाराणि यत्र तादृशं पुरम् । देहे तत्र हि द्वे श्रोत्रे, चक्षुषी,नासिके च मुखमेकमिति ऊर्द्धस्थानि सप्त, द्वे पायूपस्थे अधः इति नवच्छिद्ररूपाणि द्वाराणि सन्ति । 'नवद्वारपुरे देही'ति गीता ।

नवधा अव्य० नवन्+प्रकारे धाच् । नवप्रकारे ।

नवधातु पु० कर्म० संज्ञात्वात् न द्विगुः । 'हेमताराटनागाश्च ताम्ररङ्गे च तीक्ष्णकम् । कांस्यञ्च कान्तलौहञ्च धातवो नव कीर्त्तिता' इत्युक्तेषु हेमादिषु नवसु ।

नवन् त्रि०ब० । नु-अनि । (नय) संख्याभेदे ।

नवनीत न०नवं नीयते स्म नी-क्त । (माखन) पयःसारभेदे

नवनीतक न० नवनीतस्य विकारः कन् । घृते ।

नवपत्रिका स्त्री० 'कदली दाड़िमी धान्यं हरिद्रा मानकं कचुः । बिल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका' इत्युक्तासु नवसु कदल्यादिषु पत्रिकासु ।

नवमल्लिका स्त्री० कर्म० । नवमालिकायाम् पुष्पप्रधाने वृक्षभेदे

नवम त्रि० नवानां पूरणः डट् मट् । नवसंख्या येन पूर्य्यते तस्मिन्,चन्द्रस्य नवमकलाक्रियारूपे तिथिभेदे स्त्री०ङीप्

नवमालिका स्त्री० कर्म० । स्वनामख्याते पुष्पप्रधाने वृक्षभेदे

नववधू स्त्री० कर्म० । नवोढ़ायां स्त्रियाम् ।

नववध्वागमन न० ६त० । नववध्वाः प्रथमतः पितृगृहात् पतिगृहे आगमने ।

नवरत्न न० नवानां रत्नानां समाहारः । 'मुक्तामाणिक्यवैदूर्य्य गोमेदा वज्रविद्रुमौ । पद्मरागं मरकतं नीलञ्चे'त्युक्तेषु नवसु रत्नेषु । 'धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः । निल्यं वराहमिहिरश्च नवापि रत्ना न्यासंस्तथावररुचिरि'त्युक्तेषु नवसु विक्रमादित्यसभ्य बुधेषु

नवरात्र न०नवानां रात्रीणां समाहारः अचूसमा० । आश्विन्यादिमासेषु शुक्लप्रतिपदावधिशुक्लनवमीपर्य्यन्तेषु नवसु तिथिषु तद्दिवसेषु कर्त्तव्ये व्रतभेदे च । 'चैत्रेऽश्विने तथाषाढे माघे कार्य्योमहोत्सवः । नवरात्रे महाराजे'ति देवीभागवते नवसु दिवसेष्वपि नवरात्रशब्दप्रयोगः ।

नववस्त्र न० कर्म० । अनाहते नूतने वसने ।

नवशायक पु० 'गोपोमाली तथा तैली तन्त्री मोदकवारुजी । कुलालः कर्मकारश्च नापितो नव शायका' इत्युक्तेषु जातिभेदेषु ।

नवश्राद्ध न० कर्म्म० । एकादशाहकर्त्तव्ये श्राद्धे ।

नवसूतिका स्त्री० नवं सूतं प्रसवोऽस्त्यस्याः ठन् । धेनौ, नूतनप्रसूतायां गवि ।

नवान्न न०कर्म० । नवीनान्ने नवमन्नं यत्र । नवान्नागमकाले 'नवोदके नवान्ने च गृहप्रच्छादने,तथा पितरःस्पृहन्त्यन्नमिति स्मृतिः

नवीन त्रि० नव+ख । नूतने ।

नवोदक न०कर्म० । नवजले । नवमुदकं यत्र । रवेरार्द्रानक्षत्र स्थिति समये सौरापाढ़स्य कतिपयदिने ।

नवोद्धृत न०कर्म० । नवनीते, नूतनोद्धृतमात्रे त्रि० ।

नव्य त्रि० नु-यत्। नूतने। रक्तपुनर्नवायां पु०।

नष्ट त्रि० नश-क्त। तिरोहिते, दर्शनायोग्ये, ध्वस्ते च।

नष्टचन्द्र पु० 'नष्टचन्द्रो न दृश्यश्च भाद्रे मासि सितासिते। चतुर्थ्यामुदितोऽशुद्धः प्रतिषिद्धो मनीषिभि'रित्युक्ते भौरभाद्रमासि उभयपक्षचतुर्थ्यामुदिते चन्द्रे।

नष्टचेष्टता स्त्री० नष्टा चेष्टा यस्य तस्य भावः तल्। हर्षशोकादिभिः सर्व्वचेष्टारोहित्ये। [लुप्तस्मार्त्तवहौ,निरग्नौच।

नष्टाग्नि पु० नष्टोऽग्निर्यस्य। प्रमादादिना नष्टवैतानिकाग्नौ,

नष्टेन्दुकला स्त्री० नष्टा इन्दुकला यस्याम्। चतुर्द्दशीयुते दर्शे। 'चतुर्द्दश्यष्टमे यामे क्षीणो भवति चन्द्रमा इति स्मृतेस्तद्युक्तामावास्यायां हि इन्दुकलाक्षयः।

नस्य न० नसे हितम्। नासिकादौ अपस्मारादिरोगनिवारणार्थं नसि देये चूर्णे। [(नाकफोड़ा) वलीवर्द्दे।

नस्योत पु० नसि नासिकायाम् सम्यक् उतः आ+वे-क्त।

नह अव्य०। न च ह च। प्रश्नारम्भे।

नहि अव्य०। नह-इन्। निषेधे।

नहुष पु०। चन्द्रवंश्ये नृपभेदे,नागभेदे च।

नहुषात्मज पु० ययातिनामके नृपे। नहुषपुत्रादयोप्यत्र।

ना अव्य० नह-डा। निषेधे।

नाक पु० न कमकं दुःखं तन्नास्ति यत्र। स्वर्गे। 'यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत् सुख स्वःपदास्पद'मित्युक्तेः स्वर्गस्य दुःखन्यूनत्वम्।

नाकिन् पु० नाको वासस्थानत्वेनास्त्यस्य इनि। देवे।

नाकु पु० नम-उ नाकादेशः। वल्मीके, पर्व्वते च।

नाकुली स्त्री० नकुलस्येदम् प्रियत्वात् अण्। कुक्कुटीकन्दे चविके, (चइ) रास्नायां यवतिक्तायां, श्वेतकण्टक्याञ्च।

नाग न० न गच्छति अगः न अगः। मनुष्याकारेषु फणलाङ्गूलविशिष्टेषु वासुक्यादिषु सर्पेषु, हस्तिनि, मेघे, नागकेशरे, नागदन्तके, मुस्तके, देहस्थे उद्गारकारके पवनभेदे, वसादिमध्येकरणभेदे च। नगे भवः अण्। पर्व्वतभवे त्रि०। रङ्गे, सीसके च न०।

नागकेशर पु० नागाख्यः केशरः। स्वनामख्याते पुष्पवृक्षे।

नागगन्धा स्त्री० नागस्येव गन्धोऽस्याः। नाकुलीकन्दे।

नागज न० नागात् जायते जन-ड। सिन्दूरे, रङ्गे च।

नागजिह्वा स्त्री० नागानामिव जिह्वा मूलान्यस्याः। अनन्तमूलायाम् लतायाम्। [हस्तिदन्ते। स्वार्थे कन्। तत्रैव

नागदन्त पु०नागस्य दन्त इव। गृहाद्विर्निर्गतदारुणि।इत०।

नागदन्तिका स्त्री० नागस्य सर्पस्य दन्तस्तत्सम्बन्धिविषमस्यत्र ठन्। (विछाति) इति ख्यातायाम् लतायाम्।

नागदन्ती स्त्री० नागदन्त आख्यात्वेनास्त्यस्य अच् गौ०ङीप्। (हातिशुंडा) लतायाम्, वेश्यायाञ्च।

नागदमनी स्त्री० नागाः सर्पा दम्यन्ते अनया दम-ल्युट् ङीप्। (दुसरमूल) लताभेदे।

नागद्रु पु० नागप्रियः द्रुः। स्नुहीवृक्षे तस्य सर्पपूजास्थानत्वेन तत्प्रियत्वम् अतएव 'स्नुहीविटपसंस्थिता'मिति स्मृतौ सर्पाधिदेवतायाः मनसायाः स्नुहीवृक्षाश्रितत्वमुक्तम्।

नागनिर्य्यूह पु० नागाकारः निर्य्यूहः। नागदन्तके भित्तिस्थे नागाकारे निर्गतकाष्ठखण्डे।

नागपाश पु० नागः पाश इव बन्धनहेतुत्वात्। वरुणस्यास्त्रभेदे। नागाकारः पाशः। 'साद्वद्वयावर्त्तनात् नागपाश इति स्मृतः'इतितन्त्रोक्ते ग्रन्थिभेदे।

नागपुर न० दक्षिणदेशप्रसिद्धे नगरभेदे, हस्तिनापुरे च। इत०। पातालस्थे नागानां नगरे। [नागकेशरे वृक्षे।

नागपुष्प पु० नागगन्धयुक्तं हस्तिमदगन्धयुक्तं पुष्पमस्य।

नागपुष्पफला स्त्री०नागाकारं पुष्पं फलति प्रसूते फल-अच्। कुष्माण्ड्याम्। [लतायाम्।

नागपुष्पी स्त्री० नागाकारं पुष्पमस्याः ङीप्। नागिन्यां

नागफल पु०नागाकारं फलमस्य दीर्घत्वात्। पटोलभेदे (धुधुल)

नागबला स्त्री०नागानां दन्तिनां बलं यस्याः ५व०। (गोरक्षचाकुलिया) लताभेदे। [घादेव्याञ्च।

नागमातृ स्त्री० इत०। कद्रुसमाख्यायां कश्यपपत्न्याम्, मन-

नागमार पु० नागं हस्तिनं मारयति मृ-णिच्-अण्। भृङ्गराजे तद्वर्णे हि हस्तिनो नाशः। हस्तिमारके त्रि०।

नागयष्टि स्त्री०नागाश्रयार्था यष्टिः। (दहकाष्ठ) पुष्करिण्यादौ अष्टानां नागानां मध्ये उद्वृतनामानुसारेण तदीयस्याश्रयत्वेन कल्पिते दीर्घयूपाकारे काष्ठे।

नागर त्रि०नगरे भवः।विदग्धे। अगं राति अगरः न अगरः। देवरे, नागरङ्गे, जम्बीरभेदे, मुस्तकभेदे च (नागरमुथा)।

नागरक पु० नगरे भवः ततः कुत्सितार्थे प्रावीण्ये वा वुञ्। चौरे, चित्रलेखनकरे शिल्पिनि च।

नागरघन पु० नागराख्यः घनः मुस्तकः। (नागरमुथा) मुस्तकभेदे। [नाराङ्गी।

नागरङ्ग पु०नागस्य सिन्दूरस्येव रङ्गोरागो यत्र। जम्बीरभेदे

नागरमुस्तक पु०न०कर्म्म०। स्वनामख्याते मुस्तकभेदे। नागर मुस्ताप्यत्र। [प्रमा०। अनन्ते-सर्पे, ऐरावते-गजे च।

नागराज पु० नागानां सर्पाणां हस्तिनां च राजा टच

**नागलता** स्त्री० नागाकारा नागलोकस्य वा लता। ताम्बूल्यां पुरुषलिङ्गे च।
**नागलोक** पु० ६त०। पाताले।
**नागवल्लरी** स्त्री० नागाकारा नागलोकस्य वा वल्लरी लता। ताम्बूल्याम् नागवल्ल्यादयोऽप्यत्र।
**नागसम्भव** न० नागं सीसं सम्भवोऽस्य। सिन्दूरे। [च
**नागस्फोता** स्त्री० नाग इव स्फोता। नागदन्तीवृक्षे, दन्तीवृक्षे
**नागहनु** पु० नागस्य हस्तिनो हनुरिव। नखनामगन्धद्रव्ये
**नागहन्त्री** स्त्री०नागान् सर्पान् हन्ति टच् ङीप्। बन्ध्याकर्कोट्याम्
**नागान्तक** पु० ६त०। गरुडे। नागारातिरप्यत्र, वन्ध्याकर्कोट्याञ्च। [तिस्त्राम्।
**नागालाबु** स्त्री० नागः नागकुम्भ इवालाबूः। कुम्भाकारायां
**नागाशन** न० नागान् अश्नाति अश-ल्यु। गरुडे। [योऽप्यत्र
**नागाह्व** न० नागेन युक्ताह्वा यस्य। हस्तिनापुरे। नागाह्वयाद-
**नागी** स्त्री० नाग+पुंयोगे ङीप्। सर्पयोषिति, हस्तियोषिति च। स्थौल्ये जनपदेत्यादिना ङीप्। स्थूलगुणयोगात् हस्तितुल्यायाम् स्त्रियाम्। दीर्घगुणयोगात् सर्पतुल्यायान्तु स्त्रियां न ङीप् किन्तु टाप्। [स्थानभेदे च
**नाचिकेतस्** पु० अग्नौ, ऋषिभेदे, तत्प्राप्ते, वेदोक्ते उपा-
**नाट** पु० नट-घञ्। नृत्ये, कर्णाटदेशे च।
**नाटक** पु० कामाख्यास्थपर्व्वतभेदे, 'नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वित'मित्याद्युक्तलक्षणे सा० द्र० दृश्यकाव्यभेदे न०। नाटयति चुरा० नट-ण्वुल्। नर्त्तके त्रि०
**नाटाम्र** पु० (तरमुज) लताफले।
**नाटार** पु० नटस्यापत्यम् आरक्। नटस्य पुत्रे।
**नाटिका** स्त्री० नाटकप्रभेदे। [ऽप्यत्र।
**नाटेय(र)** नट्या अपत्यम् ढक्। नट्या अपत्ये। ढक्। नाटेरो
**नाट्य** न० नटानां कर्म ष्यञ्। नटकर्त्तव्ये नृत्यगीतवाद्यकर्मत्रिके। [देशमासादप्रमुखस्थे गृहे।
**नाट्यशाला** स्त्री० नाट्यस्य नाट्यार्थं शाला। (नाटमन्दिर)।
**नाट्योक्ति** स्त्री० नाट्ये नटकर्मणि उक्तिः। नाटकविषये वचने। तद्विस्तरस्तु दृश्यदभिधाने।
**नाडिन्धम** पु० नाडीं वंशनलीं धमति ध्मा-खश् धमादेशः मुम् ह्रस्वश्च। स्वर्णकारे। [(नालिताशाक)
**नाडिपत्र** पु० नाडीमयं पत्रं यस्य ब०। ह्रस्वः। नाडीचशाके।
**नाडि(डी)** स्त्री०नड-भ्रंशे चु० नड-इन्। वा ङीप्। देहस्थायां शिरायां, गुच्छस्य काण्डे, नाले, व्रणभेदे, गण्डदूर्व्वायां, घटिकात्मके काले, तृणभेदे, वंशनल्यां च।
**ना(डि)डीका** स्त्री०नाडी नालं विद्यतेऽस्य ठन् वा ह्रस्वः(कलम्बी) शाके 'कुसुम्भं नाडिकाशाक'मिति स्मृतिः पट्टशाके पु०।
**नाडीच** पु० नाडिं चमति चम-ड। (नालिता) शाकभेदे।
**नाडीचक्र** न०'नाडीमण्डलमासाद्य कुक्कुटाण्डमिव स्थितम्। नाडीचक्रमिति प्राहुस्तस्मान्नाड्यः समुद्गताः' इत्युक्ते नाभिस्थे नाडीनिःसरणचक्रभेदे। [भेदे, मुनिभेदे च।
**नाडिजङ्घ** पु० नाडीव जङ्घाऽस्य। काके, ब्रह्मणः प्रिये वक
**नाडीतरङ्ग** पु० नाडी तरङ्ग इव यस्य। काकोले।
**नाणक** पु० न अणकः कुत्सितः नञर्थनशब्देन स०। प्रशस्ते, मुद्राचिह्निते निष्कादौ न०। 'तुलाशासनमानानां कूटकृत् नाणकस्य चे'ति स्मृतिः।
**नाथ** उपतापे प्रार्थने च पर०, आशीर्व्वादे आत्म०,सक० ऐश्वे अक० सेट्। नाथति अनाथीत् आशिषि नाथते अनाथिष्ट। णिचि अननाथत्।
**नाथ** पु० नाथ-ऐश्वे अच्। अधिपे स्वामिनि, प्रार्थनीये त्रि०
**नाथवत्** त्रि० नाथोऽस्त्यस्य मतु मस्य व। पराधीने परतन्त्रे।
**नाथहरि** पु० नाथं हरति हृ-इन्। पशौ।
**नाद** पु० नद-घञ्। शब्दे, अर्द्धमात्रात्मके अर्द्धचन्द्राकृतिव्यञ्ज्ये अनुस्वारतुल्ये वर्णे, 'नाभेरूर्द्ध्वं हृदि स्थानात् मारुतः प्राणसंज्ञकः। नदति ब्रह्म रन्ध्रान्ते तेन नादः प्रकीर्त्तित इत्युक्ते,'आकाशाग्निसरुज्जातो नाभेरूर्द्ध्वं समुच्चरन्। मुखेऽभिव्यक्तिमापन्नः यः स नाद इतीरित' इत्युक्ते च प्राणवायुवृत्तिभेदे च।
**नादेय** न०नद्या नदस्य वा इदम् ढक्। सैन्धवलवणे सौवीराञ्जने नदीनदसम्बन्धिजले च। काशतृणे वेतसवृक्षे च पु०। नदीभवे त्रि०। नागरङ्गे,जयायां, पताकायाम्,अम्बुवेतसे, भूमिजम्ब्वाम्, अग्निमन्थे, जवायां, काकजम्ब्वां च स्त्री०ङीप्।
**नाध** नाथार्थे भ्वा० आ० सक०सेट्। नाधते अनाधिष्ट।
**नाना** अव्य०न+नाञ्। विनार्थे, अनेकार्थे, उभयार्थे च।
**नानाकन्द** पु०नाना कन्दा यस्य। पिण्डालौ। बहुविधमूले त्रि०
**नानार्थ** त्रि० नानाविधाः अर्थाः अभिधेयानि प्रयोजनानि वा यस्याः। बहुविधाभिधेये, बहुप्रयोजने च।
**नान्तरीयक** त्रि० अन्तरं प्रतिबन्धादिना व्यवधानं तदनुभवति छ नञर्थनशब्देन समासे नान्तरीयं ततः स्वार्थे कन्। अवश्यम्भाविनि, व्याप्ते च।
**नान्दी** स्त्री०नन्दन्ति देवाः पितरो वा यत्र नन्द-इन् ङीप् ष०। समृद्धौ। 'नान्दीश्राद्धं ततः कुर्यादि'ति स्मृतिः,नाटकादौ सूत्रधारेण कर्त्तव्ये 'देवद्विजनृपादीनामाशीर्वाद-

परायणाः। नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिते'त्युक्ते मङ्गलाचरणभेदे च।

**नान्दीमुख** पु० नान्द्यर्थं वृद्ध्यर्थं बन्धनान्वितं मुखं यस्य। कूपादिमुखबन्धने पटे। नान्दी वृद्धिस्तदर्थं श्राद्धं चामुखे यस्य। नान्दीश्राद्धभुजि पितृगणे। मात्रादौ स्त्री० ङीप्।

**नान्दीवादिन्** पु० नान्द्यर्थं वदति वादयति वा। नाटकादौ नान्दीकरे सूत्रधारे, तदर्थं तूर्य्यादिवादके नटादौ च।

**नापित** पु० क्षुरकर्म्मकारके जातिभेदे।

**नाभि** पु० नह्यन्ते अत्र नह्यतेऽनेन वा नह इञ् भान्तादेशः। द्वादशान्तपचक्रस्य मध्ये, रथचक्रस्य वामपिण्डिकायाम्, क्षत्रिये च। मृगमदे स्त्री०। प्राण्यङ्गभेदे (नाइ) पु०स्त्री०। स्त्रीत्वे वा ङीप्। प्रधाने, मुख्ये त्रि०।

**नाभिज** पु० नाभौ विष्णुनाभौ जायते जन-ड। चतुर्मुखे ब्रह्मणि, नाभिजन्मादयोऽप्यत्र।

**नाम** अव्य०नामयति नम-णिच् ड। स्वीकारे,विस्मये, स्मरणे, सम्भावनायां, निन्दायां, प्राकाम्ये, विकल्पे, अलीके,कोपे च

**नामकरण** न० नाम क्रियतेऽत्र कृ-ल्युट्। 'दशम्येऽहनि पिता नाम कुर्य्या'दिति स्मृत्युक्ते दशमादिदिने कर्त्तव्ये संस्कारभेदे

**नामधेय** न० नामैव स्वार्थे धेय। नामनि वाचकशब्दे संज्ञायाम् 'वाचारम्भणं विकारो नामधेय'मिति श्रुतिः।

**नामन्** न० नम्यतेऽभिधीयतेऽर्थोऽनेन नामनुसीमन्निति नि०। आकाशादिपदार्थबोधके संज्ञाशब्दे, आख्यायाम् तानि च पञ्च 'उणाद्यन्तं कृदन्तं च तद्धितान्तं समासजम्। शब्दानुकरणं चेति नाम पञ्चविधं स्मृत'मित्युक्तेः।

**नामशेष** त्रि० नामैव शेषो न देहादिरस्य। मृते। नाममात्रं शेषो यत्र। मरणे पु०।

**नायक** पु० नी-ण्वुल्। नेतरि, स्वामिनि,प्रभौ, हारमध्यमणौ, सेनापतौ, शृङ्गाररसावलम्बने पत्युपपत्यादौ च। प्रापयितरि च त्रि०।

**नायिका** स्त्री०नी-ण्वुल्। शृङ्गाररसालम्बने भार्य्यादौ, दुर्गायाः सहचरीषु उग्रचण्डादिषु च।

**नार** पु०नरस्यायम् अण्। वालके,जले च। 'आपो नारा इति प्रोक्ता' इति मनुः। परमात्मसम्बन्धिनि मनुष्यसम्बन्धिनि च त्रि० 'नारं स्पृष्ट्वा तु सस्नेह'मिति स्मृतिः। नराणां समूहः अण्। नरसमूहे न०।

**नारक** पु० नृ-वुन् प्रज्ञाद्यण्। नरके। नरके भवः अण्। नरकस्थे त्रि०। [भोगिनि जीवे।

**नारकिन्** त्रि० नारकं भोग्यत्वेनास्त्यस्य इनि। नरकयातना

**नारङ्ग** पु० न अरङ्गः अरञ्जनं यस्य स्वनामख्याते जम्बीरभेदे, पिप्पलीरसे, विटे च। गर्ज्जरे न०।

**नारद** पु० नारं जलं ददाति दा-क। 'नारं पानीय मित्युक्तं तत् पितृभ्यः सदा भवान्। ददाति तेन ते नाम नारदेति भविष्यती'त्युक्तनिर्वचनयुते मुनिभेदे। नारमज्ञानं द्यति दो-क, नारं ज्ञानं ददाति दा-क वा। मुनिभेदे तत्प्रोक्ते पञ्चविंशतिसहस्रात्मके महापुराणे न०।

**नारदीय** न० नारदेन प्रोक्तम् छ। उपपुराणभेदे।

**नारसिंह** न० नरसिंहमधिकृत्य कृतः ग्रन्थ इत्यण्। उपपुराणभेदे। [लौहमये अस्त्रभेदे।

**नाराच** न० नराणां समूहः नारमाचामति चम-ड। सर्व्व-

**नारायण** पु० 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्व्वं तेन नारायणः स्मृतः' इति मनूक्तनिर्वचनवति विष्णौ।

**नारायणक्षेत्र** न०६त०। 'प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्। अत्र नारायणः स्वामी'त्युक्ते गङ्गायाः प्रवाहावधिहस्तचतुष्टयमितस्थाने। [श्चित्तात्मके विधानभेदे।

**नारायणवलि** पु० स्मृत्युक्ते मृतानां पाषण्डादीनां प्राय-

**नारायणी** स्त्री० 'जलायना नराधारा समुद्रशयनापि ना। नारायणी समाख्याता नरनारी प्रकीर्त्ते'त्युक्तायां विष्णुशक्तौ लक्ष्म्यां, दुर्गायां, 'नारायणि नमोऽस्तु ते' इति चण्डी गङ्गायां, शतावर्य्यां च।

**नारिकेल** पु० नल-इण् नालिः केन वायुना जलेन वा इलति चलति इल-क कर्म्म० रलयोरैक्यम्। स्वनामख्याते वृक्षे

**नारीष्टा** स्त्री० नारीभिरिष्टा। मल्लिकायाम्।

**नाल** न० नल-ज्वलादि० ण। काण्डे, उत्पलादिदण्डे, मृणाले न०स्त्री०। 'नाला मृणालाग्रभुजो भजाम' इति नै०।

**नालि(ली)** स्त्री० नल-इण् वा ङीप्। देहस्थशिरायाम्, शाकभेदे, पद्मादिदण्डे च। संज्ञायां कन्। श्वेतकलम्बायाम्, नाडीशाके, चर्म्ममयकशायाम्, हस्तिकर्णवेधन्यास्, माले, चुल्लिच्छिद्रे, वेणुमानने, दण्डात्मके काले च।

**नालिता** स्त्री० नल,णिच् क्त। स्वनामख्याते शाकभेदे।

**नालीक** पु० नाल्या कायति कै-क। हस्तमाले लौहसंयुक्ते अन्तश्छिद्रे शरभेदे, शरीरे च। पद्मषण्डे न०।

**नाविक** पु० नावा चरति ठक्। कर्णधारे।

**नाव्य** त्रि० नावा तीर्य्यतेऽसौ नौ-यत्। नौतार्य्ये देशे।

**नाश** पु० नश-घञ्। पलायने, अदर्शने,निधने, अनुपलम्भे च

**नासत्य** पु०द्वि० ब०। नास्ति असत्यं ययोः नञ् प्रकृत्या,नाशं

त्यजतः त्यज-ड नि० वा। अश्विनीकुमारयोः तौ हि सूर्य्यतेजोऽसहमानायाः संज्ञायाः उत्तरकुरुषु अश्वरूपं धृत्वा तपस्यन्त्याः अश्वरूपधारिणा सूर्य्येण संगतायाः अन्यपुरुषधिया तद्रेतो नासारन्ध्रेन त्यजन्त्यास्तन्नासात्यागेन जाताविति पुराणकथा।

**नासा** स्त्री० नास-शब्दे अ। नासिकायां गन्धग्राहकेन्द्रियभेदे, शब्दे च। [(भानकाठ)

**नासादारु** न० नासायै शब्दाय दारु। द्वारोर्द्धस्थे काष्ठखण्डे

**नासालु** पु० नासायै नासिकाशब्दाय अलते पर्य्याप्नोति अल-उण्। कट्फलवृक्षे तत्फलचूर्णयोगे हि नासिकाशब्दो भवति

**नासिका** स्त्री० नास-ण्वुल्। गन्धग्राहकेन्द्रियभेदे नासायाम्

**नासिक्य** त्रि० नासिकायै हितं तत्र भवो वा यत्। नासाभवे, नासिकाहिते च। नासाभवयोरश्विनीकुमारयोः पु०द्वि०व०

**नासीर** न० नास-ईरन्। अग्रसरे सैन्ये,सेनामुखे च। अग्रसरे त्रि०

**नास्ति** अव्य० अस्तीति विभक्तिप्रतिरूपमव्ययं सुप् सुपेति नञ् शब्देन स०। अविद्यमानतायां, सत्त्वाभावे, यथा नास्तिक्षीरा गौः,'अस्ति नास्ति न जानातो'ति चाणक्यः

**नास्तिक** त्रि०नास्ति परलोकस्तत्साधनमदृष्टं, तत्साक्षीश्वरो वा इति मतिरस्य ठन्। परलोकाभाववादिनि तत्साधनादृष्टाभाववादिनि, तत्साक्षिण ईश्वरस्याऽसत्त्ववादिनि च चार्वाकादौ। [भावज्ञानस्य मिथ्यात्वात्।

**नास्तिकता** स्त्री० नास्तिकस्य भावः। मिथ्यादृष्टौ परलोकाद्य

**नास्तिक्य** न० नास्तिकस्य भावः कर्म्म वा यत्। शास्त्रोक्तेषु फलवत्कर्म्मसु अफलत्वबुद्धौ।

**नि** अव्य० नह-डि। निवेशे, भृशार्थे, नित्यार्थे, संशये,कौशले, क्षेपे, उपरमे, सामीप्ये, आदरे, दाने, मोक्षे, अन्तर्भावे, बन्धने, राशौ, अधोभागे, विन्यासे, निश्चये, निषेधे च।

**निःशलाक** त्रि० निर्गतः शलाकाया' निर्गता शलाका यस्मात् वा। निर्जने रहसि। [हि शीघ्रं शल्यं निर्गच्छति।

**निःशल्या** स्त्री० निर्गतं शल्यं यस्याः ५ब०। दन्तीवृक्षे। तत्सेवने

**निःशेष** त्रि० निर्गता शेषात् प्रा०स०। निखिले सकले। च

**निःशोध्य** त्रि०निर्गतं शोध्यमस्मात् ५ब०। निर्मले, मृष्टे,शोधिते

**निःश्रयणी** स्त्री० निःशेषेण श्रयत्यनया श्रि—ल्युट् ङीप्। अधिरोहिण्याम् (मइ)। [पाने, खर्ज्जुरीवृक्षे च।

**निःश्रेणि(णी)** स्त्री०निर्गता श्रेणिः पंक्तिरत्र।वंशनिर्म्मिते सो-

**निःश्रेयस** न० नितराम् श्रेयः नि० अच् समा०। मोक्षे, मङ्गले, विज्ञाने, भक्तौ, अनुभावे च।

**निःश्वास** पु०निर्+श्वस-घञ्। मुखनासाभ्यां निर्गते वायौ।

**निःसत्त्व** त्रि० निर्गतं सत्त्वं यत्र। धैर्य्यशून्ये, बलशून्ये, प्राणिशून्ये च।

**निःसम्पात** पु० निर्गतः सम्पातो गतागतं यस्मात्। अर्द्धरात्रे।

**निःसरण** न० निःसरत्यस्मात् निर्+सृ-अपादाने ल्युट्। गेहादिद्वारे। भावे ल्युट्। निर्गमे, मरणे, निर्वाणे च। करणे ल्युट्। उपाये।

**निःसार** पु०निर्गता सारात्। शाखोटवृक्षे श्योनाकवृक्षे च। साररहिते त्रि०। कदलीवृक्षे स्त्री०। [दिभ्यो निर्गमपथे

**निःसारण** न०निःसार्य्यतेऽनेन निर्+सृ-णिच्-ल्युट्। गृहा

**निःस्नेहा** स्त्री० निर्गच्छति स्नेहो यस्मात्। अतसीवृक्षे (तसिना) स्नेहशून्ये त्रि०।

**निःस्राव** पु० निःस्रवति स्नु'ण। (माड़) (फेण) भक्तरसे।

**निःस्व** पु० नास्ति स्वमस्य। दरिद्रे। [नित्रवृक्षे च।

**निकट** न० नि+बह्वार्थे कटच्। नि+कट-अच् वा। समीपे

**निकर** पु० नि+कृ-अप्। समूहे,सारे,न्यायदेये,वित्ते,निधौ च।

**निकर्षण** न० निर्गतः कर्षणात्। ग्रामादौ गृहादिरचनार्थं परिच्छिन्ने देशे, वहिर्विहरणभूमौ च।

**निकष(स)** पु० नि+कष(स) अच् घ वा। (कोषटीपातर) कषपाषाणे, शाणे, अस्त्रादितीक्ष्णताधायने पाषाणादौ च।

**निकषण** न० नि+कष-भावे ल्युट्। उल्लेखने। [स्त्री०

**निकषा** अव्य० नि+कष आ। निकटे, मध्ये च। राक्षसमातरि

**निकषात्मज** पु० ६त०। राक्षसे निकषाङ्गजादयोऽप्यत्र।

**निकषोपल** पु० कर्म्म०। शाणे। स्वर्णादिकषणसाधने प्रस्तरे (कषटीपातर)च।

**निकाम** न० नि+कम-घञ्। यथेप्सिते, इच्छानतिक्रमे, अतिशये, निकामतप्तमी'ति कु०टीका, परमात्मनि च। [च

**निकाय** पु० नि+चि-घञ् कुत्वम्। समानधर्म्मप्राणिसंघे, निवासे

**निकाय्य** न० निचीयतेऽत्र नि+चि ण्यत् कुत्वम्। गृहे।

**निकार** पु० नि-कृ-घञ्। परिभवे, अपकारे, तिरस्कारे च। कृ-घञ्। धान्यादेरूर्द्ध्वक्षेपे।

**निकार** पु० नि+कृ-णिच् घञ्। मारणे, परिभवकरणे।

**निकुञ्ज** न०निःशेषेण कौ जायते जन-ड ष०। लतादिपिहितस्थले

**निकुम्भ** पु० नि-स्तुम्भ-अच् ष०। कुम्भकर्णराक्षससुते, दन्तीवृक्षे च गौरा०ङीप् निकुम्भीत्यत्र। [स्थायां देव्याश्च

**निकुम्भिला** स्त्री० लङ्कायाः पश्चिमभागस्थायां गुहायां तत्-

**निकुरम्ब** न० नि+कुर-शब्दे अम्बच्। समूहे।

**निकृत** त्रि० नि+कृ-क्त। परिभूते, अपकृते, प्रत्याख्याते वञ्चिते, नीचे, शठे च।

**निकृति** स्त्री॰ नि+कृ-क्तिन् । शाठ्ये, क्षेपे, तिरस्कारे, दैन्ये च
**निकृष्ट** त्रि॰ नि+कृष-क्त । जात्याचारादिभिर्निन्दिते, अपकृष्टे, अधमे ।
**निकेत** पु॰ नि+कित-निवासे आधारे घञ् । गृहे, निकेतने,
**निकेतन** न॰ नि+कित-निवासे आधारे ल्युट् । गृहे । कर्म्मणि ल्युट् । पलाण्डौ पु॰ ।
**निकोचक** पु॰ नि+कुच-शब्दे वुन् । अक्षोठवृक्षे ।
**निकोठक** पु॰ नि+कुठि-वुन् पृ॰ नलोपः । अक्षोटवृक्षे ।
**निक्ण(क्वा)ण** पु॰ नि+क्वण-अप्, घञ् वा । वीणायाः शब्दे ।
**निक्षिप्त** त्रि॰ नि+क्षिप-क्त । न्यस्ते, स्थापिते, (गच्छित) ।
**निक्षेप** पु॰ नि+क्षिप-कर्म्मणि घञ् । अन्यस्मिन् अर्पिते स्वधनादौ, शिल्पिहस्ते संस्कारार्थं प्रदत्ते च । भावे घञ् । स्वद्रव्यस्यान्यस्मिन् विश्वासात् स्थापनरूपे 'स्वद्रव्यं यदि विश्वासात् निक्षिपत्यविशङ्कितः । निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैरि'त्युक्ते व्यवहारभेदे च ।
**निखर्व्व** पु॰ निखर्वति नि+खर्व-गतौ अच् । 'अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मादि'ति लीलावत्युक्ते दशशतकोटिरूपे संख्याभेदे तत्संख्येये च । वामने त्रि॰ ।
**निखात** त्रि॰ नि+खन-क्त । खनित्वा स्थापिते ।
**निखिल** त्रि॰ निवृत्तं खिलं शेषो यस्मात् । सकले समग्रे ।
**निगड** पु॰ न॰ । नि+गल-अच् डलयोरैक्यात् डत्वम् । शृङ्खलायाम् । (बेड़ी) निवृत्तो गडः सेचनमस्मात् कठिनत्वात् । लोहमये हस्तिपादबन्धने अन्दुके ।
**निगडित** त्रि॰ निगडो जातोऽस्य तार॰ इतच् । बद्धे संयते
**निगद** पु॰ नि+गद-अच् । भाषणे, शब्दमात्रे च ।
**निगम** पु॰ निगम्यतेऽत्र अनेन वा नि+गम-घञ्, निगमे पुरभेदे भवः अण् न वृद्धिः वा । वाणिजे, पुरभेदे, कटभेदे वणिक्पथे, निश्चये, अध्वनि, प्रतिज्ञायाम्, पर्य्यायकथनेन वेदार्थबोधके ग्रन्थभेदे, न्यायमतसिद्धे पञ्चावयवन्यायमध्ये चरमावयवे, न्यायशास्त्रे, तन्त्रभेदे, वेदे च 'निगमकल्पतरो'-रिति भागवतम् ।
**निगमन** न॰ नि+गम-ल्युट् । प्रतिकूलप्रमाणबाधनेन प्रकृतप्रमाणोपसंहारात्मके पञ्चाङ्गन्यायमध्ये 'तस्मात् वह्निमान्' इत्याद्याकारके चरमावयवे ।
**निग(गा)र** पु॰ नि+गॄ-अप्, घञ् वा । भोजने ।
**निगाल** पु॰ नि+गल-अदने घञ् । अश्वगलदेशे ।
**निगूढ़** पु॰ नि+गुह-क्त । वनमुद्गे । गुप्ते, आलिङ्गिते च त्रि॰
**निगृहीत** त्रि॰ नि+ग्रह-क्त । तर्ज्जिते, पीडिते, अवरुद्धे च
**निग्रह** पु॰ नि+ग्रह-अप् । भर्त्सने, सीमायाम्, बन्धने, अनुग्रहाभावे, चिकित्सायां, निषिद्धप्रवृत्तस्य तिरस्कारे मारणे, प्रवृत्तिवारणाय रोधे च ।
**निग्रहस्थान** न॰ निग्रहस्य वादिपराजयस्य स्थानम् । गौतमोक्तेषु षोडशसु पदार्थेषु मध्ये अन्तिमे पदार्थे । विस्तरस्तु वृहदभिधाने ।
**निग्राह** पु॰ नि+ग्रह+घञ् । अनिष्टं ते भूयादित्येवं रूपे [शापे ।
**निघ** पु॰ निर्विशेषण हन्यते हन-क नि॰ । समविस्तारदैर्घ्ये, तुल्यारोहपरिणाहे च पदार्थे ।
**निघण्टिका** स्त्री॰ नि+घटि-ण्वुल् । गुलुञ्चवृक्षे ।
**निघण्टु** पु॰ नि+घटि-उ । नामग्राहके कोषाभिधानादौ ।
**निघस** पु॰ नि+अद-अप् घसादेशः । भोजने ।
**निघ्न** त्रि॰ नि+हन-घञर्थे क । अधीने, गुणिते च । 'द्विगुणात्यनिघ्न' इति लीलावती ।
**निचय** पु॰ नि+चि-कर्म्मणि अच् । अवयवादिना उपचिते पदार्थे, 'सर्वे क्षयान्ता निचया' इति पुराणम् । भावे अच् । समुच्चये, वस्तुसमूहे, निश्चये च ।
**निचाय** पु॰ नि+चि-घञ् । राशीकृते धान्यादौ ।
**निचित** त्रि॰ नि+चि-क्त । व्याप्ते, पूरिते, सङ्कीर्णे, निर्म्मिते च ।
**निचुल** पु॰ नि+चुल-क । हिज्जलवृक्षे, वेतसे, निचोले च ।
**निचूल** पु॰ नि+चुल-क पृ॰ दीर्घः । इज्जले वृक्षे, निचोले च
**निचोल** पु॰ नि+चुल-अच् । प्रच्छदपटे (येन शय्यादि प्रच्छाद्यते तस्मिन्) दोलिकाद्यावरणवस्त्रे, स्त्रीपिधानपटे च ।
**निचोलक** पु॰ नि+चुल-ण्वुल् । सैन्यादेः चोलाकृतौ सन्नाहे, वारवाणे, कूर्पासे च । [इने पटे ।
**निचोली** स्त्री॰ नि+चुल-क गौरा॰ ङीष् । स्त्रीणां प्रच्छा-
**निज** त्रि॰ नि+जन-ड । आत्मीये, स्वाभाविके, नित्ये च ।
**निण्डिका** स्त्री॰ (तेओड़ा) कलायभेदे ।
**नितम्ब** पु॰ नि+तम्ब-अच्, निभृतं तम्यते काम्यते कामुकैः तम-ब वा । स्त्रीणां पश्चात् कटितटे, स्कन्धे, कूले, कथ्या अधोभागे, कटके, (पर्व्वतवसतिस्थाने) कटिमात्रे च ।
**नितम्बिनी** स्त्री॰ नितम्ब+प्राशस्त्ये इनि । प्रशस्तनितम्बवत्यां स्त्रियां, स्त्रीमात्रे च । [त्यर्थे च
**नितराम्** अव्य॰ नि+तर-आम् । सुतरामित्यर्थे, अतिशयेने-
**नितल** न॰ निःशेषेण तलमधोभागः । पातालभेदे ।
**नितान्त** न॰ नितास्यति स्म नि+तम-क्त । एकान्ते अत्यन्ते । तद्वति त्रि॰ ।
**नित्य** न॰ निसर्गेन नियतं वा भवं नि+त्यप् । सतते अहरहः

**निभ** पु० निभाति नि+भा-क । व्याजे । उत्तरपदस्थः । सदृशे त्रि० । यथा पितृनिभः मातृनिभेत्यादि तत्सदृशः इत्यर्थः । स्वातन्त्र्येणास्य न प्रयोगः ।

**निभालन** न० नि+चु०भल-ल्युट् । दर्शने ।

**निभृत** त्रि०नि+भृ-क्त । धृते, विनीते, निश्चले, एकाग्रे, गुप्ते, निर्ज्जने, अस्तायोपस्थिते च 'नभसा निभृतेन्दुने'ति रघुः

**निमज्जथु** पु० नि+मस्ज-अथुच् । अवगाहने, निश्चेष्टतया स्थितौ च । [निश्चलतया स्थितौ च ।

**निमज्जन** न० नि+मस्ज-ल्युट् । अवगाहने, जलादौ प्रवेशे,

**निमन्त्रण** न० नि+मन्त्र-ल्युट् । अकरणे प्रत्यवायसाधने नियोगभेदे यथा श्राद्धादौ भोजनार्थं नियोगः 'तस्याकरणे प्रत्यवायो जायते इति स्मृतौ प्रसिद्धम् आह्वाने च ।

**निमान** न० निमीयते क्रीयतेऽनेन मा-ल्युट् । मूल्ये ।

**निमि** पु० इक्ष्वाकुवंश्ये, चन्द्रवंश्ये च नृपभेदे ।

**निमित्त** न० नि+मिद-क्त । कारणे, हेतौ, शरव्ये, चिह्ने, भाविशुभाशुभसूचके ज्योतिषाद्युक्ते शकुने च 'निमित्तज्ञ स्तपोधन' इति रघुः 'निमित्तानि च पश्यामी'ति गीता । उद्देश्ये च । 'निमित्तात् कर्म्मसंयोगे' इति पाणिनिः ।

**निमित्तकारण** न०कर्म्म० । न्यायोक्ते समवायसमवायिभिन्ने कारणे यथा घटादौ मृदादिः समवायिकारणं कपालद्वयसंयोगश्चासमवायिकारणम् तदुभयभिन्नं कुलालादि निमित्तकारणम्

**निमि(मे)ष** पु० निमेषति नि+भ्वा०मिष-क अच् वा । कालभेदे, चक्षुषः स्वाभाविकस्पन्दनमितकाले (पलक), भावे अप् कृ०न गुणः, घञ् वा गुणः । चक्षुर्मीलने ।

**निमीलन** न० नि+मील-ल्युट् । मरणे, सङ्कोचने, चक्षुर्मुद्रणे च

**निम्न** त्रि० निकृष्टं मनति म्ना-अभ्यासे क । गभीरे नीचे ।

**निम्नगा** स्त्री० निम्नं गच्छति गम-ड । नदीमात्रे । नीचगामिनि त्रि०

**निम्नोन्नत** त्रि०निम्नं तदुन्नतञ्च । उन्नतानते वन्धुरे ।

**निम्ब** पु० निम्बति स्वास्थ्यं निवि सेचने अच् । (निम) वृक्षे ।

**निम्बतरु** पु० निम्ब-अच् कर्म्म० । मन्दारवृक्षे ।

**निम्बवीज** पु० निम्ब-अच् तद्वीजं यस्य । राजादनीवृक्षे ।

**निम्बू** स्त्री० निम्ब-ऊ । (नेबु) वृक्षभेदे । स्वार्थे कन् । अत्रैव ।

**निम्लोचन** न० नि+म्लुच-ल्युट् । अस्तप्राप्ते ।

**नियत** त्रि० नि+यम-क्त । निश्चिते, नित्ये, आचारयुक्ते, नियमवति, वशीकृतेन्द्रिये च । नित्यकर्म्मणि न० ।

**नियति** स्त्री० नि+यम-क्तिन् । नियमे, भाग्ये 'नियतिः केन वाध्यते' इति पुराणम् । प्राक्तनशुभाशुभकर्म्मणि, दुःखे च ।

**नियन्तृ** पु०नियच्छति वाहान् नि+यम-तृच् । सारथौ । शासितरि, प्रवृत्तिप्रेरके त्रि० । स्त्रियां ङीप् । [रुद्रे च ।

**नियन्त्रित** त्रि०नितरां यन्त्रितः नि+यन्त्र-क्त । अवाधे, प्रति

**नियम** पु० नि+यम-घञ् । यन्त्रणे, प्रतिज्ञायां, निश्चये, अङ्गीकारे, पूर्व्वमीमांसोक्ते पक्षतः प्राप्तस्य इतरपक्षव्युदासेन एकतरपक्षे व्यवस्थापने, यथा व्रीहीनवहन्ति । अत्र वितुषीकरणसाधनभूतस्य नखादेरवहननस्य वा उभयोः प्राप्तौ अवघात एव प्रवृत्तिर्व्यवस्थाप्यते । व्रते, 'नियमस्तु स यत् कर्म्मानित्यमागन्तुसाधनमित्युक्ते अनित्ये आगन्तुकसाधने उपवासादौ कर्म्मणि, शौचादिषु च । विस्तरस्तु वृहदभिधाने ।

**नियामक** पु० नि+यम-ण्वुल् । कर्णधारे । नियन्तरि त्रि०

**नियुत** न०'शतं सहस्रमयुतं नियुतं प्रयुतं तथे'त्युक्तायां लक्षसङ्ख्यायां 'लक्षञ्च नियुतञ्चैवे'त्युक्तायां दशलक्षसंख्यायां, तत्तत्सङ्ख्यान्विते च ।

**नियुद्ध** न० निकृष्टं नितरां वा युद्धम् । बाहुयुद्धे ।

**नियोग** पु०नि+युज-भावे घञ् । अवधारणे, आज्ञायाम्, निकृष्टस्य प्रेरणे च । नियुज्यतेऽस्मिन् आधारे घञ् । कार्य्ये ।

**नियोग्य** त्रि० नियोक्तुमर्हति ण्यत् । नियोगकरणार्हे प्रभौ ।

**नियोज्य** त्रि० नियोक्तुं शक्यते कर्म्मणि ण्यत् कुत्वाभावः । प्रेष्ये प्रेरणार्हे भृत्ये । [क्रान्ताद्यर्थे च

**निर्** अव्य० नॄ-क्विप् न दीर्घः । निषेधे, निश्चये, वहिर्भावे नि-

**निरंश** त्रि०निर्गतोऽंशोऽस्य । अंशरहिते पतितक्लीवादिपुत्रादौ । राश्यंशरहिते प्रथमदिने अन्तिमदिने संक्रान्तिदिने च

**निरग्नि** पु० नास्ति अग्निरस्य । अग्निसाध्यश्रौतकर्म्मशून्येषु विप्रादिषु विप्रु वर्णेषु ।

**निरङ्कुश** त्रि० निर्गतोऽङ्कुशात् । बाधाशून्ये, अनिवार्य्ये च ।

**निरञ्जन** त्रि०निर्गतमञ्जनं यस्मात् । अञ्जनशून्ये निर्मले । अञ्जनं तमः मलिनस्वभावत्वात् तस्मात् निर्गतं तन्निर्गतं यस्माद्वा । परमब्रह्मणि 'निरञ्जनं साम्यमुपैति दिव्य'मिति श्रुतिः ।

**निरतिशय** त्रि०निर्गतोऽतिशयोऽस्मात् । अतिशयशून्ये परमोत्कृष्टे । ['निरत्ययं साम्ने'ति भारविः ।

**निरत्यय** त्रि० निर्गतोऽत्ययोऽस्मात् । निर्वाधे अमायिके च

**निरन्तर** त्रि० निर्गतमन्तरात् निर्गतमन्तरं वा यस्मात् । निविड़े, निरवधौ, निश्छिद्रे च ।

**निरपत्रप** त्रि० निर्गतोऽपत्रपायाः । निर्लज्जे ।

**निरर्गल** त्रि० निर्गतमर्गलं यस्मात् । अवाधे प्रतिबन्धरहिते च

**निरर्थक** त्रि० निर्गतोऽर्थो यस्मात् कप् । निष्प्रयोजने अभिधेयशून्ये च ।

निरवग्रह त्रि० निर्गतोऽवग्रहात् । निष्प्रतिबन्धे ।
निरवद्य त्रि० निर्गतोऽवद्यात् । दोषशून्ये, उत्कृष्टे च ।
निरवयव पु० निर्गतोऽवयवात् । परमाणौ । आकारशून्ये आकाशादौ त्रि० ।
निरवशेष त्रि० निर्गतोऽवशेषो यस्मात् । सर्वस्मिन् ।
निरवसित त्रि० निर्+अव+सो-क्त । पात्रबहिष्कृते (यस्य भोजनपात्रं संस्कारेणापि न शुध्यति तस्मिन्) चाण्डालादौ नीचवर्णे । [निष्कासने च ।
निरसन न० निर्+अस-ल्युट् । परित्यागे, प्रतिक्षेपे वधे,
निरस्त त्रि० निर्+अस-क्त । त्वरितोच्चारिते, निष्ठ्यूते, क्षिप्ते, प्रतिहते, भर्त्सिते च ।
निराकरण न० निर्+आ+कृ-ल्युट् । निवारणे,दूरीकरणे च
निराकरिष्णु त्रि० निर्+आ+कृ-इष्णुच् । निवारणशीले प्रतिलेपकर्त्तरि च ।
निराकृत त्रि० निर्+आ+कृ-क्त । दूरीकृते, निवारिते च ।
निराकृति स्त्री० निर्+आ+कृ-क्तिन् । निवारणे ।
निरामय त्रि० निर्गत आमयात् । रोगरहिते । वनच्छगले, शूकरे च पु० ।
निरामालु पु० नितरां रमतेऽत्र रम-आलु । कपित्थवृक्षे ।
निरालम्बा स्त्री० निर्गत आलम्बोऽस्मात् । आकाशलम्बिन्यां मांसाम् । [नास्तिके त्रि० ।
निरीश न० निर्गतमीशायाः । फाले । ईश्वरशून्यतावादिनि
निरुक्त न० निश्चयेनोच्यतेऽत्र । निर्+वच-क्त । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्त'मित्युक्तदिशा प्रकृतिप्रत्ययाद्यवयवार्थनिर्वचनप्रतिपादके वेदाङ्गे ग्रन्थभेदे ।
निरुक्ति स्त्री० निर्+वच-क्तिन् । निर्वचने प्रकृतिप्रत्ययाद्यवयवार्थकथनद्वारा समुदितार्थबोधने ।
निरुपाख्य त्रि० निर्गता उपाख्या यस्मात् । असत्पदार्थे वन्ध्यापुत्रादौ, वाचोमनसश्च विषयतयोल्लेखनायोग्ये अस्फुटस्वरूपे च ब्रह्मणि । [शब्दे ।
निरूढ़ पु० निर्+वह-क्त । शक्तितुल्यलक्षणयाऽर्थबोधके
निरूढ़लक्षणा स्त्री० निरूढा शक्तितुल्या लक्षणा । व्याकरणकोषादिहेतुतः प्रसिद्धार्थे शक्तितुल्यायां लक्षणारूपायां शब्दस्यार्थबोधनाशक्तौ ।
निरूढ़ि स्त्री० निर्+वह-क्तिन् । प्रसिद्धौ ।
निरूपण न० नि+रूप-ल्युट् । तत्त्वज्ञानानुकूलशब्दप्रयोगे विचारे, निदर्शने, आलोके च ।
निरूपित त्रि० नि+रूप-क्त । नियुक्ते, कृतनिरूपणे, कल्पिते, न्यायोक्ते निरूपकतासंबन्धेन सम्बन्धिनि च ।
निरोध पु० नि+रुध-घञ् । नाशे,'न निरोधो नचोत्पत्ति'-रिति पुराणम् । प्रलये, प्रतिरोधे च । [रोधने
निरोधन न० नि+रुध-ल्युट् । कारागारादौ प्रवेशनेन गति-
निर्ऋति नियता ऋतिर्घृणा यत्र । दक्षिणपश्चिमविदिक्पतौ । अलक्ष्म्याम् स्त्री० । निरुपद्रवे त्रि० । [शाल्मलिवृक्षे ।
निर्गन्धपुष्पी स्त्री० निर्गन्धं गन्धशून्यं पुष्पं यस्याः ङीप् ।
निर्गुण पु० निर्गतो गुणेभ्यः । सत्त्वरजस्तमोरूपगुणत्रयशून्ये निर्धर्मके परमात्मनि । निर्गताः गुणाः शौर्यादयोरूपादयो वा यस्मात् । गुणहीने त्रि० ।
निर्गुण्डी स्त्री० निर्गता गुडात् वेष्टनात् ष० गौरा०ङीप् । नीरसे, कलिकायां, सिन्धुवारवृक्षे, पद्मकन्दे च ।
निर्ग्रन्थ पु० निर्गतो ग्रन्थेभ्यः । क्षपणके, दिगम्बरे, बौद्धभेदे, द्यूतकारे, मुनिभेदे च । निर्धने, मूर्खे, निःसहाये, निर्वेदं गते च त्रि० । स्वार्थे कन् । क्षपणे, निष्फले च पु० । वस्त्ररहिते त्रि० ।
निर्ग्रन्थन न० निर्+ग्रथि-कौटिल्ये ल्युट् । मारणे ।
निर्ग्रन्थिक पु० निर्गतो ग्रन्थिर्वस्त्रग्रन्थिर्यस्य कप् । क्षपणके । निर्गुणे, ग्रन्थिहीने च त्रि० ।
निर्घात पु० निर्+हन-घञ् । 'पवनः पवनाभिहतो,गगनादवनौ यदा पतति । भवति तदा निर्घात' इत्युक्ते पवनाहतपवनजन्ये शब्दभेदे । 'निर्घाते भूमिचलने' इतिस्मृतिः
निर्घृण त्रि० निर्गता घृणा दया यस्मात् । निर्दये ।
निर्घोष पु० निर्+घुष-घञ् । शब्दमात्रे ।
निर्जन त्रि० निर्गतो जनो यस्मात् । जनैरनाकीर्णे विजने
निर्जर पु० निर्गता जरा यस्मात् । देवे । जराशून्ये त्रि० । ५ब०। अमृते न०।
निर्जरा स्त्री०निर्गता जरा यस्याः ५ब०। गुडूच्यां, तालपर्ण्यांञ्च
निर्झर पु० निर्+झृ-अप् । पर्वतान्निःसृतजलप्रवाहे (झरणा)
निर्झरिणी स्त्री० निर्झरः पर्वतान्निःसृतजलप्रवाहः कारण-त्वेनास्त्यस्या इनि । नद्याम् ।
निर्णय पु० निर्+नी-अच् । निश्चये, तदभावाप्रकारक्त्वे सति तद्ग्राहिणि ज्ञाने, सन्देहे यथा भावाभावौ द्वावेव विषयतया भासेते नैवं निश्चये तत्र एकविधएवावभासते। विरोधपरिहारे, मीमांसोक्ते पञ्चावयवन्यायमध्ये चरमावयवे, न्यायोक्ते 'सन्दिह्य पक्षप्रतिपक्षयोः साधकबाधकाभ्यामर्थावधारणे च ।

निर्णयपाद पु० चतुष्पाद्व्यवहारमध्ये चरम चयवे येन सभासदां जयपराजयपदार्थनिर्णयस्तस्मिन् पादे ।
निर्णिक्त त्रि० निर्+निज-क्त । शोधिते, अपगतमले च ।
निर्णेजक पु० निर्+निज-ण्वुल् । रजके ।
निर्दहन पु० निःशेषेण दहति ल्यु । भल्लातके । करणे-ल्युट् ङीप् । मूर्वालतायां स्त्री० । निर्गतोदहनोऽस्मात् । शीतादिवस्तुन्यूने त्रि० ।
निर्दिष्ट त्रि० निर्+दिश-क्त । उपदिष्टे प्रदर्शिते, कथिते च
निर्देश पु० निर्+दिश-भावे घञ् । शासने,आज्ञायां, उपदेशे च। निर्दिश्यतेऽभिधीयतेऽनेन घञ् । प्रतिपादकशब्दरूपे नाम्नि,वेतने च 'कालमेव प्रतीक्षेत निर्देशं भृतको यथे'ति पुराणम् । कथने, उपान्ते, देशान्निर्गते च त्रि० ।
निर्द्धन पु० निकष्टं धनमस्मात् । जरद्गवे । धनहीने त्रि० ।
निर्द्धारण न० निर्+धृ-णिच्-ल्युट् । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणे । यथा नराणां क्षत्रियः शूरः इत्यादौ नररूपसमुदायात् क्षत्रियजातेरेकदेशस्य शूरत्वेन पृथक्करणम् । [विषये च।
निर्द्धारित त्रि० निर्+धृ-णिच्-क्त । कृतनिश्चये निर्द्धारण-
निर्द्वन्द्व त्रि० निर्गतो द्वन्द्वेभ्यः शीतोष्णादिविरुद्धधर्मयुगलेभ्यः । रागद्वेषशीतोष्णलाभालाभादिद्वन्द्वरहिते ।
निर्बन्ध पु० निर्+बन्ध-घञ् । आग्रहे, अभिनिवेशे ।
निर्बाध त्रि०निर्गता बाधा यस्मात् । निरुपद्रवे बाधान्शून्ये च।
निर्भय पु० निर्+भी-अच् । हयश्रेष्ठे। भयरहिते त्रि० ।
निर्भर न०निःशेषेण भरो भारोऽत्र। अतिमात्रे। तद्युक्ते त्रि०
निर्मक्षिक अव्य० मक्षिकायाः अभावः । मक्षिकाया अभावे ।
निर्मन्थ्यदारु न० निर्मन्थस्य अग्न्युत्पादनस्य दारु काष्ठम् । घर्षणेन अग्न्युत्पादनसाधने काष्ठे । [शून्ये योगिभेदे ।
निर्मम त्रि० निर्गतो ममकारो यस्मात् । पुत्रदेहादौ ममता-
निर्मल त्रि० निर्गतो मलात् । रजस्तमआदिमलहीने, रागादिमलरहिते, अशुद्धिरहिते, शुद्धे च । अभ्रके न० । निर्गतोमलो यस्मात् पु०व० । कतके तस्य हि फलसम्बन्धात् जलमलनाशकत्वम् प्रसिद्धम् । [कामभेदे च
निर्म्माण न० निर्+मा-ल्युट् । रचनायाम्, सारे, समञ्जसे,
निर्म्माल्य न०'विसर्ज्जिते तु देवेशे निर्माल्यं भवति क्षणादि'-त्युक्ते देवनिर्मल्यनोत्तरं देवदत्तद्रव्ये देवोच्छिष्टे ।
निर्मुक्त पु०निर्+मुच-क्त। त्यक्तकञ्चुके सर्पे (खोलसछाड़ासाप) निःशेषेण मुक्तः। निष्परिग्रहे, सङ्गरहिते, बन्धशून्ये च।
निर्मोक पु० । निर+मुच्-घञ् । सर्पकञ्चुके,(खोलस) मोचने, सन्नाहे, आकाशे च । [नदामनि,अश्वादिनिर्गमे,मोक्षे च
निर्याण न०निर्+या-ल्युट् । गजापाङ्गदेशे,पशूनां पादबन्ध-
निर्यातन न० निर्+यत-णिच्-ल्युट् । वैरशुद्धौ, प्रतिदाने, दाने, न्यासस्मर्पणे च ।
निर्यास पु० निर्+यस-घञ् । वृक्षात् तरलतया निर्गते कालेन कठिनतां प्राप्ते, रसे (गोंद) इक्षुरसे, क्वाथे च ।
निर्यूह पु० निर्+ऊह-क ष्ट० । नागदन्तके, द्वारे, निर्यासे, आपीड़े, शेखरे च ।
निर्ल्वयनी स्त्री० नितरां लयति अहिरस्याम् त्वचि ल्युट् ङीप् ष्ट०। सर्पत्वचि (खोलस) 'यथाहिनिर्ल्वयनी प्रत्यस्ता मृता शेत' इति श्रुतिः । [कथनरूपायां निरुक्तौ ।
निर्वचन न० निर्+वच-ल्युट् । प्रकृतिप्रत्ययविभागेन अर्थ
निर्वपण न० निर्+वप-ल्युट् । अन्नादीनां विभागे,दाने च ।
निर्वर्त्तित त्रि० निर्+वृत-णिच्-क्त । निष्पादिते ।
निर्वहण न० निर्+वह-ल्युट् । नाट्योक्तौ प्रस्तुतकथासमाप्तौ, प्रकृताभिनयस्य निर्वाहे, नाटकसन्धिभेदे च ।
निर्वाण न०निर्+वा-भावे क्त नि०न । मोक्षे,आत्यन्तिकमोक्षे, निवृत्तौ, विनाशे, गजमज्जने, कर्दमे च । कर्त्तरि क्त। निर्वृत्ते, शान्ते,मुक्ते, निश्चले, शून्ये, विश्रान्ते च त्रि० ।
निर्वाद पु० निर्+वद-घञ् । लोकापवादे । [च ।
निर्वापण न०-निर्+वप,वा-वा णिच्-ल्युट् । मारणे वधे दाने
निर्वासन न० निर्+वस-णिच्-ल्युट् । नगरात् वहिष्करणे, मारणे, हिंसने, विसर्ज्जने च । [च
निर्वाह न० निर्+वह-घञ् । कार्यसम्पादने,निष्पत्तौ,समाप्तौ
निर्विकल्प त्रि० निर्गतो विकल्पो ज्ञातृज्ञेयादिविभागो विशेष्यविशेषणतासम्बन्धो वा यस्मात् । वेदान्तोक्ते ज्ञातृज्ञेयादिविभागशून्ये विशेष्यविशेषणतासम्बन्धरहिते च ब्रह्मात्मैकात्मविषये अखण्डाकारके एकविषयके ज्ञाने, 'आत्मारामा विहितरतयो निर्विकल्पे समाधाविति वेणी० । वा कप् । 'तत् प्रमा नाप्रमा नापि ज्ञानं यन्निर्विकल्पकम् । प्रकारतादिशून्यं हि सम्बन्धानवगाहि यत्' इति न्यायोक्ते अलौकिके आलोचनात्मके ज्ञानभेदे ।
निर्विकार पु० प्रकृतेरन्यथाभावः विकारः स निर्गतो यस्मात्। जन्मादिषड्भावविकारहीने परमात्मनि । विकारशून्ये त्रि०
निर्वीजा स्त्री० निर्गतं बीजं यस्याः । द्राक्षाभेदे 'अस्थीजे बीजशून्ये च त्रि० । साङ्ख्योक्ते समाधिभेदे पु० ।
निर्वृति स्त्री० निर्+वृ-क्तिन् । सुखे, सुस्थितौ, अस्तंगमने, मोक्षे, मृतौ च।

निर्वृत्त त्रि० निर्+वृत-क्त। निष्पन्ने। निर्गता वृत्तिर्यस्य। वृत्तिरहिते त्रि०।

निर्वेद पु० निर्+विद-घञ्। स्वस्यावमाने, बहुकालेनाप्यमिष्टे पदार्थे निष्प्रयोजनत्वेन अनुतापे, औदासीन्ये, वैराग्ये, 'तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चे'ति गीता अलङ्कारोक्ते शान्तिरसस्य स्थायिभावे च।

निर्वेश पु० निर्+विश-घञ्। भोगे,वेतने, मूर्च्छने, विवाहे च

निर्व्यथन न० व्यथ-भावे ल्युट् निश्चयेन व्यथनं भयं चलनं वा यत्र। छिद्रे,शोकस्थाने,व्यसनादौ, दुःखोत्पादके व्यापारे च

निर्व्यूढ त्रि० निर्+वि-वह-क्त। त्यक्ते, असमाप्ते, यत् वस्तु सम्यग्रूपेणापर्याप्तं तस्मिन् च। यथा पत्न्यादीनां भर्तृधने न सम्यक् स्वत्वं यथेष्टदानासामर्थ्यात् इति न तस्य निर्व्यूढत्वं भवति च दौहित्रादेः स्वत्वं सम्यगेव पर्याप्तमतस्तन्निर्व्यूढम्। [निष्काशने च।

निर्हरण न० निःशेषेण हरणम्। दाहार्थं शवादिहरणे,

निर्हार पु० निर्+हृ-घञ्। निखातशल्यादेः उद्धरणे, मलमूत्रादित्यागे, 'आहारनिर्हारविहारयोगा' इति स्मृतिः। प्रेतदेहस्य दाहार्थं वहिर्नयने, यथेष्टविनियोगे च। 'न निर्हारं स्त्रियः कुर्युरि'ति मनुः।

निर्हारिन् पु० निर्हरति दूरं गच्छति निर्+हृ-णिनि। दूरगामिगन्धे। निर्हरणकर्त्तरि त्रि०।

निर्ह्राद पु० निश्चयेन ह्रादः ह्रद-घञ्। शब्दे।

निलय पु० निलीयतेऽत्र ली-अच्। गृहे, आवासस्थाने च

निवचने अव्य० वचननियमे। निवचनेकृत्य वाचं नियम्येत्यर्थः

निवपन न० नियतं वपनम्। पित्राद्युद्देशेन दाने।

निवर्त्तन न० उभयतो विंशतिवंशमिते क्षेत्रादौ 'निवर्त्तनं विंशतिवंशसंख्ये'रिति ली०। नि+वृत-णिच्-ल्युट्। निवारणे

निवर्हण न० नितरां वर्हणं वर्ह-हिंसायां ल्युट्। मारणे।

निवसति स्त्री० नि+वस-आधारे अतिच्। गृहे।

निवसथ पु० न्युष्यतेऽत्र नि+वस-अथच्। ग्रामे।

निवसन न० न्युष्यतेऽत्र ल्युट्। गृहे। नि+वस-आच्छादने ल्युट्। वस्त्रे। [सप्तवायुमध्ये वायुभेदे।

निवह पु० नितरामुह्यते वह-घ। समूहे। नि+वह-अच्।

निवात पु० निवृत्तो निरुद्धो वा वातोऽस्मात्। दृढकवचे शस्त्राद्यभेद्यकवचे, आश्रये च। वातशून्ये देशे त्रि०।

निवातकवच पु० हिरण्यकशिपोः पुत्रस्य संह्रादस्य दैत्यस्य पुत्रे दैत्यभेदे।

निवाप पु० न्युप्यते नि+वप-घञ्। पितृद्देशेन दाने,दानमात्रे च

निवास पु० नि+वस-आधारे घञ्। गृहे, आश्रये च 'जगन्निवासो वसुदेवसद्मनी'ति माघः।

निविड त्रि० नितरां विडति संहन्यते नि+विड-क। सान्द्रे घने, नीरन्ध्रे, दृढे च। निनता नासिका नि+नासायाः विडच्। नतनासिकायाम् स्त्री०।

निवीत न० नि+व्यज-क्त। कण्ठलम्बिते यज्ञसूत्रे। व्येञ् संवरणे क्त संप्रसारणादि। प्रावृतवस्त्रे।

निवृत्त नि+वृत-भावे क्त। निषेधे,'निवृत्तं पदार्थ' इति भाष्यम् कर्त्तरि क्त। विरते त्रि०। [महाफले ति मनुः।

निवृत्ति स्त्री० नि+वृत-क्तिन्। उपरमे,विरतौ च 'निवृत्तिस्तु

निवेदन न० नि+विद-णिच्-ल्युट्। सम्मानपूर्वकं ज्ञापने, समर्पणे च। [निवेशने, उद्वाहे,स्थाने च।

निवेश पु० नि+विश-घञ्। विन्यासे, शिविरे,आगन्तुकसैन्य-

निवेशन न० नि+विश-आधारे ल्युट्। गेहे। भावे ल्युट्। प्रवेशे, स्थितौ च। [रात्रौ, हरिद्रायाञ्च

निश् स्त्री० नितरां श्यति तनूकरोति व्यापारान् शो-क ट०।

निश(शा)मन न० नि+शम-णिच्-ल्युट् वा ह्रस्वः। श्रवणे, दर्शने च।

निशा स्त्री० नितरां श्यति व्यापारान् शो-क। रात्रौ हरिद्रायाम्, 'अजगोमतियुग्मञ्च कर्किधन्विमृगा निशा' इति ज्योतिषोक्तेषु मेषादिराशिषु च।

निशाकर पु० निशां करोति कृ-ट। चन्द्रे, कुक्कुटे च।

निशाचर पु० निशायां चरति चर-ट। राक्षसे, शृगाले, पेचके,सर्पे,पिशाचे,चक्रवाके,चौरे च। रात्रिचरमात्रे त्रि०। ङीप्। राक्षस्याम् कुलटायां केशिनीनामगन्धद्रव्ये च स्त्री०

निशा(शि)त त्रि० नि+शो-क्त वा इत्त्वम्। तेजिते तीक्ष्णीकृते

निशान न० नि+शो-ल्युट्। तीक्ष्णीकरणे।

निशान्त न० निशायामस्यते स्म अम-गतौ कर्मणि क्त। गृहे। नितरां शान्ते त्रि०।

निशापति पु० ६त०। चन्द्रे, कर्पूरे च।

निशिपुष्पा स्त्री० निशि रात्रौ पुष्यति पुष्प-अच् अलुक्स०। शेफालिकायाम्। निशिपुष्पीत्याद्ययोप्यत्र।

निशीथ पु० निशेरतेऽत्र नि+शी-थक्। अर्द्धरात्रे, रात्रिमात्रे च

निशीथिनी स्त्री० निशीथोऽस्त्यस्या इनि। रात्रौ।

निशुम्भ पु० नि+शुम्भ-अच् घञ् वा। शुम्भासुरानुजे दैत्यभेदे। मर्द्दने च 'प्रागप्राप्तनिशुम्भशाम्भवधनु'रिति वीरचरितम्।

निशुम्भमर्द्दिनी स्त्री० निशुम्भं मृद्नाति मृद-णिनि ६त०। दुर्गायाम्।

निश्चय पु० निर्+वि-अच्। संशयाभावज्ञाने निर्णये, सिद्धान्ते, इदमेवेति विषयपरिच्छेदे च।

निश्चल त्रि० निर्+चल-अच्। स्थिरे, अचले, असम्भावना-विपरीतभावनारहिते च। भूमौ, शालपर्ण्याञ्च स्त्री० टाप्

निश्वास पु०नि+श्वस-घञ्। मुखनासिकाभ्यां प्राणवायोर्निस्सरणे

निषङ्ग पु० नितरां सजन्ति शरा यत्र सन्ज-घञ्। तूणीरे

निषङ्गिन् त्रि० निषङ्ग+अस्त्यर्थे इनि। धनुर्द्धरे।

निषद्या स्त्री० निषीदन्त्यस्याम् जनाः सद-क्यप्। पण्यविक्रय-शालायां (हाटचाला) हट्टे, क्षुद्रखट्वायाञ्च।

निषद्वर पु० नि+सद्+क्विप् निषद् आसनं तां वृणाति वरः आवरकः वृ-अच्। जम्बाले कर्दमे।

निषध पु० नि+सद-अच् ष०। कठिने, देशभेदे च तद्देशस्थे ब०व०। तद्देशनृपे, निषादस्वरे, हरिवर्षस्य मर्यादा-पर्व्वते च पु०।

निषाद पु० निषीदति मनः, पापं वा यस्मिन् सद-घञ्। 'निषादं रौति कुञ्जर' इत्युक्ते तन्त्रीकण्ठोत्थिते स्वरभेदे, चण्डाले, ब्राह्मणात् ऊढायां शूद्रायामुत्पन्ने पारशवाख्ये वर्णसङ्करे च। [णिनि। हस्तिपाले

निषादिन् पु० निषादयति उपवेशयति हस्तिनं नि+सद-णिच्

निषिद्ध त्रि० नि+सिध-क्त। निषेधविषये, इष्टसाधनताभ्रम निषेधकेन नञ्पदेन, लिङाद्यनुपहतनञ्पदेन वा बोध्ये, पदार्थे, बाधिते च। [सितिमनुः।

निषेक पु० नि सिच-घञ्। गर्भाधाने 'निषेकादि श्मशानान्त'

निषेध पु० नि+सिध-घञ्। निवृत्तौ, प्रतिषेधे, नञादिना बोधितार्थे। [प्रादिभ्यो न णत्वम्।

निष्क माने चु० आत्म०सक०सेट्। निष्कयते अनिनिष्कत।

निष्क पु०न० निश्चयेन कायति कै-क। शास्त्रोक्तषोडशमाषक परिमितसुवर्णमानमष्टाधिकशते, व्यवहारिकरूपके दीनारे, (टाका) चतुर्भिः सुवर्णपरिमिते मानभेदे, षोडशद्रम्मे (काइन)परिमाणे, वक्षोभूषणे, हेमपात्रे, पलपरिमाणे च

निष्कण्ठ पु०निर्गतः कण्ठोऽस्मात्। स्कन्धशून्ये वरुणाख्ये वृक्षे

निष्कर्ष पु० निर्+कष-घञ्। इयत्तापरिच्छेदे, निश्चये च।

निष्कल त्रि० निर्गता कला यस्मात्। कलाशून्ये, नष्टवीर्य्ये च। आधारे पु०। कलावयवशून्ये ब्रह्मणि न०। 'निष्कलस्याद्वितीयस्ये'ति पुराणम्। विगतार्त्तवायाम् वृद्धायां स्त्रियां स्त्री० वा गौरा०ङीप्।

निष्कासित त्रि० निस्+कस-गतौ णिच्-क्त। निःसारिते।

निष्कुट पु० निस्+कुट-क। गृहसमीपस्थे उपवने, केदारे क्षेत्रे, राज्ञाम् अन्तःपुरे च। [वा ङीप्। एलायाम्

निष्कुटि(टी) स्त्री० कुट-इन् कौटिल्यम् निर्गता कुटिर्यस्याः

निष्कुषित त्रि० निर्+कुष-क्त। खण्डिते, निस्त्वचीकृते च 'काकैर्निष्कुषित'मिति गङ्गास्तवः।

निष्कुह पु० निःशेषेण कुहयते विस्मापयति कुह-क। वृक्षा-दिस्थे स्वयं जाते रन्ध्रे कोटरे।

निष्कृति स्त्री० निर्+कृ-क्तिन्। निस्तारे, निर्मुक्तौ, पापादिभ्य उद्धारे च 'कृतघ्ने नास्ति निष्कृति'रिति स्मृतिः।

निष्कृष्ट त्रि० निर्+कृष-क्त। सारांशे।

निष्कोषण न०निर्+कुष-ल्युट्। अन्तरवयवानां बहिर्निस्सारणे

निष्क्रम पु० निर्+क्रम-घञ्। बुद्धिसम्पत्तौ, निर्गमे, दुष्कुले च

निष्क्रमण न० निर्+क्रम-ल्युट्। बहिर्गमने, चतुर्थे मासि शिशोः कर्त्तव्ये संस्कारभेदे च 'चतुर्थे मासि कर्त्तव्यं शिशो-र्निष्क्रमणं गृहा'दिति मनुः।

निष्ठा स्त्री० नि+स्था-अङ्। नाट्योक्त्या प्रस्तुतकथासमाप्तौ, निष्पत्तौ, नाशे, अन्ते, याच्ञायाम्, उत्कर्षे, व्यवस्थायाम्, क्लेशे, व्रते, गुरुशुश्रूषादौ, तत्परतायां, धर्म्मादौ श्रद्धायां च 'लोकेऽस्मिन् द्विविधा निष्ठे'ति गीता। निश्चयेन स्थितौ च 'तेषां निष्ठां तु तामसी'ति गीता। [दध्यादौ व्यञ्जने

निष्ठान न० निष्ठीयतेऽत्र स्था-ल्युट्। भक्ताद्युपसेचने

निष्ठी(ष्ठे)व पु०नि+ष्ठिव-घञ् वा दीर्घः। मुखेन श्लेष्मनिरसने। ल्युट् वा दीर्घः। निष्ठीवननिष्ठेवने एते अप्यत्र।

निष्ठुर न० नि+स्था-उरच्। परुषवाक्ये। कठोरे, त्रि०। 'गुह्याङ्गमेथुनशब्दानां वचनं निष्ठुरं विदुः। यदन्यत्र वचो नोचं स्रोप्यं सर्वैर्गुणान्वय'मित्युक्ते, अश्लीलवाक्ये न०। तद्-विशिष्टे त्रि०।

निष्ठ्यूत त्रि० नि+ष्ठिव-क्त। क्षिप्ते।

निष्णात त्रि०नितरां स्नातः पारं गतः शुद्धो वा नि+स्ना-क्त षत्वम्। निपुणे, पारङ्गते च।

निष्पक्व त्रि० निरतिशयं पक्वम्। अतिशयेन पक्वे क्वथिते दशमूलादौ। पक्वं पाकः निरा०स०। पाकशून्ये त्रि०।

निष्पत्ति स्त्री० निर्+पद-क्तिन्। समाप्तौ, सिद्धौ च।

निष्पत्राकृति स्त्री० पत्रं पुङ्खमस्त्यस्य अच् पत्रः शरः तस्या-परपार्श्वे निष्कासनं सपत्रं ततः क्तिन्। 'सपत्रनिष्पत्रा-त्यातव्यथने' इति डाच्-क्तिन्। अतिव्यथायाम्।

निष्पत्रिका स्त्री० निर्गतं पत्रं यस्याः ५ब०। करीरवृक्षे (टाकरकाटा)।

निष्पन्न त्रि० निर्+पद-क्त। सिद्धे, समाप्ते च।

**निष्परिग्रह** त्रि० निर्गतः कन्थाकौपीनपुस्तकाद्यतिरिक्तः परिग्रहोऽस्मात्। परमहंसे परिव्राजके। त्यक्तसङ्गे त्रि०।

**निष्पाव** पु० निष्पूयते तुषाद्यपनयनेन शोध्यतेऽनेन निर्+पू-करणे घञ्। सूर्पादिवायौ तेन हि खलस्थधान्यादिकं कडङ्गरादिशून्यं करोति। कर्मणि घञ्। कडङ्गरे (आगडा) राजमाषे (वरवटी) श्वेतशिम्बिधान्ये, शिम्बीमात्रे च। निर्विकल्पे त्रि०। [शीतादिवह्निशून्ये त्रि०।

**निष्पावक** पु० निर्+पू-ण्वुल्। श्वेतशिम्बग्राम् (वरवटी)

**निष्पावी** स्त्री० निर्+पू-घञ् गौ०। श्वेतशिम्बीधान्ये (वरवटी)

**निष्पृह** त्रि० निवृत्ता स्पृहा यस्य। वैषयिके सुखे इच्छाशून्ये।

**निष्पेष** पु० निर्+पिष-घञ्। संघर्षे। रहिते च।

**निष्प्रतिभ** त्रि० निर्गतः प्रतिभायाः। जडे, अज्ञे, प्रागल्भ्य

**निष्प्रवाणि** त्रि० प्रोयन्तेऽस्यामनया वा प्र+वेञ्-ल्युट् ङीप्। प्रवाणी तन्तुवायशलाका निर्गतः प्रवाण्याः निरा०स०। नवाम्बरे, अभिनवे। (तानकाटा) वसने।

**निष्फल** त्रि० निर्गतं फलं यस्मात्। फलरहिते। पलाले फलशून्ये धान्यकाण्डे(नाड़ा) पु०। विगतार्त्तवायां स्त्रियां स्त्री०

**निस्** अव्य० नि+सो-क्विप् ह०। निषेधे, निश्चये, साकल्ये, अतीते च।

**निसर्ग** पु० नि+सृज-घञ्। स्वभावे, स्वरूपे, सृष्टौ च।

**निसिन्धु** पु० नितरां सिन्धुरिव वह्वद्रवपत्रादिमत्त्वात्। सिन्धुवारे (निसिन्दा)।

**निसूदन** न० नि+सूद-ल्युट्। मारणे वधे।

**निसृता** स्त्री० नितरां सृता सृ-क्त। त्रिवृतायाम् (तेओड़ि)

**निसृष्ट** त्रि० नि-सृज क्त। न्यस्ते, मध्यस्थे च।

**निसृष्टार्थ** पु० 'उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम्। सन्दिष्टः कुरुते कर्म्म निसृष्टार्थस्तु स स्मृत'इत्युक्ते दासभेदे

**निस्तरण** न० निर्+तॄ-करणे ल्युट्। उपाये। भावे ल्युट्। निस्तारे, पारगमने, तरणे, निर्गमे च।

**निस्तर्हण** न० नि+स्तृह-हिंसायां ल्युट्। मारणे।

**निस्तल** त्रि० निरस्तं तलं प्रतिष्ठा यस्य। वर्त्तुले, तलशून्ये,चले च। गौरा० ङीप्। वटिकायाम् स्त्री०। नितरां तलम्। तले न०। [अभीष्टप्राप्तौ च।

**निस्तार** पु० निःशेषेण तारः पारगमनम्। उद्धारे,पारगमने,

**निस्तुषक्षीर** पु० निस्तुषमन्तःशस्यं क्षीरमिव शुभ्रं यस्य। गोधूमे तस्य हि चूर्णं क्षीरवत् शुभ्रम्।

**निस्तुषित** त्रि० निस्तुष+तत्करोति णिच्-क्त। त्वग्विहीने कृते तण्डुलादौ, लघूकृते, त्यक्ते च।

**निस्त्रिंश** पु० निर्गतस्त्रिंशद्भ्योऽङ्गुलिभ्यः डच् समा०। खड्गे, त्रिंशदङ्गुल्यधिकस्यैव खड्गत्वात् ततो न्यूनत्वे छुरिका। तत्तुल्यहिंसकत्वात् निर्द्दये त्रि०।

**निस्त्रिंशपत्रिका** स्त्री० निस्त्रिंशइव पत्रमस्यस्याः ठन्। (मनसा) स्नुहीभेदे।

**निस्त्रैगुण्य** त्रि० निष्क्रान्तः त्रैगुण्यात् त्रिगुणकार्य्यात् संसारात् त्रिगुणकार्य्येभ्यः कामादिभ्यो वा। कामनादिशून्ये संसारातीते च 'निस्त्रैगुण्यो भवार्जुने'ति गीता। [कार्य्याम्

**निस्नेहफला** स्त्री० निःस्नेहं स्नेहशून्यं फलं यस्याः। श्वेतकण्ट-

**निस्य(ष्य)न्द** पु० निस(ष)+स्न्द-घञ् वा षत्वम्। स्यन्दने ईषत्क्षरणे निष्क्रान्तं स्यन्दनं यस्मात्। स्यन्दनशून्ये त्रि०

**निस्र(स्रा)व** पु० नि+स्रु-अप्, संज्ञायां घञ् वा। भक्तमण्डे (माड़) अपक्षरणे च।

**निस्व(स्वा)न** पु० नि+स्वन-अप् घञ्, वा। शब्दे।

**निहनन** न० नि+हन ल्युट्। वधे।

**निहव** पु० नि+ह्वे-अप् संप्रसारणञ्च। आह्वाने। [कायाम्

**निहाका** स्त्री० नियतं जहाति भुवं हा-कन् न ह्रस्वः। गोधि

**निहित** त्रि० नि+धा-क्त। स्थापिते, गुप्ते,स्थिते, निक्षिप्ते च। नितरां हितः। अत्यन्तहिते।

**निह्नव** पु० नि+ह्नु-अप्। शाठ्ये अन्यथा स्थितस्य वस्तुनोन्यथात्वेन सूचने अपलापे। ह्नु-क्तिन्। अपह्नुतिरप्यत्र

**निह्राद** पु० नितरां ह्रादः नि+ह्राद-घञ्। अव्यक्ते शब्दे।

**नीकाश** पु० नि+काश-घञ् दीर्घः। निश्चये। पचाद्यच्। सदृशे किन्तु निभादिवत् परपदस्थतयैवास्य प्रयोगोनान्यथा वज्रनीकाशइत्यादि।

**नीच** त्रि० निकृष्टामीं लक्ष्मीं चमति चम-ड। पामरे, निम्ने वामने च। चोरनामके गन्धद्रव्ये पु०।

**नीचभोज्य** पु० ६त०। पलाण्डौ। पामरभक्ष्यमात्रे पु०।

**नीचैस्** अव्य० निकृष्टं चीयते चि-डैसि दीर्घश्च। नीचे, अल्पे, क्षुद्रे च। [निवासस्थाने पक्षिणां कुलाये च

**नीड** पु० निषिता इलन्त्यत्र इल-क डलयोरैक्यात् लस्य ड।

**नीड़ज** पु० नीडे जायते जन-ड। विहगे नीड़ोद्भवादयोऽप्यत्र

**नीति** स्त्री० नीयन्ते उन्नीयन्तेऽर्थां अनया नी-क्तिन्। शुक्रादुक्तशास्त्रविद्यायां कार्य्यकारणयोरभेदात् तच्छास्त्रे च। भावे क्तिन् प्रापणे।

**नीतिशास्त्र** न० नीतिबोधकं शास्त्रं शाक०। शुक्रकामन्दकपञ्चतन्त्रमहाभारतहितोपदेशादौ शास्त्रे।

**नीध्र(भ्र)** न० नियमेन धरति दृणोति वा जलादि-धृ-दृ वा

मूल० वा दीर्घः । पटलप्रान्तभागे । वने, नेमौ चन्द्रे, रेवतीनक्षत्रे च ।

**नीप** पु० नी-पक् । कदम्बे, बन्धूके, नीलाशोकवृक्षे च ।

**नीर** न० नी-रक्, निर्गतं राद्‌ग्नितो वा 'अग्नेराप इति' श्रुतेस्तस्याग्निजन्यत्वम् । जले, रसे च ।

**नीरज** न० नीरे जायते जन-ड । पद्मे, मुक्तायां, कुष्ठौषधौ च । जलजातमात्रे त्रि० । जलजन्तुभेदे पु० (उद्‌बेराल) ।

**नीरद** पु० नीरं ददाति दा-क । मेघे, मुस्तके च । निर्गता रदो दन्तोऽस्मात् । दन्तशून्ये त्रि० ।

**नीरन्ध्र** त्रि० निर्गतं रन्ध्रं यस्मात् । सान्द्रे घने ।

**नीरस** पु० निःसरन् रसो यस्मात् । दाड़िमे । रसहीने त्रि० 'नीरसतरुरय'मित्युद्भटः ।

**नीराजन** न० नीरस्य शान्त्युदकस्य अजनं क्षेपोऽत्र नि०, निःशेषेण राजनमत्र वा । दीपादिना सत्कारे निर्मञ्छने, 'पञ्च-नीराजनं कुर्यात् प्रथमं दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा । चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्त्तितम् । पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधी'त्युक्तादिशा दीपादिभिः पञ्चवारसंस्कारे आरात्रिके, आश्विनमासादौ घोटकादेः पूजनविशेषे च ।

**नीराजना** स्त्री० निःशेषेण राजना राज-णिच्-युच् । दीपादिना संस्कारे 'नीराजनां जनयतामिति' नैषधम् । वाजिनीराजनाविधाविति रघुः । [रोगरहिते त्रि० ।

**नीरुज्** स्त्री० निवृत्ता रुक् । स्वास्थ्ये । निर्गता रुक् यस्मात् ।

**नीरुज** न० निवृत्ता रुजा यस्मात् ५ब० । कुष्ठौषधौ (कुड़)

**नील** पु० नील वर्णे क । इलावृतवर्षस्योत्तरस्थे रम्यकवर्षस्य मर्यादापर्व्वते, भारतवर्षस्थे पर्व्वतभेदे, वानरभेदे, निधिभेदे, लाञ्छने, वटवृक्षे, 'चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः । लाक्षारससवर्णश्च तं नीलमिति निर्दिशेदि'त्युक्ते, 'लोहितो यस्तु वर्णेन पुच्छाग्रेण तु पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते' इत्युक्ते च वृषभेदे, 'नीलं वा वृषमुत्सृजेदि'ति वायुपुराणम् । कृष्णवर्णे च । तद्वति त्रि० । औषधौ स्त्री० ङीप् । नील्या रक्तमन् । नीलीरक्ते त्रि० । इन्द्रनीलमणौ (नीलम) तालीशपत्रे, विषे, सौवीराञ्जने च (तुंते) न० ।

**नीलक** न० नील इव कायति कै-क । (कालालवण) काचलवणे, बीजगणितोक्तायां यावत्तावन्मानव्यापनार्थायामव्यक्तराशिसंज्ञायां, लौहभेदे च । असनवृक्षे पु० ।

**नीलकण्ठ** पु० नीलः कण्ठोऽस्य । 'क्षीराब्धेर्मथ्यमानाच्च विषं हालाहलोद्भूत् । हरेण धारितं कण्ठे नीलकण्ठस्ततो हरः' इत्युक्ते शिवे, मयूरे, दात्यूहे, ग्रामचटके, खञ्जने, पीतसारे-चन्दनभेदे च । मूलके न० । [वृक्षे

**नीलकन्द** पु० नीलः कन्दो मूलमस्य । विषकन्दे, महिषकन्दे च

**नीलकुरण्टक** पु० कर्म्म० । नीलझिण्ट्याम् । नीलझिण्टीत्यपत्र । [वृक्षे च ।

**नीलताल** पु० तलमेव तालं नीलं तालमस्य । हिन्ताले, तमाल

**नीलदूर्व्वा** स्त्री० कर्म्म० । हरितवर्णदूर्व्वायाम् । [वति त्रि० ।

**नीलध्वज** पु० नीलाकारो ध्वज इव । तालवृक्षे । नीलध्वज-

**नीलनिर्यासक** पु० नीलवर्णो निर्यासो यस्य कप् । नील-वर्णोऽसनवृक्षे । नीलवर्णनिर्यासे पु० । ६ब० । तद्वति त्रि० ।

**नीलपत्र** न० नीलं पत्रं पर्णं पुष्पदलं वा (पावड़ि) यस्य । नीलवर्णे कुवलये, गुण्डतृणे, अश्मन्तकवृक्षे नीलासनवृक्षे, दाड़िमे च । कर्म्म० नीलवर्णपर्णे न० ६ब० । तद्वति त्रि० ।

**नीलपुष्प** पु० नीलं पुष्पमस्य । नीलभृङ्गराजे, नीलाम्लाने च । ग्रन्थिपर्णे न० । अपराजितायां स्त्री० । अतस्यां (मसिना) ङीप् । स्वार्थे कन् तत्रैव ।

**नीलफला** स्त्री० नीलं फलं यस्याः । जम्बूवृक्षे ।

**नीलमणि** पु० कर्म्म० । (नीलम) इन्द्रनीलमणौ ।

**नीलमाष** पु० कर्म्म० । माषभेदे (कालकलाय) ।

**नीललोहित** पु० नीलः कण्ठे लोहितः केशेषु । शिवे तदुद्देश्यके व्रतभेदे, कृष्णरक्तमिश्रिते वर्णे च । तद्वति त्रि० कर्म्म० । जम्ब्वां स्त्री० । [मूर्व्वालतायां, कृष्णभेके च ।

**नीलवर्षाभू** पु० वर्षायां भवति भू-क्विप् कर्म्म० । कृष्णवर्षा-

**नीलवल्ली** स्त्री० कर्म्म० । वन्दायाम् (परगाछा) ।

**नील(ली)वस्त्र** नील्या रक्तं नीलं कर्म्म० नील्या वा रक्तं वस्त्रं शाक० । नील्या रञ्जिते वस्त्रे 'नीलीवस्त्रं न स्पृशेदि'ति स्मृतिः । नीलवसनादयोऽप्यत्र । ६ब० । तद्वति त्रि० ।

**नीलवृन्त** न० नीलं वृन्तमस्य । तूले ।

**नीलवृषा** स्त्री० नीलवर्णं पत्रं पुष्पं फलं च वर्षति प्रसूते वृष-क । वार्त्ताकीभेदे । [सरस्वती'ति तत्स्तोत्रम् ।

**नीलसरस्वती** स्त्री० द्वितीयविद्यायां तारायाम् । 'मातर्नील-

**नीलसार** पु० नीलः सारोऽस्य । तिन्दु वृक्षे (केंद) । [बोध्यत्र

**नीलसिन्दुक** पु० कर्म्म० । कृष्णवर्णसिन्दुवारे नीलसिन्दुवारादय

**नीलाञ्जन** न० कर्म्म० । सौवीराञ्जने (तुंते) ।

**नीलाम्बर** पु० नीलमम्बरं यस्य । बलदेवे, शनैश्चरे च । कर्म्म० । नीलीरक्ते वस्त्रे न० । ६ब० तद्वति त्रि० ।

**नीलाम्ला** पु० ईषत्कालेन म्लायति आ+म्ला-क कर्म्म० । नील

भिरूटाम् । तस्या हि पुष्पफलकालेनैव गलति ।
नीलालु पु० कर्म्म० । श्यामवर्णकन्दे आलुभेदे ।
नीलासन पु० कर्म्म० । (पियासाल) वृक्षभेदे । [वृति च ।
नीलिनी स्त्री० नीलोवर्णोऽस्त्यस्याः इनि । नीलीवृक्षे क्षुप्यलि-
नीलोत्पल न० कर्म्म० । इन्दीवरे सौगन्धिके नीलवर्णे कुमुदे
नीवाक पु० नियतं वाको वचनं वच-घञ् दीर्घः । महार्घहेतो धान्यसङ्ग्रहादरे । [कुडङ्गरीर्यैरि'ति रघुः ।
नीवार पु० नि+वृ-घञ् दीर्घः । तृणधान्यभेदे 'नीवारपाकादि
नीवि(वी) स्त्री० निव्ययति निवीयते वा नि+व्ये इन् यलोपः दीर्घो डिच्च वा ङीप् । वणिजां मूलधने, कटीवस्त्रबन्धे च 'नीविं प्रति प्रणिहिते तु करे' इति सा०१प०। [जनपदे ।
नीवृत् पु०स्त्री० नियतं वर्त्ततेऽत्र नि+वृत-क्विप् दीर्घः । देशे,
नीशार पु० नितरां शीर्य्यते हिमानिलावत्वानेन वा नि+शॄ-घञ् दीर्घः । हिमानिलनिवारणे प्रावरणे, काण्ड पटे च (कानात्) । [हिमे च ।
नीहार पु० निह्रियते नि+हृ-घञ् दीर्घः । घनीभूते शिशिरे,
नु अव्य० नुदति नौति वा मित०डु । विकल्पे, अनुनये, अतीते, प्रश्ने, हेतौ, वितर्के, अपमाने, अपदेशे, अनुतापे च ।
नुड वधे तु० कु० प०सक०सेट् । नुडति अनुडीत् । न णत्वम्
नुति स्त्री० नु-क्तिन् । स्तवे, प्रणामे च ।
नुत्त(न्न) त्रि० नुद-क्त तस्य वा नः । प्रेरिते, क्षिप्ते च ।
नूतन त्रि० नव एव नव+तन नवस्य नूः । अभिनवे नवीने । त । नूत्नोप्यत्र ! [वृक्षे ।
नूद पु० नुदति पापं क ट०दीर्घः । अश्वत्थाकारे ब्रह्मदारुणि
नूनम् अव्य० नु+जन-अमि । वितर्के, निश्चिते, स्मरणे, वाक्यपूरणे, उत्प्रेक्षाद्योतने च । [पादाङ्गदे ।
नूपुर न० नू-क्विप् नुवि पुरति पुर-अन्तगमने क । (नेपुर)
नृ पु० नी-ऋन् डिच्च । मनुष्ये, पुरुषे च । जातौ ङीप् । नारी
नृग पु० इक्ष्वाकुवंश्ये नृपभेदे ।
नृकरोटिका स्त्री० ६त० । नरकपाले ।
नृचक्षस् पु० नॄन् चष्टे पश्यति भक्ष्यत्वेन चक्ष-असुन् न ख्यादेशः । राक्षसे । [नर्त्स्यति ।
नृत नर्त्तने दि०पर० अक०सेट् । नृत्यति अनर्त्तीत् नर्त्तिष्यति-
नृत्त(त्य) न० नृत-क्त क्यप् वा । तालमानयुक्ते सविलासाङ्गविक्षेपरूपे नर्त्तने ।
नृप पु० नॄन् पाति रक्षति पा-क । 'चतुर्योजनपर्य्यन्तेष्वधिकारी नृपो भवे'दित्युक्ते राजविशेषे, राजमात्रे च ।
नृपकन्द पु० कन्दानां नृपः श्रेष्ठः राजद० । राजपलाण्डौ ।
नृपति पु०६त० । कुवेरे, राजनि च । [वृक्षादयोऽप्यत्र ।
नृपद्रुम पु० द्रुमाणां नृपः राजद० । राजवृक्षे आरग्वधे राज.
नृपप्रिय पु० ६त० । (वेडुवांश) वंशभेदे तस्य दुर्गवेष्टनकारित्वात्तत्प्रियत्वम् । राजपलाण्डौ, शालिधान्ये, आम्रे च । राजवल्लभे त्रि० । केतक्यां राजखर्ज्जूर्य्याञ्च स्त्री० ।
नृपप्रियफला स्त्री० नृपप्रियं फलं यस्याः । वार्त्ताक्याम् ।
नृपसभ न० नृपाणां सभा शाला संहति वा । राजसमूहे राजास्थानशालायाञ्च ।
नृपोचित पु० नृपेषु उचितः । राजमाषे । राजयोग्ये त्रि० ।
नृयज्ञ पु० नॄणां यज्ञः । अतिथिपूजने । नरयज्ञादयोऽप्यत्र ।
नृवराह पु० ना वराहः । अंशाभ्यां मनुष्यवराहाकृतौ भगवदवतारभेदे । [परद्रोहिणि च ।
नृशंस त्रि० नॄन् शंसति शनुस हिंसायाम् अण् । घातुके, क्रूरे,
नृसिंह पु० ना सिंहः । अंशाभ्यां मनुष्यसिंहाकृतियुक्ते भगवतोऽवतारभेदे ।
नॄ नीतौ क्र्यादि० प्वादि० पर० सक० सेट् । नृणाति अनारीत् अणोपदेशत्वान्न णत्वम् । [नरयति । न णत्वम् ।
नॄ नये भ्वा०पर०सक०सेट् घटा० । नरति अनारीत् । णिच्
नेजक पु० निज-शुद्धौ -ण्वुल् । रजके । शोधकमात्रे त्रि० ।
नेतृ त्रि० नी-तृच् । प्रभौ, निर्वाहके नायके, प्रवर्त्तके, प्रापके, च । स्त्रियां ङीप् । निम्बवृक्षे पु० ।
नेत्र न० नयति नीयते वाऽनेन ष्ट्रन् । मन्थनदामनि, वस्त्रभेदे, वृक्षमूले, रथे, जटायाम्, नाड्याम्, शलाकायाम्, चक्षुषि च । प्रापयितरि, नयनसाधने, प्रवर्त्तके च त्रि० ।
नेत्रच्छद पु० नेत्रे छाद्येतेऽनेन छद णिच्-क ह्रस्वः । नेत्रपिधायके चर्म्ममये नेत्रपुटे ।
नेत्रपर्य्यन्त पु० नेत्रयोः पर्य्यन्तः कोणः सीमा । अपाङ्गे ।
नेत्रमल न० ६त० । चक्षुर्मले दूषिकायाम् (पिचुटि) ।
नेत्ररञ्जन न० नेत्रे रज्यते अनेन रञ्ज-करणे ल्युट् । कज्जले
नेत्ररोगहन् पु० नेत्ररोगं हन्ति हन-क्विप् । वृश्चिकालीवृक्षे तस्य हि नेत्ररोगनाशकत्वं वैद्यके प्रसिद्धम् ।
नेत्राम्बु न० ६त० । चक्षुर्जले अश्रुणि । [वृक्षभेदे ।
नेत्रोपमफल पु० नेत्रे उपमा यस्य तादृशं फलमस्य । (बादाम)
नेत्रौष(धि)धी स्त्री०६त०वा ङीप् । अजशृङ्ग्याम् (गाड़रशिङ्गा) ।
नेदिष्ठ त्रि०अतिशयेनान्तिकः इष्ठन् नेद देशः । अतिशयनिकटस्थे
नेदीयस् त्रि० अतिशयेनान्तिकः ईयसुन् नेदादेशः । अत्यन्तसमीपस्थे । [नाटकादेरभिनयार्थसज्जाभूमौ च ।
नेपथ्य न० नी-विच् नयः नेतः पथ्यम् । भूषणे, वेशे, वेशस्थाने,

नेपाल पु० स्वनामख्याते 'जटेश्वरं समारभ्य योगेशान्तं महेश्वरि! । नेपालदेशो देवेशि' इत्युक्ते देशभेदे ।
नेपालकम्बल पु० ६त० । कुथाख्ये चित्रकम्बले ।
नेपालनिम्ब पु० ६त० । ज्वरान्तके तृणनिम्बे, निम्बभेदे च ।
नेपालमूलक न० ६त० । हस्तिकन्दसदृशे मूलभेदे ।
नेपालिका स्त्री० नेपाले भवा ठन् । मनःशिलायाम् ।
नेम पु० नी-मन् । अवधौ, काले, अर्द्धे, प्राकारे, कैतवे, गर्त्ते, नाशे, अन्यस्मिन्नित्यर्थे च । अर्द्धार्थेऽस्य सर्वनामता ।
नेमि पु० नी-मि । तिनिशवृक्षे । कूपसमीपे-रज्जुधारणार्थे लिकाष्ठयन्त्रे, चक्रान्ते च । (रथचक्रस्य भूमिसंयोगयोग्ये भागे) कूपान्तिकस्थे-समानस्थलभागे स्त्री० वा ङीप् ।
नेमिश न० ब्रह्मणा सृष्टस्य चक्रस्य नेमिः शीर्यतेऽत्र शृ-ड । नैमिषारण्ये देशे । स्वार्थेऽण् । नैमिशमप्यत्र ।
नैकभेद त्रि० न एके अनेके नशब्देन सुप्सुपेति स० नैके भेदा यस्य । अनेकप्रकारे उच्चावचे ।
नैगम पु० निगम एव प्रज्ञाद्यण् । नीत्याम्, उपनिषदि ब्रह्मविद्यायाम्, तत्प्रतिपादके-वेदान्ते च । निगमे भवः अण् । वणिग्जने, नागरे च । [उत्तमायां गवि ।
नैचिकी स्त्री० नीचैश्शब्दं चरति ठक् टिलोपः गौ० ङीप् ।
नैत्य(त्यि)क न० नित्यमनुष्ठेयं कन् ठन् वा । नित्यानुष्ठेये, 'नैत्य(त्यि)कान्ते भुजिक्रिये'ति स्मृतिः ।
नैपुण्य(ण) न० निपुणस्य भावः ष्यञ् अण् वा । दक्षतायाम् ।
नैमित्तिक त्रि० निमित्तादागतम् ठक् । पुत्रजन्मादिनिमित्तमाश्रित्य विहिते जातेष्ट्यादौ 'नित्यं नैमित्तिकं चरे'दिति स्मृतिः ।
नैमित्तिकलय पु० कर्म्म० 'चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लयः' इत्युक्ते ब्रह्मदिनावसाने जगतां प्रलये । [त्वम् ।
नैमिष न० तीर्थभेदे निमेषेण विष्णुना तत्रासुरविनाशात् तथा
नैमेय पु० नि+मि-यत् स्वार्थेऽण् । विनिमये परीवर्त्ते ।
नैयग्रोध न० न्यग्रोधस्य विकारः अण् तस्य नलुक् । वटफलादौ
नैयायिक त्रि० न्यायं वेत्त्यधीते वा ठक् । न्यायज्ञ ।
नैरन्तर्य्य न० निरन्तरस्य भावः ष्यञ् । अविच्छेदे ।
नैराश्य न० निराशस्य निष्कामस्य भावः ष्यञ् । आशाशून्यत्वे 'नैराश्यं परमं सुख'मिति पुराणम् ।
नैर्ऋती स्त्री० निर्ऋतेरियम् अण् । दक्षिणपश्चिमायां विदिशि 'नैर्ऋतीं दिशमाश्रये'दिति स्मृतिः ।
नैर्मल्य न० निर्मलस्य भावः ष्यञ् । निर्मलत्वे स्वच्छत्वे । 'विषयेष्वतिसंरागो मानसो मल उच्यते । तेष्वेव हि विरागस्तु नैर्मल्यं समुदाहृतमि'त्युक्ते विषयवैराग्ये च ।

नैवेद्य न० निवेदं निवेदनमर्हति ष्यञ् नि+विद्-णिच् कर्मणि यत् स्वार्थे अण् वा । 'निवेदनीयं द्रव्यन्तु नैवेद्यमिति, कथ्यते' इति स्मृत्युक्ते देवतोद्देशेन त्यक्तव्ये द्रव्ये ।
नैषध पु० निषधानां जनपदानामयम् अण् । नलनामनि-भूपतौ, तदधिकृत्य कृते ग्रन्थे, न० । तद्देशभवे तत्सम्बन्धिनि च त्रि०
नैष्कर्म्य न० निष्कर्मणो भावः ष्यञ् । विधिना सर्वकर्मत्यागे 'न कर्म्मणामनारम्भात् नैष्कर्म्य'मिति इति गीता ।
नैष्किक पु० निष्के हेम्नि दीनारे तद्गारे टङ्के नियुक्तः ठक् । कोषाध्यक्षे, टङ्कशालायां नियुक्ते ।
नैष्ठिक पु० निष्ठा संसारसमाप्तिः प्रयोजनमस्य ठक् । ब्रह्मचर्येण यावज्जीवं गुरुकुलवासिनि-ब्रह्मचारिभेदे । निश्चलतयास्थितिः निष्ठा तत्रासक्तः ठक् । निश्चलायां स्थितौ सक्ते त्रि० स्त्रियां ङीप् नैष्ठिकी ।
नैसर्गिक त्रि० निसर्गेण स्वभावेन निर्वृत्तः ठक् । स्वाभाविके ।
नैस्त्रिंशिक त्रि० निस्त्रिंशः प्रहरणमस्य ठक् । खड्गेन योद्धरि
नो अव्य० नह्-डो । अभावे ।
नोचेत् अव्य० नो च चेच्च द्व० । निषेधे ।
नोपस्थात त्रि० न उपतिष्ठति स्था-तृच् । दूरस्थे । हीने 'अव्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तर' इति स्मृत्युक्ते दुष्टवादिभेदे । [कन् । नौकाप्यत्रैवार्थे ।
नौ स्त्री० नुद्-डौ । जलोपरि प्लवनसाधने तरणिभेदे । स्वार्थे
नौकादण्ड पु० ६त० । नौकायाः चालनार्थं पार्श्वद्वयबद्धे काष्ठदण्डे (दांड़) । [न्यक्कृतिरप्यत्रार्थे ।
न्यक्कार पु० न्यक्+कृ-घञ् । नीचकरणे तिरस्कारे च । क्तिन् ।
न्यग्रोध पु० न्यक् रुणद्धि रुध-अच् । वटवृक्षे, शमीवृक्षे बाहुद्वयविस्तारकृतव्यामरूपपरिमाणे (बांओ) सर्व्वाणि न्यक्कृत्य स्थिते विष्णौ, विषपर्ण्यां मोहनौषधौ च । मूषिकपर्ण्यां स्त्री० ङीप् ।
न्यग्रोधपरिमण्डला स्त्री० 'स्तनौ सुकठिनौ यस्या नितम्बे च विशालता । मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डले, त्युक्तलक्षणायां नार्य्याम् । [म्यङ्के मृगभेदे च ।
न्यङ्कु पु० नितरामञ्चति नि+अन्च-उ कुत्वम् । मुनिभेदे, वङ्कु
न्यङ्कुभूरुह पु० न्यङ्कुरिव भूरुहः । श्योनाकवृक्षे । तस्य वङ्कशृङ्गाकारत्वात्तथात्वम् ।
न्यच् त्रि० निम्नमञ्चति नि-अन्च-क्विन् । नीचे निम्ने ।
न्यञ्चित त्रि० नि+अन्च-क्त । अधःक्षिप्ते ।
न्यस्त त्रि० नि अस-क्त । क्षिप्ते त्यक्ते, विसृष्टे, निहिते च ।
न्याद पु० नि+अद-घञ् न घसादेशः । भोजने ।

**न्याय** पु० नि+ई-इन् वा घञ् । उचिते गौतमोक्ते शास्त्रभेदे, तदुक्ते प्रतिज्ञादिपञ्चकप्रतिपादिकवाक्यविशेषे, नीतौ नयोपाये, भोगे, यत्नौ, युक्तिमूलदृष्टान्तभेदे च ।

**न्याय्य** त्रि० न्यायादनपेतं यत् । उचिते, युक्तियुक्ते च ।

**न्यास** पु० नि+अस-कर्मणि, भावे वा घञ् । स्थाप्यद्रव्ये (गच्छित) अर्पणे विन्यासे, संन्यासे च । [अतिप्रिये च त्रि० ।

**न्युङ्ख** पु० नि-उङ्ख-अच् । सामवेदाङ्गेषु षट्सु प्रणवेषु । मनोहरे,

**न्युब्ज** त्रि० नि+उब्ज-घञ् कुत्वाभावः । अधोमुखे कुब्जे । (कुजो) यज्ञपात्रभेदे (दर्भमयस्रुचि) पु० । कर्मरङ्गफले न० ।

**न्यून** त्रि० न्यूनयति नि+ऊन-परिमाणे अच् । ऊने गर्ह्ये च ।

## प

**प** पु० पत, पा-वा ड । पवने, पातरि, पर्णे, पाने च ।

**पक्कण** पु० पचति पच-क्विप् कण-अच् कर्म० । शवरालये ।

**पक्त्रिम** त्रि० पच-क्त्रि ततो-मप् । पाकनिर्वृत्ते । [पाके च

**पक्व** त्रि० पच-क्त तस्य वः । परिणते, दृढे, विनाशोन्मुखे, कृत-

**पक्वकृत्** पु० पक्वं करोति कृ-क्विप् । निम्बवृक्षे ।

**पक्ष** परिग्रहे चु०उभ०सक०सेट् । पक्षयति ते अपपक्षत् त ।

**पक्ष** परिग्रहे अद० चु०उभ०सक० सेट् अयं भ्वादिश्च पर० । पक्षति पक्षयति ते अपपक्षत् त अपक्षीत् ।

**पक्ष** पु० पक्ष-अच् । शुक्लकृष्णप्रतिपदादिपञ्चदश्यन्तपञ्चदशतिथ्यात्मके काले, खगानां पतत्रे (पाखा) शरस्य पुङ्खस्थे पत्रे, केशात् परः । समूहार्थे, यथा केशपक्ष इत्यादि । पार्श्वे, गृहे, न्यायोक्ते संदिग्धसाध्यवति पदार्थे, यथा पर्वतो वह्निमान् । विरोधे, बले, सहाये, सख्यौ, चुल्लीरन्ध्रे राजकुञ्जरे, खगे, वलये, समूहे, पिच्छे, देहार्द्धे च ।

**पक्षक** पु० पक्षइव कायति कै-क । पार्श्वद्वारे (खिड़की)

**पक्षता** स्त्री० पक्षस्य भावः । न्यायोक्ते अनुमानेच्छाभावसमानाधिकरणे साध्यवत्तानिश्चयाभावे यत्र वह्न्यादिकं साध्यते तत्र धर्म्मिणि वह्निमत्त्वनिश्चयाभावे एव पक्षत्वं तत्र तन्निश्चयसत्त्वे तु अनुमानेच्छासत्त्वएव पक्षता नेतरथेति न्याये स्थितम् । [खगानां पक्षस्य मूले च (डाना)

**पक्षति** स्त्री० पक्षस्य मूलम् ति । पक्षारम्भके प्रतिपदि तिथौ

**पक्षद्वार** न० पक्षे पार्श्वे द्वारम् । (खिडकी) पार्श्वस्थे द्वारे

**पक्षपात** पु० पक्षे अन्याय्यसाहाय्ये पातः अभिनिवेशः । अन्यायसाहाय्ये ।

**पक्षपातिता** स्त्री० पक्षपात+अस्त्यर्थे इनि तस्य भावः तल् । साहाय्यकरणाभिनिवेशे, पक्षाभ्यां पतने च 'न परं पथि पक्षपातितेति नैषधम् । [तिथौ ।

**पक्षान्त** पु० पक्षस्यान्तो यत्र । अमावास्यायां पूर्णिमायाञ्च

**पक्षिणी** स्त्री० पक्षतुल्ये अहनी विद्येते अस्या इनि । आगामिवर्त्तमानदिनाभ्यां युक्तायां रात्रौ ।

**पक्षिल** त्रि० पक्षः साहाय्यमस्त्यर्थे इलच् । साहाय्यकारके । न्यायभाष्यकारे वात्स्यायनमुनौ पु० ।

**पक्षिन्** पु० पक्ष+अस्त्यर्थे इनि । वाणे, विहङ्गमे च ।

**पक्ष्मन्** न० पक्ष-मनिन् । नेत्रावरके लोम्नि, पद्मादेः केशरे, सूत्रादेरत्यल्पभागे, खगादेः पक्षे च ।

**पङ्क** पु०न० पचि-घञ् नि० । कुत्वम् । कर्द्दमे, पापे च ।

**पङ्क(ङ्के)ज** न० पङ्के जायते जन-ड पक्षे अलुक् स० । पद्मे, सारसपक्षिणि च । पङ्कजन्मादयोऽप्यत्र ।

**पङ्कशूरण** पु० पङ्के शूरण इव । शालूके ।

**पङ्कार** पु० पङ्कमृच्छति ऋ-अण् उप० । शैवले, सेतौ च ।

**पङ्किल** त्रि० पङ्क+अस्त्यर्थे इलच् । कर्द्दमवति देशे ।

**पङ्केरुह** न०पङ्के रोहति रुह-क अलुक्स० । पद्मे, सारसखगे च

**पङ्क्ति** स्त्री० पचि-क्तिन् । सजातीयसन्ततौ (पांत) पञ्चाक्षरपादके, दशाक्षरपादके च छन्दोभेदे, दशसङ्ख्यायाञ्च तेन पङ्क्तिरथ इति दशरथसंज्ञा । पृथिव्यां, गौरवे, पाके, प्रपञ्चे च ।

**पङ्क्तिदूषक** पु० पङ्क्तिं श्राद्धे भोजनार्थमुपविष्टानां विप्राणामावलिं दूषयति दुष-णिच् ण्वुल् । अपाङ्क्तेये श्राद्धादौ अभोजनीये कितवादौ । विस्तरस्तु वृहदभिधाने ।

**पङ्क्तिपावन** पु० पङ्क्तिं श्राद्धे भोजनार्थमुपविष्टानामावलिं पुनाति पू-णिच्-ल्यु । श्राद्धभोजनार्थमुपविष्टानां पङ्क्तिपवित्रताकारके विद्याविशिष्टादौ । विस्तरस्तु वृहदभिधाने ।

**पङ्क्तिवीज** पु० पङ्क्तिभूतानि वीजानि यस्य । वर्व्वुरवृक्षे ।

**पङ्गु** त्रि० खजि-कु-पआदेशः नुक् च । गतिहीने स्त्रियां ऊङ् । शनैश्चरे पु० । [पक्त्रिमः पचा ।

**पच** पाके भ्वा०उ०सक०अनिट् । पचति ते । अपाक्षीत् अपक्त ।

**पच** व्यक्तीकारे भ्वा०आत्म०अनिट् । पचते । अपक्त ।

**पच** विस्तारे चु०उ०सक०सेट् इदित् । पञ्चयति ते अपपञ्चत् त

**पचनी** स्त्री० पच्यतेऽनया ल्युट् । वनवीजपूरके जम्बीरभेदे

**पचम्पचा** स्त्री० पचति पच-अच् पृ० मुम् द्वित्वञ्च । दारुहरिद्रायाम् ।

**पज** आवरणे भ्वा०पर०सक० सेट् इदित् । पञ्जति अपञ्जीत् ।

**पज्ज** पु० पद्भ्यां ब्रह्मचरणाभ्यां जायते जन-ड । शूद्रे, 'पद्भ्यां शूद्रोऽजायते'ति श्रुतिः । [धनिष्ठादिगणत्रपञ्चके च ।

**पञ्चक** न० पञ्चानामवयवम् कन् । पञ्चसंख्यायां ज्योतिषोक्ते

**पञ्चकषाय** पु० कर्म्म०। 'जम्बुशाल्मलिवाट्यालं बकुलं वदरं तथा। कषायाः पञ्च विज्ञेया' इत्युक्तेषु पञ्चसु कषायेषु।

**पञ्चकोल** न० 'पञ्चकोलं कणामूलं कृष्णचव्याग्निनागरै'रित्युक्ते पाचनभेदे।

**पञ्चकोष** पु० पञ्च कोषा इवावरका यस्य। वेदान्तोक्ते अन्नमयादिपञ्चकोषाभिमानिनि जीवे। समा०द्वि०। पञ्चसु अन्नमयादिकोषाख्येषु देहादिषु न०।

**पञ्चगव्य** न० गोर्विकारः यत् पञ्चानां गव्यानां समाहारः। 'पञ्चगव्यं 'दधिक्षीरघृतगोमूत्रगोमयै'रित्युक्तेषु दध्यादिषु पञ्चसु

**पञ्चचूडा** स्त्री० पञ्च चूडा यस्याः। अप्सरोभेदे।

**पञ्चजन** पु० पञ्चभिः भूतैर्जन्यते जन-घञ्, न वृद्धिः। मनुष्ये, दैत्यभेदे च यस्यास्थ्ना कृष्णस्य पाञ्चजन्यः शङ्खोजातः।

**पञ्चतत्त्व** न० 'मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च। पञ्चतत्त्वमिदं प्रोक्त'मिति तन्त्रोक्तेषु मद्यादिषु पञ्चसु, साङ्ख्याद्युक्तेषु भूम्यादिषु पञ्चसु भूतेषु च।

**पञ्चवटी** स्त्री० वटो वृक्षः समा०द्वि०। 'अश्वत्थोविल्ववृक्षश्च वटधात्र्यावशोककः। पञ्चवटीत्युक्ते'त्युक्तेषु अश्वत्थादिषु पञ्चसु वृक्षेषु,रामायणप्रसिद्धे जनस्थानस्थे स्थानभेदे च

**पञ्चवक्त्र** पु० पञ्च वक्त्राणि यस्य। शिवे रुद्राक्षभेदे च। पचि-विस्तारे-अच् पञ्चं वक्त्रमस्य। सिंहे, पञ्चास्यपञ्चमुखादयोप्यत्र

**पञ्चवल्कल** न० समा०द्वि०। 'न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलम्। पञ्चवल्कलमित्युक्तमि'त्युक्तेषु वटादिवल्कलेषु।

**पञ्चवाण** पु० पञ्च बाणा यस्य। 'सम्मोहनोन्मादनौ च शोषणस्तापनस्तथा। स्तम्भनश्चेति कामस्य शराः पञ्च प्रकीर्त्तिता' इत्युक्तशरपञ्चकयुक्ते कामे। पञ्चशरादयोऽप्यत्र।

**पञ्चशस्य** न० समा० द्वि०। 'धान्यमुद्गास्तिला माषाः यवाः सिद्धार्थकोऽथ वा। पञ्चशस्यमिति प्रोक्त'मित्युक्तेषु धान्यादिषु

**पञ्चशाख** पु० पञ्च शाखाकारा अङ्गुलयो यत्र। हस्ते।

**पञ्चशिख** पु० मुनिभेदे,'वोढुः पञ्चशिखस्तथे'ति पुराणम्।

**पञ्चसुगन्धिक** कर्पूरकक्कोललवङ्गपुष्पगुवाकजातीफलपञ्चकेन। समांशभागेन च योजितेन मनोहरं पञ्चसुगन्धिकं स्या'दित्युक्तेषु मिलितसुगन्धिद्रव्येषु।

**पञ्चसूना** स्त्री० पञ्च सूनाः प्राणिवधस्थानानि। 'पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्चे'त्युक्तेषु पञ्चसु कीटवधस्थानेषु।

**पञ्चाग्नि** पु० पञ्च अग्नय उपास्या यस्य। छान्दोग्ये 'वेत्थ यथा सौम्य! पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति प्रश्नपूर्व्वकं प्रदर्शितायां स्वर्गमेघादिषु पञ्चसु स्थानेषु अग्नित्वेनोपासनरूपायां विद्यायाम् 'पञ्चाग्नयो ये च त्रिणाचिकेता' इति श्रुतिः। पञ्चाग्निमति च।

**पञ्चाङ्ग** न० समा०द्वि०। 'त्वक् पत्रं कुसुमं मूलं फलञ्चैकस्य शाखिनः। एकत्वस्थं तु पञ्चाङ्ग'मित्युक्ते एकवृक्षस्य त्वगादिषु पञ्चसु,'तिथिर्वारश्च नक्षत्रं योगः करणमेव च। पञ्चाङ्गमेतद्विज्ञेय'मित्युक्तेषु तिथ्यादिषु च। पञ्च अङ्गानि यस्य। 'जपहोमौ तर्पणञ्चाभिषेको विप्रभोजनम्, पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते' इति तन्त्रोक्तपुरश्चरणभेदे, पञ्च अङ्गानि आयत्तानि यस्य। कूर्मे पु० तस्य हि हस्तपादग्रीवारूपाङ्गपञ्चकस्य यथेष्टं सङ्कोचविकाशयोः स्वेच्छया करणादायत्तत्वम्। [एरण्डवृक्षे। पञ्चाङ्गुलयुक्ते त्रि०।

**पञ्चाङ्गुल** पु० पञ्च अङ्गुलय इव पत्त्राकारा यस्य अच् समा०

**पञ्चामृत** न० समा०द्वि०। 'दुग्धं च शर्करा चैव घृतं दधि तथा मधु। पञ्चामृतमिदं प्रोक्त'मित्युक्तेषु पञ्चसु दुग्धादिषु।

**पञ्चाम्र** न० 'अश्वत्थ एकः पिचुमर्द्द एको द्वौ चम्पकौ त्रीणि च केशराणि। सप्ताथ ताला नव नारिकेलाः पञ्चाम्रवापी नरकं न याती'त्युक्तेषु अश्वत्थादिषु वृक्षेषु।

**पञ्चाल** पु० देशभेदे। तद्देशस्थे व०व०।

**पञ्चाली** स्त्री० पञ्चं प्रपञ्चमलति पर्य्याप्नोति अल-अण्। वस्त्रकृतपुत्तलिकायां, गानभेदे च (पाचाली)।

**पञ्चाशत्** स्त्री० पञ्च दशतः परिमाणमस्य नि०। (पञ्चाश) सङ्ख्याभेदे, तत्संख्यातेषु च।

**पञ्चेन्द्रिय** न० समा०द्वि०। 'श्रोत्रत्वग्नेत्ररसनघ्राणं पञ्चेन्द्रियं मत'मित्युक्तेषु श्रोत्रादिषु ज्ञानेन्द्रियेषु,'वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाणि चे'त्युक्तेषु वागादिषु कर्म्मेन्द्रियेषु च पञ्चसु। [कङ्काले। विहङ्गादिबन्धनस्थाने न०।

**प(पि)ञ्जर** पु०न० पजि-(पिजि-)वा अरच्। शरीरास्थिवृन्दे

**पञ्जल** पु० पजि-अलच्। कोलकन्दे।

**पञ्जि(ञ्जी)** स्त्री० पजि-इन् वा ङीप्। तूलसाधननालिकायां (पाइज) स्वार्थे कन्। अत्र, पाणिनीयसूत्रवृत्तिभेदे तिथिवारादिपञ्चाङ्गबोधिकायां पत्रिकायाञ्च (पांजि)।

**पञ्चतपस्** त्रि० पञ्चाग्निसाध्यं तपोऽस्य। चतुःपार्श्वस्थाग्निचतुष्टयोर्द्ध्वस्थसूर्यरूपतेजःपञ्चकैस्तप्यमाने 'पञ्चमः पञ्चतपस' इति माघः। [संख्यायाम्। तत्संख्याते त्रि०।

**पञ्चतय** न० पञ्चानामवयवः पञ्चावयवा येषां वा तयप्। पञ्च-

**पञ्चतन्मात्र** न० तदेव तन्मात्रं पञ्चानां तन्मात्राणां समाहारः। साङ्ख्यादिसिद्धेषु महाभूतकारणीभूतेषु शब्दस्पर्शरूपरसगन्धमात्राधारेषु पञ्चसु सूक्ष्मभूतेषु।

पञ्चत्व न० पञ्चाना पृथिव्यादिभूतानां भावः त्व। मरणे, तत्र हि देहारम्भकभूतानां स्वस्वांशस्य स्वेषु स्वेषु प्रवेशः इति तस्य पञ्चरूपता। तल्। पञ्चतापत्र।

पञ्चदश त्रि०पञ्चदशानां पूरणः डट्। येन पञ्चदशसङ्ख्या पूर्य्यते तस्मिन्। स्त्रियां ङीप्। सा च चन्द्रस्य पक्षयोः पञ्चदशकलाक्रियारूपायां पूर्णिमायाममावस्यायाञ्च तिथौ, विद्यारण्यप्रणीते वेदान्तग्रन्थभेदे च।

पञ्चधा अव्य० पञ्चप्रकारम् पञ्चन्+धाच्। पञ्चप्रकारे।

पञ्चन् त्रि० पचि-विस्तारे कनि। (पांच) सङ्ख्यायुक्ते।

पञ्चनख पु० पञ्च नखा यस्य। हस्तिनि, व्याघ्रे च। पञ्चनखयुक्ते त्रि०। ते च शशकादयः 'शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः। भक्ष्यान् पञ्चनखेष्वाहु'रिति मनुः

पञ्चनद पु० पञ्च नद्यो यत्र। 'वितस्तेरावतीचन्द्रभागा मद्रे सरिद्वरा। शतद्रुश्च विपाशा च तेन पञ्चनदः स्मृत' इत्युक्ते (पञ्जाब) इति ख्याते मद्रदेशे। पञ्चानां नदीनां समाहारः। काशीस्थासु 'किरणा धूतपापा च पुण्यतोया सरस्वती। गङ्गा च यमुना चैव पञ्च नद्यः प्रकीर्त्तिता' इत्युक्तासु विन्दुमाधवतीर्थसन्निहितासु पञ्चसु नदीषु।

पञ्चपर्णी स्त्री० पञ्च पञ्च पर्णानि प्रतिपर्वं यस्याः। (गोरक्षचाकुलिया) क्षुपभेदे। स्वार्थे कन् अत्रैव।

पञ्चपल्लव न० समा० द्विगुः। 'आम्राश्वत्थवटप्लक्षयज्ञोडुम्बरपल्लवाः। पञ्चपल्लवमित्युक्त'मित्युक्ते वैदिककर्म्मणि,'पनसाम्रं तथाश्वत्थं वटं वकुलमेव चे'ति तन्त्रोक्ते तान्त्रिककर्म्मणि च स्थाप्यघटोपरि देये पल्लवपञ्चके।

पञ्चपात्र न० पञ्च पात्राणि श्राद्धोद्देश्यानि यत्र। दैवपक्षद्वयं पित्रादित्रिकमिति पात्रपञ्चकोद्देशेन कर्त्तव्ये विकृतिपार्वणश्राद्धे पञ्चानां पात्राणां समाहारः। पञ्चसु पात्रेषु।

पञ्चप्रदीप पु० पञ्च प्रदीपा यत्र। आरात्रिकार्थे पञ्चप्रदीपाधारे दीपपात्रभेदे। [पार्श्वेषु पुष्पित, इत्युक्ते अश्वभेदे।

पञ्चभद्र पु० पञ्चसु देहस्थानेषु भद्रः। 'पञ्चभद्रस्तु हृत्पृष्ठे मुख-

पञ्चभूत न० पञ्चानां भूतानां समाहारः। वैशेषिकाद्युक्तेषु क्षित्यप्तेजोवायुव्योमात्मकेषु भूतेषु।

पञ्चम त्रि० पञ्चानां पूरणः पञ्चन्+मट्। येन पञ्चसङ्ख्या पूर्य्यते तस्मिन्। स्त्रियां ङीप्। सा च चन्द्रस्य पञ्चमकलाक्रियारूपायां तिथौ च।

पञ्चमकार न०पञ्चानां मकारादिवर्णानां समाहारः। तन्त्रोक्तेषु मद्यमांसमत्स्यमुद्रामैथुनेषु।

पञ्चमहायज्ञ पु० महान् यज्ञः महायज्ञः ततः कर्म०। नित्यं गृहस्थकर्त्तव्येषु स्वाध्यायपाठाग्निहोत्रयागातिथिपूजनपितृतर्पणबलिकर्म्माख्येषु पञ्चसु पञ्चसूनादोषापनोदकेषु कर्म्मसु। पञ्चयज्ञ शब्दोऽप्यत्रार्थे।

पञ्चमास्य पु० पञ्चमः स्वरभेदः आस्ये तदेकदेशकण्ठे यस्य। कोकिले 'पञ्चमं रौति कोकिल' इति हि स्मर्य्यते।

पञ्चमूल न०समा०द्वि०। 'विल्वश्योनाकगाम्भारीपाटलागणिकारिकाः। पञ्चमूलमिति ख्यात'मित्युक्ते पाचनभेदे।

पञ्चरत्न न० समा०द्वि०। विद्रुमं हीरकं नीलं पद्मरागञ्च मौक्तिकम्। पञ्चरत्नमिदं प्रोक्तमित्युक्तेषु पञ्चसु रत्नेषु।

पञ्चरात्र न०'रात्रन्तु ज्ञानवचनं ज्ञानं पञ्चविधम् स्मृतम्। पञ्चरात्रमिति ख्यात'मित्युक्ते पञ्चज्ञानसाधने नारदाद्युक्तेग्रन्थभेदे

पञ्चलाङ्गलक न० पञ्चभिर्लाङ्गलैः स्वर्णमयैः कायति कै-क। षोडशमहादानमध्ये महादानभेदे।

पञ्चलौहक न० लौहं धातुः समा० द्वि० 'सुवर्णं रजतं ताम्रं रङ्गं नागं तथैव च। पञ्चलौहमिति प्रोक्त'मित्युक्ते धातुपञ्चके

पट गतौ भ्वा०पर०सक०सेट्। पटति। अपाटीत् अपटीत्।

पट दीप्तौ चु०उभ०अक०सेट्। पाटयति ते अपीपटत् त।

पट वेष्टने अद०चु०उभ०सक०सेट्। पटयति ते अपपटत् त

पट त्रि० पट्यते वेष्ट्यते अच्। वस्त्रे। स्त्रियां गौ० ङीप्। पियालवृक्षे पु०। पुरस्कृते त्रि०। [येऽप्यत्र।

पटकार पु० पटं करोति कृ-अण्। तन्तुवाये। [पटगृहाद-

पटकुटी स्त्री० पटनिर्म्मिता कुटी शा०। पटमये गृहे (तांबु)

पटच्चर न०पट्यते आवेष्ट्यते पट-अति, भूतपूर्व्वं पटत् चरट्। जीर्णवस्त्रे। पटमिव वेष्टित इव चरति चर-अच्। चौरे पु०

पटल न० पट-वेष्टने कलन्। (चाल) छदिषि। स्त्रीत्वमप्यत्र गौ० ङीप्। वृन्दे, ग्रन्थभेदे च पुं०।

पटवासक पु० पटान् वासयति सुरभीकरोति वास-ण्वुल्। वसनवासके कुङ्कुमादिचूर्णे।

पटह पु० न०। पटेन हन्यते हन,पट इत्येवं शब्दं जहाति वा हा-वा ड। ढक्कावाद्ये। समारम्भे पु०।

पटि(टी) स्त्री०पट-इन् वा ङीप्। पटभेदे, कुम्भिकाख्ये च।

पटीर न० पट-ईरन्। चालन्याम् मूलके, केदारे, मेघे, वंशसारे, खदिरे, उदरे, कन्दर्पे, चन्दने च। 'परिपीतपटीररसैरलस' इत्युद्भटः। उच्चे, हरणीये च त्रि०।

पटीयस् त्रि० अतिशयेन पटुः ईयसु। अतिशयकार्य्यदक्षे।

पटु त्रि० पट-उ। निपुणे, नीरोगे, तीक्ष्णे स्फुटे,निर्दये धूर्त्ते च। स्त्रियां वा ङीप्। पटोले पु० लवणे, पांशुलवणे छत्राके च न०।

**पटुजातीय** त्रि० पटुप्रकारः जातीयर् । पटुप्रकारे ।
**पटुपर्णी** स्त्री० पटूनि पर्णान्यस्याः । स्वर्णक्षीरिण्यीषधे ।
**पटुरूप** त्रि० प्रशस्तः पटुः प्राशस्त्ये रूपप् । अतिशयदक्षे ।
**पटोल** पु० पट-ओलच् । स्वनामख्याते लताभेदे । वस्त्रभेदे न०
**पटोली(लिका)** स्त्री० अपकृष्टः पटोलः ङीप् (भिङ्गा) ख्या-
तायां लतायाम् । स्वार्थे कन् । तत्रैवार्थे ।
**पट्ट** न० पट क्त नेट् ट वा तस्य नेत्त्वम् । नगरे । चतुष्पथे,
राजादिलेख्यपत्रे, (पाट्टा) पीठे, 'ललाटपट्ट'मित्युद्भटः ।
फलके (ढाल) राजसिंहासने, उत्तरीयवस्त्रे, कौषेये, (रेशम)
पेषणे च । पाषाणे पु० ।
**पट्टज** न० पट्टात् जायते । पट्टनिर्म्मिते वस्त्रे (रेशमिकापड़)
**पट्टदेवी** स्त्री० पट्टे राजासने देवी कृताभिषेका स्त्री । राज
महिष्याम् (पाटराणी) पट्टमहिष्यादयोऽप्यत्र । [प्रधाननगरे
**पट्ट(त्त)न** न० पट(त)न्ति जना यत्र पट-पत, वा तनन् । नेट् ।
**पट्टरङ्ग** न० पट्टं रज्यतेऽनेन रन्ज-करणे घञ् । (वकम्) इति
ख्याते पदार्थे । ल्युट् । पट्टरञ्जनमप्यत्र ।
**पट्टशाक** पु० कर्म्म० (नालिता) शाकभेदे ।
**पट्टिकालोध्र** पु० पट्टिकाकारः लोध्रः । (पटियालोध) लोध्र-
भेदे । पट्टिलोध्रादयोऽप्यत्र ।
**पट्टिन्** पु० पट्ट+अस्त्यर्थे इनि । रक्तलोध्रे ।
**पट्टिल** पु० पट्ट अस्त्यर्थे इलच् । पूतिकरजे । [अपटीत्
**पठ** लिखिताक्षरवाचने भ्वा० पर० सक० सेट् । पठति अपाठीत्-
**पण्ड** गतौ भ्वा० आ० सक० सेट् इदित् । पण्डते अपण्डिष्ट ।
**पण्ड** संहतौ वा चु० उ० पक्षे भ्वा० अक० सेट् इदित् । पण्ड-
यति-ते पण्डति अपपण्डत्-त अपण्डीत् ।
**पण** व्यवहारे (क्रयविक्रयादौ) स्तुतौ च भ्वा० आ० सक० सेट् ।
पणायति-ते पणते व्यवहारे तु पणायति इत्येव । अप-
णायीत् अपणायिष्ट अपणिष्ट ।
**पण** पु० पण्यतेऽनेन पण-अच् । मूल्ये, धने, ताम्रे कर्षपरि-
मिते (पयसा) ख्याते द्रव्ये च । भावे अच् । भृतौ, द्यूते,
ग्लहे, (पराजये इदं देयमित्येवं) नियमे । व्यवहारे च 'सा-
काकिनी तास्य पणश्चतस्र' इत्युक्ते चतुःकाकिनीपरिमाणे च
**पणन** न० पण-भावे ल्युट् । विक्रये ।
**पणव** पु० स्त्री० पणं व्यवहारं वाति वा-क । पटहभेदे 'पण-
वानकगोमुखा' इति गीता । [वणिजां पणाया' इति भट्टिः
**पणाया** स्त्री० पण-स्वार्थे आय-ततः-अ । व्यवहारे 'न चोपलेभे
**पणायित** त्रि० पण-आय-क्त । स्तुते । आयाभावपक्षे पणित-
मप्यत्र ।

**पणितव्य** त्रि० पण-तव्य । विक्रेतव्ये, स्तोतव्ये, व्यवहार्य्ये च
यत् । पण्यमप्यत्र । [सारिण्यां बुद्धौ स्त्री० टाप् ।
**पण्ड** पु० पण-ड तस्य नेत्त्वम् । क्लीवे, निष्फले च । तत्त्वानु-
**पण्डापूर्व्व** न० पण्डं फलासाधनमपूर्व्वम् । वस्तुतः फलसाधन-
योग्ये फलानुपहिते धर्म्माधर्म्मात्मकेऽदृष्टे यथा सन्ध्यावन्द-
नादेरभावे दुरदृष्टं जायते सन्ध्यादेर्वन्दने तु तस्यानुत्पत्त्या
फलानुपहितं दुरदृष्टं नश्यतीति तत्पण्डापूर्व्वमिति मीमांसा
**पण्डित** पु० पण्डा तत्त्वानुगा बुद्धिर्जाताऽस्य तार० इतच् ।
शास्त्रतात्पर्य्यज्ञे विदुषि ।
**पण्यवीथी** स्त्री० ६त० । विक्रेयद्रव्यविक्रयशालायां (हाटचाला)
हट्टे च । स्वार्थे कन् । पण्यवीथिका, पण्यशाला चाप्यत्र ।
**पण्यस्त्री** स्त्री० कर्म्म० । वेश्यायाम्, पण्याङ्गनादयोऽप्यत्र ।
**पण्याजीव** पु० पण्येन क्रयविक्रयद्रव्येणाजीवति आ+जीव
अच् । वणिग्जने । [अपपतत्-त ।
**पत** गतौ अद० चु० उभ० सक०, ऐश्वर्ये अक० सेट् । पतयति-ते
**पत** ऐश्वर्ये दि० आ० अक० सेट् । पत्यते अपतिष्ट । [अपप्तत् ।
**पत** गतौ भ्वा० पर० सक०, ऐश्वर्ये अक० ज्वला० सेट् । पतति
**पतग** पु० पतत्यनेन पतः पक्षस्तेन गच्छति गम-ड । विहङ्गमे ।
**पतङ्ग** पु० पतन् सन् गच्छति गम-खच् डिच्च । सूर्य्ये, शलभे,
(फड़िङ्ग) खगे, शालिभेदे, मधूकवृक्षे च । [कायाम्
**पतङ्गिका** स्त्री० क्षुद्रः पतङ्गः पतङ्गी ततः कन् । क्षुद्रमक्षि-
**पतञ्जलि** पु० पतन् अञ्जलिर्यस्मै नमस्यत्वात् शक० । पाणि-
नीयसूत्रभाष्यकारे, योगसूत्रकारे च मुनिभेदे ।
**पतत्** पु० पत-शतृ । पक्षिणि ।
**पतत्त्र** पु० पतनं त्रायते त्रै-क । पक्षिणां पक्षे (पाखा) ।
**पतत्रि** पु० पत-अत्रिन् । पक्षिणि, पतत्त्री पतत्त्रयः ।
**पतत्त्रिन्** पु० पतत्त्रोऽस्यास्ति इनि । पक्षिणि पतत्त्रिणौ ।
**पतद्ग्रह** पु० पतत् मुखादिभ्यः स्रवत् जलादि गृह्णाति ।
(पिकदानी) पात्रभेदे ।
**पतयालु** त्रि० चु० पत-आलुच् । पतनशीले पातुके ।
**पताका** स्त्री० पत्यते बोध्यते योधादिभेदोऽनया पत-आकन् ।
वंशोपरिदेये त्रिकोणाकारे वस्त्रखण्डे, सौभाग्ये, नाटकाङ्गे,
अङ्के, चैत्ते, छन्दोग्रन्थोक्ते लघुगुरुव्यक्तिज्ञानार्थं चक्रभेदे च
**पताकिन्** त्रि० पताका+अस्त्यर्थे इनि । पताकाधारिणि ।
ज्योतिषोक्ते तदाकारवति रिष्टसूचके चक्रभेदे पु० ।
**पति** पु० पा-डति । भर्त्तरि । अधिपतौ त्रि० । स्त्रियां वा ङीप् ।
**पतित** त्रि० पत-क्त । चलिते, गलिते धर्म्मादित्यागादिजन्य
दुरदृष्टवति जने च 'पतितानां न दाहः स्या'दिति स्मृतिः

**पतिंवरा** स्त्री० पतिं वृणीते वृ-खच् । स्वेच्छया पतिवरण-कारिकायां कन्यायाम्, कृष्णजीरके च ।

**पतिवत्नी** स्त्री० पतिरस्त्यस्याः मतुप् नि० नुक्, मस्य वः, ङीप् च । सधवायां स्त्रियाम् ।

**पतिव्रता** स्त्री० पतिः पतिसेवनं व्रतं यस्याः । सत्यां योषिति ।

**पत्ति** पु० पद-तिन् । सेनायाम् । क्तिन् । गतौ,(१रथः,१गजः ३अश्वाः, ५सेनाः) एतत् संख्यान्विते सेनाभेदे च स्त्री० ।

**पत्नी** स्त्री० पति+यज्ञसंबन्धे ङीप् नुक् च । पतिकृतयज्ञवत्यां विधिना ऊढायां योषिति ।

**पत्त्र** न० पत-ष्ट्रन् । वाहनमात्रे,पर्णे, पक्षिणां पक्षे, लेखनाधारे द्रव्ये, धातुमयपत्त्राकारे द्रव्ये च । लिप्यां स्त्री०ङीप् ।

**पत्त्रगुप्त** पु०३त०। (तेकाटासिजु) वृक्षे ।

**पत्त्रघना** स्त्री० पत्त्रैर्घना । सातलावृक्षे ।

**पत्त्रदारक** पु०पत्त्राकारः दारकः कर्म्म० । (करात्) क्रकचास्त्रे

**पत्त्रपुष्प** पु०पत्त्रमेव पुष्पमिव सुगन्धित्वात् यस्य ।रक्ततुलस्याम् संज्ञायां कन् । तुलस्यां स्त्री० टाप् ।

**पत्त्रभङ्ग** पु० पत्त्रस्येव भङ्गः खण्डो यत्र । स्तनादौ पत्त्रख-ण्डाकृतिरूपेण लेख्ये तिलकादौ । गौरा०पत्त्रभङ्गीत्यप्यत्र

**पत्त्ररथ** पु० पत्त्रं पक्षः रथइव गतिसाधनं यस्य । पक्षिणि ।

**पत्त्रलेखा** स्त्री० पत्त्रस्य लेखा । चन्दनादिना पत्त्राकृतिले-खने। ७त० । स्तनादौ तथालेख्ये तिलकादौ ।

**पत्त्रवल्ली** स्त्री० पत्त्रस्य वल्ली श्रेणीव । चन्दनादिना लेख्ये पत्त्राणां श्रेणीतुल्ये तिलकाकारे पदार्थे ।

**पत्त्रश्रेष्ठ** पु० पत्त्रेण श्रेष्ठः । विल्ववृक्षे ।

**पत्त्रसूचि** स्त्री० पत्त्राणां सूचिरिव । कण्टके ।

**पत्त्राङ्ग** न०पत्त्रे पु अङ्गति अच्, पत्त्रमेवाङ्गमस्य वा ।भूर्जपत्त्रे (बकम) काष्ठभेदे, रक्तचन्दने च ।

**पत्त्राङ्गुलि** स्त्री० पत्त्रसहिताङ्गुलिर्यत्र। चन्दनादिना स्तनादौ लेख्ये पत्त्रयुक्ताङ्गुल्याकारे तिलकभेदे ।

**पत्त्राञ्जन** न० पत्त्रं लेखनपत्त्रमज्यतेऽनेन ल्युट् । मस्याम्

**पत्त्रालु** पु० पत्त्राढ्य आलुः । कालालुभेदे ।

**पत्त्रावलि** स्त्री० ६त० । पर्णश्रेणौ पत्त्राणां लेख्यपत्त्राणामा वलौ च । वा ङीप् । पत्त्रभङ्गे । [स्वार्थे कन् तत्रैव

**पत्त्री** स्त्री० पद-ष्ट्रन् ङीप् । लिपौ तदाधारत्वात् पत्त्रे च ।

**पत्त्रिन्** पु० पत्त्रं पक्षः अस्त्यस्य इनि । पक्षिणि, शरे, श्येने, रथिनि, पर्व्वते, ताले च । पर्णयुते त्रि० ।

**पत्त्रोर्ण** न० पत्त्रलता ऊर्णा (रेशम) यस्यास्य अर्श आद्यच् । पट्टवस्त्रे,कौषेये । पत्त्रे पु ऊर्णा यस्य । श्योनाकवृक्षे पु० ।

**पथ** गतौ भ्वा० प० स० सेट् । पथति अपथत् ।

**पथ** गतौ वा चु०उभ०पक्षे भ्वा०प०सक०सेट् इदित् । पन्थयति ते पन्थति । अपपन्थत् त । अपन्थीत् ।

**पथ** पु० पथ-अच् । मार्गे, पथि ।

**पथिक** त्रि० पन्थानं गच्छति पथिन्+कन् । देशान्तरयानाय गृहान्निःसृत्य पथिगन्तरि । [ठन् । कपिलद्राक्षायाम् ।

**पथिका** स्त्री० पथे पथिगमनाय हिता अनायासभक्ष्यत्वात्

**पथिद्रुम** पु० पथ-इन् कर्म्म० । खदिरवृक्षे ।

**पथिन्** पु० पथ+इनि । (पथ) ख्याते अध्वनि ।

**पथ्य** त्रि० पथे चिकित्सानुसारिमार्गाय हितम् । चिकित्सोपयो-गिनि रोगिसेव्ये वस्तुनि, हितकारके च । हरितकीवृक्षे, बन्ध्याकर्कोट्याञ्च स्त्री० ।

**पथ्यशाक** पु० कर्म्म० । तण्डुलीयशाके ।

**पद** स्थैर्ये भ्वा०पर०अक०सेट् । पदति अपादीत् अपदीत् ।

**पद** गतौ दि०आ०सक०अनिट् । पद्यते अपादि ।

**पद** गतौ अद०चु०आत्म०सक०सेट् । पदयते अपपदत ।

**पद** न० पद-अच् । चिह्ने, स्थाने,पादे, व्यवसे, त्राणे, वस्तुनि शब्दभेदे, (सुप्तिङन्तरूपे) प्रदेशे, श्लोकपादे च ।

**पद्** न० पद-क्विप् पादे। किरणे पु०।

**पदग** त्रि० पदेन गच्छति गम-ड । पदातिके ।

**पदन्यास** पु० पदस्य गोष्पदैकदेशचतुरस्य न्यासः तन्नामाचरं यत्र । गोक्षुरक्षुपे। ६त० । पदस्थापणे ।

**पदवि(वी)** स्त्री० पद-अवि वा ङीप् । पथि । [गामिनि

**पदाजि** पु०पादाभ्यामजति इन् वीभावाभावः पदादेशः। पाद-

**पदाति** पु० पादाभ्यामतति अत-इन् पदादेशः । पदगामिनि

**पदार्थ** पु० पदबोध्योऽर्थः शाक०। अभिधेये, वस्तुमात्रे सर्व्वेषां शब्दबोध्यत्वात्तथात्वम् ।

**पद्ग** पु० पद्भ्यां गच्छति गम-ड । पादेन गामिनि ।

**पद्धति(ती)** स्त्री० पद+हन-क्तिन् वा ङीप् । पथि, पङ्क्तौ पूजादिज्ञापकग्रन्थभेदे च ।

**पद्म** न० पद+मन् । कमले,गजमुखादिस्थे, विन्दुसमुदाये कम-लाकारेण सैन्यादेरभिनिवेशनरूपे व्यूहभेदे, निधिभेदे,'अर्बुद-मब्ज'मिति पर्यायमात्रोक्तायां दशार्बुदसंख्यायां,तत्संख्यातेषु, पुष्करमूले, सीसके,धातौ, शरीरस्थे, नाडीचक्रभेदे च ।

**पद्मकन्द** पु० ६त० । शालूके ।

**पद्मकाष्ठ** न०६त० । ओषधिभेदे । [इनि । भूर्ज्जपत्त्रवृक्षे ।

**पद्मकिन्** पु० पद्मकानि गजविन्दुजालाकृतयोविन्दवः सन्त्यस्य

**पद्मकेशर** पु० ६त० । किञ्जल्के, पद्मवराटकसमीपस्थे पीतवर्णे

कोशाकारे पदार्थे । [ब्रह्मणि । कर्म० । कमलमध्ये न० ।

**पद्मगर्भ** पु० पद्मं विष्णुनाभिपद्मं गर्भमुत्पादकं यस्य । चतुर्मुखे

**पद्मचारिणी** स्त्री० पद्ममिव चरति स्थानं परित्यज्य दूरं गच्छति णिनि । उत्तरकुरुदेशे प्रसिद्धे लताभेदे ।

**पद्मनाभ** पु० पद्मं नाभौ यस्य अच् । विष्णौ । [वमूले ।

**पद्मपत्त्र** न० ६त० । कमलपत्त्रे । पद्मस्य पत्त्रं वाहनमिव । कुष-

**पद्मपुराण** न० पद्ममधिकृत्य कृतमण् तस्य लुक् कर्म० । महापुराणान्तर्गते पुराणभेदे ।

**पद्मपुष्प** पु० पद्ममिव पुष्पं यस्य । कर्णिकारवृक्षे ।

**पद्मबन्ध** पु० पद्माकारो बन्धः सन्निवेशः । शब्दालङ्कारभेदे ।

**पद्मबन्धु** पु० ६त० । सूर्य्ये, भ्रमरे च । पद्ममित्रादयोऽप्यत्र ।

**पद्मभू** पु० पद्मं विष्णोर्नाभिपद्मं भूरुत्पत्तिस्थानं यस्य । चतुर्मुखे ब्रह्मणि । पद्मोद्भवादयोऽप्यत्र ।

**पद्मराग** न० पद्मस्येव रागो यस्य । रक्तवर्णे मणिभेदे (माणिक)

**पद्मलाञ्छन** पु० पद्मं लाञ्छनमस्य । सूर्य्ये, ब्रह्मणि, नृपे, कुवेरे च

**पद्मवासा** स्त्री० वसत्यत्राधारे घञ् ६त० । सरस्वत्यां लक्ष्म्याम्, लवङ्गे च । पद्मं निवासो निलयो यस्याः । पद्मनिवासादयोऽप्यत्र

**पद्मवीज** न० ६त० । कमलवीजे (कामलगाट्टा) ।

**पद्मवीजाभ** न० पद्मवीजमिवाभाति आ+भा-क । (माखना) जलजे फलभेदे । [मनसादेव्यां, कुसुम्भपुष्पे च ।

**पद्मा** स्त्री० पद्ममस्त्यस्य अर्श आद्यच् । लक्ष्म्याम्, लवङ्गे,

**पद्माकर** पु० ६त० । पद्मयुक्ते तडागे वा अगाधे जलाशये,

**पद्माट** पु० पद्मवदटति अट-अच् । चक्रमर्द्दवृक्षे (दादमर्दन) ।

**पद्मावती** पु० पद्म+अस्त्यर्थे मतुप् मस्य वः दीर्घश्च । (पद्मा) नदीभेदे, मनसादेव्यां, पद्मचारिणीलतायाञ्च ।

**पद्मासन** न० पद्ममिवासनम् । योगशास्त्रप्रसिद्धे आसनभेदे ।

**पद्मिनी** स्त्री० पद्मानां समूहः, सन्निकृष्टदेशो वा इनि । कमलसमूहे तद्युक्तदेशरूपायां सरोवरस्थलतायां, स्त्रीभेदे च ।

**पद्मिनीकान्त** पु० ६त० । सूर्य्ये पद्मिनीप्रियादयोऽप्यत्र ।

**पद्मिन्** पु० पद्मं विन्दुजालमस्त्यस्य इनि । हस्तिनि । पद्मयुक्ते त्रि०

**पद्मेशय** पु० पद्मे शेते शी-अच् अलुक् स० । विष्णौ ।

**पद्य** न० पदं चरणमर्हति पद+यत् । कविकृते चतुश्चरणात्मके 'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधे'त्युक्ते, वाक्यभेदे । पदव्यां स्त्री० । पद्भ्यां जातः यत् । शूद्रे पु० । पदं विध्यति यत् । शर्करायां स्त्री० । [णीत् अपनायिष्ट अपनिष्ट ।

**पन** स्तुतौ भ्वा० आत्म०सक०सेट् । पनायते पनायति अपना-

**पनस** पु० पन-असच् । (काँटाल) कण्टकिफले । [गतौ न०

**पन्न** त्रि० पद-क्त । गलिते, च्युते च । पद-नन् । अधोमुख-

**पन्नग** पु० पन्नमधोमुखं यथा तथा गच्छति, पद्भ्यां न गच्छति वा, गम-ड । सर्पे, पद्मकाष्ठे च । जातौ ङीप् । सर्प्याम् ।

**पन्नगाशन** पु० पन्नगानश्नाति अश-ल्यु । गरुडे ।

**पन्नद्धा** स्त्री० पदि नद्धा बद्धा नह-क्त । चर्म्मपादुकायाम् ।

**पन्नद्धी** स्त्री० पद् नह्यतेऽनया नह-ष्ट्रन् षित्त्वात् ङीष् । चर्म्मपादुकायाम् । [यथाम् ।

**पम्पा** स्त्री० नदीभेदे, 'पश्य लक्ष्मण ! पम्पायामि'ति रामा-

**पय** गतौ भ्वा० आत्म० सक० सेट् । पयते अपयिष्ट ।

**पयःकन्दा** स्त्री० पयः क्षीरं कन्दे यस्याः । क्षीरविदार्य्याम्

**पयस्** न० पा-असुन् इकारश्चान्तादेशः । दुग्धे, जले च ।

**पयस्य** त्रि० पयसो विकारः यत् । दुग्धविकारे दध्यादौ । विडाले पु० । क्षीरकाकोल्याम्, अर्कपुष्पिकायां, कुटुम्बिन्याञ्च स्त्री० ङीप् । आमिक्षायां स्त्री० टाप् ।

**पयस्विनी** स्त्री० पयस्+अस्त्यर्थे विनि । धेनौ, नद्यां, काकोल्याम्, क्षीरकाकोल्यां, दुग्धफेन्यां, क्षीरविदार्य्यां, छाग्यां, जीवन्त्यां, रात्रौ च ।

**पयोधर** पु० पयांसि धारयति धृ-णिच्-अच् ह्रस्वः । मेघे, स्त्रीस्तने । 'प्रायः पयोधरसमुन्नतिरत्र हेतु'रित्युद्भटः नारिकेले, कशेरुणि; कोषकारे च । [निध्यादयोऽप्यत्र ।

**पयोधि** पु० पयांसि धीयन्तेऽत्र पयस्+धा-कि । समुद्रे पयो-

**पयोर** पु० पयो जलं रजति रन्ज-ड । खदिरे ।

**पयोलता** स्त्री० पयःप्रधाना लता शाक० । क्षीरविदार्य्याम्

**पयोव्रत** न० पयोमात्रपानरूपं व्रतम् । द्वादशाहसाध्ये व्रतभेदे

**पर** त्रि० पॄ-भावे अप्, कर्त्तरि अच् वा । अन्यस्मिन् भिन्ने इत्यर्थे, उत्तरे, दूरे, सीमापरिच्छिन्ने, श्रेष्ठे च मोक्षे, केवले, ब्रह्मणि च न० । 'द्वे ब्रह्मणी वेदितव्ये परञ्चापर'मिति श्रुतिः । शत्रौ पु० ।

**परःशत** न० शतात् परे नि० । शताधिकसंख्यायां, तत्संख्यातेषु च

**परःश्वस्** अव्य० श्वः परे दिने नि० । आगामिपरदिनस्यात् परस्मिन् दिने । [तत्संख्यान्वितेषु च ।

**परःसहस्र** न० सहस्रात् परे नि० । सहस्राधिकसंख्यायां

**परकीय** त्रि० परस्येदम् छ-कुक् च । परसंबन्धिनि । उपनायिकायां स्त्री० ।

**परच्छन्द** पु० ६त० । परेच्छायां परच्छन्दानुवर्त्तिनीत्युद्भटः परस्य छन्देन छन्दो यस्य । पराधीने त्रि० ।

**परजात** त्रि० परस्मात्, परकर्त्तृकपोषणाद्वा जातः जन-ड । अन्येन जाते, परप्रयत्नेन पुष्टे च । [प्यत्र ।

**परतन्त्र** त्रि० परस्तन्त्रं प्रधानं यस्य । पराधीने परायत्तादयो-

**परत्व** न० परस्य भावः त्व । वैशेषिकमतसिद्धे गुणभेदे, भेदे च ।

**परपाकनिवृत्त** पु० परार्थः देवातिथ्याद्यर्थः पाकस्तस्मान्निवृत्तः । 'गृहीतात्मिं समारोप्य पञ्च यज्ञान् निर्वपेत् । परपाकनिवृत्तोऽसावि'त्युक्ते पञ्चयज्ञाकारके ।

**परपाकरत** पु० परस्य पाकस्तत्र रतः रम-क्त । 'पञ्चयज्ञान् स्वयं कृत्वा परान्नमुपजीवति । सततं प्रातरुत्थाय परपाकरतस्तु स' इत्युक्ते परपकान्नभक्षणे सततं प्रवृत्ते ।

**परपिण्डाद** त्रि० परस्य पिण्डं ग्रासमत्ति अद-अण् । नित्यं परान्नोपजीविनि ।

**परपुष्ट** पु० परया काकया पुष्टः पुष-क्त सर्व्वनाम्नः पुंवत् । कोकिले, कोकिलया हि डिम्बस्फोटनादक्षमया नीडस्य काकडिम्बमपसार्य्य स्वडिम्बे तत्र स्थापिते काक्या स्वडिम्बबुद्ध्या ऽसौ पुष्यते इति लोकप्रसिद्धिः । परभृतादयोऽप्यत्र । अन्यपालिते त्रि० । वेश्यायाम् स्त्री० ।

**परपूर्व्वा** स्त्री० पर इतरः पूर्व्वो यस्याः । 'पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते । परपूर्व्वेति सा प्रोक्ते'त्युक्तायां पुनर्भुवि स्त्रियाम् ।

**परभाग** पु० भज्यते सेव्यतेऽनेन भागः उत्कर्षः कर्म० । अत्यन्तोत्कर्षे 'लब्धपरभागतये'ति रघुः । भागः खण्डः कर्म० । श्रेष्ठांशे, ६त० । परस्य भागे अंशे । [क्विप् । काके ।

**परभृत्** पु० परं कोकिलडिम्बं स्वडिम्बबुद्ध्या बिभर्त्ति, भृ-

**परम्** अव्य० पृ-अमि । नियोगे, क्षेपे केवले च ।

**परम** त्रि० परं परत्वं माति मा-क । उत्कृष्टे, प्रधाने, आद्ये, प्रणवे च ।

**परमम्** अव्य० पर+मा-डमि । अनुज्ञायाम्, स्वीकारे च ।

**परमर्षि** पु० परमं ब्रह्म ऋषति गच्छति जानाति वा ऋषगतौ इन् । 'ऋषति परमं यस्मात् परमर्षिस्ततः स्मृत' इति निरुक्ते ब्रह्मवेत्तरि । कर्म० । श्रेष्ठे मुनौ । [संन्यासिभेदे

**परमहंस** पु० कर्म० । कुटीचकादिषु चतुर्षु सन्न्यासिषु मध्ये

**परमाणु** पु० कर्म० । वैशेषिकसिद्धे पृथिव्यादीनां चतुर्णां भूतानां द्व्यणुकरूपावयवारम्भके सूक्ष्मभूते ।

**परमात्मन्** पु० कर्म० । 'आत्माऽस्य जगतो यस्मात् सर्व्वोत्कर्षाश्रयो यतः । परमात्मा परं ब्रह्म तेन वेदे प्रकीर्त्तित' इत्युक्ते परब्रह्मणि । [परमतत्वज्ञस्य ।

**परमान्न** न० कर्म० । पायसे दुग्धपक्वेऽन्ने देवादिप्रियत्वात्

**परमायुष** पु० परममायुर्यस्य ष० । असनवृक्षे ।

**परमायुस्** न० परमं शेषावधिकं आयुर्जीवितकालः । मनुष्यादीनां ज्योतिषोक्ते शताब्दादिकाले । विस्तरस्तु वृहदभिधाने

**परमेश्वर** पु० कर्म० । जगत्सृष्ट्यादिकारके सगुणे त्रिमूर्त्तिके ब्रह्मणि, चक्रवर्त्तिनि नृपे च ।

**परमेष्ठिन्** पु० परमे ब्रह्मणि तिष्ठति लीयते स्था-इनि डित्वत्वम् । चतुर्मुखे ब्रह्मणि, शालग्रामसूर्त्तिभेदे च ।

**परम्परा** स्त्री० परम् अतिशयेन पृणाति पिपूर्त्ति वा पृ-पृ-वा अच् । वंशे, व्यवधाने, सन्ततौ अविच्छिन्नधारायाम् 'एवं परम्पराप्राप्त'मिति गीता । वधे, अनुक्रमे च ।

**परम्पराक** न० परम् अतिशयेन परा श्रेष्ठा परम्परा तया धारया आकोहिंसनं यत्र अक कुटिलगतौ घञ्, प्रशस्ता परम्परा हिंसा अनिष्टाजनकत्वात् कन् वा नपुंसकत्वं कोषात् । यज्ञार्थे पशुहनने । 'या वेदविहिता हिंसा नियतास्मिंश्चराचरे । अहिंसामेव तां विद्यादि'ति मनूक्तेस्तस्या अहिंसात्वेन हि प्राशस्त्यम् । [गते ।

**परम्परीण** त्रि० परम्परया धारयागतः ख । अविच्छेदसन्तत्या-

**परवश** त्रि० परस्य वशः आयत्तः । पराधीने ।

**परवत्** त्रि० परः परायत्ततास्त्यस्य मतुप् मस्य वः । पराधीने

**परशु** पु० परं शृणाति शॄ-कु डिच्च । परश्वधे (टाङ्गी) अस्त्रभेदे । स्पृश-शुन् पृ आदेशः । पर्शुरप्यत्र, अस्त्रमात्रे च ।

**परशुराम** पु० परशुधारी रामः शाक० । जमदग्निजे भगवदवतारभेदे येन परशुना त्रिःसप्तकृत्वो भूमिर्निःक्षत्रिया कृता ।

**परश्व(स्व)ध** पु० श्वि-ड श्वो वृद्धिः परस्य श्वं धयति, परस्य स्वं काष्ठं धयति वा धे-क । कुठारे अस्त्रभेदे ।

**परस्पर** त्रि० पर+वीप्सायां द्वित्वम् सुट् च । अन्योन्यस्मिन् पदार्थे । स्त्रीनपुंसकयोस्तु सार्व्वविभक्तिक आसु प्रत्ययः । परस्पराम् परस्परमिति सर्व्वविभक्तौ ।

**परस्मैपद** न० परस्मै परोद्देशेन पदं फलबोधनं यस्मात् । व्याकरणोक्तेषु तिबादिषु नवसु । स्वरितेतः, ञितश्च धातोः कर्त्तरि तिबादिभिर्नवभिर्हि परार्थमेव फलं बोध्यते ।

**परा** अव्य० पृ-आ । प्रातिलोम्ये प्राधान्ये, धर्षणे, आभिमुख्ये, त्यागे, विक्रमे, भृशार्थे, गतौ, भङ्गे, अनादरे, तिरस्कारे, प्रत्यावृत्तौ च । वैयाकरणोक्तौ 'परा ज्ञानमयीमि'त्युक्ते मूलाधारस्थे शब्दभेदे, 'सा परा यथाक्षरमधिगम्यते' इति श्रुत्युक्तायां ब्रह्मविद्यायाञ्च स्त्री० ।

**पराक** पु० 'यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् । पराको नामे'त्युक्ते द्वादशाहोपवाससाध्ये प्रायश्चित्तरूपे व्रतभेदे

**पराक्पुष्पी** स्त्री० पराक् पुष्पं यस्याः । अपामार्गे ।

**पराक्रम** पु० परा+क्रम-घञ् न वृद्धिः । बले देहगसामर्थ्ये ।

**पराग** पु० परागच्छति परा+गम-ड । पुष्परेणौ, पुष्परजसि,

'स्फुटपरागपरागतपङ्कज'मिति माघः । स्नानीयद्रव्ये-कुङ्कुमचूर्णादौ, उपरागे, चन्दने च ।

पराङ्मुख त्रि० पराक् प्रत्यावृत्तं मुखं यस्य । विमुखे ष्यार अकार्यात् निवृत्तावुन्मुखे ।

पराच् त्रि० परा अञ्चति अनुच-क्विन् प्रत्यक्तत्त्वभिन्ने-इदं-व्यवहारविषये-वाह्ये वस्तुनि ।

पराचित त्रि० परेणाचितः पुष्टः व्याप्तो वा आ+चि क्त । परेण प्रतिपालिते, सम्यग्व्याप्ते च ।

पराचीन त्रि०पराग्भवः पराच्+ख। पराङ्मुखे,परकालिके च

पराजय पु० परा+जि-अच् । पराभवे (हारि) ।

पराधीन त्रि०परेऽधि इति वाक्ये समासे अध्युत्तरपदात् ख, परस्याधीनो वा । परायत्ते । [अन्यस्यान्ने न०

परान्न त्रि० परस्यान्नमेवान्नमस्य। परान्नोपजीविनि । ६त०।

पराभव पु० परा+भू-अप् । तिरस्कारे, अभिभवे, विनाशे च

परामर्श पु० परा+मृश-घञ् । युक्तौ, विवेचने, व्याप्त्याद्युक्ते व्याप्तिविशिष्टतया पक्षस्य ज्ञाने च यथा वह्निव्याप्यधूमवान् पर्वत इत्यादि ज्ञानम् ।

परायण न० परमयनं स्थानम् । अत्यन्तासक्तौ, उत्तमाश्रये च ६त०। अत्यासक्ते, यथा धर्मपरायणः धर्मे अत्यन्तासक्तः । तत्परे, अभीष्टे च त्रि० ।

परारि अव्य० पूर्व्वतरे वर्षे पूर्वतर+अरि परादेशः नि० । पूर्व्वतरवत्सरे गतवतीयवत्सरे। परोऽरिः। अत्यन्तशत्रौ पु०

पराकु पु० पराऋच्छति परा+ऋ-उण् । कारवेल्लवृक्षे (उच्छा) ।

परार्द्ध न० अर्ध-अच् कर्म०। चरमसंख्यायां 'परिपरार्द्धं गणितं यदि स्या'दिति नैषधम् । कर्म० । ब्राह्मस्य आयुषोद्वितीयार्द्धे । [यत् । श्रेष्ठे 'परार्द्ध्यवर्णास्तरणे'ति रघुः ।

परार्द्ध्य त्रि० परार्द्धं चरमसंख्यामुपचारात् अर्हतमर्हति

परावर्त्त पु० परा+वृत-घञ् । परीवर्त्ते विनिमये ।

परावह पु० परा+वहति परा+वह-अच् । सप्तवायुमध्ये परिवहवायोरूर्द्ध्वस्थे वायुभेदे ।

पराशर पु० व्यासपितरि, मुनिभेदे ।

पराश्रया स्त्री० परमाश्रयति आ+श्रि-अच् । वन्दायाम् (परगाछा) अन्याश्रयिणि त्रि० ।

परासन न० परा+अस-ल्युट् । मारणे ।

परासु त्रि० परागताः असवो यस्य । मृते ।

परास्कन्दिन् पु० परान् आस्कन्दति-णिनि । चौरे ।

परास्त त्रि० परा+अस-क्त । निरस्ते, पराजिते च ।

पराह्ण पु० परमुत्तरमहः कर्म० टच् समा० पुंस्त्वञ्च । परदिने

पराह्ण पु० परमह्नः एकदेशिस० टच् समा० अह्लादेशः णत्वम्। दिवसस्य चरमभागे, स्त्रलुकेऽपराह्णकाले च ।

परि अव्य० पृ-इन् । सर्वत इत्यर्थे,वर्ज्जने,व्याप्तौ,शेषे, कञ्चित् प्रकारं प्राप्ते, निरसने, पूजायां, भूषणे, उपरमे, शोके, सन्तोषभाषणे, अतिशये, त्यागे, नियमे च ।

परिकर पु० परि+कृ-अप् । पर्य्यङ्के, परिवारे, समारम्भे, समूहे प्रगाढ़गात्रबन्धे, विवेके, सहचारिणि च ।

परिकर्म्मन् न०। कर्म संस्कारादि,तद्यस्माद्वा ५ब० देहसंस्कारे, कुङ्कुमाद्यङ्गोद्वर्त्तनीयद्रव्ये, भूषणे च गणितानुगुणेषु सङ्कलनव्यवकलनगुणनभागवर्गवितत्प्रद्यनतत्पदकर्मेषु अष्टविधेषु संस्कारेषु च । ६त० । सेवके त्रि०।

परिक्रम पु० परि+क्रम-घञ् न वृद्धिः । क्रीड़ादौ, पूजादौ प्रदक्षिणीकरणाद्यर्थं पादेन गमने च ।

परिक्रिया स्त्री० परितः क्रिया वेष्टनम् । परिखादिना पुरादेर्वेष्टने । [भेदे परिचितोऽयत ।

परिक्षित् पु० अर्ज्जुनेन सुभद्रायांजनितादिते कुरुवंश्ये न्टपति-

परिखा स्त्री० परितः खन्यते खन-ड । पुरादौ रिपुप्रभृतीनां दुष्प्रवेशतासिद्धये गर्त्तरूपायां जलाधारस्थाने वेष्टनाकारभूसौ । [वेष्टिते, गते च ।

परिगत त्रि० परि+गम-क्त । प्राप्ते, ज्ञाते, विस्मृते, वेष्टिते,

परिग्रह पु० परि+ग्रह-अप् । स्वीकारे,सैन्यपश्चाद्भागे च कर्मणि घ। भार्य्यायां, परिजने च। करणे अप्। मूले, शपथे च।

परिघ पु० परि+हन-क नि० । परिघातास्त्रे लौहमुद्गरादौ, लौहमुखे लगुड़े-मुद्गरे, मूले, काचघटे, घटे, विष्कम्भावधिके ऊनविंशतितमे योगे च । [प्रणये च ।

परिचय पु० परि+चि-अच्। ज्ञातस्य पौनःपुन्येन ज्ञाने,संस्तवे,

परिचर्य्या स्त्री० परिचर+क्यप् । सेवायाम् ।

परिचाय्य पु०परिचीयते संस्क्रियतेऽसौ चि-ण्यत्। यज्ञाग्नौ।

परिचारक त्रि० परि+चर-ण्वुल् । सेवके भृत्ये ।

परिच्छद पु० परि+छद-णिच्-घ ह्रस्वः । उपकरणे छत्त्रच रथप्रदातौ, वस्त्रादिभूषणे, परिवारे च । 'सेनापरिच्छदस्तस्ये'ति रघुः ।

परिच्छेद पु० परि+छिद-घञ् । विशेषरूपेण इयत्ताकरणे, सर्गादिस्थानीये ग्रन्थस्य विच्छेदस्थाने च ।

परिजन पु० परिगतो जनः । परिवारे, प्रतिपाल्ये जने ।

परिणत त्रि० परि+नम-क्त णत्वम् । परिपक्के, वृद्धिं गते,अवस्थान्तरं प्राप्ते, तिर्य्यग्दन्तावघातिनि गजे च ।

परिणय पु० परि+नी-अच्। विवाहे।

**परिणाम** पु० परि+नम-घञ् । प्रकृतेरन्यथाभावे विकारे,शेषे, अर्थालङ्कारभेदे च ।

**परिणाह** पु० परि+नह-घञ् । विस्तारे ।

**परिणेतृ** पु० परि+नी-तृच् । विवाहकर्त्तरि भर्त्तरि ।

**परितस्** अव्य० परि+तसिल् । सर्व्वत इत्यर्थे चतुर्द्दिक्षु ।

**परिताप** पु० परितप्यते, अत्र वा भावादौ घञ् । दुःखे, उष्णतायाम्, शोके, भये,कम्पे,नरकभेदे च । [वारणे च ।

**परित्राण** न० परि+त्रै-ल्युट् । रक्षणे,अनिष्टे प्रवृत्तस्य नि-

**परिदान** न० परिवर्त्तेन दानम् दा-ल्युट् । विनिमये द्रव्या-न्तरग्रहणेन द्रव्यान्तरदाने ।

**परिदेवन** न० परि+दिव-ल्युट् । अनुशोचने, विलापे,कृतस्य कर्मणोऽनुचितत्वधियानुतापे च । णिच्-युच् । परिदेवना-प्यत्र, लाभे च स्त्री० । [वस्त्रे नाभेरधोधृतवसने ।

**परिधान** न० परिधीयते परि+धा-कर्मणि ल्युट् । परिहित-

**परिधि** पु० परि+धा-कि । चन्द्रसूर्य्यसमीपस्थे मेघादिसन्नि कर्षात् जायमाने वेष्टनाकारे मण्डले (सूर्य्यसभा) (चन्द्र सभा) यज्ञियपशुबन्धनार्थं निखातायां यज्ञियतरोः पला-शादेः शाखायाम्,गोलमण्डलस्य परितो वेष्टनसूत्रमाने, परितः पार्श्वे च ।

**परिधिस्थ** त्रि० परिधौ तिष्ठति स्था-क । परिचारके, युद्धादौ रथिनो रक्षार्थं परितः स्थिते सैन्यादौ च ।

**परिपण** न० परिपण्यते व्यवह्रियतेऽनेन पण-घञ् । मूलधने

**परिपन्थक** पु० परिपन्थयति दोषाख्यानं गच्छति ण्वुल्, पन्थानं वर्ज्जयित्वा गच्छति वा कन् पन्थादेशः । शत्रौ ।

**परिपन्थिन्** पु० परि+पन्थि-इनि । शत्रौ ।

**परिपाक** पु० परि+पच-घञ् । नैपुण्ये, उत्तमपाके च ।

**परिपाकिनी** स्त्री०परिपाक+अस्त्यर्थे इनि । त्रिवृति(तेओटी)

**परिपाटि(टी)** स्त्री० परि+चु०पट-इन् । अनुक्रमे,आनुपूर्व्याम्

**परिपुष्करा** स्त्री० परितः पुष्करं मुखं यस्याः । (गोमुक्) गोडुम्बायाम् । [यमाने मुस्ताकारे पदार्थे ।

**परिपेल** न० परि+पेल-अच् । कैवर्त्तीमुस्तके शैवलमध्ये जा-

**परिपेलव** न० परितः पेलवं मृदुता यस्य । कैवर्त्तीमुस्तके ।

**परिप्लव** न० परि+प्लु-अच् । चञ्चले अस्थिरे ।

**परिबर्ह** पु० परि+बर्ह-घञ् । नृपयोग्ये हस्त्यश्वरथादिपरिच्छदे

**परिभ(भा)व** पु०परि+भू अप्,घञ् वा । अनादरे, तिरस्कारे च

**परिभाषण** न०परि+भाष-ल्युट् । निन्दया दुष्टवचने आलापे, नियमे च । [मनादृत्य समुदायार्थे विशिष्टसंज्ञायाम् ।

**परिभाषा** स्त्री० परि+भाष-अ । कृत्रिमसंज्ञायाम् अवयवार्थ-

**परिभूत** त्रि० परि+भू-क्त । तिरस्कृते, अनादृते च ।

**परिमण्डल** त्रि० परिगतो मण्डलम् । वर्त्तुलाकारे ।

**परिमल** पु० परि+मल-अच् । कुङ्कुमचन्दनादिमर्द्दने, मर्द्दनो द्भूते सुगन्धौ,परितः सम्बन्धे च । 'सतां परिमल' इत्युदयनः

**परिमाण** न० परिमीयतेऽनेन परि+मा-ल्युट् । (माप) तुलाङ्गुल प्रस्थादिभिर्द्रव्यस्य परिच्छेदे । [दिपरिमाणे च ।

**परिमित** त्रि० परि+मा-क्त । कृतपरिमाणे, युक्ते, यथा-

**परि(री)रम्भ** पु० परि+रभ-घञ् मुम् च वा दीर्घः । आलिङ्गने

**परिवत्सर** पु० संवत्सरपञ्चकान्तर्गते वत्सरभेदे ।

**परिवर्ज्जन** न० परिवर्ज्यतेऽसुभिरनेन वृज-णिच्-ल्युट् । मारणे । वृज-भावे-ल्युट् । त्यागे ।

**परि(री)वर्त्त** पु० परि+वृत-भावे घञ् वा दीर्घः । विनिमये । आधारे,घञ् । युगान्ते काले,ग्रन्थविच्छेदे अध्यायादौ च कर्त्त-रि अच् । कूर्मराजे । भावे ल्युट् । परिवर्त्तनं विनिमये ।

**परिवह** पु० परि+वह-अच् । सप्तवायुमध्यपातिनि वायुभेदे ।

**परि(री)वाद** पु० परि+वद-घञ् वा दीर्घः । अपवादे 'गुरो-र्यत्र परीवाद' इति मनुः ।

**परिवादिनी** स्त्री० परितो वदति स्पष्टाक्षरमिव नदति वद-णिनि । सप्ततन्त्रीयुक्तायां,वीणायाम् अपवादकर्त्र्यां स्त्रियाञ्च

**परि(री)वाप** पु० परि+वप-घञ् वा दीर्घः । वपने । वप-णिच्-घञ् । मुण्डने । ल्युट् । परिवापणमप्यत्र ।

**परिवापित** त्रि० परि+वप-वा-वा णिच्-क्त । मुण्डिते ।

**परि(री)वार** पु० परिव्रियतेऽसौ अनेन वा परि+वृ-घञ् वा दीर्घः । परिजने कुटुम्बादौ,खड्गकोषे, (खाप) परिवादे च ।

**परि(री)वाह** पु० परि+वह-घञ् वा दीर्घः । जलोच्छ्वासे परितः समन्ताज्जलानामुच्छलनात् तथा त्वम् ।

**परिविन्न** त्रि० परिविद्यतेऽसौ कर्म्मणि-क्त । अनुजस्य विवाहकाले अनूढे ज्येष्ठे । तादृश्यां भगिन्यां स्त्री० । ज्येष्ठा-नूढताकालेऽनुजोद्वाहरूपः दोषः परिवेदनं तेन दुष्यत इति तस्य परिवेदनकर्म्मत्वम् ।

**परिवित्ति** पु० परिविद्यते परिवेदनजन्यदोषेण दुष्यतेऽसौ परि+विद-कर्म्मणि क्तिच् । प्रागूढानुजस्यानूढे ज्येष्ठे

**परिवृढ** त्रि० परि+वृह-क्त । अधिपे प्रभौ ।

**परिवेत्तृ** पु० परि+विद-तृच् । ज्येष्ठेऽनूढे प्राग्विवाहरूपपरि वेदनकर्त्तरि अनुजे भ्रातरि ।

**परिवेदन** न०परि वर्ज्जयित्वा उचितकालं वेदनं विवाहः लाभो वा । ज्येष्ठे,अनूढे,अकृताग्न्याधाने च कनिष्ठस्य विवाहकरणे, अग्न्याधानकरणे च दुरदृष्टजनके स्मृत्युक्ते दोषे ।

**परिवेदनी** स्त्री० परिविद्यते यया परि+विद्-करणे ल्युट् ङीप्। यामूढ्वा परिवेदनदोषो भवति तस्यां स्त्रियाम्, 'परिवेत्ता परिवित्तिः यया च परिविद्यते। सर्व्वे ते नरकं यान्ति दातृयाजकपञ्चमा' इति मनुः।

**परिवेश** पु० परि+विश-व्याप्तौ भावे घञ्। वेष्टने, मेघादि संपर्काज्जायमाने चन्द्रार्कमण्डलस्य वेष्टनाकारे। 'वाताद्यै र्मण्डलीभूताः सूर्य्याचन्द्रमसोः कराः। मालाभा व्योम्नि दृश्यन्ते परिवेशस्तु स स्मृत' इत्युक्ते मण्डले पदार्थे।

**परिवेषण** न० परि+विष-णिच्-ल्युट्। भोजनार्थमन्नादेः भोजनपात्रे दाने।

**परिव्याध** पु० परि+व्यध-कर्त्तरि ण। अम्बुवेतसे।

**परिव्राज्** पु०परि+व्रज-क्विप् नि०। सर्व्वकर्माणि परित्यज्य आश्रमान्तरगामिणि चतुर्थाश्रमिणि यतौ।

**परिव्राज(क)** पु० परित्यज्य सर्व्वकर्माणि व्रजति व्रज-घञ् ण्वुल वा। चतुर्थाश्रमिणि यतौ। [प्रतिपादके ग्रन्थे।

**परिशिष्ट** न०परि+शिष-क्त अवशेष अस्त्यर्थे अच्। अवशिष्टांश

**परिश्रम** पु० परि+श्रम-घञ् न वृद्धिः। व्यायामे क्लेशकारके आयासे।

**परिश्रय** पु० परि+श्रि-आधारे अच्। सभायाम्।

**परिषद्** स्त्री०परितः सीदत्यस्याम् सद-क्विप्। सभायां, धर्मोपदेशकपण्डितसमुदाये च। [पार्श्वचरे, परिश्रमे च।

**परिषद** पु० परितः सीदति गच्छति सद-अच्। अनुचरे

**परिषद्वल** त्रि० परिषद्+अस्त्यर्थे वलच्। सभासदे।

**परिष्क(स्का)न्द** त्रि० परिष्कद्यते पूर्य्यते परि+स्कन्द घञ् वा। षत्वम्। परपुष्टे। क्त। परिस्कन्नम्यत्र वा षत्वे परिष्कन्नश्च।

**परिष्कार** पु० परि+कृ-घञ् सुट् च। भूषणे विद्यमानवस्तुनो गुणान्तरस्य सज्जनादौ, संस्कारे च। [नादिसंस्कारे च।

**परिष्कृत** त्रि०परि+कृ-क्त सुट् च। भूषिते वेष्टिते,कृतमार्ज्ज-

**परिष्वङ्ग** पु० परि+स्वन्ज-घञ्। आलिङ्गने।

**परिसर** पु० परि+सृ-अप्। नदीनगरपर्व्वतादेः समीपस्थाने, मृत्यौ, विधाने च। [न्तात् गमने च।

**परिसर्ग** पु० परितः सृज्यते सृज-घञ्। परितोवेष्टने सम-

**परिसर्य्या** स्त्री० परि-सृ-यत्। सर्व्वतो गमने।

**परिस्पन्द** पु० परि+स्पन्द-घञ्। समन्तात् चलने, कुसुमपत्रादेः रचनाभेदे, परिष्कारे, परिजने च।

**परि(री)स्रुत्** स्त्री०परिस्रवति पाकादिना निर्गलति स्रु-क्विप् वा दीर्घः। मदिरायाम्। क्त। परिस्रुताप्यत्र। [अनादरे च

**परि(री)हार** पु०परि+हृ-घञ् वा दीर्घः। त्यागे,दोषापकरणे,

**परि(री)हास** पु० परि+हस-घञ् वा दीर्घः। केलौ।

**परीक्षक** त्रि० प्रमाणेन परीक्षते परि+ईक्ष-ण्वुल्। प्रमाणोपन्यासेन विषयनिरूपके।

**परीक्षण** न० परि+ईक्ष-ल्युट्। प्रमाणेन वस्तुनिरूपणे।

**परीक्षा** स्त्री० परि+ईक्ष-अ। दुष्टादुष्टत्वावलोचने प्रमाणेन वस्तुनिरूपणे, स्मृत्युक्ते दुष्टादुष्टत्वसाधके तुलादिप्रमाणे च

**परीष्टि** स्त्री० परि+इष-क्तिन्। अन्वेषणायाम्, परिचर्य्यायाञ्च

**परीसार** पु० परि+सृ-घञ्। सर्व्वतोगमने।

**परुत्** अव्य० पूर्व्वस्मिन् वर्षे उत् परभावादेशः। गतवत्सरे।

**परुत्त** त्रि० परुद्भवः त्न। गतवर्षभवे पदार्थे।

**परुष** न० पॄ-उषन्। निष्ठुरवचने। नीलीभिण्ट्याम् पु०। चित्रवर्णे, कठोरे च त्रि०।

**परुस्** न० पॄ-उसि। ग्रन्थौ, (गांट) पर्व्वणि च।

**परेत** त्रि० परा+इण-क्त। मृते। [क्विप् वा। यमे।

**परेतराज(ज्)** पु० ६त० टच् समा०, परेतेषु राजते राज-अच्

**परेद्यवि** अव्य० परस्मिन्नहनि नि०। परदिवसे इत्यर्थे।

**परेद्युस्** अव्य०परस्मिन्नहनि पर+एद्युस्। परदिने। [गवि।

**परेष्टुका** स्त्री० परैरिष्यते इष-तु स्वार्थे कन्। बहुप्रसवायां

**परैधित** त्रि० परैरेधितः एध-णिच्-क्त। अन्यपालिते।

**परोक्ष** अव्य० अक्ष्णः परम् अव्य०सुट् नि०। अप्रत्यक्षे,अर्श-आद्यच्। तद्विषये त्रि०।

**परोष्णी** स्त्री०परा-उष्णा-कर्म०गौरा० ङीप्। तैलपायिकायाम्

**पर्कटि** स्त्री० पृच-अटि न्यङ्क्वा० कुत्वम् (पाकड़) प्लक्षवृक्षे।

**पर्कटिन्** पु०पृच-अटिनि नि०कुत्वम्। प्लक्षवृक्षे। [(पाकड़)।

**पर्जन्य** पु० पृषु सेचने अन्य जान्तादेशः। इन्द्रे, मेघे, 'यज्ञाद्भवति पर्जन्य' इति मनुः। मेघशब्दे च। दारुहरिद्रायां स्त्री०

**पर्ण** हरितभावे अ०चु०उभ०सक०सेट्। पर्णयति-ते अपपर्णत्-त

**पर्ण** न० पॄ-न, पर्ण-अच् वा। पत्रे, पक्षे च 'सुपर्णो गरुडो मत इति। पलाशवृक्षे पु०। ताम्बूले न०। पत्रयुक्ते त्रि०।

**पर्णखण्ड** पु० पर्णमेव खण्ड्यते यस्य पुष्पहीनत्वात्। पुष्पहीने वनस्पतौ वृक्षे।

**पर्णचोरक** पु० पर्णं चोरयति चुर-ण्वुल्। चोरनामगन्धद्रव्ये

**पर्णनर** पु० पर्णनिर्म्मितः नराकारः शवः। शवस्यलाभादौ स्मृत्युक्ते दाह्ये शवप्रतिनिधीभूते पर्णनिर्म्मिते नराकारे।

**पर्णभेदिनी** स्त्री० पर्णानि भिनत्ति भिद-णिनि। प्रियङ्गुवृक्षे

**पर्णलता** स्त्री० पर्णप्रधाना लता शाक०। ताम्बूलीलतायाम्।

**पर्णवल्ली** स्त्री० पर्णं प्रधाना वल्ली शाक०। पलाशीलतायाम्।

**पर्णशाला** स्त्री० पर्णनिर्म्मिता शाला शाक०। पत्रनिर्म्मिते

कुटीरे । [काले गलद्वालयाभ्रसम्भव इति मल्लिः ।

**पर्णाशन** पु० पर्णानि अश्नाति अश-ल्यु । मेघे तस्य पत्रभक्षण

**पर्णास(सि)** पु० पर्णानि अस्यति अस-अच् इन् वा । तुलस्याम्

**पर्णिन्** पु० पर्ण+अस्त्यर्थे इनि । वृक्षे । माषपर्ण्यां स्त्री० ङीप् ।

**पर्द** अपानवायुक्रियायां भ्वा०आत्म०अक०सेट् । पर्दते अपर्द्दिष्ट

**पर्प** गतौ भ्वा०पर०सक०सेट् । पर्पति अपर्पीत् ।

**पर्प** न० पृ-प । गृहे, नवतृणे, खञ्जवाहनसाधने पीठादौ ।

**पर्पट** पु० पर्प-अटन् । (क्षेतपापड़ा) क्षुपभेदे, मुद्गादिचूर्णकृते (पापर) ख्याते पिष्टकभेदे, सौराष्ट्रमृत्तिकायाम्, उत्तरदेश-भवे सुगन्धिद्रव्ये च स्त्री० गौरा० ङीष् ।

**पर्ब** गतौ भ्वा०पर०सक०सेट् । पर्बति अपर्बीत् ।

**पर्य्यङ्क** पु० परिगतोऽङ्कम् प्रा० । खट्वायाम्, योगपट्टे 'पर्य्यङ्क-ग्रन्थिबन्धद्विगुणितभुजगाश्लेषे'त्यादि मृच्छकटिकम् ।

**पर्य्यङ्कपादिका** स्त्री० पर्य्यङ्क इव पादा यस्याः संज्ञायां कन् । कोलशिम्ब्याम् ।

**पर्य्यङ्कबन्ध** पु० पर्य्यङ्कस्य योगपट्टस्य बन्धः बन्ध-घञ् । योग-पट्टवस्त्रादिना पृष्ठजानुजङ्घाबन्धने 'पर्य्यङ्कबन्धं निबिड़ बिभेदे'ति कुमारः । ल्युट् । अत्रैव न० ।

**पर्य्यटन** न० परितोऽटनम् । पुनःपुनर्भ्रमणे ।

**पर्य्यनुयोग** पु० परितोऽनुयोगः प्रश्नः । दूषणार्थं जिज्ञासा-याम् एतेनास्यापि पर्य्यनुयोगस्यानवकाश इति दायभागः ।

**पर्य्यन्त** पु० परिगतोऽन्तं सीमाम् । ग्रामवनादेः शेषसीमायाम्

**पर्य्यन्तभू** स्त्री० पर्य्यन्तस्य शेषसीमायाः भूः । ग्रामादेः शेषसीमास्थाने । परिसरे ।

**पर्य्यय** पु० परित्यज्य शास्त्रलौकिकमर्य्यादाम् अयः इण-अच् । शास्त्रलोकव्यवहारातिक्रान्ते आचारे ।

**पर्य्यवस्था** स्त्री० परि+अव+स्था-अङ् । विरोधे, प्रतिपक्षतारे च । ल्युट् । तत्रैव न० । तृच् तत्कर्त्तरि त्रि० ।

**पर्य्यस्त** त्रि० परि-अस-क्षेपे क्त । विक्षिप्ते, पतिते, हते च ।

**पर्य्याण** न० परि+या-ल्युट् पृ० । अश्वपृष्ठस्थायां पल्ययने (जिन्) इण-ल्युट् । पर्य्ययणमप्यत्र ।

**पर्य्याप्त** न० परि+आप-भावे-क्त । यथेष्टे, तृप्तौ, सामर्थ्ये, नि-वारणे, योग्यत्वे च । कर्त्तरि क्त । समर्थे, प्राप्ते च त्रि० ।

**पर्य्याप्ति** स्त्री० परि+आप-क्तिन् । शरणादितो निवारणे, रक्षणे, प्राप्तौ, साकल्येन प्राप्तौ, न्यायमतसिद्धे समुदाये वर्त्तमानपदार्थानां सर्व्वत्र सम्बन्धरूपे सम्बन्धभेदे च ।

**पर्य्याय** पु० परि+इण घञ् । अनुक्रमे, प्रकारे, अवसरे, निर्माणे, द्रव्यधर्म्मभेदे समार्थबोधके शब्दे च ।

**पर्य्यायशयन** न० पर्य्यायेण क्रमेण शयनम् । यामिकभटानां क्रमेण शयने ।

**पर्य्युदञ्चन** न० पर्य्युदच्यते उद्ध्रियते कर्म्मणि ल्युट् । ऋणे ।

**पर्य्युदस्त** त्रि० परि+उद्+अस-क्त । निवारिते फलप्रत्यवाय-शून्यतया भेदार्थकनञा निषिध्यमाने 'यथा रात्रौ श्राद्ध न कुर्व्वीते'ति अत्र हि रात्रौ श्राद्धेन फलं न वा प्रत्यवायः इति रात्रिः पर्य्युदस्ता तद्भिन्नामावस्यायां श्राद्धम् ।

**पर्य्युदास** पु० परि+उद्+अस-घञ् । निवारणे फलप्रत्यवाय-शून्यतया भेदार्थकनञा बोध्ये 'प्राधान्यं हि विधेर्यत्र प्रति-षेधेऽप्रधानता । पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' इत्युक्तलक्षणे निषेधे च विस्तरस्तु वृहदभिधाने ।

**पर्य्युषित** त्रि० परिक्रम्य स्वकालमतिक्रम्य उषितम् वस-क्त । (वासि) यातयामादौ पदार्थे, 'यातयामं गतरसं पूति पर्य्युषितञ्च यदि'ति मनुः ।

**पर्य्येषणा** स्त्री० परितस्तर्कादिना एषणा परीक्षा । तर्कादिद्वारा पदार्थपरीक्षायाम्, अन्वेषणायाञ्च ।

**पर्व्व** पूर्त्तौ भ्वा०पर०सक०सेट् । पर्व्वति अपर्व्वीत् ।

**पर्व्वत** पु० पर्व्व-अतच्, पर्व्वाणि भागाः सन्त्यस्य त वा । गिरौ भूधरे, दानार्थं कल्पिते पर्व्वताकारे गुड़ादिशैलदशके, मुनि-भेदे 'नात्र चित्रमनु तं प्रययौ यत् पर्व्वतस्तु खल्वि'ति नैषधं मत्स्यभेदे (पायदा) वृक्षे, शाकभेदे च ।

**पर्व्वतमोचा** स्त्री० ६त० । गिरिकदल्याम् ।

**पर्व्वतवासिनी** स्त्री० पर्व्वते वसति वस-णिनि । आकाश-मांस्याम्, गायत्र्याञ्च ।

**पर्व्वतीय** पु० पर्व्वते भवः छ । (पाहाड़ीया) जातिभेदे 'पर्व्वतीय गणैरभूदि'ति रघुः । पर्व्वतजातमात्रे त्रि० ।

**पर्व्वन्** न० पृ-वनिप् । उत्सवे, ग्रन्थौ (गांट) लक्षणभेदे, प्रस्तारे, ग्रन्थविच्छेदस्थाने 'चतुर्द्दश्यष्टमी चैव अमावस्या च पूर्णि-मा । पर्व्वाण्येतानि राजेन्द्र ! रविसंक्रान्तिरेव चे'ति स्मृत्यु-क्तेषु पञ्चसु कालभेदेषु च । [तौ वृक्षे

**पर्व्वयोनि** पु० पर्व्व ग्रन्थिः योनिरुत्पत्तिस्थानं यस्य । इक्षुप्रभृ-

**पर्व्वरुह** पु० पर्व्वणि रोहति रुह-क्विप् । दाड़िमे । [(गाटदूर्वा)

**पर्व्ववल्ली** स्त्री० पर्व्वप्रधाना ग्रन्थिश्रेष्ठावल्ली । मालादूर्व्वायाम्

**पर्व्वसन्धि** पु० पर्व्वणः सन्धिः । पञ्चदश्याः (पूर्णिमायाः अमावस्या-याश्च) प्रतिपदस्तिथेश्चान्तराले चन्द्रसूर्य्यग्रहणयोग्ये काले ।

**पर्शुका** स्त्री० पर्शुरिव कायति प्रकाशते कै-क । पार्श्वस्थे अस्थि । तस्य परश्वधाकारत्वात् तथात्वम् । पर्शूरप्यत्र ।

**पर्ष** स्नेहे भ्वा०आत्म०सक०सेट् । पर्षते अपर्षिष्ट ।

**पर्षद्** स्त्री० पृष-अदि । सभायाम्, धर्म्मोपदेशकपरिष्कृतसमाजे च । ततः अस्त्यर्थे वलच् । सभासदे त्रि० ।

**पल** गतौ भ्वा०पर०सक०सेट् ज्वला० । पलति अपालीत् ।

**पल** रक्षणे चुरा०उभ०सक०सेट् । पालयति ते अपीपलत् त

**पल** न० पल-अच् । मांसे, आमिषे, कर्षचतुष्टयपरिमाणे, शास्त्रीयतोलकचतुष्टये लौकिकसार्द्धत्रितयमापकाधिकतोलकत्रितयपरिमाणे, षष्टिगुर्व्वक्षरोच्चारणयोग्ये दण्डषष्टिभागे विनाडिकाख्ये काले च । पलाले (तुच्छधान्ये) पुं० । [(राज)

**पलगण्ड** पुं० पलं मांसं गण्डति गण्डमिव करोति । लेपनकरे

**पलङ्कष** पुं० पलं मांसमुद्दिश्य कषति हिनस्ति खच् । राक्षसे, कणगुग्गुलौ च । रास्नायां, लाक्षायाम्, गुग्गुलौ, गोक्षुरे, महाश्रावण्यां, पलाशे, मक्षिकायाञ्च स्त्री०टाप् ।

**पलल** न० पल-कलच् । मांसे, पङ्के, तिलचूर्णे च । पलं लाति ला-क । राक्षसे पुं० ।

**पलाण्डु** पुं० पलं मांसमण्डति अण्ड-उ । (पेयाज) मूलभेदे 'पलाण्डुं कवकानि चे'ति मनुः । [नान्यस्थानगमने ।

**पलायन** न०परा-अय-ल्युट् रस्य लः । भयादिना स्थानत्यागे-

**पलाल** पुं०न० पल-कालन् । शस्यशून्ये धान्यकाण्डे (नाडा) (पोयाल) [हि तस्य वृद्धिः ।

**पलालदोहद** पुं० पलालं दोहदं यस्य । आम्रवृक्षे पलालवेष्टने

**पलाश** न०पल-गतौ घञर्थे क पलं चलनमश्नुते, पलं वियोगिनां मांसमिवाश्नाति शोषकत्वाद्वा अश-अण् । स्वनामख्याते वृक्षे 'नवपलाशपलाशवनं' मिति माघः । पर्णसवर्णत्वात् हरिद्वर्णे पुं० । तद्वति त्रि० । लाक्षायां, लताभेदे च स्त्री० गौ० ङीष् ।

**पलाशक** पुं० पलं मांसमश्नाति ण्वुल् । शठ्याम्. पलाशवृक्षे च

**पलाशपर्णी** स्त्री० पलाशवृक्षस्येव पर्णमस्याः । अश्वगन्धायाम्

**पलाशिन्** पुं० पलाशानि सन्त्यस्य इनि । वृक्षे । [भिक्ष्यां गवि च

**पलिक्नी** स्त्री० पलित+ङीप् नि० । वृद्धायां योषिति, बालग-

**पलित** न०पल-भावे क्त । केशादौ जरया जातायां श्वेततायाम्, मांसादेर्वलिपरीतभावे च । कर्त्तरि क्त । वृद्धे । स्त्रियां पलिता । योषिति तु पलिक्नीत्युक्तम् ।

**पल्यङ्क** पुं० परिगतोऽङ्कं रस्य लः । शय्यायाम् । (पालङ्क)

**पल्ययन** न०परि-इण-ल्युट् रस्य लः । घोटकसज्जाभेदे (जिन्)

**पल्युल** छेदने, पूतौ च अद०चुरा०उभ०सक०सेट् । पल्युलयति ते अपपल्युलत् त । [यति ते अपपल्यूलत् त

**पल्यूल** छेदने पवित्रीकरणे च अ०चु०उभ०सक०सेट् । पल्यूल-

**पल्ल** गतौ भ्वा०पर०सक०सेट् । पल्लति अपल्लीत् ।

**पल्ल** पुं० पल्ल-अच् । स्थूलकुसूलके दृहति धान्यादिस्थापनस्थाने (पालुइ) (मराइ)

**पल्लव** पुं० पल्यते सम्प०क्विप् पल्, लूयते लू-अप् कर्म० । अभिनवे पत्रविस्तारे, 'लवोऽपि पल्लवे' इति नैषधम् तद्युक्तशाखायां विस्तारे, बले, अलक्तकरागे, वलये, बापने च ।

**पल्लवद्रु** पुं० पल्लवप्रधानः द्रुः । अशोकवृक्षे ।

**पल्लवित** त्रि०पल्लवं नूतनपत्रं विस्तारो वा जातः अस्य तार० इतच् । पल्लवयुक्ते, विस्तारयुक्ते च 'द्विपन्त्रितं पल्लवितञ्च बिभ्रत'मिति नैषधम् ।

**पल्लि(ल्ली)** स्त्री०पल्ल-इन् वा ङीप् । क्षुद्रग्रामे, कुट्याम्, गेहे च । पल्लं गृहसान्त्वेनास्त्यस्याः अच् । गृहगोधिकायाम् स्त्री०ङीप्

**पल्लिका** स्त्री० पल्लीं गृहे कायति कै-क । गृहगोधिकायाम्

**पल्वल** पुं०न० पल-वल । क्षुद्रे सरसि (डोवा) 'स पल्वलजलेऽधुने'ति भामिनीविलासः [कर्त्तरि अच् । वायौ ।

**पव** पुं०पू-अप् । धान्यादेः शोधने, वहुलीकरणे च व्यापारे ।

**पवन** पुं० पू-युच् । धान्यादेः शोधने, बहुलीकरणे च व्यापारे, कर्त्तरि ल्यु । वाते । भावे ल्युट् । शोधने न० । करणे ल्युट् । जले न० । आधारे ल्युट् । आमघटादिपाकस्थाने । (पोयान) । 'पवनोपरिमङ्क्षेप' इत्युद्भटः ।

**पवनव्याधि** पुं० पवनजनितो व्याधिर्यस्य शाक० । उद्धवे, 'संनयन् पवनव्याधे'रिति माघः । कर्म० । वायुरोगे पुं० ।

**पवनात्मज** पुं०६त० । हनुमति, भीमे, वह्नौ च 'वायोरग्नि'रिति श्रुतेस्तस्य वायुजातत्वात्तत्सुतत्वम् । पवनसुतादयोऽप्यत्र ।

**पवनाश** पुं० पवनमश्नाति अश-अण् । सर्पे, वायुभक्षके त्रि० । युच् । पवनाशनोऽप्यत्र ।

**पवमान** पुं० पूञ्-शानच् । वायौ ।

**पवि** पुं० पू-इन् । वज्रे ।

**पवित** त्रि० पू-क्त । पवित्रे, स्फुते च मरिचे न० ।

**पवित्र** स्त्री०न० पू-इत्र । यज्ञार्थे, कुशे 'पवित्रासि वैष्णवी'ति यजुर्मन्त्रः । ताम्रे, जले, वर्षणे, घर्षणे, अर्घोपकरणे, यज्ञोपवीते, मधुनि, घृते, 'अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं सर्व्वकर्म्म'स्वित्युक्ते कुशद्वये च न० । व्रतादिना शुद्धे त्रि० । तिलवृक्षे, पुत्रजीववृक्षे च पुं० । तुलस्यां, हरिद्रायां, नदीभेदे च स्त्री०

**पवित्रक** पुं० पवित्र+स्वार्थे कन् । अश्वत्थे, उडुम्बरे, कुशे, दमनकवृक्षे च ।

**पवित्रारोपण** न० पवित्रस्य यज्ञोपवीतस्य विष्णवे आरोपणं दानं यत्र । 'श्रावणशुक्लद्वादश्यां केशवोद्देशेन यज्ञोपवीत-

दानकर्मे उत्सवे । पवित्रारोहणमयत ।

पश(ष) बाधे भ्वा०उभ०आ०सक० सेट् । पश(ष)ति ते अपशी(षी)त् अपाशी(षी)त् अपशि(षि)ष्ट ।

पश(ष) स्पर्शे, गतौ, अनुपसर्गात् बन्धे, बाधे च अद०चु०उभ० सक०सेट् । पश(ष)यति ते अपपश(ष)त् त ।

पश(ष) बन्धे चुरा०उभ०सक०सेट् । पाश(ष)यति ते अपीपश(ष)त

पशु पु० सर्व्वमविशेषेण पश्यति दृश-कु पशादेशः । मृगादौ लोमवल्लाङ्गूलवति जन्तुभेदे, देवे च । दर्शनार्थेऽव्ययम् ।

पशुपति पु०पशूनां सर्व्वत्र समदर्शिनां देवानां पतिः । महादेवे

पशुराज पु०पशूनां राजा टच्समा० । सिंहे । [आम्रातकफले

पशुहरितकी स्त्री० पशूनां हरीतकीव हितकारित्वात् ।

पश्चात् अव्य० अपर+प्रथमापञ्चमीसप्तम्यर्थे आति पश्चादेशः । प्रथमाद्यर्थेऽपरशब्दस्यार्थे, चरमे, अधिकारे च ।

पश्चात्ताप पु० पश्चात् चरमस्तापः । अनुशये कृतस्य कर्म्मणो ऽनुचितत्वधिया अनुशोचने ।

पश्चार्द्ध पु०अपरमर्द्धं पश्चादेशः । शेषार्द्धे अपरभागे, 'पश्चार्द्धेन प्रविष्टः शरपतनभया'दिति शकुन्तला ।

पश्चिम त्रि०पश्चात् भवः डिमच् । शेषभवे । प्रतीच्यामस्ताचल सन्निकृष्टायां दिशि स्त्री० । [चौरभेदे

पश्यतोहर पु०पश्यन्तमनादृत्य हरति हृ-अच् अलुक् ६त० ।

पश्यन्ती स्त्री० दृश-शतृ-ङीप् । परादिशब्दचतुष्टयमध्ये शब्दभेदे विस्तरो वृहदभिधाने ।

पश्वाचार पु० पशुर्देवः समदर्शी तस्येवाचारः । तन्त्रोक्ते वैदिकमार्गानुसारिणि आचारे । [अपासीत् अपसिष्ट

पस बाधे, ग्रन्थे च भ्वा०उभ०सक०सेट् । पसति ते अपसीत्-

पंस नाशने चु०उभ०सक०सेट् इदित् । पंसयति ते अपपंसत्-त

पह्नव पु० श्मश्रुधारिम्लेच्छजातिभेदे, 'शका जवनकाम्बोजाः पारदाः पह्लवास्तथे'ति मनुः । [यति ।

पा पाने भ्वा०पर०सक०अनिट् । पिबति आपात् । णिच् पाय-

पा रक्षणे अदा०पर०सक०सेट् । पाति अपासीत् । णिच्-पालयति

पांशव पु०पांशोर्विकारः अण् । (पाङ्गा) लवणभेदे,पांशुजादयोप्यत्र

पांशु(सु) पु० पश-पसि-वा कु०पृ० । धूलौ,पस्यार्थं चिरसञ्चिते शुष्कगोमये, कर्पूरभेदे च ।

पांशुपत्त्र न पांशुभिः सञ्चितगोमयैः पत्त्रमस्य । वास्तूकशाके

पांशुर पु०पांशु राति-रा क । खञ्जे, दंशके च (डांश) ।

पांशुल पांशुः पांशुतुल्यं पापमस्यास्ति । पापवति,पुंश्चले च कुलटायां स्त्री० । 'अपांशुलानां धुरि कीर्त्तनीये'ति रघुः । विभूतियुक्ते शिवे पु० । धूलियुक्ते त्रि० । 'त्रेधा निदधे पदं समूढमस्य पांशुले' इति श्रुतिः ।

पांसन त्रि० पसि-ल्यु पृ० । दूषके ।

पाक पु० पच भावे घञ् । पचने, क्लेदने, क्लेदनेन निष्पादने निष्पत्तौ, परिणामे च आधारे घञ् । स्थाल्यादौ, पेचके, राष्ट्रादिभङ्गे, भये च । पिबति स्तनं पा-क । शिशौ त्रि०— स्त्रियां पाका ।

पाककृष्ण पु० फलपाके कृष्णः । (पानीआमला) वृक्षभेदे ।

पाककृष्णफल पु० पाके परिणामे कृष्णं फलं यस्य । (पानी आमला) वृक्षभेदे । [त्रि० ।

पाकज न०पाकाज्जायते जन-ड । काचलवणे । पाकजातमात्रे

पाकयज्ञ पु० पाकसाध्यो यज्ञः । चरुपाकसाध्ये वृषोत्सर्गादौ कर्म्मणि । [तेजपत्रे

पाकरञ्जन न० पाकं पच्यमानं रञ्जयति रन्ज-णिच्-ल्युट् ।

पाकल न० पाकं लाति ला-क । कुष्ठौषधौ (कुड) । वह्नौ, वायौ च पु० । कर्कोट्यां स्त्री०गौ०ङीप् । [शोथत्र

पाकशाला स्त्री० ६त० । पाकस्थाने । पाकगृहपाकस्थानादि

पाकशासन पु०पाकं तन्नामासुरं शास्ति शास-ल्यु । इन्द्रे ।

पाकिम त्रि० पाकेन निर्वृत्तम् इमप् । पाकनिष्पन्ने । [पु० ।

पाक्य न० पच-ण्यत् कुत्वम् । विड्लवणे पांशुलवणे च । यवक्षारे

पाक्षिक त्रि० पक्षतः प्राप्तः ठक् । पक्षतः प्राप्ते, प्राप्त्यप्राप्ति सम्भावनाविषये एकतरपक्षे दत्तहस्ते नियमे, 'नियमः पाक्षिके सती'ति मीमांसा ।

पाचक पु० पचति पच-ण्वुल् । वह्नौ । पाककर्त्तरि सूदादौ, भुक्तान्नजारकौषधौ च त्रि० । पित्ताख्ये धातुभेदे न० ।

पाचन न० पच-णिच्-ल्युट् । पित्तादिदोषनाशके वैद्यकोक्ते क्वाथभेदे, प्रायश्चित्ते च । पच-णिच्-कर्त्तरि ल्यु । वह्नौ, अम्लरसे, रक्तैरण्डे च पु० । हरितक्यां स्त्री० ङीप् ।

पाञ्चजन्य पु० पञ्चजने दैत्यभेदे भवः यञ् । विष्णुशङ्खे 'पाञ्चजन्यं हृषीकेशः' इति गीता । [ङीप् पाञ्चाली ।

पाञ्चाल त्रि० पञ्चालदेशे भवः अण् । पञ्चालदेशभवे । स्त्रियां

पाटच्चर पु० पटच्चर एव स्वार्थे प्रज्ञादित्वादण् । चौरे ।

पाटल पु० पाटयति पट-णिच्-कलच् । श्वेतरक्तवर्णे । तद्वति त्रि० (पारुल) ख्याते वृक्षे स्त्री० । तत्पुष्पे,आशुधान्ये च न० ।

पाटलि स्त्री० पट-णिच् अलि वा ङीप् । (पारुल) ख्याते वृक्षे 'पाटलिसंसर्गसुरभिवनवाता' इति शकुन्तला । घण्टापाटलौ च

पाटलिपुत्र न० (पाटना) इतिख्याते नगरभेदे ।

पाटव न० पटोर्भावः अण् । पटुतायाम् क्रियायोग्यतायाम् आरोग्ये च 'अपाटवाद्यशौचाद्यै'रिति स्मृतिः ।

पाटी स्त्री॰ पट-णिच् इन् ङीप्। धारायां, व्यक्तगणनायां लीलावत्यादौ (पाला) इति ख्याते क्षुपे च। [उच्चारणे च

पाठ पु॰ पठ-घञ्। अक्षराणामुच्चारणे गुरुमुखश्रवणपूर्वको-

पाठक पु॰ पठति पाठयति वा ण्वुल्। अध्येतरि, अध्यापके च

पाठशाला स्त्री॰ ६त॰। पाठमन्दिरे।

पाठा स्त्री॰पठ-कर्म्मणि घञ् टाप्। विद्धकर्ण्याम् (आकनादि)

पाठिन् पु॰ पठ-णिनि। चित्रवृक्षे। पाठके त्रि॰।

पाठीन पु॰ पाठिं पृष्ठं नमयति नम-ड दीर्घः। गुग्गुलुवृक्षे मत्स्यभेदे च (बोयाल) 'पाठीन रोहितावाद्यावि'ति मनुः पठ-ईनण्। पाठके त्रि॰। पथ्यवीथ्यां,हट्टे च स्त्री॰।

पाणि पु॰ पण-इण् आयाभावः। करे,कुलिके वृक्षे च (कुलेखाड़ा)

पाणिगृहीती स्त्री॰पाणिर्गृहीतो यस्याः ङीप्। भार्य्यायाम्

पाणिग्रहण न॰ पाणिर्गृह्यतेऽत्र ग्रह-आधारे ल्युट्। विवाहे। 'पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते' इति मनुः। पाणिपीडनादयोऽप्यत्र।

पाणिघ पु॰ पाणिं हन्ति,पाणिना वा हन्ति वादयति हन-टक् कुलम्। पाणिताडके, पाणिना मृदङ्गादिवादके च।

पाणिनि पु॰ पणनं पणः ततः अस्त्यर्थे इनि तदपत्यम् अण् तस्य छात्रः इञ्। अष्टाध्यायीव्याकरणादिकारके दाक्षीपुत्रे शालातुरीयग्रामभवे मुनिभेदे।

पाणिनीय त्रि॰ पाणिनिना प्रोक्तम्, तस्येदम् वा छ। पाणिनिना कृते अष्टाध्यायीरूपादौ व्याकरणादौ।

पाणिभुज् पु॰ पाणिरिव भुज्यते मोच्यते भुज-मोटने क्विप्। उडुम्बरवृक्षे। पाणिना भुङ्क्ते भुज क्विप्। हस्तेन भक्षके त्रि॰

पाणिवाद पु॰ पाणिं, पाणिना वा मृदङ्गादिकं वादयति वद-णिच्-अण् अच् वा। हस्तताडके, हस्तेन मृदङ्गादिवादके च। ण्वुल्। पाणिवादकोऽप्यत्र।

पाणिसर्ग्या स्त्री॰ पाणिना सृज्यतेऽसौ सृज-ण्यत्। रज्जौ

पाण्डर पु॰पडि-अर दीर्घश्च। मरुवकवृक्षे,श्वेतवर्णे च। तद्वति त्रि॰। कुन्दपुष्पे, गैरिके च न॰। [पुत्रे युधिष्ठिरादौ।

पाण्डव पु॰पाण्डोरपत्यम् अण्। चन्द्रवंश्यस्य नृपभेदस्य चेवत्रे

पाण्डु पु॰ पडि-कु नि॰दीर्घः। चन्द्रवंश्ये,नृपभेदे, श्वेतवर्णे,केतकीधूलिसन्निभे पीतवर्णार्द्धे वर्णभेदे च। तद्वति त्रि॰नागभेदे, श्वेतहस्तिनि, रोगभेदे, पटोलवृक्षे च पु॰। माषपर्ण्यां स्त्री॰

पाण्डुकण्टक पु॰पाण्डुवर्णानि कण्टकानि यस्य। अपामार्गे

पाण्डुकम्बल पु॰ कर्म्म॰। श्वेतवर्णप्रावारे। कम्बल इव। पाण्डुः राज॰। प्रस्तरभेदे। [वर्णकम्बलप्रावृते रथे।

पाण्डुकम्बलिन् पु॰ पाण्डुकम्बल+अस्त्यर्थे इनि। पाण्डु-

पाण्डुतरु पु॰कर्म्म॰। धववृक्षे। [हस्तिनि,श्वेतसर्पे च।

पाण्डुनाग पु॰ नाग इव पाण्डुः राज॰। पुन्नागवृक्षे, श्वेत-

पाण्डुफल पु॰ पाण्डूनि फलान्यस्य। पटोले। चिर्भट्यां स्त्री॰

पाण्डुर पु॰ पाण्डुर्वर्णोऽस्त्यस्य र। श्वेतपीतमिश्रिते वर्णे। पडि-उर वा॰ वृद्धिः। श्वेतवर्णे च। तद्वति त्रि॰ कामलाख्ये रोगे, श्वित्ररोगे च न॰। माषपर्ण्यां स्त्री॰टाप्।

पाण्डुरङ्ग पु॰ पाण्डुरमङ्गमस्य शक॰। (पाटराङ्गा) शाके

पाण्डुद्रुम पु॰ कर्म॰। कुटजवृक्षे (कुड़ची)।

पाण्डुराग पु॰ पाण्डुः रागो वर्णो यस्य। दमनकवृक्षे।

पाण्डुलोमशा स्त्री॰ पाण्डूनि लोमानीवाङ्गानि सन्ति यस्याः श। माषपर्ण्याम्। श्वेतलोमवति त्रि॰।

पात पु॰ पत-घञ् पतने। पा-क्त। रक्षिते त्रि॰। पत-ण। ज्योतिषोक्ते क्रान्तिसाम्यसम्पादके राहुरूपे ग्रहभेदे।

पातक न॰ पातयति अधो गमयति पत-णिच्-ण्वुल्। पातित्यसम्पादके पापे, पापजनके प्राणिवधादौ च।

पातञ्जल न॰ पतञ्जलिना प्रोक्तम् अण्। पाणिनिसूत्रवार्त्तिकव्याख्यानरूपे 'अथ शब्दानुशासन'मित्यादिके महाभाष्ये, 'अथ योगानुशासन'मित्यादिके-योगशास्त्रे च।

पाताल न॰ पत-आलञ्। धरायास्तलस्थे भुवने, ज्योतिषोक्ते लग्नाच्चतुर्थे स्थाने च।

पातालनिवास पु॰ नि+वस-आधारे घञ् पाताले निवासो यस्य। दैत्ये पातालनिलयादयोऽप्यत्र।

पातुक त्रि॰पत-उकञ् पतनशीले। प्रपाते,जलहस्तिनि च पु॰

पात्र न॰स्त्री॰ पाति रक्षत्याधेयं, पिबत्यनेन वा पा-ष्ट्रन् स्त्रियां ङीप्। जलाद्याधारे भोजनयोग्ये अमत्रे, विद्यादियुक्ते दानयोग्ये ब्राह्मणे 'ब्राह्मणं पात्रमाहुः'इति स्मृतिः यज्ञिये स्रुवादौ, तीरद्वयमध्यवर्त्तिनि जलाधारस्थाने, नाटके ऽभिनेये नायकादौ च न॰।

पात्रीय त्रि॰ पात्रे यज्ञपात्रे योग्यः छ। यज्ञद्रव्ये। स्वार्थे छ। योग्ये, 'विप्रः पात्रीयतामियादि'ति स्मृतिः।

पात्रेसमित त्रि॰ पात्रे भोजनपात्रासादनकाले एव समितः सङ्गतः। भोजनादन्यत्र अनुपस्थिते कार्य्यादक्षे। [च

पाथ न॰पीयतेऽदः थ। जले। पाति रक्षति थ। अग्नौ,सूर्य्ये

पाथस् न॰ पाति रक्षति,पीयते वा पा-पाने,रक्षणे वा असुन् थुक् च। जले, अन्ने च अन्नभोजने हि देहरक्षा।

पाथेय त्रि॰पथि हितं ढञ्। पथि भोजनोचिते द्रव्ये।

पाद् पु॰ पद-णिच् क्विप्। चरणे पादे। [वृक्षादेर्मूले च।

पाद पु॰ पद्यते गम्यतेऽनेन करणे घञ्। चरणे, चतुर्थांशे,

**पादकटक** पु० पादस्य कटक इव । नूपुरे ।

**पादकृच्छ्र** पु० पादमितस्त्वर्थमितः कृच्छ्रः शाक० । 'उप-वासेन चैकेन पादकृच्छ्रउदाहृत' इत्युक्ते व्रतभेदे ।

**पादग्रहण** न० पादयोः ग्रहणं यत्र । पादग्रहणपूर्वके प्रणामभेदे 'अनुप्य पादग्रहणं प्रत्यहञ्चाभिवादन'मिति मनुः

**पादचारिन्** पु० पादेन चरति चर-णिनि ३त० । पदातौ । पद्भ्यां गन्तरि त्रि० ।

**पादत्राण** न० पादौ त्रायेते येन त्रै-करणे ल्युट् । पादुकायाम्

**पादप** पु० पादेन मूलेन पिबति सिक्तं जलम् पा-क । वृक्षे । पादं पाति रक्षति पा-क । पादपीठे । [गाछ)

**पादपरुहा** स्त्री० पादपं रोहति रुह-क । वन्दायाम् (पर-

**पादपीठ** न०६त० । पादस्थापनासने । 'सिंहासनं तस्य स-पादपीठमि'ति भट्टिः । पादुकायां स्त्री०टाप् ।

**पादमूल** न० ६त० । चरणस्याधोभागे ।

**पादरोह** पु० पादेन मूलेन रोहति रुह-अच् । वटवृक्षे ।

**पादवल्मीक** न० पादस्य वल्मीकमिव । श्लीपदरोगे (गोद)

**पादविक** त्रि० पदवीं धावति ठक् । पथिके पथिधावके ।

**पादविरजस्** स्त्री० पादौ विरजसौ धूलिस्पृशौ यस्याः । पूव० । पादुकायाम् । [पोया) दानादौ ।

**पादशस्** अव्य० पादं पादं ददाति करोति वा शस् । (पोया-

**पादशैल** पु० पादाकारः शैलः । प्रत्यन्तपर्वते ।

**पादस्फोट** पु० । पादौ स्फोटयति अण् । रोगभेदे ।

**पादाग्र** न० ६त० । चरणाग्रभागे प्रपदे ।

**पादाङ्गद** न० पादस्य अङ्गदमिव । नूपुरे ।

**पादात** न० पदातीनां समूहः अण् । सैन्यसमुदाये पादाभ्या-मतति गच्छति अच् । पदातौ सैन्ये । पादातिपादातिकोऽप्यत्र

**पादुका** स्त्री० पद-णिच्-ऊ ततः स्वार्थे कन् ह्रस्वः । चर्ममये पादाच्छादने पदार्थे (जुता) । कनभावे पादूरप्यत्र ।

**पादुकाकार** पु० पादुकां करोति कृ-अण् उप० । चर्मकारे पादूकृत्पादुकाकृदादयोऽप्यत्र ।

**पाद्य** न० पादाय पादप्रक्षालनाय साधु यत् । पादप्रक्षालनार्थे जले । अर्शां क्लीवेन स्त्रीत्वमपि । 'पाद्याः पाद्याः इत्यादि पाद्यदानमन्त्रः । [आधारे ल्युट् । पानभाजने ।

**पान** न० पा-ल्युट् । द्रवद्रव्यस्य गलाधःसंयोजने, रक्षणे च

**पानगोष्ठी** स्त्री० पानार्थं गोष्ठी सभा । (चक्र) पानार्थं सभायाम्

**पानभाजन** न० पीयतेऽस्मिन् पा-ल्युट् कर्म० । पानपात्रे पानपात्रादयोऽप्यत्र ।

**पानीय** न० पीयते यत् पा-अनीयर् । जले । पातव्ये रक्षि-तव्ये च त्रि० । [(पाना) कुम्भ्याम् ।

**पानीयपृष्ठज** पु० पानीयपृष्ठे जलोपरि जायते जन-ड ।

**पानीयफल** न० ६त० । (माखना) जलकन्दफलभेदे ।

**पानीयमूलक** न० पानीये मूलं यस्य कप् । सोमराज्याम् ।

**पानीयशालिका** स्त्री० पीयतेऽस्याम् आधारे अनीयर् तादृशी पानीयवितरणार्थं वा या शाला स्वार्थे कन् । प्रपायाम् (जलछत्रघरे) ।

**पानीयामलक** न० कर्म० । (पानिआमला) वृक्षभेदे ।

**पान्थ** पु० पन्थानं गच्छति पथिन्+अण् पन्थादेशः । पथिके ।

**पाप** न० पाति रक्षति आत्मानमस्मात् पा-अपादाने प । नरकहेतौ दुरदृष्टे, तत्साधने हिंसादौ, ज्योतिषोक्तेषु अक्षीणचन्द्ररविप्रभृतिषु ग्रहेषु । [पापनाशके त्रि० ।

**पापघ्न** पु० पापं हन्ति टक् । तिले तस्य हि दानेन पापनाशकत्वम् ।

**पापचेली** स्त्री० पुनःपुनः पचति पा-यङ्-अच् पापचोवायुस्त-मीरयति ईर-अण् रस्य लः । (आकनादि) पाठालतायाम्

**पापपुरुष** पु० पापात्मकः पुरुषः पुरुषाकारः । तन्त्रोक्ते वाम कुक्षिस्थे पापात्मके ध्येये नराकारे पदार्थे ।

**पापशमनी** स्त्री० पापं शम्यतेऽनया शम-णिच्-करणे ल्युट् । ङीप् । शमीवृक्षे ।

**पापात्मन्** पु० पापयुक्त आत्मा अन्तःकरणं यस्य । पापान्विते जीवे 'पापात्मा पापसम्भव' इति पुराणम् ।

**पाप्मन्** पु० आप्नोति व्याप्नोति आप-मनिन् नि० । पापे ।

**पामन्** न०पा मनिन् । विचर्चिकायां (खोस पाचडा) स्त्रीत्वमपि मनन्तात् ङीप् । पामाप्यत्र ।

**पामघ्न** पु०पाम हन्ति हन-टक् । गन्धके । कटुक्यां स्त्री०ङीप् ।

**पामन** त्रि० पामास्त्यस्य अस्त्यर्थे न । पामरोगवति ।

**पामर** त्रि० पाति क्विप् पाः त्रयीधर्मः स म्रियतेऽनेन मृ-घ । मूर्खे, नीचे, खले च । [टाप् । गुडूच्याम् ।

**पामरोद्गारा** स्त्री० पामरमुद्गरति उद्-गृ-अण् अजादित्वात्

**पामारि** पु०६त० । गन्धके तत्सेवने हि पामरोगनाशः ।

**पायस** पु० पयसि दुग्धे संस्कृतः अण् । परमान्ने । पयःसम्ब-न्धिनि त्रि० 'पायसं दधिसक्तव'इति स्मृतिः । चन्दने च ।

**पायु** पु० पा-उण् । अपानवायुस्थाने ।

**पाय्य** न० मीयतेऽनेन मा-ण्यत् नि० पादेशः । परिमाणे । पानीये न० । निन्दनीये त्रि० । [अप्रपारत् त ।

**पार** कर्मसमाप्तौ अद०चु०उभ०सक० सेट् । पारयति ते

**पार** न०परमेव अण् पारं परं तीरं पृ-घञ् वा । नदीकूलेन माध्ये परे तीरे । पार-अच् घञ् । प्रान्तभागे ।

**पारक्य** त्रि० परलोकाय हितं ष्यञ् कुक् च। परलोकहितसाधने कर्म्मणि। [गन्तरि,शेषगामिणि च।

**पारग** त्रि० पारं गच्छति गम-ड। कर्म्मसमाप्तिकर्त्तरि, परपारं

**पारण** न० पार-ल्युट्। व्रतान्तभोजने। युच्। तत्रैव स्त्री० 'तव पारणा स्या'दिति रघुः। पृ-णिच्-ल्यु। मेघे पु०।

**पारतन्त्र्य** न० परतन्त्रस्य भावः ष्यञ्। पराधीनत्वे 'पारतन्त्र्यं विधेः कृत' इति मीमांसा। [कर्म्मणि परलोकभवे च

**पारत्रिक** त्रि० परत्र भवं, हितं वा ठक्। परलोकहितकारके

**पारद**(त) पु० पृ-णिच्-तन्,पृ० तस्य दः वा। धातुभेदे (पारा) पारं ददाति दा-क। पारदायिनि त्रि०। [गामिणि।

**पारदारिक** पु० परस्य दारान् गच्छति ठक्। यथेष्टं परस्त्री-

**पारदार्य्य** पु० परस्य दारा एव दारा यस्य तस्य भावः ष्यञ्। परदारगमने 'पारदार्य्यं पारिवित्त्य'मित्युपपातकगणने स्मृतिः

**पारमार्थिक** त्रि० परमार्थाय पारलौकिकधर्म्माय हितं ठक्। परमार्थोपायभूते श्रेयःसाधने कर्म्मणि।

**पारम्पर्य्य** न० परम्परैव स्वार्थे ष्यञ्। कुलादिपरम्परयाम् 'पारम्पर्य्यक्रमागत' इति स्मृतिः।

**पारम्पर्य्योपदेश** पु० पारम्पर्य्येण पित्रादिपरम्परया उपदेशः न तु साक्षात्कारादिज्ञानम्। ऐतिह्ये 'यथा इह वटे यक्ष' इत्यादिरुपदिश्यते एव सर्व्वैः, न तु तत्र यक्षः केनचित् दृश्यते। [जन्मान्तरादौ, हिते कर्म्मणि

**पारलौकिक** त्रि० परलोकाय हितं ठक् द्विपदवृद्धिः। परलोके,

**पारशव** पु० 'निषादः शूद्रकन्यायां यः पारशव उच्यते। स पारयन्नेव शवस्तस्मात् पारशवः स्मृत' इति मनूक्ते ऊढायां शूद्रायां ब्राह्मणेनोत्पादिते निषादरूपे सङ्कीर्णवर्णे,परस्त्री-तनये,लौहे च। परशु+इदमर्थेऽण्। परशुसम्बन्धिनि त्रि०

**पारश्वध** पु० परश्वधः प्रहरणमस्य अण्। परशुना युद्धक-र्त्तरि। ठक्। पारश्वधिकोऽप्यत्र।

**पारसीक** पु० देशभेदे तद्देशस्थे जने व०व०। 'पारसीकांस्ततो-जेतु'मिति रघुः। तद्देशस्थे घोटके पु० (आरवीघोड़ा)

**पारस्त्रैणेय** त्रि० परस्त्रिया अपत्यं ढञ् इनङादेशः। जारजे परस्त्रियाः सुते। [वते (पायरा)

**पारापत** पु० पारादप्यापतति प्रेम्णा आ+पत-अच्। पारा-

**पारापा(वा)र** न० पारमपारञ्चास्यस्य अर्श आद्यच्। समुद्रे पु०। तटद्वये। पारावारशब्दोऽप्युभयत्रार्थे।

**पारायण** न० पारं समाप्तिमयतेऽनेन अय-ल्युट्। साकल्ये, ग्रन्थादीनामाद्यन्ते,तत्पाठे च। [णादेराद्यन्तपाठके

**पारायणिक** त्रि० पारायणमाद्यन्तमावर्त्तयति ठक्। पुरा-

**पारावत** पु० परं जीवमवति ज्ञानोपदेशेन अव-शतृ परावन् दत्तात्रेयः तस्येदमित्यण्। कपोते (पायरा)

**पारावतपदी** स्त्री० पारावतस्येव पादो यस्याः ङीप् पद्भावः। काकजङ्घायाम्। [लतायाम्

**पारावताङ्घ्रि** पु० पारावतस्याङ्घ्रिरिव मूलमस्य। ज्योतिष्मती

**पारावारीण** त्रि० पारमवारञ्च गच्छति खञ्। तटद्वयगा-मिनि, समुद्रपारगे च। पारापारीणोऽप्यत्र।

**पाराशर** पु० पराशरस्यापत्यम् शिवाद्यण्। वेदव्यासे। तेन प्रोक्तमित्यण्। पराशरोक्ते भिक्षुसूत्रे। तत्स्मृतौ स्त्री० ङीप्। 'कलौ पाराशरी स्मृति'रिति स्मृतिः।

**पाराशरिन्** पु० पराशरेण प्रोक्तं भिक्षुसूत्रमध्येतयाऽस्त्यस्य इनि। भिक्षुके सर्व्वकर्म्मत्यागिनि संन्यासिनि।

**पाराशर्य्य** पु० पराशरस्यापत्यं गर्गादित्वात् यञ्। वेदव्यासे। अत इञ्। पाराशरिरप्यत्र।

**पारिकाङ्क्षिन्** पु० पारमस्यास्ति इनि पारि ब्रह्मज्ञानं तत्का-ङ्क्षति णिनि। मौनव्रतधारिणि वाचंयमे मुनिभेदे।

**पारिजात** पु० पारमस्यास्ति पारी समुद्रस्तत्र जातः जन-क्त। देवतरुभेदे। स्वार्थे कन्। अत्रैव।

**पारिणाय्य** त्रि० परिणयकाले लब्धम् ष्यञ्। विवाहकाले लब्धे धने। 'मातुः पारिणाय्यं स्त्रियो विभजेरन्नि'ति स्मृतिः

**पारि(री)न्द्र** पु० पृणाति हिनस्ति णिनि पारी इन्द्र इव शक-न्ध्वा० वा। सिंहे, अजगरसर्पे च।

**पारिपन्थिक** पु० परिपन्थं गृह्णाति ठक् पन्थादेशश्च। चौरे

**पारिपा(या)त्र** पु० विन्ध्यपर्व्वतपश्चिमदेशे मालवदेशस्य सीमा-पर्व्वते। स्वार्थे कन्। तत्रैव।

**पारिपार्श्विक** पु० परिपार्श्वं गृह्णाति तत्र चरति वा ठक्। सूत्रधारस्य पार्श्वचरे नटे, 'नटी विदूषको वापि पारिपा-र्श्विक एव वे'ति सा० दप०।

**पारिप्लव** न० परि+प्लु-अच् स्वार्थेऽण्। चञ्चले, व्याकुले च

**पारिभद्र**(क) पु० परितो भद्रमस्त्यस्य प्रज्ञाद्यण् (पालदामान्दार) वृक्षे परिभद्राय कायति कै-क। देवदारुवृक्षे, निम्ववृक्षे च पु०। कुष्ठौषधौ न०।

**पारिभाव्य** न० परिभवाय रोगप्रशमनाय हितः ष्यञ्। कुष्ठौ-षधौ। परिभुवः प्रतिभुवो भावः ष्यञ्। प्रतिभूभवने 'साक्षित्वं प्रतिभाव्यञ्चे'ति स्मृतिः।

**पारिमाण्डल्य** न० परितो मण्डलं यस्य,सर्व्वत्र विद्यमानत्वात् परिमण्डलः परमाणुस्तस्य भावः ष्यञ्। न्यायोक्ते कार-णताशून्ये परमाणुपरिमाणे।

**पारिश** पु० पिपर्त्ति पृ-णिनि पारी तं श्यति शो-क। (पलाश पिपुल) ख्याते वृक्षे।

**पारिषद** त्रि० परिषदि भवः तिष्ठति वा अण्। सभास्थे सभ्ये। यञ्। पारिषद्योऽप्यत्र। [ष्यञ्। वलये, कटके।

**पारिहार्य्य** पु० परिह्रियतेऽसौ परि+हृ-कर्म्मणि घञ् स्वार्थे

**पारीण** त्रि० पारं गच्छति पार–खञ्। पारगे, कर्म्मसमाप्तिकारके। [अर्ज्जुने वृक्षे, पृथिवीपतौ च

**पार्थ** पु० पृथाया अपत्यम् अण्। पृथापुत्रे, युधिष्ठिरादौ,

**पार्थिव** पु० पृथिव्या ईश्वरः अण्। राजनि। पृथिव्याविकारः इदं वा अण्। भूमिभवे त्रि०। सीतायां स्त्री०। तगरपुष्पे न०

**पार्व्वण** त्रि० पर्व्वणि पूर्णिमादौ भवः अण्। पूर्णिमादिभवे 'न शारदः पार्व्वणशर्व्वरीश्वर' इति नैषधम् पर्व्वणि अमावस्यादौ विहितम् अण्। मृत्युके श्राद्धभेदे न०। पृ-वनिप् प्रज्ञाद्यण्। मृगभेदे पु०।

**पार्व्वत** पु० पर्व्वते भवः अण्। (वोड़ानिम) निम्बभेदे, पर्व्वत जातमात्रे त्रि०। शल्लक्यां, गोपालपूतिकायां, जीवन्त्यां, सौराष्ट्रमृत्तिकायाम्, क्षुद्रपाषाणभेदायां, धातक्यां, दुर्गायाञ्च स्त्री० ङीप्।

**पार्व्वतीनन्दन** पु० ६त०। कार्त्तिकेये, पार्व्वतीसुतादयोऽप्यत्र।

**पार्व्वतेय** न०पर्व्वते भवं ढक्। सौवीराञ्जने। सूर्य्यावर्त्तवृक्षे पु०

**पार्श्व** पु०न०स्पृश-श्वण् धातोः पृ च। कक्षाधोभागे,समीपे,चक्रे, पाशे च। पर्शूनां पार्श्वास्थ्नां समूहः पर्शू+णस्। पर्शुसमूहे न०

**पार्श्वपरिवर्त्तन** न० पार्श्वेन परिवर्त्तनम्। यत्पार्श्वमधःस्थापयित्वा शयितं तत्पार्श्वस्योर्द्ध्वोन्नयने (पाशमोडा) पार्श्वस्य परावृत्तौ। सुप्तस्य हरेः भाद्रशुक्लद्वादश्यां कर्त्तव्ये पार्श्वपरिवर्त्तनाख्ये उत्सवभेदे च।

**पार्श्वस्थास्थि** न०कर्म्म०। (पाजर) शरीरपार्श्वस्थिते अस्थि।

**पार्षद** पु० पर्षदि भवस्तत्र स्थितो वा अण्। सभास्थे। ष्यञ् पार्षद्योऽप्यत्र।

**पार्ष्णि** पु०स्त्री० पृष-नि नि० वृद्धिः। पादग्रन्थे गुल्फस्याधोभागे। (गोड़ालि) पृष्ठे, सैन्यपृष्ठे, जिगीषायाञ्च पु०।

**पार्ष्णिग्राह** पु० पार्ष्णिं पृष्ठपदं गृह्णाति अण्। विजयार्थं जिगमिषोः पश्चात्पदग्राहिणि पृष्ठस्थे शत्रौ।

**पाल** रक्षणे चु०उ०स०सेट्। पालयति ते अपीपलत् त

**पाल** त्रि० पालयति पाल-अच्। रक्षके 'पालदोषविनाशे च पाले दण्डोविधीयते' इति स्मृतिः।

**पालक** पु० पालयति पाल-ण्वुल्। अश्वरक्षके, चित्रकवृक्षे च।

**पालघ्न** पु० पालं छत्रं हन्ति हन-टक्। छत्राख्ये जलजतृणभेदे

**पालङ्क** पु०पाल-सम्प०क्विप् पाला अङ्क्यते अङ्क-घञ्। (पालङ) शाकभेदे स्त्रीत्वमपि ङीप्। अत्रैव। कुन्दुरुवृक्षे स्त्री०गौ० ङीष्। कर्म्मणि यत् पालङ्क्याप्यत्र।

**पालाश** न० पलाशं पर्णमस्त्यस्य प्रज्ञाद्यण्। तेजपत्रे। तद्वर्णोऽस्त्यस्य। हरिद्वर्णे पु० तद्वति, पलाशस्येदम् अण्। पलाश संबन्धिनि च त्रि०। 'ब्राह्मणस्य पालाशोदण्ड' इति स्मृतिः

**पालि(ली)** पाल-इन् वा ङीप्। कोणे,पङ्क्तौ, यूकायाम्, सेतौ, प्रान्तभागे,प्रशंसायां,क्रोड़े च। स्वार्थे कन्। कोणे,कर्णपत्रे च

**पालिन्द** पु० पालिं ददाति दा-क पृ० मुम्। कुन्दुरुवृक्षे। श्यामालतायां स्त्री० गौरा० ङीष्।

**पावक** पु० पुनाति पू-ण्वुल्। वह्नौ, वैद्युताग्नौ च।

**पावकि** पु० पावक+अपत्यार्थे इञ्। कार्त्तिकेये स हि शिववीर्य्यात् वह्नौ निहिताज्जात इति पुराणम्।

**पावन** पु० पावयति पू-णिच्-ल्यु। अग्नौ, व्यासे, सिह्लके, पीतभृङ्गराजे च। गोमये, प्रायश्चित्ते, कृच्छ्रसाध्ये कर्म्मणि, च न०। पाव्यतेऽनया ल्युट् ङीप्। गङ्गायां, हरीतक्यां, तुलस्याञ्च स्त्री०। पवित्रतासाधके त्रि०।

**पाश** पु० पश्यते वध्यतेऽनेन पश-घञ्। मृगविहगादिबन्धने रज्जुभेदे (फांद) रज्जुमात्रे च। केशादुत्तरं पाशः संघार्थः। यथा केशपाशः। कर्णात् परः शोभार्थः। यथा कर्णपाशः शोभनकर्ण इत्यर्थः। छात्रादिभ्यः पाशप्। अपकृष्टछात्र इत्याद्यर्थे।

**पाशक** पु० पश-ण्वुल्। द्यूतक्रीडासाधने गुडिकादौ (पाशा)।

**पाशपाणि** पु० पाशः पाणौ यस्य। वरुणे पाशहस्तादयोऽप्यत्र पाश+इनि। पाशीत्यप्यत्र।

**पाशुपत** पु० पशुपतेरिदं, सोऽस्य देवता वा अण्। वकवृक्षे। व्रतभेदे, अस्त्रभेदे च न०। तद्भक्ते त्रि०। [वैश्यधर्म्मे।

**पाशुपाल्य** न०पशून् पालयति अण् तस्य भावः ततः ष्यञ्।

**पाश्चात्त्य** त्रि० पश्चाद् भवः त्यक्। पश्चिमदेशभवे।

**पाश्या** स्त्री० पाशानां समूहः यत्। पाशसमूहे।

**पाष(ख)ण्ड** पु० पाति रक्षति दुरितेभ्यः पा-क्विप् पाः वेदधर्म्मस्तं षण्डयति निष्फलं करोति, खण्डयति वा। 'पालनाच्च त्रयीधर्म्मः पाशब्देन निगद्यते (ष)खण्डयन्ति तु तं यस्मात् पा(ष)खण्डस्तेन कीर्त्तिता' इत्युक्ते वेदाचारत्यागिनि

**पाषण्डिन्** पु० पां वेदधर्म्मं षण्डयति षण्ड+णिच् इनि। पाषण्डे

**पाषाण** पु० पिनष्टि पिष-संचूर्णने आनच् पृ०। प्रस्तरे अल्पार्थे ङीप्। (वाटखारा) तुलामानपाषाणे।

**पाषाणदारक** पु० पाषाणं दारयति दृ-ण्वुल्। टङ्कास्त्रे

(पाथरकाटाछेनी) । युच् । पाषाणदारणोऽप्यत्र।

**पाषाणभेदन** पु० पाषाणं भिनत्ति ल्यु । (हाड़जोड़ा) वृक्ष-भेदे । [वृक्षभेदे ।

**पाषाणभेदिन्** पु० पाषाणं भिनत्ति भिद-णिनि (पाथुरचुर)

**पि** गतौ तु०सक० पर०अनिट् । पियति । अपैषीत् ।

**पिक** पु० अपि-कायति कै-क अपेरतोलोपः । कोकिले ।

**पिकप्रिया** स्त्री० ६त० । महाजम्ब्वाम् ।

**पिकबन्धु** पु० ६त० । आम्रवृक्षे ।

**पिङ्ग** पु० पिजि-वर्णे-अच् न्यङ्क्वा० कुत्वम् । मूषके दीपशिखाभे पिङ्गलवर्णे च । तद्वति त्रि० । हरिताले न० । गोरोचनायां, नालिकायां, दुर्गायाम् हरिद्रायां, हिङ्गुनि, वंशरोचनायाञ्च स्त्री० टाप् । शमीवृक्षे स्त्री० ङीप् ।

**पिङ्गल** पु० पिङ्गं लाति-ला-क, पिजि-कलच् वा कुत्वम् । नागभेदे, रुद्रे, सूर्यपारिपार्श्विके, वानरे, निधिभेदे, मुनिभेदे, मङ्गले ग्रहे, स्थावरविषभेदे, क्षुद्रोलूके ६०वर्षमध्ये 'पिङ्गले चारुपद्माक्षि ! दुर्भिक्षं नर्मदातटे' इत्युक्तलक्षणे वत्सरभेदे, प्राकृतच्छन्दोग्रन्थकारके, नागरूपे, मुनिभेदे, दीपशिखातुल्ये वर्णे च तद्वति त्रि० । 'कुमुददिग्गजस्य योषिति' नाडीभेदे, राजनीतौ, शिंशपावृक्षे, वामनाख्य-दिग्गजस्य योषिति, वेश्याभेदे च स्त्री०टाप्। 'यथा संछिद्य कान्ताशां सुखं सुष्वाप पिङ्गले'ति पुराणम् ।

**पिङ्गललौह** न० लौहं धातुः कर्म० । पित्तले ।

**पिङ्गाक्ष** पु० पिङ्गे अक्षिणी यस्य षच् समा० । शिवे तस्य तृतीयेक्षणस्याग्निरूपत्वात्तथात्वम् । पिङ्गेक्षणोऽप्यत्र ।

**पिचण्ड** पु० अपि+चम-ड तस्य नेत्त्वम् अपेरल्लोपः । उदरे, पश्वोरवयवे च । पृ० इत्त्वम् । पिचिण्डोऽप्यत्र । [वृहत्कुक्षौ

**पिच(चि)ण्डिल** त्रि० पिच(चि)ण्ड+अस्त्यर्थे इलच् । तुन्दिले,

**पिचव्य** पु० पिचवे तूलाय साधु यत् । कार्पासवृक्षे ।

**पिचु** पु० पच-उ पृ० । कार्पासतूले, (तुला) कुष्ठभेदे, कर्षे, असुरभेदे, ग्रहभेदे च ।

**पिचुक** पु० पिचुरिव कायति कै-क । मदनवृक्षे (मयना)

**पिचुतूल** न० ६त० । तूले (तुला) । [निम्बवृक्षे ।

**पिचुमन्द(र्द)** पु० पिचुं कुष्ठं मन्दयति, मृद्नाति वा अच् ।

**पिचुल** पु० पिचुं लाति ला-क । झावुकवृक्षे (झाउ) इज्जले, तूले, जलवायसे च ।

**पिच्च** छेदे चु०उभ०सक०सेट् । पिच्चयति ते अपिपिच्चत् त ।

**पिच्चट** न० पिच्च-अटन् । सीसके, रङ्गे, नेत्ररोगभेदे च ।

**पिच्छ** बाधे तु०प०सक० सेट् । पिच्छति अपिच्छीत् ।

**पिच्छ** न० पिच्छ-अच् । मयूरपुच्छे, चूडायाञ्च । लाङ्गूले पु० । शाल्मलिवृक्षे, पूगे, परम्परायाम्, कोषे, मोचायां, भक्तसंभूत मण्डे, पङ्क्तौ, शिंशपावृक्षे, कोलिकायाम्, अश्वस्य चरणरोगभेदे च स्त्री० टाप् ।

**पिच्छल** त्रि० पिच्छ-कलच् । (पिचल) स्निग्धे मसृणे ।

**पिच्छलदला** स्त्री० पिच्छलं दलं यस्याः । बदरीवृक्षे, पिच्छिलपत्त्रादयोऽप्यत्र । [शिंशपायाम्

**पिच्छितिका** स्त्री० पिच्छ-क्तिच् पृ० इट् ततः स्वार्थे कन् ।

**पिच्छिल** त्रि० पिच्छा+अस्त्यर्थे इलच् । (पेचल) मसृणे स्निग्धे 'पिच्छिलानि च दधीनी'ति काव्यप्र० । भक्तमण्डे, सरसव्यञ्जनसूपादौ, मण्डयुक्तभक्ते च । श्लेष्मातकवृक्षे पु० ।

**पिच्छिलत्वच्** पु० पिच्छिला श्लक्ष्णा त्वक् यस्य । नागरङ्गवृक्षे

**पिच्छिलसार** पु० पिच्छिलः सारोऽस्य । मोचरसे ।

**पिज** दीप्तौ वासे, बले च अक०हिंसायां दाने च सक० चु० उभ०सेट् इदित् । पिञ्जयति ते अपिपिञ्जत् त ।

**पिञ्ज** न० पिजि-अच् । बले । कर्पूरभेदे पु० । व्याकुले त्रि० । तूले, हरिद्रायां,अहिंसायां च स्त्री० । भावेऽच् । वधे पु० ।

**पिञ्जट** पु० पिजि-अटन् । नेत्रमले (पिचुटि) ।

**पिञ्जर** न० पिजि-अरच् । हरिताले, स्वर्णे, नागकेशरे, विहगादिबन्धनस्थाने, देहास्थिवृन्दे च । अश्वभेदे पु० । पीतरक्तवर्णे, पीतवर्णे च पु० । तद्वति त्रि० ।

**पिञ्जल** न० पिजि-कलच् । हरिताले, कुशपत्रे च । अत्यन्ताकुलसैन्यादौ पु० । कुशान्तरवेष्टिते साग्रकुशपत्रद्वये स्त्री० ङीप् । [(पांदुज) ।

**पिञ्जिका** स्त्री० पिजि-ण्वुल् अत इत्त्वम् । तूलनालिकायां

**पिट** संहतौ ध्वनौ च भ्वा०पर०अक०सेट् । पेटति अपेटीत् ।

**पिट(क)** पु० पिट-क, । वंशवत्रादिनिर्मिते पात्रभेदे (पेटरा) विस्फोटे त्रि० । स्वार्थे कन् अत्रैव ।

**पिठ** क्लेशे, अक०वधे सक०भ्वा०पर० सेट् । पेठति अपेठीत्

**पिठर** पु०पिठ-क्करन् । गृहभेदे । मुस्तायां, मन्थानदण्डे च न० । स्थाल्यां पु०स्त्री० स्त्रीत्वे ङीप् ।

**पिड** राशीकरणे भ्वा० आत्म० सक० सेट् इदित् । पिण्डते अपिण्डिष्ट । अयं चुरादिरपि उभ० । पिण्डयति ते अपिपिण्डत्-त ।

**पिण्ड** त्रि०पिडि-घञ् अच् वा । संहते घने च । देहे, देहैकदेशे, गृहैकदेशे, शामगानां पितृभ्यो देये गोलाकारे अन्ने, गोले, सिह्लके, ओड्रे, वृन्दे, कवले, गजकुम्भे, मदनवृक्षे च पु० । आजीवने, लौहे, यजुर्वेदिभिः पितृभ्यो देये श्राद्धे विल्वा-

कारेऽन्ने च न० । [कन् । हिङ्गुकगन्धद्रव्ये ।
**पिण्डक** पु० पिण्ड इव कायति कै-क । पिण्डालौ, स्वार्थे
**पिण्डकन्द** पु० पिण्डाकारः कन्दः । पिण्डालौ ।
**पिण्डखर्जूर** पु०स्त्री० पिण्डाख्यः खर्जूरः । स्वनामख्याते वृक्षे
**पिण्डपुष्प** न० पिण्डं संहतं पुष्पम् । अशोकपुष्पे, जवापुष्पे,
पद्मपुष्पे, तगरपुष्पे च ।
**पिण्डपुष्पक** पु० पिण्डं पुष्पमिव कायति कै-क । वास्तूकशाके
**पिण्डफला** स्त्री० पिण्डमिव फलं यस्याः । कटुतुम्ब्याम्
**पिण्डमुस्ता** स्त्री० पिण्डा संहता मुस्ता । नागरमुस्तायाम्
**पिण्डमूल** न० पिण्डमिव मूलमस्य । गर्जरे (गाजर) ।
**पिण्डबीजक** पु० पिण्डाकारं बीजं यस्य कप् । कर्णिकारवृक्षे
**पिण्डाभ** पु० पिण्डः संघात इवाभाति अच् । सिह्लके ।
**पिण्डाभ्र** न० अभ्रभेदं अण् आभ्रं पिण्डमिवाभ्रम् ।
मेघजातकरकायाम् ।
**पिण्डायस** न० पिण्डं संहतमयः अच् समा० । तीक्ष्णायसे ।
**पिण्डार** पु० पिण्डं संघातमृच्छति ऋ-अण् । विकङ्कतवृक्षे,
क्षपणके, गोपे च । [कन्दगुडूच्याञ्च । स्वार्थे कन् अत्रैव ।
**पिण्डालु** पु० पिण्डाकार आलुः । (गोलआलु) कन्दभेदे,
**पिण्डि(ण्डी)(ण्डिका)** स्त्री० पिडि-इन् वा ङीप् स्वार्थे कन्
वा । सर्वकाष्ठसङ्गनाधारे रथचक्रमध्ये स्थाने रथनाभौ,
पीठे, जानुनोऽधःस्थे मांसलप्रदेशे च ।
**पिण्डित** त्रि० पिण्डि-क्त । संहते, घनीभूते, गुणिते च ।
तुरुष्के पु० । [गोडुम्बायां (गोमुक) ।
**पिण्डिला** स्त्री० पिण्डं पिण्डाकारं फलमस्त्यस्याः इलच् ।
**पिण्डीतक** पु० पिण्डीं स्वल्पपिण्डं फलपुष्पद्वारा तकति अनु
करोति तक-हासे अच् । मदनवृक्षे, तगरे च । [वृक्षे
**पिण्डीतगर** पु० पिण्ड्या स्वल्पपिण्डेनोपलक्षितस्तगरः । तगर
**पिण्डीपुष्प** पु० पिण्ड्या उपचचितं पुष्पमस्य । अशोकवृक्षे ।
**पिण्डीर** पु० पिण्डं पिण्डाकारं फलमीरयति ईर-अण् ।
दाडिमवृक्षे । नीरसे त्रि० ।
**पिण्डीशूर** पु० पिण्ड्यां भोजने एव नान्यत्र शूरः । गेहे-
नर्दिनि, युद्धादावसमर्थे । [ज्योतिष्मतीलतायाम् ।
**पिण्या** स्त्री० पण्यते सूयते रोगहन्तृत्वेन यत् पृ० इत्वम् ।
**पिण्याक** पु०न० पण-व्यवहारे आकन् नि० । तिलकल्के (खल)
हिङ्गुनि, वाह्लीके च । सिह्लके पु० स्त्री० स्त्रीत्वे ङीप् ।
**पितामह** पु० पितुः पिता पितृ+डामह । पितुः पितरि,
पितृपित्रादयोऽप्यत्र । तत्पत्न्यां स्त्री० ङीप् ।
**पितृ** पु० पाति रक्षति पा-तृच् नि० । जनके । माता सहोक्तौ
पितृशेषः । मातापित्रोः द्विव० । [पित्र ।
**पितृकानन** न० ६त० । श्मशाने । पितृवनपितृसद्मादयो-
**पितृतीर्थ** न० ६त० । गयायाम् तर्जन्यङ्गुष्ठयोर्मध्यभागे च ।
**पितृपति** पु० ६त० । यमे । पितृराजादयोऽप्यत्र ।
**पितृप्रसू** स्त्री० पितॄणां प्रसूरिवान्नदानयोग्यकालत्वात् ।
अपरसन्ध्याकाले, पितुर्मातरि च ।
**पितृप्रिय** पु० ६त० । भृङ्गराजे ।
**पितृभोजन** पु० पितृभिर्भुज्यते कर्मणि ल्युट् । माषे, श्राद्धे
तद्दानस्य प्रशस्तत्वात् । भावे घञ् ६तः । पितृभक्षणे ।
**पितृयज्ञ** पु०६त० पितुद्देशेन यज्ञः । पितृतर्पणे । 'पितृयज्ञस्तु
तर्पणम्'मिति मनुः ।
**पितृयाण** पु० पितृभिर्यायतेऽनेन करणे ल्युट् पूर्व० णत्वम् ।
धूमादिचिह्निते स्मृतैः कर्मिभिर्गन्तव्ये पथिभेदे । [इन्दुदमिधाने
**पितृलोक** पु०६त० । चन्द्रलोकस्योपरिस्थे लोकभेदे विस्तरस्तु
**पितृबन्धु** पु०६त० । 'पितुः पितुःस्वसुःपुत्राः पितुर्मातुः-
स्वसुःसुताः । पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबन्धवः'
इत्युक्तेषु पितुः पितृष्वसृपुत्रादिषु । [भ्रातरि ।
**पितृव्य** पु० पितुर्भ्राता पितृ+व्यत् । ज्येष्ठे कनिष्ठे वा पितु-
**पितृष्व(स)सृ** स्त्री० ६त० वा षत्वम् । पितुर्भगिन्याम् ।
**पितृष्वस्रीय** पु०स्त्री० पितुः स्वसुरपत्यम् छ । पितृष्वसुःपुत्रे
**पितृसन्निभ** पु० पित्रा सन्निभा तुल्यता यस्य । पितृतुल्ये ।
**पित्त** न०अपि दो-क्त तादेशः अल्लोपः न दीर्घः । देहस्थे धातुभेदे
**पित्तघ्नी** स्त्री० पित्तं हन्ति हन-टक् ङीप् । गुडूच्याम् ।
**पित्तद्राविन्** पु० पित्तं द्रावयति द्रु+णिच्-णिनि । मधुर-
जम्बीरे । [तोयपिप्पल्यां स्त्री० ।
**पित्तल** न० पित्तं लाति ला-क । ताम्रादिजाते धातुभेदे ।
**पित्तारि** पु०६त० । पर्पटे (चेतपापड़ा) लाक्षायां, बर्बरे च ।
**पित्र्य** त्रि० पितुः इदं, प्रियं वा पितृत आगतं वा यत् ।
पितृसम्बन्धिनि । पितृतीर्थे तर्जन्यङ्गुष्ठयोर्मध्यस्थाने,
मधुनि,मघानक्षत्रे च । पितृप्रिये माषे पु० । अमावस्यायां
तिथौ स्त्री० । [त्रि० ।
**पित्सन्** पु० पत-सन्-शतृ । पक्षिणि । पतनेच्छावति
**पिधान** न० अपि+धा-ल्युट् अल्लोपः । छादने, उदञ्चने च ।
**पिनद्ध** त्रि० अपि+नह्-क्त अल्लोपः । परिहिते वस्त्रादौ ।
**पिनाक** पु०न० पाति पा-आकन् नि० । शिवधनुषि, तच्छू-
लास्त्रे, पांशुवर्षणे च ।
**पिनाकिन्** पु० पिनाक+अस्त्यर्थे इनि । महादेवे ।
**पिपासा** स्त्री० पातुमिच्छा पा+सन्-अ । पानेच्छायाम् ।

**पिपासु** त्रि० पातुमिच्छुः पा-सन् उ । पानेच्छावति तृषिते ।

**पिपीतकी** स्त्री० वैशाखशुक्लद्वादश्याम् । विप्रभेदे पु० ।

**पिपीलक** पु० अपि-पील-ण्वुल् अल्लोपः । (डेओपिपड़ा) ख्याते कीटे (क्षुद्रेपिपड़ा) ख्याते कीटे स्त्री० टाप् ।

**पिप्पल** न० पा-अलच् पृ०। जले, वस्त्रखण्डभेदे च। अश्वत्थवृक्षे, वस्त्रनस्त्रन्चे पक्षिणि च पु०। कणायां (पिपुल) स्त्री० ङीप् वा ह्रस्वः पिप्पलिः पिप्पली चात्र । [वृक्षे ।

**पिप्पलीमूल** न० पिप्पल्या इव मूलमस्य । (पिपुलमूल) ख्याते

**पिप्लु** पु० अपि+प्लु-प-डु अपेरल्लोपः । जडुले । [वृक्षभेदे ।

**पियाल** पु० पी-पाने कालन् । प्रियाले (पेयासाल) (नरगा)

**पिल** प्रेरणे चु० उभ०सक०सेट् । पेलयति ते अपीपिलत्-त

**पिलुक** पु० पिल-कु ततः कन् । पीलुवृक्षे ।

**पिलुपर्णी** स्त्री० पिलु पर्णमस्याः ङीप् । मोरटालतायाम् ।

**पिल्ल** न० क्लिद्-क्त पिलादेशः । क्लिन्नचक्षुषि । तद्युक्ते त्रि० ।

**पिव** सेचने भ्वा० पर०सक०सेट् इदित् । पिन्वति अपिन्वीत् ।

**पिश** अवयवे तु०सु०पर०सक०सेट् । पिंशति अपेशीत् ।

**पिशङ्ग** पु० पिश-अङ्गच् किच्च । पद्मधूलितुल्ये पिङ्गलवर्णे तद्वति त्रि० । [प्रेते च ।

**पिशाच** पु० पिशितमश्नाति अश-अण् पृ० । देवयोनिभेदे,

**पिशाचद्रु** पु० ६त० । शाखोटवृक्षे । पिशाचवृक्षादयोऽप्यत्र ।

**पिशित** न० पिश-क्त । मांसे । जटामांस्यां स्त्री० वा ङीष् ।

**पिशुन** न० पिश-उनन् किच्च । कुङ्कुमे । नारदे, काके च पु० । सूचके, क्रूरे च त्रि० । (पिड़िङ्) शाकभेदे स्त्री० टाप् ।

**पिष** चूर्णने रु० पर० सक० अनिट् । पिनष्टि अपिषत् ।

**पिष्ट** न० पिष-क्त । सीसके, पिष्टके च । चूर्णिते त्रि० ।

**पिष्टक** पु०न० पिष्टानां, तण्डुलचूर्णानां विकारः कन् । (पिठे) खाद्यभेदे । [पाकपात्रे कटाहादौ ।

**पिष्टपचन** न० पिष्टं पच्यतेऽनेन पच-करणे ल्युट् । पिष्टक-

**पिष्टप** पु०न०। पिष्यते, पिष्यते वात्र पिष-पिष-वा प नि०। भुवने

**पिष्टात** पु० पिष्टमतति अत-अण् । पटवासनार्थे चूर्णगन्धद्रव्ये ।

**पिष्टिक** न० पिष्टे भवः ठ । (पिटालि) तण्डुलचूर्णजाते दुग्धाकारे द्रवे पदार्थे । द्विदलपिष्टजाते स्त्री० टाप् ।

**पिस** गतौ भ्वा०पर०स०सेट् । पेसति अपेसीत् चङि न ह्रस्वः

**पिस** दीप्तौ वा चु० उभ०पक्षे भ्वा०पर०अक० सेट् इदित् । पिंसयति ते अपिपिंसत् त । पक्षे पिंसति अपिंसीत् ।

**पिस** वासे बले च अक० वधे दाने गतौ च सक० चु० उभ० सेट् । पेसयति–ते अपीपिसत् त ।

**पिहित** त्रि० अपि धा-क्त अल्लोपः । तिरोहिते आच्छादिते च

**पी** पाने दि०आत्म०अनिट् । पीयते अपेष्ट । ल्यप् निपीय ।

**पीठ** पु० न० पीयते पिवते वा अत्र पा-ठक् पिठ-क वा पृ० दीर्घः । (पीड़े) आसनभेदे व्रतिनामासने च ।

**पीठसर्पि** त्रि० पीठेन सर्पति सृप-णिनि । खञ्जे ।

**पीड** वधे विलोड़ने च चु०उभ०सक०सेट् । पीडयति-ते अपि. पीड़त्-त अपीपिडत्-त ।

**पीडन** न० पीड-ल्युट् । शराद्यस्यन्त्रादिनाऽभिभवे, मल्लुन्टपादिना आक्रमणे, दुःखोत्पादने च ।

**पीडा** स्त्री० पीड-अ । व्यथायां, दुःखे च ।

**पीडित** त्रि० पीड़-क्त । मर्दिते, यन्त्रिते, दुःखिते च ।

**पीत** न० पा-क्त । पाने, हरिताले च । हरिद्रावर्णे पु० । कर्मणि क्त । पानकर्मणि, पीतवर्णवति च त्रि० ।

**पीतक** न० पीत+स्वार्थे कन् । कुङ्कुमे, हरिताले च । अगुरुणि-पद्मकाष्ठे, पित्तले, माक्षिके, श्योनाकभेदे, किरातवृक्षे, नान्दीवृक्षे, पीतशाले च पु० । अव्यक्तमानार्थे संज्ञाभेदे न०

**पीतकदली** स्त्री० कर्म० । स्वर्णकदल्याम् (चांपाकला) ।

**पीतकन्द** न० पीतः कन्दो यस्य (गर्जरे) (गाजर) ।

**पीतकावेर** न० कुत्सितं वेरं कावेरं पीतं कावेरं यस्मात् ५ब० । कुत्सिताङ्गं पीतं कुर्व्वति कुङ्कुमे, पित्तले च ।

**पीतकाष्ठ** न० कर्म० । पीतचन्दने पीतागुरुणि ।

**पीतघोषा** स्त्री० कर्म०। पीतपुष्पवत्यां घोषातक्याम् ।

**पीततण्डुल** पु० पीतस्तण्डुलो यस्य । (काङ्नी) धान्यभेदे । चौरिकावृक्षे स्त्री० टाप् ।

**पीततैला** स्त्री० पीतं तैलं यस्याः । ज्योतिष्मतीलतायाम् ।

**पीतदारु** न० कर्म०। सरलवृक्षे, देवदारुणि, हरिद्रुवृक्षे च ।

**पीतद्रु** पु० कर्म० । सरलवृक्षे, दारुहरिद्रायाञ्च ।

**पीतन** न० पीतं करोति पीत+णिच्-ल्यु । कुङ्कुमे, हरिताले, पीतदारुणि च । प्लक्षे, आम्रातके च पु० । स्वार्थे कन् । आम्रातके (आमड़ा) पु०।

**पीतपर्णी** स्त्री० पीतं पर्णं यस्याः । (विछुटी) लतायाम् ।

**पीतपुष्प** पु० पीतं पुष्पं यस्य । कर्णिकारवृक्षे । आढक्याम्, इन्द्रवारुण्याञ्च स्त्री० टाप् । शङ्खपुष्प्यां, सहदेव्यां, महाकोशातक्यां, तपुष्यां, (झाऊ) च स्त्री० ङीप् वा टाप् ।

**पीतफल(क)** पु० पीतं फलं यस्य वा कप् । शाखोटवृक्षे, कर्म्मारवृक्षे च ।

**पीतवालुका** स्त्री० पीता वालुकेव चूर्णमस्याः । हरिद्रायाम् ।

**पीतमुद्ग** पु० कर्म० । (सोनामुग) मुद्गभेदे ।

**पीतयूथी** स्त्री० कर्म० । स्वर्णयूथ्याम् ।

**पुड** उत्सर्गे तु०पर०सक०सेट्। पुडति अपोडीत्।

**पुण** धर्म्मकृत्यकरणे तु०पर०सक०सेट्। पुणति अपोणीत्।

**पुण्डरीक** पु० पुडि-ईक नि०। अग्निकोणस्थे, दिग्गजे व्याघ्रे च। सितपद्मे, श्वेतपद्मे, भेषजे च न०। आम्रे, राजिलसर्पे, हस्तिज्वरे, दमनकवृक्षे, कमण्डलौ, श्वेतवर्णे, कुष्ठभेदे च पु०। श्वेतवर्णवति त्रि०।

**पुण्डरीकाक्ष** पु० पुण्डरीकमिव अक्षिणी यस्य षच् समा०। विष्णौ, शालपर्णीतुल्यपर्णके नेत्रहितकारके क्षुपभेदे च न०

**पुण्ड्र** पु०पुडि-रक्। (पुंडिया) इक्षुभेदे, माधवीलतायां, चित्रके, तिलकवृक्षे, क्षुद्रकुष्ठे, दैत्यभेदे च।

**पुण्ड्रक** पु०पुण्ड्र+कन्। माधवीलतायाम्, तिलकवृक्षे, इक्षुभेदे च

**पुण्य** न० पुनाति पू-डुण्य। शुभादृष्टे धर्म्मे। तद्वति त्रि०।

**पुण्यकव्रत** न०पुण्य+स्वार्थे कन् कर्म०। पुराणप्रसिद्धे व्रतभेदे, शास्त्रबोधिते धर्म्मप्रदे उपवासादिव्रतभेदे च।

**पुण्यगन्ध** पु० पुण्यो गन्धो यस्य। चम्पके। [चन्द्रे।

**पुण्यजन** पु० पुण्यः विरुद्धलक्षणया पापी जनः कर्म्म०। रा-

**पुण्यजनेश्वर** पु० इत०। कुबेरे।

**पुण्यतृण** न० कर्म्म०। श्वेतकुशे।

**पुण्यभूमि** स्त्री० पुण्यस्य पुण्योत्पादनार्थां भूमिः। आर्य्यावर्त्तदेशे "आ समुद्रात्तु वै पूर्व्वादा समुद्रात्तु पश्चिमात्। तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं"मिति मनुः तयोर्विन्ध्यहिमाचलयोः। [युक्ते।

**पुण्यवत्** त्रि० पुण्य+भूमार्थे मतुप् मस्य वः। बहुपुण्य-

**पुण्यश्लोक** त्रि० पुण्यः पुण्यदायकः श्लोको यशश्चरितं वा यस्य। 'पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः। पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्द्दनः' इत्युक्तेषु नलादिषु। पुण्यचरितयुक्तमात्रे च।

**पुण्याह** न० पुण्यमहः टच् समा०। पुण्यजनके दिने।

**पुण्याहवाचन** न० पुण्याहस्य पुण्यजनकदिनस्य वाचनं ब्राह्मणद्वारा वादनम् वच-णिच्-ल्युट्। वैदिककर्म्मारम्भे तद्दिनस्य पुण्यतया ब्राह्मणद्वारा वादने।

**पुत्तिका** स्त्री०पुत् इति शब्दं तनोति तन-ड स्वार्थे कन् ह्रस्वः अत इत्वम्। क्षुद्रमक्षिकायाम्।

**पुत्र(त्र)** पु० पुतस्त्रायते पुत्+त्रै-क 'पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः। तस्मात् पुत्र इति ख्यात' इत्युक्ते तनये। पू-त्र ह्रस्वश्च। औरसादिद्वादशविधे तनये। कन्यायां ङीप् पुत्री। ज्योतिषोक्ते लग्नात् पञ्चमे स्थाने पु०। पुत्रपुत्रीशब्दयोरेकशेषे पुत्र एव शिष्यते तयोर्द्वयोः द्विव०।

**पुत्रक** पु० पुत्र+स्वार्थानुकम्पासंज्ञादौ कन्। पुत्रे, धूर्त्ते, शरभे, वृक्षभेदे, अनुकम्पान्विते च। कन्यायां टाप्, पुत्रिका।

**पुत्रजीव** पु० पुत्रं जीवयति जीव-अण्। (जियापुता) वृक्षभेदे इङ्गुदे। स्वार्थे। इ० कन्। पुत्रञ्जीवकोऽप्यत्र।

**पुत्रदा** स्त्री० पुत्रं ददाति सेवनात् गर्भं ददाति दा-क। वन्ध्याकर्कोट्यां, लक्ष्मणाकन्दे च। गर्भप्रदे पुत्रप्रदे च त्रि०

**पुत्रभद्रा** स्त्री० पुत्रस्य भद्रं यस्याः ६ब०। बृहज्जीवन्त्याम्

**पुत्रिका** स्त्री० 'अस्मात्कां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भवे'दिति समयेन प्रदत्तायां कन्यायां, 'पुत्रिकाधर्म्म शङ्कये'ति स्मृतिः।

**पुत्रिकापुत्र** पु०पुत्रिकैव पुत्रः पुत्रिकायाः पुत्रः वा। पुत्रिकारूपेण पुत्रत्वेनाभ्युपगतायां कन्यायां, तत्पुत्रे च।

**पुत्रेष्टि** स्त्री० पुत्रस्य पुत्रार्था इष्टिः यज-क्तिन्। पुत्रनिमित्तके यागभेदे 'गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेदि'ति।

**पुथ** हिंसे दि० पर०सक०सेट्। पुथ्यति अपोथीत्। [अपुन्थीत्

**पुन्थ** बधे सक० क्लेशे अक० भ्वा० पर० सेट् इदित्। पुन्थति

**पुथ** दीप्तौ चु०उभ०सक०सेट्। पोथयति-ते अपूपुथत्-त।

**पुद्गल** पु० गलतीति गल-अच् पुत् कुत्सितं गलो यस्मात् ५ब०। उत्कृष्टाकारे, रूपादिविशिष्टे द्रव्ये, अणुकादिस्थानीये बौद्धाद्युक्ते पदार्थे च। [अभीक्ष्णे।

**पुनःपुनर्** अव्य० पुनर्+वीप्सायां द्वित्वम्। मुहुरित्यर्थे

**पुनःपुना** पु०पुनःपुनाति पू-क्नक् पृ०। नदीभेदे 'कीकटेषु गयापुण्या नदी पुण्या पुनःपुने'ति वायुपुराणम्।

**पुनःसंस्कार** पु० पुनर्वारः संस्कारः उपनयनविवाहादिः। सम्+कृ-घञ् सुट् च। पापादिहेतुभिः कृतस्य संस्कारस्यान्यथाभावे द्वितीयसंस्कारे 'पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हती'ति ज्योतिषम् पौनर्भवेन भर्त्त्रा सा पुनःसंस्कारमर्हती'ति मनुः। [पक्षान्तरे द्वितीयवारे च।

**पुनर्** अव्य० पन अर पृ०। अवधारणे, भेदे, अधिकारे,

**पुनरुक्तवदाभास** पु० 'आपाततो यदर्थस्य पौनरुक्त्येव भासते। 'पुनरुक्तवदाभास' इत्युक्ते अलङ्कारभेदे।

**पुनर्नव** पु० छिन्नोऽपि पुनरपि नवः सुप्सुपा० न णत्वम्। नखे। स्वनामख्याते शाकभेदे स्त्री० टाप्। [याम् स्त्री०।

**पुनर्भव** पु० छिन्नोऽपि पुनर्भवति भू-अच्। नखे। रक्तपुनर्नवा-

**पुनर्भू** स्त्री० पुनर्भवति प्रथममेकस्य जाया भूत्वापरस्य पुनर्जाया भवति भू-क्विप्। 'कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता। पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्म्मणा' इत्याद्युक्तायां द्विरूढायां स्त्रियाम्। पुनर्जातमात्रे त्रि०।

**पुनर्व्वसु** पु० पुनर्+वस-उ । विष्णौ, शिवे च । अश्विन्यवधिके सप्तमे नक्षत्रे स्त्रिय० ।

**पुन्नाग** पु० पुमान् नाग इव श्रेष्ठः प्रधानत्वात् स इव । स्वनामख्याते पुष्पप्रधाने वृक्षभेदे, श्वेतोत्पले, जातीफले, पाण्डुवर्णहस्तिनि, नरश्रेष्ठे च । [पुन्नाडोऽप्यत्र ।

**पुन्नाट** पु० पुमानिव नाटयति नट-अण् । चक्रमर्दे । नड-अच् ।

**पुन्नामनरक** पु० पुत् इति नाम यस्य कर्म्म० । परदाराभिगमनादिभिः षोडशभिः पातकैःभोग्ये नरकभेदे, परदारादिकं प्रकृत्य 'एतैस्तु पापैः पुरुषैः पुन्नामनरके पचेदि'ति पुराणम्

**पुमस्** पु० पाति पा-डुमसुन् । पुरुषे, मनुष्ये च । व्याकरणोक्ते संस्कारविशेषाधारे शब्दभेदे च ।

**पुर** अग्रगतौ तु०पर०सक०सेट् । पुरति अपोरीत् ।

**पुरःसर** त्रि०पुरोऽग्रे सरति सृ-ट । अग्रगामिनि स्त्रियां ङीप्,

**पुर** न० पुर-अग्रगमने क । गेहे देहे पाटलिपुत्रे नगरभेदे, कुसुमदलवृत्तौ, नागरमुस्तायां, चर्म्मणि, स्तम्भोपरिस्थगृहे च । बहुग्रामीयव्यवहारस्थाने बहुहट्टादियुक्ते प्रधानग्रामे न० स्त्री० । स्त्रीत्वे ङीप् । राशौ, पीतभिण्टायाम्, गुग्गुलौ च पु०

**पुर्** स्त्री० पिपर्त्ति पृ-दीर्घे क्विप् । नगर्य्याम् ।

**पुरञ्जन** पु०पुरं देहं स्वादृष्टेन स्वसान्निध्येन वा जनयति खच् । जीवे तददृष्टेन तत्सान्निध्ये न च हि देहारम्भः ।

**पुरञ्जय** पु० काकुत्स्थाख्ये सूर्य्यवंश्ये नृपभेदे ।

**पुरतस्** अव्य० पुर-अतसुच् । अग्रत इत्यर्थे ।

**पुरद्विष्** पु० पुराणां मयनिर्म्मितानां नगराणां दाहकत्वात् द्विट् द्विष-क्विप् । शिवे । पुरारिप्रभृतयोऽप्यत्र ।

**पुरन्दर** पु०पुरं दारयति दृ-खच् । इन्द्रे, चौरे, (चइ) चव्ये च

**पुरन्ध्रि(न्ध्री)** पुरं गेहं धारयति पालयति धृ-खच् गौरा० ङीषो० वा ह्रस्वः । बहुकुटुम्बवत्याम्, पतिपुत्रवत्याञ्च स्त्रियां, 'स्तेष्टेस्तेष्टे व्ययपुरन्ध्रिवर्गमि'ति कुमारः ।

**पुरस्** अव्य०पूर्व्वस्मिन् कालादौ असि पुरादेशः । अग्रत इत्यर्थे

**पुरस्कार** पु० पुरस्+कृ-घञ् । अभ्यर्चणे, पूजने च ।

**पुरस्कृत** त्रि० पुरस्+कृ-क्त । पूजिते, अग्रकृते च । 'मधुनाग्रपुरस्कृतेने'ति नैषधम् । अभिशस्ते, अरिग्रस्ते, स्वीकृते, सिक्ते च त्रि० ।

**पुरस्तात्** अव्य० पूर्व्व-अस्ताति पुरादेशः । दिग्देशकालवृत्तेः प्रथमापञ्चमीसप्तम्यन्तस्य पूर्व्वशब्दस्यार्थे, अग्रत इत्यर्थे च ।

**पुरा** अव्य०पुर-का । अविच्छेदेन क्रियाकरणे, पुराणे अतीते, भाविनि, निकटे, पुरावृत्ते च । पुर+क टाप् । पूर्व्वस्यां दिशि, सुगन्धिद्रव्यभेदे च स्त्री० ।

**पुराण** त्रि०पुरा-भवः श्यु नि०तुट् न, पुरा नीयते नी-ड वा पूर्व्व० णत्वम्, पुराभवे । 'सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च । वंशानुचरितञ्चैव पुराणं पञ्चलक्षण'मित्युक्ते व्यासादिप्रणीते शास्त्रभेदे न० ।

**पुरातन** त्रि० पुरा भवं पुरा श्यु+तुट् च । पुराभवे ।

**पुराणपुरुष** पु० पुराणैकरूपस्तत्यः पुरुषः शाक०, कर्म्म० वा । विष्णौ, वृद्धे पुरुषे च ।

**पुरावृत्त** न० पुरा पूर्व्वस्मिन् काले यत् वृत्तं भूतं तत्कथया तदाश्रितकथादि । इतिहासे, तत्प्रतिपादकग्रन्थे महाभारतादौ च । [लतायाम् ।

**पुरासिनी** स्त्री० पुरं स्कन्दमस्यति अस णिनि । सहदेवी

**पुरीतत्** स्त्री०न० पुरीं देहं तनोति तन-क्विप् । देहान्तःस्थे (आंत) अन्त्राख्ये नाडीभेदे ।

**पुरीमोह** पु० पुरीं देहं मोहयति मुह-णिच्-अण् । धुस्तूरे ।

**पुरीष** न० । पृ-दीर्घे ईषन् किच्च । विष्ठायाम् ।

**पुरु** पु० पृ-दीर्घे कु । ययातेर्नृपस्य कनिष्ठपुत्रे यद्वंशात् कुरूणां पौरवेति संज्ञा । स्वर्गे, परागे, दैत्यभेदे, नदीभेदे च । प्रचुरे त्रि० । ['दैवं पुरुषकारश्चे'ति स्मृतिः

**पुरुषकार** पु० पुरुषस्य कारः कृञ-घञ् । पौरुषे पुरुषचेष्टिते

**पुरुषदघ्न** त्रि० पुरुष उन्मानं यस्य दघ्नच् । पुरुषतुल्योन्माने, द्वयसच् । पुरुषद्वयसोऽप्यत्र स्त्रियां ङीप् । [नागादयोऽप्यत्र

**पुरुषसिंह** पु० पुरुषः सिंह इव उपमि० । नरश्रेष्ठे एवं पुरुष

**पुरुषार्थ** पु०६त० । धर्म्मार्थकाममोक्षरूपेषु पुरुषप्रयोजनेषु

**पुरुषोत्तम** पु० पुरुषेषु उत्तमः कर्म्म० वा । विष्णौ, उत्तमपुरुषे च । 'अथ स्तुतिं पुरुषोत्तमादि'ति नैषधम् ।

**पुरुह** त्रि० पुरु+हन-ड । प्रचुरे । हु । पुरुहूरप्यत्र ।

**पुरुहूत** पु० पुरूणि प्रचूराणि हूतानि नामान्यस्य । इन्द्रे ।

**पुरूरवस्** पु० बुधेनेलायामुत्पादिते उर्व्वशीकान्ते चन्द्रवंश्ये नृपे

**पुरोग** त्रि०पुरोऽग्रे गच्छति गम-ड । अग्रगामिनि' प्रधाने च । खच् । पुरोगमः, णिनि । पुरोगामीतिचाप्यत्र ।

**पुरोडाश(ष)** पु० पुरोदाश्यते दाश-कर्म्मणि क्विप्, घञ् वा । हविषि यज्ञियद्रव्ये ।

**पुरोधस्** पु० पुरोग्रे धीयते धा-असि किच्च । पुरोहिते ।

**पुरोभागिन्** त्रि० पुरः पूर्व्वं भजते भज-घिनुण् । गुणत्यागेन दोषमात्रग्राहिणि । अग्रभागवति त्रि० ।

**पुरोहित** पु० पुरोऽग्रे दृष्टादृष्टफलेषु कर्म्मसु धीयतेऽसौ धा-क्त । राज्ञां दृष्टादृष्टफलकेषु कर्मसु पुरस्कृते जने ।

**पूर्व्व** पूर्त्तौ भ्वा०पर०सक०सेट् । पूर्व्वति अपूर्व्वीत् ।

पुर्व्व निकेतने अक०चु०उ०सेट्। पूर्व्वयति ते अपुपूर्व्वत् त।
पुल उच्छ्रितौ वा चु० उभ०पक्षे तु०प०अक०सेट्। पोलयति ते पुलति अपूपुलत् त अपोलीत्। [न०
पुल महत्त्वे भ्वा०प०सक०सेट्। पोलति ते अपोलीत्। [पुलाके
पुल(क) पु० पुल-क ततः स्वार्थे कन् वा। रोमाञ्चे, कङ्कुष्ठे च
पुलकिन् पु० पुलकास्तदाकारं पुष्पमस्त्यस्य इनि। धाराकदम्बे।
पुलस्ति(स्त्य) पु० मुनिभेदे।
पुलह पु० मुनिभेदे। [धान्ये, भक्तगुलिकायां, चिप्रे च।
पुलाक पु० पुल+अक-अण्। संक्षेपे, शस्यशून्ये (चागड़ा)
पुलायित न० पुल+क्यच् क्त। अश्वगतिभेदे।
पुलिन न० पुल-इनन् किच्च। तोयाद्‌उत्थिते तटे (चड़ा)
पुलिन्द पु० पुल-किन्दच्। चाण्डालभेदे।
पुलोमजा स्त्री० पुलोमा असुरभेदस्तस्मात् जायते जन-ड। इन्द्राण्यां, शच्याम्। [शचीमिन्द्रः उपयेमे।
पुलोमन् पु० इन्द्रस्य द्वेष्ये असुरभेदे यं जित्वा तत्कन्यां
पुलोमारि पु०६त०। इन्द्रे पुलोमशत्रुप्रभृतयोऽप्यत्र।
पुष पुष्टौ अक० पोषणे सक०दि०पर०अनिट्। पुष्यति अपुषत्
पुष पुष्टौ अक० पोषणे सक०क्र्या०प०सेट्। पुष्णाति अपोषीत्
पुष पुष्टौ भ्वा०पर०अक० सेट्। पोषति अपोषीत्।
पुष धृतौ चु०उभ०सक०सेट्। पोषयति ते अपूपुषत् त।
पुषा स्त्री० पुष्णाति पुष-क टाप्। लाङ्गलीवृक्षे।
पुषित त्रि० पुष-क्त। पुष्टे, प्रतिपालिते पक्षिस्त्र्यादौ।
पुष्कर न० पुष-करन् कस्य नेत्त्वम्। गजकराग्रे, वाद्यभाण्डे, सुखे, जले, आपणे, खड्गफलके, पद्मे, तीर्थभेदे कुष्ठौषधौ, पद्मकोषे, द्वीपभेदे, युद्धे च। नागभेदे, रोगभेदे, नृपभेदे, सारसपक्षिणि च पु०। [न्यास्। पुष्करनाभीत्यप्यत्र।
पुष्करकर्णिका स्त्री० पुष्करस्येव कर्णिकाऽस्याः। स्थलपद्मि-
पुष्करिणी स्त्री० पुष्कर+समूहार्थे सम्बिकटदेशार्थे च इनि। स्थलपद्मिन्याम्, पद्मसमूहे, तद्युक्तलतायाञ्च। पुष्करमूले, शतधनुःपरिमितदीर्घविस्तारे जलाशयभेदे च।
पुष्करिन् पु० पुष्करं शुण्डाग्रमस्त्यस्य इनि। गजे।
पुष्कल त्रि० पुष-कलच् कस्य नेत्त्वम्। 'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कल'मित्युक्ते परिमाणभेदे। श्रेष्ठे, वस्तु-उपस्थिते च त्रि०।
पुष्टि स्त्री०पुष-क्तिन्। पोषणे, वृद्धौ, तद्धेतुत्वात् अश्वगन्धायां, वृद्ध्यादौ पूज्यषोडशमातृकामध्ये मातृकाभेदे च।
पुष्टिदा स्त्री० पुष्टिं ददाति दा-क। अश्वगन्धायाम्, वृद्धौ, पोषणदात्यां, स्त्रियाञ्च।

पुष्प विकासे दि०पर०अक०सेट्। पुष्प्यति अपुष्पीत्।
पुष्प न० पुष्प-अच्। कुसुमे स्त्रीरजसि, विकासे, कुबेरस्य विमाने, नेत्ररोगभेदे च। स्वार्थे कन्। कुबेरस्य विमाने, नेत्ररोगभेदे, रत्नमयकङ्कणे, रसाञ्जने, लोहकांस्ये, मृद्-ङ्गारयोः शकट्यां, कासीसे च। [चयनमाले
पुष्पकरण्डक न० ६त०। (फुलेरसाजि)वंशादिनिर्मिते पुष्प-
पुष्पकेतु पु० पुष्पनिर्मितः केतुरञ्जनम्। कुसुमाञ्जने।
पुष्पचाप पु० पुष्पमयं चापमस्य। कामदेवे पुष्पधन्वादयोऽप्यत्र
पुष्पचामर पु० पुष्पं चामर इव यस्य। मदनकदृक्षे।
पुष्पदन्त पु० वायुकोणस्थे दिग्गजे, विद्याधरभेदे च।
पुष्पदन्तक पु० महिम्न इत्यादिस्तवकर्तरि गन्धर्वभेदे।
पुष्पपुर न० पाटलिपुत्रनगरे कुसुमपुरे (पाटना)
पुष्पफल पु० पुष्पयुक्तं फलमस्य। कपित्थे।
पुष्पमास पु० पुष्पप्रधानो मासः शाक०। चैत्रे, वसन्तसमये।
पुष्परस पु० ६त०। मकरन्दे कुसुमनिर्य्यासे।
पुष्पराग पु० पुष्पस्येव रागो वर्णो यस्य। मणिभेदे (पद्मराग)
पुष्परोचन पु० पुष्पं रोचनेव यस्य। नागकेशरे। [प्यत्र
पुष्पलिह् पु०पुष्पं लेढि लिह-क्विप्। मधुकरे। क। पुष्पलिहो
पुष्पवती स्त्री० पुष्पं स्त्रीरजः अस्त्यस्य मतुप् मस्य वः। ऋतुमत्यां स्त्रियाम्। पुष्पविशिष्टे त्रि० दिवाकरनिशाक-रयोः मिलितयोः द्विव०।
पुष्पवाटी स्त्री०६त०। पुष्पोद्याने। स्वार्थे कन्। अत्रैव। 'दक्षिणेन पुष्पवाटिकामलाप इव श्रूयते' इति शकुन्तला।
पुष्पवाण पु० पुष्पाण्येव वाणा अस्य। कामे पुष्पशरादयोऽप्यत्र
पुष्पशरासन पु० पुष्पमयं शरासनं धनुर्यस्य। कामे।
पुष्पशून्य पु० ३त०। उडुम्बरे। पुष्परहितमात्रे त्रि०।
पुष्पसमय पु०६त०। वसन्ते ऋतौ।
पुष्पाजीव पु० पुष्पमाजीवति आ+जीव-अण्। मालाकारे।
पुष्पाञ्जन न०६त०। कुसुमाञ्जने (कोमकाजल)। [तथात्वम्
पुष्पासव न० ६त० रीतीपुष्पे तस्य पुष्पोद्भवत्वात् मादकत्वाच्च
पुष्पाह्वा स्त्री० पुष्पमित्याह्वा यस्याः। शतपुष्पायाम्।
पुष्पिताग्रा स्त्री० अर्द्धसमे छन्दोभेदे।
पुष्य पु०स्त्री० कार्य्यं पुष्यति पुष-कर्त्तरि यत् नि०। अश्विन्यादि (२७) नक्षत्रमध्ये अष्टमे नक्षत्रे, स्त्रीत्वे टाप्।
पुष्यरथ पु० कर्म० यात्रोत्सवाद्यर्थे रथे।
पुष्यलक पु०पुष-इन् पुषिः पुष्टिस्तस्यै अलति पर्याप्नोति अल-अच्। गन्धप्रधाने मृगभेदे। 'सीम्नि पुष्यलकोऽहत' इति।
पुष्यस्नान न० पुष्येनक्षत्रकाले स्नानम्। शास्त्रोक्तविधानेन

पुष्पनक्षत्रयुक्तकालेऽभिषेकभेदे। [ति अपुपुस्तत् त।
**पुस्त** बन्धे, अनादरे, आदरे च चु०उभ०सक०सेट्। पुस्तयति
**पुस्त** न०पुस्त-अच्। 'मृदा वा दारुणा वापि वस्त्रेणाप्यथ चर्मणा लौहरत्नैः कृतं वापि पुस्तमित्यभिधीयते' इत्युक्ते लिप्यादि शिल्पकर्मणि। स्वार्थे कन्। लिप्याधारे ग्रन्थे, पु०स्त्री० स्त्रीत्वे ङीप्।
**पू** शोधे दि०आत्म०सक०सेट्। पूयते अपविष्ट।
**पू** शोधे भ्वा०आ०सक०सेट्। पवते अपविष्ट। [अपविष्ट
**पू** शोधे क्र्यादि० प्वा० उभ० सक० सेट् पुनाति पुनीते अपावीत्।
**पूग** पु० पू-गन् किच्च। (सुपारि) वृक्षे, समूहे छन्दसि, भावे कण्टकिवृक्षे च।
**पूज** पूजने चु०उभ०सक०सेट्। पूजयति ते अपूपुजत् त।
**पूजा** स्त्री० पूज-अ। अर्चने। ल्युट्। पूजनमप्यत न०।
**पूजार्ह** त्रि० पूजामर्हति अण्। पूजनयोग्ये।
**पूज्य** पु० पूज-यत्। श्वशुरे। पूजनीयमात्रे त्रि०।
**पूण** राशीकरणे चु०उभ०सक०सेट्। पूणयति ते अपूपुणत् त
**पूत** न०पू-क्त। अपनीततुषे, (आगड़ारहित) बहुलीकृते धान्ये च। मन्त्रादिना शुद्धे त्रि०। सत्ये। शङ्खे, श्वेतकुशे, विकङ्कतवृक्षे च पु०। दूर्वायां स्त्री० टाप्।
**पूतक्रतायी** स्त्री०पूतक्रतोरिन्द्रस्य पत्नी ङीप् ऐङ् च। शच्याम्
**पूतक्रतु** पु० क्रतुभिः पूतः, पूताः पवित्रास्तस्मात्क्राः क्रतवो यस्याः यस्य वा। इन्द्रे।
**पूतगन्ध** पु० पूतोगन्धो यस्य। बर्बरे (वावुइतुलसी)
**पूतकुश** न० कर्म०। श्वेतकुशे।
**पूतना** स्त्री० पूतं करोति पूत+णिच्-युच्। हरीतक्यां, गन्धमांस्यां, बकासुरभगिन्यां, या विषाक्तं स्तन्यं पाययन्ती कृष्णेन हता। रोगभेदे,बालकमातृकाभेदे च 'पूतना जम्भकादयः'
**पूतनारि** पु० ६त०। श्रीकृष्णे।
**पूतफल** पु० पूतानि फलान्यस्य। पनसे (कांटाल)।
**पूति** न० पू-क्तिच्। रोहिषतृणे। क्तिन्। पवित्रतायाम्। पूयविशरणे दुर्गन्धे च क्तिच्। दुर्गन्धे। दुर्गन्धयति त्रि०।
**पूतिक** न० पूत्या दुर्गन्धेन कायति कै-क। विष्ठायाम्, पूतिकरञ्जे पु०। शाकभेदे स्त्री०(पुइ) 'पूतिका ब्रह्मघातिके'ति स्मृतिः
**पूतिकरज(ञ्ज)** पु० पूतियुक्तः करजः(ञ्जः) (नाटाकरमजा) करञ्जभेदे। [दारुणि। संज्ञायां कन्। मरलवृक्षे पु०।
**पूतिकाष्ठ** ६त० पूतेः पावनार्थं काष्ठम् चतुर्थ्यर्थे ६त०। देव
**पूतिगन्ध** पु० पूतिर्दुष्टो गन्धो यस्य। गन्धके, इङ्गुदीवृक्षे च। कर्म्म०। दुर्गन्धे पु०।
**पूतिगन्धि** पु० पूतिर्दुष्टोगन्धो यस्य इत् समा०। दुर्गन्धयति।
**पूतितैला** स्त्री० पूति दुर्गन्धं तैलं यस्याः। ज्योतिष्मत्याम्।
**पूतिपत्र** पु० पूतीनि पत्राण्यस्य। श्योनाकभेदे। [जम्बीरभेदे
**पूतिपुष्पिका** स्त्री० पूतीनि पुष्पाण्यस्याः। मातुलुङ्गायाम्
**पूतिफला(ली)** पूतीनि फलान्यस्याः वा ङीप्। सोमराज्याम्।
**पूतिमयूरिका** स्त्री० पूतिर्मयूरीव ततः इवार्थे कन्। अजमोदायाम्। [युक्तवायौ पु०।
**पूतिमेद** पु० पूतिर्मेदोऽस्य। अरिमेदे विट्खदिरे। [दुष्टगन्ध
**पूतिवात** पु० पूत्यै पवित्रतायै वातोऽस्य। बिल्ववृक्षे। कर्म०।
**पूतिवृक्ष** पु० कर्म०। श्योनाकवृक्षे।
**पूप** पु० पू-पक्। पिष्टके (पिठा)।
**पूपाष्टका** स्त्री० अष्ट परिमाणं यस्याः कन् अष्टका अष्टमी उपचारात् तत्कर्त्तव्यं श्राद्धम् पूपद्रव्यसाधनाष्टका। कर्म० अग्रहायण्याः परतः कृष्णाष्टमीविहिते श्राद्धे।
**पूय** दुर्गन्धे अक० भेदने विशरणे च सक० दिवा० आत्म०सेट्। पूयते अपूयिष्ट।
**पूय** न० पूय-अच्। व्रणादिनिःसृते रक्तविकारभेदे (पूज)।
**पूयारि** पु०६त०। निम्बवृक्षे पुयनाशकादयोप्यत्र। [अपूरिष्ट
**पूर** पूर्त्तौ प्रीणने च दिवा०आत्म० सक० सेट्। पूर्यते अपूरि-
**पूर** पु० पूर-क। जलसमूहे, खाद्यभेदे, व्रणशुद्धौ च।
**पूरक** पु० पूर-ण्वुल्। बीजपूरे,जम्बीरभेदे (टावा लेवु) अङ्कशास्त्रप्रसिद्धे गुणके, तन्त्रादिप्रसिद्धे प्राणायामाङ्गेवायूत्कर्षण रूपे व्यापारभेदे च। पूरणकर्त्तरि त्रि०। मृतस्याशिवाहिकदेहोत्तरं प्रेतदेहनिर्वाहकेदशाहमध्ये देये पिण्डदशकेन०
**पूरण** न० पूर-ल्युट्। अङ्कशास्त्रप्रसिद्धे गुणने, वृष्टौ, कुटजटे, तापतन्तुषु च। ल्यु। सेतौ, समुद्रे च पु०। सङ्ख्यापूरणे पूरयितरि च त्रि०। यथा द्वयोः पूरणः। द्वितीयः।
**पूरणी** स्त्री० पूर्यतेऽनया। पूरणसङ्ख्यायां यथा द्वयोः पुरणी द्वितीया। शाल्मलिवृक्षे च।
**पूरित** त्रि० पूर-क्त। पूर्णे, गुणिते च।
**पूरुष** पूर-उषन्। पुरुषे, नरे।
**पूर्ण** त्रि० पूर-क्त नि०। पूरिते, सकले, समर्थे च ज्योतिषोक्तासु उभयपक्षयोः पञ्चमीदशमीपञ्चदशीषु च स्त्री०।
**पूर्णकोष्ठा** स्त्री० पूर्णं कोष्ठं यस्याः। नागरमुस्तायाम्।
**पूर्णपात्र** न० कर्म०। हर्षकाले पुत्रजननोत्सवजहर्षात् आकृष्य वस्त्रादेर्ग्रहणे, होमान्ते ब्रह्मदक्षिणार्थतया देये 'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्। पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते' इत्युक्तमानवति तण्डुलादौ।

**पूर्णमास** पु० पूर्णमास्यां विहितः अण् । पूर्णिमायां कर्त्तव्ये यागभेदे 'दर्शपूर्णमासाभ्यां यजेते'ति श्रुतिः । [तिथौ ।

**पूर्णमासी** स्त्री० पूर्णोमासश्चन्द्रमा यत्र गौरा० ङीष् । पूर्णिमा-

**पूर्णवीज** पु० पूर्णानि वीजान्यस्य । वीजपूरे । (टावानेबु)

**पूर्णिमा** स्त्री० पूर-क्विप् नि० पूर्णिः पूरणं चन्द्रकलापूरणं मिमीते मा-क । चन्द्रस्य पञ्चदशकलापूरणयां तिथौ ।

**पूर्त** न० पूर-क्त नि० । खातादिकर्मणि विश्वजनोद्देशेन जला-शयदानादौ । भावे क्त । पूरणे न० । काले, छन्ने, पूरिते च त्रि०

**पूर्व(र्व)** निवासे अक० निमन्त्रणे सक० चुरा० उभ० सेट् पक्षे भ्वा० पर० । पूर्व(र्व)यति पूर्व(र्व)ति अपुपूर्व(र्व)त् । अपूर्वी(र्वी)त्

**पूर्व(र्व)** त्रि० पूर्व(र्व)-अच् । प्रथमे, आदौ-दिग्देशकाले, समस्ते, ज्येष्ठे भ्रातरि च । सर्व्वनामतास्य [भगिन्यां स्त्री० ङीप् ।

**पूर्व(र्व)ज** पु० पूर्व(र्व) जायते जन-ड । ज्येष्ठभ्रातरि । ज्येष्ठ-

**पूर्व(र्व)दिक्पति** पु० ६त० । इन्द्रे ।

**पूर्व(र्व)दिश्** स्त्री० कर्म्म० । प्रथमसूर्योदयस्थलवत्यां दिशि ।

**पूर्व(र्व)देव** पु० पूर्व(र्व) देवः पश्चात् पापाचरणात् भ्रष्टः, अथ वा पूर्वः(र्वः) श्रेष्ठो देवः । असुरे ।

**पूर्व(र्व)देश** पु० कर्म्म० । प्राच्यामवस्थिते जनपदे ।

**पूर्व(र्व)पक्ष** पु० कर्म्म० । अष्टादशविवादरूपे व्यवहारे प्रतिज्ञारूपे प्रथमेऽवयवे, 'पूर्व(र्व)पक्षोभवेद्यस्य भवेयुस्तस्य साक्षिणः' इति स्मृतिः । 'विषयो विषयश्चैव पूर्व(र्व)पक्षस्तथोत्तरम् । निर्ण-यश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतं'मिति मीमांसोक्ते न्यायावयवभेदे सिद्धान्तविरुद्धकोटिप्रतिपादके वाक्ये ।

**पूर्व(र्व)पद** न० कर्म्म० । व्याकरणोक्ते उत्तरपदादव्यवहिते प्राग्व-र्त्तिनि, समासस्य प्रथमावयवे च सुप्तिङन्तरूपे पदे ।

**पूर्व(र्व)पर्वत** पु० कर्म्म० । उदयाचले । यत्र सूर्य्यस्य प्रथमदर्शनं तत्रस्थे पर्व्वते । स चानियतस्थितिकोऽपि यतः स्थानात् प्रथमं सूर्योदर्शनयोग्यो भवति तदेव स्थानं पर्व्वत इति व्यव-ह्रियते । पूर्व(र्व)शैलादयोऽप्यत्र ।

**पूर्व(र्व)फल्गुनी** स्त्री० द्विव० । अश्विन्यवधिके एकादशे नक्षत्रे ।

**पूर्व(र्व)भाद्रपद** पु० स्त्री० । अश्विन्यादिनक्षत्रेषु पञ्चविंशतितमे नक्षत्रे । [विधायैव सूत्रधारो निवर्त्तते' इति सा० द०

**पूर्व(र्व)रङ्ग** पु० नाट्ये आदौ नटकर्त्तव्ये सङ्गीतादौ । 'पूर्वरङ्गं

**पूर्व(र्व)राग** पु० रञ्ज-घञ् नलोपः कर्म्म० । नायकयोर्मेलनात् प्राग्वर्त्तिनि 'श्रवणाद्दर्शनाद्वापि मिथःसंरूढरागयोः । दशाविशेषो योऽप्राप्तौ पूर्व(र्व)रागः स उच्यते' इत्युक्त-लक्षणे अवस्थाभेदे ।

**पूर्व(र्व)रूप** न० कर्म्म० । वैद्यकोक्ते भाविरोगनिदानभूते चिह्नभेदे ।

**पूर्व(र्व)वादिन्** पु० व्यवहारे पूर्व(र्व) प्रथमं वदति वद-णिनि । प्रथमाभियोक्तरि वादिनि (फेरादी) ।

**पूर्वा(र्वा)षाढ़ा** स्त्री० अश्विन्यादिषु नक्षत्रेषु विंशतितमे नक्षत्रे ।

**पूर्वा(र्वा)ह्ण** पु० पूर्व(र्व)मह्नः एकदेशिस० टच् समा० अह्नादेशः णत्वम् । त्रिधा विभक्तदिवसस्य प्रथमे भागे; 'पूर्वाह्णो वै देवाना'मिति श्रुतिः । प्रथमे अर्द्धदिने च 'अश्वत्थं वन्दये-न्नित्यं पूर्वा(र्वा)ह्णे प्रहरद्वये' इति पुराणम् । [दिवसे

**पूर्वे(र्वे)द्युस्** अव्य० पूर्व(र्व)स्मिन् दिवसे पूर्व+(र्व)+एद्युस् । प्रथम

**पूल** संहतौ वा चु० उभ० पक्षे भ्वा० पर० अक० सेट् । पूलयति-ते पूलति । अपूपुलत् त अपूलीत् ।

**पूष** वृद्धौ अक० भ्वा० पर० सेट् । पूषति अपूषीत् ।

**पूष** पु० पूष-क । प्रक्षुद्राख्ये (तूत) वृक्षे । पूषकोऽपि अत्रैव ।

**पूषन्** पु० पूष-कनिन् । सूर्य्ये । [व्याप्रियते व्यापृत ।

**पृ** व्यापारे तु० आत्म० अक० अनिट् प्रायेणायम् व्याङ्पूर्व्वः ।

**पृ** प्रीतौ स्वा० पर० सक० अनिट् । पृणोति अपार्षीत् ।

**पृ** पालने जुहो० पर० सक० अनिट् वा दीर्घः । पिपर्त्ति पिपृतः-पिपूर्त्तः । अपार्षीत्-अपारीत् । पप्रतुः-पपरतुः ।

**पृ** पूर्त्तौ चु० उभ० सक० सेट् । पारयति-ते अपीपरत्-त ।

**पृक्का** स्त्री० पृच-कन् न्यङ्क्वा० कुत्वम् । (पिड़िङ्) शाकभेदे ।

**पृच** सम्पर्के अदा० आत्म० अक० सेट् । पृक्ते अपर्चिष्ट । क्त । पृक्तणः ।

**पृच** सम्पर्के रु० पर० अ० सेट् । पृणक्ति अपर्चीत् । क्त । पृक्तणः ।

**पृच** संयमने सक० सम्पर्के अक० चु० उभ० पक्षे भ्वा० पर० सेट् । पर्चयति-ते पर्चति । अपीपृचत्-त अपपर्चत्-त अपर्चीत् ।

**पृच्छा** स्त्री० प्रच्छ-अङ् संप्रसारणम् । प्रश्ने आत्मलिप्स्या-कथनाय प्रेरणे ।

**पृज** सम्पर्के, अदा० आ० सक० सेट् । पृक्ते अपर्जिष्ट । क्त पृ-क्तः ।

**पृड** सुखे तु० पर० अक० सेट् । पृडति । अपर्डीत् ।

**पृण** तर्पणे तु० पर० सक० सेट् । पृणति अपर्णीत् ।

**पृतना** स्त्री० पृ-तनन्-किच्च । सेनायाम्, सङ्ख्याविशेषान्वित-रथहस्त्यश्वादिसैन्यभेदे च (रथाः २४३ गजाः २४२ अश्वाः ७२९ पदातयः १२१५ )।

**पृतनाषाह्** पु० पृतनां साहयते सह-णिच्-क्विप् । इन्द्रे । ढत्व प्रसङ्गे एव षत्वम् नान्यत्र । [अपपर्थत्-त ।

**पृथ** प्रक्षेपे चुरा० उभ० सक० सेट् । पार्थयति-ते अपीपृथत्-त

**पृथक्** अव्य० पृथ-काकि । भिन्ने, नानारूपे, विनार्थे च ।

**पृथक्त्व** न० पृथक् इत्यस्य भावः त्व । वैशेषिकोक्ते पृथक्त्व-बुद्धिसम्पादके गुणभेदे ।

**पृथक्त्वचा** स्त्री० पृथक् त्वचा यस्याः । मूर्व्वायाम् ।

पृथक्पर्णी स्त्री० पृथक् पर्णान्यस्याः ङीप् । (चाकुलिया) क्षुपभेदे । [भेदे, विश्लेषे ।
पृथगात्मता स्त्री० पृथक् आत्मा स्वरूपं यस्य तस्य भावः तल् ।
पृथगात्मिका स्त्री० पृथक् भिन्न आत्मा यस्याः कप् । व्यक्तौ सामान्यधर्म्मस्य यथा सर्व्वत्र समरूपतया सत्त्वेनानुगमकत्वम् नैवं व्यक्तेस्तस्याः भिन्नभिन्नासत्त्वात् ।
पृथग्जन पु० पृथक् भिन्नो जनो यस्मात् । नीचे, मूर्खे, पामरे च
पृथग्विध त्रि० पृथक् भिन्ना भिन्ना विधा यस्य । नानारूपे ।
पृथग्बीज पु० पृथक् बीजा यस्य । भल्लातकवृक्षे (भेला) ।
पृथा स्त्री० कुन्तिभोजकन्यायाम् कुन्त्याम् ।
पृथाज पु० पृथाया जायते जन-ड । कुन्तीपुत्रे युधिष्ठिरादौ, अर्ज्जुनवृक्षे च । पृथाङ्गजादयोऽप्यत्र ।
पृथि(थ)वी स्त्री० प्रथते विस्तारमेति प्रथ-षिवन् (षवन्)वा नि० संप्रसारणं षित्त्वात् ङीप् । धरायाम् क्षितौ ।
पृथिवीपति पु० ६त० । नृपतौ भूपतौ । पृथिवीपालादयोऽप्यत्र
पृथु पु० प्रथ-कु । सूर्य्यवंश्ये वेनराजस्य दक्षिणबाहुमन्थन जाते नृपभेदे, कृष्णजीरके च । महति, स्थूले, दक्षे च त्रि० । स्त्रियां ङीप् वा ।
पृथुक पु०न० । पृथुवत् कायति कै-क । चिपिटके, 'द्विःखिन्नं सन्तं पृथुक'मिति स्मृतिः । बालके पु० । पृथुकार्त्तस्वरपात्र'मिति हिङ्गुपत्र्यां, मालिकायाञ्च स्त्री० ।
पृथुकोल पु० कर्म्म० राजबदरे ।
पृथुपत्र पु० पृथूनि पत्त्राण्यस्य । रक्तलशुने ।
पृथुपलाशिका स्त्री० पृथूनि पालाशान्यस्याः गौ० ङीप् स्वार्थे कन् । शट्याम् ।
पृथुरोमन् पु०पृथूनि रोमाणि रोमस्थानीयशल्कान्यस्य । मत्स्ये
पृथुल त्रि० पृथु+स्वार्थे लच्, पृथुः पृथुलमस्त्यस्य लच् वा । स्थूले । हिङ्गुपत्र्यां स्त्री० ।
पृथुशिम्ब पु० पृथ्वी शिम्बा यस्य । श्योनाकभेदे ।
पृथूदर पु० पृथु-उदरं यस्य । मेषे, वृहत्कुक्षौ त्रि० ।
पृथ्वी स्त्री० पृथुत्व गुणयुक्ता स्त्री ङीप् । भूमौ, हिङ्गुपत्र्यां, स्थूलैलायाम्, पुनर्नवायां, कृष्णजीरके च । स्वार्थे कन् । पृथ्वीका । वृहदेलायाम् हिङ्गुपत्र्यां, कृष्णजीरके च ।
पृथ्वीकुरवक पु० पृथ्व्यां भूमौ कुरवक इव शुभ्रत्वात् । श्वेतमन्दारके । [गजे, चित्रके वृक्षे च ।
पृदाकु पु० पर्द-गतौ काकु संप्रसारणम् । सर्पे, वृश्चिके व्याघ्रे
पृश्नि त्रि० स्पृश-नि, प्रच्छ-नि वा पु० । खर्व्वदुर्बलास्थिके, स्वल्पे च । रत्ने, देवक्यां, रश्मौ च स्त्री० । संज्ञायां कन् । कुम्भिकायां (पाना) स्त्री० वा ङीप् । [लतायाम् ।
पृश्निगर्भ पु० ६ब० । देवकीसूनौ श्रीकृष्णे । [विख्यातायां
पृश्निपर्णी स्त्री० पृश्नि स्वल्पं पर्णमस्याः ङीप् । (चाकुलिया)
पृष सेके भ्वा० आ० सक० सेट् । पर्षते अपर्षिष्ट ।
पृषत् न० पृष-अति किच्च । विन्दौ । सेकयुक्ते त्रि० ।
पृषत पु० पृष-अतच् किच्च । शुभ्रविन्दुमति मृगभेदे, विन्दौ च
पृषताम्पति पु० ६त० अलुक् स० । वायौ ।
पृषताश्व पु० पृषतो मृगभेदोऽश्व इव गतिसाधनं यस्य । वायौ
पृषत्क पु० पृषत्+संज्ञायां कन् । वाणे ।
पृषदश्व पु० पृषतो विन्दोरश्व इव वाहकत्वात् । वायौ ।
पृषदाज्य न० पृषद्युक्तं दधिविन्दुयुक्तं दधिसेकयुक्तं वा आज्यम् शाक० । दधिसिक्ते घृते ।
पृषन्ति पु० पृष-झिच् किच्च । विन्दौ ।
पृषोदर त्रि० पृषदुदरे यस्य पृषो० नि० । विन्दुगर्भिते । [भेदे च
पृष्ठ न० पृष-थक् इडभावः । तनोः पश्चाद्भागे, वेदप्रसिद्धे स्तोत्र-
पृष्ठतस् अव्य० पृष्ठ+तसिल् । पश्चाद्भागे इत्यर्थे ।
पृष्ठदृष्टि पु० पृष्ठे पश्चात् दृष्टिरस्य । भल्लूके ।
पृष्ठवंश पु० ६त० । पृष्ठस्थे दण्डाकारेऽस्थ्नि । [वृषादौ
पृष्ठवाह् पु० पृष्ठेन वहति वह-ण्वि । पृष्ठेन शकटादिवाहके
पृष्ठ्य न० पृष्ठानां स्तोत्राणां समूहः यत् । स्तोत्रसमूहे । तद्वति यागभेदे, पृष्ठेन वहति यत् । पृष्ठवाहकाश्वादौ च त्रि० ।
पृष्णि स्त्री० प्रच्छ-निङ् संप्रसारणं षत्वम् । प्रश्निशब्दार्थे, पार्ष्णौ च
पॄ पालने पूर्त्तौ च क्र्या० प्रा० पर० सक० सेट् । पृणाति अपारीत्
पॄ पूर्त्तौ चु० उभ० सक० सेट् । पारयति-ते अपीपरत् त ।
पेचक पु० पच-वुन् इत्त्व । (पेँचा) उलूके, गजपुच्छमूलोपान्ते, पर्य्यङ्के, यूके, मेघे च ।
पेचुली स्त्री० पच-उलच् इत्त्व गौ० ङीप् । (कचु) शाकभेदे ।
पेटक पु० न० पिट-ण्वुल् । पुस्तकादीनां स्थापनार्थे वेत्रादि निर्म्मिते पदार्थे, समूहे च । [कारफलयुते वृक्षे ।
पेटिका स्त्री० पेटीव कायति कै-क ह्र० । (टेँपारी) पेटका-
पेटी स्त्री० पिट-अच् गौरा० ङीप् । स्वल्पपेटके ।
पेण गतौ पेषे च सक० क्षेपे अक० भ्वा० पर० सेट् । पेणति अपेणीत् । चङि न ह्रस्वः । [चङि स ह्रस्वः ।
पेल कम्पे अक० गतौ सक० भ्वा० पर० सेट् । पेलति अपेलीत् ।
पेल न० पेल-अच् । पुंसचिह्ने अङ्गभेदे (अण्डकोष) । [च
पेलव त्रि० पेल-अच् पेलं वाति वा-क । कोमले, कृशे, विरले
पेव सेवने भ्वा० आत्म० सेट् । पेवते अपेविष्ट । चङि न ह्रस्वः
पेश(स)ल त्रि० पिश(स)-अलच् । सुन्दरे, दक्षे, कोमले च ।

**पेशि(शी)** स्त्री० पिश-इन् वा ङीप्। अण्डे, मांसपिण्डे, खड्गकोषे, नदीभेदे, पिशाचीभेदे राक्षसीभेदे च।

**पेष** सेवने निश्चये च भ्वा०आ०सक०सेट्। पेषते अपेषिष्ट चङि न ह्रस्वः। [गतगुप्तायाञ्च।

**पेषण** न० पिष-ल्युट्। चूर्णने। ल्यु। खले, (तेकाटासिज)

**पेषणि** स्त्री० पिष्यतेऽनया अनि वा ङीप्। पेषणशिलायाम्।

**पेस** गतौ भ्वा०पर०सक०सेट्। पेसति अपेसीत्। चङि न ह्रस्वः

**पै** शोषे भ्वा०पर०सक०अनिट्। पायति अपासीत्।

**पैठर** त्रि०पिठरे स्थाल्यां संस्कृतम् अण्। स्थालीपक्वे मांसादौ

**पैठीनसि** पु० मुनिभेदे।

**पैतृक** न० पितृत आगतम् ठण्। पितृतः प्राप्ते दाये।

**पैतृष्वसेय(स्त्रीय)** पु० स्त्री० पितुः स्वसुरपत्यं ढक् छण् वा ढकि टिलोपः। पितृष्वसुरपत्ये।

**पैत्र** न० पितुरिदं पिता देवता अस्य वा अण्। तर्ज्जन्यङ्गुष्ठयोर्मध्यस्थाने पितृतीर्थे, पितृदेवताके, पितृसम्बन्धिनि च त्रि०

**पैल** पु० मुनिभेदे।

**पैशाच** पु० पिशाचेन निर्वृत्तः अण्। 'सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति। स पापिष्ठो विवाहानां पैशाच'इत्युक्ते विवाहभेदे। पिशाचकृते, तत्सम्बन्धिनि च त्रि०।

**पैष्टिक** न० पिष्टानां समूहः ठक् तद्विकारो वा ठक्। पिष्टसमूहे, तद्विकारे पासे, मद्ये च। [मद्यभेदे।

**पैष्टी** स्त्री० पिष्टस्य विकारः अण् ङीप्। पिष्टकविकाररूपे

**पोगण्ड** त्रि० पवते पुनाति वा पू-विच् पौगण्ड एकदेशो यस्य। विकलाङ्गे न्यूनाधिकाङ्गे 'पौगण्डः पञ्चमादब्दादर्वाक् च दशमाद्वत' इत्युक्तवयस्के बालके पु०। [च

**पोटगल** पु०पोटेन संश्लेषमात्रेण गलति गल-अच्। नडे, काशे

**पोटा** स्त्री०पु० पुट-अच्। पुरुषलक्षणयुक्तायां स्त्रियाम्।

**पोत** पु०स्त्री० पू-तन्। बालके। नौकारूपे याने, समुद्रयाने, गृहस्थाने, वस्त्रे, दशवार्षिकहस्तिनि च पु० गौरा०ङीष्। पूतिकायाम् स्त्री० ततः स्वार्थे कन्। पोतिकाप्यत्र।

**पोतवणिज्** पु० पोते वणिक्। नौकया वाणिज्यकारे।

**पोतवाह** पु० पोतं नावं वहति वह-अण्। नौकावाहके (दांडि)

**पोताधान** पु० पोतानां शिशूनामण्डजातमत्स्यानामाधानम्। क्षुद्रमत्स्यसंघे (पोनारभाक)। [च।

**पोत्र** न० पू-त्र। वज्रे, शूकरमुखाग्रे लाङ्गलमुखाग्रे, वहित्रे

**पोत्रिन्** पु० पोत्रमस्त्यस्य इनि। शूकरे।

**पोटृ** पु०पुष-तृच्। (कांटा करमजा) करञ्जभेदे। पोषके त्रि०

**पोष्यवर्ग** पु० पोष्याणां पाल्यानां वर्गः समुदायः। 'माता पिता, गुरुः पत्नी त्वपत्यानि समाश्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृत' इत्युक्ते, 'माता पिता गुरुर्भ्राता प्रजा दीनः समाश्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृत' इत्युक्ते च अवश्यप्रतिपाल्यगणे

**पौगण्ड** न० पोगण्डस्य भावः अण्। 'कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधी'त्युक्ते शिशोरवस्थाभेदे। [इक्षुभेदे।

**पौण्ड्र** पु० देशभेदे। तद्देशवासिनि ब० व०। स्वार्थे कन्

**पौण्ड्रवर्द्धन** पु० देशभेदे (वेहार) तद्देशवासिनि ब०व०।

**पौत्र** पु० स्त्री०पुत्रस्यापत्यं शिवाद्यण्। पुत्रस्य पुत्रे नप्तरि, 'पौत्रेणानन्त्यमश्नुते' इति स्मृतिः। स्त्रियां ङीप्।

**पौनःपुनिक** त्रि० पुनःपुनः भवः ठक् टिलोपः। मुहुर्भवे।

**पौनःपुन्य** न० पुनः पुनरित्यस्य भावः ष्यञ्। शश्वद्भावे

**पौनर्भव** पु० पुनर्भुवि द्विरूढायां भवः अण्। द्वादशपुत्रमध्ये पुत्रभेदे। पुनर्भुवः अयम् अण्। पुनर्भूसम्बन्धिनि त्रि०। 'पौनर्भवेन भर्त्रा से'ति स्मृतिः। [पुरभवमात्रे त्रि०।

**पौर** न० पुरे नगरे भवः अण्। रौहिषतृणे (रामकर्पूर)

**पौरव** पु० पुरोर्गोत्रापत्यमण्। पुरुनामचन्द्रवंश्यनृपस्यापत्ये

**पौरस्त्य** त्रि० पुरोभवः त्यक्। पूर्वदिग्भवे, अग्रभवे च।

**पौराणिक** त्रि० पुराणं वेत्त्यधीते वा ठण्। पुराणज्ञे।

**पौरुष** न० पुरुषस्य भावः कर्म्म वा अण्। पुरुषत्वे, विक्रमे, उद्यमे च। पुरुषस्येदम् अण्। ऊर्द्ध्वविस्तृतबाहुपाणिकमनुष्यपरिमाणे। 'जवेऽपि मानेऽपि च पौरुषाधिक'मितिनैषधम्।

**पौरोगव** पु० पुरोऽग्रे पाच्यवस्तुषु गौर्नेत्रं यस्य पुरोगुः ततः स्वार्थे प्रज्ञाद्यण्। पाकशालाध्यक्षे।

**पौर्णमास** पु० पौर्णमास्यां विहितम् अण्। यागभेदे। तत्र कर्त्तव्यायामिष्टौ स्त्री०। 'पौर्णमास्यां पौर्णमास्या यजेते'ति श्रुतिः। [पूर्णिमायाम्।

**पौर्णमासी** स्त्री०पूर्णो मासोऽस्यस्याः प्रज्ञादित्वात् अण् ङीप्।

**पौलस्त्य** पु०स्त्री० पुलस्त्यस्यापत्यम् यञ्। कुवेरे, रावणादौ च शूर्पणखायां स्त्री० ङीप् यलोपः। [यमादौ।

**पौलि** पु० पुल-महत्त्वे ज्वला०ण तत इञ्। ईषत्पक्वे कलाय

**पौलोमी** स्त्री० पुलोम्नोऽपत्यम् स्त्री अण्। शच्याम्।

**पौष** पु० पौषी पुष्यनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे अण्। पुष्यनक्षत्रयुक्तपौर्णमासीघटिते चान्द्रे मासभेदे।

**पौषी** स्त्री० पुष्यनक्षत्रेण युक्ता पौर्णमासी अण् यलोपः। पुष्यनक्षत्रयुक्तायां पौर्णमास्याम्। [रीतिपुष्पकज्जले।

**पौष्पक** न० पुष्पेण निर्वृत्तम् अण् ततः स्वार्थे कन्। कुसुमाञ्जने

**प्याय** वृद्धौ भ्वा०आ०अक०सेट्। प्यायते, अप्यायि-अप्यायिष्ट।

**प्युष** उत्सर्गे चु० उभ०सक०सेट् । प्योषयति ते । अपुप्युषत् त ।
**प्युष** विभागे दि०पर०सक०सेट् । प्युष्यति अप्युषत् अप्योषीत् ।
**प्यै** वृद्धौ भ्वा० आ०अक० अनिट् । प्यायते अप्यास्त ।
**प्र** अव्य०प्रथ-ड । आरम्भे, गतौ, उत्कर्षे, प्राथम्ये, सर्वतोभावे, उत्पत्तौ, ख्यातौ, व्यवहारे च ।
**प्रकट** त्रि० प्र+कट-अच् । स्पष्टे । [नरकभेदे च ।
**प्रकटित** त्रि० प्र+कट-क्त । प्रकाशिते । [म्पिरे' इति माघः
**प्रकम्पन** पु० प्र+कपि-णिच्-युच् । 'वायौ प्रकम्पनेनानु चक-
**प्रकर** पु० प्र+कृ-भावे अप् । समूहे अधिकारे च । कर्मणि अप् । प्रकीर्णे पुष्पादौ त्रि० ।
**प्रकरण** न० प्र+कृ-ल्युट् । प्रस्तावे, अभिनेयनायकादिके दृश्य काव्यभेदे, ग्रन्थसन्धौ, एकार्थप्रतिपादकग्रन्थांशे च ।
**प्रकर्ष** पु० प्र+कृष-घञ् । उत्कर्षे ।
**प्रकाण्ड** पु०प्रकृष्टः काण्डः प्रा०।वृक्षस्य मूलादारभ्य शाखान्त भागे । प्रशस्ते न० । [अत्यर्थेऽनुमतौ च अव्य०
**प्रकाम** त्रि०प्रगतः कामम् प्रा०स०। यथेष्टे । प्र+कम-णम् ।
**प्रकार** पु० प्र+कृ-घञ् । भेदे, सादृश्ये च ।
**प्रकाश** पु० प्र+काश-कर्त्तरि अच् घञ् वा । आतपे, विकाशे च । कर्त्तरि अच् । विकाशयुक्ते त्रि० ।
**प्रकाशात्मन्** पु० प्रकाशः आतपः अवभासो वा आत्मा स्वरूपं यस्य । सूर्य्ये, परमेश्वरे च । व्यक्तस्वरूपे त्रि० ।
**प्रकीर्ण** न० प्र+कॄ-भावे क्त । चामरे,भिन्नजातीयानां मिश्रणे च पूतिकरञ्जे पु० कर्मणि क्त । विक्षिप्ते, विस्तृते भिन्नजातीयैः मिश्रिते च त्रि०। स्वार्थे कन् । अत्र चामरे न० अश्वे पु० । [भेदे । व्याप्ते त्रि० ।
**प्रकीर्य्य** पु० प्रकीर्य्यतेऽसौ प्र+कॄ-क्यप् । (नाटाकरमजा) करञ्ज
**प्रकृत** त्रि० प्र+कृ-क्त । अधिकृते, आरब्धे, प्रकरणप्राप्ते च ।
**प्रकृति** स्त्री० प्रकरोति प्र+कृ-क्तिच् । सांख्यमतसिद्धे जगदारम्भके सत्त्वरजस्तमोरूपगुणत्रयात्मके प्रधाने, उपादानकारणे, 'प्रकृतिश्च दृष्टान्तानुपरोधादि'ति शारीरकसूत्रम् । 'स्वभावे प्रकृतिस्त्वां नियोक्ष्यती'ति गीता । लिङ्गे, स्वामिनि, अमात्ये, सुहृदि, कोषे, राष्ट्रे, स्वाम्यादौ राज्याङ्गे, पौरश्रेण्यौ, 'नृपतिः प्रकृतीरवेक्षितु'मिति रघुः दुर्गे, बले, शिल्पिनि, यत्नौ, योषिति, परमात्मनि,पञ्चभूतेषु करणे, गुह्ये, जन्तौ, एकविंशत्यक्षरपादके छन्दोभेदे मातरि, व्याकरणोक्ते प्रत्ययोत्पत्तिनिमित्ते शब्दभेदे च ।
**प्रकृष्ट** त्रि० प्र+कृष-क्त । उत्कर्षयुक्ते ।
**प्रकोष्ठ** पु० प्रगतः कोष्ठं प्रा० स० । कूर्परस्याधोभागस्थे मणिबन्धपर्य्यन्ते हस्तावयवे, गृहद्वारपिण्डे च ।
**प्रक्रम** पु० प्र+क्रम-घञ् न वृद्धिः । क्रमे, अवसरे, उपक्रमे च
**प्रक्रिया** स्त्री० प्र+कृ-श । अधिकारे, प्रकरणार्थे, राज्ञां छत्रचामरधूननादिव्यापारे च ।
**प्रक्व(क्वा)ण** पु० प्र+क्वण-अप् घञ् वा । वीणायाः शब्दे ।
**प्रक्ष्वेडन** पु० प्र+क्ष्विड-ल्यु । नाराचास्त्रे ।
**प्रखर** त्रि० प्रकृष्टः खरः प्रा०स० । अत्यन्ततीक्ष्णे । हयसज्जायां, कुक्कुटे, अश्वतरे च पु० ।
**प्रख्या** त्रि० प्र+ख्या अ । सादृश्ये । ब० । उत्तरपदस्थः तुल्यार्थे यथा पितृप्रख्यः एवं निभादयोऽप्यत्र ।
**प्रगण्ड** पु० गडि वदनैकदेशे अच् प्रकृष्टो गण्डः अवयवः । कूर्परोपरिकक्षपर्य्यन्तभागे । वहिःप्राकारे दुर्गप्राकारभित्तौ, सैन्यानां निवेशनस्थाने च स्त्री० गौरा० ङीप् ।
**प्रगल्भ** त्रि० प्र+गल्भ-अच् । प्रत्युत्पन्नमतौ, प्रतिभान्विते च नायिकाभेदे स्त्री० ।
**प्रगाढ** त्रि० प्रकर्षेण गाढम् गाह-क्त । अत्यन्तभृशे, दृढे च ।
**प्रगुण** त्रि०प्रकृतो गुणः येन प्रकृष्टो गुणो यस्य वा । ऋजुतावति, दक्षे च । प्रकृष्टगुणोऽप्यत्र । [योग्ये पदे ।
**प्रगृह्य** न० प्र+ग्रह-क्यप् । व्याकरणोक्ते स्वरसन्धिराहित्य
**प्रगे** अव्य० प्रगीयतेऽत्र प्र+गै-के । अतिप्रातःकाले ।
**प्रघण(न)** न० प्र+हन अप् नि० कुत्वणत्वे । वहिर्द्वारप्रकोष्ठके अलिन्दे । मतान्तरे अणत्वम् ।
**प्रग्र(ग्रा)ह** पु० प्रगृह्यते प्र+ग्रह+अप् घञ् वा । प्रग्रहे अश्वादीनां रज्जौ, किरणे, तुलासूत्रे, बन्द्याम्, नियमने भुजे, कर्णिकारवृक्षे च ।
**प्रचक्र** न० प्रगतं चक्रं प्रा०स० । स्वचक्रात् परचक्रं प्रति चलिते,
**प्रचण्ड** त्रि०प्रकर्षेण चण्डः प्रा० । दुर्द्धर्षे, दुर्वहे, दुरन्ते, प्रतापान्विते च । श्वेतकरवीरे पु० । दुर्गाया नायिकाभेदे स्त्री०
**प्रचण्डमूर्त्ति** पु० प्रचण्डा मूर्त्तिरस्य । वरुणवृक्षे । भयानकदेहे त्रि० । [संयोगे च ।
**प्रचय** पु० प्र+चि-अच् । समूहे, उपचये, तज्जनके शिथिल-
**प्रच(चा)र** पु० प्रचरत्यत्र प्र+चर-अप् घञ् वा । पथि । भावे घञ् । प्रसारे गतौ च । [निद्रादिना घूर्णिते ।
**प्रचलायित** त्रि० प्रचलवदाचरितः प्रचल+क्यच्-क्त ।
**प्रचुर** त्रि० प्र+चुर-क । बहुले ।
**प्रचेतसी** स्त्री० प्रकर्षेण चेतयति मूर्च्छितं चित-णिच्-असिच् ङीप् । कट्फले तच्चूर्णस्य हि मूर्च्छानाशकता वैद्यकसिद्धा ।
**प्रचेतस्** पु० प्र+चित-असि च । वरुणे,मुनिभेदे, प्रकृष्टहृदये त्रि०

**प्रचोदनी** स्त्री० प्रचोद्यते अपसार्य्यते रोगोऽनया चुद-णिच्-ल्युट् ङीप् । कण्टकारिकायाम् ।

**प्रच्छ** जिज्ञासायां तु०पर०द्विक०अ नेट् । पृच्छति अप्राक्षीत्

**प्रच्छदपट** पु० प्रच्छाद्यतेऽनेन प्र+छद-णिच् घ ह्रस्वः कर्म० । (पाछुडि) प्रावरणवस्त्रे ।

**प्रच्छन्न** न०प्र+छद-क्त । गुप्तद्वारे अन्तर्द्वारे । आच्छन्ने त्रि०

**प्रच्छर्द्दिका** स्त्री० प्रच्छर्दयति छर्द णिच्-ण्वुल् । वमिरोगे ।

**प्रच्छादन** न० प्रच्छाद्यतेऽनेन छद-णिच्-ल्युट् । उत्तरीयवस्त्रे

**प्रजन** पु० प्रजायतेऽनेन प्र+जन-अप् । स्त्रीगव्यादिषु पुंगवस्य संयोजने (पालदेओया) ।

**प्रजा** स्त्री० प्र-जन-ड । सन्ततौ, जने च ।

**प्रजाता** स्त्री० प्रजातं प्रजननं गर्भमोचनमस्त्यस्याः अर्श आद्यच् । प्रसूतायां स्त्रियाम् । प्र+जन-क्त । जाते त्रि०

**प्रजापति** पु०६त० । चतुर्मुखे ब्रह्मणि, प्रजासृष्टिकर्त्तरि दक्षादौ, नरपाले, जामातरि, सूर्य्ये, वह्नौ, त्वष्टरि च ।

**प्रजावती** स्त्री० प्रजा विद्यतेऽस्याः मतुप् मस्य वः । भ्रातृजायायाम्, 'सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत्' सर्वांस्तांस्तेन पुत्रेण पुत्रिणः' इत्युक्ते भ्रातृपुत्रस्याप्यात्मनः पुत्रत्वात् भ्रातृजायाया आत्मपुत्रवत्त्वम् । सन्तानवत्यां स्त्रियाञ्च । [प्रखिण्डिते त्रि० ।

**प्रज्ञा** स्त्री०प्र-ज्ञा अ । बुद्धौ,सरस्वत्याञ्च । [अर्श आद्यच् ।

**प्रज्ञान** न० प्र-ज्ञा भावे ल्युट् । बुद्धौ । करणे ल्युट् । चिह्ने,

**प्रज्ञु** त्रि० प्रगते विरले जानुनी यस्य जानुनो ज्ञुः । विरलजानुके जने । [निर्वाणे च ।

**प्रडीन** न० प्र+डी-क्त तस्य नः । पक्षिणां गतिभेदे । [विश्वासे,

**प्रणय** पु० प्र+नी अच् । प्रीतौ, तया प्रार्थने, प्रसवे, स्नेहे,

**प्रणयिन्** पु० प्रणयः प्रेम अस्त्यस्य इनि । भर्त्तरि, नायके च । भार्य्यायां स्त्री० ङीप् । [प्राध्ये शब्दभेदे ।

**प्रणव** पु० प्रकर्षेण नूयतेऽनेन प्र-नू-अप् । ओङ्कारे वेदादौ

**प्रणाद** पु० प्र+नद-घञ् ।अनुरागजे प्रीतुकतादौ शब्दे उच्चशब्दे, कर्णरोगभेदे च ।

**प्रणाम** पु० प्र+नम-घञ् । प्रणतौ स्वापकर्षबोधकव्यापारे करशिरःसंयोगादौ, 'पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा । वचसा मनसा चैव प्रणामोऽष्टाङ्ग उच्यते, इत्युक्ते अष्टाङ्गव्यापारभेदे च । [साधौ, प्रिये च ।

**प्रणाय्य** त्रि० । प्र+नी ण्यत् । असम्मते द्वेष्ये, प्रीतिशून्ये,

**प्रणाली** स्त्री० प्र+नल-घञ् गौरा० ङीप् । जलवहनमार्गे परम्परायाञ्च ।

**प्रणिधान** न० प्रणिधीयते प्र+नि+धा-ल्युट् । प्रयत्ने, अभिनिवेशे, योगशास्त्रोक्ते चित्तनविशेषरूपे समाधिभेदे च ।

**प्रणिधि** पु० प्रणिधीयते प्र+नि+धा-कि । चरे, अनुचरे, याचने, अवधाने च । [नि'ति गीता

**प्रणिपात** पु०प्र+नि+पत-घञ् । प्रणामे । 'तद्विद्धि प्रणिपाते-

**प्रणिहित** त्रि० प्र+नि+धा-क्त । प्राप्ते, स्थापिते, समाहिते च

**प्रणीत** त्रि०प्र+नी-क्त । पाकेन रूपरसान्यथाभावापन्ने पदार्थे, क्षिप्ते, निवेशिते विहिते च । यज्ञे संस्कृताग्नौ पु० । यज्ञपात्रभेदे स्त्री० ।

**प्रणेय** त्रि० प्र+नी-यत् । वश्ये अधीने ।

**प्रतति** स्त्री० प्र+तन क्तिन् । विस्तारे, वल्ल्याञ्च । वल्ल्यां वा ङीप्

**प्रतन** पु० प्र+ष्युल् तुट् च । पुरातने पदार्थे ।

**प्रतल** न० प्रकृष्टं तलम् । पातालभेदे । प्रकृष्टं तलमस्य । विस्तृताङ्गुलिके पाणौ पु० । [वल्ल्यां लतायाम् ।

**प्रतानिनी** स्त्री० प्रतानः विस्तारोऽस्त्यस्याः इनि । विस्तार-

**प्रताप** पु० प्र+तप-घञ् । कोषदण्डजाते तेजसि, तापे, अर्कवृक्षे च । [के त्रि० ।

**प्रतापन** पु० प्रतापयति तप-णिच्-ल्यु । नरकविशेषे । ताप-

**प्रतापस** पु० तपसि साधु अण् प्रकृष्टस्तापसः । शुक्लार्कवृक्षे ।

**प्रतारण** न०प्र+तॄ-णिच-ल्युट् । वञ्चने । युच् । प्रतारणाक स्त्री०

**प्रति** अव्य० प्रथ डति । व्याप्तौ, लक्षणे, कञ्चित् प्रकारमापन्नस्य कथने, भागे,प्रतिदाने, प्रतिनिधीकरणे,स्तोके, चेपे, निश्चये, व्यावृत्तौ, आभिमुख्ये, स्वभावे च । [कृत्रिमभूषायाञ्च

**प्रतिकर्मन्** न० प्रति+कृ-मनिन् । विद्यमानस्य गुणान्तराधाने,

**प्रति(ती)कार** पु० प्रति+कृ-घञ् वा दीर्घः । वैरनिर्यातने लतस्यापकारस्य तुल्यरूपापकारकरणेन शोधने, रोगादेश्चिकित्सायाञ्च । [रूपे

**प्रति(ती)काश** प्रतिरूपं काशते काश-घञ् वा दीर्घः । तुल्य-

**प्रतिकूल** त्रि० प्रतिरूपं कूलं पक्षोऽस्य । अननुकूले विरुद्धपक्षावलम्बिनि । [निवौ च

**प्रतिकृति** स्त्री० प्रति+कृ-क्तिन् । प्रतिमायां, सादृश्ये, प्रति-

**प्रतिक्षण** अव्य० क्षणं क्षणं व्याप्य व्याप्तौ अव्ययी० । अभीक्ष्णे

**प्रतिक्षिप्त** त्रि० प्रति+क्षिप-क्त । प्रेषिते अधिक्षिप्ते बाधिते तिरस्कृते च । [ग्रहणे, सैन्यपृष्ठे, पतद्ग्रहे च ।

**प्रतिग्रह** पु० प्रति+ग्रह-अप् । स्वीकारे, अदृष्टार्थदत्तद्रव्यस्य

**प्रतिघ** पु० प्रति+हन-ड न्यङ्क्वा० कुत्वम् । प्रतिघाते,कोपे च ।

**प्रतिघातन** न० प्रति-हन स्वार्थे णिच् ल्युट् । मारणे ।

**प्रतिच्छन्दस्** न० छन्दोऽभिप्रायः प्रतिगतश्छन्दः । अभिप्राय-

तुरूपे, प्रतिरूपे,अनुरोधे च । [रूपतायां सादृश्ये च ।

**प्रतिच्छाया** स्त्री॰ प्रतिरूपा छाया प्रा॰ । प्रतिमायां, प्रति-

**प्रतिजागर** पु॰ जागरस्य प्रतिनिधिः । प्रत्यवेक्षणाय गृहमवेक्षस्वेति नियोगे । [कारे मांसपिण्डे । (आलजिव) ।

**प्रतिजिह्वा** स्त्री॰ प्रतिरूपा जिह्वा । तालूमूलस्थे जिह्वा-

**प्रतिज्ञा** स्त्री॰ प्रति+ज्ञा-अ । कर्त्तव्यतयोपदेशे, साध्यवत्त्वेन पक्षनिर्देशे, यथा पर्व्वतोवह्निमान् इत्यादिवाक्यम् अनेन वह्निमत्त्वेन पर्व्वतस्य निर्देशः । व्यवहारे पक्षाभिधायके 'इदमनेन मम गृहीतं न ददाती'ति वाक्ये च । ल्युट् प्रतिज्ञानमप्यत्र न॰ ।

**प्रतिज्ञात** त्रि॰ प्रति+ज्ञा-क्त । प्रागुक्तप्रतिज्ञाविषये 'ततोऽर्थी लेखयेत् सद्यः प्रतिज्ञातार्थसाधन'मिति स्मृतिः ।

**प्रतिदान** न॰ प्रतिरूपं तुल्यरूपं दानम् प्रा॰स॰ । विनिमये तुल्यरूपदाने,न्यस्तस्य द्रव्यस्य प्रत्यर्पणे च । [निशम्ये'तिभट्टिः

**प्रतिध्वनि** पु॰ प्रतिरूपोध्वनिः । प्रतिशब्दे 'प्रतिध्वनीनात्मतता

**प्रतिध्वान** पु॰ प्रति+ध्वन-घञ् । प्रतिशब्दे ।

**प्रतिनप्तृ** पु॰ प्रतिनिहितो नप्ता पौत्रः प्रा॰ । प्रपौत्रे ।

**प्रतिनिधि** पु॰ प्रति+निधीयते तुल्यरूपतया स्थाप्यते प्रति+नि+धा-कि । प्रतिरूपे, प्रतिमायां च ।

**प्रतिपक्ष** पु॰ प्रतिकूलः पक्षो यस्य । शत्रौ. व्यवहारे विरुद्धपक्षे प्रतिवादिनि च । प्रा॰स॰ । सादृश्ये ।

**प्रतिपत्ति** स्त्री॰ प्रति+पद-क्तिन् । प्रवृत्तौ, प्रागल्भ्ये, गौरवे प्राप्तौ पदप्राप्तौ, कर्त्तव्यताज्ञाने च 'विपादलुप्तप्रतिपत्ति विस्मितमि'ति रघुः । [(क्षीटपच्छे)

**प्रतिपत्त्रफला** स्त्री॰ प्रतिपत्त्रं फलं यस्याः । क्षुद्रकारवेल्ले ।

**प्रतिपद्** स्त्री॰ प्रतिपद्यते उपक्रम्यते पक्षोऽनया प्रति+पद-क्विप् । पक्षारम्भके तिथौ ।

**प्रतिपन्न** त्रि॰ प्रति+पद-क्त । अवगते, स्वीकृते, 'प्रतिपन्नं हि विचेतनैरपी'ति कुमारः । विक्रान्ते च । [च

**प्रतिपादन** न॰प्रति+पद-णिच्-ल्युट् । दाने, बोधने, प्रतिपत्तौ

**प्रतिप्रसव** पु॰ प्रति+प्र+सू-अप् । निषिद्धस्य पुनःप्राप्तिसम्भावनायाम् । [रोधके त्रि॰।

**प्रतिबन्ध** पु॰ प्रति+बन्ध-घञ् । कार्य्यप्रतिघाते । ण्वुल् । प्रति-

**प्रतिबन्धि(बन्दि)** पु॰ प्रति+बन्ध-(बन्द) वा इन् । अनिष्टान्तरप्रसञ्जके वाक्ये ।

**प्रतिबल** पु॰ प्रतिकूलं बलं यस्य । 'शत्रौ प्रतिबलजधे'रिति वेणी॰ । प्रतिरूपं बलं यस्य । तुल्यबले त्रि॰ 'यो मे प्रतिबलो लोके' इति चण्डी ।

**प्रतिभय** त्रि॰ प्रतिगतं भयमस्मात् । भयहेतौ भयङ्करे ।

**प्रतिभा** स्त्री॰ प्रति+भा-अ । बुद्धौ, प्रत्युत्पन्नबुद्धौ च ।

**प्रतिभू** पु॰ प्रतिनिधि भवति भू-क्विप् । लग्नके (जामिन) ।

**प्रतिमा** स्त्री॰ प्रति+मा-अ । गजदन्तस्य बन्धे, सदृशीकरणे, सदृशमृत्तिकाशिलादिमूर्त्तौ । 'प्रतिमायां शिलाबुद्धि'रिति पुराणम् । ब॰ । उत्तरपदस्थः । सदृशे त्रि॰ । यथा देवप्रतिमः

**प्रतिमान** न॰ प्रतिमीयतेऽनेन प्रति-मि-मा-वा ल्युट् । प्रतिबिम्बे, प्रतिमायां, गजकुम्भस्याधोभागेतद्दन्तयोर्मध्यस्थाने च

**प्रतिमुक्त** त्रि॰ प्रति+मुच-क्त । परिहिते, परित्यक्ते च ।

**प्रतियत्न** पु॰ प्रति+यत-नङ् । वाञ्छायाम्, उपग्रहे, निग्रहादौ, वस्तुनः सतो गुणान्तराधानरूपे संस्कारे, यत्नरूपे, प्रतिग्रहे च । प्रतिरूपो यत्नो यस्य ब॰ । प्रतियत्नयुक्ते त्रि॰

**प्रतियातना** स्त्री॰ प्रति+यात्यतेऽनया चु॰ यत-युच् । प्रतिमायाम् प्रा॰स॰ । तुल्यरूपयातनायाम् ।

**प्रतियोगिन्** त्रि॰ प्रतिरूपं युज्यते प्रति+युज-घिनुण् । प्रतिकूलसम्बन्धवति । यथा अभावस्य प्रतिकूलसम्बन्धवत्त्वात् घटादिस्तस्य प्रतियोगी । विरुद्धपक्षे च ।

**प्रतिरूप** न॰ प्रतिगतं रूपम् । प्रतिच्छायायां, प्रतिबिम्बे च प्रतिगतं रूपमस्य ब॰ । सदृशे त्रि॰ । स्वार्थे कन् । तत्रैव ।

**प्रतिरोध** पु॰ प्रति+रुध-भावे घञ् । बाधे,प्रतिबन्धे, निरोधे, तिरस्कारे,चौर्य्ये च । कर्त्तरि अच् । चौरे । ण्वुल्णिन्यन्तावप्यत्र

**प्रतिलोम** त्रि॰प्रतिगतं लोम आनुकूल्यमस्मात् प्रति+लोमन् अच् समा॰ । वामे विपरीते ।

**प्रतिलोमज** पु॰प्रतिलोमात् जातः जन-ड । उत्तमवर्णस्त्रियाम् अधमवर्णात् जाते सङ्कीर्णवर्णे । [वाक्ये च ।

**प्रतिवचन** न॰ प्रतिरूपं वचनम् । प्रतिवाक्ये, उत्तरे, विरुद्ध-

**प्रतिवात** त्रि॰ प्रतिगतो वातो यतः । यस्मात् प्रदेशात् वायुः प्रत्यागच्छति तस्मिन् देशे 'प्रतिवातेऽनुवाते चे'ति मनुः ।

**प्रतिवादिन्** पु॰ त्रि॰ प्रतिकूलं वदति वद-णिनि । प्रतिपक्षे व्यवहारे प्रत्यर्थिनि अभियोज्ये (आसामी)'कारये प्रतिवादिनो'ति स्मृतिः ।

**प्रतिवासि(वेशि)न्** त्रि॰ प्रत्यासन्नं वसति (विशति) प्रति+वस-(विश) वा णिनि । (पड़सि) गृहासन्नवासिनि । स्त्रियां ङीप् । 'दृष्टिं हि प्रतिवासि(वेशि)नी'ति सा॰ द॰ १प॰ ।

**प्रतिविधान** न॰ प्रति+वि+धा ल्युट । प्रतीकारे ।

**प्रतिबिम्ब** न॰ प्रतिरूपं बिम्बम् । बिम्बसादृश्ये प्रतिच्छायायाम्

**प्रतिविषा** स्त्री॰प्रतिषिद्धं विषं यया । अतिविषायाम् (आतइच्)

**प्रतिशासन** न॰ प्रति+शास-ल्युट् । भृत्यादेर्निकटस्य नियोगे

प्रतिश्याय पु० प्रति+श्यै-ण। पीनसरोगे। [ग्टहे, आश्रये च

प्रतिश्रय पु० प्रतिश्रीयते प्रति+श्रि-अच्। यज्ञग्टहे, सभायां,

प्रतिश्रव पु० प्रति+श्रु-अप्। स्वीकारे।

प्रतिश्रुत् स्त्री० प्रतिरूपं श्रूयते श्रु-क्विप्। प्रतिशब्दे प्रतिध्वनौ

प्रतिषेध पु० प्रति+सिध-घञ्। निषेधे 'मा कुरु' इत्यादिना निवारणे। ल्युट्। तत्रैव न०।

प्रतिष्टम्भ पु० प्रति+स्तम्भ-घञ् षत्वम्। प्रतिबन्धे।

प्रतिष्ठा स्त्री० प्रति+स्था-अच्। क्षितौ, व्रतयागादेः समाप्तौ, चतुरक्षरपादके छन्दोभेदे, कूपादेः संस्कारे, व्रतानां समाप्तौ कर्त्तव्ये कर्मभेदे, आश्रये च 'ब्रह्मा पुच्छं प्रतिष्ठे'ति श्रुतिः।

प्रतिसर पु० प्रति-सृ-अच्। सैन्यपश्चाद्भागे, हस्तसूत्रे च।

प्रतिसर्ग पु० प्रतिरूपः प्रतिकूलो वा सर्गः। ब्रह्मणः सृष्टितुल्यायां मरीच्यादिसृष्टौ प्रलये च। [निकायाम् (परदा)

प्रतिसीरा स्त्री० प्रतिसिनोति सीयते वा रक् दीर्घश्च। जव-

प्रतिसूर्य्यक पु० प्रतिरूपः सूर्य्यः स्वार्थे कन्। उपसूर्य्यकमण्डले (सूर्य्यसभा)। ततुसवर्णे कृकलासे च।

प्रतिसृष्ट त्रि० प्रति+सृज-क्त। प्रत्याख्याते, प्रेषिते च।

प्रतिसोमा स्त्री० प्रतिनिहिता सोमा सोमवल्ली। सहिषवल्लयाम्

प्रतिहत त्रि० प्रति+हन-क्त। द्विष्टे, रुद्धे निरस्ते, प्रतिस्खलिते च

प्रति(ती)हार पु० प्रति+हृ-घञ् वा दीर्घः। द्वारे अण्। द्वारपे, मायाकारे च त्रि० स्त्रियां ङीप्। ण्वुल्। द्वारपाले त्रि०। णिनि। प्रतीहारीत्यप्यत्र, मायाकारे च। [त्रि०

प्रतीक पु० प्रति+कन नि० दीर्घः। अवयवे। प्रतिरूपे, विलोमे च

प्रतीक्षा स्त्री० प्रति-ईक्ष अ। अपेक्षायाम्।

प्रतीक्ष्य त्रि० प्रति+ईक्ष-ण्यत्। पूज्ये 'प्रतीक्ष्यं तत्प्रतीक्ष्यायै पितृष्वस्रे' इति माघः। [प्रतीच्योऽप्यत्र

प्रतीचीन त्रि० प्रतीच्यां भवः ख। पश्चिमदिग्भवे। यत्।

प्रतीत त्रि० प्रति-इण-क्त। ख्याते, ज्ञाते, हृष्टे, सादरे च।

प्रतीति स्त्री० प्रति-इण-क्तिन्। ज्ञाने, ख्यातौ, आदरे, हर्षे च

प्रतीप त्रि० प्रति+अप्-कर्म० अच नि०। प्रतिकूले। चन्द्रवंश्ये नृपभेदे पु०। [णिनि। भार्य्यायाम्।

प्रतीपदर्शिनी स्त्री० प्रतीपं प्रतिकूलं दर्शयति दृश-णिच्

प्रतीर न० प्रतीर्य्यते प्र+तीर-क। तटे, तीरे।

प्रतीवाप पु० प्रति+वप-घञ् दीर्घः। गलितस्वर्णादेरवचूर्णने

प्रतोद पु० प्रतुद्यतेऽनेन तुद-घञ्। अश्वादिताड़नदण्डे (चावुक)

प्रतोली स्त्री० प्र+तुल-अच् गौ० ङीष्। रथ्यायाम्, पुराभ्यन्तरवर्त्मनि, हट्टादौ निर्मिते पथि च।

प्रत्न त्रि० प्र+त्न। पुरातने।

प्रत्यक्पर्णी स्त्री० प्रत्यञ्चि पर्णान्यस्याः ङीप्। अपामार्गे प्रत्यक्पुष्पीत्यप्यत्र। [द्रन्ते, मयिकपर्ण्यां च।

प्रत्यक्श्रेणी स्त्री० प्रतीची श्रेणीव अस्याः न कप्। दन्ती-

प्रत्यक्ष अव्य० प्रतिरूपमक्ष्णः अव्ययी० अच्। इन्द्रियजन्ये ज्ञानभेदे। अर्श आद्यच्। तद्विषये त्रि०।

प्रत्यग्र त्रि० प्रतिगतमग्रमप्रत्वम् प्रा०। नूतने, शोधिते च।

प्रत्यङ्गिरा स्त्री० देवीभेदे।

प्रत्यच् त्रि० प्रति+अन्च-क्विन्। पश्चिमकाले, पश्चिमदेशे च पश्चिमायां दिशि स्त्री० ङीप्। प्रतीची।

प्रत्यनीक पु० प्रतिकूलमनीकं यस्य। रिपौ, विघ्ने च।

प्रत्यन्त पु० प्रतिगतोऽन्तम् प्रा०। म्लेच्छदेशे। सन्निकृष्टदेशे त्रि०

प्रत्यन्तपर्व्वत पु० प्रत्यन्तः सन्निकृष्टः पर्व्वतः। वृहत्पर्व्वतसमीपस्थे पर्व्वते।

प्रत्यभियोग पु० प्रतिरूपोऽभियोगः। अभियुक्तेन प्रतिवादिना स्वाभियोगिनं प्रति अभियोगान्तरकरणे।

प्रत्यभिवाद पु० प्रति+अभि+वद णिच्-घञ्। अभिवादस्य प्रतिरूपे आशीर्व्वचनादौ। ल्युट्। प्रत्यभिवादनमत्र न०।

प्रत्यय पु० प्रति+इण्-अच्। शपथे, ज्ञाने, विश्वासे, अधीने, शब्दे, छिद्रे, आधारे, निश्चये, स्वाद्गुनि, कारणे, 'अपैहते प्रत्ययमुत्तममि'ति कुमारः। व्याकरणोक्ते प्रकृतिं निमित्तीकृत्य विधीयमाने शब्दभेदे च।

प्रत्ययित त्रि० प्रति+अय-क्त। आप्ते, विश्वस्ते, प्रतिगते च।

प्रत्यर्थिन् त्रि० प्रत्यर्थयते प्रति+अर्थ-पीड़ने णिनि। शत्रौ, प्रतिकूलमर्थयते णिनि। व्यवहारे प्रतिवादिनि।

प्रत्यर्पण न० प्रति+ऋ-णिच्-पुक्-ल्युट्। प्रतिदाने ग्टहीतस्य धनादेः पुनर्दाने।

प्रत्यवसान न० प्रति+अव+सो-ल्युट्। भोजने।

प्रत्यवसित त्रि० प्रति+अव+सो-क्त। भुक्ते।

प्रत्यवस्कन्द पु० प्रति+अव+स्कन्द-घञ्। व्यवहारे चतुर्विधोत्तरमध्ये उत्तरभेदे। ल्युट्। 'अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तदि'ति स्मृत्युक्तलक्षणे उत्तरभेदे औषधभेदे च न०।

प्रत्यवस्थातृ त्रि० प्रत्यवतिष्ठते प्रतिपक्षतया विवदते प्रति+अव+स्था-तृच्। प्रतिपक्षवादिनि शत्रौ।

प्रत्यवाय पु० प्रति+अव+इण्-अच्। पापे।

प्रत्याख्यात त्रि० प्रति+आ+ख्या-क्त। निराकृते दूरीकृते।

प्रत्याख्यान न० प्रति+आ+ख्या-ल्युट्। निराकरणे।

प्रत्यादिष्ट त्रि० प्रति+आ+दिश-क्त। निरस्ते।

**प्रत्यादेश** पु० प्रति+आ+दिश-घञ्। निराकरणे।

**प्रत्यालीढ** न० प्रति+आ+लिह-क्त। 'आलीढं दक्षिणं पादं प्रत्यालीढन्तु वामकमि'त्युक्ते वामपादसङ्कोचेन दक्षिणपादप्रसारणरूपे धन्विनां स्थितिविशेषे। आस्वादिते त्रि०।

**प्रत्यासन्न** त्रि० प्रति+आ+सद-क्त। अतिनिकटस्थे।

**प्रत्याहार** पु० प्रति+आ+हृ-घञ्। योगशास्त्रप्रसिद्धे इन्द्रियाणां स्वस्वविषयेभ्यो निराकरणे।

**प्रत्युत्क्रम** पु० प्रति+उद्+क्रम-घञ् न वृद्धिः। युद्धार्थोद्योगे, प्रधानप्रयोजनोद्देशेनाप्रधानारम्भे च।

**प्रत्युत्तर** न० प्रतिरूपमुत्तरस्य। उत्तरस्योत्तरवाक्ये।

**प्रत्युत्थान** प्रति+उद्+स्था-ल्युट्। अभ्युत्थाने आगतस्य सम्माननार्थमासनादुत्थितौ। [तत्कालोचितबुद्धौ।

**प्रत्युत्पन्नमति** त्रि० प्रत्युत्पन्ना तत्कालोचिता मतिर्यस्य।

**प्रत्युद्गमनीय** न० प्रति+उद्+गम-अनीयर्। धौतवस्त्रयुग्मे, 'स्फोततप्रत्युद्गमनीयवस्त्रे'ति कुमारः पाठान्तरं त्वच्छं वेति न गुरुत्वम् समुपस्थानयोग्ये, पूजनीये च त्रि०।

**प्रत्यूष** पु० प्रत्यूषति रुजति कामुकान् ऊष-रुजायां क। प्रभाते, अष्टवसुमध्ये वसुभेदे च। असि। प्रत्यूषस्। प्रभाते

**प्रत्यूह** पु० प्रति+ऊह-घञ्। विघ्ने।

**प्रथ** ख्यातौ भ्वा०आ०सक०सेट् घटा०। प्रथते अप्रथिष्ट णिच् प्रथयति। अङ् प्रथा। [अपप्रथत् त।

**प्रथ** ख्यातौ अक०विक्षेपे सक०चुरा०उभ०सेट्। प्रथयति-ते

**प्रथम** त्रि० प्रथ-अमच्। प्रधाने,आद्ये च। जसि सर्वनामतास्य

**प्रथा** स्त्री० प्रथ-अङ्। ख्यातौ।

**प्रथित** त्रि० प्रथ-क्त। ख्याते। [स्थूलत्वे।

**प्रथिमन्** पु० पृथोर्भावः पृथु-इमनिच् प्रथादेशः। पृथुत्वे

**प्रथुक** पु० प्रथ-कुकन्। चिपिटके। [च।

**प्रदर** पु० प्र+दृ-अप्। विदारणे,भङ्गे, नारीणां योनिरोगभेदे

**प्रदीप** पु० प्र+दीप-क। दीपे।

**प्रदीपन** पु० प्रदीपयति जठराग्निम् प्र+दीप+णिच्-ल्यु। स्थावरे विषभेदे। प्रकाशके त्रि०।

**प्रदेश** पु० प्र+दिश+घञ्। एकदेशे, 'पितुः प्रदेशास्तवे'ति कुमारः। देशमात्रे च तर्ज्जन्यङ्गुष्ठसम्मिते माने, भित्तौ च।

**प्रदेशन** न० प्रदिश्यते दिश-ल्युट्। नृपादेरुपहारे (भेटी)।

**प्रदेश(शि)नी** स्त्री० प्रदिश्यतेऽनया प्र+दिश-करणे ल्युट् ङीप्। तर्ज्जन्यां तया हि वस्तु निर्द्दिश्यते णिनि। प्रदेशिनी अत्रैव। [चतुर्व्यूहात्मकविष्णोरंशभेदे च।

**प्रद्युम्न** पु० प्रकृष्टं द्युम्नं बलं यस्य। कन्दर्पे वैष्णवागमोक्ते

**प्रद्रव** पु० प्र+द्रु-अप्। पलायने, घञ्। प्रद्रावोऽप्यत्र।

**प्रधन** न० प्र+धा-क्यु। युद्धे।

**प्रधान** न० प्र+धा-ल्युट्। साङ्ख्यमतसिद्धायाम् सत्त्वरजस्तमोरूपगुणत्रयात्मिकायां प्रकृतौ, तत्कार्य्ये बुद्धितत्त्वे, परमात्मनि, प्रशस्ते, सचिवे च। सेनापत्यध्यक्षे पु०। श्रेष्ठे त्रि०

**प्रधि** पु० प्रधीयन्ते काष्ठान्यत्र प्र+धा-कि। चक्रावयवकाष्ठसञ्जनस्थाने रथनाभौ।

**प्रधूपिता** स्त्री० प्र+धूप-क्त। सन्तापितायां 'व्यसनप्रधूपिता'मितिकुमारः। ज्योतिषोक्तायां सूर्य्यगन्तव्यायां दिशि च।

**प्रपञ्च** पु० प्र+पचि-विस्तारे घञ्। विस्तारे, वैपरीत्ये, सञ्चये, प्रतारणे, संसारे च।

**प्रपथ्या** स्त्री० प्रकृष्टा पथ्या प्रा०स०। हरीतक्याम्।

**प्रपाद** न० प्रारब्धं पदम् प्रा०स०। पादस्याग्रभागे।

**प्रपन्न** त्रि० प्र+पद-क्त। शरणागते,'प्रपन्नार्त्तिहरे! देवी'ति चण्डी

**प्रपा** स्त्री० प्रपीयतेऽस्यां पा-ड। पानीयशालायाम् (जलसत्रघर)

**प्रपाठक** पु० प्रकृष्टः पाठोऽत्र कप्। वेदस्याध्यायावयवेऽंशभेदे

**प्रपात** पु० प्रपतत्यस्मात् पत-घञ्। तटरहिते निरवलम्बे पर्व्वतस्थाने, निर्झरे, कूले, अवस्कन्दे च। भावे-घञ् पतने

**प्रपितामह** पु० प्रजातः पितामहो यस्मात्, प्रकृष्टः पितामहो वा। दक्षादिप्रजापतिरूपाणां प्रजाजनकानामुत्पादके चतुर्मुखे ब्रह्मणि, पितामहपितरि च। तत्पत्न्याम् स्त्री०ङीप्

**प्रपुन्नाड(ट)** पु० पुमांसं नाडयति नाटयति नड-भ्रंशे नट-अवस्यन्दने वा अण् प्रकृष्टः पुन्नाडः (पुन्नाटः) प्रा०। चक्रमर्द्दे (चाकुन्दा) वृक्षे। डस्य लत्वे प्रपुन्नालोऽप्यत्र दद्रुमर्द्दने च

**प्रपूरिका** स्त्री० प्रकर्षेण पूर्य्यते कण्टकैः। पूर-घञ् टाप् स्वार्थे कन्। कण्टकार्य्याम्।

**प्रपौण्डरीक** पु० पुण्डरीक+स्वार्थेऽण्। प्रकृष्टं तदिव पुष्पं यस्य। गजमनुष्याणां चक्षुर्हितकारके शालपर्णीतुल्यपत्रके क्षुपभेदे। [तत्कार्य्यां स्त्री० ङीप्।

**प्रपौत्र** पु० प्रगतः कारणतया पौत्रम्। पौत्रस्य पुत्रे,

**प्रफुल्ल** त्रि० प्र+फुल्ल-विकाशने अच्। विकाशयुक्ते। प्र+फल-क्त इडभावे अत उत्वम्। प्रफुल्लतमप्यत्र। 'लोध्रद्रुमं सानुमतः प्रफुल्ल (त्त)मि'ति रघुः।

**प्रबन्ध** पु० प्र+बन्ध-अच्। संदर्भे, ग्रन्थादेः रचने च।

**प्रबन्धकल्पना** स्त्री० ६त०। 'प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदु'रित्युक्तलक्षणायामल्पसत्यायां बहुमिथ्याकथायाम्

**प्रबाल** न० प्रकर्षेण वलति अवकम्पते ज्वलादित्वात् णः। नवपल्लवे 'पुष्पं प्रबालोपहितं यदि स्यादि'ति कुमारः।

रक्तावर्त्ते मणिभेदे, (स्त्री) वीणादण्डे च ।
प्रबोध पु० प्र+बुध-घञ् । प्रज्ञत्वबुद्धौ, निद्राराहित्ये च ।
प्रबोधन न० प्र+बुध-णिच्-ल्युट् । कालादिहेतुभिः पूर्वगन्धस्य न्यूनतायां प्रयत्नविशेषेण तदुद्दीपने ।
प्रबोधनी स्त्री० प्र+बुध्यतेऽनया प्र+बुध-ल्युट् । दुरालभायाम् प्रबुध्यते हरिरत्र । कार्त्तिकशुक्लैकादश्याम् । प्र+बुध-णिच्-णिनि ङीप् । प्रबोधिनी तत्रैव ।
प्रभञ्जन न० प्रभञ्जति तृणादीन् प्र+भञ्ज-युच् । वायौ ।
प्रभद्र पु० प्रकृष्टं भद्रमस्मात् ५व० । निम्बवृक्षे ।
प्रभव पु० प्रभवत्यस्मात् प्र+भू-अप् । आद्यप्रकाशस्थाने, जलादके । 'क्व सूर्य्यप्रभवो वंश' इति रघुः । ६०वर्षमध्ये वत्सरभेदे च । प्र+भू-भावे अप् । पराक्रमे जन्मनि च ।
प्रभा स्त्री० प्र-भा अङ् । दीप्तौ ।
प्रभाकर पु० प्रभां करोति कृ-अच्, सूर्य्ये मीमांसकभेदे च ।
प्रभाञ्जन पु० प्रभयाञ्जयति अन्‍ज-णिच्-ल्यु । शोभाञ्जने ।
प्रभात न० प्र+भा-भावे क्त प्रकृष्टं भातमत्र । प्रातःकाले प्र+भा कर्त्तरि क्त । प्रभायुक्ते त्रि० ।
प्रभाव पु० प्र+भू-घञ् । राज्ञां कोषदण्डजाते तेजसि, तेजसि, सामर्थ्ये, विक्रमे, शान्तौ, उद्भवे च । [च ।
प्रभाष पु० प्र+भाष-अच् । अष्टवसुमध्ये वसुभेदे, प्रकृष्टकथने
प्रभास पु० तीर्थभेदे 'प्रभासः पुष्कराणि चे'ति स्नानमन्त्रः ।
प्रभिन्न पु० प्र+भिद्-क्त । स्रवन्मदे गजे । प्रभेदवति त्रि० ।
प्रभु पु० प्र+भू-डु । विष्णौ, शब्दे, पारदे च । स्वामिनि, अधिपतौ च त्रि० ।
प्रभूत त्रि० प्र+भू-क्त । प्रचुरे, उद्गते, भूते उन्नते च ।
प्रभृति अव्य० प्र+भृ-क्तिच् । तदारभ्येत्यर्थे । ब०उत्तरपदस्थः । तदादिके त्रि० । [भेदे
प्रभेद पु०प्रभिद्यतेऽनेन प्र+भिद्-घञ् । प्रकारे । भावे घञ्
प्रभ्रष्टक न०प्र+भ्रन्श-क्त ततः कन् । चूडातोलम्बमाने माल्ये
प्रमथ पु०प्र+मथ-अच्) । शिवानुचरभेदे अश्वे च । हरितक्यां स्त्री०
प्रमथन न० प्र+मथ-ल्युट् । वधे, क्लेशने, विलोड़ने च ।
प्रमथाधिप पु० ६त० । शिवे, महादेवे ।
प्रमद पु० प्र+मद्-अप् । हर्षे । प्रमाद्यत्यनेन अप् । धुस्तूरफले न० । कर्त्तरि अच् । प्रमत्ते त्रि० ।
प्रमदवन न० प्रमदस्य हर्षस्य वनम् । राज्ञोऽन्तःपुरस्थे वने ।
प्रमदा स्त्री० प्रमाद्यत्यनया अप् । उत्तमयोषिति ।
प्रमदावन न० प्रमदाया उचितं वनम् । अन्तःपुरसेवनयोग्ये वने प्रमदाकाननादयोऽप्यत्र ।

प्रमनस् त्रि० प्रहृष्टं मनो यस्य हृष्टपदलोपः । प्रहृष्टचित्ते ।
प्रमा स्त्री० प्र+मा-अङ् । यथार्थज्ञाने भ्रमभिन्ने ज्ञाने ।
प्रमाण न० प्रमीयतेऽनेन । प्रमाज्ञानसाधने इन्द्रियादौ, मर्य्यादायाम्, शास्त्रे, सत्यवादिनि, हेतौ प्रमातरि च । 'न प्रमाणं यदीन्दु'रिति मुद्राराक्षसम् । भावे ल्युट् । यथार्थज्ञाने ।
प्रमातामह पु० प्रारब्धो मातामहो येन । आरब्धपदलोपः । मातामहपितरि । तत्पत्न्यां स्त्री० ङीप् ।
प्रमाद पु०प्र+मद्-घञ् । कर्त्तव्ये अकर्त्तव्यत्वधिया ततो निवृत्तौ, अकर्त्तव्ये कर्त्तव्यत्वधिया तत्र प्रवृत्तौ वा अनवधानतायाम्
प्रमापण न० प्र+मीञ् हिंसायां स्वार्थे णिच्-आत्वे पुक् ल्युट् । मारणे ।
प्रमिति स्त्री० प्र+मा-क्तिन् । प्रमायां यथार्थज्ञाने ।
प्रमीत त्रि० प्र+मीञ् हिंसायां क्त । मृते । 'प्रमीतौ पितरौ यस्ये'ति स्मृतिः यज्ञार्थे हतपशौ च ।
प्रमीला स्त्री० प्र+मील अ । तन्द्रायाम् ।
प्रमुख न०प्रकृष्टं मुखमारम्भः । तदादित्वे । ब० उत्तरपदस्थः । तदादिके, मान्ये, प्रथमे, प्रधाने, श्रेष्ठे च त्रि० । पुन्नागवृक्षे, समूहे च पु० ।
प्रमुद् त्रि० प्रकृष्टा मुद् यस्य । हृष्टे हर्षयुक्ते ।
प्रमुदित त्रि० प्र+मुद्-क्त । हृष्टे हर्षयुक्ते ।
प्रमेह पु० प्र+मिह-घञ् । रोगभेदे ।
प्रमोचनी स्त्री० प्रकर्षेण मुच्यते निस्त्वचीक्रियते भोजनार्थम् मुच-कर्मणि ल्युट् ङीप् । गोडुम्बायाम् (गोमुक) ।
प्रमोद पु० प्र+मुद्-हर्षे घञ् । हर्षे ।
प्रयत त्रि० प्र+यम-क्त । पवित्रे, नियमयुक्ते च ।
प्रयत्न पु० प्र+यत-नङ् । कार्य्यानुकूले यत्नभेदे । 'प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारण'मिति न्यायोक्तो त्रिविधयत्न स चात्मगुण इति वैशेषिकादयः बुद्धिधर्म्म इति सांख्यादयः । प्रयासे च ।
प्रयाग पु० प्रकृष्टो यागो यस्मात् ५व० । गङ्गायमुनयोः सङ्गम जाते तीर्थभेदे, इन्द्रे शतक्रतौ च । ५व० । अश्वे अश्वमेधाङ्गत्वास्य तथात्वम् । कर्म० । प्रकृष्टे यज्ञे ।
प्रयाम पु० प्र+यम-घञ् । महार्घतावशात् धान्यादौ जनानामादरातिशये ।
प्रयास पु०प्र+यस-घञ् । प्रयत्नशब्दार्थे, श्रमे च । [लीलावती
प्रयुत न०दशलक्षसङ्ख्यायां तत्संख्याते च 'लक्षप्रयुतकोटयः' इति
प्रयोक्तृ त्रि० प्र-युज-तृच् । प्रयोगकर्त्तरि ऋणदानादौ धनप्रयोगकर्त्तरि उत्तमर्णे, प्रयोजकमात्रे च ।

**प्रयोग** पु० प्र+युज-घञ् । अनुष्ठाने वशीकरणे, निदर्शने, अश्वे च

**प्रयोजक** त्रि० कार्यादौ भृत्यादीन् प्रयुङ्क्ते प्र+युज-ण्वुल् । नियोज्यस्य भृत्यादेः प्रेरके, व्याकरणोक्ते हेतुसंज्ञे कर्त्तरि च

**प्रयोजन** न० प्र+युज-ल्युट् । कार्य्ये, उद्देश्ये, हेतौ च ।

**प्रयोज्य** त्रि० प्रयोक्तुं शक्यते प्र+युज-शक्यार्थे यत् । नियोज्ये निकृष्टे भृत्यादौ । [घञ् । प्ररोहे

**प्ररूढ़** त्रि० प्र+रुह-क्त । प्रवृद्धे, बद्धमूले, जाते च । भावे

**प्ररोह** पु० प्र+रुह-अच् । अङ्कुरे 'मूलप्ररोह इवे'ति रघुः । आरोहे च ।

**प्रलम्ब** पु० दैत्यभेदे । प्र+लम्ब-अच् । प्रकर्षेण लम्बमाने त्रि० ।

**प्रलम्बघ्न** पु० प्रलम्बं हन्ति हन-टक् । बलदेवे प्रलम्बघ्नादयोऽप्यत्र

**प्रलय** पु० प्रलीयतेऽस्मिन् प्र+ली-अच् । सृष्टपदार्थानां नाशाधिकरणे काले, ब्रह्मणोदिनावसाने च । भावे घञ् । नाशे, चेष्टाक्षये च 'प्रलयान्तोन्मिषिते विलोचने' इति कुमारः ।

**प्रलाप** पु० प्र+लप-घञ् । अनर्थकवाक्ये, निष्प्रयोजने उन्मत्तादिवाक्ये च ।

**प्रलापहन्** पु० प्रलापं हन्ति हन-क्विप् । कुलत्थजातेऽञ्जने ।

**प्रवचन** न० प्र+वच-ल्युट् । वेदार्थज्ञाने, प्रकृष्टवाक्ये च ।

**प्रव(ब)ण** पु० प्र+व(ब)ण-अच् । चतुष्पथे निम्नस्थाने, उदरे च नम्रे, आयते, प्रगुणे क्षणे, प्लुते, स्निग्धे, आसक्ते, क्षीणे च त्रि०

**प्रवयस्** त्रि० प्रकृष्टं वयोऽस्य । प्रवृद्धे ।

**प्रवर** पु० प्र+वृ-अप् । सन्ततौ, गोत्रे, गोत्रप्रवर्त्तकमुनिव्यावर्त्तके मुनिगणे च । श्रेष्ठे त्रि० । अगुरुचन्दने न० ।

**प्रवर्ग** पु० प्र+वृज-घञ् । होमाग्निभेदे ।

**प्रवर्त्तक** त्रि० प्रवर्त्तयति प्र+वृत-णिच्-ण्वुल् । प्रवृत्तिजनके ।

**प्रवर्त्तना** स्त्री० प्र+वृत-णिच्-युच् । प्रवृत्तिजनकव्यापारे विध्यादौ 'अस्ति प्रवर्त्तनारूपमनुरूपं चतुष्टयी'ति भर्तृहरिः

**प्रवर्ह** त्रि० प्र+वृह-अच् । श्रेष्ठे, प्रधाने च ।

**प्रवह** पु० प्रवह-अच् । वायुभेदे । भावे अप् । नगराद्बहिर्गमने

**प्रवहण** न० प्र+वह-करणे ल्युट् । मनुष्यवाह्ये वस्त्राच्छादिते स्त्रीवाहने कर्णीरथे (महापाल) ।

**प्रवाणी** स्त्री० प्र+वे-ल्युट् ङीप् । तन्तुवायशलाकायाम् (माकु)

**प्रवाद** पु० प्र+वद-घञ् । परम्परागतवाक्ये, परस्परकथोपकथने च । [वस्तुनो दाने ।

**प्रवारण** न० प्र+वृ-णिच्-ल्युट् । काम्यदाने काम्यस्य उत्तम-

**प्रवास** पु० प्र+वस-घञ् । विदेशवासे ।

**प्रवासन** न० प्र+वस-णिच्-ल्युट् । विदेशवासने-'सीताप्रवासनपटो'रित्युत्तरचरितम् । मारणे च ।

**प्रवासिन्** त्रि० प्र+वस-णिनि । विदेशे वासिनि, 'प्रवासी सुखमायाती'ति षट्पञ्चाशिका । [उत्तमाश्वे च ।

**प्रवाह** पु० प्र+वह-घञ् । प्रवृत्तौ, जलस्रोतसि, व्यवहारे,

**प्रवाहिका** स्त्री० प्रवाहयति मलं ण्वुल् । ग्रहणीरोगे ।

**प्रवाङ्क** पु० प्रकृष्टो वाङ्कः । कूर्परस्याधोभागे । [आकोर्णे च ।

**प्रविदारण** न० प्र+वि+दृ-णिच्-ल्युट् । युद्धे, विदारणे,

**प्रविश्लेष** त्रि० प्रकर्षेण विश्लेषो यस्य । विधुरे, परमविश्लेषे च ।

**प्रविषा** स्त्री० प्रहतं विषं यया । अतिविषायाम् । (आतइच्)

**प्रवीण** त्रि० वीणया प्रगायति प्र+वीणा+णिच्-अच् । निपुणे

**प्रवृत्ति** स्त्री० प्र+वृत-क्तिन् । प्रवाहे, वार्त्तायाम्, अवन्त्यादिदेशे, हस्तिमदे, न्यायोक्ते चिकीर्षाकृतिसाध्यताज्ञानाधीने प्रयत्नभेदे च ।

**प्रवृद्ध** त्रि० प्र+वृध-क्त । वृद्धियुक्ते, प्रौढे च ।

**प्रवेक** त्रि० प्र+विच-घञ् । प्रधाने । [कम्बले

**प्रवे(णि)णी** स्त्री० प्र+वेण-इन् वा ङीप् । गजस्कन्धस्थे चित्र-

**प्रवेल** पु० प्र+वेल-अच् । पीतमुद्गे (सोनामुग)

**प्रवेश** पु० प्र+विश-घञ् । अन्तर्गमने ।

**प्रवेशन** न० प्रविश्यतेऽनेन विश-करणे ल्युट् । प्रधानद्वारे, सिंहद्वारे च । भावे ल्युट् । प्रवेशे ।

**प्रवेष्ट** पु० प्र+वेष्ट-अच् । बाहौ, बाहुनीचभागे हस्तिदन्तमांसे । गजपृष्ठस्थाने च । [तापस्याञ्च स्त्री० ।

**प्रव्रजित** पु० प्र+व्रज-क्त । सन्न्यासिनि । मांस्यां, मुण्डीर्य्यां,

**प्रव्रज्या** स्त्री० प्र+व्रज-क्यप् । सन्न्यासे, सर्व्वकर्मत्यागेन विधानेनाश्रमान्तरगमने ।

**प्रव्रज्यावसित** पु० प्रव्रज्यातः संन्यासात् अवसितः च्युतः अव+सो-क्त । सन्न्यासभ्रष्टे ।

**प्रशंसा** स्त्री० प्र+शन्स अ । गुणाविष्कारेण स्तुतौ ।

**प्रशमन** न० प्र+शम-णिच्-ल्युट् । वधे, शान्तकरणे च 'लब्धप्रशमनस्वास्थ्यमि'ति रघुः । शान्तौ च 'सर्व्वाबाधाप्रशमनमि'ति चण्डी ।

**प्रशस्त** त्रि० प्र+शन्स-क्त । प्रशंसनीये, श्रेष्ठे, क्षेमे च ।

**प्रश्न** पु० प्रच्छ-नङ् । जिज्ञासायाम् ज्ञातुमिच्छया कथनाय प्रेरणे

**प्रश्नी** स्त्री० प्रच्छ+निङ् ङीप् । कुम्भिकायाम् (पाना) ।

**प्रश्रय** पु० प्र+श्रि-अच् । प्रणये ।

**प्रश्रित** त्रि० प्र-श्रि-क्त । विनीते ।

**प्रष्ठ** त्रि० प्र+स्था-क नि० षत्वम् । अग्रगामिनि, श्रेष्ठे च ।

**प्रष्ठौही** स्त्री० प्रष्ठं प्रथमगर्भं वहति वह-क्विप् । प्रथमगर्भिण्याम्

**प्रष्ठवाह्** पु० प्रष्ठं वहति ण्वि । युगपार्श्वस्थे वृषादौ, युगपार्श्वे

प्रथमयोजिते, दृश्ये च। [अप्रसिद्ध। णिच् प्रसयति
प्रस प्रसवे ततौ च सक० दिवा० आ० सेट् घटा०। प्रसते
प्रसक्त त्रि० प्र+सन्ज-क्त। प्रसङ्गविषये।
प्रसक्ति स्त्री०प्र+सन्ज-क्तिन्। प्रसङ्गे, आपत्तौ, अनुमितौ च
प्रसङ्ग पु०प्र+सन्ज-घञ्। आपत्तौ,सम्बन्धभेदे स्वतस्योपेला-
नर्हत्वरूपे सङ्गतिभेदे, स्वप्रयुक्ते अन्योद्देशेन ततकर्मणा-
न्यस्य सिद्धिरूपे अवान्तरकार्य्यनिर्व्वाहे, प्रसक्तौ, प्रस्तावे च
प्रसत्ति स्त्री० प्र+सद्-क्तिन्। नैर्मल्ये प्रसन्नतायाम्। [स्त्री०
प्रसन्न त्रि०प्र+सद्-क्त। निर्म्मले,सन्तुष्टे,कृतानुग्रहभेदे च सुरायां
प्रसन्नता स्त्री० प्रसन्नस्य भावः तल्। प्रसादे अनुग्रहभेदे।
प्रसभ न० प्रगता सभा ·सभाधिकारोऽस्मात्। बलात्कारे,
'प्रसभोद्धृतारि'रिति रघुः।
प्रसर पु० प्र+सृ-अप्-अच् वा। प्रणये, वेगे, समूहे, युद्धे,
नीवारे निकटाभिगमने प्रणयादेर्विसरणे सैन्यादेः सर्व्वतो
व्याप्तौ च। [स्त्रीत्वञ्च तत्र ङीप्
प्रसर्पण न० प्र+सृप-ल्युट्। सैन्यानां सर्व्वतोव्याप्तौ, अन्य
प्रसव पु०प्र+सू-अप्। गर्भमोचने। उत्पत्तौ, कार्य्यरूपे फले च
'यदक्षराचरं विश्वं प्रसवस्तस्य गीयते' इतिकुमारः।
प्रसवबन्धन न० प्रसवस्य पुष्पस्य बन्धनम् बन्ध-करणे ल्युट्।
वृन्ते (वोँटा)।
प्रसवित्री स्त्री० प्र+सू-तृच्। जनन्याम्।
प्रसव्य त्रि० प्रगतं सव्यं वामत्वम्। प्रतिकूले।
प्रसहा स्त्री० प्र+सह-अच्। बृहत्याम्।
प्रसह्य अव्य० प्र+सह-ल्यप्। हठादित्यर्थे। 'प्रसह्य तेजोभि-
रसंख्यतां गतै'रिति माघः। [कायचौरे
प्रसह्यचौर पु० प्रसह्य बलात्कारेण चौरः। (डाकात)। प्र-
प्रसाद पु० प्र+सद्-घञ्। नैर्मल्ये, अनुग्रहे, काव्यगुणभेदे,
स्वास्थ्ये, प्रसत्तौ, देवनैवेद्ये, गुरुजनभुक्तावशिष्टे च।
प्रसादना स्त्री० प्र+सद्-णिच्-युच्। सेवायाम्।
प्रसाधक त्रि० प्रसाधयति भूषयति प्र+सिध-णिच्-ण्वुल्।
निष्पादकेऽलङ्कर्त्तरि च स्त्रियां टाप्। 'प्रसाधिकालम्बित-
मग्रपाद'मिति रघुः। नीवारे स्त्री० टाप्।
प्रसाधन न० प्र+सिध-णिच्-ल्युट्। ललितभूषणे वेशे। करणे
ल्युट्। कङ्कतिकायाम् स्त्री० ङीप्।
प्रसाधित त्रि० प्र+सिध-णिच्-क्त। अलङ्कृते, निष्पादिते च।
प्रसारण न० प्र+सृ-णिच्-ल्युट्। विस्तारकरणे क्रियाभेदे च
प्रसारणी स्त्री०प्र+सृ-णिच्-ल्यु गौरा० ङीप्। (गन्धभादाल)
लताभेदे।

प्रसारिणी स्त्री० प्र+सृ-णिनि। लज्जालुलतायाम्।
प्रसारिन् त्रि० प्र+सृ-णिनि। विस्तारकारके।
प्रसित त्रि० प्र+सो-क्त। आसक्ते। [निगडादौ
प्रसिति स्त्री० प्र+सि-बन्धने करणे क्तिन्। बन्धनसाधने,
प्रसिद्ध त्रि० प्र+सिध-क्त। भूषिते, ख्याते च।
प्रसू स्त्री०प्र+सू-क्विप्। जनन्याम्,कदल्यां,वीरुधि, घोटक्याञ्च
प्रसूति स्त्री० प्र+सू-क्तिन्। प्रसवे, अपत्ये, उदरे, मातरि च।
प्रसूतिका स्त्री० प्रसूतेव-कन्। जातसन्तानायां स्त्रियाम्।
प्रसूतिज न० प्रसूत्या जायते जन-ड। दुःखे, प्रसवादिजन्यं
दुःखं हि सर्व्वलोकसिद्धम्। [त्रि०।
प्रसून न० प्र+सू-क्त तस्य नः। पुष्पे, फले च। जातमात्रे
प्रसृत पु० प्र+सृ-क्त। अर्द्धाञ्जलौ, प्रहृष्टे, प्रसादिते, विनीते,
वेगिते, गते, नियुक्ते च त्रि०। जङ्घायां स्त्री०।
प्रसेवक पु० प्र+षिव-ण्वुल्। वीणाप्रान्तवक्रे काष्ठे।
प्रस्कन्न पु० ऋषिभेदे। स्कन्द्-क्त तस्य नः। अवस्कन्दयुक्ते त्रि०
प्रस्तर पु० प्र+स्तॄ-अच्। पाषाणे, मणौ च।
प्रस्तार पु० प्र+स्तॄ-घञ्। तृणवने,पल्लवादिरचितशय्यायां,छन्दो
ग्रन्थोक्ते व्यक्तिभेदसंख्याज्ञानार्थे 'प्रस्तारे तु लघुं न्यस्य प्रथ
मस्य गुरोरधः। यथोपरि तथा शेष'मित्युक्ते प्रक्रियाभेदे च
प्रस्ताव पु० प्र+स्तु-घञ्। अवसरे. प्रकरणे, प्रसङ्गे च।
प्रस्तावना स्त्री० प्र+स्तु-णिच्-युच्। आरम्भे, सूत्रधारेण
नट्यादिभिः सह प्रकृताभिनेयकथाप्रसङ्गार्थं कथनीये वाक्य
स्तोमे 'नटी विदूषको वापील्या'दि सा० द्रष्ट०।
प्रस्तुत त्रि० प्र+स्तु-क्त। प्रकरणप्राप्ते, प्रासङ्गिके, उपस्थिते,
उद्यते, प्रतिपन्ने, प्रकर्षेण स्तुते च।
प्रस्थ पु० प्र+स्था-क। चतुःकुडवात्मके,आढ़कचतुर्थांशे वा धान्या-
देः परिमाणभेदे,विस्तारे च। पर्व्वतस्य वातयोर्न्वभूमौ पुं०न०
प्रस्थान न० प्र+स्था-ल्युट्। जिगीषोर्युद्धार्थगमने, गमनमात्रे च
प्रस्फोटन न० प्र+स्फुट-करणे ल्युट्। शूर्पे। भावे ल्युट्।
ताडने, विकाशने, पाके च। [ल्यु। माल्यवति पर्व्वते पु०
प्रस्रवण न० प्र+स्रु-ल्युट्। अविच्छेदेन स्रवज्जले,उत्से,स्वेदे च।
प्रस्राव पु० प्र+स्रु-घञ्। मूत्रे। [स्वाष्टमे भागे।
प्रहर पु० प्रह्रियते यामिकढक्कादिरस्मिन् प्र+हृ-अप्। दिवस-
प्रहरण न० प्रह्रियतेऽनेन हृ-ल्युट्। अस्त्रे, कर्णीरथे च।
आधारे ल्युट्। युद्धे। भावे ल्युट्। प्रहारे, दमे च।
प्रहर्षणी स्त्री० प्रहृष्यत्यनया हृष-ल्युट् ङीप्। हरिद्रायाम्
त्रयोदशाक्षरपादके छन्दोभेदे च। तत्र प्रहर्षिणीत्येके। [द्रष्ट०
प्रहसन न०प्र+हस-ल्युट्। हासे,दृश्यकाव्यरूपकभेदे च। सा०

**प्रहसन्ती** स्त्री० प्र+हस-शतृ ङीप् । यूथिकायां, वासन्त्याञ्च ।

**प्रहस्त** पु० प्रकृष्टो हस्तः प्रा० । विस्तृताङ्गुलिके पाणौ, रावण-सेनापतिभेदे च । [मांसरोहिण्याम् ।

**प्रहारवल्ली** स्त्री० प्रहारस्य वेदनोपशमना वल्ली शाक० ।

**प्रहि** पु० प्रह्रियतेऽत्र प्र+हृ-इन् डिच्च । कूपे ।

**प्रहित** त्रि० प्र+हि-क्त । क्षिप्ते, निरस्ते, प्रेरिते च । सूपे न०

**प्रहेलिका** स्त्री० दुर्बोधार्थज्ञानाय प्रश्ने (हेयालि) 'तरुण्यालि-ङ्गितःकण्ठे नितम्बस्थानमाश्रितः । गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहु'रित्यादिरूपे, अस्योत्तरम् ईषदपूर्णजलः कलसः

**प्रह्लाद** पु० प्र+ह्लद-घञ् । हिरण्यकशिपोर्दैत्यस्य पुत्रेऽसुरभेदे

**प्रह्व** त्रि० प्र+ह्वे-क्त । नम्रे विनीते, आसक्ते च ।

**प्रांशु** त्रि० प्रकृष्टा अंशवोऽस्य । उच्चे, उन्नते ।

**प्राकाम्य** न० प्रकामस्य भावः ष्यञ् । अष्टविधैश्वर्य्यमध्ये, इच्छा-नभिघातरूपे ऐश्वर्य्ये स्वाच्छन्द्यानुमतौ च । 'प्राकाम्यं ते विभूतिष्वि'ति कुमारः । [कारे प्राचीरादौ ।

**प्राकार** पु० प्रकीर्य्यते कॄ-घञ् दीर्घः । इष्टकादिरचिते वेष्टना-

**प्राकृत** त्रि० प्रकृष्टमकृतमप्रकार्य्यं यस्य । नीचे । प्रकृतेरयम् अण् । प्रकृतिसम्बन्धिनि । प्रकृत्या स्वभावेन निर्वृत्तः अण् । स्वभावसिद्धे । प्रकृतेः संस्कृतशब्दात् आगतः अण् । नाटकादौ प्रसिद्धे अपभ्रंशशब्दभेदे ।

**प्राकृतप्रलय** पु० कर्म्म० । कार्य्यब्रह्मणो नाशे तेन सह कार्य्यजातस्य प्रकृतौ लये, तत्काले च ।

**प्राकृतमित्र** कर्म्म० । स्वभावसिद्धे मित्रे, विषयानन्तरस्थनृप-रूपात् प्राकृतशत्रोः व्यवहितोत्तरविषयस्थे नृपे ।

**प्राकृतशत्रु** पु० कर्म्म० । विषयानन्तरवर्त्तिनि नृपे ।

**प्राक्तन** त्रि० प्राचि काले, देशे, प्राच्यां दिशि वा भवः ट्यु तुट् च । प्राग्भवे । 'प्रपेदिरे प्राक्तनजन्मविद्या' इति कु० ।

**प्रागभाव** पु० प्राग्वर्त्ती अभावः । इह कपाले घटो भविष्यती-त्यादिप्रतीतिसिद्धे अभावभेदे ।

**प्रागुदीची** स्त्री० प्राच्या उदीच्याश्चान्तराला दिक् दिङ्नामा-न्यन्तराले इति स० । पूर्व्वोत्तरदिशि ईशानकोणे ।

**प्राग्ज्योतिष** न० कामरूपदेशे तद्देशस्थे ब० व० ।

**प्राग्भार** पु० प्रकृष्टो भारः । उत्कर्षे परभाग, 'मांसमस्तिष्क-पङ्क 'प्राग्भारः इति प्रबोधचन्द्रोदयः । पर्व्वताग्रभागे च ।

**प्राग्रहर** त्रि० प्रकर्षेण अग्रे ह्रियतेऽसौ अप् । श्रेष्ठे ।

**प्राग्र्य** त्रि० प्रकर्षेणाग्रे भवः यत् । श्रेष्ठे ।

**प्राग्वंश** पु० प्राक् वंशः सपत्नीकयजमानादिसम्प्रदायोऽत्र । हविर्गेहात् पूर्व्वभागस्थे यजमानादिस्थित्यर्थे गृहे ।

**प्राघार** पु० प्र+घृ-क्षरणे घञ् दीर्घः । यज्ञादौ वह्नेरुपरि-घृतादेःक्षरणे । [प्रघाणे च ।

**प्राघुण** पु० प्र+आ-घुण-क । अतिथौ । [अजिरे, प्रघ-

**प्राङ्गण** न० प्रकृष्टमङ्गनं पूर्व० णत्वम् । गृहभूमौ (उठान)

**प्राङ्न्याय** पु० 'आचारेणावसन्नोऽपि पुनर्लेखयते यदि । सोऽ-भिधेया जितः पूर्व्वं प्राङ्न्यायश्च स उच्यते' इत्युक्ते व्यवहारस्थे उत्तरभेदे ।

**प्राच्** त्रि० प्र-अन्च्-क्विन् । पूर्व्वस्मिन् काले देशे च । स्त्रियां ङीप् प्राची । सा च पूर्व्वस्यां दिशि, तन्त्रोक्ते पूज्यपूजकयो र्मध्यदेशे च ।

**प्राचीन** त्रि० प्राक्+भवार्थे ख । पूर्वदिग्देशादौ भवे । (आक-नादि) वनतिक्तायाम्, रास्नायाञ्च स्त्री० टाप् ।

**प्राचीनबर्हिस्** पु० । इन्द्रे, नृपभेदे च ।

**प्राचीनामलक** न० कर्म्म० । पानीयामलके ।

**प्राचीनावीत** न० 'सव्यं बाहुं समुद्धृत्य दक्षिणे तु द्विजातयः ।। प्राचीनावीतमित्युक्तं पैत्रे कर्म्मणि योजये'दित्युक्ते । श्राद्धादौ वामकरे बहिष्कृते सति दक्षिणस्कन्धार्पिते यज्ञसूत्रादौ ।

**प्राचीर** न० प्राचीयते प्र+आ-चि-क्रन् दीर्घश्च । सर्व्वतो वेष्टनाकारे इष्टकादिनिर्म्मिते आवरणे (पाचिर) । [पुत्रे च ।

**प्राचेतस** पु० वाल्मीकिमुनौ प्राचीनबर्हिषो नृपस्य पुत्रे, वरुणस्य

**प्राच्य** पु० प्राचि भवः । शरावत्या नद्याः प्राग्दक्षिणे देशे ।

**प्राजक** पु० प्र+अज-ण्वुल् वीभावाभावः । सारथौ ।

**प्राजन** न० प्र+अज-ल्युट् । तोदने पश्वादेश्चालनदण्डे (पाचनी)

**प्राजापत्य** पु० प्रजापतिर्देवताऽस्य यञ् । अष्टविवाहमध्ये विवाहभेदे, 'त्वरहं प्राविस्त्वहं सायं त्वरहमद्यादयाचितम् । त्वरहं परञ्च नाश्नीयात् प्राजापत्यमिति स्मृतमिति' स्मृत्युक्ते द्वादशाहसाध्ये व्रतभेदे न० । प्रजापत्यधिदेवताके पर्व्वादौ त्रि० । प्रव्रज्याश्रमाङ्गे सर्वस्वदक्षिणकेष्टिभेदे स्त्री० ।

**प्राजितृ** पु० प्र-अज-तृच् वीभावाभावः । सारथौ ।

**प्राज्ञ** पु० प्रकर्षेण जानाति प्र-ज्ञा-क स्वार्थे अण् । पण्डिते । राजशुके च । प्रज्ञाऽस्त्यस्य अण् । बुद्धिमति, दक्षे च त्रि० प्रज्ञा+स्वार्थे अण् । बुद्धौ, प्राज्ञस्य पत्नी ङीप् । प्राज्ञपत्न्यां स्त्री० । [प्रचुरे त्रि० ।

**प्राज्य** न० प्रकृष्टमाज्यं प्र+अन्ज-क्यप् वा । प्रकृष्टघृते ।

**प्राञ्जल** त्रि० प्र+अन्ज-अलच् । सरले, सुबोधे च ।

**प्राड्विवेक** पु० अर्थिप्रत्यर्थिनौ पृच्छति प्रच्छ-क्विप् प्राट्, तयो-र्वाक्यं विरुद्धाविरुद्धतया विवेचयति वि+विच-घञ् कर्म्म० । राजनियुक्ते व्यवहारदर्शके, 'विवादानुगतं पृष्ट्वा पूर्व्ववाक्यं

प्रयत्नतः । विचारयति येनासौ प्राड्विवेकस्ततः स्मृत' इति स्मृतिः अत्र प्राड्विवाक इति केचित् पठन्ति ।

**प्राण** पु० प्र+अन-घञ् । हृदयस्थे नासाग्रवर्त्तिनि वायौ, काव्यजीवने रसे, वायुमात्रे, बले च । पञ्चवृत्तिके देहस्थे वायुभेदे, इन्द्रिये च ब०व० ।

**प्राणद** पु० प्राणं ददाति दा-क । जले, अन्ने च । जीवकवृक्षे पु० । हरितक्यां, ऋद्धिवृक्षे च स्त्री० । प्राणदातरि त्रि० 'प्राणदा यमदूतिके' त्युद्भटः ।

**प्राणनाथ** ६त० । पत्यौ ।

**प्राणमयकोष** पु० रागादिकर्म्मेन्द्रियसहितः प्राणपञ्चकप्रचुरः कोषवदाच्छादकत्वात् कोष इव । वेदान्तोक्ते जीवस्वरूपाच्छादके, कर्म्मेन्द्रियसहिते प्राणपञ्चके ।

**प्राणसंयम** पु० प्राणस्य प्राणरूपवृत्तिभेदस्य नासाग्रवर्त्तिनो वायोः संयमो यत्र व्यापारे । प्राणायामे तेन हि व्यापारेण प्राणवायोर्वहिर्निःसरणप्रतिरोधेन प्राणसंयम इति योगशास्त्रादिप्रसिद्धम् । [पत्न्याम् ।

**प्राणसमा** स्त्री० प्राणैः समा तुल्या प्रियत्वात् । प्रियतमायां

**प्राणायाम** पु० प्राणः प्राणवायुरायम्यते संयम्यते येन आ+यम-घञ् । योगादिशास्त्रप्रसिद्धे प्राणवायोर्निरोधसाधने व्यापारे । वहिःस्थप्राणवायोरुत्कर्षणरूपपूरणेन, देहस्थस्य तस्य कुम्भवत् निश्चलतया रोधेन, निरुद्धस्य तस्य क्रमेण वहिर्निःसारणरूपरेचनेन च प्राणवायोर्यथेष्टविनियोगरूपवश्यतासम्पादनशिक्षणो व्यापारसमुदायः प्राणायाम इत्युच्यते 'प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यत् । प्राणायामः स विज्ञेयः' इत्युक्तलक्षणे प्राणायामशब्दस्य पूरणकुम्भकरेचनरूपव्यापारसमुदाये रूढिरिति बहवः प्रत्येकस्मिन्नपि रूढिरित्यन्ये विस्तरो वृहदभिधाने ।

**प्राणिद्यूत** न० प्राणिभिः मेषकुक्कुटादिभिः पणपूर्वं द्यूतं, देवनम् दिव-भावे क्त । प्राणिभिः पणपूर्व्वके देवने ।

**प्राणिन्** पु० प्राण+अस्त्यर्थे इनि । जीवे चेतने ।

**प्रातःकृत्य** न० प्रातः प्रभाते कृत्यं कर्त्तव्यम् । प्रभाते कर्त्तव्ये शौचस्नानादौ । [प्रातरुपास्ये मन्त्ररूपे देवभेदे ।

**प्रातःसन्ध्या** स्त्री० प्रातरुपास्या सन्ध्या । वैदिके तान्त्रिके च

**प्रातर्** अव्य० प्र+अत-अरु । प्रभाते, 'प्रातः कालो मुहूर्त्तांस्त्रीनि'ति स्मृत्युक्ते सूर्य्योदयावधित्रिमुहूर्त्तकाले च ।

**प्रातराश** पु० अश्यते भुज्यते अश-घञ् प्रातः प्रभाते आशो भोज्यम् । प्रातःकाले भोज्ये ।

**प्रातिका** स्त्री० प्र+अत-ण्वुल् टाप् । जवावृक्षे ।

**प्रातिपदिक** पु० प्रतिपदि हूयते ठञ् । अग्नौ, 'इन्द्राग्नी यत्र हूयेते इति श्रुतौ यत्र प्रतिपदीत्यर्थः । व्याकरणोक्ते 'अर्थवद् अधातुरप्रत्ययः प्रातिपदिकमि'त्याद्युक्ते प्रत्ययप्रत्ययान्तभिन्ने धातुभिन्ने कृत्तद्धितसमासनिष्पन्ने च शब्दभेदे न० ।

**प्रातिभाव्य** न० प्रतिभुवो भावः । (जामिनी) प्रतिभुवोभावे 'प्रातिभाव्यागतं सुत' इति स्मृतिः । [स्वासाधारणे धर्म्मे

**प्रातिस्विक** न० प्रतिस्वे एकैकस्मिन् भवः ठक् । प्रत्येकपदार्थे

**प्रातिहारिक** त्रि० प्रतिह्रियतेऽनेन प्रतिहारः कापट्यं माया सः प्रयोजनमस्य ठक् । मायाकारके । [वेदाध्ययनादौ ।

**प्राथमकल्पिक** त्रि० प्रथमकल्पे भवः ठक् । प्रथमारम्भोचिते

**प्राथमिक** त्रि० प्रथमे भवः ठञ् । प्रथमकालभवे । स्त्रियां ङीप्

**प्रादुर्भाव** पु० प्रादुस्+भू-घञ् । प्रकाशे आविर्भावे ।

**प्रादुस्** अव्य० प्र+अद-उसि । स्फुटत्वे, प्रकाशे, नाम्नि, सम्भावनायां, वृत्तौ च ।

**प्रादेश** पु० प्र+दिश-घञ् दीर्घः । तर्ज्जनीसहितविस्तृताङ्गुष्ठदेशमात्रे च 'अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते इत्युक्ते परिमाणभेदे च ।

**प्रादेशन** न० प्र+आ+दिश-ल्युट् । दाने ।

**प्राध्व** पु० प्रगतोऽध्वानम् अच् समा० । रथादौ, प्रकृष्टोऽध्वा प्रा०स० प्रकृष्टे पथि । नम्रे, बद्धे च त्रि० । [तायाञ्च

**प्राध्वम्** अव्य० प्र+आ+ध्वन-डमि । आनुकूल्ये, बन्धने, नम्र-

**प्रान्त** पु० प्रकृष्टोऽन्तः । शेषसीमायाम् ।

**प्रान्तर** न० प्रकृष्टमन्तरं व्यवधानं यत्र । दूरगस्ये पथि । वृक्षच्छायाशून्ये पथि, वने, कोटरे च ।

**प्राप्तपञ्चत्व** त्रि० प्राप्तं पञ्चत्वं मरणं येन । मृते ।

**प्राप्तरूप** त्रि० प्राप्तं रूपं येन । मनोहरे, पण्डिते च ।

**प्राप्ति** स्त्री० प्र+आप-क्तिन् । वृद्धौ, लाभे, स्थानान्तरगतौ, संहतौ, अणिमाद्यैश्वर्य्यमध्ये ऐश्वर्य्यभेदे, उदरे च ।

**प्राप्य** त्रि० प्र+आप-ण्यत् । गम्ये, लभ्ये च । व्याकरणोक्ते 'क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते' इत्युक्ते कर्म्मभेदे न० ।

**प्राभृत** न० प्र+आ+भृ-क्त । उपढौकनद्रव्ये । स्वार्थे कन् अत्रैव

**प्रामाद्य** पु० प्रमादाय हितः ञ्य । वासकवृक्षे ।

**प्रामाणिक** त्रि० प्रमाणेन निर्वृत्तः सिद्धः ठञ् । प्रत्यक्षादिप्रमाणसिद्धे, शास्त्रसिद्धे च स्त्रियां ङीप् ।

**प्रामाण्य** न० प्रमाणस्य भावः । तद्वति तत्प्रकारकत्वरूपे ज्ञानधर्म्मे, तच्च न्यायमते परतोग्राह्यं मीमांसकादिमते स्वतः, स्वसामग्र्या वा ग्राह्यमिति भेदः विस्तरो वृहदभिधाने ।

**प्राय** पु० प्र+अय-इण्-वा घञ् अच् वा । मृत्यौ, अनशनमृत्यौ बाहुल्ये च । 'प्रायेण बालस्य विधा'विति कुमारः ।

**प्रायश्चित्त** प्रायस्+चित-क्त । 'प्रायो नाम तपः प्रोक्तम् चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तम् प्रायश्चित मिति स्मृत'मित्युक्तलक्षणे पापक्षयमात्रसाधनत्वेन विधि-बोधिते कर्मणि चान्द्रायणादौ ।

**प्रायश्चित्तिन्** त्रि० प्रायश्चित्तं कर्त्तव्यतयास्त्यस्य इनि । प्राय-श्चित्तकरणयोग्ये पापनिश्चयवति जने ।

**प्रायस्** अव्य० प्र+अय-असि । बाहुल्ये, तपसि च । 'प्रायः प्रयोधरमृगत्र्यतिरत्र हेतु'रित्युद्भटः ।

**प्रायोपविष्ट** त्रि० प्रायाय अनशनमृत्यवे उपविष्टः उप+विश-क्त । अनशनेन मरणायोद्युक्ते ।

**प्रायोपवेश** पु० प्रायाय अनशनमृत्यवे उपवेशः स्थितिः । सङ्क-ल्पपूर्वकम् सकलकार्यत्यागेन अनशनमरणार्थमुद्यमे ।

**प्रारब्ध** न० आ+रभ-आरम्भे क्त प्रकृष्टमारब्धं स्वकार्यं जननाय कृतारम्भं येन । देहाद्यारम्भके अदृष्टभेदे तस्य च भोगेनैव क्षय इति शास्त्रे प्रसिद्धम् । कृतारम्भे त्रि० ।

**प्रार्थना** स्त्री० प्र-अर्थ-युच् । याच्ञायां, हिंसायाञ्च । ल्युट् । याचने, हिंसने च न० । [च ।

**प्रार्थित** त्रि० प्र+अर्थ क्त । याचिते । अभिहिते, हते, शत्रुसंयते

**प्रालम्ब** न० प्रकर्षेणालम्बते प्र+आ+लम्ब-अच् । ऋजुतया कण्ठात् लम्बमाने माल्यादौ ।

**प्रालेय** न० प्रकर्षेण लीयते प्र+आ+ली-यत् आत्वे एत्वम्, प्रलयाय हितम् अण् नि०एत्वम् वा । हिमे । [रोम्यत पु०

**प्रावरण** न०प्राव्रियतेऽनेन ल्युट् । उत्तरीयवस्त्रे । घञ् । प्रावा-

**प्रावृत** त्रि० प्र+आ+वृ-क्त । प्रकर्षेणावृते वस्त्रे ।

**प्रावृष्**(षा) स्त्री०प्रकर्षेणावर्षत्यत्र वृष-क्विप् वा टाप् । वर्षाकाले

**प्रावृषायणी** स्त्री० प्रावृषायामयनं यस्याः पूर्व० णत्वम् । कपिकच्छ्वाम् (आलकुशी)

**प्रावृषेण्य** पु० प्रावृषि भवः एण्य । कदम्बवृक्षे, धाराकदम्बे, कुटजवृक्षे च । वर्षाकालभवे त्रि० 'खं प्रावृषेण्यैरिवे'ति भट्टिः । पुनर्नवायां, कपिकच्छ्वाञ्च स्त्री० ।

**प्रावृष्य** पु० प्रावृषि भवः यत् । कुटजे, कदम्बे च ।

**प्राश्निक** त्रि०प्रश्नं करोति ठक् । कुशलादिप्रश्नकारके । सभ्ये पु०

**प्रास** पु० प्रकर्षेणास्यते अस-कर्मणि घञ् । कुन्तास्त्रे ।

**प्रासङ्ग** पु० प्रसज्यते प्र+सञ्ज-घञ् दीर्घः । दम्यवत्ससानां स्कन्धे शिक्षार्थमासज्यमाने काष्ठे ।

**प्रासङ्ग्य** पु०प्रासङ्गं वहति यत् । हलादिकाष्ठवाहके वृषादौ

**प्रासाद** पु० प्रसीदत्यस्मिन् प्र+सद-घञ् पूर्वपद दीर्घः । देवानां राज्ञाञ्च गृहभेदे ।

**प्रासिक** पु० प्रासः प्रहरणमस्य ठक् । कुन्तास्त्रेण योद्धरि ।

**प्रास्थिक** त्रि० प्रस्थं तत्परिमितं धान्यादिकं यस्मिन् समा-वेशयति, पचति वा ठञ् । प्रस्थमितधान्यसमावेशयोग्ये पात्रे, तन्मितधान्यादिपाचके च । स्त्रियां ङीप् ।

**प्राह्ण** पु० प्रकृष्टं, प्रथमं वा अहः टच्,अह्नादेशः णत्वम् । पूर्वाह्णे

**प्राह्णेतन** त्रि० प्राह्णे पूर्वाह्णे भवः ट्युल् तुट् च निपातनादे त्वम् । पूर्वाह्णभवे । [अतिमल्पूषे

**प्राह्णेतराम्** अव्य० अतिशयेन प्राह्णे तर-आमु एत्वं नि० ।

**प्रिय** पु० प्रीणाति प्री-तर्पणे क । भर्त्तरि, पत्यौ, मृगभेदे, ऋद्धिनामौषधौ च । हृद्ये त्रि० । भार्य्यायां,एलायां,मल्लि-कायां, मदिरायां, वार्त्तायाञ्च स्त्री० ।

**प्रियंवद** त्रि० प्रियं प्रियकरं मधुरं वदति खच् मुम् च । प्रियवादिनि खेचरे, गन्धर्वभेदे च पु० ।

**प्रियक** पु० प्रिय+संज्ञायां कन् । पीतसाले वृक्षे,कदम्बे,विचित्र-मृगे, प्रियङ्गौ, भ्रमरे, कुङ्कुमे, असनवृक्षे च ।

**प्रियङ्कर** त्रि० प्रियङ्करोति खच् मुम् च । प्रियकारिणि । श्वेतकण्टकार्य्यां,वृहज्जीवन्त्याम्, अश्वगन्धायाञ्च स्त्री०ङीप्

**प्रियङ्गु** पु० प्रिय+गम-डु नि० मुम् च । स्वनामख्याते वृक्षे 'प्रियङ्गुकलिकाकार'मिति बुधग्रहणमन्त्रः । राजिकायां, पिप्पल्याम्, कङ्गौ, (काङ्गनी) कटुकायाञ्च ।

**प्रियजीव** पु० प्रियो जीवो यस्य । श्योनाकभेदे । [प्रिये त्रि०

**प्रियतम** पु० अतिशयेन प्रियः तमप् । मयूरशिखावृक्षे, अति-

**प्रियता** स्त्री०प्रियस्य भावः तल् । स्नेहे प्रियत्वे । [सुदृश्ये त्रि०

**प्रियदर्शन** पु० प्रियं दर्शनमस्य । क्षीरिकावृक्षे, शुकखगे च

**प्रियवर्णी** स्त्री० प्रियो वर्णो यस्याः गौ०ङीप् । प्रियङ्गौ ।

**प्रियव्रत** पु० स्वायम्भुवमनोः ज्येष्ठे पुत्रे ।

**प्रियवल्ली** स्त्री० कर्म० । प्रियङ्गौ । [प्रियसंवादे ।

**प्रियसन्देश** पु० प्रिय सन्दिशति अण् । चम्पकवृक्षे । वृत० ।

**प्रियसालक** पु० कर्म० स्वार्थे कन् । असनवृक्षे (पियासाल)

**प्रियाम्बु** पु० प्रियं प्रिष्टृणां प्रियमम्बु मूले सिक्तं जलमस्य आम्रवृक्षे । [(पियासाल) । द्राक्षायां स्त्री० ।

**प्रियाल** पु० प्रियाय अलति पर्य्याप्नोति अल-अच् । प्रियशाले

**प्री** तर्पणे भ्वा०उभ०सक०अनिट् । प्रियति ते अप्रैषीत् अप्रैष्ट ।

**प्री** प्रीतौ कान्तौ दिवा०आत्म०अक० अनिट् । प्रीयते अप्रैष्ट ।

**प्री** तर्पणे सक० क्र्या० उभ०कान्तौ अक० अनिट । प्रीणाति प्रीणीते अप्रैषीत् अप्रैष्ट ।

**प्री** तर्पणे सक०चु० उभ०अनिट्। प्राययति ते अपिप्रयत्-त।

**प्रीणन** न० प्री-णिच्-नुक्-ल्युट्। तर्पणे। [टव्यत्व त्रि०।

**प्रीत** त्रि० प्री-क्त वा नत्वाभावः। हृष्टे। तस्य नत्वे प्रीणो-

**प्रीति** स्त्री०प्री-भावे क्तिच्। हर्षे, आमोदे, तृप्तौ च।

**प्रु** सर्पणे भ्वा० आत्म०सक०अनिट्। प्रवते अप्रोष्ट।

**प्रुट** मर्द्दने भ्वा०पर०सक०सेट्। प्रोटति अप्रोटीत्।

**प्रुष** भस्मीकरणे भ्वा०पर०सक० सेट्। प्रोषति अप्रोषीत् क्त्वा वेट्। [अप्रोषीत्।

**प्रुष** सेके पूर्त्तौ च सक० स्नेहे अक०क्र्या०पर०सेट्। प्रुष्णाति

**प्रुष्ट** त्रि० प्रुष-क्त। दग्धे।

**प्रेक्षा** स्त्री० प्रकर्षेण प्रमाणादिना ईक्षा। पर्य्यालोचनायाम्।

**प्रेक्षावत्** त्रि० प्रेक्षा अस्त्यर्थे मतुप् मस्य वः। समीक्ष्यकारिणि

**प्रेङ्खा** स्त्री० प्र+इखि अ। दोलायाम्,परिभ्रमणे,स्वार्थकगतौ, नृत्यभेदे, नृत्ये च।

**प्रेङ्खित** त्रि० प्र+इखि-क्त। कम्पिते।

**प्रेङ्खोल** दोलने अ०चुरा०उ०सक०सेट्। प्रेङ्खोलयति ते अप्रेङ्खोलत् त। प्रस्योपसर्गत्वमपीत्यन्ये तेन प्राञ्चिखोलत् त।

**प्रेत** पु० प्र+इण-क्त। नरकस्थे जीवे, पिशाचभेदे, आतिवाहिक-देहोत्तरं जायमाने देहभेदे, 'प्रते सपिण्डीकरणे नरः संवत्सरात् परम् प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते इति स्मृतिः, मृते च।

**प्रेतकर्म्मन्** न०६त०। मृतस्य दाहादिके सपिण्डीकरणान्ते कर्म्मणि

**प्रेतगृह** न० ६त०। श्मशाने प्रेतपुरादयोऽप्यत्र। [नदीभेदे।

**प्रेतनदी** स्त्री० प्रेतगम्या नदी। यमद्वारस्थे वैतरणीनामके

**प्रेतशिला** स्त्री० गयातीर्थस्थे प्रेतोद्धारणार्थे शिलाभेदे।

**प्रेत्य** अव्य० प्र+इण-ल्यप्। लोकान्तरे 'प्रेत्य संज्ञा नास्ती'ति श्रुतिः। [इन्द्रे,वायौ च पु०।

**प्रेमन्** पु०न० प्रियस्य भावः इमनिच् प्रादेशः। स्नेहे,नर्म्मणि च

**प्रेयस्** त्रि० अतिशयेन प्रियः ईयसु प्रियस्य प्रादेशः। अतिशय प्रिये। स्त्रियां ङीप् प्रेयसी वा च प्रियतमायां,योषिति च

**प्रेरण** न० प्र-ईर-णिच्-ल्युट्। प्रेषणे नियुक्तस्य भृत्यादेः कार्यादौ नियोगे। णिच्-युच्। प्रेरणापत्र स्त्री०।

**प्रेष** गतौ भ्वा०पर०सक० सेट्। प्रेषति अप्रेषीत्।

**प्रे(प्रै)ष** पु० प्र+इष-घञ् वा पररूपम्। प्रेषणे, पीडने च।

**प्रेष्ठ** त्रि० अतिशयेन प्रियः इष्ठन् प्रादेशः। अतशय प्रिये।

**प्रे(प्रै)ष्य** पु० प्र-इषु ण्यत् वा पररूपम्। दासे। प्रेरणीये त्रि० जङ्घायां स्त्री०। [पिन्यूनां पूरणे च।

**प्रोक्षण** न० प्र+उक्ष-ल्युट्। समन्तात् सेचने, वधे, यज्ञार्थे

**प्रोक्षित** त्रि०प्र+उक्ष-क्त। सिक्ते,हिते, यज्ञार्थं संस्कृते मांसादौ च 'भक्षयेत् प्रोक्षितं मांस'मिति स्मृतिः।

**प्रोञ्छन** न० प्र+उछि-ल्युट्। मार्जने (पोंछा)।

**प्रोत** त्रि० प्र-वे क्त। गुम्फिते, स्यूते, खचिते च। वस्त्रे न०।

**प्रोत्फल** पु० प्रकर्षेण उत्फलति प्र+उद्+फल-अच्। चिह्नलाङ्गूलाकारपुष्पवति वृक्षभेदे।

**प्रोथ** परिपूर्णतायाम् सामर्थ्ये च भ्वा०उभ०अक०सेट्। प्रोथति-ते अप्रोथीत् अप्रोथिष्ट। घटि न ह्रस्वः।

**प्रोथ** पु०न०। प्रु-थन्। अश्वनासिकायाम्। कट्यां, शाटके, स्त्रीगर्भे, गर्त्ते, भीषणे, स्फिचि, अश्वमुखे च पु०। मान्ये, स्थापिते, प्रथिते च त्रि०।

**प्रोषित** त्रि० प्र+वस-क्त इट्। प्रवासं गते विदेशं गते।

**प्रोषितभर्त्तृका** स्त्री० प्रोषितः भर्त्ता यस्याः कप्। विदे-शस्थपतिकायां नायिकायाम्।

**प्रो(प्रौ)ष्ठ** पु० प्रकृष्टः ओष्ठोऽस्य वा वृद्धिः। (पुंटि) मत्स्यभेदे गवि च। वा ङीप्। प्रोष्ठीत्यप्यत्र।

**प्रो(प्रौ)ष्ठपद** पु० प्रो(प्रौ)ष्ठो गौस्तस्येव पदं यस्य। भाद्रपदाख्ये नक्षत्रविशेषे तेन युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण् वा न वृद्धिः। चान्द्रभाद्रमासे।

**प्रो(प्रौ)ष्ठपदा** स्त्री०ब०व०प्रो(प्रौ)ष्ठस्य गोरिव पदान्यस्याः। भाद्र-पदनक्षत्रे पूर्वभाद्रपदताराया उत्तरभाद्रपदतारायाश्च चतुर्नक्ष-त्रात्मकत्वात् बहुत्वम्। [न वृद्धिः। भाद्रपौर्णमास्याम्।

**प्रो(प्रौ)ष्ठपदी** स्त्री० प्रोष्ठ(प्रौ)पदाभिर्युक्ता पौर्णमासी अण् वा

**प्रौढ** त्रि० प्र+वह-क्त वृद्धिः। प्रवृद्धे, प्रगल्भे, निपुणे च नायि-काभेदे 'तरुणी त्रिंशता मता पञ्चपञ्चाशता प्रौढे'त्युक्तवय-स्कायां स्त्रियाम् च स्त्री० टाप्।

**प्रौढपाद** पु० 'आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा। कृतावसक्थिको यस्तु प्रौढपादः स उच्यते' इत्युक्तलक्षणे आसनारूढपादे वस्त्रादिना कटिजङ्घावन्धनेन स्थिते जने।

**प्रौढि** स्त्री० प्र+वह क्तिन् वृद्धिः। सामर्थ्ये, उद्यमे च।

**प्लक्ष** भक्षणे भ्वा० उभ०सक०सेट्। प्लक्षति अप्लक्षीत्।

**प्लक्ष** पु० प्लक्ष्यते कीटैः प्लक्ष-घञ्। (पाकुड) वृक्षे, प्लक्षवृक्ष-चिह्निते द्वीपभेदे च।

**प्लव** पु० प्लु-भावे अप्। प्लवने। कर्त्तरि अच्। भेलके (भेला) भेके, मेषे, वानरे, श्वपचे, जलकाके, प्रवणे, पर्कटीवृक्षे, कारण्डवखगे, शब्दे, रिपौ, जलभेदे जलकुक्कुटे,जलचर-पक्षिजाते सारसादौ च। कैवर्त्तीमुस्तके, गन्धतृणे च न०।

**प्लवग** पु० प्लवन् सन् गच्छति गम-ड ६त०। वानरे, भेके, सूर्य

सारथौ, प्लवपक्षिणि, शिरीषवृक्षे च । [भेदे,प्लक्षवृक्षे च
प्लवङ्ग पु० प्लवन् सन् गच्छति गम-ड खच् प्र० । वानरे,मृग-
प्लवङ्गम पु० प्लवन् सन् गच्छति गम खच् प्र० । वानरे,भेके च ।
प्लाक्ष न० प्लक्षस्य समूहः, तस्य विकारः,तस्य,फलं वा अण् न
लुप् । प्लक्षवृक्षफले, तद्विकारे, तत्समुदाये च ।
प्लावन न० प्लु-णिच्-ल्युट् । (डुबान) द्रवद्रव्यस्य समन्तान्नतौ
प्लावित त्रि० प्लु-णिच्-क्त । जलादिना समन्तात् व्याप्ते ।
प्लिह गतौ भ्वा० पर०सक०सेट् । प्लेहति अप्लेहीत् ।
प्लि(प्ली)हन् पु० प्लिह-कनिन् प्र० वा दीर्घः । (पिला) वामकुक्षि-
पार्श्वस्थे मांसखण्डे, तद्वृद्धिहेतुके रोगभेदे च ।
प्ली गतौ क्र्या०पर०सक० अनिट् । प्लीनाति अप्लैषीत् ।
प्लीहघ्न पु० प्लीहानं हन्ति हन-क । (रोडा) दाडिमतुल्य-
कुसुमवति वृक्षभेदे । प्लीहशत्रुप्रभृतयोऽप्यत्र ।
प्लीहारि पु०६त० । अश्वत्थवृक्षे (रोडा) वृक्षभेदे च । [अप्लोष्ट
प्लु सर्पणे उत्प्लुत्य गतौ च भ्वा०आत्म०अक० अनिट् । प्लवते
प्लुत न० प्लु-क्त । तिर्य्यग्गतौ, झम्पेन, गतौ, अश्वगतिभेदे च ।
प्लुष दाहे भ्वा०पर०सक०सेट् । प्लोषति अप्लोषीत् । क्त्वा वेट् ।
प्लुष दाहे दिवा०पर०सक०सेट् । प्लुष्यति अप्लुषत् । [अप्लोषीत्
प्लुष सेके पूर्त्तौ च सक०अक० स्नेहे क्र्या० पर०सेट् । प्लुष्णाति
प्लुष्ट त्रि० प्लुष-क्त । दग्धे । [सत्-अप्लोषीत् ।
प्लुस दाहे विभागे च दिवा०पर०सक० सेट् । प्लुस्यति अप्लु-
प्लेव सेवने भ्वा०आ०सक०सेट् । प्लेवते अप्लेविष्ट । चङि न ह्रस्वः
प्लोष पु० प्लुष-घञ् । दाहे ।
प्सा भक्षणे अदा०पर०सक०अनिट् । प्साति अप्सासीत् ।
प्सात त्रि० प्सा-क्त । भक्षिते ।

## फ

फ न० फक्क-ड । रूक्षकथने,निष्फलवाक्ये,फुत्कारे च । झञ्झावाते
वर्द्धके, जृम्भाविस्फारे, फललाभे च पु० । [अफक्कीत् ।
फक्क असदाचारे, मन्दगतौ च भ्वा०पर०अक०सेट् । फक्कति
फक्किका स्त्री० फक्क-धात्वनिर्द्देशे भावे ण्वुल्-टाप् अतइत्त्वम् ।
असद्व्यवहारे (फाकि) तत्त्वनिर्णयार्थं पूर्व्वपक्षे च । 'फणि-
भाषितभाष्यफक्किके'ति नैषधम् । [(वामनहाटि) वृक्षे
फञ्जिका स्त्री० भञ्जति रोगान् भनूज-मर्द्दने ण्वुल् प्र० ।
फञ्जिपत्त्रिका स्त्री० भनूज-णिनि प्र० फञ्जि रोगमर्द्दि पत्त्रं
यस्याः । पर्य्यांस् (टङ्करकानि) । [वामनहाटि
फञ्जि(ञ्जी) स्त्री० भञ्ज-इन् प्र० वा ङीप् । भार्ग्याम् ।
फट पु०स्त्री० स्फुट-विकासे अच् प्र० । सर्पाणां फणायाम्
स्त्रियां टाप् । सा च दन्ते कितवे च । [भेदे च ।
फट् अव्य० स्फुट-क्विप् प्र० । योगे, तन्त्रोक्ते अस्त्रनामके मन्त्र-
फण अनायासेनोत्पत्तौ भ्वा०पर०सक०सेट् फणा० । फणति
अफाणीत्-अफणीत् । फेणतुः-पफणतुः ।
फण गतौ भ्वा०पर०सक०सेट् । फणति अफाणीत्-अफणीत्
वा घटादि० । णिचि फाणयति फणयति ।
फणा पु०स्त्री० फण-अच् । दर्व्याकारे सङ्कोचविकाशवति सर्पमस्तके
फणा(णा)धर पु० फणां(णां) धरति धृ-अच् । सर्पे । फण(णा)-
भृदादयोऽप्यत्र । [सामान्ये च ।
फणिज्झक पु० फणिनमुज्झति ण्वुल् प्र० । तुलसीभेदे, जम्बीर
फणिप्रिय पु० फणिनां प्राणप्रदत्वात् प्रियः । वायौ । सर्पा-
णां वायुभक्षकत्वेन वायोस्तत्प्रियत्वम् ।
फणिफेन न० फणिनां फेनमिव । (आफिङ्) अहिफेने ।
फणिवल्ली स्त्री० फणिसदृशी दीर्घा,फणिलोकस्था वा वल्ली ।
नागवल्ल्याम् (पानलता) । [कुल्याम् ।
फणिहन्त्री स्त्री० फणिनं हन्ति हन-तृच् ङीप् । गन्धना-
फणिहृत् स्त्री० फणिनं हरति अपसारयति हृ-क्विप् । क्षुद्र-
दुरालभायाम् ।
फणिन् पु० फणोऽस्यास्ति इनि । सर्पे । फणवदादयोऽप्यत्र ।
फणीश्वर पु०६त० । अनन्ते, वासुकौ च ।
फल भेदने भ्वा० पर० सक०सेट् । फलति अफालीत् फेलतुः
आरम्भे क्त । फुल्तः । अन्यत्र फलितः । [फलितः ।
फल निष्पत्तौ भ्वा० पर०अक० सेट् । फलति अफालीत् । क्त
फल गतौ भ्वा०पर०सक०सेट् । फलति अफालीत् । ज्वला०
कर्त्तरि वा णः फलः फालः ।
फल न० फल-अच् । वृक्षादीनां शस्ये, लाभे, फलके, (ढाल)
कार्य्ये, उद्देश्ये, प्रयोजने, जातीफले, त्रिफलायां, कक्कोले,
वाणाग्रे, फाले, दाने, मुष्के च । कुटजवृक्षे पु० । स्वार्थादौ
कन् । (ढाल) इति ख्याते चर्म्ममये अस्त्रप्रतिघातनिवारके
पदार्थे । अस्थिखण्डे, नागकेशरे, काष्ठादिपट्टके च पु० ।
फलकपाणि पु० फलकः पाणौ यस्य । (ढाली) चर्म्मिणि ।
फलकर्कशा स्त्री० फलेन कर्कशा कठोरा । वनकोल्याम् ।
फलकृष्ण पु० फलेन कृष्णः । पानीयामलके ।
फलकेशर पु० फले केशरा इवास्य । नारिकेलवृक्षे ।
फलत्रय(त्रिक) न०६त० । वयस्थामलकीहरीतकीबिभीतकेषु द्राक्षा-
परूषकाश्मीरफलेषु च त्रिषु फलेषु ।
फलद पु० फलं ददाति दा-क । वृक्षमात्रे । फलदातरि त्रि०
फलपाक पु० फलेषु पाको यस्य । करमर्द्दके, पानीयामलके च

फलपाकिन् पु० फलपाकोऽस्त्यस्य । गर्द्दभाण्डे ।
फलपुष्पा स्त्री० फलानि पुष्पाणीव यस्याः । पिण्डखर्जूर्य्याम्
फलपूर पु० फलेन पूरः पूर्णः पूर-क । बीजपूरे । कन् । तत्रैव
फलप्रिया स्त्री० फलं प्रियं यस्याः । प्रियङ्गौ । [अनुभवे
फलभोग पु०६त० । फलानां कर्म्मफलानां सुखदुःखादीनां भोगे
फलमुख्या स्त्री० फलेन मुख्या श्रेष्ठा । अजमोदायाम् ।
फलमुद्गरिका स्त्री० मुदं गिरति इन् फलं मुद्गरि यस्याः । पिण्डखर्जूर्य्याम् । [फले न० ।
फलवर्त्तुल पु० फलं वर्त्तुलं यस्य । कालिङ्गे वृक्षे । तत्-
फलवृक्षक पु० फलप्रधानो वृक्षः संज्ञायां कन् । पनसवृक्षे ।
फलशालिन् त्रि० फलेन शालते श्लाघते णिनि । फलयुक्ते स्त्रियां ङीप् । [बदरवृक्षे ।
फलशैशिर पु० शिशिरं प्राप्तमस्य अण् फलं शैशिरं यस्य ।
फलश्रेष्ठ पु० फलेन श्रेष्ठः प्रशस्ततरः । आम्रवृक्षे ।
फलस न० फलं स्यति सो-क । पनसवृक्षे ।
फलस्नेह पु० फले स्नेहो यस्य । अक्षोटवृक्षे । [त्याम् स्त्री०
फलाढ्या त्रि० फलेनाढ्या सम्पन्ना । फलयुक्ते । काष्ठकद-
फलाध्यक्ष पु० फलमध्यक्षमिव यस्य । राजादने । फलदा-नाध्यक्षे ईश्वरे पु० । फलदाचीत्यादयोऽप्यत्र ।
फलाम्ल न० फलमम्लं यस्य । वृक्षाम्ले । अम्लवेतसे पु० ।
फलिन त्रि०फल+अस्त्यर्थे इनच् । फलयुक्ते । तादृशे वृक्षे पु०
फलिन् त्रि० फल+अस्त्यर्थे इनि । फलयुते तादृशे वृक्षे पु० प्रियङ्गुवृक्षे स्त्री० ङीप् ।
फली स्त्री० फलमस्त्यस्याः अच् गौ०ङीप् । प्रियङ्गुवृक्षे ।
फलेग्रहि पु० फले-ग्रह इन् । योग्यकाले फलधरे वृक्षे । 'फलेग्रहीन् हंसीति' भट्टिः । इण् । फलेग्राहिरप्यत्र ।
फलेन्द्र पु० फलेन इन्द्र ऐश्वर्यान्वितः । राजजम्बुवृक्षे ।
फलेरुहा स्त्री० फले रोहति रुह-क । पाटलिवृक्षे ।
फलोत्तमा स्त्री० फलेन उत्तमा । द्राक्षाभेदे ।
फलोदय पु० ६त० । फलोत्पत्तौ लाभे, स्वर्गे, हर्षे च ।
फल्गु त्रि० फल-उ गुक् च । रम्ये,सारे, निरर्थके च गयातीर्थस्य नद्यां स्त्री० । (फागु) इति ख्याते धूलिरूपे पदार्थे, काकोडुम्बरिकायाम्, वसन्तसमये, मिथ्यावाक्ये च पु० ।
फल्गुन पु० फल्गु सूर्यभेदो नीयतेऽस्मिन् नी-ड । फाल्गुनेमासि
फल्गुनी स्त्री० फल-उनन् गुक् गौ० ङीष् । काकोडुम्बुरिकायाम् । अश्विन्यवधिकेएकादशे, द्वादशे च नक्षत्रे च व०व०
फल्गुवाटिका स्त्री० फल्गूनां वाटीव इवार्थे कन् । काकोडुम्बरिकायाम् ।

फल्गुवृन्ताक पु० फल्गु रम्यं वृन्ताकं यस्य । श्योनाकभेदे ।
फल्गूत्सव पु० फल्गुनिमित्तक उत्सवः । फाल्गुनपौर्णमास्यादिषु कर्त्तव्ये (आवीर) फल्गुद्रव्यकरणे उत्सवे ।
फल्य न० फलाय हितं यत् । पुष्पे । [भक्तौ) च ।
फाणि पु० स्फाय-नि वृ० । गुडविकारे, करम्भे (दधिमिश्रित-
फाणित न० फण-णिच् क्त । गुडविकारभेदे (फेणी) ।
फाण्ट न० फण-क्त नि० । अनायासेन कृते । 'चिलेष्णतोये क्षुदितः फाण्ट इत्यभिधीयते' इत्युक्ते क्वाथभेदे ।
फाल न० फलाय यस्याय हितम् अण्, फल्यते विदार्य्यते भूमिरनेन वा घञ् । खनामख्याते लाङ्गलाग्रस्थे लौह-भेदे । फालमस्त्यस्य अच् । बलदेवे, महादेवे च पु० । फलस्य विकारः अण् । कार्पासवस्त्रे त्रि० । फालकरणके दिव्यपरीक्षाभेदे न० । फलेषु भवः अण् । जम्बीरबीजादौ पु० ।
फाल्गुन पु० फल-उनन् गुक् च स्वार्थे प्रज्ञाद्यण् । अर्ज्जुने मध्यमपाण्डवे, अश्विन्यवधिके एकादशे द्वादशे नक्षत्रे च स्त्री० व०व० ङीप् । फल्गुनीभिर्युक्ता पौर्णमासी अण् । चान्द्रफाल्गुनमासपौर्णमास्यां स्त्री० ङीप् । सास्मिन्मासे अण् । चैत्रावधिके द्वादशे मासे पु० ।वर्षस्य हि चैत्रादित्वम्
फाल्गुनिक पु० फाल्गुनी फल्गुनीनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे ठक् । चैत्रावधिके द्वादशे मासे ।
फु पु० फल-डु । मन्त्रोच्चारणपूर्वके फुत्कारे, तुच्छवाक्ये च
फुट त्रि० स्फुट-क पृ० । विदीर्णे, प्रस्फुटिते च ।
फु(फू)त् अव्य० फल-डुति पृ० वा दीर्घः । अनुकरणशब्दे ।
फुल्ल विकाशे भ्वा०पर०अक०सेट् । फुल्लति अफुल्लीत् । [न०
फुल्ल त्रि० फुल्ल-विकाशे अच् । विकशिते । पुष्पे ।
फेण(न) पु० स्फाय-न पृ० मतान्तरे णत्वम् । दुग्धजलादेरू-मर्य्युपरिस्थे वुद्बुदाकारे पदार्थे (फेना) अस्य णान्तत्वमपि 'हंसश्रेण्यो नदीतीरे निनदं संप्रतीयिरे । यथा सारस्वता मन्वा अन्तरे फेणसङ्गता' इत्युक्तौ पद्ये अन्ते रेफेण अन्त्यस्य रकारेण संयुतादित्यर्थः । हिमे च । गुडविकारभेदे स्त्री०ङीप्
फेणा(ना)ग्र न० ६त० । वुद्बुदे ।
फेणि(नि)ल त्रि० फेन+अस्त्यर्थे इलच् । फेनविशिष्टे । कोलिफले, मदनवृक्षफले च न० । बदरवृक्षे, अरिष्टवृक्षे च पु० । [तद्गुणयोगात् धूर्त्ते, हिंस्रे च त्रि० ।
फेरव पु० फे इत्यव्यक्तो रवोऽस्य । शृगाले, राक्षसे च ।
फेरु पु० फे इत्यव्यक्तं रौति रु-डु । शृगाले ।
फेल(ला) न०स्त्री०फेल-अच् वा टाप् । भुक्तसमुज्झिते, उच्छिष्टे
फेल गतौ भ्वा०पर०स०सेट् । फेलति अफेलीत् । घङि न ह्रस्वः

व

व पु० वल-ड। सूचने, तन्तुसन्ताने, वपने, वरुणे, घटे, समुद्रे, योनौ, जले च। गमने स्त्री०।

वंहिष्ठ त्रि० अतिशयेन ब(व)हुः इष्ठन् वंहादेशः। अतिशयब(व)हुले। [ब(व)हुले।

वंहीयस् त्रि० अतिशयेन बहुः ईयसु बंहादेशः। अतिशय-

वट वृत्तौ सामर्थ्ये च भ्वा०पर०अक०सेट्। वठति। अवठीत्-अवाठीत्। वेठतुः। [अश्विनीनक्षत्रे, दास्याञ्च।

वडवा स्त्री०बलं वाति वा-क लस्य डः। घोटक्याम्, तद्देवताके

वडवाकृ(हृ)त न० बडवया दास्या कृतः (हृतः) वा। दासभेदे 'भक्तदासश्च विज्ञेयस्तथैव बडवाहृ(कृ)त' इति स्मृतिः।

वडवाग्नि पु०वडवायाः शिवस्रष्टाच्छायास्तुखस्थोऽग्निः। समुद्रस्थिते घोटकीमुखस्थे कालानले। वड़वानलादयोऽप्यत्र।

वडवामुख पु० वड़वाया मुखं स्थानत्वेनास्त्यस्य अर्श आदित्वादच्। समुद्रस्थे कालानले।

वड्वासुत पु०द्वि०व० ६त०। अश्विनीकुमारयोः। [वेणतुः

वण शब्दे भ्वा०पर०सक०सेट्। वणति अवाणीत्-अवणीत्।

वणिक्पथ पु० ६त० अच्समा०। हट्टे।

वणिग्बन्धु पु० वणिजां बन्धुरिव पोषकत्वात्। नीलीवृक्षे।

वणिग्भाव पु०६त०।वाणिज्ये आजीवनार्थं क्रयविक्रयकरणे

वणिज्(ज) पु० पणायते व्यवहरति पण-इजि इजो वा पस्य वः। आजीवनार्थं क्रयविक्रयव्यवहारकर्त्तरि,ज्योतिषोक्ते ववादितः षष्ठे करणे च।

वणिज्य न० वणिजो भावः कर्म्म० वा य। वाणिज्ये आजीवनार्थं क्रयविक्रयादिव्यवहारे, स्त्रीत्वमपि। 'चतुरेण चतुर्वर्गचिन्तामणिवणिज्ययेति मुक्ताफलम्। [अवदीत्। वेदतुः।

वद स्थैर्य्ये निश्चलभवने चभ्वा०पर०सक०सेट्। वदति अवादीत्-

वद भाषणे वा चु० उभ०पक्षे भ्वा० पर०सक० सेट्। वादयति-ते अवीवदत्-त। पक्षे वदतीत्यादि।

ब(व)दर पु० ब(व)द अरच्। कोलिवृक्षे। देवसर्षपवृक्षे,कार्पासबीजे च न०। वराहक्रान्तायां स्त्री० टाप्।

ब(व)दरफली स्त्री०ब(व)दरस्येव फलमस्याः। भूमिब(व)दर्य्याम्

ब(व)दरवल्ली स्त्री० ब(व)दरफलप्रधाना वल्ली शाक०। भूमिब(व)दरीतिख्याते लताभेदे।

ब(व)दरामलक न० ब(व)दरमिवामलकम्। प्राचीनामलके।

ब(व)दरि(री) स्त्री० ब(व)द-अरि वा ङीप्। कोलिवृक्षे, कार्पास्यां, कपिकच्छ्वाञ्च।

ब(व)दरिकाश्रम पु०न०। बदरी+स्वार्थे कन् तस्याः समीपे, तच्चिह्नितोवाश्रमः। तीर्थविशेषे। ब(व)दरीशैलोऽप्यत्र।

ब(व)दरीच्छदा स्त्री० ब(व)दर्या इव च्छदो यस्याः। हस्तिकोलवृक्षे।

ब(व)दरीपत्त्र पु० ब(व)दर्या इव पत्त्रमस्याः। नखीनामगन्धद्रव्ये। स्वार्थे कन्। तत्रैव। [शेफालिकायाम्।

ब(व)दरीफला स्त्री० ब(व)दर्या इव फलमस्याः। नील-

बद्धफल पु० बद्धानि फलान्यस्य। करञ्जवृक्षे। [क्षपणे।

बद्धमुष्टि त्रि० बद्धः असुक्तः दानायाप्रसारितो मुष्टिर्यस्य।

बद्धशिख पु० बद्धा शिखा यस्य। शिशौ। शिखाबन्धनयुक्ते त्रि०। उच्चटायां स्त्री०। [व्यापारे।

वध पु० हन-घञ् वधादेशः। हनने प्राणवियोगफलके

वध संयमने चु०उ०सक०सेट्। वाधयति-ते अबीबधत्-त।

वभ निन्दायां बन्धने च भ्वादि०आत्म०सक० सेट्। बीभत्सते अबीभत्सिष्ट।

बधिर त्रि० बन्ध-किरच्। श्रुतिशक्तिशून्ये श्रवणेन्द्रियरहिते

ब(वं)धू स्त्री० बध्नात्यविद्यया बन्ध-उ नलोपः, उह्यते वह-ऊ धश्चान्तादेशः वा। नार्य्याम्, स्नुषायां, शच्याम्, नवोढायाम्, भार्य्यायां, पृक्कायाञ्च।

ब(व)धू(टि)टी स्त्री० अल्पा ब(व)धूः अल्पार्थे टि वा ङीप्। अल्पवयस्कायां नार्य्याम् 'गोपब(व)धूटीदुकूलचौराये'ति भाषापरिच्छेदः। [प्रसवःपश्चादिर्यस्य। रक्ताम्लाने।

ब(व)धूत्सवप्रसव पु० ब(व)ध्वा उत्सव आर्त्तवम् रजः इव

वध्य त्रि० वधमर्हति वध+यत्। वधार्हे।

वध्यभूमि स्त्री० हन-भावे यत् वधादेशः वध्यस्य भूमिः। श्मशाने बधस्थाने। वध्यस्थानदयोप्यत्र।

वध्र न० बन्ध-ष्ट्रन् नलोपः। सीसके, चर्म्ममयरज्ज्वां स्त्री० ङीप्। ष्ट० नस्य रः। बर्ध्रीत्यप्यत्र स्त्री०।

बन याचने तना०आत्म०द्विक०सेट्। बनुते अवनिष्ट। क्त्वा वेट्

बन्ध बन्धने क्र्या० पर०सक०अनिट्। बध्नाति अबान्त्सीत्।

बन्ध संयमने चुरा०उभ०सक०सेट्। बन्धयति ते अबबन्धत् त

बन्ध पु० बन्ध-घञ्। संयमने निगडादिना गतिरोधने रज्ज्वादिवेष्टनस्थले च। कर्म्मणि घञ्। देहे, ऋणशोधनविश्वासाय स्थापिते द्रव्ये आधौ च।

बन्धक पु० बन्ध-ण्वुल्। विनिमये तुल्यरूपद्रव्यदानेन द्रव्यान्तरग्रहणरूपे परिवर्त्ते। आधौ न०। 'अशीतिभागो वृद्धिः स्यात् मासिमासि सबन्धके' इति स्मृतिः। पुंश्चल्यामसत्यां स्त्रियाम् स्त्री० गौरा० ङीप्।

**बन्धन** न० बन्ध-भावे ल्युट् । निगडादिना संयमने, वधे च । करणे ल्युट् । रज्जौ ।

**बन्धनवेश्मन्** न० ६त० । कारागारे बन्धनागारादयोऽप्यत्र ।

**बन्धनस्तम्भ** पु० ६त० । हस्तिसंयमनकाष्ठे आलाने ।

**बन्धु** पु० बध्नाति मनः स्नेहादिना बन्ध-उ । ज्ञातौ, मातुलपुत्रादौ, बन्धुभ्यः पितृमातृत इति स्मृतिः बान्धवे, मित्रे, सगोत्रे, पितरि, मातरि, भ्रातरि, बन्धुजीववृक्षे च ।

**बन्धुजीव** पु० बन्धुरिव जीवयति अच् स्वार्थे कन् । बन्धुजीववृक्षे । (बांधुआलि) वृक्षभेदे च । [च ।

**बन्धुता** स्त्री० बन्धु+संघेत, भावे तल् वा । बन्धुसमूहे, तद्भावे

**बन्धुर** न० बन्ध-उरच् । मुकुटे । स्त्रीचिह्ने, तिलकल्के, बन्धुजीववृक्षे, बधिरे, हंसे, विहङ्गे, ऋषभौषधे, वक्रे विहङ्गे च पु० । रम्ये, नम्रे, उन्नतानते च त्रि० । वेश्यायां, सक्तुषु । स्त्री० । बन्ध अरच् । रम्ये त्रि० । [त्रि०

**बन्धुल** पु० बन्ध-उलच् । असतीपुत्रे । सुन्दरे, रम्ये, नम्रे च

**बन्धूक** पु० बन्ध-ऊक । (बान्धुली)वृक्षे बन्धूकपुष्पसङ्काश'मिति रविप्रणाममन्त्रः रक्तपीतादिपुष्पे मध्याह्ने प्रकाशवति पुष्प वृक्षे, पीतशालके च । [च । ६त० । बन्धूककुसुमे न० ।

**बन्धूकपुष्प** पु० बन्धूकस्येव पुष्पमस्य । पीतशालके वृक्षे, जीरके

**बन्धूलि** पु० बन्ध-ऊलि । बन्धुजीववृक्षे ।

**बन्ध्य** पु०लि० बन्ध-यत् । कालप्राप्तावपि फलशून्ये वृक्षे । निष्फले, 'अवन्ध्यकोपस्ये'ति भारविः बन्धनीये च त्रि० । अपुत्रायां स्त्रीजातौ, बालाख्ये गन्धद्रव्ये च स्त्री० ।

**बन्ध्याकर्कोटी** स्त्री० बन्ध्याया उपकारिणी पुत्रप्रदत्वात् कर्कोटी । तिक्तकर्कोट्याम् अस्याः पुत्रदायित्वेन बन्ध्योपकारित्वम् । स्वार्थे कन् अतइत्त्वम् । तत्रैव ।

**बभ्र** गतौ भ्वा०पर०सक०सेट् । बभ्रति अबभ्रीत् ।

**बभ्रु** पु० भृ-कु-द्वित्वम् बभ्र-उ वा । शिवे, विष्णौ, नकुले, वह्नौ, मुनिभेदे, देशभेदे च तद्देशवासिनि व०व० । पिङ्गलवर्णे पु० । तद्वति त्रि० । स्त्रियां ऊङ् । खलतौ वज्रकरे पु० (फराश) ।

**बभ्रुधातु** पु० कर्म० । स्वर्णे, धुस्तूरे, गैरिके च ।

**बम्ब** गतौ भ्वा०पर०सक०सेट् । बम्बति अबम्बीत् ।

**बर** न० वृ-अप् । कुङ्कुमे । वृ-अच् । आर्द्रके । अस्त । ईषदिष्टे अव्य० । कर्मणि अप् । जामातरि देवादिभ्यः आगास्ये, पिङ्गे, जारे च पु० । भावेऽप् । वरणे । गुडूच्यां, त्रिफलायां, मेदायां, ब्राह्म्याम्, विड़ङ्गेषु पाठायां, हरिद्रायाञ्च स्त्री०टाप् । शतावर्य्यां स्त्री० गौ० ङीप् ।

**बर्ब** गतौ भ्वा०पर०सक०सेट् । बर्बति अबर्बीत् ।

**बर्बट** पु० बर्ब-अटन् । राजमाषे (बरवटी) । गौ०ङीष् । तत्रैव व्रीहौ, वेश्यायाञ्च । [अबर्हिष्ट ।

**बर्ह** दाने वधे स्तुतौ वाचि च भ्वा० आ० सक०सेट् । बर्हते

**बर्ह** न० बर्ह-अच् । मयूरपिच्छे, पत्रे, परीवारे च ।

**बल** जीवने, धान्यावरोधे च भ्वा०पर० अक०सेट् । बलति । अबालीत् बेलतुः । [अबालीत् अबलिष्ट ।

**बल** दाने वधे निरूपणे च भ्वा०उभ०सक०सेट् । बलति-ते

**बल** जीवने चु० उ०अक०सेट् घटा० । बलयति-ते अबीबलत् त ज्वलादि० ण । बलः बालः ।

**बल** निरूपणे चु०आत्म०सक०सेट् । बालयते अबीबलत् ।

**बल** न०बल-अच् । सैन्ये, देहजे सामर्थ्ये, स्थौल्ये, गन्धरसे, रूपे, शुक्रे, देहे, पल्लवे, रक्ते च । बलयुक्ते त्रि० । काके, बलदेवे, वरुणवृक्षे, दैत्यभेदे च पु० ।

**बलक्ष** पु०बलं क्षायत्यस्मात् क्षै-क । शुक्लवर्णे । तद्वति त्रि० ।

**बलज** न० बलात् जायते जन-ड । क्षेत्रे, पुरद्वारे, शस्ये, युद्धे च । बलजाते त्रि० ।

**बलद** पु० बलं ददाति दा-क । 'पौष्टिके बलदः स्मृत' इत्युक्ते पौष्टिककर्माङ्गे वह्निभेदे । अश्वगन्धायां स्त्री० । बलदातरि त्रि०

**बलदेव** पु० बलेन दीव्यति दिव-अच् , बलोद्रिक्तो देवो वा शाक० । बलरामे । त्रायमाणौषधौ स्त्री० ।

**बलभद्र** पु०बल+अर्श आद्यच् बलो बलवानपि भद्रः सौम्यः । बलदेवे, गवये च । बलेषु भद्रा । त्रायमाणौषधौ स्त्री० । स्वार्थे कन् । तत्रैव । [व्रजे रोहिणीनन्दने संकर्षणे रामे ।

**बलराम** पु० बलेन रमते रम-संज्ञायां कर्त्तरि घञ् । कृष्णा

**बलवत्** अव्य०बल+अतिशये मतुप् मस्य वः । अतिशये । 'बलवदपि शिक्षितानामि'ति शकुन्तला । बलविशिष्टे त्रि० । 'क्षीणा बलवती नाडी'ति वैद्यकम् । [षधौ ।

**बलवर्द्धिनी** स्त्री० बलं वर्द्धयति वृध-णिच्-णिनि । जीवकौ-

**बलविन्यास** पु० बलानां सैन्यानां विशेषेण दुर्भेद्यतायै न्यासः स्थापनम् । व्यूहे सेनासन्निवेशविशेषे ।

**बलशालिन्** त्रि० बलेन शालते शल-णिनि । बलविशिष्टे ।

**बलसूदन** पु० बलं तन्नामकमसुरं सूदयति सूद-ल्यु । इन्द्रे

**बला** स्त्री० बलं कार्य्यत्वेनास्त्यस्याः । (बालियाडा) क्षुपभेदे, विश्वामित्रेण रामाय दत्ते अस्त्रविद्याभेदे च ।

**बलाका** स्त्री० बलं कम्पनमकति गच्छति अक-अच् । बकभेदे

**बलाट** पु० बलमटति ददाति अट-अच् । मुद्गे ।

**बलात्** अव्य० बलं सामर्थ्यं कारणत्वेनाततति अत-क्विप् । हठादित्यर्थे । पञ्चम्यन्तबलशब्देनास्य न गतार्थता बलात्कार इत्या-

दिविषये तस्यावश्यमङ्गीकार्य्यत्वात् ।

**बलात्कार** पु० बलात्+कृ-घञ् । बलपूर्व्वककरणे, हठात्करणे च

**बलात्मिका** स्त्री० बलमेवात्मा स्वरूपं कारणत्वात् यस्याः स्वार्थे कन् अतइत्त्वम् । (हातिशुंड़ा) हस्तिशुण्डीवृक्षे ।

**बलाद्या** स्त्री० बलाय आद्या । (वेलियाड़ा) क्षुपभेदे ।

**बलानुज** पु० बलानुजायते अनु+जन-ड इत० । श्रीकृष्णे ।

**बलामोटा** स्त्री० बलमामोटयति आ+मुट-अच् । नागदमन्याम् । अयान्तलोक्तिः मामादिको तथात्वे ङीप् स्यात् ।

**बलाय** पु० बलस्यायः स्थानम् अय-घञ् । वरुणवृक्षे ।

**बलाराति** पु० बलस्य तन्नामासुरस्यारातिः । इन्द्रे । बलयतु प्रभृतयोऽप्यत्र । [खुल् । पानीयामलके

**बलालक** पु० बलाय सामर्थ्याय अलति पर्य्याप्नोति अल-

**बलाहक** पु० बलं कम्पनमाजहाति आ+हा-क्वुन् । मेघे मुस्तके, पर्व्वते, दैत्यभेदे, नागभेदे च । [कन्दः । गुलुञ्चकन्दे

**बलाह्वकन्द** पु० बलं सामर्थ्यमाह्वयति आ+ह्वे-क ताडृशः

**बलि** पु०बल-इन् । पूजोपहारे, इदत्त 'सौ बलिं चैव निजगात्तात्स्वयुक्तित'मिति षष्ठी राजग्राह्ये भागे, उपप्लवे, चामरदण्डे, गृहस्थकर्त्तव्यपञ्चयज्ञमध्ये भूतयज्ञे, 'बलिकर्म्म ततः कुर्य्यादिति स्मृतिः । दैत्यभेदे विरोचनपुत्रे च 'येन बद्धो बलीराजा दानवेन्द्रो महाबलो'ति रक्षाबन्धनमन्त्रः । जरया श्लथचर्म्मणि स्त्री० वा ङीप् । 'गृहस्थस्तु यदा पश्येत् वलीपलितमात्मन' इति स्मृतिः । उदरावयवे । 'वलित्रयं चारु बभार बाले'ति कुमारः । गुह्यस्थे अङ्कुराकारे मांसपिण्डे, गृहदारुग्रभेदे च (पाड) स्त्री०स्वार्थे कन् । तत्र, अतिबलायाञ्च ।

**बलिध्वंसिन्** पु० बलिं ध्वंसयति स्वस्थानात् पातयति ध्वन्सणिच्-णिनि । विष्णौ वामनावतारेण हि तस्य तथात्वम् ।

**वलिन(भ)** त्रि०वलि+अस्त्यर्थे-इन भ वा। जरया शिथिलचर्मवति

**बलिन्** त्रि० बलमस्त्यस्य इनि । बलवति । उष्ट्रे, महिषे, वृषे, शूकरे, बलरामे कुन्दवृक्षे, कफे, माषे च पु० । (वेलियाडा) क्षुपे स्त्री०ङीप् ।

**बलिपुष्ट** पु० बलिना पूजोपहारद्रव्येण पुष्टः पुष-क्त । काके

**बलिप्रिय** पु० बलिनं प्रीणाति प्री-क । लोध्रद्रुमे ।

**बलिभुज्** पु० बलिं पूजोपकरणद्रव्यं गृहस्थदत्तबलिं वा भुङ्क्ते क्विप् । काके ।

**बलि(ली)मुख** पु० बलि(ली)युक्तं मुखमस्य शाक० । वानरे ।

**बलिष्ठ** त्रि० अतिशयेन बली बलिन्+इष्ठन् । अत्यन्तबलवति । उष्ट्रे पु० ।

**बलिसद्मन्** न० इत० । पाताले बलिपुरादयोऽप्यत्र । [प्रान्ते(छांच)

**बलीक** पु० न० बालयति आप्नोति बल ईकन् नि० । पटल

**बलीयस्** त्रि० अतिशयेन बली बलिन्+ईयसु । अत्यन्तबलवति

**बलीवर्द** पु०वृ-क्विप् वर् ई लक्ष्मीश्च वश्च ईवरौ तौ ददाति दा-क ईवर्दः बली चासौ ईवर्द्दश्चेति । वृषे ।

**बल्य** न०बलाय हितं बल+यत् । प्रधानधातौ, शुक्रे, बलसाधने च । अश्वगन्धायाम्, अतिबलायां, प्रसारिण्याञ्च स्त्री० ।

**बल्ह** स्तुतौ दाने, बधे, च सक० याचने द्विक० भ्वा० आत्म० सेट् । बल्हते अबल्हिष्ट ।

**बष्क(स्क)यि(यी)नी** स्त्री०मस्क गतौ अयन् इ०मस्य वः सस्य वा पत्वम् 'बष्क(स्क)योऽस्यास्ति इनि ङीप् पक्षध्वत्वे णत्वम् । चिरप्रसूतायां गवि । बष्क(स्क)यं नयतीति नी-ड गौ०ङीप् पक्षध्वते पूर्व्व०णत्वम् । बष्क(स्क)यणी(नी)त्यप्यत्र

**ब(व)ह** वृद्धौ भ्वा०आत्म०अक०सेट् इदित् । बं(वं)हते अबं(वं)हिष्ट । महिबाह्यर्यादयमोष्ठ्यादिरितिपाणिनीयाः । दन्त्योष्ठ्यादिरिति वोपदेवः ।

**ब(व)हु** त्रि० बं(व)हि-कु नलोपः । त्रिप्रभृत्यनेकसङ्ख्यान्विते, विपुले च । स्त्रियां वा ङीप् ब(व)ह्वी ।

**ब(व)हुकण्टक** पु० ब(व)हूनि कण्टकान्यस्य । क्षुद्रगोक्षुरे । (गोखुरी) क्षुपभेदे । [कण्टकारिकायाम्

**ब(व)हुकण्टा** स्त्री० ब(व)हवः कण्टाः कण्टकाः यस्याः ।

**ब(व)हुकन्द** पु० इब० । सूरणे (ओल) । कर्क्यां स्त्री० ।

**ब(व)हुकर** त्रि० ब(व)हूनि किरति कॄ-अच् । (फरास्) मार्ज्जनकरे । सम्मार्ज्जन्यां स्त्री०गौ०ङीप् । कृ-अच् इत० । उष्ट्रे । अनेककार्यकरे त्रि० ।

**ब(व)हुकर्णिका** स्त्री०ब(व)हवःकर्णा इव पर्णान्यस्य । आखुकर्ण्याम् । [यूथ्यां, चम्पककलिकायां, जीरके च स्त्री० ।

**ब(व)हुगन्ध** पु० इब० । कुन्दुरुके । त्वचे, (तेजपात) न० ।

**ब(व)हुगन्धदा** स्त्री० ब(व)हुगन्धं ददाति दा-क । मृगभेदे ।

**ब(व)हुग्रन्थि** पु० इब० । झावुके (झाउ) ।

**ब(व)हुच्छिन्ना** स्त्री० ब(व)हु यथा स्यात् छिद्यते स्म छिद-क्त तस्य, दस्य च नः । कन्दगुडूच्याम् ।

**ब(व)हुतिक्ता** स्त्री० ब(व)हु यथा तथा बाहुल्येन वा तिक्ता । काकमाच्याम् ।

**ब(व)हुतिथ** त्रि० ब(व)हूनां पूरणः ब(व)हु+डट् तियुक् च । अनेकसंख्याते, 'काले गते बहुतिथे, इत्युद्भटः ।

**ब(व)हुत** अव्य० ब(व)हुषु तल् । अनेकेषु कालादिषु ।

**ब(व)हुत्वच्** पु० इब० । भूर्ज्जपत्रवृक्षे । स्वार्थे कन् तत्रैव ।

व(ब)हुदुग्ध पु० व(ब)हूनि दुग्धानीव चूर्णानि शुभ्रवर्णत्वात् यस्य । गोधूमे । प्रचुरक्षीरवत्यां गवि, स्नुहीवृक्षे च स्त्री० । स्वार्थे कन् अत इत्त्वम् । स्नुहीवृक्षे ।

व(ब)हुधा अव्य० व(ब)हु+प्रकारे-धाच् । अनेकप्रकारे

व(ब)हुपत्र पु० ६व० । पलाण्डौ अनेकपर्णयुक्ते त्रि० । लिङ्गिन्याम्, घृतकुमार्यां, तरुण्यां, वृहत्यां, गोरक्षदुग्धायां, जतुकायाञ्च स्त्री० गौ० ङीष् । ततः संज्ञायां कन् । भूम्यामलक्यां, मेथिकायां, महाशतावर्याञ्च ।

व(ब)हुपर्ण पु० ६व० । सप्तच्छदवृक्षे तस्य प्रतिपर्णं सप्तसप्तपर्णवत्त्वात् । अनेकपर्णयुक्ते त्रि० । मेथिकायां स्त्री० ङीप् । ततः संज्ञायां कन् । आखुकर्ण्यां स्त्री० टाप् । [त्त्वात्तथात्वम्

व(ब)हुपाद्(द) पु० ६व० वा अन्त्यलोपः । वटवृक्षे अनेकशिफा-

व(ब)हुपुत्र व(ब)हवः पुत्रा-इव पर्णान्यस्य । सप्तच्छदे । अनेकपुत्रादव मूलान्यस्य । शतमूल्यां स्त्री० ङीप् ।

व(ब)हुपुष्प पु० ६व० । निम्बवृक्षे । संज्ञायां कन् अत इत्त्वम् । धातक्यां स्त्री० । [तुल्यप्रचुरदलपर्णवत्त्वात् तद्भदर्णे पु०

व(ब)हुप्रज त्रि० ६व० । वहुसन्तानवति । शूकरे पु० । प्रजा-

व(ब)हुफल पु० ६व० । कदम्बवृक्षे, विकङ्कते, तेजःफले च । अनेकफलयुक्ते त्रि० । माषपर्ण्यां, चविकायां, काकमाच्यां, त्रिपुष्यां, (शशा) क्षुद्रकारवेल्लयां, भूम्यामलक्याञ्च स्त्री० । संज्ञायां कन् अत इत्त्वम् । भूमिवदर्यां स्त्री० । आमलक्यां स्त्री० ङीप् ।

व(ब)हुमञ्जरी स्त्री० ६व० संज्ञात्वात् न कप् । तुलस्याम् ।

व(ब)हुमल पु० ६व० । सीसके । अनेकमलयुक्ते त्रि० ।

व(ब)हुमूर्त्ति स्त्री० ६व० । वनकार्पासे । नानाकारवति त्रि०

व(ब)हुमूल त्रि० ६व० । अनेकमूलवति । शिग्रौ पु० । संज्ञायां कन् । उशीरे न० । शतावर्य्यां स्त्री० टाप् । नाकन्यां ङीप्

व(ब)हुरसा स्त्री० ६व० । महाज्योतिष्मत्याम् । नानारसवत्यां त्रि०

व(ब)हुरूप पु० ६व० । सर्ज्जरसे (धुना) शिवे, विष्णौ, हिरण्यगर्भे, कामे, केशे च । नानारूपवति त्रि० ।

व(ब)हुरोमन् त्रि० ६व० अनेकरोमवति रोमशे । मेषे पु० ।

व(ब)हुल त्रि० व(ब)हि-कुलच् नि० नलोपः । अनेकसंख्यान्विते प्रचुरे । व(ब)हूनि लाति ला-क । वह्नौ, कृष्णवर्णे च पु० । तद्वति त्रि० । कृष्णपक्षे पु० 'व(ब)हुलेऽपि गते निशाकर' इति कुमारः । आकाशे न० । नीलिकायां नीलवर्णायां गवि च स्त्री० । कवक्षु पु० । व(ब)हवः । प्रचुरे त्रि० । अग्निदैवतत्वात् कृत्तिकानक्षत्रे स्त्री० टाप् व० व० ।

व(ब)हुलगन्धा स्त्री० ६व० । एलायाम् ।

व(ब)हुलच्छद पु० ६व० । रक्तशोभाञ्जने ।

व(ब)हुलीकृत त्रि० व(ब)हुल+च्वि-कृ-क्त । (आगड़ा) वुषस्थाप्रसारणेन राशीकृते खलस्थे धान्ये, राशीकृतभावे च ।

व(ब)हुवल्क पु० ६व० । प्रियाले । (पियासाल) ।

व(ब)हुवाहक पु० व(ब)हूनि वाहयति अण्, ततः कन्, ख्वुल् वा । क्षेपातके (वोना आला) ।

व(ब)हुविस्तीर्णा स्त्री० व(ब)हु यथा तथा विस्तीर्णा वि+स्तॄ-क्त । (कुचुद) कुञ्चिकावृक्षे । [त्रि०

व(ब)हुवीज पु० ६व० । (आता) आत्मपे वृक्षे । प्रचुरवीजवति

व(ब)हुवीर्य्य पु० ६व० । विभीतके, (वयड़ा) तण्डुलीयशाके, (नटेशाक) शाल्मलिवृक्षे, मरुवके च । भूम्यामलक्यां स्त्री० ।

व(ब)हुव्रीहि त्रि० ६व० । अनेकधान्यादियुक्ते । व्याकरणोक्ते प्रायेण अन्यपदार्थप्रधाने समासभेदे पु० ।

व(ब)हुशस् अव्य० व(ब)हु+शस् । अनेकवारानित्यर्थे 'गुणकृत्ये व(ब)हुशो नियोजिता' इति कुमारः ।

व(ब)हुशल्य पु० ६व० । रक्तखदिरे । अनेककीलयुक्ते त्रि० ।

व(ब)हुशाल पु० व(ब)हुभिः शालते शल-संज्ञायां कर्त्तरि घञ् । स्नुहीवृक्षे । [युक्ते त्रि०

व(ब)हुशिखा स्त्री० ६व० । जलपिप्पल्याम् । अनेकशिखा

व(ब)हुसार पु० ६व० । खदिरे । अनेकसारवति त्रि० ।

व(ब)हुसुता स्त्री० व(ब)हवः सुता इव मूलान्यस्याः । शतमूल्याम् । अनेकपुत्रवति त्रि० । [त्तानयुक्ते त्रि०

व(ब)हुसूति स्त्री० ६व० । अनेकप्रसववत्यां गवि । व(ब)हुस-

व(ब)हुस्रवा स्त्री० व(ब)हु यथा तथा स्रवति स्रु-अच् । शल्लकीवृक्षे । अनेकधा क्षरणवति त्रि० ।

व(ब)ह्वृच पु० ६व० अच् समा० । ऋग्वेदे । सूक्ते न० । तदभिज्ञे त्रि० । तत्पत्न्यां स्त्री० । [अवा(वा)ड़िष्ट ।

वा(वा)ड आप्लावने सक० स्नाने अक० भ्वा० आ० सेट् ।

वाडव न० वड़वानां समूहः अण् । घोटकसमुदाये । वाड़-घञ् वल-घञ् लस्य डः वा वाड़ो दृष्टिः तं वाति वा-क । ब्राह्मणे पु० । वड़वायां जातः अण् । और्व्वे समुद्रस्थे कालाग्निभेदे पु० । वाड़वाग्न्यादयोऽप्यत्र पु० ।

वाडवेय पु० द्वि० व० वड़वायाः अपत्ये-ढक् । अश्विनीकुमारयोः ।

वाड़व्य न० वाड़व+समूहे-यत् । विप्रसमुदाये ।

वा(वा)ण पु० वण-शब्दे वण-गतौ वा संज्ञायां कर्त्तरि घञ् । शरे, गोस्तने, (वांट) विरोचनसुते दैत्यभेदे, केवले च । शरपुङ्खे स्त्री० । नीलझिण्ट्याम् पु० स्त्री० । मेदिन्यां दन्त्योष्ठ्यवादित्वेन पठितः रायमुकुटादयः वणशब्दे इति धातु-

प्रकृतिकत्वमाकूरतोऽस्त्रोभयविधादित्वम् ।

बा(वा)णलिङ्ग बाणदैत्येन संपूज्याविसृज्य नर्मदायां निक्षिप्ते शिवलिङ्गभेदे । विस्तरो वृहदभिधाने ।

बाणिज्य न० वणिजो भावः, कर्म वा ब्राह्मणादित्वात् ष्यञ् । क्रयविक्रयादौ 'बाणिज्येन गतस्तु मे स्पृहयते'रिति सा०द०प०

बाणि(णी) वण-इ णिच् । वस्त्रादीनां वयनक्रियायाम् । वा ङीप् । वस्त्रादीनां वयनक्रियायां, वाक्ये, सरस्वत्याञ्च ।

बा(व)दर पु० स्त्री० ब(व)दर+स्वार्थेऽण् । कार्पासवृक्षे, ब(व)दरस्येदं तस्य विकारो वा अण् । कार्पाससूत्रे न० । तद्वस्त्रादौ त्रि० । [बा(वा)दरिरप्यत्र ।

बा(वा)दरायण पु० ब(व)दर्यां भवः फक् । वेदव्यासे । दूत्ति ।

बाध पु० बाध-घञ् । प्रतिरोधे । न्यायमते साध्याभाववत्पदार्थे । यथा वह्निवुद्धौ वह्न्यभाववान् ह्रदो बाधः । बाध-कर्त्तरि अच् । प्रतिबन्धके त्रि० । भावे घञ् । बोधप्रतिवन्धे, पीड़ने, उपद्रवे च । [घञि न ह्रस्वः ।

बाध विहतौ भ्वादि० आत्म० सक० सेट् । बाधते अबाधिष्ट ।

बाधक त्रि० बाध-ण्वुल् । प्रतिबन्धके । स्त्रीणां ऋतुकाले प्रजाजननशक्तिप्रतिरोधके रोगभेदे पु० ।

बाधिर्य न० बधिरस्य भावः ब्राह्मणादित्वात् ष्यञ् । श्रवणशक्तिराहित्ये रोगभेदे । [अपत्ये ।

बान्धकिनेय पु० स्त्री० बन्धक्याः अपत्यं ढक् इनङ् च । असत्या

बान्धव पुं० बन्धु+स्वार्थे, इदमर्थे वाऽण् । बन्धुशब्दार्थे, पितृमातृसम्बन्धिनि मातुलादौ च ।

बाल पु०न० (वाला) गन्धद्रव्यभेदे । मूर्खे, शिशौ च त्रि० । केशे पु० । अर्श आदित्वादस्त्यर्थे अच् । अश्वशिशौ, अश्ववालधौ, हस्तिवालधौ, नारिकेले, पशुपुच्छे च पु० ।

बालक बाल+स्वार्थे कन् । शिशौ, (वाला) गन्धद्रव्ये च । अङ्गुरीयके न० । अश्वकरिपुच्छयोः, वलये च पु० ।

बालकप्रिया स्त्री० बालकं प्रीणाति प्री-क । इन्द्रवारुण्यां (राखालशशा) कदल्याञ्च ।

बाल(लि)खिल्य पु० अङ्गुष्ठपर्वमितेषु षष्टिसहस्रसंख्येषु पुलस्त्यकन्यायां क्रतोः पुत्रेषु मुनिभेदेषु ।

बालग्रह पु०६त० बालानां पीडके उपग्रहभेदे 'बालग्रहाभिभूतानां बालानां शान्तिकारक'मिति चण्डी ।

बालतनय पु० बालास्तनया इव पत्त्राण्यस्य । खदिरे बालदलबालिपत्त्रादयोऽप्यत्र पु० ।

बालधि पु० बाला धीयन्तेऽत्र धा-कि । केशयुक्तलाङ्गूले ।

बालपुष्पी स्त्री० बालानि क्षुद्राणि पुष्पाण्यस्याः ङीप् । यूथिकायाम् । स्वार्थे कन् । तत्रैव ।

बालभोज्य पु० ६त० । चणके । बालकभक्षणीये त्रि० ।

बालमूषिका स्त्री० कर्म० । क्षुद्रमूषिकायाम् ।

बालव्यजन न० बाला एव व्यजनम् । चामरे । 'कुर्व्वन्ति बालव्यजनैश्चमर्य्य' इति कुमारः ।

बालहस्त पु० बालानां केशानां समूहः बाल+हस्त । केशसमूहे । बाला हस्तइव यत्र । पशूनां लाङ्गूले ।

बाला स्त्री० बालाः केशाकाराः पदार्थाः सन्त्यस्य अच । नारिकेले, हरिद्रायां मल्लिकाभेदे, वलये, त्रुटौ घृतकुमार्य्यां (वाला) गन्धद्रव्यभेदे, अम्बष्ठायां, नीलझिण्ट्याम्, षोडशवर्षीयायां स्त्रियां, कन्यायाञ्च । स्वार्थे कन् । तत्रैव वालुकायां, कर्णभूषणे (कानवाला) एलायाञ्च । [त्यप्यत्र ।

बालि पु० बल-इन् णिच् । इन्द्रपुत्रे कपिराजे । णिनि । बाली-

बालिश त्रि० बाड-इन् बाडिं वृद्धिं स्यति शो-क डस्य लः । मूर्खे, शिशौ च 'बालिशमालि ! शयान'मित्युद्भटः । बालाः सन्त्यस्य इनि बाली मूर्द्धा शेतेऽत्र शी-ड । उपधाने न० । [बालिहन्त्रादयोऽप्यत्र पु० ।

बालिहन् पु० बालिं बालिनं वा हन्ति हन-क्विप् । रामे

बालु पु० बल-उण् । एलवालुकानामगन्धद्रव्ये । स्वार्थे कन् । तत्रैव न० । पानीयामलके पु० । सिकतासु स्त्री० ।

बालुकायन्त्र न० ६त० । औषधपाकार्थे यन्त्रभेदे ।

बालुकी स्त्री०चु० बल-उक गौरा०ङीप् । कर्कटीभेदे । इ० लुक् । बालुङ्कीत्यप्यत्र ।

बालेय पु० बलेरपत्यं, बलये हितं वा ढक् । रासभे, दैत्यभेदे, अङ्गारवल्लर्य्यां च । कोमले, बलिहिते च त्रि० ।

बालेयशाक पु०बलये हितः ढक् कर्म० (वामनहाटि) शाकभेदे

बालेष्ट पु० बालानामिष्टः इष-क्त । ब(व)दरे । बालकाभीष्टे त्रि

बाल्य न० बालस्य भावः, कर्म वा वयोवचनत्वात् ष्यञ् । 'आषोड़शाद्भवेद्बाल' इत्युक्ते अवस्थाभेदे ।

बाष्प(स) पु० बाध-प० पत्वं सत्वं वा । नेत्रजले, ऊष्मणि च

बा(वा)ह प्रयत्ने भ्वादि० आत्म० अक० सेट् । बाहते अबाहिष्ट । चङि न ह्रस्वः ।

बाहु पु० बाध-कु धस्य हः । भुजे कक्षावध्यङ्गुलिपर्य्यन्तेऽवयवे

बाहुज पु०बाहुभ्यां ब्र(ब्र)ह्मबाहुभ्यां जायते जन-ड । क्षत्रिये 'बाहू राजन्या'विति श्रुतिः । [बद्धे लौहचर्म्मादौ ।

बाहुत्र पु०न० बाहुं त्रायते त्रै-क । अस्त्राघातवारणार्थं हस्त-

बाहुदा स्त्री० (करतोया) नदीभेदे । सा हि अवगाहनात् लिखितस्य मुनेः छिन्नहस्तं पुनर्ददाविति पुराणम् ।

**वाङ्कमूल** न०६त०। कचे (कांक)।

**वाङ्कयुद्ध** न० ३त०। मल्लयुद्धे।

**वाङ्कल** पु० वङ्कुलानां कृत्तिकानामयं (स्वामी) अण् वह्नौ। वङ्कुलाभि-र्युक्ता पौर्णमासी अण्। कार्त्तिकपौर्ण-मास्यां स्त्री०। तत्र मासे पुनरण्। चान्द्रकार्त्तिकमासे पु०।

**वाङ्कलेय** पु० व(ब)हुलानामपत्यं ढक्। कार्त्तिकेये।

**वि(वि)ट** आक्रोशे भ्वा०पर०सक०सेट्। बे(वे)टति अबे(वे)टीत्

**विद्** अवयवे भ्वा०पर०सक०सेट् इदित्। विन्दति अविन्दीत्

**वि(वि)न्दु** पु० बिदि-उ विद् उ नि० वा। अल्पांशे।

**विल** भेदने वा चुरा०उभ०पक्षे तु०पर०सक०सेट्। वेलयति ते विलति। अवीविलत् त अवेलीत्।

**विस** क्षेपे दि०पर०सक०सेट्। विस्यति। अविसत्-अवेसीत्।

**वीभत्स** त्रि० बध-निन्दायां स्वार्थे सन् कर्म्मणि घञ्। पापिनि, जुगुप्सिते, घृणाविषये च। नाट्यादौ प्रसिद्धे जुगुप्सा-स्थायिभावके रसभेदे, अर्ज्जुने च पु०। तद्रसविषये विकृत-मांसादौ त्रि०। उ। वीभत्सुः। अर्ज्जुने पु०।

**बुक्क** कुक्कुरादिशब्दे कथने च वा चु०उभ०पक्षे भ्वा० पर०सक० सेट्। बुक्कयति ते बुक्कति अबुबुक्कत् त अबुक्कीत्।

**बुक्क** न० बुक्क-अच्। हृदयस्थे मांसपिण्डे, अग्रमांसे, हृदये च अस्य स्त्रीत्वमपि स्त्रीत्वे टाप् गौ०ङीष् वा। बुक्काग्रात्तैर्यु-वतिनिकटे प्रौढवाकोन राघे'त्युद्भटः। छागे,(बोका) समये, च पु०। शोणिते स्त्री० टाप्। ष्ट०। बूक्कवृक्के अपि हृदये।

**बुक्काग्रमांस** न०६त०। हृदयस्थे मांसपिण्डाकारे अग्रमांसे।

**बुट** हिंसायां चुरा०उभ० पक्षे भ्वा०पर०सक०सेट्। बोटयति ते। बोटति। अबूबुटत्-त। अबोटीत्।

**बुड** त्यागे संवरणे च तु०कुटा०सक० सेट्। बुडति अबुडीत्।

**बुद** निशामने भ्वा०उ०सक०सेट्। बोदति ते। अबुदत्-अबोदीत् अबोदिष्ट। क्त्वा वेट्।

**बुद्ध** पु० बुध-क्त। भगवतोऽवतारभेदे येन वेदतत्कर्म्मणोर्निन्दा-कृता। जागरिते, ज्ञातवति च त्रि०।

**बुद्धि** स्त्री० बुध-क्तिन्। ज्ञाने, सांख्योक्ते सुखदुःखाद्यष्टविध-धर्म्मवति प्रकृतिपरिणामभेदे, अन्तःकरणविशेषे, वेदान्तोक्ते निश्चयात्मकवृत्तिमति अन्तःकरणे च।

**बुद्धीन्द्रिय** न०६त०। 'मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके। बुद्धीन्द्रियमिति प्रोक्तमि'त्युक्तेषु इन्द्रियेषु।

**बुद्बुद** न० बुद्-क० ष्ट० द्वित्वम्। जलस्य गोलाकारे विकारभेदे

**बुध** ज्ञापने भ्वा०प०सक०अनिट्। बोधति अबौत्सीत् शिष्यं गुरुः

**बुध** ज्ञाने भ्वा०उभ०सक०सेट्। बोधति ते। अबुधत्-अबोधीत् अबोधि अबोधिष्ट। ज्वला० वा ण पक्षे क। बोधः बुधः।

**बुध** ज्ञाने दि० आ०सक०अनिट्। बुध्यते अबोधि अबोधिष्ट।

**बुध** पु० बुध-क। पण्डिते, वृहस्पतिभार्य्यायां तारायां चन्द्रेण जनिते पुत्रे ग्रहभेदे, तस्य रोहिण्या प्रतिपालनात् रौहिणेयत्वम्।

**बुधरत्न** न० बुधप्रियं रत्नं शाक०। मरकतमणौ। [ख्याम्

**बुधा** स्त्री०बोधयति ज्ञापयति रोगिणं बुध-ज्ञापने क। जटामां-

**बुधाष्टमी** स्त्री०बुधवारयुताष्टमी शाक०। चैत्रपौषहरिशयना-दीतरत्र काले बुधवारयुतायां शुक्लपक्षाष्टम्यां, तत्कर्त्तव्ये व्रते च

**बुधित** त्रि० भ्वा०उभ० बुध-क्त इट्। ज्ञाते।

**बुध्न** न० बन्ध-नक् नलोपः बुधादेशश्च। वृक्षमूले, मूलमात्रे च बृहद्बुध्नोदराक्षतिरिति घटविशेषणं शास्त्रेपूक्तम्।

**बुन्द** निशामने भ्वा० उभ०सक० सेट्। बुन्दति ते। अबुदत् अबुन्दीत्। अबुन्दिष्ट। क्त्वा वेट्।

**बुन्ध** निशामने भ्वा० उभ०सक०सेट् क्त्वा वेट्। बुन्धति ते अबु-धत्-अबुन्धीत् अबुन्धिष्ट।

**बुन्ध** बन्धे चु०उभ०सक० सेट्। बुन्धयति ते अबुबुन्धत् त।

**बुभुक्षा** स्त्री० भुज-सन्-अ। भोजनेच्छायां क्षुधायाम्।

**बुभुक्षित** त्रि० बुभुक्षा+तार० इतच्। क्षुधायुक्ते 'बुभुक्षितः किं द्विकरेण भुङ्क्ते' इत्युद्भटः।

**बुल** मज्जने चु० उभ०अक० सेट्। बोलयति ते अबूबुलत्।

**बुष(स)** न० बुस्यते उत्सृज्यते बुस-उत्सर्गे क ष्ट० वा मलम्। (आगडा) तुच्छधान्ये फलरहितधान्ये।

**बुस** उत्सर्गे दि०पर०सक०सेट्। बुस्यति अबुसत्-अबोसीत्।

**बुस्त** आदरे अनादरे च चु०उभ०सक०सेट्। बुस्तयति ते अबु-बुस्तत् त। [फलस्य त्याज्ये अंशे,(भुषि) मांसपिष्टकभेदे च

**बुस्त** न० बुस्यते नाद्रियते आद्रियते वा बुस-घञ्। पनसादि-

**बॄ** वर्त्यां भृतौ च क्र्या०प्रा०पर०सक० सेट्। बृणाति अबारीत्

**बे(वे)हृ** प्रयत्ने भ्वा०आत्मने सक०अनिट्। बे(वे)हते अबे(वे)हिष्ट चङि न ह्रस्वः।

**बोध** पु०बुध-घञ्। ज्ञाने, जागरणे च। ज्वलादि-बुध-ण। ज्ञानवति त्रि०। ण्वुल्। बोधकोऽप्यत्र त्रि०। णिच् ण्वुल्। सूचके त्रि०

**बोधकर** पु० बोधं निशान्ते जागरणं करोति कृ-अच्। निशान्ते प्रबोधकरे वैतालिके। ज्ञापके त्रि०।

**बोधन** न० बुध-णिच्-ल्युट्। विज्ञापने, कालवशात् गन्धादे-र्न्यूनतायां तदुद्दीपने, जागरणे च। 'शयनं बोधनं हरे'-रिति पुराणम्। 'सायाह्ने बोधनं कुर्या'दिति स्मृतिः।

**बोधनी** स्त्री० बोध्यतेऽनया, अत्र वा बुध-णिच्-ल्युट्।

पिमान्यां तया हि मूर्च्छितो बोध्यते। कार्त्तिकैकादश्यां तत्र हि हरेर्बोधनम्।

**बोधि** पु॰ बुध-इन्। अश्वत्थवृक्षे, समाधिभेदे च। ज्ञातरि त्रि॰।

**बोधितरु** पु॰ कर्म॰। अश्वत्थवृक्षे। बोधिद्रुमादयोऽप्यत्र पु॰।

**बौद्ध** न॰ बुद्धेन प्रोक्तमण्। बुद्धप्रणीते निरीश्वरवादे शास्त्रे। तदधीयते इति पुरनण्। बौद्धागमाध्येतरि त्रि॰। [पत्-त

**व्युष** उत्सर्गे विभागे च चु॰उ॰सक॰सेट्। व्योषयति-ते अबुव्यु-

**व्रण** शब्दे भ्वा॰पर॰सक॰सेट्। व्रणति। अव्रणीत्-अव्राणीत्।

**व्र(व्र)तति** स्त्री॰ प्रतनोति प्र+तन-क्तिच् पृ॰ प्रस्य वः। लतायाम्। व्रतमिव करोतीति णिच् क्तिच्। दन्त्योष्ठ्यादित्वमपि।

**व्र(व्र)ध्न** पु॰ बन्ध-नक् ब्रधादेशः। सूर्य्ये, अर्कवृक्षे, शिवे, वृक्षमूले च। मेदिनीकरेण दन्त्योष्ठ्यवादित्वेन लिखनात्तथात्वमपि तन्मूलं मृग्यम्।

**ब्र(व्र)ह्मकूर्च** न॰'अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातः ब्र(व्र)ह्मकूर्च्चमिति स्मृतमि'त्युक्ते व्रतभेदे

**ब्रह्मकोषी** स्त्री॰ ब्र(व्र)ह्मणः कोषीव। अजमोदायाम्।

**ब्र(व्र)ह्मचर्य्य** न॰ ब्र(व्र)ह्मणे वेदलाभाय चर्य्यते चर-यत्। वेदज्ञानार्थमुपनयनोत्तरमाश्रमे, मैथुनराहित्ये च।

**ब्र(व्र)ह्मचारिणी** स्त्री॰ ब्र(व्र)ह्म चर्य्यतेऽनया चर-णिच् करणे ल्युट्-ङीप् ६त॰। ब्र(व्र)ह्मयष्ट्यां भार्य्याम्।

**ब्र(व्र)ह्मचारिन्** ब्र(व्र)ह्मणे वेदाय तद्ग्रहणाय चरति चर-णिनि। उपनयनानन्तरं प्रथमाश्रमयुक्तेषु विप्रादिषु त्रिषु वर्णेषु, करुणीवृक्षे, मैथुनराहित्यादि ब्र(व्र)ह्मचर्य्यव्रतधारिण्यां स्त्रियां च स्त्री॰ङीप्। 'आसीता मरणात् क्षान्ता नियता ब्र(व्र)ह्मचारिणी'ति स्मृतिः। [नकवृक्षे

**ब्र(व्र)ह्मजटा** स्त्री॰ ब्र(व्र)ह्मणो जटेव संहतशाखत्वात्। दम-

**ब्र(व्र)ह्मज्ञ** त्रि॰ ब्र(व्र)ह्म वेदं, तुरीयं शुद्धचैतन्यं वा जानाति वेत्ति ज्ञा-क। वेदज्ञे, तुरीयशुद्धचैतन्यज्ञे च।

**ब्रह्मज्ञान** न॰ ६त॰। निर्गुणावच्छिन्नातीततुरीयशुद्धचैतन्यविषयज्ञाने विस्तरो वृहदभिधाने।

**ब्र(व्र)ह्मण्य** न॰ ब्र(व्र)ह्मणे वेदाय प्रभवति शुद्धचैतन्यज्ञानाय वा साधु ब्र(व्र)ह्मणोहितो वा यत्। विप्रवेदरक्षककर्त्तरि विष्णौ,'नमो ब्रह्मण्यदेवाये'ति विष्णुप्रणाममन्त्रः। विप्रधर्म्मे ब्र(व्र)ह्मदारुवृक्षे च।

**ब्र(व्र)ह्मतीर्थ** न॰ ६त॰। पुष्करतीर्थे, पुष्करमूले च।

**ब्र(व्र)ह्मत्व** न॰ ब्र(व्र)ह्मणो भावः त्व। ऋत्विग्विशेषस्य ब्र(व्र)ह्मणो धर्म्मे, शुद्धतुरीयब्र(व्र)ह्मभावे च।

**ब्र(व्र)ह्मदण्ड** पु॰६त॰ विप्रकृते अभिशापरूपे दण्डे 'ब्र(व्र)ह्मदण्डहता ये चे'ति स्मृतिः। विप्रस्य यष्टौ च।

**ब्र(व्र)ह्मदर्भा** स्त्री॰ ब्र(व्र)ह्मणो दर्भो यन्यनमस्याः। यमान्याम्

**ब्र(व्र)ह्मदाय** पु॰ ब्र(व्र)ह्मणि(णे)वा वेदाध्ययनसमाप्तौ, विप्राय वा राज्ञा दीयते दा कर्म्मणि घञ्। समाहृत्तविप्राय देये धने 'ब्र(व्र)ह्मदायागतां भूमिं हरेयुर्ब्रा(व्रा)ह्मणीसुता' इति स्मृतिः। [कारे वृक्षभेदे।

**ब्र(व्र)ह्मदारु** .पु॰ ब्र(व्र)ह्मणो विप्रस्य हितः दारुः अश्वत्था-

**ब्र(व्र)ह्मन्** न॰ वृह-मनिन् वृंहेर्नोऽच्चेति नकारस्याकारे रत्वम्। वेदे, तपसि, सत्ये, तत्त्वे, यथार्थे, तुरीये सर्व्वगुणातीते विशुद्धे चित्स्वरूपे च। हिरण्यगर्भे विप्रे ऋत्विग्विशेषे च पु॰। उज्ज्वलदत्तेन दन्त्योष्ठ्यादित्वमेव साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्त्तनात्तथात्वमपि किन्तु तन्मूलं मृग्यम्।

**ब्र(व्र)ह्मनाल** न॰ काश्यां मणिकर्णिकासमीपस्थे तीर्थभेदे।

**ब्र(व्र)ह्मनिर्वाण** न॰ ब्र(व्र)ह्मणि निर्वाणं निर्वृतिः। ब्र(व्र)ह्मभावलाभे सकलानर्थनिवृत्तिरूपे परमानन्दे।

**ब्र(व्र)ह्मपर्णी** स्त्री॰ ब्र(व्र)ह्मेव विस्तीर्णं मूलादारभ्य स्थितानि पर्णा-न्यस्याः ङीप्। पृश्निपर्ण्याम्।

**ब्र(व्र)ह्मपवित्र** पु॰ ब्र(व्र)ह्मेव वेदोक्तकर्म्मणि वा पवित्रः। कुशे

**ब्र(व्र)ह्मपादप** पु॰ ब्र(व्र)ह्मणः प्रियः वैदिककर्म्मयोग्यत्वात् विप्रब्र(व्र)ह्मचारिवार्य्यदण्डार्थत्वाद्वा। पलाशवृक्षे।

**ब्र(व्र)ह्मपुत्र** पु॰ ब्र(व्र)ह्मणः पुत्र इव कपिलवर्णत्वात्। विषभेदे, उत्तरदेशप्रसिद्धे नदभेदे, क्षेत्रभेदे च। सरस्वत्यां नद्यां स्त्री॰। तस्याः पितामहजातत्वं पुराणप्रसिद्धम्।

**ब्र(व्र)ह्मपुरी** स्त्री॰ ६त॰ ब्रह्मोपासनास्थाने हृदये, तदाधारस्थाने सत्यलोके, काश्याञ्च।

**ब्र(व्र)ह्मबन्धु** पु॰ ब्र(व्र)ह्म विप्रो बन्धुरुत्पादको यस्य। विप्राचाररहिते निन्द्यकर्म्मकारिणि जात्या विप्रे, विप्रतुल्ये भट्टादौ च। [युञ्ज्ये च

**ब्र(व्र)ह्मभूय** न॰ ब्रह्मणो भावः भू-क्यप्। ब्र(व्र)ह्मभावे तत्सा

**ब्र(व्र)ह्मयज्ञ** पु॰ ब्र(व्र)ह्मनिमित्तकस्तदध्ययनतदध्यापनानिमित्तको यज्ञः। वेदाध्ययनाध्यापनादौ। [हाटि) वृक्षे

**ब्र(व्र)ह्मयष्टि** स्त्री॰ ब्र(व्र)ह्मणो यष्टिरिवालम्बनत्वात् (वामन

**ब्र(व्र)ह्मरन्ध्र** न॰६त॰ उत्तमाङ्गस्थिते ब्राह्मप्राप्तिहेतुके छिद्रस्थाने। तच्छिद्रेण निष्क्रमणे हि जीवस्य ब्र(व्र)ह्मप्राप्तिः श्रूयते

**ब्र(व्र)ह्मराक्षस** पु॰ ब्र(व्र)ह्मा विप्रोऽपि कुकर्म्मभिः राक्षसः। राक्षसरूपतां प्राप्ते भूतभेदे 'अपकृत्य च विप्रस्वं भवति ब्र(व्र)ह्मराक्षस' इति मनुः।

**ब(व)ह्मर्षि** पु० ब(व)ह्मा विप्रः चतुर्मुखस्तस्यो वा ऋषिः वेदस्य सर्त्ता। वेदस्मर्तृषु वशिष्ठादिषु ऋषिषु।

**ब्रह्मर्षिदेश** पु० ६त०। 'कुरुक्षेत्रञ्च मत्स्यश्च पाञ्चलाः शूरसेनकाः। एष ब(व)ह्मर्षिदेशो वै' इति मनूक्ते, कुरुक्षेत्रादिदेशचतुष्टये। [ब(व)ह्मस्वरूपे च।

**ब(व)ह्मलोक** पु० ६त०। ब्रह्माधिष्ठाने भुवने सत्यलोके तुरीय

**ब(व)ह्मवर्चस** न० ब(व)ह्मणा वेदाध्ययेन तदनुष्ठानेन च क्षतं वर्चः तेजः अच् समा०। वेदाध्ययनजन्ये तेजसि ब(व)ह्मवर्चसकामस्य कुर्याद्विप्रस्य पञ्चमे' इति मनुः।

**ब(व)ह्मवादिन्** पु० ब(व)ह्म वेदं वदति पठति णिनि। वेदपाठके ब(व)ह्म शुद्धं चैतन्यं सर्व्वात्मकतया वदति वेत्ति वा वेदान्तप्रतिपाद्यसर्व्वात्मकब(व)ह्मणे शुद्धचैतन्यं वदति बोधयति ब(व)ह्मबोधके शास्त्रे। [न ज्ञाने।

**ब(व)ह्मविद्या** स्त्री० ६त० शुद्धचैतन्यात्मकस्य ब्रह्मणोऽभेदे-

**ब(व)ह्मवि(वि)न्दु** पु० ब(व)ह्मणि वेदपाठकाले (वि)विन्दुः। वेदाध्ययनकाले निःसृतजलवि(वि)न्दौ। [संख्ये पुराणभेदे

**ब(व)ह्मवैवर्त्त** न० अष्टादशमहापुराणमध्ये अष्टादशसङ्ख्य

**ब(व)ह्मशल्य** पु० ब(व)ह्मेव सूक्ष्मं शल्यं कण्टकाग्रं यस्य। (वावला) वृक्षभेदे। [पन्यभेदे।

**ब(व)ह्मसंहिता** स्त्री० वैष्णवाचारसिद्धान्ते अध्यायशतात्मके

**ब्रह्मसायुज्य** न० सह युनक्ति युज-क्विप् सयुक् तस्य भावः सायुज्यं ६त०। ब(व)ह्मभावे।

**ब(व)ह्मसू** पु० ब(व)ह्माणं सूतवान् सू-क्विप्। चतुर्व्यूहात्मकस्य विष्णोर्मूर्त्तिभेदे अनिरुद्धे, तस्यावतारभेदे उषापतौ च

**ब(व)ह्मसूत्र** न० ब(व)ह्मणि वेदग्रहणकाले उचितं सूत्रम्। यज्ञोपवीते, ब्रह्मप्रतिपादके शारीरकसूत्रे च।

**ब्रह्महत्या** स्त्री० हन-क्यप् ६त०। विप्रहनने।

**ब(व)ह्महन्** त्रि० ब(व)ह्माणं हतवान् हन-क्विप्। विप्रहत्याकारिणि। 'ब(व)ह्महा न भवत्यन्यो ब(व)ह्महा वृषलीपतिः। यस्तस्यामाहितोगर्भः स तेन ब्रा(व्रा)ह्मणो हत' इत्युक्ते वृषलीपतौ, 'गुरोत्पतनजिह्माच्च जीवोतिष्ठाङ्गलिध्वनि। गुरोरपि च कर्त्तव्यमन्यथा 'ब्रह्महा' भवेदित्यादिस्मृत्युक्तातिदेशिकब(व)ह्महत्यापापयुक्ते च पु०।

**ब(व)ह्महुत** न० ब(व)ह्मणे विप्राय अतिथये हुतं दत्तम्। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गतेऽतिथिपूजनरूपे यज्ञभेदे

**ब(व)ह्माञ्जलि** पु० ब(व)ह्मणे वेदपाठाय अञ्जलिः गुरौ विनयाञ्जलिः, स्वरविशेषज्ञापनार्थं वा अञ्जलिः संकुचितपाणिः। वेदपाठार्थं गुरुनिकटे कार्य्ये विनयाञ्जलौ, स्वरविशेषार्थज्ञापनाय कृतसङ्कोचे पाणिद्वये च।

**ब्रह्माणी** पु० ब(व)ह्माणम् आनयति जीवयति अन-णिच्-अण् पूर्व्व०णत्वम्। ब्रह्मशक्तौ 'हंसयुक्ते विमानेस्था साक्षसूत्रकमण्डलुः। आयाता ब(व)ह्मणः शक्तिः ब(व)ह्माणी साभिधीयते' इति चण्डी। 'ब्रह्माणी ब(व)ह्मजननादि'ति पुराणम्। ब्रह्मशब्दात् ङीप् आनङ् चेति त्वपाणिनीयम्

**ब(व)ह्माण्ड** न० ६त०। 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् यज्ञे स्वयं ब(व)ह्मा सर्व्वलोकपितामहः' इति मनूक्ते ब(व)ह्मण उत्पादके अंडाकारे भुवनकोषे 'ब(व)ह्माण्डभाण्डोदरभ्राम्यन्निरिखतचण्डिमेति वीरचरितम्। तत्प्रमाणस्वरूपादिकं तु वृहदभिधाने वक्ष्यते।

**ब(व)ह्मावर्त्त** पु० 'सरस्वतीदृशद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्म्मितं देशं ब(व)ह्मावर्त्तं प्रचक्षते' इति मनूक्ते देशभेदे

**ब(व)ह्मासन** न० ब(व)ह्मणोध्यानार्थमासनम्। ईश्वरध्यानार्थे आसने स्वस्तिकपद्मासनादौ।

**ब(व)ह्मी** स्त्री० ब्रह्मण इयम् अण् टिलोपः ङीप् पृ० न वृद्धिः। (वामनहाटी) शाकभेदे। [वृहदभिधाने।

**ब(व)ह्मोद्दत** न० मेधास्वरबलादिकारके घृतभेदे विस्तरो

**ब(व)ह्मोपनेतृ** पु० ब(व)ह्माणं विप्रमुपनयते तद्बेत्रदण्डहेतुत्वात् उप-नी-तृच्। पलाशवृक्षे 'विप्रस्य पालाशो दण्ड' इति स्मृतिः।

**ब्रा(ब्रा)ह्म** न० ब्रह्मण इदम्, तेन प्रोक्तम् वा अण् टिलोपः। अङ्गुष्ठमूले तीर्थे, तेन हि तीर्थेन द्विजाचमनं विहितमिति तस्य तत्सम्बन्धित्वम् 'प्राग्वा ब्रा(ब्रा)ह्मेन तीर्थेन द्विजो नित्यमुपस्पृशे'दिति स्मृतिः। ब(व)ह्मणोक्ते अष्टादशपुराणान्तर्गते पुराणभेदे च। विवाहभेदे, नारदे च पु०। सरस्वत्यां, सोमलतायां, ब्रह्मीशाके (वामनहाटि) शाकभेदे च स्त्री० 'आवृत्तानां गुरुकुलात् विप्राणां पूजको भवेत्। नृपाणामक्षयो ह्येष ब्रा(ब्रा)ह्मो धर्मो विधीयते' इति मनूक्ते राज्ञां धर्म्मभेदे पु०। मातृभेदे स्त्री० ङीप् 'ब्रा(ब्रा)ह्मी नारायणी तथेति तन्त्रम्।

**ब्रा(ब्रा)ह्मण** पु० ब(व)ह्म वेदं शुद्धं परचैतन्यं वा वेत्त्यधीते वा अण् ब(व)ह्मणो जाताविति न टिलोपः। ब्रह्मणो मुखजातत्वात् ब्रह्मणोऽपत्यम् अण् तेन न टिलोपः। विप्रे जातिभेदे। पृक्कायां स्त्री०। 'ब(व)ह्म जानाति ब्राह्मण' इत्युक्ते परब(व)ह्मज्ञे त्रि०। स्त्रियां ङीप् तत्पत्न्यां स्त्री० ङीप्।

**ब्रा(ब्रा)ह्मणब्रुव** पु० ब्रा(ब्रा)ह्मणं जातिमात्रे आत्मानं ब्रूते। 'विप्रसंस्कारयुक्तोऽपि नित्यं सन्ध्यादिकञ्च यः ; नैमित्तिकं च

नो कुर्य्यात् ब्रा(ब्र)ह्मणम् व उच्यते' इत्युक्ते कदाचारवति द्विजे । [स्वार्थे कन् । अत्रैव विप्रदण्डे च ।

**ब्रा(ब्रा)ह्मणयष्टि** स्त्री० ६त०। वा ङीप् (वामनहाटी) वृक्षभेदे

**ब्रा(ब्रा)ह्मण्य** न० ब्रा(ब्रा)ह्मणानां समूहः भावो वा ष्यञ् । विप्रसमूहे । ब्राह्मणधर्म्मे, विप्रत्वे च ।

**ब्रा(ब्रा)ह्ममुहूर्त्त** पु० ब्र(ब्र)ह्मा देवतास्य अण् टिलोपः कर्म०। अरुणोदयात् प्राग्वर्त्तिनि 'रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्रा(ब्रा)ह्म उच्यते' इत्युक्तेः दण्डद्वयात्मके काले ।

**ब्रा(ब्रा)ह्मीकन्द** पुं० ६त० । ब्रा(ब्रा)ह्मा इव कन्दो यस्य । वाराहीकन्दे । [चत् अवोचत ।

**ब्रू** कथने अदा० उभ० द्विक० सेट् । ब्रवीति-आह ब्रूते । अवो-

## भ

**भ** म० भा-क । नक्षत्रे, मेषादिराशौ, ग्रहे च । शुक्राचार्य्ये पु० । भण-ड । भ्रमरे, भ्रान्तौ । छन्दोग्रन्थोक्ते आदिगुरुके अन्त्योपान्त्यलघुयुक्ते वर्णत्रिके च पु० । [च त्रि०।

**भक्त** पु०न० भज-क्त। अन्ने ओदने । भक्तियुक्ते तदात्मके, विभक्ते

**भक्तदास** पु० भक्तेन अन्नमात्रलाभेन दासः अङ्गीकृतदासभावः। पञ्चदशदासान्तर्गते दासभेदे। 'भक्तदासश्च विज्ञेय' इति स्मृतिः ।

**भक्तमण्ड** पु०न० ६त० । भक्तस्य निस्रावे (माड) ।

**भक्ति** स्त्री० भज-क्तिन् । सेवायाम् आराधनायां, तदेकाग्रचित्तवृत्तिभेदे, विभागे, गौण्यां वृत्तौ, उपचारे, अवयवे, भङ्ग्याम्, श्रद्धायाम्, रचनायाञ्च, 'भवति विरलभक्ति'रिति रघुः

**भक्तियोग** पु० भक्तिरेव योगः एकाग्रचित्तवृत्तिभेदः । तदेकाग्रचित्ततारूपे योगे । [भवात्मके रतिभेदे ।

**भक्तिरस** पु० भक्तिरेव रस आस्वाद्यः । भक्तिरूपे ध्येयानु-

**भक्ष** अदने चु० उभ० सक० सेट् । भक्षयति-ते अवभक्षत्-त भ्वादित्वमपीत्येके भक्षति अभक्षीत् ।

**भक्ष्यकार** पु० त्रि० भक्ष्यं करोति कृ-अण् । भक्ष्यपिष्टकादिविक्रयोपजीविनि आपूपिके ।

**भक्ष्यपत्त्रा** स्त्री० भक्ष्यं पत्त्रं यस्याः । ताम्बूल्याम् ।

**भक्ष्यालाबू** स्त्री० कर्म० । राजालाबाम् ।

**भग** पु०न० भज-घ । सूर्य्ये, अणिमाद्यष्टविधैश्वर्य्ये, वीर्य्ये, यशसि, श्रियां, ज्ञाने, वैराग्ये, योनौ, इच्छायाम् माहात्म्ये, यत्ने, धर्म्मे, मोक्षे, सौभाग्ये, कान्तौ चन्द्रे च । ज्योतिषोक्ते योनिनक्षत्रदैवते पूर्वफल्गुनीनक्षत्रे गुह्यमुष्कयोर्मध्यस्थाने च पु० ।

**भगदत्त** पु० महाभारतप्रसिद्धे कामरूपदेशाधिपे नृपभेदे ।

**भगन्दर** पु० भगं गुह्यमुष्कमध्यस्थानं दारयति दृ-खच् मुम् च । स्वनामख्याते रोगभेदे।

**भगवत्** त्रि० भगं 'ऐश्वर्य्यस्य समग्रस्य, वीर्य्यस्य, यशसः, श्रियः ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गने'त्युक्तम् ऐश्वर्य्यादिषट्कमस्य मतुप् मस्य वः । ऐश्वर्य्यादियुक्ते परमेश्वरे, दुर्गायां स्त्री० ङीप् । 'भगवत्या कृतं सर्व्वमिति चण्डी ।

**भगाङ्कुर** पु० भगे गुह्यस्थानेऽङ्कुर इव । अर्शोरोगे ।

**भगिनी** स्त्री० भगं यत्नः पित्रादितो द्रव्यादानेऽस्त्य स्याः इनि । सोदरायाम् स्वसरि ।

**भगीरथ** पु० सूर्य्यवंश्ये दिलीपराजपुत्रे नृपभेदे । येन गङ्गा भूमितलमवतारिता । [र्गुणैरुपहृतमि'ति नाटकम् ।

**भग्न** त्रि० भन्ज-क्त । पराजिते, खण्डिते च भग्नं 'शम्भुधनु-

**भग्नप्रक्रम** पु० भग्नः प्रक्रमो यत्र। अलङ्कारोक्ते काव्यदोषभेदे

**भङ्ग** पु० भन्ज-घञ् । पराजये, खण्डे, भेदे, तरङ्गे, कौटिल्ये, भये, पत्ररचनाभेदे, गमने, जलनिर्गमे च । मातुल्याम्, शणाख्ये शस्ये, त्रिवृतायां (तेउडी) विजयाञ्च (भाङ्) स्त्री०

**भङ्गि(ङ्गी)** स्त्री० भन्ज-इन् ष० कुत्वम् वा ङीप् । विच्छेदे, कौटिल्ये, विन्यासे, कल्लोले, भेदे, व्याजे च ।

**भङ्गुर** त्रि० भन्ज-घुरच् । कुटिले, स्वयं भञ्जनशीले, नदीनां वक्रे च । प्रियङ्गौ, अतिविषायाम् च (आतइच्) स्त्री० ।

**भङ्ग्य** न० भङ्गानां भवनं क्षेत्रं यत् । भङ्गाभवनयोग्ये क्षेत्रे ।

**भज** भागे सेवायाञ्च भ्वा० उभ० सक० अनिट् । भजति-ते अभाक्षीत् । भेजतुः भेजे ।

**भज** पाके दाने च चु० उ० सक० सेट् । भाजयति-ते अबीभजत्

**भज** दीप्तौ चु० उभ० अक० सेट् इदित् । भञ्जयति-ते अबभञ्जत्-त

**भजमान** त्रि० भज-शानच् । न्यायागतद्रव्यादौ, विभाजके, सेवके च । [भाषणेऽयं घटा० । णिचि भटयति ।

**भट** पोषणे भ्वा० पर० सक० सेट् भटति । अभाटीत्-अभटीत् ।

**भट** पु० भट-अच् । योद्धरि, 'तद्भटचातुरीतुरी'ति नैषधम् । वीरे, म्लेच्छभेदे, नीचभेदे, रात्रिञ्चरे च । इन्द्रवारुण्यां (राखालशशा) स्त्री० ।

**भटित्र** न० भट-इत्र । शूलपक्के मांसादौ (काबाब) ।

**भट्ट** पु० भट-तन् । स्तुतिपाठवृत्तिमति (भाट) जातिभेदे स्वामित्वे, वेदाभिज्ञे पण्डिते च ।

**भट्टार** पु० भट्टं स्वामित्वमृच्छति ऋ-अण् । पूज्ये । संज्ञायां कन् । सूर्य्ये । [नाट्योक्तौ नृपे ।

**भट्टारक** पु० भट-भाषणे क्विप् तृ-णिच्-ण्वुल् कर्म० ।

**भट्टिनी** स्त्री॰ भट्टं स्वामित्वमस्यास्ति इनि ङीप् । विप्रभार्य्यायाम्, नाट्योक्तौ अकृताभिषेकायां राज्ञः स्त्रियां च ।

**भड** परिभाषणे भ्वा॰आ॰सक॰सेट् इदित् । भण्डते अभण्डिष्ट

**भड** कल्याणभाषणे चु॰उ॰सक॰सेट् इदित् । भण्डयति-ते अबभण्डत्-त ।

**भड** पु॰ भडि-अच् पृ॰ नलोपः । वर्णसङ्करभेदे ।

**भण** कथने भ्वा॰पर॰सक॰सेट् । भणति । अभाणीत्-अभणीत् । चङि वा ह्रस्वः । अबीभणत्-त अबभाणत्-त ।

**भणिति** स्त्री॰ भण-क्तिन् बह्वादित्वादिट् । कथने । गौडोर्वीशकुलप्रशस्तिभणिते रिति नैषधम् ।

**भण्टाकी** स्त्री॰ भटि-षाकन् ङीष् । वार्त्ताक्याम्, वृहत्याञ्च

**भण्ट(ण्टू)क** पु॰ भटि-उक, ऊक वा । श्योनाकवृक्षे ।

**भण्ड** पु॰ भडि-अच् । अश्लीलवाक्यभाषके (भांड) 'त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तपिशाचकाः' इति चार्व्वाकवाक्यम् ।

**भण्डिर(ल)** पु॰ भडि-इरच्, इलच् वा । शिरीषवृक्षे । इलजन्तस्तु । शुभे, शिल्पिनि, दूते च ।

**भण्डी** स्त्री॰ भडि-अच् गौरा॰ङीष् । मञ्जिष्ठायाम्, शिरीषे च । स्वार्थे कन् ह्रस्वः । तत्रैवार्थे ।

**भण्डीर** पु॰ भडि-ईरन् । तण्डुलीयशाके, शिरीषवृक्षे च । गौरा॰ ङीष् । मञ्जिष्ठायाम् स्त्री॰ । [मञ्जिष्ठायाम् ।

**भण्डीरलतिका** स्त्री॰भडि-ईरन् क्षुद्रा लता लतिका कर्म॰ ।

**भद** हर्षे, शुभकथने, प्रीतौ च भ्वा॰आ॰अक॰ सेट् इदित् । भन्दते अभन्दिष्ट । [भन्दतु-त ।

**भद** कल्याणकरणे चु॰उ॰सक॰सेट् इदित् । भन्दयति-ते अब-

**भदन्त** पु॰ भदि-झच् नलोपः । बौद्धभेदे । पूजिते त्रि॰ ।

**भद्र** न॰भदि-रक् नि॰ नलोपः । मङ्गले, मुस्तके, स्वर्णे च ज्योतिषोक्ते बवादितः सप्तमे करणे स्त्री॰ न॰ । महादेवे, वृषे, खञ्जने, कदम्बे, हस्तिजातिभेदे बलदेवे रामचन्द्रे, सुमेरुशैले, वृक्षभेदे च पु॰। ज्योतिषोक्तासु द्वितीयासप्तमीद्वादशीतिथिषु च स्त्री॰। साधौ, श्रेष्ठे च त्रि॰। स्वार्थे कन् । भद्रमुस्तके न॰ । देवदारुणि पु॰ ।

**भद्रकाशी** स्त्री॰ भद्राय काशते पचा॰ गौ॰ ङीष् । भद्रमुस्तायाम्

**भद्रकुम्भ** पु॰ भद्रकारकः कुम्भः । पूर्णकुम्भे, जलपूर्णघटे ।

**भद्रगन्धिका** स्त्री॰भद्रो गन्धोऽस्याः कप् अतइत्त्वम् । मुस्तके

**भद्रचूड** पु॰ भद्रा चूडा यस्य । (वङ्कासिज) वृक्षभेदे ।

**भद्रज** पु॰ भद्राय जायते जन-ड । इन्द्रयवे ।

**भद्रतरुणी** स्त्री॰ भद्रदायिका तरुणीव । कुब्जकवृक्षे ।

**भद्रतुरग** न॰ भद्रास्तुरगा यत्र । जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे भद्राश्वाद्वयोप्यत्र न॰ ।

**भद्रदन्तिका** स्त्री॰ कर्म्म॰ स्वार्थे कन् । दन्तीवृक्षभेदे ।

**भद्रदारु** पु॰न॰ । कर्म्म॰ । देवदारुवृक्षे ।

**भद्रनामिका** स्त्री॰ भद्रं मङ्गलं नामयति प्रापयति नम-णिच् ण्वुल् ? त्रायन्तीवृक्षे । [भाद्रपदासु ।

**भद्रपदा** स्त्री॰ ब॰व॰ भद्रस्य वृषस्येव पदं यासाम् । पूर्व्वोत्तर

**भद्रपर्णी** स्त्री॰ भद्रं पर्णमस्याः अजादि॰ टाप् । कटम्भरावृक्षे । प्रसारिण्यां, गाम्भार्य्याञ्च ङीप् ।

**भद्रमल्लिका** स्त्री॰ कर्म॰। मल्लिकाभेदे नवमल्लिकायाम् ।

**भद्रमुञ्ज** पु॰ कर्म॰। शरभेदे ।

**भद्रमुस्तक** पु॰कर्म॰। नागरमुस्तके । भद्रमुस्ताप्यत्र स्त्री॰ ।

**भद्रयव** न॰ भद्रं यवइव । इन्द्रयवे । [ङीप् । गाम्भार्य्याम् ।

**भद्रवती** स्त्री॰ भद्राणि पर्णानि सन्त्यस्या मतुप् मस्य वः

**भद्रवर्म्मन्** पु॰ भद्रं वृणाति वृ-मनिन् । नवमल्लिकायाम् ।

**भद्रवला** स्त्री॰भद्राय वलति चलति वल-अच् । (गन्धभादालि) लताभेदे, गन्धिकायां, माधवीलतायाञ्च ।

**भद्रवल्ली** स्त्री॰कर्म॰संज्ञायां कन् ह्रस्वः अतइत्त्वम् । (अनन्तमूल) । गोपवल्ल्याम् ।

**भद्रश्रय** न॰ भद्राय श्रीयते श्री-अच् । चन्दनवृक्षे ।

**भद्रश्री** पु॰ भद्रा श्रीर्यस्य । चन्दनवृक्षे ।

**भद्रालपत्रिका** स्त्री॰ भद्रायालति पर्य्याप्नोति अल-अच् तादृशं पत्रं यस्याः कन् अतइत्त्वम् । गन्धाल्याम् (गान्धाल)

**भद्राली** स्त्री॰ भद्रायालति पर्य्याप्नोति अण् गौरा॰ ङीष् । गन्धाल्याम् (गान्धाल) [दीर्घः । कटफलवृक्षे ।

**भद्रावती** स्त्री॰ भद्र-अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्व्वपद

**भद्राश्रम** पु॰ ६त॰ । चन्दने । [न्नृपासने ।

**भद्रासन** न॰भद्राय लोकक्षेमायास्तेऽत्र आस-आधारे ल्युट् ।

**भम्भराली** स्त्री॰भमित्यव्यक्तशब्दस्य भरमालाति म्लाति आ-ला-क गौ॰ङीष् (डांश)मक्षिकायां । स्वार्थे कन् । तत्रैवार्थे

**भय** न॰बिभेत्यस्मात् भी-अच् । भयहेतौ । भावेऽच् । दैन्यात्मके, परतः स्वानिष्टसम्भावनात्मके वा चित्तवृत्तिभेदे, नाटकप्रसिद्धे रसभेदे च । [रसभेदे, कुण्डलविहगे च पु॰।

**भयङ्कर** त्रि॰ भयं करोति कृ-अच् मुम् च । भयजनके,

**भयनाशिनी** स्त्री॰ भयं नाशयति नश-णिच्-णिनि । त्रायमाणालतायाम् । च । भयङ्करे त्रि॰

**भयानक** पु॰ बिभेत्यस्मात् भी-आनक । व्याघ्रे, राहौ, रसभेदे

**भर** पु॰ भृ-अप् । अतिशये । कर्म्मणि अप् । भरणकर्त्तरि त्रि॰

**भरण** न॰ भृ-ल्युट् । वेतने, पोषणे, धारणे च । असिन्य-

भष कुक्करशब्दे भ्वा०पर०सक०सेट् । भषति अभषीत्-अभाषीत्

भषक पु० भष-वुन् । कुक्कुरे । [अभषीत् ।

भस दीप्तौ अक० भर्त्से सक०जु०पर०सेट् । बभस्ति । अभासीत्-

भस्त्रा स्त्री० भस-त्रन् । चर्मप्रसेविकायाम् अग्निसन्धुक्षणे चर्मनिर्मिते यन्त्रभेदे । (धांता) गौ० ङीप् । अत्रैव । स्वार्थे कन् टाप् न ह्रस्वम् । भस्त्रकाप्यत्रैव ।

भस्मक न० भस्म करोति कृ-ड । (भस्मकीट) बहुभोजनकारके रोगभेदे । भस्मेव इवार्थे कन् । कलधौते रूप्ये,विडङ्गे च ।

भस्मगन्धा स्त्री० भस्मन इव गन्धोऽस्याः । रेणुकाख्यगन्धद्रव्ये । स्वार्थे कन् अत इत्वम् । तत्रैव । [गन्धद्रव्ये ।

भस्मगन्धिनी स्त्री०भस्मन इव गन्धोऽस्त्यस्या इनि । रेणुकाख्ये

भस्मगर्भ पु० भस्म गर्भे यस्याः । तिनिशवृक्षे, कपिलशिंशपायां च । रेणुकाख्यगन्धद्रव्ये स्त्री० टाप् ।

भस्मन् न० भस-मनिन् । (छाइ) दग्धगोमयादिविकारे ।

भस्मरोहा स्त्री० भस्मनि रोहति रुह-अच् । दग्धिकायाम् ।

भस्मसात् अव्य०भस्म कार्त्स्न्येन सम्पन्नं करोति भस्मन्+साति । साकल्येन भस्मरूपकरणे ।

भा दीप्तौ अदा० पर० अक० अनिट् । भाति । अभासीत् ।

भा स्त्री० भा-अङ् । टाप् । दीप्तौ ।

भाक्त त्रि० भक्तेः गौणीवृत्तेरागतः अण् । औपचारिके गौणीवृत्त्या बोधितेऽर्थे । भक्तस्यान्नस्येदम् अण् । अन्नसम्बन्धिनि त्रि० ।

भाग पु० भज-भावे घञ् । भजने । कर्म्मणि घञ् । अंशे, दृष्टवस्तुनोऽर्द्धे, एकदेशे, भाग्ये, 'त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते' इति ज्योतिषोक्ते राशेः त्रिंशांशके च ।

भागधेय न० भाग+स्वार्थे धेय अभिधानात् नपुंसकत्वम् । भाग्ये । भागेन धीयतेऽसौ धा-यत् । राजदेये करे । भागो धीयतेऽस्मै धा-सम्प्रदाने यत् । दायादे सपिण्डे ।

भागवत त्रि०भगवतः, भगवत्या वा इदम् सोऽस्यदेवता वा अण् भगवतः भगवत्या वा भक्ते, तत्सम्बन्धिनि च 'भक्ताः स्म भागवता भवन्तीत्यु'द्भटः तयोः सम्बन्धिगुणवर्णने पुराणे उपपुराणे च न० 'यैन श्रुतं भागवतं पुराणमि'ति पुराणम् तत्र कस्य पुराणत्वं कस्य चोपपुराणत्वं तद्वृद्धदभिधाने विस्तरेण निरूपयिष्यते । [दानादौ ।

भागशस् अव्य०भागं भागं ददातीत्याद्यर्थे शसि । एकैकभागस्य

भागहर त्रि० भागमंशं हरति अधिकारित्वेन गृह्णाति हृ-अच् । अंशग्राहिणि ।

भागहार पु०भज्यते इति भागो विभाज्यकस्य हारो हरणम् हृ-घञ् । अङ्कशास्त्रोक्ते भाज्यस्य विभागकरणे ।

भागिन् त्रि० भज-घिनुण् । अंशविशिष्टे । [स्त्री०ङीप् ।

भागिनेय पु० भगिन्या अपत्यम् ढक् । स्वस्रीये । तत्कन्यायां

भागीरथी स्त्री०भगीरथेन निर्हृता आनीता तत्सम्बन्धिनी वा अण् । गङ्गायाम् । 'भागीरथीनिर्झरसीकराणा'मिति कु०

भागुरि पु० स्मृतिव्याकरणादिकर्त्तरि मुनिभेदे ।

भाग्य न० भज-ण्यत् कुत्वम् । शुभाशुभसूचके कर्म्मणि । भागः प्रयोजनमस्य यत् । भागवति त्रि० ।

भाङ्गीन न० भङ्गायाः विजयायाः भवनं क्षेत्रं खञ् । (भाङ) भङ्गाभवनयोग्ये क्षेत्रे । यञ् । भाङ्गमप्यत्र । [भाजन् त

भाज पृथक्करणे, अद०चु०उभ०सक०सेट् । भाजयति ते अब-

भाजन न०भाज्यतेऽनेन भाज-ल्युट् । पात्रे, आधारे,योग्ये च

भाजी स्त्री० भाज-कर्म्मणि घञ् नि० ङीप् । भृष्टव्यञ्जनभेदे ।

भाज्य त्रि० भाज्यते विभज्यते भाज-कर्म्मणि यत् । विभजनीये 'भाज्यो हरः शुध्यति यद्गुणः स्यादि'ति लीलावती ।

भाटक न० भट-पोषणे ण्वुल् । परगृहयानादेरुपभोगार्थं तत्स्वामिने दीयमाने धने । (भाडा)

भाण पु० भण-घञ् । 'भाणः स्याद्धूर्त्तचरित' इत्याद्युक्तलक्षणे दृश्यकाव्यभेदे साहि० ६प० ।

भाण्ड न०भा-अण्डच्, भण-ड-स्वार्थे अण् वा । पात्रे, तैलाद्याधारे भाजने, (भांड) गृहभेदे, (भाड़ार) 'ब्रह्माण्डभाण्डोदरे'ति वीरचरितम् । वणिजां मूलधने, अश्वभूषायां, नदीकूलद्वयमध्ये पात्रे च । गर्द्दभाण्डे वृक्षे पु० । भण्डस्य भावः अण् । भण्डचरित्रे न०(भाड़ामि) ।

भाण्डारिन् पु० भाण्डमृच्छति ऋ-णिनि । (भाण्डारी) अन्नादिद्रव्यगृहेषु कृताधिकारे ।

भाण्डिवाह पु० भाण्डिं क्षुराद्याधारं (भाड़ि) वहति अण् । नापिते । भाण्डि+अस्त्यर्थे लच् । भाण्डिलोऽप्यत्र । [भेदे च

भाण्डीर पु० भण्ड-ईरच् पृ०। वटवृक्षे, वृन्दावनस्थे वटवृक्ष-

भाति स्त्री भा-क्तिन् । शोभायाम् ।

भाद्र पु०भद्राभिर्युक्ता पौर्णमासी भाद्री सा यस्मिन् मासे अण् । चैत्रादितः षष्ठे चान्द्रे मासे । तन्मासीयपौर्णमास्यां स्त्री० ङीप् । भद्रैव स्वार्थे अण् । पूर्व्वोत्तरभाद्रपदाख्यनक्षत्रे न० । 'भाद्रद्वये सागरे' इति ज्योतिषम् ।

भाद्रपदा स्त्री० ब०व० । भद्रस्येदं अण् भाद्रं भाद्रमिव पदमासाम् । अश्विन्यवधिके पञ्चविंशषड्विंशयोर्नक्षत्रयोः । तद्युक्ता पौर्णमासी अण् ङीप् । भाद्रमासस्य पौर्णमास्याम् साऽत्र मासे अण् । चान्द्रे भाद्रे मासि । [मतीपुते

**भाष्य** न० 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो जनाः' इत्युक्त लक्षणे सूत्रव्याख्याग्रन्थभेदे । कथनीये त्रि० ।

**भास** दीप्तौ भ्वा०आत्म०अक०सेट् । भासते अभासिष्ट । चङि वा ह्रस्वः । अबीभसत् अबभासत् ।

**भास्** स्त्री० भास-सम्पदा० क्विप् । दीप्तौ, मयूखे इच्छायाञ्च ।

**भास** पु०भास-घञ् अच् वा । दीप्तौ, गोष्ठे, कुक्कुरे शकुन्ते च । 'यत्रार्थमद्ददत् वस्तु भासः काकोदयवत् भवेदिति स्मृतिः ।

**भासुर** त्रि० भास-घुरच् । दीप्तिशीले, स्फटिके च। वीरे पु० [(विख्याति) कुष्ठौषधे न० ।

**भासुरपुष्पी** स्त्री० भासुराणि पुष्पाण्यस्याः । वृश्चिकाली

**भास्कर** पु० भासं करोति भास्+कृ-टच् कस्त्वा०। सूर्ये, अग्नौ वीरे, अर्कवृक्षे सिद्धान्तशिरोमणिग्रन्थकर्तरि लिखिते । स्वर्णे न० ।

**भास्करप्रिय** पु० ६त० । पद्मरागमणौ (चुनि) ।

**भास्वर** त्रि०भास-वरच् । दीप्तियुक्ते, सूर्ये, दिने, अर्कवृक्षे च पु० । कुष्ठौषधे न० (कुड़) । [वीरे च । दीप्तिमति त्रि० ।

**भास्वत्** पु० भास्+अस्त्यर्थे मतुप् मस्य वः । सूर्ये, अर्कवृक्षे,

**भिक्ष** लोभे लाभायोक्तौ सक० याचने द्विक० क्लेशे अक० भ्वा० आत्म० सेट् । भिक्षते अभिक्षिष्ट ।

**भिक्षा** स्त्री० भिक्ष-अ । याच्ञायाम् ।

**भिक्षाक** त्रि० भिक्ष-षाकन् । भिक्षाकारके । स्त्रियां ङीष् ।

**भिक्षाशिन्** त्रि० भिक्षालब्धमश्नाति अश-णिनि । भिक्षा-लब्धोपजीविनि ।

**भिक्षु** पु० भिक्ष-उ । सन्यासिनि चतुर्थाश्रमे ।

**भिक्षुक** पु० स्त्री० भिक्ष-उकञ् । भिक्षोपजीविनि ।

**भिण्ड** पु० स्त्री० भण-ड पृ० । कराङ्गुलिरक्तवर्णपर्णे वर्त्तु-लाकारवीजे क्षुपभेदे । स्त्रीत्वे टाप् ।

**भित्त** न० भिद-क्त नि० तस्य न नः । खण्डे ।

**भित्ति** स्त्री० भिद-क्तिन् । इष्टकादेः कुड्ये (देयाल) । स्वार्थे कन् । तत्र, पक्षायां च ।

**भिद्** द्विधाकरणे, विशेषकरणे च रुधा०उभ० सक० अनिट् भिनत्ति भिन्ते अभिदत् अभैत्सीत् अभित्त । [न्दीव्

**भिद्** अंशकरणे भ्वा०पर०सक० सेट् इदित् । भिन्दति अभि-

**भिदा** स्त्री०भिद-अङ् । विदारणे, द्वैधीकरणे, विशेषकरणे च ।

**भिदुर** पु० भिद-कुरच् । वज्रे । इरत् । भिदिरमयत न० । प्लक्षवृक्षे पु० ।

**भिन्दिपाल** पु० भिदि-विदारणे इन् भिन्दिं भेदनं पालयति पाल-अण् । हस्तक्षेप्ये नालिकास्त्रे, हस्तप्रमाणेऽस्त्रे च ।

**भिन्न** पु० भिद-क्त । विदारिते, मिश्रिते, सङ्गते, अन्ये, प्रस्फुटिते च । [कर्कोट्याम् ।

**भिन्नगात्रिका** स्त्री०भिन्नं विदारितं गात्रमवयवो यस्याः ।

**भिन्नपरिकर्म्मन्** न० भिन्नस्य अंशसहितस्य परिकर्म्म संस्का रविशेषः । अङ्कशास्त्रोक्ते सांशस्य गुणभागादिसंस्कारे ।

**भिन्नभिन्नात्मन्** पु०भिन्नप्रकारः प्रकारे द्वित्वम् तादृश आत्मा यस्य । चणके (छोला) । [ङीप् । पाषाणभेदके वृक्षे ।

**भिन्नयोजनी** स्त्री० भिन्नं युज्यतेऽनया युज-करणे ल्युट्

**भिल** भेदने वा चु०उ० पक्षे तु०पर०सक० सेट् । भेलयति-ते भिलति अबीभिलत् त अभेलीत् । [ले'ति स्मृतिः

**भिल्ल** पु०भिल-लक् । म्लेच्छजातिभेदे । (भिल) 'कैवर्त्तभेदभिल्ला

**भिल्लतरु** पु० भिल्लप्रियः तदुपजीव्यत्वात् तरुः । लोध्रे ।

**भिल्ली** स्त्री० भिल लक् गौ० ङीष् । लोध्रे ।

**भिष** रोगप्रतीकारे सौ०पर०सक०सेट् । भेषति अभेषीत् ।

**भिषक्प्रिय** पु० ६त० । गुडूच्याम् ।

**भिषग्भद्रा** स्त्री० ६त० । भद्रदन्तिकायाम् ।

**भिषज्** पु० भिषति चिकित्सते भिष-अजिक् । वैद्ये रोगप्रतीकारे च

**भिस्सटा** स्त्री०भिस्सामन्नं टीकते टीक-ड पृ०। दग्धान्ने ।ष्ठ०। भिस्सिटा भिस्सिटा भिस्सिटा भिस्सिका इत्यादयोऽप्यत्रैवार्थे

**भिस्सा** स्त्री० भिद्-क्विप् सो-क पृ०दस्य सः । अन्ने । [भाव

**भी** भये जु०पर०अक०अनिट् । बिभेति अभैषीत् बिभयामास बि

**भी** भये अक० भरणे सक० क्र्यादि० वा धा० पर० अनिट् । भीनाति-भिनाति । अभैषीत् ।

**भी** स्त्री० भी-सम्प० क्विप् । भये ।

**भीति** स्त्री० भी-क्तिन् । भये, कम्पे च । क्त-भीतः। भययुक्ते त्रि०

**भीम** त्रि० बिभेत्यस्मात् भी-मक् । भयहेतौ । भयानकरसे, महादेवे, भीमसेने, अम्लवेतसे च पु० । दुर्गायां स्त्री० 'भीमा'देवीति विख्यातं तन्मे नाम भविष्यती'ति चण्डी ।

**भीमरथी** स्त्री० 'सप्तसप्ततिमे वर्षे,सप्तमे मासि सप्तमी। रात्रि भीमरथी नाम'त्युक्तायां रात्रौ ।

**भीमसेन** पु० युधिष्ठिरानुजे मध्यमपाण्डवे, कर्पूरभेदे च ।

**भीमैकादशी** स्त्री० भीमेनोपास्या एकादशी शाक० । माघ-शुक्लैकादश्याम् ।

**भीरु** त्रि० भी-क्रु । भयशीले । शतावर्य्यां, कण्टकार्य्यां, शत-पद्रिकायां, छायायां योषिति च। स्त्री०वा ऊङ् । भययुक्ता यां योषिति । [भययुक्ते त्रि० ।

**भीरुक** पु० भी-क्रुकन् । शृगाले । व्याघ्रे । इक्षुभेदे च ।

**भीरुपत्त्री** स्त्री० भीरूणि पत्त्राणि यस्याः । शतमूल्याम् ।

**भीलु** त्रि॰ भी-क्रु। भयशीले। क्रुकन्। तत्र। भल्लूके पु॰।

**भीषण** पु॰ भीषयते भी-णिच्-ल्यु भीषादेशः। भयानकरसे, कुन्दुरुके, हिन्ताले, शल्लक्याञ्च। महादेवे-कपोते च पु॰। गाढ़े दारुणे च त्रि॰।

**भीष्म** पु॰ भी-मक् सुक् च। भयानकरसे। भयहेतौ त्रि॰। गङ्गागर्भजे शान्तनुसुते स्वनामख्याते कुरुवंश्ये क्षत्रिये पु॰।

**भीष्मजननी** स्त्री॰ ६त॰। गङ्गायाम्। भीष्मसूभप्यत्रयोप्यत्र।

**भीष्मपञ्चक** न॰ भीष्मेणोपदिष्टं पञ्चकम्। कार्त्तिकशुक्लैकादश्यादिषु पञ्चसु तिथिषु, तत्कर्त्तव्ये व्रतभेदे च।

**भीष्माष्टमी** स्त्री॰ ६त॰। भीष्मस्य देहत्यागदिवसे माघशुक्लाष्टम्याम् अतस्तस्मिन् दिने सर्व्ववर्णैस्तस्य तर्पणं कार्य्यम्।

**भुक्त** त्रि॰ भुज-कर्म्मणि क्त। भक्षिते। भावे-क्त। भक्षणे न॰।

**भुक्तसमुज्झित** त्रि॰ पूर्व्वं भुक्तं पश्चात् समुज्झितं त्यक्तम्। भोजनोत्तरं त्यक्ते अन्नादौ।

**भुक्ति** स्त्री॰भुज-क्तिन्। भोजने भोगे, "च' चागतो निम्नकतल भुक्तिः लोकापि यत्न नो' इति स्मृतिः।

**भुक्तिप्रद** पु॰ भुक्तिं भोगं भोजनं वा प्रददाति सत्त्वावास्भव्यत्वात्। मुद्गे।

**भुग्न** त्रि॰ भुज-मोटने क्त। रोगादिना कुटिलीकृते। [भुग्नः

**भुज** मोटने तु॰ प॰ सक॰ अनिट्। भुजति अभौक्षीत्। क्त

**भुज** भक्षणे आ॰ पालने प॰सक॰रुधा॰ अनिट्। भुङ्क्तेऽभक्त अभौक्षीत्। भूमिं भुनक्ति पालयति। 'दिवं मरुत्वानिव भोक्ष्यते महीमिति रघुः भुक्तः।

**भुज** पु॰स्त्री॰भुज्यतेऽनेन भुज-घञर्थे क। बाहौ, करे, त्रिकोणचतुष्कोणादिक्षेत्रेरेखाविशेषे लीलावत्यादौ प्रसिद्धे 'तथा यते तद्भुजकोटिघात' इति लीलावती।

**भुजग** पु॰ भुज-वक्रणे क भुजः कुटिलीभवन् सन् गच्छति गम-ड। सर्पे, अश्लेषानक्षत्रे च।

**भुजगान्तक** पु॰ ६त॰। गरुडे। भुजगनाशनादयोऽप्यत्र।

**भुजगाशन** पु॰ भुजगान् अश्नाति अश-ल्यु। गरुडे, भुजगभक्षकादयोऽप्यत्र। [अश्लेषानक्षत्रे च।

**भुजङ्ग** पु॰ भुजः सन् गच्छति गम-खच् डिच्च। सर्पे, जारे,

**भुजङ्गप्रयात** न॰। द्वादशाक्षरपादके छन्दोभेदे।

**भुजङ्गम** पु॰ भुजः कुटिलीभवन् सन् गच्छति गम-खच् मुम्। सर्पे, अश्लेषानक्षत्रे च। सीसके न॰। [क्लीब्। राहुयाम्।

**भुजङ्गाक्षी** स्त्री॰ भुजङ्गस्येवाक्षि पुष्पं यस्याः षच् समा॰

**भुजङ्गाख्य** पु॰ भुजङ्गतुल्या आख्या यस्य। नागकेशरे।

**भुजशिरस्** पु॰ ६त॰। स्कन्धदेशे।

**भुजान्तर** न॰ भुजयोरन्तरं मध्यम्। क्रोड़े।

**भुजिष्य** पु॰भुज-किष्यन्। दासे, रोगे, स्वतन्त्रे, हस्तसूत्रे च। दास्यां, वेश्यायाञ्च स्त्री॰। [ईषदसंख्यायाञ्च।

**भुवन** न॰ भवत्यत्र भू-क्युन्। जगति, जने, आकाशे, सलि-

**भुवनकोष** पु॰भुवनस्य कोष इव। भूगोले ज्योतिषप्रन्थभेदे च

**भुवर्** अव्य॰ भू-असुन्-वुक् किच्च। आकाशात्मके द्वितीये लोके।

**भुवर्लोक** पु॰ कर्म॰। भूरादिसप्तलोकमध्ये द्वितीयलोके।

**भू** प्राप्तौ चु॰ आ॰ सक॰ सेट्। भावयते अबीभवत।

**भू** प्राप्तौ भ्वा॰उ॰सक॰सेट्। भवति-ते अभूत् अभविष्ट।

**भू** शुद्धौ अक॰ चिन्तने मिश्रणे च सक॰ चुरा॰ उभ॰ सेट्। भावयति-ते अबीभवत्-त।

**भू** सत्तायां भ्वा॰पर॰अक॰सेट्। भवति अभूत्। [पिण्डान्तरे च

**भू** स्त्री॰ भू-संप॰ क्विप्। पृथिव्याम्, एकसंख्यायां, स्थानमात्रे-

**भूकन्द** पु॰ भुवः कन्द इव। (दुलकुड़ि)। महाश्रावणिकाक्षुपे

**भूकदम्ब** पु॰ भुवि कदम्ब इव। (कोकशिम) अलम्बुषक्षुपे।

**भूकदम्बक** पु॰ भुवि कदम्ब इव कायति कै-क। यवान्याम्।

**भूकम्प** पु॰ ६त॰। लोकानामनिष्टसूचके उत्पातरूपे पृथिव्याः स्वयं चलने।

**भूकुष्मी** स्त्री॰ भुवि कुम्भीव। भूमिपाटल्यां।

**भूकुष्माण्डी** स्त्री॰ भुवि कुष्माण्डीव। वदर्य्याम्।

**भूकेश** पु॰ भुवः पृथिव्याः केश इव। वटे, शैवले च।

**भूखर्ज्जूरी** स्त्री॰ भुवि लग्ना खर्ज्जूरी शाक॰ क्षुद्रखर्ज्जूर्य्याम् भूमिखर्ज्जूर्य्यादयोऽप्यत्र।

**भूगोल** पु॰ भूर्गोल इव। गोलाकारे भूमण्डले तत्प्रकाशकरूपादिके ज्ञानविधाने 'मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति। बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिका'मिति सूर्य्यसिद्धान्तः।

**भूच्छाया** स्त्री॰ भुवश्छाया। सूर्य्यकिरणसम्पर्काभावात् जायमाने राहुपदाभिधाने तमसि अन्धकारे।

**भूजम्बु** स्त्री॰भुवो जम्बुरिव स्वादुत्वात्। गोधूमे, विकङ्कतफले च (वइचि) ६त॰। क्षुद्रजम्ब्वाम्। भूमिजम्ब्वादयोऽप्यत्र स्त्री॰

**भूत** न॰ भू-क्त। न्याय्ये, उचिते, पृथिवीजलतेजोवायुगगनरूपेषु गन्धादिविशेषगुणवत्सु द्रव्येषु, जन्तुषु, सत्ये, यथार्थे, सात्त्विके, 'भूतमप्यनुपन्यस्तं हीयते व्यवहारत इति स्मृतिः तत्त्वार्थज्ञाने च 'स्तुतं निरस्तं भूतेनेति स्मृतिः। पिशाचादौ, कुमारे, योगीन्द्रे, कच्छपे मातरिश्च च पु॰। अतीते हृते, हृदये, प्राप्ते, तुल्ये च त्रि॰। कृष्णचतुर्दश्यां स्त्री॰टाप्

**भूतकेश** पु॰ भूतानां केश इव। (भूतकेश) नामके तृणभेदे

स्त्रीत्वमपि, सा च तत्र, शेफालिकायां च टाप्। नीलसिन्धुवारे ङीप्
**भूतगन्धा** स्त्री० भूतः प्रभूतः गन्धो यस्याः। मुरानामगन्धद्रव्ये
**भूतघ्न** पु० भूतं हन्ति हन-टक्। भूर्ज्जपत्रे तद्धारणे हि बालग्रह-
भूतादिनिवारणम्। भूतं प्राकृतं गर्भं हन्ति अघ' करोति लशुने, उष्ट्रे च। भूतनाशके त्रि०। तुलस्यां स्त्री० ङीप्।
**भूतचतुर्द्दशी** स्त्री० भूतप्रिया चतुर्द्दशी तदुद्देशेन तस्यां दीपदानात्। आश्विनकृष्णपक्षचतुर्दश्यां दीपान्वितामावास्यापूर्वतिथौ यमचतुर्दश्याम्।
**भूतजटा** स्त्री० भूतस्य जटेव। जटामांस्याम्।
**भूतद्राविन्** पु० भूतान् द्रावयत्यपसारयति द्रु-णिच्-णिनि। रक्तकरवीरवृक्षे, भूताङ्कुशवृक्षे, शाखोटवृक्षे च।
**भूतद्रुम** पु० भूतइव द्रुमः। श्लेष्मातकवृक्षे। भूतवृक्षादयोऽप्यत्र
**भूतधात्री** स्त्री० भूतानि जन्तून् धारयति धा-तृच् ङीप्। पृथिव्याम्। [वटुकस्तोत्रम्। भूतेशभूतपत्यादयोऽप्यत्र
**भूतनाथ** पु० ६त०। शिवे, वटुकभैरवे च। 'भैरवो भूतनाथश्चे'ति
**भूतनाशन** न० भूतान् नाशयति नश-णिच्-ल्यु। रुद्राक्षे। सर्षपे, भल्लातके च पु०।
**भूतपक्ष** पु० भूतप्रियः पक्षः अन्धकारवत्त्वात्। कृष्णपक्षे।
**भूतपत्री** स्त्री० भूतइव कृष्णं पत्त्रं यस्याः। कृष्णतुलस्याम्।
**भूतपुष्प** पु० भूतइव कृष्णं पुष्पं यस्य। श्योनाकवृक्षे।
**भूतभावन** पु० भूतानि पृथिव्यादीनि भावयति जनयति भू-णिच्-ल्यु, भूता सत्या यथार्था भावना यस्य वा। विष्णौ, वटुकभैरवे च 'भूतात्मा भूतभावन' इति। तयोः स्तोत्रे।
**भूतयज्ञ** पु० भूतान् प्राणिनो वायसादीन् उद्दिश्य यज्ञो बलिः। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते बलिवैश्वदेवकर्मणि 'भूतेभ्यो बलिहरणं भूतयज्ञ' इति स्मृतिः।
**भूतल** न० भुवेव तलम्। पृथिव्याम्। ६त०। पाताले भूमेरधोभागे
**भूतलिका** स्त्री० भूतलं पातालं मूलत्वेनास्त्यस्याः ठन्। पृक्कायाम् (पिड़िङ्शाक) बहुदूरगमूलत्वात्तस्यास्तथात्वम्।
**भूतवास** पु० ६त०। (बयड़ा) बिभीतकवृक्षे। भूतावासादयोऽप्यत्र
**भूतशुद्धि** स्त्री० भूतानां देहारम्भकपृथिव्यादीनां शुद्धिर्भावनाविशेषात् शोधनम्। तन्त्रादौ प्रसिद्धे देहारम्भकचतुर्विंशति तत्त्वानां भावनाविशेषेण संस्कारेण देवरूपतासम्पादने।
**भूतसार** पु० भूतइव कृष्णः सारोऽस्य। श्योनाकवृक्षे।
**भूतहन्त्री** स्त्री० भूतान् तद्भयं हन्ति हन-तृच् ङीप्। वन्ध्याकर्कोट्यां, श्वेतदूर्वायाञ्च तद्धारणे हि स्त्रीणां प्रजाप्रतिरोधकभूतभयनाशः।
**भूतहर** पु० भूतान् हरति अपसारयति हृ-अच्। गुग्गुलौ
**भूतहारिन्** पु० भूतान् हरति स्थानान्तरं नयति हृन-णिनि। देवदारुवृक्षे। [स्वनामख्याते वृक्षे
**भूताङ्कुश** पु० भूतानां पिशाचानामङ्कुशइवापसारकत्वात्।
**भूतात्मन्** पु० भूतानि पृथिव्यादीनि पञ्च द्रव्याणि आत्मा स्वरूपं यस्य। देहे। भूतानि पञ्च द्रव्याणि भूताः प्राणिनश्च आत्मा स्वरूपं यस्य। परब्रह्मणि, 'सर्वं खल्विदं ब्रह्म तज्जलानि'ति श्रुतिः। सर्वभूतात्मके हिरण्यगर्भे, विष्णौ, वटुकभैरवे च 'भूतात्मा भूतभावन' इति तयोः स्तोत्रे।
**भूतारि** पु० ६त०। हिङ्गौ तद्गन्धेन हि भूतापसरणम्।
**भूताली** स्त्री० भूतानीव अलति पर्याप्नोति अल-अच् गौरा० ङीप्। भूमिशाल्मलौ, सूपल्याञ्च। [बिभीतकवृक्षे च
**भूतावास** पु० भूतानां प्राणिनामावासः अधिष्ठानत्वात्। विष्णौ,
**भूति** स्त्री० भू-क्तिन्। भवने, अणिमाद्यष्टविधैश्वर्य्ये, शिवाङ्गभस्मनि, भूषणे, सम्पत्तौ, जात्यां, वृद्धिनामौषधे च।
**भूतिक** पु० भूत्या सम्पत्त्या कायति कै-क। भूनिम्बे, यमान्याञ्च चन्दने, कट्फले कत्तृणे च न०। पृ०व० दीर्घः। भूतीकोऽप्यत्र
**भूतृण** न० भुवः तृणं गन्धवत्त्वात् (गन्धखड) तृणभेदे। रोहिषतृणे पु०। [कणर्याम् (उन्दुरकानि)
**भूदरीभवा** स्त्री० भूदर्यां भूमिबिले भवति भू-अच्। आखु-
**भूदार** पु० भुवं दृणाति खनति मुस्ताद्यर्थम् दृ-अण्। सूकरे
**भूदेव** पु० भुवि देव इव। विप्रे।
**भूधर** पु० भुवं धरति धृ-अच्। पर्वते। [लक्याम्
**भूधात्री** स्त्री० भुवि लग्ना धात्री आमलकी शाक०। भूम्याम-
**भूनिम्ब** पु० भुवि लग्नः निम्बः शाक०। (चिराता) क्षुपभेदे।
**भूनीप** पु० भुवि लग्नो नीपः शाक०। भूमिकदम्बे।
**भूप** पु० भुवं पाति पा-क। भूमिपाले भूमिपादयोऽप्यत्र।
**भूपद** पु० भुवि पदं मूलं यस्य। वृक्षमात्रे। मल्लिकायां स्त्री० ङीप्
**भूपलाश** पु० भुवि पलाशं यस्य। विशल्यकारके क्षुपभेदे
**भूपाल** पु० भुवं पालयति पाल-अण्। भूपतौ।
**भूपेट** पु० भूपखेटः। राजादनीवृक्षे (पियासाल) तद्वीजस्य चिरञ्जि इति ख्यातस्य राजप्रियत्वात्तथात्वम्।
**भूभुज्** पु० भुवं भुङ्क्ते भनक्ति पालयति वा भुज-क्विप्। भूपाले
**भूभृत्** पु० भुवं बिभर्त्ति धारयति, पालयति वा भृ-क्विप्। पर्वते, भूपाले च।
**भूमन्** पु० बहोर्भावः इमनिच् नि० बहोर्भादेशः। बहुत्वे।
**भूमि(मी)** स्त्री० भवन्त्यस्मिन् भूतानि भू-मिक् वा ङीप्। पृथिव्याम्, स्थानमात्रे, जिह्वायां, योगशास्त्रोक्ते योगिनां चित्तस्यावस्थाभेदे, एकसङ्ख्यायाञ्च।

भूमिका स्त्री० भूमिरिव कायति कै-क । रचनायां 'अन्य-
रूपैर्यदन्यस्य प्रवेशस्तत्र भूमिकेत्युक्तो नाट्ये-अभिनेयपात्रादि-
वेशान्तरग्रहणे यन्दे-वक्तव्यकथोद्घाते, कदाचाङ्ग नैया-
यिकादिनिरात्मा प्रथमभूमिकायामवतारित इति सांख्य-
प्रवचनभाष्यम् ।

भूमिचम्पक पु०भूमिलग्नः चम्पकः शाक०। (भूइचांपा) वृक्षभेदे
भूमिज पु० भूमेर्जायते जन-ड । मङ्गलग्रहे, नरकासुरे,
भूमिकदम्बे, मनुष्ये च । भूमिजातमात्रे त्रि०।
भूमिजगुग्गुलु पु०कर्म०। आमाउरजाते गुग्गुलौ ।
भूमिपिशाच पु० भूमौ पिशाच इव । तालवृक्षे ।
भूमिमण्ड पु० भूमिं मण्डयति मण्ड-अण् । (झापरमाडि)
लताभेदे । [माधवीलतायाम् ।
भूमिमण्डपभूषणा स्त्री० भूमिं मण्डपमिव भूषयति भूष-ल्यु ।
भूमि(मी)रुह पु० भूम्यां भूमौ वा रोहति रुह-क । वृक्षे ।
भूरुहादयोऽप्यत्र । [लिह्-ल्यु । श्वे कृते ।
भूमिवर्द्धन पु०भूमिं वर्द्धयति स्वदेहस्थपार्थिवांशोपचयेन, वृध-
भूमिष्ठ पु० भूमौ तिष्ठति स्था-क अलु० षत्वम् । भूष्ठस्थे ।
भूमिस्पृश् पु० भूमिं स्पृशति स्पृश-क्विन् । वैश्ये, मनुष्ये, चौर-
भेदे खञ्जे, अन्धे च ।
भूमीन्द्र पु० भूमौ इन्द्र इव । नृपे । [नृपे
भूम्यामलकी स्त्री० भूमिलग्ना आमलकी शाक०। स्वनामख्याते
भूम्यामली स्त्री० भूम्या सह आमलति सम्बध्नाति आ+मल
अच् गौ०ङीष् । भूम्यामलक्याम् ।
भूयस् अव्य० भुवे भावाय यस्यति यस-भावे क्विप् । पुनरर्थे
भूयस् त्रि० अतिशयेन बहुः ईयसु नि० बहोर्भूादेशः ।
बहुतरे । स्त्रियां ङीप् । [प्रचुरे च ।
भूयिष्ठ त्रि० अतिशयेन बहुः इष्ठन् नि० भ्वादेशः । बहुतरे,
भूयुक्ता स्त्री० भुवा युक्ता संबद्धा । भूमिखर्जूर्याम् ।
भूरि पु० भू-क्रिन् । विष्णौ, शिवे, इन्द्रे च । स्वर्णे न०
प्रचुरे त्रि० । [गन्धद्रव्ये ।
भूरिगन्धा स्त्री० भूरिः प्रचुरो गन्धो यस्याः । मुरानाम-
भूरिगम पु०भूरि भारयुक्तत्वेऽपि बहु गच्छति गम-अच् । गर्दभे
भूरिदुग्धा स्त्री०भूरीणि दुग्धानि निर्यासा यस्याः । वृश्चिकाल्यां
भूरिपुष्पा स्त्री० भूरीणि पुष्पाण्यस्याः । शतपुष्पायाम् ।
भूरिफेना स्त्री० भूरीणि फेनान्यस्याः । (चामकषा) क्षुद्रवृक्षे
भूरिबला स्त्री०भूरीणि बलानि यस्याः पृ०व०। अतिबलायाम् ।
भूरिमल्ली स्त्री०भूरि बहु यथा स्यात् तथा मलति मल-अच्
गौरा०ङीष् । अम्बष्ठायाम् ।

भूरिमाय पु० भूरयः माया यस्य । शृगाले ।
भूरिशस् अव्य० भूरि-शस् । बहुश इत्यर्थे ।
भूरिश्रवस् पु० चन्द्रवंश्ये सोमदत्तसुते नृपभेदे ।
भूरुण्डी स्त्री० भुवं रुण्डति आच्छादयति रुडि आहतौ
(भागवदन्तो पठितः) अण् । (हातिशुंडा) वृक्षभेदे ।
भूर्ज्ज पु० ऊर्ज्ज-अच् ७त० । स्वनामख्याते वल्कप्रधाने वृक्षे ।
'भूर्ज्जत्वचः स्पर्शवतीर्दधाना' इति कुमारः ।
भूर्ज्जपत्र पु० भुवि-ऊर्ज्जं पत्रं यस्य । स्वनामख्याते वृक्षे
भूर्ज्जत्वगादयोऽप्यत्र । [योन्यस्थाने लोके ।
भूर् पु० भू-रक् । अन्तरीक्षलोकादधःस्थे चरसंचार-
भूलग्ना स्त्री० भुवि लग्ना । शङ्खपुष्प्याम् । [र्योदयोन्नत।
भूवदरी स्त्री० भुवि लग्ना बदरी । क्षुद्रकोल्याम् । भूमिबद-
भूष भूषणे वा पु० उभ०पक्षे भ्वा०पर०सक०सेट् । भूषयति-
ते भूषति अबूभुषत्-त अभूषीत् ।
भूषण न० भूष्यतेऽनेन भूष-करणे ल्युट् । अलङ्कारे किरी-
टादौ । भावे ल्युट् । भूषायाम् ।
भूषा स्त्री० भूष-अ । मण्डनक्रियायाम् ।
भूषित त्रि० भूष-क्त । अलङ्कृते ।
भूष्णु त्रि० भू-ग्स्नु । भवनशीले ।
भूस्तृण न० भुवः तृणम् ष० तत् । भूतृणे ।
भृ भरणे भ्वा०उभ०सक०अनिट् । भरति-ते अभार्षीत् ।
भृ धारणे, पोषणे च जु० उभ०सक०अनिट् । बिभर्त्ति बिभृते
अभार्षीत् अभृत । बिभराञ्चकार-बभार । अप् भरद्वः ।
क्ति-नप् च । भर्तिमः ।
भृकुंस(श) पु० भ्रुवा कुंसा(शा) इङ्गितज्ञापनं यस्य ष० भ्रुवः
संप्रसारणम् । स्त्रीवेशधारिणि नटे ।
भृकुटि(टी) स्त्री० भ्रुवः कुटिः भङ्गिः संप्रसारणं वा ङीप् ।
भ्रूभङ्गे। 'रचितभृकुटिबन्धं नन्दिना द्वारिरुद्धे इति हरविलासः
भृगु पु० भ्रस्ज-कु ष० । मुनिभेदे शिवे,शुक्रग्रहे, पर्वतसानौ,
जमदग्नौ, उच्चप्रदेशे च। भृगोर्गोत्रापत्यम् अण् बहुषु लुक् ।
भार्गवसङ्घे बहु० । [इष्टमपतितो हि तेन रक्षा हता
भृगुपति पु० भृगूणां भार्गववंश्यानां पतिः । परशुरामे, तेषां
भृगुसुत पु० ६त० । परशुरामे, शुक्राचार्ये च ।
भृङ्ग पु० भृ-गन् कित् नुट् च । भ्रमरे कलिङ्गविहगे, भृङ्ग-
राजे,जारे,भृङ्गारे, भृङ्गरोटे च । अभ्रके, गुडत्वचि न०
भृङ्गजा स्त्री०भृङ्ग इव जायते जन ड । भार्ग्याम् । अगुरुचन्दने न०
भृङ्गपर्णी स्त्री० भृङ्गस्य वर्णं पर्णं यस्याः ङीप् । सूक्ष्मै-
लायाम् । स्वार्थे कन् । अत्रैव ।

**भृङ्गप्रिया** स्त्री॰ ६त॰। माधवीलतायां मधुरमधुमत्त्वात् तत्-प्रियत्वम्। [नलोपः। भृङ्गराजे (केशुरिया)।

**भृङ्गरज** पु॰ भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज-अच् ष॰

**भृङ्गरजस्** पु॰ भृङ्गान् रजयति अन्तर्भूतण्यर्थे रन्ज-असुन् नलोपः। भृङ्गराजे। [(केशुरिया)। क्षुपभेदे।

**भृङ्गराज** पु॰ भृङ्गान् रजयति रन्ज-णिच-कनिन् नि॰। ६त॰।

**भृङ्गरिट(टि)** पु॰ भृङ्गइव रटति अच्, इन वा ष॰अतद्रूत्त्वम्। शिवपार्श्वचरभेदे। [भेदे

**भृङ्गरोल** पु॰ भृङ्गइव रौति रु-लच्। (भीमरुल) ख्याते कीट

**भृङ्गवल्लभ** पु॰ ६त॰। धाराकदम्बे, भूमिकदम्बे च। भृङ्गइव वल्लभः। भूमिजम्ब्वाम् स्त्री॰। [यूथिकायाम् (युइ)

**भृङ्गानन्दा** स्त्री॰ भृङ्गान् आनन्दयति आ+नन्द+णिच्-अच्।

**भृङ्गाभीष्ट** पु॰ अभि+इष क्त ६त॰। आम्रवृक्षे।

**भृङ्गार** पु॰ बिभर्त्ति जलं भृ-आरक् नि॰। स्वर्णमयजलपात्रे, जलपात्रभेदे च (झारी)। भृङ्ग इव ऋच्छति ऋ-अच्। भृङ्गराजे। लवङ्गे, सुवर्णे च न॰। झिल्लीनामकीटे स्त्री॰ गौरा॰ङीष्। स्वार्थे कन्। तत्रैव।

**भृङ्गि** पु॰भृ-गिक् नुट् च। शिवपार्श्वचरभेदे।

**भृङ्गिन्** पु॰ भृङ्ग अस्त्यर्थे इनि। शिवपार्श्वचरभेदे वटवृक्षे च।

**भृङ्गी** स्त्री॰ भृ-गन् कित् नुट् च गौरा॰ङीष्। अतिविषायाम्

**भृङ्गीफल** पु॰ भृङ्ग्या अतिविषाया इव फलमस्य। आम्रातके

**भृङ्गेष्टा** स्त्री॰ ६त॰। घृतकुमार्य्यां,भार्ग्यां, तरुण्यां, काकजङ्घायाञ्च

**भृज** भर्ज्जने भ्वा॰ आत्म॰ सक॰ सेट्। भर्ज्जते अभर्ज्जिष्ट। निष्ठायां नेट् भृक्तः। [(भाजनाखोला) भर्ज्जनपात्रभेदे

**भृज्जन** पु॰ भृज्जतेऽनेन भ्रस्ज-ल्युट् ष॰ संप्रसारणम्।

**भृतक** त्रि॰ भृ-क्त स्वार्थे कन्। वेतनेन कर्म्मकरे, 'भृतकाध्यापको यश्चे'ति मनुः। [मूल्ये च।

**भृति** स्त्री॰ भृ-क्तिन्। भरणे, पोषणे च। करणे क्तिन्। वेतने,

**भृतिभुज्** त्रि॰ भृतिं वेतनं भुङ्क्ते भुज-क्विप्। वेतनोपजीविनि कर्म्मकरे।

**भृत्य** पु॰भृ-क्यप् तुक् च। दासे। भरणीये त्रि॰। भावे क्यप्। भरणे स्त्री॰टाप्। 'कुमारभृत्याकुशलै'रिति रघुः।

**भृ(भ्र)मि** पु॰ भ्रम-इन् ष॰वा संप्रसारणम्। (घूर्णी) वायुभेदे, भ्रमणे च। 'किमु चक्रभ्रमिकारिता गुण' इति नैषधम्

**भृश** अधःपतने दि॰पर॰अक॰ सेट्। भृश्यति। अभृशत् अभशीत्। क्त्वा वेट्।

**भृश** न॰ भृश-क। अतिशये। तद्वति त्रि॰।

**भृष्ट** त्रि॰ भ्रस्ज-क्त। जलोपसेकं विना वालुकाग्निसंयोगेन पक्वे

**भॄ** भर्ज्जने भर्त्सने भरणे च क्र्यादि॰धा॰पर॰सक॰सेट्। भृणाति अभारीत्। [मण्डूकपर्ण्यां स्त्री॰ ङीष्।

**भेक** पु॰ भी-कन् कस्य नेत्त्वम्। (व्याङ) जन्तुभेदे, मेघे च।

**भेकपर्णी** स्त्री॰ भेकइव पर्णमस्याः ङीप्। मण्डूकपर्ण्याम्

**भेड** पु॰ भी-ड तस्य नेत्त्वम्। मेषे, (भेड़ा)

**भेद** पु॰ भिद-घञ्। पृथक्करणे अन्यतो विशेषे, राज्ञां विपक्षग्राहनार्थं तत्पक्षीयामात्यादिभेदने, न्यायमतोक्ते अन्योन्याभावे च यथा घटात् पटस्य भेदः (तादात्म्येनाभावः)

**भेदक** त्रि॰ भिद-ण्वुल्। रेचके, विदारके,भेदकारके, विशेषणे च

**भेदन** त्रि॰ भेदयति भिद-णिच् ल्यु। विरेचने, विशेषणे च हिङ्गौ अम्लवेतसे पु॰ न॰। भिद-भावे ल्युट्। विदारणे

**भेदित** त्रि॰भिद-णिच्-क्त। विदारिते,भिन्ने च। [यदि'त्यमरः

**भेद्य** त्रि॰भिद-ण्यत्। विदार्य्ये विशेष्ये च। 'त्रिषेषां भेद्यगामि

**भेरि(री)** स्त्री॰ भी-क्रि वद्धा॰ नि॰ वा ङीष्। दृहद्ढक्कायाम् पटहे 'रवः प्रगल्भाहतभेरिसम्भव' इति कुमारः कृत्-ल्बलदन्तः 'ततः शङ्खाश्च भेर्य्यश्चे'ति गीता।

**भेल** पु॰ भी-रन् रस्य लः। नद्यादितारणार्थे प्लवे (भेला) ख्याते, मटार्थे। स्वार्थे कन् तत्रैव। [चडि न ह्रस्वः

**भेष** भये भ्वा॰उभ॰अक॰सेट् भेषति ते अभेषीत् अभेषिष्ट।

**भेषज** न॰ भेष-घञ् भेषं रोगभयं जयति जि-ड। औषधे।

**भेषजाङ्ग** न॰ ६त॰। औषधस्य अनुपेये वस्तुनि।

**भैक्ष** न॰भिक्षैव तत्समूहो वा अण्। भिक्षायां, भिक्षासमूहे च

**भैक्षचर्य्या** स्त्री॰ चर-भावे क्यप् ६त॰। भिक्षाक्रियाकरणे।

**भैक्ष्य** न॰ भिक्षाणां समूहः ष्यञ्। भिक्षासमूहे।

**भैमी** स्त्री॰ भीमेनोपासितां तस्येदं वा अण् ङीप्। माघशुक्लैकादश्याम्, भीमराजस्य पुत्त्र्यां दमयन्त्याञ्च। 'विहाय भैमीमपदर्पया कये'ति नैषधम्।

**भैरव** न॰भीरोरिदम् अण्। भये, तद्वति त्रि॰। नाट्यादिप्रसिद्धे भयानके रसे। भयसाधने त्रि॰स्त्रियां ङीप्। शङ्करे,तदवतारभेदे रागभेदे, नदभेदे च पु॰। शिवपत्न्यां स्त्री॰ङीप्

**भैषज्य** न॰ भेषजमेव भिषजः कर्म वा ष्यञ्। औषधे।

**भो** अव्य॰ भा डो। सम्बोधने।

**भोग** पु॰ भुज-कर्म्मादौ घञ्। सुखे, सुखदुःखाद्यनुभवे, पण्यस्त्रीणां भाटकादिरूपे वेतने,सर्पस्य फणायां, तत्काये, धने, पालने,आहारे च। अर्श आद्यच्। सर्पे। आधारे घञ्। देहे,माने च। ज्योतिषोक्ते ग्रहाणां तत्तद्राशिस्थितौ,भूम्यादिषु उत्पन्नद्रव्यविनियोगे,स्रपेष्टविनियोगे च 'बन्धूनाधविभक्तानां भोगं नैव प्रदापयेदि'ति स्मृतिः।

**भोगदेह** पु० भुज्यते सुखदुःखादिकमत्र भुज-आधारे घञ् कर्म० । पुण्यपापफलभोगार्थे देहे, 'प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते' इति स्मृतिः ।

**भोगभूमि** स्त्री० भोगस्यैव भूमिः स्थानं । भारतवर्षादिके वर्षे तत्र हि भोगएव न कर्म इति शास्त्रे स्थितम् ।

**भोगवती** स्त्री० भोगः सर्पशरीरं भूम्नाऽस्त्यस्याम् मतुप् मस्य वः । पातालगङ्गायाम् 'भोगवती च पाताले' इति पुराणम् ।

**भोगिन्** स्त्री० भोग+अस्त्यर्थे इनि । सर्पे, नृपे, ग्रामाध्यक्षे, नापिते च । भोगयुक्ते त्रि० । भोगवदादयः सर्पे । भोगयुक्ते त्रि०

**भोगिवल्लभ** पु० ६त० । चन्दने ।

**भोगीन्द्र** पु० भोगिनामिन्द्रः स्वामित्वात्, भोगी इन्द्र इव वा ; अनन्तदेवे वासुकौ च भोगीशादयोऽप्यत्र ।

**भोग्य** न० भुज-ण्यत् कुत्वम् । धने, धान्ये च । भोगार्हे त्रि० । भोगार्हस्त्रियां, वेश्यायाञ्च स्त्री० ।

**भोज** पु० भुज-अच् । स्वनामख्याते देशभेदे धारापुरस्य नृपभेदे 'धन्यः श्रीभोजराजस्त्रिभुवनविजयी'त्युद्भटः ।

**भोजकट** पु० भोजाख्ये देशे ।

**भोजन** न० भुज-ल्युट् । कठिनद्रव्यस्य गलबिलाधःसंयोजने ।

**भोज्य** त्रि०भुज-ण्यत् भक्षणार्थत्वान्न कुत्वम् । भक्षणीयद्रव्यमात्रे

**भोटाङ्ग** पु० (भोटान) देशभेदे ।

**भोस्** अव्य० भा-डोसि । सम्बोधने, प्रश्ने विषादे च ।

**भौतिक** त्रि० भूतानि पृथिव्यादीनि पिशाचान् वा अधिकृत्य जातानि ठक् । भूताधिकारेण जाते उपद्रवे व्याध्यादौ ।

**भौम** पु० भूमेरपत्यं तस्या इदं वा अण् । नरकासुरे 'त्वयि भौमं गते जेतु'मिति माघः । मङ्गलग्रहे च । भूमिभवे त्रि० ।

**भौमरत्न** न० भौमप्रियं रत्नं शाक० । प्रवाले ।

**भौमिक** त्रि० भूमौ अधिकृतः ठक् । भूम्यधिकारिणि ।

**भौरिक** त्रि० भूरिणि स्वर्णे अधिकृतः ठञ् । स्वर्णाध्यक्षे ।

**भ्यस** भये भ्वा०आ०अक०सेट् । भ्यसते अभ्यसिष्ट ।

**भ्रण** शब्दे भ्वा०पर०सक०सेट् । भ्रणति अभ्राणीत् अभ्रणीत्

**भ्रकुं(ग)स** पु० भ्रुवा कुं(गां)सा यस्य पृ०नि० । भकुंसशब्दार्थे ।

**भ्रकुटि(टी)** स्त्री० भ्रुवः कुटिर्भङ्गः पृ० वा ङीप् । भ्रूभङ्गे ।

**भ्रण** चलने भ्वा० पर०सक०सेट् । भ्रमति अभ्रमत् अभ्रमीत्

**भ्रम** चलने दिवा०पर०सक०सेट् शमा० । भ्राम्यति अभ्रमीत्

**भ्रम** चलने, भ्वा०पर०अक०सेट् । भ्रमति अभ्रमीत् फणा० भ्रेमतुः बभ्रमतुः (चङि न ह्रस्वः । अबभ्रामत् ।

**भ्रम** पु० भ्रम-घञ् । मिथ्याज्ञाने (अयथाभूतस्य वस्तुनोऽन्यथात्वेन ज्ञाने) जलनिर्गमस्थाने, कुन्दे, (कुंद) भ्रमणे च ।

**भ्रमर** पु० भ्रम-करन् । मधुकरे ।

**भ्रमरक** पु० भ्रमर इव कायति कै-क । ललाटलम्बिते भ्रमरतुल्ये चूर्णकुन्तले । स्वार्थे कन् । भ्रमरे, कन्दुके, यालभूषिकायाञ्च

**भ्रमरप्रिय** पु० ६त० । धाराकदम्बे ।

**भ्रमरातिथि** पु० भ्रमरः अतिथिर्यस्य । चम्पके ।

**भ्रमरानन्द** पु० भ्रमरान् आनन्दयति आ+नन्द-णिच्-अच् । बकुले । [ललाटस्थिते भ्रमरतुल्ये चूर्णकुन्तले ।

**भ्रमरालक** पु० भ्रमर इव अलति पर्याप्नोति अल-ण्वुल् ।

**भ्रमरी** स्त्री० भ्रम-करन् गौ०ङीष् । जतुकायां भ्रमरभार्यायाञ्च

**भ्रमरेष्ट** पु० ६त० । श्योनाकवृक्षे । भार्ग्यां भूमिजम्ब्वाञ्च स्त्री०

**भ्रमरोत्सवा** स्त्री०भ्रमराणामुत्सवो मोदो यत्र । माधवीलतायाम्

**भ्रंश** अधःपतने दि०पर०सक०सेट् । भ्रश्यति अभ्रंशीत् अभ्रशीत् । क्त्वा वेट् ।

**भ्रष्ट** त्रि० भ्रंश-क्त । च्युते अधःपतिते । [बभ्रज्ज

**भ्रस्ज** पाके तु०उ०सक०अनिट् । भृज्जति अभ्राक्षीत् । बभर्ज-

**भ्राज** दीप्तौ भ्वा०आत्म०फणा०अक०सेट् । भ्राजते अभ्राजिष्ट भ्रेजे बभ्राजे । चङि वा ह्रस्वः । अबभ्राजत् ।

**भ्राजिष्णु** त्रि० भ्राज-इष्णुच् । दीप्तिशीले ।

**भ्रातृ** पु० भ्राज-तृच् पृ० । एकपितृजाते (भाइ) इति ख्याते स्वसा सहोक्तौ । भ्रातृभगिन्योः द्वि०व० ।

**भ्रातृज** पु०भ्रातुर्जायते जन-ड । भ्रातुष्पुत्रे । तत्कन्यायां स्त्री०

**भ्रातृव्य** पु० भ्रातुः पुत्रः भ्रातृ+व्यत् । भ्रातुष्पुत्रे, शत्रौ च

**भ्रातृश्वशुर** पु०भ्रातापि पत्युर्ज्येष्ठभ्रातापि श्वशुरस्थानीयत्वात् पितृतुल्यत्वात् । (भासुर) भर्त्तुर्ज्येष्ठभ्रातरि 'भर्त्तृश्वशुरता ज्येष्ठे' इति भारतान्तरम् । [त्रि०

**भ्रात्रीय** पु०भ्रातुरपत्यमिदं वा छ । भ्रातुष्पुत्रे भ्रातृसम्बन्धिनि

**भ्रान्त** न० भ्रम-भावे क्त । भ्रमणे 'जनस्थाने भ्रान्त'मिति नाटकम् । कर्त्तरि क्त मिथ्याज्ञानयुक्ते, भ्रमणयुक्ते च त्रि० । धुस्तूरे पु० ।

**भ्रान्ति** स्त्री० भ्रम-क्तिन् । भ्रमणे, अयथार्थज्ञाने च ।

**भ्रान्तिमत्** पु० अलङ्कारोक्ते अर्थालङ्कारभेदे ।

**भ्रामक** पु० भ्रमयति भ्रम-ण्वुल् । शृगाले, धूर्त्ते, सूर्यावर्त्ते मणौ, अयस्कान्ते प्रस्तरे च ।

**भ्रामर** न० भ्रमरेण संभृतं क्षौद्रादितम् तस्येदं वा अण् मधुनि । भ्रमरसम्बन्धिनि त्रि० अयस्कान्ते पु० । 'भ्रामरं रूपं कृत्वासंख्येयषट्पदं'मित्युपक्रम्य 'भ्रामरीति च मां लोकाः' इति चण्डयुक्ते चण्डीमूर्त्तिभेदे ।

**भ्राश** भासे भ्वा०प०फणा०अक०सेट् । भ्राशते भ्राश्यते अभ्रा-

गिष्ट । भ्रेशे बभ्राशे । चङि न ह्रस्वः । अधु भ्राशयुः ।

**भ्राष्ट्र** न० भ्रष्टस्येदं तत्पचनसाधनत्वात् (भाजनाखोला) भर्ज्जन पात्रभेदे । भ्रष्टुरिदम् अण् । भ्राष्ट्रमित्यप्यत्र ।

**भ्रास** दीप्तौ भ्राशवत् सर्व्वम् ।

**भ्री** भये अक०भरणे सक०क्र्या०वा प्वा०पर०अनिट् । भ्रीणाति भ्रिणाति अभ्रैषीत् । [अभ्रुडीत्

**भ्रुड** संवरणे सक० संघाते अक० तु० कु० पर० सेट् । भ्रुडति

**भ्रु(भ्रू)कुंस** पु०भ्रुवः कुंसा यस्य पृ० वा ह्रस्वः । भ्रकुंसवत् ।

**भ्रु(भ्रू)कुटि** ६त०। पृ०वा ह्रस्वः । भ्रकुटिवत् सर्व्वम् ।

**भ्रू** स्त्री० भ्रम-डू । नेत्रयोरूर्द्ध्वस्थायां रोमराजौ ।

**भ्रूक्षेप** पु० ६त० । भ्रूभङ्गे सङ्केतज्ञापनाय भ्रुवोस्तिर्य्यक्चालने ‘भ्रूक्षेपमात्रानुमितप्रवेशामि’ति कुमारः । [अबुभ्रुणत ।

**भ्रूण** आशायां विशङ्कायाञ्च चु० आत्म०सक०सेट् । भ्रूणयते

**भ्रूण** पु० भ्रूण-घञ् । स्त्रीणां गर्भे, बालके च ।

**भ्रूणघ्न** त्रि० भ्रूणं गर्भं हन्ति हन-क । भ्रूणहत्याकारके । क्विप् भ्रूणहाप्यत्र । [डुपप्रेत्रसुखस्य तस्ये’ति कुमारः

**भ्रूभङ्ग** पु०६त० । क्रोधादिज्ञापनार्थं भ्रुवस्तिर्य्यक्चालने ‘भ्रूभङ्ग

**भ्रेज** भासि भ्वा०आत्म०अक०सेट् । भेजते अभ्रेजिष्ट । चङि न ह्रस्वः ।

**भ्रे(भ्ले)ष** पतने चलने च अक०भ्वा०उभ०सेट् । भ्रे(भ्ले)षति ते अभ्रे(भ्ले)षीत् अभ्रे(भ्ले)षिष्ट । चङि न ह्रस्वः ।

**भ्रेष** पु० भ्रेष-घञ् । उचितस्थानात् पतने ।

**भ्लक्ष** भक्षणे भ्वा०उभ०सक०सेट् । भ्लक्षति ते । अभ्लक्षीत् । अभ्लक्षिष्ट । दुर्गमते भ्लक्षधातुरयम् ।

**भ्लाश** दीप्तौ वा दि०पक्षे भ्वा०आ०अक०सेट् फणा० । भ्लाश्यते भ्लाशते अभ्लाशिष्ट भ्लेशे बभ्लाशे । (अधु) भ्लाशयुः । वोप देवमते भ्लाशधातुरयम् ।

# म

**म** पु०मा-क । चन्द्रे, शिवे, ब्रह्मणि, यमे, समये, मधुसूदने च शिवे हलन्तमकारोपि ‘मकारस्तु महेश्वर’ इति प्रणवा-न्तर्गतमकारार्थोक्तिः ।

**मक** भूषे गतौ च भ्वा०आ०सक०सेट् इदित् । मङ्कते अमङ्किष्ट

**मकर** पु० मनुष्यं करोति हिनस्ति कृ-अच् पृ० । जल-जन्तुभेदे । मकराकारत्वात् मेषादितो दशमे राशौ च । मकि-घञ् पृ० तं राति रा-क । निधिभेदे ।

**मकरकुण्डल** पु० मकराकृति कुण्डलं कर्णभूषणम् । मकरा-कृतौ कर्णभूषणे ।

**मकरकेतन** पु० मकरः मकरचिह्नितः केतनो ध्वजो यस्य । कन्दर्पे मकरकेतुप्रभृतयोप्यत्र ।

**मकरन्द** पु० मकरमपि द्यति कामजनकत्वात् दो-अवखण्डने क पृ० सुम् । पुष्पमधौ, कुन्दवृक्षे च । किञ्जल्के न० ।

**मकरन्दवती** स्त्री०मकरन्द+बाहुल्ये मतुप् मस्य वः ङीप् । पाटलायाम् । मधुविशिष्टे त्रि० । [करञ्जभेदे ।

**मकराकार** पु०मकरस्येवाकारः फलस्य यस्य । (काटाकरमचा)

**मकरालय** पु० ६त० । समुद्रे । मकरावासादयोप्यत्र ।

**मकुट** न० मकि-भूषणे उट पृ० । शिरोभूषणे मुकुटे ।

**मकुर** पु० मकि-उरच् पृ० । दर्पणे, बकुलवृक्षे, कुलालदण्डे, कलिकायाञ्च ।

**मकुल** पु०न० मकि-उलच् पृ० । मुकुले, बकुलवृक्षे च ।

**मकुष्टक** पु० मकि-भूषायां उ-पृ० मकुं भूषां स्तकति प्रति-हन्ति स्तक-अच् सुषामा० षत्वम् । वनमुद्गे (मुगानि) ।

**मकुष्ठ** पु० कुत्सितं तिष्ठति स्था-क अम्बष्ठा० षत्वम् मोयते मा-ड कर्म्म० । व्रीहिभेदे, मृदुगामिनि त्रि० । स्वार्थे कन् । वनमुद्गे ।

**मकूलक** पु० मकि-ऊलच् पृ० । दन्तीवृक्षे, मुकुले च ।

**मक्क** गतौ भ्वा०आ०सक०सेट् । मक्कते अमक्किष्ट ।

**मक्कुल** न० मक्क-उलच् । शिलाजतुनि ।

**मक्ष** रोषे संघाते च भ्वा०पर०अक०सेट् । मक्षति अमक्षीत् ।

**मक्षवीर्य्य** पु० मक्षं संहतं वीर्य्यं यस्मात् ५ब० । पियालवृक्षे ।

**मक्षि(क्षी)का** स्त्री० मक्ष-कुन् टाप् अतइत्त्वम् पृ० वा दीर्घः । (माछि) कीटभेदे । [सिक्थकाधारे पदार्थे (मौचाक) ।

**मक्षिकासन** पु० ६त० मक्ष-सिकन् तया आस्यतेऽत्र ल्युट् ।

**मख** सर्पणे भ्वा०पर०सक०सेट् । मखति अमाखीत् अमखीत् ।

**मख** सर्पणे भ्वा०पर०सक०सेट् इदित् । मङ्खति अमङ्खीत् ।

**मख** पु० मख-घ । यज्ञे । [जलजाते मूलजे फलभेदे ।

**मखान्न** न० मखकाले भोज्यमन्नं तुल्यत्वात् । (माखना)

**मग** सर्पणे भ्वा०पर० सक०सेट् इदित् । मङ्गति अमङ्गीत् ।

**मगध** पु० मङ्गते अधोगम्यतेऽनेन मगि-अच् पृ० मगं दोषं मार्ग वा दधाति धा-क । देशभेदे तद्देशस्थे जने ब०व० ।

**मगधोद्भवा** स्त्री० मगधदेशे बाहुल्येनोद्भवति सा । पिप्प-ल्याम् तद्देशप्रचुरभवत्वात्तथात्वम् ।

**मघ** कैतवे, द्यूतक्रीडादौ अक० गतौ निन्दायां आरम्भे च सक० भ्वा०आ०सेट् इदित् । मङ्घते अमङ्घिष्ट ।

**मघ** भूषणे भ्वा०पर०सक०सेट् इदित् । मङ्घति अमङ्घीत् ।

**मघवत्** पु० मह-पूजायां क हस्य घः मघः पूजा अस्त्यर्थे मतुप्

मस्य वः। इन्द्रे मघवन्तौ मघवतः। तत्पत्न्यां ङीप् मघवती। [तत्पत्न्यां ङीप् मघोनी।

**मघवन्** पु० मह-कनिन् नि०। इन्द्रे मघवा मघवानौ। मघोनः।

**मघा** स्त्री० मह-घ ह्रस्य घत्वम्। अश्विन्यवधिके दशमे नक्षत्रे तस्याश्च पञ्चतारात्मकत्वात् बहुत्वमपि 'पितरः स्पृहयन्त्यन्नमष्टकासु मघासु चेति स्मृतिः। मघां मूलञ्च वर्जयेदिति मघायां पिण्डदानञ्चेति स्मृतिस्तु समुदायस्यैकत्वाभिप्रायेण।

**मघात्रयोदशी** स्त्री० मघानक्षत्रेण युक्ता त्रयोदशी। भाद्रकृष्णत्रयोदश्यां तत्रैव मघानक्षत्रसंयोगसम्भवात् 'प्रौष्ठपद्यामतीतायां मघायुक्ता त्रयोदशी'मिति स्मृतिः।

**मघी** पु० मघानक्षत्रे भवः अण् वृद्धौ ह्र० ह्रस्वः ङीप्। मघानक्षत्रस्य रविभुज्यमानयुक्ते काले सौरभाद्रमासे जायमाने (आउस) धान्ये।

**मङ्कुर** पु० मकि-उरच्। दर्पणे।

**मङ्क्षु** अव्य०मस्जि-उन्। शैघ्र्ये, स्वार्थे च। ह०खस्य चत्वमपि

**मङ्गल** पु० मगि-अलच्। भूमिसुते, ग्रहभेदे प्रशस्ते अभीष्टार्थसिद्धौ च। तद्वति त्रि०। दुर्गायां, हरिद्रायां, दूर्वायां, पतिव्रतायाञ्च स्त्री०। [दुर्गाभेदे।

**मङ्गलचण्डिका** स्त्री० मङ्गलवारे पूज्यायां चण्डिकायां

**मङ्गलच्छाय** पु० मङ्गला प्रशस्ता छाया यस्य। वटवृक्षे।

**मङ्गलपाठक** पु० मङ्गलार्थं स्तुतीः पठति पठ-ण्वुल्। स्तुतिपाठके 'आ वृथामङ्गलपाठक! शैलूषापसदेति वेणीसंहारः।

**मङ्गलप्रदा** स्त्री० मङ्गलं प्रददाति प्र+दा-क। हरिद्रायाम्।

**मङ्गल्य** न० मङ्गलाय हितं यत्। चन्दने, मङ्गलागुरुणि, स्वर्णे, सिन्दूरे, दध्नि च। रुचिरे मङ्गलकरे च त्रि०। 'सर्व्वमङ्गलमङ्गल्ये' इति चण्डी। अश्वत्थे, बिल्वे, जीरके, मसूरके, नारिकेले, कपित्थे, रीठाकरञ्जे, त्रायमाणौषधेच पु०

**मङ्गल्यक** पु० मङ्गलग्रहस्य प्रियः तद्दोषनिवारणार्थं दीयमानत्वेन शास्त्रविधानात्। मसूरे।

**मङ्गल्यकुसुमा** स्त्री० मङ्गल्यं कुसुमं यस्याः। शतपुष्पाम्।

**मङ्गल्या** स्त्री० मङ्गलाय हिता यत्। जीवन्त्यां, मल्लिकागन्धयुक्तागुरुणि, रोचनायाम्, जवाकुसुमग्राम्, शम्यां, शुक्लवचायां, प्रियङ्गौ, माषपर्ण्यां, शतपुष्पाम्, ऋद्धिनामौषधौ, हरिद्रायां, दूर्वायां, दुर्गायाञ्च स्त्री०। [अमङ्घिष्ट।

**मच** दम्भे शाठ्ये च अक० भ्वा०आ० सेट् इदित्। मञ्चते

**मच** उच्चताकरणे, धारणे, पूजायां च सक० दीप्तौ अक० भ्वा० आत्म० सेट् इदित्। मञ्चते अमञ्चिष्ट।

**मचर्चिका** स्त्री० चर्च-धात्वर्थनिर्देशे ण्वुल् मस्य शम्भोरिव चर्चिका ध्यानम्। प्रशस्ते। अव्ययमन्त्रोऽयमित्येके।

**मज्जकृत्** न० मज्जानं करोति कृ-क्विप्। देहस्थे अस्थिरूपे कोषे अन्नादिषु भुक्तेषु रसादिपरिपाकेन क्रमेण शोणितमांसमेदस्थिमज्जशुक्राणामुत्पत्तेः अस्थ्नः मज्जोत्पत्तिम्

**मज्जन्** पु० मस्ज-कनिन्। अस्थिजाते अस्थिमध्यस्थे स्नेहाकारे पदार्थे, वृक्षादेः सारांशे च।

**मज्जन** न० मस्ज-ल्युट्। स्नाने।

**मज्जसमुद्भव** न० मज्ज्ञः समुद्भवति सम्+उद्+भू-अच् ५त०। शुक्रे तस्य मज्जाजातत्वम् मज्जकृच्छब्दे द्रष्टव्यम्।

**मज्जा** स्त्री० मस्ज-अच् टाप्। अस्थिसारे वृक्षादेः सारांशे च

**मज्जाज** न० मज्जातो जायते जन-ड। भूमिजे गुग्गुलौ।

**मज्जारस** पु० मज्जायाः रसः परिपाकः। शुक्रे तस्य मज्जासम्भवत्वं मज्जकृच्छब्दे उक्तम्।

**मञ्च** पु० मचि-उच्छ्राये घञ्। खट्वायाम् (मांचा) वंशनिर्म्मिते उच्चासने, उच्चमण्डपभेदे 'मञ्चस्य' रघुनन्दनमि'ति पुराणम्। स्वार्थे कन्। 'तत्रैव दृष्टोऽन्यः पतिरेष मञ्चकगतः' इति सा०द०।

**मञ्जर** पु० मन्ज-अरच्। तिलकवृक्षे, मुक्तायाञ्च।

**मञ्जरि(री)** स्त्री० मञ्जु ऋच्छति ऋ-इन् शक० पर०वा ङीप्। अभिनवोद्गतायां सुकुमारायां पल्लवाङ्कुररूपायां वल्लर्याम् ङीवन्नस्य, नत, मुक्तायां, तिलकलतायां, तुलस्याञ्च।

**मञ्जरीनम्र** पु० मञ्जर्य्यैव तदवस्थायामपि नम्रः। वेतसे।

**मञ्जि(ञ्जी)** स्त्री० मनुज-इन् वा ङीप्। मञ्जर्य्याम्।

**मञ्जिफला** स्त्री० मञ्जिः मञ्जरी फले यस्याः। कदल्याम्

**मञ्जिष्ठा** स्त्री० अतिशयेन मञ्जिमती इष्ठन्। स्वनामख्यातायां लतायाम्।

**मञ्जीर** न० मनुज-ध्वनौ ईरन्। नूपुरे, 'मञ्जुमणिमञ्जीरे कलगम्भीरे' इति सा०द०। दधिमन्थनदण्डबन्धस्तम्भे च

**मञ्जु** त्रि० मनुज-उन्। मनोहरे।

**मञ्जुघोष** पु० तन्त्रोक्ते उपास्यदेवभेदे।

**मञ्जुल** त्रि० मनुज-उलच्। मनोहरे, निकुञ्जे शैवले च न०।

**मञ्जूषा** स्त्री०मनुज ऊषन्। (पेटरा) पेटिकायाम् मञ्जिष्ठायाञ्च

**मट** सादे भ्वा० प०सक० सेट्। मटति अमटीत् अमाटीत्।

**मटची** स्त्री० मट-अचि ङीप्। पाषाणवृष्टौ 'मटचीहतेषु कुरुष्वि'ति छान्दोग्यश्रुतिः। [ठीलू

**मठ** वासे अक०मर्द्दने सक०भ्वा०पर०सेट्। मठति अमठीत्-अमा-

**मठ** आध्याने आ०सक० सेट् इदित्। मण्ठते अमण्ठिष्ट।

**मठ** पु॰ मठत्यत्र मठ-घञर्थे क । छात्रादाद्यावासे, देवागारे, गन्त्रीरथे च । [त । विभागे भ्वा॰ आत्म॰ मण्डते ।

**मड** मोदे चु॰उभ॰अक॰ सेट् इदित् । मण्डयति-ते अममण्डत्

**मड** भूषणे चुरा॰उभ॰ पक्षे भ्वा॰पर॰सक॰सेट् इदित् । मण्डयति-ते मण्डति अममण्डत्-त अमण्डीत् ।

**मडक** पु॰ मडि-क्वुन् पृ॰ नलोपः । धान्यभेदे (मेडुया) ।

**मड्डु** पु॰ मज्जन्ति अन्ये शब्दा अत्र मज्ज+उ पृ॰ । वाद्यभेदे (विपुलडमरौ) । स्वार्थे कन् । अत्रैव ।

**मण** अव्यक्तशब्दे भ्वा॰प॰अक॰सेट् । मणति अमाणीत् अमणीत्

**मणि(णी)** पु॰ स्त्री॰ मण-इन् स्त्रीत्वपक्षे वा ङीप् । मुक्तादौ रत्ने 'मणिहारावलिरामणीयकमिति, स्फटनीलमणीरद्दत्विषेति च नैषधम् स्तम्भयपालभेदे अलिञ्जरे (जाला) लिङ्गाग्रे, नागभेदे मणिबन्धे च । स्वार्थे कन् अलिञ्जरे न॰।

**मणिकर्णिका** स्त्री॰मणिकर्णः मणिमयकर्णभूषणमस्त्यस्यां ठन् विष्णतपस्यादर्शनात् विस्मयेन शिवस्य मणिमयकुण्डल पतनस्थाने काशीस्थे तीर्थभेदे ।

**मणिकार** पु॰ मणिमयं भूषणं करोति कृ-अण् । (जहुरि) मणिमयभूषणकारके प्रत्यक्षादिचतुःखण्डात्मकतत्त्वार्थ-चिन्तामणिनामकग्रन्थकारे गङ्गेशोपाध्याये च

**मणिकूट** पु॰ मणीनां कूट इव मणिप्रचुरं कूटं शृङ्गं वास्य । उत्तरदेशस्थे पर्व्वतभेदे । [ऋषभाख्यौषधे च ।

**मणिच्छिद्रा** स्त्री॰ मणिरिव छिद्रमस्याम् । मेदानामौषधे,

**मणित** न॰ मण-क्त । रतिकाले स्त्रीणामव्यक्तशब्दभेदे ।

**मणिद्वीप** पु॰ मणिमयः मणिप्रचुरः द्वीपः । क्षीरसमुद्रमध्यस्थे ध्येये द्वीपभेदे ।

**मणिपर्व्वत** पु॰ इत॰ । पर्व्वतभेदे ।

**मणिपूर** न॰ मणिभिरिव पूर्य्यते प्रचुरदीप्तिमत्त्वात् । तन्त्रोक्ते नाभिदेशस्थे सुषुम्नानाडीमध्यगते पद्माकारे चक्रभेदे ।

**मणिबन्ध** पु॰ मणिर्बध्यतेऽत्र बन्ध-घञ् । प्रकोष्ठपाण्योर्मध्यस्थे करग्रन्थौ, सैन्धवलवणाकरे पर्व्वतभेदे च ।

**मणिभूमि** स्त्री॰इत॰ । मणीनामाकरे । [खचिते मण्डपे ।

**मणिमण्डप** पु॰ मणिमयः मणिप्रचुरः मण्डपः । मणि-

**मणिमन्थ** पु॰ मणिर्मथ्यते निःसार्य्यतेऽस्मात् मन्थ-अपादाने घञ् । पर्व्वतभेदे । स कारणत्वेनास्त्यस्य अच् । सैन्धवलवणे तस्य मणिबन्ध (मन्थ) सिन्धुदेशान्तिकस्थपर्व्वतजातत्वात् ।

**मणिमाला** स्त्री॰इत॰ । मणीनां मालेव । हारभेदे दन्तक्षतविशेषे,दीप्तौ, लक्ष्म्याञ्च । [मणिवर्णे पु॰ ।

**मणिराग** न॰ मणेरिव रागो वर्णोऽस्य । हिङ्गुले । इत॰ ।

**मणिवीज** पु॰ मणय इव वीजान्यस्य । दाडिमे ।

**मणिसर** पु॰ मणीन् सरति कारणत्वेन गच्छति सृ-अच् । मणिखचिते हारभेदे ।

**मण्ड** पु॰न॰ मन-ड तस्य नेत्त्वम् । सर्व्वान्नानामग्ररसे, (माड) सारे,पिच्छे च । आमलक्यां, सुरायाञ्च स्त्री॰ । दधिमण्डे (मात्) न॰ । एरण्डवृक्षे, शाकभेदे, भूषायां च पु॰ ।

**मण्डक** पु॰ मडि-ण्वुल् । पिष्टकभेदे । [भूषायाम् न॰ ।

**मण्डन** पु॰ मण्डयति मडि-ल्यु । अलङ्कारके । भावे ल्युट् ।

**मण्डप** पु॰न॰ मडि-घञ् मण्डं भूषां पाति रक्षति पा-क मडि-कपन् वा । जनविश्रामस्थाने, देवादिगृहे च । यथा चण्डीमण्डपः विष्णुमण्डपइत्यादि । मण्डपानकर्त्तरि त्रि॰ । निष्पाव्यां (शूकशिम्बीभेदे) स्त्री॰ ।

**मण्डल** न॰मडि-कलच् । चक्राकारेण वेष्टने, यथा सूर्य्यमण्डलं भू मण्डलम् चतुःशतयोजनमिते-देशभेदे, मण्डलाकारेण विहिते पदार्थे, द्वादशन्टपचक्रे, गोले, समूहे 'अर्थमण्डलमण्डल'मिति वोपदेवः चक्रे, 'मण्डलाकारपादाग्र्यं मण्डलं स्थानमीरित'मित्युक्ते धन्विनां स्थानभेदे मण्डलं सर्व्वतोवृत्ति'रित्युक्ते 'सैन्यव्यूहभेदे, क्रान्तिमरेखासन्निवेशेन रचिते पदार्थे च यथा ग्रहमण्डलं सर्व्वतोभद्रमण्डलमित्यादि । विम्बे त्रि॰स्त्रियां गौ॰ङीप् ।सा गण्डदूर्व्वायाञ्च कुक्कुरे, सर्पभेदे च पु॰ । ततः स्वार्थे कन् । विम्बे, कुष्ठभेदे, आदर्शे, मण्डलाकरे, व्यूहे कुक्कुरे च पु॰ ।

**मण्डलनृत्य** न॰ मण्डलाकारेण नृत्यम् । चक्राकारेण परिभ्रमणरूपे नृत्ये । [याम् ।

**मण्डलपत्त्रिका** स्त्री॰मण्डलाकारं पत्त्रमस्याः । रक्तपुनर्णवा-

**मण्डलाधीश** पु॰ मण्डलस्य देशविशेषस्याधीशः । मण्डलेश्वरे चतुःशतयोजनमितदेशाधिपे । [वटवृक्षे च ।

**मण्डलिन्** पु॰मण्डलं कुण्डलनमस्त्यस्य इनि । सर्पे, विडाले

**मण्डित** त्रि॰ मडि-क्त । भूषिते । [मुनिभेदे वन्यभेदे च ।

**मण्डूक** पु॰ मण्डयति वर्षासमयम् मडि-ऊक । भेके, शोणके,

**मण्डूकपर्णी** पु॰ मण्डूक इव पर्णमस्य । श्योनाके, शोणके च । मञ्जिष्ठायां स्त्री॰ टाप् ङीप् वा । ब्राह्म्यां (वामनहाटि) ओषधिभेदे (थुलकुड़ी) च स्त्री॰ ङीप् ।

**मण्डूकी** स्त्री॰ मण्डूक इव पत्त्रमस्त्यस्य अच् गौरा॰ङीप् । मञ्जिष्ठायाम्, आदित्यभक्तायां, द्राक्षायाम्, ओषधिभेदे, प्रगल्भनायिकायां, मण्डूकयोषिति स्त्री॰ ङीप् ।

**मण्डूर** न॰ मडि-ऊरच् । लौहमले । [जले (आलिपना)

**मण्डोदक** न॰ मण्ड इवोदकम् । आतपतण्डुलचूर्णमिश्रित-

**मत** त्रि० मन-क्त । सम्मते, अभिमते, ज्ञाते, अर्चिते च । भावे-क्त ।
सम्मतौ, अभिप्राये, ज्ञाने, अर्चायाञ्च न० ।
**मतङ्ग** पु० माद्यति अनेन मद-अङ्गच् दस्य तः । मेघे, मुनिभेदे च
**मतङ्गज** पु० मतङ्गात् करेणुजातः जन-ड । गजे ।
**मतल्लिका** स्त्री० मतं मतिमल्लति भूषयति ण्वुल् टा० । प्रशस्ते
अव्युत्पन्नोऽयमित्येके । [आर्यो, शाकभेदे च
**मति** स्त्री०मन-भावे क्तिन् । ज्ञाने, इच्छायां, स्मृतौ च । क्तिच् ।
**मतिदा** स्त्री० मतिं ददाति दो-क । ज्योतिष्मतीलतायाम् ।
(थिमुडी) । [भ्रंशे भ्रान्तौ
**मतिभ्रम** पु० मतेर्भ्रमः अयथार्थविषयत्वेन भ्रमणम् । बुद्धि-
**मतिविभ्रम** पु० मतिं बुद्धिं विभ्रमयति वि+भ्रम-णिच् अण् ।
उन्मादरोगे, ।
**मत्क** पु० मद-क्विप् स्वार्थे कन् । मत्कुणे (छारपोका) ममेदम्
कन् । मत्सम्बन्धिनि 'नैतन्मतं मत्कमि'ति भट्टिः ।
**मत्कुण** पु० मद-क्विप् कुणयति कुण-अच् कर्म० । कीटभेदे
(छारपोका) । [नागः
**मत्कुणारि** पु० ६त० । (सिद्धि) भङ्गायां तत्सम्पर्केण हि तस्य
**मत्त** पु० मद-क्त । दुर्मदे गजे । क्षीबे, मदयुक्ते, हृष्टे च त्रि० ।
**मत्तकाशि(सि)नी** स्त्री० मत्तेव क्षीबेव काशते कसति गच्छति
वा णिनि ङीप् ह्रस्वः । उत्तमयोषिति, स्त्रीमात्रे च ।
**मत्तमयूर** पु० मत्तो मयूरो यस्मात् । मेघे, छन्दोभेदे च ।
**मत्तवारण** पु० कर्म० । मत्तहस्तिनि । मत्तं वारयति वृ-णिच्-
ल्यु । प्रासादवरण्डे न० । (वारेण्डा)
**मत्तालम्ब** पु० मत्तैरालम्ब्यते आ+लवि-घञ् । (वारेण्डा)
प्रासादवरण्डे ।
**मन्त्र** गुप्तभाषणे चु०आ०सक० सेट् इदित् । मन्त्रयते अममन्त्रत
**मत्सर** पु० मद-सर । अन्यशुभद्वेषे, परसम्पत्त्यसहने, क्रोधे च
तद्वति, कृपणे च त्रि० । मक्षिकायां स्त्री० । [मत्सी
**मत्स्य** पु० मद-स्यन् । जलजन्तुभेदे (माछ)जातौ स्त्रियां ङीप् ।
**मत्स्यकरण्डिका** स्त्री०मत्स्यानां करण्डिकेवाधारः । (खालुइ)
मत्स्यरक्षणाधारे पात्रभेदे । [मत्स्याम्, जलपिप्पल्याञ्च
**मत्स्यगन्धा** स्त्री० मत्स्यस्येव गन्धोऽस्याः । व्यासमातरि, मत्स्य-
**मत्स्यण्डी** स्त्री० मन्दं स्यन्दते अच् ङीप्० । खण्डविकारे
(मिछरि) स्वार्थे कन् । अत्रैव ।
**मत्स्यधानी** स्त्री० मत्स्या धीयन्तेऽस्यां धा-ल्युट् ङीप् । मत्स्य-
रक्षणाधारे (खालुइ) पात्रभेदे । [कटुक्याम् (कट्की)
**मत्स्यपित्ता** पु०मत्स्यस्य पित्तमिव रसोऽस्त्यस्याः अच् । कटुरो-
**मत्स्यरङ्ग** पु० मत्स्येन रजति रञ्ज-कर्त्तरि संज्ञायां घञ् ।
(माछराङ्गा) पक्षिभेदे विधुवनविदितो हा मत्स्यरङ्गः रङ्कटः
**मत्स्यराज** पु० ६त० । रोहितमत्स्ये ।
**मत्स्यविन्ना** स्त्री० विद-लाभे क्तः मत्स्यो मत्स्यरसो विन्नो यया
तत्स्यतिक्तत्वात् । कटुकायाम् ।
**मत्स्यवेधन** न० मत्स्यो विध्यतेऽनेन विध-ल्युट् । बडिशे स्त्रीत्व-
मपि ङीप् । मद्गुपक्षिणि (पानकौड़ि) पु० ।
**मत्स्याक्षी** पु०मत्स्यस्याक्षीव पुष्पमस्याः । ब्राह्म्यां (वामनहाटि)
सोमलतायां, गण्डदूर्वायां, हिलमोचिकायाञ्च ।
**मत्स्याङ्गी** स्त्री० मत्स्यइव तत्पित्तमिवाङ्गं तिक्तत्वात् यस्याः ।
हिलमोचिकायाम् । [जलपिप्पल्याम् ।
**मत्स्यादनी** स्त्री० मत्स्यइवाद्यते आस्वाद्यते अद-कर्मणि ल्युट् ।
**मत्स्योदरी** स्त्री० मत्स्यगन्धयुक्तमुदरमस्याः । व्यासमातरि,
मत्स्यगन्धायां, काशीस्थे तीर्थभेदे च । [थः, मथः माथः
**मथ** विलोडने भ्वा०पर०सक० सेट् । मथति अमथीत् ज्वला० वा
**मथ** वधे सक०क्लेशे अक०भ्वा०पर०सेट् इदित् । मन्थति । अमन्थीत्
**मथन** न० मथ-ल्युट् । वधे, क्लेशे, विलोडने च । 'क्षीरोदम-
थनोद्भूत' इति पुराणम् । [कारिकावृक्षे
**मथन** पु० मथ्यतेऽग्निचयनार्थमसौ मथ-कर्मणि ल्युट् । गणि-
**मथित** न० मथ-क्त । निर्जलतक्रे । पीड़िते, हते च त्रि० ।
**मथुरा** स्त्री० मथ-उरच् । स्वनामख्यातायां नगर्याम् ।
**मद** हर्षे दि०पर०अक० सेट् शमा० । माद्यति अमदत् अमादीत्
अमदीत् । निषायामनिट् पुषादिरयं तेन अमददित्ये-
वेति पाणिनीयाः । घटा० मदयति । [घटा० मदयति
**मद** गर्व्वे दैन्ये च भ्वा०पर०अक०सेट् । मदति अमादीत्-अमदीत्
**मद** तर्पणे चु०आ०सक०सेट् । मादयते । अमीमदत ।
**मद** जाड्ये, स्वप्ने, मदे च । आमोदे स्तुतौ दीप्तौ यथायथं अक०
सक० च भ्वा० आत्म० इदित् । मन्दते अमन्दिष्ट ।
**मद** पु० मद-अच् । हस्तिगण्डजले, आमोदे गर्व्वे रेतसि,
मृगमदे, मत्ततायाम्, नदे, कल्याणाकरे वस्तुनि च ।
**मदकट** पु० मदेन कटति कट-अच् । षण्डे (षांड़) मदोत्कटे त्रि०
**मदकल** पु० मदेन कलति कल-अच् । मत्तहस्तिनि-मदोत्कटे
अव्यक्तशब्दकारिणि च त्रि० । [मदिरायां स्त्री० टाप् ।
**मदगन्ध** पु० मदस्य हस्तिदानस्येव गन्धोऽस्य । सप्तच्छदवृक्षे
**मदघ्नी** स्त्री०मदं मदिराजां मत्ततां हन्ति-हन-ट ङीप् । पूति-
कायाम् । [ङीप् ।
**मदन** पु०माद्यत्यनेन मद-करणे ल्युट् । कामदेवे, सुरायां स्त्री०
**मदनक** पु० मदयति मद-णिच्-ल्युट् स्वार्थे कन् । दमनकवृक्षे
**मदनचतुर्द्दशी** स्त्री० मदनस्य तदुपासनायां चतुर्द्दशी । चैत-

शुक्लचतुर्दश्याम् । [शुक्लत्रयोदश्याम् । मदनतिथ्यादयोप्यत्र

**मदनत्रयोदशी** स्त्री० मदनस्योपासनार्था त्रयोदशी । चैत्र-

**मदनमोहन** पु० मदनमपि मोहयति मुह-णिच् ल्यु । श्रीकृष्णे

**मदनसदन** न० ६त० । स्त्रीचिह्नभेदे । ज्योतिषोक्ते लग्ना-
वधिके सप्तमे स्थाने च । [द्रादौ दशाभेदे ।

**मदनावस्था** स्त्री० मदनकृतावस्था । कामिनां स्मरकृते उन्मा-

**मदनी** स्त्री० माद्यत्यनया मद-ल्युट् । सुरायाम्, मृगनाभौ,
अतिमुक्तके च ।

**मदभञ्जिनी** स्त्री० मदं भनक्ति भन्ज-णिनि । शतमूल्याम् ।

**मदयन्ती** स्त्री० मद-णिच्-झच् गौ०ङीप् । वनमल्लिकायाम्
(काठमल्लिका) स्वार्थे कन् ह्रस्वः । तत्रैवार्थे ।

**मदयित्नु** पु० मद-णिच्-इत्नुच् । कामदेवे, मेघे, शौण्डिके,
च । मद्ये न० । मादके त्रि० । [त्रिवृद्वृक्षे ।

**मदसार** पु० मदं सारयति गमयति सृ-णिच्-अण् उप० ।

**मदाढ्य** पु० मदेन मदकारणेन (ताड़ि) रसेनाढ्यः । ताल-
वृक्षे । रक्तझिण्ट्याम् स्त्री० ।

**मदालापिन्** पु० मदेनालपति आ+लप-णिनि । कोकिले ।

**मदिरा** स्त्री० मद-किरच् । 'माध्वीकं पानसं द्राक्षं खार्ज्जूरं
तालमैक्षवम् । मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम् ।
मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव त्वि'त्युक्ते मद्यसा-
मान्ये, खञ्जने च । रक्तखदिरे पु० ।

**मदोत्कट** पु० मदेन दानवारिणा उत्कटः उद्भटः । मत्तगजे ।
मदिरायां स्त्री० । मदोद्धते त्रि० ।

**मदोदग्र** पु० मदेन उदग्रः उग्रः । मत्ते'मदोदग्राः ककुद्मन्त'
इति रघुः । नार्य्यां स्त्री० ।

**मदोद्धत** त्रि० मदेन उद्धतः । मत्ते । [पक्षिभेदे ।

**मद्गु** पु० मस्ज-उ घृ० धातोर्मदादेशः गुक् च । (पानिकौड़ि)

**मद्गुर** पु०मद-उरच् गुक् च । (मागुर) मत्स्यभेदे । स्वार्थे कन् तत्रैव

**मद्य** न० माद्यत्यनेन करणे यत् । मदिराशब्दे उक्तमाध्वी-
कादिद्वादशविधे मादकद्रव्ये । [धातकीवृक्षे (धाइफुल) ।

**मद्यवासिनी** स्त्री० मद्यस्येव वासो गन्धो विद्यतेऽस्याः इनि ।

**मद्यबीज** न०६त० । किण्वादौ (बाकर) मद्यकारणे पदार्थजाते

**मद्यसन्धान** न० मद्याय मद्योत्पादनाय सन्धानम् अभिषवः ।
मद्योत्पादनव्यापारे ।

**मद्यामोद** पु० मद्यस्येव आमोदः गन्धोऽस्य । बकुलवृक्षे ।

**मद्र** पु० मद-रक् । 'विराटपाण्ड्ययोर्मध्ये पूर्वदक्षक्रमेण च ।
मद्रदेशः समाख्यात' इत्युक्ते देशे, नृप, मङ्गले च ।

**मधु** न०मन-उ नस्य धः । मद्ये,'गर्ज्ज गर्ज्ज क्षणं मूढ । मधु-
यावत् पिबाम्यह'मिति चण्डी । क्षौद्रे, 'मधु वाता ऋता-
यते' इति मधुसूक्तम् पुष्परसे 'मधु द्विरेफः कुसुमैकपात्रे'
इति कुमारः । जले, मधुररसे च । 'मधु क्षरन्ति सिन्धव'
इति मधुसूक्तम् । विष्णुकर्णमलजाते दैत्यभेदे । 'विष्णु-
कर्णमलोद्भूतावसुरौ मधुकैटभाविति पुराणं कुम्भीनस्या
भर्त्तरि दैत्यभेदे वसन्तर्त्तौ, चैत्रे मासि, (मौल) वृक्षभेदे, अ-
शोकवृक्षे, यष्टिमधौ च पु० । प्राणिनां शुभाशुभकर्मणि न० ।
जीवन्त्यां स्त्री० । स्वार्थे कन् । यष्टिमधौ, त्रपुणि च न० ।

**मधुकर** पु० मधूनि करोति सञ्चित्य निष्पादयति कृ-अच् ।
भ्रमरे, तद्योषिति स्त्री० ङीप् । कामिजने, भृङ्गराजे
च पु० । मधुकृदादयोपि भ्रमरे ।

**मधुकर्कटी** स्त्री० मधुः मधुरा कर्कटी । जम्बीरभेदे, मिष्ट-
खर्जूरिकायाञ्च । स्वार्थे कन् ह्रस्वः टाप् । बीजपूरे ।

**मधुका** स्त्री० मधुरिव इवार्थे कन् । यष्टिमधौ, मधुपर्णीवृक्षे च

**मधुकोष** पु० मध्वर्थं कृतः कोषः । (मौचाक) मक्षिकाकृते
कोषाकारे पदार्थे । [कन् । तत्रैव ।

**मधुक्षीर** पु० मधु मधुरं क्षीरमस्य । खर्जूरवृक्षे । [स्वार्थे

**मधुखर्ज्जूरी** स्त्री०मधुर्मधुरा खर्जूरी । अतिमिष्टखर्जूरीभेदे ।

**मधुज** न० मधुनो जायते जन-ड । सिक्थके (मोम) । मधुदैत्य
मेदोजातायां भूमौ स्त्री० । [(कमलालेबु) ।

**मधुजम्बीर** पु० मधुर्मधुरः जम्बीरः । अतिमिष्टजम्बीरे ।

**मधुजित्** पु० मधुनामासुरं जितवान् जि-भूते क्विप् । विष्णौ
मधुभिन्मधुरिपुप्रभृतयोप्यत्र ।

**मधुतृण** न० कर्म० । इक्षौ । पुंस्त्वमपि । [मधुलिकमप्यत्र न० ।

**मधुत्रय** न० मधूनां मधुराणाम् त्रयम् । मधुघृतसितानां त्रये

**मधुदूत** पु० मधोर्वसन्तस्य दूत इवाग्रसरत्वात् । आम्रवृक्षे ।
पाटलायां स्त्री० ङीप् ।

**मधुद्रव** पु० मधुरो द्रवोऽस्य । रक्तशिग्रौ ।

**मधुद्रुम** पु० मध्वर्थं मद्यार्थं द्रुमः । (मौल) वृक्षभेदे, तत्पुष्पेण
हि गौड्यमधुसम्भव । [विकारादौ ।

**मधुधूलि** स्त्री० मधुर्मधुरा धूलिरिव । खण्डे (खांड) गुड़-

**मधुधेनु** स्त्री० दानार्थं कल्पितायां मधुप्रभृतिद्रव्यकृतधेनौ ।

**मधुप** पु० मधु पिबति पा-क । भ्रमरे । मधुपायिनि त्रि०
'मारध्वो मधुपैरकारणमहो' इत्युद्भटः ।

**मधुपर्क** न० पृच-घञ् मधुनः पर्को योगो यत्र । मधुयुते
कांस्यपात्रस्थे कांस्यपात्रान्तरेणावृते दध्नि 'दधिसर्पिर्जलं
क्षौद्रं सिता चैतैश्च पञ्चभिः, प्रोच्यते मधुपर्कस्तु' इत्युक्ते
दध्यादिद्रव्यपञ्चके च ।

मधुपर्णी स्त्री॰ मधु इव हितकरं पर्णं यस्याः। गुडूच्यां, गाम्भार्य्यां, नीलीवृक्षे, वराहक्रान्तायाम्, मधुवीजपूरे च।
मधुपालिका स्त्री॰ मधूनि पालयति पाल-ण्वुल्। गाम्भार्य्याम्
मधुपीलु पु॰ कर्म॰। मधुरपीलौ।
मधुपुरी स्त्री॰ मधोर्दैत्यस्य पुरी। मथुरायाम्।
मधुपुष्प पु॰मधुप्रचुरं पुष्पं यस्य। मधुद्रुमे,(मौल)शिरीषवृक्षे, अशोकवृक्षे, वकुलवृक्षे च। दन्तीवृक्षे, नागदन्तीवृक्षे च स्त्री॰ टाप्। [भूमिजम्बूवृक्षे।
मधुप्रिय पु॰ मधु मधुरं प्रियं यस्य। वलरामे। मधुइव प्रियः।
मधुफल पु॰ मधुरं फलं यस्य। मधुनारिकेले। मधुखर्जूरिकायां स्त्री॰ टाप्।
मधुवञ्जुला स्त्री॰ मधु वञ्जुलं यत्र। माधवीलतायाम्। [याम्
मधुमक्षिका स्त्री॰ मधुसञ्चायिका मक्षिका (मौमाछि) सरघा-
मधुमज्जन् पु॰ मधुरं मज्ज सारोऽस्य। आखोटकवृक्षे।
मधुमत् त्रि॰ मधुर्मधुररसोऽस्त्यस्य मतुप्। माधुर्य्यवति 'मधुमत् पार्थिवं रज' इति मधुसूक्तम्। नदीभेदे, योगशास्त्रप्रसिद्धे योगिनां चित्तवृत्तिभेदे, वैदिकप्रसिद्धे 'मधु वाता' इत्यादौ ऋक्त्रये, तन्त्रोक्ते देवी नायिकाभेदे च स्त्री॰ङीप्।
मधुमर्कटी स्त्री॰ मधुजाता मर्कटी शाक॰। (मिताखण्ड) मधुजाते खण्डे। [मालत्याम्। स्वार्थे कन्। तत्रैव।
मधुमल्लि(ल्ली) स्त्री॰ मल्ल-इन् वा ङीप् मधुप्रधाना मल्लिः(ल्ली)
मधुमूल न॰ मधुरं मूलम्। (मौआलु) आलुभेदे। [वा ङीप्
मधुयष्टि स्त्री॰मधुरा यष्टिः काण्डम्। इक्षौ। यष्टिमधौ स्त्री॰
मधुयष्टिका स्त्री॰ मधुरा यष्टिरिव इवार्थे कन्। यष्टिमधौ।
मधुर पु॰ मधु माधुर्य्यं राति रा-क, अस्त्यर्थे र वा। गुडादिस्थे मिष्टरसे,माधुर्य्यरसवति,द्रव्यादौ,मनोहरे, 'मधुरया मधुबोधितमाधवी'ति भावः प्रिये च त्रि॰। रक्तशिग्रौ, राजाम्रे, रक्तेक्षौ,गुडे,शालौ,जीरके च पु॰। वङ्गे, सीसे च न॰ स्वार्थे कन्। जीरके शतपुष्पायां यष्टिमधौ, काकोल्यां, शतावर्य्यां वृहज्जीवन्त्यां, मधुकर्कटिकायां, मधूल्यां,मेदायां, पालङ्कशाके (मौरी) मिश्यां च स्त्री॰। स्वार्थे कन् अत इत्त्वम्। मिश्यायाम् स्त्री॰।
मधुरजम्बीर पु॰ कर्म॰। (कमलालेवु) जम्बीरभेदे।
मधुरत्वच पु॰ मधुरा त्वचा यस्य। धववृक्षे।
मधुरफल पु॰ मधुरं फलमस्य। राजवदरे।
मधुरवल्ली स्त्री॰ कर्म॰। मधुवीजपूरे, जम्बीरभेदे च।
मधुरस पु॰ मधुर इव रसो यस्य। इक्षौ,तले च। मूर्व्वायां, द्राक्षायां, दुग्धिकायां, गाम्भार्य्याञ्च स्त्री॰।

मधुरस्रवा स्त्री॰ मधुरं स्रवति स्रु-अच्। पिण्डखर्जूर्य्याम्।
मधुराम्लक पु॰कर्म॰। आम्रातके।
मधुलग्न पु॰ मधुर्मधुररसो लग्नो यत्र। रक्तशोभाञ्जने।
मधुलिका स्त्री॰ मधु माधुर्य्यं लिटति गाहते लिट-क पृ॰। राजिकायां (राइसर्षा)। [णिनि। मधुलेह्यत्र
मधुलिह् पु॰ मधु लेढि आस्वादयति लिह-क्विप्। भ्रमरे
मधुवन न॰ मधुदैत्याधिष्ठितं वनम्। मथुराचेत्रस्थे वनभेदे किष्किन्धास्थे मधुप्रचुरे वनभेदे च।
मधुवल्ली स्त्री॰ मधुप्रधाना वल्ली। यष्टिमधौ।
मधुवार पु॰ मधुनो मद्यस्य वारः क्रमः। पुनःपुनर्मद्यपानक्रमे
मधुवीज पु॰ मधु मधुरं वीजं यस्य। दाड़िमे।
मधुवीजपूर पु॰ कर्म॰ (लेबुभेदे) मधुकर्कटिकायाम्।
मधुव्रत पु॰ मधु तत्सञ्चयो व्रतं सततानुशीलनं यस्य। भ्रमरे
मधुशाख पु॰ मधुर्मधुरा शाखाऽस्य। (मौल) वृक्षे।
मधुशिग्रु पु॰ मधुः मधुरः शिग्रुः। रक्तशोभाञ्जनवृक्षे।
मधुशेष पु॰ न॰मधुनः शेषः उच्छिष्टम्। सिक्थके (मोम)।
मधुश्रेणी स्त्री॰ मधुनः श्रेणीव। मूर्व्वायाम्।
मधुश्वासा स्त्री॰ मधुन इव श्वसित्यस्मात् श्वस-अपादाने घञ्। जीवन्तीवृक्षे। [सारथ्यादयोऽप्यत्र।
मधुष्ठील पु॰ मधु ष्ठीले गर्भेऽस्य। (मौल) गुडपुष्पवृक्षे। [मधु-
मधुसख पु॰ मधोर्वसन्तस्य सखा सहचरः अच् स॰। कामदेवे
मधुसूदन पु॰ मधुं तन्नामासुरं सूदयति, मधु,जीवानां शुभाशुभकर्म्म, ज्ञानदानेन सूदयति वा सूद-ल्यु। श्रीकृष्णे। 'भक्तानां कर्म्मणाञ्चैव सूदनात् मधुसूदन' इति निरुक्तेः मधु माध्वीकं सूदयति भक्षयति। भ्रमरे। मधुइव सूद्यते भक्ष्यते ल्युट् ङीप्। पालङ्कीशाके।
मधुस्रव पु॰मधूनि मद्यानि स्रवन्त्यस्मात् स्रु-अप्। (मौलवृक्षे)
मधुस्रवस् पु॰ मधु स्रवति अस्मात् स्रु-असुन्। (मौल) वृक्षे।
मधुस्वर पु॰ मधुर्मधुरः स्वरोऽस्य। कोकिले। मधुरस्वरवति त्रि॰ [क्विप्। विष्णौ।
मधुहन् पु॰ मधुनामासुरं कर्मफलं वा ज्ञानद्वारा हन्ति हन्
मधूक न॰ मह-ऊक हस्य धः। यष्टिमधौ। (मौल) वृक्षे पु॰।
मधूच्छिष्ट न॰ मधुन उच्छिष्टमवशिष्टम्। (मोम) सिक्थके मधूज्झितमप्यत्र।
मधूपघ्न पु॰न॰ मधुदैत्यस्योपघ्नमाश्रयः। मथुरानगरे।
मधूल पु॰मधु लाति ला-क ष॰। जलजगिरिजमधूकवृक्षयोः। मधुकर्कटिकायाम् आम्रे च स्त्री॰गौरा॰ङीप्। स्वार्थे कन् अत इत्त्वम् टाप्। मूर्व्वायाम्।

**मध्य** पु० मन-यक् नस्य धः। देहस्यावयवभेदे। (माजा) 'मध्येन सा वेदिविलग्नमध्ये'ति कुमारः। न्त्यादौ-मन्दत्वशीघ्रत्वभिन्ने व्यापारभेदे,पूर्व्वापरसीमयोरन्तराले,परार्द्धसंख्यातोऽर्वाचीनायां संख्यायां,तत्संख्याते च। 'अन्त्यं मध्यं परार्द्ध'-मिति लीला० ज्योतिषोक्ते ग्रहाणां गतिभेदे स्त्री० तद्वति ग्रहे पु०। न्याय्ये, अन्तर्वर्त्तिनि च त्रि०। [स्वार्थे।

**मध्यगन्ध** पु० मध्ये फलमध्ये गन्धो यस्य। आम्रवृक्षे। [शब्द-

**मध्यतस्** अव्य० मध्य+तसिल्। प्रथमापञ्चमीसप्तम्यर्थवृत्तेर्मध्य-

**मध्यदेश** पु कर्म०। 'हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तित' इत्युक्ते देशभेदे

**मध्यन्दिन** न० मध्यं दिनस्य अलुक्समा०। मध्याह्ने।

**मध्यपदलोपिन्** पु० मध्यपदस्य लोपोऽस्त्यस्य इनि। व्याकरणप्रसिद्धे शाकपार्थिवादिके समासभेदे।

**मध्यम** त्रि० मध्ये भवः म। मध्यभवे। सप्तस्वरमध्ये क्रौञ्चस्वरस्थे पञ्चमे स्वरे पु०। [मध्यवर्त्तित्वात्।

**मध्यमपाण्डव** पु० कर्म०। अर्जुने तस्य पूर्व्वापरयोर्द्वयोर्द्वयो

**मध्यमस्तक** पु० कर्म०। 'मध्यमस्तु कपोतस्य' इत्युक्ते मध्यमे दारे कपोतकादौ।

**मध्यमलोक** पु०कर्म०। पृथिव्याम् तस्याः पातालस्वर्गलोकयोर्मध्यवर्त्तित्वात् 'मध्यमलोकपाल' इति रघुः मध्यलोकोऽप्यत्र

**मध्यमसंग्रह** पु०कर्म०। 'प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम्। प्रलोभनञ्चान्नपानैर्मध्यमः संग्रहोमत' इत्युक्ते मध्यमे स्त्रीसंग्रहरूपे विवादभेदे।

**मध्यमसाहस** कर्म० 'वासःपश्वन्नपानानां गृहोपकरणस्य च। एतेनैव प्रकारेण मध्यमं साहसं स्मृत'मित्युक्ते परकीयवस्त्रादेर्भङ्गक्षेपादिरूपे बलकरणककर्मरूपे साहसभेदे 'पणानां द्वे शते सार्द्धे प्रथमः साहसःस्मृतः। मध्यमः पञ्च विज्ञेय' इत्युक्ते पञ्चपणात्मके दण्डभेदे पु०।

**मध्यमा** स्त्री० मध्य+म। दृष्टरजस्कायां नार्य्याम्, तर्ज्जन्यनामयोरन्तःस्थायामङ्गुलौ, पद्मादीनां कर्णिकायाम्, हृदयोन्नताच्च वैखर्य्यादिषु मध्ये वाणीभेदे, नायिकाभेदे च।

**मध्यमाहरण** न० वीजगणितप्रसिद्धे अव्यक्तमानप्रापके गणनाभेदे। [अर्द्धरात्रे।

**मध्यरात्र** पु०मध्यं रात्रेः एकदेशि स० अच् समा०। निशीथे

**मध्यवर्त्तिन्** त्रि० मध्ये वर्त्तते वृत-णिनि। वादिप्रतिवादिनोरन्ययोर्वा पक्षप्रतिपक्षयोर्व्याद्विविषयविमर्शपूर्व्वकं तत्त्वनिर्णायके, स्वार्थाविरोधेन परार्थसम्पादके, कार्य्यसम्पादके च मध्यस्थे।

**मध्यस्थ** पु० मध्ये तिष्ठति स्था-क। मध्यवर्त्तिनि, उदासीने च। 'माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे' इति कुमारः।

**मध्या** स्त्री० स्त्रियां टाप्। त्र्यक्षरपादके छन्दोभेदे नायिकाभेदे मध्यमाङ्गुलौ च।

**मध्याह्न** पु०मध्य महः एक०स० टच् समा० अह्नादेशः। त्रिधा विभक्तदिनस्य द्वितीये भागे, 'प्रातःकालो मुहूर्त्तांस्त्रीन् सं गवस्तावदेव तु। मध्याह्नस्त्रिमुहूर्त्तं स्या'दित्युक्ते पञ्चधाविभक्तदिनस्य तृतीये भागे च। [कन्। तत्रैव।

**मध्वालुक** पु० मधुमधुर आलुः। (मौ आलु) मूलभेदे। ततः

**मध्वासव** पु० मधुना पुष्परसेन कृत आसवः। (मौल) मधुकपुष्पजाते मद्ये। [अमनीत्।

**मन** पूजायां सक०गर्व्वे अक०भ्वा०पर०सेट्। मनति। अमानीत्-

**मन** गर्व्वे अक०चु०आ०सेट्। मानयते अमीमनत।

**मन** बोधे तना०आ०सक०सेट्। मनुते अमनिष्ट।

**मन** बोधे दि०आ०सक०अनिट्। मन्यते। अमंस्त।

**मन** स्तौ अद०चु०उ०सक०सेट्। मनयति ते अममनत् त।

**मन** पु० मन-अच्। जटामांस्याम्।

**मनःशिला** स्त्री०मनः शब्दप्राप्त्या शिला। (मन्छल) रक्तवर्णे उपधातुभेदे 'मनःशिलाविच्छुरिता निषेदुरि'ति कुमारः। पु० वा ह्रस्वः पुंस्त्वमपि। 'टङ्कैर्मनःशिलगुहैरविदार्य्यमाणै'रिति।

**मनस्** न० मन्यतेऽनेन मन-असि। सर्व्वेन्द्रियप्रवर्त्तके अन्तरिन्द्रिये, तच्च वेदान्तमते सङ्कल्पविकल्पात्मकान्तःकरणं सुखदुःखाद्याधारः 'कामः संकल्पोविचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मनएवे'ति श्रुतेः न्यायमते तज्ज्ञानसाधनमिति भेदः। मनःशिलायाञ्च।

**मनसा** स्त्री० मननं मनं स्यति षो-क। आस्तीकस्य मुनेर्मातरि वासुकिभगिन्याम् जरत्कारुपत्न्यां नाम्ना जरत्कारौ।

**मनसादेवी** स्त्री० मनसा दीव्यति दिवः करणस्य कर्त्तृत्वात् कर्म्मोपपदत्वेन अण् ङीप् अलुक्स०। मनसाशब्दार्थे।

**मनसिज** पु० मनसि जायते जन-ड सप्तम्या वा अलुक्। कामदेवे। लुकि। मनोजोऽप्यत्र। एवं चित्तजातादयोऽप्यत्र।

**मनसिशय** पु० मनसि शेते अच् वा अलुक्। कामदेवे।

**मनस्कार** पु० कृ-घञ् मनसःकारोव्यापारभेदः चित्तस्य सुखतत्परत्वे।

**मनस्ताप** पु० मनसस्तापः अनुतापः। अनुतापे, मनःपीडायाञ्च

**मनस्विन्** त्रि० प्रशस्तं मनोऽस्त्यस्य विनि। प्रशस्तमनस्के। स्त्रियां ङीप्। 'मनस्विनीनां प्रतिपत्तिरीदृशी'ति कुमारः

**मनाक्** अव्य०मन-आकि। ईषदर्थे,मन्दे च 'कुतूहलाक्रान्तमना

मनागभूदिति नैषधम् । [रूभेदे । ईषत्करे त्रि०

**मनाक्कर** न० मनाक् करोति कृ-अच् । मल्लिकागन्धयुक्ते अगु-

**मनावी** स्त्री० मनोः पत्नी वा ङीप् औङ् च । मनोः पत्न्याम्

**मनित** त्रि० भा० मन-क्त । ज्ञाते ।

**मनीषा** स्त्री० ईष-अङ् मनस ईषा शक० । बुद्धौ ।

**मनीषिन्** पु० मनीषा अस्त्यस्य इनि । पण्डिते । बुद्धियुक्ते त्रि०

**मनु** स्त्री० मन-उ । पृक्कायाम् (पिड्डिङ्गशाक) मनुपत्न्याञ्च ।

प्रजापतिभेदे, धर्म्मशास्त्रकर्त्तरि स्वायम्भुवे मुनिभेदे च पु०

**मनुज** पु० मनोः स्वायम्भुवात् जायते जन-ड । मनुष्ये

स्त्रियां जातौ ङीप् । [जातौ ङीप्

**मनुष्य** पु० मनोरपत्यं यत् सुक् च । मानवे जातिभेदे । स्त्रियां

**मनुष्यधर्मन्** पु० मनुष्यस्येव धर्म्मो यस्य नरवाहनत्वात् अ-

निच् समा० । कुवेरे । [मनःशिलायाम् ।

**मनोगुप्ता** स्त्री० मनसा मनःशब्देन तच्छब्दवाच्यत्वात् गुप्ता ।

**मनोजव** त्रि० जु-अच् मनो जवं वेगवत् नयनाय यस्मिन् ।

पितृतुल्ये । मनस इव जवो यस्य । अतिवेगवति त्रि० ।

अग्निजिह्वायां स्त्री० ] [वृद्धिवृक्षे ।

**मनोजवृद्धि** पु० मनोजस्य कामस्य वृद्धिर्यस्मात् ५ब० । काम-

**मनोज्ञ** त्रि० मनो जानाति ज्ञापयति बोधनाय प्रवणीकरोति

अन्तर्भूतण्यर्थे ज्ञा-क । मनोहरे । मनःशिलायां, वन्ध्याक-

र्कोट्यां, कटभ्यां, जीरके, मदिरायाञ्च स्त्री० ।

**मनोभव** पु० मनसि भवति भू-अच् । कामदेवे मनोजमनो-

भूप्रभृतयोऽप्यत्र । [मापकत्वात् । इच्छायाम्

**मनोरथ** पु० मनएव रथोऽत्र, मनसो रथइव वा इष्टप्राप-

**मनोरम** त्रि० मनोरमयति रम-णिच्-अच् उप० । मनोहरे ।

गोरोचनायां स्त्री० ।

**मनोहत** त्रि० मनो हतं यस्य । प्रतिहते, प्रतिबद्धे च ।

**मनोहर** त्रि० मनो हरति स्वदर्शनाय हृ-अच् । रुचिरे । कुन्द-

वृक्षे पु० । जात्यां, स्वर्णयूथ्यां च स्त्री० । स्वर्णे न० । णिनि ।

मनोहारीति मनोहरे ।

**मनोह्वा** स्त्री० मनःशब्देनाह्वयते ह्वे-घञर्थे क । मनःशिलायाम्

**मन्ज** मार्ज्जने सक० भ्वा० अक० भ्वा० पर० सेट । मञ्जति अमञ्जीत्

**मन्तु** पु० मन-तु तुट् च । अपराधे, मनुष्ये, प्रजापतौ च ।

**मन्त्र** पु० मन्त्रि-अच् । गुप्तभाषणे, रहसि कर्त्तव्यावधारणार्थोक्तौ

देवादीनां साधनार्थं तन्त्राद्युक्ते शब्दभेदे, वेदविभागभेदे च

**मन्त्रजिह्व** पु० मन्त्रएव जिह्वा आस्वादनसाधनं यस्य । अग्नौ,

मन्त्रेण दत्तहविरास्वादकत्वात्तस्य तथात्वम् ।

**मन्त्रदात** पु० दा-तृच् ६त० । गुरौ ।

**मन्त्रिन्** पु० मन्त्रयते णिनि । धीसचिवे येन सह रहसि

कर्त्तव्यमवधार्यते तस्मिन् अमात्ये ।

**मन्थ** क्लेशे अक० विलोड़ने सक० भ्वा० पर० सेट् । मन्थति अमन्थीत्

**मन्थ** विलोडे क्र्या० पर० द्विक० सेट् । मथ्नाति अमन्थीत् ।

**मन्थ** पु० मन्थ-करणे घञ् । मन्थनदण्डे । 'सक्तुभिः सर्पिषा-

भ्यक्तैः शीतवारिपरिप्लुतैः । नात्यच्छो नातिसान्द्रश्च मन्थ

इत्यभिधीयते' इत्युक्ते पेयभेदे, सूर्ये, अर्कवृक्षे, नेत्रमले, कि-

रणे च । भावे घञ् । आलोडनादौ ।

**मन्थज** न० मन्थात् दधिमन्थनात् जायते जन-ड । नवनीते ।

**मन्थन** पु० मथ्यतेऽनेन करणे ल्युट् । मन्थानदण्डे ।

**मन्थर** न० मन्थ-करच् । कुसुम्भशाम् । कोषे, फले, वाधे मन्था-

नदण्डे च पु० वक्रे, नीचे, जड़े, मन्दे च त्रि० । 'मदघैसन्देश

मृणालमन्थर' इति नै० । कैकेय्याः दास्यां स्त्री० ।

**मन्थशैल** पु० ६त० । समुद्रमन्थनाय मन्थनदण्डरूपेण कल्पिते

मन्दरपर्व्वते । [न्द्राल

**मन्थान** पु० मन्थ-आनच् । मन्थनदण्डे, आरग्वधवृक्षे च (सो-

**मन्द** त्रि० मदि-अच् । मूर्खे स्वैरे, अभाग्ये, रोगिणि, अल्पे,

स्वतन्त्रे, खले च । शनिग्रहे, हस्तिभेदे, यमे, प्रलये च पु० ।

ज्योतिषोक्ते रविसंक्रान्तिभेदे स्त्री० ।

**मन्दग** त्रि० मन्दं गच्छति गम-ड । मृदुगामिनि शनि, ग्लानि-

पुरुष, वृष, हंस, गज, वरस्त्रिय इत्येते स्वभावान्मन्दगतयः ।

णिनि मन्दगामीत्यप्यत्र त्रि० । स्त्रियां ङीप् ।

**मन्दट** पु० मन्दं टीकते टीक-ड । पारिभद्रवृक्षे । (पालदेमादार)

**मन्दता** स्त्री० मन्दस्य भावः तल् । आलस्ये, जाड्ये, मन्दभावे च

'उद्वैरस्यति मन्दतामरसता'मिति चन्द्रालोकः ।

**मन्दर** पु० मदि-अरन् । समुद्रमन्थाने पर्व्वतभेदे, मन्दारवृक्षे,

स्वर्गे, हारभेदे, दर्पणे च । बहुले, मन्दे च त्रि० ।

**मन्दाकिनी** स्त्री० मन्दमकति अक-णिनि । स्वर्गगङ्गायां

'स्वर्गे मन्दाकिनी तथे'ति पुराणम् ।

**मन्दाक्रान्ता** स्त्री० सप्तदशाक्षरपादके छन्दोभेदे ।

**मन्दाच** न० मन्दं सङ्कुचितमक्षि यस्मात् पच् समा० लज्जायाम्

**मन्दाग्नि** पु० मन्दः पचने अल्पशक्तिकः अग्निः अनलः, स

यस्मात् । देहस्थे अपाचनशक्तिकेऽनले तद्धेतौ रोगभेदे च ।

**मन्दार** पु० मदि-आरन् । स्वर्गस्थे देववृक्षभेदे, पारिभद्रवृक्षे च

**मन्दिर** न० मन्द्यतेऽत्र मदि-किरच् । गृहे, पुरे च । तस्य दिविवि-

ष्टमिलितत्वे । समुद्रे जानुपश्चाद्भागे च पु० । (माढ़ुर)

**मन्दुरा** स्त्री० मदि-उरच् । अश्वशालायाम्, शयनीयकटे च

**मन्दोदरी** स्त्री० मयदानवकन्यायां रावणमहिष्याम् ।

मरुभूरुह पु० मरुभुवि निर्जलभूमौ रोहति रुह-क । करीरे
मरुव पु० मरुं निर्जलदेशं वाति कारणत्वेन वा-क । (माव-
टाना) (मरुआ) वृक्षभेदे । स्वार्थे कन् । तत्र, वृक्षभेदे,
(मयना) खलमन्ततुलस्याम्, जम्बीरभेदे, पुष्पप्रधाने
वृक्षभेदे, (मरुयाफुल) व्याघ्रे, राहौ, भयानके च ।
मरुसम्भवा स्त्री० मरौ सम्भवति अच् । क्षुद्रदुरालभायाम्
मरुस्याद्योप्यत्र । [क्षुद्रखदिरे च ।
मरूद्भवा स्त्री० मरौ उद्भवति उद्+भू-अच् । कार्पास्यां,
मर्क गतौ सौ०पर०सक० सेट् । मर्कति अमर्कीत् ।
मर्कट पु० मर्क-अटन् । वानरे । ऊर्णनाभे (माकड़सा) स्थावर
विषभेदे (हाड़गिला) पक्षिभेदे च स्वार्थे कन् । तत्रैव ।
मर्कटतिन्दुक पु० मर्कटप्रियस्तिन्दुकः शाक० । कुपीलौ ।
मर्कटपिप्पली स्त्री० मर्कटप्रिया पिप्पली शाक० । अपामार्गे
मर्कटप्रिय पु० ६त० । क्षीरवृक्षे (खिरनी) ।
मर्कटवासस् पु० ६त० । (माकड़साजाल) लूतातन्तौ ।
मर्कटशीर्ष न० मर्कटस्य वानरस्य शीर्षमिव । हिङ्गुले । [त्रि०
मर्कटास्य मर्कटस्य वानरस्यास्यमिव रक्तत्वात् । ताम्रे तद्वति
मर्कटी स्त्री०मर्कटोऽस्त्यस्याः स्त्रिग्धत्वेन अच् गौ०ङीष् । अपा-
मार्गे, अजमोदायाम्, करञ्जभेदे (माकड़ाकरमचा) वानर-
योषिति च । [स्नानाय चक्रभेदे ।
मर्कटीजाल न० छन्दोग्रन्थोक्ते प्रस्तारे लघुगुरुस्थानविवेक-
मर्कर पु० मर्क-अरच् । भृङ्गराजे (केशुरिया) भाण्डे दर-
र्याम्, वन्ध्यायां-स्त्रियाञ्च स्त्री०टाप् ।
मर्च महणे चु०उभ०सक०सेट् । मर्चयति-ते अममर्चत्-त ।
मर्त्त पु०मृ-तन् । मनुष्ये भूलोके च। तत्र भवः यत् । मर्त्त्यः ।
मनुष्ये ।
मर्द्दन न० मृद-ल्युट् । गात्रपादादिसंवाहने, चूर्णने च ।
मर्द्दल पु०मृद-घञ् मर्द्दं लाति ला-क । वाद्यभेदे (मादल) ।
मर्द्दित त्रि० चु० मृद-क्त । चूर्णिते, मर्द्दिते च ।
मर्ब गतौ भ्वा०पर सक०सेट् । मर्बति अमर्बीत् ।
मर्म्मज्ञ पु० मर्म जानाति ज्ञा-क । तत्त्वज्ञे । मर्मविदादयोऽप्यत्र
मर्म्मन् न० मृ-मनिन् । जीवनस्थाने सन्धिस्थाने तात्पर्य्ये च
'अपि धर्म्मागमर्मर्मणोपारगैरि'ति नैषधम् ।
मर्म्मर पु० मृ-अरन् मुट् च । वस्त्रपर्णानां शब्दे (मड़मड़)
इत्यव्यक्तशब्दे । पीतदारुणि, हरिद्रायाञ्च स्त्री०गौ०ङीष् ।
मर्म्मस्पृश् त्रि० मर्म्म प्राणस्थानं स्पृशति स्पृश-क्विन् । अरु-
न्तुदे मर्म्मपीडके । [दीप । मर्म्मपीडके ।
मर्म्माविध् त्रि० मर्म सन्धिस्थानं विध्यति विध-क्विप् पूर्व

मर्य्या अव्य० म्रियते-ऽवधिग्रतेऽत्र मृ-यत् । सीमायाम् स्त्री-
त्वमपि । कर्त्तरि यत् । मनुष्ये पु० । 'मेघो मर्या अप्रयसे'
इति वेदमन्त्रः मर्योमनुष्या इति सायनवेदभाष्यम् ।
मर्य्यादा स्त्री०मर्य्यायां सीमायां दीयते दा-अच् मर्य्यादीयते
वा परि+आ-दा-अङ् पृ० पस्य मः । न्यायपथस्थितौ,
सीमायाम् कूले च ।
मर्व पूर्त्तौ भ्वा०पर०सक०सेट् । मर्वति अमर्वीत् ।
मल धृतौ भ्वा०आ०अक०सेट् । मलते अमलिष्ट ।
मल पु० मृज्यते शोध्यते मृज-कल-टिलोपः । पापे, पुरीषे,
लौहादीनां किट्टे कलङ्के, मज्जूरादौ, देहजाते, स्वेदश्लेष्मादौ,
कर्पूरे, कृपणे, वातपित्तकफेषु च ।
मलघ्न पु० मलं विष्ठां हन्ति रेचयति हन-क । शाल्मलीकन्दे
किप् । मलहाप्यत्र । नागदमन्यां स्त्री० ङीप् ।
मलदूषित त्रि० ३त० । मलिने । [तत्फलस्य रेचकत्वात् ।
मलद्राविन् पु०मलं द्रावयति रेचयति द्रु-णिच्-णिनि । जयपाले ।
मलपू स्त्री०मलं मलस्थानं पुनाति पू-क्विप् । काकोडुम्बरिकायाम्
मलभेदिनी स्त्री० मलं भेदयति रेचयति भिद्-णिच् ।
कटुकायाम् । (कटकी) ।
मलमास पु० मलो दुष्टोमासः । 'अमावस्याद्वयं यत्र रवि-
संक्रान्तिवर्ज्जितम् मलमासः स विज्ञेय' इत्युक्ते रविसं-
क्रान्तिशून्ये शुक्लप्रतिपदादिदर्शान्तरूपे चान्द्रे मासे ।
मलय पु० मल-कयन् । दक्षिणस्थे पर्व्वतभेदे । यत्र चन्दनजन्म
तत्पर्व्वतान्तिकस्थे देशभेदे, उपवने, नन्दनवने नवसु द्वीपेषु
मध्ये द्वीपभेदे, ऋषभदेवस्य पुत्रभेदे च ।
मलयज न० मलये पर्व्वते जायते जन-ड । चन्दने । मलय-
देशजाते वायौ पु० । तद्देशजाते त्रि० । [(तेओड़ि) ।
मलया स्त्री०मलयो देशोऽस्त्यस्याः कारणत्वेन अच् । त्रिवृतायां
मलविनाशिनी स्त्री० मलं तद्दोषं विनाशयति वि+नश-
णिच्-णिनि । शङ्खपुष्प्याम् ।
मलारि पु० मलस्य कलङ्ककिट्टादेररिः । सर्ज्जक्षारद्रव्ये ।
मलिन त्रि० मल+अस्त्यर्थे इनच् । मलयुक्ते, दूषिते, कृष्णे च
इनि । मलीत्यप्यत्र, दोषे, टङ्कणे, (सोहागा) ।
मलिनमुख पु० मलिनं मुखं यस्य । वह्नौ, तस्यादौ धूमाय-
मानत्वेन तथात्वात् वानरे च । क्रूरे, खले च त्रि० ।
मलिम्लुच पु० मली वैदिककर्म्मानर्हत्वेन दुष्टः सन् म्लोचति
गच्छति म्लुच-क । मलमासे, वायौ, अग्नौ, चौरे च ।
मलीमस त्रि० मल-ईम स च् । मलिने, लौहे, पुष्पकासीसे च
मल्ल धृतौ भ्वा०आ०अक०सेट् । मल्लते अमल्लिष्ट ।

मल्ल पु० मल्ल-अच् । बाहुयुद्धकारके नियोद्धरि, पात्रे, देशभेदे कपोले च ।

मल्लक पु०मल्ल्यते ध्रियतेऽत्र । दीपाधारे पात्रे, नारिकेलफल-जाते पात्रे च (माला) स्वनामपुष्पे स्त्री० टाप् अत इत्त्वम् ।

मल्लज न० मल्ले देशे जायते जन-ड । मरिचे । [देशभेदे ।

मल्लभू स्त्री० मल्लक्रीडनस्य बाहुयुद्धस्य योग्या भूःस्थानम्

मल्लयुद्ध ६त० । बाहुयुद्धे ।

मल्लार पु० मल्ल इव ऋच्छति ऋ-अण् । रागभेदे रागिणी भेदे मल्लिकायाञ्च स्त्री० ङीप् ।

मल्लि(ल्ली) स्त्री०मल्ल-इन् वा-ङीप्। मल्लिकायाम् संज्ञायां कन् । कृष्णवर्णदेहे आलोहितचञ्चुचरणे हंसभेदे, मल्लिकाख्योत्पले ।

मल्लिकापुष्प पु०मल्लिकाया इव पुष्पमस्य । कुटजवृक्षे करुण वृक्षे च ६त०। मल्लिकाकुसुमे ।

मल्लिपत्र न० मल्लिरिव पत्रमस्य । छत्राके ।

मव बन्धे भ्वा० पर०सक०सेट् । मवति अमवीत् अमावीत् ।

मव्य बन्धे भ्वा०पर०सक०सेट् । मव्यति अमव्यीत् ।

मश ध्वनौ अक० कोपे सक० भ्वा० पर० सेट् । मशति अम-शीत्-अमाशीत् ।

मशक पु० मश-वुन् । कीटभेदे (मशा) ।

मशकिन् पु० मशकोऽस्त्यस्य इनि । उदुम्बरवृक्षे ।

मषि(षी) स्त्री० मष(स) इन् वा ङीप् । (कालो) पत्रलेखन-द्रव्ये, नीलशेफालिकावृक्षे च ।

मष वधे भ्वा०पर०सक०सेट् । मषति अमषीत् अमाषीत् ।

मस परिमाणे परिणामे च दि०पर०अक०सेट् । मस्यति अमसत् अमसीत् अमासीत् । पुषादित्वं तेन अम-सदित्येवेति पाणिनीयाः ।

मसन न० मस-ल्यु । सोमराजीवृक्षे ।

मसरा स्त्री० मस-अरच् । मसूरे ।

मसिका स्त्री० मसीव इवार्थे कन् । नीलशेफालिकायाम् ।

मसिजल न० मसिमिश्रितं जलम् । (कालो) लेखनद्रव्ये ।

मसिधान न०मसिर्धीयतेऽत्राधारे ल्युट् । मस्याधारे (दोयात) स्त्रीत्वमपि तत्र ङीप् ।

मसिपण्य पु० मसिकृष्णवर्णाक्षरस्यैव पण्यं विक्रेयं यस्य । लेखनोपजीविनि । [यस्याः । लेखन्याम् ।

मसिप्रसू स्त्री०मस्याः प्रसूरिव । मस्याधारे । मसिः प्रसूरिव

मसीना स्त्री० मस-ईनच् । अतस्याम् (तिसि) ।

मसु(सू)र पु० मस-उरच् ऊरच् वा । धान्यभेदे (मसूरी) वेश्यायां, व्रीहिभेदे च स्त्री०टाप् ।

मसूरविदला स्त्री० मसूरस्येव विदलं यस्याः । कृष्णत्रिवृति (कालतेओडी) ।

मसूरिका स्त्री०मसूरेव इवार्थे कन् । वसन्तरोगे, कुट्टिन्याञ्च ।

मसूरी स्त्री० मस-ऊरच् गौ०ङीष् । वसन्तरोगे, त्रिवृति, रक्त-त्रिवृति च । [च । अतस्यां स्त्री० ।

मसृण त्रि० मस-ऋण, मन्+ऋण-क पृ०वा । स्निग्धे, अकर्कशे

मस्क गतौ भ्वा०पर०अक० सेट् । मस्कति अमस्किष्ट ।

मस्कर पु०मस्क-अरच् । वंशे, रन्ध्रयुक्तवंशे च । भावे अरच् । गतौ, ज्ञाने च ।

मस्करिन् पु०मस्करो ज्ञानं गतिर्वाऽस्त्यस्य इनि, मा कर्तुं कर्म-निषेद्धुं शीलमस्य मा+कृ-इनि मस्करमस्करिणाविति नि० । परिव्राजके विधानेन स्वकर्मापरित्याजके भिक्षौ । 'धारयन् मस्करिव्रत'मिति भट्टिः चन्द्रे च ।

मस्ज स्नाने तु०पर०अक०अनिट् । मज्जति अमाङ्क्षीत् । क्त मग्नः । अपु अम्लवुः ।

मस्त(क) न०मस-क्त । मस्तके । उक्ते त्रि० । संज्ञायां कन् शिरसि

मस्तकस्नेह पु० ६त० । शिरःस्थितमज्जायाम् मस्तिष्के ।

मस्तदारु न० मस्यति परिणमते मस्तसदृशं कर्म० । देवदारुणि

मस्तिष्क न० मस-क्तिन् मस्तिं परिणतिमिदं ष्वष्कति ष्वष्क गतौ अच् पृ०। मस्तकस्थे स्नेहाकारे पदार्थे (मगज) 'मांसमस्तिष्क-पङ्क प्रग्भारे' इति प्रबोधचन्द्रोदयम् । [ग्रीवायाम् ।

मस्तमूलक न० मस्तस्य मूलमिव इवार्थे कन् । शिरोधरायाम्

मह पूजायां भ्वा०पर०सक०सेट् । महति अमहीत् ।

मह दीप्तौ चु०उ०अक०सेट् इदित् । मंहयति-ते अममंहत्-त

मह वृद्धौ भ्वा०आ०अक०सेट् इदित् । मंहते अमंहिष्ट ।

मह पूजने अद०चु०उभ०सक०सेट् । महयति-ते अममहत्-त

मह पु० मह-घञर्थे क । उत्सवे, सततानन्दजनकव्यापारे, ते-जसि यज्ञे, महिषे च ।

महत् त्रि० मह-अति । विपुले, उच्चे च स्त्रियां महती । राज्ये न० । सांख्योक्ते महत्तत्त्वे पु० 'प्रकृतेर्महानिति' श्रुतिः ।

महती स्त्री० मह-अति गौ०ङीष् । वीणाभेदे नारदवीणा-याम् । 'अवेक्षमाणं महतीं मुहुर्मुहु'रिति माघः । बृह-त्यां, वार्त्ताक्यां, विपुलायां स्त्रियाञ्च ।

महत्तत्त्व न० कर्म० । सांख्योक्तमहत्त्वादिचतुर्विंशतितत्त्वमध्ये प्रकृतिकार्ये अहङ्कारादिकारणे निश्चयात्मकवृत्तिविशिष्टे तत्त्वभेदे ।

महर् अव्य० मह-अर । चतुर्थे लोकभेदे ।

महर्लोक पु० कर्म० । भूरादिषु सप्तसु लोकेषु मध्ये चतुर्थे

लोके तत्परिमाणादिकं शब्दाभिधाने दर्शयिष्यते ।
महर्षि पु० कर्म० । परमर्षिशब्दार्थे वेदव्यासादौ ।
महस् न० मह-असुन् । तेजसि, यज्ञे, उत्सवे च ।
महा स्त्री० मह-अच् । (गोरक्षचाकलिया) गोपवल्लयाम् ।
महाकण्टकिनी स्त्री० महत् कण्टकमस्त्यस्य इनि ङीप् । (फणिमनसा) वृक्षभेदे ।
महाकन्द पु० कर्म० । लशुने, राजपलाण्डौ, मूलके च ।
महाकपित्थ पु० कर्म० । बिल्ववृक्षे ।
महाकरञ्ज पु०कर्म० । करञ्जभेदे (काँटाकरमचा) ।
महाकर्णिकार पु० कर्म० । आरग्वधे (सोंदाल ।
महाकाय पु० ब०व्री० । शिवानुचरभेदे नन्दिनि, हस्तिनि च । विपुलदेहवति त्रि० । कर्म० स्थूलदेहे पु० ।
महाकार्त्तिकी स्त्री० कार्त्तिकीमधिकृत्य 'प्रजापत्यं यदा ऋक्षं तथैतस्यां नराधिप । सा महाकार्त्तिकी प्रोक्ते'त्युक्तायां रोहिणीनक्षत्रयुक्तायां कार्त्तिकपौर्णमास्याम् ।
महाकाल पु०कर्म० । अनवच्छिन्ने काले,शिवे च 'महाकालेन च समसि'तिकालिकाध्यानम् (माकाल) लताभेदे, भैरवभेदे च 'महाकालं यजेद्देव्या दक्षिणे धूम्रवर्णक'मिति तन्त्रम् ।
महाकाव्य न० कवेः कर्म काव्यं कर्म० । सर्गबन्धरूपे अष्टाधिकसर्गके ग्रन्थभेदे तल्लक्षणं साहित्यदर्पणे ६प०।
महाकुम्भी स्त्री० महती कुम्भीव (पाना) कट्फले ।
महाकुल न०कर्म० । 'दशपुरुषविख्यातं श्रोत्रियाणां महाकुल'मिति मनूक्ते दशपुरुषावधिवेदाध्ययिवंशे ।
महाकुलीन त्रि० महाकुले भवः खञ् । महाकुलोद्भवे ।
महाकोशफला स्त्री० कर्म० । देवदालीलतायाम् ।
महाकोषातकी स्त्री० कर्म० । हस्तिघोषायाम् ।
महागन्ध न०महान् गन्धोऽस्य । हरिचन्दने, बोले च । जलवेतसे वृक्षे पु० । नागवलायां, कलिकायां, कूटजे च स्त्री० ।
महागुरु पु० कर्म० । 'त्रयः पुरुषस्यातिगुरवो भवन्ति पिता माता चाचार्य्यश्चे'ति स्मृत्युक्ते पुरुषस्य पितादौ 'पतिरेको गुरुः स्त्रीणा'मित्युक्ते दत्तकन्याया भर्त्तरि, अदत्तकन्यायाः पितरि, मातरि च । महागुरुनिपाते च 'काम्यं किञ्चिन्नाचरेदि'ति स्मृतिः ।
महागुल्मा स्त्री० महान् गुल्मोऽस्याः । सोमवल्ल्याम् ।
महागुहा स्त्री० महती गुहेव मूलमस्याः । पृश्निपर्ण्याम् ।
महाग्रीव पु० महती ग्रीवास्य । उष्ट्रे । दीर्घग्रीवायुक्ते त्रि० ।
महाघोषा स्त्री० घुष्यते कर्म्मणि घञ् कर्म० । कर्कटशृङ्ग्याम् । (काकड़ाशिङ्गे) । शुन्दरुकयाञ्च । महान् घोषोऽस्य । विपुलध्वनिवति त्रि० । [विपुलावयववति त्रि० । कर्म० । विपुलाङ्गे न०
महाङ्ग पु० महदङ्गमस्य । उष्ट्रे । गोक्षुरके, रक्तचित्रके च ।
महाच्छद पु० महान् छदोऽस्य । देवदारुवृक्षे । [त्रि०
महाच्छाय पु०महती छाया यस्य । वटवृक्षे । विपुलच्छायायुक्ते
महाच्छिद्रा स्त्री०महत् छिद्रमस्याः । महामेदायाम् ।
महाजटा स्त्री० महती जटा यस्याः । रुद्रजटावृक्षे । विपुलजटावति त्रि० । कर्म० । वृहत्यां, जटायाम् स्त्री० ।
महाजन पु० कर्म० । वेदवाक्येषु श्रद्धावति जने । 'महाजनो येन गतो स पन्था' इति भारतम् ।
महाजम्बू स्त्री० कर्म० । राजजम्ब्वाम् ।
महाजाली स्त्री० कर्म० । पीतवर्णघोषायाम् ।
महाज्यैष्ठी स्त्री० 'ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा । पूर्णिमा रविवारेण महाज्यैष्ठी प्रकीर्त्तिते'त्याद्युक्तलक्षणायां ज्यैष्ठपौर्णमास्याम् । 'महाज्यैष्ठ्यां तु यः पश्येत् पुरुषः पुरुषोत्तमम्' इति पुराणम् ।
महाज्योतिष्मती स्त्री० (वडमालकाङ्गनी) लताभेदे । [त्रि०
महाढ्य पु० महेन उत्सवेनाढ्यः । कदम्बे कर्म० । महाधनवति
महातरु पु०कर्म० । स्नुहीवृक्षे विपुलवृक्षे च ।
महातल न०कर्म० । अधःस्थेषु पातालेषु मध्ये पञ्चमे पाताले
महातारा स्त्री०कर्म० । तन्त्रोक्ते तारिणीभेदे, जिनदेव्याञ्च
महाताली स्त्री० कर्म० । विपुलतालीभेदे राजताल्याम् ।
महातिक्त पु०कर्म० । निम्बवृक्षे । अतिशयतिक्तरसवति त्रि० । यवतिक्तायां स्त्री० ।
महातीक्ष्णा स्त्री०कर्म० । भल्लातकवृक्षे (भेला) अतितीव्रे त्रि०
महातेजस् पु० महत् तेजोऽस्य । पारदे । अतितेजस्विनि त्रि० कार्त्तिकेये वह्नौ च पु० ।
महात्मन् त्रि०महान् आत्मा स्वभाव आशयो यस्य । महाशये
महादान न०कर्म० । विनायकादिपूजाङ्गपाठे तुलापुरुषादि षोडशपदार्थदाने 'अथातः संप्रवक्ष्यामि महादानस्य लक्षण'मित्युपक्रम्य 'आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञकमि'त्यादिना षोडशदानान्यभिधाय 'विनायकादिपूजालोकपाल वसुटकादित्यमरुद्गणानाम् । ब्रह्माच्युतेशार्कवनस्पतीनां सन्मन्ततोहोमचतुष्टयं स्यात् । जप्यानि सूक्तानि तथैव चैषा मनुक्रमेणापि यथास्वरूप'मित्युक्तं मात्स्ये । विस्तरस्तु मत्कृततुलादानादिपद्धतौ ज्ञेयः ।
महादारु न० कर्म० देवदारुणि ।
महादेव पु०कर्म० । 'महादीनां सुराणाञ्च ऋषीनां महतामपि । नाम् तेषां महत्त्वात् देवोऽयं महादेवः प्रकीर्त्तित' इति

त्युक्ते, 'महती पूजिता विश्वे मूलप्रकृतिरीश्वरी तस्याः देवः पूजितश्च महादेवस्ततः स्मृत' इत्युक्ते च शिवे। [वृहद्वृक्षे च

**महाद्रुम** पु॰कर्म॰। अश्वत्थवृक्षे। तस्य विष्णुरूपत्वात् महत्त्वम्

**महाधन** न॰ महत् मूल्यरूपं धनमस्य। बहुमूल्ये। सुवर्णे, सिह्लके, मनोज्ञवस्त्रे च। कृषौ पु॰। अतिधनवति त्रि॰।

**महाधातु** पु॰ कर्म॰। स्वर्णे।

**महानदी** स्त्री॰। ओड्रदेशस्थे नदीभेदे, समुद्रगामिन्यां नद्याञ्च

**महानन्द** पु॰ महान् अतिवृहत् आनन्दो यत्र। मोक्षे कर्म॰ अतिशयानन्दे पु॰ 'माघमासस्य या शुक्ला नवमी लोकपूजिता। महानन्देति सा प्रोक्ते'त्युक्तायां माघशुक्लनवम्यां सुरायां नदीभेदे च स्त्री॰।

**महानन्दि** पु॰ कलौ चरमान्धकारस्य महापद्मन्पभेदस्य पितरि

**महानवमी** स्त्री॰ कर्म॰। आश्विनशुक्लमधिकृत्य 'ततोऽतु नवमी यस्मात् सा महानवमी स्मृते'त्युक्तायाम् आश्विनशुक्लनवम्याम्

**महानस** न॰महदनः संज्ञायाम् अच्। पाकस्थाने। [सा॰दप॰

**महानाटक** न॰ दृश्यकाव्यनाटकभेदे 'एतदेव यदा सर्वैस्त्वादि

**महानाद** पु॰महान्+नादोऽस्य। गजे, गर्जन्मेघे, सिंहे, उष्ट्रे च

**महानिद्रा** कर्म॰। मरणे तत्र पुनः प्रत्युत्थानाभावात्।

**महानिम्ब** पु॰ कर्म॰। (घोड़ानिम) वृक्षभेदे।

**महानिशा** स्त्री॰ 'महानिशा तु विज्ञेया मध्यमप्रहरद्वय'मित्युक्ते रात्रेर्मध्यमप्रहरद्वये। [तन्त्रभेदे न॰।

**महानील** पु॰कर्म॰। भृङ्गराजे, मानभेदे, नागभेदे, महानस्त्राञ्च

**महानुभाव** पु॰ महान् अनुभाव आशयो यस्य। महाशये

**महापञ्चविष** 'शृङ्गी च कालकूटश्च मुस्तको वत्सनाभकः। शङ्खकर्णीति योगोऽयं महापञ्चविषाभिध' इत्युक्ते पञ्चविधे विषे

**महापत्ना** स्त्री॰ महत् पत्रमस्याः। महाजम्बूवृक्षे। [पथे च

**महापथ** पु॰कर्म॰। राजमार्गे, हिमालयोत्तरस्थे स्वर्गारोहण

**महापद्म** पु॰ कर्म॰ अष्टनागमध्ये, नागभेदे, कुवेरस्य निधिभेदे, 'अर्बुदमब्जं खर्व्वनिखर्व्वमहापद्मे'ति लीलावत्युक्तायाम् अयुतकोटिसंख्यायां, तत्संख्यान्विते, नृपभेदे च।

**महापातक** न॰ 'ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः महान्ति पातकान्याहुस्तत्संसर्गश्च पञ्चम' इत्युक्तेषु पञ्चसु पातकेषु।

**महापिण्डीतक** पु॰ कर्म॰। कृष्णवर्णे विपुलमदनवृक्षे।

**महापीलु** पु॰कर्म॰। मधुपीलौ अतिमधुरत्वात्तस्य हि महत्त्वम्

**महापुराण** न॰ 'सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषाञ्च पालनम्। कर्म्मणां वासना वार्त्ता मनूनाञ्च क्रमेण च। वर्णनं प्रलयानाञ्च मोक्षस्य च निरूपणम्। उत्कीर्त्तनं हरेरेव देवानाञ्च पृथक् पृथक्। महापुराणं विज्ञेयमेकादशक लक्षण'मित्युक्ते व्यासप्रणीते पुराणभेदे।

**महापुरुष** पु॰कर्म्म॰। सुरश्रेष्ठे, नारायणे च। 'वन्दे महापुरुष! ते चरणारविन्द'मिति भागवतम्।

**महापुरुषदन्ता** पु॰ महापुरुषस्य विष्णोः दन्ता इव महत्त्वात् मूलान्यस्य। शतमूल्याम्।

**महापुष्पा** स्त्री॰ महत् यन्त्रपुष्पत्वेन प्रशस्तं, पत्त्रापेक्षया स्थूलं वा पुष्पं यस्याः। अपराजितायाम्।

**महाप्रलय** पु॰कर्म्म॰। ब्रह्मणो दिनावसाने जायमानः सर्वभूतक्षयः प्रलयः तस्यैव स्वमानेन शतवर्षावसाने जायमानस्तु महान् प्रलयः तस्मिन्, तदुपलक्षिते, जन्यद्रव्यानधिकरणीभूते काले च। जन्यभावानधिकरणीभूते काले इत्यन्ये।

**महाप्रसाद** पु॰ 'पादोदकञ्च निर्म्माल्यं नैवेद्यञ्च विशेषतः। महाप्रसाद इत्युक्ता ग्राह्यं विष्णोः प्रयत्नत' इत्युक्ते देवनैवेद्यादौ विपुलप्रसन्नतायाञ्च।

**महाप्राण** पु॰ महान् बहुकालस्थायित्वात् श्रेष्ठः प्राणोऽस्य। द्रोणकाके कर्म॰। वर्णोच्चारणस्य बाह्यप्रयत्नभेदे, स च वर्गे द्वितीयचतुर्थवर्णानां शषसहानाञ्चोच्चारणप्रयत्नः तेषामुच्चारणे हि प्राणवायोर्भूयान् प्रयास इति तेषामपि महाप्राणत्वमुपचारात्।

**महाफल** पु॰ महत् पत्त्रापेक्षया वृहत् फलमस्य। विल्ववृक्षे। इन्द्रवारुण्यां (राखालशशा) स्त्री॰।

**महाबल** पु॰ महत् बलं यस्य। वायौ, बुद्धे च बलवति त्रि॰ महत् बलं यस्मात् ५ब॰। सीसके न॰। पीतवाट्यालके स्त्री॰

**महाभारत** पु॰न॰ 'चत्वारश्चैकतो वेदा भारतञ्चैतदेकतः। पुरा किल सुरैः सर्व्वैः समस्य तुलया धृतम्। चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽभ्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते। महत्त्वात् भारतत्वाच्च महाभारतमुच्यते' इत्युक्तलक्षणे व्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे।

**महाभीता** स्त्री॰ कर्म॰। लज्जालुलतायाम् स्पर्शेन लेश हि सङ्कोचेन तस्या अतिभीतत्वम्। अतिभीते त्रि॰।

**महाभूत** न॰कर्म्म॰। सर्व्वेषां पञ्चात्मकतामाश्रित्य स्थूलतापन्नेषु वृहत्सु पृथिव्यप्तेजोवाय्वाकाशेषु पञ्चसु भूतेषु। 'तं वेधा विदधे नूनं महाभूतसमाधिने'ति रघुः।

**महाभृङ्ग** पु॰ कर्म्म॰। नीलभृङ्गराजे।

**महामनस्** त्रि॰ महदुदारं मनस्तद्व्यापारोऽस्य। महाशये।

**महामात्र** पु॰ 'मन्त्रे कर्मणि भूषायाम् वित्ते माने परिच्छदे।

माला तु महती येषां महामानास्तु ते स्मृता' इत्युक्ते। प्रधानामात्ये।

**महामाया** स्त्री०कर्म० अन्यस्मिन् अन्यधर्मावभासो हि माया सर्व्वजगन्मूलत्वात्तस्या महत्त्वम्। जगत्कारणभूतायाम् अविद्यायां तदधिष्ठात्र्यां दुर्गायाञ्च 'महामाया हरेश्चैषा यया संमोह्यते जगदि'ति चण्डी।

**महामात्र** पु०कर्म०। राजमार्गे हस्त्यधमेष्वया तस्य हि महत्त्वम्

**महामूल** पु० महत् शौर्य्यकारित्वात् श्रेष्ठं मूलमस्य। राजपलाण्डौ। [पशुषु महत्त्वात् तथात्वम्।

**महामृग** पु० महान् मृगः पशुः। गजे, शरभे च तयोर्हि

**महामेद** पु०स्त्री० ६व०। वैद्यकप्रसिद्धाष्टवर्गोक्ते ओषधिभेदे।

**महामोह** पु० महान् मोहः भ्रान्तिहेतुको वस्तुतोऽनिष्टेऽपि रागः। संसारतद्विषयकारणरूपेऽज्ञानभेदे 'तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणे'त्युक्ते मैथुनादिसुखभोगेच्छारूपे अन्तःकरणवृत्तिभेदे च वैषयिकसुखस्य वस्तुतोऽनिष्टत्वात् तथात्वम्

**महाम्ल** न० कर्म०। अत्यम्ले, विन्तिड़ीफले च तद्वृक्षे पु०।

**महायज्ञ** पु०कर्म०। नित्यं गृहस्थकर्त्तव्ये वेदाध्ययनाग्निहोत्रयज्ञपितृतर्पणभूतबलिकर्म्मातिथिपूजनरूपेषु पञ्चसु कर्मसु।

**महारजत** न०कर्म०। काञ्चने। तस्य हि रजतत्वात् महत्त्वम्, दृष्टद्रौप्ये धुस्तूरे च पु०।

**महारजन** न० रज्यतेऽनेन ल्युट् कर्म०। कुसुम्भपुष्पे, स्वर्णे च।

**महारथ** पु० 'एकोदश सहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः' इत्युक्ते योधभेदे। [काञ्जिके न०।

**महारस** पु० ६व०। खर्ज्जूरे, कशेरुणि, इक्षौ, पारदे च।

**महाराज(जि)क** पु० महान् सन् राजते वुन् ष०. इत्त्वं वा। विंशत्यधिकशतद्वयसंख्याते गणदेवभेदे।

**महाराजद्रुम** पु० कर्म०। आरग्वधे (सोन्दाल)।

**महारात्रि** स्त्री०'मध्यमस्य निपाते च महाकाली भवेन्नृप!। प्रकीर्त्तिता महारात्रि'रित्युक्ते महाकल्पालये महाप्रलये 'अर्द्धरात्रात् परं यच्च मुहूर्त्तद्वयमुच्यते। सा महारात्रिरुद्दिष्टे'ति तन्त्रोक्ते अर्द्धरात्रोपरि मुहूर्त्तद्वयात्मके रात्रिकाले।

**महाराष्ट्र** पु०कर्म०। (महाराष्ट्रा) देशभेदे। तद्देशः कारणत्वेनास्त्यस्य अच् गौ ङीप्। जलपिप्पल्याम्, शाकभेदे च स्त्री०

**महारिष्ट** पु०कर्म०। गिरिजाते निम्बभेदे। अत्यशुभे न०।

**महारोग** पु०कर्म०। 'उन्मादो राजयक्ष्मा च श्वासस्त्वग्दोष एव च। मधुमेहश्चाश्मरी च तथोदरभगन्दरौ। इत्येतेऽष्टौ महारोगा महापातकसम्भवा' इत्युक्ते महापातकजन्येषु उन्मादादिषु रोगेषु।

**महारौरव** पु० रुरोरयम् अण् कर्म०। 'महारौरवसंज्ञस्तु जम्बाधस्ताच्चसंपुटे। धम्यते खदिराङ्गारैः पच्यते कालसंघैय'मित्युक्ते नरकभेदे।

**महार्घ** त्रि० महानर्घो मूल्यं यस्य। बहुमूल्ये।

**महार्णव** पु० कर्म०। महासमुद्रे।

**महार्द्रक** न० कर्म०। वनार्द्रके।

**महालय** पु० महान् आत्यन्तिको लयो यत्र। परमात्मनि कर्म०। दृहदालये तीर्थस्थाने, विहारे, सौराश्विनकृष्णपक्षे च न०। 'तस्यां दद्यात् न चेद्दत्तं पितॄणां वै महालये इति स्मृतिः।

**महालक्ष्मी** स्त्री०कर्म०। चण्ड्यादितीयचरितदेवतारूपे 'सैवै सैरिभमर्द्दिनीमिह महालक्ष्मीं सरोजस्थिता'मित्युक्तलक्षणे अष्टादशभुजान्विते दुर्गाशक्तिभेदे, तन्त्रोक्ते लक्ष्मीभेदे च।

**महालोभ** पु० कर्म०। लोभभेदे (पाठिया लोध)।

**महावरा** स्त्री० वृणोति विस्तृणाति वृ-अच् कर्म०। दूर्वायाम्

**महावराह** पु०कर्म०। वृहद्वराहरूपधारिणि भगवदवतारभेदे

**महावरोह** पु० महान् अवरोहोऽस्य। वटवृक्षे।

**महावल्ली** स्त्री० कर्म०। माधवीलतायाम्।

**महावाक्य** न० कर्म०। परस्परसंबद्धार्थके वाक्यसमुदायरूपे एकवाक्ये 'वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते'इति मीमांसकाः। वेदान्तोक्ते ब्रह्मविद्याप्रतिपादके 'तत्त्वमस्या'द्युपनिषद्वाक्ये, दानादौ अभिलापवाक्ये च।

**महाविद्या** स्त्री० कर्म०। 'काली तारा महाविद्या षोडशी भुवनेश्वरी भैरवी ,छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी कमलात्मिका। एताः दश महाविद्या'इत्युक्तासु काल्यादिषु दशसु देवीषु।

**महाविषुव** न० रवेर्मेषसंक्रमणे। तत्संक्रमणञ्च स्वरूपतः संक्रमणं,प्रभापुञ्जस्य संक्रमणं वा। तत्र प्रभापुञ्जसंक्रमणम् अयनांशानुसारेण षट्त्रिंशदधिकशतपलप्रमितवर्षैकेनांशं परित्यज्य ततः पश्चात्पश्चात्तरादौ स्थाने भवति इदानीं च पश्चादयनं, पूर्व्वायने तु पूर्व्वपूर्व्वतरादौ स्थाने भविष्यति। अयनवशेनानियतस्थानत्वात् स्वरूपसंक्रमस्य स्थिरः अश्विन्यादिस्थाने जायमानत्वात्।

**महावीचि** पु० नास्ति वीचिः सुखं यत्र स अवीचिः कर्म०। सुखरहिते, 'यत्र क्लेशेन नीयन्ते' इत्युक्ते वा नरकभेदे।

**महावीर** पु०कर्म०। गरुडे, हनुमति, सिंहे, यज्ञाग्नौ, वज्रे

श्वेतवर्कं, कोकिले, वनुर्वरे, एकवीरवृक्षे, महानूरे च क्षीरकाकोलीवृक्षे स्त्री० ।

**महावीर्य्य** पु०६ब० । वाराहीकन्दे, परमात्मनि च। अतिबलवति त्रि० । वनकार्पास्यां, संज्ञायां-सूर्य्यपत्न्याञ्च स्त्री० ।

**महावृहती** स्त्री० कर्म्म० । वार्त्ताक्याम् ।

**महावृक्ष** पु० कर्म्म० । स्नुहीवृक्षे, वृहत्तरौ च ।

**महाव्याधि** पु० कर्म्म० । महारोगे, कुष्ठादौ रोगे च ।

**महाव्याहृति** स्त्री० कर्म्म० । वैदिके भूर्भुवःस्वरात्मके मन्त्रत्रये

**महाव्रण** न० कर्म्म० । (नालिघा) दुष्टव्रणे ।

**महाव्रत** न० कर्म्म०। अतिशयव्रते शारदीयदुर्गापूजादौ 'महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितमि'ति पुराणम् । द्वादशवार्षिके प्रायश्चित्तात्मके व्रतभेदे च ।

**महाशङ्ख** पु० कर्म्म०। तन्त्रे वीराचारप्रसिद्धे नृकपालास्थिजाते 'नृललाटास्थिखण्डेन रचिता जपमालिका । महाशङ्खमयी माला ताराविद्याजपे प्रिये'त्युक्ते मालाभेदे, वृहच्छङ्खे च । 'पौण्ड्रं दध्मौ महाशङ्ख'मिति गीता ।

**महाशठ** पु० कर्म्म० । राजधत्तूरे । अतिधूर्त्ते त्रि० ।

**महाशणपुष्पी** स्त्री० शणस्येव पुष्पमस्य ङीप् कर्म्म० । वृहच्छणपुष्प्याम् । स्वार्थे कन् । तत्रैव ।

**महाशता** स्त्री०शतं मूलानि सन्त्यस्य अच् कर्म्म०। वृहच्छतावर्य्यां

**महाशतावरी** स्त्री० कर्म्म० । वृहच्छतावर्य्याम् ।

**महाशय** त्रि० महान् उदार आशयो यस्य । महानुभावे ।

**महाशाखा** स्त्री० महती शाखाऽस्याः । नागबलायाम् ।

**महाशालि** पु० कर्म्म० । स्थूलशालौ । [अतिशीतले त्रि० ।

**महाशीता** स्त्री० महती शीता शीतलवीर्य्या । शतमूल्याम्

**महाशुक्ति** स्त्री० महती शुक्ताकारफलं शप्रायस्यात् शुक्तिः । [ङीप् मुक्ताहेतौ शुक्तौ ।

**महाशूद्र** पु० कर्म्म० । आभीरे (आहीर) जातिभेदे तत्पत्न्यां

**महाश्मशान** न०कर्म्म०। काश्याम् समूलकर्म्म वहितसर्वजीवानां पुनरनुत्पादनाय नाशाधारत्वात् तस्यास्तथात्वम् ।

**महाश्यामा** स्त्री०कर्म्म० । श्यामालतायां, शिंशपाभेदे च।

**महाश्रावणिका** स्त्री० कर्म्म० (घुलकुडी) क्षुपभेदे ।

**महाश्वेता** स्त्री०कर्म्म० । सरस्वत्याम्, कृष्णभूमिकुष्माण्डे च ।

**महाष्टमी** स्त्री० कर्म्म०। 'आश्विने शुक्लपक्षस्य भवेद्या तिथिरष्टमी । महाष्टमीति सा प्रोक्ते'त्युक्तायामाश्विनशुक्लाष्टम्याम्

**महासर्ज्ज** पु० कर्म्म० । अमनवृक्षे, पनसवृक्षे च (काटाल)

**महासह** पु०कर्म्म०। पुष्पप्रधाने कुब्जकवृक्षे, माषपर्ण्याम्, अम्लानवृक्षे च स्त्री०। अतिसहे त्रि० ।

**महासान्तपन** न० । कर्म्म०। सप्ताहसाध्ये स्मृत्युक्ते व्रतभेदे ।

**महासार** पु० महान् सारोऽस्य । दुष्खदिरे ।

**महासुगन्धा** स्त्री०सुष्ठु गन्धोऽस्याः कर्म्म० । गन्धनाकुल्याम्. अतिसुगन्धयुक्ते त्रि० ।

**महासेन** पु०महती सेनाऽस्य। कार्त्तिकेये । वृहत्सेनाधिपतौ त्रि०

**महास्कन्ध** पु० महान् स्कन्धोऽस्य । जम्बूवृक्षे ।

**महाहास** पु० कर्म्म० । अट्टहासे, उच्चैर्हासे ।

**महाहिगन्धा** पु० अहेर्गन्धो हिंसा यस्मात् अहिगन्धो नकुलः सकलेनास्त्यस्य अच् कर्म्म० । गन्धनाकुल्याम् ।

**महाहस्वा** स्त्री०कर्म्म० । कपिकच्छ्वाम् (आलकुशी) अतिखर्व्वे त्रि०

**महि(ही)** स्त्री० मह-इन् वा ङीप् । पृथिव्याम् । ङीबन्तस्तु मालवदेशस्थे नदीभेदेऽपि ।

**महिका** स्त्री० मह्यते मह-क्वुन् । हिमे ।

**महिमन्** पु०महतो भावः इमनिच् डित्वेन टिलोपः । महत्त्वे, ईश्वरैश्वर्य्यभेदे च ।

**म(मि)हिर** पु० मह-(मिह-) किरच् । सूर्य्ये ।

**महि(हे)ला** स्त्री० मह-इलच् । योषिति, प्रियङ्गुलतायां, रेणुकागन्धद्रव्ये,लतायां स्त्रियाञ्च। एलच्। महेलापि,योषिति।

**महिष** पु० मह-टिषच् । स्वनामख्याते पशुभेदे,महिषासुरे च । राज्ञः कृताभिषेकायां स्त्रियां, महिषजातिस्त्रियाम्, श्रोषधिभेदे च स्त्री० ङीप् । [शिवाहनादयोप्यत्र ।

**महिषध्वज** पु० महिषो ध्वजचिह्नं वाहनत्वेनास्य । यमे ।महि

**महिषमर्द्दिनी** स्त्री० महिषं महिषासुरं मृद्नाति मृद-णिनि ङीप् ६त० । दुर्गाभेदे । [तत्रैव ।

**महिषाक्ष** पु० महिषस्याक्षीव अच् । गुग्गुलुभेदे। स्वार्थे कन्।

**महिषासुर** पु० रम्भासुरेण महिष्यामुत्पादिते असुरभेदे, महिषाक्षगुग्गुलौ च । [भू-अच् । भूमिजगुग्गुलौ

**महिषासुरसम्भव** पु० महिषासुरात्तत्नुभेदतः सम्भवति

**महीक्षित्** पु०महीं चयते ईष्टे क्षि-ऐश्वर्य्ये क्विप् तुक् च। नृपे

**महीज** न० मह्या जायते जन-ड । आर्द्रके। मङ्गलग्रहे, नरकासुरे च पु० ।

**महीध्र** पु०महीं धारयति धृ-क । पर्व्वते। अत्र। महीधरोप्यत्र

**महीप्राचीर** न० मह्याः प्राचीरमिवावरकत्वात् । समुद्रे ।

**महीभृत्** पु०महीं बिभर्त्ति धारयति पालयति वा भृ-क्विप् । पर्व्वते, भूमिपाले च । ['महतो महीयानि'ति श्रुतिः

**महीयस्** त्रि० अतिशयेन महान् महत्+ईयसु । अतिमहति

**महीय्यमान** त्रि० महीयते मही+कण्ड्वा० यक्-मानच् । पूज्ये, श्रेष्ठे च 'महीयमाना नवनाटिकाल'मिति भट्टिः

**महीरुह** पु० मह्यां रोहति रुह-क । वृक्षे, शाके च ।
**महीलता** स्त्री० मह्या लतेव । (केचो) किञ्चुलुके ।
**महेच्छ** त्रि० महती इच्छा यस्य । महाशये ।
**महेन्द्र** पु० महान् इन्द्रः इन्द्रस्यापि नियन्तृत्वात् । परमेश्वरे, महैश्वर्य्यवति इन्द्रे, जम्बुद्वीपस्थपर्ब्बतभेदे च ।
**महेन्द्रकदली** स्त्री० महेन्द्रप्रिया तद्वर्णा वा कदली । कदलीभेदे
**महेन्द्रपुरी** स्त्री०६त०। अमरावत्याम्। महेन्द्रनगर्य्यादयोऽप्यत्र
**महेन्द्रवारुणी** स्त्री० महेन्द्रश्च वरुणश्च तयोरियं प्रियत्वात् अण् देवताद्वन्द्वे उत्तरपदवृद्धिः । (माकाल) लताभेदे ।
**महेरणा** स्त्री० महं गजोत्सवमीरयति ल्यु । शल्लकीवृक्षे ।
**महेश** पु० कर्म० । शिवे । महेश्वरोऽप्यत्र 'महेश्वरस्त्र्यम्बक एव नापरः' इति रघुः ।
**महेशबन्धु** पु०६त०। बिल्ववृक्षे ।
**महेला** स्त्री० कर्म० । स्थूलैलायाम् (बड़एलाची)
**महोक्ष** पु० महान् उक्षा अच् समा० । वृहद्वृषे, 'महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेदि'ति मनुः ।
**महोटी** स्त्री० महान्ति फलापेक्षया स्थूलानि उटानि पर्णान्यस्याः ङीप् । वृहत्यां, उत्पले च ।
**महोत्पल** पु०कर्म०। पद्मे, सारसपक्षिणि च ।
**महोत्सव** पु०कर्म० । सन्ततसुखसम्पादकव्यापारे ।
**महोत्साह** त्रि० महान् उत्साहो यस्य । अत्यन्तोद्यमयुक्ते ।
**महोदधि** पु०कर्म० । समुद्रे ।
**महोदय** पु० महान् उदयो वृद्धिराधिपत्यं वा यत्र । कान्यकुब्जदेशे । तद्देशस्थे पुरभेदे न० । स्वल्पन्यूनार्द्धोदययोगात् 'अमार्कपाते श्रवणे'त्यादिलक्षणात् 'किञ्चिदूने महोदय' इत्युक्ते किञ्चिदूने योगभेदे पु० । नागबलायां स्त्री० ।
**महोदरी** स्त्री० महदुदरं यस्याः । शतमूल्याम् वृहदुदरयुक्ते त्रि०
**महोन्नत** पु०कर्म०। तालवृक्षे । अत्यन्तोन्नतियुक्ते त्रि० ।
**महोरग** पु०कर्म०। वृहत्सर्पभेदे महोरगाकारोऽस्त्यस्य अच् । तगरमूले न० ।
**महोल्का** स्त्री०कर्म० । वृहदुल्कायाम् ।
**महौषध** न०कर्म०। शुण्ठ्याम्, लशुने, वाराहीकन्दे, वत्सनाभे विषे, पिप्पल्याम्, अतिविषायां, वीर्य्यदौषधमात्रे च ।
**महौषधि** स्त्री०कर्म० । दूर्व्वायां, लज्जालुक्षुपे 'सहदेवी तथा व्याघ्री बला चातिबला तथा । शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्चला। महौषध्यष्टकं प्रोक्त'मित्युक्ते देवादीनां स्नानद्रव्यभेदे । श्वेतकण्टकार्य्यां ङीप्।
**मा** शब्दे अक०माने सक०जु०आ०अनिट् । मिमीते अमित ।

**मा** माने अदा०प०सक०अनिट् । माति अमासीत् ।
**मा** माने दि०आ०सक०अनिट् । मायते अमास्त ।
**मा** अव्य०ङिदनुबन्धात् दैवादिकात् माधातोः क्विप् । वारणे। धातोर्ङित्त्वेन शब्दे ङित्त्वव्यवहारात् न माङ्योगे इति पाणिनिसूत्रम् । ङिदनुबन्धशून्यधातुनिष्पन्नस्तु न ङित् तेन तद्योगे अडागमः स्यादेव 'मा निषाद। प्रतिष्ठां त्वमगमः' इति रामायणम् । मा-क-टाप् । लक्ष्म्याम्, मातरि च स्त्री० । मा-भावे क्विप् । माने स्त्री० ।
**मांस** न०मन-स दीर्घश्च । 'मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् । इति मांसस्य मांसत्व'मित्युक्ते प्राणिदेहस्थशोणितपरिपाकजे धातुभेदे । [मांसरोहिण्यां लतायाम्
**मांसच्छदा** स्त्री० मांसं छादयति छद-णिच्-अच् ह्रस्वः ।
**मांसज** न० मांसाज्जायते जन-ड । देहस्थे मांसजन्ये मेदसि
**मांसदलन** पु० मांसं प्लीहात्मकं मांसं दलयति दल-णिच्-ल्यु । प्लीहघातकवृक्षे ।
**मांसद्राविन्** पु० मांसं द्रावयति णिच्-णिनि । अम्लवेतसे
**मांसपेशि** स्त्री०६त० । गर्भस्यावयवभेदे । वा ङीप् तत्रैव ।
**मांसफला** स्त्री० मांसमिव कोमलं फलं यस्याः । वार्त्ताक्याम् ।
**मांसमासा** स्त्री०मस-परिणामे घञ् मांसस्य परिणामो यस्याः ५व०। माषपर्ण्याम् । [पुक्क। सुगन्धिद्रव्यभेदे (चामकषा)
**मांसरोहिणी** स्त्री० मांसं रोपयति रुह-णिच् णिनि वा न
**मांसल** त्रि० मांस+बलवत्यर्थे लच् । बलवति, स्थूले, पुष्टे च ।
**मांसलफला** स्त्री० मांसलं पुष्टं फलमस्याः । वार्त्ताक्याम् ।
**मांससार** पु० ६त० । मेदसि । मांसस्नेहादयोऽप्यत्र ।
**मांसहासा** स्त्री० मांसेन हस्यते कर्मणि घञ्। देहस्थचर्म्मणि
**मांसिक** त्रि० मांसं पण्यमस्य ठक् । मांसविक्रयोपजीविनि । (कसाइ) । [जटामांस्याम् ।
**मांसिनी** स्त्री० मांसस्यदाकारस्यास्तत्व शाऽस्त्यस्याः इनि ।
**मांसी** स्त्री० मांसमस्त्यस्य अच् गौ० ङीप् । जटामांस्याम् ।
**माकन्द** पु०माति मा-क्विप् माः परिमितः कन्दोऽस्य। आम्रे। आमलक्यां, पीतचन्दने, (बङ्कमूली) चन्दने, नगरभेदे च स्त्री० गौरा० ङीप् ।
**माकरी** स्त्री० मकरस्य तत्स्थरविकालस्य इयम् अण् । मकरस्थितरविकाले तदारब्धमाघमासस्य शुक्लसप्तम्यां 'तस्मै रोकश्च शोकश्च माकरी हन्तु सप्तमी'ति स्मृतिः ।
**माक्ष** सूहायां भ्वा०पर०सक० सेट् इदित् । माङ्क्षति अमाङ्क्षीत्।
**माक्षि(क्षी)क** न०मक्षिकाभिः सम्भृत्य कृतम् अण् पृ० वा दीर्घः। उपधातुभेदे मधुनि, तत्तुल्यगुणे स्वर्णमाक्षिके रौप्यमाक्षिके च।

**माक्षिकज** न० माक्षिकाज्जायते जन-ड । सिक्थके (मोम)

**माक्षिकफल** पु० माक्षिकमिव मधुरं फलमस्य । मधुनारिकेले

**माक्षिकशर्करा** स्त्री० ६त० । मधुजाते खण्डभेदे (मिताखण्ड)

**मागध** पु० मगधदेशे भवः अण् । श्वेतजीरके स्तुतिपाठके (भाट) वर्णसङ्करभेदे च यूथिकायां, पिप्पल्यां, सूक्ष्मैलायां, शर्करायां, भाषाविशेषे च स्त्री० ङीप् । मगधदेशजाते लि०

**मागधखारिका** स्त्री० लीलावत्युक्ते परिमाणभेदे ।

**माघ** पु० मघानक्षत्रयुक्ता पौर्णमासी माघी सात्र मासेऽण् । चैत्रावधिके एकादशे चान्द्रे मासे । तत्पौर्णमास्यां स्त्री० ङीप् । शिशुपालवधकाव्ये, तत्कर्त्तरि च पु० । 'तावद्भा भारवेर्भाति यावन्माघस्य नोदय' इत्युद्भटः ।

**माघ्य** न० माघे भवं यत् । कुन्दपुष्पे ।

**माङ्गल्य** न० मङ्गलमेव मङ्गलाय हितं वा ष्यञ् । मङ्गले, मङ्गलसाधने च । [तायाम् ।

**माङ्गल्यार्हा** स्त्री० माङ्गल्यमर्हति अर्ह-अच् । त्रायमाणाल-

**माचिका** स्त्री० मच-ण्वुल् । अम्बष्ठायां, मक्षिकायाञ्च ।

**माञ्जिष्ठ** न० मञ्जिष्ठया रक्तमण् । रक्तवर्णे । तद्वति त्रि० ।

**माठर** पु० मन-अरन् ठान्तादेशः ततः स्वार्थे अण्, सूर्य्यस्य पारिपार्श्वे मठति अरण् वा । सूर्य्यस्य पारिपार्श्विके गणभेदे

**माण(न)क** न० मा-अकच् युट् नुट् वा । स्वनामख्याते कन्दभेदे 'हरिद्रा माण(न)कं कचुरिति नवपत्त्रिकाप्रमाणम् ।

**माणव** पु० मनोरपत्यं अण् अल्पार्थे णत्वम् । अल्पवयस्के मनुष्ये । स्वार्थे कन् । तत्र, हारभेदे च ।

**माणवीन** त्रि० माणवस्येदम् खञ् । बालकसम्बन्धिनि ।

**माणव्य** न० माणवानां समूहः यत् । बालकसमूहे ।

**माणिक्य** न० मणिरिव कायति कै-क स्वार्थे ष्यञ् । (माणिक) रक्तवर्णे रत्नभेदे, गृहगोधिकायाञ्च । [सैन्धवलवणे ।

**माणिबन्ध(मन्थ)** न० मणिबन्ध (मन्थ) पर्वते भवः अण् ।

**मातङ्ग** पु० मतङ्गस्य मुनेरयम् अण् । गजे, किरातजातिभेदे, अश्वत्थवृक्षे च । दशमहाविद्याभेदे स्त्री० ङीप् । [भेदे ।

**मातङ्गमकर** पु० मातङ्ग इव मकरो जलजन्तुः । महामत्स्य-

**मातरपितृ** स्त्री० माता च पिता च द्वन्द्वे मातुर्वा मातरादेशः । मातापित्रोः । पक्षे मातरा नङ् । तयोरर्थयोः ।

**मातरिश्वन्** पु० मातरि आकाशे श्वयति वर्द्धते श्वि-कनिन् डिच्च अलुक्स० । वायौ । [सारथौ

**मातलि** पु० मतं लाति ला-क मतलस्तस्यापत्यम् इञ् । इन्द्र-

**माता** स्त्री० मा-अतच् । जनन्याम् । 'विश्वेश्वरीं विश्वमाता'मिति दुर्गास्तवः ।

**मातामह** पु० मातुः पिता मातृ+डामहच् । मातुः पितरि । तत्पत्न्यां स्त्री० ङीप् ।

**मातुल** पु० मातुर्भ्राता मातृ-डुलच् । मातुर्भ्रातरि । तत्पत्न्यां वा ङीप् वा आनुक् च । मातुलानी मातुली मातुला च । मद-णिच्-उलच् पृ० दस्य तः । धुस्तूरे, मदनवृक्षे, सर्पभेदे च

**मातुलपुत्रक** न० मातुलस्य धुस्तूरस्य पुत्र इव कायति कै-क । धुस्तूरे, ६त० कन् मातुलसुते ।

**मातुलुङ्ग** पु० मातुलं गच्छति गम-खच् डिच्च पृ० । बीजपूरे, मधुकर्कट्याञ्च । संज्ञायां कन् । वनबीजपूरे ।

**मातृ** त्रि० मा-तृच् । प्रमाणकर्त्तरि परिमाणकर्त्तरि, जीवे आकाशे च स्त्रौ मातरौ । मा-तृ । 'ब्राह्मी माहेश्वरी चण्डी वाराही वैष्णवी तथा कौमारी चैव चामुण्डा चर्च्चिकेत्यष्टमातरं इत्युक्ते, शिवसहचरीभेदे, जनन्याम्, भूमौ, विभूतौ, लक्ष्म्याम्, रेवत्याम्, आखुकर्ण्याम्, इन्द्रवारुण्याम्, (राखालशशा) जटामांस्यां, चण्डीमार्कण्डीयासु देवीशक्तिषु च 'मातृः कौपमयाविष्टः' इति चण्डी ।

**मातृका** स्त्री० मातेव कायति कै-क । उपमातरि, अङ्गन्यासादिषु चण्डीमन्त्रिदेवीमूर्त्तिषु सर्वमन्त्रोत्पादकेषु अकारादिक्षान्तपञ्चाशद्वर्णेषु, करणे, स्वरे च । मातृ+स्वार्थे कन् । मातृशब्दार्थे ।

**मातृबन्धु** पु० ६त० । मातुः पितुःस्वसुः पुत्रा मातुर्मातुः-स्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः, इत्युक्तेषु मातुः पितृष्वस्रीयादिषु । मातृबान्धवोऽप्यत्र ।

**मातृष्वसृ** स्त्री० ६त० । मातुर्भगिन्याम् अलुक्स० । मातुः ष्वसाप्यत्र ।

**मातृष्वस्रेय** पु० मातृष्वसुरपत्यम् ढक् । मातुर्भगिनीपुत्रे तत्कन्यायां स्त्री० ङीप् । छण् । मातृष्वस्रीयोऽप्यत्र ।

**मातृसिंही** स्त्री० मातुः प्रमातुः सिंहीव । वासकवृक्षे ।

**मात्र** न० मा-त्रन् । साकल्ये अवधारणे च । अविच्छेदे, अल्पे, परिमाणे, कर्णभूषायाम्, वित्ते, लघुवर्णोच्चारणकाले, वर्णावयवभेदे, 'कालेन यावता पाणिः पर्य्येति जानुमण्डले । सा मात्रा कविभिः प्रोक्ता' इत्युक्तेषु ह्रस्वदीर्घप्लुतादिषु च स्त्री० । मीयन्तेऽनया विषयाः मा-त्रन् । इन्द्रियवृत्तौ । 'मात्रास्पर्शास्तु कौन्तेये'ति गीता । [काकारे चक्रे ।

**मात्रापताका** स्त्री० छन्दोग्रन्थोक्ते मात्राप्रस्तारानुगुणे पता-

**मात्रामर्कटी** स्त्री० छन्दोग्रन्थोक्ते मात्रावृत्तप्रस्तारानुगुणे मर्कटीजालचक्रभेदे ।

**मात्रामेरु** पु० छन्दोग्रन्थोक्ते मात्रावृत्तप्रस्तारानुगुणे मेरुचक्रे

**मात्रावृत्त** न० मात्रया कृतं वृत्तम् । आर्य्यादौ छन्दोभेदे ।
**मात्सर्य्य** न० मत्सरस्य भावः ष्यञ् । परगुणद्वेषे 'मात्सर्य्यमुत्सार्य्य विचार्य्ये'ति साहि० । [ष्योत् ।
**माथ** वधे सक० क्लेशे अक०भ्वा०प०सेट् इदित् । मान्थति अमा
**माथ** पु० मथ-घञ् । पथि, मन्थने च ।
**माथुर** त्रि० मथुरायां भवो मथुराया आगतो वा अण् । मथुरानगरीभवे, तत आगते च ।
**माद** पु० मद-घञ् । दर्पे, हर्षे च ।
**मादक** त्रि० मादयति मद-णिच् ण्वुल् । मत्तताकारके द्रव्ये माद्यति कर्त्तरि ण्वुल् । दात्यूहे पु० ।
**मादन** न० मादयति मद-णिच्-ल्यु । लवङ्गे । कामदेवे, मदन वृक्षे च पु० । विजयायां, माकन्द्याञ्च स्त्री० गौ० ङीप् ।
**मादृश(श्)** त्रि० ममेव दर्शनमस्य दृश-कुसट क्विप्, वा । मम तुल्यदर्शने मत्सदृशे । [अतिविषायाञ्च ।
**माद्री** स्त्री० मद्रे भवा अण् । पाण्डुराजस्य द्वितीयपत्न्याम्
**माधव** पु०मायाः धवः । नारायणे । मधु+स्वार्थे अण् । वसन्ते 'स माधवेनाभिमतेन सख्ये'ति कुमारः । मधुने पुष्परसाय मद्याय वा हितः अण् । वैशाखे तस्य मधुपुष्पवत्त्वात् तद्धितत्वम् । मधूकवृक्षे च तत्पुष्पेण हि मद्यसम्भवः । मधु बाहुल्येनास्त्यस्याः अण् । वासन्तीलतायाम् स्त्री० ङीप् ।
**माधवीलता** स्त्री०कर्म० । स्वनामख्यातायां लतायाम् ।
**माधवेष्टा** स्त्री० माधवे वैशाखे माधवस्य कृष्णस्य वा इष्टा । वाराहीकन्दे ।
**माधवोचित** न० माधव उचितो यस्य । कक्कोलके ।
**माधवोद्भव** पु० माधवे वैशाखे उद्भवति फलवत्त्वेन उद्+भू-अच् । (पियाल) राजादन्याम् ।
**माधुर** न० मधु-राति भ्रमरेभ्यो ददाति रा क-स्वार्थे अण् । मल्लिकापुष्पे ।
**माधुरी** स्त्री० मधुरस्य भावः ष्यञ् माधुर्य्यं मित्यात् स्त्रीत्वपक्षे ङीप् यलोपः । 'माधुर्य्यं, मधुरत्वे, मद्यस्त्ववत्माधुरी भारे'त्युद्भटः । मधुर+स्वार्थे अण् । मदिरायाम् ।
**माध्यन्दिन** न० मध्यन्दिनमेव-अण् । मध्यमदिने तदधिकृत्य कृतो ग्रन्थः अण् शुक्लयजुर्वेदीयशाखाभेदे ।
**माध्वीक** स्त्री० मधुना मधूकपुष्पेण निर्वृत्तम् ईकक् । मधूकपुष्पजाते मद्ये । मधु एव स्वार्थे ईकक् द्राक्षाफले 'साध्वी माध्वीक ! चिन्ता दिव्याह्लमिति जयदेवः । [क्लिये
**माध्वीकफल** पु० माध्वीकमिव मधुरं फलमस्य । मधुनारि
**माध्वीमधुरा** पु०माध्वीकमिव मधुरा पृ०कलोपः । मधुरखर्जूरिकायाम् । [अमीमांसिष्ट ।
**मान** विचारे भ्वा० आ० सक०सेट् स्वार्थे सन् । मीमांसते
**मान** अर्च्चे वा चु०उ०पक्षे०भ्वा०पर०सक० सेट् । मानयति ते मानति अमीमनत्-त अमानीत् ।
**मान** न० मा-ल्युट् । परिमाणे इयत्तावच्छेद्यैर्व्यपरिच्छेदे, प्रमाणे गानाङ्गे कालक्रियायां तालविरामोपलक्षिते कालव्यापारे च । मन-घञ् । आत्मनि उत्कर्षाभिमानात्मिकायां चित्तसमुन्नतौ । 'स्वाभीष्टश्लेषणीयादिविरोधी मान उच्यते' इत्युक्ते अनुरक्तदम्पत्योः अवस्थाभेदे 'मुञ्च मयि मानमनिदानमि'ति जयदेवः सम्माने च ।
**मानग्रन्थि** पु० मानस्य ग्रन्थिर्बन्धनं यस्मात् । अपराधे ।
**मानरन्ध्रा** स्त्री० मानाय कालप्रमाणज्ञानाय रन्ध्रं यस्याः । ताम्रनिर्म्मिते सच्छिद्रे कालज्ञानहेतौ घटीयन्त्रभेदे ।
**मानव** पु० मनोरपत्यम् अण् । मनुष्ये स्त्रियां जातौ ङीप् ।
**मानस** न० मन एव अण् । मनसि, कैलासान्तिकस्थे ब्रह्मणा कृते सरोवरभेदे च ।
**मानसव्रत** न०मनसा कृतं मानसं कर्म० । 'अहिंसासत्यमस्तेयं ब्रह्मचर्य्यमलुब्धता । एतानि मानसानिस्तु व्रतानी'त्युक्तेषु अहिंसादिषु ।
**मानसौकस्** पु० मानसमोको यस्य । हंसे ।
**मानिनी** स्त्री० मान-इनि । फलीवृक्षे, मानवत्यां स्त्रियां च
**मानुष** पु०मनोरपत्यम् अण् सुक् च । मानवे, ततोजातौ स्त्रियां ङीप् मानुषी ।
**मानुष्य** न० मानुषस्य भावः यत् । मनुष्यत्वे ।
**मान्द्य** न० मन्दस्य भावः ष्यञ् । रोगे, मन्दतायाञ्च ।
**मान्धातृ** पु०मामिन्द्रं धयति धे-तृच् । 'मामयं धास्यतीत्युक्ते मान्धातासौ मतोऽस्त्विति' इति निरुक्तेः युवनाश्वराजपुत्रे नृपभेदे ।
**मान्य** पु० मान-अर्हायां कर्म्मणि ण्यत् । पूज्ये ।
**मामक** त्रि०मम-इदम् अस्मद्+अण् ममादेशः । ममकारिणि खञ् । मामकीनोऽप्यत्र ।
**माया** स्त्री० मा-य नैरुक्तम् । ज्ञाने, कापट्ये, इन्द्रजालादौ, मिथ्याबुद्धिहेतुप्रधानभेदे, कृपायां, दम्भे, लक्ष्म्यां बुद्धमातरि, ईश्वरस्योपाधौ, अघटनघटनसाधिकायां शक्तौ । [(बाजीकर) ।
**मायाकृत्** पु० मायामिन्द्रजालं करोति कृ-क्विप् । मायाकरे
**मायादेवीसुत** पु० ६त० । बुद्धे ।
**मायावत्** त्रि०माया+अस्त्यर्थे मतुप् मस्य वः । मायाविशिष्टे कंसराजे पु० । कामपत्न्यां स्त्री० ङीप् । [ङीप

मायाविन् त्रि० माया+अस्त्यर्थे विनि । मायाकरे स्त्रियां
मायिक त्रि०मायास्त्यस्य ठन् । मायाकरे । इनि मायीप्यत्र ।
मायु पु० मा-यु । देहस्थे पित्ते । [मयूरसम्बन्धिनि त्रि० ।
मायूर न० मयूराणां समूहः तस्येदं वा अण् । मयूरसङ्घे ।
मायूरी स्त्री०मयूरस्येदं प्रियत्वात् अण् ङीप् । अजमोदायाम्
मार पु० मृ-घञ् । मरणे । मारयति मृ-णिच्-अच् । कामदेवे, विघ्ने, धुस्तूरे च । [मारिभये । (वाज) पक्षिभेदे च
मारक पु०मृ-णिच् ण्वुल् मृ-णिच् घञ् स्वार्थे कन् वा। मारणे
मारकस्थान न० मारणकारणे स्थाने । 'अष्टमं चायुषः स्थानमष्टमादष्टमञ्च यत् । तयोरपि व्ययस्थानं मारकस्थानमुच्यते, इत्युक्ते जन्मलग्नात् सप्तमे द्वितीये च स्थाने ।
मारि स्त्री० मृ०णिच्-इन् । मारणे वा ङीप् मारीत्यप्यत्र । 'मारीभये राजभये' इति वटुकस्तवः ।
मारिष पु० रिष-हिंसायाम् निषेधार्थकमाशब्देन स० । नाट्योक्तौ आर्ये, हिंसानिवारकतया तस्य तथात्वम् । तण्डुलीयशाके, दक्षमातरि च स्त्री० टाप् ।
मारीच पु० तारकाराक्षसीपुत्रे रावणानुचरे राक्षसविशेषे ।
मारुतव्रत न० 'प्रविश्य सर्व्वभूतानि यथाचरति मारुतः । तथा चरैः प्रवेष्टव्यं व्रतमेतद्धि मारुतमि'त्युक्ते राज्ञां धर्मभेदे
मारुतात्मज पु०६त० हनुमति, भीमे च इञ् । मारुतिरप्यत्र ।
मारुतापह पु० मारुतं वायुदोषमपहन्ति अप+हन-ड । वरुणवृक्षे । वायुनाशके त्रि०।
मार्कण्ड पु०मृकण्डोरपत्यम् अण् इ० । मुनिभेदे ठक् । मार्कण्डेयोऽप्यत्र । तत्दृष्टे लताभेदे स्त्री० । [भृङ्गराजे ।
मार्कव पु० मारयति कृमि-मारि केशकीटे श्रूयते कृ-अच् ।
मार्ग संस्कारे सर्पणे च चुरा० उभ० सक० सेट् । मार्गयति अममार्गत् त ।
मार्ग अन्वेषणे वा०चु०उभ०पक्षे भ्वा०प०सक० सेट् । मार्गयति-ते । मार्गति अममार्गत् त । अमार्गीत् । 'स्पष्टतेर-मार्गीदि'ति भट्टिः । भ्वा० आ० इत्यन्ये तेन मार्गते, मार्गमाण इत्यादि सिद्धम् ।
मार्ग पु० मृज-शुद्धौ-मार्ग-अन्वेषणे वा घञ् । पथि-तद्विशेषे मनाघस्य इन्द्रदमिपाने चक्ष्यते । [ल्यु । याचके त्रि० शरे पु०
मार्गण न०मार्ग-ल्युट् । अन्वेषणे याचने, प्रणये च । कर्त्तरि
मार्गशिर पु० मृगशिरया युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण् । चान्द्रे अग्रहायणे मासि तत्पौर्णमास्यां स्त्री०ङीप्
मार्गशीर्ष पु० सारदं मार्गशिरवत् । अग्रहायणे मासि । तत्पौर्णमास्यां स्त्री० ङीप् ।

मार्गित त्रि० मार्ग-क्त । अन्वेषिते । [यति-ते अममार्ज्जत्-त
मार्ज्ज मार्ज्जने सक० ध्वनौ अक०चुरा०उभ० सेट् । मार्ज्ज-
मार्ज्जन न० मार्ज्ज-ल्युट् । प्रोञ्छनादिना निर्मलीकरणे । युच् । तत्रैवार्थे स्त्री०सा च मुरजध्वनौ च । करणे ल्युट् । सम्मार्जन्याम् (झाटा) । स्त्री० ङीप् ।
मार्ज्जार(ल) पु० मृज-आरन् वा रस्य लः । विडाले रक्तचित्रके खट्टासे च । ततः संज्ञायां कन् । मयूरे ।
मार्ज्जारगन्धा स्त्री० मार्ज्जारस्येव गन्धो यस्याः । मुद्गपर्णीभेदे । स्वार्थे कन् । तत्रैव ।
मार्ज्जारी स्त्री० मृज-आरक् गौ०ङीष् । कस्तूर्याम् खट्टासजन्तौ, मार्जारयोषिति च ।
मार्ज्जारी(लो)य पु० मार्ज्जार+(ल)स्वार्थे छ, मृज-आरीयक् रस्य लत्वम् वा । विडाले, शूद्रे च कायशोधने न० ।
मार्जित पु०. मार्ज-क्त । शोधिते । दधि-खण्डमधुसर्पिर्मरिचादिकृते, कर्पूरादिवासिते भक्ष्यभेदे (रसा) ।
मार्त्तण्ड पु० मृते अण्डे भवः अण् शक० । सूर्ये । तस्य च मृताण्डजन्म 'मारितञ्च यतः प्रोक्तमेतदण्डं त्वयादितिम् तस्मान्मुने! सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यती'ति पुराणोक्तेः
मार्त्तिक न०मृत्तिकया निर्मितम् अण् । शरावे (शरा) मृन्मये त्रि
मार्द्दङ्गिक त्रि० मृदङ्गं तद्वादनं शिल्पमस्य ठक् । मृदङ्गवादके
मार्द्दव न०मृदोर्भावः । मृदुत्वे, परदुःखासहिष्णुतायाम् द्रवीभावे च 'अमितप्रभयोऽपि मार्द्दवं भजते कैव कथे'ति रघुः ।
मार्ष पु० मृष-क ततः स्वार्थे अण् । तण्डुलीयशाके ।
मार्ष्टि स्त्री० मृज-क्तिन् । शोधने । [जातिभेदे
माल पु० मल-संज्ञायां घञ् । 'भिल्ला किराताश्चे'त्युक्ते
मालक न० मल-ण्वुल् । स्थलपद्मे । (माला) नारिकेलपात्रभेदे च
मालती स्त्री० मां लक्ष्मीं शोभां वा लतति वेष्टते लत-अण् ङीप् । जातीलतायां, युवत्यां, काकमाच्यां, नदीभेदे, विशल्यायां, ज्योत्स्नायां, निशायाञ्च ।
मालतीतीरज पु० मालत्या नदीभेदस्य तीरे जायते जन-ड । टङ्कणे (सोहागा) मालतीतीरभवादयोऽप्यत्र ।
मालतीपत्री स्त्री० मालत्यास्तन्नामकजात्या इव पत्रमस्याः । जातीपत्रयाम् (जैयत्री) । [जातीफले ।
मालतीफल न०मालत्यास्तन्नामकजात्याः फलम् । (जायफल)
मालभारिक त्रि० मालानां भारोऽस्त्यस्य ठन् पूर्व्वपदह्रस्वः मालाभारवति ।
मालव पु० अवन्तिदेशे (मालओया देश) रागभेदे च ।
मालविका स्त्री० मालवे भवा ठक् । निवृत्ति (तेओड़ि)

**मालती** स्त्री॰ मालं मलनं जटादिना इष्टत्वं स्तति सो-क गौ॰ ङीप् । केशपुष्टिकारके वृक्षे, रागिणीभेदे च ।

**मालाकण्ट** पु॰ मालाकारः कण्टः कण्टको यस्य । अपामार्गे।

**मालाकन्द** पु॰ मालाकारः कन्दो यस्य । मूलभेदे ।

**मालाकार** पु॰ मालां करोति कृ-अण् । (माली) वर्णसङ्कर भेदे । माल्यकारके त्रि॰ ।

**मालाग्रन्थि** पु॰ मालया ग्रन्थिरत्र । मालादूर्व्वायाम् ।

**मालातृण** न॰ मालाकारं तृणम् । भूतृणे । स्वार्थे कन् । तत्रैव

**मालादीपक** न॰ अलङ्कारोक्ते अर्थालङ्कारभेदे ।

**मालादूर्व्वा** स्त्री॰ मालाकारा दूर्व्वा। (गाठिदूर्व्वा) दूर्व्वाभेदे

**मालारिष्टा** स्त्री॰ मालाभूतमरिष्टं यस्याः ५ब॰। पाठायाम्

**मालाली** स्त्री॰ मालामलति भूषयति अल-अण् ङीप्। पृक्कायां (पिडिङ्गशाको) स्वार्थे कन् । तत्रैव ।

**मालिक** पु॰ माला तन्निर्माण शिल्पमस्य ठन् । मालाकारे जातिभेदे, पक्षिभेदे, रञ्जके च । माल्यकारके त्रि॰ ।

**मालिका** स्त्री॰ मालैव कन् अत इत्त्वम् । नवमल्लिकायां, ग्रीवालङ्करणे, नदीभेदे सुरायां अतस्याम्, पुष्पमाल्ये, च । 'पाशाक्षमालिकाम्भोजेति लक्ष्मीध्यानम् ।

**मालिन्** पु॰माला शिल्पमस्त्यस्य इनि। मालाकारे,माल्यवति त्रि॰ मालाकारपत्न्यां, पञ्चदशाक्षरपादके, छन्दोभेदे, गौर्य्याम् चम्पानगर्य्यां, मन्दाकिन्यां, कण्वाश्रमान्तिकस्थे नदीभेदे, अग्निशिखावृक्षे, दुरालभायां च स्त्री॰ ङीप् ।

**मालु** स्त्री॰ मल-उण् । पत्रलतायां (पातलता) नार्य्याञ्च ।

**मालुधान** पु॰ मालुरिव पत्रलतेव धीयतेऽसौ धा-कर्म्मणि ल्युट् । (मालुयासाप) सर्पभेदे। लताभेदे स्त्री॰ङीप् ।

**मालूर** पु॰मां लक्ष्मीं परेषां लुनाति लू-रक् । विल्वे, कपित्थे च

**मालेय** त्रि॰ मालायां साधुः ढक् । मालारचनानिपुणे ।

**माल्य** न॰ मालायै हितं यत् । पुष्पे । स्वार्थे ष्यञ् । पुष्पमालायाम्, मूर्द्धिस्थायां पुष्पमालायाञ्च ।

**माल्यपुष्प** पु॰ मालायै हितं पुष्पमस्य । शणवृक्षे शणपुष्याम् स्त्री॰ ङीप् । स्वार्थे कन् । तत्रैव ।

**माल्यवत्** त्रि॰ माल्यमस्त्यस्य मतुप् मस्य वः । माल्ययुक्ते केतुमालेलावृतवर्षयोः सीमाभूते पर्व्वतभेदे, सुकेशराक्षस पुत्रे रावणमन्त्रिणि राक्षसभेदे च । [कारके

**माशब्दिक** त्रि॰ मेति शब्दं निषेधाय करोति ठक् । निषेध-

**माष** पु॰ मष-संज्ञायां घञ् । (माषकलाइ) व्रीहिभेदे 'दयार्द्ध-गुञ्जं मवदन्ति माषमि'त्युक्ते 'गुञ्जाभिर्दशभिर्माष इत्यन्ते च परिमाणभेदे ।

**माषकलाय** पु॰ माषाख्यः कलायः । स्वनामख्याते व्रीहौ

**माषपर्णी** स्त्री॰ माषस्येव पर्णान्यस्याः ङीप् । वनमाषे ।

**माषभक्तबलि** पु॰ माषमिश्रितं भक्तमेवबलिः पूजोपहार द्रव्यम् । माषमिश्रिते भक्तरूपे पूजोपहारे ।

**माषवर्द्धक** पु॰माषं माषपरमितं स्वर्णं वर्द्धयति आच्छिद्यचि अपहरति वर्द्ध छेदने ण्वुल् । स्वर्णकारे ।

**माषीण** न॰ माषाणां भवनं क्षेत्रं खञ् । माषव्रीहिभवन योग्ये क्षेत्रे । यत् । माष्यमप्यत्र ।

**मास्** पु॰ माति परिच्छिनत्ति स्वगत्या कालम् मा-असुन् । चन्द्रे त्रिंशद्दिनात्मककालरूपे मासे च ।

**मास** पु॰मा॰एव अण् । चन्द्रे त्रिंशद्दिनात्मके काले च । स च सौरसावनचान्द्रनाक्षत्रभेदाच्चतुर्विधः । मासश्चन्द्रस्यायम् अण् चान्द्रे मासे तु मुख्यः । मस्यते परिमीयते मस-परिमाणे कर-णे घञ् पञ्चगुञ्जात्मके मद्यार्थे माष स्वार्थे कन् तत्रैव ।

**मासन** न॰मासं नयति नी-ड । सोमराजीलतायाम् ।

**मासप्रमित** पु॰ मासं प्रमातुमारब्धः । प्र+मा-क्त । कालाः इति स॰। प्रतिपच्चन्द्रे । [भक्तभक्षे

**मासर** पु॰मस-परिणामे घञ् मासं परिणामं राति रा-क ।

**मासान्त** पु॰ मासस्य सौरस्य चान्द्रस्य वाऽन्तः अवसानम् । मासावसाने संक्रान्त्यादौ ।

**मासिक** त्रि॰ मासे भवः कालाट्ठञ् । मासभवे, प्रेतोद्देशेन मृततज्जातीयतिथौ, प्रतिमासममावस्यायां च कर्त्तव्ये श्राद्धे न॰। मासिकानि सकोये त्रि'ति स्मृतिः । 'पितॄणां मासिकं श्राद्धमन्वाहार्य्यं विदुर्बुधा इति स्मृतिः ।

**मास्म** अव्य॰ मस-णिच् मम् । निवारणे ।

**माह** माने भ्वा॰उभ॰सक॰सेट् । माहति ते अमाहीत् अमा-हिष्ट । चङि न ह्रस्वः । [महाकुलीनोऽप्यत्र

**माहाकुल** त्रि॰महाकुले भवः अण् । महाकुलोद्भवे । खञ् ।

**माहात्म्य** न॰ महात्मनो भावः ष्यञ् । महिमनि महत्त्वे ।

**माहिष** न॰ महिष्या इदम् अण् । महिषीदुग्धादौ महिषस्ये-दम् अण् । तच्छृङ्गादौ त्रि॰ । [सङ्करजातिभेदे ।

**माहिष्य** पु॰ महिष्या भवः ष्यञ् । क्षत्रेण वैश्यायामुत्पन्ने

**माहेन्द्र** पु॰ महेन्द्रस्यायम् अण् । ज्योतिषोक्ते महेन्द्रादिसम्ब न्धिनि दण्डभेदे । पूर्व्वस्यां दिशि, इन्द्रपत्न्यां, गवि च स्त्री॰ ङीप् । [स्त्रीगव्यां स्त्री॰ ङीप्

**माहेय** पु॰मह्या अपत्यम् मही+ढञ् । मङ्गले नरकासुरे च

**माहेश्वर** त्रि॰ महेश्वरादधिगतम् ततः आगत अण् । महे-श्वरतः प्राप्ते । यवतिक्तायां स्त्री॰ ङीप्। तस्येदम् अण् ।

'माहेश्वरी वृषारूढा, इत्युक्ते मातृभेदे दुर्गामात्रे स्त्री०ङीप्

**मि** क्षेपे स्वा०उभ०सक०अनिट्। मिनोति मिनुते अमासीत् अमास्त। क्त्रि मप् च मित्रिमम्।

**मिच्छ** वधे भ्वा०पर०सक०सेट्। मिच्छति अमिच्छीत्।

**मित** त्रि०मि मा-वा-क्त। परिमिते, प्रक्षिप्ते, अवच्छिन्ने, क्षिप्ते च

**मितङ्गम** पु० मितं परिमितं यद्व-गच्छति गम-खच् मुम् च। गजे। परिमितगामिनि त्रि०।

**मितद्रु** पु० मितं द्राति द्रवति वा कु नि०। समुद्रे। [त्रि०

**मितम्पच** पु०मितं पचति पच-खच् मुम् च। कृपणे। परिमितपाचके

**मिति** स्त्री० मा-मि-वा क्तिन्। ज्ञाने, माने, अवच्छेदे, विक्षेपे च

**मित्र** न०मेद्यति स्निह्यति मिद-त्र। स्नेहान्विते सुहृदि, राज्ञां विषयानन्तरितन्नृपादितरस्मिन् राजनि तयोर्द्वयोरपि मध्यस्थनृपस्य राज्यहरणरूपैककार्य्यकारत्वात् मित्रत्वम्। मि-क्त। सूर्य्ये।

**मित्रयु** पु० मित्रं याति या-कु। मित्रवत्सले।

**मिथ** वधे मेधायाञ्च सक०भ्वा०उभ०सेट्। मेथति-ते अमेथीत् अमेथिष्ट। चङि न ह्रस्वः।

**मिथस्** अव्य० मिथ-असुन्। रहसि, अन्योन्यस्मिन्नित्यर्थे।

**मिथिला** स्त्री० मिथ-किलच्। स्वनामख्यातायां राजधान्याम्

**मिथुन** न०मिथ-उनन् किच्च। स्त्रीपुंसयोः मेषादितस्तृतीये राशौ च

**मिथ्या** अव्य० मिथ-क्यप्। अयथार्थे असत्ये।

**मिथ्यादृष्टि** स्त्री० मिथ्या-सफलस्यापि अफलत्वेन दृष्टिः। नास्तिकतायां सफलस्यापि वैदिककर्म्मणो निष्फलत्वज्ञाने।

**मिथ्यानिरसन** न० मिथ्या निरस्यतेऽनेन निर्+अस-क्षेपे करणे ल्युट्। शपथे।

**मिथ्याभियोग** पु० मिथ्याभूतेनासत्येनाभियोगः राज्ञोऽन्तिके वेदनम् अभि-युज-घञ्। शतं मे धारयतीत्यसत्यमुक्त्वा राज्ञोऽन्तिके अभियोगे।

**मिथ्याभिशंसन** न० मिथ्याभूतेनासत्येनाभिशंसनम् अपवादः। 'त्वया स्वर्णमपहृतमि'त्यपवादकथने।

**मिथ्याभिशाप** पु० मिथ्याभूतेनासत्येनाभिशापोऽपवादः। मिथ्यापवादे। [अतद्वति तद्वत्त्वेन ज्ञाने।

**मिथ्यामति** स्त्री० मिथ्याभूतस्य मतिः मन-क्तिन्। भ्रान्तौ-

**मिथ्योत्तर** न० कर्म० व्यवहारे 'मिथ्यैतत् नाभिजानामि तदा तत्र न सन्निधिः। अजातश्चास्मि तत्काले इति मिथ्या चतुर्विध'मित्युक्तप्रकारे, उत्तरभेदे, ('मिथ्योत्तरे पूर्व्ववादे') इति स्मृतिः। [अमेदिष्ट। चङि न ह्रस्वः।

**मिद** वधे मेधायाञ्च भ्वा०उ०सक०सेट्। मेदति-ते अमेदीत्

**मिद** स्नेहे भ्वा०आ०लुङि प०अक०सेट्। मेदते अमिदत् भावादौ क्ते मिन्नं मेदितम्।

**मिद** स्नेहे वा चु०उभ०पक्षे भ्वा०प०अक०सेट् इदित्। मिन्दयति अमिमिन्दत्-त। पक्षे मिन्दति अमिन्दीत्। [क्त मेदितं मिन्नम्

**मिद** स्नेहे दि०पर०सक०सेट्। मेद्यति-ते अमिदत् अमेदीत्।

**मिद** स्नेहे चु० उभ०सक०सेट्। मेदयति-ते अमीमिदत्-त।

**मिल** श्लेषे तु० उभ०सक०सेट्। मिलति अमेलीत् अमेलिष्ट कुटादिरयमित्येके तेन अमिलीत् ल्युटि मिलनम्।

**मिव** सेके भ्वा० पर०सक०सेट् इदित्। मिन्वति अमिन्वीत्।

**मिश** ध्वनौ कोपे च तु०पर०अक०सेट्। मिशति अमेशीत्।

**मिशि(शी)** स्त्री० मिश-इन् वा ङीप्। मधुरिकायां, (मौरी) शतपुष्पायां, (सुलफा) जटामांस्याञ्च। अत्र ष० मिषि-मिषी मिशि-मिसी इत्यादयः। उक्तार्थेषु। [अमिमिश्र(स्र)त् त

**मिश्र(स्र)** योजने अद०चु०उभ०सक०सेट्। मिश्र(स्र)यति-ते

**मिश्र** त्रि० मिश्र-अच्। संयुते उत्तरप्रदस्थः श्रेष्ठार्थे। यथा आर्य्यमिश्राः। गजजातिभेदे, ज्योतिषोक्ते कृत्तिकाविशाखा नक्षत्रगणे च पु०। [इन्द्रोद्याने।

**मिश्रकावण** न० मिश्रकनामकं वनं पूर्व्वदीर्घो णत्वञ्च।

**मिश्रपुष्पा** स्त्री० मिश्रं पुष्पं यस्याः अजा०टाप्। मेथिकायाम्

**मिश्रवर्ण** न० मिश्रश्चित्रो वर्णो यस्य। कृष्णागुरुणि। मिश्रित-वर्णमात्रे त्रि०। [वार्त्ताक्याम्

**मिश्रवर्णफला** स्त्री० मिश्रवर्णं चित्ररूपान्वितं फलं यस्याः।

**मिश्रव्यवहार** पु० लीलावत्युक्ते गणनभेदे।

**मिश्रिता** स्त्री० 'मिश्रिता चैव विज्ञेया मिश्रितर्क्षैस्तु संक्रम' इत्युक्ते कृत्तिकाविशाखानक्षत्रकाले रविसंक्रमणे।

**मिश्रेया** स्त्री० मिश्र-अच् मिश्रा ईयते ई-गतौ यत् एच कर्म्म० शक०। मधुरिकायां (मौरी) शतपुष्पायाञ्च (सुलफा)

**मिष** सेचने भ्वा०पर०सेट्। मेषति अमेषीत्। क्त्वा वेट्।

**मिष** पराभिभवेच्छायाम् तु०पर०सक०सेट्। मिषति अमेषीत्।

**मिष** न० मिष-क। छले, स्पर्द्धने पु०।

**मिषिका** स्त्री० मिषी-कन्। जटामांस्याम्।

**मिष्ट** त्रि० मिष-क्त। सिक्ते, सर्द्धिते च। मधुररसे पु० तद्वति त्रि०

**मिह** सेचने भ्वा०पर०सक० अनिट्। मेहति अमिक्षत्।

**मिहिका** स्त्री० मिह-कुन् अत इत्त्वम्। नीहारे।

**मिहिर** पु० मिह-किरच्। सूर्य्ये, अर्कवृक्षे, वृद्धे, मेघे, वायौ, चन्द्रे, विक्रमादित्यसभास्थे पण्डितभेदे च।

**मी** वधे दि०आ०सक०अनिट्। मीयते अमेष्ट।

**मी** वधे क्र्या०उ०सक०सेट्। मीनाति मीनीते अमासीत्

अमात्त। क्त मीनः। [ति मयति अमीमत्-त अमीमीत्।
मी गत्यां मत्याञ्च वा चु०उ०पक्षे भ्वा०पर०सक०सेट्। माययति-
मीढ त्रि० मिह-क्त। मूत्रिते।
मीढुष्टम पु० मीढुस्+तम नि०। शिवे।
मीढ्वस् पु० मिह-क्वसु नि०। शिवे। [विद्वतारभेदे च।
मीन पु० मी-नक्। मत्स्ये, मेषादितो द्वादशे राशौ भग-
मीनकेतन पु०मीनः केतनो यस्य। कन्दर्पे। मीनध्वजादयोऽप्यत्र
मीननेत्रा स्त्री० मीनस्य नेत्रमिव पत्त्रिरस्याः। गण्डदूर्व्वायां
मीनाक्षीत्यादयोऽप्यत्र। [गौ०ङीष्। शर्करायाम्।
मीनाण्डा स्त्री० मीनस्याण्डस्तदाकारा रेणुकाऽस्त्यस्य अच्
मीम शब्दे अक० गतौ सक० भ्वा० पर० सेट्। मीमति अमी-
मीत्। चङि न ह्रस्वः।
मीमांसक पु० मीमांसां वेत्त्यधीते वा वुन्। मीमांसाशास्त्रज्ञे,
तदध्येतरि च। मान-स्वार्थे सन् ण्वुल्। सिद्धान्तकारके
मीमांसा स्त्री० मान-स्वार्थे सन् अ। विचारपूर्व्वकतत्त्वनिर्णये
तत्प्रतिपादकग्रन्थभेदे च स च ग्रन्थः कर्म्मब्रह्मविषय
भेदेन द्विविधस्तत्र कर्म्मकाण्डविषयसंशयनिवारण प्रति-
पादको ग्रन्थो जैमिनिप्रणीतः स च पूर्व्वमीमांसात्वेन प्रसि-
द्धः ब्रह्मविषयसंशयनिर्णायकश्चरमः स च वेदान्तत्वेन प्रसिद्धः
मील निमेषे भ्वा०पर०अक०सेट्। मीलति अमीलीत्। चङि
वा ह्रस्वः।
मीलन न० मील-ल्युट्। मुद्रणे, सङ्कोचने च।
मीलित त्रि०मील-क्त। अप्रफुल्ले, सङ्कुचिते च 'मीलितं यद
भिरामताधिके, इति काव्यप्रकाशः।
मीव स्थूलीभवने भ्वा०पर०अक०सेट्। मीवति अमीवीत्।
मु पु० मोचयति जीवान् स्वार्थे मुच डु। महेशे। [मलाबन्धे।
मुकन्दक पु० मुदः मुदे कन्दो यस्य कप् पृ० मुदो दलोपः।
मुकु पु० मुच-कु पृ० चस्य कः। मोक्षे, उत्सर्गे च।
मुकुट पु० मकि-उट पृ०। शिरोभूषणे।
मुकुन्द पु० मुकुं ददाति दा-क पृ० मुम्। 'मुकुमव्ययमात्मस्य
निर्व्वाणमोक्षवाचकम् तद्ददाति च यो देवः मुकुन्दस्तेन की
र्त्तित' इति निरुक्ते विष्णौ।
मुकुरस् अव्य० मकि उरच् पृ०। निर्व्वाणमोक्षे।
मुकुर पु० मकि उरच् पृ०। दर्पणे, वकुलवृक्षे, कुलालदण्डे,
मल्लिकावृक्षे, कोलीवृक्षे, चोरके च।
मुकुल पु०न० मकि उलच् पृ०। ईषद्विकाशितकलिकायाम्
देहे, आत्मनि च। [वनवृन्दे (मुगानी)
मुकुष्टक पु० मकुर्गतौत्सर्गस्तं सकति सह-अच् पृ० मतम्।

मुकूलक पु० मकि-ऊलच् कन्। दन्तिवृक्षे।
मुक्त त्रि० मुच-क्त। त्यक्ते, प्राप्तमोक्षे, सानन्दिते च।
मुक्तरसा स्त्री० मुक्तो रसो यस्याः। रास्त्रायाम्।
मुक्तसङ्ग त्रि० मुक्तः सङ्गोविषयासक्तिर्येन। त्यक्तसर्व्वविष-
यासक्ते। परिव्राजके पु०। [हस्तो येन। वहुदानशीले।
मुक्तहस्त त्रि० मुक्तः दानाय प्रसारितः न बद्ध इति यावत्
मुक्ता स्त्री० मुच-क्त। रास्नायाम् (मति) शुक्तिजे रत्नभेदे च।
मुक्तापुष्प पु० मुक्तेव शुभ्रं पुष्पमस्य। कुन्दवृक्षे।
मुक्ताप्रसू स्त्री० मुक्तां प्रसूते प्र+सू-क्विप् ६त०। शुक्तौ।
मुक्तामालम्ब पु० मुक्तया मुक्ताविशिष्टतया मालम्बते अच्।
मुक्ताहारे।
मुक्ताफल न० मुक्ता फलमिव। मौक्तिके, लवनीफले, (नोयाड़)
कर्पूरे, बोपदेवकृते भक्तिप्रधाने ग्रन्थभेदे च 'चतुरेण चतुर्व्वर्ग
चिन्तामणिवणिज्यया हेमाद्रिर्बोपदेवेन मुक्ताफलमचीक-
रदि'ति तद्ग्रन्थान्त्यश्लोकः।
मुक्तालता स्त्री० मुक्ताया लतेव। मुक्ताहारे।
मुक्तावली स्त्री० मुक्ताया आवली हारभेदः। मुक्ताहारे।६त०।
मुक्ताश्रेणौ भाषा परिच्छेदग्रन्थटीकायां सिद्धान्तमुक्तावल्यां च।
मुक्तास्फोट पु०स्त्री० स्फुट्यते विदीर्य्यते स्फोटः मुक्तायै
स्फोटः। शुक्तौ।
मुक्ति स्त्री० मुच-क्तिन्। मोचने संसारबन्धनराहित्ये मतभेदेन
आत्यन्तिकदुःखनिवृत्तौ, ब्रह्मस्वरूपावाप्तौ च देहेन्द्रिया
द्यभावात्मनो बन्धशून्यत्वे च।
मुक्तिमण्डप पु० मुक्तिप्रदो मण्डपः शाक०। काशीस्थे जग-
न्नाथक्षेत्रस्थे च मण्डपभेदे तीर्थे। [यावत्। सिद्धके।
मुक्तिमुक्त पु० मुक्तिर्मोचनं तेन मुक्तोरहितः संश्लिष्ट इति
मुख न०खन-अच् डित् धातोर्मुट् च। 'मजाद्यस्य यतः खातं
तस्मादाहुर्मुखं बुधा' इत्युक्ते देहावयवभेदे। 'ओष्ठौ च दन्तमूलानि
दन्ता जिह्वा च तालु च। गलो गलादि सकलं सप्ताङ्गं मुख-
मुच्यते' इत्युक्ते गलादिसप्ताङ्गकावयववति वदने। गृहस्य
निःसरणपथवर्त्मनि, दुर्गमण्डपादेः प्रवेशनिर्गमे, आरम्भे,
उपाये, नाटकादौ सन्धिभेदे, नाटकादिशब्दभेदे, आद्ये,
प्रधाने, शब्दे, नाटके, वेदे, च। नकुचवृक्षे पु० (डेवो)।
मुखगन्धक पु० मुखस्य गन्धो यस्य सेवनात् कप्। पलाण्डौ
मुखचपला स्त्री० आर्य्यावान्तरे छन्दोभेदे।
मुखज पु० ब्रह्मणो मुखाज्जायते जन-ड। विप्रे, 'ब्राह्मणोऽस्य
मुखमासीदि'ति श्रुतेः। [ल्यु। पलाण्डौ।
मुखदूषण पु० मुखं दूषयति सेवनात् दुर्गन्धेन दूष-णिच्

**मुखधौता** स्त्री० मुखं धौतं यया भाव-क्त ज्ञ्ट् पर०नि० । वाह्मणयष्टौ (वामनहाटि) ।

**मुखनिरीक्षक** त्रि० मुखमितरास्यं निरीक्षते ण्वुल् । अलसे स हि अन्यो यदि स्वकृत्यं कुर्यात् तदा नाहं करोमीत्याशयेन इतरमुखं निरीक्षमाणः स्वकार्ये न प्रवर्त्तते ।

**मुखपूरण** न० मुखं पूरयति पूर-ल्यु । गण्डूषमितजलादौ ।

**मुखप्रिय** न० मुखं प्रीणाति प्री-क उप० । लवङ्गे मुखरोचक माले त्रि० । [त्रि०

**मुखभूषण** न०मुखं भूषयति भूष-ल्यु । ताम्बूले । मुखमण्डने

**मुखमण्डनक** पु० मुखस्य मण्डनमिव स्वार्थे कन् । तिलकवृक्षे । ६त० । स्वार्थे कन् मुखभूषणे न० । । ५व० कप् । मुखभूषणे त्रि० ।

**मुखमोद** पु० मुखं मोदयति मुद-णिच् अण् । शोभाञ्जने ।

**मुखर** त्रि० मुखं मुखव्यापारं कथनं राति आदत्ते करोतीति यावत् रा-क । अप्रियवादिनि अमेवादिनि च 'मुखरस्तत्र हन्यते इति हितोपदेशः । काके, शङ्खे च पु० ।

**मुखरित** त्रि० मुखर इवाचरति मुखर+क्विप्-क्त । शब्दायमाने

**मुखलाङ्गल** पु० मुखं लाङ्गलमिव भूमिविदारकं यस्य । शूकरे

**मुखवल्लभ** पु० ६त० । दाडिमवृक्षे तत्फलस्य मुखप्रियत्वात् । मुखप्रिये त्रि० ।

**मुखवाचिका** स्त्री० मुखं याचयति अजडीकरोति सेवनात् वच णिच् ण्वुल् । अम्बष्ठायाम् । [कर्पूरादौ च ।

**मुखवास** पु० मुखं वासयति सुरभीकरोति अण् । गन्धतृणे,

**मुखवासन** पु० मुखं वासयति वासि-ल्यु । मुखसौरभकारके गन्धे । तद्वति त्रि० ।

**मुखविष्ठा** स्त्री०मुखं विष्ठेव दुर्गन्धं यस्याः । तैलपायिकायां तन्मुखस्पर्शमात्रे हि द्रव्यान्तरे दुर्गन्धो भवति ।

**मुखव्यादान** न० वि+आ+दा ल्युट् ६त० । मुखप्रसारणे ।

**मुखशोधन** न० मुखं शोधयति शुध-णिच्-ल्यु । त्वचे (दारचिनि) कटुरसे पु० ।

**मुखशोधिन्** पु० मुखं शोधयति शुध-णिच्-णिनि । जम्बीरे

**मुखस्राव** पु० स्रवति स्रु-ण ६त० । लालास्ये मुखस्यन्दिजले

**मुखाग्नि** पु० मुखमेवाग्नितुल्यं शापदानेन दाहकत्वात् यस्य । विप्रे दावानले च ।

**मुखास्त्र** पु० मुखमेवास्त्रं यस्य । कर्कटे ।

**मुख्य** त्रि० मुखे आद्ये भवः यत् । प्रथमकल्पे, श्रेष्ठे च ।

**मुग्ध** त्रि० मुह-क्त । मूढे । मोहयति अन्तर्भूतण्यर्थे मुहकर्त्तरि क्त । सुन्दरे । नायिकाभेदे स्त्री० ।

**मुच** दम्भे शाठ्ये भ्वा०आत्म०सक०सेट् । मोचते अमोचिष्ट इदित्पक्षम् । मुञ्चते ।

**मुच** त्यागे चुरा० उ०सक० सेट् । मोचयति-ते अमूमुचत्-त ।

**मुच** त्यागे तु० मुचादि० उभ० सक० अनिट् । मुञ्चति-ते अमुचत् अमुक्त । कर्म्मकर्त्तरि अकर्म्मकः 'मुच्यते सर्व्वपापेभ्य, इति पुराणम् । [नृपभेदे च ।

**मुचकुन्द** पु० मुच-क मुचुः कुन्द इव । स्वनामख्याते पुष्पवृक्षे,

**मुज** ध्वनौ अक० मार्ज्जने सक० वा चुरा०पक्षे भ्वा०पर०सेट् । मोजयति ते मोजति अमूमुजत्-त अमोजीत् । इदित्पक्षे तार्थे । मुञ्जयति ते मुञ्जति अमुमुञ्जत् तं अमुञ्जीत् ।

**मुञ्ज** पु० मुजि-अच् । (मुज) रज्जुसाधने तृणभेदे ।

**मुञ्जकेशिन्** पु० मुञ्ज इव केशः अस्त्यस्य इनिः । विष्णौ ।

**मुञ्जर** न० मुजि-अरन् । शालूके ।

**मुट** मर्दने भ्वा०पर०सक०सेट् इदित् । मुण्टति अमुण्टीत् ।

**मुट** क्षोदे वा चु०उभ० पक्षे भ्वा०पर०सक० सेट् । मोटयति ते मोटति अमूमुटत् त अमोटीत् । [मुमोट

**मुट** क्षोदने आक्षेपे च तु०कु०पर०सक०सेट् । मुटति अमुटीत्

**मुठ** पलायने भ्वा०आ०अक०सेट् इदित् । मुण्ठते अमुण्ठिष्ट ।

**मुड** केशादिच्छेदे मर्दने च भ्वा०पर०सक०सेट् इदित् । मुण्डति अमुण्डीत् ।

**मुड** मज्जने भ्वा०आ०अक०सेट् इदित् । मुण्डते अमुण्डिष्ट

**मुण** प्रतिज्ञाने तु०पर०सक०सेट् । मुणति अमोणीत् ।

**मुण्ड** पु०न० मुडि कर्मणि घञ् । मस्तके, गोले, मुण्डायसे च दैत्यभेदे, नापिते, स्थाणुवृक्षे च पु० मुण्डिते त्रि० महाश्रावणिकायां, मुण्डरीकायाञ्च स्त्री० टाप् ।

**मुण्डक** पु० मुण्डयति मुडि-णिच्-ण्वुल् । नापिते ।

**मुण्डचणक** पु० मुण्डश्चणकइव । कलाये ।

**मुण्डन** न० मुडि-भावे ल्युट् । केशच्छेदे वपने ।

**मुण्डफल** पु०मुण्डं शिरइव फलमस्य । नारिकेले । [भेदे

**मुण्डशालि** पु० मुण्डः शूकशून्यः शालिः । निःशूके शालि

**मुण्डायस** न० मुण्डमयः अच् समा० । लौहभेदे ।

**मुण्डितिका** स्त्री० मुडि-इत स्वार्थे कन् अत इत्त्वम् टाप् । (मुण्डारी) वृक्षभेदे ।

**मुण्डिन्** पु० मुण्डयति मुडि-णिच्-णिनि । नापिते ।

**मुण्डीरी** स्त्री० मुडि-ईरच् गौरा०ङीष् । स्वनामख्याते वृक्षभेदे

**मुद** संमार्ज्जने चु०उ०सक०सेट् । मोदयति ते अमूमुदत् त

**मुद** हर्षे भ्वा०आ०अक०सेट् । मोदते अमोदिष्ट । [च

**मुद्‌(दा)** स्त्री० मुद-सम्प०क्विप् वा टाप् । हर्षे, लावमाषोषध्यां

मुद्गिर पु० मुद्-किरच् । मेघे, भेके च । कामुके त्रि० ।
मुद्ग पु० मुद्-गक् नेट् । (मुग) कलायभेदे, पक्षिभेदे, जलकाके च
मुद्गपर्णी स्त्री० मुद्गस्येव पर्णमस्याः । (मुगानी) वनमुद्गे ।
मुद्गर न० मुदं गिरति गृ-अच् । मल्लिकाभेदे, लोष्टभेदने, (मुगुर) पुष्पवृक्षे, कर्मारवृक्षे (कामराङ्गा) च पु०। स्वार्थे कन् । तत्रैव ।
मुद्गल न० मुदं गिलति गृ-अच् रस्य लः । वनतृणे, रोहिष तृणे च । गोप्रियतृणे प्रवरकारके मुनिभेदे, नृपभेदे च पु० ।
मुद्गष्ट पु० मुद्गं सर्कति प्रतिवध्नाति सक-ड पृ० षत्वम् । वन-मुद्गे । अच् । मुद्गष्टकोऽप्यत्र ।
मुद्रा स्त्री० मुद-रक् । प्रत्ययकारिण्याम्, (मोहर) अङ्गुलिस्थे मुद्राङ्कनयुक्ताङ्गुलीयके, स्वर्णरौप्यादितङ्कायाम्, अप्रकाशे, 'मुद्राभिर्मिः शिल्पलिपिर्लिपिर्लेखनसम्भवा । गुण्डिका घुणसम्भूता लिपयः पञ्चधा मता' इत्युक्तलिपिमध्ये लिपि भेदे, तन्त्रप्रसिद्धे वीराचारसेव्ये पृथुकाख्यण्डुला भद्या गो-धूमचणकादयः । तस्य नाम भवेन्मुद्रे'त्युक्ते पञ्चमकारादिद्र-व्यभेदे, देवविशेषाराधनायाङ्गुल्यादिसन्निवेशविशेषे 'मुद्रा-मच्चगुणमि'ति तन्त्रम् सङ्कोचे च ।
मुद्रालिपि स्त्री० मुद्रया लिपिः । पञ्चधाविभक्तलिपिमध्ये लिपिभेदे (छापार अक्षर)
मुद्रिका स्त्री० मुद्रैव क्षुद्रा वा मुद्रा कन् । स्वर्णरौप्यादि निर्म्मिते अङ्गुलिस्थे अङ्कनसाधनयोग्ये पदार्थे ।
मुद्रित त्रि०मुद्रा जाताऽस्य इतच् । अप्रकाशिते, अङ्किते च ।
मुधा अव्य० मुह् का पृ० हस्य धः । मिथ्याशब्दार्थे ।
मुनि पु० मन-इन् पृ० उत्त्वम् । दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते, इत्युक्तलक्षणे स्थिरचित्ते वीतरागादौ जने । ते च मन्वत्रि विष्णुहारीतादयः । सप्तसंख्यायाञ्च ।
मुनिखर्ज्जूरी स्त्री०६त० । खर्ज्जूरीभेदे । [सप्तच्छदे(छातिम)
मुनिच्छद पु०मुनिसंख्याताः सप्तसंख्याः छदाः प्रतिपर्णं यस्य ।
मुनितरु पु० मुनिरगस्त्यनामकस्तरुः । वकवृक्षे ।
मुनिद्रुम पु०मुनीनां प्रियो मुनिनामको वा द्रुमः । श्योनाकवृक्षे वकवृक्षे च । [मुञ्जने च । ६त० । कपित्थुते ।
मुनिपुत्रक पु० मुनेः पुत्रः संज्ञायां कन् । दमनकवृक्षे,
मुनिपुष्प न० मुनिद्रुमस्य पुष्पं भीमो भीमसेनवदुत्तरपद लोपः । वकपुष्पे । [भोजनभावे च ।
मुनिभेषज न०मुनीनां भेषजमिव । हरीतक्यां, अगस्त्ये, मुनौ,
मुनीन्द्र पु० मुनिः इन्द्र इव । बुद्धे । ७त०। ऋषिश्रेष्ठे ।

मुन्थ गत्यां भ्वा०पर० सक०सेट् क्त्वा वेट् । मुन्थति अमुन्थीत् ।
मुन्था स्त्री० ताजकप्रसिद्धे जन्मवर्षावधि एकैकवर्षे लग्नात एकैकराश्यन्तरे लग्नस्य गतिभेदे । मुथहाप्यत्र ।
मुन्यन्न न० मुनियोग्यमन्नम् । नीवारकन्दादौ ।
मुमुक्षु त्रि०मोक्तुमिच्छुः मुच-सन्-उ । मोक्षेच्छावति । संसार बन्धनाभावेच्छावति । यतौ पु० ।
मुमूचान पु० मुच-कान पृ० दीर्घः । मेघे, मुक्तवति त्रि० । "द्रुपदादिव मुमूचान इति वेदमन्त्रः ।
मुमूर्षु त्रि० मर्त्तुमिच्छुः मृ-सन्-उ । आसन्नमरणे ।
मुर वेष्टने तु०पर०सक०सेट् । मुरति अमोरीत् ।
मुर पु० मुर-क । दैत्यभेदे, 'पार्थेनाथ द्विषन् मुर'मिति माघः
मुर पु०मुर-क । वेष्टने । स्वनामख्याते गन्धद्रव्ये स्त्री०टाप् ।
मुरज पु० मुरात् वेष्टनात् जायते जन-ड । मृदङ्गे वाद्यभेदे
मुरजफल पु०मुरज इव फलं यस्य । पनसवृक्षे । मृदङ्गफला-दयोऽप्यत्र ।
मुररिपु पु० ६त० । विष्णौ । मुरारिमुरमथनादयोऽप्यत्र ।
मुरला स्त्री० मुरं लाति ला-क । नर्म्मदायाम् । 'मुरलामारुतो द्धूतेति रघुः । वंशीनाम्नि वाद्ये गौरा० ङीष् । [योऽप्यत्र
मुरलीधर मुरलीं धरति धृ-अच् । श्रीकृष्णे, मुरलीवादनाद-
मुर्च्छ मोहे वृद्धौ च भ्वा०पर०सक०सेट् । मूर्च्छति अमूर्च्छीत् । भावे क्त । मूर्त्तम् मूर्च्छितम् ।
मुर्मुर पु० मुर-क । पृ०द्वित्वम् । तुषाग्नौ, कन्दर्पे, सूर्य्याश्वे च
मुर्व बन्धे भ्वा०पर०सक०सेट् । मूर्वतिअमूर्वीत् निष्ठायामनिट्
मुल रोपणे चु०उभ०सक०सेट् । मोलयति ते अमूमुलत् त
मुशटी स्त्री० मुष-अटच् गौ०ङीष् पृ० । चित्रकर्न्नौ ।
मुश(स)ली स्त्री०मुष मुस वा कलच् पृ० षस्य शः गौरा० ङीष् तालमूल्याम् बल्गाञ्च स्वार्थे कन् पत्नरान् ।
मुष बधे भ्वा०पर०सक०सेट् । मोषति अमोषीत् ।
मुष छेदने दिवा०पर०सक०सेट् । मुष्यति अमुषत्-अमोषीत् । पुषादिरयमित्यन्ये ।
मुष लुण्ठने क्र्या०पर०द्विक०सेट् । मुष्णाति अमोषीत् ।
मुष(स)(श)ल पु०मुष कलन् । पृ०षस्य वा सः(शा)वा अयोमये स्वनामख्याते धान्यादिकण्डनसाधने पदार्थे ।
मुषा स्त्री० मुष-क-टाप् । धातुद्रावणे पात्रभेदे (मुषी)
मुषित त्रि० मुष-क्त । अपहृतद्रव्ये जने ।
मुष्क पु० मुष-टाप् । पुरुषचिह्नभेदे अण्डकोषे, (घण्टापारुल) वृक्षे' तस्करे, मांसले, च स्वार्थे कन् तत्रैव ।
मुष्कशून्य पु०३त० । वृषणरहितैराक्रमन:पुरस्थके (खोजा)

मुष्टि पु० स्त्री० मुष-क्तिच्। बद्धपाणौ, पलपरिमाणे, कुड़वचतुर्थभागे च। क्तिन्। मोषणे स्त्री०।

मुष्टिक पु० मुष्ट्या कायति कै-क। कंसराजमल्लभेदे। मुष्टि मोषणं प्रयोजनमस्य कन्। स्वर्णकारे।

मुष्टिकान्तक पु० ६त०। बलदेवे तस्य मुष्टिकासुरहननात् तथात्वम्

मुष्टिन्धय पु० मुष्टिं धयति धे-खश् मुम् च। बालके।

मुष्टिबन्ध पु० मुष्टेर्बन्धो यत्र। संग्रहे। ६त०। मुष्टिबन्धने।

मुस खण्डने दि०पर०सक०सेट्। मुस्यति अमुसत् अमोसीत् पुषादिरयमित्यन्ये।

मुस(ष)(श)लिन् पु० मुस(ष)(श)ल+अस्त्यर्थे इनि। बलदेवे।

मुस(श)(ष)ल्य त्रि० मुस(श)(ष)लेन वध्यः यत्। मुषलवध्ये।

मुस्त संहतौ चु०उभ०सक०सेट्। मुस्तयति ते अमुमुस्तत् त।

मुस्त पु० स्त्री० मुस्त-अच् स्त्रीत्वे टाप्। मुस्तके। (मुता) स्वार्थे कन्। अत्रैव अस्त्री०। स्व वरविषभेदे पु०।

मुस्ताभ न० मुस्तेव भाति भा-क। (नागरमुथा) मुस्तकभेदे

मुह मोहे वैचित्त्ये दि० उभ०अक० वेट्। मुह्यति अमुहत् मोहिता, मोग्धा, मोढा।

मुहिर पु० मुह किरच्। कामे, मूर्खे च।

मुहुस् अव्य० मुह-उसि। पौनःपुन्ये।

मुहूर्त स्त्री० हुर्छ-क्त धातोर्मुट् च। द्वादशक्षणमिते काले, पञ्चदशधा विभक्तस्य दिनस्य पञ्चदशभागे, किञ्चिन्न्यूनाधिकघटिकाद्वयरूपे काले च।

मू बन्धे भ्वा०आ०सक०सेट्। मवते अमविष्ट।

मूक पु० मू-कन्। मत्स्ये, दैत्यभेदे, दीने, वाक्शक्तिरहिते च त्रि०।

मूढ त्रि० मुह-क्त। मूर्खे, बाले, जडे, औरधे च।

मूत त्रि० मू-क्त। बद्धे, संयते च।

मूत्र स्रावे अद०चु०उभ०अक०सेट्। मूत्रयति ते अमुमूत्रत् त

मूत्र न० मूत्र-अच्। प्रस्रावे उपस्थात् क्षरितजले।

मूत्रदोष पु० मूत्रस्य दोषो यस्मात् दुष-घञ् ५त०। प्रमेहरोगे

मूत्रनिरोध पु० मूत्रं निरुणद्धि नि+रुध-अण्। मूत्ररतिबन्धकरोगे। [कर्कोट्याम्।

मूत्रफला स्त्री० मूत्रमेव फलं यस्याः। त्रपुस्याम् (शशा)

मूत्राघात पु० मूत्रमाहन्ति आ+हन-अण्। मूत्रहननकारिणि रोगभेदे।

मूत्राशय पु० ६त०। नाभेरधोदेशे वस्तिनामकस्थाने।

मूर्ख त्रि० मुह-ख मुरादेशः। मूढे गायत्रीरहिते सावित्र्यावलो रहिते च। 'क्रियाहीनस्य मूर्खस्ये'ति स्मृतिव्याख्यायां निबन्धकारैस्तथार्थकतया व्याख्यानात्।

मूर्च्छना स्त्री० मुर्च्छ-युच्। 'स्वरः संमूर्च्छितो यत्र रागतां प्रतिपद्यते। मूर्च्छनामिति तां प्राहुः कवयो ग्रामसम्भवा'मित्युक्ते गानाङ्गभेदे 'स्फुटीभवद्ग्रामविशेषमूर्च्छना'मिति माघः। [व्यापाररूपावस्थायां, वृद्धौ च।

मूर्च्छा स्त्री० मुर्च्छ-अङ्। मोहे, अनिद्रायामपि वाह्येन्द्रिय

मूर्च्छाल त्रि० मूर्च्छा+अस्त्यर्थे लच्। मूर्च्छाविशिष्टे।

मूर्च्छित त्रि० मूर्च्छा जातास्य इतच्। मूर्च्छायुक्ते, वृद्धे, उच्छ्रिते च।

मूर्त त्रि०मुर्च्छ-क्त। मूर्च्छान्विते, मूढे, कठिने च। मूर्त्तिरस्त्यस्य अच्। मूर्त्तिमति न्यायोक्तेषु अवच्छिन्नपरिमाणवत्सु क्षितिजलपावकपवनमनःसु च।

मूर्त्ति स्त्री०मुर्च्छ-क्तिन्। देहे, काठिन्ये, आकारे, प्रतिमायाञ्च

मूर्त्तिमत् पु० मूर्त्तिरस्त्यस्य मतुप्। देहे। आकारयुक्ते,काठिन्यवति च त्रि०।

मूर्द्धज पु० मूर्द्ध्नि जायते जन-ड। केशे। मस्तकजातमात्रे त्रि०।

मूर्द्धन्य त्रि० मूर्द्ध्नि भवः यत्। मस्तकजाते। शिक्षायामुक्तेषु ऋकारटवर्गषवर्णेषु पु०।

मूर्द्धन् पु० मुर्व-कनिन् धुट्, च। मस्तके।

मूर्द्धपुष्प पु०मूर्द्ध्नि पत्रशिरसि पुष्पं यस्य। शिरीषवृक्षे।

मूर्वा स्त्री० मुर्व-अच्। स्वनामख्याते धनुर्गुणोपयुक्ते लताभेदे। गौरा०ङीष्। मूर्वीत्यप्यत्र। [अमूलिष्ट।

मूल प्रतिष्ठायां भ्वा०उभ०अक०सेट्। मूलति ते अमूलीत्।

मूल रोपणे चुरा०उभ०सक० सेट्। मूलयति ते अमूमुलत् त

मूल न० मूल-क। शिफायाम् (जड़) (शिकड़) आद्ये च निकुञ्जे, वणिग्व्याद्युपयोगिनि मूलधने, अन्तिके, निजे, चरणे, स्वरूपे, पिप्पलीमूले, टीकादिना व्याख्येयग्रन्थे च। अश्विन्यवधिके ऊनविंशे नक्षत्रे स्त्रि०।

मूलक न०मूल+संज्ञायां कन्। कन्दभेदे (मूला) 'वर्ज्जनीयं सदा माघे मूलकं मदिरासम'मिति गौडीयस्मृतिः। विषभेदे पु०

मूलकपर्णी स्त्री० मूलकस्येव पर्णां यस्य। शोभाञ्जने।

मूलकमूला स्त्री० मूलकस्येव मूलमस्याः। क्षीरकञ्चुकीवृक्षे।

मूलकर्म्मन् न० मूलेन मन्त्रौषधादिना यत् वशीकरणादि कर्म्म। औषधादिना वशीकरणकर्म्मणि।

मूलकृच्छ्र न० मूलेन क्वथितचमूलेन कृच्छ्रम्। व्रतभेदे। तद् यस्य। 'मूलकृच्छ्रः स्मृतो मूलै'रिति स्मृत्युक्ते तद्वति त्रि०

मूलज न० मूलाज्जायते जन-ड। आर्द्रके। उत्पलादौ पु० मूलजातमात्रे त्रि०।

मूलत्रिकोण न० 'सिंहोष्टमस्य मेषस्य कन्या धन्वी घटोष्टः।

अर्कादीनां त्रिकोणानी'त्युक्ते रव्यादीनां क्रमेण सिंहादिषु राशिषु । [क्रियते तस्मिन् (पूजि) मूलधनादयोऽप्यत्र

मूलद्रव्य न० कर्म्म० । मूलधने यद्वलम्ब्य वाणिज्यादिकं

मूलपर्णी स्त्री० मूलमारभ्य पर्णा यस्याः ङीप् । मण्डूकपर्ण्याम्

मूलपुष्कर न०पुष्करस्य मूलं राज०पर० । पुष्करमूले । [कायाम्

मूलपोती स्त्री० पू-तच् गौ०ङीप् मूलं प्रधाना पोती । पूति-

मूलप्रकृति स्त्री० मूलीभूता सर्व्वाद्या प्रकृतिः । सांख्यमतोक्ते सर्व्वेषां कारणीभूते साम्यावस्थापन्ने सत्त्वरजस्तमोरूपे त्रिगुणात्मके प्रधाने 'मूलप्रकृतिरविकृति'रिति सांख्यकारिका । दुर्गायाञ्च ।

मूलफलद पु० मूलेऽपि फलं ददाति प्रसूते दा-क । पनसवृक्षे

मूलरस पु० मूले रसो यस्याः । मोरटालतायाम् ।

मूलशाकट न० मूलानां क्षेत्रं शाकटन् । मूलभवनयोग्ये क्षेत्रे । शाकिन । मूलशाकिनोऽप्यत्र ।

मूला स्त्री० मूलानि बाहुल्येन सन्त्यस्याः अच् । शतमूल्याम्

मूलाधार पु० ६त० । नाभिलिङ्गयोर्मध्ये तस्य हि शरीरस्थसकलनाडीनां मूलस्थानत्वात्तथात्वम् 'मूलाधारे त्रिकोणाख्ये इच्छाज्ञानक्रियात्मके, मध्ये स्वयम्भूलिङ्गन्तु कोटिसूर्य्यसमप्रभ'मित्युक्तलक्षणे त्रिकोणाकारे तन्त्रोक्ते चक्रभेदे च ।

मूलिन् पु० मूलमस्त्यस्य इनि । वृक्षे । ठन् । मूलिकोऽप्यत्र ।

मूल्य न० मूलाय पटादिकारणतन्त्वादये इदम् यत् । तन्त्वाद्यादानाय दीयमाने धने ।

मूष लुण्ठने भ्वा०पर०सक०सेट् । मूषति अमूषीत् ।

मूष पु०स्त्री०मूष-क । मूषिके तैजसद्रव्यद्रावणपात्रे,(मुचि)च । गवाक्षे 'मर्कधिकादिमूषावहने'ति लीला० देवताडवृक्षे च स्त्री०

मूषक पु०स्त्री० मूष-ण्वुल् स्त्रीत्वे टाप् अत इत्वम् । उन्दुरौ ।

मूषककर्णी स्त्री० मूषककर्ण इव पुष्पाख्यस्याः । (उन्दुरकानी) आखुपर्ण्याम् मूषाकर्ण्यादयोऽप्यत्र ।

मूषिक पु० मूष-किकन् । उन्दुरौ । मूषिकपर्ण्यां स्त्री० ।

मूषिकपर्णी स्त्री० मूषिककर्ण इव पर्णा यस्याः जलजतृणभेदे

मूषी स्त्री० मूष+गौ०ङीष् । स्वर्णादेर्द्रावणपात्रे (मुची) ।

मूषीक पु० स्त्री० मूष कीकन् स्त्रीत्वे टाप् । उन्दुरौ ।

मृ मृतौ तु० सार्व्वधातुके लुङि आशीर्लिङि च आ० अन्यत्र पर०अक०अनिट् । म्रियते । अमृत । ममार । मर्त्तासि मृषीष्ट

मृकण्ड पु० मुनिभेदे ।

मृक्ष संघाते भ्वा०प०सक०सेट् । मृक्षति अमृक्षीत् ।

मृग अन्वेषणे याचने च अ०चु०आ०स०सेट् । मृगयते अममृगत

मृग अन्वेषणे दिवा०पर०सक सेट् । मृग्यति अमृगीत् ।

मृग पु० मृग-क । पशुमात्रे, हरिणे गजभेदे. अश्विन्यवधिके पञ्चमे नक्षत्रे । अ०चु०मृग-भावे अच् । अन्वेषणे,याचने, यज्ञभेदे च । अच् । मृगमदे, मकरराशौ च पु० ।

मृगगामिनी स्त्री० मृग इव गच्छति गम,णिनि । विडङ्गायाम् । मृगतुल्यगमनवति त्रि० स्त्रियां ङीप् ।

मृगजीवन पु० मृगैस्तन्मांसादिभिर्जीवति जीव-ल्यु । व्याधे

मृगणा स्त्री० मृग-युच् टाप् । नष्टद्रव्यस्यान्वेषणे ।

मृगतृष्णा स्त्री०मृगाणां तृष्णेव तृष्णाहेतुत्वात् । सूर्य्यकिरणे जलभ्रान्तौ,निर्ज्जलदेशस्थं सूर्य्यकिरणं दूरतो वीक्ष्य मृगै र्जलभ्रान्त्या तृष्णार्त्तैः सद्भिः बम्भ्रम्यते नच जलं लभ्यते इति, ग्रीष्मे मरुदेशे सिकतादौ पतितरविकिरणेषु जलभ्रान्तिरिति च प्रसिद्धम् । स्वार्थे कन् । तत्रैव

मृगदंशक पु० मृगं दंशति दन्श-ण्वुल् । कुक्कुरे ।

मृगधूर्त्तक पु० मृगेषु धूर्त्तकः । शृगाले ।

मृगनाभि पु०मृगस्य नाभिः नाभिजत्वः । कस्तूर्य्याम् मृगमदे

मृगनाभिजा स्त्री० मृगस्य नाभेर्जायते जन-ड । कस्तूर्य्याम् ।

मृगनेत्रा स्त्री० मृगो मृगशिरो नक्षत्रं नेत्रमिव प्रकाशकं यत्र रात्रिषु । सौरमार्गस्य किञ्चिदधिकत्रयोविंशदिनावधिमार्गशीर्षशेषपर्य्यन्तदिवसीय रात्रिषु ।

मृगपति पु० ६त० । मृगाणां पशूनां पतिः स्वामी । सिंहे मृगेन्द्रादयोऽप्यत्र ।

मृगप्रिय न० ६त० । पर्व्वततृणे ।

मृगवधाजीव पु० मृगवधेनाजीवति जीव-अच् । व्याधे ।

मृगबन्धनी स्त्री० मृगोबध्यतेऽनया बन्ध ल्युट् ङीप् । मृगबन्धनार्थे जाले । करणस्य कर्तृत्वविवक्षायां णिनि ङीप् । मृगबन्धिनीत्यप्यत्र ।

मृगभक्ष्या स्त्री० मृगैर्भक्ष्यते भक्ष-यत् । जटामांस्याम् ।

मृगमद पु० मृगस्य मदो गर्ब्बो यस्मात् । कस्तूर्य्याम् ।

मृगमदवासा स्त्री०मृगमदस्येव वासः सौरभमस्याः । कस्तूरीमल्लिकायाम् । [पशुवधफलके व्यापारे आखेटके ।

मृगया स्त्री० मृगं यात्यनया या घञर्थे क । (शीकार)

मृगयु पु० मृग-अस्त्यर्थे यु । ब्रह्मणि शृगालादीनां व्यापारभेदे, व्याधे च 'मृगयूमिव मृगोऽथ दक्षिणेर्म्मे'तिभट्टिः ।

मृगरसा पु० मृगो मृगमांसं तस्येव रसोऽस्याः । सहदेवीलतायाम् । [राजते अच् । चन्द्रे ।

मृगराज पु० मृगाणां पशूनां राजा टच् । सिंहे मृगेण

मृगराटिका स्त्री० मृगं रटति जीवत्वेन रट-अण् गौ० ङीष् स्वार्थे कन् । जीवन्त्याम् ।

**मृगरिपु** पु० ६त० । सिंहे मृगशत्रुप्रभृतयोऽप्यत्र ।

**मृगलक्षण** पु० मृगो लक्षणं यस्य । चन्द्रे मृगाङ्कादयोऽप्यत्र

**मृगवल्लभ** न० ६त० । कुन्दुरतृणे ।

**मृगवाहन** पु० मृगो वाहनं यस्य । वायौ 'धावन् हरिण-पृष्ठस्थ' इति वायुध्यानम् ।

**मृगव्य** न० मृगान् व्यधतेऽत्र व्यध-ड । मृगयायाम् ।

**मृगशिरस्** न०पु०। मृगस्येव शिरोऽस्य । आश्विन्यवधिके पञ्चमे नक्षत्रे मृगशिराप्यत्र स्त्री० टाप् । मृगशीर्षन्, मृगशीर्ष, एतावप्यत्र पु०न० । [लतायाम्

**मृगा** स्त्री० मृगो मृगमांसतुल्यरसोऽस्त्यस्य अच् । सहदेवी-

**मृगाक्षी** स्त्री० मृगस्येवाक्षि पुष्पं यस्याः षच् समा०ङीष् । विशल्यायां मृगतुल्यनयनवत्यां स्त्रियां च ।

**मृगाण्डजा** स्त्री० मृगस्याण्डाकारात् नाभिस्थितमांसपिण्डात् जायते जन-ड । कस्तूर्याम् ।

**मृगादन** पु० मृगान् अत्ति अद-ल्यु । क्षुद्रव्याघ्रे । मृगान्तकोऽप्यत्र

**मृगादनी** स्त्री० मृग इवाद्यते अद-कर्मणि ल्युट् । सह-देव्याम्, इन्द्रवारुण्याम्, (राखालशशा), कर्कटीभेदे च

**मृगाराति** पु० ६त० । कुक्कुरे, मृगपतौ, सिंहे च ।

**मृगारि** पु० ६त० । कुक्कुरे, सिंहे, व्याघ्रे, रक्तशोभाञ्जने च । तत्सेवने हि तस्य नाशः ।

**मृगाविध्** पु० मृगं विध्यति विध-क्विप् पूर्व्व दीर्घः । व्याधे ।

**मृगित** त्रि० मृग-क्त । अन्वेषिते, याचिते च ।

**मृगेन्द्र** पु० मृगाः इन्द्र इव । सिंहे ।

**मृगेन्द्रचटक** पु० मृगेन्द्र इव हिंस्रश्चटकः पक्षी । श्येनपक्षिणि

**मृगेन्द्राणी** स्त्री० मृगेन्द्रेण सिंहेनाश्यते भक्ष्यते अश-कर्मणि यत् । वासके । [वारुण्याम् (सादा राखालशशा) ।

**मृगेर्व्वारु** स्त्री० मृगप्रिया इर्व्वारुः कर्कटी । श्वेतायामिन्द्र-

**मृगेष्ट** पु० ६त० । मल्लिकायाम् ।

**मृगेक्षणा** स्त्री० मृगस्य ईक्षणमिव पुष्पमस्याः । मृगेर्व्वारौ ।

**मृज** शोधने भूषणे च वा चु०उभ० पक्षे अदा० सक० वेट् । मार्जयति-ते मार्ष्टि अमीमृजत्-त अममार्जत्-त अमार्क्षीत् अमार्जीत् अमृक्षत् ।

**मृजा** स्त्री० मृज-अङ् । मार्ज्जने । [अमर्डीत् ।

**मृड** तोषणे क्र्या०तु०च पर० सक० सेट् । मृड्णाति मृडति

**मृड** पु० मृड-क । शिवे तत्पत्न्याम् स्त्री० ङीप् आनुक् च

**मृण** हिंसे तु०पर०सक०सेट् । मृणति अमर्णीत् ।

**मृणाल** न० मृण-कालन् । पद्मादेर्नालस्थे सूत्रे,वीरणमूले च गौरा०ङीष् । मृणालीत्यपि बिसतन्तौ स्त्री० ।

**मृणालिन्** स्त्री० मृणालं विद्यतेऽस्य अच् मृणालं पद्मं ततः समूहे तद्युक्तदेशे वा इनि । पद्मसमूहे, पद्मयुक्तदेशे, तद्युक्तलतायाञ्च ।

**मृत** न० मृ-भावे क्त । मरणे । तत्तुल्यदुःखजनके याचितके वृत्तौ च । कर्त्तरि क्त । गतप्राणे त्रि० ।

**मृतक** न० मृतेन मरणेन कायति कै-क । मरणाशौचे सूतके मृतकेऽघवे'ति स्मृतिः ।

**मृतकल्प** त्रि० ईषदसमाप्तो मृतः मृत+कल्पप् । मृतप्राये ।

**मृतजीव** पु० मृतः नष्टः सन् पुनर्जीवति जीव-अच् । तिलकवृक्षे

**मृतवत्सा** स्त्री० मृतोवत्सो यस्याः । मृतापत्यायां-स्त्रियां स्त्री गव्याञ्च 'मृतवत्सा च या नारीति' तन्त्रम् ।

**मृतसञ्जीवनी** स्त्री० मृतान् संजीवयति सम्+जीव-णिच्-ल्यु, गौ० ङीप् । गोरक्षदुग्धायामोषधौ तन्त्रोक्ते विद्याभेदे च

**मृतस्नात** त्रि० मृतं मरणं तन्निमित्तं स्नातः स्ना-क्त । मरण-निमित्तं कृतस्नाने ।

**मृतालक** न० मृतमालयति भूषयति अल-णिच्-ण्वुल् । आढक्याम् । मृत् मृत्तिका तालः प्रतिष्ठा यस्य । मृत्ताल-मप्यत्र । कन् तत्रैव ।

**मृतफली** स्त्री० मृतेष्वपि फलमस्याः । कृष्णौषधौ । (कुड़)

**मृत्तिका** स्त्री० मृद्+तिकन् टाप् । मृदि (माटि) सा चेतत्वेनास्त्यस्य अच् टाप् । आढक्याम् ।

**मृत्यु** पु० मृ-त्युक् । यमे, देहादिभ्यः प्राणवियोगे-विजातीयात्मनःसंयोगनाशे-वा मरणे च ।

**मृत्युनाशक** पु० मृत्युं नाशयति नाशि-ण्वुल् । पारदे तस्य हि रसायनक्रियादिना शोधयित्वा सेवने मृत्युनाशकत्वम् मृत्युनाशकमात्रे त्रि० ।

**मृत्युपुष्प** पु० मृत्यवे स्वामिमरणाय पुष्पं यस्य । इक्षौ । तस्मिन् पुष्पिते हि तत्स्वामिमृत्युः नाशः ।

**मृत्युफला** स्त्री० मृत्यवे स्वनाशाय फलं यस्याः । कदल्यां फलपाके हि तस्य नाशः । [दाहादेवाङ्कुरादेरुद्भवः ।

**मृत्युबीज** पु० मृत्युं दाह एव बीजं कारणमस्य । वंशे तस्य

**मृत्युसूति** स्त्री० मृत्यवे सूतिः प्रसवोऽस्याः । कर्कटकयोषिति प्रसवादेव हि तस्या नाशः 'यथा कर्कटकी गर्भमाधत्ते मृत्यवे निजम्' इति पुराणम् ।

**मृत्स्ना**(स्ना) स्त्री०मृद्+प्रशस्तार्थे स न, वा । प्रशस्तमृत्तिकायाम् । अर्शआद्यच् । आढक्याम् ।

**मृद** चौरे क्र्या प०सक०सेट् । मृद्नाति । अमर्दीत् ।

**मृद्**(दा) स्त्री० मृद्यते क्षुद्यते मृद संप० क्विप् । मृत्तिकायाम्

(माटी) टाप् । मृदाप्यत्र ।
**मृदङ्ग** पु० मृद-अङ्गच् किञ्च । वाद्यभेदे ।
**मृदङ्गफलिनी** स्त्री० मृदङ्गाकारं फलमस्यस्य इनि । घोषा तक्याम् । तत्फलं साम्यादस्यस्य अच् । मृदङ्गाप्यत्र ।
**मृदु** त्रि० मृद-कु । कोमले । स्त्रियां वा ङीप् मृद्वी मदुः । चित्रानुराधास्वगरेवतीनक्षत्रेषु च । [भूर्जपत्रवृक्षे ।
**मृदुचर्म्मिन्** पु० मृदु कोमलं चर्म त्वचास्त्यस्य व्रीह्या० इनि ।
**मृदुच्छद** पु० छाद्यतेऽनेन छदः त्वक् इव० । भूर्जवृक्षे । पर्वतजपीलुवृक्षे, कुन्दुरवृक्षे शीतालवृक्षे च ।
**मृदुताल** स्त्री० कर्म० । शीतालवृक्षे (तेडेत) ।
**मृदुत्वच्(च)** पु० मृदुः त्वक् त्वचा वा यस्य । भूर्जत्वचवृक्षे ।
**मृदुपत्त्र** पु० मृदूनि पत्त्राण्यस्य । नले । कर्म० । कोमलपर्णे न० इत० । तद्वति त्रि० । चिल्लीशाके स्त्री० गौरा० ङीप् ।
**मृदुपर्व्वक** पु० मृदूनि पर्व्वाण्यस्य । वेत्रे । मृदुपर्व्वयुक्ते त्रि०
**मृदुपुष्प** पु० मृदूनि पुष्पाण्यस्य । शिरीषवृक्षे । इव० मृदुकुसुमवति त्रि० । कर्म० । कोमलपुष्पे न० ।
**मृदुफल** न० मृदूनि फलान्यस्य । विकङ्कते (वइचि) मधुनारिकेले च । इव०कोमलफलवति त्रि० । कर्म० । कोमलफले न०
**मृदुल** न० मृद-कुलच् । जले । कोमलमात्रे त्रि० ।
**मृदुलोमक** पु० इव० । शशके । कोमललोमयुक्ते त्रि० । कर्म० । कोमललोम्नि न० ।
**मृदूत्पल** न० कर्म० । नीलोत्पले, नीलपद्मे च ।
**मृद्वीका** स्त्री० मृदु+स्वार्थे ईकन् । द्राक्षायाम् कपिलद्राक्षायाञ्च
**मृध** न० मृध्यतेऽत्र घञर्थे क । युद्धे । [र्द्धीत् अमर्द्दिष्ट ।
**मृध** आर्द्रीभावे भ्वा० उभ० सक० सेट् क्त्वा वेट् । मर्द्धति-ते अम
**मृश** स्पर्शने प्रणिधाने च तु० पर० सक० अनिट् । मृशति अम्राक्षीत् अमार्क्षीत् अमृक्षत् । मृष इत्येके ।
**मृष** क्षमायां तु० उभ० अनिट् । मृषति ते अमृक्षत् त ।
**मृष** क्षमायां च० चु० उभ० सक० सेट् । मृषयति त अममृषत् त
**मृष** क्षमायां भ्वा० भ्वा० उभ० सक० सेट् । मृषति ते अमर्षीत् ।
**मृष** सेचने भ्वा० पर० सक० सेट् । मर्षति अमर्षीत् । क्त्वा वेट् ।
**मृष** क्षमायां चु० उ० सक० सेट् । मर्षयति ते अमीमृषत्त अममर्षत्त
**मृष** क्षमायां भ्वा० आ० सक० सेट् । मर्षति अमर्षीत् । [अमर्षिष्ट
**मृष** क्षमायां दिवा० उभ० सक० सेट् । मृष्यति ते अमर्षीत्
**मृषा** अव्य० मृष-का । मिथ्यार्थे ।
**मृषार्थक** न० मृषा अत्यन्तासम्भूतोऽर्थो यस्य । 'कूर्म्मलोमतन्तुलाणः शशशृङ्गधनुर्द्धर' इत्यादिवाक्ये ।
**मृषालक** पु० मृषालक इव मञ्जरी यस्य । आम्रवृक्षे ।
**मृषावाद** पु० मृषा+वद घञ् । मिथ्यावाक्ये यथा ह्रदो वह्निमानित्यादिवाक्यम् ।
**मृषोद्य** न० मृषा+वद-क्यप् । मिथ्याकथने ।
**मृष्ट** न० मृष-क्त । मरिचे । दृष्टे शोधिते च त्रि० ।
**मॄ** वधे क्र्या० प्या० प० सक० सेट् । मृणाति अमारीत् ।
**मे** परीवर्त्ते भ्वा० आत्म० सक० अनिट् । मयते अमास्त ।
**मेक(ख)ल** पु० मि-कलच् खलच् वा नेत्त्वम् । अद्रिभेदे ।
**मेक(ख)लकन्यका** स्त्री इत० । नर्म्मदानद्याम् । [नद्याम् ।
**मेक(ख)लाद्रिजा** स्त्री० मेक(ख)लाद्रेर्जायते जन-ड । नर्म्मदा
**मेखला** स्त्री० मि-खलच् । स्त्रीकट्याभूषणे उपनयनकाले ब्रह्मचारिधार्य्ये कटीसूत्रे, खड्गादेर्मुष्ट्याधारणार्थे उपर्य्यधोभागेन बन्धे, शैलनितम्बे, नर्म्मदायां, शृग्निपर्ण्याम्, होमकुण्डोपरिस्थे मृत्कृते वेष्टनभेदे च ।
**मेघ** पु० मिह-घञ् कुत्वम् । धूमज्योतिःपवनसलिलसंघातजन्ये जलधरे, मुस्तके राक्षसभेदे रागभेदे च ।
**मेघजीवन** पु० मेघो जीवनं यस्य । चातकपक्षिणि ।
**मेघज्योतिस्** न० इत० मेघजन्यं ज्योतिः । वज्राग्नौ ।
**मेघनाद** पु० मेघस्येव नादोऽस्य । वरुणे, रावणस्य पुत्रे इन्द्रजिति । इत० । मेघशब्दे ।
**मेघनादानुलासक** पु० मेघस्य नादेनानुलसति अनु+लसण्वुल् । मयूरे । णिनि । मेघनादानुलासीत्यप्यत्र । [मुस्तके
**मेघनामन्** पु० मेघस्य नामेव नाम यस्य । मेघवाचकशब्दवाच्ये
**मेघपुष्पक** न० मेघस्य पुष्पमिव । जले ।
**मेघयोनि** स्त्री० इत० । धूमे ।
**मेघवर्णा** स्त्री० मेघस्येव वर्णोऽस्याः । नीलीवृक्षे ।
**मेघवर्त्मन्** न० इत० । आकाशे । मेघवीथ्यादयोऽप्यत्र ।
**मेघवह्नि** पु० मेघजन्यो वह्निस्तद्घर्षणजातोऽग्निः । वज्राग्नौ एवं मेघानलादयोऽप्यत्र ।
**मेघवाहन** पु० मेघो वाहनमिव यस्य, मेघान् वाहयति चालयति वा वह-णिच्-ल्यु । इन्द्रे ।
**मेघसार** पु० मेघस्य कर्पूरस्य सारः । चीनकर्पूरे ।
**मेघस्तनितोद्भव** पु० मेघस्तनितादुद्भवति भू अच् । विषाणटकवृक्षे
**मेघागम** पु० मेघानामागमो यत्र । वर्षाकाले वर्षर्तौ ।
**मेघानन्दिन्** पु० मेघेन तद्ध्वनिना नन्दति णिनि । मयूरे ।
**मेघान्त** पु० मेघानामन्तो यत्र । शरत्काले मेघात्ययादयोऽप्यत्र ।
**मेघास्थि** न० मेघानामस्थीव कठिनत्वात् । करकायाम्
**मेचक** न० मच-वुन् इ० । अन्धकारे, स्रोतोऽञ्जने च । मयूरचन्द्रके, मेघे, श्यामवर्णे च पु० । तद्वति त्रि० ।

मेठ(ड) उन्मादे भ्वा०पर०सक०सेट् चङि न ह्रस्वः। मेठ(ड)ति अमेठी(डी)त्।

मेठुला स्त्री० मेठ-उलच्। आमलक्याम्।

मेढ्र पु०मिह-ष्ट्रन्। मेषे,पुंसोऽसाधारणचिह्ने च। [लिङ्ग)

मेढ्रशृङ्गी स्त्री० मेढ्र इव शृङ्गं यस्याः। मेषशृङ्ग्याम् (गाडर-

मेथ वधे मेधायाञ्च सक०सङ्गे अक० भ्वा०उभ०सेट्। मेथति ते अमेथीत् अमेथिष्ट। चङि न ह्रस्वः। [(भेड़काठ)

मेथि(धि) पु० मेथ(ध)-इन्। धान्यमर्द्दनार्थं पशुबन्धनकाष्ठे

मेथिका स्त्री० मेथ-ण्वुल्। (मेथि) शाकभेदे। णिनि। अत्रैव स्त्री०ङीप्। अच् गौरा०ङीष्। अत्रैवार्थे।

मेद वधे मेधायाञ्च सक०भ्वा० उभ०सेट्। मेदति ते अमेदीत् अमेदिष्ट। चङि न ह्रस्वः। [भेदे।

मेदःसारा स्त्री०मेदसः इव सारोऽस्याः। अष्टवर्गप्रसिद्धौषधि

मेदक पु० मेद-ण्वुल्। जगले (मेया)।

मेदज पु० मेदात् मधुकैटभासुरमेदसो जायते जन-ड। भूमिज गुग्गुलौ। मेदोजातमात्रे त्रि०।

मेदस् न०मेद-असुन्। मांसजन्ये धातुभेदे (वसा) अच्। अत्रैव पु०

मेदस्कृत् न० मेदः करोति स्वपरिपाकेण जनयति क्विप्। मांसे

मेदा स्त्री०मेदः कारणत्वेनास्त्यस्याः अच्। अष्टवर्गप्रसिद्धौषधिभेदे

मेदिनी स्त्री० मेदः मधुकैटभमेदोऽस्त्यस्याः कारणत्वेन,इनि। वसुन्धरायाम् 'मधुकैटभयोरासीन्मेदसैव परिप्लुता। तेनेयं मेदिनी देवी प्रोच्यते' इति पुराणम्। मेदायाञ्च

मेदुर त्रि०मिद-घुरच्। अतिशयस्निग्धे। 'मेघैर्मेदुरमम्बर'-मिति जयदेवः। कर्कोल्यां स्त्री० टाप्।

मेदोज न० मेदसो वसातो जायते जन-ड। देहस्थे मज्जहेतौ अस्थिनामके धातौ।

मेदोद्भवा स्त्री० मेदाद्भवति भू-अच्। अष्टवर्गप्रसिद्धौषधिभेदे

मेध मेथवत् सर्व्वम्। मेधति ते अमेधीत् अमेधिष्ट।

मेधा स्त्री० मेध-अङ्। धारणावत्यां बुद्धौ यया बुद्ध्या ज्ञातस्य न विस्मरणं तत्र। अच्। यागे पु०। [स्त्रियां ङीप्

मेधाविन् पु०मेधा+अस्त्यर्थे विनि। शुकखगे। मेधावति त्रि०

मेधस् पु० मेध-असुन्। स्वायम्भुवस्य मनोः पुत्रभेदे।

मेधिर त्रि० मेधा+अस्त्यर्थे इरच्। मेधावति।

मेधिष्ठ त्रि० अतिशयेन मेधावान् इष्ठन् मतोर्लुक्। अतिश-यमेधावति जने।

मेध्य त्रि० मेध-यत्। पवित्रे,शुचौ च। मेधाय यज्ञाय हितः यत्। छागे, खदिरे, यवे च पु०। केतक्यां, शङ्खपुष्प्यां रक्तवचायाम्, रोचनायां, शम्याम्, मण्डूक्याञ्च स्त्री०।

मेनका स्त्री० मि-नक। स्वर्वेश्याभेदे। मेनैव कन्। हिमालय पत्न्याम्। [पत्न्र।

मेनकात्मजा स्त्री० ६त०। हैमवत्यां दुर्गायाम् मेनासुतादयो-

मेना स्त्री०मि-न। हिमालयपत्न्याम् पितॄणां मानस्यां कन्यायाम

मेन्धी स्त्री० मा लक्ष्मीरिव इध्यते इन्ध-घञ् गौरा० ङीष्। (मेहदी) वृक्षे तत्पत्रमर्द्दने, हि लक्ष्म्यातुल्यरक्तत्वसत्ता।

मेप गतौ भ्वा०आ०सक०सेट्। मेपते अमेपिष्ट। चङि न ह्रस्वः

मेय त्रि० मा-मि-वा यत्। परिच्छेद्ये, क्षेप्ये च।

मेरु पु० मि-रु। सर्व्ववर्षस्य उत्तरस्थे पर्व्वतभेदे, जपमालोप-रिस्थे, फलवीजादिके, करस्थमालायामङ्गुलिपर्व्वभेदे च।

मेरुक पु० मेरुरिव पीतवर्णत्वात् स्वार्थे कन्। यज्ञधूपे (धुना)

मेरुसावर्णि पु०। चतुर्द्दशस्य मनुषु एकादशे मनौ।

मेलक त्रि० मेलयति मिल-णिच्-ण्वुल्। विवाहे-योटकभेदे। मेल-घञ् कन्। सङ्गे। [मिलने च।

मेला स्त्री० मिल णिच्-अच्-टाप्। नीलीवृक्षे, मस्याम्,अञ्जने,

मेलाम्बु पु० मेलाया मस्या अम्बुरिव। मस्याधारे (दोयात)

मेव सेवने भ्वा०आ०सक०सेट्। मेवते अमेविष्ट। चङि न ह्रस्वः

मेष पु० मिष-अच्। (भेडा) पशुभेदे चक्रमर्दवृक्षे,ज्योतिश्चक्रस्य द्वादशांशे अश्विनीभरणीकृत्तिकापादात्मके राशिभेदे

मेषकम्बल पु० मेषेण तल्लोम्ना निर्मितः कम्बलः। मेषलोम-जाते वस्त्राकारे पदार्थे। [नेत्रादयोऽप्यत्र

मेषलोचन पु० मेषस्य लोचनमिव पुष्पमस्य। चक्रमर्दे, मेष-

मेषवल्ली स्त्री० मेषशृङ्गाकारफलयुक्ता वल्ली शाक० (गाडर शिङ्गा) लताभेदे।

मेषविषाणी स्त्री० मेषस्य विषाणं शृङ्गमिव फलं यस्याः गौरा०ङीष्। (गाडरशिङः) लताभेदे। स्वार्थे कन् तत्रैव।

मेषशृङ्ग पु० मेषशृङ्गमिवाकारोऽस्त्यस्य अच्। स्थावरविष-भेदे (गाडरशिङ्ग) अजशृङ्ग्यां स्त्री० गौरा०ङीप्।

मेषा स्त्री० मिष-कर्म्मणि घञ्। (गुजराटी) सूक्ष्मैलायाम्।

मेषाक्षिकुसुम पु० मेषाक्षीव कुसुमं यस्य। चक्रमर्दे। मेष पुष्पादयोऽप्यत्र।

मेषाण्ड पु० मेषस्याण्ड एवाण्डोऽस्य। इन्द्रे तस्य हि दत्तयत्ने ऽण्डनाशे मेषाण्डेन तत्करणमिति पुराणम्।

मेषालु पु० मेषाणामालुरिव प्रियः। वर्व्वरीवृक्षे।

मेषी स्त्री० मिष-अच् गौ० ङीप्। जटामांस्यां, तिनिशवृक्षे, च। जातौ ङीप्। मेषजातिस्त्रियाम्।

मेह पु० मिह-घञ्। प्रस्रावे,प्रमेहरोगभेदे च। अच्। मेषे।

मेहघ्नी स्त्री० मेहं हन्ति हन-टक् ङीप्। हरिद्रायाम् आर्द्र-

तन्मूलरससेवनादि मेहनाश इति वैद्यकप्रसिद्धिः ।

**मेहन** न० मिह्यतेऽनेन मिह-करणे ल्युट् । शिश्ने । कर्मणि ल्युट् । मूत्रे । भावे ल्युट् । मूत्रोत्सर्गे ।

**मैत्र** न० मित्रोदेवतास्य अण् मैत्रं पायु स्वेदं पुनरण् । 'विण्मोत्सर्गे मैत्रं कर्म समाचरेदि'ति स्मृतिः मित्रो देवताऽस्य, मित्रात आगतं, तस्येदं वा अण् । अनुराधानक्षत्रे न० । तस्य हि मित्रो देवता । मित्रतः प्राप्ते, 'मैत्रमौद्वा' कश्चैवे'ति स्मृतिः । सुहृत्तमस्वधिनि च त्रि० । मित्रएव स्वार्थे प्रज्ञाद्यण् । मित्रे, ब्राह्मणे च ।

**मैत्रावरुण** पु० मित्रश्च वरुणश्च देवता द्वन्द्वे आनङ् मित्रावरुणयोरपत्यम् अण् । अगस्त्ये । इञ् । मैत्रावरुणिरप्यत्र । कल्पभेदे हि तस्य तयोः पुत्रत्वं पुराणप्रसिद्धम् ।

**मैत्री** न०स्त्री० मित्रस्य भावः अण् स्त्रीत्वपक्षे ङीप् । सौहार्दे ष्यञ् । मैत्र्यमप्यत्र ।

**मैत्रेय** पु० मित्रायाः अपत्यम् ढक् । मुनिभेदे, बुद्धदेवे च ।

**मैथिली** स्त्री०मिथिलायां भवा अण् । सीतायाम् । मिथिलाया राजा अण् । मिथिलादेशाधिपे पु० ।

**मैथुन** न० मिथुनेन स्त्रीपुंसाभ्यां निर्वृत्तम् अण् । अग्न्याधानादौ कर्मणि 'स प्रशस्ता द्विजातीनां दारकर्मणि मैथुने' इति स्मृतिः अग्न्याधाने हि सपत्नीकस्यैवाधिकार इति तस्य तत्साध्यत्वम् । स्त्रीपुंससङ्गमरूपे ग्राम्यधर्मे च ।

**मैनाक** पु० मेनकायां भवः अण् । पर्व्वतभेदे ।

**मैरेय** पु० मिरायां देशभेदे ओषधिभेदे वा भवः ढक् । मिरा देशजाते आसवे, 'मैरेयं धातकीपुष्पगुडधानाम्लसम्भव'मित्युक्ते मद्यभेदे न० ।

**मोक्ष** क्षेपे वा चु० उभ० पक्षे भ्वा०पर०सक०सेट् । मोक्षयति ते मोक्षति अमुमोक्षत् त अमोक्षीत् । [मरणे च ।

**मोक्ष** पु० मोक्ष-घञ् । मुक्तौ मोचने 'नौविमोक्षोऽपि मोक्ष' इति

**मोघ** त्रि० मुह-घ अच् वा कुत्वम् । निरर्थके,हीने च । पारलिवृक्षे, पाटलीवृक्षे, विडङ्गे च स्त्री० प्राचीरे पु० ।

**मोघपुष्पा** स्त्री० मोघं पुष्पमार्त्तवं यस्याः । वन्ध्यायां स्त्रियाम्

**मोच** न० मुच-अच् । कदलीफले । शोभाञ्जने पु० । कदल्यां, नीलीवृक्षे, शाल्मलिवृक्षे च स्त्री० टाप् । [सति त्रि०

**मोचक** पु० मुच-ण्वुल् । मोचे,कदल्यां,शोभाञ्जने च । वैराग्य-

**मोचन** न० मुच-णिच्-वा भावे ल्युट् । मुक्तौ, मोषने, दम्भे, शाठ्ये च । मुच्यते रोगात् अनया करणे ल्युट् । कण्टकार्य्याम्

**मोचरस** पु०६त० । शाल्मलिनिर्यासे स्वनामख्याते पदार्थे ।

**मोचाट** पु० मुच-णिच्-अच् मोचाय रोगमोचनाय अटति अट-अच् । कृष्णजीरके रम्भास्थि च ।

**मोटक** न० मुट-ण्वुल् । श्राद्धे पितृदानार्थं भुग्नकुशपत्त्रद्वये ।

**मोटा** स्त्री० मुट-अच् । बलायाम् ।

**मोट्टायित** न० 'कान्तस्मरणवार्त्तादौ हृदि तद्भावभावतः प्राकट्यमभिलाषस्य मोट्टायितमि'त्युक्ते,स्त्रीणामभिलाषभेदे ।

**मोद** पु० मुद-घञ् । हर्षे । [वर्णसङ्करजातिभेदे (मयरा)

**मोदक** पु० मोदयति मुद-णिच्-ण्वुल् । खाद्यभेदे (मोया)

**मोदमोदिनी** स्त्री० मोदइव मोदयति मुद-णिनि । जम्ब्वाम्

**मोदयन्ती** स्त्री० मुद-णिच्-शतृ ङीप् । वनमल्लिकायाम् (काठमल्लिका) ।

**मोदा** स्त्री०मोदयति अजान् मुद-णिच्-अच् । अजमोदायाम्,

**मोदाढ्या** स्त्री० मोदः अजमोदस्तेनाढ्या । अजमोदायाम् हर्षयुक्ते त्रि० ।

**मोदिनी** स्त्री० मोदयति मुद-णिच्-णिनि । अजमोदायाम् मल्लिकायाम्, यूथिकायां, कस्तूर्य्यां, मदिरायाञ्च ।

**मोरट** न० मुर-अटन् । इक्षुमूले, अङ्कोटपुष्पे, सप्तरात्रोषित क्षीरे च । मूर्व्वालतायां स्त्री० । क्षीरमोरटायां पु० ।

**मोषक** पु० मुष्णाति मुष-ण्वुल् । तस्करे चौरे ।

**मोषण** न० मुष-ल्युट् । लुण्ठने, छेदने, वधे च ।

**मोह** मुह-घञ् । मूर्च्छायाम् अज्ञाने, भ्रान्तिसाधने, वेदान्तोक्ते अविद्याशक्तिभेदे, दुःखे, देहादिष्वात्माभिमाने च ।

**मोहन** पु० मोहयति मुह-णिच्-ल्यु । धुस्तूरे, कन्दर्पस्य शर भेदे च । मोहकारके त्रि० । स्त्रियां ङीप् ।

**मोहरात्रि** स्त्री० ब्रह्मणो निजपरिमाणेन पञ्चाशदब्दे गते प्रलयभेदे 'कालरात्रि र्महारात्रि र्मोहरात्रिश्चे'तिचण्डी ।

**मौक्तिक** न० मुक्तैव स्वार्थे ठक् । मुक्तायाम् ।

**मौक्तिकप्रसवा** स्त्री० मौक्तिकं प्रसूते प्र-सू-अच् । शुक्तिमात्रे मुक्तास्फोटे शुक्तौ च । [मुञ्जएव अण् । मुञ्जतृणे (कुज) स्त्री०

**मौक्तिकशुक्ति** स्त्री०६त० । मुक्तास्फोटे शुक्तौ । [मेखलायाम्

**मौञ्जी** स्त्री० मुञ्जस्येयम् अण् । कटिसूत्रे त्रिराहृत्तमुञ्जलतायां

**मौञ्जीपत्त्री** स्त्री० मौञ्जाइव पत्त्रमस्याः । वल्वजायाम् ।

**मौञ्जीबन्ध(न)** पु० मौञ्ज्या मेखलाया बन्धोऽत्र । उपनयनसंस्कारे 'मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवावि'ति स्मृतिः६त० । तद्बन्धने न० । 'द्वितीयं मौञ्जीबन्धनमि'ति स्मृतिः

**मौढ्य** न० मूढस्य भावः ष्यञ् । मोहे, बाल्ये च ।

**मौद्गल्य** पु० मुद्गलस्य मुनेरपत्यं यञ् । गोत्रकारके मुनिभेदे

**मौद्गीन** न० मुद्गानां भवनं क्षेत्रं खञ् । मुद्गभवनयोग्ये क्षेत्रे

**मौन** न० मुनेर्भावः । वाग्व्यापाररहित्ये 'उच्चारे मैथुने चैव

प्रस्रावे दन्तधावने। स्नाने भोजनकाले च षट्सु मौनं समाचरेदि’ति स्मृतिः।

**मौनिन्** त्रि० मौनमस्त्यस्य इनि। वाग्व्यापाररहिते। मुनौ पु०

**मौरजिक** त्रि० मुरजवादनं शिल्पमस्य ठक्। मृदङ्गवादनशीले

**मौर्ख्य** न० मूर्खस्य भावः ष्यञ्। जाड्ये, मूर्खतायाञ्च।

**मौर्वी** स्त्री० मूर्वा लता तत्तन्तुना निर्वृत्ता अण्। धनुर्गुणे, अजशृङ्ग्याञ्च।

**मौल** त्रि० मूलं वेत्ति मूलादागतो वाऽण्। भूम्यादेरागमादिमूलज्ञे, ‘यं परम्परया मौला! सामन्ता: स्वामिनं विदु’रिति स्मृतिः मूलादागते च।

**मौलि** पु०स्त्री० मूलस्यादूरभवः इञ्। चूड़ायां, किरीटे,संयत केशेषु च। अशोकवृक्षे पु०। भूमौ स्त्री० वा ङीप्।

**मौषल** न० मुषलस्येदम् सहशमण्। मुषलतुल्यनिम्नेष्टे ‘गङ्गायां मौषलं स्नानं महापातकनाशन’मिति पुराणम्। मुषलमधिकृत्य कृतो ग्रन्थः अण्। महाभारतान्तर्गते ‘मुषलं कुलनाशन’मित्यादिप्रतिपादके षोड़शे पर्व्वणि।

**मौहूर्त** पु० मुहूर्तं तत्प्रतिपादकं शास्त्रं वेत्त्यधीते वाऽण्। ज्योतिःशास्त्रज्ञे। ठक्। तत्रैव।

**म्ना** अभ्यासे भ्वा०पर०सक०सेट्। मनति अम्नासीत्। [त

**म्रक्ष** संयोजने स्नेहने च चु०उ०स०सेट्। म्रक्षयति ते अमम्रक्षत्

**म्रक्ष** संघाते संयोजने च भ्वा०पर०सक०सेट्। म्रक्षति अम्रक्षीत्

**म्रक्षण** न० म्रक्ष-ल्युट्। संयोजने, राशीकरणे, तैले यज्ञपात्रे च

**म्रच** गतौ भ्वा० पर० सक० सेट् क्त्वा वेट्। म्रचति अम्रचत् अम्राचीत् अम्रचीत्। [अङ् म्रदा

**म्रद** चोदे भ्वा०आ०सक०सेट् घटा०। म्रदते अम्रदिष्ट। म्रदयति

**म्रदिमन्** पु० मृदोर्भावः मृदु+इमनिच् म्रदादेशः। मृदुत्वे।

**म्रदिष्ठ** त्रि० अतिशयेन मृदुः इष्ठन् म्रदादेशः। अतिमृदुत्ववति। ईयसुन्। म्रदीयानप्यत्र त्रि०। स्त्रियां ङीप्। [चीत्

**म्रुच** गतौ भ्वा०पर०सक०सेट् क्त्वावेट्। म्रोचति अम्रुचत् अम्रो-

**म्रुन्च** गतौ सर्व्वं म्रुचवत्। म्रुञ्चति अम्रुचत् अम्रुञ्चीत्।

**म्रेट(ड)** उन्मादे भ्वा०पर०सक०सेट्। म्रेट(ड)ति अम्रेटी(डी)त् चङि न ह्रस्वः।

**म्लक्ष** चु० म्रक्षवत् सर्व्वम्। म्लक्षयति ते। अमम्लक्षत् त।

**म्लान** त्रि० म्लै-क्त। मलिने, ग्लानियुक्ते च।

**म्लानि** स्त्री० म्ला-क्तिन्। कान्तिक्षये। [च त्रि०

**म्लिष्ट** न० म्लेच्छ-क्त नि०। अविस्पष्टवाक्ये तद्वाक्ययुक्ते, म्लाने

**म्लुच** गतौ भ्वा०पर०सक०सेट् क्त्वा वेट्। म्लोचति। अम्लुचत्-अम्लोचीत्।

**म्लुन्च** गतौ म्लुचवत् सर्व्वम्। म्लुञ्चति अम्लुचत् अम्लुञ्चीत्।

**म्लेच्छ** अपशब्दे वा०चु०उभ० पक्षे भ्वा०पर०अक०सेट्। म्लेच्छयति ते म्लेच्छति अमम्लेच्छत् त अम्लेच्छीत्।

**म्लेच्छ** पु० म्लेच्छ-घञ्। अपशब्दे ‘म्लेच्छोह वा यदपशब्द’ इति श्रुतिः। कर्त्तरि अच्। पामरजातौ, नीचजातौ च पु० पापरते त्रि० हिङ्गुले न०।

**म्लेच्छकन्द** पु० म्लेच्छप्रियः कन्दः। लशुने।

**म्लेच्छजाति** स्त्री० म्लेच्छाभिधा जातिः। गोमांसादिभक्षके किरातादिजातिभेदे।

**म्लेच्छदेश** पु० म्लेच्छाधारो देशः। चातुर्वर्ण्याचाररहिते देशे

**म्लेच्छभोजन** न० म्लेच्छै भुज्यते कर्म्मणि ल्युट्। यावके अन्नभेदे।

**म्लेच्छमण्डल** न० ६त०। म्लेच्छदेशे। [च्छास्यमप्यत्र

**म्लेच्छमुख** न० म्लेच्छानां मुखमिव रक्तत्वात्। ताम्रे म्ले-

**म्लेच्छित** न० म्लेच्छ-क्त। अपशब्दे असंस्कृतशब्दे।

**म्लेट(ड)** उन्मादे भ्वा०पर०सक०सेट्। म्लेट(ड)ति अम्लेटी(डी)त्। चङि न ह्रस्वः। [न ह्रस्वः

**म्लेव** सेवने भ्वा०आ०सक०सेट्। म्लेवते अम्लेविष्ट। चङि

**म्लै** कान्तिक्षये भ्वा०पर०सक०अनिट्। म्लायति म्लासीत्।

## य

**य** पु० या-ड। वायौ,यशसि, योगे, गतौ च। यम-ड। संयमे। या-कर्त्तरि ड। यातरि त्रि०।

**यकृत्** न० यं संयमं करोति कृ-क्विप् तुक् च। कुक्षौ-दक्षिणभागस्थे मांसपिण्डे। तद्गते रोगे च।

**यकृदात्मिका** स्त्री० यकृत इवात्मा स्वरूपं यस्याः कप्। तैलपायिकायाम् (तेलापोका)।

**यकृद्वैरिन्** पु० यकृतो रोगभेदस्य वैरी हन्ता। रोहितकवृक्षे

**यक्ष** पूजायां चु०आ०सक०सेट्। यक्षयते अययक्षत।

**यक्ष** पु० यक्ष्यते यक्ष-कर्म्मणि घञ्। देवयोनिभेदे,तदीश्वरे कुवेरे इन्द्रवृक्षे च।

**यक्षकर्द्दम** पु० यक्षप्रियः कर्द्दमः। ‘कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं तथा। महासुगन्धमित्युक्तं नामतो यक्षकर्द्दम’ इत्युक्ते समभागेन मिश्रिते कुङ्कुमादौ।

**यक्षतरु** पु० यक्षाणां वासयोग्यस्तरुः। वटवृक्षे यक्षवृक्षादयोऽप्यत्र

**यक्षधूप** पु० यक्षे पूजने योग्यो धूपः। (धुना) सर्ज्जरसे।

**यक्षराज** पु० यक्षाणां राजा टच् समा०। कुवेरे। यक्षेषु राजते राज-क्विप्। यक्षराड़प्यत्र पु०।

स्वेच्छाचारिणि जने । स्त्रियां ङीप् ।
**यथाक्रम** अव्य० क्रमस्य आनुरूप्यं तस्यानतिक्रमो वा अव्ययी० । क्रमानुरूप्ये, क्रमानतिक्रमे च ।
**यथाजात** त्रि० जातं समयविशेषमनतिक्रम्य यथाजातं तदस्यास्ति अच् । मूर्खे, नीचे च ।
**यथातथ** अव्य०तथानतिक्रम्य अनतिवृत्तौ अव्ययी० । याथार्थ्ये यस्य वस्तुनो यद्रूपं भवितुमुचितं तथारूपभावे । यथायथमप्यत्रार्थे । [व्यभिचारे सत्यस्वरूपे अर्शआद्यच् । सत्ये त्रि०
**यथार्थ** अव्य०अर्थमनतिक्रम्य अव्ययी० । सत्यतायाम् अर्थस्या-
**यथार्ह** अव्य० अर्हं योग्यतामनतिक्रम्य अव्ययी० । यथायोग्ये ततः अर्श आद्यच् । सत्यभूते पदार्थे त्रि० ।
**यथार्हवर्ण** पु० यथार्हं यथायोग्यं वर्णयति वर्ण-अण् । चरे
**यथाशक्ति** अव्य० शक्तेरानुरूप्यम् आनुरूप्येऽव्ययी० । शक्तेरानुरूप्ये, शक्त्यनुसारे । [शास्त्रानुसारे
**यथाशास्त्र** अव्य० शास्त्रस्यानुरूप्यम् अनतिक्रमो वा अव्ययी० ।
**यथास्थित** अव्य० यथा येन रूपेण स्थातुं योग्यं तथास्थितम् । योग्यतायाम् अव्ययी० । सत्यतायाम् । अर्श आद्यच् । सत्ये त्रि०
**यथास्व** अव्य० स्वस्यानतिक्रमोऽव्ययी० । याथार्थ्ये । अर्श आद्यच् । यथार्थे त्रि० ।
**यथेप्सित** अव्य० ईप्सितस्यानतिक्रमः अव्ययी० । स्वाच्छन्द्ये, अर्श आद्यच् । यथाभीष्टे त्रि० यथेष्टमप्यत्र । [उचिते त्रि०
**यथोचित** अव्य०उचितस्यानतिक्रमः । औचित्ये,अर्श आद्यच् ।
**यद्** त्रि० यज-अदि डिच्च । (ये) इत्येवं बुद्धिविशेषविषये अस्य उक्तार्थे सर्वनामता । यस्मादित्यर्थे अव्य० ।
**यदा** अव्य० यद्+दाच् । यस्मिन् काले इत्यर्थे ।
**यदि** अव्य० यद्+णिच्-इन् णिलोपः । पक्षान्तरे,सम्भावनायाञ्च
**यदु** पु० ययातिन्पतेः ज्येष्ठपुत्रे, यस्य वंशे श्रीकृष्णावतारः तस्य गोत्रापत्यमण् बहुषु तस्य लुक् । यदुवंश्ये दशार्हदेशे च ब०व० ।
**यदुनाथ** पु० यदूनां नाथो रक्षकत्वात् । श्रीकृष्णे, यदुपत्यादयोऽप्यत्र । ['यदृच्छालाभसन्तुष्ट'इति गीता
**यदृच्छा** स्त्री० यद्+ऋच्छ-अ+टाप् । स्वातन्त्र्ये, स्वैरतायाम्,
**यद्युवा** अव्य०यदि च उ च वा च द्व० । यद्यर्थे पक्षान्तरद्योतने, 'यद्युवालस्तरसमारसर्हिं मधुनैवे'ति स्मृतिः यद्युवा उभयं चिकीर्षेदिति च तिथ्यादितत्त्वम् । [भर्तृहरिकारिका ।
**यद्वा** अव्य०यच्च वा च द्व० । पक्षान्तरे 'यद्वाभ्युदययोग्यते'ति
**यन्तृ** पु०यम-तृच् । सारथौ, हस्तिपालके च । संयमयुक्ते त्रि०
**यन्त्र** न०यन्त्रि-अच् । संयमने, तन्त्रोक्ते-देवाद्यधिष्ठाने चक्रभेदे पात्रभेदे, सुगमतया ज्योतिश्चक्राद्यवेक्षणसाधने पदार्थभेदे, सूत्रधारादेर्दारुवेधकादौ (तुरपिन्) (भमर) (कुन्द)पदार्थे
**यन्त्रक** न० यन्त्रमिव इवार्थे कन् (कुंद) दारुभ्रामकयन्त्रभेदे
**यन्त्रगृह** न०६त० । तैलिकयन्त्रालये (घानिघर)
**यन्त्रगोल** पु० यन्त्रमिव ज्योतिश्चक्राकृतिगोलयन्त्रमिव गोलः वर्त्तुलः । कलायभेदे (मटर) [पीडायाम् स्त्री०टाप्
**यन्त्रण** न० यन्त्रि-ल्युट् । नियमने, रक्षणे, बन्धने च । युच् ।
**यन्त्रपेषणी** स्त्री०यन्त्रेणेव पिष्यतेऽनया पिष-ल्युट् । (याता) पेषणयन्त्रे ।
**यभ** मैथुने भ्वा०पर०सक० अनिट् । यभति अयाप्सीत् ।
**यम** उपरतौ भ्वा०पर०सक०अनिट् क्वावेट् । यच्छति अयंसीत् यन्ता । [अयीयमत् त अययामत् त
**यम** परिवेषणे चु०उ०सक०सेट् वा घटा० । यमयति यामयति.
**यम** पु० यम-घञ् । 'अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता । अस्तेयमिति पञ्चैते यमाख्यानि व्रतानि चे'त्युक्ते अहिंसादौ, इन्द्रियादीनां संयमने च । यमयति अच् । प्राणिनां शुभाशुभकर्म्मानुसारेण दण्डविधायके ईश्वरात्मयुक्ते दक्षिणस्य देवभेदे तत्स्वामिकत्वात् काके च । एकगर्भजायमाने यमजे त्रि० । भ्रातृत्वेन यमसम्बन्धिनि शनौ, द्वित्वसंख्यायां योगे च पु० ।
**यमक** न० 'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यत' इत्युक्ते शब्दालङ्कारभेदे ।
**यमकोटि** पु०स्त्री० भूगोलस्य चतुर्थपादान्तरिते लङ्कातः पूर्व्वस्यां स्थितायां देवनिर्म्मितायां पुर्य्याम् 'लङ्का कुमध्ये यमकोटिरस्याः प्रागि'ति सिद्धान्तशिरोमणिः ।
**यमज** त्रि० द्वि०व० । यमः एकदा एकत्र गर्भे सहचरः सन् जायते जन-ड । एकदा एकगर्भजातयोः ।
**यमदूतिका** स्त्री०यमस्य दूतीव इवार्थे कन् । तिन्तिडीवृक्षे
**यमद्रुम** पु० यमस्य द्रुमः । यमद्वारस्थे शाल्मलिवृक्षे तत्तुल्यलौहमयकीलाकीर्णवृक्षेण हि नारकिपीडनात्तस्य यमद्रुमत्वम् । [द्वितीयायां यात्रायां मरणमिति ज्योतिषम्
**यमद्वितीया** स्त्री०६त० । कार्त्तिकशुक्लद्वितीयायाम् 'तथा यम
**यमदग्नि** पु० मुनिभेदे ।
**यमन** न०यम-ल्युट् । बन्धने,उपरमे च । यमयति ल्यु । यमे पु०
**यमप्रिय** पु०६त० । वटवृक्षे ।
**यमराज** पु० यमानां चतुर्दशानां राजा यमनियामको राजा वा टच् समा० । प्रेतानां राजनि धर्म्मराजे । यमेषु राजते राज-क्विप् । यमराडप्यत्र ।

**यमल** न० यमं योगं लाति ला-क। युग्मे, वृन्दावनस्थे वृक्षभेदे च।

**यमलपत्त्र** पु० यमलानि युग्मानि पत्त्राणि यस्य। अश्मन्तकवृक्षे

**यमवाहन** पु० यमं वाहयति स्थानात् स्थानान्तरं नयति। वह-स्वार्थे णिच्-ल्यु। महिषे।

**यमानी** स्त्री० यच्छति अग्निमान्द्यमनया यम-करणे ल्युट् ङी० न्यात्वम्। अजमोदायाम्। स्वार्थे कन्। तत्रैव।

**यमुना** स्त्री० यम उनन्। कालिन्द्यां नद्यां, यमभगिन्याम् सूर्य्यसुतायाम्, दुर्गायाञ्च।

**यमुनाभ्रातृ** पु० ६त०। यमे। [त्मजे राजभेदे

**ययाति** पु० यस्य वायोरिव यातिः सर्व्वत्र गतिरस्य। नहुषा-

**ययु** पु० या-कु द्वित्वञ्च। अश्वमेधीयेऽश्वे, अश्वमात्रे च।

**यव** पु० यु-अच्। स्वनामख्याते शूकधान्यभेदे, 'वसन्ते सर्व्व-शस्यानां जायते पत्त्रशातनम् मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः' इति मीमांसा। स्वार्थे कन्। अत्रैव।

**यवक्य** न० यवानां भवनं चेत्रं यत् कुक् च। यवभवने चेत्रे

**यवक्षार** पु० यवजातः क्षारः। यवजातक्षारभेदे लवण-भेदे (शोरा) च।

**यवज** पु० यवात् जायते जन-ड। यवक्षारे, यवान्याञ्च।

**यवतिक्ता** स्त्री० यवाकारं तिक्तं फलं यस्याः। रास्नायां शङ्खिन्याञ्च।

**यवन** पु० यु-ल्यु। देशभेदे, तद्देशस्थे जने ब०व०। वेगे, अधिकवेगवत्यश्वे, गोधूमे, गर्जरतृणे, तुरुष्कजातौ ययातिशप्तस्य तत्पुत्रस्य तुर्व्वसोर्वंश्ये जातिभेदे च। वेगवति त्रि०

**यवनद्विष्ट** पु० यवनैर्द्विष्टः द्विष-क्त। गुग्गुलौ।

**यवनप्रिय** न० ६त०। मरिचे।

**यवनाचार्य्य** पु० ताजकादिज्योतिःशास्त्रकारके पण्डितभेदे

**यवनानी** स्त्री० यवनानां लिपिः ङीप् आनुक् च। यवनानां लिप्याम्।

**यवनारि** स्त्री० यवनस्यारिः। श्रीकृष्णे। [भेदे

**यवनाल** पु० यवानामिव नाला (नाडा) यस्य। (देधान) धान्य

**यवनालज** पु० यवानां नालात् काण्डात् (नाडा) जायते। यवक्षारे। [(कानात्) जवनिकायाम्

**यवनिका** स्त्री० युवन्त्यस्यां यु-ल्युट् ङीप् कन् अत इत्वम्।

**यवनी** स्त्री० यु-ल्युट् ङीप्। यवानीनामकौषधौ यवनभार्य्यायाञ्च। 'यवनीमुखपद्मानां'मिति रघुः।

**यवनेष्ट** न० ६त०। सीसके। मरिचे, पलाण्डौ लशुने राजपलाण्डौ निम्बे च पु०। खर्ज्जूर्य्यां स्त्री० टाप्।

**यवफल** पु० यवाकारं फलमस्य। वंशे कुटजे च यस्य फलमिन्द्रयवः प्लक्षवृक्षे, जटामांस्याञ्च।

**यवमध्य** न० यवाकृति मध्यं यस्य। चान्द्रायणभेदे प्रथमदिनादापञ्चदशदिनमेकैकग्रासवृद्ध्या, तदुत्तरं च आपञ्चदश दिनं क्रमेणैकैकग्रासहान्या माससाध्ये व्रते तस्य मध्यदिवसानां हि बहुलग्रासवत्त्वेन यवमध्यतुल्यत्वम्।

**यवलास** पु० यवेन लस्यते संज्ञायां कर्त्तरि घञ्। यवक्षारे।

**यवशूक** पु० यवानां शूकः कारणत्वेनास्त्यस्य अच्। यवक्षारे यवशूकजादयोऽप्यत्र।

**यवस** न० यु-असच्। घासे, तृणे च। [(याउ)

**यवागू** स्त्री० यूयते मिश्र्यते यु-आगू। षड्गुणजलपक्वे द्रवभेदे

**यवाग्रज** पु० यवस्याग्रात् शूकात् जायते जन-ड। यवक्षारे, यवान्याञ्च।

**यवानी** स्त्री० दुष्टो यवः ङीप् आनुक् च। (जोयानि) पदार्थे

**यवापत्य** न० यवस्यापत्यमिव तज्जातत्वात्। यवक्षारे।

**यवाम्लज** न० यवजाताम्लाज्जायते जन-ड। सौवीरके।

**यवास** पु० यु-आस। दुरालभायाम्, खदिरभेदे च। शुण्डाशिनी तृणे स्त्री० टाप्। स्वार्थे कन्। तत्रैव।

**यविष्ठ** त्रि० अतिशयेन युवा युवन्+इष्ठन् यवादेशः अतितरुणे

**यवीयस्** त्रि० अतिशयेन युवा युवन्+ईयसु यवादेशः 'अंशमंशं यवीयांस' इति स्मृतिः। कनिष्ठे स्त्रियां ङीप्।

**यवोत्थ** न० यवादुत्तिष्ठति उद्+स्था-क। सौवीरके।

**यव्य** न० यवानां भवनं चेत्रं यत्। यवभवनयोग्ये चेत्रे। युतचन्द्रार्कावत्र यत्। चान्द्रे मासे पु०। 'यव्यद्वयं श्रावणादि सर्व्वा नद्योरजस्वला' इति स्मृतिः।

**यशःपटह** पु० यशःख्यापकः पटहः। ढक्कायाम् वाद्यभेदे।

**यशःशेष** त्रि० यश एव शेषोऽस्य। मृते। कीर्त्तिशेषादयोऽप्यत्र

**यशस्** न० अश-असुन् धातोः युक्। शौर्य्यादिप्रभूते ख्यातिपरपर्य्याये पदार्थे।

**यशस्या** स्त्री० यशसे हिता यशस्+यत्। जीवन्त्याम् ऋद्धिनामौषधौ च। यशःसाधने त्रि०। 'धन्यं यशस्यमायुष्य'मिति।

**यशस्वत्** त्रि० यशस्+मतुप् मस्य वः। यशोविशिष्टे। विनि। यशस्वीत्यप्यत्र स्त्रियां ङीप्। ङीबन्तस्तु तत्र, ज्योतिष्मती यवतिक्तायां, वनकार्पास्याञ्च।

**यशोद** पु० यशो ददाति दा-क। पारदे। यशोदातरि त्रि० नन्दगोपपत्न्यां स्त्री०। 'नन्दगोपकुले जाता यशोदागर्भसम्भवे' इति चण्डी।

**यष्टृ** पु० यज-तृच्। यागकर्त्तरि।

**यष्टि** स्त्री० यज-क्तिन् नि० । ध्वजादिदण्डे, भुजाद्यवलम्बने दण्डे च क्विच् । तन्तौ, हारलतायां, भार्ग्यां, मधूकायां (यष्टिमधु) वा ङीप् । मल्लभेदे च ।

**यष्टीक** न० यष्ट्या कायति कै-क । यष्टीमधौ, लताभेदे ।

**यष्टीपुष्प** पु० यष्टीव पुष्पाख्यस्य । जीवद्वक्षे ।

**यष्टीमधु** पु० यष्ट्यां मधु अस्य । (यष्टिमधु) ख्यनामख्याते लताभेदे

**यस** यत्ने दिवा०पक्षेभ्वा०पर०अक०सेट् : यस्यति यसति संयस्यति संयसति अनुयस्यति अयसत् अयासीत् अयसीत् ।

**या** गतौ अदा०पर०सक०अनिट् । याति अयासीत् ।

**याग** पु० यज-घञ् । मन्त्रकरणके वह्न्याद्यधिकरणे हविः-प्रक्षेपरूपे यज्ञे ।

**याच** याचने भ्वा० उभ० द्विक० सेट् । याचति ते अयाचीत् अयाचिष्ट । चङि न ह्रस्वः । अयु याचयुः । याचितम् ।

**याचक** त्रि० याच-ण्वुल् । याच्ञाकारके ।

**याचन** न० याच-ल्युट् । याच्ञायाम् । युच् । याचनाप्यत्र स्त्री०

**याचनक** त्रि० याच-ल्यु, स्वार्थे कन् । याचके ।

**याचित** न० याच-भावे क्त । याचनकर्त्तौ याच्ञायाञ्च । कर्मणि क्त । प्रार्थिते त्रि० । [गृहीते (चाओया द्रव्य)

**याचितक** न० याचितेनाधिगतम् कन् । याच्ञया धनस्वामितो

**याच्ञा** स्त्री० याच-नङ् । प्रार्थनायाम् ।

**याजक** पु० याजयति यज-णिच्-ण्वुल् । धनादिलाभाय परार्थं यज्ञकर्त्तरि ऋत्विगादौ ।

**याज्ञवल्क्य** पु० मुनिभेदे ।

**याज्ञसेनी** स्त्री० यज्ञसेनस्य द्रुपदराजस्यापत्यं स्त्री० अत इञ् ङीप् । द्रौपद्यां पाण्डवभार्य्यायाम् ।

**याज्ञिक** पु०यज्ञाय हितः यज्ञः प्रयोजनमस्य वा ठक् । दर्भभेदे, खदिरे, पलाशे, अश्वत्थे याजके ऋत्विगादौ, यजमाने च ।

**याज्य** न० इज्यतेऽत्र यज-ण्यत् । यागस्थाने देवप्रतिमायाञ्च 'याज्यं चैतमलङ्कार'मिति स्मृतिव्याख्यायां दायभागे याज्यं यागस्थानं देवता वेत्युक्तम् याजनीये त्रि० । करणे ण्यत् । ऋग्विशेषे स्त्री० ।

**यातना** स्त्री० चु० यत-युच् । तीव्रवेदनायाम् ।

**यातयाम** त्रि० यातो गतो याम उचितसमयो यस्य । जीर्णे पर्य्युषिते 'यातयामं गतरस'मिति गीता । उच्छिष्टे, परिभुक्ते च । [यतौ गन्तव्ये त्रि०

**यातव्य** पु० यायतेऽसौ या-तव्य । स्वपार्ष्णा युद्धार्थमभिगम्ये

**यातायात** न० यातञ्चायातञ्च या-भावे क्त आ+या-भावे क्त समाहार द्व० । गमनागमनयोः ।

**यातु** पु०या-तु । राक्षसे । गन्तरि त्रि० । [राजहकगन्तरि त्रि०

**यातुघ्न** पु० यातुं राक्षसं गन्धेन हन्ति हन-टक् । गुग्गुलौ,

**यातुधान** पु० यातु इति धीयतेऽभिधीयते धा-ल्युट् । राक्षसे

**यातृ** स्त्री० या-तृच् । देवरपत्न्याम् (जा) यातरौ । तृन् । गन्तरि त्रि० यातारौ । [देशाद्देशेनोत्सवभेदे रथयात्रादौ च

**यात्रा** स्त्री० या-ष्ट्रन् । जिगीषया राज्ञां गमने, गमनमात्रे,

**यात्रिक** त्रि० यात्रायै हितम् । उत्सवे, उपाये, गमनहिते-नक्षत्रादौ च ।

**याथातथ्य** न० तथा तद्रूपस्यौचित्यम् अव्ययी० तस्य भावः ष्यञ् । यद्वस्तु यथा भवितुं युक्तं तस्य तथाभावे ।

**याथार्थ्य** न० यथार्थस्य भावः । सत्यत्वे वास्तवित्वे ।

**यादःपति** पु० यादसां जलजन्तूनां पतिः । वरुणे, समुद्रे च

**यादव** पु० यदोर्गोत्रापत्यमण् । यदुवंश्ये स्त्रियां ङीप् । तत्प्रधाने श्रीकृष्णे पु० । यदूनामिदम् अण्, गोमहिषादिके धने न० दुर्गायां स्त्री० ङीप् ।

**यादस्** न० या-असुन् दुक् च । जलजन्तुमात्रे ।

**यादसांनाथ** पु० ६त०अलुक्समा० । वरुणे, समुद्रे च । यादसां-पत्यादयोप्यत्र ।

**यादृश**(क्ष)(श्) त्रि० यस्येव दर्शनमस्य यद्+दृश्-क्स(ट) क्विप् वा । यत्सदृशे यथाविधे । टाप्तासु स्त्रियां ङीप् ।

**यादृच्छिक** त्रि० यदृच्छया आगतः ठक् । यथेच्छया प्राप्ते ।

**यान** न० या-भावे ल्युट् । गमने, उपचितशक्तेः राज्ञः कृतराष्ट्रा-दिरक्षां कृत्वा रिपोराक्रान्तनाय गमने च । करणे ल्युट् । गमनसाधने रथादौ ।

**यापन** न० या-णिच्-ल्युट् । कालादौ क्षेपणे, निरसने च ।

**याप्य** त्रि० या-णिच्-ण्यत् । निन्द्ये अधमे, क्षेपणीये निःशेषप्रतिकार्य्ये उपशमनीये रोगभेदे च ।

**याप्ययान** पु० याप्यं चेष्टं कुत्सितं वा पदन्ध्यन्त्यत्वात् द्रुतत्वा-द्युत्वाद्वा यानम् (महापाला) शिविकायाम् । [इति मा०

**याम** पु० यम-घञ् । समये प्रहरे च 'यामोयात सखापि नायात'

**यामघोष** पु० यामे घोषोऽस्य । कुक्कुटे । घटियन्त्रभेदे स्त्री०

**यामल** न० यमल+स्वार्थेऽण् । युगले, तन्त्रशास्त्रभेदे च ।

**यामवती** स्त्री० यामाः बहवः त्रिसंख्यायुताः सन्त्यस्याः भूम्नि मतुप् मस्य वः । रात्रौ, हरिद्रायाञ्च ।

**यामातृ** पु० जायां माति तृच् पृ० । जामातृशब्दार्थे ।

**यामि** स्त्री०यम-इन् । कुलस्त्रियां भगिन्यां 'यामयोयानि गे-हानीति मनुः ।

**यामित्र** न० ज्योतिषोक्ते लग्नराशितः सप्तमे स्थाने ।

यामित्रवेधः पु० यामित्रे सप्तमस्थाने वेधः पापग्रहसंयोगः विवाहादौ वर्ज्ये पापात् सप्तमग' इत्युक्ते योगभेदे ।
यामिनी स्त्री० यामाः त्रिसंख्याताः सन्त्यस्य बाहुल्ये इनि । रात्रौ, हरिद्रायाञ्च ।
यामिनीपति पु०६त०। चन्द्रे, कर्पूरे च। रजनीशादयोप्यत्र ।
यामी स्त्री० यमस्येयम् यमो देवतास्या वा अण् । दक्षिणस्यां दिशि यमसम्बन्धिन्यां यातनायां च । यामि+वा ङीप् । यामिशब्दार्थे । [कृष्णत्वात् यामुनजलतुल्यत्वम्
यामुनेष्टक न० यमुनायां भवं तद्विष्टकम् । सीसके तस्य हि
याम्य पु० यामी दिक् निवासोऽस्य यत् । अगस्त्ये,चन्दनवृक्षे च यमोदेवतास्य । यमसम्बन्धिनि त्रि० । दक्षिणदेशस्थे त्रि०
याम्यायन न० याम्यायाम् अयनं सूर्यस्य गतिः । दक्षिणायने रवेः कर्कटसंक्रान्तितः परेषु षट्सु मासेषु ।
याम्योद्भूत पु० याम्ये दक्षिणदेशे उद्भूतः । श्रीतालवृक्षे ।
यायजूक पु० यज-यङ्-ऊक । पुनःपुनर्यागशीले ।
यायावर पु० देशाद्देशान्तरं याति या-यङ्-वरच् । अश्वमेधीयाश्वे जरत्कारुमुनौ च । भृशवक्रगमनशीले त्रि० ।
याव पु०यु-अप् स्वार्थे अण् । अलक्ते। स्वार्थे कन् । तत्र । याव इव कन् (कुलुतीकलाइ) व्रीहिभेदे ।
यावत् त्रि० यत् परिमाणमस्य मतुप् । यत्परिमाणे । यावति । साकल्ये, व्याप्तौ, सीमायाञ्च अव्य० ।
यावत्तावत् अव्य० यावच्च तावच्च द्व० । बीजगणितप्रसिद्धे अव्यक्तमानानयनाय कल्पिते प्रथमे राशौ । [परिमाणपूरणे
यावतिथ त्रि० यावतां पूरणः यावत्+डट् इथुक् च । यावत्
यावन पु० यु-णिच्-ल्यु । सिह्लाख्यगन्धद्रव्ये ।
यावनाल पु० यवनाल एव स्वार्थे अण् । धान्यभेदे ।
यावनालशर पु० यावनालस्य शरः । शरभेदे ।
यावनाली स्त्री० यावनालस्य विकारः अण् ङीप् । यावनाल भवायां शर्करायाम् ।
यावशूक पु० यवशूकस्य विकारः अण् । यवक्षारे ।
याष्टीक पु०यष्टिः प्रहरणमस्य ईकक् । यष्ट्या योद्धरि ।
यास पु० यस-कर्त्तरि संज्ञायां घञ् । दुरालभायाम् ।
यु मिश्रणे अमिश्रणे च अ०पर०सक०सेट् । यौति अयावीत् ।
यु बन्धे क्र्या०उ०सक०अनिट् । युनाति युनीते-अयौषीत् अयोष्ट
यु निन्दने चु०आत्म०सक०सेट् । यावयते अयीयवत ।
युत त्रि० युज-क्त । मिलिते । अभ्यस्तयोगे योगिनि पु० । उचिते, न्यायागतद्रव्यादौ च न० ।
युक्तरसा स्त्री०युक्तो रसो यस्याः । रास्नायां (काटाआमरुली)
युक्ति स्त्री० युज-क्तिन् । न्याये, व्यवहारे, अनुमाने तत्साधकलिङ्गज्ञानादौ 'युक्तिरर्थावधारणमि'त्युक्ते नाटकाङ्गविशेषे च
युग वर्ज्जने भ्वा०पर०सक०सेट् इदित् । युङ्गति अयुङ्गीत् ।
युग न०युजि-अच् पृ० गलोपः । युग्मे, द्वित्वसंख्यान्विते, सत्यत्रेताद्वापरकलिरूपे कालविशेषे तत्प्रमाणे वृद्धदभिधाने । ऋद्धिनामौषधे, हस्तचतुष्कपरिमाणे च । रथहलादेरङ्गभेदे पु० (जोयाल) । [काष्ठखण्डभेदे
युगकीलक पु० ६त० । रथाद्यङ्गयुगधारणार्थे कीलकाकारे
युगन्धर पु० युगं रथस्य युगकाष्ठं धरति धृ-खच् । रथस्य युगकाष्ठसञ्चने कुवराख्ये काष्ठभेदे, पर्व्वतभेदे च ।
युगपद् अव्य० युगमिव पद्यते पद-क्विप् । एककाले इत्यर्थे ।
युगपत्त्र पु०युगमिव संहतं पत्त्रमस्य । कोविदारवृक्षे स्वार्थे कन् । तत्रैव । शिंशपावृक्षे स्त्री० टाप् अतइत्त्वम् ।
युगपार्श्वग पु० युगपार्श्वं गच्छति गम-ड । अभ्यासार्थं लाङ्गलपार्श्वे बद्धे वृषे । [न्विते च
युगल न० युगं द्वित्वं विद्यतेऽस्यस्य लच् । युग्मे, द्वित्वसंख्या-
युगलाख्य पु० युगलेन वर्णक्रमेण व्यञ्जनवर्णद्वयेनाख्यायते आ+ख्या-क । बब्बुरवृक्षे । [तत्काले च ।
युगान्त पु०युगानां सत्यादीनामन्तस्तदुपलक्षितः कालः । प्रलये,
युग्म न० युज-मक् पृ० जस्य गः । द्वित्वसंख्यान्विते (जोडा) युगले । 'युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा । प्रतिपदाप्यमावस्या तिथ्योर्युग्मं महाफलमि'त्युक्ते तिथिविशेषयोगे समराशिषु च
युग्मपत्त्र पु० युग्मानि पत्त्राण्यस्य । रक्तकाञ्चनवृक्षे । युग्मपर्णादयोप्यत्र । संज्ञायां कन् । शिंशपावृक्षे स्त्री० टाप् अतइत्त्वम्
युग्मफला स्त्री० युग्मानि फलानि यस्याः । इन्द्रचिर्भिट्यां, वृश्चिकाल्यां च । [युगवाहकेऽश्वादौ त्रि० ।
युग्य न० युगमर्हति यत् । वाहने याने । युगं वहति यत् ।
युच्छ प्रमादे भ्वा०पर०सक०सेट् । युच्छति अयुच्छीत् ।
युज संयमे युतौ च वा चु० उभ० पक्षे भ्वा० पर० सक०सेट् । योजयति ते योजति अयूयुजत् त अयोजीत् ।
युज युतौ रु०उ०सक०अनिट् । युनक्ति युङ्क्ते उद्युङ्क्ते प्रयुङ्क्ते निर्युनक्ति । अयुजत् अयौक्षीत् अयुक्त ।
युज योगे समाधौ दिवा०अक०अनिट् । युज्यते अयुक्त ।
युज निन्दायां चु०आ०सक०सेट् । योजयते अयूयुजत ।
युज् पु० दि०युज-क्विप् । समाधिमति । युक् युजौ । क० युज-क्विप् । संयोगवति त्रि० युङ् युञ्जौ युञ्जः ।
युञ्जान पु० युज-शानच् । योगविशेषवति भावनाप्रकारेण

सर्व्वपदार्थानां ज्ञातरि, रथसारथौ, विप्रे च ।
युत दीप्तौ भ्वा०आ०अक०सेट् । योतते । अयोतिष्ट ।
युत त्रि० यु-क्त । संयुक्ते, मिलिते, अमिलिते च ।
युतक न० यु-क्त युत-क वा ततः स्वार्थे कन् । संशये, युगे, स्त्रीवसनाञ्चले, चरणाग्रे, यौतके धने, मैत्रीकरणे, संश्रवे, सूर्पाग्रे च । संयुक्ते त्रि० ।
युतवेध पु० विवाहादौ वर्ज्ये चन्द्रेण सह पापग्रहयोगे ।
युद्ध न० युध-क्त । शस्त्रादिक्षेपणव्यापारे, योधने, तदाधारे संग्रामे, ज्योतिषोक्ते ग्रहाणां गतिभेदकृते, योधनरूपे परस्परमिलनविशेषे च ।
युध युद्धे दिवा०आ०सक०अनिट् । युध्यते । अयुद्ध ।
युध्(धा) स्त्री० युध-सम्प० क्विप् वा टाप् । युद्धे ।
युधान पु० युध-कानच् । क्षत्रिये । [षत्वम् । पाण्डवश्रेष्ठे ।
युधिष्ठिर पु० युधि युद्धे स्थिरः गवियुधिभ्यां स्थिरः इति
युप विमोहे दिवा०पर०अक०सेट् । युप्यति अयुपत् अयोपीत्
युयुधान पु० युध-कानच् द्वित्वम् । इन्द्रे, सात्यकिनामनि यादवे क्षत्रियभेदे, क्षत्रियमात्रे च । [त्यां युवजरतीत्यत्र ।
युवखलति स्त्री० युवतिरेव खलतिः । (टाक्) रोगवत्याम् युव-
युवति(ती) स्त्री० युवन्+ति ङीप् वा । यौवनवत्यां स्त्रियाम् । युवन्-ङीप् । यूनीत्यत्र ।
युवतीष्टा स्त्री० युवतीनामिष्टा । स्वर्णयूथिकायाम् ।
युवन् त्रि० यु-कनिन् । श्रेष्ठे निसर्गबलवति । 'आषोडशाद्भवे-द्बालस्तरुणस्तत उच्यते' इत्युक्तवयस्के तरुणे च ।
युवनाश्व पु० सूर्य्यवंश्ये, मान्धातृपितरि नृपभेदे ।
युवराज पु० युवैव राजा टच् समा० । राजयोग्यक्रियत्कार्य्य-करे राजपुत्रे ।
युष भजने सौ०पर०सक०सेट् । योषति अयोषीत् ।
युष्मद् त्रि० युष-मदिक् । संबोध्यचेतने भवच्छब्दार्थे तस्य चोक्तार्थे सर्व्वनामता, त्रिषु लिङ्गेषु समरूपता च ।
यूक पु०स्त्री० यू-क्विप् कन् । मत्कुणे, (उकुण) स्त्रीत्वे टाप् ।
यूति स्त्री० यु-क्तिन् नि० दीर्घः । मिश्रीकरणे ।
यूथ न० यु-थक् पृ० दीर्घः । सजातीयसमुदाये ।
यूथनाथ पु० ६त० । वन्यगजादीनां प्रधाने । यूथपादयोऽप्यत्र ।
यूथिका स्त्री० यु-थक् पृ० दीर्घः स्वार्थे कन् अत इत्त्वम् टाप् । अम्लानके, पाठायां, यूथ्याञ्च (युइफुल) ।
यूथी स्त्री०यु-थक् पृ०दीर्घः गौ०ङीप् । (युइफुल) पुष्पप्रधाने वृक्षे
यूप पु०न० यु-पक् पृ० दीर्घः । यज्ञीयपशुबन्धनकाष्ठभेदे, याग-समाप्तिचिह्नार्थे स्तम्भे च । जयस्तम्भे पु० ।

यूपकटक पु०६त० । यज्ञसमाप्तिसूचककाष्ठस्य शिरःस्थे वलयाकारे काष्ठमये पदार्थे । [यूपद्रुमादयोऽप्यत्र
यूपद्रु पु० यूपाय द्रुः प्रकृतिविकृतिभावात् ४त० । खदिरवृक्षे
यूष वधे भ्वा०पर०सक०सेट् । यूषति अयूषीत् ।
यूष पु०न० यूष क पृ०षस्य यः । मुद्गादिक्वाथे । ब्रह्मदारुवृक्षे पु० ।
येष यत्ने भ्वा०आ०अक०सेट् । येषते अयेषिष्ट । चङि न ह्रस्वः
योक्त्र न० युज्यतेऽनेन युज-ष्ट्रन् । ईषादण्डादौ युगबन्धनार्थे दामनि (योत) ।
योग पु० युज-भावादौ घञ् । संयोगे, मेलने, उपाये, वर्म्मादि-धारणे, ध्याने 'योगश्चित्तवृत्तिनिरोध' इति पातञ्जलोक्ते सर्व्वविषयेभ्योऽन्तःकरणवृत्तेर्निरोधे, 'संयोगं योगमित्याहु-र्जीवात्मपरमात्मनो'रित्युक्ते जीवात्मपरमात्मनोरैक्ये, युक्तौ, छले, अलभ्यार्थलाभचिन्तायाम्, देहस्थैर्ये, शब्दादीनां प्रयोगे, समुदायशब्दस्यावयवार्थसम्बन्धे, 'योगबलं समाख्ये'ति मीमांसकाः । 'योगः कर्मसु कौशल'मित्युक्ते यथास्थितवस्तुनो-ऽन्यथारूपप्रतिपादने, यथा संसारबन्धहेतोरपि कर्म्मणो-ऽबन्धमोक्षहेतुत्वम् । ज्योतिषोक्तेषु रविचन्द्रयोगाधीनेषु विष्कुम्भादिषु, सप्तविंशतौ पदार्थेषु तिथिवारनक्षत्राणाम् अन्यतरान्यतमानां योगविशेषे, अमृतयोगः अर्द्धोदय-योग इत्यादि उपाधौ च योगाधमनविक्रीतमिति स्मृतिः ।
योगक्षेम न०योगश्च क्षेमञ्च समाहारः द्व० । अलभ्यलाभचि-न्तासहिते लब्धपरिरक्षणे 'योगक्षेमं वहाम्यह'मिति पुरा०
योगज न०योगात् जायते जन-ड । अगुरुचन्दने । योगजात मात्रे त्रि० । न्यायाद्युक्ते प्रत्यक्षादिसाधने अलौकिकसन्निकर्षभेदे पु० । [दानप्रतिग्रह'मिति स्मृत्युक्ते सोपाधिके दाने
योगदान न० योगेन छलेन उपाधिना वा दानम् । 'योग-
योगनिद्रा स्त्री० योगरूपा निद्रा । प्रलये परमेश्वरस्य सर्व्वजीवसंहारेच्छया योगरूपे व्यापारे 'योगनिद्रामुपेयुष' इति चण्डी तदधिष्ठात्र्यां दुर्गायाञ्च ।
योगपट्ट न० योगाभ्यासार्थं पट्टम् । योगिधार्य्ये पट्टसूत्रभेदे ।
योगपीठ पु०न० योगयोग्यं पीठमासनम् । देवादीनामासनभेदे
योगमाया स्त्री० योगएव माया । भगवतो जगत्सर्व्वोना-र्थायां शक्तौ, 'योगमायामुपाश्रित' इति भागवतम् । तद-धिष्ठात्र्यां दुर्गायाञ्च । [प्यत्र स्त्री०
योगरङ्ग पु०योगेन रङ्गोऽत्र । (नारङ्ग) जम्बीरभेदे योगरङ्गा-
योगरूढ़ पु० योगोऽवयवशक्तिः रूढिः समुदायशक्तिः एते स्तोऽस्य अच् । अवयवशक्त्या समुदायशक्त्या च अर्थबोधके पङ्कजशब्दादौ अत्र हि उभयशक्त्या पङ्कजन्मकर्तृत्वरूपवि-

ङ्गाद् भवेद्वाल स्तरुणस्तत उच्यते । वृद्धः स्यात् सप्तते-
रूर्द्ध्व'मित्युक्तेऽवस्थाभेदे ।

यौवनकण्टक पु०न० यौवनस्य कण्टक इव चिह्नम् । (ययन् फोड़ा) व्रणभेदे ।

यौवनदशा स्त्री० कर्म० । तारुण्ये अवस्थाभेदे ।

यौवनलक्षण न० ६त० । स्तने, लावण्ये च ।

यौष्माक त्रि० युष्माकमिदम् युष्मद्-अण् युष्माकादेशः । युष्मत् सम्बन्धिनि । खञ् । यौष्माकीणोऽप्यत्र त्रि० ।

र

र पु० रा-ड । वह्नौ, वचे, कामानले च ।

रंहस् न० रहि-असुन् । वेगे । [कत् त

रक स्वादे प्राप्तौ च चु०उ०सक० सेट् । राकयति-ते अरीर-

रक्त न० रन्ज-कर्त्तरि क्त । कुङ्कुमे, ताम्रे, सिन्दूरे, हिङ्गुले च । शरीरस्थे रसपाकजन्ये मांसहेतौ रुधिराख्ये धातुभेदे च । भावे क्त । रागे । कुसुम्भे हिज्जले रोहितवर्णे च पु० तद्वति त्रि० । कर्त्तरि-क्त । अनुरक्ते क्रीड़ारते च त्रि० । कर्म्मणि-क्त । नील्यादिभिरञ्जिते त्रि० । करणे क्त । मञ्जिष्ठायां, लाक्षायां, गुञ्जायाञ्च स्त्री० टाप् ।

रक्तक पु० रक्तं रुधिरमिव कायति कै-क, इवार्थे कन् वा । अम्लानवृक्षे, बन्धूकवृक्षे, रक्तशोभाञ्जने, रक्तैरण्डे च । रुधिरे रक्तवस्त्रे च न० । अनुरागिणि विनोदिनि च त्रि० ।

रक्तकन्द पु० रक्तवर्णः कन्दोऽस्य । विद्रुमे प्रवाले ।

रक्तकमल न० रक्तं कमलमिव । रक्तवर्णोत्पले । ष० । रक्तकम्बलमप्यत्र न० ।

रक्तकरवीर पु० कर्म० । रक्तवर्णपुष्पककरवीरवृक्षे ।

रक्तकाञ्चन पु० कर्म० । रक्तवर्णपुष्पककाञ्चनवृक्षे ।

रक्तकाण्डा स्त्री० रक्तः काण्डोऽस्याः । रक्तपुनर्नवायाम् ।

रक्तकुमुद न० कर्म० । रक्तवर्णपुष्पककैरवे । कर्म० । रक्तकैरवरक्तकोकनदे अप्यत्र न० ।

रक्तकुसुम पु० रक्तानि कुसुमान्यस्य । पारिभद्रे (पालदामादार)

रक्तकेशर पु० रक्ता केशरा अस्य । पारिभद्रे, पुन्नागवृक्षे च ।

रक्तखदिर पु० सारतो रक्तवर्णः खदिरः । रक्तवर्णसारके खदिरवृक्षे ।

रक्तगन्धक न० रक्तेन गन्धकमिव । बोले (गन्धरस)

रक्तघ्न पु० रक्तं हन्ति हन-टक् । रोहितकवृक्षे । दूर्वायां स्त्री०

रक्तचन्दन न० कर्म० । स्वनामख्याते चन्दनभेदे ।

रक्तचित्रक न० कर्म० । (लालचिता) क्षुपभेदे ।

रक्तचूर्ण न० कर्म० । सिन्दूरे ।

रक्तझिण्टी स्त्री० कर्म० । (लालझांटि) पुष्पप्रधानवृक्षभेदे ।

रक्ततुण्ड पु० रक्तं तुण्डमस्य । शुकपक्षिणि ।

रक्तत्वचा स्त्री० रक्ता त्वक् यस्याः । गोमूत्रिकायाम् ।

रक्तत्रिवृत्(ता) स्त्री० कर्म० । (लालतेओड़ि) वृक्षभेदे ।

रक्तदन्तिका स्त्री० रक्ता दन्ता अस्याः ङीप् संज्ञायां कन् अत इत्त्वम् । दाडिमीरूपे दुर्गाशक्तिभेदे 'भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान् । रक्ता दन्ता भविष्यन्त्युपमस्य ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः । स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिका'मिति चण्डी ।

रक्तदला स्त्री० रक्तानि दलान्यस्याः । नालिकायाम् (नालते)

रक्तदृश् पु० रक्ता दृक् नेत्रमस्य । कपोते । रक्तनेत्रादयोऽप्यत्र

रक्तधातु पु० कर्म० । गैरिके, ताम्रे च । देहस्थे रुधिररूपे रसधातुजाते मांसधातुहेतौ धातुभेदे च ।

रक्तनाल पु० रक्तो नालोऽस्य । जीवशाके ।

रक्तप पु० रक्तं पिबति पा-क । राक्षसे । रक्तपानकर्त्तरि त्रि० । जलौकायां, डाकिन्याञ्च स्त्री० ।

रक्तपत्त्रिका स्त्री० रक्तानि पुष्पपत्त्राण्यस्याः कप् अत इत्त्वम् । रक्तपुष्पजवायाम्, रास्नायाञ्च ।

रक्तपल्लव पु० ६ब० । अशोकवृक्षे ।

रक्तपाकी स्त्री० रक्तः पाकः फलं यस्याः ङीप् । वृहत्याम् ।

रक्तपाद पु० ६ब० । शुकपक्षिणि । लज्जालौ लतायां, हंसपद्याञ्च स्त्री० ङीप् । [न्यायाम् । (जोंक) ।

रक्तपायिनी स्त्री० रक्तं पातुं शीलमस्याः पा+णिनि । जलौ-

रक्तपारद पु०न० कर्म० । हिङ्गुले ।

रक्तपित्त न० रक्ताय दुष्टं पित्तम् यस्मात् । रोगभेदे 'रक्तपित्तात् भवेत् कास' इति वैद्यकम् ।

रक्तपुष्प पु० रक्तं पुष्पमस्य । करवीरे, रोहितकवृक्षे, रक्तकाञ्चनवृक्षे, दाडिमवृक्षे, रक्तयवृक्षे, बन्धूकवृक्षे, पुन्नागवृक्षे च स्वार्थे कन् । पलाशे । कर्म० । रक्तवर्णकुसुमे न० । पर्पटे, शाल्मलिवृक्षे, जवावृक्षे च स्त्री० टाप् ।

रक्तपुष्पिका स्त्री० रक्तानि पुष्पाणि यस्याः ङीप् अत इत्त्वम् । लज्जालुलतायाम्, रक्तपुनर्नवायाम्, भूमिपाटली च ।

रक्तपुष्पी स्त्री० रक्तानि पुष्पाण्यस्याः ङीप् । पाटलिवृक्षे (पारुल) जवायाम्, आवर्त्तकीलतायाम्, नागदमन्याम् करुणीवृक्षे च । [वृश्चाल्याम् ।

रक्तपूरक न० रक्तं रुधिरं पूरयति सेवनात् पूर-ण्वुल् ।

रक्तप्रसव पु० रक्तवर्णः प्रसवः पुष्पमस्य । करवीरे रक्त

ग्लाने च। [टाप् (तेलाकुचा)।

रक्तफल पु० रक्तानि फलान्यस्य। वटवृक्षे। बिम्बिकायां स्त्री०

रक्तवालुक न० कर्म०। सिन्दूरे रक्तवालुकाप्यत्र स्त्री०।

रक्तमञ्जर पु० रक्तवर्णा मञ्जरी यस्य ब अच्। निचुलवृक्षे।

रक्तमूला स्त्री० ६त०। लज्जालुलतायाम्।

रक्तमेह पु० कर्म०। रोगभेदे।

रक्तमोक्षण न० ६त०। रुधिरस्रावणे। [वान् तत्रैव।

रक्तयष्टि स्त्री० रक्तवर्णा यष्टिरस्याः। मञ्जिष्ठायाम्। स्वार्थे

रक्तरेणु पु० रक्ता रेणवोऽस्य। पलाशकलिकायाम्।

रक्तलशुन न० कर्म०। (लालरशुन) मूलभेदे।

रक्तला स्त्री०रक्तं रुधिरं छेत्तुत्वेनास्त्यस्याः अच् तद् लाति सेवनात् ला-क वा। काकतुण्ड्याम्।

रक्तवटी स्त्री० रक्तवर्णा वटीव। मसूरिकायाम्।

रक्तवर्ग पु० रक्तानां वर्गः समुदायः। दाड़िमकिंशुकलाक्षाबन्धूकहरिद्राजवाकुसुमपुष्पमञ्जिष्ठालक्तकरूपे समूहे।

रक्तवर्ण पु० रक्तो वर्णोऽस्य। इन्द्रगोपकीटभेदे। कर्म०। रोहितरूपे पु०।

रक्तवर्द्धन पु० रक्तं रुधिरं वर्द्धयति वृध-णिच्-ल्यु। वार्त्ताकौ

रक्तवर्षाभू पु०वर्षायां भवति भू-क्विप् कर्म०। रक्तपुनर्नवायाम्

रक्तवीज पु०रक्तवर्णानि वीजान्यस्य। दाड़िमे। रक्तं रुधिरमेव वीजमुत्पत्तिः कारणं यस्य। 'रक्तविन्दुर्यदा भूमौ पतत्यस्य शरीरतः। समुत्पतति मेदिन्यास्तत्प्रमाणस्तदा सुर' इति चण्डीप्रतिपादितेऽसुरभेदे।

रक्तवृन्ता स्त्री० रक्तवर्णं वृन्तं यस्याः। शेफालिकायाम्।

रक्तवृष्टि स्त्री० ६त०। दैवकृतोपद्रवभेदे रुधिरवर्षणे।

रक्तशालि पु० कर्म०। (लालधान) धान्यभेदे।

रक्तशिग्रु पु० कर्म०। (मालसजना) वृक्षभेदे।

रक्तशीर्षक पु० रक्तं शीर्षमस्य कप्। सरलद्रुमे।

रक्तशृङ्गिक न० रक्तं शृङ्गमिवास्त्यस्य ठन्। विषभेदे।

रक्तसन्ध्यक न०रक्ता सन्ध्येव कन्। रक्तवर्णे कह्लारे, पद्मे च

रक्तसरोरुह न० कर्म०। रक्तपद्मे।

रक्तसर्षप पु० कर्म०। (राइसर्षा) राजिकायाम्।

रक्तसहा स्त्री० रक्तं सहते सह-अच्। रक्तम्लाने।

रक्तसार न०रक्तः सारोऽस्य। रक्तचन्दने। अम्लवेतसे पु०।

रक्तसौगन्धिक न० कर्म०। (लालसुँदि) रक्तवर्णकह्लारे।

रक्ताकार पु० रक्तवर्ण आकारो मूर्त्तिर्यस्य। प्रवाले।

रक्ताक्ष पु० रक्ते अक्षिणी यस्य षच् समा०। पारावते, महिषे, चकोरे, सारसे च। रक्तनेत्रयति, क्रूरे, जने च त्रि०। स्त्रियां ङीप्

रक्ताङ्ग न० रक्तमङ्गं यस्य यस्माद्वा। कुङ्कुमे। मङ्गलग्रहे कम्पिल्ले (डहरकरमचा) च पु०। प्रवाले पु०न०। जीवन्त्याम्, मञ्जिष्ठायाश्च स्त्री० ङीप्।

रक्ताति(ती)सार पु० रक्तमिश्रितोऽति(ती)सारः। वैद्यकप्रसिद्धे रोगभेदे।

रक्ताधार पु० ६त०। देहावरके चर्म्मणि। [बोले

रक्तापह न० रक्तं रुधिरमपहन्ति अप+हन-ड। गन्धरसे

रक्तापामार्ग पु० कर्म०। (लाल आपाङ्) क्षुपभेदे।

रक्ताम्लान पु० कर्म०। रक्तमहासहालतायाम्।

रक्तालु पु० कर्म०। (शकरकन्द) आलुभेदे।

रक्तिका स्त्री०। रक्तेव कन् अत इत्वम्। गुञ्जायां, राजिकायां, परिमाणभेदे च।

रक्तेक्षु पु० कर्म०। (काजला) इक्षुभेदे।

रक्तैरण्ड पु० कर्म०। (लालभेरण्डा) वृक्षभेदे।

रक्तोत्पल न० कर्म०। कोकनदे लोहितवर्णे-पद्मे। रक्तोत्पलमिव पुष्पमस्त्यस्य अच्। शाल्मलिवृक्षे (शिमुल) पु० रक्तमुत्पलमिव। गैरिके न०। [तद्वति त्रि०।

रक्तोत्पलाभ पु० रक्तोत्पलस्य कोकनदस्येवाभा यस्य। रक्तरूपे

रक्ष पालने भ्वा०पर०सक०सेट्। रक्षति अरक्षीत्।

रक्षःसभ न० रक्षसां राक्षसानां सभा। राक्षससमूहे।

रक्षक त्रि० रक्ष-ण्वुल्। रक्षाकर्त्तरि स्त्रियां टाप् अत इत्वम्

रक्षणि(णी) स्त्री० रक्ष-अनि वा ङीप्। त्रायमाणालतायाम्

रक्षस् न० रक्ष्यते हविरस्मात् रक्ष-अपादानेऽसुन्। राक्षसे।

रक्षा स्त्री०रक्ष-अ टाप्। रक्षणे। रक्षति अच् टाप्। जतुनि, भस्मनि च स्त्री०। रक्ष-अच्। रक्षके त्रि०।

रक्षापत्र पु० रक्षार्थं पत्रमस्य। भूर्जपत्रवृक्षे।

रक्षित त्रि० रक्ष्यतेऽस्म रक्ष-क्त। पालिते। उपाधिभेदे तदुपाधिविशिष्टजनकृते वैद्यकग्रन्थभेदे च।

रक्षिवर्ग पु० रक्षिणां वर्गः। सैन्यादिरक्षके (प्रहरिगण)

रक्षोघ्न न० रक्षो हन्ति हन-टक्। काञ्जिके, हिङ्गुनि च। तद्धा मायसम्बन्धादि रक्षसामपसरणम्। भल्लातकवृक्षे श्वेतसर्षपे च पु०। ऋग्वेदादिप्रसिद्धे 'कृणुष्व पाज' इत्यादिके सूक्तभेदे न०। वचायां स्त्री०। राक्षसनाशकद्रव्यमात्रे त्रि०

रक्षोहन् पु० रक्षो हन्ति हन+क्विप्। गुग्गुलौ तद्गन्धघ्राणादि राक्षसानामपसरणम्। श्वेतसर्षपे च। राक्षसहन्तरि त्रि० 'रक्षहा वलगहन इति यजुर्वेदः।

रक्ष्ण पु० रक्ष-नङ्। त्राणे।

रख सर्पणे भ्वा०पर०सक०सेट् इदित्। रङ्खति अरङ्खीत्।

रख सर्पणे भ्वा०पर०सक०सेट्। रखति अरखीत् अराखीत्

रग शङ्कायाम् भ्वा०प०सक०सेट् घटा० एदित्। रगति अरगीत्। रगयति।

रगि गतौ भ्वा० पर० सक० सेट् इदित्। रङ्गति अरङ्गीत्।

रग स्वादे आप्तौ च चु०उभ०सक०सेट्। रागयति अरीरगत् त

रघि दीप्तौ चु० उभ०सक०सेट् इदित्। रङ्घयति ते अररङ्घत्

रघि गतौ भ्वा०आ० सक० सेट् इदित्। रङ्घते अरङ्घिष्ट।

रघु पु० लघ-उ लस्य रत्वम्। सूर्य्यवंश्ये दिलीपसूनौ नृपतिभेदे रघोरपत्यमण् बहुषु लुक्। रघुवंश्ये अजप्रभृतौ क्षत्रिये ब०व०। तान् अधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक्। कालिदासप्रणीते ऊनविंशतिसर्गात्मके महाकाव्यभेदे पु०। [पुत्रे श्रीरामे।

रघुनन्दन पु० रघून् नन्दयति नन्द-णिच् ल्यु। दशरथज्येष्ठ-

रघुनाथ पु० रघूणां नाथः रक्षकत्वात् श्रेष्ठत्वाद्वा। श्रीरामे रघुपत्यादयोऽप्यत्र।

रघुवंश पु०६त०। रघुकुले। तमधिकृत्य कृतो ग्रन्थः आख्यायिकायां तस्य लुक्। कालिदासप्रणीते ऊनविंशतिसर्गात्मके महाकाव्यभेदे।

रघुवंशतिलक पु०रघुवंशे तिलकइव। दशरथज्येष्ठपुत्रे श्रीरामे

रघुवर पु० रघुषु वरः श्रेष्ठः। श्रीरामे।

रघूद्वह पु०रघुषु उद्वहः रथादिभारधारकः उद्+वह-अच्। दशरथज्येष्ठपुत्रे श्रीरामे।

रङ्क त्रि० रकि-अच्। कृपणे, मन्दे च।

रङ्कु पु० रकि-उ। मृगविशेषे।

रङ्ग पु०रगि-अच्। धातुभेदे,(राङ) रन्ज भावे घञ्। रागे आधारे घञ्। रणभूमौ, नाट्यस्थाने च। करणे घञ्। नृत्ये, टङ्कणे, (सोहागा) खादिरसारे च।

रङ्गज न० रङ्गात् रङ्गधातोर्जायते जन-ड। सिन्दूरे।

रङ्गजीवक पु० रङ्गेण रञ्जनेन जीवति जीव-ण्वुल्। (रङ्गरेज) शिल्पिभेदे, चित्रकरे, नाट्यजीविनि च।

रङ्गद पु० रङ्गं रञ्जनं रागं ददाति दा-क। टङ्कणे,खदिरसारे च

रङ्गदायक पु० रङ्गं ददाति दा-ण्वुल्। कङ्गुषे, (काङ्नी) धान्यभेदे। [रसादिना हि नीलरागसम्भवः।

रङ्गपत्री स्त्री० रङ्गाय पत्रमस्याः ङीप्। नीलीवृक्षे तत्पत्र-

रङ्गपुष्पी स्त्री० रङ्गाय पुष्पमस्ति अण् ङीप्। नीलीवृक्षे।

रङ्गभूमि स्त्री० रज्यतेऽत्र रन्ज-घञ् कर्म०। नाट्यभूमौ 'रङ्गभूमिं समासाद्येति' सा०द०। मल्लभूमौ च।

रङ्गमाट स्त्री० रङ्गस्य रागस्य मातेवोत्पादिका। वाद्यायाम्

कुट्टिन्याञ्च सा हि नायकयोर्वार्त्तादिद्वारा रागं वर्द्धयति।

रङ्गलासिनी स्त्री० रङ्गं रागं लासयत्युल्लासयति इत्यर्थेन लस-णिच्-णिनि। शेफालिकायाम्।

रङ्गबीज न० रङ्गस्येव बीजमुत्पत्तिसाधनं यस्य। रूप्ये रजते

रङ्गशाला स्त्री० रज्यतेऽत्र कर्म०। (नाचघर) नाट्यगृहे।

रङ्गाजीव पु० रङ्गं रञ्जनं नाट्यस्थानं वा आजीवति आ+जीव अण्। (रङ्गरेज) शिल्पिभेदे, चित्रकरे, नटे च।

रङ्गारि पु०रङ्गस्यारिरिव जारकत्वात्। करवीरे तद्रससंबन्धाद्धि रङ्गस्य जीर्णता।

रङ्गावतारक पु० रङ्गे नाट्यस्थानेऽवतरति वेशान्तरपरिग्रहेण अव+तॄ-ण्वुल्। नटे, शैलूषे। णिनि। उक्तार्थे।

रङ्गिणी स्त्री० रङ्गमिव शुभ्राणि मूलानि सन्त्यस्याः इनि। शतमूल्याम्, कैवर्त्तिकाक्षुपके च। रङ्गयुक्ते त्रि०।

रंहस् न० रहि-असुन्। वेगे। [ल्युट्। तत्रैव न०।

रचना स्त्री० रच-युच्। रचने, पुष्पपत्रादेर्विन्यासे। भावे

रच रचनायां अद०चु०उभ०सक०सेट्। रचयति ते अररचत् त

रज न० रन्ज क। स्त्रीकुसुमे। परागे,रेणौ गुणभेदे च पु०

रजक पु० रजति रन्ज-ण्वुल् नलोपः। वस्त्रादेः रागकारके जातिभेदे (धोपा)।

रजत न०रन्ज-अतच् नलोपः। रूप्ये, गजदन्ते, रुधिरे,हारे, शैले, स्वर्णे, धवले च। शुक्लगुणवति त्रि०।

रजताचल पु०रजतकल्पितोऽचलः। दानार्थं कल्पिते, रजतमये पर्व्वते। रजतमिव शुभ्रोऽचलः। कैलासपर्व्वते रजतगिर्य्यादयोऽप्यत्र पु०।

रजन न० रन्ज-ल्यु। रागे। [हरिद्रायां, जतुकायाञ्च।

रजनि(नी) स्त्री० रज्यतेऽत्र रन्ज-कनि वा ङीप्। रात्रौ

रजनीकर पु० रजनीं सततं करोति कृ-ट। चन्द्रे।

रजनीगन्धा स्त्री० रजन्यां गन्धो यस्याः। स्वनामख्याते पुष्पप्रधाने वृक्षे। [भटे च।

रजनीचर पु०रजन्यां चरति चर-ट। राक्षसे,चौरे, यामिक

रजनीजल न० रजन्या जलमिव। नीहारे।

रजनीपुष्प पु० रजन्या हरिद्राया इव पुष्पमस्य। (पूतिकरञ्जा) करञ्जभेदे।

रजनीमुख न०६त०। प्रदोषे सूर्य्यास्तकालात् चतुर्दण्डात्मके, मुहूर्त्तात्मके वा काले। [लिकायाम्

रजनीहासा स्त्री० रजन्यां हासो विकाशो यस्याः। शेफा-

रजस् न० रन्ज-असुन् नलोपः। पुष्परेणौ, परागे, धूलौ, सांख्योक्ते चेष्टादिकारके प्रकृतिगुणभेदे च।

रजस्वल त्रि० रजोऽस्त्यस्य वलच् । रजोयुक्ते । महिषे पु० आर्त्तववत्यां स्त्रियां स्त्री० ।

रज्जु स्त्री० सृज-उ नि० । बन्धनसाधने दामनि (दडि) वेण्याञ्च

रञ्जक न० रञ्जयति रन्ज-णिच्-ण्वुल् । हिङ्गुले प्रीतिकारके त्रि० । काम्पिल्लवृक्षे पु० (कमरकसचा) ।

रञ्जन न० रज्यतेऽनेन रन्ज-करणे ल्युट् । रक्तचन्दने, मञ्जिष्ठायां, नील्यां, गुरुरोचनिकायां, (कमलागुडि), शेफालिकायां, हरिद्रायां, मर्पव्याञ्च स्त्री० ङीप् । भावे ल्युट् । रागे । ल्यु । रागजनके त्रि० । मुञ्जतृणे न० । संज्ञायां कन् । कट्फले पु० ।

रट भाषणे भ्वा०पर०सक०सेट् । रटति अराटीत् अरटीत् 'माघे मासि रटन्त्याप' इति स्मृतिः ।

रटन्ती स्त्री० रट-शतृ ङीप् । 'माघे मासासिते पक्षे रटन्त्याख्या चतुर्द्दशी । तस्यां प्रदोषसमये पूजयेत् मुण्डमालिनी'मित्युक्तायां माघकृष्णचतुर्द्दश्याम् ।

रठ भाषणे भ्वा०पर०सक०सेट् । रठति अराठीत् अरठीत् ।

रण गतौ भ्वा०पर०सक०सेट् । रणति अराणीत् अरणीत् घटादि० । रणयति ।

रण रवे भ्वा०पर०अक०सेट् । रणति अराणीत् अरणीत् ।

रण न० रण्यते शब्द्यतेऽत्र रण-घञर्थे क । युद्धे, भावे क । शब्दे, क्वणे, गतौ च पु० । [कन् । उद्वेगे अतिशये च ।

रणरणक पु० रणः शब्दरूपप्रकारः द्वित्वम् ततः संज्ञायां

रणसङ्कुल न० रणमेव सङ्कुलम् । तुमुलयुद्धे ।

रण्ड पु० रम-ड तस्य नेत्त्वम् । धूर्त्ते, विफले अर्द्धाङ्गविच्छिन्नतया विधायके त्रि० मूषिकपर्ण्यां विधवायाञ्च स्त्री० । स्वार्थे कन् । अपत्यरहितादौ ।

रण्डाश्रमिन् पु० रण्डः विफलः प्रजाहीनत्वात् आश्रमः अस्त्यस्य इनि । 'चत्वारिंशद्वत्सराणां शाटानाञ्च परे यदि । स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मत' इत्युक्ते वयसि स्त्रीवियुक्ते पुरुषे ।

रत न० रम भावे क्त । रमणे स्त्रीपुंसयोः सङ्गमे मैथुने, गुह्ये च । कर्त्तरि क्त । अनुरक्ते त्रि० ।

रति स्त्री० रम-क्तिन् । रागे, गुह्ये, रमणे तदधिष्ठात्र्यां कामदेवपत्न्यां च । [सङ्गमाख्ये मैथुने ।

रतिक्रिया स्त्री रतये रतिरूपो वा क्रिया व्यापारः । स्त्रीपुंस

रतिपति पु० ६त० । कन्दर्पे रतिकान्तादयोऽप्यत्र ।

रतिप्रिय पु०६त० । कामदेवे । ६ब० । रमणप्रिये त्रि० ।

रतिमन्दिर न० ६त० । रतिस्थाने सौधागारादौ स्त्रीचिह्ने च

रतिरमण पु० रतिं रमयति रम-णिच्-ल्यु । कामदेवे ।

रतिलक्ष न० रतेर्लक्ष्यं पदम् । मैथुने ।

रतिसत्वरा स्त्री० रतिं सत्वरयति सत्वरा+करोत्यर्थे णिच्-अण् । (पिडिङ्ग) शाके ।

रत्न न० रमतेऽत्र रम-न तान्तादेशः । माणिक्यादिप्रस्तरे, स्वस्वजातिषु श्रेष्ठे, माणिक्ये, हीरके च ।

रत्नकन्दल पु० रत्नेषु कन्दल इव रक्तत्वात् । प्रवाले ।

रत्नकूट पु० रत्नमयः कूटः शृङ्गमस्य । पर्व्वतभेदे ।

रत्नगर्भ पु० रत्नयुक्तं गर्भं मध्यं यस्य । समुद्रे, कुबेरे च । पृथिव्यां समुद्रायां भार्य्याञ्च स्त्री० ।

रत्नद्वीप पु०न० । रत्नमयो द्वीपः । तन्त्रोक्ते सुधासमुद्रमध्यस्थिततया ध्येये रत्नमयेऽन्तरीपे । [निर्म्मितायां धेन्वाम् ।

रत्नधेनु स्त्री० रत्नकल्पिता धेनुः । दानार्थं कल्पितायां रत्न-

रत्नपारायण न० रत्नानां पारायणं साकल्येन स्थानम् । समुद्ररत्नाधारे 'रत्नपारायणं नाम्ना लङ्के'ति भट्टिः ।

रत्नमुख्य न० रत्नेषु मुख्यम् । हीरके । [रत्नयुक्ते त्रि०

रत्नवती स्त्री० रत्नानि सन्त्यस्याः मतुप् मस्य वः । पृथिव्याम्

रत्नसानु पु० रत्नानि सानावस्य । सुमेरुपर्व्वते ।

रत्नसू स्त्री० रत्नानि सूते सू-क्विप् । पृथिव्याम् ।

रत्नाकर पु० ६त० । समुद्रे रत्नोत्पत्तिस्थाने, मणिखनौ च ।

रत्नाचल पु० रत्ननिर्म्मितः अचलः । दानार्थं कल्पिते रत्ननिर्म्मिते पर्व्वते । [भूषणभेदे ।

रत्नाभरण न० रत्नघटितमाभरणम् शाक० । (जडाओ)

रत्नावली स्त्री० ६त० । रत्नसमूहे, तद्घटित हारे, अलङ्कारावलीभेदे च रत्नावलीमधिकृत्य कृतः ग्रन्थोऽण् आख्यायिकायां तस्य लुक् । श्रीहर्षकृते चतुरङ्कात्मके नाटिकाभेदे । [ङीप् ।

रत्नि पु०स्त्री० ऋ-कत्निच् । बद्धमुष्टिहस्तपरिमाणे । स्त्रीत्वे वा

रथ पु० रम्यतेऽनेन अत्र वा रम-क्थन् । स्वनामख्याते यानभेदे, देहे च 'आत्मानं रथिनं विद्धि शरीरं रथमेव चे'ति गीता । पादे, वेतसवृक्षे, तिनिसवृक्षे च ।

रथकड्या स्त्री० रथानां समूहः रथ+कड्यच् । रथसमूहे ।

रथका(का)र पु० रथं करोति कृ-अच्-अण् वा । रथनिर्म्माणकारके (सूत्रधार) वर्णसङ्करभेदे ।

रथकुटुम्बिन् पु० रथस्य कुटुम्बीव धारकत्वात् । सारथौ ।

रथगर्भक पु० रथस्य गर्भमिव स्वार्थे कन् । कर्णीरथे कम्पवाह्ययाने (पालकी) ।

रथगुप्ति स्त्री० रथस्य गुप्तिः शस्त्रवारणार्थं रक्षा रथपाराद् वतुस्थानम् । रथस्य शस्त्रानारणार्थे गुप्तस्थाने ।

रथचरण पु० रथस्य चरण इव गतिहेतुत्वात् । रथचक्रे तन्नामनामके चक्रवाकविहगे रथपादादयोऽप्यत्र ।
रथद्रु पु० रथनिर्माणाय द्रुः रथनामको वा द्रुः । तिनिशवृक्षे
रथन्तर त्रि० रथेन तरति तॄ-खच् मुम् च । रथेनतरि ।
'अभित्वा शूर' इत्यस्यामृचि गीते सामभेदे न० । [वृक्षभेदे
रथयात्रा स्त्री०रथस्य यात्रा । आषाढशुक्लद्वितीयायां कर्त्तव्ये
रथाङ्ग न० अङ्ग्यते गम्यतेऽनेन अगि-करणे घञ् ६त० । चक्रे रथाङ्गशब्दः वाचकत्वेनास्त्यस्य अच् । चक्रवाके पु० ।
रथाङ्गपाणि पु० रथाङ्गं चक्रं पाणौ यस्य । चक्रधरे विष्णौ
रथाभ्र पु० रथइवाभ्रियतेऽसौ आ+भृ-मूल० क । वेतसवृक्षे ।
रथाभ्रपुष्प पु०अभ्रमिव पुष्पमस्य रथनामकोऽभ्रपुष्पः कर्म०। वेतसवृक्षे । [रथेन युद्धकारके च ।
रथारोहिन् पु० रथमारोहति आ+रुह णिनि । रथिनि
रथिक पु० रथो युद्धसाधनाधारत्वेनास्त्यस्य ठन् । रथिनि । इर रथिरः । इन । रथिनः । इनि । रथी एतेऽप्यत्र ।
रथोपस्थ न० रथस्य उपस्थ इव । रथमध्ये ।
रथ्य पु० रथं वहति यत् । रथवाहके घोटके । रथस्येदं यत् । रथसम्बन्धिनि त्रि० रथस्य तद्गमनस्य योग्या शरणिः । प्रमुख-पथे, अभ्यन्तरमार्गे, रथानां समूहः यत् । रथसमूहे च स्त्री०
रद उत्खाते भ्वा०प०सक०सेट् । रदति अरादीत् अरदीत् ।
रद पु०रदति उत्खनति रद-अच् । दन्ते । भावे घञ् । उत्खनने
रदच्छद पु० रदान् छादयति छद-णिच्-घ ह्रस्वः । ओष्ठयोः रदनादिच्छदादयोऽप्यत्र ।
रदन पु० रद-ल्यु । दन्ते, भावे-ल्युट् । विदारणे । [हिंसा
रध हिंसने पाके च दि०पर०सक०वेट् । रध्यति अरन्धत् रधिता-
रन्ज रागे, (वर्णान्तराधाने) सक० आसक्तौ अक०भ्वा०उभ० अनिट् । रजति ते.अरङ्क्षीत् अरङ्क्त । घटा०रञ्जयति मृगमारणे तु रजयति ।
रन्ज रागे आसक्तौ दिवा०उभ०सक०अनिट् । . रज्यति रज्यते अराङ्क्षीत् अरङ्क्त । घटा० रञ्जयति । रजयति
रन्तिदेव पु० रम-संज्ञायां क्तिच् कर्म० । चन्द्रवंश्ये नृपभेदे कुक्कुरे च । [समये, इत्युक्तटः ।
रन्धन न०रध-पाके ल्युट् नुमागमः । पाके सूपकार ! रन्धन
रन्ध्र न० रध-क्विप् ६-मूल क कर्म० । छिद्रे, दूषणे, ज्योति-षोक्ते लग्नतोऽष्टमस्थाने च ।
रन्ध्रकण्ट पु०रन्ध्रे रन्ध्रे कण्टः वायुकोटस्य । जालवर्बुरवृक्षे
रन्ध्रवंश पु० रन्ध्रयुक्तो वंशः शाक० । (नलतावास) वंशभेदे ।
रप व्यक्तवाक्ये भ्वा०प०सक०सेट् । रपति अरापीत् अरपीत्
रफ गतौ हिंसे च भ्वा०प०सक०सेट् । रफति । अरफीत्-अरा-फीत् । इदित्त्वपक्षे । रम्फति अरम्फीत् ।
रब गतौ सक० प० शब्दे अक० आ० भ्वा० सेट् इदित् । रम्ब ति-ते अरम्बीत् अरम्बिष्ट ।
रभ औत्सुक्ये भ्वा०आ०अक०अनिट् । रभते अरब्ध ।
रभ शब्दे भ्वा०आ०अक०सेट् इदित् । रम्भते अरम्भिष्ट ।
रभस पु० रभ-असच् । वेगे,हर्षे,औत्सुक्ये,पौर्वापर्याविचारे च
रम क्रीडायां भ्वा०आ०अक०वा०सक०अनिट् । रमते विर-मति उपरमति अरंस्त उपारंसीत्। ण्यन्त वेट् । ए रामः
रम पु० रम-अच् । कान्ते अशोकवृक्षे कामदेवे च ।
रमठ न० रम-अठन् । हिङ्गुनि । स्वार्थेऽण् । अत्रैव न० ।
रमठध्वनि पु०रमठ इति शब्देन ध्वन्यते ध्वन-इन् । हिङ्गुनि
रमण पु०रमयति-रम-णिच् ल्यु। कामदेवे गर्द्दभे, वृषणे महा-रिष्टे (निम) पत्यौ, । 'रमण ! तावमनुयामीति कुमारः। जम्बुद्वीपान्तर्गते रम्यकनाम्नि वर्षे च । रम-भावे ल्युट् । सुरते । करणे ल्युट् । पटोलमूले, कन् । जघने च न० । रम्यतेऽनया ल्युट् ङीप् । नार्य्याम्, उत्तमनार्य्यां, बालाख्यवृक्षे च स्त्री० ।
रमणीय त्रि० रम्यतेऽत्र रम-आधारे-ल्युट् । सुन्दरे ।
रमल न० ज्योतिःशास्त्रभेदे ।
रमा स्त्री० रमयति रम-अच् । लक्ष्म्याम् ।
रमापति पु० ६त० । नारायणे रमाकान्तरमानाथादयोऽप्यत्र ।
रमाप्रिय न० ६त० । पद्मे । विष्णौ पु० ।
रम्भ पु० रभि-अच् । वेणौ, कपिभागुरजनकेऽसुरभेदे च । कदल्याम्, अप्सरोभेदे, वेश्यायां, गवां ध्वनौ, गौर्य्यां च स्त्री०।
रम्भातृतीया स्त्री० मार्गशीर्षे शुक्लतृतीयायाम्, उपचारात्, तत्र कर्त्तव्ये व्रतभेदे च ।
रम्य त्रि०रम्यतेऽत्र यत् । सुन्दरे, बलकरे च । चम्पके, बकवृक्षे, च पु० । पटोलमूले न० । संज्ञायां कन् । जम्बुद्वीपस्य नवसु वर्षेषु मध्ये दक्षिणेन सुमेरोस्तु श्वेतस्य चोत्तरेण च वायव्ये रम्यकं नामेत्युक्ते वर्षभेदे ।
रम्यपुष्प पु० रम्याणि पुष्पाण्यस्य । शाल्मलिवृक्षे ।
रम्या स्त्री० रम्यतेऽत्र यत् । स्थलपद्मिन्याम्, रात्रौ च ।
रय गतौ भ्वा०आ०सक० सेट् । रयते अरयिष्ट ।
रय पु० रय-अच् । वेगे, प्रवाहे च । [कम्पते, नेत्रलोम्नि च
रल्लक पु० रम-क्विप् लवोमे लक् ला-क कर्म० । मृगभेदे
रव गतौ भ्वा० आ०सक०सेट् इदित् । रम्बते अरम्बिष्ट ।
रव पु० रु-भावे अप् । शब्दे ।

**रवण** पु० रु-युच्। कोकिले, उष्ट्रे च। कांस्ये न०। शब्दकारके, तीक्ष्णे च त्रि०।
**रवि** पु० रु-इन्। सूर्य्ये, अर्कवृक्षे च।
**रविज** पु० रवेर्जायते जन-ड। शनौ, सावर्णिमनौ, वैवस्वते मनौ, सुग्रीवे, वानरे, यमे च यमुनायां स्त्री०। रवितनयादयोऽप्यत्र।
**रविनाथ** न०रविर्नाथः प्रकाशकत्वात् यस्य। पद्मे, वन्धूके च
**रविनेत्र** पु० रविर्नेत्रं यस्य। विष्णौ। रविलोचनादयोऽप्यत्र
**रविप्रिय** न० ६त०। रक्तकमले। करवीरे पु०।
**रविरत्न** न० रवेः प्रियं रत्नम्। माणिक्ये, ताम्रे च।
**रविलौह** न० रवेः प्रियं लौहं धातुः। ताम्रे।
**रश** स्वने सौ०पर०अक० सेट्। रशति। अराशीत् अरशीत्।
**रशना** स्त्री० रश-ल्यु। काञ्च्याम्, जिह्वायाञ्च।
**रश्मि** पु० अश-मि धातोरुट् रश-मि वा। किरणे, अश्वादि दामनि च पक्ष्मे न०।
**रस** स्वने भ्वा०प०सक० सेट्। रसति। अरासीत्-अरसीत्।
**रस** आस्वादे चु०उ०सक० सेट्। रसयति-ते अररसत्-त
**रस** पु०रस्यते रस-अच्। आस्वाद्ये, रसनेन्द्रियग्राह्ये माधुर्य्यादिगुणभेदे, देहस्थे भुक्तान्नादेः प्रथमपरिणामे, 'सम्यक् पक्वस्य भुक्तस्य सारोनिगदितोरस इत्युक्ते' धातुभेदे माधुर्य्यादिरसवति, गुडादौ, पुष्पस्य मधुनि, अलङ्कारोक्ते सञ्चारिव्यभिचारिरिउद्दीपकारिव्यङ्ग्ये रत्यादिस्थायिभावके शृङ्गारादौ रूपे, वीर्य्ये, माधुर्य्यादिगुणे, रागे, द्रवे, पारदे, जले च गन्धरसे पु० न०।
**रसकर्पूर** न० रसेन कर्पूरमिव। (रसकर्पूर) गन्धद्रव्यभेदे।
**रसकेशर** न० रसेन केशरमिव नागकेशरसुगन्धित्वात्। कर्पूरे
**रसगन्ध** पु०न० रसे गन्धोऽस्य। बोले गन्धरसे स्वार्थे कन् तत्रैव। [हिङ्गुले च।
**रसगर्भ** न० रसो गर्भे यस्य। पित्तलधातुद्रवजे रसाञ्जने,
**रसघ्न** पु० रसं पारदं हन्ति हन-टक्। टङ्कणे (सोहागा)
**रसज** न० रसात् भुक्तान्नसारात् प्रथमधातोर्जायते जन-ड। रुधिरे। रसात् इक्षुप्रभृतेः द्रवात् जायते जन-ड। गुडे, मद्यकीटे च पु०। रसभवादयोऽप्यत्र।
**रसज्ञा** स्त्री० रसं जानाति अनया ज्ञा-ड। जिह्वायाम् रसज्ञानसाधने जिह्वास्थानस्थेन्द्रिये।
**रसज्येष्ठ** पु०रसेषु ज्येष्ठः श्रेष्ठः। मधुररसे शृङ्गाररसे च।
**रसतेजस्** न० रसस्य भुक्तान्नसारस्य तेजः सारः। रुधिरे।
**रसदालिका** स्त्री० रसार्थं दल्यते दल-कर्मणि घञ् गौ० ङीष् कन्। पुण्ड्रेक्षौ (पुण्डि आख)।
**रसधातु** पु० रसाख्यो द्रवरूपो, वा धातुः। पारदे।
**रसधेनु** स्त्री० दानार्थं कल्पितायाम् इक्षुरसनिर्मितायां धेनौ।
**रसन** न० रस-ल्युट्। स्वादे ध्वनौ च करणे ल्युट् जिह्वायां 'पित्तेन दूने रसने सितापी'ति नैषध।
**रसना** स्त्री०रस्यतेऽनया। रस-करणे ल्युट् अजा० टाप्। जिह्वायां, रास्नायां, काञ्च्यां, रज्जौ च। [याम्।
**रसनेत्रिका** स्त्री०रसो नेत्रमिव अस्त्यस्या ठन्। मनःशिला-
**रसपाकज** पु० रसपाकेन जायते जन-ड। गुडे।
**रसफल** पु० रसो जलं फले यस्याः। नारिकेलवृक्षे।
**रसमाणिक्य** न० रसेन पारदेन माणिक्यमिव तत् पाकजत्वात् ।स्वनामख्याते पदार्थे।
**रसराज** पु०रसेषु रसोषधेषु राजेव श्रेष्ठत्वात्रसः इन्द्र इव राजते वा पारदे रसनाथादयोऽप्यत्र। [भस्य यः। पाकस्थाने।
**रसवती** स्त्री० रस आस्वाद्यद्रव्यमन्नादि अस्त्यस्याम् मतुप्
**रसशोधन** न० रसं पारदं द्रवीभूतं द्रव्यं स्वर्णादि वा शोधयति शुध-णिच्-ल्यु। टङ्कणे (सोहागा)।
**रसस्थान** न० रसस्य पारदस्य स्थानम्। हिङ्गुले। [व्याम्।
**रसा** स्त्री०पाकजः रसो माधुर्य्यादिरूपोऽस्त्यस्याः अच्। पृथि-
**रसाग्रज** न०रसस्य पित्तलधातुद्रवस्याग्रात् जायते जन-ड। रसाञ्जने।
**रसाञ्जन** न०रसजातं पित्तलधातुजमञ्जनम्। स्वनामख्याते 'रीत्यान्तु ध्मायमानायां तत्किट्टन्तु रसाञ्जनमि'त्युक्ते पदार्थे
**रसाढ्य** पु०रसेन मधुररसेनाढ्यः। आम्रातके। रसवति त्रि०।
**रसातल** न० रसायास्तलम्। पातालभेदे सप्तमे भूमेरधोभागे
**रसाधिक** पु० रसाय द्रवाय स्वर्णादिद्रावणाय अधिकः आदीयमानत्वात्। टङ्कणे। रसेनाधिका। काकोडुम्बरिकायां स्त्री०।
**रसान्तर** न०अन्योरसः मयूर०मि०। प्रकृतरसादन्यस्मिन्रसे
**रसाभास** पु० रस इव आभासते आ-भास-अच्। अलङ्कारोक्ते 'अनौचित्यप्रवृत्तत्वे आभासो रसभावयोरि'त्युक्ते पश्वादिपरनायकगतशृङ्गारादौ रसे। [अम्लवेतसे पु०।
**रसाम्ल** न० रसेनाम्लम्। वृक्षाम्ले, चुक्रे च (चुकपालङ्)
**रसायन** न० रसस्यायनमिव। तक्रे कथाम्, विषभेदे वैद्यकप्रसिद्धे औषधभेदे च गरुडे, विडङ्गे च पु०।
**रसायनफला** स्त्री० रसायनमौषधविशेष इव फलं व्याधिघातकं यस्याः। हरितक्याम्।
**रसायनश्रेष्ठ** पु० रसायनेषु औषधभेदेषु श्रेष्ठः। पारदे।

**रसायनी** स्त्री० रसायनं रसस्यानमस्त्यस्याः अच् गौ० ङीप्। गुडुच्याम् काकमाच्यां, महाकरञ्जे, गोरक्षदुग्धायाञ्च।

**रसाल** न० रसमालाति आ+ला-क। सिह्लके, गन्धरसे, शिखरिण्याम्, (प्रेयभेदे) रसनायां, दूर्व्वायां, विदार्य्यां, द्राक्षायाञ्च स्त्री०। रसां भूमिमालयति आ+ली-ड। आम्रे, 'रसालः सालः समदृश्यतामुने'ति नैषधम् इक्षौ, पनसे, गोधूमे, पुण्ड्रकेक्षौ च पु० [लिया) क्षुपभेदे।

**रसालिहा** स्त्री० रसां भूमिं लेढि स्पृशति लिह-क। (चाकु-

**रसाली** स्त्री० रसमालाति आ+ला-क गौरा०ङीष्। (पुडि आख) इक्षुभेदे। [अण्। पलाशीलतायाम्।

**रसाश्वसा** स्त्री० रसां भूमिमाश्वासयति दलैः आ-श्वस-णिच्

**रसास्वादिन्** पु० रसं पुष्परसमास्वदते आ+स्वद-णिनि। भ्रमरे, मधुरशृङ्गारादिरसास्वादके त्रि० स्त्रियां ङीप्।

**रसिक** पु० रसं वेत्ति अनुभवति ठन्। सारसपक्षिणि, अश्वे, गजे च। रसज्ञे, रसोऽस्त्यस्य ठन्। रसवति च त्रि०।

**रसित** न०पु० रस-आस्वादे-क्त। मेघादिशब्दे विहगादिशब्दे कर्त्तरि क्त। शब्दवति, कर्मणि-क्त। आस्वादिते च त्रि०।

**रसुन** पु०रस-उनन्। लशुने। ओनन् रसोनः। तत्रैव। स्वार्थे कन्। तत्रार्थे।

**रसेन्द्र** पु० रसः द्रवीभूतः इन्द्र इव श्रेष्ठत्वात्। पारदे।

**रसोत्तम** पु० रस उत्तमो यस्य। मुद्गे। [हिङ्गुले

**रसोद्भव** न० रसः पारदम् उद्भवत्यस्मात् उद्+भू-अच्।

**रसोपल** न०रसः पारदमिव उपलीयते उप+ली-ड शुभ्रत्वात् मौक्तिके।

**रस्य** न० रसाद्भुक्तान्नपरिणामादागतः यत्। रुधिरे। रस्यते आस्वाद्यते रस-यत्। आस्वाद्ये त्रि०। रस्याः, 'स्निग्धाः स्थिरा हृद्या' इति गीता पाठायां, रास्नायाञ्च स्त्री०।

**रंह** गतौ अ०चु०उभ०सक०सेट्। रंहयति-ते अररंहत्-त।

**रंहस्** न० रंह-असुन्। वेगे।

**रहि** गतौ भ्वा०प०सक०सेट् इदित्। रंहति अरंहीत् 'तदन्तर प्रतिपत्तौ रंहति संपरिष्वक्त इति शारीरकसूत्रम्।

**रह** त्यागे भ्वा० प०सक०सेट्। रहति अरहीत्।

**रह** त्यागे अद०चु०उभ०सक०सेट्। रहयति ते अररहत्-त।

**रहस्** न० रह-असुन्। निर्ज्जने, गोप्ये, याथार्थ्ये, रमणे च। निर्ज्जने अव्य०।

**रहस्य** त्रि०रहसि भवः यत्। गोप्ये,'रहस्यमस्याः स महदिति नैषधम्। निर्ज्जनभवे च। पाठायां, रास्नायाञ्च स्त्री०टाप्

**रहित** त्रि० रह-त्यागे कर्म्मणि क्त। वर्ज्जिते।

**रा** दाने ग्रहणे च अदा०पर०सक०अनिट्। राति अरासीत्।

**रा** स्त्री० रा-सम्प० क्विप्। काञ्चने, रभसे, दाने च।

**राका** स्त्री० रा-क। प्रतिपद्युक्तायां पूर्णमास्यां सम्पूर्णेन्दु तिथौ, नदीभेदे नवजातरजस्कायां नार्य्याञ्च।

**राक्षस** पु० रक्ष एव स्वार्थे अण् 'क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचना यतिवर्त्तन्ते' इति भाष्योक्तेः पुंस्त्वम्। स्वनामख्याते निकषात्मजे जातिभेदे। जातौ ङीप्। राक्षसजातिस्त्रियाम् स्त्री०। रक्षस इदम् अण्। राक्षसम्बन्धिनि त्रि०स्त्रियां ङीप्।'राक्षसी रात्रिरन्यते' त स्मृतिः। दंष्ट्रायां, चण्डिकायां चोरनासगन्धद्रव्ये च स्त्री०ङीप्

**राक्षसेन्द्र** पु०राक्षस इन्द्र इव श्रेष्ठत्वात्। विश्रवसः ज्येष्ठ पुत्रे निकषात्मजे रावणे। [लस्य रश्च। लाक्षायाम्।

**राक्षा** स्त्री० लक्ष्यतेऽनया लक्ष-कर्म्मणि-घञ् पृ० वृद्धिः।

**राख** शोषणे भूषणे निवारणे च सक० सामर्थ्ये अक०भ्वा०पर० सेट्। राखति अराखीत्। चङि न ह्रस्वः।

**राग** पु० रन्ज-भावे घञ् नि० नलोपकुत्वे। रञ्जने, वर्णने, प्रीतौ,अनुरागे, नृपे, चन्द्रे च। करणे घञ्। लोहितवर्णे तद्विशिष्टलाक्षादौ च 'तेन रक्तं रागादि'ति पाणिनिसूत्रम् आधारे घञ्। वसन्तादिनामभिः प्रसिद्धे स्वरविशेषे।

**रागचूर्ण** पु०रागस्य रतेश्चूर्ण इव। कामे। रागाय चूर्ण्यतेऽसौ चूर्ण-घञ्। खदिरे, लाक्षायां च। रागयुक्तचूर्णे पु०

**रागदालि** पु० दल्यतेऽसौ दल-णिच् इन् पृ० ह्रस्वः रागेण रक्ततया युक्तो दालिः। मसूरे। [स्त्री० ङीप्।

**रागपुष्प** पु० रागयुतं रक्तवर्णं पुष्पमस्य। बन्धूके। जवायां

**रागप्रसव** पु० रागयुक्तो रक्तवर्णः प्रसवोऽस्य। बन्धूके, रक्ताम्लाने च। [माणिक्ये। रक्तवर्णयुक्ते त्रि०

**रागयुज्** पु० रागेण रक्तवर्णेन युज्यते युज-कर्म्मणि क्विप्।

**रागसूत्र** न० रागयुतं सूत्रम्। पट्टसूत्रे।

**रागाङ्गी** स्त्री० रागयुक्तमङ्गं यस्याः ङीप्। मञ्जिष्ठायाम् इत०। रागाढ्यायाम् स्त्री०।

**रागिणी** स्त्री० रागोऽस्त्यस्याः इनि। गीत्यङ्ग स्वरभेदे। रागवति, अनुरक्ते, कामुके, रतियुक्ते च त्रि०। [ह्रस्वः

**राघ** शक्तौ भ्वा०आ०सक०सेट्। राघते अराघिष्ट। चङि न

**राघव** पु० रघोर्गोत्रापत्यम् अण्। रघोर्वंश्ये, तत्प्रधाने श्रीरामे च। [मृगविशेषलोमजाते वस्त्रभेदे।

**राङ्कव** न० रङ्कोरयं, विकारो वा तल्लोमजातत्वात् अण्।

**राज** दीप्तौ भ्वा०उभ०अक०सेट् फणादि०। राजति ते अराजीत् अराजिष्ट रेजतुः-रराजतुः। चङि न ह्रस्वः।

राजक न० राज्ञां समूहः कन् । नृपसमुदाये । राजैव कन् । नृपे पु० । राज-ण्वुल् । दीप्तिमति त्रि० ।

राजकल्प पु० ईषदसमाप्तो राजा राजन्+कल्पप् । राजतुल्ये

राजकदम्ब पु० कदम्बानां राजा राजद० पर० । कदम्बभेदे ।

राजकर्कटी स्त्री० राजते राज-अच् कर्म० । चीनाकर्कट्याम्

राजकशेरु पु० कशेरूणाम् राजा राजद० । भद्रमुस्तायाम् ।

राजकीय त्रि० राज्ञ इदम् छ कुक् च । राजसम्बन्धिकार्य्यादौ

राजकुमार पु० राज्ञः कुमारः । अप्राप्तवयस्के युवराज-कार्य्यानारूढे राजपुत्रे ।

राजकुष्माण्ड पु० राज्ञः कुष्माण्ड इव प्रियत्वात् । वार्त्ताकाम्

राजकोषातकी स्त्री० राजप्रिया कोषातकी । (घियाझिङ्गा) लताभेदे । [कन् । राजसर्षपे (राइसर्षा) ।

राजक्षवक पु० क्षवत्यनेन क्षु-अप् राजते राज-अच् कर्म०

राजखर्ज्जूरी स्त्री० राजप्रिया खर्ज्जूरी । खर्ज्जूरीभेदे ।

राजगिरि पु० राजाश्रयो गिरिः । मगधस्थे पर्व्वतभेदे ।

राजघ त्रि० राजानं हन्ति हन-क नि० राजहन्तरि, तीक्ष्णे च 'रराज नीरजनया स राजघ' इति नैषधम् ।

राजजम्बू स्त्री० राज्ञः जम्बूरिव । पिण्डखर्ज्जूरे राजते अच् कर्म० । महाजम्ब्वाम् ।

राजज(य)क्ष्मन् पु० राज्ञःचन्द्रस्य क्षयकारको ज(य)क्ष्मा । रोगभेदे 'राजज(य)क्ष्मेव रोगाणामि'ति माघः ।

राजतरु पु० तरूणां राजा राजद० नि० । कर्णिकारवृक्षे

राजताल पु० राजस्ताल इव प्रियः गुवाकवृक्षे । स्त्रीत्वमपि ङीप् । 'राजतालीवनध्वनिरि'ति रघुः । [स्निग्दन्तद्वये ।

राजदन्त पु० दन्तानां राजा पर नि० ऊर्द्ध्वपङ्क्तिस्थे मध्यम-

राजदेशीय पु० ईषदसमाप्तो राजा राजन्+देशीयर् । राज-तुल्ये राजकल्पे । [राजधत्तूरकोऽप्यत्र पु० ।

राजधुस्तूरक पु० धुस्तूराणां राजा राज० पर० कन् । दद्धत्तूरे

राजधर्म्म पु० राज्ञो धर्म्मः । राज्ञामवश्यकर्त्तव्ये प्रजापाल-नादौ कर्म्मणि । [ङीप् । राजावासे महानगर्य्याम् ।

राजधानी स्त्री० राजा धीयतेऽस्यां धा-आधारे ल्युट्

राजधान्य न० धान्येषु राजा पर० । (श्यामा) श्यामाकधान्ये

राजन् पु० राज-कनिन् । नृपे, चन्द्रे, शचौ, क्षत्रिये, यक्षे, इन्द्रे, च । पूर्व्वपदस्थः उत्तरपदस्थश्च श्रेष्ठ्याहृतपदार्थ-श्रेष्ठ वाचकः । यथा राजमाषः सृगराज इत्यादि ।

राजनीति स्त्री० राज्ञां नीतिः । राजधर्मे सामाद्युपाये, तत्प्रतिपादके-शास्त्रे च ।

राजन्य पु० राज्ञोऽपत्यम् यत्, राज-अन्य वा । क्षत्रिये राज-पुत्रे, अग्नौ, क्षीरिकावृक्षे च । [समूहे

राजन्यक न० राजन्यानां क्षत्रियाणां समूहः वुञ् । क्षत्रिय

राजवत् त्रि० प्रशस्तो राजाऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः । सुन्दरराजवति देशे । [स्त्री० ङीप् ।

राजपटोल पु० राजप्रियः पटोलः । पटोले । मधुरपटोल्यां

राजपट्ट पु० राज्ञः पट्ट इव । मणिभेदे ।

राजपथ पु० पथां राजा राजगमनयोग्यो वा पन्थाः अच् । 'धनूंषि दश विस्तारे श्रीमान् राजपथः कृतः । नृवाजि-रथनागानामसंवाधसुसञ्चर' इत्युक्ते राजमार्गे । [पलाण्डौ

राजपलाण्डु पु० पलाण्डूनां राजा श्रेष्ठत्वात् पर० । रक्तवर्ण-

राजपीलु पु० राजप्रियः पीलुः । महापीलुवृक्षे ।

राजपुत्र पु० राज्ञश्चन्द्रस्य, नृपस्य वा पुत्रः । बुधग्रहे, नृप-कुमारे वर्णसङ्करभेदे (रजपुत) 'वैश्यादम्बष्ठकन्यायां राजपुत्रस्य सम्भव' इति पराशरः ।

राजपुत्री स्त्री० राज्ञश्चन्द्रस्य पुत्रीव । कटुतुम्ब्याम् रेणुकायां नृपरीतौ, मालत्याञ्च । इत० । नृपकन्यायाम् ।

राजपुष्प पु० राजा चन्द्र इव शुभ्रत्वात् पुष्पमस्य । नागकेशर वृक्षे । करुणीवृक्षे स्त्री० ङीप् ।

राजफणिज्झक पु० राज-अच् कर्म० । नागरङ्गवृक्षे ।

राजफल न० राजप्रियं फलम् । पटोले । राजप्रियं फलमस्याः । जम्ब्वाम् स्त्री० टाप् ।

राजबदर न० राज्ञो बदरमिव प्रियत्वात् । रक्तामलके बद-राणां राजा राजद० प० । उत्तमकोले पु० ।

राजभद्रक पु० राज्ञो भद्रं यस्मात् कप् । कुष्ठे,(कुड) निम्बे, पारिभद्रवृक्षे च । [धर्मे राजत्वे ।

राजभूय न० राज्ञो भावः राजन्+भू-क्यप् । राज्ञोऽसाधारण

राजभोग्य न० राज्ञा भोक्तुं योग्यम् भुज-ण्यत् कुत्वम् । जातीकोषे, प्रियालवृक्षे पु० । नृपतेर्भोग्यवस्तुमात्रे त्रि०

राजमार्ग पु० राजयोग्यः मार्गः । राजपथे । [व्रीहिभेदे ।

राजमाष पु० माषेषु कलायेषु राजा श्रेष्ठत्वात् । (बरबटी)

राजमुद्ग पु० मुद्गेषु राजा प० नि० । (मुगानि) मुद्गभेदे ।

राजरङ्ग न० राजयोग्यं रङ्गम् । रजते ।

राजराज पु० राज्ञामपि राजा प्रभूतधनत्वात् टच् समा० । कुवेरे, सार्व्वभौमन्टपे, चन्द्रे च । [श्रेष्ठे, यतात्मनि नृपे च

राजर्षि पु० राजा ऋषिरिव श्रेष्ठत्वात् संयतत्वाच्च । राज-

राजवंश्य त्रि० राजवंशे भवः यत् । राजवंशोद्भवे । जातिभेदे पु०

राजवर्त्मन् न० राजयोग्यं वर्त्म । प्रायुक्तकचये राजपथे । इत० राज्ञः कर्त्तव्यकर्म्मणि च ।

राजवला स्त्री॰राज-अच् राजं बलं यस्याः ५ब॰। (गन्धभादाल) लताभेदे ।

राजवल्लभ पु॰६त॰ । प्रियाले, राजवदरे, राजाम्रे, द्रव्यगुण प्रतिपादके तन्नामविद्वत्कृते ग्रन्थभेदे च । राज्ञः प्रिये त्रि॰

राजवल्ली स्त्री॰ राजते राज-अच् राजा वल्ली कर्म॰स॰। (ऊच्छा) लताभेदे । [राजमात्रवति देशे ।

राजवत् त्रि॰ राजा राजमात्रं विद्यतेऽस्य मतुप् मस्य वः ।

राजवीजिन् त्रि॰ राजा वीजी कारणं यस्य । राजवंश्ये ।

राजवृक्ष पु॰ वृक्षाणां राजा पर नि॰ । आरग्वधे (सोन्दाल) राजप्रियौ वृक्षस्तत्फलवीजजातलड्डुकाया राजप्रिय त्वात् । प्रियाले ।

राजशण पु॰राज-अच् राजः शणः कर्म॰ । पट्टे (पाट) ।

राजशाक पु॰ शाकानां राजा पर॰ नि॰ । वास्तूकशाके ।

राजशृङ्ग न॰राज्ञां शृङ्गमिव ऊर्द्धस्थितत्वात् । राजचिह्नच्छत्रे

राजस त्रि॰ रजसा निर्म्मितः अण् । रजसोगुणात् जाते कर्मेन्द्रियादौ 'येनास्मिन् कर्मणा लोके ख्यातिमाप्नोति पुष्कलाम् । न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजस'मित्युक्त लक्षणे क्रियमाणे कर्मणि च । रजःप्रधानस्य अण् । रजः- प्रधाने, सर्व्वेषां वस्तूनां त्रिगुणात्मकत्वेऽपि 'भूयस्त्वात्तद् व्यपदेश, इत्युक्तेः क्वचित् तत्प्रधानत्वेन व्यपदेशः ।

राजसभा न॰ स्त्री॰ राज्ञां नृपाणां सभा । नृपसमाजे ।

राजसर्षप पु॰सर्षपाणां राजा श्रेष्ठत्वात्पर॰। (राइसर्षा)सर्षप भेदे । [यज्ञभेदे ।

राजसूय पु॰ राज्ञा सूयते सू-क्यप् । राजमात्रकर्त्तव्ये

राजस्व न॰ राज्ञे देयं स्वं कररूपम् धनम् । राजदेये करे ६त॰ । राजधने ।

राजस्वर्ण पु॰ स्वर्णानां धुस्तूराणां राजा पर॰ । वृहद्धुस्तूरे

राजहंस पु॰हंसानां राजा श्रेष्ठत्वात्पर॰। रक्तवर्णचञ्चुचरणयुक्ते श्वेतवर्णे हंसभेदे,कलहंसे च । राजा हंस इव सारग्रहणात् नृपश्रेष्ठे । [तगरपुष्पे

राजहर्षण न॰ राज्ञः नृपान् हर्षयति हृष-णिच्-ल्यु ।

राजातन पु॰ राजार्थमातनोति फलवीजम् आ+तन-अच् । चीरञ्जीतिख्यातवीजहेतुफलवति पियाले ।

राजादन न॰ राज्ञा अद्यते तत्फलवीजजातलड्डुका अद- कर्मणि ल्युट् । प्रियालवृक्षे यस्य फलवीजं (चिरञ्जि) तेन हि लड्डुकां कृत्वा राज्ञा भुज्यते । क्षीरिकायां (क्षीरइ) किंशुके च । क्षीरिण्यां स्त्री॰ ङीप् ।

राजाम्र पु॰ आम्राणां राजा श्रेष्ठत्वात् पर नि॰। आम्रभेदे

राजाम्ल पु॰ अम्लानां राजा श्रेष्ठत्वात् पर॰नि॰। अम्लवेतसे

राजार्क पु॰ अर्काणां राजा श्रेष्ठत्वात् पर॰नि॰ । श्वेतार्क वृक्षे। (सादा आकन्द) । [योग्ये त्रि॰। जम्ब्वां स्त्री॰

राजार्ह न॰ राजानमर्हति अर्ह-अण् । अगुरुचन्दने राज-

राजालावु स्त्री॰राजते राजा अलावूः कर्म॰। मिष्टालाब्वाम् ।

राजावर्त्त पु॰ राजानमावर्त्तयति अनुकूलयति आ-वृत-णिच् अण् । उपरत्नभेदे ।

राजि(जी) स्त्री॰ राज-इन् वा ङीप् । श्रेण्याम् पङ्क्तौ, रेखायाञ्च । स्वार्थे कन् । रेखायाम् । राजते राज- ण्वुल् । राजसर्षपे स्त्री॰ ।

राजिकाफल पु॰ राजिकाया इव फलमस्य । श्वेतसर्षपे ।

राजि(जी)फला स्त्री॰ राजिभूतानि श्रेणिभूतानि फलानि यस्याः । चीनाकर्कट्याम् ।

राजिल पु॰ राज-इलच् । डुण्डुभसर्पे (ढोड़ासाप)

राजीव न॰राजी दलराजी अस्त्यस्य व। पद्मे 'राजीवराजीवश लोलेति माघः । हरिणभेदे, मत्स्यभेदे, राजीवसिंह तुण्डांश्चेति मनुः । गजे, सारसपक्षिणि च पु॰ ।

राजेन्द्र पु॰ राज्ञां इन्द्र इव श्रेष्ठत्वात् । 'चतुर्योजनपर्य्यन्तमधि कारी नृपो भवेत् । यो राजा तच्छतगुणः सएव मण्डले- श्वरः । तस्माद्दशगुणो राजा राजेन्द्र'इत्युक्ताधिकारवति भूपतिभेदे ।

राज्ञी स्त्री॰राज्ञः पत्नी ङीप् स्वयं वा राजते राज-कनिन् ङीप् वा । (राणी) राजपत्न्याम् स्वयं राजकर्मकर्त्र्याञ्च ।

राज्य न॰ राज्ञो भावः कर्म वा राजन्+यत् । राज- कर्म्मणि, राजभावे च । [प्रजापालनादौ ।

राज्यधुरा स्त्री॰ ६त॰ अच् समा॰ । राज्यभारे तत्कर्त्तव्ये

राज्याङ्ग न॰६त॰। स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलप्रकृति- रूपेषु अष्टसु राज्यस्योपायेषु ।

राटि पु॰ रट-इण् । (शराल) विहगे, युद्धे स्त्री॰ वा ङीप् । पृ॰ टस्य डत्वम् । राड़िरप्युक्तार्थे ।

राढ़ पु॰ रह-घञ् पृ॰ ढत्वम् । देशभेदे(राढ़)स्वार्थे कन् तत्रैव

राढ़ा स्त्री॰ रह-घञ् ढत्वम् । पुरीभेदे गौड़ं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरीति प्रबोधचन्द्रोदयः ।

राढ़ीय त्रि॰ राढो निवासोऽस्य वृद्धाच्छ इति छ । राढदेशोद्भवे

रात्रि(त्री) स्त्री॰ रा-त्रिप् वा ङीप् । रजन्यां सप्तदेशस्य- सूर्य्यमण्डलस्य अदर्शनयोग्ये काले, हरिद्रायाञ्च ।

रात्रिकर पु॰ रात्रिं करोति कृ-अच्, रात्रौ करः किरणो ऽस्य वा । चन्द्रे, कर्पूरे च ।

रात्रि(त्रि)चर पु० रात्रौ चरति चर-अच् वा समु । राक्षसे, तज्जातिस्त्रियां स्त्री० ङीप् ।

रात्रिपुष्प न० रात्रौ पुष्पति पुष्प-अच् ७त० । उत्पले ।

रात्रिमणि पु० रात्रौ मणिरिव दीप्तिमत्त्वात् । चन्द्रे ।

रात्रिवासस् न० रात्रेर्वास इवाच्छादकम् । अन्धकारे । रात्रौ परिधेयं वासः शाक० । रात्रौ परिधेये वस्त्रे ।

रात्रिविगम पु०६त०। रजन्यवसाने तदुपलक्षिते प्रभातकाले च

रात्रिहास पु० रात्रेर्हास इव शुभ्रत्वात् । श्वेतोत्पले ।

रात्र्यन्ध त्रि० रात्रावन्धः दृष्टिक्षययुक्तः । निशादृष्टिशून्ये काकादौ । रात्रौ रोगकृतदृष्टिशून्ये (रातकाणा) च ।

राद्ध त्रि० राध-कर्त्तरि कर्मणि वा क्त । सिद्धे, पक्वे च ।

राद्धान्त पु० राद्धः सिद्धः अन्तो निर्णयो यस्मात् ५ब० । सिद्धान्ते संशय्य वादिदर्शितपक्षनिराकरणपूर्व्वकयथार्थपक्ष प्रतिपादके वाक्ये ।

राध सिद्धौ अक० निष्पादने, पाके च सक० स्वादि० दिवा० च पर० अनिट् । राध्नोति राध्यति अरात्सीत् अराद्ध ।

राध पु० राधा विशाखा तद्युक्ता पौर्णमासी अण् ङीप् राधी सा यत्र मासे पुनरण् । चान्द्रे वशाखे मासि । तत्पूर्णि-मायां स्त्री०ङीप् । [णिच् । पूजने स्त्री० टाप् ।

राधन न० राध-ल्युट् । साधने, प्राप्तौ, तोषे च । राध-णिच्-

राधा स्त्री०राध-अच् । विशाखानक्षत्रे रिरंसया रमणोदेहत्वेना विर्भूते गोलोकस्थे परमेश्वरार्द्धाङ्गस्वरूपे शक्तिभेदे, तत्रैव श्रीदामशापात् वृन्दावने जातायां वृषभानुसुतायां प्रधान गोपिकायाम्, कर्णस्य पालयित्र्यां मातरि च। [दयोपेत ।

राधाकान्त पु० राधायाः कान्तः । श्रीकृष्णे राधावल्लभा-

राधातनय पु० राधायास्तनयः । कर्णे स हि कन्यावस्थायां सूर्यात् कुन्तीगर्भजातस्तया च त्यक्तः राधया सूतपत्न्या पालित इति भारतम् । [तत्वात् ढक् । कर्णे ।

राधेय पु० राधाया अपत्यम् पुत्रत्वेन परिग्रहणेन तत्पालि

राम पु० रम-कर्त्तरि घञ् ण वा । परशुरामे दशरथज्येष्ठपुत्रे श्रीरामे, बलरामे च । मनोहरे, शुभे च त्रि० वास्तूके, कुष्ठे (कुड़) तमालपत्रे न० । [रक्तामम्लाते तृणभेदे च ।

रामकर्पूरक पु० रामं मनोहरं कर्पूरमिव कन् । मौक्तिके,

रामगिरि पु० रामाश्रितः गिरिः । चित्रकूटपर्व्वते स हि रामेण वनवासगमनकाले प्रथममाश्रितः ।

रामचन्द्र पु० रामश्चन्द्र इवाह्लादकत्वात् । दशरथज्येष्ठपुत्रे श्रीरामे । [मदनवृक्षे (मयनागाछ)

रामकर्हनक पु० राममभिरामं कर्हयति कृद-णिच्-ण्वुल् ।

रामजननी स्त्री० ६त० । वसुदेवपत्न्यां रोहिण्यां, जमदग्नि-पत्न्यां रेणुकायां, दशरथपत्न्यां कौशल्यायाञ्च ।

रामठ न० रमयति रम-णिच् ल्यु-पृ० वृद्धिः । गिरिनिम्बे, तिन्दुके च (तेंद) ।

रामणीयक न०रमणीयस्य भावः रमणीयमेव वा रमणीय+ वुञ् । रमणीयत्वे 'मणिहारावलिरामणीयकमिति नैष-धम् रमणीये च । [६त० । सीतायां, रेवत्याञ्च

रामतरुणी स्त्री० रामा अभिरामा तरुणीव । (सेओती)पुष्पे

रामदूत पु० रामस्य दूतः वार्त्ताहरः । हनूमति, स हि रामवार्त्तां लङ्कायां सीताया आजहार ।

रामदूती स्त्री० रामा अभिरामा दूतीव गन्धद्वारा प्रचारा-त् । तुलसीभेदे । (रामतुलसी)

रामनवमी स्त्री० रामस्य जन्माधारो नवमी । चैत्रशुक्ल-नवम्याम् । 'चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरि' रित्यगस्त्यसंहिता ।

रामपूग पु० रामः अभिरामः पूगः । गुवाकभेदे ।

रामभद्र पु० राम एव भद्रः मङ्गलदायकत्वात् । श्रीरामे 'रामेति रामचन्द्रेति रामभद्रेति वा स्मरन्निति' पुराणम्

रामलवण न० कर्म० । शाम्भरिलवणे ।

रामवल्लभ न० रामस्य वल्लभं प्रियम् । भूर्ज्जपत्रे तद्धि रामेण वनवासाश्रमे प्रियतया धृतम् ।

रामशर पु० कर्म० । शरवृक्षभेदे-स हि काण्डद्वारा बाण-हेतुत्वात् मनोहरः ।

रामसख पु० ६त० टच् । सुग्रीवे वानरराजे ।

रामा स्त्री०रम-णिच्कर्त्तरि घञ्। गीतादिकलाभिज्ञायां नार्य्यां नारीमात्रे,नद्याम् हिङ्गुनि,हिङ्गुले, श्वेतकण्टकार्य्यां, स्टृ-कचायां, अशोके, गोरोचनायां, वालायां, गैरिके च।

रामायण न० । रामस्यायनं चरितमधिकृत्य कृतोग्रन्थोऽण् । रामचरितप्रतिपादके वाल्मीकिकृते महाकाव्यभेदे ।

रामालिङ्गनकाम पु० रामाणाम् स्त्रीणामालिङ्गनस्य कामोऽत्र । रक्ताम्लाने । [दग्धभेदे ।

राम्भ पु० रम्भोर्वेणुस्तस्य विकारोऽण् । व्रतभेदे-धार्य्ये-वंशभवे

राल पु० रा-अलच् । शालवृक्षनिर्यासे (धुना) ।

रालकार्य्य पु० रालः कार्य्यो यस्य । शालवृक्षे ।

राव पु० रु-घञ् । शब्दे ।

रावण पु० रवणस्यापत्यम् शिवा० अण् रावयति शत्रून् णिच्-ल्यु वा, लङ्काधिपतौ राक्षसे ।

रास शब्दे भ्वा०आ०सक०सेट् । रासते अरासिष्ट चकि न ह्रुस्वः

**रावणगङ्गा** स्त्री॰ रावणनिर्म्मिता गङ्गा नदी । सिंहलदेशस्थे नदीभेदे । [पुत्ते ।

**रावणारि** पु॰ ६त॰। श्रीरामे रावणान्तकादयोऽप्यत्र । [ज्येष्ठ-

**रावणि** पु॰ रावणस्यापत्यम् अत इञ् । मेघनादाख्ये रावण

**राश** शब्दे भ्वा॰आ॰अक॰सेट् । राशते अराशिष्ट ऋदित् न ह्रस्वः

**राशि** पु॰ अश्नुते व्याप्नोति अश्-इञ् धातोरुडागमश्च । धान्यादीनां पुञ्जे, ज्योतिश्चक्रस्य द्वादशांशे मेषादौ, ‘इष्टे राशिप्रसिद्धये’ इति लीलावतीप्रसिद्धे व्यक्ताव्यक्तगणभेदे ।

**राशिचक्र** न॰ राशिघटितं चक्रं वृत्तम् । मेषादिद्वादशराशियुक्ते गोलाकारे वायुवशेन पूर्व्वतः पश्चात् अनिशं भ्रमन्यमाणे ज्योतिर्मये ‘सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुग’मित्युक्ते ज्योतिश्चक्रे ।

**राशिभोग** पु॰ राशीनां स्वस्वगत्या यद्भोगः भुज-घञ् कुत्वम् । रव्यादीनां स्वस्वगत्यनुसारेण राशिषु गतिभेदे ।

**राशी(शि)कृत** पुव अराशिः राशिः कृतः राशि+अभूततद्भावे च्वि, तदर्थे समासो वा (ढेरी) पुञ्जीकृते एकत्रस्थीकृते ।

**राष्ट्र** न॰ राज-ष्ट्रन् । जनपदे ‘गौडं राष्ट्रमनुत्तममिति, प्रबोधचन्द्रोदयः । उपद्रवे च । [कारिकायाम् ।

**राष्ट्रिका** स्त्री॰ राज-ष्ट्रन् षित्त्वात् ङीष् स्वार्थे कन् । कण्टक-

**राष्ट्रिय** पु॰ राष्ट्रे भवः घ । नाट्योक्तौ राजश्याले । छ तत्रार्थे । उभावपि राष्ट्रभवे त्रि॰ ।

**रास** पु॰ रस-घञ् रास-घञ् वा । शब्दे, ध्वनौ, धवले गृहीतहस्तानामन्योन्यम् द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदे, कोलाहले च ।

**रासभ** पु॰ रास-अभच् । गर्द्दभे ।

**रासभवन्दिनी** स्त्री॰ रासभस्य वन्दिनीव । मल्लिकायाम् ।

**रासमण्डल** न॰ रासार्थं गृहीतहस्तानामन्योन्यम् द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदेन मण्डलं मण्डलाकारेण भ्रमणं यत्र । रासक्रीडाधारस्थाने, श्रीकृष्णस्य तदुत्सवाङ्गे मण्डपभेदे च ।

**रासेश्वरी** स्त्री॰ ६त॰ । राधिकायाम् । [आमरुल)

**रास्ना** स्त्री॰ रस-नक् । स्वनामख्यातायां लतायाम् (कांटा

**राहु** पु॰ रह-उण् । त्यागे, त्यक्तरि, ज्योतिश्शास्त्रे सूर्यकिरणसंपर्काभावेन जायमानपृथिवीच्छायाधिष्ठातरि ग्रहभेदे, सिंहिकासुते दानवे च ।

**राहुच्छत्र** न॰ राहोर्ग्रहस्य छत्रमिव । आर्द्रके ।

**राहुदर्शन** न॰ राहोर्दर्शनं यत्र । चन्द्रसूर्य्ययोरुपरागरूपे ग्रहणे ‘स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने’ इति स्मृतिः तेन उपरक्तएव चन्द्रे सूर्य्ये च तस्य दृश्यता नान्यदा

**राहुमूर्द्धभिद्** पु॰ राहोः सिंहिकासुतस्य मूर्द्धानं भिनत्ति भिद्-क्विप् । विष्णौ अमृतपानकाले देवपङ्क्तौ देवरूपेण स्थित्वाऽमृतं पिबन्तं दृष्ट्वा विष्णुस्तस्य शिरश्चिच्छेदेति पुरा॰

**राहुरत्न** न॰ राहोः प्रियं रत्नम् । गोमेदमणौ ।

**राहुस्पर्श** पु॰ राहोः स्पर्शः स्वाधिष्ठितभूच्छायाद्वारा यत्र । चन्द्रसूर्य्ययोः उपरागरूपे ग्रहणे ।

**राहूच्छिष्ट** पु॰ ६त॰ । लशुने ।

**राहूत्सृष्ट** पु॰ ६त॰ । लशुने ।

**रि** गतौ तु॰पर॰सक॰अनिट् । रियति अरैषीत् । [त्रि॰

**रिक्त** त्रि॰न॰ रिच-क्त । शून्ये, वने, निरर्थके च । स्वार्थे कन् । तत्रैव

**रिक्ता** स्त्री॰ रिच-क्त । उभयपक्षयोश्चतुर्थीनवमीचतुर्द्दशीतिथिषु

**रिक्तभाण्ड** न॰ रिक्तं भाण्डम् । तैलादिशून्ये भाण्डे ।

**रिक्तहस्त** त्रि॰ रिक्तो धनादिशून्यो हस्तो यस्य । निर्द्धने, भूरिदानादिना व्ययितधने च ।

**रिक्थ** न॰ रिच-थक् । धने । मिताक्षराद्युक्ते अप्रतिबन्धे दाये च ‘स्वामी रिक्थक्रयसंविभागेत्यादि स्मृतिः ।

**रिक्थहारिन्** त्रि॰ रिक्थं दायं हरति गृह्णाति । दायग्राहिणि पुत्रादौ । अण् । रिक्थग्राहोऽप्यत्र ।

**रिक्थिन्** त्रि॰ रिक्थं ग्राह्यत्वेनास्त्यस्य इनि । दायहारिणि दायादे ‘उभयोरप्यसौ रिक्थी’ति स्मृतिः ।

**रिख** सर्पणे भ्वा॰पर॰सक॰सेट् इदित् । रिङ्खति अरिङ्खीत् । अनिदिदप्ययमित्येके रेखति अरेखीत् ।

**रिग** गतौ भ्वा॰पर॰सक॰सेट् इदित् । रिङ्गति अरिङ्गीत्

**रिङ्गण** न॰ रिगि-ल्युट् । स्खलने । रिखि ल्युट् । रिङ्खणमप्यत्र

**रिच** सम्पर्के वियोगे च वा चु॰उभ॰पक्षे भ्वा॰पर॰सक॰सेट् । रेचयति ते रेचति । अरीरिचत् त अरेचीत् ।

**रिच** विरेके (अतिशय पुरीषोत्सर्गे) रुधा॰उभ॰सक॰ अनिट् । रिणक्ति रिङ्क्ते अरिचत् अरैक्षीत् अरिक्त ।

**रिज** भर्जने भ्वा॰आ॰सक॰सेट् । रेजते अरेजिष्ट ।

**रिपु** पु॰ रप-उ-पृ॰ । शत्रौ, चोरनामगन्धद्रव्ये, ज्योतिषोक्ते लग्नापेक्षया षष्ठस्थाने च । [भेदे प्रसुवातके त्रि॰ ।

**रिपुघातिनी** स्त्री॰ रिपुं हन्ति हन-णिनि । (कुमुद) लता-

**रिपुञ्जय** त्रि॰ रिपुं जयति जि-खच् । शत्रुजयिनि, नृपभेदे पु॰

**रिन्फ** वधे तु॰प॰सक॰सेट् । रिम्फति अरिम्फीत् ।

**रिम्फ** पु॰ रिफ-अच् पृ॰। लग्नापेक्षया द्वादशे स्थाने ।

**रिफ** कत्थने भ्वा॰पर॰सक॰सेट् । रेफति अरेफीत् ।

**रिफ** हिंसायां निन्दायां योधने च कथा॰ दानायाम् सक॰तु॰ पर॰सेट् । रिफति अरेफीत् ।

**रिव** गत्यां भ्वा॰पर॰सक॰सेट् इदित् । रिम्वति अरिम्वीत् ।

एकादशसु शिवमूर्त्तिभेदेषु ।

**रुद्रज** पु० रुद्रात् जायते जन-ड । शिववीर्य्यजाते पारदे ।

**रुद्रजटा** स्त्री० रुद्रस्य जटेव पिङ्गलात् जटिलत्वात् । स्वनामख्याते लताभेदे ।

**रुद्रपत्नी** स्त्री० ६त० । दुर्गायाम् अतसाञ्च (मसिना)

**रुद्रप्रिया** स्त्री० ६त० हरितक्याम् दुर्गायाञ्च ।

**रुद्रविंशति** स्त्री० रुद्रस्वामिका विंशतिः । प्रभवादिषु षष्टिवत्सरेषु अन्तिमेषु विंशतिवर्षेषु ।

**रुद्रसावर्णि** पु० चतुर्द्दशसु मनुषु मध्ये, द्वादशे मनौ ।

**रुद्राक्रीड़** न० रुद्रस्याक्रीड़ा यत्र । श्मशाने ।

**रुद्राक्ष** पु० रुद्रस्याक्षीव मक्षु । स्वनामख्याते वृक्षे ।

**रुद्राणी** स्त्री० रुद्रस्य पत्नी रुद्र+ङीप् आनुक् च । शिवपत्न्याम्

**रुद्रारि** पु० रुद्रः अरिर्यस्य । कामदेवे ।

**रुद्रावास** पु० ६त० । कैलासे, काश्याम्. श्मशाने च ।

**रुध** कामे दि०आ०सक०अनिट् प्रायेणानुपूर्व्वः । अनुरुध्यते अन्वरुद्ध । [अरौत्सीत्

**रुध** आवरणे, रु०उभ०सक०अनिट् । रुणद्धि रुन्धे अरुधत्

**रुधिर** न० रुध-किरच् । शरीरस्थे रसपाकजन्ये धातुभेदे । मङ्गलग्रहे कुङ्कुमे रक्तवर्णे च पु० तद्वर्णवति त्रि० ।

**रुप** आकुलीकरणे दि०पर०सक० सेट् । रुप्यति-अरुपत् । अरोपीत् । [भेदे च

**रुमा** स्त्री० रु-मक् । सुग्रीववानरभार्य्यायाम् लवणस्थाने देश-

**रुरु** पु० रु-क्रु । मृगभेदे । [रु-वुन् । रुवूकोप्यत्र

**रुवु** पु० रु-क्रु । एरण्डवृक्षे । कन् । तत्र, रक्तैरण्डे च पु० ।

**रुश** हिंसायां तु०पर०सक०अनिट् । रुशति अरुक्षत् ।

**रुष** वधे भ्वा०पर०सक०सेट् । रोषति अरोषीत् ।

**रुष** क्रोधे दि०पर०अक०सेट् । रुष्यति अरुषत् अरोषीत् ।

**रुष** क्रोधे चु०उभ०अक०सेट् । रोषयति ते अरूरुषत् त ।

**रुष(षा)** स्त्री० रुष-संप०क्विप् वा टाप् । क्रोधे ।

**रुषित** त्रि० रुष-क्त वा इट् । क्रोधयुक्ते इडभावपक्षे रुष्टोप्यत्र

**रुह** उद्भवे भ्वा०पर०अक०अनिट् । रोहति अरुक्षत् । ज्वला० ।

**रुह** त्रि० रुह-क । जाते । दूर्व्वायां स्त्री० उत्तरपदस्थः तत्प्रादुर्भूते त्रि० यथा भूरुहः वारिरुहम् ।

**रूक्ष** पारुष्ये कठोरतायाम् निःस्नेहे च । चु० आ० अक० सेट् । रूक्षयति ते अरुरूक्षत् त । [द्रवन्तीवृक्षे स्त्री० ।

**रूक्ष** त्रि० रूक्ष-अच् । अचिक्कणे, स्नेहशून्ये च । वृक्षे पु० ।

**रूक्षगन्ध** पु० रूक्षो गन्धो यस्य । गुग्गुलौ ।

**रूक्षदर्भ** पु० कर्म० । हरिदर्भे कुशभेदे ।

**रूक्षपत्र** पु० रूक्षं पत्रमस्य । शाखोटवृक्षे ।

**रूक्षप्रिय** पु० रूक्षं प्रियं यस्य । वृषभौषधे ।

**रूढ** त्रि० रुह-क्त । जाते, प्रसिद्धे च 'रूढिरस्यास्ति अच् । प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थबोधके शब्दे यथा । घटः गौरित्यादि । [मिश्र शब्देन समुदायशक्त्यार्थस्यबोधने च

**रूढि** स्त्री० रुह-क्तिन् । जन्मनि, प्रसिद्धौ, प्रकृतिप्रत्ययार्थमन-

**रूप** रूपान्वितकरणे अक० चुरा० उभ०सक० सेट् । रूपयति ते अरुरूपत् त ।

**रूप** न० रूप-क भावे अच् वा । स्वभावे, सौन्दर्य्ये, पशौ, नाम्नि, शब्दे, ग्रन्थावृत्तौ, दृश्यकाव्ये नाटकादौ, श्लोके, शब्दधातूनां विभक्तियोगेन निष्पन्नशब्दे, शुक्लादिवर्णे च तद्वति त्रि० । उत्तरपदस्थः सदृशार्थे त्रि० यथा पितृरूपस्तनयः मातृरूपा कन्या । एकसंख्यान्विते न० 'रूपं भजेत् स्यात् परिपूर्त्तिकाल' इति लीलावती । 'एकाव्यक्तं शोधयेदन्यपक्षात् रूपाण्यन्यस्येतरस्माच्च पक्षादिति' वीजगणितोक्ते अव्यक्तराशिसहचरितव्यक्तसंख्यान्विते च ।

**रूपक** न० रूपयत्यत्र रूप-अच् कन् । अभिनयप्रदर्शके दृश्यकाव्यप्रभेदे, रूपमस्त्यस्य वुन् । मूर्त्ते त्रि० रूप+स्वार्थे कन् । शुक्लादिवर्णे, आकारे च रूपकं रूपितारोपादित्यलङ्कारोक्ते अर्थालङ्कारभेदे, शुक्लवयपरिमाणे, रजते च ।

**रूपधारिन्** त्रि० रूपं धारयति धारि-णिनि । रूपवति, सौन्दर्य्यान्विते, वेशान्तरग्राहिणि नटे च ।

**रूपवत्** त्रि० रूप+मतुप् मस्य वः । शुभ्रादिरूपविशिष्टे, सौन्दर्य्ययुक्ते, आकारविशिष्टे च । [वेश्यायाम् ।

**रूपाजीवा** स्त्री० रूपं सौन्दर्य्यमाजीवति आ+जीव-अच् ।

**रूपिका** स्त्री० रूपमस्त्यस्य ठन् । श्वेतार्कवृक्षे ।

**रूप्य** न० रूपाय आहन्यते स्वर्णादि यत् । अलङ्कारादिनिर्म्माणाय आहन्यमाने स्वर्णे रजते च स्वार्थे यत् । रजतमात्रे । सुन्दरे त्रि० । [रूपत् त ।

**रूप्याध्यक्ष** पु० रूप्येषु अध्यक्षः । कोषाध्यक्षे । [ति अरु-

**रूष** धूल्यादिनामिश्रीकरणे अद०चु०उभ०अक०सेट् । रूषयति

**रूषक** पु० रूष-ण्वुल् । वासके वृक्षे ।

**रूषित** त्रि० रूष-क्त । धूल्यादिभिर्म्मिश्रिते, अचिक्कणीकृते च

**रे** अव्य० रा-के डिच्च । नीचादेः सम्बोधने । [ह्रस्वः

**रेक** शङ्कायां भ्वा०आ०स०सेट् । रेकते अरेकिष्ट । चङि न

**रेक** पु० रिच-घञ् । विरेचने । रेक-अच् । शङ्कायां, नीचे, भेके च । रेक-अ । सन्देहे स्त्री० टाप् ।

**रेखा** स्त्री० लिख-अच् लस्य रः । अल्पे, छद्मे, आभोगे,

विन्दुयुक्तकृते दण्डाकारेण चिह्नभेदे, पङ्क्तौ च ।

रेचक न० रेचयति रिच-णिच्-ण्वुल् । कट्फले, यवक्षारे, जय पाले, तिलकवृक्षे च । पुरीषनिःसारणकारके त्रि० ।

रेचन न० रिच्-ल्युट् । मलभेदनेन तन्निःसारणे ।

रेचनक पु० रिच्यतेऽनेन ल्युट् संज्ञायां कन् । कम्पिल्लवृक्षे । कनभावे वा ङीप् । रेचनी रेचनाप्यत्र स्त्री० ।

रेची स्त्री० रेचयति अच् गौ० ङीष् । कम्पिल्लवृक्षे, अङ्कोठे च ।

रेज दीप्तौ भ्वा० आत्म० अक० सेट् । रेजते अरेजिष्ट । चङि न ह्रस्वः । [अरेरेजिष्ट । चङि न ह्रस्वः

रेट याचने वाचि च द्वि० भ्वा० उभ०सेट् । रेटति ते अरेटीत्

रेणु पु०स्त्री० रि-नु । परागे, धूलौ, पांशौ च । पर्पटे पु० ।

रेणुका स्त्री० रेणुना कायति कै-क । सरिचाख्ये सुगन्धि-द्रव्ये, जमदग्निपत्न्यां परशुरामस्य मातरि च ।

रेणुकासुत पु०६त० । परशुरामे रेणुकात्मजादयोऽप्यत्र ।

रेणुरूषित पु० रेणुभिः रूषितः । गर्द्दभे । धूलिधूसरे त्रि०

रेणुसार पु० रेणुरिव सारोऽस्य । कर्पूरे । स्वार्थे कन् । तत्रैव

रेतस् न० री-असुन् तुट् च । पुंसो रक्तादिपरिपाकजन्ये देहस्थे मज्जोत्पत्तिहेतुके धातौ शुक्रे, शिववीर्ये पारदे च ।

रेप शब्दे अक० गतौ सक० भ्वा० आत्म० सेट् । रेपते अरेपिष्ट चङि न ह्रस्वः ।

रेप त्रि० रेप-अच् । निन्दिते, क्रूरे, कृपणे च ।

रेफ पु० र+इफ । रकारात्मके वर्णे । रिफ-अच् । कुत्सिते त्रि० असुन् रेफस् । क्रूरे, अधमे, दुष्टे कृपणे च त्रि० ।

रेव(ब) गतौ सक० प्लुतौ अक० भ्वा० आ० सेट् । रेव(ब)ते अरेवि(बि)ष्ट । चङि न ह्रस्वः ।

रेभ शब्दे भ्वा० आत्म० अक० सेट् । रेभते अरेभिष्ट । चङि न ह्रस्वः

रेवत पु० रेव-अतच् । जम्बीरे आरग्वधे बलरामश्वशुरे राजभेदे

रेवती स्त्री० रेवतस्यापत्यम् अण् ङीप् । रेवतराजकन्यायां बलदेवपत्न्याम् । रेव-अतच् गौ० ङीष् । अश्विन्यवधितः सप्तविंशतिसंख्याते नक्षत्रे, तत्पत्न्यां, मातृकाभेदे स्त्रीगव्याम्, नदीभेदे, दुर्गायाञ्च । [६त० । रेवतीशादयोऽप्यत्र

रेवतीरमण पु० रेवतीं रमयति रम-णिच्-ल्यु । बलरामे ।

रेवन्त पु० रेव-झच् । गुह्यकाधिपतौ सूर्य्यपुत्रभेदे ।

रेवा स्त्री० रेव-अच् । नर्म्मदाख्यनद्याम् ।

रेष हेषायां (घोटकशब्दे) भ्वा० आत्म० अक० सेट् । रेषते अरेषिष्ट । चङि न ह्रस्वः ।

रै शब्दे भ्वा० पर० अक० अनिट् । रायति अरासीत् ।

रै पु० रा-डै । धने, स्वर्णे च ।

रैत्य त्रि० रीतेः पित्तलस्य विकारः रीति+ष्यञ् । पित्तलमये पात्रादौ ।

रैवत पु० रेवत्या नद्या अदूरो देशः अञ् । द्वारिकासमीपस्थे पर्व्वतभेदे स्वर्णालुवृक्षे, शिवे, दैत्यभेदे च । रेवत्यां भवः अण् । पञ्चमे मनौ मनुभेदे ।

रैवतक पु० रैवत एव कन् । रैवतपर्व्वते ।

रोक न० रुच-कन् तस्य नेत्त्वम् । छिद्रे, 'तन्मे रोकं च शोकश्चेति' श्रुतिः नौकायाम् च । रुच-घञ् नि० कुत्वम् । क्रयभेदे, दीप्तौ च पु० । [(कुड)

रोग पु० रुज-घञ् । धातुवैषम्यजाते व्याधौ, कुष्ठौषधे च

रोगघ्न न० रोगं हन्ति हन-क । औषधे, वैद्यकशास्त्रे च रोगनाशके त्रि० ।

रोगराज पु०६त० टच् समा० । राजयक्ष्मव्याधौ ।

रोगलक्षण न० रोगो लक्ष्यते ज्ञायतेऽनेन लक्ष-ल्युट् । रोगज्ञापके धातुवैषम्यहेतुके चिह्नभेदे ।

रोगशिला स्त्री० रोगाय तन्निवृत्तये शिला । मनःशिलायाम्

रोगहृ न० रोगं हन्ति हन-ड । औषधे, हन-क्विप् रोगहन् । रोगहन्तरि-वैद्यादौ त्रि० ।

रोगहर त्रि० रोगं हरति हृ-अच् । व्याधिनाशके द्रव्यादौ ।

रोगहारिन् पु० रोगं हरति हृ-णिनि । चिकित्सके वैद्ये ।

रोगितरु पु० रोगिप्रियस्तरुः शाक० । अशोकवृक्षे ।

रोगिन् त्रि० रोग+अस्त्यर्थे इनि । व्याधियुक्ते स्त्रियां ङीप् ।

रोचन पु० रुच-ल्यु रोचयति वा ल्यु । कूटशाल्मलिवृक्षे श्वेतशोभाञ्जने, पलाण्डौ, करञ्जे, अङ्कोटे, आरग्वधे दाडिमे च । उत्तमायां नार्य्यां, रक्तकह्लारे गोपित्ते, गोरोचनायाञ्च स्त्री० टाप् । रुचिकारके त्रि० ।

रोचनक पु० रोचनाय रुचिजननाय कायति कै-क । जम्बीरे

रोचनफल पु० रोचनं रुचिकरं फलमस्य । बीजपूरके लम्बीरभेदे, चिर्भट्यां स्त्री० ।

रोचना स्त्री० रोचयतीति कर्त्तरि संज्ञायां ल्युट् अजा० टाप् मनःशिलायाम्, गोरोचनायां, आमलक्याम्, श्वेतत्रिवृति, गन्धद्रव्यभेदे (गुडारोचना) च । [त्रि०

रोचमान पु० रुच-शानच् । अश्वग्रीवास्थरोमावर्त्ते । रुचियुक्ते

रोचिष्णु त्रि० रुच-इष्णुच् । दीप्तिशीले ।

रोचिस् न० रुच-इसुन् । प्रभायाम् ।

रोची स्त्री० रोचयति रुच्-णिच्-अच् गौ० ङीष् । हिल मोचिकायाम् । [(रुटी)

रोटिका स्त्री० रुट-ण्वुल् । गोधूमादिचूर्णनिर्म्मिते पिष्टकभेदे

रोड अनादरे भ्वा०पर०सक०सेट् । रोडति अरोडीत् चडिन ह्रस्वः । [संज्ञायां कन् । यवासायाम् ।

रोदन न०रुद्-ल्युट् । क्रन्दने,करणे ल्युट् ङीप् । दुरालभायां

रोदस् न० रुद्-असुन् । स्वर्गे, भूमौ च गौरा०ङीप् रोदसी-त्यप्यत्र द्यावाभूम्योः स्त्री०द्वि०व० ।

रोध पु० रुध-घञ् । रोधने, आवरणे च । [प्रतिबन्धे न०

रोधन त्रि० रुणद्धि रुध-ल्यु । रोधकर्त्तरि, भावे ल्युट् ।

रोधस् न० रुध-असुन् । नद्यादिकूले ।

रोध्र न० रुध-रन् । पापे, अपराधे लोध्रवृक्षे च ।

रोध्रपुष्प पु० रोध्रस्य लोध्रस्येव पुष्पमस्य । मधूकवृक्षे (मौल)

रोध्रपुष्पिणी स्त्री० रोध्रइव पुष्पाति पुष्पविकाशे णिनि । धातकीवृक्षे (धाइफुल)

रोप पु०रुह-णिच्-ह्रस्य पः कर्म्मणि अच् । वाणे । भावे अच् । रोपणे, धान्यादेर्जननाय अङ्कुरादेरारोपणे च । छिद्रे न० ।

रोपण न० रुह-णिच्-ह्रस्य पः ल्युट् । जनने, चञ्जनभेदे, रुप-ल्युट् । विमोहने, अन्यथाभूतस्य वस्तुनोऽन्यथा ज्ञापने । [दारोपणे

रोपित त्रि० रुह-णिच्-ह्रस्य पः क्त । वृक्षादेर्जननाय कृताङ्कु-

रोमक न० रोमेव निविडं कायति कै-क । (रुम) नगरे, पांशुलवणे च ।

रोमकन्द पु० रोम्णा युक्तः कन्दो मूलमस्य । पिण्डालौ ।

रोमकपत्तन न०कर्म्म० । (रुम) नगरभेदे ।

रोमकूप पु० रोम्णां कूपइव । रोमाधारे विवरे 'न रोम-कूपौघमिषाज्जगत्कृता' कृताश्च किं दूषणशून्यविन्दवः' इति नैषधम् ।

रोमकेशर न० रोमभिः केशरः सिंहसटेव । चामरे ।

रोमगुच्छ न० रोमभिर्गुच्छं स्तवकमिव । रोमसमुदायात्मके चामरे । कन् । अत्रैवार्थे । [(रोंया)

रोमन् न०रु-मनिन् । देहजाते अङ्कुराकारे लोमाख्ये पदार्थे

रोमन्थ पु० रोमं मथ्नाति मन्थ-अण् पृ० नलोपः । भुक्तस्य घासादेः पशुभिरुद्गीर्य चर्वणे 'रोमन्थमभ्यस्यतीति' ।

रोमभूमि स्त्री०६त० । चर्म्मणि ।

रोमलता स्त्री० रोमाणि लतेव । रोमराजौ ।

रोमविकार पु० ६त० । रोमोद्गमे ।

रोमश त्रि० रोमाणि सन्त्यस्य श । प्रचुररोमयुक्ते । मेषे, पिण्डालौ,शूकरे, कुम्भाख्ये पु०(पाना)

रोमहर्ष पु० रोम्णः हर्षइव तदुद्भवकत्वात् । रोमाञ्चे, हर्षौ भुयादिभिः रोमकूपे जायमाने कण्टकाकारे पदार्थे । ल्युट् । रोमहर्षणमप्यत्र न० ।

रोमहर्षण पु० रोमाणि हर्षयति हृष-णिच्-ल्यु । बिभीतक वृक्षे, मुनिभेदे च ।

रोमाञ्च पु० रोम्णामञ्चः उद्गमः अञ्च-अच् । रोमहर्षे ।

रोमाञ्चित त्रि०रोमाञ्चः जातोऽस्य तार० इतच् । जातपुलके

रोमाली स्त्री० ६त० । रोमावलौ तदुद्गमसाधने तारुण्याव-स्थायाञ्च । [लुच् रोमवति त्रि०

रोमालु पु० रोमयुक्त आलुः शाक० । पिण्डालौ । रोम+आ-

रोमालुविटपिन् स्त्री०रोमालुः रोमयुक्तः विटपी । कुम्भीवृक्षे

रोमावलि(ली) स्त्री०६त० । रोमश्रेणौ नाभेरूर्द्ध्वस्थरोमपङ्क्तौ, तदुपलक्षिते तारुण्यावस्थायाञ्च । [द्विदादयोऽप्यत्र

रोमोद्गम पु०रोम्णामुद्गमः उद्-गम-घञ् । रोमहर्षे । रोमो-

रोरुदा स्त्री० रुद-यङ्-अ टाप् । अतिशयरोदने ।

रोल पु० रु-लच् । पानीयामलके ।

रोलम्ब पु०रौति रु क्विप् रौः सन् लम्बते गच्छति लम्ब-अच् कर्म्म०, रोड-अम्बच् डस्य लो वा । भ्रमरे ।

रोष पु० रुष-घञ् । क्रोधे । [युक्ते त्रि०

रोषण पु०रुष-युच् । पारदे,निकषप्रस्तरे, ऊषरभूमौ च क्रोध-

रोह पु० रुह-अच् । अङ्कुरे । रोहणकर्त्तरि त्रि० ।

रोहण पु० रोहन्त्यस्मिन् रुह-ल्युट् । पर्व्वतभेदे ।

रोहन्त पु० रुह-झच् । वृक्षभेदे, वृक्षमात्रे च । लताभेदे, लतायाञ्च स्त्री० गौ० ङीप् ।

रोहि पु० रुह-इन् । बीजे, वृक्षे च । धार्म्मिके त्रि० ।

रोहिण न० रुह इनन् । पञ्चदशधा विभक्तदिनस्य नवमे भागे 'कुर्यादारोहिणं बुध' इति स्मृतिः रोहिणी देवताऽस्य अण् । रौहिणमप्यत्र । वटवृक्षे, रोहितकवृक्षे च पु० ।

रोहिणी स्त्री० रुह-इनन् गौ ङीप् । स्त्रीगव्याम्, अश्विन्यव-धिके चतुर्थे नक्षत्रे,वसुदेवपत्न्यां-बलभद्रमातरि, विद्युति, कटुतुम्ब्यां लतायां, सोमवल्के च । रोहित+स्त्रियां ङीप् तस्य नत्वे णत्वम् । रक्तवर्णवत्यां स्त्रियाम् । सा च हरित-श्यामा, काश्मर्याम्, कञ्जिष्ठायाञ्च ।

रोहिणीपति पु०६त०। चन्द्रे वसुदेवे च रोहिणीशादयोऽप्यत्र

रोहिणीव्रत न० रोहिणीयुक्ताष्टम्यां व्रतम् । रोहिण्युपल-क्षितायां भाद्रकृष्टाष्टम्यां कर्त्तव्ये उपवासरूपे व्रते ।

रोहित् पु०रुह-इति । सूर्य्ये,वर्णभेदे च । लताभेदे,मृग्याञ्च स्त्री

रोहित न० रुह-इतच् । रुधिरे, वरले, इन्द्रचापे, स्वनाम ख्याते मत्स्यभेदे,रोहितकवृक्षे च । रक्तवर्णे पु०तद्वति त्रि० कन् । उक्तार्थे, मत्स्यभेदे स्वनामख्याते वृक्षे च ।

रोहिताश्व पु० रोहितवर्णाः अश्वा यस्य । वह्नौ ।

रौहितेय पु० रौहितएव स्वार्थे ढ । रोहितकवृक्षे ।
रौहिन् पु० रोहति पुनश्छिन्नोऽपि प्रादुर्भवति रुह, णिनि । रोहितकवृक्षे । रोहणवति त्रि० । स्त्रियां ङीप् ।
रौहिष पु०रुह-इषन् । स्वनामख्याते वृक्षे ।
रौक्ष्य न० रूक्षस्य भावः ष्यञ् । पारुष्ये अचिक्कणतायाञ्च ।
रौचनिक त्रि० रोचनया रक्तः अण् । रोचनया रक्ते ।
रौट(ड) अनादरे भ्वा० पर०सक० सेट् । रौटति अरौटीत् । चङि न ह्रस्वः ।
रौद्र न०रुद्रो देवतास्य अण् । सूर्यतापे,उग्ररसे च । तद्वति, भीषणे च त्रि० । दुर्गायां रुद्रजटावृक्षे च स्त्री० ङीप् ।
रौप्य न० रूप्यमेव अण् । रजते । [तत्रैवार्थे
रौम न०रुमायां नद्यां भवः अण् । शाकम्भरिलवणे । स्वार्थे कन्
रौरव पु० रोरूयतेऽत्र रु-यङ्-क्विप् तेन प्राप्यं तस्येदं वा अण् । नरकभेदे लवणं शब्ददभिधाने । चञ्चले,धूर्त्ते, घोरे च पु०
रौहिण पु० रुह-इनन् स्वार्थे अण् । चन्दनवृक्षे ।
रौहिणेय पु० रोहिण्यां भवः ढक् । बुधग्रहे, बलरामे च । मरकतमणौ न० । गोवत्से त्रि० ।
रौहिष न० रुह-इषन् स्वार्थेऽण् । मृगभेदे रोहितमत्स्ये च दूर्व्वायां, रोहिष्मृगयाञ्च स्त्री० ङीप् ।

## ल

ल पु० ला-क । इन्द्रे, तन्त्रोक्ते भूमिदेवताके मन्त्रभेदे न०
लक आस्वादे प्राप्तौ च चु०उ०स०सेट् । लाकयति ते अलीलकत् त
लकच पु० लक-अचन् । लिकुचवृक्षे (मादार) ।
लकुच पु० लक-उचन् । (मादार) वृक्षभेदे ।
लक्तक पु० लक-क्त नि० संज्ञायां कन् । अलक्तके (आलता)
लक्तकर्म्मन पु० लक्तं करोति कृ-मनिन् । रक्तवर्णलोध्रे ।
लक्ष दर्शने,अङ्कने च चु०उभ०स०सेट् । लक्षयति ते अललक्षत् त
लक्ष न० लक्ष-अच् । पदे, चिह्ने, व्याजे,शरव्ये च । दशायुतसंख्यायां स्त्री० न० । [शोभने शब्दे ।
लक्षक त्रि० लक्षयति लक्षणयार्थम् लक्ष-ण्वुल् । लक्षणयार्थ
लक्षण न० लक्ष्यतेऽनेन लक्ष-करणे ल्युट् । इतरभेदानुमापके चिह्ने,यथा पृथिव्या गन्धोलक्षणं स हि पृथिवीं परस्मात् भिन्नतया अनुमापयति । 'स्वरूपं तटस्थं द्विधा लक्षणं स्यात् स्वरूपे प्रविष्टं स्वरूपादिभिन्न'मित्युक्ते स्वरूपलक्षणे तटस्थलक्षणे च यथा आकाशो विभुस् सच्चिदानन्दो ब्रह्मेति । आकाशवत् सूक्ष्मम्, जगज्जन्मादिकर्तृ ब्रह्मेति । स्वरूपे,यथा घटस्वरूपं मस्तु । नाम्नि,व्यवहारोपयोगिनि-चिह्ने च । कर्त्तरि ल्यु । स्वरूपप्रतिपादके 'नोदनालक्षणोऽर्थोधर्म्म'इति जैमिनिसूत्रम् नोदना विधिवाक्यमेव लक्षणं स्वरूपज्ञापिका यस्य तादृशोऽर्थः धर्म्मः इति तदर्थः । शब्दसाधुताप्रतिपादके व्याकरणादिसूत्रे च न० 'लक्षणं नामभिधानामि'ति । कर्म्मणि ल्युट् । प्रतिपाद्ये यथा 'द्वादशलक्षणी'ति माधवीयन्यायमाला द्वादशानां लक्षणानां प्रतिपाद्यविषयाणां समाहारः इति तदर्थः । लक्ष-युच् । शब्दनिष्ठवाच्यार्थसंबद्धार्थबोधकताख्ये 'मुख्यार्थबाधे तद्योगे यथान्योऽर्थः प्रतीयते । रूढेः प्रयोजनाद्वापि लक्षणा शक्तिरर्पिते'त्युक्ते, वृत्तिभेदे स्त्री० । यथा गङ्गायां घोषः प्रतिवसतीत्यादौ गङ्गाशब्दस्य जलप्रवाहरूपे स्वार्थेऽन्वयासम्भवात् तत्सम्बद्धतीरादिबोधकता । सा च बहुधा विस्तरो शब्दभिधाने । लक्ष्मणे,सारसपक्षिणि च पु० तत्स्त्रियां स्त्री०
लक्षित त्रि० लक्ष-कर्म्मणि क्त । लक्षणया बोधितेऽर्थे, ज्ञाते, अनुमिते च कर्त्तरि क्त । लक्षणाश्रये, लक्षकशब्दे च ।
लक्ष्मन् न० लक्ष-मनिन् । चिह्ने,प्रधाने च । स्वार्थे अण् पुं० । सारसपक्षिणि दशरथपत्न्याः सुमित्रायाः ज्येष्ठात्मजे च पु० । श्वेतकण्टकार्य्यां, सारसपक्षिस्त्रियाम्, औषधभेदे च स्त्री०
लक्ष्मी स्त्री० लक्ष-ई-मुट् च । शोभायां,कान्तौ,विष्णोः-पत्न्याम्, सम्पत्तौ, ऋद्ध्यौषधे, वृद्धिनामौषधे, फलिनीवृक्षे, स्थलपद्मिन्याम्, हरिद्रायां, शटी, मुक्तायां, द्रव्ये च ।
लक्ष्मीकान्त पु० 6त० । विष्णौ, राजनि च लक्ष्मीपत्यादयोऽप्यत्र । 'विहाय लक्ष्मीपतिलक्ष्मे'ति भारविः ।
लक्ष्मीपुत्र पु०6त० । कामदेवे, गन्धर्व्वभेदे, अश्वे, कुशे च ।
लक्ष्मीवत् पु० लक्ष्मीः शोभास्त्यस्य मतुप् मस्य वः । पनसे श्रीयुक्ते त्रि० स्त्रियां ङीप् । [चन्द्रे, उच्चैःश्रवसि च
लक्ष्मीसहज पु० लक्ष्म्या सह क्षीराब्धौ जायते जन-ड ।
लक्ष्य न० लक्ष-यत् । वेधार्थसङ्केतस्थाने शरव्ये । लक्षणया बोध्येऽर्थे, उद्देश्ये, शोध्ये, अनुमेये च त्रि० ।
लख गतौ भ्वा०पर०सक०सेट् । लखति । अलखीत्–अलाखीत् इदित्त्वम् लङ्खति अलङ्खीत् ।
लग श्लेषभावे अक०गतौ भ्वा०सक०प०सेट् । लगति अलगीत्
लग सङ्गे भ्वा० पर०सक०सेट् एदित् । लगति अलगीत् घटा० लगयति । 'क्षणेन तस्मा लगति को'ति नैषधम् ।
लग स्वादे प्राप्तौ च सक० चु०उभ०सेट् । लागयति ते अलीलगत् त
लगित त्रि० लग-क्त । संलग्ने ।
लगुड(ल)(र) पु० लग-उलच् लस्य डो रो वा । दण्डाकारे काष्ठनिर्म्मिते पदार्थे (लाठी) ।

लग्न न० लस्ज-क्त तस्य नः । मेषादिराशीनामुदये लज्जिते त्रि० । लग-क्त ष्ट० । संसक्ते त्रि० । स्तुतिपाठके पु० । लग्नवत् दृढार्थे कन् । प्रतिभुवि । (जामिन) 'खादको वित्तहीनः स्यात् लग्नकोऽवित्तवान् यदी'ति स्मृतिः ।

लग्निका स्त्री० नग्नेव कन् ष्ट० । अदृष्टरजस्कायां स्त्रियाम् ।

लघ अभोजने सीमातिक्रमगतौ च भ्वा०आ०स०सेट् इदित् । लङ्घते अलङ्घिष्ट । 'कल्लोलिनीवल्लभमुल्ललङ्घे', इति नाटकम्

लघ शोषणे भ्वा०पर०सक०सेट् इदित् । लङ्घति अलङ्घीत् ।

लघ प्रकाशे चु०उ०स०सेट् इदित् । लङ्घयति-ते अललङ्घत् त

लघ आस्वादने चु०उभ०सक०सेट् । लाघयति-ते अलीलघत्-त

लघिमन् पु० लघोर्भावः इमनिच् डिच्च । लघुत्वे लाघवे, येनोर्द्ध्वगतिसम्भवः । ईश्वरस्य ऐश्वर्यभेदे च ।

लघिष्ठ त्रि० अतिशयेन लघुः इष्ठन् डिद्वद्भावः । अतिशय-लघुत्वयुक्ते । ईयसुन् । लघीयानप्यत्र स्त्रियां ङीप् ।

लघु त्रि० लघि-कु नि० नलोपः । शीघ्रे कृष्णागुरुण्यि, वीरण-मूले च । पृक्कानामौषधौ स्त्री० । निःसारे,लाघवगुणान्विते, ह्रस्वे, मनोहरे च त्रि० । व्याकरणोक्ते ह्रस्वसंज्ञके अका-रादौ वर्णे,ज्योतिषोक्तेषु 'पुष्याश्विहस्ता लघु'रित्युक्ते पुष्या-दिनक्षत्रेषु च पु० । लघुतावत्यां स्त्रियां स्त्री० वा ङीप् ।

लघुकाश्मर्य्य पु० कर्म० । कट्फले वृक्षे ।

लघुचिर्भटा स्त्री० कर्म० । म्रगेर्वारौ कर्कटीभेदे ।

लघुदन्ती स्त्री० कर्म० । क्षुद्रदन्तीवृक्षे ।

लघुद्राक्षा स्त्री० कर्म० । काकलीद्राक्षायाम् । [चन्दने ।

लघुनामन् पु० लघुवर्णयुक्तं नाम वाचकशब्दो यस्य । अगुरु

लघुपत्त्रक पु० लघूनि ह्रस्वानि पत्त्राण्यस्य कप् । (गुडारोचना) लताभेदे ।

लघुपुष्प पु० लघु पुष्पं यस्य । भूमिकदम्बे ।

लघुबदर पु० कर्म० । क्षुद्रकोलौ । भूबदर्य्याम् स्त्री० ङीप् ।

लघुब्राह्मी स्त्री० कर्म० । क्षुद्रब्राह्म्याम् । [क्षुद्राग्निमन्थे ।

लघुमन्थ पु० । अग्निमन्थः मन्थः पूर्व्वपदलोपः कर्म० ।

लघुलय न० लघु शीघ्रं लीयते ली-अच् । वीरणमूले ।

लघुसदाफला स्त्री० सदा फलं यस्याः कर्म० । क्षुद्रोडुम्ब-रिकायाम् (छोट डुमुर) ।

लघुहेमदुग्धा स्त्री० कर्म० । क्षुद्रोडुम्बरे (छोट डुमुर) ।

लघूदुम्बरिका स्त्री० कर्म० । (छोट डुमुर) उडुम्बरभेदे ।

लङ्का स्त्री० लक-अच् मुम् च । स्वनामख्यातायां पुर्य्याम् ।

लङ्काधिप पु० ६त० । रावणे लङ्कानाथादयोऽप्यत्र ।

लङ्कायि(पि)का स्त्री०लङ्कामयते आप्नोति वा ण्वुल् । पृक्कायां (पिडिङ्) याकभेदे । [वृक्षभेदे । लङ्कावासिनि त्रि०

लङ्कास्थायिन् पु० लङ्कायां तिष्ठति स्था-णिनि । (लङ्कासिज)

लङ्कोपिका स्त्री० लङ्कायामुप्यते वप-ण्वुल् ष्ट० । पृक्का-याम् । (पिडिङ्याक) । [लवने च ।

लङ्घन न० लघि-ल्युट् ।'अभोजने, अतिक्रम्य गमने, क्रमणे,

लछ चिह्नकरणे भ्वा०पर०सक०सेट् । लच्छति अलच्छीत् ।

लज व्रीडायाम् भ्वा०आ०सक०सेट् । लजते अलजिष्ट ।

लज तिरस्कारे भ्वा०पर०सक०सेट् इदित् । लञ्जति अलञ्जीत् ।

लज अन्तर्द्धाने चुरा० उ०सक०सेट् । लाजयति-ते अलीलजत् त

लज भाषणे हिंसायां दाने च सक०सामर्थ्ये वासे च अक०चुरा० सेट् इदित् । लञ्जयति-ते अललञ्जत् त ।

लज भासने अद०चु०उभ०सक०सेट् । लजयति-ते अललजत् त

लजकारिका स्त्री० लजं लज्जां करोति कृ-ण्वुल् अत इत्वम् । लज्जालुलतायाम् ।

लज्जा स्त्री० लस्ज-अ । अकलमहत्त्वे परदर्शने दुष्टत्वधिया ततो निवर्त्तिसाधने चित्तवृत्तिभेदे ।

लज्जालु स्त्री० लस्ज-आलुच् । लताभेदे । लज्जावति त्रि० ।

लज्जाशील त्रि०लज्जां शीलयति शील-अण् । लज्जाविशिष्टे ।

लज्जित पु० लज्जा जाताऽस्य तार० इतच् । जातलज्जे व्रीडिते

लज्जिरी स्त्री० लज्जा अस्त्यर्थे इरच् गौ०ङीष् । लज्जालु-लताभेदे ।

लञ्ज भासने अद०चु०उभ०सक०सेट् । लञ्जयति ते अललञ्जत्

लट बाल्यभावे अक० उक्तौ द्वि० भ्वा० पर० सेट् । लटति । अलाटीत्-अलटीत् ।

लटपर्ण न० लटं दृष्टं पर्णमस्य । त्वचे (दारचिनि) ।

लट्वा स्त्री० लट-व । (गाठाकरमचा) करञ्जभेदे, वाद्यभेदे, ग्रामचटके, कुसुम्भे, भ्रमरके च ।

लड विलासे भ्वा०पर०अक०सेट् । लडति । अलाडीत्-अलडीत्

लड उत्क्षीडने जिह्वाचालने च भ्वा०पर०सक० सेट् । लडति अलाडीत्-अलडीत् घटा० । लडयति ।

लड उपसेवे चु०उभ०सक०सेट् । लाडयति-ते अलीलडत् त ।

लड व्याप्तौ चु०उभ०सक०सेट् । लाडयति-ते अलीलडत् ।

लड भाषणे द्वि०वा चु० पक्षे भ्वा० पर०सेट् इदित् । लण्ड-यति ते लण्डति । अललण्डत् त अलण्डीत् ।

लड उत्क्षेपणे वा चुरा०उभ०पक्षेभ्वा०पर०सक०सेट् इदित् । लण्डयति-ते लण्डति । अललण्डत्-त अलण्डीत् ।

लड क्षेपणे अद०चु०उभ०सक०सेट् । लडयतिते अललडत् त ।

लड्डु,क पु० लड-डु तस्य नेत्वम् स्वार्थे कन् । गोधूमादिचूर्ण

निर्मिते (लाड्ड) मिष्टान्नभेदे 'इष्टुलड्डुकमनीवि' नैषधम् स्त्रीत्वमपि ।

**लरड्ड** पु० लडि-रन् । (लण्डन) इति ख्याते देशभेदे ।

**लत** आघाते भ्वा० पर०सक०सेट् । लतति अलातीत् अलतीत्

**लता** स्त्री० लत-अच् । शाखारहिते गुडूच्यादौ ।

**लताकरञ्ज** पु० लताक्षपः करञ्जः । करञ्जभेदे ।

**लताकस्तूरिका** स्त्री० लतायां कस्तूर्या इव गन्धो यस्याः । कस्तूरीगन्धयुक्तफलवत्त्वात् लतायाम् ।

**लतातरु** पु० लतेव दीर्घस्तरुः । तालवृक्षे, शालवृक्षे, नागरङ्गवृक्षे च । लताद्रुमादयोऽप्यत्र । [लताभेदे ।

**लतापनस** पु० लतायां पनसमिव स्थूलं फलमस्य । (तरमुज)

**लताटङ्का** स्त्री० लतेव विस्तीर्णा टङ्का । (पिड़िङ्ग) शाकभेदे

**लताफल** न० लतायां फलमस्य । पटोले ।

**लतालसत्** स्त्री० लतायां लसत् वायुर्यस्याः । इक्षायां तत्-तालमिवने हि वायुवृद्धिरिति वैद्यकम् ।

**लतायष्टि** स्त्री० लताऽपि यष्टिरिव । मञ्जिष्ठायाम् ।

**लतायावक** न० लतायां यावकमिव । प्रवाले ।

**लतार्क** पु० लतयाऽर्क इव । हरितपलाण्डौ ।

**लप** कथने भ्वा०पर द्विक सेट् । लपति । अलापीत्-अलपीत् । घटि न ह्रस्वः । [ल्युट् । कथने ।

**लपन** न० लप्यते उच्यतेऽनेन लप-करणे ल्युट् । मुखे । भावे

**लपित** त्रि० लप-कर्मणि-क्त । कथिते । भावे क्त । कथने न० ।

**लबि** आलम्बने शब्दे च अक०भ्वा०आत्म० सेट् इदित् । लम्बते अलम्बिष्ट ।

**लब्ध** त्रि० लभ-कर्मणि क्त । प्राप्ते ।

**लब्धवर्ण** पु० लब्धो वर्णो वर्णनं प्रशंसा ज्ञानवत्त्वेन येन । पण्डिते

**लभ** शब्दे अक०भ्वा० आत्म० सेट् इदित् । लम्भते अलम्भिष्ट

**लभ** प्राप्तौ सक०भ्वा०आत्म०अनिट् । लभते । अलब्ध । लब्धिमः

**लमक** पु० रम-वुन् रस्य लः । निर्लज्जे जारे । [आसक्ते त्रि०

**लम्पट** पु० रम-अटन् पुक् च रस्य लः । परस्त्रीषु लोलुपे,

**लम्ब** पु० लबि-अच् । नर्त्तके, कान्ते, उत्कोचे, अङ्कशास्त्रोक्ते त्रिभुजादिक्षेत्रे भुजकर्णयोर्मध्यस्थे लम्बमाने सूत्रे च 'लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवती'ति लीलावती दीर्घे, लम्बमाने च त्रि०।

**लम्बकर्ण** पु० लम्बः कर्णो यस्य । छागे, हस्तिनि, राक्षसे, श्येनपक्षिणि, अङ्कोटवृक्षे च । लम्बकर्णवति त्रि०।कर्म०। लम्बमाने कर्णे पु० ।

**लम्बकेश** त्रि० लम्बः दीर्घः केशः यस्य । दीर्घकेशयुक्ते । कुशमये विष्टरे । दीर्घकेशयुक्ते त्रि०। कर्म०। दीर्घे केशे ।

**लम्बदन्ता** स्त्री० लम्बो दीर्घः दन्त इव बीजकण्टको यस्य सिंहलद्वीपभवपिप्पल्याम् । दीर्घदन्तवति त्रि० कर्म० दीर्घे दन्ते पु० । [भावे ल्युट् । आश्रयणे न० ।

**लम्बन** न० लम्बते ल्यु । नाभिदेशपर्य्यन्तं लम्बमाने माल्यादौ

**लम्बबीजा** स्त्री० लम्बं दीर्घं बीजं यस्याः । सिंहलदेशजात पिप्पल्याम् । [लक्ष्म्यां, गौर्य्याञ्च ।

**लम्बा** स्त्री० लम्बते लबि-अच् । तिक्ततुम्ब्यां (तितलाउ) ।

**लम्बोदर** पु० लम्बं दीर्घमुदरं यस्य । गणेशे, तारानाम्न्यां देव्यां स्त्री० ङीप् । बृहदुदरवति त्रि० ।

**लय** गतौ भ्वा०आत्म०सक०सेट् । लयते । अलयिष्ट ।

**लय** पु०ली-अच् । संश्लेषे विनाशे, नृत्यगीतवाद्यानामेकतानतारूपे साम्ये च । लीयतेऽत्र । सर्व्वभूतलयकरे प्रलयकाले, ईश्वरे च

**लर्ब** गतौ भ्वा०पर०सक० सेट् । लर्बति अलर्बीत् ।

**लल** इच्छायां चु०उभ०सक०सेट् । लालयति-ते अलीललत् त

**लल** इच्छायां अद०चु०उभ०सक०सेट् । ललयति ते अललत् त

**ललज्जिह्व** पु० ललन्ती आस्वाद्यास्वादनाय चलन्ती जिह्वा यस्य । कुक्कुरे, उष्ट्रे, हिंस्रसत्त्वे च । चलद्रसनायुक्ते त्रि०।

**ललन** न० लड णिच् ल्युट् डस्य लः । चालने । केलौ, वाते, शालवृक्षे, पियालवृक्षे च पु० । लल-ल्यु । जिह्वायां, नार्याञ्च स्त्री०।

**ललनाप्रिय** पु० कर्म० । कदम्बे । ह्रीवेरे न० । जिह्वाप्रिये, रमणीवल्लभे च त्रि० ।

**ललन्तिका** स्त्री० लड-झच् स्वार्थे कन् अत इत्वम् डस्य लः नाभिदेशपर्य्यन्तलम्बमाने माल्यादौ । [काधःस्पेटभेदे(कमाल)

**ललाट** न० लड-अच् डस्य लः ललमटति अट-अण् । अन-

**ललाटन्तप** पु० ललाटं तापयति तप-णिच् खच् ह्रस्वः । सूर्य्ये ललाटतापके त्रि० 'टिपिर्ललाटन्तपनिष्ठुरे'ति नैषधम् ।

**ललाटपट्ट** न० ललाटं पट्टमिव विस्तीर्णम् । प्रशस्तललाटे ललाटफलकादयोऽप्यत्र । [ललाटस्थे चिह्ने च।

**ललाटिका** स्त्री० ललाटे आबध्यते ठन् । ललाटभूषणे.

**ललाम** न० लल-अच् तमभति अम अण् । प्रधाने, ध्वजे, शृङ्गे, वालधौ, चिह्ने, भूषायां च घोटके पु० । ललाममपि।

**ललामक** न० ललाम तिलकमिव इवार्थे कन् । ललाटपर्य्यन्तं लम्बमाने माल्यभेदे ।

**ललित** न० लल-क्त । शृङ्गारानुरूपे चेष्टाभेदे, स्वरभेदे पु० । सुन्दरे, ईप्सिते त्रि० लड-क्त डस्य लः । चालने न० कस्तूर्यां नदीभेदे स्त्री० । [मितभेदे च ।

**ललितासप्तमी** स्त्री० भाद्रशुक्लसप्तम्याम्, तद्दिनकर्तव्ये

**लव** पु० लू-अप् । लेशे, विनाशे, छेदने, श्रीरामपुत्रे, कालपरिमाणभेदे, गोवाङ्गूललोम्नि, लावे च ।

**लवङ्ग** न० लू-अङ्गच् । स्वनामख्याते वृक्षे । स्वार्थे कन् तत्रैव

**लवङ्गकलिका** स्त्री० लवङ्गं कलिकेव । लवङ्गे ।

**लवण** न०लू-ल्युट् पृ०णत्वम् । रसभेदे, तत्प्रधाने-सैन्धवसौवर्चलविडादिरूपे पदार्थे च । तदुत्पत्तिस्थाने-सिन्धुदेशे, समुद्रे, मधुदैत्यसुते असुरभेदे च पु० । लवणरसयुक्ते, लावण्यवति च त्रि० । नदीभेदे, महाज्योतिष्मत्यां, दीप्तौ च स्त्री० ।

**लवणकिंशुका** स्त्री० लवणरसान्वितः किंशुकः तन्नामकं पलाशं यस्याः । महाज्योतिष्मत्याम् ।

**लवणक्षार** पु० लवणमयः क्षारः । लवणरसयुक्ते क्षारे ।

**लवणखनि** स्त्री० ६त० । शाम्भरिलवणोत्पत्तिस्थाने ।

**लवणधेनु** स्त्री० दानार्थं कल्पितायां लवणनिर्मितायां धेनौ ।

**लवणाचल** पु० दानार्थं कल्पिते अचलाकारे लवणस्तूपे ।

**लवणाब्धि** पु० लवणमयोऽब्धिः । लवणप्रचुरसमुद्रे । लवणसमुद्रादयोऽप्यत्र ।

[(करकचलवण) ।

**लवणाब्धिज** न० लवणाब्धेर्जायते जन-ड । सामुद्रलवणे

**लवणोत्तम** न० लवणेषु उत्तमम् । सैन्धवलवणे ।

**लवणोद** पु० लवणमयमुदकं यस्य उदादेशः । लवणसमुद्रे ।

**लवन** न० लू-ल्युट् । छेदने, (लोना आता) वृक्षे स्त्री० ङीप् ।

**लवली** स्त्री०लवं लेशं लाति-ला-क गौ०ङीष् । (नोयाड़) वृक्षे ।

**लवित्र** न० लूयतेऽनेन लू-इत्र । दात्रे । [अलीलश(ष)(स)त् त

**लश(ष)(स)** शिल्पयोगे चु०उ०अक०सेट् । लाश(ष)(स)यति ते

**लशु(सु)न** न० लश-उनन् ऊनन् वा । रशुने ।

**लष** स्पृहायां दिवा०भ्वा०च उभ०सक०सेट् । लष्यति-ते लषति ते-अलषीत् । अलाषीत् अलषिष्ट । [सीत् अलसीत्

**लस** श्लेषे क्रीड़ायां दीप्तौ च अक०भ्वा०पर०सेट् । लसति-अला-

**लसा** स्त्री०लसति लस-अच् । हरिद्रायाम् ।

**लसीका** स्त्री०लस-ईकक् । इक्षुरसे ।

**लस्ज** व्रीड़ायां भ्वा०आ०अक०सेट् । लज्जते अलज्जिष्ट । निष्ठायामनिट् तस्य नत्व । लग्नः ।

**लस्त** त्रि० लस-क्त नि० इडभावः । श्लिष्टे, क्रीड़िते, शिल्पयुक्ते च । संज्ञायां कन् । धनुर्मध्यभागे पु० ।

**लहरि(री)** स्त्री० लेन-इन्द्रेणेव ह्रियते ऊर्द्ध्वगमनाय हृ-कर्मणि इन् वा ङीप् । महातरङ्गे ।

**ला** आदाने अदा०पर०सक०अनिट् । लाति अलासीत् ।

**लाक्षणिक** त्रि० लक्षणया बोधयति ठक् । लक्षणया अर्थबोधके शब्दे । अस्त्यर्थे ठन् स्वार्थे अण् । लक्षणयुते ।

**लाक्षण्य** त्रि० लक्षणं वेत्ति ञ्य । शुभाशुभलक्षणज्ञे । अस्त्यर्थे ष्यञ् यत् वा । लक्षणयुक्ते 'ल(ला)क्षण्यां स्त्रियमुद्वहे'दिति स्मृतिः ।

[पदार्थे ।

**लाक्षा** स्त्री० लक्ष्यतेऽनया लक्ष-अ पृ० वृद्धिः । (ला) ख्याते

**लाक्षातरु** पु० लाक्षयोनिस्तरुः । (ला) द्रव्यसाधने वृक्षे लाक्षावृक्षादयोऽप्यत्र ।

**लाक्षातैल** न० लाक्षया पक्वं तैलम् । वैद्यकप्रसिद्धे तैलभेदे ।

**लाक्षाप्रसाद** पु० लाक्षायां प्रसादो यस्य । पट्टिकालोध्रे ।

**लाक्षाप्रसाधन** न० प्रसाध्यते भूष्यतेऽनेन ल्युट् लाक्षा तद्रूप एव प्रसाधनम् । अलक्तके ।

**लाक्षारस** पु० लाक्षाभिः कृतो रसः द्रवः । अलक्तकरसे ।

**लाख** शोषे, भूषणे, दाने वारणे च सक० सामर्थ्ये अक० भ्वा० पर०सेट् । लाखति अलाखीत् चङि न ह्रस्वः । [ह्रस्वः

**लाघ** सामर्थ्ये भ्वा०आ०अक०सेट् । लाघते अलाघिष्ट चङि न

**लाघव** न० लघोर्भावः अण् । लघुत्वे, आरोग्ये च । [पदार्थे

**लाङ्गल** न० लगि-कलच् पृ० वृद्धिः । स्वनामख्याते भूमिकर्षके

**लाङ्गलदण्ड** पु० ६त० । लाङ्गलमध्यस्थे काष्ठमये दण्डे (ईस)

**लाङ्गलपद्धति** स्त्री० लाङ्गलखाता पद्धतिः रेखा । सीतायाम् लाङ्गलखातक्षेत्रस्थभूमिरेखायाम् ।

**लाङ्गलिकी** स्त्री० लाङ्गलमिवाकारोऽस्त्यस्याः ठन् गौ०ङीष् । (विषलाङ्गला) वृक्षभेदे । तत्र भवः अण् । विषभेदे पु० ।

**लाङ्गलिन्** पु० लाङ्गलं प्रहरणत्वेनास्त्यस्य इनि । बलरामे लाङ्गलदण्ड इव दीर्घः आकारोऽस्त्यस्य इनि । नारिकेलवृक्षे ।

[(काचड़ा) शाकभेदे ।

**लाङ्गली** स्त्री० लाङ्गलाकारः पुष्पमस्त्यस्याः अच् गौरा०ङीष् ।

**लाङ्गूल** न०लगि ऊलच् पृ० । पशूनां पश्चाद्वर्त्तिनि रोमगुच्छे ।

**लाङ्गूलिका** स्त्री० लाङ्गूलाकारोऽस्त्यस्याः ठन् । पृश्निपर्ण्याम्

**लाङ्गूलिन्** पु० लाङ्गूलमस्त्यस्य इनि । वानरे तदाकारपुष्पवति ऋषभौषधे च ।

**लाछि** अङ्कने भ्वा०पर०सक०सेट् इदित् । लाञ्छति अलाञ्छीत् ।

**लाज** भर्त्सने भ्वा०पर०सक०सेट् । लाजति अलाजीत् । इदित् दयम्ययम् । लाञ्जति अलाञ्जीत् ।

**लाज** न० लाज-अच् घञ् वा । उशीरे । आर्द्रतण्डुले पु० । भृष्टधान्ये (खइ) पु०ब०व० स्त्रीत्वमप्यत्र । [भावे ल्युट् । अङ्कने ।

**लाञ्छन** न०लाञ्छ्यते लाछि-कर्मणि ल्युट् । चिह्ने, नामनि च

**लाट** पु० लट-संज्ञायां घञ् । देशभेदे, वस्त्रे, जीर्णालङ्कारे, विदग्धपुरुषे च ।

[शब्दालङ्कारभेदे ।

**लाटानुप्रास** पु० लाटस्य विदग्धस्य प्रियः कर्म० । अलङ्कारोक्ते

लाड क्षेपे अद॰चु॰उभ॰सक॰सेट्। लाडयति ते अललाडत् त

लाभ पु॰लम्भने लभ-कर्मणि घञ्। मूलधनादितोऽधिके लभ्यमाने धने। भावे घञ्। प्राप्तौ। [रोपस्य कम्। बीरणमूले

लामज्जक न॰ लाति ला-क्विप् लाः आदीयमानः मज्जा य

लालन न॰चु॰लल-ल्युट्। स्नेहपूर्वकपालने। [दोहदे च

लालसा स्त्री॰ लस-स्पृहायां यङ् अ। अतिशयेच्छायाम्, गर्भि-

लाला स्त्री॰ पु॰ लल-अ टाप्। मुखजजलवे।

लालाटिक पु॰ ललाटं प्रभोर्भाग्यं पश्यति ठञ्। प्रभुभाग्योपजीविनि-कार्याक्षमे। ललाटात् ललाटस्थभाग्यात् आगतः, तस्येदं वा ठञ्। भाग्याधीने त्रि॰ 'प्राप्तिस्तु लालाटिकीत्युद्भटः ललाटयन्त्रणि त्रि॰।

लालाविष पु॰ लालायां विषमस्य। लूतादौ कीटे।

लालास्राव लालां स्रावयति स्रु-णिच्-अण्। लूताकीटे।

लालित्य न॰ ललितस्य भावः ष्यञ्। सौन्दर्य्ये, मनोहरत्वे 'नैषधे पदलालित्य'मित्युद्भटः। [घञ्। छेदने

लाव पु॰लू-कर्त्तरि घञ्। पक्षिभेदे। स्वार्थे कन्। तत्रैव भावे

लावण न॰ लवणे संस्कृतम् अण्। लवणसंस्कृते औषधादौ।

लावणिक न॰ लवणे संस्कृतम् ठञ्। लवणे संस्कृतौषधादौ, लवणं पण्यमस्य ठञ्। लवणविक्रयोपजीविनि वणिग्भेदे

लावण्य न॰ लवणस्य भावः ष्यञ्। लवणत्वे, 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' इत्युक्ते देहसौन्दर्य्यभेदे च।

लासिका स्त्री॰ लस-ण्वुल्। नर्त्तक्याम् ह॰। लासकाप्यत्र।

लास्य न॰ लस-ण्यत्। नृत्ये, वाद्यनृत्यगीतत्रिके। 'स्त्रीनृत्यं लास्यमुच्यते' इत्युक्ते स्त्रीनृत्ये च। स्वार्थे कन् तत्रैव।

लिकुच पु॰ लकुच+पृ॰ इत्वम्। (मान्दार) वृक्षे।

लिक्षा(क्षा) स्त्री॰ लक्ष-अ पृ॰ वा इत्वम् वा ह्रस्व। यूकाण्डे, 'जालान्तरगते भानौ यच्चाणुदृश्यते रजः। तैश्चतुर्भिर्भवेल्लिक्षे'त्युक्ते परिमाणभेदे। [दिल्लयत्

लिख लेखने तुदा॰पर॰सक॰सेट्। लिखति अलेखीत्। कुटा-

लिखि गतौ भ्वा॰पर॰सक॰सेट् इदित्। लिङ्खति अलिङ्खीत्।

लिखन न॰ कृ॰ लिख-ल्युट्। लेखने, लिपौ च।

लिखित न॰ लिख-भावे क्त। लेखने। आधारे क्त। लिपौ, विवादे अर्थसाधके पत्रादौ च 'प्रमाणं लिखित'मिति स्मृतिः

लिगि गतौ भ्वा॰पर॰सक॰सेट् इदित्। लिङ्गति अलिङ्गीत्।

लिगि चित्रीकरणे चुरा॰उभ॰सक॰सेट् इदित्। लिङ्गयति ते। अलिलिङ्गत् त।

लिङ्ग पु॰ लिगि-घञ्। लिङ्गे, पुंसोऽसाधारणचिह्ने, अनुमानसाधने हेतौ, सांख्योक्ते प्रधाने, शिवमूर्त्तिभेदे, व्याप्ये, व्यक्तौ, शब्दनिष्ठे पदत्वाद्युतप्रयोजके धर्म्मभेदे, अर्थप्रकाशनसामर्थ्ये च। 'सामर्थ्यं च लिङ्गमिति' मीमांसकाः।

लिङ्गक पु॰ लिङ्गेन कायति कै-क। कपित्थवृक्षे।

लिङ्गवर्द्धिनी स्त्री॰ लिङ्गं पुरुषचिह्नभेदं वर्द्धयति वृध-णिच् णिनि। अपामार्गे।

लिङ्गवृत्ति पु॰ लिङ्गं संन्यासादिवेशधारणमेव वृत्तिः जीविका यस्य। जीविकार्थसन्यासचिह्नादिधारिणि कपटपरिव्राजके

लिङ्गिनी स्त्री॰ लिङ्गमिवाकारोऽस्त्यस्याः इनि ङीप्। (पंचगुरिया) लताभेदे।

लिङ्गिन् त्रि॰ लिङ्गमस्त्यस्य इनि। चिह्नवति, जीविकार्थसंन्यासादिचिह्नवति, प्रशस्तलिङ्गवति-गजे च पु॰।

लिप लेपने, तुदा॰उभ॰मुचा॰सक॰अनिट्। लिम्पति ते अलिपत् अलिपत अलिप्त। [लेखने च।

लिपि(पी) स्त्री॰ लिप-इन् वा ङीप्। लिखिताक्षरके पत्रे,

लिपिक(का)र पु॰ लिपिं करोति कृ-अच् अण् वा। लेखके।

लिप्त त्रि॰ लिप-क्त। भुक्ते, सतचन्दनादिलेपे, मिलिते, विषदिग्धे च। ज्योतिषोक्ते राशेः षष्टिभागात्मके कलारूपे भागे। 'लिप्तार्द्धहीनं यदि पूर्वमेतदि'ति ताजकम् दण्डात्मककाले पु॰। स्वार्थे कन्। अत इत्त्वम्। तत्रैव।

लिप्तक पु॰ कुत्सितं लिप्तम् कन्। विषाक्तबाणे।

लिप्सा स्त्री॰ लभ-सन्-अ। लाभेच्छायाम्।

लिम्पाक पु॰ लिप-आकन् पृ॰। जम्बीरभेदे(पातिलेबु)खरे च

लिवि(वी) स्त्री॰ लिप-इक् पृ॰ पस्य व॰ वा ङीप्। लिपिशब्दार्थे लिविकरादयोऽपि लिपिकराद्यर्थे। [अलिशत

लिश श्लेषे अल्पीभावे च दि॰ आ॰ अक॰ अनिट्। लिश्यते

लिश गतौ तु॰पर॰सक॰अनिट्। लिशति अलिक्षत।

लिह आस्वादने अदा॰ उभ॰ स॰अनिट्। लेढि लीढे। अलिक्षत् त। [नः। लीनः

ली श्लेषे दिवा॰आ॰अक॰अनिट्। लीयते अलेष्ट। निष्ठातस्य

ली श्लेषे क्र्या॰प्वा॰पर॰अक॰अनिट्। लिनाति अलैषीत्।

ली द्रावणे वा चु॰उभ॰सक॰पक्षे भ्वा॰प॰अनिट्। लाययति ते लापयति ते लयति अलीलयत् त अलीलपत् त अलैषीत्

लीढ त्रि॰लिह-आस्वादे क्त। आस्वादिते, स्पृष्टे च।

लीला स्त्री॰ ली-क्विप् लियं लाति अप्। केलौ,विलासे,शृङ्गारादिचेष्टायाम् क्रीडायाञ्च।

लीलावती स्त्री॰ लीला+अस्त्यर्थे मतुप् मस्य वः। विलासवत्यां स्त्रियां,भास्कराचार्यस्य दुहितरि,तत्कृते ग्रन्थभेदे,

लेपन न० लिप-ल्युट् । (लेपा) इति ख्याते व्यापारे । कर्मणि ल्युट् । तुरस्कनामगन्धद्रव्ये ।

लेलिहान पु० लिह-यङ्-कानच् पृ० यलोपः । सर्पे, पुनःपुनः लेहनकरे तारादिदेवतापूजाङ्गे अङ्गुल्यादिदर्शनविशेषविशेष रूपे मुद्राभेदे स्त्री० । तन्नश्चयं मुद्रर्दर्भिधाने ।

लेश पु० लिश-अल्पीभावे घञ् । अल्पे, लवे च ।

लेष्टु पु० लेप-तुन् । लोष्टे । [दन्तोष्ठ्व ।

लेष्टुघ्न पु० लोष्टुं हन्ति हन-क । लोष्टभेदके मुद्गरे । लेष्टुभे-

लेह पु० लिह-घञ् । आहारे, आस्वादे (चाटा) व्यापारभेदे च । भावे ल्युट् । लेहनमप्यत्र न० ।

लेहिन पु० लिह-इनन् । टङ्कणे (सोहागा) ।

लेह्य त्रि० लिह-ण्यत् । जिह्वया आस्वाद्ये । अमृते न० ।

लैङ्ग न० लिङ्गमधिकृत्य कृतो ग्रन्थः अण् । अष्टादशसु, महापुराणेषु तृतीये पुराणे, लिङ्गं तदाकारः अस्त्यस्याः फलेषु यस्याः अण् ङीप् । लिङ्गिनीवृक्षे । तस्येदमण् । लिङ्गसम्बन्धे त्रि० । [गतौ वा ठण् । लिङ्गादिभिः कल्पिते ।

लैङ्गिक त्रि० लिङ्गेनानुमापकचिह्नादिना आपादितकृत आ-

लोक दीप्तौ चु०उ०सक०सेट् । लोकयति ते अलूलुकत् त ।

लोक दर्शने भ्वा०आ०सक०सेट् । लोकते अलोकिष्ट । चङि न ह्रस्वः । अलुलोकत ।

लोक पु० लोक्यते ऽसौ लोक-घञ् । भुवनेषु, जने च ।

लोकपाल पु०लोकान् पालयति पा-णिच् अण् । लोकपालके नृपे, इन्द्रादिदिक्पाले, विनायकादिषु पञ्चसु । लोकरक्षकमात्रे त्रि० । लोकनाथादयोऽप्यत्र ।

लोकबान्धव पु०लोकानां बान्धवः सर्वकर्मप्रवर्त्तकत्वात् । सूर्ये

लोकमातृ स्त्री० लोकानां मातेव रक्षिका । लक्ष्म्याम् ।

लोकलोचन पु० लोकैर्लोच्यतेऽनेन लुच-ल्युट् । सूर्ये । ६त० । सूर्ये न० । लोकनेत्रादयोऽप्यत्र न० ।

लोकबाह्य त्रि० बहिश्चरति बहिस्-ष्यञ् टिलोपश्च ५त० । लोकबहिर्भूते । [चार्वाकमते ।

लोकायत न०लोकेषु आयतम् विस्तीर्णम् अनायाससाध्यत्वात् ।

लोकायतिक पु०लोकायतं तन्मतम् अस्त्यस्य ठन् । चार्वाके ।

लोकालोक पु० लोक्यतेऽसौ लोकः न लोक्यतेऽसौ कर्म० । स्वनामख्याते सूर्यकिरणसम्पर्कसीमापर्वते । तस्य च पार्श्वयोरातपानातपसम्बन्धात्तथात्वम् ।

लोकेश पु०६त० । ब्रह्मणि,रूपवतौ पारदे च । [न ह्रस्वः

लोच दीप्तौ चु०उ०सक०सेट् । लोचयति ते अलुलोचत् त चङि

लोच दर्शने भ्वा०आ०स०सेट् । चङिन ह्रस्वः । लोचते अलोचिष्ट

लोचक न० लोच-ण्वुल् । मांसपिण्डे, अविचारके, कज्जले, स्त्रीणां ललाटाभरणे, नीलवस्त्रे, कर्णपूरे,कदल्यां, धूर्व्वायां सर्पकञ्चुके च ।

लोचन न० लोच्यतेऽनेन करणे ल्युट् । नेत्रे । भावे ल्युट् । दर्शनक्रियायाम् । युच् । दर्शने आलोचने च स्त्री० टाप् ।

लोचनहिता स्त्री०६त० । तत्याञ्जने । (तुँते) । [स्वादाम्

लोचमस्तक पु० लोच्यते इति,लोचं मस्तकं यस्य । मयूरशि-

लोट(ड) उन्मादे भ्वा०पर०सक०सेट् चङि न ह्रस्वः । लोट-(ड)ति । अलोटी(डी)त् ।

लोणा स्त्री० लवणमेवास्ति मत्वर्थथीये अण् पृ० । क्षुद्राम्लिकायाम्, लोणाम्लायत्र स्त्री० । [पृ० । लवणले क्षारभेदे ।

लोणार न० लवणस्त्वक्षति कारणत्वेन ऋ-अण् उप० ।

लोत न० लू-तन् । चौरधने,लोप्त्रे,(वमाल) चिह्ने च । नेत्राम्बुनि, लवणे च पु० ।

लोत न० लू-त्रन् । चक्षुर्जले, चोरितधने च ।

लोध पु० रुध-अच् रस्य लः । स्वनामख्याते द्रुमे ।

लोध्र पु० रुध-रन् रस्य लः । (लोध) ख्याते द्रुमे ।

लोप पु० लुप-घञ् । विनाशे, छेदने, आकुलीभावे, व्याकरणोक्ते अदर्शनरूपे नाशे च । लोपयति स्त्रीणां रूपगर्वम् अच् । अगस्त्यमुनिपत्न्यां स्त्री० ।

लोपामुद्रा स्त्री०इदं राति रा-क कर्म०। अगस्त्यमुनिपत्न्याम्

लोप्त्र न० लुप-त्रन् । स्तेयधने स्तोलप्रोक्षति तलचे क्लीव ।

लोभ पु०लुभ-आकाङ्क्षायाम् घञ् । परद्रव्येषु अतिशयितामिलाषे

लोभिन् त्रि० लुभ-णिनि । परद्रव्येष अतिलिप्सावति ।

लोभ्य पु० लुभ-यत् । मुद्गे । लोभनीयपदार्थे त्रि० । [लाङ्गूले च

लोम न० लू-मन् । देहजाते केशाकारे रोमाख्ये द्रव्ये, तद्वति

लोमकर्ण पु० लोमबहुलः कर्णो यस्य मध्य० । शशके ।

लोमकूप पु० लोम्नां कूप इव । रोमाधारे विन्द्वाकारे, गर्त्ते

लोमघ्न न० लोमानि हन्ति हन-टक् (टाक) रोगभेदे ।

लोमन् लू-मनिन् । देहस्थे केशतुल्ये (रोया) पदार्थे ।

लोमपाद पु० लोमयुक्तौ पादावस्य । अङ्गदेशस्य नृपभेदे ।

लोमश पु० लोमानि बाहुल्येन सन्त्यस्य श । मुनिभेदे । लोमयुक्ते त्रि० काकजङ्घायां, जटामांस्यां, वचायाम्, शूकशिम्ब्याम् महामेदायां, वलायां च स्त्री० ।

लोमशकाण्डा स्त्री० लोमश इव काण्डोऽस्याः । कर्कट्याम् ।

लोमशपर्णिका स्त्री० लोमशानीव पर्णानि सन्त्यस्याः ठन् । माषपर्ण्याम् ।

लोमशपुष्पक पु० लोमशमिव पुष्पमस्य । शिरीषवृक्षे ।

लोमहर्षण न० लोम्नां हर्षणं हर्षजनकव्यापारइव उद्भेद इति यावत् । रोमाञ्चे । लोमानि हर्षयति उत्तमकथया हृष-णिच्-ल्यु व्यासशिष्ये सूतवंश्ये स्वनामख्याते पौराणिके ।
लोमहृत् पु० लोमानि हरति हृ-क्विप् तुक् च । हरिताले
लोल त्रि० लोड अच् डस्य लः । सतृष्णे, चञ्चले च जिह्वायां लक्ष्म्याञ्च स्त्री० । [चाङ्गेर्याम् (चुकोपालङ्ग) ।
लोलिका स्त्री० लोडयति सेवने दन्तान् लोड-ण्वुल् ।
लोलित त्रि० लुल-विमर्दे णिच् क्त । चालिते । [लोभयुक्ते ।
लोलुप(भ) त्रि० लुभ-यङ्-अच् पृ० भस्य वा पः । अति-
लोष्ट संहतौ भ्वा०आ०सक०सेट् । लोष्टते अलोष्टिष्ट ।
लोष्ट पु०न०लोष्ट-घञ् अच् वा । मृत्पिण्डे(ढेला) लौहमले च
लोष्टघ्न पु० लोष्टं हन्ति मर्द्दयति हन-क । लोष्टभेदने मुद्गरादौ । [लोष्टभेदनसाधके मुद्गरादौ ।
लोष्टभेदन पु० लोष्टं भिनत्ति विमर्द्दयति भिद-ल्यु ।
लोह पु० न० लू-विच् लौत्वं जहाति हा-क । धातुभेदे, धातुमात्रे सीसे च । अगुरुचन्दने न० ।
लोहकण्टक पु० लोहमिव कण्टको यस्य । मदनवृक्षे ।
लोहकार पु०लोहं तन्मयं शस्त्रादि करोति कृ-अण् । कर्मकारे ण्वुल् । लोहकारकोऽप्यत्र ।
लोहकिट्ट न० ६त० लौहमले । (लोहार गु) । [कांस्ये च ।
लोहचूर्ण न०६त० । (लोहाचुर) ख्याते पदार्थे । [धातुद्वयजे
लोहज न० लोहात् लोहाभ्यां वा जायते जन-ड । लोहमले,
लोहद्राविन् पु० लोहानि धातुद्रव्याणि द्रावयति द्रु-णिच् णिनि । टङ्कणे (सोहागा) । धातुद्रावके त्रि० ।
लोहपृष्ठ पु० लोहमिव कठिनं पृष्ठमस्य । कङ्कपक्षिणि ।
लोहमारक पु० लोहं मारयति जारयति मृ-णिच्-ण्वुल् । शालिमशाके । [त्रि०
लोहल पु०लोहमिव लाति ला-क । अव्यक्तवचने, लोहमयादिके
लोहवर न० लोहेषु सर्वधातुषु मध्ये वरम् । स्वर्णे ।
लोहश्लेषण न० लोहानि स्वर्णादीनि श्लेषयति योजयति श्लिष-णिच् ल्यु । टङ्कणे (सोहागा) । [धातौ रीत्यादौ ।
लोहसङ्कर न० लोहानां धातुद्रव्याणां सङ्करो यत्र । मिश्रित
लोहाभिसा(हा)र पु० लोहेन अभिसा(स्रि)यतेऽत्र सृ-(हृ)-वा घञ् । राज्ञां युद्धयात्रादौ शस्त्रनीराजनाविधौ
लोहित न० रुह-इतच् रस्य लः । कुङ्कुमे, रक्तचन्दने, हरिकुङ्कुमे,रुधिरे च । रक्तगोशाञ्जने, रक्तवर्णे च पु०तद्वति त्रि०
लोहितक न लोहितमिव कायति कै-क । पित्तले । लोहित+स्वार्थे कन् । पद्मरागमणौ, मङ्गलग्रहे च पु० ।
लोहितचन्दन न० कर्म० । कुङ्कुमे रक्तचन्दने च ।
लोहितपुष्पक पु० लोहितानि रक्तानि पुष्पाण्यस्य कप् । दाडिमवृक्षे ।
लोहितमृत्तिका स्त्री० कर्म० । गैरिके (गेरिमाटी) ।
लोहिता स्त्री० लोहित+अर्श आद्यच् । वराहक्रान्तायां, रक्तपुनर्नवायाञ्च । [कोकिले च । रक्तनेत्रवति त्रि० ।
लोहिताक्ष पु० लोहिते अक्षिणी यस्य षच् समा० । विष्णौ,
लोहिताङ्ग पु० लोहितमङ्गमस्य । मङ्गलग्रहे, काम्पिल्लवृक्षे च
लोहितायस् न० लोहितवर्णमिति इण् असुन् । ताम्रे ।
लोहितायस न०लोहितमयः अच् स० । ताम्रे, रक्तवर्णायो जातिभेदे च । [रक्तवर्णयुक्तायां स्त्रियाम् ।
लोहिनी स्त्री०लोहितवर्णा स्त्री ङीप् तस्य नश्च ।
लोहोत्तम न० लोहेषु धातुषूत्तमम् । स्वर्णे ।
लौकायतिक न० लोकायतं चार्वाकशास्त्रं वेत्त्यधीते वा ठण् । चार्वाकमताभिज्ञे । [लोकप्रसिद्धे च ।
लौकिक त्रि० लोके विदितः प्रसिद्धो वा ठण् । लोकविदिते
लौकिकाग्नि पु० कर्म० । विधानेनासंस्कृते वह्नौ ।
लौड उन्मादे भ्वा०पर०सक० सेट् ऋदित् न ह्रस्वः । लौडति अलौडीत् ।
लौह पु० लोहमेव स्वार्थे अण् । (लोया) धातुभेदे ।
लौहज न० लोहाज्जायते जन ड । मण्डूरे ।
लौहभाण्ड पु० लोहस्य विकारः अण् कर्म० । (हामनदिस्ता) लौहमये पात्रभेदे ।
लौहमल न० लोहस्य मलम् कर्म० । लोहकिट्टे ।
लौहित्य न०लोहितस्य भावः ष्यञ् स्वार्थे ष्यञ् वा । रक्तवर्णे, नदीभेदे स्त्री० । 'तीर्णलौहित्ये' इति रघुः ।
ल्पी श्लेषे क्र्या०धा०पर०सक०अनिट् । ल्पिनाति अल्पैषीत् ।
ल्वी गतौ क्र्या०धा०प०सक० अनिट् । ल्विनाति अल्वेषीत् ।

## व

व पु० वा-ड । वायौ, राहौ, मन्त्रणे, सान्त्वने, कल्याणे वलधनि, वसतौ, समुद्रे, व्याघ्रे, वसने, शालूके, वन्दने च वरुणे पु०न० । सादृश्ये अव्य० 'मणी वोष्ट्रस्य लम्बेते' इति
वंश पु० वम-श नि० नुम् । पुत्रपौत्राद्यपत्यवर्गे तृणजातिभेदे (बांश) पृष्ठावयवे, वर्गे, इक्षौ सालवृक्षे च । वाद्यभेदे स्त्री० गौ०ङीप् । 'वंशीकृतेन वद्धियेनेति वृन्दावनचम्पूः ।
वंशकर्पूररोचना स्त्री० कर्पूरमिव रोचते रुच-ल्यु ६त० । वंशरोचनायाम् ।

वंशक्षीरी स्त्री०वंशस्य क्षीरमिवास्यस्य अच् गौरा० ङीष् । वंशरोचनायाम् ।
वंशज पु० वंशात् जायते जन-ड । वंशदलजाते यवाकारे द्रव्ये । सत्कुलजाते त्रि० । वंशरोचनायां स्त्री०टाप् ।
वंशतण्डुल पु० ६त० । वेणुजाते तण्डुलाकारे पदार्थे ।
वंशधर त्रि०वंशं धरति । कुलाविच्छेदकारके वंशवर्द्धनीोप्यत्र ।
वंशनेत्र न० वंशस्येव नेत्रमस्य । इक्षुमूले ।
वंशपत्र पु० वंशस्य पत्रमिव पत्रमस्य । नलनामके तृणे ६त० वंशदले न० । नाडीहिङ्गौ स्त्री०गौ०ङीष् । स्वार्थे कन् तत्रैव
वंशपत्रक न० । वंशपत्रमिव कन् । हरिताले ।
वंशपत्रपतित न० षण्णदशाक्षरपादके छन्दोभेदे ।
वंशपीत पु० वंशस्तत्पत्रमिव पीतः । कणगुग्गुलौ ।
वंशपुष्पा स्त्री०वंशस्य पुष्पमिव पुष्पमस्याः । सहदेवीलतायाम्
वंशपूरक न० वंशस्येव पूरकं यस्य । इक्षुमूले ।
वंशरो(लो)चना स्त्री० वंशेषु रोचते रुच-ल्यु वा रस्य लः । वंशपर्व्वस्थिते श्वेतवर्णे कर्पूराकारे द्रव्ये । (वंशलोचन) ।
वंशशर्करा स्त्री० वंशस्य शर्करेव । (वंशलोचन) पदार्थे ।
वंशस्तनित न० । द्वादशाक्षरपादके छन्दोभेदे ।
वंशस्थविल न० । द्वादशाक्षरपादके छन्दोभेदे ।
वंशाग्र क० वंशस्य अग्रं मूलम् । वंशाङ्कुरे ।
वंशाङ्कुर पुं० ६त० । (कोंड़) इति ख्याते पदार्थे ।
वंशिक न० वंशोऽस्त्यत्र ठन् वंशइव वा कन् । अगुरुचन्दने
वंशीधर पु० वंशीं वंशजवाद्यं धरति धृ-अच् । श्रीकृष्णे ।
वंश्य त्रि० वंशे सत्कुले जातः यत् । सत्कुलजाते । [अवङ्किष्ट
वक कौटिल्ये अक० गतौ सक०भ्वा०आ०सेट् इदित् । वङ्कते
वक पु० वकि-अच् पृ० नलोपः । स्वनामख्याते विहगे, स्वनामख्याते पुष्पवृक्षे,कुवेरे, राक्षसभेदे, यो भीमेन हतः । औषधादिपाचनयन्त्रभेदे, श्रीकृष्णेन हते दैत्यभेदे च ।
वकजित् पु० वकं जितवान् जि-क्विप् उप०स० । श्रीकृष्णे भीमसेने च वकान्तकादयोप्यत्र ।
वकधूप पु० वक इव शुभ्रो धूपः । इकधूपे ।
वकपञ्चक न० । कार्त्तिकशुक्लपक्षैकादश्यादितिथिपञ्चके ।
वकपुष्प पु० वक इव कुटिलं पुष्पमस्य । स्वनामख्याते पुष्पवृक्षे
वकवृत्ति पु० वकस्येव स्वार्थपरा वृत्तिश्चेष्टा यस्य । 'अर्वाग्दृष्टि र्नैकृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकवृत्तिरुदाहृत' इत्युक्तलक्षणे परवञ्चके जने ।
वकव्रतधर पु० वक इव व्रतं धारयति धृ-अच् । 'अधोदृष्टि र्नैकृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च वकव्रतधरो द्विज' इत्युक्ते स्वार्थसाधनतत्परे वञ्चके विप्रादौ
वकव्रतिन्(क) पु०वकव्रत+अस्त्यर्थे इनि ठन् वा । वकव्रतधरे
वकुल पु०वकि-उलच् नलोपः । स्वनामख्याते पुष्पवृक्षे । कट्कायां स्त्री०टाप् । काकोल्यां ङीष् पृ० । वकुलोपि वकुले पु
वक्क गतौ भ्वा० आत्म०सक०सेट् । वक्कति अवक्किष्ट ।
वक्तव्य न० वच-तव्य । कुत्सिते, हीने, इष्टे च 'दिवा वक्तव्यता पात्रे, इति स्मृतिः । कथनीये त्रि० । भावे क्त । कथने
वक्तृ त्रि० उचितं वक्तु वक्ति वच-तृच् । उचितवक्तृवादिनि
वक्त्र न० वक्त्यनेन ष्ट्रन् । मुखे,तगरमूले,वसनभेदे,छन्दोभेदे
वक्त्रभेदिन् पु० वक्त्रं भिनत्ति भिद-णिनि । तिक्तरसे । मुखविदारके त्रि० । [नागरङ्गे ६त० । मुखगन्धे
वक्त्रवास पु० वक्त्रं वासयति सुरभीकरोति वासि-अण्
वक्त्रशोधिन् पु० वक्त्रं शोधयति शुध-णिच्-णिनि । जम्बीमुखशोधके ताम्बूलादौ त्रि० । स्त्रियां ङीप् ।
वक्त्रासव पु० वक्त्रासासव इव । अधररसे ।
वक्र न० वकि-रन् पृ०नलोपः । नदीवङ्के । शनैश्चरे, मङ्गलग्रहे, रुद्रे, त्रिपुरासुरे, पर्व्वते, कुटिलगतौ च पु० । तद्वति त्रि 'राहुकेतू सदा वक्रा'विति ज्योतिषम् ।
वक्रकण्ट पु० वक्रः कुटिलः कण्टः कण्टकोऽस्य । बदरवृक्षे ततः संज्ञायां कन् । खदिरवृक्षे ।
वक्रखड्ग पु० कर्म० । करवाले ।
वक्रग्रीव पु०वक्रा ग्रीवा यस्य । उष्ट्रे । कुटिलग्रीवावति त्रि०
वक्रपुच्छ पु० वक्रं पुच्छं यस्य । कुक्कुरे वक्रलाङ्गूलादयोप्यत्र
वक्रपुष्प न० वक्राणि पुष्पाण्यस्य । वकवृक्षे, पलाशवृक्षे च
वक्रशल्या स्त्री०वक्रं शल्यमिव पत्रादि यस्याः । कुटुम्बिनीवृक्षे
वक्राङ्ग पु०वक्राण्यङ्गान्यस्य । हंसे । कुटिलावयववति त्रि०क कुटिलदेहे न० ।
वक्रिम न० वक्रस्य भावः इमनिच् । कौटिल्ये 'वर्धितवक्रिम प्रेक्षितमिति मालतीमाधवम् पृ० अदन्तोप्यत्र ।
वक्रोक्ति स्त्री०कर्म० । कुटिलोक्तौ. 'वक्रोक्तिः वाक्यजीवितमित्यलङ्कारोक्ते काव्याङ्गे, काकुवचने च ।
वक्ष रोषे भ्वा०पर०सक० सेट् । वक्षति अवक्षीत् ।
वक्षस् न० वह-असुन् सुट् च । हृदये उरसि ।
वक्षः(क्ष)स्थल न०वक्षः स्थलमिव वा विसर्गलोपः । मयस्तवक्षसि
वक्षोज पु० वक्षसि जायते जन-ड । स्तने 'वक्षोजपानकृदि'-त्युद्भटः । [अवक्षीत् अवाक्षीत्
वक्षोरुह पु०वक्षसि रोहति रुह-क । स्तने । [प्ययम् वक्षति
वख गतौ भ्वा०पर०सक०सेट् इदित् । वङ्खति अवङ्खीत् अनिद-

वग गतौ भ्वा०प०सक०सेट् इदित्। वङ्गति अवङ्गीत्।
वग खञ्जे भ्वा०पर०अक०सेट् इदित्। वङ्गति अवङ्गीत्।
वगाह पु० अव+गाह-घञ् अवातो लोपः। अवगाहने।
वघ गतौ, निन्दायाम् आरम्भे च सक०जवे अक०भ्वा०आ०सेट् इदित्। वङ्घते अवङ्घिष्ट।
वङ्क पु० वकि-घञ्। नदीवक्रे। पल्ययने (पालान) स्त्री०टाप्।
वङ्ग न०वगि-अच्। धातुभेदे (राङ्) 'रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगं प्रिये! वङ्गदेश इति प्रोक्त' इत्युक्ते देशभेदे पु० ब०व०। चन्द्रवंश्ये नृपभेदे पु०।
वङ्गज न० वङ्गात् जायते जन-ड। सिन्दूरे, वङ्गदेशजाते त्रि०
वङ्गशुल्वज न० वङ्गशुल्वाभ्यां रङ्गताम्राभ्यां जायते जन-ड। रङ्गताम्रमितेश्मिश्रांसे धातौ।
वङ्गसेन पु० वङ्गमिव शुभ्रा सेना पुष्पमस्य। वकवृक्षे।
वङ्गारि पु० ६त०। हरिताले तस्य वङ्गधातुजारणात्तथात्वम्
वङ्क्षण पु० वच-ल्युट् पृ० नुम्। जरुसन्धौ (कुचकी)
वच सन्देशे चु०उभ०सक०सेट्। वाचयति ते अवीवचत् त।
वच कथने अदा०द्विक०पर०अनिट्। वक्ति। अवोचत्। वक्ता।
वचन न० वच-ल्युट्। कथने, वाक्ये, शुण्ठ्याम्. व्याकरणोक्ते संख्यार्थके सुप्तिङ्रूपे प्रत्यये च।
वचनग्राहिन् त्रि० वचनं गृह्णाति तदनुसारेणाचरति ग्रह-णिनि। वचनेस्थिते वशीभूते।
वचनीय त्रि० वच-अनीयर्। कथनीये, निन्दनीये लोकापवादे च 'वचनीयमिदं व्यवस्थितमि'ति कुमारः।
वचनेस्थित त्रि० वचने वाक्ये तदुपदिष्टाचारे तिष्ठति स्था-क्त अलुक्स०। वाक्यप्रतिपालके वशीभूते।
वचस् न० वच-असुन्। वाक्ये।
वचसांपति पु० ६त० अलुक्स०। वृहस्पतौ। [पालके वश्ये।
वचस्कर त्रि० वचः करोति कृ-अच् कस्कादि०। वाक्यप्रति-
वचा स्त्री० वच-अच्। (वच) इति ख्याते द्रव्ये।
वज गतौ भ्वा०पर०सक०सेट्। वजति। अवाजीत्-अवजीत्।
वज मार्गसंस्कारे गतौ च चुरा०उभ०सक०सेट्। वाजयति ते अवीवजत् त।
वज्र पु०न० वज-रन्। हीरके, इन्द्रास्त्रभेदे च तच्च दधीचिमुन्यस्थितोजातम्। बालके, धात्र्याम्, काञ्जिके, वज्रपुष्पे, लौहभेदे अभ्रभेदे, ज्योतिषोक्ते विष्कुम्भादिषु सप्तविंशतौ योगेषु मध्ये योगभेदे च न०। कोकिलाक्षवृक्षे, श्वेतकुशे श्रीकृष्णस्य प्रपौत्रे यदुवंश्ये, नृपभेदे च पु०।
वज्रचर्म्मन् वज्रमिव कठिनं चर्म्म यस्य। गण्डके खड्गिनि।
वज्रतुण्ड पु० वज्राकारं तुण्डमस्य। गणेशे, गरुडे, मशके, गृध्रे च। [वज्रदशनादयोप्यत्र
वज्रदन्त पु० वज्रमिव कठिनोदन्तोऽस्य। शूकरे, मूषिके च
वज्रद्रु पु० वज्राकारोद्रुः। स्नुहीवृक्षे, वज्रद्रुमादयोप्यत्र।
वज्रधर पु० वज्रं धरति धृ-अच्। इन्द्रे वज्रभृदादयोप्यत्र।
वज्रनिर्घोष पु०६त०। वज्रजनितशब्दादौ, वज्रनिष्पेषोप्यत्र।
वज्रपाणि पु० वज्रं पाणौ यस्य। इन्द्रे, वज्रहस्तादयोप्यत्र।
वज्रपुट न०वज्रमिव कठिनं पुटमस्य। औषधपाचनपात्रभेदे
वज्रपुष्प न० वज्राकारं पुष्पम्। तिलपुष्पे।
वज्रपुष्पा स्त्री० वज्राकृति पुष्पं यस्याः। शतपुष्पायाम्।
वज्रमय त्रि० वज्रात्मकम् मयट्। अतिकठिने।
वज्रमूली स्त्री०वज्रमिव कठिनं मूलमस्याः ङीप्। माषपर्ण्याम्
वज्रवल्ली स्त्री० वज्रमिव कठिना वल्ली। (हाड़जोड़ा) अस्थिसञ्चारलतायाम्।
वज्रवीजक पु० वज्रमिव कठिनं वीजमस्य। लताकरञ्जे।
वज्रवृक्ष पु० वज्रमिव कठिनो वृक्षः। सेहुण्डवृक्षे (सेओड़ा)
वज्रा स्त्री०वज-रक्। गुडूच्याम्, स्नुह्याञ्च, स्नुह्यां ङीबन्तोऽपि
वज्राङ्गी स्त्री० वज्रमिवाङ्गं यस्याः। गवेधुका (गड़गडे) धान्यभेदे (हाड़जोड़ा( लताभेदे च।
वज्रास्थिशृङ्खला स्त्री० वज्रजनकमस्थीव शृङ्खला बन्धन यस्याः। कोकिलाक्षवृक्षे।
वज्रिन् पु० वज्रमस्त्यस्य इनि। इन्द्रे। [प्रतारके च त्रि०
वञ्चक पु० वनुच-णिच्-ण्वुल्। शृगाले गृहबभ्रौ च। खले,
वञ्चन न० वनुच-ल्युट्। प्रतारणे अन्यथास्थितस्य वस्तुनोऽन्यथारूपेण कथनादिनाऽन्यमोहोत्पादने। युच्। वञ्चनाप्यत्र स्त्री०
वञ्चुक त्रि० वनुच-उकञ्। वञ्चनाशीले। खल। अप्यतार्थे।
वञ्जुल पु० वनुच-उलच् पृ० चस्य जः। तिनिशवृक्षे, अशोकवृक्षे, वेतसवृक्षे, स्थलपद्मवृक्षे पक्षिभेदे च। वक्रे त्रि०।
वञ्जुलद्रुम पु० वञ्जुलाख्यः द्रुमः। अशोकवृक्षे।
वञ्जुलप्रिय पु०वञ्जुलं वक्रं प्रीणाति प्री-क। वेतसे। [टद् त
वट वेष्टने भागे च अद०चु०उभ०सक०सेट्। वटयति ते। अवव-
वट वेष्टने भ्वा०पर०सक०सेट्। वटति। अवटीत्-अवाटीत्।
वट विभाजने वा चु० उभ० पक्षे भ्वा०पर०सक०सेट् इदित्। वण्टयति ते वण्टति। अववण्टत् त अवण्टीत्। [अवटीत्
वट कथने भ्वा०पर०द्विक०सेट् घटा०। वटयति। अवाटीत्-
वट स्तेये सौ०पर०सक०सेट् इदित्। वण्टति अवण्टीत्।
वट पु०वट-अच्। स्वन मख्याते वृक्षे गणनिर्मितसलौ च। (बेटे)
वटक पु० वट-कुन्। पिष्टकभेदे (वड़ा) [लतायां स्त्री०ङीष्

**वटपत्र** पु० वटस्येव पत्त्रमस्य। सितार्कवृक्षे, पाषाणभेदी-
**वटी** स्त्री० वट-अच् गौरा ङीप्। गोलाकारे (वड़ी) पदार्थे स्वार्थे कन् ह्रस्वः। वटिकाप्यत्र स्त्री०।
**वटु** पु० वट-उ। माणवके, ब्रह्मचारिणि च।
**वटुक** पु० वट-उक। बालके, भैरवभेदे च।
**वठ** असहायकरणे भ्वा०आत्म०सक०सेट् इदित्। वण्ठते अवण्ठिष्ट
**वठ** सामर्थ्ये भ्वा०पर०अक०सेट्। वठति। अवाठीत्-अवठीत्।
**वठर** पु० वठ-अरन्। मूर्खे, अम्बष्ठे च। शठे, मन्दे च त्रि०।
**वड** विभजनेचु०उभ०सक०सेट्इदित्। वण्डयति ते। अववण्डत् त
**वड** वेष्टने विभागे च भ्वा०आ०स०सेट् इदित्। वण्डते अवण्डिष्ट
**वड** आरोहणे भ्वा०पर०सक०सेट्। वडति। अवाडीत्-अवडीत्
**वडभि(भी)** स्त्री० वड्यते आरुह्यतेऽत्र वड-अभि वा ङीप् (छदनि) गृहचूडायाम् प्रासादाग्रस्यगृहे च (चिलेघर)।
**वडा** स्त्री० वड-अच्। स्वनामख्याते पिष्टकभेदे।
**वडिश** न०वड इन् वडिं श्यति शो-क। मत्स्यधारणार्थे वक्रलौह कण्टकयुक्ते पदार्थे,'वडिशेन भक्षीरिवाखानि'ति वृन्दावनचम्पूः
**वड्र** त्रि० वल-रक् लस्य डः। वृहति। [चण्डिमा हस्वः
**वण** शब्दे भ्वा० पर०सक०सेट्। वणति अवाणीत्-अवणीत्।
**वण्ट** विभाजने अद०चु०उभ०सक०सेट्। वण्टयति ते अववण्टत् त
**वण्ट** पु० वण्ट-अच्। भागे, दात्रादेः धारणस्थाने (बांट) अकृतोद्वाहे त्रि०। (डेङ्गो)।
**वण्टक** पु० वण्ट-घञ्। स्वार्थे कन्। भागे। ण्वुल्। विभाजके
**वण्ठ** त्रि० वण-ठ तस्य नेत्त्वम्। खर्वे (वेंटे)
**वण्ड** त्रि०वडि-अच्। अकृतोद्वाहे, हस्ताद्यङ्गविकले (वेंडे) च
**वत्** अव्य० वा-डति। सादृश्ये वतिप्रत्ययान्तोप्यत्रार्थे अव्य०।
**वत** अव्य० वन-क्त। खेदे,अनुकम्पायाम्,हर्षे,विस्मये,आमन्त्रणे च
**वतंस** पु०अव+तनस-घञ् अवाल्लोपः। कर्णभूषणभेदे, शेखरे, शिरोभूषणे, भूषणमात्रे च।
**वतण्ड** पु०अव+तडि अच् अवाल्लोपः। मुनिभेदे। [स्त्रियाम्
**वतोका** स्त्री०अवगतं तोकं यस्याः अवाल्लोपः। अपत्यहीनायां
**वत्स** न० वस-स। वक्षःस्थले। गवादिशिशौ त्रि०। वत्सरे पु०
**वत्सक** न०वत्सइव इवार्थे कन्। पुष्पकासीसे। कुटजे, इन्द्रयवे च
**वत्सकबीज** न० वत्सस्य कुटजस्य बीजम्। इन्द्रयवे।
**वत्सतर** पु०स्त्री० क्षुद्रः वत्सः तरप्। क्षुद्रवत्से, अप्राप्तदमन काले गवादौ। स्त्रियां ङीप्। वत्सतरी। [विषभेदे।
**वत्सनाभ** पु०वत्सान् पशूशिशून् नभ्यति हिनस्ति नभ-अण्।
**वत्सपत्तन** न० वत्सस्य वत्सराजस्य पत्तनम्। उत्तरदेशस्थायां कौशाम्ब्यां नगर्याम्।

**वत्सपाल** पु० वत्सान् पालयति पाल-अण्। श्रीकृष्णे।
**वत्सर** पु० वस-सरन्। द्वादशमासात्मके काले। [वत्सरी
**वत्सराज** पु०चन्द्रवंश्ये नृपभेदे।'वत्सराजचरितमि'ति रत्ना-
**वत्सरान्तक** पु० वत्सरस्यान्तं करोति अन्त+णिच्-ण्वुल्। फाल्गुनमासे वत्सरस्य चैत्रादिकत्वात् फाल्गुनस्य तद-न्तकालत्वम्। [तद्वति त्रि०।
**वत्सल** त्रि० वत्सं लाति ला-क। स्नेहयुक्ते वात्सल्ये रसे पु०।
**वत्सादनी** स्त्री०वत्सस्यादनीव आकृतिरस्य पत्रसमा०। गोडुम्बायाम् (गोमक)। [गुडूच्याम्।
**वत्सादनी** स्त्री० वत्सैरद्यते प्रियत्वेन अद-ल्युट् ङीप्।
**वद** स्तुत्ये अक० अभिवादने सक० भ्वा०आ० सेट् इदित्। वन्दते अवन्दिष्ट। [अवदिष्ट
**वद** वाक्ये सन्देशे च भ्वा०उभ०सक०सेट्। वदति ते अवादीत्
**वद** वाचि भ्वा०पर०सक०सेट्यजा०। वदति अवादीत् उवाद।
**वद** वाक्ये सन्देशे चसक०चुरा०उभ०सेट्। वादयति ते अवीवदत्
**वद** त्रि० वदति वद-अच्। वक्तरि। [कथने न०
**वदन** न० उद्यतेऽनेन वद-करणे ल्युट्। मुखे। भावे ल्युट्।
**वदा(द)न्य** पु० वद-अन्यच् वा दीर्घः। भूरिदानशीले।
**वदाम** न० वद-आमन्। (वदाम) फलभेदे।
**वदाल** पु० वद-आल। पाठीनमत्स्ये (वोयाल) स्वार्थे कन् तत्र
**वदावद** पु० अत्यन्तं वदति वद-अच् नि०। बहुवक्तरि।
**वधू** स्त्री० उह्यते पितृगेहात् पतिगृहं वह-ऊ धुकच्। भार्यायाम् नवोढायां पुत्रजायायाम् स्नुषायां शट्याञ्च।
**वधूजन** पु० कर्म० नारीजने। [इकूलेति भाषापरि०
**वधूटी** स्त्री० अल्पा वधूः टी अल्पवयस्कायाम् नार्यां 'गोपवधूटी
**वन** सेवने सक०शब्दे अक०भ्वा०पर०सेट्। वनति अवानीत्-अवनीत्। [अवनीत्। वनः वानः। वनयति।
**वन** व्यापारे भ्वा०पर०सक०सेट्ज्व०घटा०। वनति अवानीत्-
**वन** याचने द्विक०तना०आ०सेट् क्त्वा वेट्। वनुते अवनिष्ट।
**वन** उपकारे उपतापे च सक०शब्दे अक०वा चु०उ०पक्षे भ्वा० प० सेट्। वानयति ते वनति। अवीवनत् त। अवनीत्-अवानीत्।
**वन** न०स्त्री० वन-अच्। वृक्षसमुदायात्मके अरण्ये। स्त्रीत्वे ङीप्। 'सुवनी समवदत् पिकापिके'ति नैषधम् जले, निवासे, आलये च।
**वनकदली** स्त्री० ७त०। काष्ठकदल्याम्।
**वनकन्द** पु० वनजातः कन्दः। अरण्यजाते सूरणे।
**वनकार्पासी** स्त्री०वनोद्भवा कार्पासी। (वनकापास) क्षुपभेदे

वनकोलि पु॰ वनोद्भवः कोलिः । (वनकुल) वृक्षे ।

वनचन्दन न॰ वनस्थं चन्दनम् । अगुरुचन्दने ।

वनचन्द्रिका स्त्री॰ वने चन्द्रिकेव प्रकाशकत्वात् शुभ्रत्वाच्च । मल्लिकायाम् ।

वनचम्पक पु॰ ७त॰ (वनचांपा) चम्पकभेदे ।

वनज न॰ वने जलेऽरण्ये वा जायते जन-ड । पद्मे । मुस्तकभेदे, वनशूरणे च पु॰ । अश्वगन्धायां, गन्धपत्रायां, वनकार्पास्यां, मुद्गपर्ण्यां च स्त्री॰ । वनजातमात्रे त्रि॰ ।

वनतिक्त पु॰ वनेषु वनजातेषु मध्ये तिक्तः । हरीतक्याम्, पाठायां (आकनादि) च स्त्री॰ । स्वार्थे कन् तत्रैव ।

वनदीप पु॰ वनस्य दीप इव । वनचम्पके ।

वनपल्लव पु॰ वनमिव निविडः पल्लवोऽस्य । शोभाञ्जने ।

वनपुष्पा स्त्री॰ वनमिव संहतं पुष्पं यस्याः । शतपुष्पायाम् ।

वनपूरक पु॰ पूरकः बीजपूरकः पूर्वपदलोपः वनोद्भवः पूरकः । वनबीजपूरे । [म्रियमाणे त्रि॰ । त्वचे न॰ ।

वनप्रिय पु॰ वनं वनस्थं प्रीणाति प्री-क । कोकिले, अरण्य-

वनभुज् पु॰ वनं भुङ्क्ते भुज॰क्विप् । ऋषभे, तन्नामौषधे च ।

वनमक्षिका स्त्री॰ वनोद्भवा मक्षिका । दंशे, कीटभेदे (डांश)

वनमल्ली स्त्री॰ वनोद्भवा मल्ली । अरण्यमल्लिकायाम् ।

वनमाला स्त्री॰ 'आजानुलम्बिनी माला सर्वर्त्तुकुसुमोज्ज्वला मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिते'त्युक्तायां मालायाम्

वनमालिन् पु॰ वनमालाऽस्त्यस्य इनि । श्रीकृष्णे, वाराहीलतायां स्त्री॰ ङीप् । [स्त्री॰ गौरा॰ङीष् ।

वनमुद्ग पु॰ वनोद्भवः मुद्गः । मुद्गभेदे (मुगानि) । मुद्गपर्ण्यां

वनमूर्द्धजा स्त्री॰ वनस्य मूर्द्धजं शृङ्गमिवास्त्यस्याः अच् । (काकड़ाशिङ्गा) कर्कटशृङ्ग्याम् ।

वनमोचा स्त्री॰ वनोद्भवा मोचा । काष्ठकदल्याम् ।

वनलक्ष्मी स्त्री॰ वनस्य लक्ष्मीरिव तदधिष्ठानत्वात् । कदल्याम्

वनवर्वर पु॰ वनोद्भवः वर्व्वरः । कृष्णार्जके । (वनवावुइ) वृक्षे

वनवासिन् पु॰ वनं वासयति सुरभीकरोति वासि-णिनि । मुष्कवृक्षे, वाराहीकन्दे, शाल्मलीकन्दे, नीलमहिषकन्दे, ऋषभनामौषधे च । वने वसति वस-णिनि । वनवासकर्त्तरि त्रि॰ । [बीजपूरे ।

वनवीज पु॰ वीजो बीजपूरकः उत्तरपदलोपः ६त॰ । वन-

वनवृन्ताकी स्त्री॰ वनस्य वृन्ताकी वार्त्ताकी । वृहत्याम् ।

वनव्रीहि पु॰ वनस्य व्रीहिः । नीवारे (उड़िधान) ।

वनशूकरी स्त्री॰ वनस्य शूकरीव रोजयत्वात् । कपिकच्छ्वाम् । ६त॰ । वनशूकरयोषिति । वनवराहे पु॰ ।

वनशृङ्गाट पु॰ वनस्य शृङ्गाट इव कण्टकावृतः । गोक्षुरे । स्वार्थे कन् । तत्रैवार्थे ।

वनशोभन न॰ वनं जलं शोभयति शुभ-णिच ल्यु । पद्मे ।

वनसङ्कट पु॰ सम्+कट-अच् ६त॰ । मसूरे ।

वनसरोजिनी स्त्री॰ वनस्य सरोजिनी पद्मिनीव शोभाकरत्वात् । वनकार्पास्याम् ।

वनस्पति पु॰ वनस्य पतिः नि॰ सुट् । पुष्पं विना जायमानफले अश्वत्थादौ वृक्षे । [स्वार्थे कन् । तत्रैव ।

वनहास पु॰ वनस्य हास इव प्रकाशकत्वात् । काशतृणे

वनाखाक पु॰ अव+नख-उकञ् अवालोपः । शशके ।

वनाम्रल पु॰ वनस्याम्रल इव । करमर्द्दे ।

वनाम्र पु॰ वनस्य आम्र इव । कोशाम्रे ।

वनायु पु॰ वन-आयुच् । प्रशस्तघोटकोद्भवदेशभेदे (आरव) ।

वनायुज पु॰ वनायुदेशे जायते जन-ड । प्रशस्तघोटके । (आरवि)

वनारिष्टा स्त्री॰ वनस्य न रिष्टं यस्याः । वनहरिद्रायाम् ।

वनालिका स्त्री॰ वनमलति भूषयति अल-ण्वुल् । हस्तिशुण्डीलतायाम् ।

वनिता स्त्री॰ वन-क्त नि-इट् । योषिति, अनुरक्तायां स्त्रियाञ्च

वनिन् पु॰ वनम् आश्रयतयाऽस्त्यस्य इनि । वानप्रस्थाश्रमयुक्ते

वनीयक स्त्री॰ वन-इन् आत्मनो वनिं याचनमिच्छति क्यच्-ण्वुल् । याचके । पृ॰ यलोपः । वनीकोऽप्यत्र ।

वनेक्षुद्रा स्त्री॰ ७त॰ अलुक्स॰ । करञ्जे । [व्याघ्रादौ

वनेचर पु॰ वने चरति चर-अच् अलुक् स॰ । अरण्यचारिणि

वनेसर्ज्ज पु॰ सृजति-सृज-अच् ७त॰ अलुक्स॰ । असनवृक्षे ।

वनोद्भवा स्त्री॰ वन एव उद्भवति उद्+भू-अच् । वनकार्पास्याम् । वनजाते त्रि॰ । त्रि॰

वनौकस् पु॰ वनमेव ओकः स्थानं यस्य । वानरे । वनवासिनि-

वन् च प्रतारणे भ्वा॰पर॰सक॰ सेट् क्त्वा वेट् । वञ्चति अवञ्चीत्

वन्दन न॰ वदि-ल्युट् । स्तवने, प्रणामे च । युच् । वन्दनाऽप्यत्र स्त्री॰

वन्दनीय त्रि॰ वदि-अनीयर् । नमनीये, स्तवनीये च पीतभृङ्गराजे पु॰ । गोरोचनायां स्त्री॰ ।

वन्दा स्त्री॰ वदि-कर्म्मणि घञ् । (परगाछा) लताभेदे ।

वन्दाका स्त्री॰ वदि-आकन् । वन्दायाम् । गौ॰ङीष् वन्दाकीत्यप्यत्र

वन्दारु त्रि॰ वदि-आरु । वन्दनशीले । [(कपर्दी) वन्दने च

वन्दि(न्दी) स्त्री॰ वदि-इन् वा ङीप् । कारावद्धमनुष्यादौ

वन्दिपाठ पु॰ वन्दिं स्तुतिं पठति पठ-अण् । स्तुतिपाठके ।

वन्दिन् पु॰ वन्दते स्तौति णिनि । राजादेः स्तुतिपाठके ।

वन्द्य त्रि॰ वदि-यत् । वन्दनीये । गोरोचनायाम् स्त्री॰ ।

**वन्य** न० वने भवः यत् । त्वचे,(दारचिनि) । वनसूरणे वाराहीकन्दे, दैवनले च पु० । वनजातमात्रे त्रि० । वनानां जलानां समूहः यत् । जलसमूहे स्त्री० ।

**वप** वीजवपने, तन्तुवपने मुण्डने च सक०भ्वा० उभ० अनिट् यजा० । वपति-ते अवाप्सीत् अवप्त । उप्तिमः ।

**वपन** न० वप-ल्युट् । केशमुण्डने वीजाधाने, तन्त्वाधाने च

**वपनी** स्त्री० उप्यतेऽनया अत्र वा वप-ल्युट् ङीप्। नापितास्त्रे, तन्तुशालायां, (तान्तघर) यन्त्रभेदे (माकु) च ।

**वपा** स्त्री० वप-अच्। मेदसि (चरवि) छिद्रे च। 'वपाया हविष इति श्रुतिः । [वप-उसि । शरीरे, प्रशस्ताकारे च ।

**वपुस्** न० उप्यन्ते देहान्तरभोगसाधनवीजीभूतानि कर्म्माण्यत्र

**वपुष्टमा** स्त्री० अतिशयेन वपुः प्रशस्ताकृतिः तमप् मत्वम् । मल्लचारिण्याम् लतायाम् ।

**वप्तृ** पु० वप-तृच् । जनके, क्षमीवले च। वीजादिवापके त्रि० ।

**वप्र** पु० न० उप्यतेऽत्र रन् । दुर्गनगरादौ परिखाया उद्धृतमृत्तिकास्तूपे । क्षेत्रे, रेणौ, तटे, सीसके च न० । जनके, प्राचीरे, प्रजापतौ च पु० । मञ्जिष्ठायाम् स्त्री०।

**वभ्र** गतौ भ्वा०पर०सक० सेट् । वभ्रति अवभ्रीत् ।

**वम** उद्गारे भ्वा० पर०सक० सेट् ज्वला०। वमति अवमीत् । टु वमथुः । ण वामः ।

**वमथु** पु० वम-अथुच् । वमने ।

**वमन** न० वम-ल्युट् । मर्द्दने, अर्द्दने, आहुतौ, अधिकनिस्सारणे च 'स्वर्गाभिष्यन्दवमन'मिति कुमारः। शणे पु० जलौकायां स्त्री० गौ० ङीप् ।

**वमि** स्त्री० वम-इन् । छर्द्दने । वह्नौ पु० । धूर्त्ते त्रि० ।

**वमित** पु० वम-णिच्-क्त । क्षतोद्गारे ।

**वय** गतौ भ्वा० आ० सक० सेट् । वयते अवयिष्ट ।

**वयस्** न० अज-असुन् वीभावः । विहगे, वाल्याद्यवस्थायाम् 'वयोतिपातोद्गतवाते'ति नैषधम् यौवने च ।

**वय(यः)स्थ** पु०स्त्री० वयसि यौवने तिष्ठति स्था-क । तरुणे विभीतक्यां स्त्री० । 'वयस्था नागराख्या'दिति वैद्यकम् ।

**वयस्य** पु० वयसा तुल्यः यत् । समानवयस्के। सख्यां स्त्री० ।

**वयुन** न० वय-उनन् । ज्ञाने । देवतागारे पु० ।

**वयोधस्** पु० वयो यौवनं धत्ते धा-असुन् । तरुणे ।

**वर** ईप्से अद०चु०उ०सक०सेट् । वरयति ते अववरत् त ।

**वर** न० व्रियते वृ-अप् वर-घञ् वा । कुङ्कुमे, मनागभीष्टे 'वरं प्राणान् परित्यक्ष्ये' इति तन्त्रम्। भावे अप् वर-घञ् वा। इच्छायाम् याचने, आवरणे, वेष्टने च । कर्मणि अप् । अभीष्टे, श्रेष्ठे च त्रि० । जारे, गुग्गुलौ, जामातरि, पत्यौ च पु० । [वस्त्रभेदे च ।

**वरक** पु० वृ-वुन् । वनमुद्गे, पर्पटे, तृणधान्यभेदे (चीना)

**वरचन्दन** न० कर्म्म० । कालीये, देवदारुणि कुसुम्भवीजे च ।

**वरट** न०वृ-अटन् । कुन्दपुष्पे। कीटभेदे (वोलता) हंसे च पु०स्त्री०

**वरण** न० वृ-ल्युट् । कन्यादिदानाय जामात्रादेरभ्यर्थनानुकूले व्यापारभेदे,वेष्टने,ऋत्विगादेः क्रियासु नियोगाय पूजनादौ, उष्ट्रे, प्राकारे, वरुणवृक्षे च । काशीस्थे नदीभेदे (वांकी) ख्याते पदार्थे च स्त्री० । [मध्यवेदौ च ।

**वरण्ड** पु० वृ-अण्डच् (वयसफोड़ा) मुखरोगभेदे मातङ्गयुद्धार्थे

**वरण्डक** पु०न० वृ-अण्डच् । स्वार्थे कन् । वरण्डशब्दार्थे वर्त्तुले, भित्तौ च । विशाले, कम्पणे, भीते च त्रि० ।

**वरण्डालु** पु० वरण्ड+आलु। एरण्डवृक्षे ।

**वरतिक्त** पु० वरः श्रेष्ठस्तिक्तो रसो यस्य । कुटजवृक्षे। पाठायां (आकनादि) स्त्री० । स्वार्थे कन् तत्रैव ।

**वरत्रा** स्त्री० वृ-अत्रच् । हस्तिकक्षस्यरज्जौ ।

**वरत्वच** पु० वरा त्वचा यस्य । निम्बवृक्षे ।

**वरद** त्रि० वरं ददाति दा-क । अभीष्टदातरि, प्रसन्ने च । तच्चिह्नसूचके हस्तादिविन्यासरूपे मुद्राभेदे न० 'अभयं वरदञ्चैव दक्षिणे' इति तन्त्रम् । कन्यायाम्,अश्वगन्धायाम्, आदित्यभक्तायां, दुर्गायाञ्च स्त्री० ।

**वरदाचतुर्थी** स्त्री०माघशुक्लचतुर्थ्याम् । तामधिकृत्य 'चतुर्थी-वरदा नाम तस्यां गौरी सुपूजिते'ति स्मृतिः । [न०

**वरफल** पु० वरं फलमस्य । नारिकेले वृक्षे । कर्म०। श्रेष्ठे फले

**वरमुखी** स्त्री० वरं मुखं यस्याः ङीप् । रेणुकानामगन्धद्रव्ये ।

**वरम्** अव्य० वृ-अम् । ईषदभीष्टे । [पतिम्वरायां कन्यायाञ्च

**वरयित्री** [illegible]

**वरम्बरा** स्त्री०वरं वृणोति खच् । (चाकुलिया) चक्रमर्द्याम् ।

**वररुचि** त्रि०वरा रुचियस्य । श्रेष्ठप्रीतिमति । पाणिनिसूत्रवार्त्तिककारे कात्यायनमुनौ, विक्रमादित्यसभास्थे पण्डितभेदे च , [प्राप्तवरे त्रि० ।

**वरलब्ध** पु० वरः उत्कर्षः पुष्पेषु लब्धो येन पर०नि०। चम्पके

**वरला** स्त्री० वरटा+पृ० टस्य लः । हंस्यां (वोलता) कीटभेदे च गौरा० ङीप् । हंसाम् । [मञ्जियाम् ।

**वरवर्णिनी** स्त्री०वरः श्रेष्ठोवर्णः प्रशंसाऽस्त्यस्याः इनि। उत्त-

**वरवाह्लीक** न० कर्म० । कुङ्कुमे ।

**वरा** स्त्री०वृ-अच् । हरितक्यामलकीवयस्थारूपे फलत्रिके । रेणुकानामगन्धद्रव्ये, गुडूच्याम्, मेदायां, ब्राह्म्याम्, विडङ्गे, पाठायाम्, हरिद्रायाञ्च ।

**वराक** पु॰ वृ-षाकन्। शिवे। युद्धे न॰। अवरे, शोचनीये च त्रि॰
**वराङ्ग** न॰कर्म॰। मस्तके। व्रियते आव्रियते गुप्यते वृ-अप्, कर्म॰। गुह्ये योनौ, गुड़त्वचि च। द्वि॰। गजे विष्णौ कामदेवे च पु॰। श्रेष्ठावयवयुक्ते त्रि॰। संज्ञायां कन्। गुड़त्वचि (दारचिनि) न॰ हरिद्रायाम् स्त्री॰ गौ॰ङीष्।
**वराङ्गिन्** पु॰वराङ्गमस्त्यस्य इनि। अम्लवेतसे। श्रेष्ठाङ्गवति त्रि॰
**वराट** पु॰ वरमल्पमटति अट-अण्। कपर्द्दे। क्षुद्रो वराटः ङीप्। क्षुद्रकपर्द्दे, स्वार्थे कन्। तत्रार्थे 'वराटकानां दशक-द्वयं यदि'ति लीलावती अट-ण्वुल्। पद्मबीजाधारे कोषे, रज्जौ च पु॰।
**वराटकरजस्** पु॰ वराटके इव रजोऽस्य। नागकेशरे वृक्षे
**वरादन** न॰ वरैर्नृपैरद्यते अद-ल्युट्। राजादने (पियाशाल)
**वराम्र** पु॰ वरः आम्र इव। करमर्द्दे।
**वरारोह** पु॰ वर आरोहो मध्यं यस्य। हस्तिनि। प्रशस्तनितम्बवत्यां स्त्रियां च स्त्री॰।
**वराशि** पु॰ वरमावरणमश्नुते अश-इन्। स्थूलवस्त्रे।
**वरासन** न॰ वराय वरणीयायास्यते क्षिप्यते अस-ल्युट्। जवापुष्पे। कर्म॰। उत्तमे आसने न॰। वरं पतिमस्यति अस-ल्यु। पिङ्गे, जारे पु॰। वरान् श्रेष्ठानपि अस्यति दूरीकरोति ल्यु। द्वारपाले पु॰।
**वरासि** पु॰ वरायावरणायास्यते अस-इन्। स्थूलवस्त्रे।
**वराह** पु॰ वराय अभीष्टाय मुस्तादिलाभाय आहन्ति खनति भूमिम् आ+हन-ड। शूकरे यज्ञवराहाख्ये भगवतोऽव-तारभेदे च। पर्व्वतभेदे, मुस्तके, शिशुमारे, वाराहीकन्दे, द्वीपभेदे च। [वृक्षभेदे।
**वराहकन्द** पु॰ वराहस्य कं सुखं ददाति। स्वनामख्याते
**वराहकान्ता** स्त्री॰ वराहाणां कान्ताऽभीष्टा। वराहकन्दे।
**वराहक्रान्ता** स्त्री॰ वराहेण क्रान्तेव। लज्जालुलतायाम्।
**वराहिका** स्त्री॰वराहो भक्षकत्वेनास्त्यस्याः ठन्। कपिकच्छ्वाम्
**वराही** स्त्री॰ वराहो भक्षकत्वेनास्त्यस्या अच् गौरा॰ङीष्। भद्रमुस्तायाम्।
**वरिवस्** न॰ वृ-इवसुन् नि॰ इट् च। पूजने।
**वरिवसि(सि)त** त्रि॰ वरिवः पूजनं करोति क्यच्-क्त वा यलोपः। पूजिते।
**वरिवस्या** स्त्री॰वरिवस्+करणार्थे क्यच् अ। पूजने शुश्रूषायाम्
**वरिष्ठ** त्रि॰अतिशयेन उरुः इष्ठन् वरादेशः। उरुतमे। तित्तिरिविहगे पु॰। आदित्यभक्तायां स्त्री॰। [मत्स्याम्
**वरी** स्त्री॰ वरी शतावरी पूर्व्वपदलोपः। शतावर्य्याम्, सूर्य्य-

**वरीयस्** त्रि॰अतिशयेन उरुः श्रेष्ठः ईयसु वरादेशः। उरुतमे विष्कम्भादिषु मध्ये योगभेदे पु॰।
**वरी(ली)वर्द्द** पु॰ वृध-यङ्-लुक् अच् पृ॰ रस्य वा लः। वृषभे।
**वरुड** पु॰ वृ-उडन्। अन्त्यजजातिभेदे 'रजकश्चर्म्मकारश्च नटो वरुड एव चे'ति स्मृतिः।
**वरुण** पु॰ वृ-उनन्। पश्चिमाशापतौ जलेशे स्वनामख्याते, देवभेदे, जले, सूर्य्ये च। [भवे मद्ये।
**वरुणात्मजा** स्त्री॰ वरुणस्य जलस्यात्मजेव जन्यत्वात्। जल-
**वरुणानी** स्त्री॰ वरुणस्य पत्नी ङीप् आनुक् च। वरुणपत्न्याम्
**वरूथ** न॰ वृ-ऊथन्। तनुत्राणे वर्म्मणि। रथगुप्तिस्थाने परप्रहाररक्षार्थमावृते स्थाने पु॰।
**वरूथिनी** स्त्री॰ वरूथोऽस्त्यस्याः इनि। सेनायाम्।
**वरेण्य** न॰ वृ-एन्य। कुङ्कुमे। प्रधाने, प्रार्थनीये च त्रि॰।
**वरोट** न॰ वरा श्रेष्ठा उटानि दलान्यस्य। मरुवकपुष्पे।
**वर्कर** पु॰ वृक-अरन्। तरुणपशौ, मेषशावके, छागबाले च।
**वर्ग** पु॰वृज-घञ्। सजातीयसमूहे यथा मनुष्यवर्गः पशुवर्गः। समानधर्म्मभिः प्राण्यप्राणिभिः कृते संघे च यथा कवर्गः च-वर्गः। अन्यपरिच्छेदे यथा स्वर्गवर्गः पातालवर्गः। अङ्कशास्त्रोक्ते समानाङ्कद्वयस्य परस्परगुणने, यथा द्विकस्य चत्वारि, त्रिकस्य नव, चतुष्कस्य षोड़श, इत्यादि। "वर्गं मूलं घनं कृति'मिति लीलावती। त्यागे च।
**वर्गमूल** न॰ वर्गस्य समद्विघातात्मकस्यातः मूलम्। अङ्कशास्त्र-प्रसिद्धं समाङ्कद्वयेन कृताङ्कच्छायाः अङ्कं घातसाधनं तत्र। यथा षोड़शानां चत्वारि, नवानां त्रयः चतुर्णां द्वौ इत्यादि।
**वर्गोत्तम** पु॰वर्गेषु षट्सु क्षेत्रादिषु उत्तमः नवांशः। 'चराणां प्रथमे चांशे स्थिराणां पञ्चमे तथा द्व्यात्मकानाञ्च नवमे वर्गोत्तम इति स्मृत' इति ज्योतिषोक्ते त्रिंशांशकात्मक-राशेर्नवांशभेदे। [विद्यायाम्।
**वर्च** दीप्तौ भ्वा॰आ॰अक॰ सेट्। वर्चते अवर्चिष्ट। [कन्
**वर्चस्** न॰वर्च-असुन्। रूपे, शुक्रे, तेजसि, विष्ठायाम्, संज्ञायां
**वर्चस्विन्** त्रि॰ वर्चस्+अस्त्यर्थे विनि। तेजस्विनि।
**वर्जन** न॰ वृज-ल्युट्। त्यागे, मारणे, हिंसायां च।
**वर्ण** स्तुतौ विस्तारे शुक्लादिवर्णकरणे उद्योगे दीपने च अद॰ चु॰ उभ॰स॰सेट्। वर्णापयति ते वर्णयति ते अववर्णत् त
**वर्ण** वर्णने चु॰उभ॰सक॰सेट्। वर्णयति ते अववर्णत त।
**वर्ण** न॰ वर्ण-अच्। कुङ्कुमे। ब्राह्मणादिजातौ, शुक्लादिरूपे, भेदे, अकाराद्यक्षरे च पु॰। करणादौ घञ्। वर्णने,

गुणे, अङ्गरागे च। स्वर्णे, व्रतभेदे, विलेपनद्रव्ये च। भावे घञ्। विलेपने, स्तुतौ, गीतक्रमे, चित्रे च।

**वर्णक** न० वर्णयति वर्ण-ण्वुल्। हरिताले, अनुलेपनयोग्ये पिष्टे घृष्टे वा चन्दनादौ द्रव्ये च। हिङ्गुलादौ पु० स्त्री०। मण्डने न०। एकस्यैव सूत्रादेः मतान्तरव्याख्यानरूपे ग्रन्थभेदे न० 'लिप्यासूत्रे तृतीयवर्णके' इति मिताक्षरा।

**वर्णकूपिका** स्त्री० वर्णानामक्षराणां लेखनाय क्षुद्रः कूपः कूपी सैव कन्। मस्याधारे। [चित्रकरे।

**वर्णचारक** पु० वर्णं शुक्लादिरूपं चारयति चर णिच्-ण्वुल्।

**वर्णज्येष्ठ** पु० वर्णेषु ज्येष्ठः प्रथमसृष्टत्वात्। अग्रजे, विप्रे। स्वस्थापेक्षया श्रेष्ठवर्णे त्रि० 'वर्णज्येष्ठा च या नारीति स्मृतिः

**वर्णतूलि(ली)** स्त्री० वर्णानां लेखनसाधनं तूलिः। लेखन्याम् स्वार्थे कन्। अत्रैव।

**वर्णद** न० वर्णं ददाति दा-क। कालीयके गन्धद्रव्ये। वर्णप्रदे त्रि०

**वर्णदात्री** स्त्री० वर्णं रूपं ददाति दा-तृच् ङीप्। हरिद्रायाम् वर्णदातरि त्रि०।

**वर्णदूत** पु० वर्णा एव दूतो यत्र। लिपौ।

**वर्णधर्म्म** पु० न०६त०। विप्रादीनामसाधारणे धर्मे यथा विप्रस्य याजनाध्यापनप्रतिग्रहादि, क्षत्रियस्य प्रजापालनादि।

**वर्णसङ्कर** पु० संकीर्य्यते सम्+कॄ-अप् वर्णतः सङ्करः। विप्रादिभ्यो वर्णेभ्योऽनुलोमप्रतिलोमजाते मूर्द्धाभिषिक्तादौ जातिभेदे 'जायते वर्णसङ्करः' इति गीता।

**वर्णा** स्त्री० प्रशस्तवर्णोऽस्त्यस्याः फलरूपादौ अच्। आढक्याम्।

**वर्णाङ्का** स्त्री० वर्णा अक्षराणि अङ्क्यन्तेऽनया अङ्क-अच्। लेखन्याम्। [अकाराद्यक्षरे शब्दभेदे

**वर्णात्मन्** पु० वर्ण आत्मा स्वरूपं यस्य। ध्वन्यात्मकाद्भिन्नत्वे

**वर्णार्ह** पु० वर्णं स्तुतिमर्हति अर्ह-अण्। मुद्गे। [न्याम्

**वर्णिका** स्त्री० वर्णा अक्षराणि लेख्यत्वेन सन्त्यस्याः ठन्। लेख-

**वर्णित** त्रि० वर्ण-क्त। स्तुते, कृतवर्णने, रूपान्तरमापादिते च

**वर्णिनी** स्त्री० प्रशस्तवर्णः अस्त्यस्याः इनि ङीप्। हरिद्रायाम्

**वर्णिन्** पु० वर्णोऽस्त्यस्य इनि। चित्रकरे, लेखके ब्रह्मचारिणि च 'अथाह वर्णी विदितो महेश्वर' इति कुमारः विप्रादि जातौ च 'वर्णिनां हि वधो यत्रे'ति स्मृतिः। [क्षुरे च

**वर्त्तक** पु० वृत-ण्वुल्। (भारुइ) पक्षिभेदे। वर्त्तकाश्वस्य अश्वस्य

**वर्त्तन** न० वृत-ल्युट्। वृत्तौ स्थितौ। णिच्-भावे ल्युट्। स्थापने। णिच्-करणे-ल्युट्। जीवनोपाये न०। तर्कुपीठे स्त्री० ङीप्। ल्यु। वृत्तिमति, वर्त्तिष्णौ च त्रि०। वामने पु०।

**वर्त्तनी** स्त्री० वर्त्यते पादाक्षर। वृत-णिच्-आधारे ल्युट्। पथि

**वर्त्तमान** पु० वृत-शानच्। कालभेदे शब्दप्रयोगाधारे आरब्धापरिसमाप्ते काले। तत्कालवृत्तौ त्रि०। [लौहभेदे

**वर्त्तलोह** न० वर्त्त्यते वृत-णिच्-अच् कर्म०। आवर्त्तनयोग्ये

**वर्त्ति(र्त्ती)** स्त्री० वृत-इन् वा ङीप्। लेखे, नयनाञ्जने, गात्रानुलेपने, दीपदशायाञ्च।

**वर्त्तिक** पु० वृत-तिकन्। (वटेर) विहगभेदे। वर्त्मनि वर्त्तते इत, अच् वर्त्तिः तत्र साधुः हितो वा ठन्। भारे।

**वर्त्तिन्** त्रि० वृत, णिनि। वर्त्तनशीले।

**वर्त्तिष्णु** त्रि० वृत-इष्णुच्। वर्त्तनशीले। [काले। तद्वृत्तौ त्रि०

**वर्त्तिष्यमाण** पु० वृत-शानच् लृटः सद्वेति सट्। भविष्यत्-

**वर्त्तुल** त्रि० वृत-उलच्। गोलाकारे पदार्थे। गञ्जने न०। कलाय भेदे पु०। तर्कुपीठ्याम् स्त्री०। गजपिप्पल्याम् स्त्री० ङीप्।

**वर्त्मन्** न० वृत-मनिन्। पथि, आचारे, 'आ मनोर्वर्त्मनः' इति रघुः। नेत्रच्छदे च।

**वर्त्मनि** स्त्री० वृत-अनि मुट् च। पथि।

**वर्द्ध** छेदने, पूरणे च चु०उ०स०सेट्। वर्द्धयति ते अववर्द्धत् त।

**वर्द्ध** पु० वृध-अच्। प्राणाम्भ (वामनहाटि) घञ्। पूरणे, छेदे च

**वर्द्धक** पु० वृध-ण्वुल्। प्राणयष्टौ (वामनहाटी) पूरके, छेदके च

**वर्द्धकि** पु० वृध-अच् काय ढि कर्म०। त्वष्टरि (छुतार)।

**वर्द्धकिन्** पु० वर्द्धका वर्द्धोऽस्त्यस्य इनि। त्वष्टरि (छुतार) जातिभेदे

**वर्द्धन** न० वृध-ल्युट्। छेदने, पूरणे च। वृध-णिच्-ल्यु। वृद्धिकारके त्रि०। 'करोमि चितिवर्द्धन'मिति भट्टिः। वृध-ल्यु। वृद्धियुक्ते त्रि०। [सनालपात्रभेदे च (वदना)

**वर्द्धनी** स्त्री० वर्द्ध्यते ऽनया वृध-णिच्-ल्युट्। संमार्ज्जन्याम्,

**वर्द्धमान** पु० वृध-शानच्। एरण्डवृक्षे। वृद्धिशीले त्रि०। शरावे (सृत्पात्रभेदे) विष्णौ, धनिनां, गृहभेदे, देशभेदे, नगरभेदे च। वृद्धियुक्ते त्रि०।

**वर्द्धापन** न० वर्द्धं छेदं करोति वर्द्ध+णिच्-आप् च ततो भावे ल्युट्। नाडीच्छेदनकर्माङ्गे संस्कारभेदे।

**वर्द्धित** न० वृध-णिच्-क्त। छेदिते, पूरिते, प्रस्तुते च।

**वर्द्धिष्णु** त्रि० वृध-इष्णुच्। वृद्धिशीले।

**वर्ध्र** न० वृध-ष्ट्रन्। चर्म्मणि। चर्मरज्जौ स्त्री० ङीप्।

**वर्फ** गतौ वधे च भ्वा०पर०सक०सेट्। वर्फति अवर्फीत्।

**वर्म्मकण्टक** पु० वर्म इव कण्टकोऽस्य। वर्वुरे।

**वर्म्मकषा** स्त्री० वर्म कषति अच्। (चामकषा) सप्तलायाम्

**वर्म्मन्** न० वृ-मनिन्। कवचे सन्नाहे। क्षत्रियोपाधौ पु०।

**वर्म्महर** पु० वर्म हरति हृ-अच्। सन्नाहधारणयोग्ये अवस्थाभेदे तरुणे।

वर्म्मित त्रि० वर्म करोति णिच्-क्त । कृतवर्म्माणि, उद्युक्ते च ।
वर्य त्रि०वृ-यत् । प्रधाने, श्रेष्ठे च । कामदेवे पु० पीताम्बरायां कन्यायां, कन्यामात्रे च स्त्री० । [मल्लिकाभेदे ।
वर्वणा स्त्री० वर्वति वणति शब्दायते अच् । (भणभणे)
वर्व(र्ब)र न० वर्व(र्ब)-अरच् । हिङ्गुले, पीतचन्दने, गन्धरसे च । पामरे, मूर्खे च त्रि० 'बालमिच्छन्ति वर्वराः' इत्युद्भटः । केशभेदे (बाउरी) देशभेदे कृष्णार्जके । (कालतुलसी) वृक्षे च पु० । संज्ञायां कन् । चन्दनभेदे, शाकभेदे च पु० । पुष्पभेदे, मल्लिकाभेदे च स्त्री० (बावुइ) वृक्षे स्त्री० टाप् ङीप् वा ।
वर्वरी(री) स्त्री० वर्व(र्ब) अच् । (बावुइ) वृक्षभेदे ।
वर्वुर पु० वर्व-उरच् । (बावला) वृक्षभेदे ।
वर्ष पु०न० वृष-अच् । वृष्टौ जम्बुद्वीपांशभेदे जम्बुद्वीपे च । कर्त्तरि अच् । मेघे, द्वादशमासात्मके काले च । प्रभवादिषु षष्टिवत्सरेषु पु० ।
वर्षकेतु पु० वर्षस्य केतुरिव । रक्तपुनर्नवायाम् ।
वर्षपर्व्वत पु० वर्षाणां चिह्नभूतः सीमाभूतो वा पर्व्वतः । 'हिमवान् हेमकूटश्च निषधो मेरुरेवच । चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्व्वताः' इत्युक्तेषु पर्व्वतेषु ।
वर्षपाकिन् पु० वर्षेण पाकोऽस्त्यस्य इनि । आम्रातकवृक्षे । तस्य हि मुकुलोद्गमात् प्रायेण वत्सरानन्तरं फलपाकः ।
वर्षपुष्पा स्त्री० वर्षकाले पुष्पमस्याः । सहदेवीलतायाम् ।
वर्षप्रिय पु० वर्षं प्रियोऽस्य । चातकपक्षिणि ।
वर्षवर पु० वर्षं रेतोवर्षणं वृणोति आवृणोति वृ-अच् । 'ये त्वल्पसत्त्वाः प्रथममात्मीयाः स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृता' इत्युक्तलक्षणे राजान्तःपुररक्षके षण्डे (खोजा) । 'नष्टं वर्षवरैरि'ति रत्नावली ।
वर्षवृद्धि पु०वर्षस्य वृद्धिरधिकता यस्मिन् । जन्मतिथौ, तद्दिन-कर्त्तव्ये पूजादौ च । 'युगाद्या वर्षवृद्धिश्चे'ति स्मृतिः ।
वर्षा स्त्री० ब०व० । वर्षन्ति मेघा अत्र । श्रावणभाद्रात्मके मासद्वये ऋतौ 'वर्षासु च मघासु चे'ति स्मृतिः ।
वर्षाङ्गी स्त्री०वर्षासु अङ्गमस्याः । पुनर्नवायाम् । [वर्षासमाप्तौ
वर्षापगम पु० वर्षाणामपगमो यत्र । शरत्काले ६त० ।
वर्षाभव पु० वर्षासु भवति भू-अच् । रक्तपुनर्नवायाम् ।
वर्षाभू पु०वर्षासु भवति भू-क्विप् । भेके, इन्द्रगोपे, महीलतायाञ्च । पुनर्नवायां, भेक्याञ्च स्त्री० । वर्षाभवमात्रे त्रि० । पथ्यां पुनर्नवायाम् स्त्री० ङीप् ।
वर्षामद पु० वर्षासु माद्यति मद-अच् । मयूरे ।
वर्षिष्ठ त्रि० अतिशयेन वृद्धः इष्ठन् वर्षादेशः । अतिशयवृद्धे

वर्षीयस् त्रि० अतिशयेन वृद्धः । वृद्ध+ईयसु वर्षादेशः । अतिवृद्धे स्त्रियां ङीप् ।
वर्षुक त्रि० वृष-उकञ् । वर्षणशीले ।
वर्षोपल पु० वर्षस्य वृष्टेरुपलः प्रस्तर इव । करकेषु । (शिल)
वर्ष्मन् न० वृष-मनिन् । देहे ।
वर्ह वधे सक०दीप्तौ अक० चु०उभ०सेट् । वर्हयति-ते अववर्हत् त
वर्ह उत्कर्षे भ्वा०आ०अक०सेट् । वर्हते अवर्हिष्ट । [यज्ञे च ।
वर्ह न० वर्ह-अच् । मयूरपिच्छे, ग्रन्थिपर्णे वृक्षे, अग्नौ, दीप्तौ,
वर्हि(र्हिः)कुसुम न० वर्हिरिव कुसुममस्य ष० सलोपः । ग्रन्थिपर्णे । वर्हिःकुसुमादयोऽप्यत्र ।
वर्हिःपुष्प न० वर्हिः वह्निरिव पुष्पमस्य । ग्रन्थिपर्णे ।
वर्हिःशुष्मन् पु० वर्हिःकुशः शुष्म वलमस्य । वह्नौ कुशेन हि वह्निरुद्दीप्यते । [षत्वम् । ह्रीवेरे ।
वर्हि(र्हिः)ष्ठ न० वर्हिरिव तिष्ठति स्था-क वा विसर्गलोपः
वर्हिण पु० वर्हमस्त्यस्य इन । मयूरे । इनि । 'वर्हीत्यप्यत्र
वर्हिर्ज्योतिस् पु० वर्हिषा कुशेन ज्योतिरस्य । वह्नौ ।
वर्हिर्मुख पु० वर्हिर्वह्निर्मुखं यस्य । देवे तद्द्वारेव हि देवा हविरश्नन्ति ।
वर्हिषद् पु०ब०व० वर्हिषि विप्रपाणिस्थेऽग्नौ सीदन्ति वर्हिस् सद्-क्विप् ष० । पितृगणभेदे 'अग्निष्वात्ता वर्हिषदऊष्मपा आज्यपास्तथे'ति स्मृतिः । [वह्नौ
वर्हिष्केश पु० वर्ह-दीप्तौ इसुन् वर्हिः दीप्तिमान् केशो यस्य ।
वर्हिस् स्त्री०वृहि इसुन् नि० नलोपश्च । वह्नौ 'वर्हिषि रजतं न देय'मिति श्रुतिः । ग्रन्थिपर्णे, चित्रके च (चिते) कुशे पु० न० 'वर्हिर्देवसदन'मिति श्रुतिः वर्ह-इसुन् । दीप्तियुक्ते त्रि०
वल संवरणे भ्वा० आ०सक०सेट् वा घटा० । वलते अवलिष्ट
वल न० वल्यतेऽनेन वल-क सैन्ये, बलशब्दार्थे च ।
वलक्ष पु० वल-क्विप् क्षर-अच् कर्म० । धवले वर्णे तद्वति त्रि०
वलभि(भी) स्त्री० वल्यते आच्छाद्यते वल-अभि वा ङीप् । वडभीशब्दार्थे गोपानस्याम् ।
वलय पु० न० वल-अयन् । हस्तपादकटकादौ । उत्तरपदस्थः तदाकारवेष्टने यथा भूवलयम् । वेष्टनभूमौ, गोले च ।
वलयित त्रि० वलयमिव आचरितम् वलय-क्विप्-क्त । वेष्टिते ।
वला स्त्री० वल-अच् । (वेड़ाला) ओषधिभेदे ।
वलाक पु०स्त्री० वल-आकन् । वकपक्षिणि स्त्रियां टाप् ।
वलाहक पु० वारि वहति ष० । वलाहकशब्दस्यार्थे मेघादौ
वलिर त्रि० वल-अच् वलं संवरणमस्त्यस्य इरच् । केकरे ।
वलिघ्न न० वलिना उपहारद्रव्येण घ्नाति मत्स्यान् । वडिशशब्दार्थे

वलीक न० वल्यते संव्रियतेऽनेन ईकन् । वनीकशब्दार्थे पटले

वलून त्रि० वलं देहोत्थापनमस्त्यस्य ऊनच् । वलविशिष्टे ।

वल्क भाषणे चु०उ०द्वि०सेट् । वल्कयति ते अववल्कत् त ।

वल्क न० वल-संवरणे कक् कस्य नेत्त्वम् । वृक्षादीनां त्वचि, वल्कले, मत्स्यानां त्वचि शुल्के (आँइस) खण्डे च ।

वल्कतरु पु० वल्काय तरुः । पट्टिकालोध्रे, गुवाकवृक्षे च ।

वल्कद्रुम पु० वल्कप्रधानोद्रुमः । भूर्जपत्त्रवृक्षे ।

वल्कल न० वल-कलन् कस्य नेत्त्वम् । त्वचे । (दारचिनि) वृक्ष त्वचि (छाल) पु० न० ।

वल्कलोध्र पु० वल्कभवो लोध्रः । पट्टिकालोध्रे ।

वल्ग गतौ प्लुतगतौ च भ्वा०पर०सक०सेट् । वल्गति अवल्गीत्

वल्गा स्त्री० वल्ग-अ । (लागाम) अश्वमुखस्थे रज्जुभेदे ।

वल्गित न० वल्ग-क्त । अश्वस्य गतिभेदे, गमने,वक्रभाषणे च ।

वल्गु पु० वल संवरणे उ-गुक् च । छागे । मनोहरे त्रि० । संज्ञायां कन् । चन्दने,वने,प्रणये च न० । चारुणि सुन्दरे च त्रि०

वल्गुपत्त्र पु० वल्गूनि पत्त्राणि यस्य । वनमुद्गे ।

वल्भ भक्षणे भ्वा० आत्म०सक० सेट् । वल्भते अवल्भिष्ट ।

वल्मिकि पु० वल-इकि मुट् च । } कीटविशेषकृते मृत्तिका

वल्मीक पु० वल-ईक मुट् च । } स्तूपे (उयेर ढिपि ।

वल्यु(ल्यू)ल छेदने पवित्रताकरणे च अद० चुरा०उभ०सक० सेट् । वल्यु(ल्यू)लयति-ते अववल्यु(ल्यू)लत् त ।

वल्ल संवरणे भ्वा०आ०सक०सेट् । वल्लते अवल्लिष्ट ।

वल्ल पु०वल्ल-घञ् । गुञ्जात्रयपरिमाणे 'वल्लस्त्रिगुञ्ज' इति लीला०

वल्लकी स्त्री० वल्ल-क्कुन् गौ० ङीष् । वीणायाम् सल्लकीवृक्षे च ।

वल्लभ पु० वल्ल-अभच् । दयिते, अध्यक्षे, उत्तमाश्वे च ।

वल्लभपाल पु० वल्लभं पालयति पाल-अण् । अश्वपाले ।

वल्लर न० वल्ल-अरन् । कृष्णागुरुणि,गहने, कुञ्जे च ।

वल्लरि(री) स्त्री० वल्ल-अरिन् वा ङीष् । मञ्जर्यां,मेथिकायां च

वल्लव पु०वल्लवच् तं वाति वा-क । गोपे, पाचके, भीमसेने च

वल्लि(ल्ली) स्त्री० वल्ल-इन् वा ङीष् । लतायाम् पृथिव्याञ्च दीर्घान्तस्तु । अजमोदायां, कैवर्त्तिकायाम्, चव्ये च ।

वल्लीज न० वल्ल्यां जायते जन-ड । मरिचे ।

वल्लीदूर्वा स्त्री० वल्लिरूपा दूर्वा । मालादूर्वायाम् ।

वल्लीबदरी स्त्री० वल्लीरूपा बदरी । भूमिबदर्याम् ।

वल्लीमुद्ग पु० वल्लीप्रधानः मुद्गः । वनमुद्गे (मुग,नि)

वल्लीवृक्ष पु० वल्लीव दीर्घो वृक्षः । सालवृक्षे ।

वल्लूर न० वल्ल-ऊरन् । कुञ्जे, मञ्जर्यां, क्षेत्रे, निर्जनस्थाने शाद्वले, गहने च ।

वल्लूर त्रि० वल्ल-ऊरन् । आतपादिना शुष्कमांसे,सूकरमांसे, वनक्षेत्रे, वाहने, ऊषरभूमौ च ।

वल्ह्या स्त्री० वल्ह-यत् । धात्रीवृक्षे ।

वल्वज पु० वलते भुवं वेष्टयति वल-क्विप् तादृशः सन् वजति गच्छति वज-अच् । उलपे तृणभेदे । (वावुइ) वृक्षभेदे स्त्री०

वल्ह दीप्तौ चु०उ०अक०सेट् । वल्हयति ते अववल्हत्-त ।

वल्ह उत्कर्षे भ्वा० आ०अक०सेट् । वल्हते अवल्हिष्ट ।

वव पु० वा-ड प्रकारे द्वित्वम् । ज्योतिषोक्ते तिथ्यर्द्धात्मके प्रथमे करणे । [अवशीत् ।

वश स्पृहायाम् अदा०पर०सक०सेट् स्वपा० । वष्टि अवाशीत्

वश पु० न० वश-अच् । आयत्तत्वे, प्रभुत्वे च आयत्ते त्रि० ।

वशंवद त्रि०वशं वशकरं मधुरं, वशोऽहमिति वा वदति वद-अच् मुम् च । प्रियवाक्यवादिनि, मधुरवादिनि, 'तवाहं वश' इति वादिनि च ।

वशक्रिया स्त्री० वशस्य क्रिया करणम् कृ-श । वशीकरणे ।

वशग त्रि० वशं गच्छति गम-ड । वशीभूते ।

वशवर्त्तिन् त्रि० वशे वर्त्तते वृत-णिनि । वशीभूते ।

वशा(सा) स्त्री० वश-(वस)-अङ् । बन्ध्यायां योषायां, कन्यायां, करिण्यां, स्त्रीगव्याञ्च । [स्त्री० ।

वशिक त्रि० वशोऽस्त्यस्य ठन् । शून्ये आयत्ते च अगुरुचन्दने ।

वशित्व न० वशिनो भावः त्व । स्वातन्त्र्ये, ईश्वरस्य ऐश्वर्य-भेदे च । तल् । वशिताऽप्यत्र स्त्री० ।

वशिन् त्रि०वशोऽस्त्यस्य इनि । जितेन्द्रिये,स्वाधीने, स्वतन्त्रे च

वशिर न०वश-इरन् । सामुद्रलवणे गजपिप्पल्याम्, चव्ये च।पु०

वशि(सि)ष्ठ पु०अतिशयेन वशी इष्ठन् इनेर्लुक् पृ०वा शस्य सः। अतिशयजितेन्द्रियतायुक्ते मुनिभेदे ।

वशीकरण न० अवशः वशः क्रियतेऽनेन वश-च्वि-कृ-ल्युट् । तन्त्राद्युक्ते वशताकम्पादके मणिमन्त्रादौ ।

वशीर पु० वश-ईरन् । गजपिप्पल्याम् ।

वश्य न० वश-यत् । लवङ्गे । आयत्ते त्रि० ।

वष बधे भ्वा०पर०सक०सेट् । वषति अवषीत् अवाषीत् ।

वषट् अव्य० वह-डषटि । देवोद्देश्यकहविस्त्यागे ।

वषट्कार पु०वषट्+कृ-घञ् । देवोद्देशकत्यागरूपे यज्ञे ।

वषट्कृत त्रि० वषट् इति कृतम् कृ-क्त । हुते ।

वष्क गतौ भ्वा०आ०सक०सेट् । वष्कते । अवष्किष्ट ।

वष्कय पु० वष्क-अयन् । एकहायने वत्से ।

वष्कयणी स्त्री० वष्कयमेकहायनवत्सं नयति स्थानान्तरं नी-ड गौ०ङीष् णत्वम् । चिरप्रसूतायां गवि ।

वष्कयिणी स्त्री० वष्कय एकहायनो वत्सोऽस्त्यस्या इनि । चिरप्रसूतायां गवि । [अवीवसत् त

वस नम्रतायां अक० वधे सक० चु० उभ० सेट् । वासयति ते

वस स्तम्भे दिवा०पर०सक० सेट् । वस्यति अवसत् अवासीत् । क्त्वा वेट् ।

वस निवासे भ्वा०पर०सक० अनिट् यजा० । वसति अवात्सीत्

वस आच्छादने अदा०आ०सक० सेट् यजा० । वस्ते अवसिष्ट ।

वस वासने अद०चु०उभ०सक०सेट् । वसयति ते अववसत् त ।

वसति(ती) स्त्री० वस-अति वा ङीप् । वासे यामिन्याम्, 'वसतीर्वसित्वे'ति रघुः, निकेतने, स्थाने च ।

वसन न० वस-ल्युट् । वस्त्रे, छादने, निवासे, वस्त्रभूषणे च

वसन्त पु० वस-झ । मधुमाधवात्मके ऋतुभेदे, रागभेदे च ।

वसन्तक पु० वसन्ते कायति कै-क । श्योनाकवृक्षे ।

वसन्तकुसुमाकर पु० प्रमेहरोगनाशके औषधभेदे ।

वसन्तजा स्त्री० वसन्ते जायते जन-ड । माधवीलतायाम् ।

वसन्ततिलक न० चतुर्दशाक्षरपादके छन्दोभेदे ।

वसन्तदूत पु० वसन्तस्य दूत इव । कोकिले, आम्रवृक्षे, पञ्चमस्वरे च । माधवीलतायाम्, पाटलीवृक्षे, गणिकारिकायाञ्च स्त्री० ङीप् ।

वसन्तद्रु पु०वसन्तस्य प्रधानः द्रुः। आम्रवृक्षे। वसन्तवृक्षादयोऽप्यत्र

वसन्तसख पु० वसन्तस्य सखा अच् समा० । कामदेवे ।

वसा स्त्री० वस-अङ् । मांसजाते, देहस्थे, धातुभेदे मेदसि, मांसरोहिण्यां लतायाञ्च ।

वसु न० वस उ । धने, रत्ने, वृद्ध्यौषधे, श्यामे, स्वर्णे, जले च । वकवृक्षे, सूर्य्ये, वह्नौ, रश्मौ, गणदेवताभेदे, अष्टसङ्ख्यायाञ्च पु०। मधुरे, शुष्के च त्रि०। दीप्तौ, वृद्ध्यौषधौ च स्त्री० । वसुदेवात्मके धनिष्ठानक्षत्रे पु० ।

वसुक पु०वसु इव कायति कै-क । अर्कवृक्षे वकवृक्षे च ।

वसुच्छिद्रा स्त्री०वसुसङ्ख्यातानि छिद्राण्यस्याः। महामेदायाम्

वसुदेव पु० वसुना दीव्यति दिव-अच् । श्रीकृष्णजनके यादवे क्षत्रियभेदे । [सुतादयोऽप्यत्र ।

वसुदेवभू पु० वसुदेवात् भवति भू-क्विप् । श्रीकृष्णे वसुदेव-

वसुधा स्त्री० वसूनि धीयन्तेऽस्यां धा-क । पृथिव्याम् ।

वसुधारा स्त्री० वसोश्चेदिराजस्य प्रियार्थं धारा घृतादिस्रवसन्ततिः । माङ्गल्येषु चेदिराजवसूद्देशेन दीयमानायां घृतादिधारायाम् ।

वसुन्धरा स्त्री०वसूनि धारयति धृ-खच् मुम् च। पृथिव्याम्

वसुमती स्त्री० वसूनि सन्त्यस्यां मतुप् । पृथिव्याम् ।

वसुहट्ट पु० वसूनां हट्ट इव । वकवृक्षे । [अववस्त् त

वस्त वधे गतौ च सक०याचने द्वि०चु०उभ०सेट् । वस्तयति ते

वस्त पु० वस्यते बध्यते वस-घञ् । छागे ।

वस्तक न० वस्त इव कायति कै-क । कृत्रिमलवणे ।

वस्तकर्ण पु० वस्तस्य कर्ण इव पत्रमस्य । शालवृक्षे ।

वस्तगन्धा स्त्री० वस्तस्येव गन्धोऽस्याः । अजगन्धायाम् ।

वस्तमोदा स्त्री० वस्तस्येव मोदो यस्याः । अजमोदायाम् ।

वस्ति पु०वस्तेआवृणोति मूत्रम् वस-तिच् । नाभेरधोभागे मूत्राधारे स्थाने, वासे च वसनदशायां स्त्री० व०व० । [अम्लवृक्षे ।

वस्तिकर्म्माढ्य पु० वस्तिकर्मणा तच्छोधनव्यापारेणाढ्यः ।

वस्तिमल न० ६त० । मूत्रे ।

वस्तु न० वस-तुन् । द्रव्ये । पदार्थे, सत्यपदार्थे च ।

वस्तुक न०वस्तु+स्वार्थे कन् । वास्तुके शाकभेदे, श्वेतकञ्जीशाके च

वस्त्य न० वस्तौ साधु यत् । गृहे ।

वस्त्र न० वस-ष्ट्रन् । परिधानाद्युपयुक्ते कार्पासादौ वसने ।

वस्त्रकुट्टिम न० वस्त्रनिर्मितं कुट्टिमं यत्र । वस्त्रगृहे (ताम्बु)।

वस्त्रगृह न० वस्त्रनिर्मितं गृहम् शाक० । (ताम्बु) वस्त्रनिर्मिते गृहे ।

वस्त्रग्रन्थि पु० ६त० नीव्याम् । [लिकायाम् ।

वस्त्रपुत्रिका स्त्री० वस्त्रनिर्मिता पुत्रिका । वस्त्रनिर्मितपुत्त

वस्त्रभूषणा स्त्री० वस्त्रस्य भूषणं यस्याः ६ब० । मञ्जिष्ठायाम् । शाकरवृक्षे पु० ।

वस्त्ररञ्जन पु० वस्त्रं रञ्जयति रन्ज-णिच्-ल्यु । कुसुम्भे ।

वस्न न०वस-नन् । वेतने, द्रव्ये च । धने, त्वचि, स्त्रत्यौ च मूल्ये पु०

वस्नसा स्त्री० वस्नं स्यति षो-क । स्नायौ ।

वस्वौकसारा स्त्री० वसूनामोकस्य सारो यत्र । इन्द्रनगर्य्याम् इन्द्रनद्यां, कुबेरपुर्य्याञ्च ।

वह दीप्तौ चु०उ० अक०सेट् इदित् । वंहयति ते अववंहत् ।

वह प्रापणे भ्वा० उ०द्विक० यजा० अनिट् । वहति ते अवाक्षीत् उवाह । [पथि, नदे च ।

वह पु० उह्यतेऽनेन वह-अच् । वृषस्कन्धदेशे, घोटके, वायौ,

वहल पु० वह-अलच् । पोते, दृढे त्रि० ।

वहलगन्ध न० वहलो दृढो गन्धो यस्य । शम्बरचन्दने ।

वहलचक्षुस् पु० वहलानि चक्षुषीव पुष्पाण्यस्य । मेषशृङ्ग्यां (गाडरशिङ्गा) ।

वहलत्वच पु० वहला कठिना त्वचा यस्य । श्वेतलोध्रे ।

वहला स्त्री० वहलानि पुष्पादीनि सन्त्यस्य अर्श आद्यच् । शतपुष्पायाम् स्थूलैलायाञ्च ।

**वहित्र** न० वह-इत्र। पोते जलयाने। स्वार्थे कन्। अत्रैवार्थे

**वहिरङ्ग** न०वहिः प्रकृतेर्बाह्यमङ्गं यस्य। व्याकरणोक्ते प्रत्यया दिनिमित्तके प्रकृत्युरावयवादिकार्ये।

**वहिरिन्द्रिय** न० वहिर्देहाद्बाह्यस्य पदार्थस्य ग्राहकमिन्द्रियम्। शब्दादिवाह्यविषयग्राहकेषु श्रोत्रादिषु।

**वहिर्मुख** त्रि० वहिः वाह्यविषये मुखं प्रवणता यस्य। वाह्यविषयासक्तमनस्के विषयासक्ते जने,विमुखे च।

**वहिस्** अव्य० वह-इसुन्। वाह्ये। [विभीतकवृक्षे।

**वहेड़क** पु० वह-अच् वहः एड़क इव वृहत् काण्डो यस्य।

**वह्नि** पु० वह-नि। अग्नौ, चित्रकवृक्षे, भल्लातके, निम्बूके तन्त्रोक्ते रकारे च। 'वर्गाद्यं वह्निसंस्थ'मिति श्यामास्तोत्रम्

**वह्निकरी** स्त्री० वह्निं देहस्थवह्निं करोति उद्दीपयति कृ-ट ङीप्। धात्री वृक्षे (धाइफुल) वह्न्युद्दीपके त्रि०।

**वह्निकाष्ठ** न०वह्नेर्दाह्यदाहानुकूलं काष्ठम्। दाहागुरुणि।

**वह्निगन्ध** पु० वह्नौ दाहकाले गन्धो यस्य। यक्षधूपे (धुना)

**वह्निगर्भ** पु० वह्निर्गर्भे यस्य। वंशे, शमीवृक्षे स्त्री०।

**वह्निज्वाला** स्त्री० वह्नेर्ज्वालेव पीडाकारकत्वात्। धातकीवृक्षे

**वह्निदीपक** पु० वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप-णिच् ण्वुल् वह्निरिव दीप्यति दीप-ण्वुल् वा। कुसुम्भे अग्न्युद्दीपके त्रि० अजमोदायाम् स्त्री०।

**वह्निनी** स्त्री० वह्निं नयति नी-ड गौ०ङीष्। जटामांस्याम्

**वह्निपुष्प** स्त्री० वह्निरिव तापकं पुष्पं यस्य। धातकीवृक्षे।

**वह्निभोग्य** न०६त०। घृते। [गणिकारीवृक्षे।

**वह्निमन्थ** पु० वह्न्यर्थे वह्निजननाय मथ्यतेऽसौ मन्थ-घञ्।

**वह्निमित्र** पु० वह्निर्मित्रं यस्य। वायौ ६त०। तत्रैव न०

**वह्निरेतस्** पु० वह्नौ निषिक्तं रेतो येन। शिवे। वह्नौ हि निषिक्तात् शिववीर्य्यात् गङ्गादिसंक्रमेण कार्त्तिकेयोत्पत्तिः

**वह्निलोहक** न० वह्नेः प्रियं लोहं धातुः स्वार्थे कन्। कांस्ये

**वह्निवधू** स्त्री० ६त०। अग्निभार्य्यायां स्वाहायाम्, तदात्मके मन्त्रे च। वह्निजायादयोऽप्यत्र।

**वह्निवर्ण** न० वह्नेरिव वर्णोऽस्य। रक्तोत्पले।

**वह्निवल्लभ** पु० वह्नेर्वल्लभ उद्दीपकत्वात्। सर्ज्जरसे, (धुना)

**वह्निवीज** न० वह्नेर्देहस्थवह्नेर्बीजमिव उद्दीपकत्वात्। जीरके, वह्निदेवताके तन्त्रोक्ते रकारे च।

**वह्निशिख** न० वह्नेरिव रक्ता शिखाऽस्य। कुसुम्भे। कलिन्यां, धातक्याञ्च स्त्री०।

**वह्निसख** पु० ६त०। वायौ। देहस्थवह्न्युद्दीपके जीरके।

**वह्य** न० वह-यत्। शकटे, वाहनमात्रे च।

**वा** सुखाप्तौ अक० गतौ सेवने च सक० चुरा० उभ० सेट्। वापयति ते अवीवपत् त।

**वा** गमने हिंसने च अदा०पर०सक०अनिट्। वाति अवासीत्।

**वा** अव्य० वा-का। विकल्पे, सादृश्ये, अवधारणे, समुच्चये, वितर्के, पादपूरणे च।

**वांशिक** पु० वंशो तद्वादनं शिल्पमस्य ठक्। वंशीवादनशीले

**वांशी** स्त्री० वंशे भवः अण् ङीप्। वंशरोचनायाम्।

**वाक** पु० वच-घञ्। वचने 'नमोवाकं प्रशास्महे' इत्युत्तरचरितम् ग्रन्थभेदे च 'वाकोवाक्ये तद्धासेत्यादि'च्छान्दोग्यम्। वकस्येदम् अण्। वकसम्बन्धिनि त्रि०।

**वाकुची** स्त्री०वाति क्विप् वाः कुच-सङ्कोचे क गौ०ङीप्कर्म०। (हाकुच) ओषधिभेदे। [वचनयुक्ते।

**वाक्पति** पु०६त०। वृहस्पतौ, वाचः पतिरिव। निर्दोषोक्त

**वाक्पथ** पु० वाचः पन्थाः विषयः अच् समा०। वाक्यविषये

**वाक्पारुष्य** न० वाचा पारुष्यम्। 'देशजातिकुलादीनामाक्रोशोन्यङ्गसंयुतम्। यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते' इत्युक्तलक्षणे अष्टादशविवादान्तर्गते विवादभेदे।

**वाक्य** न०वच-ण्यत् चस्य कः। 'वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चय' इत्युक्ते स्वार्थबोधसमाप्ते पदसमुदाये।

**वाघ** स्पृहायां भ्वा०पर०सक०सेट् इदित्। वाङ्घति अवाङ्घीत्

**वागीश** पु०वाचामीशः। वृहस्पतौ 'वागीशाद्याः सुमनस' इति न्यायमाला। सरस्वत्यां स्त्री० 'वागीशा हृदये यस्ये'ति श्रीधरः।

**वागीश्वर** पु०६त०। वृहस्पतौ गुरौ च तत्पत्न्यां सरस्वत्यां स्त्री० ङीप् 'वागीश्वरी स्मृतुस्नातां फुल्लेन्दीवरलोचनाम्। वागीश्वरेण संयुक्ता'मिति तन्त्रम्।

**वागुजी** स्त्री० वाचां गुज्यते ध्वन्यते गुज-क गौरा० ङीष्। सोमराज्याम्। [पाशादौ।

**वागुरा** स्त्री० वा-हिंसने उर गुक् च। मृगयार्थं मृगबन्धन-

**वागुरावृत्ति** पु० वागुरा मृगबन्धनपाशादिरेव वृत्तिर्जीविका यस्य। व्याधे। [व्याधे

**वागुरिक** पु० वागुरा प्रहरणं यस्य वागुरयाचरति वा ठक्।

**वागडम्बर** पु०६त०। वाक्यस्तोमे बहुलवाक्ये च।

**वाग्दण्ड** पु० वाचो वागिन्द्रियस्य दण्डः संयमनम्। मितभाषणे वाक्यसंयमे च। [कृतसङ्कल्पायां कन्यायाम्

**वाग्दत्ता** स्त्री० वाचा दत्ता। विधिना वाक्यमात्रेण दात्त

**वाग्दुष्ट** त्रि० वाचा दुर्वचनेन दुष्टः। शुद्धेऽपि वस्तुन्यशुद्धकथनेन दूषिते। 'वाग्दुष्टं भावदुष्टं च वर्जमेदिति'स्मृतिः

**वाग्देवता** स्त्री० वाचां देवता। सरस्वत्यां 'वाग्देवता चरितचित्रितचित्तसद्मे'ति जयदेवः। वाग्देव्यादयोऽप्यत्र।

**वाग्मिन्** त्रि० वाच्+अस्त्यर्थे ग्मिनि चस्य कः तस्य लोपः। प्रशस्तवाक्यवक्तरि। वृहस्पतौ पु०।

**वाग्यत** त्रि०वाचि वागिन्द्रियव्यापारोयतो येन। मौने 'वाग्यतस्त्रिषवणं चरेदि'ति स्मृतिः।

**वाङ्मय** त्रि०वाक्स्वरूपम् मयट्चस्य कः। वाक्यस्वरूपे शास्त्रे

**वाङ्मती** स्त्री० 'हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाङ्मती नदी'त्युक्ते नदीभेदे। सा च मिथिलादेशसन्निकृष्टतया वहति

**वाचंयम** त्रि० वाचां यच्छति वाचा+यम-खच् मुम् ह्रस्वश्च। मितभाषिणि। मौनावलम्बिनि मुनौ पु०।

**वाचक** पु० वक्ति अभिधावृत्त्या बोधयति ण्वुल्। 'साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचक' इत्युक्ते शब्दभेदे। कथके त्रि०। वाचयति वच-णिच्-ण्वुल्। पुराणादिपाठके त्रि० 'वाचकः पूजितो येनेति' पुराणम्।

**वाचन** न० वच-णिच्-स्वार्थे वा णिच्-ल्युट्। पठने कथने च युच्। पठने स्त्री०। [भाषादौ।

**वाचनिक** त्रि० वचनेन निर्वृत्तम् ठक्। वाक्य निष्पादिते

**वाचस्पति** पु० ६त० अलुक् समा०। वृहस्पतौ।

**वाच्(चा)** स्त्री० उच्यतेऽसौ अनया वा वच-क्विप्नि० वा टाप्। वाक्ये, वागिन्द्रिये च।

**वाचाट** त्रि० वाक्+कुत्सायां वाकुत्सायां वाकुत्स्येऽर्थे आटच् भत्वात् न कः। कुत्सितबहुभाषिणि। आलच्। वाचालोऽप्यत्र।

**वाचिक** त्रि०वाचा कृतम् वाच्+ठक् भत्वात् न कः। वाक्यनिष्पादिते पापादौ। [वाक्यनैर्मल्ये च।

**वाचोयुक्ति** स्त्री० ६त० अलुक् स०। वाचादर्शितयुक्तौ

**वाच्य** न०वच-भावे ण्यत् न कः। दूषणे,प्रतिपादने, कथने च। कर्मणि ण्यत्। दूष्ये, प्रतिपाद्ये, अभिधया बोध्यार्थे च।

**वाछ** कामे भ्वा०पर०सक०सेट् इदित्। वाञ्छति अवाञ्छीत्।

**वाज** न०वज-घञ्। अन्ने,घृते,जले,यज्ञे च। शरपक्षे,वेगे च पु०

**वाजपेय** पु०न० वाजमन्नं घृतं वा पेयमत्र। यागभेदे।

**वाजपेयिन्** पु०वाजपेय+अस्त्यर्थे इनि। वाजपेययागकर्त्तरि उपचारात् तद्वंश्ये च।

**वाजसनेयिन्** पु०वाजसनेयः अध्येयत्वेनास्त्यस्य इनि। यजुर्वेदशाखाभेदाध्यायिनि विप्रादौ। तदुक्तरीत्या कर्माहे शूद्रे च 'शूद्रा वाजसनेयिनः इति स्मृतिः। [कन् तत्रैव।

**वाजिदन्त** पु० वाजिनां दन्त इव पुष्पमस्य। वासके। स्वार्थे

**वाजिन्** पु०वाजः वेगः पक्षो वा अस्त्यस्य इनि। घोटके,वाणे, वासके च वेगवति त्रि०। स्त्रियां ङीप्। सा च अश्वगन्धायाञ्च

**वाजिन** न० वाजिभ्योदेयम् अण्। आमिक्षानिःसृतजले 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'ति श्रुतिः।

**वाजिपृष्ठ** पु० वाजिन इव पृष्ठमस्य। अम्लानवृक्षे।

**वाजिभक्ष** पु० भक्ष्यते भक्ष-कर्मणि घञ् ६त०। चणके।

**वाजिभोजन** पु० वाजिभिर्भुज्यते भुज-कर्मणि ल्युट्। मुद्गे

**वाजीकरण** न० अवाजी वाजीव क्रियतेऽनेन वाजिन्+च्वि कृ-ल्युट्। 'यद्द्रव्यं पुरुषं कुर्यात् वाजिवत् सुरतक्षमम्। तद्वाजीकरणं ख्यातमि'त्युक्ते वीर्यवृद्धिकारके औषधभेदे

**वाञ्छा** स्त्री० वाछि-अ। इच्छायाम् इष्टसाधनताधीजन्येऽभीष्टविषये चित्तवृत्तिभेदे। [वास्तुभूमौ स्त्री०

**वाट** पु० वट-घञ्। पथि, स्थाने,वृतिस्थाने च। गौ० ङीप्।

**वाटिका** स्त्री०वट-ण्वुल्। वास्तुभूमौ (बेड़ियाला) क्षुपे, हिङ्गुपत्त्रयाञ्च। [क्षुपभेदे।

**वाट्या** स्त्री० वाटी हिता तत्र साधुर्वा यत्। (बेड़ियाला)

**वाट्याल** पु० वाटीमलति भूषयति अल-अण्। (बेड़ियाला) क्षुपभेदे गौरा० ङीप्। तत्रैव स्त्री०। ण्वुल्। तत्रैवार्थे पु०

**वाड** आप्लावे भ्वा०आ०अ०सेट् चङि न ह्रस्वः। वाडते अवाडिष्ट

**वाडवेय** पु०वडवायां भवः ढक्। समुद्रस्थे अग्नौ सुखजेऽनले।

**वाढ** न० वह-क्त नि०। अतिशये,तद्युक्ते त्रि०। पु० प्रशस्तम्। प्रतिज्ञायां, स्वीकारे च अव्य०।

**वाण** पु०वण-घञ्। शरे, गवांस्तने, दैत्यभेदे, केवले,वह्नौ,काण्डावयवे, भद्रमुञ्जे,कादम्बरीग्रन्थकारके कविभेदे च 'यस्य वाणस्तु वाणा'इति प्रसन्नराघवम्। नीलझिण्ट्यां पु०स्त्री०।

**वाणपुर** न० ६त०। शोणितपुरे कोट्टवीपुराख्ये पुरभेदे।

**वाणवार** पु० वाणं परसैन्यशरं वारयति वृ० वृ-अण्। योधादेश्चोलाकारे सन्नाहे कवचे।

**वाणहन्** पु० वाणं हतवान् हन-ताड़ने भूते क्विप्। नीलक्षे वाणजिदादयोऽप्यत्र। [ङीप्। वाक्ये,तद्देवतायाञ्च

**वाणि** स्त्री० वण-इण् वा ङीप्। वयने, वाणदण्डे, वेमनि,

**वात** गतौ सेवायां सुखीकरणे च सक० अद०चु०उभ० सेट्। वातयति ते अववातत् त।

**वात** पु० वा-क्त। स्पर्शमात्रविशेषगुणके भूतभेदे पवने, देहस्थे धातुभेदे च। गन्तरि त्रि०। जारे, इष्टमायके च 'प्रभातवाताहतीति भट्टिः।

**वातक** पु०वात इव चञ्चलः इवार्थे कन्। अश्मन्तपर्णाम् जारे च

**वातकिन्** त्रि० वातोऽस्त्यस्य इनि कुक् च। वातरोगयुक्ते।

वातकेतु पु० ६त० । धूलौ रजसि ।
वातघ्नी स्त्री० वातं रोगभेदं हन्ति हन्-टक् ङीप् । शालपर्ण्याम् (शालपानि) अश्वगन्धायां, शिखण्डीक्षुपे च ।
वातध्वज पु० ६त० । मेघे । [वृक्षे
वातपोथ पु०वातं रोगभेदं पुथ्यति हिनस्ति पुथ-अण् । पलाश
वातप्रमी स्त्री० वातं प्रमिणोति प्र+मा- ई किच्च । शीघ्रगे मृगे
वातमज पु० वातमनुलक्ष्य अजति अज-अच् व्यभावः । मृगभेदे ।
वातमृग पु० वातानुगो मृगः शाक० । शीघ्रगे मृगभेदे ।
वातरक्त न० वातजं दुष्टं रक्तम् रुधिरं यत्र । रोगभेदे ।
वातरक्तघ्न पु० वातजरक्तं रोगभेदं हन्ति ठक् । कुक्कुरवृक्षे (कुक्करसोङ्गा) ।
वातरक्तारि,पु०६त० । (गुलुञ्च) श्यामायां लतायाम् ।[वृक्षे ।
वातरङ्ग पु० वातस्येव सततं रङ्गचलनमस्य । चलदले अश्वत्थ
वातरायण पु० वा-क्त ततस्तरण वातरमयनं यस्य पात्वम् । उन्मत्ते,प्रयोजनशून्ये पुरुषे, काण्डे, करपात्रे, कूटे, सरलद्रुमेच
वातरूष पु०वातेन रूष्यते रूष-घञ् । वातूले, उत्कोचे, इन्द्रचापे च । [द्रव्ये त्रि० ।
वातल पु० वातं रोगभेदं लाति ला-क । चणके । वायुकारके
वातव्याधि पु० वातेन कायस्य धातुभेदेन जनितो व्याधिः शाक० । वातरोगे । [फलवृक्षे ।
वाताद पु० वाताय वातनिवृत्तये ऽद्यतेऽसौ अद-घञ् (वादाम)
वातापि पु० अगस्त्यनाशितेऽसुरभेदे । 'आतापिर्भक्षितो येन वातापिश्च महाबलः । समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु इति भोजनान्ते पाठ्यमन्त्रः । [अगस्त्ये मुनौ ।
वातापिसूदन पु० वातापिं सूदयति हिनस्ति सूद-ल्यु ।
वातामोदा स्त्री० वातेनामोदो यस्याः । कस्तूर्याम् ।
वातायन न० वातस्यायनं गतिर्येन । गवाक्षे वातस्येव शीघ्रमयनं गतिरस्य । अश्वे पु० ।
वातायु पु० वातमयते अय-उण् । हरिणे ।
वातारि पु० वातस्य रोगभेदस्यारिः । एरण्डवृक्षे, शतमूल्यां, शेफालिकायां, यवान्यां, भार्ग्यां, स्नुह्यां, विडङ्गे, सूरणे, भल्लातके, जतुकायाञ्च ।
वाताश्व पु० वात इव शीघ्रगोऽश्वः । आजानेये अश्वोत्तमे ।
वाति पु० वा-क्तिच् । वायौ ।
वातिक पु०वातादागतः ठक् । देहस्थवायुधातुजन्ये रोगभेदे ।
वातिग पु० वातिं वायुं गच्छति गम-ड । वार्त्ताकौ गम-ख्च वातिगमोऽप्यत्र । [घम् च । वार्त्ताकौ ।
वातिङ्गण पु० वातिं देहस्थवातं सेवनात् गणयति गण-ख्च ।
वातीय न० वाताय वातनिवृत्तये हितः छ । काञ्जिके ।
वातुल पु० वातानां समूहः उलच् । वातसमूहे ।
वातूल त्रि० वात+अस्त्यर्थे ऊलच् । वातरोगयुक्ते उन्मत्ते समूहार्थे ऊलच् वातसमूहे पु० । [नोनः । वायुहीने त्रि०
वातोना स्त्री० वातमूनयति ऊन-अण् । गोजिह्वाक्षुपे वाते-
वात्या स्त्री० वातानां समूहः यत् । वातसमूहे 'वितत्य वात्यामयचक्रे'ति नैषधम् ।
वात्सक न० वत्सानां समूहः वुञ् । वत्ससंघे ।
वात्सल्य न० वत्सलस्य भावः ष्यञ् । पुत्रादिस्नेहानुगुणे रसभेदे
वात्स्य पु० वत्सस्यापत्यं यञ् । गोत्रप्रवर्त्तके मुनिभेदे ।
वात्स्यायन पु० वत्सस्य गोत्रापत्यं युवा वत्स+यञ् ततोयूनि फक् । वत्सगोत्रोत्पन्ने न्यायसूत्रभाष्यकारके पक्षिलाख्ये मुनौ
वाद पु० वद-घञ् । तत्त्वबुभुत्सया कथने,'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद' इति गौतमोक्ते विचारात्मके वाक्यभेदे च ।
वादन न०वद-णिच्-कर्मणि ल्युट् । मृदङ्गादिवाद्ये । भावे ल्युट् । मृदङ्गादिताडनरूपे व्यापारे । [निर्मिते वस्त्रादौ ।
वादर न० वदरायाः कार्पास्याः विकारः अण् । कार्पाससूत्र-
वादरङ्ग पु० वादरं वदरासंबन्धिपत्रादिसादृश्यं गच्छति गम खच् डिच्च । अश्वत्थवृक्षे ।
वादरत त्रि० वादे विवादे रतः रम-क्त । अनुदिनविवादशीले
वादरा स्त्री० वातं वायुं राति ददाति रा-क पृ० तस्य दः । कार्पास्याम् ।
वादरायण पु० वदरीप्रधानं स्थानं वादरं तदयनं स्थानं यस्य । नित्यं वदरिकाश्रमवासिनि वेदव्यासे । स्वार्थे इञ् । वादरायणिरप्यत्र । अपत्ये इञ् । व्यासपुत्रे शुकदेवे ।
वादल न०वातं लाति गृह्णाति ला क पृ० तस्य दः । मधुयष्टौ
वादाम न० वातमवति हिनस्ति अम-अण् पृ० तस्य मः । स्वनामख्याते फलभेदे ।
वादित्र न०वद-णिच्-इत्र । मृदङ्गादिवाद्ये ।
वादिन् त्रि० वदति वद-णिनि । वक्तरि-अर्थिनि,विवादकर्त्तरि, विचारस्थले प्रथमपक्षप्रतिपादके च ।
वाद्य न० वद-णिच्-यत् । वादनीये मृदङ्गादौ ।
वाद्यभाण्ड न०कर्म०। वादनीयपात्रे । [विट्।पक्षि न सुखः
वा(बा)ध विघाते भ्वा०आत्म०सक० सेट् । बा(वा)धते अबा(वा)-
वा(बा)ध पु० वा(बा)ध-घञ् । प्रतिरोधे, प्रतिबन्धे, न्यायोक्ते साध्याभाववत्त्वेन ज्ञाने, अबा(वा)धाप्यत्र, पीडायाञ्च स्त्री० । ल्युट् । बा(वा)धनमप्यत्रार्थे न० ।

**वान** न० वन-घञ्। शुष्कफले, शुष्के त्रि०। वनस्येदं समूहो वा अण्। वनसम्बन्धिनि त्रि० तत्सङ्घे न०।

**वानप्रस्थ** पु० वाने वनसमूहे प्रतिष्ठति स्था-क। मधूकवृक्षे, पलाशवृक्षे,वनप्रस्थएव स्वार्थे अण्। 'गृहस्थस्तु यदा पश्येत् वलिपलितमात्मनः। पुत्रेषु दारान् निक्षिप्य वनं गच्छेत् सहैव वे'त्युक्ते आश्रमभेदे। [स्वनामख्याते पशुभेदे

**वानर** पु० वानं वनसम्बन्धि फलादिकं राति गृह्णाति रा-क।

**वानरप्रिय** पु० ६त०। क्षीरिवृक्षे।

**वानराघात** पु० वानराणामाघातो यत्र। लोध्रवृक्षे।

**वानरी** स्त्री० वानरस्य प्रियम् भक्ष्यत्वात् अण् ङीप्। शूकशिम्बगाम्। वानर+स्त्रियां ङीप्। वानरयोषिति।

**वानरेन्द्र** पु० वानर इन्द्र इव। सुग्रीवे। ६त०। वानरनाथादयोऽप्यत्र। [तृणभेदे।

**वानल** पु० वानं वनभावं निविडतां लाति ला-क। (वावुइ)

**वानस्पत्य** पु० वनस्पतेरयम् प्रतिरूपः पुष्पाज्जातफलत्वात्। पुष्पजातफलके आम्रादौ वृक्षे।

**वानायु** पु० वनायुदेशे (आरव)।

**वानायुज** पु०वानायुदेशे जायते जन-ड। घोटकभेदे। (आरवी)

**वानीर** पु०वन-ईरन् स्वार्थेऽण्। वेतसे, वञ्जुलवृक्षे च।

**वानीरक** पु० वानीर इव इवार्थे कन्। मुञ्जतृणे।

**वानेय** न० वने जले भवः ढक्। कैवर्त्तीमुस्तके।

**वान्त** त्रि० वम-क्त। उद्गीर्णे, वान्ताशीत्युच्यते बुधैरित्युक्तदः

**वान्तिहृत्** पु० वान्तिं वमनरोगं हरति हृ-क्विप्। (मयना) ख्याते वृक्षे।

**वान्तिदा** स्त्री० वान्तिं छर्दिं ददाति दा-क। कटुकीवृक्षे।

**वाप** पु०वप-घञ्। तन्त्वादेर्वीजादेश्च वपने,मुण्डने च। [दण्डे

**वापदण्ड** पु०उप्यतेऽनेन वप-करणे घञ् कर्म०। वेमनि तन्तुवपन

**वापि(पी)** स्त्री०वप-इञ् वा ङीप्। 'द्रोणात् दशगुणा वापी' त्युक्तलक्षणे जलाशयभेदे, जलाशयमात्रे च 'वापीं स्नातुमितो गतासी'ति काव्यप्रकाशः।

**वापीह** पु०वापीं तत्स्थजलं जहाति हा-क। चातके विहगे

**वाप्य** न० वाप्यां भवः यत्। कुष्ठौषधे। वापीभवे, वप-ण्यत्। वपनीये च त्रि०।

**वाम** न० वा-मन्। धने,वास्तूके च। मनोहरे, प्रतिकूले,सव्यभागस्थे, अधमे च त्रि०सव्यदेहे न०। कामदेवे, महादेवे, तन्त्रोक्ते वेदाचारविरुद्धे मद्यादिपानरूपाचारे च पु०।

**वामदेव** पु०कर्म०। महादेवे।

**वामन** त्रि० वम-खिद्-ल्युट्-ल्यु वा। दक्षिणदिग्गजे, अङ्कोटवृक्षे, वलिवञ्चनार्थं प्रादुर्भूते हरेरवतारभेदे, पाणिनिसूत्रस्य काशिकावृत्तिकारके पण्डितभेदे च। ह्रस्वे त्रि० स्त्रियां ङीप्। वामनीं मूर्त्तिमाददे इति।

**वामलूर** पु० वामं लुनाति लू-रक्। वल्मीके।

**वामलोचना** स्त्री० वामे सुन्दरे लोचने यस्याः। स्त्रीभेदे।

**वामवेध** पु० वामः प्रतिकूलो वेधः। ज्योतिषोक्ते गोचरस्थग्रहाणां स्वस्वराश्यवधिकस्थानविशेषस्थग्रहभेदकृते योगभेदे 'वामवेधविधिना लग्नोमना चाप्यसौ' इति ज्योतिषम्।

**वामाचार** पु०वामः वेदादिविरुद्धः आचारः। तन्त्रोक्ते मद्यमांसादिसेवनरूपे आचरणे। [पीड-ल्युट्। पीलुवृक्षे।

**वामापीडन** पु०वामं यथा तथा आपीड्यते भूष्यतेऽनेन आ+

**वामावर्त्त** त्रि० वामेनावर्त्तते आ+वृत-अच्। वाममार्गेण वृत्तिस्मति पदार्थे। भावे घञ्। वाममार्गेणावृत्तौ।

**वामी** स्त्री० वाम-गौरा०ङीष्। अश्वाम् 'अयोध्यावामीगतवाहितार्थ इति रघुः। शृगाल्यां रासभ्यां करभ्यां च।

**वामोरू** स्त्री० वामौ सुन्दरौ ऊरू यस्याः ऊङ्। प्रशस्तोरुमत्यां नार्य्याम्।

**वाय** पु० वे-घञ्। वपने। [ वापदण्डे।

**वायदण्ड** पु० वायतेऽनेन वे-करणे घञ् कर्म०। वेमनि

**वायवी** स्त्री० वायोरियं यत् स्त्रियां ङीप् यलोपः। वायुसम्बन्धिन्यां, स्त्रियां तच्छक्तौ, उत्तरपश्चिमायां दिशि च।

**वायव्य** त्रि०वायुर्देवताऽस्य वायु+यत्। वायुदेवताके पश्वादौ 'वायव्यं श्वेतं छागमालभेते'ति श्रुतिः। वृक्षे,श्रीवासे च

**वायस** त्रि०वयएव अण्। काके,वायं वपनं स्यति षो-क। अगुरु-

**वायसाराति** पु०६त०। पेचके।

**वायसादनी** स्त्री० वायसः काकैरद्यते अद-ल्युट् ङीप्। काकतुण्ड्यां, महाज्योतिष्मत्याञ्च।

**वायसी** स्त्री०वायसस्येवमप् प्रियत्वात्। काकोडुम्बरिकायाम्।

**वायसेक्षु** पु० वायसानामिक्षुरिव प्रियः। काशतृणे।

**वायसोली** स्त्री०वायसमोडते ओड-उत्क्षेपे अच् डस्य लः शक०। काकमाच्याम्। स्वार्थे कन्। तत्रैव।

**वायु** पु० वा-उण्। स्पर्शगुणके पञ्चभूतमध्ये भूतभेदे, उत्तरपश्चिमविदिगधिपतौ देवभेदे' देहस्थधातुभेदे च।

**वायुपुत्त्र** पु० ६त०। हनुमति, भीमे च वायुसुतादयोऽप्यत्र।

**वायुभक्ष** पु०वायुं भक्षति भक्ष-अण्। सर्पे। ल्यु। वायुभक्षणोऽप्यत्र

**वायुवर्त्मन्** न०। वायोर्वर्त्म सञ्चारमार्गोऽयत्र। आकाशे।

**वायुवाह** पु० वायुना उह्यते वह-घञ्। धूमे।

**वायुवाहिनी** स्त्री० वायुं देहस्थवायुं वाहयति सञ्चारयति

वह-णिच्-णिनि । वायुसञ्चारिण्यां देहस्थशिरायाम् ।

**वायुसख** पु० वायोः सखा सहचरः अच् समा० । अग्नौ ।

**वायुसखि** पु० वायुः सखा यस्य । अग्नौ ।

**वाय्वास्पद** न० ६त० । वायुसञ्चारस्थाने आकाशे ।

**वार्** न० स्त्री० वृ-क्विप् । जले ।

**वार** पु० वृ-घञ् । सङ्घे अवसरे स्वयोग्यकाले (पाला) 'वारोऽङ्गराजस्यपुरि'ति सा० १प० द्वारे, शिवे, कुब्जवृक्षे, क्षणे, सूर्य्यादिग्रहाणां अधिकृते दिने, यथा रविवारः रविस्वामिकं दिनम् इत्यादि । यन्त्रपात्रे च ।

**वारक** त्रि० वारयति वृ-णिच्-ण्वुल् । प्रवृत्तिनिरोधके । अश्वगतिभेदे, अश्वविशेषे च पु० ।

**वारण** न० वृ-णिच् ल्युट् । प्रवृत्तिप्रतिरोधे, निषेधे हस्तादिधारणे च । गजे पु० । वाणवारे कवचे पु०न० ।

**वारणबुषा(सा)** स्त्री० वारणं पुष्णाति पुष-क पृ० । कदल्याम्

**वारणवल्लभा** स्त्री० ६त० । कदल्याम् ।

**वारवृषा** स्त्री० वारं जलं वर्षत्यत्र वृष-क । धान्ये । [वेश्यायाम्

**वारमुख्या** स्त्री० वारे वेश्यावृन्देमुख्या । बहुजनसत्कृतायां

**वारंवारम्** अव्य० वृ-णमुल् द्वित्वम् । पौनःपुन्ये ।

**वारलीक** पु० वार्जलं अलीकं यत्र । (बावुइ तुलसी) क्षुपे ।

**वारयितृ** पु० वृ० वृ-तृच् । पत्यौ । वारणकर्त्तरि त्रि० ।

**वारयोषा** स्त्री० वारस्य जनसमूहस्य योषा साधारणत्वात् । वेश्यायाम् । ६त० । वारवध्वादयोऽप्यत्र ।

**वारवाण** पु०न० वार्य्यते वृ-घञ् वारो वार्य्यो वाणो यस्य । कवचे

**वारवाणि** स्त्री० वारं समूहं वणते वण-इण् वा ङीप् । वेश्यायाम्

**वारांनिधि** स्त्री० वारां जलराशीनां निधिराधारः नि+धा-कि अलुक् समा० । समुद्रे ।

**वाराणसी** स्त्री० वरणा च असी च सीमात्वेनास्त्यस्या अण् पृ० । काशीनगरे वराणस्यप्यत्र ।

**वाराह** पु० वराहस्येदं प्रियत्वात् अण् । महापिण्डीतक वृक्षे वराहसम्बन्धिनि त्रि० । [ङीप् । अश्वगन्धायाम् ।

**वाराहकर्णी** स्त्री० वराहस्यायं वाराहइव कर्णः पत्रमस्याः

**वाराहपत्री** स्त्री० वाराहस्तत्कर्णइव पत्रमस्याः ङीप् । अश्वगन्धायाम् ।

**वाराहाङ्गी** स्त्री० वाराहमिवाङ्गमस्याः ङीप् । दन्तीवृक्षे ।

**वाराही** स्त्री० वराहस्येयमण् ङीप् । अष्टमातृकामध्ये वराहशक्तौ, 'वाराही नारसिंही चे'ति श्यामास्तवः । वराहक्रान्तायाम् वराहयोषिति च ।

**वारि** न० वृ-इन् । जले, ह्रीवेरे च । वार्य्यतेऽनया वृ-णिच्-इन् वा ङीप् । गजबन्धन्याम् 'वार्य्यर्गलाभङ्गइव प्रवृत्त' इति रघुः । वाचिसरस्वत्याम् च स्त्री ।

**वारिकण्टक** पु०न० वारिणः कण्टकइव । शृङ्गाटके ।

**वारिकर्णी** स्त्री० वारिणि कर्णइव पत्रमस्याः ङीप् । कुम्भराम् (पाना) स्वार्थे कन् । तत्रैव । [स्वार्थे कन् । तत्रैव ।

**वारिकुब्ज** पु० वारिणि कुब्ज इव वक्राकृतित्वात् । शृङ्गाटके

**वारिचत्वर** पु० वार्य्येव चत्वरस्थमस्याधारत्वात् । कुम्भिकायाम्

**वारिचर** पु० वारिषु चरति चर-अच् । मत्स्ये जलचरजन्तुमात्रे त्रि० । [त्वात् शैवाले

**वारिचामर** न० वारिणश्चामरमिव शोभाहेतुपुञ्जाकृति-

**वारिज** न० वारिणि जायते जन-ड । पद्मे, लवङ्गे, गौरसुवर्णे, लवणभेदे च । शङ्खे, शम्बूके च पु० । [च

**वारितस्कर** पु० वारिणस्तस्करइवापहारकत्वात् । सूर्य्ये, मेघे

**वारित्रा** स्त्री० वारिणस्त्रायते त्रै-क । छत्रे । [त्रि०

**वारिद** न० वारि ददाति दा-क । मेघे, मुस्तके च । जलदातरि

**वारिधि** पु० वारीणि धीयन्तेऽस्मिन् धा-कि ६त० । समुद्रे वारिनिध्यादयोऽप्यत्र । [(पाना)

**वारिपर्णी** स्त्री० वारिणि पर्णान्यस्याः ङीप् । कुम्भिकायाम्

**वारिपालिका** स्त्री० वारीणि पालयति आवृणोति पाल-ण्वुल् । कुम्भिकायाम् (पाना) । [कायाम् (पाना) ।

**वारिपृश्नी** स्त्री० वारिणि पृश्निः पर्णमस्याः ङीप् । कुम्भि-

**वारिबदरा** स्त्री० वारिसमीपभवा बदरेव । प्राचीनामलके ।

**वारिबालक** न० वारिणो बालक इव । ह्रीवेरे

**वारिभव** न० वारिणो भवति प्रभवति भू-अच् । स्रोतोञ्जने ।

**वारिमसि** पु० वारि जलं मसिरिव नीलतापादकं यस्य । मेघे

**वारिमूली** स्त्री० वारिणि मूलमस्याः ङीप् । कुम्भराम् (पाना)

**वारिरथ** पु० वारिणि रथ इव गमनसाधनम् । भेलके ।

**वारिराशि** पु० वारीणां राशयोऽत्र । समुद्रे । [त्रि०

**वारिरुह** न० वारिणि रोहति रुह-क । पद्मे, जलजातमात्रे

**वारिवदन** न० वारियुक्तं वदनं यस्मात् । प्राचीनामलके तत्सेवने हि मुखे वारिनिस्रावः ।

**वारिवर** न० वारि वृणोति वृ-अच् । करमर्दके । [बदर्य्याम् ।

**वारिवल्लभा** स्त्री० वारि वल्लभमस्याः उत्पत्तिहेतुत्वात् ।

**वारिवाह** पु० वारीणि वहति वह-अण् । मेघे ।

**वारिश** पु० वारिणि समुद्रजले शेते शी-ड । विष्णौ ।

**वारीश** पु० ६त० । समुद्रे, वरुणे च । वारिनाथादयोऽप्यत्र ।

**वारुण** न० वरुणस्येदमण् । जले, वरुणसंबन्धिनि त्रि० ।

**वारुणि** पु० वरुणस्यापत्यम् इञ् । अगस्त्यमुनौ कुम्भजात-

त्वात् मैत्रावरुणापत्यत्वाच्च तथात्वम् ।

**वारुणी** स्त्री० वरुणोदेवतास्य वरुणस्येदं वा अण् ङीप् । पश्चिमदिशि, मदिरायाम्, शतभिषानक्षत्रे, दूर्व्वायां, गण्डदूर्व्वायाम्, इन्द्रवारुण्यां, शतभिषानक्षत्रयुक्तचैत्रकृष्णत्रयोदश्यां, वरुणस्त्रियाञ्च ।

**वारेन्द्री** स्त्री देशभेदे, (वारेन्द्रभूमि) (राजसाही) वङ्गदेशप्रदेशे

**वार्त्त** न० वृत्ति+अण् । आरोग्ये । निरामये, वृत्तिशीले च त्रि० । दुर्गायां, कृषिकर्मणि, वृत्तौ, जनश्रुतौ, वृत्तान्ते, कालकर्त्तृके भूतनाशने च स्त्री० 'अस्मिन् महामोहमये कटाहे सूर्य्याग्निना रात्रिदिनेन्धनेन । मासर्त्तुदर्व्वीपरिघट्टनेन भूतानि कालः पचतीति वार्त्ता इति भारतम् ।

**वार्त्ताक** पु० वार्त्तमारोग्यमाकयति गमयति अक-णिच्-अण् । वार्त्ताकौ । स्त्रियामपि तत्पक्षे ङीप् । वृ० उत्तमम् वार्त्ताकुरम्बल स्त्री० 'वार्त्ताकुरेषा गुणसम्प्रयुक्ते'ति वैद्यकम् ।

**वार्त्तावह** पु० वार्त्तामावहति आ+वह-अण् । कृषिवाणिज्याजीविनि वणिग्भेदे । वृत्तान्तवाहके त्रि० ।

**वार्त्तिक** न० वृत्तिरूपेण कृतो ग्रन्थः ठक् । 'उक्तानुक्तदुरुक्तार्थ व्यक्तकारि तु वार्त्तिक'मित्युक्ते सूत्रानुक्ताद्यर्थाविष्कारके ग्रन्थभेदे ।

**वार्द्दर** न० वारि जलाय दीर्य्यते दृ-अप् । दक्षिणावर्त्तशङ्खे, काकविष्ठायाम्, कृष्णलाबीजे, कृमिजे, आम्रबीजे च । वारेव दरम् । जले । [समूहे, वृद्धस्य भावे कर्म्मणि च ।

**वार्द्धक** न० वृद्धानां समूहः तस्य भावः कर्म्म वा वुञ् । वृद्ध

**वार्द्धक्य** न० वृद्धस्य भावः कर्म्म वा ष्यञ् कुक् च । वृद्धत्वे ।

**वार्द्धि** पु० वारि जलानि धीयन्तेऽत्र धा-कि उप० । समुद्रे ।

**वार्द्धिभव** न० वार्द्धौ समुद्रे भवति भू-अच् । सामुद्रलवणे ।

**वार्द्धुषि** पु० वृद्ध्या जीवति इष् वृद्धेर्वृधुषिभावः । वृद्ध्याजीवे । स्वार्थे कन् । तत्रैव । [वृद्ध्याजीविनि

**वार्द्धुषिन्** त्रि० वृद्धि+अस्त्यर्थे इनि प्रकृतेः नि० वार्धुषिभावः ।

**वार्द्धुष्य** न० वार्द्धुषेर्भावः ष्यञ् । धान्यादेर्वृद्ध्युपाये (वाडिदेया)

**वार्द्धीणस** पु० वारि जलानि धयति धा-क्विप् वार्ध्रीः नसा नासिका यस्य णत्वम् पृ० । गण्डके । पृ० वार्ध्रीणसः । 'त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणसः प्रोच्यतेऽसौ' इत्युक्ते पशुभेदे 'वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी'ति मनुः ।

**वार्म्मण** न० वर्म्मणां समूहः अण् न टिलोपः । कवचसमूहे ।

**वार्म्मिण** न० वर्म्मिणां समूहः अण् न टिलोपः । कवचिसमूहे

**वार्मुच्** पु० वारि जलानि मुञ्चति मुच-क्विप् । मेघे ।

**वार्षिक** त्रि० वर्षे वर्षासु वा भवः ठञ् । वत्सरभवे, वर्षाकालभवे च । त्रायमाणालतायां न० स्त्री० स्त्रीत्वे ङीप् । वर्षकर्त्तव्यायां पूजायां स्त्री० ङीप् । 'शरत्काले महापूजा क्रियते या च वार्षिकी'ति चण्डी ।

**वार्हत** न० वृहत्याः फलम् अण् तस्य न लुप् । वृहतीफले ।

**वार्हद्रथ(थि)** पु० वृहद्रथस्यापत्यमण्, इञ् वा । वृहद्रथराजपुत्रे जरासन्धे नृपे ।

**वार्हस्पत्य** न० वृहस्पतिना प्रोक्तमधीते अण् । चार्वाके । तेन प्रोक्तं तस्येदं वा अण् । नीतिशास्त्रे, बौद्धागमे च वृहस्पति सम्बन्धिनि त्रि० । [द्वितीये करणे ।

**वालव** पु० वल-घञ् वः=उद्वलनमस्यास्ति व । तिथ्यर्द्धात्मके

**वाल्क** न० वल्केन निर्वृत्तमण् । वल्कजाते वस्त्रे । [मुनिभेदे

**वाल्मिकि** पु० वल्मिके भवः इञ् । रामायणग्रन्थकर्त्तरि

**वाल्मीक(कि)** पु० वल्मीके भवः अण् इञ् वा । मुनिभेदे ।

**वावदूक** त्रि० वद-यङ्-लुक्-ऊकञ् । बहुवदनशीले वक्तरि

**वावय** पु० वय-यङ्लुक्-अच् । (बाबुइ) तुलसीभेदे ।

**वावृत** संभक्तौ दि०आत्म०सक०सेट् क्तावेट् । वावृत्यते अवावर्त्तिष्ट । 'ततो वावृत्यमाना से'ति भट्टिः ।

**वावृत्त** त्रि० वावृत-क्त । कृतवरणे ।

**वाश** तिरश्चां शब्दे अक०आह्वाने सक०दि० आत्म० सेट् चङि न ह्रस्वः । वाश्यते अवाशिष्ट । 'उद्वाश्यमानः पितर'मिति भट्टिः

**वाशा** स्त्री० वां गतिं श्यति शो-क । वासके । स्वार्थे कन् तत्रैव

**वाशित** न० वाश-भावे क्त । तिरश्चां शब्दे, आह्वाने च ।

**वाशिता** स्त्री० वाश-क्त । करिण्याम्, स्त्रीमात्रे च ।

**वाशि(सि)ष्ठ** न० वशि(सि)ष्ठस्येदम् अण् तेन प्रोक्तं वा अण् । वशिष्ठप्रणीते उपपुराणभेदे, योगशास्त्रभेदे च । वशि(सि)ष्ठसंबन्धिनि त्रि० । गोमत्यां नद्यां स्त्री० ङीप् ।

**वाश्र** न० वाश-रक् । गृहे, चतुष्पथे च । दिवसे पु० ।

**वाष्प(ष्प)** पु० बा-प पु(षु)क् च । ऊष्मणि, लोहे, चक्षुर्जले च । ...ायां कन् । मारिषशाके (नटिया) हिङ्गुपत्र्यां स्त्री० वा ...ङीप् । वाष्पी(स्पी)+कन् । वाष्पि(स्पि)काप्यत्र । [न

**वास** सुरभीकरणे अ०चु०उ०सक०सेट् । वासयति ते अववासत्-

**वास** वस-घञ् । गृहे वस्त्रे अवस्थाने, वास-अच् । वासके, ...भेदे च । [वासकः कासनाशक' इति वैद्यकम् ।

**वासक** पु० वास-ण्वुल् । स्वनामख्याते वृक्षे 'येन तेन प्रकारेण

**वासकसज्जा** स्त्री० 'कुरुते मण्डनं या तु सज्जिते वासवेश्मनि सा तु वासकसज्जा स्यादि'त्युक्तलक्षणे नायिकाभेदे । ...सज्जाप्यत्र ।

वासगृह न० वासयोग्यं गृहम् । मध्यगृहे ।
वासतेयी स्त्री०वसतये हिता ढक् । रात्रौ । वसतियोग्ये त्रि० 'वनेषु वासतेयेष्विति भट्टिः ।
वासन न० वास-ल्युट् । सुरभीकरणे धूपने, वारिधान्याम्, वस्त्रे, वासस्थाने, ज्ञाने च वस-णिच्-ल्युट् । निक्षेपाधारे, निक्षेपार्थे-मुद्राङ्किते च । [सुरभीकरणे च
वासना स्त्री०वास-युच् । प्रत्याशायां ज्ञाने, स्मृतिहेतौ, संस्कारे,
वासन्त पु० वसन्तस्येदम् वसन्ते भवः वा अण् । वसन्तप्रिये-उष्ट्रे, कोकिले च । वसन्तभवे-मलयवायौ-मुद्गे, कृष्णमुद्गे मदनद्रुमे च । तत्कालभवे त्रि० । यूथ्यां माधवीलतायां, पाटलायां नवमल्लिकायां, तत्कालपूज्यायां-दुर्गायाञ्च स्त्री०
वासयोग पु० वासेन गन्धेन योगोयत्र । (आबिर) चूर्णभेदे
वासर पु०न० । वस-अरन् । दिवसे । नागभेदे पु० ।
वासव पु० वसुरेव स्वार्थेऽण् वसूनि सन्त्यस्य वा अण् । इन्द्रे वसोरपत्यं स्त्री अण् ङीप् । । व्यासमातरि मत्स्यगन्धायाम् स्त्री० ।
वासवदत्ता स्त्री० वासवदत्तामधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक् । वासवदत्ताचरिताख्याके ग्रन्थभेदे । ३त० इन्द्रदत्ते त्रि० ।
वासस् न० वस-असि । वस्त्रे ।
वासागार न० वासयोग्यमगारम् । वासयोग्ये गृहे गृहमध्ये
वासि(सी) स्त्री० वस-इञ् वा ङीप् । कुठारभेदे (वाइस)
वासित त्रि० वास-क्त । सुरभीकृते ।
वासिनी स्त्री० वासोऽस्त्यस्याः इनि । शुक्लझिण्ट्याम्
वासु पु० वस-उण् । विष्णौ ।
वासुकि पु० वसुना रत्नेन कायति कै-क सएव इञ् । सर्पराजे 'भगिनी वासुके स्तथे'ति मनसास्तोत्रम् ।
वासुदेव पु० वसुदेवस्यापत्यम् अण् । विष्णौ ।
वासुदेवप्रियङ्करी स्त्री० ६त० । शतावर्य्याम्, श्रीकृष्णप्रेयकारिण्यां स्त्रियाञ्च ।
वासू स्त्री० वास-ऊ । नाट्योक्तौ बालायाम् ।
वास्तव न० वस्त्वेव अण् । सत्यभूते पदार्थे । [र्थे ।
वास्तविक त्रि० वस्तुतो निर्वृत्तम् ठक् । स्वतःसिद्धे यथार्थे
वास्तव्य त्रि० वसति वस-तव्य नि० । वासकर्त्तरि, वासयोग्ये स्थाने, वसतौ च पु० । [स्वार्थे कन् । शभेदे ।
वास्तु पु० वस-तुण् । वासयोग्यभूमौ, स्वनामख्याते शाके च ।
वास्तूक न० वास्तु-कन् पृ० दीर्घः । वास्तुशाके तीशाके स्त्री० गौरा० ङीष् ।
वास्तेय त्रि० वस्तेरिदम् वस्तये हितं वा ढक् । वस्तिसम्बन्धिनि वासयोग्ये च ।
वास्तोष्पति पु०६त० अलुक्समा० । इन्द्रे, वास्तुभूमिपतौ च ।
वास्त्र पु० वस्त्रेणाढृतो रथः अण् । वस्त्रेण सम्यगावृते रथे ।
वास्त्रेय पु० वास्त्राय हितं ढक् । नागकेशरे ।
वाह् यत्ने भ्वा०आ०अक०सेट् चङि न ह्रस्वः । वाहते अवाहिष्ट
वाह पु० उह्यतेऽनेन असौवाणवादिना वा वह-घञ् । अश्वे 'वाहोभारचतुष्टयमि'त्युक्ते परिमाणभेदे च । [दयोयत्र
वाहद्विषत् पु०वाहं द्वेष्टि द्विष-शतृ ६त० । महिषे वाहरिक्षा-
वाहन न० वाहयत्यनेन वह-णिच्-ल्युट् । रथादौ याने ।
वाहस पु० वाहं गतिं स्यति षो-क । अजगरे, सुनिषण्णके (सुसनि) शाके च । [पु० । गजकुम्भस्याधोभागे ।
वाहित्थ न० वहतीति णिनि वाही-तस्मिन् तिष्ठति स्था-क
वाहिनी स्त्री० वाहोऽस्त्यस्याः इनि ङीप् । सेनायां, वहति वह-णिनि । नद्याम् 'वाहिन्यः पार्श्वमेता न जहतीति काव्यप्रकाशः ।
वाहिनीपति पु० ६त० । सेनापतौ, समुद्रे च ।
वाहीक पु० वह-ईकण् । जातिभेदे (जाट) । गौर्वाहीक इति अलङ्कारः । देशभेदे च ।
वाहु पु० वह-उण् । भुजे अवयवभेदे, अङ्कशास्त्रोक्ते क्षेत्रव्यवहारे भुजाकारे रेखाभेदे च ।
वाहुमूल न० ६त० । भुजद्वयस्य मूले कक्षरूपे अङ्गे ।
वाहुवार पु० वाहुं वारयति वृ-णिच्-अण् । श्लेष्मातकवृक्षे
वाह्य न० वाहं चालनमर्हति यत्,वह-ण्यत्वा । अश्वादौ याने, वानरे च । वहिर्भवः ष्यञ् टिलोपः । वहिर्भवे त्रि० ।
वाह्येन्द्रिय न० वाह्यपदार्थानां शब्दादीनां ग्रहणयोग्यमिन्द्रियम् । शब्दादिग्राहके श्रोत्रादौ इन्द्रिये ।
वाह्लि(ह्ली)क पु० । वह-लिण् स्वार्थे कन् । देशभेदे । तद्देशजाते-कुङ्कुमे, हिङ्गुनि न० ।
वि अव्य०वा-कि । नियोगे, विशेषे- निश्चये, असहने, निग्रहे, हेतौ, अव्याप्तौ, ईषदर्थे, परिभवे, शुद्धौ,अवलम्बने,ज्ञाने, गतौ, आलस्ये, पालने च । विहगे पु० । [पूर्यते तस्मिन्
विंश त्रि० विंशतेः पूरणः विंशति+डट् । येन विंशतिसङ्ख्या
विंशक न० विंशतेरवयवः डुन् । विंशतिसंख्यायाम् । विंशतिरधिका दीयतेऽस्मिन् शते आयो लाभो वृद्धि र्वा-डुन् । प्रतिशतं विंशत्यधिकलाभादौ 'सामुद्रा विंशकं शत'मिति स्मृतिः ।
विंशति स्त्री०द्वे दशती नि० । द्विदशकसंख्यायां, ततसङ्ख्याते च

एक व०। सङ्ख्याविशेषार्थे तु सर्व्व व०। द्वे विंशती विंशः विंशतय इति।

विंशतिक त्रि० विंशतेर्योग्यः। विंशतियोग्ये। [ङीप्।

विंशतितम त्रि० विंशतेः पूरणः तमट्। विंशशब्दार्थे स्त्रियां

विकङ्कट पु० वि+ककि-अटन्। गोक्षुरे।

विकङ्कत पु० वि+ककि-अतच्। (वइची) वृक्षे, ग्रन्थिलायाञ्च

विकच पु० विगतः कचो यस्य। क्षपणे बुद्धसंन्यासिनि, विशिष्टः कचो यत्र। ध्वजे केतौ। वि+कच-अच्। विकशिते इव० केशशून्ये त्रि०। महाश्रावणिकायाम् स्त्री०।

विकट पु० वि+कट-अच्। विस्फोटके, शाकरुण्डवृक्षे च। वि+कटच्। विशाले, विकृते, सुन्दरे, दन्तुरे च त्रि०।

विकण्टक पु० विगतः कण्टकोऽस्य। यवासे। शत्रुहीने त्रि०।

विकत्थन न० वि+कत्थ-ल्युट्। आत्मश्लाघायाम्। युच्, तत्कर्त्तरि त्रि०

विकर्त्तन पु० वि+कृत-ल्यु। सूर्य्ये, अर्कवृक्षे च।

विकर्म्मस्थ पु० त्रि० विकर्म्मणि निन्दिताचारे तिष्ठति स्था-क। कुत्सिताचाररते। [हीने च।

विकल त्रि० विरुद्धा कला यस्य। विह्वले, स्वभावहीने, कला

विकलाङ्ग त्रि० स्वभावहीनमङ्गमस्य। स्वभावतो न्यूनाधिकाङ्गे

विकल्प पु० विभिन्नः कल्पः। भ्रान्तिहेतौ कल्पने, विविधकल्पने, संसर्गारोपणे, पक्षतः प्राप्तौ च। [निकायाञ्च

विकश्व(स्व)र त्रि० वि+कश(स)-ष्वरच्। प्रकाशशीले रक्तपुन-

विकषा स्त्री० विशेषेण कष्यतेऽसौ कष-घञर्थे क। मञ्जिष्ठायाम्

विक(शि)सित त्रि० वि+कश(स)-क्त। प्रकाशयुक्ते।

विकार पु० वि+कृ-घञ्। प्रकृतेरन्यरूपे परिणामे।

विकाल पु० विरुद्धः दैवपैत्रादिकर्मानर्हः कालः। राक्षसीनामकवेलायाम् दिवसान्त्यकाले।

विकाश न० विरुद्धः काशः। रहसि, विशिष्टकाशे प्रकाशे च

विकाशिन् त्रि० वि+काश-णिनि। प्रकाशशीले विकस्वरे।

विकिर पु० वि+कॄ-क। विहगे, कूपे च। विकीर्य्यते घञर्थे क। विघ्नोपशान्त्यै उत्क्षिप्तस्त्रैतसर्षपादौ।

विकिरण न० वि+कॄ-ल्युट् नि० इत्वम् रपरत्वं च। क्षेपणे हिंसने, ज्ञाने च। अर्कवृक्षे पु०। इव० किरणशून्ये त्रि०

विकीर्ण त्रि० वि-कॄ-क्त। विक्षिप्ते। [विख्यातिप्राप्ते च।

विकुर्व्वाण त्रि० वि+कृ-शानच्। हर्षहेतुना जातरोमाञ्चादौ

विकुक्षि पु० सूर्य्यवंश्ये इक्ष्वाकुराजसुते नृपभेदे।

विकृत त्रि० वि+कृ-क्त। बीभत्से मलिनीकृते, रोगयुक्ते च।

विकृति स्त्री० वि+कृ-क्तिन्। विकारशब्दार्थे।

विकृति पु० वि+कृ-क्तिच् ङीप्। रोगे, डिम्बे च।

विक्रम पु० विशेषेण क्रामति वि+क्रम-घञ् अच् वा। त्रिविक्रमे, विष्णौ, विक्रमादित्यनृपे "रत्नानि वै वररुचिर्नव विक्रमस्येति" ज्योतिर्विदाभरणम्। भावे घञ्। क्रमणे करणे घञ्। चरणे, शौर्य्यातिशये, सामर्थ्ये च षष्टिवर्षमध्ये लवणं मधु गव्यञ्च महार्घं विक्रमे प्रिये!' इत्युक्तलक्षणे वत्सरभेदे च। [विक्रमार्कोऽप्यत्र।

विक्रमादित्य पु० विक्रमेणादित्य इव। स्वनामख्याते नृपभेदे

विक्रमिन् पु० वि+क्रम-णिनि। सिंहे, विष्णौ च विक्रमयुक्ते त्रि०

विक्रय पु० वि+क्री-अच्। मूल्यग्रहणेन परस्वत्वापादके व्यापारे

विक्रयानुशय पु० विक्रयस्यानुशयः पश्चात्तापः। विक्रीतपदार्थस्य परावृत्तिफलके अनुतापे।

विक्रयिक पु० विक्रयः अस्त्यस्य ठन्। विक्रेतरि।

विक्रयिन् त्रि० वि+क्री-णिनि। विक्रयकर्त्तरि।

विक्रान्त पु० वि+क्रम-क्त। सिंहे, शूरे च। भावे क्त। विक्रमे।

विक्रिया स्त्री० वि+कृ-श। विकारे च यथास्थितस्य वस्तुनोऽन्यथापरिणामे।

विक्रेय त्रि० वि+क्री-यत्। विक्रययोग्ये पदार्थे।

विक्लव त्रि० वि+क्लु-अच्। व्याकुलीभावे।

विक्लिन्न त्रि० वि+क्लिद-क्त। आर्द्रे, शीर्णे, जीर्णे च।

विक्षाव पु० वि+क्षु-घञ्। शब्दे कासादिरोगजशब्दे च।

विक्षीर पु० विशिष्टं क्षीरमस्य। अर्कवृक्षे विगतक्षीरे त्रि०।

विक्षेप पु० वि+क्षिप-घञ्। त्यागे, प्रेरणे, दूरीकरणे च।

विक्षेपशक्ति स्त्री० विक्षेपस्य दूरीकरणस्य जनिका शक्तिः। वेदान्तोक्ते अविद्याशक्तिभेदे। [देशः। विख्योपत त्रि०

विख त्रि० विगतो नासिका यस्य खादेशः। गतनासिके। ख्या-

विख्यात त्रि० विशेषेण ख्यातः प्रसिद्धः वि+ख्या-क्त। प्रसिद्धे

विगणन न० विशेषेण गणनम् गण-ल्युट्। ऋणशोधनार्थ-सङ्ख्यागणने।

विगत त्रि० वि+गम-क्त। प्रभादरहिते विशेषगते अपगते च।

विगतार्त्तवा स्त्री० विगतमार्त्तवं रजो यस्याः। गतरजस्कायां स्त्रियाम्।

विगन्धक पु० विरुद्धः गन्धोऽस्य कप्। इङ्गुदीवृक्षे। लशुनायां (गशा) स्त्री० गौ० ङीप्। स्वार्थे कन् तत्रैव।

विगम पु० वि+गम-घञ्। नाशे, अपाये च।

विगर्हण न० वि+गर्ह-ल्यु। निन्दने। [निन्दायाम्।

विगर्हित त्रि० वि+गर्ह-क्त। निन्दिते निषिद्धे च। भावे-क्त।

विगाढ त्रि० वि+गाह-क्त। स्नाते, कृतावगाहने च।

विगान न० वि+गै ल्युट्। निन्दायाम्।

विगीत त्रि० वि+गै-क्त । निन्दिते ।
विगीति स्त्री० वि+गै-क्तिन् । निन्दायाम् ।
विगुण त्रि० विरुद्धो गुणोऽस्य । गुणरहिते ।
विगूढ त्रि० वि+गुह-क्त । गर्हिते,गुप्ते च । [वाक्यस्थे पदे च
विगृहीत त्रि० वि+ग्रह-क्त । गृहीते, व्याकरणोक्ते विग्रह-
विग्र त्रि० विगता नासिकाऽस्य ग्रादेशः । विगतनासिके ।
विग्रह पु० वि+ग्रह-अच् । देहे, विभागे, युद्धे, समासादिवृत्ति
समानार्थकवाक्यभेदे, विशेषज्ञाने च । [स्त्रके काले ।
विघटिका स्त्री०विभागः घटिकायाः । घटिकाषष्टिभागे पला-
विघटित त्रि० वि+घट-क्त । वियोजिते विशेषेण रचिते च ।
विघट्टित त्रि० वि+घट्ट-क्त । चालिते, वियोजिते च ।
विघस पु० वि+अद-घञ् । भोजनशेषे,आहारे च सिक्थके न०
विघसाशिन् त्रि० विघसं देवतादिदत्तावशेषमश्नाति अश-
णिनि । देवपित्रातिथ्यानन्तरं तदवशिष्टभोजिनि ।
विघात पु० वि+हन-क्त । व्याघाते,आघाते च ।
विघातिन् त्रि० वि+हन-णिनि। निवारके। नाशके, नष्टे च
'नित्यत्वाय बलु निमित्तो विघाती'ति व्याकरणम् । ण्वुल् ।
विघातकोऽप्यत्र ।
विघ्न पु० वि+हन०क । व्याघाते अन्तराये, कृष्णपाकफलायाञ्च
विघ्ननाशक पु० ६त० । गणेशे विघ्नविनाशनादयोऽप्यत्र ।
विघ्नराज पु० विघ्न राजते अच् । गणेशे । विघ्नेशादयोऽप्यत्र
विघ्नहारिन् पु० विघ्नं हरति हृ-णिनि । गणेशे ।
विघ्नित त्रि० विघ्नो जातोऽस्य इतच् । जातविघ्ने ।
विघ्नशानकान्ता स्त्री० ६त० । श्वेतदूर्वायाम् ।
विच पृथक्करणे रु०जु०च उ०सक०अनिट् । विनक्ति विवेक्ति
विङ्क्ते विविक्ते । अविचत् अवैक्षीत् ।
विचकिल पु० विच+क किल-क कर्म० । मदनवृक्षे ।
विचक्षण पु० वि+चक्ष-ल्यु । पण्डिते नागदन्त्यां, स्त्री०टाप्
विचयन न० वि-चि-ल्युट् । अन्वेषणे, पुष्पादिचयने च ।
विचर्चिका स्त्री० वि+चर्च-ण्वुल् । पामनि रोगभेदे ।
विचार पु० वि+चर-घञ् । तत्त्वनिर्णये, तदनुगुणे वाक्यस्तोमे च
विचारण न० वि+चर-णिच्-ल्युट् । मीमांसायाम् । युच् ।
तत्रैव स्त्री० ।
विचि(ची) पु० स्त्री० विच-इन् । तरङ्गे स्त्रीत्वपक्षे वा ङीप् ।
विचिकित्सा स्त्री० वि+कित-स्वार्थे सन् अ । सन्देहे ।
विचित्र न०विशेषेण चित्रम् । कर्बूरवर्णे । तद्वति, आश्चर्ये च
त्रि० । स्वार्थे कन् । भूर्जपत्रवृक्षे पुं० ।
विचित्रवीर्य्य पु० शान्तनुनृपात्मजे नृपभेदे ।
विचिताङ्ग पु० विचित्रमङ्गं यस्य (चिते) व्याघ्रभेदे,आश्चर्यदेहे त्रि०
विचेतस् त्रि० विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । दुष्टचित्ते
विशिष्टचित्ते च । [क्त । विशेषेण चेष्टायाम् न० ।
विचेष्टित त्रि० विगतं चेष्टितमस्य । चेष्टाशून्ये,वि+चेष्ट भावे
विच्छ दीप्तौ चु उभ०सक०सेट् । विच्छयति ते अविविच्छत् त
विच्छ गतौ तु० पर० आयपक्षे उ० सक०सेट् । विच्छायति
विच्छायते विच्छति । अविच्छायीत् अविच्छायिष्ट अविच्छीत्
विच्छन्दक पु० विशिष्टः छन्दोऽत्र कप् । ईश्वरगृहभेदे ।
विच्छाय न० वीनां पक्षिणां छाया नपुंसकत्वम् । पक्षिसमूह-
च्छायायाम् । विगता च्छाया यस्य । छायारहिते त्रि० ।
विच्छित्ति स्त्री० वि+छिद-क्तिन् । अङ्गरागे हारभेदे, छेदे,
विनाशे, विच्छेदे, स्त्रीणां चेष्टाभेदे च । [छेदने न०
विच्छिन्न त्रि० वि+छिद-क्त । विभक्ते, समालब्धे च भावे-क्त ।
विच्छेद पु०वि+छिद-घञ् । वियोगे,सन्ततिराहित्ये, विभागे च
विज पृथक्करणे जु०उभ०सक०अनिट् । वेवेक्ति वेविक्ते अवि-
जत् अविचीत् अविक्त ।
विज भये कम्पे च रु०प०अक०सेट् । विनक्ति अविजीत् । [विग्नः
विज भये कम्पे च तु०आ०अ० अनिट् । विजते अविजिष्ट । क्त-
विजन त्रि० विगतो जनो यस्मात् । निर्जने ।
विजनन न० वि+जन-ल्युट् । गर्भमोचने, प्रसवे, उद्भवे च ।
विजय पु० वि+जि-कर्त्तरि अच् । अर्ज्जुने, विमाने यमे च ।
भावे अच् । जये, परिभवपूर्व्वकग्रहणे च ।
विजयकुञ्जर पु० विजयाय कुञ्जरः । राजवाहनगजे ।
विजया स्त्री०आश्विनशुक्लपक्षीयदशम्याम् उमायाः सखीभेदे,
'कथयत विजये'ति मुद्राराक्षसम् । दुर्गायां, जयन्त्यां,
शेफालिकायां, मञ्जिष्ठायां,शमीभेदे, अग्निमन्थे,भङ्गायाम्,
(सिद्धि) अष्टादशीमध्ये,'यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं
भवेत् । तदा सा तु महापुण्या द्वादशी विजया स्मृते'त्युक्ते
द्वादशीभेदे, 'शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत् ।
सप्तमी विजया नामे'त्युक्ते सप्तमीभेदे च । [वलक्षिणि ।
विजातीय त्रि० विभिन्नां जातिं धर्ममर्हति छ । विभिन्नधर्म्मा-
विजिगीषा स्त्री० विजेतुमिच्छा वि+जि-सन् अ । स्वोदर-
पूरणेच्छया निन्दनीयकार्य्यादौ प्रवृत्तौ तन्निन्दाऽगणने,
विजयेच्छायाञ्च । उ । विजिगीषुः । जयेच्छावति त्रि० ।
विजिन न० विज-इन किच्च । वने इत्यमरः ।
विजुल पु० विज-उलच् किच्च । शाल्मलीकन्दे ।
विजृम्भण न० वि-जृभि-ल्युट् । विकाशे, मुखविकाशहेतुभूते
वायुव्यापारभेदे (हाइतोला) ।

विजृम्भित त्रि० वि+जृभि-क्त । विकसिते भावे क्त । प्रकाशे
विज्जुल न० विज-उलच् जुट् च । त्वचे (दारचिनि) ।
विज्ञ पु० विशेषेण जानाति ज्ञा-क । प्रवीणे, पण्डिते च ।
विज्ञात त्रि० वि+ज्ञा-क्त । ख्याते, ज्ञाते च ।
विज्ञान न० वि+ज्ञा-ल्युट् । ज्ञाने, कर्मणि, शिल्पादिज्ञाने, वेदान्तोक्ते अविद्यावृत्तिभेदे च ।
विज्ञानमयकोष पु० विज्ञानात्मकः कोषइवावरकत्वात् । ज्ञानेन्द्रियसहिते बुद्धिवृत्तिभेदे ।
विज्ञानिक त्रि० विज्ञानमस्त्यस्य ठन् । विज्ञ नयुक्ते ।
विट आक्रोशे सक० स्वने अक०भ्वा०पर०सेट् । वेटति अवेटीत्
विट पु०विट-क ।विड्गे, जारे, शृङ्गाररसनायकानुचरे धूर्त्ते, विट ! विटपमसुमिति माघः । पर्व्वतभेदे, लवणभेदे, खदिरभेदे, नारङ्गवृक्षे, मूषिके च ।
विटङ्क न० वि-टकि-अच् । कपोतपालिकायां प्रासादाद्यग्रस्थे काष्ठनिर्म्मिते कपोतावासस्थाने । (पायराखोप)
विटप पु०न० । विटं विस्तारं पाति पा-क । शाखायां, पल्लव-विस्तारे, स्तम्बे, पल्लवे च विटपालके त्रि० 'विट ! विटप-ममुन्दद्स्व त माघः ।
विटपिन् पु० विटप+अस्त्यर्थे इनि । वृक्षे, वटवृक्षे च ।
विटलवण न० विडिव लवणम् पृ० । विड्लवणे ।
विटि(टी) स्त्री० विट-कि वा ङीप् । पीतचन्दने ।
विट्खदिर पु० विडिव दुर्गन्धः खदिरः । (गुयेबावला) वृक्षे
विट्चर पु० विषि-विष्ठायां चरति चर-अच् । ग्राम्यसूकरे
विट्पति पु० विशते विश-क्विप् विशः कन्यायाः पतिः । जामातरि । [णिक्) पतिभेदे ।
विट्सारिका स्त्री० विडिव दुर्गन्धः सारिका । (गुयेशा-
विड आक्रोशे भ्वा०पर०सक०सेट् । वेडति अवेडीत् ।
विड न० विड-क । लवणभेदे । [त्रि०
विडङ्ग पु०न०विड-अङ्गच् । स्वनामख्याते औषधभेदे। अभिज्ञे
विडम्बन न०वि-डवि-ल्युट्।तिरस्कारे अनुकरणे च। युच्। विडम्बनाप्यत्र स्त्री०। 'दयन्त्रु तेऽत्या पुरतो विडम्बनेति कु०
विडाल पु० विड-कालन् । स्वनामख्याते पशुभेदे, नेत्रपिण्डे, नयनौषधिभेदे च । विडाल्यां स्त्री० ङीप् । संज्ञायां कन् । हरिताले न० । स्वार्थे कन् विडालके पशौ पु० ।
विडीन न० वि+डी-क्त । पक्षिणां गतिभेदे ।
विडुल पु० विड-कुलच् । वेतसवृक्षे । [पृ० वा कौत् । इन्द्रे ।
वि(डो)डौजस् पु० विष-क्विप् विट् व्यापकमोजो यस्य
विड्गन्ध न० विष इव गन्धोऽस्य। विड्लवणे ।
विड्लवण न० विडिव दुर्गन्धं लवणम्। स्वनामख्याते लवणभेदे
विड्वराह पु०विट्प्रियो वराह।शाक०। ग्राम्यसूकरे 'नखन विड्वराहश्चे'ति मनुः ।
वितंस पु० वि+तन्स-घञ्। पक्षिणां बन्धनसाधने रज्ज्वादौ
वितण्डा स्त्री०वि-तडि-अ। स्वपक्षाव्यवस्थापनेन परपक्षमात्र निराकरणे कथाभेदे, कलम्बीशाके च ।
वितथ त्रि०वि+तन-क्थन् ।मिथ्याभूते पदार्थे, स्वार्थे यत् ।तत्रै ।
वितद्रु स्त्री० वि+तस-रु डुङ् च । पञ्चावदेशस्थे नदीभेदे ।
वितरण न० वि+तॄ ल्युट् । दाने ।
वितर्क पु० वि+तर्क-घञ् । सन्देहे, ऊहे च ।
वितर्द्दि स्त्री० वि+तर्द-इन् वा ङीप् । वेदिकायाम् । पृ०। वितर्द्धिरप्यत्र स्त्री० वा ङीप् ।
वितल न० विशेषेण तलम् । पातालभेदे ।
वितस्ति पु०स्त्री० वि+तस-क्तिच् । द्वादशाङ्गुलपरिमाणे विस्तृत सकनिष्ठाङ्गुष्ठाङ्गुष्ठान्तपरिमाणे । [च । चन्द्रातपे पु०न०
वितान न० वि+तन-घञ् । वृत्तिभेदे, अवसरे, यज्ञे, विस्तारे
वितानमूलक न० वितानं विस्तीर्णं मूलमस्य कप् । उशीरे
वितुन्न न० वि-तुद-क्त । सुनिषण्णके शाके संज्ञायां कन् । धान्ये ।
वित्त त्यागे अद०चु०उभ०न०सेट् । वित्तयति ते अविवित्तत् त
वित्त न०वित्यते त्यज्यते वित्त-घञ् । धने। विद्-क्त। ख्याते, विचारिते, ज्ञाते, लब्धे च त्रि० ।
वित्ति स्त्री० विद-क्तिन् । ज्ञाने, लाभे, विचारे च ।
वित्तेश पु० ६त० । कुबेरे ।
विथ याचने भ्वा०आ०द्विक०सेट् षङि न ह्रस्वः। वेथते अवेथिष्ट
विद सुखाद्यनुभवे आख्याने, वादे च सक०वासे अक०चु० उभ० सेट् । वेदयति ते अवीविदत् त ।
विद लाभे तु०उभ०सक०अनिट् । विन्दति ते। अविदत् अवित्त
विद मीमांसे रुधा०आ०सक०अनिट् । विन्ते अवित्त ।
विद भावे, दिवा०आ०अक०अनिट् । विद्यते अवित्त ।
विद ज्ञाने अदा०पर०सक०सेट् । वेत्ति-वेद । अवेदीत् ।
विदग्ध त्रि० वि+दह-क्त । नागरे, निपुणे, पण्डिते च । नायिकाभेदे स्त्री० । विशेषेण दग्धे त्रि० ।
विद् पु० विद-क्विप् । पण्डिते, बुधग्रहे च ।
विद पु० विद-क । पण्डिते, बुधग्रहे च ।
विदथ पु० विद- कथच् । योगिनि, व्रतिनि च ।
विदर न० वि+दॄ-अप् । (फणिमनसा) वृक्षे विदलीकरणे पु० ।
विदर्भ पु०स्त्री०विगताः दर्भाः कुशा यतः ।कुण्डिननगरे(नागपुर)
विदल न० विशेषेण दल्यते दल-घञर्थे क। द्विधाभूते दाडिम

कल्के, वंशादिपात्रे च । कलायादौ, रक्तकाञ्चने पिष्टके च पु० त्रिदति (तिओड़ि) स्त्री० । दल-शून्ये त्रि० ।

**विदा** स्त्री० विद्-अङ् । ज्ञाने बुद्धौ च ।

**विदार** पु० वि+दृ-घञ् । विदारणे जलोच्छ्वासे च ।

**विदारक** पु० वि+दृ-ण्वुल् । जलमध्यस्थतरुशिलादौ विदारण कर्त्तरि त्रि० शुष्कनद्यादेर्जलधारणयोग्ये गर्त्ते न० ।

**विदारण** न०वि+दृ-णिच् ल्युट् । भेदने, मारणे, विडम्बे च । युद्धे पु० स्त्री० । कर्णिकारवृक्षे पु० ।

**विदारी** स्त्री० । विदारोऽस्त्यस्याः अच् गौ० ङीष् । शाल-पर्ण्याम् । (शालपान) भूमिकुष्माण्डे च ।

**विदारीगन्धा** स्त्री०विदार्य्याः भूमिकुष्माण्डस्येव गन्धोयस्याः। शालपर्ण्याम् (शालपान) ।

**विदाहिन्** न० वि+दह-णिनि । दाहजनकद्रव्ये ।

**विदित** त्रि०विद्-क्त। ज्ञाते,प्रार्थिते च । भावे-क्त । विख्यातौ उपगमे, ज्ञाने च। तदस्यास्ति अच् । ज्ञातरि । 'विदितः समाययाविति भारविः ।

**विदिश्** स्त्री० विगता दिशम् । दिशोर्मध्ये (कोण) ।

**विदु** पु० विद्-कु । हस्तिकुम्भमध्यभागे ।

**विदुर** त्रि० विद्-कुरच् । नागरे, धीरे, ज्ञातरि च। कौरवाणां मन्त्रिणि दासीगर्भजाते धर्म्मावतारभेदे च पु०।

**विदुल** पु० विद्-कुलच् । वेतसे, जलवेतसे, गन्धरसे च ।

**विदूर** न० विशिष्टं दूरम्। अतिदूरे तत्रस्थे पदार्थे त्रि० 'विदूरे केयूरे, कुरु, इति साहि०३परि० । वैदूर्य्यमणिसम्भवस्थाने पु० 'विदूरभूमिर्नवमेघशब्दा'दिति कुमारः ।

**विदूरज** न० विदूरे देशभेदे जायते जन-ड । वैदूर्य्यमणौ ।

**विदूरथ** पु० । सूर्य्यवंश्ये नृपभेदे ।

**विदूराद्रि** पु० विदूरे देशेऽद्रिः प्रर्व्वतः । पर्व्वतभेदे । यत्र वैदूर्य्यमणिरुत्पद्यते । [सहायभेदे । परनिन्दके त्रि० ।

**विदूषक** पु० विदूषयति वि+दूष-णिच्-ण्वुल । शृङ्गाररस-

**विदेश** पु०विभिन्नो देशः । देशान्तरे, 'भत्याभावे भवति मरणं सज्जनानां विदेशे' इत्युद्भटः।

**विदेह** पु० विगतो देहः देहसम्बन्धो यस्य । जनकाख्ये नृपे, तद्वंश्ये च कैवल्यमुक्तियुते, देहसम्बन्धशून्ये च त्रि० मिथिलायां स्त्री० ।

**विदेहकैवल्य** न० कर्म० । 'न तस्य प्राणा ह्युत्क्रामन्ति इहैव समवलीयन्ते, इत्याद्युक्ते जीवन्मुक्तस्य देहपातनान्तरं निर्वाणमोक्षे ।

**विद्ध** त्रि० व्यध-क्त। छिद्रिते,क्षिप्ते,दुर्गे, बाधिते ताड़िते च ।

**विद्धकर्णी** पु०विद्धः कर्ण इव पत्त्रमस्य । (आकनादि) पाठायाम् स्त्रीत्वमपि तत्रैव ङीप् ।

**विद्यमान** पु०विद्-शानच् । वर्त्तमानकाले, तद्वृत्तौ पदार्थे त्रि०

**विद्या** स्त्री० विद्-क्यप् । ज्ञाने । तत्त्वसाक्षात्कारे 'विद्यया मृतमश्नुते' इतिश्रुतिः । दुर्गायां, गणिकारिकावृक्षे,तन्त्रोक्ते देवीमन्त्रे च। 'तस्य विद्या न सिध्यती'ति श्यामास्तवः ।

**विद्याचन(ण)** त्रि० विद्यया ख्याते चन(ण) विद्याविख्याते ।

**विद्याचुञ्चु** पु० विद्यया विख्यातः चुञ्चु । विद्यया ख्याते ।

**विद्यादल** पु० विद्यायै ज्ञानाय दल्यतेऽसौ । भूर्जवृक्षे ।

**विद्यादान** न०६त० अध्यापने, पुस्तकदाने च ।

**विद्याधन** न० विद्यया लब्धं धनम् । विद्यालब्धे 'उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वकम्। विद्याधनन्तु तद्विद्यादि'ति 'शिष्यादार्त्विज्यतः प्राप्तं सन्दिग्धप्रश्ननिर्णयात् अथवा नसंशयोच्छेदाल्लब्धं स्वाध्ययनात्तु यत् । विद्याधनन्तु तत् प्राहुरि'ति 'शिल्पिष्वपि हि धर्मोऽयमित्युपक्रम्य परं निरस्य वादेन विद्यया द्यूतपूर्व्वकम् । विद्याधनं तु तद्वि-द्यादित्युक्ते धने।

**विद्याधर** पु० विद्यां मन्त्रादिकं धरति धृ-अच् । देवयोनिभेदे

**विद्युत्** स्त्री० विद्योतते वि+द्युत-क्विप् । तडिति, सन्ध्यायाञ्च

**विद्युत्प्रिय** न० ६त० । विद्युदाकर्षके कांस्ये, धातौ ।

**विद्युन्माला** स्त्री० अष्टाक्षरपादके छन्दोभेदे । [रोगभेदे ।

**विद्रधि** पु०वेत्त्यनेन विद् हृदयं स्थाङ्गि रुध-कि ष्ट० । हृदय

**विद्रधिनाशन** पु० विद्रधिं नाशयति नश-णिच्-ल्यु । शोभाञ्जने

**विद्र(द्रा)व** पु०वि+द्रु-अप् घञ् वा । पलायने, क्षरणे, द्रुते च

**विद्रुत** त्रि०वि+द्रु-क्त । प्राप्तद्रवे, पलायिते च । [किसलये

**विद्रुम** पु०विशिष्टो द्रुमः । प्रवालरत्नवृक्षे विशिष्टो द्रुमोयतः

**विद्रुमलता** स्त्री० विद्रुमस्य लतेव । नलीनामगन्धद्रव्ये स्वार्थे कन् तत्रैव । [विद्वषि ।

**विद्वत्कल्प** त्रि०ईषदसमाप्तो विद्वान् विद्वस्+कल्पप् । ईषद्दूने

**विद्वत्तम** पु०अतिशयेन विद्वान् विद्वस्+तमप् । अतिपण्डिते तरप् विद्वत्तरोप्यत्र । [विद्वत्कल्पे । देश्य । तत्रैव ।

**विद्वद्देशीय** त्रि० ईषदसमाप्तो विद्वान् विद्वस्+देशीयर् ।

**विद्वस्** त्रि० विद्-क्वसु । प्राज्ञे, पण्डिते, आत्मज्ञानयुक्ते च ।

**विद्विष्** पु० विशेषेण द्वेष्टि द्विष-क्विप् । शत्रौ कविद्विषोप्यत्र ।

**विद्वेष** पु० वि+द्विष-घञ् । वैरिभावे शत्रुतायाम् ।

**विद्वेषण** न० वि+द्विष-णिच्-ल्युट् । तन्त्रोक्ते अभिचारकर्म्म भेदे येन शत्रूणां परस्परविद्वेषो भवति तस्मिन् व्यापारे । वि+द्विष-ल्युट् । विद्वेषे ।

**विध** विधाने, तु॰पर॰सक॰सेट्। विधति अवेधीत्

**विध** पु॰ स्त्री॰ विध-क अङ् वा। विमाने, गजभक्ष्याने, प्रकारे, वेधे, ऋद्धौ च; वेतने, कर्म्मणि च स्त्री॰।

**विधवा** स्त्री॰ विगतो धवो यस्याः। मृतपतिकायां स्त्रियाम्।

**विधातृ** पु॰ वि+धा-तृच्। प्रजापतौ, ब्रह्मणि, कामदेवे, मदिरायां, भृगुसुतनिपुलभेदे। विधानकर्त्तरि त्रि॰। स्त्रियां ङीप् सा च पिप्पल्याञ्च।

**विधान** न॰ वि+धा-ल्युट्। करणे, विधौ, गजभक्ष्याने च।

**विधानज्ञ** पु॰ विधानं जानाति ज्ञा-क। पण्डिते। विधिज्ञे त्रि॰

**विधायक** त्रि॰ वि+धा-ण्वुल्। विधानकर्त्तरि।

**विधि** पु॰ वि+धा-कि। जगत्स्रष्टरि ब्रह्मणि, भाग्ये, क्रमे, 'चिकीर्षाकृतिसाध्यत्वहेतुधीविषयो विधिरि'त्युक्ते प्रवर्त्तनारूपे नियोगे, तज्जनके वाक्ये, विष्णौ, कर्म्मणि, गजभक्ष्याने, वैद्ये, अप्राप्तप्रापकरूपे वाक्यभेदे, संज्ञा च परिभाषा च विधिर्नियमएव च 'अतिदेशोधिकारश्चे'ति व्याकरणोक्ते सूत्रभेदे।

**विधिज्ञ** त्रि॰ विधिं क्रमं जानाति ज्ञा-क। विधानकमज्ञे

**विधित्सा** स्त्री॰ विधातुमिच्छा वि+धा-सन् अ। विधानेच्छायाम्

**विधिदेशक** पु॰ विधिं विधानं दिशति दिश+ल्युट्। विधिदर्शिनि सदस्ये, गुरौ च।

**विधिवत्** अव्य॰ विधिमर्हति विधि+वति। विध्यनुसारे।

**विधु** पु॰ व्यध-कु। चन्द्रे, कर्पूरे, विष्णौ, ब्रह्मणि, शङ्करे, वायौच

**विधुत** त्रि॰ वि+धु-क्त। कम्पिते, त्यक्ते च।

**विधुनन** न॰ वि+धु-णिच्-नुक्च। चालने।

**विधुन्तुद** पु॰ विधुं तुदति तुद-खश् मुम् च। राहौ।

**विधुर** त्रि॰ विगता धू र्यस्य अच् समा॰। विश्लिष्टे, विकले च विगता धूः। वैकल्ये, विश्लेषे च न॰।

**विधुवन** न॰ वि+धु-ल्युट्। कम्पने। [नौ'ति स्मृतिः

**विधूत** त्रि॰ वि+धू-क्त। कम्पिते त्यक्ते च। 'विधूतपाप्मास्तेभ्या-

**विधेय** त्रि॰ वि+धा-यत्। विधातुं योग्ये, वचनस्थे आयत्ते विधिना बोधिते च।

**विध्वंस** पु॰ वि+ध्वन्स-घञ्। नाशे।

**विनत** त्रि॰ वि+नम-क्त। प्रणते, भुग्ने, शिक्षिते च। गरुडमातरि कश्यपपत्नीभेदे, पिठकीभेदे च स्त्री॰। [सुमयत्व।

**विनतासूनु** पु॰ ६त॰। अरुणे, गरुडे च। विनतात्मजादयो

**विनद** पु॰ विशेषेण नदति नद-अच्। (छातियान) वृक्षे।

**विनम्रक** न॰ विशेषेण नम्रमिव स्वार्थे कम्। तगरपुष्पे।

**विनय** पु॰ वि+नी-अच्। शिक्षायां, प्रणामे, अनुनये च। वि+नी-कर्त्तरि अच्। विनययुक्ते, जने, निभृते, क्षिप्ते, जितेन्द्रिये च। वचनस्थिते आयत्ते।

**विनयग्राहिन्** त्रि॰ विनयं शिक्षां गृह्णाति ग्रह-णिनि। विनयस्थ त्रि॰ विनये तिष्ठति स्था-क। वचनग्राहिणि आयत्ते

**विनशन** न॰ वि+नश-ल्युट्। विनाशे, कुरुक्षेत्रस्थे तीर्थभेदे।

**विना** अव्य॰ वि+ना। वर्ज्जने, अन्तरेणेत्यर्थे।

**विनाकृत** त्रि॰ विनेति कृतम् विना+कृ-क्त। त्यक्ते, रहिते च

**विनायक** पु॰ वि+नी-ण्वुल्। गणेशे, गरुडे, विघ्ने, गुरौ च विनययुक्ते त्रि॰।

**विनाश** पु॰ वि+नश-घञ्। ध्वंसे, अदर्शने च।

**विनाशोन्मुख** त्रि॰ विनाशाय उन्मुख उद्यतः। नष्टप्राये।

**वि(वी)नाह** पु॰ वि+नह-घञ् वा उपसर्गदीर्घः। कूपमुखपिधाने

**विनिद्र** त्रि॰ विगता निद्रा यस्य। प्रकाशिते, निद्राहीने च।

**विनिपात** पु॰ वि+नि+पत-घञ्। निपाते दैवादिकृते व्यसने, अपमाने च। [द्रव्यान्तरपहणे, बन्धने च।

**विनिमय** पु॰ वि+नि+मि-अच्। परिवर्त्ते तुल्यद्रव्यदानेन

**विनियोग** पु॰ वि+नि+युज-घञ्। क्रियासु प्रवर्त्तने 'अनेनेदन्तु कर्त्तव्यं विनियोगः प्रकीर्त्तित' इत्युक्ते अनुष्ठानक्रमविधाने च 'आर्षं छन्दश्च दैवत्यं विनियोगस्तथैवचे'ति स्मृतिः।

**विनीत** त्रि॰ वि+नी-क्त। विनययुक्ते, कृत-दण्डे, क्षिप्ते, अपनीते, निभृते च। सुशिक्षिताश्वे, दमनवृक्षे च पु॰।

**विनीय** पु॰ वि+नी-क्यप्। कल्के, पापे च।

**विनेतृ** त्रि॰ वि+नी-तृच्। शिक्षके। नृपे पु॰।

**विनेय** त्रि॰ वि+नी-यत्। शिक्षणीये, प्राप्ये च।

**विनोक्ति** स्त्री॰ अलङ्कारोक्ते अर्थालङ्कारभेदे।

**विनोद** पु॰ वि+नुद-घञ्। कौतुके, क्रीडायां, खण्डने च।

**विन्दु** पु॰ विद-उ नि॰। जलकणे भ्रुवोर्मध्ये, रेखागणितोक्ते विभागानर्हे चिह्नभेदे, अनुस्वारे च। ज्ञातरि, दातरि, वेदितव्ये च त्रि॰। [भेदे स्वार्थे कन्। तत्रैव।

**विन्दुजाल** न॰ ६त॰। हस्तिशुण्डावस्थिते विन्दुसदृशे चिह्ने-

**विन्दुपत्त्र** पु॰ विन्दवः पत्त्रे यस्य। भूर्ज्जपत्त्रे।

**विन्दुसरस्** न॰ विन्दुभिः कृतं सरः। सरोवरभेदे।

**विन्ध्यपर्णी** स्त्री॰ विध-क ष॰ मुम् च विन्ध्यं पत्त्रमस्याः ङीप्। (बेलशुंठ) क्षुपभेदे। [एलायां, लवलीवृक्षे च (नोयाड)स्त्री॰

**विन्ध्य** पु॰ विध-यत् ष॰ मुम् च। पर्व्वतभेदे, व्याधे च।

**विन्ध्यवासिनी** स्त्री॰ विन्ध्येऽचले वसति वस-णिनि ङीप्। यशोदागर्भजातायां दुर्गायाम्।

**विन्ध्याचल** पु॰ कर्म॰। विन्ध्यपर्व्वते।

**विन्ध्याटवी** स्त्री॰ विन्ध्यस्था अटवी। विन्ध्यपर्व्वतस्थे वनभेदे

विन्न त्रि० विद्-क्त। विचारिते, प्राप्ते, ज्ञाते, स्थिते च।
विन्याक पु० वि+नि+अक-घञ्। (छातियान)वृक्षे।
विन्यास पु० वि+नि+अस-घञ्। स्थापने, रचने, तन्त्रोक्ते मन्त्राद्युच्चारणपूर्व्वकं हृदयादिषु अङ्गुल्यादीनामर्पणे च।
विप क्षेपे चु० उभ०सक० सेट्। वेपयति-ते अवीविपत् त।
विपक्तिम त्रि० विपाकेन निर्वृत्तः। वि+पच-क्त्रि मपच्। विपाकाधीनजाते 'विपक्तिमज्ञानगतिरिति' भट्टिः।
विपक्ष त्रि०विरुद्धः पक्षो यस्य। शत्रौ, प्रतिकूलपक्षावलम्बिनि च। विरुद्धः पक्षः कुग० स०। प्रतिकूले पक्षे।
विपञ्ची स्त्री० वि+पचि-अच् गौरा० ङीष्। वीणायाम् स्वार्थे कन् अत ह्रस्वम्। तत्रैव।
विपण पु० वि+पण-घञर्थे क। विक्रये।
विपणि पु०स्त्री० वि+पण-इन् स्त्रीत्वपक्षे वा ङीप्। पण्यविक्रयशालायाम् (हाटचाला) हट्टे च।
विपत्ति स्त्री० वि+पद्-क्तिन्। आपदि, नाशे, यातनायाञ्च
विपथ पु० विरुद्धः पन्थाः अच् समा०। निन्दितमार्गे
विपद्(दा) स्त्री० वि+पद-सम्प० क्विप् वा टाप्। विपत्तौ।
विपन्न त्रि० वि+पद-क्त। विपद्युक्ते, नष्टे च। सर्पे पु०।
विपरीत त्रि० वि+परि+इण्-क्त। प्रतिकूले।
विपर्णक पु० विगतानि पर्णान्यस्य कप्। पलाशवृक्षे।
विपर्य्यय पु० वि+परि+इण्-अच्। व्यतिक्रमे।
विपर्य्यस्त त्रि० वि+परि+अस-क्त। व्यतिक्रान्ते पराहते च।
विपर्य्यास पु० वि+परि+अस-घञ्। वैपरीत्ये, व्यतिक्रमे उत्क्रमे च।
विपल पु०विभागः पलस्य। पलषष्टिभागे कालभेदे। [पण्डिते
विपश्चित् पु० विप्रकृष्टं चेतति वि+प्र+चित-क्विप् पृ०।
विपाक पु० वि+पच-भावे घञ्। पाके, स्वेदे च। कर्म्मणि घञ्। कर्म्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे।
विपाश(शा) स्त्री०विगतः पाशो यस्याः। स्वनामख्याते नदीभेदे
विपिन न० वप-इनन् पृ०। वने।
विपुल त्रि०वि+पुल-विस्तारे क। विस्तीर्णे, अगाधे, मेरुपश्चिमस्थे भूधरे, मेरौ, हिमाचले च। आर्य्याछन्दोभेदे स्त्री०।
विपुलास्रव स्त्री० विपुलं रसं स्रवति अण्। घृतकुमारीवृक्षे।
विप्र पु० वप-रन् पृ० अत इत्वम् वि+प्रा-क वा। ब्राह्मणे।
विप्रकार पु० वि+प्र+कृ-घञ्। अपकारे, तिरस्कारे।
विप्रकाष्ठ न०विशेषेण प्राति प्रा-क विप्रं काष्ठं यस्य। तूलवृक्षे
विप्रकर्ष पु० वि+प्र+कृष-घञ्। दूरत्वे।
विप्रकृत त्रि० वि+प्र+कृ-क्त। उपद्रुते, तिरस्कृते च 'तस्मिन् विप्रकृताः काले' इति कुमारः।
विप्रकृष्ट त्रि०वि+प्र+कृष-क्त। दूरस्थे। स्वार्थे कन्। तत्रैवार्थ
विप्रचित्ति पु० वि+प्र+चित-क्तिच्। दानवभेदे।
विप्रतिपत्ति स्त्री० वि+प्रति+पद-क्तिन् विरोधे, 'परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिष्विति' स्मृतिः। संशये, विकारे च।
विप्रतिपन्न त्रि० वि+प्रति+पद-क्त। संदेहयुक्ते कृतविरोधे च
विप्रति(ती)सार पु० वि+प्रति+सृ-घञ् वा दीर्घः। अनुतापे, अनुशये, रोषे च। [च
विप्रयुक्त त्रि० विप्र+युज-क्त। वियुक्ते, विरहिते च। [वियोगे
विप्रयोग पु० वि+प्र+युज-घञ्। विप्रलम्भे, विरोधे विसंवादे
विप्रलब्ध त्रि० वि+प्र+लभ-क्त। वञ्चिते, 'प्रियःकृत्वा च सङ्केतं यस्या नायाति सन्निधिम् विप्रलब्धेति सा ज्ञेया'त्युक्तलक्षणे नायिकाभेदे स्त्री०।
विप्रलम्भ पु० वि+प्र+लभ-घञ् नुम् च। विसंवादे, वञ्चने, विरहे च 'युक्तायुक्तयोर्भावो युक्तयोर्वाथवा मिथः अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते। स विप्रलम्भो विज्ञेय' इत्युक्ते शृङ्गारावस्थाभेदे।
विप्रलाप पु० वि+प्र+लप-घञ्। विरोधोक्तौ परस्परविरुद्धार्थककथने। [वृक्षे, अशोकवृक्षे।
विप्रलोभिन् पु० विप्रलोभयति लुभ+णिच्-णिनि। किरात
विप्रश्निका स्त्री०विशेषेण प्रश्नो यस्याः पृ०ब० कप् अत इत्वम्। दैवज्ञायां स्त्रियाम्। [धीनतायाम्।
विप्रसात् अव्य० विप्राधीनं करोति विप्र+साति। विप्रस्व-
विप्रस्व न० ६त०। विप्रस्वामिके धने।
विप्रिय पु० विरुद्धं प्रियं प्री-क। अपराधे, अप्रिये च कृतवानसि विप्रियं न मे इति कुमारः ६ब० विगतप्रिये त्रि०।
विप्रुष् स्त्री० वि+प्रुष-क्विप्। बिन्दौ, वेदपाठकाले मुखनिर्गत जलबिन्दौ च।
विप्रोषित त्रि० वि+प्र+वस-क्त। गतप्रवासे।
विप्लव पु० वि+प्लु-अप्। परचक्रादिराष्ट्रादितो भये राष्ट्रोपद्रवे च
विप्लाव पु०वि+प्लु घञ्। अश्वस्य गतिभेदे सभन्तात् जलप्लावे च।
विप्लुत त्रि०वि+प्लु-क्त। व्यसनयुक्ते, उपद्रुते च 'अविप्लुतब्रह्मचर्य्यः' इति स्मृतिः।
विफल त्रि० विगतं फलमस्य। निरर्थके। केतक्यां स्त्री०।
विबध पु० विगतो बधो हननं गतिर्यस्मात्। संस्कृते धान्यतण्डुलादौ 'निरुद्धविबधासारे'ति माघः पृ०दीर्घः भारे च।
विबन्ध पु० विप्रभाति मलम् वि+बन्ध-घञ्। रोगभेदे।

विबुध पु० वि+बुध-क्त। पण्डिते, देवे, विबुधसख इति भट्टिः। चन्द्रे च।
विभक्त त्रि० वि+भज-क्त। पृथक्कृते, विभिन्ने, कृतविभागे च 'अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समा इति स्मृतिः। भावे क्त। विभागे न०।
विभक्ति स्त्री० वि+भज-क्तिन्। विभागे 'संख्यात्वव्याप्यसामान्ये शक्तिमान् प्रत्ययस्तु यः। सा विभक्तिर्द्विधा प्रोक्ते'त्युक्तलक्षणे प्रत्ययभेदे च।
विभव पु० वि+भू-अच्। धने, मोक्षे, सर्व्वमूर्त्तसंयोगरूपे, ऐश्वर्य्ये षष्टिसंवत्सरमध्ये 'हृष्टाः पुष्टाः जनाः सर्व्वे विभवेऽब्दे वरानने!' इत्युक्ते वर्षभेदे च।
विभा स्त्री० वि+भा-अच्। किरणे, शोभायां, प्रकाशे च।
विभाकर पु० विभां प्रकाशं करोति कृ-अच्। सूर्य्ये, अर्कवृक्षे च
विभाग पु० वि+भज-भावे घञ्। भागे। कर्म्मणि घञ्। अंशे, खण्डे पूर्व्वस्वामिस्वत्वनाशोत्तरं तत्सम्बन्धाधीनजातस्वत्वव्यञ्जकव्यापारभेदे। [गयोन्ये, भजनीये धनादौ।
विभाज्य त्रि० विभक्तुमर्हति वि+भज-अर्हार्थे ण्यत्। विभा-
विभाण्डक पु० मुनिभेदे।
विभात न० वि+भा-क्त। प्रभाते।
विभाव पु० वि+भू-घञ्। परिचये, अलङ्कारोक्ते रसस्योद्दीपके आलम्बनादौ 'विभावेनानुभावेन व्यक्तः सञ्चारिणा तथे'ति सा०द०। [त्युक्तलक्षणे अलङ्कारभेदे।
विभावना स्त्री० 'प्रसिद्धकारणाभावात् कार्य्योत्पत्तिर्विभावने'
विभावरी स्त्री० वि+भा-क्वनिप् ङीप् वनोर च। रात्रौ, हरिद्रायां, कुट्टिन्याम्, अनुरक्तयोषिति, मुखरस्त्रियाम्, मेदीवृक्षे च। [चिल्वकवृक्षे, हारभेदे च।
विभावसु पु० विभायुक्ता वसवोऽस्य। सूर्य्ये, अर्कवृक्षे, वह्नौ,
विभाषा स्त्री० विरुद्धा भाषा वि+भाष-अ। व्याकरणोक्ते प्राप्तिकप्राप्तिफलके 'नवेति विभाषे'त्युक्तलक्षणे विकल्पविधाने
विभिन्न त्रि० वि+भिद-क्त। प्रकाशिते, विदलिते, विभक्ते च।
विभीतक पु० विशेषेण भीत इव इवार्थे कन्। (वयड़ा) वृक्षे।
विभीषण पु० विशेषेण भीषयते शत्रून् भी-णिच् षुक् च ल्यु। रावणभ्रातरि राक्षसे, नलतृणे च। [भयप्रदर्शने।
विभीषिका स्त्री० वि+भी-णिच्-षुक् च धात्वर्थनिर्द्देशे ण्वुल्।
विभु पु० वि+भू-डु। सर्व्वमूर्त्तसंयुक्ते, प्रभौ, महादेवे ब्रह्मणि च।
विभूति स्त्री० वि+भू-क्तिन्। भस्मनि 'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा। ईशित्वं च वशित्वञ्च तथा कामावसायिते'त्युक्ते ऐश्वर्य्ये च।
विभूषा स्त्री० वि+भूष-अ। शोभायां, भूषणे च।
विभ्रम पु० वि+भ्रम-घञ्। स्त्रीणां शृङ्गाराङ्गचेष्टाभेदे 'विभ्रमस्त्वरयाऽकाले भूषास्थानविपर्य्यय' इत्युक्ते त्वरया भूषास्थानवैपरीत्ये च 'यशस्यारो विभ्रममण्डनानामि'ति कुमारः। विशेषेण, भ्रान्तौ, शोभायां, सन्देहे, भ्रमणे च।
विभ्राज् त्रि० वि+भ्राज-क्विप्। भूषणादिना दीप्ते।
विमत त्रि० वि+मन-क्त। विरुद्धमतियुक्ते। [व्याकुलचित्ते
विमनस्(स्क) त्रि० विचिन्नं मनो यस्य वा कप्। चिन्तादिना
विमर्द्द पु० विमृद्यतेऽसौ वि+मृद-घञ्। (कासकासुन्दिया) वृक्षे। चक्रमर्द्दके च। भावे घञ्। मर्द्दने।
विमर्शन न० वि+मृश-ल्युट्। परामर्षे, न्यायोक्ते व्याप्यव्याप्यत्वेन पक्षनिश्चये, वितर्के च। घञ् तत्रैव पु०।
विमर्ष पु० वि+मृष-घञ्। विचारे, नाटकाङ्गभेदे च।
विमल त्रि० विगतो मलो यस्मात्। स्वच्छे निर्म्मले, विगतो मलो यस्याः ५ ब०। (चामरकाया) सप्तलायाम् जगन्नाथक्षेत्रस्थे देवीभेदे च स्त्री०।
विमातृ स्त्री० विरुद्धा माता। मातृसपत्न्याम्।
विमातृज पु० विमातुर्जायते जन-ड। सापत्ने भ्रातरि।
विमान पु०न० वि+मन-घञ् वि+मा-ल्युट् वा। देवयाने, रथे, सार्व्वभौमगृहभेदे च। अश्वे पु०। यानमात्रे परिमाणे च न०
विमार्ग पु० विरुद्धो मार्गः। कुपथे निन्दिताचारे।
विमुख त्रि० विरुद्धमनुकूलं मुखमस्य। वहिर्मुखे, निवृत्ते च।
विमुद्र त्रि० विगता मुद्रा मुकुलीभावो यस्य। विकशिते, मुद्रारहिते च।
विम्ब पु० न०। वी+वन्-मुम्ह्रस्वौ। दर्पणादौ भासमानप्रतिबिम्बाश्रये, कमण्डलौ च। सूर्य्यादिमण्डले च कृकलासे पु०। विम्बायाः फलम् अण् तस्य लुप्। बिम्बिकाफले।
विम्बजा स्त्री० विम्बं फलं जायतेऽस्याः जन-ड। विम्बिकावृक्षे (तेलाकुचा)।
विम्बट पु० विम्बमटति अट-अच् शक०। सर्षपे।
विम्बा(म्बी) स्त्री० विम्बमस्त्यस्याः अच् वा गौ०ङीष्। (तेलाकुचा) लताभेदे। स्वार्थे कन्। तत्र, सूर्य्यादिमण्डले च।
वियत् न० वि+यम-क्विप् मलोपे तुक्। आकाशे।
वियद्गङ्गा स्त्री० वियतस्था गङ्गा। स्वर्गङ्गायां मन्दाकिन्याम्।
वियात त्रि० वि+या-क्त। धृष्टे, निर्लज्जे च।
वियोग पु० वि+युज-घञ्। विच्छेदे। इ०। पक्षियोगे [त्रि०
वियोगिन् पु० वि+युज-घिनुण्। चक्रवाके, पक्षिणि, विच्छेदवति
विरक्त त्रि० वि+रन्ज-क्त। विच्छिन्ने, विरते च।

विरङ्ग पु० वि+रन्ज-घञ् । कुङ्कुमे ।
विरचित त्रि० वि+रच-क्त । कृते, निर्म्मिते च ।
विरजस्तमस् त्रि० विगते रजस्तमसी यतः । सत्वगुणप्रधाने ।
विरजस् विगतं रजो यस्याः । गतार्त्तवायां स्त्रियाम् । रजोगुणहीने त्रि० ।
विरजा स्त्री०विशेषेण रज्यते रन्ज-अ । दूर्व्वायां, गोलोकस्थे राधासखीभेदे तच्छापाज्जायमाने नदीभेदे च ।
विर(श्च)श्चि पु०वि+रच अच् इन् वा मुम् च । जगत्स्रष्टरि ।
विरण न० विशिष्टो रणो मूलमस्य । उशीरे (वेणारमूल) ।
विरत त्रि० वि+रम-क्त । निवृत्ते । [रताच्छिन्ने च ।
विरति स्त्री० वि+रम-क्तिन् । निवृत्तौ, विषयसेवायां-व्यापा-
विरल त्रि० वि+रा-कलच् । अवकाशे, विच्छिन्ने, अनिविड़े च
विरह पु० वि+रह-घञ् । विच्छेदे, अभावे, शृङ्गाररसस्य विप्रलम्भाख्ये अवस्थाभेदे च ।
विरहित त्रि० वि+रह-क्त । त्यक्ते,हीने च । [रागशून्ये त्रि०
विराग पु वि+रन्ज-घञ् । रागाभावे, विगतो रागो यस्य ।
विराज् पु० विशेषेण राजते क्विप् । चत्रिये ब्रह्माण्डात्मकस्थूलदेहाभिमानिनि आदिपुरुषे, छन्दोभेदे च ।
विराट पु० विशेषो राटो यत्र । देशभेदे,तद्देशाधिपे नृपे च ।
विराध पु० राक्षसभेदे ।
विराधन न० वि+राध-ल्युट् । पीडायाम् ।
विराम पु० वि+रम-घञ् । अवसाने, विरतौ, निवृत्तौ च ।
विराल पु० वि+डल-घञ् डस्य रः । बिड़ाले पशुभेदे ।
विराव पु० वि+रु-घञ् । शब्दे इव० । विगतरवे त्रि० ।
विरिञ्च पु० वि+रिच-अच् मुम् च । विष्णौ जगत्स्रष्टरि वेधसि, शिवे च । इन् । तत्रैवार्थे । [रिते च
विरूढ त्रि० विशेषेण रोहति वि+रुह-क्त । जाते, अङ्कु-
विरूप त्रि० विकृतं रूपमस्य । कुत्सरूपयुक्ते, निन्दिते च पिप्पलीमूले न० । अतिविषायां, दुरालभायाञ्च स्त्री० ।
विरूपाक्ष पु० विरूपे विकटे अक्षिणी यस्य षच् समा० । महादेवे । विकटनेत्रे त्रि० ।
विरेक पु० वि+रिच-घञ् । मलादेरधोनिःसरणे, अतिरेके च
विरेचन न० वि+रिच-णिच्-ल्युट् । मलादेर्निःसारणे, ज्वरमध्ये विरेचन'मिति वैद्यकम् । विरेचयति वि+रिच-णिच्-ल्यु । पीलुवृक्षे पु० । भेदकमात्रे त्रि० ।
विरोक पु०न०वि+रुच-घञ् चस्य कः । छिद्रे, सूर्य्यकिरणे पु०
विरोचन पु० वि+रुच-युच् । सूर्य्ये अर्कवृक्षे, बलिपितरि प्रह्लादतनयेऽसुरभेदे, चन्द्रे च रोचयति रुच-णिच् ल्यु । रोहितकवृक्षे,श्योनाकवृक्षे, पूतकरञ्जे च पु० । रुचिकरे त्रि०
विरोध पु० वि+रुध-घञ् । वैरे, विरुद्धतायाम् न्यायोक्ते साध्येनासामानाधिकरण्यरूपे हेतुदोषे, यथा वह्निमान् जलादित्यत्र जलरूपहेतोर्वह्निना सामानाधिकरण्यं नास्ति ।
विरोधन न० वि+रुध-ल्युट् । वैरे ।
विरोधिन् पु० वि+रुध-णिनि । रिपौ, षष्टिसंवत्सरमध्ये 'जायते मानुषे कष्टं विरोधिनि न संशय' इत्युक्तलक्षणे वत्सरभेदे च ।
विरोधोक्ति स्त्री० अर्थालङ्कारभेदे,परवचनविरोधिवचने च ।
विल स्मृतौ तु०प०सक०सेट् । विलति अवेलीत् ।
विल न० विल-क । छिद्रे, गुहायाञ्च । विलतुल्यत्तिकारणत्वेनास्त्यस्य अच् । घोटकोत्तमे, वाजिनो 'विलयोनय' इति कुमारः । वेतसे च पु० ।
विलक्ष पु० विलक्ष-अच् विस्मययुक्ते ।
विलक्षण त्रि० विशिष्टं लक्षणमस्य । विभिन्ने, विशेषणयुक्ते च । निष्प्रयोजनस्थितौ च न० । दानार्थं काञ्चनरूपमूर्त्तियुतशय्याभेदे स्त्री० । 'अशौचान्तात् द्वितीयेऽह्नि शय्यां दद्यात् विलक्षणामि'ति स्मृतिः ।
विलग्न त्रि० विशेषेण लग्नं लस्ज-क्त तस्य नः जस्य गः । संलग्ने । मध्यभागे, कटौ, उदितमेषादिराशौ च न० । 'गोचरे वा विलग्ने वे'ति ज्योतिषम् । [काले
विलम्ब पु० वि+लबि-घञ् । विलम्बने अशीघ्रत्वे प्रतीक्षणीय
विलम्बित त्रि० वि+लबि-क्त । अशीघ्रे,मन्दे च मध्यन्त्ये न०
विलय पु० वि+ली-अच् । प्रलये, नाशे च ।
विलला स्त्री० वि+लल-अच् । श्वेतवलायाम् । [गोधायां च
विल(ले)शय पु० विले शेते-शी अच् वा अलुक्स० । सर्पे,मूषिके,
विलाप पु० वि+लप-घञ् । परिदेवनोक्तौ ।
विलास पु० वि+लस-घञ् । 'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु' इत्युक्ते स्त्रीणां शृङ्गारचेष्टाभेदे, चेष्टाविशेषे, दीप्तौ च ।
विलासिनी स्त्री० विलासोऽस्त्यस्य इनि ङीप् । नार्य्यां, वेश्यायाञ्च । भोगवति त्रि० सर्पे, कृष्णे, वह्नौ, स्मरे, महादेवे चन्द्रे च पु० ।
विलीन त्रि० वि-ली-क्त । प्राप्तद्रवीभावे घृतादौ, मिलिते, नष्टे च 'विलीनाशेषपातके'ति भागवतम् ।
विलेपन न० विलिप्यतेऽनेन करणे ल्युट् । गात्रानुलेपनद्रव्ये पिष्टे घृष्टे वा चन्दनकुङ्कुमादौ । कर्म्मणि ल्युट् ङीप् । यवाग्वां, सुवेशायां स्त्रियाञ्च स्त्री० ।

**विलेप्य** पु० वि+लिप-यत् । यवाग्वाम् विलेपनीये त्रि० ।

**विलोचन** न० वि+लुच-करणे ल्युट् । नेत्रे, भावे ल्युट् । दर्शने

**विलोडित** न० वि+लोड-क्त । तक्रे । आलोडिते त्रि० ।

**विलोम** त्रि० विगतं लोम यत्र अच् समा० । विपरीते, अरघट्टके न० सर्पे, कुक्कुरे वरुणे च पु० ।

**विलोमजिह्व** पु० विलोमा विपरीता जिह्वा यस्य । गजे ।

**विलोमवर्ण** पु० विलोमजः स्त्र्यनुक्ततया व्युत्क्रमजो वर्णः । उत्तमस्त्रियामधमवर्णेन जनिते सङ्कीर्णे वर्णे ।

**विलोमी** स्त्री० विशिष्टं लोम केशो यस्याः ५ ब० अच् गौरा० ङीष् । आमलक्याम् ।

**विलोल** त्रि० वि+लुल-अच् । चञ्चले, विशेषचञ्चले च ।

**विल्ल** न० विल-ल किच्च तस्य नेत्त्वम् । आलवाले । [हीकन्दे

**विल्लमूला** स्त्री० विल्लमालवालमिव वेष्टितं मूलमस्याः । वारा-

**विल्व** पु० विल-वन् किच्च । श्रीफलवृक्षे, तत्फलादौ, परिमाणे च न० । [पदार्थे शुष्कबिल्वीत्यथ्यत्र

**विल्वपेषिका** स्त्री० विल्वस्य पेषोऽस्त्यस्य ठन् । (वेलशुठा)

**वि(वी)वध** पु० वि+वध-अच् वा दीर्घः । धान्यतण्डुलादेराहरणे भारे स्कन्धवहनयोग्ये (वाक) काष्ठभेदे च ।

**विवर** न० वि+वृ-अप् । छिद्रे, दोषे च ।

**विवरण** न० वि+वृ-ल्युट् । व्याख्याने, तत्कारके ग्रन्थभेदे च ।

**विवरनालिका** स्त्री० विवरयुक्तं नालमस्त्यस्याः ठन् । वेणौ(वांशी)

**विवर्ण** त्रि० विरुद्धो वर्णोऽस्य । अधमे, नीचे च ।

**विवर्त्त** पु० वि+वृत-घञ् । नृत्ये, समुदाये, अपवर्त्तने वेदान्तोक्ते कारणात् विषमसत्ताकतया उत्पद्यमाने कार्य्ये च । यथा रङ्गात् रजतम् ब्रह्मणो जगत् ।

**विवश** त्रि० विगतो वश आयत्तता यस्य । अस्वतन्त्रे, व्याकुले च 'विवशा कामवधूरि'ति कुमारः कृतरोधे च ।

**विवस्वत्** पु० वि+वस-क्विप् अस्त्यर्थे मतुप् मस्य वः । सूर्य्ये, अर्कवृक्षे, अरुणे, देवे च ।

**विवाद** पु० विरुद्धो वादः । 'ऋणादिदायकलहे द्वयोर्बहुतरस्य वा । विवादो व्यवहारश्चे'त्युक्तलक्षणे व्यवहारे, कलहे च ।

**विवाह** पु० वि-वह-घञ् । दारपरिग्रहे, तज्जनके व्यापारे च

**विवाहित** पु० विवाहो जातोऽस्य तारकादि० इतच् । जातविवाहे ।

**विवाह्य** त्रि० वि+वह-ण्यत् । विवाहयोग्ये, विशेषेण वाह्ये च

**विविक्त** त्रि० वि+विच-क्त । निर्ज्जने, पवित्रे, असंयुक्ते च । कर्त्तरि-क्त । विवेकिनि त्रि० । दुर्भगायां स्त्रियां स्त्री० ।

**विविध** त्रि० विभिन्ना विधा यस्य । नानाप्रकारे ।

**विवीत** पु० विशिष्टं वीतं गवादिप्रचारस्थानं यत्र । प्रचुर-तृणघासादियुक्ते देशे ।

**विवृत** त्रि० वि+वृ-क्त । विस्तृते व्याख्याते च ।

**विवृति** स्त्री० वि+वृ-क्तिन् । विस्तारे व्याख्याने च ।

**विवेक** पु० वि+विच-घञ् । याथार्थ्येन वस्तुस्वरूपावधारणे प्रकृतिपुरुषयोर्भेदज्ञाने च ।

**विवोढ़ृ** पु० वि+वह-तृच् । जामातरि ।

**विव्वोक** पु० वि+वा-कु तस्य ओक स्थानम् । 'गर्वाभिमानादिष्टेपि विव्वोकोऽनादरक्रिये'त्युक्तलक्षणे स्त्रीणां शृङ्गारचेष्टाभेदे ।

**विश** प्रवेशे तु० पर० सक० अनिट् । विशति अविक्षत् ।

**विश्** पु० विश-क्विप् । मनुजे, वैश्ये च ।

**विशङ्कट** त्रि० वि+शङ्कटच् । विशाले । [च त्रि० ।

**विशद** पु० वि+शद-अच् । शुभ्रवर्णे । तद्वति विमले, व्यक्ते

**विशय** पु० वि+शी-अच् । संशये 'विषयो विशयश्चैवेति' मीमांसा

**विशर** पु० वि+शॄ-अच् । बधे ।

**विशल्यकृत्** पु० विशल्य तत्प्रहारवेदनानिवृत्तिं करोति कृ-क्विप् । (हापरमाली) वृक्षे ।

**विशल्या** स्त्री० विगतं शल्यं तत्प्रहारवेदना यस्याः ५ ब० । अग्निशिखवृक्षे, दन्तीवृक्षे, गुडूच्याम्, त्रिपुष्पायां अजमोदायाञ्च । विगतशल्ये त्रि० ।

**विशसन** न० वि+शस-हिंसने ल्युट् । मारणे ।

**विशसन** पु० विशस्यतेऽनेन ल्युट् । खड्गे, 'असिर्विशसनः खड्ग इति खड्गस्तोत्रम् । [तत्र, मारिते

**विशस्त** त्रि० वि+शस-क्त । नाशिते अतीते च । वा इट् ।

**विशाख** पु० विशाखानक्षत्रे भवः अण् । कार्त्तिकेये । धन्विनां वितस्त्यन्तरालपादावस्थाने, पुनर्नवायां, याचने च ।

**विशाखज** पु० विशिष्टा शाखा यस्य तथा सन् जायते जन-ड । नारङ्गे, विशाखानक्षत्रजाते त्रि० ।

**विशाखा** स्त्री० विशिष्टा शाखा प्रकारो यस्याः । नङ्कलनक्षत्रात्मकेऽश्विन्यवधिके षोडशे नक्षत्रे कठिल्लके च ।

**विशारण** न० वि+शॄ-स्वार्थे णिच्-ल्युट् । मारणे ।

**विशारद** पु० विशालं ददाति दा-क लस्य रः । वकुलवृक्षे क्षुद्रदुरालभायां स्त्री० पण्डिते, प्रगल्भे, श्रेष्ठे च त्रि० ।

**विशाल** त्रि० वि+शालच् । विस्तीर्णे, वृहति च । मृगभेदे, नृपभेदे च पु । इन्द्रवारुण्याम्, माहेन्द्रवारुण्यां नदीभेदे च स्त्री० 'विशालां विरजां तथे'ति पुराणम् । [वृक्षे

**विशालता** स्त्री० विशालस्य भावः तल् । पार्श्वविस्तारे । [अक्षोटे

**विशालतैलगर्भ** पु० विशालं विस्तीर्णं तैलं गर्भे फलमध्ये यस्य ।

विशालत्वच् पु० विशाला त्वक् यस्य । सप्तच्छदे वृक्षे ।
विशालपत्र पु० विशालं पत्रमस्य । श्रीताली,तालवृक्षे च ।
विशालाक्ष पु० विशाले अक्षिणी यस्य षच्समा० । महादेवे, गरुडे,विष्णौ च वृहन्नेत्रे,त्रि०पार्व्वत्यां नागदन्त्यां च स्त्री०ङीष्
विशाली स्त्री० वि+शालच् गौरा०ङीष् । अजमोदायाम् ।
विशिख पु०विशिष्टा विगता वा शिखा यस्य । शरवृक्षे, बाणे, तोमरे च द्वव० शिखारहिते त्रि० । नालिकायाम् रथ्यायाञ्च स्त्री० ।
विशिष्ट त्रि० वि+शिष-क्त । युक्ते, विलक्षणे, विशेषयुक्ते च ।
विशिष्टाद्वैत न०रामानुजाद्युक्ते प्रकृतिविशिष्टस्य ब्रह्मणोऽद्वयत्वे
विशीर्ण त्रि० वि+श-क्त । शुष्के, जरावस्थापन्ने च ।
विशीर्णपर्ण पु० विशीर्णं पर्णमस्य । निम्बवृक्षे ।
विशुद्ध त्रि० वि+शुध-क्त । दोषरहिते, विशदे च ।
विशुद्धि स्त्री० वि+शुध-क्तिन् । शोधने,दोषराहित्ये च ।
विशृङ्खल त्रि०विगता शृङ्खला पद्धति र्यस्याः । परिपाटीशून्ये
विशेष पु० वि+शिष-घञ् । प्रभेदे, प्रकारे, व्यक्तौ, तिलके, 'अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तित' इति वैशेषिकोक्ते पदार्थभेदे, अर्थालङ्कारभेदे च ।
विशेषक पु०न०विशेषयति वि+शिष-णिच्-ण्वुल् । ललाटकृते तिलके । विशेषकर्त्तरि त्रि० 'त्रिभिर्श्लोकैर्विशेषक'मित्युक्ते एकवाक्यतापन्ने श्लोकत्रये न० ।
विशेषगुण पु० कर्म० । वैशेषिकोक्ते 'बुद्ध्यादिषटकं स्पर्शान्तं स्नेहः सांसिद्धिको द्रवः । अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः' इत्युक्तेषु गुणभेदेषु ।
विशेषण न० विशिष्यतेऽनेन वि+शिष-ल्युट् । भेदकधर्मे गुणक्रियादौ यथा नीलम् उत्पलं चलो गौरित्यादौ गुणक्रियादिर्भेदकधर्मः ।
विशेषविधि पु० विशेषे विधिः । सामान्यविशेषयोर्मध्ये विशेषगोचरे विधाने यथा ब्राह्मणेभ्यो दधि दीयतां शाखिल्याय तक्रमित्यत्र शाखिल्यस्य ब्राह्मणविशेषत्वेन तद्विषये दधिदानापवादेन तक्रदानविधिः ।
विशेषित त्रि० वि+शिष-णिच्-क्त । भेदिते विशेषणयुक्तीकृते च
विशेषोक्ति स्त्री० अर्थालङ्कारभेदे ।
विशेष्य त्रि० विशिष्यते भेद्यते गुणादिभिरसौ वि+शिष-ण्यत् । गुणादिभिर्भेद्ये,व्यवच्छेद्ये, पदार्थे धर्म्मिणि च ।
विशोक पु० विगतः शोकः यस्मात् यस्य वा । अशोकवृक्षे शोकरहिते त्रि० योगशास्त्रोक्ते चित्तवृत्तिभेदे स्त्री० ।
विशोधनी स्त्री० विशुध्यतेऽनया शुध-ल्युट् ङीप् । दन्तीवृक्षे भावे ल्युट् । शोधने न० वि+शुध-ल्यु । शोधनकारके त्रि० ।
विशोधिन् त्रि० वि+शुध-णिच् णिनि । शोधनकारके त्रि० । नागदन्त्यां स्त्री०ङीप् ।
विश्र(श्रा)णन न० वि+श्रण-णिच्-ल्युट् वा वृद्धिः । दाने ।
विश्रब्ध त्रि० वि+स्रन्भ-क्त । विश्वस्ते 'विस्रब्धं परिचुम्ब्य'इति शा० । शान्ते, अनुद्धते, गाढे च ।
विश्र(श्रा)म पु० वि+श्रम-घञ् वा वृद्धिः । विरामे प्रवृत्तव्यापारस्यावसाने च । [दिष च ।
विश्रम्भ पु० वि+ स्रन्भ-घञ् । विश्वासे, प्रत्यये, केलिकलहे
विश्राव पु० वि+श्रु-घञ् । प्रसिद्धौ ख्यातौ च ।
विश्रुत पु० वि+श्रु क्त । विख्याते ।
विश्लिष्ट त्रि० वि+श्लिष-क्त । वियुक्ते, शिथिले च ।
विश्लेष पु० वि+श्लिष-घञ् । वियोगे शैथिल्ये च ।
विश्व न०विश-व । जगति संसारे । तदभिमानिनि जीवे पु० । श्राद्धदेवविशेषे पु० ब०व०। सकले त्रि० तदर्थेऽस्य सर्व्वनामता ।
विश्वकर्म्मन् पु० विश्वेषु कर्म व्यापारो यस्य । सूर्ये, देवशिल्पिनि, मुनिभेदे, परमेश्वरे च ।
विश्वकृत् पु० विश्वं करोति कृ-क्विप् । विश्वकर्मणि,परमेश्वरे च
विश्वकेतु पु० विश्वे केतवोऽस्य । अनिरुद्धे ।
विश्व(ष्व)क्सेन विषु(ष्व)चीसेनायस्य। विष्णौ, प्रियङ्गुवृक्षे स्त्री०।
विश्वगन्ध पु० विश्वतो गन्धोऽस्य। बोले गन्धरसे,पलाण्डौ च
विश्वगन्धा स्त्री० विश्वे सकला गन्धा यस्याः । पृथिव्याम् ।
विश्वग्रन्थि स्त्री० विश्वतो ग्रन्थिर्यस्याः । हंसपदीलतायाम्
विश्व(ष्व)च् अव्य०विश्वमञ्चति क्विप् विषु(षु) आदेशः । सर्व्वत इत्यर्थे विश्वगामिनि त्रि० अध्रागमे विश्व(ष्व)द्र्यञ्चपत्र ।
विश्वधारिणी स्त्री० विश्वं धारयति धृ-णिनि । पृथिव्याम्
विश्वपर्णी स्त्री० विश्वतः पर्णान्यस्याः । भूम्यामलक्याम् ।
विश्वप्सन् पु० विश्वं प्साति भक्षति प्सा-कनिन् । अग्नौ,चन्द्रे देवे, विश्वकर्मणि, भूमौ च।
विश्वभेषज न० विश्वेषां भेषजम् । शुण्ठ्याम् ।
विश्वम्भर पु० विश्वं बिभर्त्ति भृ-अच् मुम् च । इन्द्रे, विष्णौ च । पृथिव्यां स्त्री० ।
विश्वरूपक न० विश्वं रूपमस्य कप् । कृष्णागुरुणि ।
विश्वरेतस् पु० विश्वं रेतोजन्यं यस्य । चतुर्मुखे ब्रह्मणि ।
विश्वरोचन पु० विश्वान् रोचयति रुच-णिच्-ल्यु । नाडीचशाके
विश्ववेदस् पु० विश्वं वेत्ति विद-असुन् । इन्द्रादौ देवे,सर्व्वज्ञे च
विश्वसार न० विश्वेषां सारम् । तन्त्रभेदे । संज्ञायां कन् । (फणिमनसा) वृक्षे पु० ।

विश्वसृज् पु० विश्वं सृजति सृज-क्विप् । चतुर्मुखे ब्रह्मणि ।
विश्वस्त त्रि० वि+श्वस-क्त । जातविश्वासे, विश्वसितोऽप्यत्र त्रि० वा इट् । विधवायां स्त्रियां स्त्री० ।
विश्वस्था स्त्री० विश्वतः तिष्ठति स्था क । शतावर्य्याम् ।
विश्वाची स्त्री० विश्वमञ्चति अञ्च क्विप् । अप्सरोभेदे ।
विश्वात्मन् पु० विश्वमात्मा यस्य । विष्णौ ।
विश्वामित्र पु० विश्वं मित्रमस्य पूर्वपददीर्घः । ब्रह्मर्षिभेदे गाधिसुते नृपे । [मिश्वरे च
विश्वामित्रप्रिय पु०६त० । नारिकेले श्रीरामे च । [पर
विश्वाराज् पु० विश्वेषु राजते राज-क्विन् । विश्वेषां राजनि,
विश्वावसु पु० विश्वेषां वसु यस्मात् ष० दीर्घः । गन्धर्वभेदे । रात्रौ स्त्री० ।
विश्वास पु० वि+श्वस-घञ् । इदमित्थमेवेत्याकारे चित्तवृत्तिभेदे, प्रत्यये, श्रद्धायाञ्च ।
विश्वेदेव पु० ब, व० कर्म्म० अलुक्स० । 'क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथा ध्वनिः । रोचकश्चाद्रवाश्चैव तथा चान्यः पुरूरवाः । विश्वेदेवा भवन्त्येते दश श्राद्धेषु पूजिता' इत्युक्ते श्राद्धदेवभेदे । विश्वदेवस्तु वह्नौ पु० ।
विश्वेश पु० ६त० । शिवे, विश्वेश्वरादयोऽप्यत्र ।
विश्वौषध न०विश्वेषु रोगेषु औषधम् । शुण्ठ्याम् ।
विष व्याप्तौ जु०उभ०सक०अनिट् । वेवेष्टि वेविष्टे । अविषत् अविक्षत् त ।
विष विप्रयोगे क्र्या०पर०अक०अनिट् । विष्णाति अविक्षत् ।
विष सेचने भ्वा०पर०सक० अनिट् । वेषति अविक्षत् ।
विष् स्त्री० विष-क्विप् । विष्ठायाम् ।
विष न० विष-क । जले, पद्मकेशरे, मृणाले, गन्धरसे, वत्सनाभ-विषे च गरलमात्रे पु०न० ।
विषकण्टकिनी स्त्री० विषयुक्तं कण्टकमस्या अस्ति इनि । वन्ध्याकर्कोट्याम् ।
विषकण्ठ पु० विषं कण्ठे यस्य । शिवे ।
विषघा स्त्री० विषं हन्ति हन-ड नि० कुत्वञ्च । गुडूच्याम् ।
विषघातिन् पु०विषं हन्ति हन-णिनि । शिरीषवृक्षे । विषनाशके त्रि० ।
विषघ्न पु०विषं हन्ति हन-क । शिरीषवृक्षे, यवासे, बिभीतके, चम्पकवृक्षे च । छिन्नमोचिकायां (छेलेश्वा) इन्द्रवारुण्याम्, वर्वरायाम्, भूम्यामलक्याम्, रक्तपुनर्नवायाम्, हरिद्रायाम्, हस्तिकाल्याम्, महाकरञ्जे च स्त्री० ङीप् । विषनाशके त्रि० ।
विषजिह्व पु० विषयुक्ता जिह्वेव पत्रमस्याः । देवताड़वृक्षे ।
विषज्वर पु० विषमिव प्राणहन्ता ज्वरो यस्य । महिषे ।
विषतन्तु न० विषेषेण यत्तन्तुम् । मृणाले ।
विषतिन्दु पु० विषयुक्तस्तिन्दुः । कुपीलौ ।
विषद न०वि+षद-अच् । पुष्पकासीसे शुक्लवर्णे पु० । तद्वति त्रि०
विषदन्तक पु० विषं दन्ते यस्य कप् । सर्पे ।
विषधर पु०विषं धरति धृ-अच् । सर्पे, 'विषधरविषमसि'त्युद्भटः
विषधर्म्मिन् पु० विषस्येव धर्म्मोऽस्य अस्ति इनि समा० । (आलकुशी) लतायाम् ।
विषनाशन पु० विषं नाशयति नश-णिच्-ल्यु । शिरीषवृक्षे
विषनुद् पु० विषं नुदति नुद-क्विप् । श्योनाकवृक्षे ।
विषपुष्प न० विषमिव नीलं पुष्पमस्य । नीलपद्मे । पुं । मदनवृक्षे । कर्म्म० । नीलपुष्पे न० ।
विषम त्रि० विगतो विरुद्धो वा समः । असमे, अयुग्मे उन्नतानते, दारुणे, सङ्कटे च 'भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितमि'त्युक्ते पद्यभेदे न० । [सप्तच्छदे ।
विषमच्छद पु० विषमाः अयुग्मानि सप्त छदाः यस्य ।
विषमज्वर पु० विषम उग्रो ज्वर । ज्वरभेदे ।
विषमनयन पु० विषमाणि अयुग्मानि त्रीणि नयनान्यस्य । शिवे । विषमनेत्रादयोऽप्यत्र ।
विषमर्द्दनी स्त्री० विषं मृद्यतेऽनया मृद-ल्युट् ङीप् । गन्धनाकुल्याम् । स्वार्थे कन् । तत्रैव ।
विषमस्थ त्रि० विषमे उन्नतानते सङ्कटे वा तिष्ठति स्था-क । उपद्रवप्राप्ते, सङ्कटस्थे, उन्नतानतदेशस्थे च ।
विषमशिष्ट न० विषमं शिष्टं शासनम् । अनुचितशासने ।
विषमायुध पु० विषमाणि अयुग्मानि पञ्च आयुधानि बाणा यस्य । कामे । विषमेष्वादयोऽप्यत्र ।
विषय पु०विषिण्वन्ति स्वात्मकतया विषयिणं निरूपयन्ति सम्बध्नन्ति वा वि+षि-अच् । इन्द्रियगोचरे-शब्दादौ, देशे च ।
विषयिन् न० विषयोऽस्त्यस्य इनि । ज्ञाने, इन्द्रिये च । विषयासक्ते त्रि० । राज्ञि, कामदेवे, ध्वनौ च पु० ।
विषरूपा स्त्री० विषं मूषिकविषं रूपयति अतिक्रामति रूप-क । अतिविषायाम् (आतइच) ।
विषलता स्त्री० विष-व्याप्तेव लता । इन्द्रवारुण्याम् ।
विषविद्या स्त्री० विषाय तन्निवृत्तये विद्या । विषघ्नमन्त्रज्ञाने
विषवैद्य पु०विषे विषापहारे वैद्यश्चिकित्सकः । विषमन्त्रविद्यायनि
विषशालूक पु० विषस्य मृणालस्य शालूकः । पद्मकन्दे ।
विषहन्त्री स्त्री०विषं हन्ति हन-तृच् ङीप् । अपराजितायाम् ।

विषहारके त्रि० । [विषहारके त्रि० ।

**विषहरी** स्त्री० विषं हरति हृ-अच् गौ० ङीष् । मनसादेव्याम्

**विषहा** स्त्री० विषं हन्ति हन-ड । देवदालीलतायाम् ।

**विषा** स्त्री० विषं नाश्यत्वेनास्त्यस्याः अच् । (आतइच) अतिविषायाम्, बुद्धौ च ।

**विषाण** न० विष+कानच् । पशुशृङ्गे, हस्तिदन्ते वराहदन्ते, कुष्ठौषधे, क्षीरकाकोल्याञ्च ।

**विषाणिका** स्त्री० विषाणमस्त्यस्याः ठन् । शृङ्ग्याम् (गाडरशिङ्गा) कर्कटशृङ्ग्याम्, आमलक्याञ्च ।

**विषाणिन्** पु० विषाणमस्त्यस्य इनि । शृङ्गिणि, हस्तिनि च । शृङ्गाटके, ऋषभौषधे च पु० ।

**विषाद** पु० वि+षद-घञ् । अवसादे, जडतायाञ्च ।

**विषादनी** स्त्री० विषाय तन्निवृत्तये अद्यतेऽसौ अद-ल्युट् । पलाशीलतायाम् ।

**विषात्मक** पु० विषस्यात्मक इव । शिवे, विषहरे त्रि० ।

**विषापह** स्त्री० विषमपहन्ति अप+हन-ड । इन्द्रवारुण्याम्, नागदमन्याम्, अर्कमूलायाञ्च (इशरमूल) ।

**विषाराति** पु० ६त० । कृष्णधुस्तूरे ।

**विषारि** पु० ६त० । घृतकरञ्जे, महाचञ्चुशाके च । [तके

**विषास्य** पु० विषमास्ये यस्य । सर्पे विषात्तमिवास्यमस्य । भल्ला

**विषु** अव्य० विष-कु । साम्ये, नानारूपे च ।

**विषुव** न० विषु दिनरात्र्योः साम्यं वाति वा-क । समरात्रिदिनकालके अयनांशक्रमेण रवेः तुलामेषराशिसंक्रान्तिभेदे ।

**विषुवत्** न० विषु साम्यमस्यास्ति मतुप् यवादि० मस्य वः । विषुवशब्दार्थे ।

**विषौषधी** स्त्री० ६त० । नागदन्त्याम् ।

**विष्क** हिंसायां चु आ०सक० सेट् । विष्कयते अविविष्कत । दर्शने उभ० विष्कयति ते अविविष्कत् त ।

**विष्कम्भ** पु० वि+स्तम्भ-अच् । सूर्य्यचन्द्रयोगजातयोगमध्ये प्रथमे योगे, विस्तारे, प्रतिबन्धे, रूपककाव्याङ्गभेदे, योगिनां बन्धभेदे, वृक्षे, अवष्टम्भके-कीलकादौ च ।

**विष्किर** पु० विकिरति वि+कृ-क सुट् च । विहगे ।

**विष्टप** न० विश-कपन् तुट् च । भुवने ।

**विष्टब्ध** त्रि० वि+स्तम्भ-क्त । प्रतिरुद्धे अवरुद्धे ।

**विष्टम्भ** पु० वि+स्तम्भ घञ् । प्रतिबन्धे रोगभेदे च ।

**विष्टम्भिन्** त्रि० वि+स्तम्भ-णिनि । प्रतिबन्धके रोगविशेषजनके च ।

**विष्टर** पु० वि+स्तृ-अप् षत्वम् । 'ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टर' इति 'वामावर्त्तस्तु विष्टर'इति च स्मृत्युक्ते दर्भकृते आसनभेदे, आसनमात्रे, वृक्षे च । [विष्णौ ।

**विष्टरश्रवस्** पु० विष्टरः कुशमुष्टिरिव श्रवसी कर्णावस्य ।

**विष्टरुहा** स्त्री० विष्टा भूमौ प्रविष्टा सती रोहति रुह-क । स्वर्णकेतक्याम् ।

**विष्टार** पु० वि+स्तृ-घञ् षत्वम् । पङ्क्तिच्छन्दोभेदे ।

**विष्टि** स्त्री० विश-क्तिन् क्तिच् वा । वेतनं विना भारादिवहनजन्ये क्लेशे, वेतने, कर्मणि, वर्षणे, प्रेषणे, तिथ्यर्द्धात्मककरणमध्ये सप्तमे करणे कर्मकरे-भृत्ये, वेतनं विना कर्मकरे च पु० ।

**विष्ठा** स्त्री० विविधं तिष्ठति स्था-क षत्वम् । पुरीषे ।

**विष्णु** पु० विष-व्यापने नुक् । व्यापके, परमेश्वरे, वह्नौ शुद्धे, धर्मशास्त्रकारके मुनिभेदे च 'अत्रिविष्णुहारीते'ति स्मृतिः । 'यस्मात् विश्वमिदं सर्वं तस्य शक्त्या महात्मनः । तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनादि'त्युक्ते, वासुदेवेऽपि

**विष्णुक्रान्ता** स्त्री० ३त० । अपराजितायाम् तस्याः विष्णुपरित्यक्तत्वात्तथात्वम् । [त्विन प्रसिद्धः न्यायभाष्यकर्त्ता ।

**विष्णुगुप्त** पु० चाणक्ये पण्डिते अयमेव वात्स्यायनपक्षिलस्वामि

**विष्णुतैल** न० वैद्यकप्रसिद्धे तैलभेदे ।

**विष्णुधर्म्म** पु० विष्णूपासनायोग्यो धर्मः शाक० । विष्णूपासनोचिते नियमभेदे उपचारात् तत्प्रतिपादके ग्रन्थे च ।

**विष्णुधर्म्मोत्तर** न० विष्णुधर्म उत्तरः प्रधानः वर्ण्यत्वेन यस्य । संहिताभेदे ।

**विष्णुपद** न० विष्णोः पदमिव व्यापकत्वात् । आकाशे ।

**विष्णुपदी** स्त्री० विष्णुपदं कारणत्वेनास्त्यस्याः अच् गौरा० ङीष् । गङ्गायाम् वृषसिंहवृश्चिककुम्भराशौ रवेः संक्रान्तौ च

**विष्णुमाया** स्त्री० ६त० । विष्णोः परमेश्वरस्य माया । अघटनघटनपटीयस्याम् अविद्याशक्तौ, तदधिष्ठात्र्यां दुर्गायाञ्च ।

**विष्णुरथ** पु० विष्णोः रथ इव गतिहेतुत्वात् । गरुडे ।

**विष्णुरात** पु० विष्णुना रातः विष्णुर्वा रायाज्जीवनमस्मै रा-क्त वा । परीक्षिदाख्ये नृपे सहि गर्भस्थएव अश्वत्थामास्त्रेण दग्धः सन् मृतः प्रसवानन्तरञ्च विष्णुना पुनर्जीवित इति भारतम्

**विष्णुवल्लभा** स्त्री० ६त० । तुलस्याम्, अग्निशिखावृक्षे च ।

**विष्णुवाहन** पु० विष्णुं वाहयति स्थानान्तरं नयति वह-णिच् ल्यु । गरुडे ।

**विष्णुवाह्य** पु० विष्णुर्वाह्योऽस्य । गरुडे । [कर्णशब्दे टङ्कारे

**विष्फार** पु० वि+स्फुर णिच् अच आत् अत्र षत्वम् । धनुर्गुण-

**विष्य** त्रि० विषेण वध्यः विष+यत् । विषेण वध्ये ।

**विष्वक्सेन** पु० विषुची सेना यस्य । विष्णौ विष्णुनिर्म्माल्य भक्षके,तद्गणभेदे च । प्रियङ्गौ स्त्री० । [च

**विष्वक्सेनप्रिया** स्त्री०६त०। लक्ष्मयाम् (चामर आलु) भेदे

**विष्वाण** न० वि+ष्वन-ण्वुल् षत्वणत्वे । भोजने ।

**विष्वाण** पु० वि+ष्वन-घञ् षत्वणत्वे । भोजने ।

**विस** न० वि+षो-क । मृणाले ।

**विसकण्ठिका** स्त्री० विसं मृणालमिव कण्ठोऽस्त्यस्याः ठन् । वलाकायाम् ।

**विस** उत्सर्गे दि०पर०सक०सेट् । विस्यति अवेसीत् ।

**विसंवाद** पु० वि+सम्+वद-घञ् । विप्रलम्भे, वञ्चने, अन्यथा स्थितस्य वस्तुनोऽन्यथा कथनादौ च।

**विसकुसुम** न०विषयुक्तं कुसुमम् । पद्मे ।

**विसङ्कट** पु० विशिष्टो सङ्कटो यस्मात् । सिंहे इङ्गुदीवृक्षे च ।

**विसनाभि** स्त्री० विसं नाभौ यस्य । पद्मिन्याम् पद्मसमूहे च

**विसर** पु० वि+सृ-अप् । समूहे, विस्तारे च ।

**विसर्ग** पु० वि+सृज-घञ् । दाने, त्यागे, मलत्यागे, विसर्ज्जनीयाख्ये वर्णभेदे, मोक्षे, प्रलये च भूतसर्गविसर्गादि मवलक्षणलक्षितमिति श्रीधरः । [ल्युट् । प्रेरणे ।

**विसर्ज्जन** न०वि+सृज-ल्युट् । दाने, त्यागे च। वि+सृज-णिच्

**विसर्प** पु० वि+सृप-अच् । रोगभेदे ।

**विसर्पण** न० वि+सृप-ल्युट् । प्रसारे ।

**विसार** पु० विसरति सर्पति वि+सृ-घञ्। मत्स्ये ।

**विसारिन्** त्रि० वि+सृ-णिनि । प्रसरणशीले । मत्स्ये पु० माषपर्ण्यां स्त्री० ङीप् । [पद्मसमूहे पद्मलतायाञ्च ।

**विसिनी** स्त्री० विसानां समूहः तद्युक्तो देशो वा इनि ।

**विसूचिका** स्त्री० विशिष्टा सूचीव स्वार्थे कन् । रोगभेदे ।

**विसृत** त्रि० वि+सृ-क्त । विस्तीर्णे ।

**विसृत्वर** त्रि० वि+सृ-क्वरप् । प्रसरणशीले । स्त्रियां ङीप् ।

**विसृमर** त्रि० वि+सृ-क्मरच् । विसरणशीले ।

**विसृष्ट** त्रि० वि+सृज-क्त । प्रेरिते 'रघवे विसृष्ट, इति रघुः क्षिप्ते'त्यक्ते च । [रत्तिकापरिमाणे च।

**विस्त** पु०न० विस-उत्सर्गे क्त नि० नेट् । सुवर्णकर्षे, अशीति

**विस्तर** पु० वि+स्तृ-अप् । शब्दसमूहे, वाक्यसङ्घे, विस्तारे, प्रणये, समूहे च । आधारे अप् । पीठे ।

**विस्तार** पु० वि+स्तृ-संज्ञायां कर्त्तरि घञ् । विटपे भावे घञ् । विस्तीर्णतायाम् समासवाक्य स्थे पदसमूहे च ।

**विस्तीर्ण** त्रि० वि+स्तृ-क्त । विपुले विस्तारयुक्ते विशाले च।

**विस्तीर्णपर्ण** न० विस्तीर्णानि पर्णान्यस्य । मानके ।

**विस्तृत** त्रि० वि+स्तृ-क्त । विस्तारयुक्ते । [वह्निकणे विषभेदे च

**विस्फुलिङ्ग** पु० विस्फुरति वि+स्फुर-ड बाषः तद् लिङ्गमस्य ।

**विस्फोट** पु० विस्फुटति वि+स्फुट-अच् । (विषफोड़ा) पदार्थे, स्वार्थे कन्। स्फोटकभेदे विस्फोटकभया भेषपहेति शीतला स्तोत्रम् ।

**विस्मय** पु० वि+स्मि-अच् । आश्चर्य्ये, अद्भुते, रसभेदे च ।

**विस्मयान्वित** त्रि० ६त० । विस्मययुक्ते, आश्चर्य्ययुक्ते च ।

**विस्मापन** पु० विस्मि-णिच्-अच-आत् ल्यु । कुहके, कामदेवे च । गन्धर्व्वपुरे न० । विस्मायनमप्यत्र ।

**विस्मित** पु० वि+स्मि-क्त । विस्मययुक्ते ।

**विस्मृत** त्रि० विस्मृ-क्त । स्मरणाविषये ।

**विस्मृति** स्त्री० वि+स्मृ-क्तिन् । स्मरणाभावे ।

**विस्र** न० विस-रक् । आमगन्धौ ।

**विस्रंस** पु० वि+स्रन्स-घञ् । पतने, मरणे च ।

**विस्रगन्धा** स्त्री० विस्रो गन्धोऽस्याः । लघुणायाम् ।

**विस्रगन्धि** पु० विस्रस्येव गन्धोऽस्य इत्समा० । हरिताले ।

**विस्रम्भ** पु० वि+स्रन्भ-घञ् । विश्वासे, प्रणये, परिचये च ।

**विस्रम्भिन्** त्रि०वि+स्रन्भ-णिनि । विश्वासयुक्ते, प्रणयिनि च

**विस्रसा** स्त्री० वि+स्रन्स-क । जरायाम् ।

**विस्रसा** स्त्री०वि+स्रसः आमगन्धोऽस्त्यस्याः अच् । लघुणायाम्

**विहग** पु०विहायसा गच्छति गम-ड नि०। पक्षिणि पु०विहङ्गोऽप्यत्र

**विहङ्गम** पु० विहायसा गच्छति गम-खच् नि० पक्षिणि ।

**विहङ्गराज** पु० ६त० अच् समा० । गरुडे 'विहङ्गराजाङ्करुहैरिति माघः । [छायाञ्च ।

**विहनन** न०विहन्यते वि+हन-ल्युट् । तुलपिञ्जुले, विघ्ने, हिं

**विहर** पु० वि+हृ-अप् । वियोगे । ल्युट् । तत्रैव न० ।

**विहसित** न० वि+हस-क्त । मध्यमहासे ।

**विहस्त** त्रि० विगतो हस्तो हस्तावलम्बनं यस्य । व्याकुले । पण्डिते, षण्डे च पु० ।

**विहापित** न० वि+हा-णिच्-क्त । दाने ।

**विहायस्** पु० न० वि+हय-असुन् नि० वृद्धिः । आकाशे पक्षिणि च स्वार्थे अच् । विहायसमप्याकाशे व० ।

**विहार** पु० वि+हृ-घञ्। क्रीड़ार्थं पादाभ्यां गमने, भ्रमणे, स्कन्धे, लीलायां, बौद्धदेवालये,वैजयन्ते च ।

**विहित** त्रि० वि+धा-क्त । कृते, विधिना बोधिते च ।

**विहीन** त्रि० वि+हा-क्त । त्यक्ते, वर्ज्जिते च ।

**विहृत** न०वि+हृ-भावे क्त। विहारे, स्त्रीणां चेष्टाभेदे च ।

**विह्वल** त्रि० वि+ह्वल-अच् । भयादिना व्याकुले, विलीने च ।

वी कान्तौ जनने च अक० गतौ व्याप्तौ क्षेपे भोजने च सक० अदा० उभ० अनिट्। वेति अवैषीत्।
वी(वि)काश पु० वि+काश-घञ् वा दीर्घः। रहसि, प्रकाशे च।
वीक्षण न० वि+ईक्ष-करणे ल्युट्। नेत्रे। भावे ल्युट्। दर्शने
वीङ्खा स्त्री० वि+इखि-अच्। न्यूङ्खाम्। अ। गतिभेदे, नृत्ये, अश्वगतिभेदे, सन्धौ च।
वीचि(ची) पुं०स्त्री० वे-डीचि स्त्रीत्वे वा ङीप्। तरङ्गे, अवकाशे, सुखे, अल्पे, किरणे च।
वीचितरङ्ग पु० वीचेरिव तरङ्गो यत्र। वीचितो यथा उत्तरोत्तरं तरङ्गजननमेवं स्वजन्यजन्यादिरूपे न्यायभेदे यथा शब्दस्य ढक्कादिदेशे उद्भवस्तज्जन्यशब्दपरम्परया श्रोत्रेण सह सम्बन्धात् श्रवणम्।
वीचिमालिन् पु० वीचीनां माला ऽस्त्यस्य इनि। समुद्रे।
वीज व्यजने अद०चुरा०उभय०सक०सेट्। वीजयति ते अविवीजत्-त। 'वीज्यते स हि संतप्त' इति कुमारः।
वीज न० वी-क्विप् जन-ड कर्म०। कारणे, शुक्रे, अङ्कुरे, तत्त्वावधाने, मज्जनि, अव्यक्तगणितभेदे, मन्त्रभेदे, धान्यादेः फलादौ च।
वीजक पु० वीजेन कायति कै-क। मातुलुङ्गे। [वराटके।
वीजकोश पु० वीजानां कोश इवाधारः। पद्मवीजाधारे
वीजगर्भ पु० वीजानि गर्भे यस्य। पटोले।
वीजगुप्ति स्त्री० वीजानां गुप्तिर्यस्याम्। शिम्बाम्।
वीजन न०वीज-ल्युट्। व्यजने। करणे ल्युट्। चामरादौ। वस्तुनि, चक्रवाके, जीवञ्जीवविहगे च पु०।
वीजपादप पु० वीजप्रधानः पादपः। भल्लातकवृक्षे।
वीजपुष्प न० वीजात् पुष्पं यस्य। मरुवके। [वीजपूर्णोऽप्यत्र
वीजपूर पु० पूर्यते पूर-घञ् २त०। (टावा लेवु) जम्बीरभेदे
वीजफलक पु० वीजानि फले यस्य कप्। वीजपूरे जम्बीरे।
वीजमातृका स्त्री० वीजानां मातेव इवार्थे कन्। पद्मवीजे।
वीजरुह पु०वीजेन रोहति रुह-क। वीजमात्रजाते धान्यादौ
वीजरेचन न० वीजं रेचयति रिच-ल्यु। वीजेषु मध्ये रेचके जयपालवीजे।
वीजवपन न० वीजानि उप्यन्तेऽत्र वप-आधारे ल्युट्। क्षेत्रे। भावे ल्युट्। वीजस्य उत्पादनार्थं क्षेपणे।
वीजरत्न न० वीजं रत्नमिवास्य। माषेऽत्रवाये।
वीजवृक्ष पु० वीजप्रधानो वृक्षः। असनवृक्षे।
वीजसञ्चय पु० वीजानां वपनयोग्यधान्यादीनां सञ्चयः संग्रहः सम्+चि-अच्। वपनयोग्यधान्यादिसंग्रहे।
वीजसू पु० वीजं सूते सू-क्विप्। पृथिव्याम्। [कृष्टे क्षेत्रे।
वीजाकृत त्रि० वीजेन सह कृष्टम् डाच् कृ-क्त। वीजेन सह
वीजाम्ल न० वीजेनाम्लमिव। वृक्षाम्ले। [विशिष्टे त्रि०
वीजिन् पु०वीजमस्त्यस्य इनि। उत्पादके पितरि। वीज-
वीज्य त्रि० विशेषेण इज्यः वि+यज-क्यप्। कुलीने।
वीटि(टी) स्त्री० वि+इट-इन् वा ङीप्। (पानेर वीड़ा) सज्जितताम्बूले। स्वार्थे कन्। तत्रैव।
वीणा स्त्री० अज-न वीभावः टा० पालम्। स्वनामख्याते वाद्यभेदे। [दरखे।
वीणादण्ड पु० ६त०। वीणावाद्यस्थतालावूपरिस्थे काष्ठ-
वीणावाद त्रि० वीणां वादयति वद-णिच्-अण्। वीणावादके
वीत न०वि-इण्-क्त। युद्धासमर्थे हस्त्यश्वादिसैन्ये, अङ्कुशकर्मणि न्यायाद्युक्ते अनुमानभेदे च। शान्ते गते च त्रि०।
वीतंस पु० वि-तनुस-घञ् वा दीर्घः। मृगपक्षिणां बन्धनोपकरणे दामप्रभृतौ, विश्वासहेतुप्रावरणे च।
वीतशोक पु० वीतः विगतः शोको यस्मात् यस्य वा। अशोकवृक्षे, शोकहीने त्रि०। [स्त्रिच्। घोटके पु०।
वीति स्त्री० वी-क्तिन्। गतौ, दीप्तौ, भोजने, याचने च।
वीतिहोत्र पु० वीतये पुरोडाशादिभक्षणाय हूयन्ते देवा अत्र हु-त्र। वह्नौ। [वर्त्मनि, दृश्यकाव्यनाटकाङ्गभेदे च।
वीथि(थी) स्त्री०विथ-इन् ङ०वा ङीप्। पङ्क्तौ, श्रेणौ, गृहाङ्गे,
वीथ्यङ्ग पु० वीथिरङ्गमस्य। दृश्यकाव्यभेदे।
वीध्र त्रि० वि-इन्ध-रक्। निर्मले। नभसि, वायौ च पु०।
वीनाह पु० वि-नह-घञ्। कूपादिमुखबन्धनसाधने (पाट) ख्याते पदार्थे।
वीप्सा स्त्री०वि+आप-सन्-अच-ईत्-अ अभ्यासलोपश्च। व्याप्तौ
वीब अद०चु०आ०अक० सेट्। वीबयते अविवीबत।
वीभ शौर्य्यहेतुके उद्यमे विकत्थने च भ्वा०अक०सेट्। चङि न ह्रस्वः। वीभते अवीभिष्ट।
वीर न० अज-रक् वीभावः वीर-अच् वा। मरिचे, पद्ममूले, काञ्जिके, उशीरे च। संज्ञायां कन्। करवीरे, वेगवति शौर्य्ययुक्ते च त्रि०। तन्त्रोक्ते कुलाचारे न०। तद्वति त्रि०। स्त्रियां स्त्री०।
वीरक पु० वि+ईर-ण्वुल्। करवीरे।
वीरण न० वि+ईर-ल्यु। उशीरे (वेणारमूल)।
वीरतर न० वि+ईर-अच् तरप्। वीरणे, शूरतरे त्रि०।
वीरतरु पु० वि+ईर-अच् कर्म०। अर्ज्जुनवृक्षे कोकिलाक्षे, भल्लातके, (भेला) विल्वभेदे च वीरवृक्षादयोऽप्यत्र। [याम्।
वीरपत्नी स्त्री०वीरः पति र्यस्याः नुक् ङीप् च। वीरभार्य्या

वीरपत्नी स्त्री० वीरयति वीर-अच् तथाभूतं पत्रं यस्याः । विजयायाम् भङ्गे ।
वीरपान(ण) न० वीराणां पानम् वा णत्वम् । युद्धाय युद्धखेदापनुत्तये वा सुरापानादौ । वीरणे न० ।
वीरभद्र पु० वीरो भद्रोऽस्य । अश्वमेधीयेऽश्वे वीरेषु भद्रम् ।
वीररजस् न० वीर इव रजः रक्तत्वात् । सिन्दूरे ।
वीरसू स्त्री० वीरं सूते सू+क्विप् । वीरमातरि ।
वीरसेन पु० वीरा सेना यस्य । नलराजजनके नृपभेदे ।
वीरहन् पु० वीरयति शौर्य्यान्वितं करोति वीर-णिच् अच् । वीरो यज्ञाग्निस्तं हतवान् हन-क्विप् । नष्टाग्नौ विप्रे ।
वीरा स्त्री० वि+ईर-अच्, वीर+अच् वा । सुरानामगन्धद्रव्ये, क्षीरकाकोल्याम्, आमलक्याम्, एलवालुकायां, पतिपुत्रवत्यां स्त्रियां, रम्भायां, विदार्य्याम्, दुग्धिकायाम्, क्षीरमेदार्य्यां, काकोल्यां, महाशतावर्य्यां, घृतकुमार्य्याम्, अतिविषायां, द्राक्षायाम्, शिंशपावृक्षे च (शिशु) ।
वीराम्ल पु० वीरयति शौर्य्यान्वितं करोति वीर-णिच-अच् कर्म्म० । अम्लवेतसे । [हूरे युद्धवेले ।
वीराशंसन न० वीरैराशस्यतेऽत्र आ+शन्स-ल्युट् । भयवीरासन न० वीरस्येवासनम् । 'एकपादमथैकस्मिन् विन्यसेदूरुसंस्थितम् इतरस्मिन् तथा पश्चात् वीरासनमितिस्मृत' मित्युक्ते आसनभेदे । [लतायाम् ।
वीरुध्(धा) स्त्री० वि+रुध-क्विप् दीर्घः वा टाप् । विस्तृतायां
वीरेश्वर त्रि०६त०। वीरपतौ। काशीस्थे शिवलिङ्गभेदे पु०
वीर्य्य न०वीर-यत्, वीरस्य भावो यत् वा । देहस्थे चरमधातौ शुक्रे, पराक्रमे, बले, प्रभावे, तेजसि, दीप्तौ च । [शुक्ते च
वीर्य्यवत् त्रि० वीर्य्यमस्त्यस्य मतुप् मस्य वः । बलवति, वीर्य्यवीवध पु० विशेषेण वध्यतेऽत्र वध-घञ् न वृद्धिः । तण्डुलादिसंग्रहे, मार्गे, भारे च । [वाहके।
वीवधिक पु० वीवधः भारवहनं शिल्पमस्य ठन् । भारवीहार पु०विह्रियतेऽत्र वि+हृ-घञ् दीर्घः । बुद्धमन्दिरभेदे । भावे घञ् । विहारे ।
वुग योगे भ्वा०पर०सक०सेट् इदित् । वुङ्गति अवुङ्गीत् ।
वुट हिंसायां चुरा०उभ०सक०सेट् । वोटयति ते अवूवुटत् त इदित्यके वुण्टयति ते अवुवुण्टत् त । [अवुवुन्धत् त ।
वुध हिंसायां चुरा० उभ०सक०सेट इदित् । वुन्धयति ते
वुस(श) विभागे, उत्सर्जने च दि०पर०सक०सेट् । वुस्य(श्य)ति अवोसी(शी)त् । [अवु(बु)वू(बू)षत् त ।
वू(बू)ष हिंसायां चुरा० उभ० सक० सेट् । वू(बू)षयति ते

वृ आवरणे चु०उ०सक०सेट् । वारयति ते अवीवरत् त ।
वृ सेवायां क्र्या०आ०सक०सेट् । वृणीते 'वृणते हि विमृश्यकारिण' मिति भारविः । अवरीष्ट-अवरिष्ट-अवृत । [रीष्ट अवृत ।
वृ वरणे भ्वा०उभ०सक०सेट् । वरति ते अवारीत् अवरिष्ट अव-
वृ वरणे स्वादि० क्र्या० च उभ० सक० सेट् । वृणोति वृणुते वृणाति वृणीते अवारीत् अवरिष्ट अवरीष्ट अवृत ।
वृंहित न० वृंहि-क्त । करिगर्जने ।
वृक आदाने भ्वा०आत्म०सक०सेट् । वर्कते अवर्किष्ट ।
वृक पु० वृक-क । कुक्कुराकारे हरिणघातके व्याघ्रभेदे । काके, बकवृक्षे, क्षत्रिये, अनेकद्रव्यजन्ये धूपे, सरलद्रवे, उदरस्थे वह्निभेदे च अम्बष्ठायां स्त्री० टाप् गौरा० ङीष् । वृकस्त्रियां स्त्री० ङीष् ।
वृकदंश पु०वृकं दशति दन्श-अच् । कुक्कुरे । [दशाङ्गादौ धूपे
वृकधूप पु० वृक्यते वृक-घञर्थे क कर्म० । नानाद्रव्यमिश्रिते
वृकधूर्त्त पु० वृक इव धूर्त्तः । शृगाले । [तैलोद्भिदे ।
वृकाक्षी पु० वृकस्येवाक्षि पुष्पमस्य षच् समा० ङीष् । त्रिवृति
वृकाराति पु० ६त० । कुक्कुरे वृकरिपावप्येवम् ।
वृकोदर पु०वृकनामाग्निरुदरे यस्य । 'यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः । मया दत्तः स धर्म्मात्मा तेन चासौ वृकोदर' इत्युक्ते भीमे 'नृपसूचे वचनं वृकोदर' इति भारविः
वृक्ण त्रि० व्रश्च-क्त । छिन्ने ।
वृक्ष वरणे भ्वा०आ०सक०सेट् । वृक्षते अवृक्षिष्ट । [कुटजवृक्षे
वृक्ष पु० व्रश्च-क्स । व्रश्चनेऽपि जायमाने द्रुमे । ह्रस्वे कन् ।
वृक्षचर पु० वृक्षे चरति चर-अच् । वानरे ।
वृक्षच्छाय न० ६त० । बहूनां वृक्षाणां छायायाम् ।
वृक्षधूप पु० वृक्षोऽपि धूपस्तत् साधनम् । सरलद्रुमे ।
वृक्षनाथ पु० ६त० । वटवृक्षे ।
वृक्षपाक पु० वृक्षस्य पाकः शिशुरिव जटिलत्वात् । वटवृक्षे ।
वृक्षभवन न०७त० । वृक्षस्थे कोटरे । [वन्दायाम् (परगाछा)।
वृक्षभक्षा स्त्री० वृक्षो भक्षो भेदकत्वात् भोजनीय इव यस्याः ।
वृक्षभेदिन् पु०वृक्षं भिनत्ति भिद-णिनि । वृक्षभेदके अस्त्रभेदे ।
वृक्षरुह् पु० वृक्षस्य रुदि भूमौ भवति भू-क्विप् । जलवेतसे ।
वृक्षरुहा स्त्री० वृक्षे रोहति रुह-क । वन्दायाम्, अमृतस्रवायाञ्च
वृक्षवाटिका स्त्री० वृक्षैर्वाटीव संवृतत्वात् इवार्थे कन् । अमात्यगणिकोपसेव्ये गृहसमीपस्थे उपवने । [अस्त्रे च
वृक्षादन पु०वृक्षमत्ति भिनत्ति अद-ल्यु । कुठारास्त्रे (नेहाणि) वृक्षान्तरमत्ति भिनत्ति । अश्वत्थवृक्षे, मधुच्छत्रे, पियालवृक्षे विदारके च । वन्दायां स्त्री० गौरा० ङीष् ।

वृक्षाम्ल न० वृक्षजातमम्लम् । (तेतुल) वृक्षजाताऽम्लप्रधाने वृक्ष, चुक्राम्ले च ।
वृक्षोत्पल पु० वृक्षमादीयमानमुत्पलं येन । कर्णिकारवृक्षे
वृच वृतौ रु०पर०सक०सेट् । वृणक्ति । अवर्चीत् । निष्ठा अनिट् ।
वृज त्यागे अदा०आत्म०सक०सेट् इदित् । वृङ्क्ते अवृङ्क्षिष्ट नेदिदृश्ययम् । वृक्तो अवर्जिष्ट । निष्ठा अनिट् ।
वृज त्यागे वा चु० उभ०पक्षे भ्वा० पर० सक०सेट् । वर्जयति ते वर्जति । अववर्जत्-अवीवृजत् । अवर्ज्जीत् । निष्ठा अनिट्
वृज वृतौ, त्यागे च रु०पर०सक०सेट् । वृणक्ति । अवर्ज्जीत् । निष्ठा अनिट् । वृक्तः । [कुटिले त्रि० ।
वृजन न० वृज्यतेऽत्र वृज-क्यु । पापे, आकाशे च केशे पु० ।
वृजिन न० वृज-इनच् किच्च । पापे, भुग्ने त्रि० । क्लेशे पु० ।
वृण प्रीणने, तु०पर०सक०सेट् । वृणति अवर्णीत् ।
वृणु भक्षणे तना०उभ०सक०सेट् । वृणोति वर्णोति वृणुते अवर्णीत् अवर्णिष्ट । क्त्वा वेट् । [अववर्त्तत् त ।
वृत दीप्तौ चु०उ०सक० सेट् । वर्त्तयति ते अवीवृतत् त
वृत वर्त्तने भ्वा० आ० लुङि-लृटि लृङि च उभ०अक०सेट् । वर्त्तते । अवृतत् अवर्त्तिष्ट वर्त्स्यति वर्त्तिष्यते । क्त्वा वेट् ।
वृत संभक्तौ,वरणे च दि०आ०स०सेट् । वृत्यते अवर्त्तिष्ट । क्त्वा वेट्
वृत त्रि० वृ-क्त । प्रार्थिते, कर्मादौ प्रार्थनादिना कृतनियोगे च ।
वृति स्त्री० वृ-क्तिन् । वेष्टने (वेड़ा) 'वृतिञ्च तत्र कुर्वीत'तिस्मृ०
वृतिङ्कर पु० वृतिङ्करोति कृ-खच् । विकङ्कते (वइँचि) ।
वृत्त न०वृत-भावे क्त । 'गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः प्रवर्त्तनं हितानाञ्च तत्सर्वं वृत्तमुच्यते' इत्युक्ते चरित्रे, पद्यभेदे,वृत्तौ च । वृत-कर्त्तरि क्त । अतीते दृढे, वर्त्तुले अधीते मृते जाते च त्रि० कूर्म्मे पु० ।
वृत्तगन्धि न० वृत्तस्य पद्यभेदस्य इव गन्धो लेशोऽत्र इत् समा० । 'भवत्युत्कालिकाप्रायं समासाढ्यं' इत्याद्युक्तम् । वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुनःस्मृत'मित्युक्ते गद्यभेदे ।
वृत्ततण्डुल पु० वृत्तो वर्त्तुलस्तण्डुलोऽस्य । यावनाले । [व्याम्
वृत्तनिष्पाविका स्त्री० वृत्ता वर्त्तुला निष्पाविका । मषनिष्पा
वृत्तपर्णी स्त्री० वृत्तानि पर्णान्यस्याः ङीप् । महाश्रावणिकायाम्, पाठायाञ्च (आकनादि) ।
वृत्तपुष्प पु० वृत्तानि वर्त्तुलानि पुष्पाण्यस्य । शिरीषवृक्षे ।
वृत्तफल न० वृत्तं फलमस्य । मरीचे,दाड़िमे, वदरे च । वार्त्ताक्याम्, आमलक्याञ्च स्त्री०टाप् ।
वृत्तमल्लिका स्त्री० वृत्ता मल्लिकेव । अर्कै ।
वृत्तवीज पु०वृत्तानि वीजान्यस्य । शिम्बायाम् । आढकीयाम्स्त्री०
वृत्तस्थ पु० त्रि० वृत्ते गुरुपूजादौ चरित्रे तिष्ठति स्था-क । गुरुपूजादिचरित्रवरते । [संदेशे च
वृत्तान्त पु० वृत्तो जातोऽन्तोनिर्णयो यस्मात् । संवादे,वाचिक
वृत्ति स्त्री० वृत-क्तिन् । वर्त्तने, स्थितौ, विवरणे च करणे क्तिन् जीविकायाम् । कौशिकीसात्वतीभारत्यारभट्याख्ये रचनाभेदे,वेदान्तोक्ते अन्तःकरणादेः परिणामभेदे च ।'बुद्धिवृत्तिचिदाभासावि'ति'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरि'ति च वे०
वृत्तिकर्षित त्रि०वृत्त्या कर्षितः । विषमस्थे,अल्पमात्रवृत्तिके च
वृत्र पु० वृत-रक् । अन्धकारे, रिपौ, त्वष्टृपुत्रे दानवभेदे, मेघे, पर्व्वतभेदे, मन्त्रे शब्दे च ।
वृत्रद्विष् पु० ६त० । इन्द्रे । वृत्ररिपादयोऽप्यत्र ।
वृत्रहन् पु० वृत्रं हतवान् हन-क्विप् । इन्द्रे ।
वृथा अव्य० वृ-थाल् किच्च । निरर्थके ।
वृथादान न० कर्म० । निष्फलदाने स्मृतिप्रदर्शिते देवपित्राद्यर्थभिन्ने-कार्य्ये-दानभेदे । [मांसे ।
वृथामांस न० वृथा भूतं मांसम् । देवाद्युद्देशेन हतपशूनां
वृद्ध न० वृध-क्त । शैलजनामगन्धद्रव्ये । वृद्धदारके वृक्षे पु० । वृद्धियुक्ते, पण्डिते च त्रि० ।
वृद्धकाक पु० कर्म० । द्रोणकाके ।
वृद्धगङ्गा स्त्री० कर्म० । नदीभेदे ।
वृद्धदारक पु० वृद्धं दारयति दृ-णिच्-ण्वुल् । वीरताडवृक्षे ।
वृद्धफल पु० वृद्धं फलमस्य । वृद्धदारके वृक्षे ।
वृद्धनाभि त्रि० वृद्धा नाभिरस्य । (गोड) वृहन्नाभियुक्ते ।
वृद्धप्रपितामह पु० वृद्धः प्रपितामहात् राज० । प्रपितामहजनके । [पितरि ।
वृद्धप्रमातामह पु० वृद्धः प्रमातामहात् राज० । प्रमातामहस्य
वृद्धबला स्त्री०कर्म० । महासमङ्गायाम् वृद्धबलकरत्वात्तथात्वम् ।
वृद्धराज पु० वृद्धेषु राजते राज-अच् । अम्लवेतसे ।
वृद्धविभीतक पु० वृद्धः विभीतक इव । आम्रातके ।
वृद्धश्रवस् पु० वृद्धेभ्यः शृणोति श्रु-असुन्, वृद्धेषु श्रवो यशो यस्येति वा । इन्द्रे ।
वृद्धा स्त्री० वृध-क्त । गतयौवनायां स्त्रियाम् ।
वृद्धि स्त्री० वृध-क्तिन् । समृद्धौ अभ्युदये, सम्पत्तौ,समूहे च । वृध-कर्त्तरि क्तिच् । औषधिविशेषे, कलान्तरे, (सुद) 'वृद्धेरपि पुनर्वृद्धिरि'तिस्मृतिः । शैलेयगन्धद्रव्ये पु० ।
वृद्धिका स्त्री० वृद्धि+स्वार्थे कन् । वृद्धिनामकौषधे ।
वृद्धिजीविका स्त्री० वृद्धिरूपा जीविका । ऋणदानादिषु प्रयुक्तधनेभ्यो लाभरूपजीविकायाम् ।

वृद्धिश्राद्ध वृद्ध्यै अभ्युदयाय श्राद्धम् । पुत्रादीनां संस्काराङ्गे पार्व्वणविधिके नान्दीश्राद्धे ।

वृद्ध्याजीव त्रि०वृद्धिम् अधमर्णतः प्रयुक्तद्रव्याधिकलाभमाजीवति आ+जीव-अण् । वार्द्धुषिके । [अववर्द्धत् त ।

वृध दीप्तौ चु० उभ० अक० सेट् । वर्द्धयति ते अवीवृधत् त

वृध वृद्धौ भ्वा०आत्म०लुङि लृटि लृङि च उभ०अक०वृता०सेट्। वर्द्धते अवृधत् अवर्द्धिष्ट वर्त्स्यति वर्द्धिष्यते। क्त्वा वेट् ।

वृन्त न० वृ-क्त नि० मुम् च । (बोंटा) फलपत्रादिबन्धने ।

वृन्ताक पु०स्त्री०वृन्तमकति अक-अण् । वार्त्ताकौ स्त्रीत्वे गौ०ङीप्

वृन्तिता स्त्री० वृन्तं जातमस्याः तार०इतच् । कटुकायाम् ।

वृन्द न० वृन्यते वृणुते वा वृञ-वृत वा दन् नि०। समूहे दशार्बुदसंख्यायाञ्च, तुलस्यां, राधिकायां स्त्री० ।

वृन्दार त्रि० वृन्दमृच्छति ऋ-अण् । मनोहरे ।

वृन्दारक पु० वृन्द+आरः कन् । देवे। मुख्ये,मनोहरे च त्रि०

वृन्दावन स्त्री० वृन्दाया विहारस्थानम् वनम् । मथुरासन्निकृष्टे वैष्णवे तीर्थभेदे । 'वृन्दावन परित्यज्य पादमेकं न गच्छती'ति पुराणम् ।

वृन्दिष्ठ त्रि० अतिशयेन वृन्दारको मुख्यः इष्ठन् वृन्दादेशः । अतिशयमुख्ये 'वृन्दिष्ठमाख्यत् वसुधाधिपानामि'ति भट्टिः ईयसुन् वृन्दीयानप्यत्र त्रि० स्त्रियां ङीप् ।

वृण हतौ दिवा०पर०सक० सेट् । वृण्यति अवृणत् अवर्णीत् पुषादिरयमित्यन्ये तेन अवृणदित्येव ।

वृश पु० वृश-क । वासकवृक्षे, उन्दूरे च ओषधिभेदे स्त्री० ।

वृश्चिक पु०व्रश्च-किकन् । (विछा) कीटभेदे,शूककीटे,(शुयापोका) मेषादितः अष्टमे राशौ, ओषधिभेदे, मदनवृक्षे, कर्कटे, गोमयकीटे च ।

वृश्चिकप्रिया स्त्री० वृश्चिकस्य शूककीटस्य प्रिया । पूतिकायाम्

वृश्चिककर्णी स्त्री०वृश्चिक इव कर्णौ यस्याः । आखुकर्ण्याम् ।

वृश्चिका स्त्री०वृश्चिकः तद्विषमस्त्यस्य अच् । (विछाती) क्षुपभेदे

वृश्चिकाली स्त्री० वृश्चिक इवालति पर्य्याप्नोति वेदनायै अच् गौरा० ङीष् । (विछाती) क्षुपभेदे ।

वृश्चिपत्री स्त्री० वृश्चिक इव पत्त्रं विषाक्तमस्य पृ० कलोपः ङीप् । वृश्चिकाल्याम् ।

वृश्चीर पु० व्रश्च-कीरच् । श्वेतपुनर्नवायाम् ।

वृष सेचने सक०भ्वा०पर०प्रजननसामर्थ्ये अक० सेट् । वर्षति अवर्षीत् । क्त्वा वेट् । [अववर्षत ।

वृष प्रजननसामर्थ्ये चुरा०आत्म०अक०सेट् । वर्षयते-अवीवृषत-

वृष पु० वृष-क । वृषभे पुङ्गवे, मेषादितो द्वितीये राशौ, पुत्रभेदे, एकादशलग्नकालिके इन्द्रे,धर्म्मे, शृङ्गिमाले, मूषिके, शुक्रयुक्ते, वासकवृक्षे, वास्तुस्थानभेदे, शत्रौ, कामे, बलयुक्ते ऋषभनामौषधे, मयूरपिच्छे च ।

वृषण पु० वृष-क्यु । अण्डकोषे ।

वृषदंशक पु० वृषान् मूषिकान् दशति दन्श-ण्वुल् । विड़ाले

वृषध्वज पु० वृषो ध्वजो यस्य । शिवे वृषकेतनादयोऽप्यत्र ।

वृषध्वाङ्क्षी स्त्री० वृषो बलवान् ध्वाङ्क्षः काको यस्याः ५ब० । गौरा० ङीष् । नागरमुस्तायाम् ।

वृषन् पु० वृष-कनिन् । इन्द्रे, कर्णे, वृषे, अश्वे, दुःखे च ।

वृषनाशन पु० वृषान् मूषिकान् नाशयति नश-णिच्+ल्यु । विड़ाले । [कार्णी) आखुकर्ण्याम् ।

वृषपर्णी स्त्री० वृषस्य मूषिकस्य कर्णइव पर्णमस्याः । (उन्दूर-

वृषपर्व्वन् पु० वृषे पर्व्व उत्सवो यस्य । शिवे,दैत्यभेदे च । वृषं बलकारं पर्व यस्य । भृङ्गारवृक्षे, कशेरौ च ।

वृषभ पु० वृष-अभच् कित्त्व । वृषे, श्रेष्ठे, जिनभेदे,कर्णच्छिद्रे, ऋषभनामौषधे च ।

वृषभगति पु० वृषभेण गतिरस्य । शिवे वृषभयानादयोऽप्यत्र ।

वृषभध्वज पु० वृषभो ध्वजोऽस्य । शिवे वृषभकेतनादयोऽप्यत्र ।

वृषभाक्षी स्त्री०वृषभस्य अक्षीव पुष्पाण्यस्याः । इन्द्रवारुण्याम्

वृषभानु पु० । राधिकायाःपितरि ।

वृषभानुसुता स्त्री० ६त० । राधिकायाम् । [शुभ्रे नृपे च

वृषल पु० वृष-कलच् । शूद्रे, गृञ्जने,घोटके,अधार्म्मिके, चन्द्र-

वृषली स्त्री० 'पितुर्गेहे च नारी रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृते'त्युक्तायां पितृगृहे दृष्टरजस्कायामनूढायां कन्यायाम्। वृषल+भार्य्यायां जातौ वा ङीप्। वृषलजातिस्त्रियां,तद्भार्य्यायाञ्च, 'ब्रह्महा वृषलीपति'रिति 'वृषलीफेनपीतस्ये'ति च स्मृतिः ।

वृषलोचन पु०वृषस्येव लोचनं यस्य । मूषिके। ६त० । वृषनेत्रे न०। ६ब० । वृषतुल्यनेत्रे त्रि० ।

वृषवाहन पु० वृषो वाहनमस्य । शिवे वृषभवाहनादयोऽप्यत्र

वृषस्यन्ती स्त्री० वृषेण जन्मनमिच्छति वृष+जाभार्थे क्यच् सुक् च । कामुक्यां 'तच्छ्रयं सा वृषस्यन्ती'ति भट्टिः ।

वृषा स्त्री० वृषः मूषिकस्तदाकारः पर्णमस्याः । मूषिकपर्ण्याम् ।

वृषाकपायी स्त्री० वृषाकपेः पत्नी ङीप् ऐङ् च । लक्ष्म्यां, गौर्य्याम्, स्वाहायां,शच्यां, जीवन्त्याञ्च ।

वृषाकपि पु० वृषं धर्म्मं न कम्पयति न+कपि-इन् नलोपः । महादेवे, विष्णौ, वह्नौ, इन्द्रे च ।

वृषाकर पु० वृषस्य सामर्थ्यस्य करः कृ-अच् । माषे ।

वृषाङ्क पु० वृषः अङ्कोऽस्य । शिवे, भल्लातके, षण्डे च
वृषि(षी) स्त्री० वृष-कि वा ङीप् । व्रतिनां कुशमयासनभेदे ।
वृषोत्सर्ग पु० उत्+सृज-घञ् ६त०। मृताद्युद्देशेन तत्सुतादिभिः क्रियमाणे विधानेन वृषस्य त्यागे 'वृषोत्सर्गश्च कर्त्तव्य' इति स्मृतिः । [वृष्यमाणे जले ।
वृष्टि स्त्री० वृष-क्तिन् । वर्षणे । कर्मणि क्तिन् । मेघादिभिः
वृष्टिघ्नी स्त्री० वृष्टिं हन्ति कारणत्वेन जहाति हन-क ङीप् । सूक्ष्मैलायाम् ।
वृष्टिजीवन त्रि०वृष्टिः वृष्टिजलमेव जीवनं पालनोपायो यस्य। वृष्टिजलमात्राजीविनि चातके । [वृष्टिभवे त्रि० ।
वृष्टिभू पु० वृष्टौ तदुपलक्षिते काले भवति भू-क्विप् । भेके ।
वृष्णि पु० वृष-नि किच्च । यादवे वंशे, श्रीकृष्णे, मेषे च ।
वृष्णिगर्भ पु० वृष्णिः यादवकुलं गर्भे यस्य । श्रीकृष्णे ।
वृष्य पु० वृषाय हितो यत्, वृष-क्यप् वा । माषे । शुक्रवृद्धिकारके त्रि० वाजीकरणे न० आमलक्यां शतावर्य्यां, ऋषभनामौषधे च स्त्री० ।
वृष्यकन्दा स्त्री० वृष्यः शुक्रवर्द्धकः कन्दो यस्याः।विदार्य्याम् ।
वृष्यगन्धिका स्त्री० वृष्यः शुक्रवर्द्धको गन्धो यस्याः कप् अत इत्त्वम् । अतिबलायाम् ।
वृष्यवल्ली स्त्री०कर्म० । विदार्य्याम् । कन् अत इत्त्वम् । तत्रैव ।
वृह दीप्तौ वा चु०उभ० सक० पक्षे भ्वा० पर० इदित्। वृंहयति ते अववृंहत् त । वृंहति अवृंहीत् ।
वृह वृद्धौ शब्दे च अक०भ्वा०पर०सेट् ।वर्हतिअवृहत् अवर्हीत्
वृह ध्वनौ वृद्धौ च भ्वा०प०सक०सेट् इदित् । वृंहति अवृंहीत्
वृह वृद्धौ भ्वा०पर०सक०सेट् । वर्हति अवर्हीत् ।
वृह उद्यमे तु० पर०अक०वेट् । वृहति । अवर्हीत्-अवृक्षत् ।
वृह वृद्धौ भ्वा० आत्म०सक० सेट् इदित् । वृंहते अवृंहिष्ट
वृहच्चञ्चु पु० वृहती चञ्चुरिव मञ्जरी यस्य । महाचञ्चुशाके ।
वृहच्चित्त पु० वृहत् उदारं चित्तं यस्मात् ५ब० । फलपूरे
वृहत् त्रि० तु० वृह-अति । महति । स्त्रियां ङीप्।
वृहती स्त्री०वृहत्+गौ०ङीष्। महत्यां स्त्रियां,क्षुद्रवार्त्ताकाम्। वारिधान्यां, वाचि, कण्टकारिकायाम्, नवाक्षरपादके छन्दोभेदे,उत्तरीयवस्त्रे च। स्वार्थे कन् । उत्तरीयवस्त्रे स्त्री०
वृहतीपति पु० वृहतीनां वाचां पतिः वृहस्पतौ ।
वृहत्कन्द पु० वृहत् कन्दो यस्य । गृञ्जने, विष्णुकन्दे च ।
वृहत्कान्द पु० कर्म० । (खागड़ा) तृणभेदे ।
वृहत्कालशाक पु० कर्म० । (वड़ कालकासुन्दे) शाकभेदे ।
वृहत्कुक्षि पु० वृहत् कुक्षिर्यस्य । तुन्दिले ।

वृहत्ताल पु० कर्म०। हिन्तालेे ।
वृहत्तिक्ता स्त्री० कर्म० । पाठायाम् (आकनादि) ।
वृहत्तृण पु० वृहत्तृणं यत्र । वंशे ।
वृहत्त्वच् पु० वृहती त्वक् यस्य । (छातियान) वृक्षे ।
वृहत्पत्त्र कु० वृहत् पत्त्रमस्य । हस्तिकन्दे । (हातिकान्दा)
वृहत्पाटलि पु० चु० पट-अलि कर्म०। धुस्तूरवृक्षे ।
वृहत्पाद पु० वृहत् पादोमूलमस्य । वटवृक्षे ।
वृहत्पालिन् पु० वृहतः पालयति पाल-णिनि । वनजीरके
वृहत्पीलु पु०कर्म० । महापीलौ ।
वृहत्फला स्त्री० वृहत् फलं यस्याः । कटुतुम्ब्याम् ।
वृहत्साम न० कर्म० । 'त्वामिद्धि हवामहे' इत्यस्यामृचि गीयमाने साम्नि ।
वृहदम्ल पु०कर्म० । (कामराङ्गा) वृक्षे ।
वृहदेला स्त्री०कर्म० । स्थूलैलायाम् ।
वृहद्गोल न०कर्म० । (तरमुज) लतावृक्षे ।
वृहद्दल न० वृहत् दलमस्य । पट्टिकालोध्रे, हिन्ताले च ।
वृहद्धल न०कर्म०। महालाङ्गले ।
वृहद्भानु पु० वृहद्भानुः किरणो यस्य । सूर्य्ये, चित्रकवृक्षे च
वृहद्रथ पु०वृहत् रथोऽस्य। इन्द्रे,यज्ञपात्रभेदे,सामावयवभेदे च
वृहद्वल्क पु० वृहत् वल्कमस्य। पट्टिकालोध्रे ।
वृहद्वात पु०वृहत् वातो धातुभेदो यस्मात् ५ब०।(देधान) वृक्षे
वृहद्वारुणी स्त्री०कर्म० । महेन्द्रवारुण्याम् ।
वृहद्वीज पु० वृहत् वीजमस्य । आम्रातके ।
वृहन्नल पु० वृहन् नलो यस्य । महापोटगले ।
वृहन्नला(डा) पु०स्त्री०वृहत् नलो यस्य वा लस्य डः । अर्ज्जुने
वृहस्पति पु०वृहत्याः वाचः पतिः पृ०नि०। जीवे देवाचार्य्ये
वृ वरणे क्र्या०धा०उभ०सक०सेट् । वृणाति वृणीते अवारीत् अवरिष्ट-अवरीष्ट-अवृत्त । [अवासि
वे स्यूतौ भ्वा०उभ०यजा०सक०अनिट् । वयति ते अवासीत्
वेग पु० विज-घञ् । प्रवाहे, जवे,रेतसि, मूत्रविष्ठादिनिःसारणयत्ने,न्यायोक्ते संस्कारभेदे, महाकाले च। [ङीप्
वेगिन् पु०वेग+अस्त्यर्थे इनि। श्येनविहगे,वेगवति त्रि०। स्त्रियां
वेजानी स्त्री० विज-अच् तमानयति आ-नी-ड । सोमराज्याम्
वेण वाद्यादाने, गतौ,ज्ञाने चिन्तायाञ्च भ्वा०उभ०सक०सेट् । वेणति ते । अवेणीत् अवेणिष्ट । घञि न ह्रस्वः ।
वेण पु० वेण-अच् । वर्णसङ्करजातिभेदे, वर्णसङ्करकारके पृथुराजपितरि नृपभेदे च ।
वेणि(णी) स्त्री० वेण-इन् वा ङीप् । केशरचनाभेदे, जल-

समूहे, तत्प्रवाहे, देवदारुवृक्षे, नदीभेदे, गङ्गायमुनासरस्वतीमिलनस्थाने च।

**वेणीर** पु० वेण-ईरन्। अरिष्टवृक्षे (निम)। [मिल्युक्तः।

**वेणु** पु०वेण-उण्। वंशे तद्विकारे वंशीवाद्ये च 'गा_पूरय वेणु-

**वेणुक** न० वेणुरिव वेणोर्विकारः वा कन्। तोत्त्रे (पाचनवाडि)

**वेणुकर्कर** पु० वेणुरिव कर्करः। करवीरवृक्षे।

**वेणुज** पु० वेणुतो जायते जन-ड। वेणुजाते यवाकारे तण्डुले

**वेणुध्म** पु० वेणुं वंशीं धमति ध्मा-क। वेणुवादके।

**वेणुन** न० वेण-उनन्। मरिचे।

**वेणुपत्री** स्त्री० वेणोरिव पत्त्रमस्याः। वंशपत्त्रीवृक्षे।

**वेणुयव** पु० वेणुजातोयव इव। वंशजाते तण्डुलाकारे पदार्थे

**वेणुवाद** त्रि० वेणुं वादयति वद-णिच्-अण्। वेणुवादके ण्वुल्। तत्रैव त्रि०।

**वेणुवीज** न० ६त०। वेणुजाते यवाकारे पदार्थे।

**वेतन** न० अज-तनन् वीभावः। कृतकर्मणोभृतौ।

**वेतनादान** न० ६त०। व्यवहारभेदे। [अपि तत्र ङीप्।

**वेतस** पु०अज-असुन् तुक् च वीभावः। (वेत) वृक्षभेदे स्त्रीत्व

**वेतसाम्ल** पु० वेतस एव अम्ल। अम्लवेतसे।

**वेतस्वत्** त्रि० वेतसोऽस्त्यस्य ड्वतुप्। बहुवेतसयुक्ते देशे।

**वेताल** पु० अज-विच् वीभावः तल-घञ् कर्म०। मन्त्रविशेषे, भूताधिष्ठितशवभेदे, शिवानुचरभेदे, द्वारपाले च।

**वेत्तृ** त्रि० विद-तृच्। ज्ञातरि, वोढरि, लब्धरि च।

**वेत्र** पु० अज-त्रल् वीभावः। (वेत) वेतसवृक्षे।

**वेत्रधर** पु०वेत्रं धरति धृ-अच्। द्वारपाले। वेत्रयष्टिधारके त्रि०

**वेत्र(त्रा)वती** स्त्री० वेत्रो वाहुल्येनास्त्यस्याः मतुप् मस्य वः वा दीर्घः। मालवदेशस्थे नदीभेदे 'शरावती वेत्रवती'ति पुराणम्।

**वेत्रासन** न०वेत्रनिर्मितमासनम्। वेत्रनिर्मिते आसने (मोड़ा)

**वेथ** याचने भ्वा०आ०द्वि०सेट् चङि न ह्रस्वः। वेथते अवेथिष्ट

**वेद** पु० विद-अच् घञ् वा विष्णौ, ज्ञाने शास्त्रज्ञाने तत्साधने धर्म्मब्रह्मप्रतिपादके संहिताब्राह्मणात्मके ग्रन्थभेदे, शास्त्रोक्ते चरित्रे च।

**वेदगर्भ** पु० वेदोगर्भे यस्य। सर्ववेदकर्त्तरि हिरण्यगर्भे।

**वेदन** न० विद-ल्युट्। ज्ञाने सुखदुःखाद्यनुभवे, विवाहे च 'वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने इति मनुः। युच्। वेदनापि उक्तार्थेषु स्त्री०। [समस्तवेदाभिज्ञे।

**वेदपारग** पु० वेदानां पारमन्तं सीमां गच्छति गम-ड।

**वेदमातृ** स्त्री० ६त०। गायत्र्यां मन्त्रभेदे तस्या वेदरचकत्वात्तथात्वम्। [तथात्वम् वेदाभ्यासादद्योग्यत्व।

**वेदवास** पु०६त०। ब्राह्मणे तस्य तत्पाठतदुक्ताचाराश्रयत्वात्

**वेदविद्** पु० वेदं वेत्ति विद-क्विप्। विष्णौ। वेदज्ञे त्रि०।

**वेदव्यास** पु० वेदान् व्यस्यति विभिन्नशाखत्वेन पृथक् करोति वि+अस-अण्। पराशरपुत्रे सत्यवतीगर्भजे मुनिभेदे।

**वेदस्** पु० विद-असुन्। वेत्तरि।

**वेदाङ्ग** न० वेदस्याङ्गमिव। 'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु' इत्युक्तेषु शिक्षादिषु षट्सु शास्त्रेषु। [प्रणवे ओङ्कारे।

**वेदादि** पु० वेदस्यादिरिव तत्पाठे प्रथमोच्चार्य्यमाणत्वात्।

**वेदान्त** पु० ६त०। वेदशिरोभागे ब्रह्मप्रतिपादके उपनिषद्रूपे ग्रन्थभेदे तदुपकारके शारीरकसूत्रभाष्यादौ च।

**वेदाधिप** पु० ६त०। 'ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपो भृगुः। सामवेदाधिपोभौमः शशिजोऽथर्ववेदप'इत्युक्तेषु वृहस्पत्यादिषु, विष्णौ च।

**वेदान्तिन्** त्रि०वेदान्तो ज्ञेयत्वेनास्त्यस्य इनि। वेदान्तशास्त्रज्ञे

**वेदाभ्यास** पु०६त०। 'वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः। तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासोहि पञ्चधे'त्युक्तेषु वेदपाठविचारानुशीलनतन्मन्त्रजपपाठनेषु।

**वेदि** न० विद-इन्। अम्बष्ठायाम् (आकनादि) परिष्कृतायां भूमौ स्त्री० वा ङीप्। 'मध्येन सा वेदिविलग्नमध्ये'ति कुमारः। वेदिश्च डमरुकाकारपरिच्छिन्नावती यज्ञवन्धनार्थं होमीयद्रव्यासादानार्थं वा कृतसंस्कारा परिष्कृता चतुरस्रादिरूपा भूमिः। पण्डिते पु०।

**वेदिका** स्त्री०वेदिरिव इवार्थे कन्। मङ्गलकर्मार्थं गृहद्वारादौ चतुरस्रादिमृत्तिकास्तूपाकारेण निर्म्मिते भूखण्डे।

**वेदिजा** स्त्री०वेद्या होमवेदितो जायते जन-ड। द्रौपद्याम्।

**वेदितृ** त्रि० विद-तृच् इट् च। ज्ञातरि।

**वेदिन्** पु विद-णिनि। पण्डिते,हिरण्यगर्भे च। ज्ञातरि त्रि०

**वेध** पु० विध-घञ्। (वेंदा) वेधने, उन्माने (वाड़ा) 'परिधिनवमभागः सूक्ष्मकाद्येषु वेध' इति लीलावती। विवाहादौ वर्ज्ये नक्षत्रविशेषस्थितग्रहभेदकृतसंसर्गे च 'वेधं सर्व्वत्र वर्ज्जये'दिति ज्योतिषम्। [विधकर्त्तरि त्रि०।

**वेधक** न० विध-ण्वुल्। कर्पूरे, अम्लवेतसे, धन्याके न०।

**वेधनी** स्त्री० विध्यतेऽनया विध-ल्युट् ङीप्। (भोमरी) मणिरत्नादिवेधकारके अस्त्रभेदे। स्वार्थे कन्। तत्रार्थे,मेथिकायां, कस्तूर्य्यां च।

**वेधमुख्य** पु० ७त०। कर्पूरे। संज्ञायां कन्। हरिद्रावृक्षे।

वेधस् पु० वि+धा-असुन् गुणः। हिरण्यगर्भे जगत्स्रष्टरि, विष्णौ, सूर्य्ये, श्वेतार्कवृक्षे, पण्डिते च।
वेधित पु० वेधोजातोऽस्य तार० इतच्। विद्धे छिद्रिते।
वेधिनी स्त्री० विध-णिनि। जलौकायाम् (जोंक)
वेन्धा स्त्री० वन-ध पृ०। नदीभेदे। [ह्रस्वः।
वेप कम्पने भ्वा०आ० अक० सेट्। वेपते अवेपिष्ट। चङि न
वेपथु पु० वेप-अथुच्। कम्पे।
वेपन पु० वेप-ल्युट्। कम्पने। [पु०न०।
वेम पु० वे-मन् न आत्वम्। वापदण्डे। मनिन्। अत्रैवार्थे
वेर न०अज-रन् वीभावः। देहे,वार्त्ताकौ,कुङ्कुमे च। संज्ञायां कन्। कर्पूरे। [ह्रस्वः
वेल चालने भ्वा०प०सक० सेट्। वेलति अवेलीत्। चङि न
वेल कालोपदेशे, अ०चु०उ०अक०सेट्। वेलयति ते अविवेलत् त
वेल न०वेल-अच्। उपवने। काले समये मर्य्यादायां समुद्रकूले च स्त्री० 'वेलामूले विभावरी परिक्षीणे'ति भट्टिः।
वेल्ल चालने भ्वा०पर०सक०सेट्चङिन ह्रस्वः। वेल्लति अवेल्लीत्
वेल्ल पु०न० वेल्ल-अच्। विडङ्गे। घञ्। चलने पु०।
वेल्लज पु०वेल्ल-अच्-तथाभूतः सन् जायते जन-ड। मरिचे।
वेल्लन न० वेल्ल-ल्युट्। घस्रादेर्भूमौ लुण्ठने काष्ठनिर्म्मिते पदार्थे (वेलुन) च मालादूर्व्वायां स्त्री० ङीप्। [च त्रि०
वेल्लित न०वेल्ल-भावे क्त। गमने। कर्त्तरि-क्त। कम्पिते, कुटिले
वेल्लि(ल्ली) स्त्री० वेल्ल-इन् वा ङीप्। लतायाम्। संज्ञायां कन्। (वेलसुठ) वृक्षे।
वेवी कान्तौ गतौ व्याप्तौ क्षेपे भोजने च सक० प्रजनने अक० अदा०आत्म०सेट् जक्षादि० वैदिक एवायम्। वेवीते अवेविष्ट
वेश पु० विश-घञ्। अलङ्कारादिना कृतरूपान्तरे, नेपथ्यकर्म्मणि, वेश्यागृहे, गृहमात्रे, प्रवेशे च।
वेशधारिन् पु० वेशं धरति धृ० धृ-णिनि। छलेन रूपान्तरधारिणि, छद्मतपस्विप्रभृतौ।
वेशन्त पु० विश-झच्। क्षुद्रसरोवरे, अग्नौ च।
वेशर पु० वेशं राति रा-क। अश्वतरे।
वेश्मन् न० विश-मनिन्। गृहे।
वेश्मभू स्त्री० ६त०। गृहकरणयोग्ये स्थाने।
वेश्य न० विश-ण्यत् वेशाय हितं वा यत्। वेश्यालये माठायाम् (आकनादि) वारयोषिति च स्त्री०। [वेश्याजनालये च
वेष पु० विष-अच् घञ् वा। भूषणादिना रूपान्तरकरणे,
वेषण पु०विष-ल्युट्। कासमर्द्दे (कालकासुन्दे)(धन्या) वृक्षे च
वेष्ट वेष्टने भ्वा०आत्म०सक०सेट्। वेष्टते अवेष्टिष्ट।
वेष्ट पु० वेष्ट-घञ् अच् वा। वेष्टने, श्रीवेष्टे, वृक्षनिर्यासे च।
वेष्टक न०वेष्ट-ण्वुल्। (पागड़ी) उष्णीषे। कुष्माण्डे,प्राचीरे च पु०
वेष्टन न० वेष्ट-ल्युट्। कर्णशष्कुल्याम्, उष्णीषे, मुकुटे च।
वेष्टवंश पु० वेष्ट-अच् कर्म०। (वेड़वांश) वंशभेदे।
वेष्टसार पु० वेष्टस्य सारः। श्रीवेष्टे।
वेष्टित त्रि० वेष्ट-क्त। प्राचीरादिना आवृते, रुद्धे च।
वेस गतौ भ्वा०प०सक०सेट् चङि न ह्रस्वः। वेसति अवेसीत्।
वेसन न० वेस-ल्युट्। द्विदले, 'दालयश्चणकानान्तु निस्तुषा यन्त्रपेषितम्। तच्चूर्णं वेसनमि'त्युक्ते चणकादिद्विदलचूर्णे च
वेसर पु० वेस-अरन्। अश्वतरे। [सर्षपादौ
वेसवार पु० वेशं वारयति वृ-अच्। (वाटना) पिष्टधन्याक-
वेह यत्ने भ्वा०आ०अक०सेट् चङि न ह्रस्वः। वेहते अवेहिष्ट।
वेहत् स्त्री० वि++हन अति नलोपः। गर्भोपघातिन्यां स्त्रियाम्।
वेहार पु० वि+हृ-घञ् पृ०। स्वनामख्याते देशभेदे। [ह्रस्वः
वेह्ल गतौ भ्वा०पर०सक० सेट्। वेह्लति अवेह्लीत् चङि न
वै शोषे भ्वा० प०सक०सेट् अनिट्। वायति अवासीत्। निष्ठातस्य नः। वानः निर्वाणः। [भिन्नि त्रि०।
वै अव्य० वा-डै। पादपूरणे,अनुनये,संबोधने च। [तत्सम्ब-
वैकक्ष न० विशेषेण कक्षति व्याप्नोति अण्। तिर्य्यक्कक्षावलम्बिनि हारभेदे। वुन्। उरसि उपवीताकारेण धृते मल्यभेदे। [विकङ्कतसंबन्धिनि त्रि०
वैकङ्कत पु०विकङ्कत+स्वार्थेऽण्। (वैचि) वृक्षभेदे। तस्येदमण्।
वैकल्पिक त्रि० विकल्पेन प्राप्तः भवो वा ठक्। पक्षप्राप्ते।
वैकल्य न० विकलस्य भावः ष्यञ्। विकलत्वे।
वैकुण्ठ पु० विकुण्ठे भवः अण् विविधा कुण्ठा माया यस्य स्वार्थेऽण् वा। विष्णौ, गरुडे, इन्द्रे, सितार्ज्जके च।
वैकृत न० विकृतस्य भावः अण्। विकारे।
वैखरी स्त्री० विशेषेण खं राति रा-क स्वार्थेऽण्। अर्थबोधके कण्ठस्थानादिषु उच्चार्य्यमाणे वर्णात्मके शब्दविशेषे।
वैखानस पु०वि+खन-ड अन-असुन् कर्म० स्वार्थेऽण्। वानप्रस्थे तापसभेदे 'वैखानसेभ्यः श्रुतरामवार्त्ता' इति भट्टिः।
वैगुण्य न० विगतो विरुद्धो वा गुणोऽस्य तस्य भावः ष्यञ्। यत्र यदुचितं तस्य रूपान्तरतापादने, अन्यायत्वे, असम्पन्नत्वे च
वैचित्र्य न०विचित्रस्य भावः ष्यञ्। नानारूपत्वे विलक्षणत्वे।
वैजयन्त पु० विजयते वि+जि-झ स्वार्थेऽण्। इन्द्रप्रासादे, अग्निमन्थवृक्षे, दानवभेदे च पताकायां, जयन्तीवृक्षे च स्त्री० ङीप्।

**वैजिक** न० बीजेन निर्वृत्तं ठक् । शिग्रुतैले । बीजाय हितम् ठक् । आत्मनि । स्वार्थे ठक् । कारणे । तस्येदं ठञ् । बीजसम्बन्धिनि त्रि० ।

**वैज्ञानिक** पु० विज्ञानाय साधु ठक् । निपुणे, विज्ञानमधिकृत्य कृतो ग्रन्थः ठक् । बौद्धागमे । तदध्येतरि, तत्सम्बन्धिनि च त्रि० ।

**वैडालव्रत** न० विडालस्येदम् अण् तदिव व्रतम् । 'यस्य धर्म्मध्वजो नित्यं शक्रध्वज इवोच्छ्रितः । प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतमि'त्युक्ते प्रकाशेन धर्म्माचरणेन गुप्तपापाचारे ।

**वैडालव्रतिक** पु० वैडालव्रतमस्त्यस्य ठन् । छलेन धर्म्मचारिणि छद्मतापसे । इनि । वैडालव्रतीत्यप्यत्र ।

**वैणव** न० वेणूनां फलम् अण्, तस्य न लुप् । वेणुफले । वेणुसम्बन्धिनि त्रि० । [स्त्यस्य ठन् । वंशीवादके

**वैणविक** त्रि० वेणोर्विकारः अण् वैणवं वेणुवाद्यं शिल्पम-

**वैणिक** त्रि० वीणा तद्वादनं शिल्पमस्य ठक् । वीणावादके ।

**वैणुक** न० वेणोर्विकारः ठक् । गजचालनार्थे लौहमुखे वंशदण्डे । वेणुतद्वादनं शिल्पमस्य ठक् । वाणुवादके त्रि०

**वैण्य(न्य)** पु० वेण(न)स्यापत्यम् यञ् । वेणसुते पृथुनामके नृपभेदे

**वैतंसिक** त्रि० वितंसेन मृगपक्ष्यादिबन्धनोपायेन चरति ठक् । मांसविक्रयोपजीवके व्याधे । [च्छलादौ ।

**वैतनिक** त्रि० वेतनेन जीवति ठक् । वेतनोपजीवके कर्म्मकरे

**वैतरणी(णि)** स्त्री० वितरणेन दानेन लङ्घ्यते अण् ङीप् वा इ ह्रस्वः । यमद्वारस्थे नदीभेदे, 'यमद्वारे महाघोरे तप्ता वैतरणी नदी'ति पुराणम् ।

**वैतस** पु० वेतसएव स्वार्थेऽण् । अम्लवेतसे ।

**वैतानिक** पु० वितानस्यायम् ठक् । श्रौतविधिनाऽग्निस्थापने 'दाहादूर्द्ध्वमशौचं स्यात् यस्य वैतानिको विधिरि'ति स्मृतिः

**वैतालिक** त्रि० विविधस्तालः मङ्गलगीत्यादिशब्दस्तेन व्यवहरति ठक् । मङ्गलस्तुत्यादिभिः राज्ञां प्रबोधकारके मागधादौ ।

**वैतालीय** पु० मात्रावृत्तभेदे ।

**वैदग्ध** न०स्त्री० विदग्धस्य चतुरस्य भावः अण् स्त्रीत्वपक्षे ङीप् । चातुर्य्ये, भङ्गौ च । ष्यञ् । वैदग्ध्यमप्यत्र न० ।

**वैदर्भ** पु० विदर्भाणां जनपदानां राजा अण् । विदर्भदेशाधिपे । वाक्यस्य कौटिल्ये न० । 'अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरुच्यते' इत्युक्ते काव्यरचनाभेदे स्त्री० ङीप् । विदर्भे भवा अण् । नलराजपत्न्यां दमयन्त्याम् स्त्री० ङीप् ।

**वैदल** न० विदलस्य विकारः अण् । भिक्षुकस्य भिक्षापात्रभेदे । पिष्टकभेदे पु० ।

**वैदिक** पु० वेदं वेत्त्यधीते वा ठञ् । वेदज्ञे ब्राह्मणे वेदेषु विहितः ठक् । वेदोक्ते त्रि० । स्त्रियां ङीप् 'वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगत' इति तन्त्रम् ।

**वैदुष्य** न० विदुषो भावः विद्वस्+ष्यञ् । पाण्डित्ये ।

**वैदूर्य्य** न० विदूरे भवः ष्यञ् । कृष्णपीतवर्णे विडालनेत्रतुल्ये मणिभेदे ।

**वैदेह** पु० विशेषेण देह उपचयो यस्य स्वार्थे प्रज्ञाद्यण् । वणिग्जने । विदेहे भवः अण् ततः कन् । वणिग्जने शूद्रात् वैश्याजाते जातिभेदे च । ठक् । वैदेहिकोऽपि । वणिजि । विदेहानां राजा अण् । विदेहराजे जनके नृपे ।

**वैदेही** स्त्री० विदेहेषु मिथिलादेशेषु भवा अण् । सीतायाम् जनकात्मजायाम्, हरिद्रायाम्, पिप्पल्यां, वणिक्स्त्रियाञ्च

**वैद्य** पु० विद्याऽस्त्यस्य अण् । पण्डिते 'नाविद्यानान्तु वैद्येने'ति स्मृतिः । भिषजि तदुपकारके-वासकवृक्षे च ।

**वैद्यक** न० वैद्यं चिकित्सकमधिकृत्य कृतो ग्रन्थः कन् । आयुर्वेदे

**वैद्यबन्धु** पु० ६त० । आरग्वधवृक्षे ।

**वैद्यमातृ** स्त्री० वैद्यस्य मातेव । वासके तस्य वैद्यजीविकाङ्गरोगशान्तिकरत्वेन तत्पोषकत्वात् तन्मातृतुल्यत्वम् ।

**वैद्यसिंही** स्त्री० वैद्यस्य सिंहीव । वासकवृक्षे ।

**वैद्या** स्त्री० वैद्यस्येयं प्रियत्वात् अण् । काकोल्याम् ।

**वैध** त्रि० विधित आगतः अण् । विधिप्रतिपाद्ये ।

**वैधात्र** पु० विधातुरपत्यम् अण् । सनत्कुमारादौ मुनिभेदे ।

**वैधृति** पु० विगता धृति र्यस्मात् ष० वृद्धिः । विष्कम्भादिषु मध्ये अन्तिमे योगे ।

**वैधेय** त्रि० विधीयतेऽसौ वि+धा यत् ततः स्वार्थे अण् । मूर्खे

**वैधर्म्य** न० विरुद्धो धर्म्मो यस्य तस्य भावः ष्यञ् । विरुद्धधर्म्मत्वे अन्यलक्षणे च । [वेदनमि'ति कुमारः ।

**वैधव्य** न० विधवाया भावः ष्यञ् । पतिविरहे 'नववैधव्यमसह्य-

**वैनतेय** पु० विनतायाः अपत्यं ढक् । गरुडे, अरुणे च ।

**वैनयिक** त्रि० विनये रतः ठक् । शास्त्रज्ञानादिना विनयरते ।

**वैनायिक** पु० विनायं खण्डनमधिकृत्य कृतो ग्रन्थः ठक् । बौद्धागमे । उपचारात् तदभिज्ञे त्रि० ।

**वैनाशिक** पु० विनाशमधिकृत्य कृतो ग्रन्थः ठक् । सर्व्वेषां क्षणभङ्गुरताप्रतिपादके बौद्धागमे तदभिज्ञे त्रि० विनाशाय हितम् ठक् । ज्योतिषोक्ते षड्नाडीचक्रस्थे जन्मनक्षत्रावधित्रयोविंशे नक्षत्रे । क्षणिके, परतन्त्रे च त्रि० । ऊर्णनाभे पु० ।

**वैनीतक** पु०न० । विशेषेण नीयतेऽनेन करणे क्त ततः स्वार्थे

कन्। परम्परया वाहने शिविकादौ।

वैपरीत्य न० विपरीतस्य भावः ष्यञ्। विपर्यये।

वैभव न० विभोर्भावः अण्। विभुत्वे विभूतौ।

वैभ्राज न० विभ्राजद्रदम् अण्। देवोद्यानभेदे।

वैमुख्य न० विमुखस्य भावः ष्यञ्। विमुखत्वे।

वैमात्र पु० विमातुरपत्यम् अण्। सापत्ने भ्रातरि तथाभूत भगिन्यां स्त्री० ङीप्। [भगिन्यां स्त्री० ङीप्

वैमात्रेय पु० विमातुरपत्यं ढक्। सापत्ने भ्रातरि तथाभूत

वैयाकरण त्रि०व्याकरणं वेत्त्यधीते वा अण्। व्याकरणाभिज्ञे

वैयाघ्र पु० व्याघ्रचर्मणा परिवृतो रथः अण्। व्याघ्रचर्म-परिवृते रथे।

वैयाघ्रपद्य पु० व्याघ्रपदस्यापत्यं यञ्। गोत्रकारके मुनिभेदे: 'वैयाघ्रपद्यगोत्राग्रेति, भीष्मतर्पणमन्त्रः। [तिष्वपी'ति माघः

वैयात्य न०वियातस्य भावः ष्यञ्। निर्लज्जत्वे 'वैयात्यं सुर

वैयासकि पु० व्यासस्यापत्यम् इञ्। व्यासस्यापत्ये शुकदेवे।

वैयासिकी स्त्री० व्यासेन प्रोक्ता ठञ् ङीप्। व्यासप्रणीतायां संहितायाम्।

वैर न० वीरस्य भावः अण्। विरोधे विद्वेषे।

वैरकर त्रि० वैरं करोति कृ-ट। विरोधकारके।

वैरक्त्य न० विरक्तस्य भावः ष्यञ्। विरागे।

वैरनिर्यातन न० वैरस्य वैरकृतापकारस्य निर्यातनम् निर् यत-णिच् ल्युट्। वैरकृतापकारप्रतीकारे।

वैरप्रतीकार पु० ६त०। वैरकृतापकारस्य तुल्यरूपापकार करणेन तस्य शोधने।

वैरशुद्धि स्त्री० ६त०। वैरप्रतीकारे।

वैराग्य न० विरागस्य भावः ष्यञ्। विषयवासनाराहित्ये ऐहिकामुष्मिकविषयरागराहित्ये च।

वैरवृक्ष पु० वीरस्यायं तन्नामकत्वात् कर्म०। अर्ज्जुनवृक्षे।

वैरानुबन्धिन् त्रि० वैरं विद्वेषमनुबध्नाति णिनि। विद्वेषा नुरूपकारके, वैरानुगते च।

वैरिन् त्रि० वैरमस्त्यस्य इनि। शत्रौ।

वैरूप्य न० विरूपस्य भावः ष्यञ्। विरूपत्वे, अननुरूपत्वे, अयथाभावे वस्तुनो विकारे च।

वैरोच(न)नि पु०विरोचनस्यापत्यम् शिवाद्यण् इञ् वा। अग्निपुत्रे, सूर्य्यपुत्रे, बलिराजनामके दानवे च।

वैलक्षण्य न० विलक्षणस्य भावः ष्यञ्। विलक्षणत्वे वैशिष्ट्ये।

वैलक्ष्य न० विलक्षस्य भावः ष्यञ्। लज्जायां, स्वभाव-वैलक्षण्ये च 'वैलक्ष्यहेतोर्गति'मिति नैषधम्।

वैल्व न० विल्वस्य फलम् अण् तस्य न लुप्। विल्वफले तत्सम्बन्धिनि त्रि०। [वार्त्ताहरे नैगसे (दोकानी)।

वैवधिक त्रि० विवधेन धान्यादिसंग्रहेण व्यवहरति ठक्।

वैवर्ण्य न० विवर्णस्य भावः ष्यञ्। विवर्णत्वे मालिन्ये।

वैवस्वत पु० विवस्वतोऽपत्यम् तस्येदं वा अण्। यमे शनौ, रुद्रभेदे च तत्सम्बन्धिनि त्रि० 'वैवस्वतकरक्रियेत्युद्गटः दक्षिणदिशि स्त्री० ङीप्।

वैवाहिक त्रि० विवाहाय हितं साधु वा ठक्। विवाहयोग्ये 'वैवाहिकीं तिथिं पृष्टा' इति कुमारः विवाहेन संबद्धे कन्यापुत्रयोः श्वशुरे, विवाहसम्बन्धिनि च त्रि०। 'पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रियेति स्मृतिः।

वैशम्पायन पु० व्यासशिष्ये भारतवक्तरि मुनिभेदे।

वैशस न० विशसस्य भावः स्वार्थे वा अण्। हिंसने हिंसके वा

वैशाख पु० विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी सा अत्र मासे पुनः अण्। स्वनामख्याते वर्षमध्ये द्वितीये चान्द्रे मासे तन्मासस्य पौर्णमास्यां स्त्री० ङीप्। विशाखा प्रयोजनमस्य ष्यञ्। मन्थानदण्डे। धनुर्द्धराणामवस्थानभेदे न०।

वैशिष्ट्य न० विशिष्टस्य भावः ष्यञ्। विशेष्यविशेषणसम्बन्धे, विशिष्टबुद्धिनियामके सम्बन्धे, भेदे च।

वैशेषिक न० विशेषं पदार्थभेदमधिकृत्य कृतो ग्रन्थः ठञ्। कणादप्रणीते शास्त्रभेदे। तदधीते अण्। काणादशास्त्राभिज्ञे त्रि०। तस्येदम् अण्। काणादशास्त्रसम्बन्धिनि त्रि०।

वैशेष्य न० विशेषस्य भावः ष्यञ्। वैशिष्ट्ये भेदे च 'वैशेष्यात्तद्वाद'इति शाङ्कम्। [ब्रह्मणऊरुजाते जातिभेदे

वैश्य पु० विशति उपभुङ्क्ते विश-क्विप् स्वार्थे ष्यञ्। वर्णभेदे

वैश्यवृत्ति स्त्री० ६त०। कृषिवाणिज्यादौ।

वैश्रवण पु० विश्रवसोऽपत्यम् अण् विश्रवणादेशः। कुवेरे।

वैश्रवणालय पु० ६त०। वटवृक्षे कुवेरपुर्य्यां च। वैश्रवणावासादयोऽप्यत्र। [द्विशेन दीयमाने बलौ।

वैश्वदेव पु० विश्वेभ्यो देवेभ्यो देयो बलिः अण्। वैश्वदेवो-

वैश्वानर पु० विश्वेषां नराणामयम् कुक्षिस्थत्वात् अण् पूर्व्वदीर्घः। वह्नौ, चित्रकवृक्षे, सामवेदावयवभेदे च।

वैषम्य न० विषमस्य भावः ष्यञ्। विषमत्वे वैलक्षण्ये।

वैषयिक त्रि० विषयेण निर्वृत्तः ठक्। विषयनिर्वृत्ते सुखादौ

वैष्णव त्रि० विष्णुर्देवताऽस्य तस्येदं वा अण्। विष्णूपासके विष्णुसम्बन्धिनि च स्त्रियां ङीप्। वैष्णव्यां शक्तौ 'वैष्णवी समरे वैनमिति चण्डी। विष्णुसम्बन्धिनि त्रि० स्त्रियां ङीप् 'गायत्री वैष्णवी ह्येषेति स्मृतिः विष्णुधामनि न०।

वैसारिण पु० विसरति वि+सृ-णिनि स्वार्थे अण् । मत्स्ये ।
वैहासिक पु० विहासेऽभिरतस्तं करोति वा ठक् । नाटकादौ प्रसिद्धे शृङ्गाररसनायकसहचरे विदूषके ।
वोढ़ पु० वह-तृन् । मुनिभेदे 'वोढुः पञ्चशिखस्तथे'ति स्मृतिः
वोढृ त्रि० वह-तृच् । वाहके स्थानान्तरप्रापके 'भागीरथीनिर्झरशीकराणां वोढे'ति कुमारः । पाणिग्राहके पु० 'पिण्डदा वोढुरेव ते इति स्मृतिः । भारवाहके मूढे च त्रि० वृषभे पु० ।
वोरट पु० वा-उरट । (बोँटा) इति ख्याते वृन्ते ।
वोरव पु० वा-उर वोरं वाति वा-क । (वोरो) धान्यभेदे ।
वोल पु० वा-उलच् । गन्धरसे गन्धद्रव्यभेदे ।
वौषट् अव्य० वह-डौषट् । देवोद्देशेन हविस्त्यागे ।
व्यंसक पु० विगतोऽंसो यस्य कप् । धूर्त्ते 'मयूरव्यंसकादयश्चे'ति पाणिनिसूत्रम् ।
व्यंसित त्रि० वि+अंस-क्त । वञ्चिते ।
व्यक्त त्रि० वि-अन्ज-क्त । स्फुटे, प्रकाशिते, दृश्ये, प्राज्ञे, स्थूले, [च । विष्णौ पु०
व्यक्ति स्त्री० वि+अन्ज-क्तिन् । प्रकाशे क्तिच् । जने पृथगात्मके, एकैकविशेषे च । [यस्य । विष्णौ पु० ।
व्यग्र त्रि० विगतमग्रं यस्य । व्याकुले, व्यासक्ते च । विशिष्टमग्रं
व्यङ्ग न० विगतं विकलं वाङ्गं कर्म० । विकलाङ्गे, विगतमङ्गं यस्य । अङ्गहीने त्रि० ।
व्यङ्ग्य त्रि० वि+अन्ज-ण्यत् । व्यञ्जनया वृत्त्या बोध्येऽर्थे, प्रकाश्ये
व्यच व्याजे अक० सम्बन्धे सक० तु० कु० प० सेट् । विचति अविचीत् विव्याच ।
व्यजन न० वि+अज-ल्युट् । तालवृन्तके ।
व्यञ्जक पु० वि+अन्ज-णिच्-ण्वुल् । हृद्गतभावादिप्रकाशके अभिनये, व्यञ्जनयार्थबोधके शब्दे च । प्रकाशकमात्रे त्रि०
व्यञ्जन न० विशेषेणाज्यते वि+अन्ज-ल्युट् । सूपशाकादौ ओदनभोजनोपकरणे । वि+अन्ज-णिच्-ल्युट् । अलङ्कारप्रसिद्धे वृत्तिभेदे । युच् । 'विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः । सा वृत्तिर्व्यञ्जना नामे'त्युक्ते शब्दशक्तिभेदे ।
व्यञ्जित त्रि० वि+अन्ज-णिच्-क्त । प्रकाशिते 'अव्यञ्जितवर्षलक्षण इति कुमारः । व्यञ्जनाख्यया वोधितेऽर्थे च ।
व्यडम्बक पु० वि+अड-अच् डबि-ण्वुल् कर्म० स० । एरण्डवृक्षे
व्यतिकर पु० वि+अति-कृ-अप् । सम्बन्धे, व्यसने च ।
व्यतिक्रम पु० वि+अति+क्रम-घञ् न वृद्धिः । विपर्यये 'विवाहे च व्यतिक्रम' इति स्मृतिः ।
व्यतिरिक्त त्रि० वि+अति+रिच्-क्त । भिन्ने 'न व्यवृत्तिव्यतिरिक्तसाधनमि'तिकुमारः ।
व्यतिरेक पु० वि+अति+रिच-घञ् । विशेषे, अतिक्रमे, अभावे, विनेत्यर्थे, अर्थालङ्कारभेदे च ।
व्यतिषक्त त्रि० वि+अति+षन्ज-क्त । मिलिते, ग्रथिते च ।
व्यतिषङ्ग पु० वि+अति+षन्ज-घञ् । परस्परमेलने ।
व्यती(ति)हार पु० वि+अति+हृ-घञ् वा दीर्घः । परीवर्त्ते परस्परैकजातीयक्रियाकरणे । [भ्युपेत इति रघुः ।
व्यतीत त्रि० वि+अति-इण्-क्त । अतीते 'व्यतीतकालस्त्वहम-
व्यतीपात पु० वि+अति+पत-घञ् दीर्घः । महोत्पातभेदे, विष्कम्भादिषु मध्ये योगभेदे 'श्रवणा च धनिष्ठार्द्रा नागदैवमस्तके । यद्यमा रविवारेण व्यतीपातः स उच्यते' इत्युक्ते योगभेदे च ।
व्यत्यय पु० वि+अति+इण्-अच् । व्यतिक्रमे, विपर्यये च ।
व्यत्यास पु० वि+अति-अस-घञ् । विपर्यये ।
व्यथ भये चलने दुःखानुभवे च भ्वा० आ० अक० सेट् घटा० । व्यथते व्यथिष्ट । अङ् व्यथा ।
व्यथा स्त्री० व्यथ-अङ् । पीड़ायाम्, दुःखे च ।
व्यध ताड़ने दि० प सक० अनिट् । विध्यति अव्यात्सीत् ।
व्यध पु० व्यध-अच् । वेधे, छिद्रीकरणे, भेदने च ।
व्यध्व पु० विरुद्धः अध्वा अच्समा० । कुपथे ।
व्यप क्षये चुरा० उभ० सक० सेट् । व्यापयति-ते अविव्यपत् त ।
व्यपदेश पु० वि+अप+दिश-घञ् । कथने । संज्ञायां, कापट्ये च
व्यपरोपण न० वि+अप+रुह-णिच्-ल्युट् । छेदने ।
व्यपरोपित त्रि० वि+अप+रुह-णिच्-क्त । छिन्ने ।
व्यपाकृति स्त्री० वि+अप+आ+कृ-क्तिन् । निराकरणे, अस्वीकारे, निह्नवे च । [यार्थापेक्षणे च ।
व्यपाश्रय पु० वि+अप+आ+श्रि-अच् । आश्रये । [अवय-
व्यपेक्षा स्त्री० वि+अप+ईक्ष-अ । अपेक्षायां व्याकरणोक्ते
व्यभिचार पु० वि+अभि-चर-घञ् । निन्दिताचारे स्त्रियाः परपुरुषसंगमे, पुंसश्च परस्त्रीसंगमे, न्यायादिप्रसिद्धे हेतुदोषभेदे च
व्यभिचारिन् पु० वि+अभि+चर-णिनि । अलङ्कारोक्ते रसाङ्गभेदे निर्वेदादौ, न्यायोक्ते व्यभिचाररूपहेतुदोषवति पदार्थे च । परपुरुषगामिन्यां स्त्रियां स्त्री० ङीप् । [त
व्यय गतौ त्यागे अद० चु० उभ० सक० सेट् । व्यययति ते अवव्ययत्
व्यय गतौ भ्वा० उभ० सक० सेट् । व्ययति ते अव्ययीत् अव्ययिष्ट
व्यय नीदे चु० उभ० सक० सेट् । व्याययति ते अविव्ययत् त ।
व्यय पु० वि+इण-अच् । विगमे, धनादेस्त्यागे, ज्योतिषोक्ते लग्नात् द्वादशस्थाने च ।

**व्यर्थ** त्रि॰ विगतोऽर्थः प्रयोजनं वाऽस्य । निष्प्रयोजने, विफले, अर्थशून्ये च । [अन्यते च तद्वति त्रि॰ ।

**व्यलीक** न॰वि+अल-ईकक् । अकार्ये, कामजे,अपराधे,अप्रिये,

**व्यवकलन** न॰ वि+अव-कल-ल्युट् । वियोजने, विगमने, हीनतासम्पादने च । 'व्यवकलनमार्गेऽसी'ति लीलावती ।

**व्यवकलित** त्रि॰ वि+अव+कल-क्त । वियोजिते ।

**व्यवच्छिन्न** त्रि॰ वि+अव+छिद्-क्त । छिन्ने, विशेषिते च ।

**व्यवच्छेद** पु॰ वि+अव+छिद्-घञ् । पृथक्करणे, विशेषकरणे, मोचने च ।

**व्यवधा** स्त्री॰ वि+अव+धा-अ । व्यवधाने ।

**व्यवधान** न॰ वि+अव+धा-ल्युट् । तिरोधाने द्रव्यान्तरेण द्रव्यान्तरस्याच्छादने च । [आच्छादके च ।

**व्यवधायक** त्रि॰ वि+अव+धा-ण्वुल् । व्यवधानकर्त्तरि,

**व्यवधि** पु॰ वि+अव+धा-कि । व्यवधाने ।

**व्यवसाय** पु॰ वि+अव+षो-घञ् । उद्यमे 'मरणव्यवसायबुद्धिमि'ति कुमारः उपजीविकायाम्, अनुष्ठाने, अवधारणे च 'व्यवसायात्मिका बुद्धिरि'ति गीता ।

**व्यवस्था** स्त्री॰ वि+अव+स्था-अ । शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापने, शास्त्रमर्यादायाञ्च ।

**व्यवस्थित** त्रि॰ वि+अव+स्था-क्त । विषयान्तरपरिहारेण विषयविशेषे अवस्थिते-शास्त्रविहिते पदार्थे ।

**व्यवस्थितविभाषा** स्त्री॰ कर्म॰ । व्याकरणोक्ते विषयान्तरपरिहारेण विषयविशेषेऽवस्थितरूपे विकल्पे ।

**व्यवहर्त्तृ** त्रि॰ वि+अव+हृ-तृच् । व्यवहारकर्त्तरि ।

**व्यवहार** पु॰ वि+अव+हृ-घञ् । अर्थविशेषबोधनाय शब्दविशेषप्रयोगे,ऋणादानादिष्वष्टादशसु विवादेषु । 'स्वत्वाचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तदि'ति स्मृतिः । 'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु वाक्यात् न्यायाद्व्यवस्थानं व्यवहार उदाहृत' इत्युक्ते विवादनिर्णये, सहासनभोजनादौ च ।

**व्यवहारपद** न॰ ६त॰ । व्यवहारविषये ।

**व्यवहारमातृका** स्त्री॰ व्यवहारस्य विवादनिर्णयस्य मातेव पोषकत्वात् परिच्छेदकत्वाद्वा इवार्थे कन् । व्यवहारनिर्णयार्थं प्राड्विवाकादिकार्य्ये क्रियासमुदाये, विस्तरो दृश्यदभि॰

**व्यवहारिक** त्रि॰ व्यवहारः प्रयोजनमस्य ठन् । व्यवहारयोग्ये लोकप्रसिद्धे घटपटादौ,स्त्रियां ङीप् । इङ्गुदवृक्षे पु॰

**व्यवहारिकसत्ता** स्त्री॰ कर्म॰ व्यवहारोपयिके सत्त्वे वेदान्तकल्पिते ब्रह्मभिन्नपदार्थमात्रस्य वस्तुतोऽसत्त्वेऽपि व्यवहारयोग्ये सत्त्वे येन घटादि व्यवह्रियते । तत्कार्य्यकारणोपयोगित्वेन कल्पिते घटादेरर्थक्रियाकारित्वलक्षणे सत्त्वे च ।

**व्यवहार्य्य** त्रि॰ वि+अव+हृ-ण्यत् । इदमित्यमेवेत्येवंरूपेण व्यवहारविषये येन सह भोजनादि क्रियते तस्मिंश्च ।

**व्यवहित** त्रि॰ वि+अव+धा-क्त । व्यवधानवति पदार्थे ।

**व्यवाय** पु॰ वि+अव+इण-घञ् । ग्राम्यधर्मे मैथुने, अन्तर्द्धाने शुद्धौ-च तेजसि न॰ । [स्त्रियां ङीप् ।

**व्यवायिन्** पु॰ वि+अव+इण्-णिनि । ग्राम्यधर्मकारके

**व्यसन** न॰ वि+अस-ल्युट् । विपत्तौ, भ्रंशे,कामजाते, कोपजाते च स्त्रीभोगमद्यपानादौ दोषे,दैवादिकृते उपद्रवे च ।

**व्यसनार्त्त** त्रि॰ व्यवसनेनार्त्तः । दैवाद्युपद्रवयुक्ते ।

**व्यसनिन्** त्रि॰ व्यसनमस्यास्ति इनि । व्यसनयुक्ते कामजादिमद्यपानादिरूपदोषयुक्ते, दैवाद्युपद्रुते च ।

**व्यसु** त्रि॰ विगताः असवो यस्य । मृते, 'शेषे जातो भवेद्व्यसुरि'ति ज्योतिषम् ।

**व्यस्त** त्रि॰ वि+अस-क्त । व्याकुले, व्याप्ते,विभक्ते च 'व्यस्तरात्रिंदिवस्येति कुमारः विपरीते, 'व्यस्तविधिर्विलोम' इति लीलावती । समुदितपदार्थमध्ये एकैकस्मिन् । 'एते व्यस्ता समस्ता वे'ति स्मृतिः । समस्तभिन्ने च भावे-क्त । व्यतिक्रमे न॰ ।

**व्याकरण** पु॰ व्याक्रियन्ते व्युत्पाद्यन्ते अर्थवत्तया प्रतिपाद्यन्ते शब्दा येन वि+आ+कृ-ल्युट् । वेदाङ्गे शब्दसाधुताबोधके शास्त्रभेदे, वेदान्तोक्ते नामरूपाभ्यां जगतोविकाशने च ।

**व्याकुल** त्रि॰ वि+आ+कुल-क । रोगादिना इतिकर्त्तव्यतानिश्चयविहीने । [रणे च

**व्याकृति** स्त्री॰ वि+आ+कृ-क्तिन् । भङ्गौ, प्रकाशने, व्याक-

**व्याकृत** त्रि॰ वि+आ+कृ-क्त । प्रकाशिते ।

**व्याकोश(ष)** त्रि॰वि+आ+कुश(ष) अच् व्यागतः कोश (षा)त् प्रा॰स॰ वा । प्रफुल्ले 'व्याकोश(षे)न्दीवराच' इति तन्त्रम् ।

**व्याख्या** स्त्री॰ वि+आ+ख्या-अङ् । विवरणात्मके शब्दसमूहरूपे ग्रन्थभेदे कथने च ।

**व्याख्यात** त्रि॰ वि+आ+ख्या-क्त । कथिते,विवृते च ।

**व्याघात** त्रि॰ वि+आ+हन-घञ् । अन्तराये,प्रहारे, अर्थालङ्कारभेदे, सप्रतिबन्धे कथने, प्रतिबन्धभेदे 'व्याघातावधिराशङ्के'ति खण्डनखण्डखाद्यम् । विष्कम्भादिसप्तविंशतियोगमध्ये योगभेदे च ।

**व्याघ्र** पु॰ वि+आ+घ्रा-क । जन्तुभेदे, रक्तैरण्डे, करञ्जे च ।

**व्याघ्रदल** पु॰ व्याघ्रपाद इव दलमस्य शा॰ । एरण्डवृक्षे ।

**व्याघ्रनख** न० व्याघ्रस्य नखमिव । नखीनामकगन्धद्रव्ये व्याघ्रस्य नख इव दलान्यस्य । सुहीवृक्षे । ६त० । व्याघ्रनखे ।

**व्याघ्रपाद्(द्)** पु० व्याघ्रस्य पाद इव मूलमस्य वा अन्त्यलोपः । विकङ्कतवृक्षे । मुनिभेदे च । [व्याघ्रलाङ्गूले ।

**व्याघ्रपुच्छ** पु० व्याघ्रस्य पुच्छ इव दलमस्य । एरण्डवृक्षे ६त० ।

**व्याघ्रादनी** स्त्री० व्याघ्रे णाद्यते अद-ल्युट् ङीप् । त्रिवृतायाम्

**व्याघ्रास्य** स्त्री० व्याघ्रस्येवास्यं यस्य । विड़ाले ।

**व्याघ्री** स्त्री० व्याघ्रस्तन्नखाकारः कण्टकोऽस्त्यस्याः अच् गौ० ङीष् । कण्टकारिकायाम् । जातौ ङीप् व्याघ्रयोषिति ।

**व्याज** पु० वि+अज-घञ् वीभावाभावः । कपटे, वञ्चनाफले असत्यव्यवहारे कारणान्तरेण मद्वस्य कारणान्तरत्वे-नोद्भवनरूपे अपदेशे च ।

**व्याजनिन्दा** स्त्री० ३त० । कपटनिन्दायाम्, अर्थालङ्कारभेदे च

**व्याजस्तुति** स्त्री० ३त० । कपटस्तुतौ, अर्थालङ्कारभेदे च ।

**व्याजोक्ति** स्त्री० ३त० । छलेनोक्तौ, अर्थालङ्कारभेदे च ।

**व्याड** पु० वि+अड-अच् । मांसभक्षके व्याघ्रादौ पशौ, सर्पे, इन्द्रे च वञ्चके त्रि० । [व्याघ्रनखाख्ये गन्धद्रव्ये ।

**व्याडायुध** न० व्याडस्य व्याघ्रस्यायुधं नख इवास्यस्य अच् ।

**व्याडि** पु० व्याकरणस्य संग्रहकारके कोषकारके च मुनिभेदे ।

**व्याध** पु० व्यध-ण । मृगहिंसके जातिभेदे ।

**व्याधभीत** पु० व्याधाद्भीतः भी-क्त । मृगे ।

**व्याधि** पु० वि+आ+धा-कि । रोगे, कुष्ठरोगे च ।

**व्याधिघात** पु० व्याधिं हन्ति-हन-अण् । आरग्वधे (सोन्दाल)

**व्याधिहन्तृ** त्रि० व्याधिं हन्ति हन-तृच् । वाराहीकन्दे ।

**व्याधित** त्रि० व्याधिर्जातोऽस्य तार० इतच् । व्याधियुक्ते ।

**व्याधु(धू)त** त्रि० वि+आ+धु-धू-वा-क्त । कम्पिते ।

**व्यान** पु० वि+अन-घञ् । देहस्थे सर्वशरीरव्यापके प्राणादि-मध्ये वायुभेदे ।

**व्यापक** त्रि० विशेषेणाप्नोति वि+आप-ण्वुल् । अधिकदेशवृत्तौ, न्यायोक्ते स्वाधिकरणवृत्त्यभावप्रतियोगिनि च पदार्थे । तन्त्रोक्ते सर्वाङ्गसम्बन्धिनि न्यासभेदे च ।

**व्यापन्न** त्रि० वि+आ+पद-क्त । मृते, विपद्युक्ते च ।

**व्यापाद** पु० वि+आ+पद-घञ् । द्रोहचिन्तने । [चिन्तने च ।

**व्यापादन** न० वि+आ+पद-णिच्-ल्युट् । मारणे, परानिष्ट

**व्यापार** पु० वि+आ+पृ-घञ् । 'व्यापारो भावना सैवोत्पादना सैव च क्रियेत्युक्तायां भावविद्भिः उत्पादनक्रियायाम् ।

**व्यापारिन्** त्रि० व्यापारोऽस्त्यस्य इनि । व्यापारवति कार-वादौ-व्यवसायवति वणिग्जने पु० ।

**व्यापिन्** त्रि० वि+आप-णिनि । व्यापके । विष्णौ पु० ।

**व्यापृत** त्रि० वि+आ+पृ-क्त । व्यापारयुक्ते ।

**व्याप्त** त्रि० वि+आप-क्त । पूर्णे, न्यायोक्ते व्याप्तिमति पदार्थे यथा वह्नेर्व्याप्तो धूमः ।

**व्याप्ति** स्त्री० वि+आप-क्तिन् । ईश्वरस्य ऐश्वर्यभेदे, न्यायमते तदभाववति अविद्यमानत्वरूपे पदार्थे यथा वह्नेर भाववति जलादौ धूमो नास्तीति धूमादौ वह्नेर्व्याप्तिः ।

**व्याप्य** त्रि० वि-आप-ण्यत् । व्याप्ते । अल्पदेशवृत्तौ पदार्थे अनुमितिसाधने न० । [रागपरिमाणे ।

**व्याम** पु० वि+अम-घञ् । तिर्यक्पार्श्वतो विस्तृतयो र्बाह्वोरन्त

**व्यायत** त्रि० वि+आ+यम-क्त । दीर्घे, आयते, दूरे अति-शये च । भावे-क्त । दैर्घ्ये, आयामे च न० ।

**व्यायाम** पु० वि+आ+यम-घञ् । श्रमे, श्रमसाधने व्यापारे, मल्लानां श्रमकारके व्यापारे, पौरुषे, दुर्गसंस्कारे, विषये, व्यामपरिमाणे च ।

**व्यायोग** पु० वि+आ+युज-घञ् । दृश्यकाव्यभेदे । [गर्जे च

**व्याल** पु० वि+अड-घञ् डस्य लः । सर्पे । हिंस्रकपशौ, दुष्ट-

**व्यालगन्धा** स्त्री० व्यालस्य गन्धो वेशोऽस्याः । काकोल्याम्

**व्यालग्राह** पु० व्यालान् सर्पान् गृह्णाति ग्रह-अण् । (सापुड़े) सर्पधारिणि । णिनि । अत्रैव । [समङ्गायाम् ।

**व्यालजिह्वा** स्त्री० व्यालस्य सर्पस्य जिह्वेव पत्रमस्याः । महा

**व्यालदंष्ट्र** पु० व्यालस्य व्याघ्रस्य दंष्ट्रेव कण्टकमस्य । गोक्षुरे

**व्यालनख** पु० व्यालस्य व्याघ्रस्य नख इव । गन्धद्रव्यभेदे व्याल-दलोत्पल । [कर्कटीभेदे

**व्यालपत्त्रा** स्त्री० व्यालस्य पाद इव पत्त्रमस्याः । इर्वारौ

**व्यालम्ब** पु० विशेषेण आलम्बते वि+आ+लवि+अच् । रक्तैरण्डे । [द्रव्ये । व्यालनखाख्ये गन्धद्रव्ये पु० ।

**व्यालायुध** न० व्यालस्य व्याघ्रस्यायुधं नख इव । नखीनामगन्ध-

**व्यावक्रोशी** स्त्री० वि+अव+क्रुश-घञ् स्वार्थेऽञ् । परस्पराक्रोशे । [परस्परहरणे

**व्यावहारी** स्त्री० वि+अव+हृ-घञ् स्वार्थे अण् ङीप् ।

**व्यावहासी** स्त्री० वि+अव+हस-घञ् स्वार्थेऽञ् । परस्परहसने

**व्यावृत्त** त्रि० वि+आ+वृत-क्त । वृत्ते, निवृत्ते च 'व्यावृत्तगति-रुद्याने' इति कुमारः ।

**व्यावृत्ति** स्त्री० वि+आ+वृत-क्तिन् । निवारणे ।

**व्यास** पु० व्यस्यति वेदान् वि+अस-घञ् । पराशरसुते मुनि-भेदे, समासादिसमानार्थके विग्रहवाक्ये, विस्तारे, गोलवृत्त-केन्द्रस्य मध्यस्थरेखायाम् 'यदवं वाचयेद्विप्रो स मङ्गल !

व्याम उच्यते' इत्युक्ते पुराणपाठके विप्रे च ।
**व्यासक्त** त्रि० वि+आ+षन्ज-क्त । आसक्ते तत्परे,संलग्ने च
**व्यासङ्ग** पु० वि+आ+षन्ज-घञ् । कार्य्यान्तरत्यागेनैकपरत्वे व्यासक्तौ च । [पिद्धे च
**व्यासिद्ध** त्रि० वि+आ+षिध-क्त । राजाज्ञादिनावरुद्धे नि-
**व्याहत** त्रि० वि+आ+हन-क्त । व्याघातयुक्ते ।
**व्याहार** पु० वि+आ+हृ-घञ् । वाक्ये उक्तौ ।
**व्याहृति** स्त्री० वि+आ+हृ-क्तिन् । उक्तौ,भूर्भुवःस्वरादिषु सप्तसु मन्त्रभेदेषु च ।
**व्युत्क्रम** पु० वि+उद्+क्रम-घञ् । क्रमवैपरीत्ये, व्यतिक्रमे च
**व्युत्थान** न० वि+उद्+स्था-ल्युट् । विरोधकरणे,स्वातन्त्र्यकरणे, प्रतिरोधने, नृत्यभेदे विशेषेण उत्थाने च । वि+उद्+स्था-क्तिन् । व्युत्थितिरप्यत्र स्त्री० ।
**व्युत्पत्ति** स्त्री० वि+उद्+पद-क्तिन् । विशेषेण उत्पत्तौ, शास्त्रजन्ये शब्दार्थज्ञानादिसम्पाद्ये संस्कारभेदे, शब्दानामर्थावबोधकशक्तौ च । [संस्कारयुक्ते पुरुषे च
**व्युत्पन्न** त्रि० वि+उद्+पद-क्त । व्युत्पत्तियुक्ते शब्दे, तत्-
**व्युदस्त** त्रि० वि+उद्+अस-क्त । निराकृते ।
**व्युदास** पु० वि+उद्+अस-घञ् । निराकरणे ।
**व्युष** त्यागे अद० चु० उभ० सक० सेट् । व्युषयति ते अवुव्युषत् त
**व्युष्ट** त्रि० वि+उष-क्त । दग्धे,वि+वस-क्त इडभावः । पर्युषिते, प्रभाते च । फले, दिवसे च न० ।
**व्युष्टि** स्त्री० वि+वस-क्तिन् । समृद्धौ, स्तुतौ, फले च ।
**व्युस** त्यागे दिवा० पर० सक० सेट् । व्युस्यति अव्युसत् अव्युसीत्
**व्यूढ** त्रि० वि+वह-क्त । निवेशनविशेषेण स्थिते सैन्यादौ 'व्यूढां द्रुपदपुत्रेणे'ति गीता । संहते, 'व्यूढोरस्को वृषस्कन्ध' इति रघुः । प्रवृद्धे, परिहिते विवाहिते च त्रि० 'व्यूढा का चन कन्यके'ति प्रबोधचन्द्रोदयः ।
**व्यूढकङ्कट** त्रि० व्यूढःपरिहितः कङ्कटःवर्म येन । सन्नद्धकवचे
**व्यूत** त्रि० वि+वे-क्त । तन्तुभिर्ग्रथिते ।
**व्यूति** स्त्री० वि+वे-क्तिन् । वस्त्रादिवपनकर्मणि ।
**व्यूह** पु० वि+ऊह-घञ् । समूहे निर्माणे च । सम्यक्तर्के, देहे सैन्ये, युद्धार्थं सैन्यसन्निवेशनविशेषे च । [पश्चाद्भागे ।
**व्यूहपार्ष्णि** पु० ६त० । युद्धार्थमवस्थानविशेषेण स्थितसैन्यानां
**व्ये** संवृतौ वृतौ च भ्वा० उभ० सक० अनिट् यजा० । व्ययति ते अव्यासीत् अव्यास्त विव्याय विव्यतुः ।
**व्यो** अव्य० व्ये-डो । लौहे, बीजे च ।
**व्योकार** पु० व्यो+कृ-अण् । लौहकारके ।
**व्योमकेश** पु० व्योम्नि केशो यस्य । शिवे महादेवे ।
**व्योमकेशिन्** पु० व्योमाकारः केशोऽस्यास्ति इनि । महादेवे ।
**व्योमचारिन्** पु० व्योम्नि चरति चर-णिनि । विहगे, देवे, चन्द्रनक्षत्रादौ च ।
**व्योमधूम** पु० व्योम्नः धूमइव नीलत्वात् । मेघे ।
**व्योमन्** न० व्ये-मनिन् पृ० । आकाशे, (आव) अभ्रके, जले च
**व्योममण्डल** न० व्योम मण्डलमिव । मण्डलाकारे आकाशे ६त० । पताकायाम् । [अकस्मादुत्थिते वायोर्निर्घाते च
**व्योममुद्गर** पु० व्योम्नोमुद्गरइव आघातहेतुत्वात् । गगनात्
**व्योमयान** न० ७त० । आकाशगमनयोग्ये वाहने विमाने ।
**व्योष** न० वि+उष-अच् । शुण्ठीमरीचपिप्पलीरूपे त्रिकटुनि
**व्रज** गतौ भ्वा० पर० सक० सेट् । व्रजति अव्राजीत् । [जत् त
**व्रज** संस्कारे गतौ च चु० उ० सक० सेट् । 'व्राजयति ते अविव्र-
**व्रज** पु० व्रज-घञर्थे क । समूहे, गोष्ठे, पथि, मथुरासमीपस्थे देशभेदे च ।
**व्रजनाथ** पु० ६त० । श्रीकृष्णे व्रजपालादयोऽप्यत्र । [श्रीकृष्णे ।
**व्रजमोहन** पु० व्रजान् व्रजस्थान् मोहयति मुह-णिच्-ल्यु ।
**व्रजवर** पु० व्रजानां वरः प्रार्थनीयः । श्रीकृष्णे ।
**व्रजवल्लभ** पु० ६त० । श्रीकृष्णे ।
**व्रजाङ्गना** स्त्री० ६त० । व्रजस्य स्त्रियां गोप्याम् ।
**व्रज्या** स्त्री० व्रज-क्यप् । पर्यटने, गमने,जिगीषोर्युद्धार्थप्रयाणे च
**व्रण** शब्दे भ्वा० पर० अक० सेट् । व्रणति अव्राणीत् अव्रणीत्
**व्रण** अङ्गचूर्णे अद० चु० उ० सक० सेट् । व्रणयति ते अवव्रणत् त
**व्रण** पु० न० चु० व्रण-अच् । क्षते ।
**व्रणकृत्** पु० व्रणं करोति कृ-क्विप् । भल्लातके, व्रणकारके त्रि०
**व्रणद्विष्** पु० व्रणं द्वेष्टि द्विष-क्विप् । ब्राह्मणयष्टिकायाम् । व्रणघातके त्रि० ।
**व्रणहन्** पु० व्रणं हन्ति हन-ड । एरण्डवृक्षे । गुडूच्याम् स्त्री० ।
**व्रणाश** पु० व्रणमश्नाति अश-अण् । बोले,गन्धरसे वटवृक्षे च
**व्रत** न० व्रज-घ जस्य तः । भक्षणभेदे,पुण्यसाधने उपवासादि नियमभेदे च ।
**व्रतति(ती)** स्त्री० प्रत-अति पृ० वा ङीप् । लतायां विस्तारे च
**व्रतसंग्रह** पु० ६त० । व्रतग्रहणार्थं कृतदीक्षायाम् ।
**व्रतादेश** पु० ६त० । उपनयनादिव्रतोपदेशे ।
**व्रतिन्** पु० व्रतमस्यास्ति इनि । व्रतधारके,यजमाने च ।
**व्रश्च** छेदने तु० पर० सक० वेट् । वृश्चति अव्रश्चीत् अव्राक्षीत् ।
**व्रश्चन** पु० वृश्च्यतेऽनेन व्रश्च-ल्युट् । (रेति) स्वर्णादिच्छेदनार्थे पदार्थे । भावे ल्युट् । छेदने न० ।

**व्रात** पु० वृ-अतच् वृ० । समूहे ।

**व्रातीन** त्रि० व्रातेन संघेन जीवति । संघजीविनि ।

**व्रात्य** न०व्रातात् समूहात् च्यवति यत् । अव्यवहार्य्ये, संस्कारहीने, जातिमात्रोपजीविनि, 'अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः । सावित्रीपतिता व्रात्या' इति मनुः ।

**व्रात्यस्तोम** पु० व्रात्ययोग्यः स्तोमः । यज्ञभेदे ।

**व्री** हृतौ क्र्या०वा०पर०सक०अनिट् । व्रिणाति-व्रीणाति अव्रैषीत्

**व्री** गतौ दिवा आत्म०सक०अनिट् । व्रीयते अव्रेष्ट-निष्ठातस्य नः । व्रीणः ।

**व्रीड** क्षेपे सक०लज्जायाम् अक०दि०आ०सेट् । व्रीड्यते अव्रीडिष्ट

**व्रीड** पु० व्रीड-घञ् । लज्जायाम् ।अ । तत्रैव स्त्री० ।

**व्रीण** बधे वा चु०उभ० पक्षे भ्वा०पर०सक०सेट् । व्रीणयति ते व्रीणति अविव्रिणत् त अव्रीणीत् ।

**व्रीहि** पु० व्री-हि किच्च । धान्यमात्रे, आशुधान्ये च । [प्यत

**व्रीहिक** त्रि० व्रीहिरस्त्यस्य ठक् । धान्यवति । इनि व्रीहीत्य-

**व्रीहिकाञ्चन** पु० व्रीहिषु काञ्चनं तद्रूपमस्त्यस्य अच् । मसूरे

**व्रीहिपर्णी** स्त्री० व्रीहेरिव पर्णं यस्याः ङीप् । (शाल पान) क्षुपभेदे । [चर्व्वादौ ।

**व्रीहिमय** पु० व्रीहिप्रचुरः मयट् । व्रीहिनिर्मिते हविर्द्रव्ये

**व्रीहिराजिक** पु० व्रीहिषु राजते राज-अच् ततःस्वार्थे ठ । (काङ्गनि) धान्यभेदे ।

**व्रुड** संवरणे सक० संघाते अक० तु० कु० पर० सेट् । व्रुडति अव्रुडीत् । [ति व्रूशयति अव्रूशीत् ।

**व्रूश** वधे वा चु०उभ०पक्षे भ्वा०पर०स०सेट् । व्रूशयते अवुव्रूशत्

**व्रैहेय** त्रि० व्रीहीणां भवनं क्षेत्रं ढक् । व्रीहिभवनयोग्ये क्षेत्रे

**व्ली** गतौ वरणे च क्र्या० वा० पर०सक०अनिट् । व्लीनाति व्लिनाति अव्लैषीत् ।

**श**

**श** न० शो-ड । मङ्गले । महादेवे, शस्त्रे च पु० ।

**शंयु** त्रि० शमस्त्यस्य शम्+युस् । शुभान्विते ।

**शंव** त्रि०शमस्त्यस्य शम्+व । शुभयुक्ते, मूषलाग्रलौहे वज्रे च पु०

**शंवर** न० शं वृणोति शम्+वृ-अच् । जले ।

**शंसा** स्त्री० शन्स-अ । वाक्ये, वाञ्छायां, प्रशंसायाञ्च ।

**शंसित** त्रि० शन्स-क्त । निश्चिते, हिंसिते, कथिते स्तुते च ।

**शंस्य** त्रि०शन्स-ण्यत् । हिंस्ये, स्तुत्ये वाच्ये, च ।

**शक** त्रासे अक० संशये सक०भ्वा० आ०सेट् इदित् । शङ्कते अशङ्किष्ट । [कीत् अशकिष्ट ।

**शक** सामर्थ्ये अक० दि०उभ०सेट् । शक्यति ते अशाकीत्-अश-

**शक** सामर्थ्ये स्वा०पर०अ०क०अनिट् । शक्नोति अशकत्-अशाक्षीत् पुषादिरित्येके तेन अशकदित्येव ।

**शक** पु० शक-अच् । जातिभेदे, देशभेदे, स्वराज्यावधिवत्सराङ्कप्रवर्त्तके नृपभेदे, तदीये वत्सरे च । कलियुगे शककर्त्तृषु युधिष्ठिरः विक्रमादित्य शालिवाहनश्चेति त्रयोगताः ।

**शकट** पु०न० शक-अटन् । यानभेदे, असुरविशेषे, स्वल्पार्थे ङीप् । क्षुद्रशकटे स्वार्थे कन् । शकटिका तत्रैव ।

**शकटहन्** पु०शकटमसुरभेदं हतवान् हन-भूते क्विप् । श्रीकृष्णे

**शकटाह्वा** स्त्री० शकटाकारत्वात् तदाह्वा यस्याः । रोहिणीनक्षत्रे तस्याः शकटाकारचतुस्तारात्मकत्वेन तथात्वम् ।

**शकल** पु० न० शक-कलच् । खण्डे, एकभागे, त्वचि वल्कले, शल्के (आंस) च न० ।

**शकलिन्** पु० शकलं शल्कमस्यास्ति इनि । मत्स्ये ।

**शकाब्द** पु० शककर्त्तृनृपसंवन्धी अब्दः । शकप्रवर्त्तकनृपराज्यावधिवत्सरे तत्संख्यायाञ्च ।

**शकार** पु० 'मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः । सोऽयमनूढाभ्राता राज्ञः स्यालः शकार' इत्युक्तलक्षणे राज्ञोऽनूढभार्य्याभ्रातरि ।

**शकारि** पु० शकानां म्लेच्छजातिभेदानामरिः । विक्रमादित्ये ।

**शकुन** न० शक-उनन् । शुभाशुभसूचकनिमित्ते-वाङ्गस्पन्दनकाकादिदर्शनादौ, पक्षिमात्रे, पक्षिभेदे, गृध्रे च पु० । [स्त्री०

**शकुनज्ञ** त्रि० शकुनं जानाति ज्ञा-क । निमित्ताभिज्ञे, ज्येष्ठ्यां

**शकुनि** पु० शक-उनि । पक्षिमात्रे, चिल्लपक्षिणि, सुवलराजपुत्रे दुर्य्योधनमातुले च । श्यामापक्षिणि स्त्री० ङीप् ।

**शकुनिप्रपा** स्त्री० ६त० । पक्षिणां पानीयशालायाम् ।

**शकुन्त** पु०शक-उन्त । पक्षिमात्रे, भासपक्षिणि, कीटभेदे च ।

**शकुन्तला** स्त्री० शकुन्तैः लायते ला बाहुल्ये-क । मेनकागर्भजातायां विश्वामित्रसुतायाम् सा मेनकया तया मात्रोत्सृष्टा शकुन्तलालिता पश्चात् कण्वमुनिना प्रतिपालिता दुष्मन्तनृपेण गान्धर्व्वविधिना व्यूढेति भारतम् ।

**शकुन्तलात्मज** पु० ६त० । भरतनृपे ।

**शकुन्ति** पु० शक-उन्ति । पक्षिमात्रे, भासपक्षिणि च ।

**शकुल** पु० शक-उलच् । मत्स्यभेदे (शउल । [दूर्व्वायाम् ।

**शकुलाक्षी** पु० शकुलस्याक्षीव पत्रं यस्याः समा० ङीप् । गण्ड-

**शकुलादनी** स्त्री० शकुलैरद्यते अद-ल्युट् । (कट्की) शाकभेदे जटामांस्यां, जलपिप्पल्यां, कट्फले च ।

**शकुलार्भक** पु० शकुलस्यार्भक इव क्षुद्रत्वात्तदाकारत्वाच्च । (गडुइ) मत्स्ये ।

शकृत् स्त्री॰शक-ऋतन् । विष्ठायाम् । [स्त्री॰ ङीप् ।
शकृत्करि पु॰ शकृतं किरति कृ-इन् । गवादीनां वत्से वत्सायां
शकृद्द्वार न॰ ६त॰ । मलद्वारे अपानस्थाने ।
शक्व(वा)र पु॰ शक-क्विप् कृ-अच् कर्म॰ शक-क्वरप् वा ।
वृषे । चतुर्दशाक्षरपादके छन्दोभेदे, नदीभेदे मेखलायाञ्च
स्त्री॰ ङीप् । शक्वरीत्यपि चतुर्दशाक्षरपादके छन्दसि ।
शक्त त्रि॰ शक-क्त । समर्थे ।
शक्ति स्त्री॰ शक-क्तिन् । सामर्थ्ये स्त्रीदेवतायाञ्च । न्यायाद्युक्ते
कारणनिष्ठे कार्य्योत्पादनयोग्ये धर्म्मभेदे, शब्दनिष्ठे अर्थ-
बोधकताह्रूपे वृत्तिभेदे अस्त्रभेदे च ।
शक्तिग्रह पु॰ ६त॰ । शक्तेः अर्थबोधकताह्रूपवृत्तेर्ज्ञाने ।
शक्तिग्राहक पु॰ शक्तिं गृह्णाति ग्रह-ण्वुल् । कार्त्तिकेये
शक्तिं ग्राहयति बोधयति ग्रह-णिच् ण्वुल् । 'शक्तिग्रहं
व्याकरणोपमानात् कोषाप्तवाक्यात् व्यवहारतश्च वाक्यस्य
शेषाद्विवृतेर्वदन्ती'त्याद्युक्ते शक्तिबोधके हेतौ ।
शक्तिधर पु॰ शक्तिं धरति धृ-अच् । कार्त्तिकेये सामर्थ्यधरे
त्रि॰ 'शक्तिधरः कुमारः' इति रघुः शक्तिभृदादयोप्यत्र ।
शक्तिपर्ण पु॰ शक्तिरिव पर्णं यस्य । सप्तपर्णे ।
शक्तिपाणि पु॰ शक्तिः पाणौ यस्य । कार्त्तिकेये शक्तिहस्ता-
दयोप्यत्र । [योद्धरि ।
शक्तिहेतिक पु॰ शक्तिर्हेतिः प्रहरणास्त्रं यस्य कप् । शक्त्या
श(स)क्तु पु॰ श(स)च-तुन् । (छातु) भृष्टयवादिचूर्णे ।
शक्तुफला(ली) स्त्री॰ शक्तव इव सूक्ष्माणि फलान्यस्याः वा
ङीप् । शमीवृक्षे ।
शक्त्रि(क्त्रु) पु॰ वशिष्ठमुनेः पुत्रे पराशरस्य पितरि मुनौ ।
शक्नु त्रि॰ शक-नु । प्रियभाषिणि ।
शक्य त्रि॰ शक-यत् । शक्तियुक्ते शक्त्या बोध्येऽर्थे, समर्थनीये,
साधयितुं योग्ये, वाक्ये च ।
शक्यतावच्छेदक त्रि॰ ६त॰। शक्यपदार्थस्य धर्म्मे येन धर्म्मेण
अर्थस्य शब्दसङ्केतविषयता तस्मिन् धर्मे। यथा घटशब्दः
घटत्ववन्तं पदार्थं बोधयति अतस्तद्धर्मो घटत्वं घटशब्दस्य
शक्यतावच्छेदकम् । [मेचके च ।
शक्र पु॰शक-रक् । इन्द्रे, कुटजवृक्षे, अर्ज्जुनवृक्षे, ज्येष्ठानक्षत्रे,
शक्रगोप पु॰ शक्रं शक्रधनुर्गोपायति समवर्णत्वात् । इन्द्रगोपे
शक्रज पु॰ शक्रात् जायते जन-ड । काके । इन्द्रजन्ये त्रि॰
शक्रजातादयोप्यत्र । [मेघनादे राक्षसे,इन्द्रजेतरि त्रि॰ ।
शक्रजित् पु॰ शक्रं जितवान् जि-क्विप् तुक् च । रावणात्मजे
शक्रधनुस् न॰ ६त॰ । मेघलाञ्छने शक्रधनुराकारे सूर्य्य-
किरणसम्पर्कजे पदार्थभेदे(रामधनुक) । [कारे पदार्थे ।
शक्रध्वज पु॰६त॰ । भाद्रशुक्लद्वादश्यां पूज्ये इन्द्रदैवते ध्वजा-
शक्रनन्दन पु॰ ६त॰ । अर्ज्जुने । इन्द्रानन्दके त्रि॰ ।
शक्रपर्य्याय पु॰ शक्रस्य पर्य्यायो नाम नाम यस्य शाक॰ ।
कुटजवृक्षे ६त॰ । इन्द्रस्य वाचकशब्दे ।
शक्रपादप पु॰ ६त॰ । देवदारुवृक्षे । [स्वार्थे कन् । तत्रैव ।
शक्रपुष्पी स्त्री॰ शक्रस्येव पुष्पमस्याः ङीप् । अग्निशिखावृक्षे
शक्रभवन न॰६त॰ । स्वर्गे । शक्रावासादयोप्यत्र । [त्याम् ।
शक्रभूभवा स्त्री॰ शक्ररूपभुवि भवति भू-अच् । इन्द्रवारु-
शक्रमातृ स्त्री॰शक्रस्य मातेव । भार्ग्याम्। ६त॰। इन्द्रजनन्याम्
शक्रमूर्द्धन् पु॰ शक्रस्येव शिखावान् मूर्द्धा यस्य । वल्मीके ।
६न॰ । इन्द्रमस्तके शक्रशिर आदयोप्यत्र ।
शक्रवल्ली स्त्री॰ शक्रप्रिया वल्ली । इन्द्रवारुण्याम् ।
शक्रवाहन पु॰ शक्रं वाहयति वह-णिच्-ल्यु । मेघे इन्द्रवा-
हनादयोप्यत्र।
शक्रवीज न॰ शक्रस्य कुटजस्य वीजम् । इन्द्रयवे ।
शक्रशाखिन् पु॰ शक्रनामकः शाखी । कुटजवृक्षे ।
शक्रसारथि पु॰ ६त॰ । इन्द्रसारथौ मातलौ ।
शक्रसुत पु॰ शक्रस्य सुतः । वालिनामके वानरराजे ।
शक्रसुधा स्त्री॰ शक्रस्य सुधेव । पालङ्क्याम् ।
शक्रसृष्टा स्त्री॰ ६त॰ । हरीतक्याम् ।
शक्राख्य पु॰ शक्रस्येवाख्या यस्य । पेचके । [मिन्द्रपत्न्याम् ।
शक्राणी स्त्री॰ शक्रस्य पत्नी ङीप् आनुक् च । पुलोमजाया-
शक्राशन न॰ शक्रेणाश्यते अश-ल्युट् । भङ्गायाम् ।
शक्राशन पु॰ शक्रं तन्नामानं अश्नुते अश-ल्यु । कुटजवृक्षे ।
शक्रोत्थान न॰ शक्रस्य तद्ध्वजस्य उत्थानम् । शक्रध्वजस्यो-
त्थाने, तदुपलक्षिते उत्सवे च । ६त॰ शक्रोत्सवोप्यत्र ।
शङ्कर पु॰ शं करोति कृ-अच् । महादेवे कल्याणकरे त्रि॰
शिवपत्न्यां स्त्री॰ ङीप् । [शुभत्वात् । कर्पूरे ।
शङ्करावास पु॰ ६त॰ । कैलासाचले शङ्करस्यावास इव
शङ्का स्त्री॰ शकि-अ । त्रासे, वितर्के, संशये च । [किते च ।
शङ्कित त्रि॰ शङ्का जातास्य तार॰ इतच्। भीते संदिग्धे वित
शङ्कु पु॰शकि-उण् । स्थाणौ, मत्स्यभेदे, शल्यास्त्रे, कीलके,
दशकोटिसंख्यायां, तत्सङ्ख्याते, महादेवे, कलुषे, पत्त्रशि
राजाख्ये, मेढ्रे, नखीनामद्रव्ये, छायापरिमाणार्थे काष्ठादि
निर्म्मिते, 'अर्काङ्गुला तु सूच्यग्रा काष्ठाद्यङ्गुलमूलिका ।
शङ्कुसंज्ञा भवेदि'त्युक्ते कीलभेदे च।
शङ्कुकर्ण पु॰ शङ्कुरिव कर्णावस्य । गर्द्दभे ।

शङ्कुतरु पु० शङ्कुयोग्यस्तरुः । शालवृक्षे शङ्कुदृक्षादयोऽप्यत्र ।
शङ्कुला स्त्री० शकि-उलच् । उत्पलपत्रिकायाम् पूगच्छेदकास्त्र-भेदे (जांति) शङ्कुलाखण्ड इति सिद्धान्तकौमुदी ।
शङ्ख पु०न० शम-ख । स्वनामख्याते समुद्रजाते पदार्थे, ललाटास्थ्नि, निधिभेदे, नखीनामगन्धद्रव्ये, कर्णसमीपस्थे-अस्थ्नि नागभेदे, हस्तिदन्तमध्ये, दशनिखर्वसंख्यायां, तत्संख्याते च
शङ्खक न० शङ्खस्य विकारः वुन् । शङ्खजाते वलयाकारे पदार्थे
शङ्खकार पु० शङ्खं तद्विकारं वलयाकारं पदार्थं करोति कृ-अण् । वर्णसङ्करजातिभेदे (शांखारी)
शङ्खचूर्ण न० ६त० । शङ्खजाते चूर्णे ।
शङ्खद्राविन् पु० शङ्खं द्रावयति द्रु-णिच्-णिनि । अम्लवेतसे
शङ्खधरा स्त्री० धृ-अच् ६त० । हिलमोचिकायाम् ।
शङ्खध्म पु० शङ्खं धमति ध्मा-क । शङ्खवादके । क्विप् । शङ्खध्मा इत्यप्यत्र । [अपि तत्र ङीप्
शङ्खनख पु० शङ्खस्य नख इव । क्षुद्रशङ्खे (जोङ्गड़ा) स्त्रीत्व-
शङ्खपुष्पी स्त्री० शङ्खइव पुष्पमस्याः ङीप् । (शङ्खाली) वृक्षे
शङ्खभृत् पु० शङ्खं बिभर्त्ति भृ-क्विप् तुक् च । विष्णौ ।
शङ्खमुख पु० शङ्खइव मुखमस्य । कुम्भीरे ।
शङ्खिका स्त्री० शङ्खोऽस्त्यस्याः ठन् । (चोरकाकका) क्षुपभेदे
शङ्खिन् पु० शङ्ख+अस्त्यर्थे इनि । विष्णौ, समुद्रे च ।
शङ्खिनी स्त्री० शङ्खोऽस्त्यस्याः इनि । चोरपुष्प्याम्, श्वेतचुक्रायां, यवतिक्तायां, स्त्रीभेदे, उपदेवताभेदे, (शाकचिन्नी) शङ्खवत्यां स्त्रियाञ्च ।
शङ्खिनीफल पु० शङ्खिन्या इव फलमस्य । शिरीषवृक्षे ।
शङ्खिनीवास पु०६त० । शाखोटकवृक्षे ।
शच गतौ भ्वा०आ०स०सेट् इदित् । शञ्चते, अशञ्चिष्ट ।
शच वाचि भ्वा०आ०सक०सेट् । शचते अशचिष्ट ।
शचि(ची) स्त्री० शच-इन् वा ङीप् । इन्द्रपत्न्याम् ।
शचीपति पु०६त० । इन्द्रे । शचीभर्त्रादयोऽप्यत्र ।
शट(ठ) श्लाघायां चु०आ०अक०सेट् । शाट(ठ)यते अशीशट(ठ)त
शट शाठ्ये गतौ भेदे च भ्वा० पर० सक० रोगे अक० सेट् । शटति । अशाटीत्-अशटीत् ।
शट पु०शटति रुजति शट-अच् । अम्ले, सिंहकेशरे, जटायाञ्च स्त्री०
शटि(टी) स्त्री० शट-इन् वा ङीप् । (वन आदा) स्वनामख्याते ओषधिभेदे । [अशाठीत्-अशठीत्
शठ वधे सक० कैतवे क्लेशे च अक०भ्वा०पर० सेट् । शठति
शठ आलस्ये चु०पर०अक०सेट् । शाठयति ते अशीशठत् त ।
शठ दुष्टवचने अद०चु०उभ०सक०सेट् । शठयति ते अशशठत् त

शठ न० शठ-अच् । तगरे, कुङ्कुमे, लौहे च । धुस्तूरे, मध्यस्थ पुरुषे च पु० । धूर्त्ते त्रि० ।
शठता स्त्री० शठस्य भावः तल् । शाठ्ये वञ्चनायाञ्च ।
शठम्बा स्त्री० शठ-अच् अबि-अच् कर्म० शक० । अम्बष्ठायाम् ।
शड संघाते रोगे च अक०भ्वा०प० सेट् इदित् । शण्डति अशण्डीत् ।
शण दाने भ्वा०पर०सक०सेट् । शणति अशाणीत् अशणीत्
शण पु० शण-अच् । स्वनामख्याते क्षुपभेदे ।
शणघण्टिका स्त्री० शणस्य घण्टेव इवार्थे कन् । शणपुष्पजाते घण्टारववति फले ।
शणपर्णी स्त्री० शणस्येव पर्णान्यस्याः ङीप् । अश्मन्तपर्ण्याम् ।
शणपुष्पी स्त्री० शणस्येव पुष्पमस्याः ङीप् (झनझने) वनशणे स्वार्थे कन् । तत्रैव ।
शणसूत्र न० शणाज्जातम् सूत्रम् । शणजाते जाले ।
शणालुक पु० शणइवालुकः । आरेवतवृक्षे (शोणालु)
शणिका स्त्री० शणसतुपुष्पमस्त्यस्याः ठन् । शणपुष्प्याम् ।
शण्ड न० शडि-अच् । पद्मादिसमूहे, नपुंसके, वृषे च ।
शण्डिल पु० शडि-इलच् । शाण्डिल्यस्य पितरि मुनिभेदे ।
शण्ढ पु० शण-ढ तस्य नेत्त्वम् । अन्तःपुररक्षके क्लिबे ।
शत न० शो-डतच् । स्वनामख्यातसंख्यायाम्, तत्संख्याते बहुसंख्यायां च । स्वार्थे कन् । तत्रैव न० ।
शतक त्रि० शतं परिमाणमस्य कन् । शतसंख्यायुक्ते ।
शतकुम्भ पु० शतं कुम्भायत्र । स्वर्णखनिपर्वतभेदे ।
शतकोटि पु० शतं कोटयोऽग्राणि यस्य । वज्रे शतगुणिता कोटिः शाक० । शतगुणितकोटिसंख्यायां स्त्री० ।
शतक्रतु पु० शतं क्रतवोऽस्य । इन्द्रे ।
शतग्रन्थि स्त्री० शतं ग्रन्थयोऽस्य । दूर्वायाम् । [करञ्जे च
शतघ्नी स्त्री० शतं हन्ति हन-टक् । अस्त्रभेदे, वृश्चिकाल्यां,
शततम त्रि० शतस्य पूरणः तमप् । शतसंख्यापूरणे ।
शततारा स्त्री० शतभिषक् तारा शाक० । शतभिषानक्षत्रे ।
शतदन्तिका स्त्री० शतं दन्ता इव सन्त्यस्य ठन् । नागदन्त्याम्
शतद्रु पु० शतधा द्रवति द्रु-रु-न० । नदीभेदे । [शतप्रकारे अव्य०
शतधा स्त्री० शतं ग्रन्थीन्धत्ते धा-क । दूर्वायाम् । शत+धाच् ।
शतधामन् पु० शतं धामानि यस्य । विष्णौ ।
शतधार पु० शतं धारा अग्राणि यस्य । वज्रे शतधारायुक्ते त्रि० । 'वसोः पवित्रमसि शतधारम्'ति श्रुतिः ।
शतधृति पु० शतं धृतयोऽस्य । इन्द्रे, ब्रह्मणि, स्वर्गे च ।
शतपत्त्र न० शतं बहूनि पत्त्राण्यस्य । पद्मे ।

शतपत्त्री स्त्री० शतं पत्त्राणि दलान्यस्याः ङीप् । (सेओती) पुष्पवृक्षभेदे स्वार्थे कन् । तत्रैव । [त्मकग्रन्थभेदे ।
शतपथ पु० शतं पन्थानो यत्र अच् समा०। यजुर्वेदीयब्राह्मणा-
शतपथिक त्रि०शतपथं वेत्त्यधीते वा ठन्। शतपथब्राह्मणात्मक ग्रन्थाध्यायिनि ।
शतपद् न० शतं पदानि यत्र । ज्योतिषोक्ते नक्षत्रपादानुसारेण नामकरणोपयोगिप्रथमवर्णसूचके चक्रभेदे । शतं पादाः यस्याः पाद्भावः समा० ङीपि पद्भावः । कीटभेदे (कान्खाइ) स्त्री० ।
शतपद्म न० शतदलयुक्तं पद्मम् । शतदलकमले, श्वेतपद्मे च ।
शतपर्वन् पु० शतं पर्वाणि ग्रन्थयो यस्य । वंशे, इक्षुभेदे च कटुकायां,वचायां,दूर्वायां च स्त्री० । कन्। तासु,यवे च ।
शतपाद् स्त्री०शतं पादा अस्याः पाद्भावः। कीटभेदे(कान्खाइ)
शतपादिका स्त्री० शतं पादा मूलान्यस्याः । काकोल्याम् ।
शतपुष्पा स्त्री०शतं पुष्पाणि यस्याः।(सुलुफा) शाकभेदे(मौरी) क्षुपभेदे च । कन् । तत्रैव ।
शतप्रसूना स्त्री० शतं प्रसूनानि यस्याः । (सुलफा) शाके
शतप्रास पु० शतं प्रासा इव फलानि यस्य । करवीरवृक्षे ।
शतभिषज् स्त्री०शतं भिषज इव ताराः यस्य । शततारात्मके अश्विन्यादिषु चतुर्विंशे नक्षत्रे । शत भिषाप्यत्र स्त्री०।
शतभीरु स्त्री० शतं बह्वो वियोगिनो भीरवो यस्याः ब० त० । मल्लिकायाम् तद्दर्शने हि वियोगिनां कामोद्दीपनात् ततो भीरुत्वम् ।
शतमख पु० शतं मखा यज्ञा यस्य। इन्द्रे ।
शतमन्यु पु० शतं मन्यवो यज्ञा यस्य, शते दैत्येषु मन्युः क्रोधो वा यस्य । इन्द्रे ।
शतमान पु०न० शतेन मीयते मि-ल्युट् । पले, तत्परिमिते च
शतमारिन् पु० शतं मारयति मृ-णिच्-णिनि । विशिष्टचिकित्सके । [शतमुखयुक्ते त्रि० ।
शतमुखी पु० शतं मुखानि यस्याः ङीप् । संमार्जन्याम् ।
शतमूली स्त्री०शतं मूलान्यस्याः ङीप् । दूर्वायां, स्वनामख्यातायां लतायाञ्च ।
शतयष्टिक पु० शतं यष्ट्यो गुच्छा यस्य। शतगुच्छके हारभेदे
शतरुद्रीय न०शतं रुद्रा देवता यस्य । यजुर्वेदोक्ते रुद्राध्याये
शतरूपा स्त्री० शतं रूपाण्यस्याः । ब्रह्मणः पत्न्याम् ।
शतवीर्य्या स्त्री० शतं वीर्य्याणि यस्याः ब० व०। श्वेतदूर्वायाम् ।
शतवेधिन् पु०शतं विध्यति विध-णिनि । अम्लवेतसे ।
शतसहस्र न० शतगुणितं सहस्रम् शाक० । लक्षसङ्ख्यायाम् ।
शतसाहस्र त्रि० शतं सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः । लक्षसंख्याते ।
शतह्रदा स्त्री०शतं ह्रादाः शब्दायस्याः पृ०ह्रस्वः। विद्युति ।
शताक्षी स्त्री० शतमक्षीणीव पुष्पाण्यस्याः षच् समा० ङीप् । शतपुष्पायाम् दुर्गायाञ्च ।
शताङ्ग पु० शतमङ्गान्यवयवायस्य। रथे, तिनिसवृक्षे च ।
शतानन्द पु० शतमानन्दयति अण्। गोतमपुत्रे अहल्यागर्भजे मुनिभेदे । शतजनानन्दके त्रि० । [शतसैन्यवति त्रि०
शतानीक पु० शतमनीकानि यस्य । व्यासशिष्ये मुनिभेदे ।
शतार न० शतमाराण्यस्य। वज्रे ।
शतायुस् त्रि०शतमायुर्वर्षकालोऽस्य। शतवर्षमितवयस्के 'शतायुर्वै पुरुषः' इति श्रुतिः । [मूल्याम् इन्द्रभार्यायाम्
शतावरी स्त्री० शतमावृणोति आ+वृ अच् गौ०ङीप् । शत-
शतावर्त्त पु० शतमावर्त्ता यस्य। विष्णौ शतधा वर्त्तते णिनि । तत्रैव । [उत्तरलोपः । शतमूल्यां, शतपुष्पायाञ्च
शताह्वा स्त्री० शतं शतमूली शतपुष्पा चेति आह्वा यस्याः
शतिक त्रि० शतेन क्रीतः ठन् । शतेन क्रीते पदार्थे ।
शत्य त्रि० शतेन क्रीतः यत् । शतसंख्यातद्रव्येण क्रीते ।
शत्रु पु०शद-त्रुन् । रिपौ, राज्ञां विषयानन्तरस्थे नृपे,ज्योतिषोक्ते लग्नावधि षष्ठस्थाने, कामादिषु च । शातके त्रि०
शत्रुघ्न पु० शत्रून् हन्ति हन-क । दशरथात्मजे सुमित्रागर्भजे लक्ष्मणानुजे ।
शद शातने भ्वा०पर०सक०अनिट् । शीयते अशदत् । शत्स्यति
शद गतौ भ्वा०पर०सक०अनिट् । शीयते अशात्सीत् ।
शनकावलि(ली) स्त्री०शनैः कायति कै-क ष० तेषामावलिर्यत्र वा ङीप् । गजपिप्पल्याम् ।
शनपर्णी स्त्री०शणस्येव पर्णान्यस्याः पृ० षस्य नः । कटुक्याम्
शनि पु० शो-अनि किच्च । सूर्यपुत्रे छायागर्भजाते ग्रहभेदे, तत्स्वामिकदिने च ।
शनिवार पु०शनिस्वामिकोवारः । सूर्यादिवारमध्ये सप्तमे वारे
शनैश्चर पु० शनैश्चरति चर-अच् । शनिग्रहे तस्य ग्रहाणां मध्ये सर्वोपरिकक्षस्थितत्वात् बहुकालेनैकैकराशिभोगात् मन्दगतित्वम् ।
शनैस् अव्य० शण डैसि ष० नुक् च । मन्दे, अशैघ्र्ये च ।
शन्स हिंसायां स्तुतौ कथने च भ्वा०पर०सक सेट् क्त्वा वेट् । शंसति अशंसीत् । [शम्यति ते अशमीत् ।
शम आक्रोशे वा भ्वा०पक्षे दिवा०उभ०सक०अनिट् । शमति ते
शमथ पु० शम-अथन् । सत्यताकरणाय दिव्यभेदकरणे, यथा

एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यादित्यादि

शपन पु० शप-ल्युट् । शपथे ।

शप्त त्रि० शप-क्त । अभिशापग्रस्ते । उलपाख्ये तृणभेदे पु० ।

शफ न० शम-अच् पृ० मस्य फः । गवादीनां खुरे, वृक्षमूले च ।

शफर पु० स्त्री० शफं राति रा-क । (पुंटी) मत्स्यभेदे स्त्रीत्व पक्षे ङीप् । [ल्दत् त

शब्द शब्दकरणे अ०चु०उभ०सक०सेट् । शब्दयति ते अशश-

शब्द पु० शब्द-घञ् । ध्वन्यात्मके, वर्णात्मके च श्रोत्रेन्द्रियग्राह्ये आकाशादिस्थे गुणभेदे । [क ६त० । शब्दज्ञाने ।

शब्दग्रह पु० शब्दं गृह्णाति ग्रह-अच् । श्रोत्रेन्द्रियेऽत्रार्थे

शब्दब्रह्मन् न० शब्दात्मकं ब्रह्म । वेदात्मके, स्फोटात्मके च नित्ये शब्दरूपे ब्रह्मणि । [बाणभेदे ।

शब्दभेदिन् पु० शब्दानुसारेण भिनत्ति लक्ष्यम् णिनि ।

शब्दवेधिन् पु० शब्दानुसारेण विधति लक्ष्यं विध-णिनि । बाणभेदे, अर्ज्जुने च । [लक्षणादौ शक्तिरूपे सामर्थ्ये ।

शब्दशक्ति स्त्री०६त० । शब्दानामर्थाववोधकतारूपे अभिधा-

शब्दानुशासन न० अनुशिष्यतेऽनेन अनु+शास-ल्युट् ६त० । शब्दसाधुताज्ञापके व्याकरणे ।

शब्दालङ्कार पु० शब्दमालम्ब्यतोऽलङ्कारः । अलङ्कारशास्त्र-प्रसिद्धेऽनुप्रासादौ अलङ्कारे ।

शब्दित त्रि० शब्द-क्त । आहूते ।

शम शान्तौ अक० शान्तीकरणे सक० दि० शमा०पर०सेट् । शाम्यति अशमत्-अशमीत् । क्त्वा वेट् । [शमत्-त

शम आलोचने चु०उ०सक सेट् । शामयति-शमयति ते अशी-

शम पु० शम-घञ् । शान्तौ अन्तरिन्द्रियदमने ।

शमथ पु० शम-अथन् । शान्तौ ।

शमन पु० शमयति शम-णिच्-ल्यु । लोकानां पुण्यापुण्यफल-दातृत्वेन दण्डकारके यमे । शम-णिच्-भावे ल्युट् । शान्तीकरणे न० ।

शमनस्वसृ स्त्री० ६त० । यमुनायाम् ।

शमल न० शम-कलच् । विष्ठायाम् । [शिम्बायाञ्च ।

शमि(मी) स्त्री० शम-इन् वा ङीप् । (शांइ) वृक्षभेदे (शुंटि)

शमिन् त्रि० शाम्यति शम-णिनि । शान्ते ।

शमीक पु० शम-ईकन् । मुनिभेदे ।

शमीगर्भ पु० शमीगर्भ आधारत्वेनास्त्यस्य अच् । वह्नौ, विप्रे च

शमीधान्य न० शमी शिम्बैव धान्यम् । शिम्बात्मके माष-मुद्गादौ धान्ये ।

शमीपत्री स्त्री० शम्या इव पत्त्रमस्याः ङीप् । लज्जालुवृक्षे

शमीर पु० अल्पा शमी अल्पार्थे र 'क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति भाष्योक्तेः पुंस्त्वम् । क्षुद्रायां शम्याम् ।

शम्पा स्त्री० शं पाति पा-क । विद्युति ।

शम्पाक पु० शं शिवं पाके फले यस्य । आरग्वधे ।

शम्ब गतौ भ्वा पर०सक०सेट् । शम्बति अशम्बीत् ।

शम्ब पु० शम्ब-अच् । वज्रे मूषलग्रस्थितलौहे लौहकाष्ठाग्रस् अनुलोमकर्षणे, दरिद्रे च ।

शम्बर न० शम्ब-अरन् । जले धने, व्रते, चित्रे च । मृगभेदे दैत्यभेदे, मत्स्यभेदे, पर्व्वतभेदे, युद्धे, चित्रकवृक्षे, लोध्रे, अर्ज्जुनवृक्षे च पु० । श्रेष्ठे त्रि० ।

शम्बरकन्द पु० शम्बरः श्रेष्ठः कन्दो यस्य । वाराहीकन्दे ।

शम्बरचन्दन न० ६त० । शम्बरपर्व्वतजाते चन्दनभेदे ।

शम्बरसूदन पु० शम्बरमसुरं सूदयति हिनस्ति चु०सूद-ल्यु । कामदेवे ।

शम्बरारि पु०६त० । कामदेवे शम्बररिपादयोप्यत्र ।

शाम्बरी स्त्री० शम्बरं जलं वाहुल्येनास्त्यस्य अच् गौरा०ङीष् आखुपर्ण्याम् ।

शम्बल पु०न० शम्ब-कलच् । कूले, पाथेये, मत्सरे च ।

शम्बाकृत त्रि० शम्बं लाङ्गलपश्चात्कर्षणमाक्रियते शम्ब+कर्षणार्थे डाच्+कृ-क्त । अनुलोमेन द्विराकृष्टे क्षेत्रे ।

शम्बु(म्बू) पु०स्त्री०शम्ब-उन् ऊ वा । जलशुक्तौ (शामुक) गज-कुम्भान्तभागे च । रामायणप्रसिद्धे शूद्रतापसे, शङ्खे, दैत्यभेदे च पु० ।

शम्भ त्रि० शमस्त्यस्य शम्+भ । कल्याणयुक्ते ।

शम्भल पु०शम्भं कल्याणदायकं तीर्थं लाति-ला क । ग्रामभेदे यत्र कल्की भविष्यति तस्मिन् । कुट्टिन्यां स्त्री० गौरा०ङीष्

शम्भु पु० शम्+भू-डु । महादेवे ।

शम्भुतनय पु० ६त० । गणेशे, कार्त्तिकेये च शम्भुसुतादयोप्यत्र

शम्भुप्रिया स्त्री० ६त० । आमलक्याम् दुर्गायाञ्च ।

शम्भुवल्लभ न० ६त० । श्वेतपद्मे । महादेवप्रिये त्रि० ।

शम्या स्त्री० शम-यत् टाप् । युगकीलके ।

शय पु० शी-अच् । हस्ते, सर्पे, निद्रायां शय्यायां, पणे च ।

शयथ पु० शी-अथच् । अजगरसर्पे, मृत्यौ, वराहे, मत्स्ये च निद्राशीले त्रि० ।

शयन न० शी-ल्युट् । निद्रायाम्, शय्यायां, मैथुने च ।

शयनीय न० शी-अनीयर् । शय्यायाम् स्वार्थे कन् । तत्रैव ।

शयनैकादशी स्त्री० ६त० । आषाढशुक्लैकादश्याम ।

**शयालु** त्रि॰ शी-आलुच् । निद्राशीले । अजगरे,कुक्कुरे च पु॰
**शयित** त्रि॰ शी-कर्त्तरि क्त । निद्रिते । भावे-क्त । निद्रायां न॰
**शयु** पु॰ शी-उ । अजगरे सर्पे । उनन् । शयुनोऽप्यत्र ।
**शय्या** स्त्री॰ शी क्यप् । खट्वायाम् । [तृणभेदे च पु॰ ।
**शर** न॰ शृ-अच् । जले । वाणे दधिदुग्धाद्यसारे, इषुसाधने
**शरकाण्ड** पु॰ ६त॰ । शरस्तम्बे, तन्निमित्तकवाणे च ।
**शरज** न॰ शरात् दधिदुग्धसारात् जायते जन-ड । हैयङ्ग-वीने । शरवणे-जाते कार्त्तिकेये पु॰ ।
**शरजन्मन्** पु॰ शरवणे जन्म यस्य । कार्त्तिकेये ।
**शरट** पु॰शृ-अटन् । ककलासे, कुसुम्भशाके च ।
**शरण** न॰ शृ-ल्युट् । गृहे, रक्षके, रक्षणे, वधे, घातके च प्रसारण्यां स्त्री॰ टाप् ।
**शरणागत** त्रि॰ शरणमागतः आ+गम-क्त । शरणापन्ने ।
**शरणापन्न** त्रि॰ शरणमापन्नः आ+पद-क्त । शरणागते ।
**शरणार्थिन्** त्रि॰ शरणमर्थयते अर्थ-णिनि । शरणकामे ।
**श(स)रणि(णी)** स्त्री॰शृ(सृ)-अनि वा ङीप् । पथि, ङीबन्तस्तु जयन्त्याञ्च । [योग्ये ।
**शरण्य** त्रि॰ शरणाय साधुः यत् । शरणागतत्राणकरण-
**शरत्कामिन्** पु॰शरदि कामयते कम-णिनि । कुक्कुरे ।
**शरत्पद्म** न॰ शरदिव शुभ्रं पद्मम् । श्वेतपद्मे ।
**शरत्पर्व्वन्** न॰ ७त॰ । कोजागरपूर्णिमानिमित्तोत्सवे ।
**शरद्** स्त्री॰ शृ-अदि । वत्सरे, आश्विनकार्त्तिकमासात्मके ऋतौ च
**शरधि** पु॰ शरा धीयन्तेऽत्र धा-कि । तूणे । [पुङ्खाद्यन्ते ।
**शरपुङ्खा** स्त्री॰ शरस्येव पुङ्खा यस्य । नीलीवृक्षाकृतौ काण्ड-
**शरभ** पु॰ शृ-अभच् । 'अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टय' इत्यु-क्तलक्षणे मृगभेदे, करभे, वानरभेदे, उष्ट्रे च ।
**शरभू** पु॰ शरे शरवणे भवति भू-क्विप् । कार्त्तिकेये ।
**शरमय** त्रि॰ शरस्य विकारः मयट् । शरजाते पदार्थे ।
**श(स)रयु(यू)** स्त्री॰शृ(सृ)-अयु वा ऊङ् । अयोध्यानिम्नवाहिन्यां नद्याम् । [वृक्षभेदे च ।
**श(स)रल** त्रि॰ शृ(सृ)-अलच् । सुगमे, अकुटिलचित्ते (सरल)
**शरवणोद्भव** पु॰शरवणे उद्भवः उत्पत्तिस्थानमस्य । कार्त्तिकेये
**शरव्य** न॰ शरवे वाणाभिघाताय हितं शरु+यत् । लक्ष्ये, शरेण वेधनायोद्दिष्टे । [टस्य ड ल वा । (शराल) पक्षिभेदे ।
**शराटि(डि)(लि)** स्त्री॰ शरमनुलक्ष्य अटति अट-इन् पृ॰
**शराभ्यास** पु॰ ६त॰ । वाणमोचनशिक्षायाम् ।
**शरारु** त्रि॰ शृ-आरु । हिंस्रे । [धनुषि ।
**शरारोप** पु॰शराः आरोप्यन्तेऽत्र आ+रुह-णिच्-पुक्-घञ् च अच् ।

**शराव** पु शरं दध्यादिसारमवति अव अण् । मृण्मये-पात्र-भेदे, (शरा) कुडवद्वयपरिमाणे च । [नदीभेदे
**शरावती** स्त्री॰ शराः सन्त्यस्याम् मतुप् मस्य वः पूर्व्वदीर्घश्च ।
**शराश्रय** पु॰ ६त॰ । तूणे । [णामासनम् । तूणे ।
**शरासन** पु॰ शराः अस्यन्तेऽनेन अस-ल्युट् । धनुषि शरा-
**शरी** स्त्री॰ शीर्य्यते शॄ-ई । एरकातृणे ।
**शरीर** न॰ शॄ-ईरन् । प्रतिक्षणं चीयमाणे देहे ।
**शरीरक** पु॰ शरीरं कायति आत्मत्वेनाभिमन्यते कै-क । जीवे । स्वार्थे वुन् । शरीरकोऽप्यत्र । [त्रि॰
**शरीरज** पु॰शरीरात् जायते जन-ड । रोगे । देहजातमात्रे
**शरीरावरण** न॰ शरीरमावृणोति आ+वृ-युच् । देहव्या-पिनि चर्म्मणि । देहावरके त्रि॰। ल्युट् । देहाच्छादने न॰
**शरीरिन्** पु॰ शरीरमात्माभिमानाश्रयत्वेनास्त्यस्य इनि । जीवे
**शरु** पु॰ शॄ-उन् । क्रोधे, वज्रे, वाणे, आयुधे च । [आत्मने ।
**शरेष्ट** पु॰शृणाति कामिनं शॄ अच् शरः कामःतस्य इष्टः इष-क्त ।
**शर्करक** पु॰ शर्करायाः रसः अण् इत्याभावः शर्करः रस इव कायति मधुरत्वात् कै-क । मधुरजम्बीरे ।
**शर्करजा** स्त्री॰ शर्करात् जायते जन-ड । सिताखण्डे ।
**शर्करा** स्त्री॰ शॄ करन् कस्य नेत्त्वम् । खण्डविकारे (चिनि) उपलखण्डे, कर्परखण्डे च । शर्करा अस्त्यस्य मतुप् तस्य लुक् । शर्करावति देशे, रोगभेदे, शकले च ।
**शर्कराचल** पु॰ दानार्थं कल्पिते शर्करामये पर्व्वते ।
**शर्कराधेनु** स्त्री॰ दानार्थं कल्पिते शर्करामये धेन्वाकारे स्तूपे
**शर्करावत्** त्रि॰शर्कराः सन्त्यस्मिन् मतुप् मस्य वः । शर्करायुक्तदेशे
**शर्करिक** त्रि॰शर्कराः सन्त्यस्य ठन् । शर्करायुक्तदेशे इलच् । तत्रैव
**शर्द्ध** पु॰ शृध-घञ् । अपानवायूत्सर्गे । ल्युट् । तत्रैव न॰ ।
**शर्द्धञ्जहा** पु॰शर्द्धमपानवायूत्सर्गं जहाति हा-खश् मुम् च । माषे
**शर्व** हिंसायां गतौ च भ्वा॰प॰स॰सेट् । शर्वति अशर्वीत् ।
**शर्मद** त्रि॰ शर्म ददाति दा-क । सुखदायके । विष्णौ पु॰ ।
**शर्मन्** शॄ-मनिन् । सुखे, तद्वति त्रि॰ ब्राह्मणोपाधौ पु॰। [त्रि॰
**शर्मरा** स्त्री॰ शर्म-राति रा-क । दारुहरिद्रायाम् । सुखदायके
**शर्य्याति** पु॰ वैवस्वतमनोः पुत्रभेदे ।
**शर्व्व** हिंसे भ्वा॰पर॰सक॰सेट् । शर्वति अशर्वीत् ।
**शर्व्व** पु॰ शर्व-अच् । महादेवे ।
**शर्व्वर** पु॰ शर्व-अरन् । कामदेवे तमसि न॰ । [सन्ध्यायाञ्च ।
**शर्व्वरी** स्त्री॰ शॄ-वनिप् ङीप् वनो र च । रात्रौ हरिद्रायां,
**शर्व्वला** स्त्री॰ शर्व्व-घञ् तं शर्वं लाति ला-क । तोमरास्त्रे
**शर्व्वाणी** स्त्री॰ शर्व्वस्य पत्नी ङीप् आनुक् च । भवान्याम् ।

शल चालने भ्वा०आ०सक०सेट् । शलते अशलिष्ट ।
शल गतौ भ्वा०पर०सक०सेट् ज्वलादि० । शलति अशालीत्
शल श्लाघायां चु०आ०सक०सेट् । शालयते अशीशलत ।
शल वेगे भ्वा०पर०सक०सेट् । शलति अशालीत् ।
शल न० शल-अच् । शल्लकीलोम्नि (सजारुकांटा) ।
शलभ पु० शल-अभच् । कीटभेदे पतङ्गे ।
शलल न० स्त्री० शल-कलच् । शल्लकीलोम्नि (साजारुकांटा) स्त्रीत्वे गौ०ङीप् ।
शलाका स्त्री०शल-आकन् । शल्ये, मदनवृक्षे (मयना) शारिकायां, शल्लक्याम्, शरे, आलेख्यतूलिकायां, अस्थि च ।
शलाकापरि अव्य०अव्ययी० शलाकासाधनक्रीड़ायां पराजये
शलाटु त्रि० शल-आटु । अपक्वफले मूलभेदे । विल्वे च पु० ।
शलालु पु० शल-आलुच् । सुगन्धिद्रव्यभेदे । [पदार्थे
शलालुक त्रि० शलालुना क्रीतं कन् । शलालुद्रव्येण क्रीते
शल्क न० शल-क कस्य नेत्त्वम् । खण्डे, वृक्षवल्कले, मत्स्यत्वचि च(आंस) । [त्वचि च
शल्कल न० शल-कलन् कस्य नेत्त्वम् । मत्स्यवल्कले, वृक्ष
शल्कलिन् पु० शल्कलमस्त्यस्य इनि । मत्स्ये ।
शल्किन् पु० शल्कमस्त्यस्य इनि । मत्स्ये ।
शल्भ प्रशंसायां भ्वा०आ०सक०सेट् । शल्भते अशल्भिष्ट ।
श(शा)ल्मलि पु०शल-मलच् स्वार्थे इस् इञ् वा । शाल्मलिवृक्षे (शिमुल्) । [वृक्षे
शाल्मलि स्त्री० शल-मलिन् स्वार्थे इञ् वा ङीप् । (शिमुल)
शल्य न०शल-यत् । वाणे, तोमरे, क्ष्वेडे, वंशकविकायां, कीलके च
शल्यक पु० शल्यमिव कायति कै-क । मदनवृक्षे (मयना)
शल्यलोमन् न० शल्यमिव लोम । शल्लकीलोम्नि ।
शल्ल गतौ भ्वा०पर०सक०सेट् । शल्लति अशल्लीत् ।
शल्ल न० शल्ल-अच् । त्वचि, भेके पु० । स्वार्थे कन् । त्वचि न० शणवृक्षे पु० । (सजारु) पक्षिभेदे स्त्री० गौ०ङीप् ।
शल्लकद्रुव पु० शल्लकीद्रव इव स्वादुः । शिह्लके ।
शल्व पु० शल-व । शाल्वदेशे । [अशवीत्
शव विकारे गतौ च भ्वा०पर०सक०सेट् । शवति-अशावीत्-
शव पु०न० । शव-अच् । मृतदेहे गतप्राणे देहे । जले न० ।
शवकाम्य पु० शवं काम्यति शव+काम्यच् । कुक्कुरे ।
शवयान न० शववाह्यं यानम् । मृतदेहवाहनार्थे तल्पे ।
शवर न० शव-अरन् । म्लेच्छजातिभेदे । पानीये; शिवे च पु० तत्पत्न्यां स्त्री० ङीप् ।
शवरथ पु० शववाहनार्थं रथः । शववाहनार्थे याने ।

शवरलोध्र पु० शवरप्रियः लोध्रः । श्वेतलोध्रे ।
शवरालय पु०६त० । शवरावासस्थाने ।
शवल पु० शव-कलन् । कर्बूरवर्णे तद्वति त्रि० । तद्वर्णवत्यां धेनौ स्त्री० ।
शश प्लुतगतौ भ्वा०पर०सक०सेट् । शशति । अशाशीत्-अशशीत्
शश पु०शश-अच् । मृगभेदे (खरगोश) स्वार्थे कन् । तत्रैव ।
शशधर पु० शशं मृगभेदं धरति धृ-अच् । चन्द्रे, कर्पूरे च शशभृदादयोऽप्यत्र । [वोप्यत्र
शशलाञ्छन पु०शशः मृगभेदो लाञ्छनं यस्य चन्द्रे, शशाङ्काद-
शशविन्दु पु० राजभेदे, विष्णौ च ।
शशशिम्बिका स्त्री०शश शिम्बीतया कायति कै-क । जीवन्त्याम्
शशस्थली स्त्री० शशवासयोग्या स्थली । अन्तर्वेद्याम् देशभेदे
शशाण्डुलि पु० अडि-उलि ६त० । कर्कटीभेदे ।
शशाद पु० शशमत्ति अद-अण् । श्येनविहगे, ल्यु । तत्रैव ।
शशिकला स्त्री०६त० । चन्द्रस्य षोड़शभागे ।
शशिकान्त न०शशी कान्तो यस्य । कुमुदे । चन्द्रकान्तमणौ पु०
शशिन् पु० शशोऽस्त्यस्य इनि । चन्द्रे ।
शशिप्रभ न० शशिना प्रभा यस्य । कुमुदे ६त० । ज्योत्स्नायाम् ।
शशिभूषण पु०शशी भूषणं यस्य । महादेवे, शशिमण्डनादयोऽप्यत्र
शशिलेखा स्त्री० शशिनो रेखा रस्य लः । चन्द्रकलायाम् । शशिनो लेखेव अमृतास्रदत्वात् । गुडूच्याम् ।
शशिवाटिका स्त्री० शशिनोवाटीव इवार्थे । पुनर्नवायाम् ।
शशिशेखर पु०शशी शेखरं यस्य । महादेवेशशिमूर्द्धादयोऽप्यत्र
शशोर्ण न० ६त० । शशस्य लोम्नि ।
शश्वत् अव्य० शश-वति । नैरन्तर्ये पुनःपुनरित्यर्थे च ।
शष वधे भ्वा०प०सक०सेट् । शषति अशाषीत् अशषीत् ।
शष्कुल पु० शष-कुलच् कस्य नेत्त्वम् । (डहरकरमचा) वृक्षे अपूपभेदे, कर्णरन्ध्रे, 'अवलम्बितकर्णशष्कुली'ति नैषधम् मत्स्यभेदे च दन्त्यमध्योऽप्ययमत्रार्थे ।
शष्प न० शष-पक् । बालतृणे घासे । प्रतिभाक्षये पु० ।
शस वधे भ्वा०प०स०सेट् क्त्वा वेट् । शसति । अशासीत् अशसीत्
शस आशिषि भ्वा०आ०सक० इदित् सेट् । प्रायेणाङ्पूर्वः । आशंसते आशंसिष्ट ।
शस स्तवे अदा०स्वपा०प०अक०सेट् इदित् । शंस्ति अशंसत्
शसन न० शस-वधे ल्युट् । यज्ञार्थे पशुहनने ।
शस्त न० शन्स-क्त । कल्याणे तद्वति, स्तुते, प्रशस्ते च त्रि० ।
शस्त्र न० शस-ष्ट्रन् । लौहे,खड्गादौ अस्त्रे च स्वार्थे कन् । तत्रैव
शस्त्रकोपतरु पु० शस्त्रकोपस्य हितस्तरुः । महापिण्डीवृक्षे

शस्त्रजीविन् पु० शस्त्रेण जीवति णिनि । शस्त्राजीविनि ।
शस्त्रपाणि पु०शस्त्रं पाणौ यस्य । शस्त्रधारके आततायिभेदे 'शस्त्रपाणिर्धनापहः' इति स्मृतिः । [नकरे शिल्पिभेदे
शस्त्रमार्ज्ज पु०शस्त्रं मार्ष्टि मृज-अण् । (शिकलकर)शस्त्रमार्ज्ज
शस्त्राभ्यास पु० ६त० । शस्त्रप्रयोगशिक्षायाम् ।
शस्त्रायस शस्त्रयोग्यमयः अच्समा० । लौहभेदे(इस्पात) ।
शस्त्रिन् त्रि० शस्त्रमस्त्यस्य इनि । शस्त्रविशिष्टे ।
शस्त्री स्त्री० स्वल्पं शस्त्रं ङीप् । छुरिकायाम् ।
शस्प न० शस-प । बालतृणे घासे ।
शस्य न० शस-यत् । वृक्षादीनां फले । 'शस्यं क्षेत्रगतं प्रोक्त'-मित्युक्ते क्षेत्रस्थे धान्यादौ च । [शस्यनाशके त्रि० ।
शस्यध्वंसिन् पु० शस्यं ध्वंसयति ध्वन्स-णिच् णिनि । तद्वृक्षे
शस्यमञ्जरी स्त्री० ६त० । अभिनवधान्यादिशीर्षे ।
शस्यशूक न० । धान्यादेः शीर्षे ।
शस्यसम्बर पु० शस्यं संवृणोति सम्+वृ-अच् । सालवृक्षे ।
शस्यारु पु०शस्यस्यच्छति ऋ-उण् । क्षुद्रशमीवृक्षे (सेगुन)वृक्षे च
शाक पु०न०शक-घञ् । पत्रपुष्पादौ वृक्षभेदे पु० शक्तौ शिरीष वृक्षे, स्वराज्यावधि वत्सरप्रवर्त्तके राजभेदे, तदीये वत्सरे, च पु० हरितक्यां न० । श्यति सामर्थ्यं शो क तस्य नेत्त्वम् । 'मूलपत्रकरीराग्रे फलकाण्डाधिरूढकम् । त्वक् पुष्पं कवकञ्चैव शाकं दशविधं स्मृत'मित्युक्तेषु वृक्षादीनां पत्रादिषु न० 'अशाकभुक् सोऽरुगित्युद्गट ।
शाकचुक्रिका स्त्री० शाकेषु मध्ये चुक्रिका । चिञ्चायाम् ।
शाकट न० शकटाय हितम् अण् । शकटसम्बन्धियुगादौ । श्लेष्मातकवृक्षे, धववृक्षे च पु० ।
शाकटायन पु० व्याकरणकारके मुनिभेदे ।
शाकटिक पु० शकटेन चरति ठञ् । शकटेन गन्तरि ।
शाकटीन पु०शकटः परिमाणमस्य खञ् । विंशतितुलापरिमाणे
शाकतरु पु०शाकाख्यः तरुः । (सेगुण) वृक्षे । शाकवृक्षादयोऽप्यत्र
शाकपत्र पु० शाकः पत्त्रमस्य । शिग्रुवृक्षे ।
शाकबालेय पु० बलये हितम् ढक् शाकप्रधानो बालेयः । ब्रह्मयष्टिकायाम् ।
शाकम्भरी स्त्री० शाकैर्बिभर्त्ति भृ-खच् मुम्च । 'भरिष्यामि सुराः! शाकैरात्मदेहैः प्राणधारकैः । शाकम्भरीति विख्यातिमि'ति चण्डी निरुक्तायाम् दुर्गायाम् ।
शाकयोग्य पु०शाके तद्भक्षणे योग्यः । धन्याके । [वास्तूकशाके
शाकराज पु० शाकेषु राजते अच्,शाकानां वा राजा टच् ।
शाकविल्व पु०शाकोपि विल्व इव । वार्त्ताकौ स्वार्थे कन् तत्रैव
शाकवीर पु० शाकेषु वीरः वीर्य्याधायकत्वात् । वास्तूकशाके
शाकशाकट न० शाकस्य क्षेत्रं शाकटच् । शाकक्षेत्रे । शाक-टिनच् । अत्रार्थे ।
शाकश्रेष्ठ पु०शाकेषु श्रेष्ठः। वास्तूकशाके जीवन्त्यां वार्त्ताकौ स्त्री०
शाकाङ्ग न० शाकस्य तद्भक्षणस्याङ्गमुपयोगि । मरिचे ।
शाकाम्ल न० शाकमेवाम्लम् । वृक्षाम्ले ।
शाकाम्लभेदन न० शाकरूपम् अम्लं भिनत्ति भिद-ल्यु । चुक्रे (चुक्रोपालङ्क) ।
शाकालाबु स्त्री० शाकप्रधानालाबुः । अलाबुभेदे ।
शाकिनी स्त्री० शाकोऽस्त्यस्याः इनि । शाकभवनयोग्यायां भूमौ, देवीसहचरीभेदे च ।
शाकुन पु०शकुनं शुभाशुभसूचकं निमित्तमधिकृत्य कृतो ग्रन्थः अण् । शकुनज्ञानसाधने ग्रन्थे (काकचरित) । [घातके ।
शाकुनिक पु० शकुनेन पक्षिवधादिना जीवति ठञ् । पक्षि-
शाकुन्तलेय पु० शकुन्तलाया अपत्यं ढक् । दुष्मन्तात्मजे शकुन्तलागर्भजे भरते नृपे ।
शाक्त त्रि० शक्तिर्देवताऽस्य अण् । तन्त्रोक्त शक्तिदेवतोपासके
शाक्तीक पु० शक्तिः प्रहरणमस्य ईकक् । शक्त्या योद्धरि ।
शाक्य पु० शक-घञ् तत्र साधुः यत् । बुद्धे ।
शाक्यमुनि पु० शाक्यो मुनिः । बुद्धभेदे ।
शाक्यसिंह पु० शाक्य वंशे सिंह इव । बुद्धभेदे । [अशाखीत्
शाख व्याप्तौ भ्वा०पर०सक०सेट् घटि न ह्रस्वः । शाखति
शाख पु० शाख-अच् । कृत्तिकापुत्रे स्कन्दानुजे गणभेदे,ग्रन्थ-परिच्छेदे, सर्गस्थानीये ग्रन्थांशभेदे, वृक्षस्यावयवभेदे च (डाल)पक्षान्तरे, राशौ,लतायाम्,अन्तिके, वेदैकदेशे च स्त्री०
शाखाकण्ट पु० शाखाव्यापी कण्टः कण्टको यस्य । स्नुहीवृक्षे
शाखानगर न० शाखेव नगरम् । मूलनगरसमीपस्थे क्षुद्र-पुरे शाखापुरादयोऽप्यत्र ।
शाखामृग पु० शाखास्थो मृगः पशुः । वानरे ।
शाखाम्ला स्त्री० शाखायाम्ला । वृक्षाम्ले ।
शाखारण्ड पु० शाखायां वेदशाखायां रण्डः तद्विहित कर्म्मानाचरणात् । स्वशाखात्यागेन कर्मकर्त्तरि ।
शाखाल पु० शाखाः बाहुल्येन सन्त्यस्य लच् । वानीरवृक्षे ।
शाखाशिफा स्त्री० शाखारूढा शिफा मूलम् शाक० । वटा-दीनां शाखाजाते मूले । शिफामारभ्य शाखा । गुडूच्यादि लतायाम् । [म्लेच्छभेदे च ।
शाखिन् पु० शाखाऽस्त्यस्य इनि । वृक्षे । वेदैकदेशपति,नृपभेदे,
शाखोट पु०शाखा-व्याप्तौ ओटन् (श्याओड़ा) वृक्षे स्वार्थे कन् ।

तत्रैव। [जातिभेदे (शांखारी)।

**शाङ्खिक** पु० शङ्खस्तद्विकारवलयनिर्म्माणं शिल्पमस्य ठञ्।

**शाङ्कुष्ठा** स्त्री०स्यति शो-क शः अङ्कुष्ठ इव यस्याः। गुञ्जायाम्

**शाट** पु० शट-घञ्। वस्त्रे। स्त्रीत्वमपि गौ० ङीष्।

**शाटक** पु०न० शट-ण्वुल्। वस्त्रे स्त्रीत्वमपि टाप्।

**शाट्यायन** पु०मुनिभेदे, तेन प्रोक्तम् अण्। प्रक्रतहोमकर्म्मणि वैगुण्यसमाधानार्थं विहिते होमभेदे न०।

**शाठ्य** न०शठस्य भावः ष्यञ्। शठतायाम्।

**शाड** श्लाघायां भ्वा०आत्म० सक० सेट्। शाडते अशाडिष्ट

**शाण** न०शणेन निर्वृत्तम् अण्। शणसूत्रनिर्मिते वस्त्रादौ। शण-घञ्। (कष्टिपाथर) कषपाषाणे शस्त्रादीनां निकर्षणेन तीक्ष्णीकरणयन्त्रभेदे।

**शाणाजीव** पु० शाणमाजीवति आ+जीव-अण्। अस्त्रतीक्ष्णताकारके शिल्पिनि।

**शाणि** पु०शण-इण्। पट्टवस्त्रे शणेन निर्वृत्ता इञ् वा ङीप्। शणनिर्म्मिते पट्टिकावस्त्रे छिद्रवस्त्रे च।

**शाणित** त्रि० शण-णिच्-क्त। तीक्ष्णीकृते।

**शाण्डिल्य** पु० शण्डिलस्यापत्यम् यञ्। गोत्रप्रवर्त्तके भक्तिशास्त्रकारके मुनिभेदे, तत्प्रियत्वात्, विल्वे वह्निभेदे च।

**शात** न० शो-क्त। सुखे, तद्वति, छिन्ने, कृशे, दुर्बले, निशिते च त्रि० धुस्तूरे पु०।

**शातकुम्भ** न० शतकुम्भे भवः अण्। हिरण्ये। धुस्तूरे करवीरे च पु०। [धुस्तूरे पु०।

**शातकौम्भ** न० शतकुम्भे भवम् अण् द्विपदवृद्धिः। हिरण्ये

**शातन** न० शो-णिच्-तङ्च् ल्युट्। तनूकरणे, विनाशने च 'जायते पत्रशातनमि'ति मीमांसा।

**शातभीरु** पु०शाता दुर्बलाः प्रान्या भीरवो यस्याः। मल्लिकाभेदे

**शातला** स्त्री० शातं कार्श्यं लाति ला-क। (चामकषा) वृक्षे।

**शातव** पु० शत्रुरेव स्वार्थेऽण्। रिपौ। तस्य भावः संघोवा अण्। वैरे, रिपुसमूहे च न०।

**शाद** पु० शद-घञ्। कर्द्दमे, बालतृणे च।

**शादहरित** पु० शादेन हरितस्तृणयुक्तः। शाद्वले देशे।

**शाद्वल** पु० शादाः सन्त्यत्र ड्वलच्। बहुलतृणयुक्ते देशे।

**शान** भेदने भ्वा० उभ० सक० सेट् स्वार्थे सन्। शीशांसति ते अशीशांसीत् अशीशांसिष्ट।

**शान** पु० शान-घञ्। अस्त्रादीनां तीक्ष्णताकारके यन्त्रभेदे।

**शानी** स्त्री० शान-इन् ङीप्। इन्द्रवारुण्याम्।

**शान्त** त्रि०शम-क्त। शमयुक्ते, अभियुक्ते च शम-णिच्-क्त नि० शान्तिं गमिते त्रि०। निर्वेदस्थायिभावके रसभेदे पु०। लोमपादराजकन्यायां, ऋष्यशृङ्गपत्न्यां, शमीभेदे च स्त्री०।

**शान्तनव** पु० शान्तनोरपत्यम् अण्। भीष्मे, 'भीष्मः शान्तनव इति तत्तर्पणमन्त्रः।

**शान्तनु** पु० द्वापरयुगभवे चन्द्रवंश्ये प्रतीपराजपुत्रे नृपभेदे।

**शान्ति** स्त्री० शम-क्तिन्। कामक्रोधादिजये, विषयेभ्यो मनसो निवारणे, उपद्रवनिवारणे, निवारणे च।

**शान्तिक** त्रि० शान्तये हितम् ठक्। शान्तिकारके होमादौ।

**शाप** पु०शप-घञ्। 'अनिष्टं भूयादि'त्येवम् आक्रोशे, शपथे च

**शापास्त्र** पु० शाप एवास्त्रं यस्य। मुनौ।

**शाब्दबोध** पु० शब्देन निर्वृत्तः अण्। अन्वयबोधे शब्दज्ञानजन्ये पदार्थस्मृतिद्वारके ज्ञानभेदे।

**शाब्दिक** पु० शब्दं शब्दसाधुताज्ञापकं शास्त्रं वेत्त्यधीते वा ठक्। व्याकरणशास्त्राभिज्ञे। [जालादौ।

**शामित** न० शम-णिच् इतच्। पशुवधनस्थाने। [इन्द्र-

**शाम्बरी** स्त्री० शम्बरेण निर्वृत्ता अण् ङीप्। मायायाम्

**शाम्बविक** त्रि०शम्बुः पण्यमस्य ठक्। शाङ्खिके। (शांखारी)

**शा(म्बु)म्बूक** पु० श(म्बु)म्बूक+स्वार्थेऽण्। शम्बुके (शामुक)।

**शाम्भव** पु० शम्भोरयम् अण्। गुग्गुलौ, कर्पूरे, विषभेदे, शम्भुपुत्रे, मल्लिकाभेदे, देवदारुणि च। शिवसम्बन्धिनि, तदुपासके च त्रि०। दुर्गायां स्त्री० 'शाम्भवी कुपिता तस्ये'ति तन्त्रम्।

**शा(सा)यक** पु०शो(षो)-ण्वुल्। वाणे, खड्गे च।

**शार** दौर्बल्ये अद०चु०उभ०सक०सेट्। शारयति-ते अशशारत्

**शार** न० शार-अच्, शॄ-घञ् वा। कर्बूरवर्णे। तद्वति त्रि०।

**शारङ्ग** पु० शारं कर्बूरमङ्गं यस्य शक०। चातकपक्षिणि, हरिणे, गजे, भृङ्गे, मयूरे च।

**शारद** न० शरदि भवम्-अण्। श्वेतपद्मे। काशे, बकुले, हरिन्मुद्गे च पु०। शरद्भवमात्रे त्रि० शारं श्वेतपद्ममस्त्यस्याः अच्। सरस्वत्याम् स्त्री०। [आङ्के तत्कालजे रोगे पु०।

**शारदिक** न०शरदि भवं श्राद्धं रोगो वा ठञ्। शरत्काले भवे

**शारदीया** स्त्री० शरदि भवा छण्। शरत्काले कर्त्तव्यायां दुर्गापूजायाम्।

**शारि(री)** स्त्री० शॄ-इञ् वा ङीप्। पाशकादिगुटिकायां, पक्षिभेदे च'शारीं चरन्तीं सखि! मारये'ति नैषधम्। युद्धार्थं गजपर्याणे, व्यवहारभेदे, कपटे च। स्वार्थे कन् पक्षिभेदे।

**शारिफल** पु०न० शारेः फलमाधारः। शारिपट्टके पाशकक्रीडासाधने द्रव्ये (छक) स्वार्थे कन्। तत्रैव।

**शारिवा** स्त्री॰शारिरिव वनति वन-ड। श्यामालतायाम्।

**शारीर** त्रि॰ शरीरस्येदं अण्। देहसम्बन्धे सुखदुःखादौ तत्रोद्भवस्य पुनः अण्। वृषे पु॰। शरीरमात्मत्वेनाभिमन्यते अण्। जीवे। स्वार्थे क। जीवे। शारीरं दुःखं जीवं वा अधिकृत्य कृतो ग्रन्थः अण्। व्यासकृते वेदान्तसूत्रे चिकित्साङ्गे सुश्रुतग्रन्थाद्येकदेशे च।

**शारीरिक** त्रि॰ शरीरे भवः ठक्। देहजाते दुःखादौ।

**शारुक** त्रि॰ शॄ-उकञ्। हिंसके।

**शार्कर** त्रि॰शर्करा अस्त्यस्य अण्। शर्करायुक्ते देशे शर्कराया विकारः अण्। फाणिते, दुग्धफेणे च पु॰।

**शार्ङ्ग** त्रि॰शृङ्गस्य विकारः अण्। शृङ्गजाते पदार्थे। विष्णुधनुषि, धनुर्मात्रे च पु॰ आर्द्रके न॰।

**शार्ङ्गिन्** पु॰शार्ङ्गः अस्त्यस्य इनि। विष्णौ धन्विमात्रे त्रि॰।

**शार्दूल** पु॰ शॄ-ऊलञ् दुक् च। व्याघ्रभेदे, पक्षिभेदे, राक्षसभेदे, च उत्तरपदस्थः। श्रेष्ठार्थे।

**शार्दूलललित** न॰ अष्टादशाक्षरपादके छन्दोभेदे।

**शार्दूलविक्रीड़ित** न॰ ऊनविंशत्यक्षरपादके छन्दोभेदे।

**शार्व्वर** न॰ शर्वर्या इदम् अण्। अत्यन्ततमसि। रात्रिसम्बन्धिनि, घातुके च त्रि॰। [त्रिशालिष्ट।

**शाल** कथने भ्वा॰आ॰सक॰सेट् चङि न ह्रस्वः। शालते

**शाल** पु॰शल-घञ्। मत्स्यभेदे, प्राकारे, स्वनामख्याते, वृक्षभेदे, वृक्षमात्रे, दन्त्यादिस्तु वृक्षमात्रे 'रसालः सालः समदृश्यतासने'ति नैषधम्।

**शालग्राम** पु॰ शालानां वृक्षाणां ग्रामः समूहो यत्र। पर्व्वतभेदे तत्र जातः अण्। तत्र जाते विष्णोर्मूर्त्तिभेदे।

**शा(सा)लज** पु॰शा(सा)लात् जायते जन-ड। सर्जरसे (धुना)

**शालनिर्य्यास** पु॰६त॰। सर्ज्जरसे (धुना)। [वृक्षभेदे।

**शालपर्णी** स्त्री॰ शालस्येव पर्णान्यस्याः ङीप्। (शालपानी)

**शालभञ्जिका** स्त्री॰ शालेन भज्यते निर्मीयते भनुज-ण्वुल्। काष्ठनिर्म्मितपुत्तलिकायां, वेश्यायाञ्च। [लोध्रे।

**शालव** पु॰ शालः तन्निर्यास इव वलति वहिर्गच्छति वल-ड।

**शालवेष्ट** पु॰ शालस्य वेष्ट इव। सर्ज्जरसे (धुना)।

**शालसार** पु॰शालस्य सारः। हिङ्गुनि शालेषु सारः। वृक्षश्रेष्ठे

**शाला** स्त्री॰ शाल-अच्। गृहे, वृक्षस्य स्कन्दस्थशाखायाञ्च।

**शालाञ्चि** पु॰शाल इवाञ्चति अन्च-इन्। शाकभेदे (शाञ्चा)

**शालातुरीय** पु॰ शालातुरे भवः। तन्नामवासिनि मुनौ।

**शालानी** स्त्री॰शालमानयति आ+नी-ड गौ॰ङीप्। विदार्य्याम्

**शालामृग** पु॰ शालायां गृहे मृग इव। शृगाले।

**शालावृक** पु॰ शालायां गृहे, शाखायां वृक इव वा। कुक्कुरे, शृगाले, विड़ाले, मृगे, वानरे च।

**शालि** पु॰ शल+इञ्। कलमादिधान्ये, षष्टिकादिधान्ये, गन्धमार्जारे च।

**शालिका** स्त्री॰ शालिरिव कायति कै-क। विदार्य्याम्।

**शालिञ्च** पु॰ शालिं चमति चम-ड पृ॰ मुम्। शाकभेदे।

**शालिपर्णी** स्त्री॰ शालेरिव पर्णान्यस्याः ङीप्। माषपर्ण्याम्

**शालिवाहन** पु॰। विक्रमादित्यं हत्वा शकाब्दप्रवर्त्तके नृपभेदे

**शालिहोत्र** पु॰ शालयो हूयन्तेऽत्र हु-त्रन्। घोटके।

**शाली** स्त्री॰ शाल-अच् गौ॰ ङीप्। कृष्णजीरके।

**शालीन** त्रि॰ शालामर्हति ख। धृष्टे सलज्जे, निभृतेयाञ्च।

**शालु** न॰ शाल-उण्। शालूके, कषायद्रव्ये, चोरनामगन्धद्रव्ये च भेके पु॰। [जातीफले।

**शालूक** न॰ शाल-ऊकञ्। कुमुदादिमूले उकञ्। तत्र

**शालूर** पु॰ शाल-ऊरच्। भेके।

**शालेय** पु॰ शालायां भवं ढक्। मधुरिकायाम्।

**शालोत्तर** पु॰ ग्रामभेदे।

**शालोत्तरीय** पु॰ शालोत्तरे भवः। पाणिनिमुनौ।

**शाल्मल** पु॰ शाल-मलच्। (शिमुल) वृक्षे तच्चिह्नितद्वीपभेदे च

**शाल्मलि(ली)** पु॰ स्त्री॰ शाल-मलिच् वा ङीप् (शिमुल) वृक्षे

**शाल्मलिक** पु॰ शाल्मलिरिव कायति कै-क। रोहितकवृक्षे

**शाल्मलीफल** पु॰ शाल्मल्या इव फलमस्य। तेजफलवृक्षे।

**शाल्मलीवेष्ट** पु॰ शाल्मलीं वेष्टयति वेष्ट-अच्। शाल्मलीनिर्यासे ण्वुल्। तत्रैव।

**शाल्व** पु॰ शाल-व। देशभेदे।

**शाव** पु॰शव-घञ्। शिशौ स्वार्थे कन्। तत्रैव शवस्येदम् अण्। शवसम्बन्धे 'त्रिरात्रं शावमाशौच'मिति स्मृतिः।

**शावर** पु॰ शावयति विकारयति शव-णिच् अरन्। पापे, अपराधे, लोध्रद्रुमे च शवरेण प्रोक्तमण्। शवरकृते मीमांसाभाष्ये। शवरस्येदम् अण्। शवर सम्बन्धिनि त्रि॰।

**शावरी** स्त्री॰शवरस्य प्रिया अण्। शूकशिम्ब्याम्, विद्याभेदे च

**शाश्वत** त्रि॰ शश्वद् भवः अण्। सतते नित्ये।

**शाष्कुलिक** न॰ शष्कुलीनां सङ्घः ठञ्। शष्कुलीसमूहे।

**शास** आशंसायां भ्वा॰आ॰सक॰सेट् क्त्वा वेट्। प्रायेणाङ्पूर्व्वकः आशंसते आशंसिष्ट। [पूर्व्वः। आशास्ते आशासिष्ट

**शास** आशीर्वादे अदा॰ आ॰ सक॰ सेट् क्त्वा वेट्। प्रायेणाङ्

**शास** शासने अदा॰प॰द्विक॰सेट् क्त्वा वेट्। शास्ति अशासत्।

**शासन** न॰ शास-ल्युट्। निकृष्टस्य हितसाधनादौ प्रवर्त्तने।

**शासनहर** पु० शासनं हरति हृ-अच् । आज्ञाहारके दूते ।
**शासितृ** त्रि० शास-तृच् इट् । शासनकर्त्तरि ।
**शास्तृ** त्रि० शास-तृच् इडभावः । शासनकर्त्तरि ।
**शास्त्र** न० शिष्यतेऽनेन शास-ष्ट्रन् । हितानुशासने ग्रन्थे ।
**शास्त्रदर्शिन्** त्रि दृश-णिनि ६त०। शास्त्रज्ञे शास्त्रविदादयोऽप्यत्र
**शास्त्रिन्** त्रि० शास्त्रं वेत्त्यधीते वा इनि । शास्त्रज्ञे ।
**शास्त्रीय** त्रि० शास्त्रेण विहितः छ । शास्त्रोक्ते धर्म्मादौ ।
**शास्य** त्रि० शास-यत् । अनुशासनीये शिष्यादौ । [अशेष्ट ।
**शि** छेदने स्वा०उभ०सक०अनिट् । शिनोति शिनुते अशैषीत्
**शिंशपा** स्त्री० शिंशं पाति पा-क ष०। (शिशु) वृक्षे ।
**शि(सि)क्थ** न० सिच-थक् कुक् च ष० सस्य शोवा । (मोम) मधूच्छिष्टे । स्वार्थे कन् । तत्रैव । [कृते पदार्थे
**शिक्य** न० स्त्री० शिकं-यत्, शि-यत् कुक् च । (शिका) रज्जु
**शिक्यित** त्रि० शिक्य शिक्यस्थं करोति शिक्य+णिच्-कर्मणि क्त । शिक्याधारे स्थापिते पदार्थे ।
**शिक्ष** स्त्री० अभ्यासे भ्वा०आ०सक० सेट् । शिक्षते अशिक्षिष्ट
**शिक्षा** स्त्री० शिक्ष-अपय । अभ्यासे वर्णानामुच्चारणप्रदर्शके वेदाङ्गे ग्रन्थभेदे 'शिक्षा कल्पो व्याकरणमि'ति पु० ।
**शिक्षागुरु** पु०७त० । विद्यादातरि ।
**शिक्षित** त्रि०शिक्षा जाताऽस्य तार० इतच् शिक्ष-क्त वा। कृताभ्यासे, निपुणे, विज्ञे च ।
**शिख** गतौ भ्वा०पर०सक०सेट् इदित् । शिङ्खति अशिङ्खीत्
**शिख(खा)ण्ड** पु०शिखामभति अम-ड तस्य नेत्वम् ६त०वा शक० । मयूरपिच्छे, चूडायाञ्च ।
**शिखण्डक** पु० शिखण्ड इव कन् । काकपक्षे (कागजुल्फी) स्त्रीत्वमपि तत्र, सा च चूडायाञ्च ।
**शिखण्डिक** पु० शिखण्डोऽस्त्यस्य ठन् । कुक्कुटे ।
**शिखण्डिन्** पु० शिखण्डोऽस्त्यस्य इनि । मयूरे द्रुपदराजस्य पुत्रभेदे, विष्णौ च । यूथिकायां, गुञ्जायां च स्त्री
**शिखर** न० शिखा अस्त्यस्य अरच् आलोपः। पर्व्वताग्रे अग्रमात्रे च। वृक्षाग्रे पु०न०। पुलके, शुम्भाटयादौ, रत्नभेदे, च मूर्व्वायां स्त्री० ।
**शिखरिन्** पु० शिखरोऽस्त्यस्य इनि । पर्व्वते, कोयष्टौ, वन्दाके, वृक्षे, अपामार्गे, कुन्दुरुके, यावनाले च । रसालायां खाद्यभेदे, सप्तदशाक्षरपादकेच्छन्दोभेदे, मल्लिकायां रोमावल्यां च स्त्री०ङीप् । (कुकुरचुड़ा) क्षुपभेदे ।
**शिखलोहित** पु० शिखाव्यस्तं अच् तथाभूतः सन् लोहितः
**शिखा** स्त्री० शी-खक् तस्य नेत्वम् ह्र०। अग्निज्वालायां,मस्तकमध्यस्थकेशगुच्छे च 'कक्षोपस्थशिखां वह्नि'रिति स्मृतिः
**शिखाकन्द** न० शिखेव कन्दोऽस्य। गृञ्जने। [(देलकी)
**शिखातरु** पु० शिखायादीपशिखायास्तरुरिव । दीपवृक्षे ।
**शिखाधर** पु० शिखां चूड़ां धरति धृ-अच्। मयूरे, शिखाधारके त्रि० ।
**शिखामूल** न० शिखेव मूलमस्य । गृञ्जने, (गाजर) ।
**शिखालु** पु० शिखाव्यस्य आलुच् । मयूरशिखावृक्षे ।
**शिखावत्** पु० शिखा ज्वालाऽस्त्यस्य मतुप् मस्य वः । वह्नौ, केतुग्रहे,चित्रकवृक्षे च। शिखावति त्रि०मूर्व्वायां स्त्री०ङीप्
**शिखावर** पु० शिखां वृणोति वृ-अच् । पनसवृक्षे ।
**शिखावल** पु० शिखास्त्यस्य वलच् । मयूरे मयूरशिखावृक्षे च
**शिखिकण्ठ** न० शिखिनो मयूरस्य कण्ठस्तद्वर्णोऽस्त्यस्य अर्श आद्यच् । तुत्थे (तुंते) शिखिग्रीवादयोऽप्यत्र ।
**शिखिध्वज** शिखिनो वह्नेर्ध्वज इव । धूमे ।
**शिखिन्** पु० शिखा अस्त्यस्य इनि । मयूरे, वह्नौ, चित्रकवृक्षे, केतुग्रहे, कुक्कुटे, वृषे, अश्वे, अजलोम्नि, पर्व्वते, ब्राह्मणे, मेथिकायां,मयूरशिखावृक्षे च । शिखायुक्ते त्रि०
**शिखिप्रिय** पु० शिखिनं प्रीणयति प्री-क । लघुबदरे ।
**शिखिमण्डल** पु० शिखिनां मण्डलमिव यत्र। वरुणवृक्षे ।
**शिखिमोदा** स्त्री० शिखिनं मोदयति मुद-णिच्-अच् । अजमोदायाम् । [कुष्माण्डे ।
**शिखिवर्द्धक** पु० शिखिनं वर्द्धयति वृध-णिच्-ण्वुल् ।
**शिखिवाहन** पु० शिखी मयूरो वाहनं यस्य। कार्त्तिकेये ।
**शिग्रु** पु० शि-रक् गुक् च । (सजिना) वृक्षे शाकमात्रे च ।
**शिघ** आघ्राणे भ्वा०पर०सक०सेट् इदित् । शिङ्घति अशिङ्घीत्
**शिङ्घाण** न० शिघि-आनच् ष० णत्वम्। काचपात्रे लोहमले, नासिकामले, श्लेष्मणि च । स्वार्थे कन्। नासिकामले न०।
**शिज** अव्यक्तध्वनौ इदित् वा चु०उभ०पक्षे अदा०आ०सक० सेट् । शिञ्जयति ते शिङ्क्ते अशिशिञ्जत् त अशिञ्जिष्ट भ्वादिरप्ययं पर० इत्येके तेन शिञ्जति अशिञ्जीत् ।
**शिञ्जा** स्त्री०शिजि-अ । भूषणशब्दे । शिजि-अच् । धनुर्गुणे
**शिञ्जिनी** स्त्री० शिञ्जति शिजि-णिनि । धनुर्गुणे ।
**शिट** अनादरे भ्वा०पर०सक०सेट् । शेटति अशेटीत् ।
**शित** त्रि० शो-क्त । दुर्व्वले, शाणिते च ।
**शितद्रु** पु० शतं द्रवति द्रु-कु-नि० । (शतलुज) नदीभेदे ।
**शितशूक** पु० शितस्तीक्ष्णः शूको यस्य । यवे । [तद्गुणवति त्रि०
**शिति** पु० शि-क्तिच् । भूर्जपत्रवृक्षे, शुक्लवर्णे, कृष्णवर्णे च ।
**शितिकण्ठ** पु० । शितिः कण्ठो यस्य । शिवे,दात्यूहविहगे च

शितिचार पु० शितिः सन् चरति चर-घञ्। (सुषनि) शाके
शितिसारक पु०शितिः शुभ्रः सारो यस्य कप्। तिन्दुकवृक्षे
शिथिल त्रि०श्लथ-किलच् पृ०। श्लथे,अदृढ़े संयोगभेदे,मन्दे च
शिनि पु० शि-निक्। यदुवंश्ये, चत्रियभेदे यस्य सात्यकिर्नप्ता
शिप्र पु०शि रक् पुक् च। सरोवरभेदे, नदीभेदे स्त्री०।
शिफा पु०स्त्री० शि-फक्। वृक्षाणां जटाकारे मूले।
शिफाक पु० शिफेव इवार्थे कन्। पद्ममूले।
शिफाकन्द पु० शिफेव कन्दः। पद्ममूले।
शिफाधर पु० शिफां धरति धृ-अच्। शाखायाम्।
शिफारुह पु० शिफायां रोहति रुह-क। वटवृक्षे।
शि(सि)म्बा स्त्री० शाम्यति समति वा शम (सम) उम्बच् पृ० (छिमी) ख्याते पदार्थे चक्रमर्दे च।
शिम्बि(म्बी) स्त्री०शम-बि नि० वा ङीप्। शिम्बायाम्, (शिम्) लतायां, एरकायाञ्च, स्वार्थे कन् तत्रैव। [कन्। तत्रैव।
शिम्बिपर्णी स्त्री० शिम्बिरिव पर्णमस्याः। मुद्गपर्ण्याम् स्वार्थे
शिर न०श्रृ-क। मस्तके,पिप्पलीमूले, शय्यायाम्, अजगरे च।
शिरःफल पु० शिर इव फलमस्य। नारिकेले।
शिरःशूल न० शिरसः शूलमिव तापकत्वात्। रोगभेदे।
शिरज पु० शिरे जायते जन-ड। केशे।
शिरस् न० श्रृ-असुन् नि०। मस्तके, अग्रे च।
शिरसिरुह पु० शिरसि रोहति रुहक-अलुक् स०। केशे।
शिरस्क न० शिरसि कायति प्रकाशते कै-क। शिरस्त्राणे।
शिरस्त्र न० शिरस्त्रायते त्रै-क। शिरोरक्षके उष्णीषे। [त्रि०
शिरस्य पु० शिरसि भवः यत्। निर्मलकेशे शिरोजातमात्रे
शिरा स्त्री० श्रृ-क। नाड्याम् (शिर)।
शिरापत्त्र पु० शिरेव पत्त्रं यस्य। हिन्तालवृक्षे।
शिराल न० शिराऽस्त्यस्य लच्। कर्मरङ्गे शिरायुक्ते त्रि०।
शिरावृत्त न० शिरेव वर्त्तते वृत-क। सीसके।
शिरीष पु० श्रृ-ईषन्। स्वनामख्याते वृक्षे। [शालायाम्
शिरोगृह न० शिरःस्थ मुपरिस्थं गृहम्। (चिलेघर) चन्द्र-
शिरोधरा स्त्री० शिरोमस्तकं धरति धृ-अच्। ग्रीवायाम्।
शिरोधि स्त्री० शिरो धीयतेऽत्र धा-कि। ग्रीवायाम्।
शिरोमणि पु० स्त्री० शिरसि धार्य्यमणिः। शिरोधार्य्ये रत्ने चूड़ामणौ। स्त्रीपक्षे वा ङीप्। शिरोरत्नादयोऽप्यत्र।
शिरोरुजा स्त्री० शिरो रुजति व्यथयति रुज-क। सप्तच्छद-वृक्षे। इत०। मस्तकरोगे।
शिरोरुह पु० शिरसि रोहति रुह-क। केशे।
शिरोवल्ली स्त्री० शिरसः वल्लीव। मयूरचूड़ायाम्।
शिरोवृत्त न० शिर इव वृत्तं वर्तुलम्। मरिचे। [पामार्गे
शिरोवृत्तफल पु० शिरो वृत्तं मरिचमिव फलमस्याः। रक्ता-
शिरोवेष्ट पु० वेष्ट-घञ् शिरसो वेष्टः। उष्णीषे ल्युट्। तत्रैव न०।
शिल उञ्छे कणश आदाने तु०पर०सक०सेट्। शिलति अशेलीत्
शिल न० शिल-क। गृहीतशस्यात् क्षेत्रात्कणशआदानरूपायां वृत्तौ, पाषाणे, द्वाराधःस्थितकाष्ठखण्डे च स्त्री०।
शिलाकर्णी स्त्री० शिलेव कर्णमस्य ङीप्। शल्लकीवृक्षे।
शिलाकुट्टक पु० शिलां कुट्टयति कुट्ट-ण्वुल्। पाषाणभेदके अस्त्रभेदे। शिलया कुट्टति विलुप्तीकरोति। तापनभेदे।
शिलाज न० शिलातो जायते जन-ड। शैलेये गन्धद्रव्ये।
शिलाजतु न० शिलाजातं जतु। पर्वतजाते उपधातुभेदे।
शिलाञ्जनी स्त्री० शिला अज्यतेऽनया अनुज-ल्युट्। काला ञ्जनीवृक्षे।
शिलात्मज न० शिलाया आत्मज इव। लौहे।
शिलादद्रु पु० शिलाया दद्रुरिव। शैलेये गन्धद्रव्ये।
शिलाधातु पु० शिलाया धातुश्चरणधातुरिव शुभ्रत्वात्। श्वेतोपले, (खड़ी) पीतवर्ण-गैरिकभेदे च।
शिलापुत्त्र पु० शिलायाः पुत्त्र इव। (लोड़ा)। प्रस्तरखण्डे।
शिलापुष्प न० शिलायाः पुष्पम्। शैलेये गन्धद्रव्ये॥
शिलाभेद पु० शिलामपि भिनत्ति भिद-अण्। पाषाणभेदि वृक्षे, पाषाणभेदकास्त्रे च।
शिलाव्याधि पु० शिलाया व्याधिरिव। शैलेये गन्धद्रव्ये।
शिलासन न० शिलाया आसनम्। शैलेये गन्धद्रव्ये।
शिलासार न० शिलायाः सार इव। लौहे।
शिलि पु० शिल-कि। भूर्जपत्त्रवृक्षे द्वारस्थे काष्ठे (गोबराट) भेक्याञ्च छत्राकपुष्पे च स्त्री०ङीप्।
शिलीन्ध्र न० शिलीं धरति धृ-क पृ०मुम्। कदलीपुष्पे।
शिलीन्ध्रक न० शिलीन्ध्र इव कै-कन्। गोमयच्छत्राके।
शिलीपद पु० शिलीव पदमस्य। रोगभेदे (गोद)।
शिलीमुख पु०शिली शल्यं मुखमस्य। भ्रमरे, बाणे, युद्धे, जड़ीभूते च।
शिलोच्चय पु० शिलानामुच्चयो यत्र। पर्व्वते।
शिलोञ्छ पु०शिलेनोञ्छः उछि-घञ्। उपात्तशस्यात् क्षेत्रात् शेषावचयने। [शिलोञ्छादयोऽप्यत्र।
शिलोत्थ शिलाया उत्तिष्ठति उद्+स्था-क। शैलेये गन्धद्रव्ये
शिल्प न०शिल-पक्। चित्रकलादिकर्मसु। [चित्रादिकर्तरि।
शिल्पकारिन् त्रि० शिल्पं चित्रादिकलां करोति कृ-णिनि।

**शिल्पशाला** स्त्री० ६त०। चित्रकरादीनां चित्रकरणगृहे।
**शिल्पशास्त्र** न० शिल्पज्ञापनं शास्त्रम्। वास्तुविद्यादि ज्ञापके शास्त्रे।
**शिल्पिन्** त्रि० शिल्पं वेत्त्यधीते वा इनि। चित्रादिकर्मकरे।
**शिव** न० शी-वन् ह्र०। मङ्गले, सुखे, जले। सैन्धवे, सामुद्रे च लवणे, श्वेतटङ्कणे च। मङ्गलवति त्रि०। महादेवे, मोक्षे, वालग्रहे, वालुके, गुग्गुलौ, वेदे, पुण्डरीकवृक्षे, कृष्णधत्तूरे, पारदे, देवे, लिङ्गे, विष्कुम्भादिषु मध्ये विंशतितमे योगे च पु०। [यनार्थं गोष्ठे निखाते काष्ठे।
**शिवक** पु० शिव-इव इवार्थे कन्। कीलके गवां गात्रकण्डू-
**शिवकाञ्ची** स्त्री० ६त०। पुरीभेदे।
**शिवधर्मज** शिवधर्माज्जायते जन-ड। मङ्गलग्रहे।
**शिवचतुर्दशी** स्त्री० शिवप्रिया चतुर्दशी। फाल्गुनकृष्ण-चतुर्दश्याम्।
**शिवदारु** न० शिवो देवस्तदादिकं दारु। देवदारुवृक्षे।
**शिवदूती** स्त्री० शिवो दूतो यस्याः। दुर्गामूर्तिभेदे।
**शिवद्रुम** पु० शिवप्रियः द्रुमः। विल्ववृक्षे।
**शिवद्विष्टा** स्त्री० ३त०। केतक्याम्।
**शिवधातु** पु० ६त०। पारदे।
**शिवपुरी** स्त्री० ६त०। काश्याम्।
**शिवप्रिय** न०६त०। रुद्राक्षे, महादेववल्लभे त्रि०। वकवृक्षे, धत्तूरे, स्फटिके च पु०। दुर्गायां स्त्री०।
**शिवमल्लक** पु० शिवः कल्याणकरः मल्लइव कायति कै-क। अर्ज्जुनवृक्षे।
**शिवमल्ली** स्त्री० शिवस्य मल्लीव प्रिया। वकवृक्षे।
**शिवरात्रि** स्त्री० शिवप्रिया तदुपासनार्था रात्रिः। शिव-चतुर्दश्याम् माघोतः परस्यां कृष्णचतुर्दश्याम्। तद्रात्रौ हि शिवपूजनव्रतादिकं क्रियते इति तस्या रात्रेस्तत्प्रिय-त्वम् तद्दिवसकर्त्तव्ये व्रते च।
**शिवलिङ्ग** न०६त०। शिवस्य लिङ्गाकारे प्रस्तरादिमये पदार्थे।
**शिवलोक** पु० ६त०। कैलासनामके स्थाने।
**शिववल्लभ** त्रि० ६त०। महादेवप्रिये। शतपत्त्र्यां स्त्री०।
**शिववल्ली** स्त्री० शिवप्रिया वल्ली। लिङ्गिलतायां, श्रीवल्ल्याञ्च।
**शिववाहन** न० शिवं वाहयति वह-णिच्-ल्यु। वृषभे।
**शिववीज** न० ६त०। पारदे शिववीर्य्यादुत्पन्ने।
**शिवशेखर** पु० शिवस्य शेखर इव। धुस्तूरे, वकपुष्पे च।
**शिवसुन्दरी** स्त्री० ६त०। दुर्गायाम्।
**शिवा** स्त्री० शी-वन् नि०। मङ्गलवत्यां स्त्रियां, दुर्गायां, मुक्तौ, शृगाले, हरीतक्याम्, शमीवृक्षे, आमलक्यां, दूर्व्वायां, गोरोचनायाञ्च।
**शिवानी** स्त्री० शिवं कल्याणमानयति आ+नी-ड गौ० ङीष्। जयन्तीवृक्षे। शिवस्य पत्नी ङीप् आनुक् च। दुर्गायाम्।
**शिवापीड़** पु० ६त०। वकवृक्षे।
**शिवाफला** स्त्री० शिवाया इव फलं यस्याः। शमीवृक्षे।
**शिवालय** न० शिव आलीयतेऽत्र ली-अच्। श्मशाने ६त०। रक्ततुलस्यां महादेवगृहे च पु०।
**शिवास्मृति** स्त्री० शिवायाः स्मृतिर्यस्याः। जयन्तीवृक्षे तन्ना-मोच्चारणे हि जयन्तीनामकदुर्गायाः स्मरणम्। [वकवृक्षे
**शिवाह्लाद** पु० शिवमाह्लादयति आ+ह्लद-णिच्-अण्।
**शिवाह्वा** स्त्री० शिवस्येवाह्वा यस्याः। रुद्रजटावृक्षे।
**शिवि** पु० शि-वि नि० न गुणः। हिंस्रपशौ, भूर्जवृक्षे उशी-नरराजसुते नृपभेदे च। [(डुली)।
**शिविका** स्त्री० शिवं करोति शिव+णिच्-ण्वुल्। यानभेदे
**शिविर** न० शी+किरच् वुक च। कटके सैन्यनिवासस्थाने
**शिवेष्ट** पु० ६त०। वकवृक्षे दूर्व्वायां स्त्री०। महादेवप्रिये त्रि०
**शिशिर** न० शश-किरच् नि०। हिमे, माघफाल्गुनमास-द्वयात्मके ऋतुभेदे शीतले स्पर्शे च तद्वति त्रि०।
**शिशु** पु० शो-कु सन्वद्भावः द्वित्वम्। वालके स्कन्दे च।
**शिशुक** पु० शिशुरिव इवार्थे कन्। जलजन्तुभेदे (शुशुक)।
**शिशुगन्धा** स्त्री० शिशुः स्वल्पो गन्धो यस्याः। मल्लिकाभेदे
**शिशुचान्द्रायण** न० चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृत-मित्युक्ते व्रते। [स्त्री०।
**शिशुत्व** न० ६त०। शिशोर्भावः त्व। वाल्ये तल् शिशुताप्यत्र
**शिशुपाल** पु० चेदिदेशीयराजभेदे दमघोषात्मजे। [श्रीकृष्णे
**शिशुपालहन्** पु० शिशुपालं हतवान् हन-भूते क्विप्।
**शिशुमार** पु० शिशुं मारयति मृ-णिच्। जलजन्तुभेदे गगनस्थे ताराचक्रभेदे च।
**शिश्न** पु० शश-नक् नि०। मेढ्रे पुंचिह्नभेदे।
**शिश्विदान** त्रि० श्विद-कानच् द्वित्वम्। पापकारके।
**शिष** वधे भ्वा०पर०सक०सेट्। शेषति अशेषीत्।
**शिष** परिशेषीकरणे वा चु०उ०पक्षे भ्वा०प०सक० सेट्। शेष-यति ते शेषति अशीशिषत् त अशेषीत्। [च।
**शिष** विशेषे रुधा०प०सक०अनिट्। शिनष्टि अशिषत्। [धीरे
**शिष्ट** त्रि० शास-क्त। शान्ते, वेदवाक्ये विश्वासकरे, सुबोधे,
**शिष्टाचार** पु० शिष्टानामाचारः। सद्व्यवहारे।

**शिष्टि** स्त्री० शास-क्तिन् । आज्ञायां, शासने, ताड़ने च 'शिष्यशिष्टिरवधेने'ति स्मृतिः ।

**शिष्य** त्रि० शास-क्यप् । शिक्षणीये, छात्रे, उपदेश्ये च ।

**शि(सि)ह्लु** पु०सिह्-लक् नि०सस्य शो वा । गन्धद्रव्यभेदे स्वार्थे कन् । तत्रैव । [अशीकिष्ट ।

**शी** शयने अदा०आ०अक०सेट् । शेते अशयिष्ट । [शीकति

**शीक** सेके सर्पणे च भ्वा०आ०सक०सेट् चङि न ह्रस्वः ।

**शीक** आमर्षे सेके च चु० उभ० पक्षे भ्वा०प०सक० सेट् । शीकयति ते शीकति अशीशिकत्-त अशीकीत् ।

**शीकर** न० शीक-अरन् । सरलद्रवे, जलकणे, वायौ च ।

**शीघ्र** न० शिघि रक् पृ०। विलम्बाभावे त्वरिते च तद्वति त्रि०

**शीघ्रजन्मन्** पु० शीघ्रं जन्म यस्य । करञ्जवृक्षे ।

**शीघ्रपुष्प** पु० शीघ्रं पुष्पं यस्य । वकवृक्षे । [कर्त्तरि ।

**शीघ्रवेधिन्** पु० शीघ्रं विध्यति विध-णिनि । शीघ्रलक्ष्यवेधन-

**शीत** न० श्यै-क्त । शीतले, जले, हिमे च । वहुवारवृक्षे असनवृक्षे वेतसवृक्षे च पु० । शीतस्पर्शवति त्रि० ।

**शीतक** पु० शीतमिव करोति । दीर्घसूत्रिणि आलस्यहेतुना कार्य्याकरणाय शीतबाधामभिनीय सुस्थिते शीत+स्वार्थे कन् । शीतपदार्थे, शीतकाले, वृश्चिके च ।

**शीतकर** पु०शीताः शीतलाः करा यस्य । चन्द्रे । कर्पूरे च । शीतकिरणादयोऽप्यत्र त्रि० शीतकारके ।

**शीतकाल** पु०६त०। हिमर्त्तौ मार्गपौषमासद्वयात्मके काले ।

**शीतकुम्भ** पु० शीतं स्कुभ्नाति स्कुम्भ-अच् नि० । करवीरे ।

**शीतकृच्छ्र** पु० 'त्र्यहं शीतं पिबेत् तोयं त्र्यहं शीतं पयः पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्षपरस्त्र्यहमि'-त्युक्ते व्रते ।

**शीतचार** न० कर्म० । श्वेतटङ्कणे ।

**शीतगन्ध** न०शीतः शीतलः गन्धो यस्य । श्वेतचन्दने ।

**शीतगु** पु० शीता गावः किरणाः यस्य । चन्द्रे, कर्पूरे च ।

**शीतपर्णी** स्त्री० शीतं पर्णं यस्याः ङीप् । अर्कपुष्पिकायाम् ।

**शीतपल्लवा** स्त्री० शीतः पल्लवो यस्याः । भूमिजम्ब्वाम् ।

**शीतपाकिनी** स्त्री० शीते पाकोऽस्त्यस्याः इनि । काकोल्याम्

**शीतपाकी** स्त्री० शीतेन पाको यस्याः ङीप् । वाट्यालके, काकोल्याञ्च । [स्वार्थे कन् । शैलेये । अर्कवृक्षे च ।

**शीतपुष्प** पु० शीतं शीतवीर्य्यकरं पुष्पं यस्य । शिरीषवृक्षे

**शीतप्रभ** पु० शीतस्य हिमस्येव प्रभा यस्य । कर्पूरे ।

**शीतप्रिय** पु० ६त० । पर्पटे ।

**शीतफल** पु० शीतं शीतलवीर्य्यकरं फलमस्य । उदुम्बरे, गलौ च

**शीतवला** स्त्री० शीतं वलं च यस्याः । महासमङ्गायाम् ।

**शीतभानु** पु० शीताः शीतलाभानवोऽस्य । चन्द्रे, कर्पूरे च ।

**शीतभीरु** स्त्री०६त०। मल्लिकायाम् शीतभीते त्रि० ।

**शीतमञ्जरी** स्त्री० शीतकाले मञ्जरी यस्याः न कप् । शेफालिकायाम् ।

**शीतमूलक** न० शीतं शीतवीर्य्यकरं मूलमस्य कप् । उशीरे ।

**शीतरश्मि** पु० शीतारश्मयोऽस्य । चन्द्रे, कर्पूरे च ।

**शीतल** पु० शीतं लाति ला-क शीतमस्त्यस्य लच् वा । शीतस्पर्शे तद्वति त्रि० । मलयोद्भवे-चन्दने, शैलेये, पद्मके, मौक्तिके वीरणमूले, शैलेये च न० । अशनपर्ण्यां वहुवारवृक्षे, चम्पके, चन्द्रे, कर्पूरे, राले च पु० ।

**शीतलक** न० शीतलमिव इवार्थे कन् । श्वेतोत्पले मरुवके पु०

**शीतलच्छद** पु० शीतलः शीतलस्पर्शवान् छदोऽस्य । चम्पके कर्म० । शीतलपत्रे पु० । [वारिणि न०

**शीतलजल** न० शीतलं जलं यस्मात् । उत्पले कर्म०। शीतल

**शीतलवातक** पु० शीतलोवातो धातुभेदो यस्मात् । अशनपर्ण्याम् । तत्सेवने हि वायोः शीतलता ।

**शीतला** स्त्री० देवीभेदे जलजवृक्षभेदे च । तत ङीप् च ।

**शीतवल्क** पु० शीतः शीतकरः वल्कोऽस्य । उडुम्बरे ।

**शीतवीर्य्यक** पु० शीतं शीतलकरं वीर्य्यं यस्मात् । प्लक्षवृक्षे ।

**शीतशिव** न० शीतं शीतलमपि शिवम् । सैन्धवलवणे । मिश्रेकायां, शमीवृक्षे च स्त्री० । मधुरिकायाम् पु० ।

**शीतसह** पु० शीतं सहते सह-अच् । पीलुवृक्षे, नीलसिन्धुवारे च वासन्त्याम् स्त्री० । [कुटुम्बिन्यां, दूर्वायाञ्च ।

**शीता** स्त्री०श्यै-क्त । लाङ्गलपद्धतौ, रामपत्न्याम्, अतिवलायां

**शीतांशु** पु० शीताः अंशवो यस्य । चन्द्रे, कर्पूरे च । [त्रि०

**शीताङ्गी** स्त्री०शीतमङ्गमस्याः ङीप् । हंसपदीवृक्षे । शीतलदेहे

**शीतार्त्त** त्रि० शीतेन ऋतः । शीतालौ ।

**शीतालु** त्रि०शीत+अस्त्यर्थे आलुच् । शीतबाधायुक्ते ।

**शीतावला** स्त्री०शीतमावलयति आ+वल-णिच्-अण् । महासमङ्गायाम् । [काले ध्वनिभेदे ।

**शीत्कार** पु० शीदित्यस्य कारः शीत्+कृ-घञ् । स्त्रीणां रति

**शी(सी)त्य** त्रि०शी(सी)ताम् अर्हति यत् । हलकृष्टे क्षेत्रादौ ।

**शीधु** पु०न० । शी-धुक् । इक्षुरसजाते मद्यभेदे ।

**शीधुगन्ध** पु० शीधोरिव गन्धोऽस्य । वकुलवृक्षे ।

**शीन** त्रि०श्यै-क्त । घनीभूते घृतादौ । मूर्खे, अजगरे च पु० ।

**शीभ** कथने भ्वा०आ०स०सेट् चङि न ह्रस्वः। शीभते अशीभिष्ट

**शीर** पु० शी-रक् । अजगरसर्पे ।

शीर्ण त्रि० शॄ-क्त । कृशे, शुष्कताप्राप्ते च ।
शीर्णपत्र पु०शीर्णं पत्रमस्य । कर्णिकारवृक्षे, निम्बे, पट्टिकालोध्रे च । विशीर्णपत्रयुक्ते त्रि० । कर्म० विशीर्णे पर्णे न०
शीर्णपर्ण पु० शीर्णं पर्णमस्य । निम्बे, विशीर्णपत्रयुक्ते त्रि० कर्म० । विशीर्णे पर्णे न० । [स्वार्थे कन् । तत्रैव
शीर्णपुष्पी स्त्री० शीर्णं पुष्पमस्याः ङीप् । अवाक्पुष्प्याम् ।
शीर्णमाला स्त्री० शीर्णानां मालेव । पृश्निपर्ण्याम् । कर्म०। विशीर्णे माल्ये ।
शीर्णवृन्त न०शीर्णं वृन्तमस्य । (तरमुज) फलवृक्षे । [इत्यादि
शीर्ष न० शिरस् वा शीर्षादेशः । मस्तके । शमादौ शीर्ण्णः
शीर्षक न०शीर्षे कायति कै-क । शिरस्त्राणे (टोपर) शिरोऽस्थ्नि जयपराजयपत्रग्राह्यदण्डभेदे 'शीर्षकस्थेऽभियोक्तरी'ति स्मृतिः । स्वार्थे कन् । मस्तके न० । तेन कायति कै-क । राहुग्रहे । [तोऽहं त्वा'मिति भट्टिः ।
शीर्षच्छेद्य त्रि० शीर्षच्छेदमर्हति यत् । वध्ये 'शीर्षच्छेद्यम-
शीर्षण्य पु० शीर्षे वध्यते शीर्ष-यत् शीर्षन्नादेशः । शिरस्त्राणे । शीर्षभवः यत् । विशदकेशे पु० केशजाते त्रि० ।
शीर्षरक्ष न० शीर्षं रक्षति रक्ष-अण् । शिरस्त्राणे ।
शील समाधौ भ्वा० पर० अक० सेट् । शीलति अशीलीत् । 'सरसीः परिशीलितु'मिति नैषधम् ।
शील अभ्यासे अतिशायने च अद०चु०उभ०सक०सेट् । शीलयति ते अशिशीलत् त । [पु०
शील न०शील-अच् । स्वभावे, सद्वृत्ते, चरित्रे च । अजगरसर्पे
शीलन न० शील-ल्युट् । अभ्यासे, अतिशायने, प्रवर्त्तने च ।
शीलित त्रि० शील-क्त । अभ्यस्ते, चीर्णे च ।
शुक गतौ भ्वा०पर०सक०सेट् । शोकति अशोकीत् ।
शुक न० शुक-क । ग्रन्थिपर्णे, वस्त्रे, वस्त्राञ्चले च । व्यासपुत्रे, पक्षिभेदे शोनकवृक्षे च पु० ।
शुकच्छद न० शुकस्य छदइव छदो दलमस्य । ग्रन्थिपर्णे ।
शुकजिह्वा स्त्री०शुकस्येव जिह्वा पर्णमस्याः ।(शुयाठोंवा)वृक्षे
शुकतरु पु० शुकप्रियस्तरुः । शिरीषवृक्षे शुकद्रुमादयोऽप्यत्र ।
शुकदेव पु० व्यासपुत्रे ।
शुकनाशन पु० शुकं नाशयति नश-णिच्-ल्यु । दद्रुघ्ने ।
शुकनास पु०शुकस्य नासेव पत्रमस्याः । श्योनाकवृक्षे शुकतुल्यनासायुक्ते त्रि०। कादम्बरीग्रन्थप्रसिद्धे तारापीडन्टपमन्त्रिभेदे पु० ।
शुकपिण्डी पु० शुकानां प्रिया पिण्डीव । शुकशिम्ब्याम् ।
शुकपुच्छ पु० शुकस्य पुच्छइव । गन्धके इत०। शुकस्य पुच्छे पु०
शुकपुष्प पु० शुकइव हरित् पुष्पमस्य । शिरीषवृक्षे ।
शुकप्रिय पु०इत० । शिरीषवृक्षे, जम्ब्वां स्त्री० ।
शुकफल पु० शुकइव फलमस्य । अर्कवृक्षे ।
शुकवल्लभ पु०इत० । दाडिमवृक्षे इत०। तस्य प्रिये त्रि० ।
शुकशि(सि)म्बा स्त्री० शुकइव शि(सि)म्बा । कपिकच्छ्वाम् ।
शुकादन पु० शुकैरद्यते अद-ल्युट् । दाडिमे ।
शुकानना स्त्री०शुकस्याननमिव पत्रमस्याः । (शुयाटोंटी)वृक्षे
शुकोदर न०शुकस्योदरमिव । तालीशपत्रे इत०। शुकस्योदरे
शुक्त न० शुच-क्त । मांसे काञ्जिके, द्रवद्रव्यभेदे, 'शुक्तं यन्मधुरं कालवशादम्लत्वमागत'मित्युक्ते पदार्थे च 'दधि शुक्तेषु भोक्तव्य'मिति मनुः । निष्ठुरे, पूते, श्लिष्टे, दुर्ज्जने, अम्ले, च त्रि० चुक्रिकायां स्त्री० ।
शुक्ति स्त्री० शुच-क्तिन् । जलजन्तुभेदे (झिनुक) कपालखण्डे, शङ्खे, शङ्खनखे, नख्याम्, अर्शोरोगे, अश्वावर्त्तके, चक्षुरोगभेदे च । [कायाञ्च ।
शुक्तिका स्त्री० शुक्तिरेव कन् । (झिनुक) मुक्तास्फोटे, चुक्रि-
शुक्तिज न० शुक्तौ जायते जन-ड । मुक्तायाम् । [ङीप् ।
शुक्तिमत् पु०शुक्तिरस्त्यस्य मतुप् । पर्व्वतभेदे । नदीभेदे स्त्री०
शुक्र न०शुच रक् नि० कुत्वम् । मज्जजाते चरमधातौ, नेत्ररोगभेदे च । ग्रहभेदे, दैत्यगुरौ, अग्नौ, चित्रकवृक्षे, ज्यैष्ठमासे, विष्कम्भादिषु योगेषु मध्ये चतुर्विंशे योगे च पु० ।
शुक्रकर पु०शुक्रं वीर्य्यं करोति कृ-अच् । मज्जधातौ । वीर्य्यकारके त्रि० ।
शुक्रभुज् स्त्री०शुक्रं भुङ्क्ते भुज-क्विप् । मयूरजातिस्त्रियाम्
शुक्रला स्त्री० शुक्रं लाति ला-क । उच्चटावृक्षे ।
शुक्रशिष्य पु० इत० । दैत्ये असुरे ।
शुक्रिय त्रि० शुक्रोदेवताऽस्य तस्येदम् वा घ । शुक्रसंबन्धिनि तद्दैवते, यजुर्वेदीये 'ऋचं वाचमि'त्यादिके षट्त्रिंशत्तमे शान्त्यध्याये न० ।
शुक्ल न० शुच-लक् कुत्वम् । रजते, नवनीते, अक्षिरोगभेदे च । श्वेतवर्णे पु० । श्वेतवर्णवति शुद्धे च त्रि० ।
शुक्लकन्द पु० शुक्लः कन्दो यस्य । महिषकन्दे । अतिविषायां स्त्री० । कर्म० । श्वेते कन्दे ।
शुक्लकर्म्मन् त्रि० शुक्लं शुद्धं कर्म यस्य । पवित्रे शुभचरित्रे ।
शुक्लकुष्ठ न०कर्म० । श्वेतकुष्ठे (धवल) । [त्रि०
शुक्लदुग्ध पु० शुक्लं दुग्धमस्य । शृङ्गाटके । श्वेतनिर्यासवति
शुक्लधातु पु०कर्म० । कठिन्याम् (खड़ि)
शुक्लपक्ष पु० कर्म० । वृद्ध्यनुगुणचन्द्रकलाक्रियापक्षद्वयकालके

चान्द्रमासार्द्धे काले, श्वेतच्छदे, काके, वके च ।
**शुक्लपुष्प** पु॰ शुक्लं पुष्पमस्य । छत्राकवृक्षे,कुन्दवृक्षे, मरुवके च ।
श्वेतपुष्पवति त्रि॰ नागदन्त्यां स्त्री॰ङीप् । कर्म॰शुभ्रे पुष्पे न॰
**शुक्लपृष्ठक** पु॰ शुक्लं पृष्ठमस्य कप् । सिन्धुकवृक्षे । [त्रि॰
**शुक्लरोहित** पु॰ वर्णोवर्णेनेति कर्म॰ । श्वेतरक्ते वर्णे, तद्वति
**शुक्लला** स्त्री॰ शुक्लं लाति ला-क । उच्चटायाम् ।
**शुक्लवायस** पु॰ कर्म॰ । वके, श्वेतकाके च ।
**शुक्लशाल** पु॰कर्म॰ । गिरिनिम्बे, श्वेतवर्णवृक्षे च ।
**शुक्ला** स्त्री॰ शुक्ल+अर्श आद्यच् टाप् । सरस्वत्यां, शर्करायां, काकोल्यां, विदार्य्यां, स्नुह्यां, श्वेतवर्णवत्यां, स्त्रियाञ्च ।
**शुक्लाङ्गी** स्त्री॰ शुक्लमङ्गमस्याः ङीप् । शेफालिकायाम्, श्वेताङ्गयुक्ते त्रि॰ ।
**शुक्लापाङ्ग** पु॰ शुक्लः अपाङ्गो यस्य । मयूरे ।
**शुक्लाम्ल** न॰कर्म॰ । अम्लशाके ।
**शुक्लिमन्** पु॰ शुक्लस्य भावः इमनिच् । श्वेतवर्णे ।
**शुक्लोपला** स्त्री॰ कर्म॰ स अस्त्यस्याः अच् । शर्करायाम् ।
**शुङ्ग** पु॰ शम-ग तस्य नेत्त्वं नि॰अत उच्चञ्च । वटवृक्षे, आम्रातके, स्नूके च । पर्पटीवृक्षे धान्यादिस्नूके च स्त्री॰ ।
**शुङ्गाकर्म्मन्** न॰ शुङ्गैः वटपल्लवैः आ सम्यक् कर्म॰ यत्र । पुंसवनसंस्कारभेदे ।
**शुङ्गिन्** पु॰ शुङ्गोऽस्त्यस्य इनि । वटवृक्षे । शुङ्गवति त्रि॰ ।
**शुच्** स्त्री॰ शुचं-क्विप् । शोके । वा टाप् । तत्रैव ।
**शुच** शौचे क्लेदे च दिवा॰ उभ॰ अक॰ सेट् । शुच्यति ते अशुचत्-अशोचीत् अशोचिष्ट ।
**शुच** शोके भ्वा॰पर॰सक॰सेट् । शोचति अशोचीत् ।
**शुचि** पु॰ शुच-किन् । वह्नौ, चित्रकवृक्षे, ज्यैष्ठमासे, आषाढ़मासे शुद्धाचरणे, ग्रीष्मे, ऋतौ, शुद्धमन्त्रिणि, अग्निभेदे श्वेतवर्णे च । तद्वति त्रि॰ ।
**शुचिद्रुम** पु॰कर्म॰ । अश्वत्थवृक्षे ।
**शुचिमल्लिका** स्त्री॰कर्म॰ । नवमल्लिकायाम् । [अशुच्चीत् ।
**शुच्य** अभिषवे भ्वा॰पर॰सक॰ सेट् निष्ठा अनिट् । शुच्यति
**शुठ** गतिविघाते भ्वा॰पर॰सक॰सेट् । शोठति अशोठीत् ।
**शुठ** आलस्ये चु॰उभ॰सक॰सेट् । शोठयति ते अशूशुठत् ।
**शुठ** शोषने वा॰ चु॰उभ॰पत्ते भ्वा॰ पर॰सक॰सेट् इदित् । शुण्ठयति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत् ।
**शुण्टि(ण्ठी)** स्त्री॰ शुठि-इन् वा ङीप् । (शुंठ) । इत्ये ।
**शुण** गतौ तु॰पर॰सक॰सेट् । शुणति अशोणीत् । [स्त्री॰ ।
**शुण्ड** पु॰ शुण-ड तस्य नेत्त्वम् । मदनिर्झरे, गजहस्ते पु॰ स्त्रीपचे टाप् मद्यपानगृहे वेश्यायाम् सुरायां नलिन्यां कुट्टिन्याम् जलहस्तिन्याञ्च स्त्री॰।
**शुण्डार** पु॰ शुण्डा अस्त्यर्थे र । शौण्डिके, हस्तिनि च । अपकर्षे र । अपकृष्टशुण्डायाम् । लघु । हस्तिनि ।
**शुण्डी** स्त्री॰ शुण्डाकारोऽस्त्यस्याः अच् गौ॰ङीप् । (हातिशुडा) इत्ये । [पवित्रे, शुभ्रे च त्रि॰
**शुद्ध** न॰ शुध-क्त । सैन्धवलवणे, मरिचे च । केवले, निर्दोषे,
**शुद्धवल्ली** स्त्री॰कर्म॰ । गुडूच्याम्, पवित्रायां-लतायाञ्च ।
**शुद्धान्त** पु॰ शुद्धः अन्तः पर्य्यन्तो यस्य । अन्तःपुरे,उपचारात् तत्र स्थितायां राजयोषिति पु॰स्त्री॰ । 'शुद्धान्तसंभोगनितान्ततुष्टे इति नैषधम् ।
**शुद्धापह्नुति** स्त्री॰कर्म॰ । अर्थालङ्कारभेदे ।
**शुद्धि** स्त्री॰ शुध-क्तिन् । मार्ज्जने नैर्मल्यसम्पादने वैदिककर्मयोग्यतासम्पादकसंस्कारभेदे च ।
**शुद्धोदनि** पु॰ वौद्धभेदे ।
**शुध** शौचे शोधने, निःशेषभवने च दि॰पर॰सक॰अनिट् । शुध्यति अशुधत् । 'भक्तोहरः शुध्यति यद्गुणःस्यादिति ली॰
**शुन** गतौ तु॰पर॰सक॰सेट् । शुनति अशोनीत् ।
**शुन** पु॰ शुन-क । कुक्कुरे । इक् । तत्रैव । [मुनिभेदे ।
**शुनःशेफ** पु॰ शुनइव शेफोऽस्य अलुक्स॰ । विश्वामित्रशिष्ये
**शुनक** पु॰ शुनइव कन् । मुनिभेदे स्वार्थे कन् । कुक्कुरे ।
**शुनी** स्त्री॰श्वन्+स्त्रियां ङीप् । कुक्कुरयोषिति, कुष्माण्ड्यां च
**शुन्ध** शुद्धौ चु॰उ॰सक॰सेट् । शुन्धयति ते अशुशुन्धत् त ।
**शुन्ध** शुद्धौ अक॰ शुद्धीकरणे सक॰ भ्वा॰उभ॰सेट् । शुन्धति ते 'आपः शुन्दन्तुमैनसः' इति वेदमन्त्रः । अशुन्धीत् । अशुन्धिष्ट ।
**शुन्भ** दीप्तौ अक॰मर्दने च सक॰तु॰पर॰सेट् । शुभति अशुम्भीत् 'प्रागमाप्तनिशुम्भशाम्भवधनु'रिति वीरचरितम् ।
**शुभ** दीप्तौ अक॰हिंसने स॰तु॰सुचा॰प॰सेट् । शुभति अशोभीत्
**शुभ** दीप्तौ भ्वा॰आ॰अक॰सेट् । शोभते अशुभत् ।
**शुभ** न॰शुभ-क । मङ्गले,पद्मकाष्ठे च । शुभयुक्ते त्रि॰ । विष्कम्भादिषु मध्ये नवोविंशयोगे पु॰ । [रितिभट्टिः
**शुभंयु** त्रि॰शुभम्+अस्त्यर्थे युस् । शुभान्विते 'क्षितिपः शुभंयु'
**शुभगन्धक** न॰ शुभोगन्धोऽस्य । बोले ।
**शुभग्रह** प॰ शुभः शुभदायकः ग्रहः । सौम्यग्रहे गुरौ शुक्रे- अर्द्धाधिकचन्द्रे, पापग्रहायुक्ते बुधे च । [दुर्गायां स्त्री॰ ।
**शुभङ्कर** त्रि॰ शुभं करोति क-अच् मुम् च । मङ्गलकारके ।
**शुभद** पु॰ शुभं ददाति दा-क । अश्वत्थवृक्षे मङ्गलदातरि त्रि॰

**शुभ्रपत्री** स्त्री॰ शुभ्राणि पत्राण्यस्याः ङीप्। (शालपान) क्षुपे

**शुभा** स्त्री॰ शुभ-क। शोभायां, कान्तौ रोचनायां, गोरोचनायां, शम्यां,प्रियङ्गौ, श्वेतदूर्व्वायां,देवसभायाञ्च।

**शुभाञ्जन** पु॰ शुभ-क शुभम् अञ्जनं यस्मात्। शोभाञ्जनवृक्षे।

**शुभ्र** न॰ शुभ-रक्। अभ्रके,रौप्ये,काशीशे च। चन्दने, श्वेतवर्णे च पु॰। तद्वति त्रि॰।

**शुभ्रकर** पु॰शुभ्रः करोऽस्य। चन्द्रे, कर्पूरे च। शुभ्रकिरणशुभ्रांशुप्रभृतयोऽप्यत्र। [योषिति

**शुभ्रदन्ती** स्त्री॰ शुभ्रो दन्तो यस्याः ङीप्। पुष्पदन्तदिग्गज-

**शुभ्रालु** पु॰कर्म॰। महिषकन्दे।

**शुम्भ** पु॰ शुम्भ-अच्। दानवभेदे।

**शुम्भमर्दिनी** स्त्री॰ शुम्भं मृद्नाति मृद-णिनि। दुर्गायाम्।

**शुर** मारणे स्तम्भने च दि॰आ॰सक॰सेट्। शूर्यते अशोरिष्ट।

**शुल्क** कथने, सर्जने, वर्जने च चु॰उभ॰सक॰सेट्। शुल्कयति ते अशुशुल्कत् त।

**शुल्क** पु॰ न॰ शुल्काते अतिसृज्यते कर्म्मणि घञ्। घट्टादिदेये राजग्राह्यकरभेदे, वरपक्षात् कन्यापक्षीयैः ग्राह्ये धने स्त्रीधनभेदे, 'भगिनीशुल्कं सोदर्याणा'मिति स्मृतिः स्त्रीभ्यः सम्भोगार्थं देये धने, 'अशुल्कोपहृतायान्तु पिण्डदावोढुरेव ते' इति स्मृतिः पणे च।

**शुल्कस्थान** न॰६त॰। (घाटि) घट्टे, भूपानां क्रयविक्रययोग्यद्रव्यकरादानस्थाने।

**शुल्ल** न॰ शुल्ल-अच् पृ॰। ताम्रे, रज्जौ च।

**शुल्व** माने दाने च चु॰उभ॰सक॰सेट्। शुल्वयति ते अशुशुल्वत् त

**शुल्व** न॰ शुल्व-अच्। ताम्रे, रज्जौ च। जलसमीपे, आचारे, यज्ञकार्य्ये च।

**शुल्वारि** पु॰ ६त॰। गन्धके तस्य ताम्रादिजारकत्वात् तथात्वम्

**शुश्रूषण** न॰ श्रु-सन्-ल्युट्। सेवायाम्। युच्। तत्रैव स्त्री॰।

**शुश्रूषा** स्त्री॰ श्रु-सन्-अ। श्रवणेच्छायाम्, उपासनायाञ्च।

**शुष** शोषे दि॰प॰सक॰अनिट्। शुष्यति अशुषत्।

**शुष** पु॰ शुष-क। गर्त्ते, विले च।

**शुषि** स्त्री॰ शुष-इक्। शोषणे, विले च।

**शुषिर** न॰शुष-किरच्। छिद्रे,वंश्यादिवाद्ये च। सच्छिद्रे त्रि॰ मूषिके, अग्नौ च पु॰। नद्यां,नलीनामगन्धद्रव्ये च स्त्री॰

**शुष्क** त्रि॰ शुष-क्त। आतपादिना कृतशोषणे।

**शुष्कपत्र** न॰ शुष्कं पत्रमस्य। (नालता) शाकभेदे। कर्म॰। शुष्के पर्णे न॰।

**शुष्कल** न॰ शुष्कं शोषणं लाति ला-क। शुष्कमांसे।

**शुष्कवृक्ष** पु॰ कर्म॰। धववृक्षे।

**शुष्कवैर** न॰ शुष्कं फलशून्यं वैरम्। उद्देश्यशून्ये कलहे।

**शुष्कव्रण** पु॰ कर्म॰। (घेटा) किणरूपे व्रणे।

**शुष्काङ्ग** पु॰ शुष्कमङ्गमस्य। धववृक्षे (धगाछ)शुष्कावयवे त्रि॰. स्त्रियां ङीप्। सा च गैरिकायाञ्च।

**शुष्कार्द्रक** न॰ शुष्कमार्द्रकम्। शुण्ठ्याम् (शुट)।

**शुष्म** न॰शुष-मन् किच्च। तेजसि,पराक्रमे च। सूर्य्ये,अग्नौ, चित्रकवृक्षे, वायौ, पक्षिणि, अर्क्षिषि च पु॰।

**शुष्मन्** न॰ शुष-मनिन्। तेजसि, शौर्य्ये च। अग्नौ, चित्रकवृक्षे, च पु॰।

**शूक** पु॰न॰शो-ऊकक्। (शुङ्गा) तीक्ष्णाग्रे, शिखायाञ्च।[भेदे।

**शूककीट** पु॰ शूकाकाररोमयुक्तः कीटः। (शुयापोका) कीट-

**शूकधान्य** न॰ शूकयुक्तं धान्यम् शाक॰। यवादौ धान्ये।

**शूकपिण्डि(ण्डी)** स्त्री॰ शूकस्य पिण्डीव। शूकशिम्बयाम्

**शूकर** पु॰शू इत्यव्यक्तं शब्दं करोति कृ-अच् शूक+अस्त्यर्थे र वा। स्वनामख्याते पशौ।

**शूकरकन्द** पु॰ शूकर इव रोमशः कन्दोऽस्य। वाराहीकन्दे

**शूकरपादिका** स्त्री॰ शूकरस्येव पादाः मूलान्यस्याः ङीप् संज्ञायां कन्। कोलशिम्बयाम्। [वराहक्रान्तायाम्।

**शूकराक्रान्ता** स्त्री॰ शूकरेणाक्रम्यते स्म आ+क्रम-क्त ३त॰।

**शूकरी** स्त्री॰ शूकर आक्रामकत्वेनास्त्यस्याः अच् गौ॰ङीष्। वराहक्रान्तायाम्। शूकर+पुंयोगे ङीप् तज्जातिस्त्रियाम्

**शूकरेष्ट** पु॰ ६त॰। कसेरुनामकन्दे। वराहप्रियद्रव्ये त्रि॰।

**शूकवती** स्त्री॰ शूकस्तीक्ष्णाग्रमस्त्यस्याः मतुप् मस्य वः। कपिकच्छ्वाम्।

**शूकशिम्बा** स्त्री॰ शूकयुक्ता शिम्बा। कपिकच्छ्वाम्।

**शूकशिम्बि(म्बी)** स्त्री॰शूकयुक्ता शिम्बिः वा ङीप्। कपिकच्छ्वाम्

**शूका** स्त्री॰ शूकोऽस्त्यस्याः अच्। कपिकच्छ्वाम्।

**शूद्र** पु॰ शुच-रक् पृ॰चस्य दः दीर्घश्च। चतुर्थे वर्णे। शुचा द्रवति पृ॰। शोकहेतुकगतियुक्ते 'अहह्वारे त्वा शूद्रे'ति श्रुतिः शुचा द्रवणात् क्षत्रियस्यापि शूद्रत्वमिति शारीरकभाष्यम्। टाप् शूद्रा शूद्रजातिस्त्रियाम्। पुंयोगे ङीप्। शूद्रभार्य्यायाम्। [द्विजसेवादौ शूद्रकृत्यादयोऽप्यत्र।

**शूद्रकर्म्मन्** न॰ शूद्रस्य शास्त्रविहितं कर्म्म। शूद्रकर्त्तव्ये

**शूद्रप्रिय** पु॰ ६त॰। पलाण्डौ।

**शूद्रार्त्ता** स्त्री॰ शूद्रेणार्त्ता पीड़िता। प्रियङ्गौ।

**शूद्रावेदिन्** स्त्री॰ शूद्रां विन्दति विद-णिनि उप॰। शूद्रजातिस्त्रिया विवाहकर्त्तरि। 'शूद्रावेदी पतत्यत्रे'रिति स्मृ॰

**शूद्रासुत** पु०शूद्रायाः द्विजातिभिः ऊढायाः सुतः । द्विजाति जाते शूद्रजातिस्त्रिया सूते पुत्रभेदे ।
**सूना** स्त्री० श्वि-अधिकरणे-क्त । प्राणिवधस्थाने 'पञ्च सूना-गृहस्थस्ये'ति स्मृतिः (आलजिभ) अधोजिह्वायाञ्च ।
**शून्य** त्रि०शूनायै प्राणिवधाय हितम् रहस्स्थानत्वात् यत् । निर्ज्जनस्थाने, आकाशे, विन्दुमात्रे, अभावे च । असम्पूर्णे, ऊने, तुच्छे च त्रि० । [त्रि०
**शून्यमध्य** पु० शून्यमाकाशो मध्ये यस्य । नले । शून्यमध्ययुक्ते
**शून्यवादिन्** पु० शून्यमभावमात्रं सर्व्वकारणतया वदति वद-णिनि । बौद्धभेदे । [(फणिमनसा)
**शून्या** स्त्री०शून्यमस्त्यस्याः अच् । नल्याम् महाकण्ठके वाञ्च ।
**शूर** हिंसे स्तम्भे च दि०आत्म० सक०सेट् । शूर्य्यते अशूरिष्ट
**शूर** विक्रान्ते अ०चु०उभ०सक०सेट् । शूरयति ते अशुशूरत् त ।
**शूर** पु०शूर-अच् । वीरे, विक्रमवति, वसुदेवनामके, यादवे, सूर्य्ये, सिंहे, शूकरे, चित्रकवृक्षे, सावे, लिकुचे, मत्स्यभेदे च ।
**शूरण** पु० शूर-ल्यु (ओल) मूलभेदे, श्योनाकवृक्षे च ।
**शूरसेन** पु० शूरा सेना यत्र यस्य वा । देशभेदे, नृपभेदे च
**शूर्प** माने चु०उ०सक०सेट् । शूर्पयति ते अशुशूर्पत् त ।
**शूर्प** पु० शूर्प्यते धान्यादिकमनेन शूर्प-घञ् । (कुला) धान्य-स्फोटके, वंशमयपात्रे, द्रोणद्वयपरिमाणे च ।
**शूर्पकर्ण** पु०शूर्प इव कर्णोयस्य । गजे । [रावणभगिन्याम् ।
**शूर्पणखा(खी)** स्त्री०शूर्प इव नखा अस्याः णत्वम् वा ङीप् ।
**शूर्पपर्णी** स्त्री० शूर्प इव पर्णान्यस्याः ङीप् । शिम्बीभेदे ।
**शूर्म्मि** पु० सुष्ठु ऊर्म्मिरस्त्यस्याः ष० । लौहप्रतिमायाम् ।
**शू(सू)र्म्मि(र्म्मी)** स्त्री० सुष्ठु ऊर्मिः यस्याः वा णत्वम् वा ङीप् । लौहादिप्रतिमायाम् ।
**शूल** रुजायां भ्वा०प०अक०सेट् । शूलति अशूलीत् ।
**शूल** पु०न०शूल-क । रोगभेदे, व्यथायां, सुतीक्ष्णे अयःपात्रे, त्रिशूले च । चिह्ने, मुनिभेदे, विष्कम्भादिषु नवमयोगे च पु० ।
**शूलग्रन्थि** पु० शूलाकारः ग्रन्थिरस्य । मालादूर्व्वायाम् ।
**शूलघातन** न०शूलं रोगभेदं घातयति हन-णिच्-ल्यु । मण्डूरे
**शूलघ्न** पु० शूलं हन्ति हन-क । तुम्बुरुवृक्षे ।
**शूलद्विष्** पु० द्वि०त० । हिङ्गौ ।
**शूलधन्वन्** पु० शूलं धनुरायुधमस्य अनङ् समा० । शिवे ।
**शूलधर** पु० शूलं धारयति धारि-अच् । शिवे । शूलहस्ता-दयोऽप्यत्र ।
**शूलधारिन्** पु० शूलं धरति धृ-णिनि । शिवे दुर्गायां स्त्री०
**शूलधृष्** पु० शूलेन धर्षति धृष-क्विप् । शिवे । दुर्गायां स्त्री० ।

**शूलनाशन** न० शूलं नाशयति नश-णिच्-ल्यु । सौवर्च्चलवणे
**शूलपाणि** पु०शूलं पाणौ यस्य । शिवे । शूलहस्तादयोऽप्यत्र ।
**शूलशत्रु** पु० शूलस्य शत्रुः । एरण्डवृक्षे ।
**शूलहन्त्री** स्त्री० शूलं हन्ति हन-तृच् ङीप् । यवान्याम् ।
**शूलहृत्** पु० शूलं-हरति हृ-क्विप् । हिङ्गौ ।
**शूलाकृत** त्रि० शूलेन विद्धा कृतं पक्वम् शूल+डाच्+कृ-क्त । लौहादिकीलकेन विद्धा पक्वे मांसे । (काबाब) ।
**शूलिक** त्रि० शूलं पाकसाधनत्वेनास्त्यस्य ठन् । शूलाकृते ।
**शूलिन्** पु० शूलमस्त्यस्य इनि । शूलरोगयुक्ते, शूलास्त्रधारके त्रि०
**शूलिन** पु० शूलाकारं फलमस्त्यस्य इनन् । भाण्डीरवृक्षे ।
**शूलोत्खा** स्त्री०शूलेन उत्खयते उद्+खन-ड । सोमराज्याम्
**शूल्य** त्रि० शूले संस्कृतं यत् । शूलाकृते मांसे ।
**शूष** प्रसवे भ्वा० प०सक०सेट् । शूषति अशूषीत् ।
**शृ(सृ)गाल** पु० असृजं लाति ला-क पृ० (शेयाल) पशौ दैत्यभेदे, वासुदेवे, निष्ठुरे, खले च । [काटा) क्षुपभेदे ।
**शृगालकण्टक** पु० शृगालस्येव इव कण्टको यस्य । (शेयाल
**शृगालकोलि** पु० शृगाल इव कण्टकितः कोलिः । (सेया-कुल) क्षुपभेदे । [लाचे क्षुपभेदे ।
**शृगालघण्टी** स्त्री० शृगाल इव कण्टकिनी घण्टी । कोकि-
**शृगालजम्बु** स्त्री० शृगालप्रिया जम्बुः । गोडुम्बे (गोमुक) ।
**शृगालविन्ना** स्त्री० शृगालैर्व्विद्यते विद-क्त । पृश्निपर्ण्याम् ।
**शृगालिका** स्त्री० शृगालस्य भार्य्या ङीप् स्वार्थे कन् । शृगाल योषिति, शृगालीव इवार्थे कन् । भयात् पलायने ।
**शृगाली** स्त्री० शृगालवत्तत्पलायनं साहस्रेनास्त्यस्य अच् ङीप् । पलायने । [लोहसवे पादबन्धने च ।
**शृङ्खल** पु० शृङ्गात् प्राधान्यात् खल्यतेऽनेन पृ० । निगडे,
**शृङ्खली** स्त्री० शृङ्खलः तदाकारोऽस्त्यस्याः अच् गौ० ङीप् । कोकिलाक्षे वृक्षे पुंस्कटीवस्त्रबन्धने च । रोगौ स्त्री०टाप् ।
**शृङ्ग** न०शृ-गन् पृ० ह्रस्वः । पर्वतोपरिभागे, प्राधान्ये, कामोद्रेके, पश्वादेर्विषाणे, वाद्यभेदे च । (शिङा) महिषरस्त्रियां स्त्री०ङीप्
**शृङ्गक** पु० शृङ्गमिव इवार्थे कन् । जीरकवृक्षे ।
**शृङ्गकन्द** पु० शृङ्गमिव कन्दोऽस्य । शृङ्गाटके (पानीफल)
**शृङ्गज** न० शृङ्गे पर्व्वताग्रे जायते जन-ड । अगुरुचन्दने सरलवृक्षे पु० । शृङ्गजातमात्रे त्रि० ।
**शृङ्गमूल** पु० शृङ्गमिव मूलमस्य । शृङ्गाटके ।
**शृङ्गमोहिन्** पु० शृङ्गाय कामोद्रेकाय मोहयति मुह-णिच्-णिनि । चम्पके । [(गाडरशिङ्ग)
**शृङ्गला** स्त्री०शृङ्गं तदाकारफलं लाति ला-क । अजशृङ्ग्याम्

**शृङ्गवत्** पु० शृङ्गं प्राशस्त्येनास्त्यस्य मतुप् मस्य वः । भारतवर्षस्य 'नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः' इत्युक्ते सीमापर्वतभेदे । शृङ्गयुक्ते त्रि० ।

**शृङ्गवेर** न० शृङ्गमिव वेरमवयवो यस्य । आर्द्रके, शुण्ठ्याम्, रामभित्रगुहचण्डालस्य पुरे च । स्वार्थे कन् । आर्द्रके

**शृङ्गवेराभमूलक** पु० शृङ्गवेरेण तुल्यं मूलमस्य कप् । एरकावृक्षे ।

**शृङ्गाट** पु० शृङ्गं प्राधान्यमटति अट-अण् । उत्तरस्थपर्वतभेदे चतुष्पथे, जलकण्टकिवृक्षे च तत्फले न० । (पानीफल) स्वार्थे कन् । तत्र, चतुष्पथे, अलङ्कारोक्तविन्यभेदरूपे शब्दालङ्कारे च ।

**शृङ्गार** पु० शृङ्गं कामोद्रेकमृच्छत्यनेन ऋ-अण् । नाट्योक्ते रसभेदे लवङ्गे सिन्दूरे । चूर्णे च शृङ्गं कारणत्वेन ऋच्छति अण् । कालागुरुणि आर्द्रके च । शृङ्गं प्राधान्यमृच्छत्यनेन अण् । भूषणे, गजभूषणे च स्वार्थे कन् । सिन्दूरे ।

**शृङ्गारिन्** पु० शृङ्गारः जन्यत्वेनास्त्यस्य इनि । पूगे । तत्फलभक्षणे हि कामोद्रेकइति तथात्वम् । गजे च । सुवेशे त्रि०

**शृङ्गिक** न० शृङ्गाकारोऽस्त्यस्य ठन् । विषभेदे । अतिविषायां स्त्री०

**शृङ्गिण** पु० शृङ्गं प्राधान्येनास्त्यस्य इनन् । मेषे ।

**शृङ्गिन्** पु० शृङ्गमस्त्यस्य इनि । मेषे, भारतवर्षस्य सीमापर्वतभेदे, पर्वतमात्रे, मुनिभेदे, वृक्षे च । शृङ्गयुक्ते त्रि० धेन्वां स्त्री० ङीप् ।

**शृत** त्रि० शृ-क्त । पक्वे ।

**शृध** अपानशब्दे भ्वा०आ० लुङि लृटि लृङि च उ०अक०सेट् क्त्वावेट् इत्ता० । शर्द्धते अशृधत् शर्त्स्यति शर्द्धिष्यते ।

**शृध** छेदने भ्वा०उ०स०सेट् क्त्वावेट् । शर्द्धति ते अशर्द्धीत् अशर्द्धिष्ट

**शॄ** हिंसने क्र्या०प०सक०सेट् । शृणाति अशारीत् । शीर्णः

**शेखर** पु० शिखि-गतौ अरन् पृ० । शिखायां, मूर्द्धस्थितमाल्ये, च । वन्दायां स्त्री० ।

**शेप** पु० शी-पन् । शेफे शिश्ने । शयनकर्त्तरि त्रि० ।

**शेफ** पु०न० । शी-फन् । शिश्ने शी-असि फुक् च शेफोऽप्यत्र न० ।

**शेफालिका** स्त्री० शेरते इति शेफाः अलयो यत्र कप् । (शिउलि) पुष्पवृक्षे । [शेफालिकायाम् ।

**शेफाली** स्त्री० शेफाः शयनशालिनः अलयो यत्र ङीप् ।

**शेमुषी** स्त्री० शी-विच् शेः मोहस्तं मुष्णाति मुष-क । बुद्धौ ।

**शेल** गतौ चालने च भ्वा०पर०सक०सेट् । शेलति अशेलीत् चङि न ह्रस्वः ।

**शेलु** पु० शेल-उण् । बहुवारवृक्षे ।

**शेव** पु० शी-वन् । पुंचिह्ने शिश्ने ।

**शेवधि** पु० शेः धनादिमोहस्तस्य अवधिः । 'पद्मोऽस्त्रियां महापद्मः शङ्खोमकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयोनवे'त्युक्ते नवविधे निधौ । [(शेओला)

**शेवल** न० शी-विच् तथाभूतः सन् वलते अच् । शैवाले ।

**शेवाल** न० शेते विच् शेः-सन् वलते घञ् । शैवाले ।

**शेष** पु० शिष-अच् । अनन्ते सर्पराजे सर्पभेदे, अवशेषे च ।

**शेषा** स्त्री० शिष-घञ् । निर्माल्यमाल्यादौ 'शेषामिव भर्त्तुराज्ञामिति, कुमारः ।

**शैक्ष** पु० शिक्षां तन्नामग्रन्थमधीते वेत्ति वा अण् । शिक्षाध्याध्यायिनि, तद्वेत्तरि च । कन् । शिक्षकोऽप्यत्र ।

**शैखरिक** पु० शिखरे प्राचीरादग्रे भवः ठक् । अपामार्गे ।

**शैखरेय** पु० शिखरे भवः ढक् । अपामार्गे ।

**शैत्य** न० शीतस्य भावः ष्यञ् । शीतलत्वे ।

**शैथिल्य** न० शिथिलस्य भावः ष्यञ् । अदृढसंयोगभेदे ।

**शैनेय** पु० शिनेर्गोत्रापत्यम् ढक् । सात्यकिनाम्नि यादवे ।

**शैल** न० शिलायां भवः अण् । शैलेये गन्धद्रव्यभेदे । स्वार्थे कन् । तत्र, शिलाजतुनि च । शिलाः सन्त्यस्य प्रज्ञा० अण् । पर्वते पु० ।

**शैलगन्ध** न० शैलस्य शैलजस्येव गन्धोऽस्य । शावरचन्दने ।

**शैलज** न० शैले पर्वते जायते जन-ड । स्वनामख्याते गन्धद्रव्यभेदे । गजपिप्पल्याम् दुर्गायाञ्च स्त्री० ।

**शैलधर** पु० शैलं गोवर्द्धनपर्वतं धरति धृ-अच् । श्रीकृष्णे ।

**शैलपत्त्र** पु० शैलमिव सुगन्धि पत्त्रमस्य । विल्ववृक्षे ।

**शैलभित्ति** पु० शैलं भिनत्ति भिद्-क्तिच् । टङ्के पाषाणदारणास्त्रे

**शैलराज** पु० शैलानां नगानां राजा टच् समा० । हिमाचले

**शैलवीज** पु० शैलं तत्पर्यन्तं दूरं धावति अण् शैलं वीजं यस्य । भल्लातके ।

**शैलशिविर** न० शैलानां नगानां शिविरमिव । समुद्रे ।

**शैलसार** पु०न० शैलस्य सारइव । शिलाजतुनि ।

**शैलसुता** स्त्री०६त० । पार्वत्याम् ।

**शैलाग्र** न० शैलस्याग्रम् । पर्वतशृङ्गे ।

**शैलाज** न० शिलायां जायते जन-ड स्वार्थेऽण् । शैलजे ।

**शैलाट** पु० शैलं पर्वतमटति अट-अण् । सिंहे, किराते, शुक्लवर्णकाचे, देवले च ।

**शैलादि** पु० शिलादस्यापत्यम् इञ् । शिवपार्श्वचरे नन्दिनि ।

**शैलालिन्** पु० शिलालिना मुनिना प्रोक्तं नटसूत्रमधीयते णिनि । नटे शैलूषे ।

**शैली** स्त्री॰शीलमेव स्वार्थे अण् ङीप्। चारित्रे,'आचार्याणा मियं शैली यत्साभाव्येनाभिधाय विशेषेण विवृणोतीति माहुः। [तालधारके च।

**शैलूष** पु॰ शिलूषस्यापत्यम् अण्। नटे, विल्वद्रुमे, धूर्ते,

**शैलूषिक** पु॰ शैलूषं तद्वृत्तिमन्वेटा ठक्। 'इत्यन्वेषी नटानान्तु स तु शैलूषिकः स्मृत' इत्युक्ते नटवृत्त्यन्वेषिणि नट प्रधाने, तत्पत्न्यां स्त्री॰ ङीप् 'नटीं शैलूषिकीं चैव रजकीं वेणुजीविनीम्। गत्वा चान्द्रायणं कुर्यादि'ति स्मृतिः।

**शैलेन्द्र** पु॰शैलः इन्द्र इव। हिमालये। ६त॰। शैलेशादयोऽप्यत्र

**शैलेन्द्रज** पु॰ शैलेन्द्रे हिमालये जायते जन-ड। भूर्जद्रुमे।

**शैलेय** न॰ शिलायां भवः ढक्। शैलजाख्ये गन्धद्रव्यभेदे पर्व्वतजातमात्रे त्रि॰। सिंहे, भ्रमरे च पु॰।

**शैलोद्भवा** स्त्री॰ शैलं पर्व्वतमुद्भिद्य भवति भू-अच्। क्षुद्र-पाषाणभेदिनि द्रुमे पार्व्वत्याञ्च।

**शैव** न॰ शिवमधिकृत्य कृतो ग्रन्थः अण्। वेदव्यासप्रणीते शिवप्रभाववर्णनात्मके महापुराणभेदे। शिवो देवताऽस्य अण्। शिवभक्ते त्रि॰। तस्येदमण्। शिवसम्बन्धिनि त्रि॰। शैवले न॰। [लच्छतामि'ति नैषधम्।

**शैवल** न॰ शी-वलच्। पद्मकाष्ठे, शैवाले च 'वहतो वह्रशैव-

**शैवलिनी** स्त्री॰ शैवलानि सन्त्यस्याः इनि। नद्याम्।

**शैवाल** न॰ शी-वालन् स्वार्थे अण्। (शेओयाला) जलजाते पदार्थभेदे।

**शैव्य** पु॰शिवेर्गोत्रापत्यम् ञ्य। शिविगोत्रजे राजभेदे 'शैव्यश्च नरपुङ्गव' इति गीता। शिविनोऽधिगतः ञ्य। घोटक-मात्रे, श्रीकृष्णस्य घोटके च।

**शैशव** न॰ शिशोर्भावः अण्। शिशुकाले अवस्थाभेदे।

**शैशिर** पु॰ शिशिरं प्रियं यस्य अण्। श्यामचटके। शिशिरे भवः ऋत्वण्। शिशिरजाते त्रि॰।

**शो** तीक्ष्णीकरणे दिवा॰प॰सक॰अनिट्। श्यति अशात्-अशासीत्

**शोक** पु॰ शुच-घञ्। इष्टवियोगजाते दुःखानुगुणे चित्त-वृत्तिभेदे। [६त॰। शोकध्वंसे।

**शोकनाश** पु॰ शोकं नाशयति नश-णिच्-अण्। अशोकद्रुमे।

**शोकहारी** स्त्री॰शोकं हरति हृ-अण् ङीप्। वनवर्व्वरिकायाम्

**शोकारि** पु॰६त॰। कदम्बद्रुमे।

**शोचिष्केश** पु॰ शोचिः केशइव यस्य। वह्नौ, चित्रकद्रुमे च।

**शोचिस्** न॰ शुच-इसि। प्रभायाम्, रोचिषि च।

**शोच्य** त्रि॰ शुच-यत्। क्षुद्रे, अधरे, अनुकम्पनीये च। स्वार्थे कन्। तत्रैव।

**शोण** गतौ सक॰वर्णे अक॰भ्वा॰पर॰सेट्। शोणति अशोणीत् [चङि न ह्रस्वः।

**शोण** न॰शोण-अच्। सिन्दूरे, रुधिरे च। रक्तेक्षौ, मङ्गले, गद्दे, अग्नौ, चित्रके, श्योनाके द्रुमे, नदभेदे, रक्तवर्णे, च पु॰ तद्वति त्रि॰। वनहरिद्रायां स्त्री॰।

**शोणक** पु॰ शोणइव कन्। शोनाकद्रुमे।

**शोणझिण्टिका** स्त्री॰ कर्म॰। शोणझिण्ट्याम्, रक्तसैरेये च।

**शोणझिण्टी** स्त्री॰शोणा झिण्टीव। कुरुबके, काष्टकिन्याञ्च

**शोणपत्र** पु॰ शोणं पत्रमस्य। रक्तपुनर्णवायाम्।

**शोणपुष्पक** पु॰ शोणं पुष्पमस्य कप्। कोविदारे।

**शोणपुष्पी** स्त्री॰ शोणं पुष्पमस्याः ङीप्। सिन्दूरपुष्प्याम्।

**शोणरत्न** न॰कर्म॰। पद्मरागमणौ।

**शोणाक** न॰ शोणं रक्तवर्णमकति अण् (शोना)। क्षुपभेदे

**शोणित** न॰ शोण इतच्। रुधिरे।

**शोणितचन्दन** न॰ शोणितं रुधिरमिव चन्दनम्। रक्तचन्दने

**शोणितपुर** न॰ शोणितमिव रक्तं पुरम्। वाणासुरनगरे।

**शोणोपल** पु॰कर्म॰: माणिक्ये मणौ। [कन्। तत्रैव।

**शोथ** पु॰शु-थन्। हस्तपादादेः स्फीतताकारके रोगभेदे। स्वार्थे

**शोथघ्नी** स्त्री॰ शोथं हन्ति हन-क। पुनर्णवायाम् शालपर्ण्याञ्च। शोथनाशके औषधमात्रे त्रि॰। [भल्लातके

**शोथजि(हृ)त्** पु॰ शोथं जयति हरति वा जि-हृ-क्विप्

**शोथजिह्व** पु॰शोथे जिह्वाः विपरीताचरणशाली। पुनर्णवायाम्

**शोधन** न॰ शुध-णिच्-ल्युट्। शौचे, विष्ठायाम् मलादेर्विरेचने दोषनिवारणे, कृप्यादिनिर्यातने च। शुध-णिच्-ल्यु। निम्बुके, पु॰। शुद्धिकारके त्रि॰। शुध्यत्यनया करणे ल्युट् ङीप्। सम्मार्जन्याम्, ताम्बूलवल्ल्यां, नील्याञ्च स्त्री॰ ङीप्

**शोधनाधीश** न॰ ६त॰। जयपाले। [मार्जिते

**शोधित** त्रि॰ शुध-णिच्-क्त। मलाद्यपसारणेन कृतसंस्कारे,

**शोफ** पु॰ शु-फन्। शोथे। [वायाञ्च

**शोफघ्नी** स्त्री॰ शोफं हन्ति हन-क। शालपर्ण्याम्, रक्तपुनर्ण-

**शोफनाशन** पु॰ शोफं नाशयति नश-णिच्-ल्यु। नीलद्रुमे।

**शोफहृत्** पु॰ शोफं हरति हृन-क्विप्। भल्लातके।

**शोभन** न॰ शोभते शुभ-ल्यु। पद्मे, विष्कम्भादिषु पञ्चमे योगे पु॰। शोभायुक्ते त्रि॰।

**शोभनक** पु॰ शोभनाय कायति कै-क। शोभाञ्जनद्रुमे।

**शोभना** स्त्री॰शोभयति लेपनात् शुभ-णिच्-ल्यु। हरिद्रायां, गोरोचनायाञ्च।

**शोभा** स्त्री॰ शुभ-अ। दीप्तौ।

शोभाञ्जन पु० शोभायै अज्यते अन्ज-ल्युट् । (शजना) वृक्षे
शोष पु० शुष-घञ् । वातादिना जलाद्यपहारेण कठिनकरणे शोषयति शुष० णिच्-अच् । यक्ष्मरोगे ।
शोषण न०शुष-ल्युट् । चोषणेन,रसास्वादने,शोषे च शोषयति शुष-णिच्-ल्यु । उन्मादनः शोषणस्तथेत्युक्ते स्मरशरभेदे, शोनाकवृक्षे च पु० ।
शोषसम्भव न० सम्भवत्यस्मात् संभू-अप् इत० । पिप्पलीमूले
शौक न० शुकानां समूहः अण् । शुकसमुदाये ।
शौकर न० सूकरस्य वराहस्येदम् अण् । तीर्थभेदे ।
शौक्तिकेय न० शुक्तिकायां भवम् । ढक् । मुक्तायाम् ।
शौक्तेय न० शुक्तौ भवम् ढक् । मुक्तायाम् ।
शौक्ल्य पु० शुक्लस्य भावः ष्यञ् । श्वेततायाम् श्वेतवर्णे ।
शौच न०शुचेर्भावः अण् । शुद्धौ, पवित्रतायाम् 'अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते इति स्मृत्युक्ते धर्मविशेषे च । [स्थितः
शौट गर्वे भ्वा०पर०अक०सेट् । शौटति अशौटीत् । चङि न
शौटीर पु० शौट-ईरन् । त्यागिनि-वीरे च । गर्वान्विते त्रि०
शौटीर्य्य न०शौटीरस्य वीरस्य भावः ष्यञ् । वीर्य्ये, पराक्रमे, गर्वे च । [शौडीत्
शौड गर्वे भ्वा०पर०सक०सेट् चङि न ह्रस्वः । शौडति अ-
शौण्ड त्रि०शुण्डायां सुरायामभिरतः अण् । मत्ते, दक्षे च ।
शौण्डिक पु० शुण्डा सुरा पण्यमस्य ठक् । मद्यविक्रेतरि जातिभेदे । [गौ० ङीप् । चव्ये, गजपिप्पल्याञ्च ।
शौण्डी स्त्री० शुण्डा करिकरस्तदाकारः अस्त्यस्य अण्
शौण्डीर पु० शुण्डा गर्व्वोऽस्त्यस्य ईरन् स्वार्थेऽण् । गर्वान्विते त्रि० ।
शौद्र पु० शूद्रायां द्विजातिभिरूढ़ायां भवः अण् । द्वादशपुत्रमध्ये शूद्राजाते द्विजातिपुत्रभेदे ।
शौद्धोदनि पु० शुद्धोदनस्यापत्यम् इञ् । बौद्धमुनिभेदे ।
शौधिका स्त्री० शोधः शोधनं मलविरेकस्तस्मै हितः ठक् । रक्तकर्णौ ।
शौनक पु० शुनकस्यापत्यमण् । मुनिभेदे 'नैमिषे निमिषक्षेत्रे ऋषयः शौनकादय इति भागवतम् ।
शौनिक पु० शूना प्राणिवधस्थानं प्रयोजनमस्य ठक् । मांसविक्रेतरि (कसाइ) मृगयायां, मृगयाशीले च ।
शौभ न०शोभायै हितम् अण् । व्योमगामिनि पुरभेदे । देवे पु०
शौभाञ्जन पु० शोभाञ्जनएव स्वार्थेऽण् । (शजना) वृक्षभेदे
शौभिक त्रि० शोभा शिल्पमस्य ठक् । इन्द्रजालिके ।
शौरि पु० शूरस्य यादवभेदस्य वसुदेवस्य सूर्य्यस्य वा गोत्रापत्यम् इञ् । विष्णौ, शनैश्चरे च ।
शौर्य्य न० शूरस्य भावः ष्यञ् । वीर्य्ये, शक्तौ च ।
शौल्किक पु० शुल्के राजादिदेये करे तदादाने अधिकृतः ठक् । शुल्कादानाधिकृते ।
शौल्किकेय पु०शुल्किकः देशभेदः तत्र भवः ढक् । विषभेदे ।
शौल्विक पु० शुल्वः कांस्यताम्रमयपात्रादि पण्यमस्य ठक् । कांस्यकारे (कासारी) जातिभेदे ।
शौवस्तिक त्रि० श्वःपरदिने भवः श्वस्+ठक् तुट् च । भाविदिनस्थायिनि पदार्थे ।
शौष्कल पु० शुष्कलं शुष्कमांसं पण्यमस्य अण् । शुष्कमांसविक्रेतरि । तद्भक्ष्यमस्य अण् । शुष्कमांसभक्षके त्रि० ।
श्चुत क्षरणे भ्वा०पर०अक०सेट् । श्चोतति अश्चुतत् अश्चोतीत्
श्च्युत क्षरणे भ्वा०पर०अक०सेचने सक०सेट् । श्च्योतति अश्च्युतत् अश्च्योतीत् ।
श्च्योत पु० श्च्युत-घञ् । समन्तात् सेचने ।
श्मन् न० शेते शी-मनिन् डिच्च । सुखे, शवे,श्मदन्तोऽप्यत्र ।
श्मशान न० श्मानः शवाः शेरतेऽत्र शी-आनच् डिच्च । 'श्मन् शब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते' इति निरुक्ते । शवदाहस्थाने ।
श्मशानकाली स्त्री० श्मशानस्था काली । कालिकाभेदे ।
श्मशानवासिन् पु० श्मशाने वसति वस-णिनि । महादेवे वटुकभैरवे च । श्मशानवासकर्त्तरि चण्डालादौ त्रि० ।
श्मश्रु न० श्म मुखं श्रूयते लक्ष्यतेऽनेन श्रु-डु । पुरुषमुखस्थे लोमसङ्घे । [त्रायां पोटाख्यायां स्त्रियाम् ।
श्मश्रुमुखी स्त्री० श्मश्रु मुखे यस्याः ङीप् । पुरुषलक्षणयु-
श्मश्रुल पु० श्मश्रु विद्यतेऽस्य लच् । श्मश्रुयुक्ते 'श्मश्रुलैर्मुखै रितिरघुः । [क्षुरकर्मकारके ।
श्मश्रुवर्द्धक पु० श्मश्रु वर्द्धयति छिनत्ति वृध-ण्वुल् । नापिते
श्मील निमेषे भ्वा०पर०अक सेट् । श्मीलति अश्मीलीत् ।
श्यान त्रि० श्यै-क्त । सङ्कोचविशेषप्राप्ते घनीभूते 'पथश्श्यानकर्द्दमा'निति रघुः ।
श्याम पु० श्यै-मक् । वृद्धदारकवृक्षे, प्रयागतीर्थस्थे वटे,कोकिले, धुस्तूरे,पीलुवृक्षे, श्यामाके, गन्धतृणे, कृष्णवर्णे, हरिद्वर्णे च । तद्वति त्रि० मरिचे, सिन्धुलवणे च न० ।
श्यामक न० श्याम+संज्ञायां कन् । रोहिषतृणे, श्यामाके (शामा) धान्यभेदे पु० । [विहगे, ह
श्यामकण्ठ पु० श्यामः कण्ठोऽस्य । मयूरे, शिवे, नीलकण्ठ-

श्यामकन्दा स्त्री० श्यामः कन्दोऽस्याः । अतिविषायाम् ।
श्यामकाण्डा स्त्री० श्यामः काण्डोऽस्याः । गण्डदूर्वायाम् ।
श्यामग्रन्थि स्त्री० श्यामो ग्रन्थिरस्याः । गण्डदूर्वायाम् ।
श्यामपत्त्र पु० श्यामानि पत्त्राणि यस्य । तमालवृक्षे ।
श्यामल पु० श्यामवर्णं लाति ला-क । पिप्पले कृष्णवर्णयुक्ते त्रि० । अश्वगन्धायां, कटभ्यां, जम्ब्वां, कस्तूर्याञ्च स्त्री० ।
श्यामलचूडा स्त्री० श्यामला चूडाऽस्याः । गुञ्जायाम् ।
श्यामलता स्त्री० कर्म० । स्वनामख्याते लताभेदे । श्यामलस्य भावः तल् । कृष्णवर्णे, हरिद्वर्णे च ।
श्यामलिका स्त्री० श्यामलोवर्णोऽस्त्यस्याः ठन् । नील्याख्यौषधौ
श्यामलेक्षु पु० कर्म० (काजला) इक्षुभेदे ।
श्यामसुन्दर पु० श्यामोऽपि सुन्दरः । श्रीकृष्णे 'श्यामसुन्दर! ते दास्य' इति भागवतम् ।
श्यामा स्त्री० श्यै-मन् । शारिवौषधौ, प्रियङ्गौ, यमुनायां, रात्रौ, कृष्णत्रिवृति, नील्याम्, गुग्गुलौ, सोमलतायां, गुन्द्रायाम्, कृष्णायाम्, अम्बिकायां, गुडूच्यां, कस्तूर्याम्, वटपत्र्यां, वन्दायां, नीलपुनर्णवायां, पिप्पल्यां, हरिद्रायां, नीलदूर्वायां, तुलस्यां, पद्मबीजे, गवि, छायायां, शिंशपायां, पक्षिभेदे (श्यामा) स्त्रीमात्रे 'शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तितेत्युक्तलक्षणे स्त्रीविशेषे च ।
श्यामाक पु० श्यामेव इवार्थे कन् । (श्यामा) धान्यभेदे ।
श्यामाङ्ग पु० श्यामं हरिद्वर्णमङ्गमस्य । बुधग्रहे, कृष्णदेहे त्रि० स्त्रियां ङीप् 'श्यामाङ्गीं विगताम्बरा'मिति तन्त्रम् ।
श्यामाम्ली स्त्री० कर्म० । नीलाम्लीक्षुपे ।
श्याल पु० श्यै-कालन् । पत्नीभ्रातरि स्वार्थे ठक् । श्यालिकोऽप्यत्र
श्यालिका स्त्री० श्यै-कालन् संज्ञायां कन् । अत इत्वम् । पत्नीभगिन्याम् ।
श्याव पु० श्यै-वन् । कृष्णपीतमिश्रवर्णे । तद्वति त्रि०
श्यावदत् त्रि० श्यावो दन्तो यस्य दत्रादेशः । श्यामवर्णदन्तयुक्ते
श्यावदन्त पु० कर्म० । स्वभावतः कृष्णवर्णयुक्ते दन्ते, इव० कप् । तद्युक्ते त्रि० 'सुरापः श्यावदन्तक' इति स्मृतिः ।
श्येत पु० श्यै-इतच् । शुक्लवर्णे तद्वति त्रि० स्त्रियां ङीप् तस्य नश्च । श्येनी ।
श्येन पु० श्यै-इनन् । पक्षिभेदे (बाज) पाण्डुरवर्णे च तद्वति त्रि०
श्येनघण्टा स्त्री० श्येना घण्टेव । दन्तीवृक्षे ।
श्यै गतौ भ्वा० आ० सक० अनिट् । श्यायते अश्यास्त ।
श्येनम्पाता स्त्री० श्येनस्य पातो यत्र अमुसम् च । मृगयायाम्

श्यो(शो)नाक पु० श्यै-ना(णा)क । (शोणा) वृक्षभेदे ।
श्रक सर्पणे भ्वा० आ० सक० सेट् इदित् । श्रङ्कते अश्रङ्किष्ट ।
श्रग गतौ भ्वा० पर० सक० सेट् इदित् । श्रङ्गति अश्रङ्गीत् ।
श्रण दाने भ्वा० पर० सक० सेट् । श्रणति अश्राणीत् अश्रणीत् घटादि० श्रणयति ।
श्रण दाने चु० उ० सक० सेट् । श्राणयति ते अशिश्रणत् त ।
श्रत् अव्य० श्री-डति । श्रद्धायाम् । [अशिश्रथत् त ।
श्रथ यत्ने अक० प्रतिहर्षे सक० चु० उभ० सेट् । श्राथयति ते
श्रथ दौर्बल्ये अ० चु० उभ० अक० सेट् । श्रथयति ते अशश्रथत् त
श्रथ बधे भ्वा० पर० सक० सेट् । श्रथति अश्रथीत् अश्राथीत् ।
श्रथ बन्धे मोचे बधे च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । श्राथयति ते श्रथति अशिश्रथत् त अश्रथीत्-अश्राथीत् ।
श्रथ शैथिल्ये अक० तत्करणे सक० भ्वा० आ० सेट् इदित् । श्रन्थते अश्रन्थिष्ट ।
श्रथन न० श्रथ-ल्युट् । बधे यत्ने प्रतिहर्षे च ।
श्रद्धा स्त्री० श्रत्-धा-अङ् । आदरे, गुरुवेदान्तवाक्यादिषु विश्वासे, स्पृहायां, शुद्धौ, चित्तप्रसादे प्रत्ययो 'धर्म्मकार्य्येषु या श्रद्धेत्यभिधीयते' इति उक्ते धर्म्मकार्य्येषु प्रत्यये च । [त्रि०
श्रद्धालु स्त्री० श्रद्धा+आलुच् । स्पृहावत्यां स्त्रियाम् श्रद्धायुक्ते
श्रन्थ यत्नने बधे च वा चु० उ० पक्षे भ्वा० प० सक० सेट् । श्रन्थयति-ते श्रन्थति अशश्रन्थत् त अश्रन्थीत् ।
श्रन्थ मोचने प्रतिहर्षे च क्र्या० प० सक० सेट् । श्रथ्नाति अश्रन्थीत्
श्रन्थन न० श्रन्थ-ल्युट् । यत्नने ।
श्रपित त्रि० पु० श्रा-क्त-णिच्-पुक् ह्रस्वश्च । पक्वे ।
श्रम तपसि, आयासे खेदे च अक० भ्वा० शमादि० प० सेट् क्त्वावेट् । श्राम्यति अश्रमत् अश्रमीत् । श्रान्त्वा श्रमित्वा । [भ्यासे च
श्रम पु० श्रम-घञ् न वृद्धिः । तपसि, खेदे, आयासे, शस्त्रा-
श्रमण पु० श्रम-युच् । यतिभेदे । भिक्षाजीविनि त्रि० । जटामांस्यां, मुण्डीर्य्यां, शरीरभेदे, सुदर्शनायां स्त्रियां च स्त्री०
श्रमिन् त्रि० श्रम-इनि । श्रमयुक्ते ।
श्रम्भ प्रमादे भ्वा० आ० अक० सेट् । श्रम्भते अश्रम्भिष्ट ।
श्रय पु० श्रि-अच् । आश्रये । ल्युट् । तत्रैव न० ।
श्रव पु० श्रृणोत्यनेन श्रु-अप् । कर्णे, ख्यातौ च ।
श्रवण न० श्रृणोत्यनेन श्रु-ल्युट् । कर्णे शब्दग्राहकेन्द्रियभेदे भावे ल्युट् । श्रुतौ । अश्विन्यादिषु द्वाविंशे नक्षत्रे पु० स्त्री० क्लीवत्वमपि 'अमार्कपाते श्रवणं यदि स्यादिति' स्मृतिः । मुण्डरिकावृक्षे स्त्री० ।
श्रवणद्वादशी स्त्री० श्रवणेन युक्ता द्वादशी शाक० । 'मासि

भाद्रपदे शुक्ले द्वादशी श्रवणान्विते’त्युक्तायां भाद्रशुक्लद्वादश्याम्। [द्रुत्वम्। श्रावणीदृष्ट्ये।

**श्रवणशीर्षिका** स्त्री० श्रवणमिव शीर्षमस्याः कप् अत

**श्रविष्ठा** स्त्री० श्रूयते श्रु-ल्युट् श्रवः प्रशिद्धिरस्त्यस्याः मतुप् अतिशयेन श्रववती इष्टन् मतुपो लुक्। धनिष्ठानक्षत्रे।

**श्रविष्ठाज** पु० श्रविष्ठानक्षत्रे जायते जन-ड। बुधग्रहे।

**श्रवस्** न० श्रूयतेऽनेन श्रु-असि। कर्णे। कर्म्मणि असि। कीर्त्तौ।

**श्रा** विकृतौ अदा०प०अनिट्। श्राति अश्रासीत्। [श्रपयति

**श्रा** पाके अदा० प०सक०अनिट् घटा०। श्राति अश्रासीत्

**श्राण** त्रि० श्रा-क्त। पक्वे। यवाग्वां स्त्री०।

**श्राद्ध** न० श्रद्धा-हेतुत्वेनास्त्यस्य अण्। ‘श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते’ इत्युक्ते पित्रादिभ्यः श्रद्धया देये द्रव्ये अस्त्यर्थे अण्। श्रद्धायुते त्रि०। [भेदे च।

**श्राद्धदेव** पु०श्राद्धोद्देश्यानां पितॄणां देवः शाक०। यमे, मनु

**श्राद्धदेवता** स्त्री० श्राद्धे देवता त्यक्तद्रव्यस्योद्देश्या। ‘पितरः श्राद्धदेवता’ इति स्मृत्युक्तेषु पितृषु।

**श्राद्धशाक** न० श्राद्धयोग्यं शाकम्। कालशाके।

**श्राद्धिक** त्रि० श्राद्धे देयं श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य वा ठन्। श्राद्धदेये भक्ष्ये, श्राद्धदेयद्रव्यभोक्तरि च।

**श्राद्धिन्** त्रि० श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य इनि। श्राद्धदेयान्नभोक्तरि।

**श्रान्त** त्रि० श्रम-क्त। श्रमयुक्ते, शान्ते, जितेन्द्रिये च।

**श्रान्तसंवाह** न० श्रान्तस्य श्रमस्य संवाहः दूरीकरणम्। पादाघातकादिना श्रमनिवारणे।

**श्राम** मन्त्रणे अ०चु०उभ०सक०सेट्। श्रामयति ते अशश्रामत् त

**श्रावण** पु० श्रवणेन युक्ता पौर्णमासी श्रावणी साऽस्मिन् मासे अण्। वैशाखादिषु चतुर्थे चान्द्रे मासे उपचारात् कर्कटस्थरविके सौरमासे, पाषण्डे च श्रवणेन कर्णेन निर्वृत्तः अण्। कर्णसाध्ये प्रत्यक्षभेदे। श्रवणनक्षत्रेण युक्ता पौर्णमासी अण्। चान्द्रश्रावणमासीयपौर्णमास्यां स्त्री०ङीप्। (घुलकुड़ि) वृक्षभेदे च।

**श्रावणिक** पु० श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्त्यस्मिन् मासे ठन्। चान्द्रश्रावणमासे।

**श्रावस्ती** स्त्री० श्रु-णिच् ह० ङीप्। धर्म्मपत्तनाख्ये नगरीभेदे

**श्रि** सेवने भ्वा० उ०सक०सेट्। श्रयति ते अशिश्रियत् त।

**श्रित** त्रि० श्रि-क्त। सेविते, आश्रिते च।

**श्रिय** दाढ्ये भ्वा०पर०सक०सेट् क्त्वा वेट्। श्रेयति अश्रेयीत्।

**श्री** पाके क्र्या०उ०सक० अनिट्। श्रीणाति श्रीणीते अश्रैषीत्

**श्री** स्त्री० श्रि क्विप् नि०। लक्ष्म्यां, लवङ्गे, शोभायां, वाण्यां, वेशरचनायां, सरलद्रवे, धर्म्मादिकामेषु सम्पत्तौ, प्रकारे, उपकरणे, बुद्धौ, विभूतौ, अधिकारे, प्रभायां कीर्त्तौ, वृद्धौ सिद्धौ, कमले, बिल्ववृक्षे वृद्धिनामौषधौ, ‘देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्। सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेदित्युक्तेषु देवादीनां नामोच्चारणायोपाधिभेदे च। रागभेदे पु०।

**श्रीकण्ठ** पु० श्रीः शोभा कण्ठेऽस्य शिवे, श्वेतस्य कण्ठस्थितिकर्षे शोभाधिक्यात्तस्य। हस्तिनापुरस्य उत्तरपश्चिमस्थे कुरुजाङ्गलाख्ये देशे च। [कर्कव्याम्।

**श्रीकन्दा** स्त्री० श्रीः शोभा तया युक्तः कन्दोऽस्याः। वन्ध्या-

**श्रीकर** न० श्रियं शोभां करोति कृ-अच्। रक्तोत्पले,विष्णौ, दायनिबन्धकारके पण्डितभेदे च। शोभाकारके त्रि०।

**श्रीकान्त** पु०हत० विष्णौ। श्रीनाथश्रीपत्यादयोऽप्यत्र।

**श्रीखण्ड** न० श्रियः शोभायाः खण्ड इव यत्र। चन्दने।

**श्रीगर्भ** पु० श्रीर्गर्भेऽस्य। विष्णौ, खड्गे च ‘श्रीगर्भो विजयश्चे’ति खड्गनामाप्युक्तम्।

**श्रीग्रह** पु०श्रियः ग्रह इव यत्र। पक्षिणां पानीयशालायाम्

**श्रीघन** पु० श्रिया बुद्ध्या घनः। बुद्धभेदे। दध्नि न०।

**श्रीचक्र** न०श्रियाः चक्रं यन्त्रभेदः। ‘बिन्दुत्रिकोणवसुकोणदशारयुग्मं मन्वस्रनागदलसङ्गतषोडशारम्। वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रमेतदुदितं परदेवतायाः’ इति तन्त्रोक्ते त्रिपुरासुन्दरीपूजाङ्गे यन्त्रभेदे।

**श्रीज** पु० श्रियो जायते जन-ड। कामदेवे। श्रीनन्दनादयोऽप्यत्र

**श्रीताल** पु० श्रीयुक्तस्तालः। तालवृक्षतुल्ये वृक्षभेदे।

**श्रीद** पु० श्रियं धनं ददाति दा-क। कुवेरे। धनदातरि त्रि०।

**श्रीधर** पु० श्रियं धरति धृ-अच्। विष्णौ, ‘अतिचुद्रं द्विचक्रञ्च वनमालाविभूषितम्। श्रीधरं देवि! विज्ञेय’मित्युक्ते शालग्राममूर्त्तिभेदे न०।

**श्रीनिकेतन** पु०श्रियं निकेतयति नितरां वासयति नि+कित-णिच् ल्यु। विष्णौ। हत०। श्रीवासे न०।

**श्रीनिवास** पु० निवसत्यस्मिन् नि+वस-घञ् हत०। विष्णौ

**श्रीपथ** पु० श्रीयुक्तः पन्थाः। राजपथे।

**श्रीपर्ण** न०श्रीर्लक्ष्मीः पर्णे दलेऽस्य। पद्मे। श्रीयुक्तं पर्णमस्य अग्निमन्थवृक्षे पु०। [वृक्षम्। कट्फलवृक्षे।

**श्रीपर्णिका** स्त्री० श्रीयुक्तं पर्णमस्याः संज्ञायां कन् अत

**श्रीपर्णी** स्त्री० श्रीयुक्तानि पर्णान्यस्याः ङीप्। गाम्भारीवृक्षे, कट्फलवृक्षे, शाल्मलीवृक्षे अग्निमन्थवृक्षे च।

श्रीपिष्ट पु० श्रियै शोभायै पिष्यते पिष-क्त । सरलद्रवरसे ।
श्रीपुत्त्र पु० ६त० कामदेवे श्रियः पुत्रो भ्राता सहजत्वात् । अश्वे, उच्चैःश्रवसि च ।
श्रीपुष्प न० श्रीयुक्तं पुष्पम् । लवङ्गे । पद्मकाष्ठे च ।
श्रीफल पु० श्रीयुक्तं फलमस्य । विल्वद्रुमे राजादन्याञ्च ।
श्रीभद्रा स्त्री० श्रीयुक्तं भद्रमस्याः । भद्रमुस्तके ।
श्रीभागवत न० श्रीयुक्तं भागवतम् । अष्टादशपुराणेषु मध्ये द्वादशस्कन्धयुक्ते अष्टादशसाहस्रे व्यासप्रणीते पुराणे ।
श्रीभ्रातृ पु० श्रियः लक्ष्म्या भ्राता अनुजत्वात् । अश्वे, चन्द्रे च
श्रीमत् पु० श्रीरस्त्यस्य मतुप् । तिलकद्रुमे,अश्वत्थद्रुमे, विष्णौ, शिवे,कुक्कुरे च। शोभायुक्ते त्रि०स्त्रियां ङीप् सा च राधिकायाञ्च । [ङ । धूम्रपत्त्रायां लतायाम् ।
श्रीमल्लापन्ना स्त्री० श्रिया शोभया मलनमपहन्ति अप+हन-
श्रीमूर्त्ति स्त्री०श्रीपूर्वककथनयोग्या मूर्त्तिः ।देवताप्रतिमायाम्।
श्रीरङ्गपत्तन न०श्रिया रङ्गस्य पत्तनमिव । दक्षिणस्थेदेशभेदे
श्रीरस पु० श्रियै रसोऽस्य । श्रीवेष्टे गन्धद्रव्ये ।
श्रीराम पु० श्रीशब्दयुक्तो रामः । दशरथात्मजे नृपभेदे ।
श्रील त्रि० श्री+अस्त्यर्थे लच् । शोभायुक्ते सम्पदादियुक्ते च।
श्रीलता स्त्री० श्रीयुक्ता लता । महाज्योतिष्मत्यां लतायाम् ।
श्रीवत्स पु० वदति महत्त्वं वद-स श्रीयुक्तो वत्सः । महत्त्वलक्षणश्वेतरोमावर्त्तविशेषे । स अस्त्यस्य अच् । विष्णौ ।
श्रीवत्सक पु० श्रीवत्सः चिह्नभेदः तेन कायति कै-क। हृदयस्थश्वेतरक्ताकारलोमयुक्ते अश्वभेदे ।
श्रीवत्सभृत् पु० श्रीवत्सं विभर्त्ति भृ-क्विप् । विष्णौ ।
श्रीवत्सलाञ्छन पु० श्रीवत्सोलाञ्छनं यस्य । विष्णौ । श्रीवत्साङ्कादयोऽप्यत्र । [वराहावतारे ।
श्रीवराह पु० श्रिया युक्तो वराहः विष्णोर्दशस्ववतारेषु
श्रीवाटी स्त्री० श्रिया वाटीव । नागवल्लीभेदे ।
श्रीवारक पु० श्रियं वारयति कामयते ण्वुल् । शितावरके ।
श्रीवास पु० श्रियै वासः सौरभमस्य । सरलद्रवरसे (टारपिन्)
श्रीवासस् न०श्रियैवासयति वस-णिच् असि । सरलद्रवरसे
श्रीविद्या स्त्री०श्रियै त्रिवर्गाय विद्या । त्रिपुरासुन्दर्याम् ।
श्रीवृक्ष पु० श्रियः शोभायाः वृक्ष इव । अश्वस्य हृदयस्थे श्वेतरोमावर्त्तभेदे । [(तारपिन) ।
श्रीवेष्ट पु० श्रियै वेष्ट्यतेऽसौ वेष्ट-घञ् । सरलद्रवनिर्यासे
श्रीश पु० ६त० । विष्णौ ।
श्रीसहोदर पु० ६त० । चन्द्रे, उच्चैःश्रवसि अश्वे च ।
श्रीहस्तिनी स्त्री० श्रीयुक्ता हस्तिनी । (हातिशुण्डा) वृक्षभेदे

श्रु गतौ भ्वा०पर०सक०अनिट् । श्रवति अश्रौषीत् ।
श्रु श्रवणे स्वा०पर०सक० अनिट् । शृणोति अश्रौषीत् ।
श्रु(स्रु)घ्निका स्त्री० श्रु(स्रु)घ्नः देशभेदः कारणत्वेनास्त्यस्य ठन् । सर्जिकाक्षारे ।
श्रुत न० श्रूयते श्रु-क्त । शास्त्रे, तज्ज्ञाने च 'श्रुतान्वित' इति भट्टिः । श्रवणेन गृहीते, अवधृते च त्रि० ।
श्रुतकीर्त्ति स्त्री० । कुशध्वजकन्यायां शत्रुघ्नपत्न्याम् । श्रुता विख्याता कीर्त्तिरस्य । विख्यातयशसि त्रि० ।
श्रुतदेवी स्त्री० श्रुतस्य शास्त्रस्य देवी । सरस्वत्याम् ।
श्रुतबोध पु० श्रुत-मात्रं बोधयति बुध-णिच्-अच् । कालिदासकृते छन्दोग्रन्थभेदे ।
श्रुतश्रवस् पु० श्रुतं श्रवो यशोऽस्य । शिशुपालपितरि 'निर्वर्त्यतेऽरिः क्रियया स श्रुतश्रवसः सुत' इति माघः ।
श्रुति स्त्री० श्रु-क्तिन् । कर्णे, श्रवणेन्द्रियजन्ये, ज्ञाने,वेदे च । अङ्कशास्त्रोक्ते त्रिभुजक्षेत्रादौ भुजकोट्योः संयुज्यमानरेखाभेदे च । [कठोरशब्दविशेषरूपे काव्यदोषभेदे ।
श्रुतिकटु पु० श्रुतौ श्रवणे कटुः कठोरः । अलङ्कारोक्ते
श्रुतिजीविका स्त्री० श्रुतिं जीवयति मूलतयानुसरति जीव-ल्युट् । स्मृतिशास्त्रे । [श्रवणमात्रेण धारणायुक्ते ।
श्रुतिधर त्रि० श्रुत्या श्रवणमात्रेण धरति धारयति धृ-अच् ।
श्रुतिमूल न० श्रुतिरेव मूलं धर्मप्रामाण्ये कारणम् । वेदरूपे धर्मबोधनप्रमाणे ६त० । यज्ञादौ,वेदशास्त्रबोधिते धर्मादौ च ६त० । कर्णमूले ।
श्रुतिवर्ज्जित त्रि० श्रुत्या वेदाध्ययनेन कर्णेन वा वर्ज्जितः वृज-क्त । वेदपाठहीने बधिरे च । [भेदे ।
श्रुतिवेध पु० श्रुतेः कर्णस्य वेधो यत्र । कर्णवेधाख्ये संस्कार
श्रुतिस्फोटा स्त्री० श्रुताविव पत्रे स्फोटो यस्याः । कर्णस्फोटालतायाम् । [ङ्कारोक्ते शब्दालङ्कारभेदे ।
श्रुत्यनुप्रास पु० श्रूयते इति श्रुतिः शब्दस्तस्यानुप्रासः । अल-
श्रुत्युक्त त्रि० श्रुतौ वेदे उक्त विहितः । वेदविहिते धर्मादौ ।
श्रु(स्रु)वा स्त्री० श्रु(स्रु)-क । स्रुचायां यज्ञपात्रभेदे । [वृक्षे ।
श्रु(स्रु)वावृक्ष पु० श्रु(स्रु)-वार्थो वृक्षः । (वइँचि) विकङ्कत
श्रेढी स्त्री० श्रेण्ये राशीकरणाय ढौकते ढौक ड पृ० गौ० ङीप् । भिन्नजातीयद्रव्याणां मिश्रकरणाय अङ्कशास्त्रोक्ते गणनाप्रकारभेदे ।
श्रेढीव्यवहार पु० श्रेढ्या व्यवहारः । श्रेढीगणनार्थे लीलावत्युक्ते उपायभेदे ।
श्रेणि(णी) स्त्री० श्रि-नि वा ङीप् । छिद्ररहितायां पङ्क्तौ ।

श्रेयस् न० अतिशयेन प्रशस्यम् ईयसुः श्रादेशः । धर्मे, मोक्षे, शुभे च । अतिप्रशस्ते त्रि० स्त्रियां ङीप् । सा च हरीतक्यां, पाठायां, गजपिप्पल्यां, वालायाञ्च ।

श्रेष्ठ पु० अतिशयेन प्रशस्यः इष्ठन् श्रादेशः । कुबेरे, नृपे, विप्रे, विष्णौ च । गोदुग्धे न० अत्यन्तशस्ते त्रि० । स्थलपद्मिन्यां, मेदायाञ्च स्त्री० ।

श्रेष्ठकाष्ठ पु० श्रेष्ठं काष्ठमस्य । शाकवृक्षे (सेगुन) ।

श्रेष्ठाम्ल न० श्रेष्ठमम्लमस्य । वृक्षाम्ले ।

श्रेष्ठिन् पु० श्रेष्ठं धनादिकमस्य इनि । शिल्पिवणिजां श्रेष्ठे ‘सङ्घि श्रेष्ठिचत्वरे प्रतिवसतीति मृच्छकटिकटीका ।

श्रै स्वेदे भ्वा० प०अक०अनिट् । श्रायति अश्रासीत् । विकृतौ घटादि० श्रपयति ।

श्रोण पु० श्रोण-अच् । पङ्गौ । काञ्जिके स्त्री० । [अश्रोणीत् ।

श्रोण संघाते भ्वा०प०अक०सेट् चङि न ह्रस्वः । श्रोणति

श्रोणि(णी) स्त्री० श्रोण-इन् वा ङीप् । कट्याम्, पथि च ।

श्रोणिफलक न० श्रोणिः फलकमिव । प्रशस्तकटौ वृत० । कटिपार्श्वे । [बन्धनस्थले ।

श्रोणिसूत्र न० श्रोणौ स्थितं सूत्रम् । श्रोणिस्थे खड्गादि

श्रोतस् न० श्रु-असुन् तुट् च । कर्णे, नदीवेगे, इन्द्रिये च ।

श्रोत्र न० श्रूयतेऽनेन श्रु-ष्ट्रन् । शब्दज्ञानसाधने कर्णरूपे इन्द्रिये

श्रोत्रिय पु० छन्दो वेदमधीते वेत्ति वा छन्दस्+घञ् । वेदाध्ययनानुरते, ‘एकां शाखां सकल्पां वा षड्भिरङ्गै रधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मविदि’त्युक्ते विप्रे च ।

श्रौत त्रि० श्रुतौ विहितमण् । वेदविहिते धर्मादौ ‘श्रौतं कर्म स्वयं कुर्य्यादि’ति स्मृतिः । गार्हपत्याहवनीयदक्षिणाग्निषु पु०

श्रौत्र न० श्रोत्र-स्वार्थे अण् । कर्णे । श्रोत्रियस्य भावः कर्म वा अण् । वैदिकस्य भावे ‘श्रौत्रार्हन्तीचणैरिति’ सिद्धान्तकौ०

श्रौषट् अव्य० श्रु-डौषटि । यज्ञादौ हविर्दाने ।

श्लक सर्पणे भ्वा०आ०सक०सेट् इदित् । श्लङ्कते अश्लङ्किष्ट

श्लक्ष्ण त्रि० श्लिष-क्स्न नि० । अल्पे, चिक्कणे, सौक्ष्मे च ।

श्लक्ष्णत्वच् पु० श्लक्ष्णा त्वगस्याः । अश्मन्तकवृक्षे ।

श्लग गतौ भ्वा०प०सक०सेट् इदित् । श्लङ्गति अश्लङ्गीत् ।

श्लथ दौर्बल्ये अद०चु०उभ०सक०सेट् । श्लथयति ते अशश्लथत् त

श्लथ पु० श्लथ-अच् । विरलसंयोगे, शिथिले, दुर्बले च ।

श्लाख व्याप्तौ भ्वा०प०सक०सेट् चङि न ह्रस्वः । श्लाखति अश्लाखीत् । .. [श्लाघते अश्लाघिष्ट ।

श्लाघ आत्मगुणाविष्करणे भ्वा०आ०सक०सेट् चङि न ह्रस्वः ।

श्लाघा स्त्री० श्लाघ-अ । प्रशंसायां, निजगुणाविष्करणे परिचर्य्यायाम्, अभिलाषे च । [चण्डी

श्लाघ्य त्रि० श्लाघ-ण्यत् । प्रशस्ते ‘श्लाघ्यस्तनूनत्युरावयोरिति

श्लिष दाहे भ्वा०प०सक०सेट् क्त्वा वेट् । श्लेषति अश्लेषीत् ।

श्लिष आलिङ्गने संसर्गे च सक०दि०अनिट् । श्लिष्यति अश्लिषत् आलिङ्गने तु अश्लिक्षत् ।

श्लिष श्लेषे चु० उ० सक०सेट् । श्लेषयति ते अशिश्लेषत् त । भिन्नार्थकेऽभिन्नशब्दे ‘आश्लेषि न श्लेषकवेरिति’ नैषधम् ।

श्लिष्ट त्रि०श्लिष-क्त । आलिङ्गिते, संसृष्टे, श्लेषरूपशब्दालङ्कारयुक्ते शब्दे च । [भेदे तद्रोगयुक्ते त्रि० ।

श्लीपद न० श्रीयुक्तं वृद्धियुक्तं पदमस्मात् पृ० । (गोद) रोग-

श्लीपदप्रभव पु० श्लीपदाय रोगाय प्रभवति प्र+भू-अच् । आम्रवृक्षे । [जीववृक्षे ।

श्लीपदापह पु० श्लीपदं रोगमपहन्ति अप+हन-ड । पुत्र

श्लील त्रि० श्रीरस्त्यस्य लच् पृ० रस्य लः । शोभायुक्ते तद्विपरीतोहि अश्लीलः ।

श्लेष पु०श्लिष-घञ् । संसर्गे, दाहे, आलिङ्गने, शब्दालङ्कारभेदे च

श्लेष्मघ्ना स्त्री० श्लेष्माणं हन्ति हन-क टाप् । मल्लिकायां, केतक्याञ्च । ज्योतिष्मत्यां ङीप् ।

श्लेष्मण पु० श्लेष्माऽस्त्यस्य न । कफविशिष्टे ।

श्लेष्मन् पु० श्लिष-मनिन् । कफे ।

श्लेष्मल त्रि० श्लेष्म+अस्त्यर्थे लच् । कफयुक्ते (बहुयार)वृक्षे पु०

श्लेष्मह पु० श्लेष्माणं हन्ति । कट्फलवृक्षे ।

श्लेष्मात पु० श्लेष्मणे अतति अत-अच् । श्लेष्मातकवृक्षे ।

श्लेष्मातक पु० श्लेष्मणा सेवनजनितकफेन अतति अत-ण्वुल् (बहुयार) वृक्षभेदे ।

श्लेष्मान्तक पु० श्लेष्मणा सेवनजकफेन अन्तक इव नाशकत्वात् (बहुयार) वृक्षभेदे । [श्लोकते अश्लोकिष्ट ।

श्लोक वर्द्धने संघाते च भ्वा०आ०सक०सेट् चङि न ह्रस्वः ।

श्लोक पु० श्लोक-अच् । चतुःपद्यात्मके कवितते वाक्यभेदे, यशसि च । [अश्लोणीत् ।

श्लोण संघाते भ्वा०प०सक० सेट् चङि न ह्रस्वः । श्लोणति

श्वःश्रेयस न० श्वः परदिने भाविकाले श्रेयो यस्मात् अच् समा०। मङ्गले, सुखे परमात्मनि च । कल्याणयुक्ते त्रि०।

श्वक सर्पणे भ्वा० आ०सक०सेट् इदित् । श्वङ्कते अश्वङ्किष्ट ।

श्वच गतौ भ्वा०आ०सक०सेट् । श्वचते अश्वचिष्ट इदिदयम् ।

श्वठ गतौ संस्कारे च चु० उ० सक० सेट् । श्वठयति-ते अशिश्वठत् त । इदिदयम् श्वण्ठयति ।

श्वठ दुर्वचने अद०चु०उभ०सक०सेट् । श्वठयति ते अशश्वठत् त
श्वदंष्ट्रक पु० शुनो दंष्ट्रेव कण्टकोऽस्य कन् । गोक्षुरे क्षुपे ।
श्वदंष्ट्रा स्त्री० शुनोदंष्ट्रेव कण्टकाद्वृतत्वात् । गोक्षुरे क्षुपे ।
श्वधूर्त्त पु० श्वेव शूनां शब्दनार्थं वा धूर्त्तः । शृगाले ।
श्वन् पु०श्वि-कनिन् नि०। कुक्कुरे तज्जातिस्त्रियां ङीप् शुनी ।
श्वनिशा न० स्त्री० शुनां कुक्कुराणां निशा वा ह्रस्वः । कक्कु-
रमादकरात्रौ । [चण्डाले ।
श्वपच पु० श्वानः पच्यन्ते यैः भोजनाय पच—घञर्थे क ।
श्वपाक पु० श्वानं पचति कर्त्तरि घञ् । चण्डाले ।
श्वफल पु० शुनः शिवं फलमस्य । वीजपूरवृक्षे ।
श्वफल्क पु० । वृष्णिवंश्ये अक्रूरपितरि नृपभेदे ।
श्वभीरु पु० श्वभ्यो भीरुः । शृगाले । [ते अशुश्वभ्रत् त ।
श्वभ्र गतौ छिद्रकरणे सक०दौःस्थ्ये अक०चु०उ०सेट् । श्वभ्रयति
श्वभ्र न० श्वभ्र-घञ् । छिद्रे ।
श्वयथु पु० श्वि-अथुच् । शोथे ।
श्वल वेगे भ्वा०पर०अक० सेट् । श्वलति अश्वालीत् ।
श्वल्क भाषणे चु०उ०सक०सेट् । श्वल्कयति ते अशश्वल्कत् त ।
श्वल्ल वेगे भ्वा०प०अक०सेट् । श्वल्लति अश्वल्लीत् ।
श्ववृत्ति पु० शुन इव पराधीना वृत्तिः । दास्ये 'न श्ववृत्त्या कदाचने'ति स्मृतिः ।
श्वशुर पु० शु आशु अश्नुते आशु+अश-उरच् पृ० । पत्युः पितरि, भार्य्यायाः पितरि च ।
श्वशुर्य्य पु० श्वशुरस्यापत्यम् यत् । देवरे, श्याले च ।
श्वश्रू स्त्री० श्वशुरस्य पत्नी ऊङ् उकाराकारलोपश्च । श्वशुर-भार्य्यायाम् ।
श्वस् अव्य० आगामि अहः पृ० नि० । आगामिनि दिवसे ।
श्वस जीवने अदा०जक्षा०प०सक०सेट् । श्वसिति अश्वसीत् ।
श्वस स्वप्ने अदा०प०अक० वैदिकयोयम् । श्वस्ति अश्वसीत् ।
श्वसन पु० श्वसित्यनेन श्वस-ल्युट् । वायौ, मदनवृक्षे च । भावे ल्युट् । निश्वासे न० ।
श्वसनेश्वर पु० श्वसनो वायुरीश्वरोऽस्य । अर्ज्जुनवृक्षे ।
श्वसित न० श्वस-क्त । निश्वासे, मुखनासिकाभ्यां वहिर्गमनशीले हृदयस्थप्राणवायौ ।
श्वसुन पु०श्वस-उनन् । (कुकुरशोङ्का) वृक्षे । [वस्तुनि ।
श्वस्तन त्रि० श्वोभवः श्वस्+ट्युल् तुट् च । भाविदिनस्थायि-
श्वस्त्य त्रि० श्वोभवः श्वस्+त्यप् । भाविदिनस्थायिवस्तुनि ।
श्वागणिक पु० श्वगणेन चरति ठक् नि० दी० । कुक्कुरादिना मृगयाकर्त्तरि व्याधे ।

श्वादन्त त्रि० शुन इव दन्तोऽस्य दी० । कुक्कुरतुल्यदशने ।
श्वान पु० श्वेव अण् । कुकुरे तज्जातिस्त्रियां ङीप् ।
श्वापद पु० शुन इवापदस्मात् अच् । हिंस्रपशौ, व्याघ्रे च ।
श्वाविध् पु० शुना आविध्यते आ-व्यध् क्विप् ६त० । शल्यके (शजारु) क । श्वाविधोप्यत्र पु० ।
श्वास पु० श्वस-घञ् । वायौ, कासरोगभेदे, शिक्षोक्ते वर्णो-
च्चारणार्थे वाह्यप्रयत्नभेदे च । [यामव्यापारे ।
श्वासधारण न० श्वासः प्राणवायुः ध्रियतेऽनेन । प्राणा-
श्वासारि पु० श्वासस्य रोगभेदस्यारिः नाशकत्वात् । पुष्करमूले
श्वि गतौ सक० वृद्धौ अक०भ्वा०प०यजा०सेट् । श्वयति अशि-
श्वत्-अश्वयीत्-अश्वत् । [अश्वितत् अश्वेतिष्ट ।
श्वित शुक्लतापादने भ्वा०आ०लुङि उ० सक० सेट् । श्वेतते
श्वित्र न० श्वित-रक् । श्वेतकुष्ठभेदे (धवल) । [(विकृतौ) ।
श्वित्रघ्नी स्त्री० श्वित्रं हन्ति हन-ट ङीप् । पीतपर्ण्याम्
श्वित्रिन् त्रि० श्वित्रमस्त्यस्य इनि । श्वेतकुष्ठयुक्ते ।
श्विद शुक्लतापादने भ्वा० आ० सक०सेट् इदित् । श्विन्दति अश्विन्दीत् ।
श्वेत पु० श्वित-अच् घञ् वा । द्वीपभेदे, पर्व्वतभेदे, कपर्दके, शुक्रग्रहे, शङ्खे, शुभ्राभ्रे, जीरके, शुक्लवर्णे च । तद्वति त्रि० । रौप्ये न० । स्वार्थे कन् । रौप्ये न० । वराटके पु० ।
श्वेतकण्टकारी स्त्री० कर्म० । शुभ्रवर्णकण्टकारिकायाम् ।
श्वेतकन्दा स्त्री०श्वेतः कन्दोऽस्याः । अतिविषायाम् (आतइच्)
श्वेतकुञ्जर पु० कर्म० । ऐरावतगजे, श्वेतगजमात्रे च श्वेत-गजादयोप्यत्र ।
श्वेतकुश पु० कर्म० । शुक्लवर्णे कुशभेदे ।
श्वेतकेतु पु० कर्म० । केतुग्रहभेदे, सामवेदप्रसिद्धे ऋषिभेदे च ।
श्वेतकेश पु० श्वेतः केश इव यस्य । रक्तशिग्रौ । शुक्लवर्णकेश-वति वृद्धे त्रि० । कर्म० । शुक्ले केशे पु० ।
श्वेतखदिर पु० कर्म० । शुक्ले खदिरभेदे ।
श्वेतगरुत् पु० श्वेतोगरुदस्य । हंसे । शुक्लपक्षयुक्ते त्रि० ।
श्वेतगुञ्जा स्त्री० कर्म० । शुभ्रगुञ्जायां पृ० अदन्तोप्यत्र ।
श्वेतचिल्ली स्त्री० कर्म० । शाकभेदे, (शादाचिल्ड्) ।
श्वेतच्छद पु० श्वेतः छदः पक्षोऽस्य । हंसे । शुक्लपक्षयुक्ते त्रि० ।
श्वेतजीरक पु० कर्म० । शुक्लजीरके । [क्षारभेदे ।
श्वेतटङ्कण न० कर्म० । शुक्लटङ्कणे सालतीनदीतीरसम्भवे
श्वेतदूर्व्वा स्त्री० कर्म० । शुक्लदूर्व्वायाम् ।
श्वेतद्वीप पु० कर्म० । वैकुण्ठाख्यविष्णुधाम्नि, द्वीपभेदे च ।
श्वेतधातु पु० कर्म० । खटिकायाम्, शुक्लवर्णधातुद्रव्ये च ।

**श्वेतधामन्** पु० श्वेतं धाम यस्य । चन्द्रे, कर्पूरे, समुद्रफेने च श्वेतकरादयोऽप्यत्र ।
**श्वेतपत्त्र** पु० श्वेतं पत्त्रं पक्षोऽस्य । हंसे । शुक्लपत्त्रयुक्ते त्रि०
**श्वेतपद्म** न० कर्म० । सितकमले ।
**श्वेतपर्णास** पु०कर्म० । शुभ्रतुलस्याम् ।
**श्वेतपाटला** स्त्री०कर्म० । शुक्लपाटलावृक्षे (घादापारुल) [सिंहे
**श्वेतपिङ्गल** पु०देहेन श्वेतः जटया पिङ्गलः वर्णोवर्णेनेति स०
**श्वेतपिण्डीतक** पु० कर्म० । महापिण्डीतकवृक्षे ।
**श्वेतपुष्प** पु० श्वेतं पुष्पमस्य । सिन्दुवारवृक्षे । शुक्लवर्णपुष्पयुक्ते त्रि० । कर्म० । शुभ्रे पुष्पे न० । संज्ञायां कन् । शुक्लकरवीरे पु० । नागदन्त्यां, घोषातक्यां स्वर्गेर्व्वारौ च स्त्री० ।
**श्वेतपुष्पिका** स्त्री० श्वेतं पुष्पमस्याः कप् अत इत्वम् । महाशणवृक्षे ।
**श्वेतभण्डा** स्त्री० कर्म० । श्वेतापराजितायाम् ।
**श्वेतमन्दार** पु० कर्म० । शुक्लमन्दारे । [त्रि०
**श्वेतमरिच** कर्म० । शोभाञ्जनवीजे शुक्लमरिचे च । [तद्वति
**श्वेतरक्त** पु० श्वेतो रक्तः वर्णौ वर्णेनेति स० । पाटलवर्णे ।
**श्वेतरञ्जन** न०श्वेतं रौप्यं रज्यतेऽनेन रन्ज-ल्युट् । सीसके
**श्वेतरथ** पु० श्वेतो रथो यस्य । शुक्रग्रहे कर्म०। शुभ्रे रथे ।
**श्वेतलोध्र** पु० कर्म० । पट्टिकालोध्रे ।
**श्वेतवचा** स्त्री० श्वेता वचेव । अतिविषायाम् (आतइच) ।
**श्वेतवल्कल** पु० श्वेतं वल्कलमस्य । उडुम्बरवृक्षे ।
**श्वेतवाजिन्** पु० श्वेतो वाजी यस्य । चन्द्रे, अर्ज्जुने च । श्वेताश्वादयोऽप्यत्र । [त्रि० ।
**श्वेतवासस्** पु० श्वेतं वासोऽस्य । संन्यासिभेदे । शुक्लवस्त्रयुक्ते
**श्वेतवाह्** पु०श्वेतेन श्वेताश्वेन उह्यते वह-ण्वि । इन्द्रे, अर्ज्जुने, चन्द्रे च ।
**श्वेतवाहन** पु० श्वेतं वाहनमस्य । चन्द्रे, इन्द्रे, अर्ज्जुने च ।
**श्वेतवुह्ना** स्त्री० कर्म० । वनतिक्तायाम् ।
**श्वेतवृक्ष** पु० कर्म० । वरुणवृक्षे ।
**श्वेतवृहती** स्त्री० कर्म० । शुक्लवर्णवृहत्याम् ।
**श्वेतशिंशपा** स्त्री० कर्म० । शुक्लशिंशपायाम् ।
**श्वेतशिग्रु** पु० कर्म० । सितशोभाञ्जने ।
**श्वेतशुङ्ग** पु० श्वेता शुङ्गाऽस्य । यवे । शुक्लवर्णशुङ्गायुक्ते त्रि०
**श्वेतशूरण** पु० कर्म० । वनशूरणे । [शुक्लभुजगे ।
**श्वेतसर्प** पु०श्वेतः सन् सर्पति सृप-अच् । वरुणवृक्षे । कर्म०
**श्वेतसर्षप** पु० कर्म० । गौरसर्षपे ।
**श्वेतसार** पु० श्वेत सारोऽस्य । शुक्लखदिरे ।
**श्वेतसुरसा** स्त्री० कर्म० । शुक्लशेफालिकायाम् ।
**श्वेतस्यन्दा** स्त्री० श्वेता सती स्यन्दते स्यन्द-अच् । सितापराजितायाम् ।
**श्वेतहय** पु० कर्म० उच्चैःश्रवसि, सितवर्णयुक्ते हये च ।
**श्वेता** स्त्री० श्वित-अच् । वराटिकायाम्,काष्ठपाटलायां, शङ्खिन्याम्, अतिविषायाम्, सितापराजितायाम्, शुक्लकण्टकार्य्यां, पाषाणभेद्याम्, शुक्लदूर्वायां, वंशरोचनायां, शर्करायां, शिलावल्कलायाञ्च ।
**श्वेतार्क** पु० कर्म० । शुक्लवर्णपुष्पके अर्कवृक्षे । [वरशाके
**श्वेतावर** पु० श्वेतं श्वेतवर्णमावृणोति आ+वृ-अच् । सिता-
**श्वेतेक्षु** पु० कर्म० । शुक्ले इक्षौ ।
**श्वेतौही** स्त्री० श्वेतौहः पत्नी ङीप् । इन्द्राण्याम् शच्याम् ।
**श्वैत्य** श्वेतस्य भावः ष्यञ् । शुक्लवर्णे ।
**श्वोवसीयस** न० अतिशयेन वसुः प्रशस्तम् वसीयस् नि परदिने भाविकाले प्रशस्ते मङ्गले । तद्वति त्रि० ।

## ष

**ष** पु० षो-क ष० सतत्म् । केशे । गर्भविमोचने, मानवे च सर्व्वे, श्रेष्ठे, विज्ञे च त्रि० । [असगीत् । सगयति ।
**षग** संवरणे भ्वा०पर०सक० सेट् घटा० सिचि न वृद्धिः । सगति
**षघ** हिंसायां स्वा०पर०सक० सेट् सिचि न वृद्धिः । सघ्नोति असघीत् ।
**षच** सेचने भ्वा०आ०सक०सेट् । सचते असचिष्ट ।
**षच** संवन्धे भ्वा०पर०सक०सेट् । सचति । असचीत्-असाचीत्
**षट** विभाजने भ्वा०पर०सक०सेट् । षटति असटीत् असाटीत्
**षट्कर्मन्** न० षट्प्रकारं कर्म । तन्त्रोक्तेषु शान्तिवशीकरणस्तम्भनविद्वेषोच्चाटनमारणरूपेषु षट्सु प्रयोगभेदेषु, यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपेषु षट्सु विप्रकर्मसु च । षट् कर्माणि यस्य । यागादियुक्ते विप्रे पु० ।
**षट्कोण** न० षट् कोणा यस्य । वज्रे, तन्त्रोक्ते ऊर्द्धाधःस्थे त्रिकोणद्वयरूपे यन्त्रभेदे, ज्योतिषोक्ते लग्नतः षष्ठस्थाने च ।
**षट्चक्र** न०षण्णां चक्राणां समाहारः पात्रादि० । तन्त्रोक्तेषु देहस्थेषु सुषुम्नानाड़ीमध्यवर्त्तिषु द्विदलचतुर्दलादिषु षट्सु पद्मेषु । तदधिकृत्य कृतोग्रन्थः अण् तस्य लुक् । षट्चक्रप्रतिपादकग्रन्थभेदे । [संख्याभेदे तत्संख्यान्विते च ।
**षट्चत्वारिंशत्** स्त्री० षड़धिका चत्वारिंशत् । (छेयाल्लिश)
**षट्चरण** पु० षट् चरणा यस्य । भ्रमरे, षट्पदादयोऽप्यत्र ।
**षट्ट** निवासे वले च अक० हिंसायां स्नेने च सक० चुरा० उभ०

सेट् । सट्टयति ते असषट्टत् त ।

**षट्तिलिन्** पु० षट् तिलाः तिलोद्वर्त्तनादयः कर्म्माण्यस्य । 'तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः । तिलभुक् तिलवापी च षट्तिलो नावसीदती'त्युक्ते तिलोद्वर्त्तनादिकारिणि

**षट्त्रिंशत्** स्त्री० षडधिका त्रिंशत् शाक० । (छत्रिश) सङ्ख्याभेदे तत्सङ्ख्यान्विते च ।

**षट्पञ्चाशत्** स्त्री० षडधिका पञ्चाशत् शाक० । (छाप्पान्न) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च । [भ्रमरप्रियत्वम्

**षट्पदप्रिय** पु० ६त० । नागकेशरे तस्य हि प्रचुरमधुत्वात्

**षट्पदातिथि** पु० षट्पदः अतिथिरिव यस्य । आम्रवृक्षे ।

**षट्पदानन्दवर्द्धन** पु०षट्पदस्यानन्दं वर्द्धयति वृध-णिच्-ल्यु उप० । अशोकवृक्षे ।

**षट्पदी** स्त्री०षट् पादा अस्याः पादस्य पद्भावः ङीपि पद्भावः । यूकायां, भ्रमरयोषिति स० द्विगुः । षट्चरणयुक्ते छन्दोभेदे च । षट् श्लोकात्मकपद्यसंघाते ।

**षट्प्रज्ञ** पु० षट्सु प्रज्ञा यस्य । 'धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि । षट्सु प्रज्ञा तु यस्यासौ षट्प्रज्ञः परिकीर्त्तित' इत्युक्ते धर्मार्थाद्यभिज्ञे बौद्धे ।

**षडङ्ग** न० षण्णामङ्गानां समाहारः पात्रा० । 'जङ्घे बाहू शिरो मध्यं षडङ्गमिदमुच्यते' इत्युक्ते देहावयवभेदे तन्त्रोक्ते हृदयाद्यवयवभेदे यत्र हृदयादिषु षट्सु अङ्गेषु मन्त्रविशेषो न्यस्यते तेषु । षट् अङ्गानीव यस्य । 'शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसां चितिः । ज्योतिषामयनञ्चैव षडङ्गो वेद इष्यते' इत्युक्ते वेदे, क्षुद्रगोक्षुरक्षुपे च पु० ।

**षडभिज्ञ** पु० षट् अभिज्ञा 'दिव्य चक्षुः श्रोत्रं, परचित्तज्ञानं पूर्व्वनिवासानुस्मृतिः, आत्मज्ञानम्, वियद्गतिः कायव्यूहसिद्धिश्चेत्येतानि अभिज्ञा अभिज्ञायमानानि यस्य । बौद्धभेदे ।

**षडशीति** स्त्री० षडधिका अशीतिः शाक० । (छेयाशि) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च । षडशीतिमुखवत्सु मिथुनकन्याधनुर्मीनेषु रवेः संक्रान्तौ च 'अयनविष्णुपदी षडशीतयो विषुवविष्णुपदीषडशीतय इति ज्योतिषम् ।

**षडशीतिमुख** न० षडशीतेः तन्नामसंक्रान्ते र्मुखम् । 'तुलादिषडशीत्यह्नां षडशीतिमुखम् क्रमात् । तच्चतुष्टयमेव स्यात् द्विस्वभावेषु राशिषु' इति षड्विंशे धनुषो भागे, द्वाविंशेऽनिमिषस्य च मिथुनाष्टादशे भागे कन्यायास्तु चतुर्द्दशे, इति सूर्य्यसिद्धान्तोक्ते तुलादितः षडशीतिदिनान्तरितकाले ।

**षडानन** पु०षट् आननानि यस्य । कार्त्तिकेये षड्वदनादयोऽप्यत्र

**षडूर्म्मि** पु०षट् ऊर्म्मय ऐश्वर्य्याणि यस्य । षड्विधैश्वर्य्ये परमेश्वरे

**षड्गव** त्रि० षड्भिर्गोभिरायुक्तः शकटः हलो वा शाक० अच् समा० । षड्भिर्गोरुभिराकृष्टे हलादौ 'अष्टागवं धर्म्यहलं षड्गवं जीविकार्थिना'मिति स्मृतिः । षण्णां गवां समाहारः द्विगुः । षट्सु गोषु न० ।

**षड्गुण** पु०षड्भिः गुणिता गुणाः शाक० । राज्ञां सन्ध्यादिषु षट्सु गुणेषु । [शथाम्, महाकरञ्जे च ।

**षड्ग्रन्था** स्त्री० ग्रन्थः ग्रन्थिः षट् ग्रन्था अस्याः । वचायां

**षड्ग्रन्थि** न० षट् ग्रन्थयोऽस्य । पिप्पलीमूले, षट्पर्व्वयुक्ते त्रि० संज्ञायां कन् । षड्ग्रन्थिका स्त्री० टाप् । अत इत्त्वम् वा ङीप् वाचायां स्त्री० ।

**षड्ज** पु० षड्भ्यो नासादिस्थानेभ्यो जायते जन-ड । 'नासाकण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः । षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृत' इत्युक्ते स्वरभेदे 'षड्जसंवादिनीः केका' इति रघुः ।

**षड्दीर्घ** पु० षड्भिर्गुणिता दीर्घाः । तन्त्रोक्तेषु आ, ई, ऊ, ऐ, औ, अः इत्येवं रूपेषु षट्सु दीर्घेषु ।

**षड्धा** अव्य० षष्+प्रकारे धाच् । षट्प्रकारे ।

**षड्भुजा** स्त्री० षट् भुजा इव यस्याः (खरमुज) फललताभेदे षड्हस्तयुक्ते त्रि० ।

**षड्रस** न०षण्णां रसानां समाहारः पा० । 'मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथे'त्युक्तेषु मधुरं लौल्यमित्याहुरिक्ष्वादौ स च लक्ष्यते । लवणस्तु पटुः प्रोक्तः सैन्धवादौ स दृश्यते । तिक्तस्तु पिचुमर्द्दादौ व्यक्तमास्वाद्यते रसः । कषायस्तुवरः प्रोक्तः स च पूगीफलादिषु । कटुस्तु तीक्ष्णसंज्ञः स्यात् मरीचादौ स चेष्यते' इत्युक्तस्वादेषु लक्षेषु षट्सु रसेषु ।

**षड्वर्ग** पु० ६त० । 'कामक्रोधलोभमोहमद मात्सर्य्येषु 'त्याजेट् षड्वर्गमिति भट्टिः । 'क्षेत्रं होरा च द्रेक्काणं नवांशद्वादशकौ । त्रिंशांशकश्चेति विज्ञैः षड्वर्गः समुदाहृतः' इति ज्योतिषोक्तेषु क्षेत्रादिषु षट्सु विस्तरो वृहदभिधाने ।

**षण** संभक्तौ भ्वा० पर० सक० सेट् । षस्य सत्वे णस्य नत्वम् । सनति असनीत् असानीत् ।

**षणु** दाने तना० उभ० सक० सेट् षस्य सत्वे णस्य नत्वम् । सनोति असनीत्-असानीत् असनिष्ट-असत ।

**षण्ड** पु० षण-ड डस्य नेत्त्वम् ष्ट०षत्त्वं णत्वं वा । वृषे, नपुंसके, पद्मादिसमूहे पु०न० ।

**षण्ढ** पु० षण-ढ तस्य नेत्त्वम् ष्ट० षः । नपुंसके ।

षण्मुख पु० षट् मुखानि यस्य । कार्त्तिकेये ।
षद् गतौ चु०उ०सक०सेट् । षादयति ते असीषदत् ।
षद् विषादे अक०हिंसायां गतौ च सक०तु पर०अनिट् ज्वला० । सीदति, असदत् । सदः सादः ।
षन्च गतौ भ्वा०पर०सक०सेट् । सञ्चति असञ्चीत् ।
षन्ज सङ्गे, संदंशे च भ्वा०पर०सक०अनिट् । सजति असाङ्क्षीत्
षप समवाये भ्वा०पर०सक०सेट् । सपति असापीत् असपीत् ।
षम वैकल्ये अद०चु०उभ०अक०सेट् । समयति ते अससमत् त
षम्ब सर्पणे भ्वा०पर०सक०सेट् । सम्बति असम्बीत् ।
षर्ज्ज अर्जने भ्वा०पर०सक०सेट् । सर्ज्जति असर्ज्जीत् ।
षर्द्द अपानशब्दे भ्वा०पर०सक०सेट् । सर्द्दति असर्द्दीत् ।
षर्ब(र्व) गतौ भ्वा०सक०सेट् । सर्ब(र्व)ति असर्बी(र्वी)त् ।
षल गतौ भ्वा०पर०सक०सेट् । सलति असालीत् ।
षष् त्रि० ब० व० षो क्विप् पृ० । (छय)सङ्ख्याभेदे व्याकरणोक्ते सङ्ख्यावाचके मात्रे नाम्नि च शब्दे च । [सङ्ख्यान्विते च ।
षष्टि स्त्री० षड्गुणिता दशतिः नि० । (षाट्) सङ्ख्याभेदे, तत्-
षष्टिक पु० षष्ट्या अहोभिः पच्यते कन् । (षाटिया) धान्यभेदे
षष्टिक्य न० षष्टिकधान्यस्य भवनं क्षेत्रम् यत् । षष्टिकधान्योत्पत्तियोग्ये क्षेत्रे । [स्त्रियां ङीप्
षष्टितम त्रि०षष्टेःपूरणः तमट् । येन षष्टिसङ्ख्या पूर्य्यते तस्मिन् ।
षष्टिमत्त पु० षष्टिवर्षैर्मत्तः । अर्द्धवयस्के गजे तदुत्तरं हि तस्य मत्ततायोग्यत्वात् तथात्वम् ।
षष्टिसंवत्सर पु० ब० व० षष्टिगुणिता संवत्सराः । ज्योतिष-प्रसिद्धेषु प्रभवादिषु षष्टौ वत्सरेषु तद्विशेषे रूढ्यभिधाने ।
षष्टिहायन पु० षष्टिर्हायना वयोऽस्य । षष्टिवर्षवयस्के गजे षष्टिदिनपच्योत्पादनी ब्रीहिः शाक० । षष्टिकधान्ये ।
षष्ठ त्रि०षण्णां पूरणः षष्+डट् थुक् च । येन षट्संख्या पूर्य्यते तस्मिन् । स्त्रियां ङीप् । [षष्ठांशरूपे न्यपकरे ।
षष्ठक त्रि० षष्ठो भागः कन् । षष्ठे भागे । [उत्पन्नशस्यस्य
षष्ठांश पु० कर्म० । रक्षणप्रतिरूपतया प्रजाभ्यो ग्राह्ये
षष्ठान्न त्रि० षष्ठे दिवसस्य षष्ठकालः अन्नस्य तद्भोजनस्य वा कालो यस्य । दिवसस्य षष्ठभागे अन्नभोजनकालवति पुरुषे ।
षष्ठान्नकाल पु० षष्ठे दिवसे भक्ष्यान्नकालो यत्र । व्रतभेदे ।
षष्ठी स्त्री०षण्णां पूरणी डट् थुट् ङीप् । चन्द्रमसः षष्ठकलाया शुक्लपक्षक्रियारूपे तिथिभेदे, स्कन्दभार्यारूपे मातृकाभेदे, 'मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता । शिशूनां प्रति विश्वेषु प्रतिपालनकारिणी तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनी'ति पुराणम् ।

षस स्वप्ने अदा०पर०अक०सेट् वैदिकः । सस्ति असासीत् अससीत्
षस्ज सर्पणे भ्वा०पर०सक०सेट् । सज्जति असज्जीत् । अयमात्मनेपदीत्यन्ये 'वचोऽपि मद्याचरं न च पदेषु संसज्जते इति शकुन्तला ।
षस्ति स्वप्ने अदा०स्वपा०पर०अक०सेट् वैदिकः इदित् । संस्ति असंस्तीत् । [ते सह्यति असीषहत् असहीत् ।
षह क्षमायां वा चु०उभ०पक्षे दि०पर०सक०सेट् । साहयति
षह क्षमायां भ्वा०आ०सक०सेट् ज्वला० । सहते असहीत् ।
षाड्गुण्य न० षट्गुणा एव ष्यञ् । राज्ञां सन्धिविग्रहादिषु षट्सूपायेषु 'षाड्गुण्यमुपभुञ्जते'इति माघः ।
षाण्मातुर पु० षण्णां मातृणामपत्यम् अण् उदादेशे रपरः । कार्त्तिकेये तस्य कृत्तिकाग्निं, गङ्गा,पृथिवी, पार्व्वती चेति षट् मातरः पुराणेषु प्रसिद्धाः ।
षात्वणत्विक त्रि० षत्वणत्वे अधिकृत्य कृतो ग्रन्थः ठक् । षत्वणत्वप्रतिपादके ग्रन्थे ।
षाण्मासिक न० षष्ठे मासे भवः ठञ् । मृतस्य एकाहोन षष्ठमासे कर्त्तव्ये श्राद्धभेदे 'आद्यं षाण्मासिके तथेति' स्मृतिः 'एकाहन्यूनषण्मासे तस्य विधानमि'ति स्मार्त्तलेखः
षाध सिद्धौ स्वा०दि० च पर०अक०अनिट् । साध्नोति साध्यति । असात्सीत् । [ति असषान्त्वत् त ।
षान्त्व सामप्रयोगसम्पादने अद०चु०उभ०सक०सेट् । सान्त्वयति
षि बन्धे स्वा०क्र्या०उभ०सक०अनिट् । सिनोति सिनुते सिनाति सिनीते असैषीत् । असेष्ट । [चत् त । सेता
षिच आर्द्रीकरणे तु०मु०उभ०सक० अनिट् । सिञ्चति ते असि-
षिट अनादरे भ्वा०प०सक०सेट् । सेटति असेटीत् ।
षिड्ग पु० षिट-गन् पृ० । विटे (लम्पट) कामुके । [असैत्सीत् ।
षिध माङ्गल्ये अक० शासने सक० वेट् । सेधति असेधीत्-
षिध गतौ भ्वा०पर०सक०सेट् । सेधति असेधीत् ज्वला० ।
षिध सिद्धौ दिवा०प०अक०अनिट् ज्वा०वेट् । सिध्यति असैत्सीत् ।
षिभ्भ हिंसने सक० दीप्तौ अक०भ्वा०पर०सेट् ज्वा०वेट् । सिम्भति असिम्भीत् । [असेधीत् ।
षिम हिंसने भ्वा०प०सक०सेट् । सेमति असेमीत् । [सिञ्चति
षिल उच्छवृत्त्यैकदेशात् पाणय आदाने तुदा०पर०सक० सेट् ।
षिव तन्तुविस्तारे दि०प०सक०सेट् ज्वा०वेट् । सीव्यति असेवीत्
षु (सुराद्यावनरूपे)सवाने सोमादेः पीडने मन्थने च स्वा०उ० सक० स्नाने अक०अनिट् लुङि प०सेट् । सुनोति सुनुते असावीत् असोष्ट । [असोष्ट ।
षु गतौ भ्वा०आ०सक० अनिट् लुङि प०वेट् । सवति असावीत्

षु प्रसवे ऐश्वर्य्ये च भ्वा०पर०सक०अनिट् सवति असौषीत् ।
षु ऐश्वर्य्ये प्रसवे च अदा० पर० सक० वेट् लिटि सेट् । सौति असावीत्-असौषीत् । सुषुविव ।
षुट्ट् अनादरे भ्वा०चु०उ०सक०सेट् । सुट्टयति ते असुषुट्टत् त
षुन्भ दीपने अ०हिंसने स०भ्वा०प०सेट् , सुम्भति असुम्भीत्
षुर् दीप्तौ अक०ऐश्वर्य्ये सक०तु०प० सेट् । सुरति असोरीत् ।
षुह तृप्तौ समायाञ्च सक०दि०प०सेट् । सुह्यति असुहत् ।
षू प्रसवे अदा०आ०सक०सेट् । सूते असविष्ट ।
षू प्रसवे दि०आ०सक०सेट् । सूयते असविष्ट-असोष्ट ।
षू क्षेपे तु०प०सक०वेट् । सुवति असावीत् ।
षूद् निवारणे भ्वा०आ०सक०सेट् । सूदते असूदिष्ट ।
षूद् मारणे भ्वा०प०सक०सेट् । सूदति असूदीत् ।
षूद् चरणे अक०प्रतिज्ञायां निरासे च सक०चु०उ०सक०सेट् । सूदयति ते असूषुदत् । [दिष्ट
षूर् स्तम्भे अक०हिंसने सक०दि०आ०सक सेट् । सूर्यते असू-
षूर्च्च अनादरे भ्वा०प०सक०सेट् । सूर्चति असूर्चीत् ।
षूर्च्य ईर्षायां भ्वा०प०सक०सेट् । सूर्च्यति असूर्च्यीत् ।
षूष प्रसवे भ्वा०प०सक०सेट् । सूषति असूषीत् ।
षृन्भ हिंसने भ्वा०प०सक०सेट् । सृम्भति असृम्भीत् ।
षृभ हिंसने भ्वा०प०सक०सेट् । सर्भति असर्भीत् ।
षेक सर्पणे भ्वा०आ०सक०सेट् चङि न ह्रस्वः । सेकति असेकीत्
षेल चालने गतौ च भ्वा०पर०सक०सेट् चङि न ह्रस्वः । सेलति असेलीत् ।
षेव आराधने उपभोगे आश्रये च भ्वा०उ०सक०सेट् चङि न ह्रस्वः । सेवति सेवते असेवीत् असेविष्ट ।
षै क्षये भ्वा०प०अक०अनिट् । सायति असासीत् ।
षो नाशनेअक०दि०प०अनिट् । स्यति असात्-असासीत् ।
षोडत् पु० षट् दन्ता यस्य दन्तस्य दत् नि० । षड्दन्तयोग्यवयस्के वृषादौ । [तत्सङ्ख्यान्विते च
षोडशन् त्रि० ब०व० षडधिका दश नि० । (षोल) संख्याभेदे
षोडश पु० षोड़शानां पूरणः डट् । येन षोडशसंख्या पूर्य्यते तस्मिन् । चन्द्रमण्डलस्य कलात्मके षोडशभागरूपकलायां, तिथिराशन्दर्य्याञ्च स्त्री० ङीप् ।
षोडशक न०षोड़श परिमाणमस्य कन् । षोड़शसंख्याते वस्तुनि 'भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् । ताम्बूलच्छत्रगन्धाश्च माल्यं फलमतः परम् । शय्या च पादुका गावः काञ्चनं रजतं तथा । दानमेतत् षोडशकं प्रेतमुद्दिश्य दीयते' इति स्मृत्युक्तेषु भूम्यादिषु प्रेतोद्देशेन दीयमानेषु षोडशसु । 'स्वर्णं रौप्यं तथा ताम्रं कांस्यं गावो गजा हयाः । गृहं भूमिर्वृषो वस्त्रं शय्या चैत्रमुपानहौ । दासश्चं पितृयज्ञेषु दानं षोडशकं मतमिति वायुपुराणोक्तेषु पितृकृत्येषु देयेषु स्वर्णादिषु षोड़शसु च ।
षोडशमातृका स्त्री० ब०व० षोडशसंख्या मातरः । 'गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिः कुलदेवात्मदेवता' इत्युक्तासु गौर्य्यादिषु षोडशसु मातृकासु
षोडशाङ्ग पु० षोडश द्रव्याणि अङ्गान्यस्य । 'गुग्गुलु सरलं दारु पत्रं मलयसम्भवम् । ह्रीवेरसगुरुं कुष्ठं गुडं सर्ज्जरसं घनम् । हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम् षोडशाङ्गं विदुर्धूपं दैवे पैत्रे च कर्म्मणी'त्युक्ते गुग्गुलादिषोडशद्रव्यरचिते धूपे ।
षोडशाङ्घ्रि पु० षोडश अङ्घ्रयश्चरणा यस्य । कर्कटे ।
षोडशार न० षोडश आराणि कोणा अस्य । षोडशदलयुक्ते कमले, तन्त्रोक्ते यन्त्रभेदे च ।
षोडशिन् पु० षोडशकला विद्यन्तेऽस्य इनि । सोमे । यज्ञाङ्गे तन्नामसोमरसस्थापनपात्रे च 'अतिरात्रे षोडशिनं गृह्णातीति श्रुतिः ।
षोडशोपचार पु०ब०व० षोडशसंख्याता उपचाराः । 'आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । मधुपर्काचमस्नानं वसनाभरणानि च गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथे'त्युक्तेषु षोडशषु पूजाङ्गद्रव्येषु ।
षोढा अव्य० षट् प्रकारम् धाच् नि० । । षट्सु प्रकारेषु ।
षोढान्यास पु० षोढा षट्प्रकारो न्यासः । तन्त्रोक्ते षट्प्रकारन्यासभेदे विस्तरो वृहदभिधाने ।
ष्टक प्रतीघाते भ्वा०प०सक०सेट् घटा० । स्तकति अस्ताकीत् ।
ष्टग संवरणे भ्वा०प०सक०सेट् सिचि न वृद्धिः घटा० । स्तगति अस्तगीत् । [अस्तनीत् ।
ष्टन शब्दे भ्वा०पर०सक०सेट् वा घटा० । स्तनति अस्तानीत्-
ष्टभ स्तम्भे स०स्तने अ०भ्वा०आ०सेट् ईदित् । स्तभते अस्तभिष्ट
ष्टम वैकल्ये अद०चु०उभ०सक०सेट् । स्तमयति ते अतस्तमत् त
ष्टम वैकल्ये अक०भ्वा०प०सेट् । स्तमति अस्तमीत् ।
ष्टिध अभियोगे स्वा०आ०सक०सेट् । स्तिघ्नुते अस्तेघिष्ट ।
ष्टिप चरणे भ्वा०आ०अक०सेट् चङि न ह्रस्वः । स्तेपते अस्तेपिष्ट
ष्टिम क्लेदे दि०प०अक०सेट् । स्तिम्यति अस्तेमीत् ।
ष्टीम क्लेदे दि०प०अक०सेट् । स्तीम्यति । अस्तीमीत् ।
ष्टु स्तुतौ अदा०उ०सक०अनिट् सिचि सेट् लुङि प० वेट ।

स्तौति स्तवीति स्तुते इत्यन्ये अस्तावीत् अस्तोष्ट ।
ष्टुच प्रसादे अक०भ्वा०आ०सेट । स्तोचते अस्तोचिष्ट ।
ष्टुप उच्छ्राये अद०चु०उ०सक०सेट् । स्तूपयति ते अतुस्तूपत् त
ष्टुप उच्छ्राये दि०प०सक०सेट् । स्तूप्यति अस्तूपत् । [अस्तोभिष्ट
ष्टुभ उम्भ अक०स्तम्भने सक०भ्वा०आ०सेट् क्त्वा वेट् । स्तोभते
ष्टृक्ष गतौ भ्वा०प०सक सेट् । स्तृक्षति अस्तृक्षीत् ।
ष्टृह वध तु०प०सक०वेट् । स्तृहति अस्तर्हीत् अस्तृक्षत् ।
ष्टृंह वधे तु० आ०सक०वेट् । स्तृंहति अस्तृंहीत् अस्तृक्षत् ।
ष्टेप क्षरणे भ्वा० आ० अक० सेट् चङि न ह्रस्वः । स्तेपते । [अस्तासीत् ।
अस्तेपिष्ट ।
ष्टै संघाते सक० ध्वनौ अक० भ्वा०प०अनिट् । स्तायति ।
ष्ट्यै वेष्टने सक० दीप्तौ अक० भ्वा० प० अनिट् । स्त्यायति [अस्त्यासीत् ।
अस्त्यासीत् । मतान्तरे प्त्यायति ।
ष्ठग संवरणे भ्वा०प०सक०सेट् घटा० मिचि न वृद्धिः । स्थगति
ष्ठल स्थितौ भ्वा०प०अक०सेट् ज्वला० । स्थलति अस्थालीत् ।
ष्ठस निरासे दि०प०सक सेट् । स्थस्यति अस्थासीत्—अस्थसीत्
ष्ठा गतिनिवृत्तौ भ्वा०प०अक०अनिट् । तिष्ठति अस्थात् ।
ष्ठिव निरासे (मुखेन श्लेष्मादेर्वमने) भ्वा०प०सक० सेट् ष्ठीवति [अष्ठीवीत् ष्ठीवनम् ।
अष्ठेवीत् । ष्ठेवनम् ।
ष्ठीव निरासे(श्लेष्मादेर्मुखेन वमने) भ्वा०प०अक०सेट् । ष्ठीवति [अष्ठ्यत्
ष्ठ्यूत त्रि० ष्ठिव-क्त । निरस्ते, वान्ते च ।
ष्णस निरासे दिवा०प०सक०सेट् क्त्वा वेट् वा घटा० । स्नसति
ष्णा शोधने अदा०प०अक०अनिट् । स्नाति अस्नासीत् ।
ष्णिह प्रीतौ दि०प०सक०वेट् । स्निह्यति अस्नेहत् । स्नेहिता- [ष्णिहत् त ।
स्नेढा—स्नेग्धा ।
ष्णिह स्नेहयुक्त भवने चु०उ०अक सेट् । स्नेहयति ते असि-
ष्णु स्नाने अा०उ०अक०सेट् । स्नौति अस्नावीत् अस्नोष्ट ।
ष्णुच सेचने भ्वा०आ०सक०सेट् । स्नोचते अस्नोचिष्ट ।
ष्णुस भक्षे दि०प०सक०सेट् । स्नुस्यति अस्नोसीत् ।
ष्णुह उद्गारे दि०प०सक०वेट् । स्नुह्यति अस्नुहत् ।
ष्णै वेष्टे भ्वा०प०सक०अनिट् । स्नायति अस्नासीत् । प्स्नै
इत्येके प्स्नायति अप्स्नासीत् ।
ष्मि ईषद्धासे भ्वा०आ अक०अनिट् । स्मयते अस्मेष्ट ।
ष्वक्क सर्पणे भ्वा०आ०सक०सेट् । ष्वक्कते अष्वक्किष्ट ।
ष्वद् स्वादे छदनेप चु०उ०सक०सेट् । स्वादयति ते असिष्वदत्
ष्वद् प्रीतौ लेहने च भ्वा०आ०सक०सेट् । स्वदते अस्वदिष्ट ।
ष्वन्ज आलिङ्गने भ्वा०आ०सक०अनिट् । स्वजते । अस्वङ्क्त
ष्वप शयने निद्रायाञ्च अदा०स्वपा० जक्षा० प० अक० अनिट् ।
स्वपिति अस्वाप्सीत् । [र्यति ते । अषष्वर्त्तत् त ।
ष्वर्त्त गतौ सक०दुःखेन जीवने अक० चु०उ०सेट् । ष्वर्त्त-
ष्वष्क गतौ भ्वा०आ०सक०सेट् । ष्वष्कते अष्वष्किष्ट ।
ष्विद् मोहे स्नेहे, च अक० मोचने ह ।० भ्वा० आ० लुङि उ०
सेट् । स्वेदते अस्विदत् अस्वेदिष्ट ।
ष्विद् गात्रप्रक्षरणे अक दि०प०अनिट् । स्विद्यति अस्विदत् ।

स

स पु० सो-ड । विष्णौ, सर्पे, ईश्वरे, विहगे च । [प्रकाशने ।
संक्षेप पु० सम्+क्षिप-घञ् । भूयसोऽर्थस्याल्पवाक्यादिना-
संक्षोभ पु० सम्+क्षुभ-घञ् । चाञ्चल्ये, क्षोभे च । [त्रि० ।
संग्राहिन् पु० सम्+ग्रह-णिनि । कुटजवृक्षे । सञ्चयकारके
संघ पु० सम्+हन-ड नि० । समूहे,जन्तुसमूहे च । घञ् ।
संघातोऽपि समूहे दृढसंयोगे च पु० ।
संघर्ष पु० सम्+घृष-घञ् । अन्योन्यदृढसंयोगे ।
संज्ञ न० सम्+ज्ञा-क । पीतकाष्ठे कालीयके गन्धद्रव्ये । सम्+
ज्ञा-अङ् । चेतनायाम् बुद्धौ, आख्यायाम्, हस्ताद्यैरर्थ-
सूचने, गायत्र्यां, सूर्यपत्न्याञ्च स्त्री० ।
सं(ज्ञ)ज्ञापन सम्+ज्ञा-णिच्-पुक् मारणे ह्रस्वः ल्युट् । मा-
रणे । अन्यार्थे न ह्रस. । ज्ञाने । ज्ञिप् । संज्ञप्तिरप्यत्र स्त्री०
संज्ञासुत पु० संज्ञायाः सूर्यपत्न्याः सुतः । शनैश्चरे ।
संज्ञु त्रि० संहते जानुनी यस्य जानुस्थाने ज्ञुः । संहतजानुके ।
संज्वर पु० सम्+ज्वर-अप् । अग्निजाते तापे ।
संमर्द्द पु० सम्+मृद-घञ् । अन्योन्यदृढसंयोगकर्मणि संघर्षे ।
संयत त्रि० सम्+यम-क्त । बद्धे कृतशास्त्रोक्तनियमे च ।
संयत् स्त्री० संयम्यतेऽत्र सम्+यम-क्विप् तुक् च । युद्धे ।
संयन्तृ त्रि० संयच्छति सम्+यम-तृच् । नियन्तरि ।
संय(या)म पु० सम् यम-घञ् वा वृद्धिः । व्रताङ्गतया पूर्वदिन
कर्त्तव्ये नियमभेदे, इन्द्रियनिग्रहे, बन्धने च ।
संयमन न० सम्+यम-ल्युट् । बन्धने,व्रते, चतुःशाले गृहे च
संयमनी स्त्री० संयम्यते बध्यतेऽत्र सम्+यम-ल्युट् । यमाधि-
ष्ठितपुर्याम् । [संयमवति त्रि० ।
संयमिन् पु० सम्+यम-घिनुण् न वृद्धिः । मुनिभेदे इन्द्रिय-
संयाव पु० सम्यक् घृतादिभिर्यूयते मिश्र्यते गोधूमचूर्णादात्र
सम्+यु-घञ् । "संयावस्तु घृतक्षीरगुडगोधूमपाकज"
इत्युक्ते घृतादिना पक्वगोधूमचूर्णे । [संयुक्ते च ।
संयुज् त्रि० सम्यक् युनक्ति सम्+युज-क्विन् । गुणाढ्ये,

**संयुक्त** त्रि० सम्+युज–क्त। संयोगवति पदार्थे।

**संयुग** न० संयुज्यतेऽत्र सम्+युज–क छ० जस्य गः। युद्धे।

**संयुत** त्रि० सम्+यु–क्त। संयुक्ते।

**संयोग** पु० सम्+युज–घञ्। मेलने क्रियाजन्ये द्रव्याश्रिते गुणभेदे, संबन्धमात्रे च।

**संयोगपृथक्त्व** न० संयोगेन फलसंबन्धभेदेन पृथक्त्वं नानारूपत्वं यत्र। एकस्यैव कर्म्मणो नित्यानित्यत्वप्रतिपादके मीमांसकोक्ते न्यायभेदे।

**संयोजित** त्रि० सम्+युज–णिच्–क्त। कृतमेलने पदार्थान्तरेण कृतयोजने पदार्थे।

**संरम्भ** पु० सम्+रभ–घञ् मुम् च। कोपे, आक्षेपे, उत्साहे. वेगे च "अदृष्टिसंरम्भमिवाम्बुवाहमि"ति कुमारः।

**संराधन** न० सम्+राध–ल्युट्। सम्यक् सेवने,सम्यक् चिन्तने च

**संराव** पु० सम्+रु–घञ्। शब्दे।

**संरूढ** त्रि० सम्+रुह–क्त। प्रौढे,जाताङ्कुरे च।

**संरोध** पु० सम्+रुध–घञ्। रोधने, क्षेपे च।

**संलग्न** त्रि० सम्+लग–क्त। मिलिते।

**संलय** पु० संलीयते इन्द्रियव्यापारोऽत्र सम्+ली–अच्। निद्रायाम्, प्रलये च।

**संलाप** पु० सम्+लप–घञ्। परस्परकथने प्रीत्या अन्योन्योक्तिप्रत्युक्तिभ्यां भाषणे, रहसि कथने च।

**संवत्सर** पु० संवसन्ति ऋतवोऽत्र सम्+वस+सरन्। वत्सरे, ज्योतिषोक्ते प्रभवादिषष्ठ्यन्तर्गते वत्सरभेदे च।

**संवत्** अव्य० सम्+वय–क्विप् यलोपे तुक्। विक्रमादित्यराज्यावधिके तत्कृतशकवत्सरे।

**संवदन** न० सम्+वद–ल्युट्। आलोचने, वशीकरणे, च। सम्+वन–ल्युट्। संवननमप्यत्र। [भेदे च।

**संवर** न० सम्+वृ–अप्। जले, दैत्यभेदे, मत्स्यभेदे, मृग

**संवर्त्त** पु० सम्यक् वर्त्तते परावर्त्तते ऽत्र सम्+वृत–णिच्–घञ्। प्रलयकाले, स्मृतिकारकमुनिभेदे, कर्षफलवृक्षे. मेघे, "संवर्त्तश्च वह्नदक" इत्युक्ते मेघनायकभेदे च।

**संवर्त्तक** न० सम्+वृत–णिच्–ण्वुल्। बलदेवलाङ्गले। ततः अस्त्यर्थे अच्। बलदेवे, वाड़वानले च पु०।

**संवर्त्तिका** स्त्री० सम्+वृत–ण्वुल् टापि अतइत्त्वम्। दीपादेः शिखायाम्,पद्मादेः केशरसमीपस्थे दले,नवपत्रे च

**संवर्द्धक** त्रि० सम्×वृध–णिच्–ण्वुल्। सम्माननाकारिणि वृद्धिकारके च।

**संवलित** त्रि० सम्×वल–क्त। मिलिते।

**संवसथ** पु० संवसत्यस्मिन् सम्×वस–अथच्। ग्रामे जनसमूहनिवासस्थाने। [वायौ।।

**संवह** पु० सम्यक् वहति सम्×वह–अच्। सप्तवायुमध्यवर्त्ति-

**संवार** पु० सम्×वृ–घञ्। शिक्षायन्योक्ते वर्णोच्चारणार्थे वाह्यप्रयत्नभेदे, सङ्गोपने च।

**संवास** पु० संवसत्यत्र सम्×वस–घञ्। गृहे, पुरवासिनां पुराद्बहिर्वासयोग्ये अनावृते स्थाने च। [तत्रैव।

**संवाह** पु० संवाहयति सम्×वह–घञ्। अङ्गसंमर्द्दके। खल्ल।

**संवाहन** न० सम्+वह–णिच्–ल्युट्। भारादेर्वहने, अङ्गसमर्द्दने च।

**संविग्न** त्रि० सम्+विज–क्त। उद्विग्ने दृष्टवस्तुलाभाय तदप्राप्तिहेतुना भयादिना वा जातोत्कण्ठे, [अङ्गीकारे च

**संवित्ति** स्त्री० सम्+विद्–क्तिन्। ज्ञाने, प्रतिपत्तौ, बुद्धौ,

**संविद्** स्त्री० सम्+विद्–सम्प० क्विप्। ज्ञाने, प्रतिपत्तौ, बुद्धौ अङ्गीकारे,समाधौ, नामनि, आचारे, सङ्केते, युद्धे, तोषे च-

**संविदा** स्त्री० संविद्यतेऽनया सम्+विद्–क्यप् टाप्। भङ्गायाम् (सिद्धि) "संविदासवयो र्मध्ये संविदैव गरीयसीति"तन्त्रम्

**संविद्व्यतिक्रम** पु० संविदोऽङ्गीकारस्य व्यतिक्रमो यत्र। कृताङ्गीकारस्योल्लङ्घनहेतुके विवादभेदे।

**संविदित** त्रि० सम्+विद्–क्त। अङ्गीकृते, सम्यग्ज्ञाते च।

**संविधान** न० सम्×वि+धा–ल्युट्। उपाये, आयोजने रचनायाञ्च। [अतिविषायाम् (आतइच्)।

**संविषा** स्त्री० संमर्द्दितं विषं यया धातजस्य उत्तरपदलोपः।

**संवीक्षण** न० सम्यग्वीक्ष्यते अन्विष्यते वा सम्–वि+ईक्ष–ल्युट्। दृष्टवस्तुनोलाभाय अन्वेषणे, सम्यग्दर्शने च।

**संवीत** त्रि० सम्+व्येञ्–क्त। आवृते, रुद्धे, च–सम्+वि+इण–क्त। सङ्गते। [मन्त्रस्येति" रघुः।

**संवृत** त्रि० सम्+वृ–क्त। आवृते, कृतगोपने च "तस्य संवृत-

**संवेग** पुं सम्+विज–घञ्। भयादिना त्वरायाम्, सम्यग् वेगे च

**संवेद** पुं सम्×विद–घञ्। ज्ञाने। युच्। संवेदनाप्यत्र स्त्री०।

**संवेश** पु० सम्यक् विशत्यत्र सम्×विश–घञ्। निद्रायाम् संपूर्वकस्य तस्य निद्रार्थकत्वात्तथात्वम्। तथाच 'संविष्टः कुशशयने निशां निनाये'ति रघुः पीठे च।

**संवेशन** न० सम्×विश–णिच्–ल्युट्। रतिक्रियायाम् तदुत्तरं हि निद्राधिक्येन तस्या निद्राहेतुत्वात् तथात्वम्।

**संव्यान** न० संवीयते सम+व्येञ्–कर्म्मणि ल्युट्। उत्तरीय वस्त्रे, वस्त्रमात्रे च।

**संशप्तक** पु० सम्यक् शपथमङ्गीकारो यस्य कप्। प्रतिज्ञाय संग्रामादनिवर्त्तिनि सैन्ये "संशप्तकगणैरभूदिति" रघुः।

संशय पु० सम्+शी—अच्। सन्देहे एकस्मिन् धर्म्मिणि भावाभावयोः, विरुद्धधर्म्मद्वयस्य वा सन्देहे। यथा पर्वतो वह्निमान्न वा, अयं स्थाणुर्वा पुरुषोवेति। "स संशयो,भवेद्या धीरेकत्राभावभावयोरिति" भाषापरिच्छेदः।

संशयस्थ त्रि० संशये तिष्ठति स्था—क। संशययुक्ते।

संशयात्मन् पु० संशय आत्मनि यस्य। संदिग्धान्तःकरणे "संशयात्मा विनश्यतीति" पुराणम्।

संशयालु त्रि० संशय+अस्त्यर्थे आलुच्। संशययुक्ते।

संशयितृ त्रि० सम्+शी—तृच्। संशयकर्त्तरि।

संशरण न० संशीर्य्यते ऽनेन सम्×शॄ—ल्युट्। रणारम्भे

संशित त्रि० सम्×शो—क्त। सम्पादितव्रतविषयकयत्ने।

संशितव्रत त्रि० संशितं सम्यक् सम्पादितं व्रतमनेन। सम्यक्सम्पादितव्रते। [क्षीणे च।

संशुद्धि स्त्री० सम्+शुध—क्तिन्। सम्यक् शोधने, देहादिमा-

संश्यान त्रि० सम्+श्यै—क्त। शीतादिना सङ्कुचिते।

संश्रय पु० सम्+श्रि—अच्। आश्रये [पु०।

संश्रव पु० सम्+श्रु—अप्। अङ्गीकारे। घञ्। संश्रावोप्यत्र।

संश्रुत त्रि० सम्+श्रु—क्त। अङ्गीकृते।

संश्लिष्ट त्रि० सम्+श्लिष—क्त। आलिङ्गिते, संवद्धे च।

संश्लेष पु० सम्+श्लिष—घञ्। आलिङ्गने, संबन्धमात्रे च।

संसक्त त्रि० सम्+सन्ज—क्त। मिलिते, संवद्धे, समन्तादविस्तीर्णे च "प्रान्तेषु संसक्तनमेरुशाखमिति" कुमारः।

संसद् स्त्री० संसीदत्यस्याम् सम्+सद—सम्प० क्विप्। सभायाम्

संसरण न० सम्+सृ—ल्युट्। स्वादृष्टनिवद्धदेहस्वीकाररूपे संसारे, असंवाधसेनागमने, रणारम्भे,घण्टापथे,संगतौ च।

संसर्ग पु० सम्+सृज—घञ्। सम्बन्धे, "विभागानन्तर "यत्तव धनं तन्ममेति" कृतसमयेन एकत्रावस्थानरूपे सम्बन्धे च।

संसर्गाभाव पु० संसर्गस्य सम्बन्धस्याभावः। ध्वंसप्रागभावात्यन्ताभावरूपे-भेदभिन्ने अभावे सबन्धाभावे च।

संसर्गिन् त्रि० सम्+सृज—घिणुन्,। संसर्गयुक्ते विभागानन्तरं "यत् तव धनं तन्ममेति,कृतसमयेन एकत्रावस्थानरूपसंसर्गयुक्ते भ्रात्रादौ,सम्बद्धे च।

संसार पु० संसरत्यस्मात् सम्+सृ—घञ्। मिथ्याज्ञानजन्यसंस्काररूपवासनायां, देहारम्भकादृष्टभेदे,'स्वादृष्टोपनिवद्ध देहपरिग्रहे च। आधारे घञ्। विश्वे। भावे घञ्। सङ्गतौ।

संसारमार्ग पु० ६त०। योनिद्वारे तत एव हि वहिर्निगमने मायानुभवतीति तस्य तथात्वम्।

संसारिन् त्रि० संसरति अदृष्टभेदेन देहेन संयुज्यते सम्+सृ—णिनि। शरीराभिमानिनि जीवे।

संसिद्ध त्रि० सम्यक् स्वभावेन वा सिद्धः सम्+सिध—क्त। स्वभावसिद्धे, सम्यग्निष्पन्ने च। [निष्पत्तौ च।

संसिद्धि स्त्री० सम्+सिध—क्तिन्। स्वभावे, प्रकृतौ, सम्यग्

संसृति स्त्री० सम्+सृ—क्तिन्। संसारप्रवाहे, सङ्गतौ च

संसृष्ट पु० सम्+सृज—क्त। विभागानन्तरं मैत्र्यात् पुनः स्वस्वधनेषु कृतसंसर्गवति भ्रात्रादौ "संसृष्टस्य तु संसृष्टीति"स्मृतिः वमनादिना संशुद्धे, संयुक्ते च। भावे क्त। संवन्धे

संसृष्टिन् पु० संसृष्टमनेन इनि। संसृष्टभ्रात्रादौ। "अन्योदर्य्यस्तु संसृष्टीति" स्मृतिः। [चक्रे च।

संस्कर्त्तृ त्रि० सम्+कृ—तृच्-सुट् च। संस्कारकारके, पा-

संस्कार पु० सम्+कृ—घञ् सुट् च। सतोगुणान्तराधानरूपे प्रतियत्ने,यथा अलङ्कारादेरस्त्र।देर्वस्त्रादेश्च उद्दीपननिशानमार्ज्जनादयः, व्रीह्यादेश्च यज्ञाङ्गतासम्पादनाय वैदिकमार्गेण प्रोक्षणादिः दर्पणादेर्निर्म्मलीकरणादिः। स्मृतिहेतौ अनुभवजन्ये आत्मवृत्तिगुणभेदे, पृथिव्यादिचतुष्टयस्थे वेगाख्ये गुणे,यथावस्थिततयास्थापनप्रयोजके स्थितिस्थापनाख्ये गुणभेदे,शास्त्राभ्यासजन्यव्युत्पत्तौ,व्याकरणोक्तादिषु शब्दानां साधनप्रकारे, विप्रादीनां वैदिककर्म्मार्हत्वसाधने गर्भाधानादौ क्रियाकलापे, पाके च।

संस्कारवर्जित त्रि० ३त०। गर्भाधानादिसंस्काररहीने, शास्त्रादौ व्युत्पत्तिहीने च संस्कारहीनादयोप्यत्र।

संस्कृत त्रि० सम्+कृ—क्त सुट् च। कृतसंस्कारे पदार्थे, व्याकरणादिलक्षणाधीनसाधनयुक्ते शब्दे, पक्वे, भूषिते, शोधिते च।

संस्तर पु० सम्+स्तॄ—अप्। यज्ञे, शय्यायाम् पल्लवादिरचितशय्यायां च "नवपल्लवसंस्तरे यथेति" कुमारः।

संस्तव पु० सम्+स्तु—अप्। परिचये, सम्यक् स्तुतौ च।

संस्ताव पु० संस्तूयतेऽत्र सम्—स्तु—घञ्। यज्ञार्थं संस्तावकविप्राणां वासभूमौ।

संस्तुत त्रि० सम्+स्तु—क्त। परिचिते, सम्यक्स्तुते च।

संस्त्याय पु० सम्+स्त्यै—घञ्। संघाते, निविड़संयोगरूपे सन्निवेशे, विस्तृतौ, गृहे; संस्थाने च।

संस्थ त्रि० सम्+स्था—क।अवस्थिते. मृते च।

संस्था स्त्री० सम्+स्था—अङ्। न्याय्यपथावस्थितौ, स्थितौ, नाशे, यज्ञभेदे, व्यवस्थायां, व्यक्तौ, सादृश्ये, प्रान्ते च।

संस्थान न० सम्+स्था—ल्युट्। चतुष्पथे, आकारे, अवयव्यारम्भकसंयोगभेदे, चिह्ने, सन्निवेशे, सम्यक्स्थितौ च।

**संस्थित** त्रि० सम्+स्था-क्त। मृते, सम्यक्स्थिते च। [वृत्ते।

**संस्पर्शा** स्त्री० संस्पृश्यते सम्+स्पृश-घञ् टाप्। रजनीगन्धा-

**संस्फुट** त्रि० सम्+स्फुट-क। विकशिते।

**संस्फेट** न० सम्+स्फिट-घञ्। युद्धे।

**संस्फोट** पु० सम्+स्फुट-घञ्। युद्धे।

**संहत** त्रि० सम्+हन-क्त। दृढ़े, मिलिते, परार्थं मिलिते, "संहतपरार्थत्वादिति,साङ्ख्यम् दृढ़संयोगयुक्ते संस्यग्हते च

**संहतल** पु० संहतं संहननं संघातं लाति-ला-क। मिलित पाणिद्वये।

**संहतपुष्पिका** स्त्री० संहतानि दृढ़ं संयुक्तानि पुष्पाण्यस्याः कप् अत इत्वम्। मिश्रेयायाम्।

**संहति** स्त्री० सम्+हन-क्तिन्। समूहे, सम्यग्हनने च।

**संहनन** न० संहन्यते परार्थं मङ्ल्यते सम्+हन-ल्युट्। देहे, संघाते, वधे च।

**संहर्ष** पु० सम्यक् हर्षःसम्+हृष-घञ्। आनन्दे, स्पर्द्धायाञ्च संहृष्यत्यनेन घञ्। वायौ।

**संहार** पु० सम्×हृ-घञ्। प्रलये, नाशे, संक्षेपे, नर-कभेदे, विसर्ज्जने, भैरवभेदे च।

**संहारमुद्रा** स्त्री० संहाराय स्थानान्तरनयनाय मुद्रा। तन्त्रोक्ते मुद्राभेदे तल्लक्षणं हृद्दभिधाने।

**संहिता** स्त्री० सम्यक् हितं प्रतिपाद्यं यस्याः। मन्वादिप्रणीते, धर्म्मशास्त्रे, पुराणे, इतिहासादौ, कर्मकाण्ड-प्रतिपादके वेदभागे, च।

**संहूति** स्त्री० सम्+ह्वे-ञ् क्तिन्। बहुभिः कृते आह्वाने।

**संहृत** त्रि० सम्+हृ-क्त। कृतसंहारे, सङ्कुचिते च।

**संहृति** स्त्री० सम्+हृ-क्तिन्। संहारे-

**संह्रादि** पु० सम्+ह्रद-घञ्। शब्दभेदे।

**संह्रादिन्** त्रि० सम्+ह्रद-णिनि। शब्दायमाने।

**संह्लाद** पु० सम्+ह्लद-घञ्। आनन्दभेदे।

**सकण्टक** पु० सह कण्टकेन सहस्य सः। करञ्जभेदे, (नाटा-करञ्जा) शैवाले च। कण्टकयुक्ते त्रि०। [कर्णयुक्ते च।

**सकर्ण** त्रि० सह कर्णेन श्रवणेन तद्व्यापारेण वा। श्रुतिशीले,

**सकर्म्मक** त्रि० सह कर्म्मणा कप्। व्याकरणोक्ते कर्म्मयुक्त क्रियाबोधके धातौ "फलव्यापारयोरेकनिष्ठतायामकर्म्मकः। धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृत" इत्युक्तदिशा धातोः सकर्मकत्वमवसेयम्।

**सकल** त्रि० सह कलया, अवयवमात्रया, चतुःषष्ट्या कलाभि र्वा सहस्य सः। संपूर्णे समग्रे, कलासहिते च।

**सकारण** त्रि० सह कारणेन। कार्य्ये। [अन्तिके समीपे।

**सकाश** पु० कशनं पीड़नं काशः काश-घञ् सह काशेन।

**सकुरुण्ड** पु० सह समानः कुरुण्डेन। शाकुरुण्डवृक्षे।

**सकुल** पु० सह समानं कुलमस्य। शकुलमत्स्ये (शल) स्त्री त्वमपि। समानवंशे त्रि०।

**सकुल्य** त्रि० समाने कुले भवः यत्। अशौचविषये स्वाव-ध्यूर्द्धाधस्तनाष्टमपुरुषावधिदशमपर्य्यन्ते पुरुषवर्गे, दायप्र-हणे स्वावधिपञ्चमोर्द्धाधस्तनपुरुषमात्रे "विभक्तादायादान् सकुल्यानाचक्षते" इति स्मृतिः। [मिति केचित्।

**सकृत्** अव्य० एक+नि०। एकवारे विद्यायाञ्च तत्र स्त्रीत्व-

**सकृत्प्रज** पु० सकृत् एकवारं प्रजायते प्र+जन-ड। काके एकवारजातापत्ये त्रि०।

**सकृत्फला** स्त्री० सकृत् फलति फल-अच्। कदलीवृक्षे

**सक्त** त्रि० सञ्ज-क्त। आसक्ते, अविरते च।

**सक्तु** पु० सच-तुन्। भ्रष्टयवादिचूर्णे (छातु) "मघादौ सक्तवो देयाः" इति स्मृतिः। [ङीप्। शमीवृक्षे।

**सक्तुफला(ली)** स्त्री० सक्तवइव क्षुद्राणि फलान्यस्याः वा

**सक्थि** न० सञ्ज-क्थिन्। ऊरौ, शकटावयवभेदे च।

**सखि** त्रि० सह समानं ख्यायते ख्या इन् नि०। सौहार्द्दयुक्ते

**सखी** स्त्री० सखि+ङीप्। सहचर्य्यां, वयस्यायाञ्च।

**सख्य** न० सख्युर्भावः यत्। मित्रतायाम् सौहार्द्दे।

**सगर** पु० सह गरेण विषेण जातः। सूर्य्यवंश्ये नृपभेदे "सग-रात् सागरोजात" इति पुराणम्। विषयुक्ते त्रि०।

**सगर्भ** पु० सह समानो गर्भोऽस्य। सहोदरे भ्रातरि। सह गर्भेण। गर्भयुक्ते, मध्यवर्त्तिसूक्ष्मपत्रयुक्ते कुशदूर्वा-दौ च त्रि०।

**सगर्भ्य** पु० समाने गर्भे भवः यत्। सहोदरे भ्रातरि।

**सगोत्र** न० सह समानं गोत्रम्। कुले। सह समं गोत्रमस्य। ज्ञातौ त्रि०।

**सग्धि** स्त्री० अद-क्तिन् नि० सह ग्धि। सहभोजने।

**सङ्कट** त्रि० सम्+कटच्। अल्पावकाशे स्थाने, संबाधे। सम्+ कट-अच्। दुःखे"नरोमुच्येत सङ्कटादिति"चण्डी। देवी-भेदे, ज्योतिषोक्ते दशाभेदे च स्त्री० टाप्।

**सङ्कटाक्ष** पु० सङ्कटं संबाधमक्षति अक्ष-अण्। धववृक्षे।

**सङ्कर** पु० सम्+कृ-अप्। सम्मार्ज्जन्यादिभिः क्षिप्ते रजसि। मेलने,इतरजातिपुरुषेण इतरजातिस्त्रियां जाते जातिभेदे

"सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजा" इति गीता न्यायोक्ते जातिबाधके परस्पराभावसमानाधिकरणयोरेकाधिकरणवृत्तित्वरूपे धर्म्मविशेषे च। तदुदाहरणादि वृहदभिधाने।

**सङ्करीकरण** न० संकरः क्रियतेऽनेन च्वि+कृ-ल्युट्।"खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा। सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च" इत्युक्ते खरादिवधजन्ये पापे।

**सङ्कर्षण** पु० संकृष्यते गर्भात् गर्भान्तरं नीयतेऽसौ सम्+कृष-युच्। बलदेवे। भावे ल्युट्। आकर्षणे, स्थानान्तरनयने च न०।

**सङ्कलन** न० सम्+कल-ल्युट्। एकत्रस्थीकरणे, योजने, (ठिक देया) संग्रहे च। [संगृहीते च।

**सङ्कलित** त्रि० सम्+कल-क्त। योजिते, रेखादिना संहते,

**सङ्कल्प** पु० सम्+कृप-घञ्। अभीष्टसिद्धये "इदमित्यमेव कार्य्य" मित्येवंरूपे मनसोव्यापारभेदे,कर्म्मसाधनाय अभिलापवाक्ये, "सङ्कल्पेन विना राजन्! यत्किञ्चित् कुरुते नर"इति पुराणम् तत्तद्विशेषोवृहदभिधाने। [योऽयत्र

**सङ्कल्पजन्मन्** पु०सङ्कल्पात् जन्म यस्य। कामदेवे। सङ्कल्पभवाद-

**सङ्कल्पयोनि** पु० सङ्कल्पोयोनिरुत्पत्तिकारणं यस्य। कामदेवे "सङ्कल्पयोनेरभिमानभूतमिति" कुमारः।

**सङ्कसुक** त्रि० सम्+कस-उकञ्। अस्थिरे, मन्दे, दुर्जने सङ्कीर्णे, अपवादशीले च।

**सङ्काश** त्रि० सम्यक् काशते काश-अच्। सदृशे "तरुणादित्यसङ्काशमिति" तन्त्रम्। निभादिवदस्य नित्यसमासता।

**सङ्किल** पु०सम्+किल-क। वह्न्युल्कायाम्।

**सङ्कीर्ण** त्रि० सम्+कॄ-क्त। बहुजनसंघर्षेण निरवकाशे स्थाने, मिलितनानाजातौ, व्याप्ते, मिश्रिते, सङ्कटे, एकत्र मिलितयोः परस्परविजातीययोश्च। इतरवर्णेन इतरवर्णस्त्रियां जाते जातिभेदे पु०। [च।

**सङ्कुचित** त्रि० सम्+कुच-क्त। कृतसङ्कोचे, संक्षिप्ते, अप्रफुल्ले

**सङ्कुल** न० सम्+कुल-क। परस्परपराहते, "यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता। माता तु मम वन्ध्यैव पुत्रहीनः पितामहः" इत्येवं वाक्ये, परस्परहननरूपे युद्धे बहुजनादिभिः संबाधेन निरवकाशे स्थाने च सङ्कीर्णे त्रि०।

**सङ्केत** पु० सम्+कित-घञ्।मनोगतभावव्यञ्जनाय कृते हस्तादिचालनरूपे व्यापारे (इसारा) "अस्माच्छब्दादयमर्थो बोध्यः, अयं शब्दः अमुमर्थं बोधयतु वा" इत्येवं शब्दनिष्ठेऽर्थबोधनाशक्तिविशेषे, प्रियसङ्गमार्थे गुप्तस्थाने च।

**सङ्केतित** त्रि० सङ्केतो जातोऽस्य तार० इतच्। सङ्केतवति वाच्ये अर्थे "साक्षात् सङ्केतितं योऽर्थमभिधत्ते" इति काव्यप्र०

**सङ्कोच** पु० सम्+कुच-घञ्। बहुविषयकवाक्यस्याल्पविषयकतया व्यवस्थापने, सामान्यशब्दस्य विशेषपरतायाम्, जडीभावे, रोधे, बन्धे च। सम्+कुच-अच्। मत्स्यभेदे पु० कुङ्कुमे न०। [याम्।

**सङ्कोचनी** स्त्री० सम्+कुच-ल्यु-गौ०ङीप्। लज्जालुलता।

**सङ्क्रन्दन** पु० सङ्क्रन्दयत्यसुरान् सम्+क्रन्द-णिच्-ल्यु। इन्द्रे। भावे ल्युट्। सम्यक्क्रन्दने न०।

**सङ्क्र(क्रा)म** पु० सङ्क्रामत्यनेन सम्+क्रम-घञ् वा वृद्धिः जलबन्धनस्थाने(सांको)"आत्मानं सङ्क्रमं कृत्वेति" स्मृतिः भावे घञ्। रव्यादेः राश्यन्तरसञ्चारे च। [न्तरगमने च।

**सङ्क्रमण** न० सम्+क्रम-ल्युट्। सङ्क्रान्तौ,रव्यादीनां राश्य

**सङ्क्रान्त** त्रि० सङ्क्रान्तिरस्यास्ति अच्, सम्+क्रम-क्त वा। सङ्क्रान्तियुक्ते सङ्क्रमणकर्त्तरि, प्राप्ते, दायरूपेण पितृभर्त्रादितः आगते स्त्रिया प्राप्तधने च।

**सङ्क्रान्ति** स्त्री० सम्+क्रम-क्तिन्। सम्यक्क्रमणे,रव्यादीनां राश्यन्तरसञ्चारे च। तत्र विशेषो वृहदभिधाने वक्ष्यते।

**सङ्ख्य** न० संख्यायते परस्परनामोच्चारणं क्रियतेऽत्र सम्+ख्या घञर्थे क। युद्धे। अङ्। विचारे, बुद्धौ, द्रव्याश्रिते एकत्वद्वित्वादौ गुणभेदे, च स्त्री० टाप्।

**सङ्ख्यात** त्रि० सम्+ख्या-क्त। कृतसङ्ख्ये, गणिते-सम्यक्ख्याते च।

**सङ्ख्यावत्** पु० सङ्ख्या विचारणा सास्त्यस्य मतुप् मस्य वः। पण्डिते सङ्ख्यायुक्ते त्रि०। [करणयोग्ये।

**सङ्ख्येय** त्रि० सङ्ख्यायतेऽसौ सम्+ख्या-यत्। गण्ये सङ्ख्या

**सङ्ग** पु० सञ्ज-घञ्। मेलने, सम्बन्धे, विषयादिरागे च "ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते" इति गीता।

**सङ्गत** न० सम्+गम-भावे क्त। सौहार्द्दे सङ्गतौ च कर्त्तरि क्त। मिलिते त्रि०।

**सङ्गति** स्त्री० सम्+गम-क्तिन्। सङ्गमे, मेलने, न्यायोक्ते अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषये, "सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा। निर्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" इत्युक्ते प्रसङ्गादौ पदार्थे च।

**सङ्गम** पु० सम्+गम-घञ् न वृद्धिः। सङ्गतौ स्त्रीपुंसयोः संभोगे, नद्यादेर्नदादियोगस्थाने च "गङ्गासागरसङ्गम" इति पुराणम्।

**सङ्गर** पु० संगीर्य्यते सम्+गॄ-अप्। आपदि, प्रतिज्ञायां,

क्रियाकारके, विघ्ने, अभीष्टचे च।

सङ्गव पु० सङ्गता गावोदोहनायात्र काले नि०। "प्रातः-कालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु" इति स्मृत्युक्ते प्रातः-कालानन्तरं मुहूर्त्तत्रयात्मके कालभेदे।

सङ्गिन् त्रि० सनुज-घिणुन्। सङ्गयुक्ते। स्त्रियां ङीप्।

सङ्गीत न० सम्+गै-क्त। दर्शनार्थे नाट्यगीतवाद्यत्रिके, तत्-प्रतिपादकग्रन्थे च। कर्म्मणि क्त। सम्यग्गीते त्रि०।

सङ्गीर्ण त्रि० सम्+गृ क्त।स्वीकृते।

सङ्ग्रह पु० सम्+ग्रह-अप्। सञ्चये, संक्षेपे, बह्वर्थकवाक्या नामेकत्र सङ्कलने च [मत् त।

सङ्ग्रहणी स्त्री० सञ्चिता ग्रहणी।ग्रहणीरोगभेदे। [सङ्ग्रा-

सङ्ग्राम युद्धे अद० चु० उभ० सक० सेट्। सङ्ग्रामयति ते अस

सङ्ग्राम पु० सङ्ग्राम-घञ्। युद्धे।

सङ्ग्रामपटह पु० ६त०। रणवाद्यभेदे।

सङ्ग्राहिन् पु० सम्यक् गृह्णाति मलम् सम्+ग्रह-णिनि। कुटजवृक्षे। मलावष्टम्भके संग्रहकारके, च त्रि०।

सङ्घ पु० संघवत् सर्व्वम्। सजातीयसमूहे, समूहे च।

सङ्घचारिन् पु० सङ्घीभूय चरति चर-णिनि। मत्स्ये। सङ्घीभूयचारिणि जन्तुमात्रे त्रि०।

सङ्घजीविन् पु० सङ्घेन जीवति जीव-णिनि। सङ्घोपजी-विनि वार्तीने।

सङ्घट्ट पु० सम्+घट्ट-घञ्। परस्परसङ्घर्षणे गठने च।

सङ्घट्टन न० सम्+घट्ट-ल्युट्। मेलने, गठने, रचनायाञ्च। युच्। तत्रैव स्त्री०। [(योडहात)।

सङ्घतल पु० सङ्घौ संहते मिलिते तले यत्र। संयोजितप्रतलद्वये

सङ्घपुष्पी स्त्री० सङ्घीभूतानि पुष्पाण्यस्याः ङीप्। धातकी पुष्पाम्। (धाइ फुल)।

सङ्घर्ष पु० सम्+घृष-घञ्। परस्परघर्षणे, स्पर्द्धायाञ्च।

सङ्घशस् अव्य० सङ्घ+वीप्सार्थे-शस्। भूरिशः इत्यर्थे।

सङ्घाटिका स्त्री० सङ्घटयति-सम्+घट-णिच् ण्वुल्। युग्मे, जलकण्टके, घ्राणे च। [दृढसंयोगे कफे च।

सङ्घात पु० सम्+हन-घञ्। समूहे, नरकभेदे, सम्यग्हनने,

सङ्घातपत्त्रिका स्त्री० सङ्घातयुक्तं पत्त्रमस्याः कप् अत इत्वम्। शतपुष्पायाम्।

सचि(ची) स्त्री० सच-इन वा ङीप्। इन्द्राण्याम्।

सचिल्लक पु० सह चिल्लकेन। क्लिन्ननेत्रे (पिचुडियुक्तनेत्रे)।

सचिव पु० सच-इन् तथा सन् वाति वा-क। सहाये, मन्त्रिणि, कृष्णधुस्तूरे च।

सचेतन त्रि० सह चेतनया। विशिष्टज्ञानयुक्ते।

सचेष्ट पु० सचते सच-अच् तथाभूतः सन् इष्टः। आम्रे। सह चेष्टया। चेष्टान्विते त्रि० [हरिद्रायाम्।

सच्चारा स्त्री० सन् चारो गात्रानुलेपने विषमगतिरस्याः।

सच्चिदानन्द पु० सन् नित्यः चित् चैतन्यमानन्दः त्रिपद-कर्म्म०। नित्यज्ञानसुखमये ब्रह्मणि।

सच्छूद्र पु० कर्म्म०। कृतोपनायितादौ शूद्रभेदे। "सच्छूद्रौ गोपनापिताविति" स्मृतिः।

सजम्बाल त्रि० सह जम्बालेन। पङ्कयुक्ते देशे।

सजाति पु० समाना जातिरस्य। समानवर्णेन समानवर्णाया मूढायाम् उत्पादिते पुत्रे। तुल्यजातौ त्रि०।

सजातीय त्रि० समानां जातिमर्हति छ। समानधर्म्मयुक्ते।

सजु(जू)स् अव्य० सह जुषते क्विप् उ० वा दीर्घः। सहार्थे "सजुःलत्य रतिं वसेदिति"। भट्टिः।

सज्ज त्रि० सस्ज-अच्। उद्युक्ते, संनद्धे, सम्भृते, निभृते च। अ। आयोजने, वेशे, च स्त्री०। सतोजायते जन-ड। साधु-जाते त्रि०।

सज्जन त्रि० सस्ज-णिच्-ल्युट्। रक्षार्थं सैन्यस्थापने, घट्टे च। सस्ज- ल्युट्। आयोजने,। सन् जनः। सौजन्यवति जने, "कुरुसज्जनरञ्जनमिति" सत्कुलोद्भवे च पु०। सस्ज-णिच्-ल्युट्। नृपादीनामारोहणार्थं गजभूषा-करणादौ। [संनद्धे च।

सज्जित त्रि० सज्जा जातास्य तार० इतच्। कृतवेशे, भूषिते

सञ्च सञ्चीयते ऽत्र सम्+चि-ड। लेखनार्थे पत्त्रभेदे (सांच)

सञ्चय पु० सम्+चि-अच्। समूहे, संग्रहे च। ल्युट्। सञ्च-यनम्। सङ्ग्रहे न०। [सीदतीति" पुराणम्।

सञ्चयिन् पु० सम्+चि-इनि। सङ्ग्रहकारके, "सञ्चयी नाव-

सञ्च(ञ्चा)र पु० सञ्चरत्यनेन सम्+चर घञर्थे क घञ् वा। सेतौ, देहे, ग्रहादेःराश्यन्तरगमने च। भावे क। सम्यग्गतौ

सञ्चाय्य पु० सञ्चीयतेऽग्निरत्र सम् चि-ण्यत्। यज्ञभेदे।

सञ्चारिका स्त्री० सञ्चारयति नायकयो वार्त्ताम् सम्+चर-णिच्-ण्वुल्। दूत्यां कुट्टिन्याम्, युग्मे, घ्राणे च।

सञ्चारिन् पु० सम्+चर-णिनि। धूमे, वायौ, अलङ्कारोक्ते शृङ्गारादिरसाद्यनुगुणे भावभेदे च। "व्यक्तः सञ्चारिणा तथेति, साहित्य० सञ्चारकारके त्रि० स्त्रियां ङीप्। "सञ्चारिणी दीपशिखेवेति" रघुः। सा च हंसपद्याञ्च।

सञ्चाली स्त्री० सञ्चलति सम्+चल-ण गौ० ङीप्। गुञ्जायाम्

सञ्चित त्रि० सम्+चि-क्त। संगृहीते।

सञ्चवन न० सम्+चु-युच्। परस्पराभिमुखतया स्थिते चतुःशालेऽट्टे।

सञ्जीवन न० सम्+जीव-ल्युट्। चतुःश लट्टे सम्यक्प्राणधारणे च। संजीवयति णिच्-ल्युट्। औषधिभेदे स्त्री० ङीप्।

सट न० स्त्री० सट-अच्। व्रतिनां केशसङ्घाते, जटायाम्, शिखायां, सिंह दे: केशरे च "डटाच्छटाभिन्नघनेनेति" माघः

सटि(टी) स्त्री० सट-इन् वा ङीप्। शठ्याम्। कन्। गन्धपत्त्रच्चे। सठ-इन् ङीप्। सठीत्वन। [भेदे।

सडीन न० सम्+डी-क्त। पक्षिणां सङ्गत्य गमनरूपे गति

सत् त्रि० अस शतृ। सत्ये, साधौ, पूजिते, धीरे, प्रशस्ते, विद्यमाने च। स्त्रियां ङीप् सा च पतिव्रतायां, स्त्रियां, दक्षकन्यायाञ्च। "सती सती योगविसृष्टदेहेति" कुमारः ब्रह्मणि न० "ओंतत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृत" इति गीता। आदरे अव्य० "सदसती आदरानदरयोरिति" पाणिनिः। [तद्वति त्रि०।

सतत न० सम्×तन-क्त ष्ठ० सक्तोऽन्त्यलोपः। निरन्तरे

सतत्त्व न० सह सदृशं तत्त्वेन। स्वभावे।

सतानन्द पु० गौतमपुत्त्रे अहल्यागर्भजे मुनिभेदे।

सतीन पु० सतीं नयति नी-ड। वंशभेदे, (चुट्मटर) कलायभेदे च। स्वार्थे कन् तत्रैव।

सतीर्थ्य पु० समाने तीर्थे गुरौ वसति यत् समानस्य सः। परस्परैकगुरुके छात्रे, निर्थकारोऽप्ययमित्यन्ये।

सतील पु० सतीं लच्चयति ड। (चुट्मटर) कलाये।

सतीलक पु० सतीलइव कायति कै-क, सह तिलेन तिलचिह्नेन कप् ष्ठ० दीर्घः। वंशे, (चुट्मटर) कलायभेदे, च।

सतीला स्त्री० सह तिलेन तिलचिह्नेन ष्ठ० दीर्घः। कलायभेदे

सत्कर्तृ पु० सत्+कृ-तृच्। विष्णौ। सत्कारके त्रि०।

सत्कर्म्मन् न० कर्म्म०। वेदादिविहिते यागादौ कर्म्मणि।

सत्काञ्चनार पु० कर्म्म०। रक्तकाञ्चने।

सत्कार पु० सत्+कृ-घञ्। सम्मानने, पूजने च।

सत्कृत त्रि० सत्+कृ-क्त। पूजिते, कृतसम्माने च।

सत्क्रिया स्त्री० सत्+कृ-श। सत्कारे, सम्मानने, पूजने च।

सत्तम त्रि० अतिशयेन सन् तमप्। अतिशयसाधौ।

सत्ता स्त्री० सतोभावः तल्। द्रव्यगुणकर्म्मवृत्तौ जातिभेदे, विद्यमानतायाञ्च।

सत्त्र न० सद-त्रन्। स्थाने, यज्ञे, सदादाने, आच्छादने, अरण्ये कैतवे, धने, ग्टहे, दाने, सरसि च।

सत्त्रम् अव्य० सद-त्रम्। सहार्थे। त। सत्त्राग्यतार्थे अव्य०

सत्त्रशाला स्त्री० ६त०। अन्नजलादेर्दानार्थं कल्पिते ग्टहे

सत्त्राजित् पु० सत्त्रेणाजयति लोकान् आ+जि-क्विप्। श्रीकृष्णश्वशुरे सत्यभामाजनके राजभेदे। [ग्टहस्थे च।

सत्त्रिन् पु० सत्त्रं ग्टहं यज्ञोवा विद्यतेऽस्य इनि। ग्टहपतौ

सत्त्व न० सतोभावः त्व। सांख्यसिद्धे प्रकाशादिसाधने प्रकृत्यवयवे पदार्थे, "तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयमिति" गीता। अयं द्वितकारः। ष्ठ०एकतकारः। स्वभावे द्रव्ये, प्राणेषु, व्यवसाये, रणे, आत्मनि, चित्ते, आयुषि, धने, च। न्यायोक्ते सत्तारूपे जातिभेदे, विद्यमानतायाञ्च द्वितकारः। जन्तुषु पु० न०।

सत्पत्त्र न० सत् शोभनं पत्त्रम्। पद्मस्य नवदले ६त०। सुदले त्रि०

सत्पथ पु० कर्म्म०। शोभनमार्गे, वेदादिविहिताचारे च।

सत्प्रतिग्रह पु० सन्नरः प्रतिग्रहः। साधुदत्तधनस्य प्रतिग्रहे "सप्त वित्तागमा धर्म्या दायोलाभः क्रयोजयः। विभागः संप्रयोगश्च सत्प्रतिग्रहएव चेति" स्मृतिः।

सत्प्रतिपक्ष पु० कर्म्म०। तुल्यविरोधिनि, न्यायोक्ते हेतुदोषभेदे च। [तद्वति त्रि०।

सत्फल पु० सन्ति शोभनानि फलान्यस्य। दाड़िमवृच्चे सुफ-

सत्य न० सते हितं यत्। सत्ययुगे, शपथे, सिद्धान्ते, याथार्थ्ये च तद्वति त्रि०। अश्वत्थवृच्चे नान्दीमुखश्राद्धदेवे च पु०।

सत्यङ्कार पु० सत्य+कृ-घञ् नि० मुम्। 'मयैतत् अवश्यं कर्यमित्येवं' सत्यकरणे, सत्यापने (वायनादिक्रोया)।

सत्यपुर न० सत्ययुक्तं पुरम्। विष्णुलोके।

सत्यफल पु० सत्यं फलमस्य। विल्ववृच्चे। [याम्।

सत्यभामा स्त्री० सत्राजितोन्टपसुतायां श्रीकृष्णस्य भार्य्या-

सत्यम् अव्य० सत्+यम्। स्वीकारे।

सत्ययुग न० सत्यप्रधानं युगम् शाक०। सत्यप्रचुरे प्रथमे युगे।

सत्यलोक पु० सत्यप्रचुरो लोकः। जर्द्धस्यरुप्तलोकमध्ये सर्वोपरिस्थे लोके। [सत्यवचनादयोप्यत्र।

सत्यवचस् पु० सत्यं वचोऽस्य। मुनौ। सत्यवचनयुक्ते त्रि०

सत्यवत् पु० सत्यं विद्यते ऽस्य मतुप् मस्य वः। सावित्रीपतौ न्टपभेदे, मुनिभेदे च। सत्ययुक्ते त्रि० स्त्रियां ङीप् सा च व्यासस्य मातरि च।

सत्यवतीसुत पु० ६त०। मत्स्यगन्धापुत्त्रे व्यासे मुनिभेदे।

सत्यवाच् पु० सत्या वाक् यस्य। ऋषौ, काके च तस्य शब्देन हि शुभाशुभनिश्चयेन तस्य तथात्वम्। सत्यवदनशीलेत्रि०।

**सत्यवादिन्** त्रि० सत्यं वदति वद–णिनि। यथार्थवाक्यवक्तरि।

**सत्यव्रत** पु० सत्यं व्रतमस्य। त्रिशङ्कुनामके राजभेदे। सत्यव्रतपरे त्रि०।

**सत्यसङ्कर** पु० सत्यः सङ्गरः प्रतिज्ञा यस्य। कुबेरे सत्यप्रतिज्ञे त्रि०

**सत्यसन्ध** त्रि० सत्या सन्धा सन्धानं यस्य। सत्याभिसन्धौ।

**सत्याकृति** स्त्री० सत्य+डाच्+कृ–क्तिन्। "अवश्यमेतन्मया-क्रेयमित्येवं" प्रतिज्ञारूपे सत्यकरणे (वायनादेओया)।

**सत्यानृत** न० सत्यसहितमनृतं यत्र। वणिग्वृत्तौ वाणिज्ये।

**सत्यापन** न० सत्य+णिच्–पुक्च ल्युट्। सत्याकृतौ। युच्। सत्यापनाप्यत्र स्त्री०। [सत्यवाक्ये न०।

**सत्योद्य** त्रि० सत्यमुद्यं यस्य वद–क्यप्। सत्यवादिनि। कर्म्म०।

**सत्र** सम्बन्धे सन्ततौ च अद० चु० आ० सक० सेट्। सत्रयते अससत्रत। सत्रापयते इत्यन्ये।

**सत्र** न० सत्यते सन्तन्यते यत्र यज्ञभेदे, श्रीकृष्णश्वशुरे नृपभेदे च

**सत्राजित्** पु० सत्रेणाजयति लोकम्। श्रीकृष्णश्वशुरे।

**सत्वर** न० सह त्वरया। शीघ्रे त्वरान्विते त्रि०।

**सदंशक** पु० सह दंशेन कप्। कर्कटके। दंशकयुक्ते त्रि०।

**सदंशवदन** पु० सह दंशेन दंशाकारेण तथाभूतं वदनमस्य। कङ्कविहगे।

**सदञ्जन** न० कर्म्म०। पुष्पाञ्जने रीतिजाते अञ्जनभेदे।

**सदन** न० सीदत्यस्मिन् +सद–ल्युट्। गृहे, जले च।

**सदय** पु० सन् अयः। साधुशुभावहविधौ। सह दयया। दयान्विते त्रि०।

**सदस्** स्त्री० न०। सीदत्यस्याम् सद–असि। सभायाम्।

**सदस्य** पु० सदसि साधुर्वसति वा यत्। न्यूनातिरिक्ततावि-पर्य्ययपरिहारार्थं विधानदर्शिनि। सभासदि त्रि०।

**सदा** अव्य० सर्व्वस्मिन् काले दाच् सादेशः। सर्व्वस्मिन् काले इत्यर्थे।

**सदागति** पु० सदा गतिरस्य। वायौ सदागतियुक्ते त्रि०।

**सदाचार** पु० कर्म्म० ६त० वा "सरस्वतीदृषद्वत्योर्देवनद्योर्य-दन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते। तस्मिन् देशे य आचारः पारम्पर्य्यक्रमागतः। वर्णानां सान्तरालानां स सदाचार उच्यते" इति मनूक्तदेशप्रचलिताचारे "साधवः क्षीणदोषास्तु सच्छब्द, साधुवाचकः। तेषामाचरणं यत्तु सदाचारः स उच्यते" इत्युक्ते साधूनामाचरणे च।

**सदातन** पु० सदा भवः सदा×ट्युल् तुट् च। विष्णौ। नित्ये त्रि०। स्त्रियां ङीप्। [एलापर्ण्याञ्च।

**सदातोया** स्त्री० सदा तोयानि यस्याः। करतोयानद्याम्,

**सदात्मन्** त्रि० सन् साधुरात्मा चित्तं यस्य। साधुचित्ते।

**सदादान** पु० सदा दानं मदजलं त्यागो वा यस्य। ऐरावते गजे+सदात्यागिनि त्रि०। [युक्ते त्रि०।

**सदानन्द** पु० सदा आनन्दोयस्य। सदाशिवे। अनवरतानन्द-

**सदानर्त्त** पु० सदा नृत्यति नृत–अच्। खञ्जनविहगे। सदा नृत्यवति त्रि०

**सदानीरा** स्त्री० सदा नीरमस्याम्। करतोयानद्याम्।

**सदापुष्प** पु० सदा पुष्पं यस्य। नारिकेलवृक्षे। रक्तार्के स्त्री० ङीप्। सदापुष्पयुक्ते त्रि० [कुन्दे च।

**सदाप्रसून** पु० सदा प्रसूनमस्य। रोहितकवृक्षे, अर्कवृक्षे,

**सदाफल** पु० सदा फलमस्य। नारिकेलवृक्षे, उडुम्बरवृक्षे च वार्त्ताकुभेदे त्रि० स्त्रियां टाप्।

**सदाभद्रा** स्त्री० सदा भद्रमस्याः। गाम्भारीवृक्षे।

**सदाशिव** पु० सदा शिवमस्मात्। महादेवे।

**सदुत्तर** न० कर्म्म०। व्यवहारे, प्रतिज्ञापश्चात्कारिण्युत्तरे इष्टस्य सम्यगुत्तरे च ६त०। तद्वति त्रि०।

**सदृक्ष** त्रि० समानं दर्शनमस्य दृश+क्स समानस्य सादेशः। तुल्यरूपे। [तुल्यरूपे।

**सदृश्** त्रि० समानं दर्शनमस्य समान×दृश–क्विप् सादेशः।

**सदृश** त्रि० समानं दर्शनमस्य समान+दृश–टक्। तुल्यरूपे स्त्रियां ङीप्।

**सदेश** पु० सह देशेन। निकटे। देशान्विते त्रि०।

**सद्धेतु** पु० कर्म्म०। न्यायोक्ते हेत्वाभासदोषरहिते हेतौ।

**सद्भाव** पु० सतोभावः, सन् वा भावः। विद्यमानत्वे साधुभावे च। "सद्भावमागत" इति भट्टिः। [द्वति त्रि०।

**सद्भूत** न० असत् सत् भूतम्। सत्+च्वि–भू–क्त। यथार्थे। त-

**सद्मन्** न० सीदत्यस्मिन् सद–मनिन्। गृहे, जले च।

**सद्यःकृत** त्रि० सद्यस्तत्क्षणात् कृतः कृ–क्त। तत्क्षणकृते।

**सद्यःप्राणकर** त्रि० सद्योहठात् प्राणं बलम् आयुर्वृद्धिञ्च करोति कृ–अच्। "सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकञ्चैव सद्यःप्राणकराणि षडित्युक्ते" द्रव्यसमूहे।

**सद्यःप्राणहर** त्रि० सद्यः प्राणमायुर्बलं वा हरति हृ–अच्। "शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षडित्युक्ते" शुष्कमांसादिद्रव्यसमूहे

**सद्यःशोथा** स्त्री० सद्यः शोथोयस्याः। कपिकच्छ्वाम्।

**सद्यःशौच** न० सद्यः शीघ्रमपनेयमशौचम्। स्मृत्युक्ते शीघ्रनाश्ये अशौचे ६त०। तद्वति शिल्पिश्रोत्रियादौ त्रि०।

**सद्यस्** अव्य० समेऽह्नि नि०। तत्क्षणे, समानदिवसे इत्यर्थे च।

**सद्यस्क** त्रि० सद्योभवः कन्। सद्योजाते।

**सद्योजात** पु० सद्योजायते जन-कर्त्तरि क्त। वत्से, शिवमूर्त्तिभेदे च आशुजाते त्रि०।

**सद्योभाविन्** पु० सद्योभवति भू-णिनि। वत्से।

**सद्वृत्त** न० वृत-क्त-कर्म्म०। साधुस्वभावे साधुवर्त्तने। इव० सद्वृत्तिवति त्रि०। "सद्वृत्तसन्निकर्षो हि क्षणार्द्धमपि शस्यते" इति पुराणम्।

**सद्वृत्ति** स्त्री० कर्म्म०। उत्तमचरित्रे उत्तमव्याख्यानरूपे ग्रन्थे च सती वृत्तिः यस्य। सद्वृत्तिमति त्रि० "सद्वृत्तिः सन्निबन्धनेति" माघः। [स्त्रियांवाडाप्।

**सधर्म्मन्** त्रि० समानोधर्म्मो ऽस्यअनिच् समानस्य सः। सदृशे।

**सधर्म्मचारिणी** स्त्री० सह धर्म्मं चरति चर-णिनि। सह धर्म्मकारिण्यां भार्य्यायाम्।

**सधर्म्मिन्** त्रि० समानं धर्म्मं चरति। तुल्यधर्मचरणकर्त्तरि। स्त्रियां ङीप्। सा च पत्न्याञ्च।

**सधवा** स्त्री० सह धवेन। जीवत्पतिकायां स्त्रियाम्।

**सध्र्यच्** त्रि० सह-अञ्चति अन्च-क्विप् सहस्य सध्रिः। सहचरे स्त्रियां ङीप् सध्रीची सा च भार्य्यायाञ्च।

**सन** पु० सन-अच्। वराह्रापारलिङ्गचे। [भक्त्वम्।

**सनक** पु० सन-वुन्। मुनिभेदे 'सनकश्च सनन्दश्चेति' तत्रैव-

**सनत्** पु० सन-अति। चतुर्मुखे ब्रह्मणि, सदेत्यर्थे अव्य०।

**सनत्कुमार** पु० इत०। ब्रह्मणः पुत्त्रे मुनिभेदे।

**सनन्द** पु० सह नन्देन। मुनिभेदे। आनन्दयुक्ते त्रि०।

**सनपर्णी** स्त्री० सनस्येव पर्णान्यस्याःङीप्। असनपर्ण्याम्।

**सनसूत्र** न० शणस्य सूत्रमस्यस्य अच् इ०। मत्स्यधारणार्थे सूत्रकृते जाले।

**सना** अव्य० सदा-नि दस्य नः। सदेत्यर्थे।

**सनातन** त्रि० सदा ख्युल् तुट् च नि०। सदाभवे वस्तुनि नित्ये च स्त्रियां ङीप् सा च सरस्वत्यां, लक्ष्म्याञ्च। शिवे ब्रह्मणि, दिव्यमनुष्ये च पु०।

**सनाभि** पु० समानः नाभिर्यस्य। ज्ञातौ तस्य एकदेहोत्पन्नत्वेन तुल्यनाभिता इति तथात्वम्। मध्ययुक्ते, स्नेहयुक्ते च त्रि०

**सनामक** पु० सना सदा अमयति अम-ण्वुल्। शोभाञ्जनवृक्षे तस्य पञ्चादिभोजनस्य रोगहेतुत्वात्तथात्वम्। सह नाम्ना कप्। नामयुक्ते त्रि०।

**सनि** पु० सन-इन्। पूजायां, दाने च। सत्कारपूर्व्वकनियोगे स्त्री० वा ङीप्।

**सनिष्ठी(ष्ठे)व** न० सह निष्ठी(ष्ठे)वेन। मुखच्युतशारिकेण (सथुत्कारे)। [युक्ते च।

**सनीड** त्रि० समानां नीडं सह नीडेन वा। निकटस्थे, नीड़-

**सन्तत** न० सम्+तन-क्त। सतते निरन्तरे। नैरन्तर्य्यवति विस्तीर्णे च त्रि०।

**सन्तति** स्त्री० सन्तन्यते सम्+तन-क्तिच्। गोत्रे, पुत्रे, कन्यायाञ्च। भावे-क्तिन्। विस्तारे, पङ्क्तौ, अविच्छिन्नधारायाञ्च।

**सन्तप्त** त्रि० सम्+तप-क्त। अध्वगत्यादिना परिश्रान्ते, अग्नितप्ते, तेन विशुद्धे च 'सन्तप्तचामीकरवल्गुवज्ज'मिति भट्टिः।

**सन्तमस** न० सन्ततं तमः अच् समा०। गाढ़ान्धकारे, मोहे च

**सन्तान** पु० सम्+तन-घञ्। वंशे, अपत्ये, विस्तारे, कल्पवृक्षे च।

**सन्तानिका** स्त्री० सम्+तन-ण्वुल् टाप् अत इत्त्वम्। क्षोरसरे, मर्कटजाले, फेने, क्षुरिकाफले च।

**सन्ताप** पु० सम्यक् तापः प्रा०। वह्निजाते तापे।

**सन्तापन** पु० सन्तापयति सम्+तप-णिच्-ल्यु। कामदेवस्य पञ्चशरान्तर्गते शरभेदे। सन्तापकारके त्रि०।

**सन्तोष** पु० सम्+तुष-घञ्। धैर्य्ये, स्वास्थ्ये च 'सन्तोषमूलं हि सुखमि'ति मनुः। [सन्दंशिकायत स्त्री०

**सन्दंश** पु० सम्-दन्श-अच्। (सांडाशी) यन्त्रभेदे। ण्वुल्।

**सन्दंशपतित** पु० सन्दंशे तन्मध्ये पतित इव। मीमांसकोक्तन्यायभेदे।

**सन्दर्भ** पु० सम्+दृभ-घञ्। रचनायां, ग्रन्थने, प्रबन्धे"गूढ़ार्थस्य प्रकाशस्च सारोक्तिः श्रेष्ठता तथा। नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधै'रित्युक्ते कथनभेदे, मुक्तातात्पर्य्यविषये च।

**सन्दान** न० सम्+दो-ल्युट्। बन्धने, दाम्नि,सम्यक्खण्डने च दा-ल्युट्। सम्यग्दाने न० गजस्याक्षीवतोरधोभागे पु०।

**सन्दानिका** स्त्री०सन्दानं संखण्डनमस्त्यस्य ठन्। विट्खदिरे

**सन्दानित** त्रि० सन्दानं जातमस्य तार० इतच्। बद्धे 'रसनासन्दानितचरणे'ति मालविकाग्निमित्रम्। [गोष्टे

**सन्दानिनी** स्त्री० सन्दानं बन्धनं गवामत्र इनि ङीप्।

**सन्द्राव** पु० सम्+द्रु-घञ्। पलायने।

**सन्दोह** पु० सम्+दुह-घञ्। समूहादियोगे, सम्यग्दोहे च।

**सन्दिग्ध** त्रि० सम्+दिह-कर्त्तरि क्त। सन्देहयुक्ते। कर्म्मणि-क्त। सन्देहविषये।

**सन्दित** त्रि॰ सम्+दो-क्त। बद्धे। [कर्मणि-क्त। उपदिष्टे त्रि॰।

**सन्दिष्ट** न॰ सम्+दिश-भावे-क्त। वाचिकार्थकथने वार्त्तायाम्

**सन्दिहान** त्रि॰ सम्+दिह-शानच्। सन्देहयुक्ते।

**सन्दी** स्त्री॰ सम्+दो-ड गौ॰ङीष्। खट्वायाम्।

**सन्दीप्य** पु॰ सन्दीप्यतेऽसौ सम्+दीप-कर्त्तरि यत्। मयूरशिखावृक्षे।

**सन्देश** पु॰ सम्+दिश-घञ्। वाचिकार्थकथने वार्त्तायाम्।

**सन्देशहर** पु॰ सन्देशं हरति अभीष्टस्थानं कथनाय नयति हृ-अच्। दूते 'तवैव सन्देशहरादिति' रघुः। ण्वुल्। सन्देशहारकोऽप्यत्र।

**सन्देह** पु॰ सम्+दिह-घञ्। संशयशब्दार्थे।

**सन्दोह** पु॰ सम्+दुह-घञ्। समूहे। सम्यग्दोहे च

**सन्द्राव** पु॰सम्+द्रु-घञ्। पलायने।

**सन्धा** स्त्री॰ सम्+धा-अङ्। स्थितौ, प्रतिज्ञायाम्, सन्धाने, शरोत्पादनानुगुणे व्यापारभेदे, अनुसन्धाने च।

**सन्धान** न॰ सम्-धा-ल्युट्। सुरादिसम्पादनानुगुणे व्यापारे सौमरसकरणनामके अभिषवे, अनुसन्धाने, सङ्घट्टने च सन्धाने स्त्रीत्वमपि तत्र ङीप्। सा च कुपयालायाञ्च

**सन्धि** पु॰ सम्+धा-कि। नृपाणां षड्गुणान्तर्गते मेलनार्थं मैत्रीकरणरूपे व्यापारे, संयोगे, अस्थिद्वयसंयोगस्थाने, चौरादिकृतसुरङ्गायां 'सन्धिं कृत्वा तु चौर्य्यमि'ति स्मृतिः भगे, सङ्घट्टने, नाटकाङ्गविशेषे, व्याकरणोक्ते वर्णद्वयजाते वर्णविकारभेदे।

**सन्धिचौर** पु॰ सन्धिना कृतसुरङ्गया चौरः। सन्धिं कृत्वा चौर्य्यकारके (सिन्धेल)। [परार्थहारके

**सन्धिजीवक** पु॰ सन्धिं जीवति जीव-ण्वुल्। शाक्टेन

**सन्धित** त्रि॰ सन्धा जाताऽस्य तार॰इतच्। कृतसन्धे, मिलिते च

**सन्धिनी** स्त्री॰ सन्धा वृषभसंयोगस्तज्जगर्भोऽस्त्यस्याः इनि ङीप्। वृषभसंयोगेन धृतगर्भायां गवि।

**सन्धिपूजा** स्त्री॰ सन्धौ अष्टम्याः शेषे नवम्याश्च आद्ये दण्डे पूजा। आश्विनशुक्लाष्टमीनवमीसन्धिकाले विहितपूजायाम्।

**सन्धिबन्ध** पु॰ सन्धिं बध्नाति संयुनक्ति सम्+बन्ध-अच्। भूमिचम्पके। तत्सेवने हि भग्नसन्धियोजनं वैद्यके प्रसिद्धम्

**सन्धिला** स्त्री॰ सन्धिं लाति ला-क। नद्यां, मदिरायाञ्च। स्वार्थे तच्। सुरङ्गायाम्।

**सन्धिविग्रहाधिकारिन्** पु॰ सन्धिविग्रहेषु अधिकरोति अधि+कृ-णिनि। नृपाणां सन्धिविग्रहाद्यधिकारिमन्त्रिभेदे

**सन्धिवेला** स्त्री॰ सन्धियुक्ता वेला समयः। अहोरात्रसन्धिसमये

**सन्धिहारक** पु॰ सन्धिना सुरङ्गया हरति परद्रव्यम् हृ-ण्वुल् सन्धिचौरे। (सिन्धेल)

**सन्धुक्षित** त्रि॰ सम्+धुक्ष-क्त। उद्दीपिते।

**सन्धेय** त्रि॰ सम्+धा-यत्। संयोज्ये मेलनीये।

**सन्ध्या** स्त्री॰सम्+ध्यै-अङ् टाप्। एकरूपकालोत्तरभाविपररूपकालस्यावकाशे, दिवारात्रस्य मध्यवर्त्तिकाले, स च दिवाशेषदण्डद्वयसहितरात्रिप्रथमदण्डद्वयात्मकः कालः तयोश्चतुर्दण्डात्मककालत्वं 'त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टये। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते इति स्मृतिः। अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्जितः। सा च सन्ध्या समाख्यातेति स्मृतिः। सायाह्ने, सन्ध्याकाले-उपास्यदेवताभेदे च। सन्ध्यामुपासते ये तु नियतं शंसितव्रता इति स्मृतिः। 'प्रातः सन्ध्यां ततः कृत्वा संकल्पं बुध आचरेदि'ति स्मृतिः। एतद्वियोगे सन्ध्यभिधाने। 'चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च प्रकीर्त्तित'इत्युक्ते युगसन्धिकाले, नदीभेदे, मल्लमल्लीभेदे च।

**सन्ध्यांश** पु॰ सन्ध्यायाः सत्ययुगादेरंशः। सत्ययुगादेरंशभेदे तत्प्रमाणम् सन्ध्याशब्दे दृष्टव्यम्। 'सन्ध्यासन्ध्यांशसहितं विज्ञेयं चतुर्युगमि'ति मनुः।

**सन्ध्याचल** पु॰ 'सन्ध्यां वशिष्ठः कृतवान् तत्र यत्नाद्विभिः सुतः। ततः सन्ध्याचलं नाम तस्य गायन्ति देवता' इत्युक्ते पर्वतभेदे।

**सन्ध्यानटिन्** सन्ध्यायां नटति नट-णिनि। शिवे।

**सन्ध्यापुष्पी** स्त्री॰ सन्ध्यायां पुष्पमस्याः। जातिवृक्षे।

**सन्ध्याबल** पु॰ सन्ध्यायां सन्ध्योपलक्षिते रात्रिकाले बलं यस्य। रात्रौ-बलयुक्ते राक्षसे। [कालिकमेघे च।

**सन्ध्याभ्र** न॰ सन्ध्याकालिकमभ्रमिव। सुवर्णगैरिके। सन्ध्या-

**सन्ध्याराग** न॰ सन्ध्याया इव रागोऽस्य। सिन्दूरे।

**सन्ध्याराम** पु॰ सन्ध्यायां तदाख्यभार्य्यायां रमते रम-घञ्। चतुर्मुखे ब्रह्मणि। [खर्वे।

**सन्न** पु॰ सीदति सद्-क्त। पियालवृक्षे अवसन्ने त्रि॰स्वार्थे कन्।

**सन्नक** पु॰ सन्न एव सन्नकः कर्म॰। पियालवृक्षे, खर्ववृक्षे च

**सन्नत** त्रि॰ सम्+नम-क्त। प्रणते, शब्दायमाने च।

**सन्नति** स्त्री॰ सम्+नम-क्तिन्। प्रणामे, ध्वनौ, नम्रतायाञ्च।

**सन्नद्ध** त्रि॰ सम्+नह-क्त। कृतसन्नाहे धृतवर्म्मणि, व्यूहरचनयावस्थिते सैन्यादौ, आततायिनि, सन्नाहयुक्ते च।

**सन्नय** पु॰ सम्+नी-अच्। समूहे, पृष्ठस्थिते-बले च।

**सन्नहन** न० सम्+नह-ल्युट्। वर्म्मपरुणे, उद्योगे, सम्यग् बन्धने च।

**सन्नाह** पु० सन्नह्यते सम्+नह-घञ्। (सांजोया) वर्मणि।

**सन्निकर्ष** पु० सम्+नि-कृष-घञ्। सान्निध्ये 'सद्भ्रसन्निकर्षो हि क्षणार्द्धमपि ग्रसते' इति पुराणम्। विषयेन्द्रियसम्बन्धे, न्यायमते ज्ञानलक्षणासामान्यलक्षणायोगजधर्मविशेषात्मके अलौकिकप्रत्यक्षसाधने उपायभेदे च।

**सन्निकर्षण** न० सम्+नि+कृष-ल्युट्। सन्निधाने।

**सन्निकृष्ट** त्रि० सम्+नि+कृष-क्त। निकटस्थे।

**सन्निध** न० सम्+नि+धा-क। नैकट्ये। समीपस्थिते त्रि०।

**सन्निधान** न० सम्+नि+धा-ल्युट्। नैकट्ये, सामीप्ये।

**सन्निधि** पु० सम्+नि+धा-कि। सामीप्ये। कर्मणि कि। इन्द्रियविषये। कर्म०। साधु निधौ।

**सन्निपतित** त्रि०सम्+नि-पत-क्त। मिलिते,उपस्थिते,स्तते च

**सन्निपात** पु० सम्+नि+पत-घञ्। मेलने "सन्निपात लक्षणोविधिरनिमित्तं तद्विघातस्येति" व्या० परि०। कफादिधातुत्रयस्य विजातीयवैषम्यरूपत्रिदोषजे विकारे, नाशे, उपस्थितौ च।

**सन्निपातज्वर** पु० सन्निपातस्य तद्दोषो ज्वरः। वैद्यकोक्ते त्रिदोषजविकारसाधने ज्वरे।

**सन्निपातनुद्** पु० सन्निपातं त्रिदोषजविकारं नुदति नुद-क्विप्। नेपालनिम्बे।

**सन्निबन्धन** न० सम्यक्निबन्धनं प्रा०। नानास्थानस्थवाक्यानामेकत्र सङ्कलने, तदुपयोगिग्रन्थभेदे च। ७ब०। सम्यग्निबन्धवति त्रि० "सद्वृत्तिः सन्निबन्धनेति" माघः। [समासता।

**सन्निभ** त्रि० सम्+नि+भा-क। सदृशे। निभादिवदस्य नित्य

**सन्निवेश** पु० सम्+नि+विश-आधारे घञ्। पुरादेर्वासस्थे देशे। भावे घञ्। सम्यक् स्थितौ।

**सन्निहित** त्रि० सम्+नि+धा-क्त। निकटस्थे "कर्म्मसन्निहितं नैवेति" मीमांसा। सम्यक्स्थापिते च। भावे क्त। नैकट्ये न०। [युक्ते,अर्पिते च।

**सन्न्यस्त** त्रि० सम्+नि+अस-क्त। निक्षिप्ते, कृतसम्यक्त्यागे,

**सन्न्यास** पु० सम्+नि+अस-घञ्। "काम्यानां कर्म्मणां त्यागं सन्न्यासं कवयोविदु"रित्युक्ते विहितकर्म्मणां विधानेन सम्यक्त्यागे, तदुपयोगिचतुर्थाश्रमे, चैत्रे-वार्त्तक्ये पुराणप्रसिद्धग्रियव्रतभेदे च।

**सन्न्यासिन्** पु० सम्+नि+अस-णिनि। सन्न्यासवति, चतुर्थाश्रमवति, चैत्रे कर्त्तव्यप्रियव्रत कर्त्तरि च।

**सपक्ष** पु० समानः पक्षः। तुल्यरूपे साध्यसाधनाश्रये पक्षे च।

**सपक्षाकरण** न० सह पक्षेण पक्षेण सपक्षः तथा क्रियते सपक्ष+डाच्+कृ-ल्युट्। पक्षेण सह शरवेधनरूपे अत्यन्तव्यथने। कार्म्मणि-क्त। सपक्षाकृतः। तथा पीड़िते त्रि०।

**सपत्न** पु० सह एकार्थे पतति यतते पत-न सहस्य सः। शत्रौ।

**सपत्नारि** पु० सपत्नः अरिरिव। (वेंडवाश) वंशभेदे।

**सपत्नी** स्त्री० समानः पतिर्यस्याः ङीप् न च। एकभर्तृकायां स्त्रियाम्, समस्वामिकायां भूम्यादौ तु सपत्निरित्यपि।

**सपदि** अव्य० सह पद्यते पद-इन् सहस्य सः। तत्क्षणादित्यर्थे "सपदि मुकुलिताक्षीमिति" कुमारः। [पर्य्यौतू।

**सपर** पूजायां कण्ड्वादि० पर० सक० सेट्। सपर्य्यति अस-

**सपर्य्या** स्त्री० सपर-यक्-अ टाप्। पूजायाम् "सोऽहं सपर्य्याविधिभाजनेनेति" रघुः। [चतुर्थांशविशिष्टे च।

**सपाद** त्रि० सह पादेन चरणेन चतुर्थांशेन वा। पादसहिते,

**सपिण्ड** त्रि० समानः पिण्डः स्वदेहारम्भकदेहोऽस्य। एकदेहारब्धदेहे ज्ञातिभेदे "असपिण्डा च या मातुरिति" स्मृतिः। ज्ञातीनाञ्च साक्षात् परम्परया अतिपरम्परया वा एकदेहारब्धत्वात्तथात्वम्। तत्र च दाये अशौचे च सापिण्ड्यविशेषो वक्ष्यदभिधाने वक्ष्यते। "दायत्वभोक्तृत्वेनैकपिण्डवति दायप्रकरणोपयोगि सापिण्ड्य" मिति दायभागः।

**सपिण्डीकरण** न० सह पिण्डेन ततः अभूततद्भावे च्वि+कृ-ल्युट्। प्रेतत्वविमोचनाय प्रेतोद्देशेन कर्त्तव्ये पित्रादि पिण्डसमन्वयकरणरूपे श्राद्धभेदे "सपिण्डीकरणादूर्द्ध्वं न दद्यात् प्रतिमासिक" मिति स्मृतिः।

**सपिण्डीकृत** त्रि० सह पिण्डैः पित्रादिपिण्डैः सपिण्डः ततः च्वि-कृ-कर्म्मणि क्त। यदुद्देशेन सपिण्डीकरणं श्राद्धं कृतं तस्मिन् मृते जने "ये सपिण्डीकृताः प्रेता" इति स्मृतिः।

**सपीतक** पु० सह समानः पीतकेन। राजघोषातकीवृक्षे।

**सपीति** स्त्री० पा-क्तिन् पीतिः पानम् सह एकत्र पीतिः। भ्रात्रादीनां सह भोजने। [वृक्षे।

**सपीतिका** स्त्री० सह पीतेन कप् अतइत्वम्। हस्तिघोषातकी

**सप्तक** न० सप्तानामवयवम् कन्। सप्तसङ्ख्यायाम्। सप्त प्रमाणमस्य कन्। सप्तसङ्ख्यान्विते त्रि०।

**सप्तकी** सप्तभिःस्वरैरिव कायति शब्दायते कै-क। मेखलायाम्

**सप्तचत्वारिंशत्** स्त्री० सप्ताधिका चत्वारिंशत् शाक० (सातचल्लिश) सङ्ख्यायां, तत्सङ्ख्यान्विते च। एवं सप्तदशादयः

सप्ताधिकतत्तसङ्ख्यायां, तत्सङ्ख्यान्विते च।

**सप्तच्छद** पु० सप्त सप्त छदाः प्रतिपत्रम् यस्य इत्तौ सङ्ख्या शब्दस्य वीप्सार्थता आप्योक्ता। (छातिम) इच्चे।

**सप्तजिह्व** पु० सप्त जिह्वा इव आस्वादसाधनानि अर्च्चिषो यस्य। वह्नौ "काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा। उग्रा प्रदीप्ता च कपीटयोनेः सप्तैव कीलाः कथितास्व जिह्वा" इत्युक्तानां सप्तानामग्निज्वालानामेव तज्जिह्वात्वदुक्तम्। [रादयोऽप्यत्र।

**सप्तज्वाल** पु० सप्त काल्यादयः ज्वाला यस्य। वह्नौ सप्तार्चि-

**सप्ततन्तु** सप्तभिः भूरादिभिर्महाव्याहृतिभिस्तन्यते तन-तुन्। यज्ञे। [ङ्ख्यान्विते च।

**सप्तति** स्त्री० सप्तगुणिता दशतिः नि०। (सत्तर)सङ्ख्यायां तत्स-

**सप्ततितम** त्रि० सप्ततेः पूरणः तमप्। येन सप्ततिसङ्ख्या पूर्य्यते तस्मिन् अर्थे। [पूर्य्यते तस्मिन्नर्थे।

**सप्तदश** त्रि० सप्तदशानां पूरणः डट्। येन सप्तदशसङ्ख्या

**सप्तद्वीपा** स्त्री० सप्त जम्बूप्रभृतयोद्वीपाः यस्याः। जम्बू प्रभृतिसप्तद्वीपवत्यां पृथिव्याम्।

**सप्तधा** अव्य० सप्तन्+प्रकारे धाच्। सप्तप्रकारे।

**सप्तधातु** पु० ब० व०। सप्तगुणिता धातवः। देहस्थेषु "रसासृङ्मांसमेदोऽस्थिमज्जानः शुक्रसंयुताः। शरीरस्था इमे ज्ञेयाः पण्डितैः सप्त धातव" इत्युक्तेषु रसादिषु धातुषु।

**सप्तन्** पु० त्रि०। सप-तनिन्। (सात) सङ्ख्यान्विते।

**सप्तनामा** स्त्री० सप्त नामानि यस्याः डाप्। आदित्यभक्तायाम्

**सप्तपत्र** पु० सप्त सप्त पत्राणि प्रतिपत्रं यस्य। सूर्य्यरथे, सप्तच्छदवृक्षे च।

**सप्तपदी** स्त्री० सप्तानां पदानां समाहारः ङीप्। विवाहकाले मण्डलिकासु गन्तव्येषु सप्तसु पदेषु।

**सप्तपर्ण** पु० सप्त सप्त पर्णान्यस्य प्रतिपर्णम्। (छातिम) इच्चे। लज्जालुलतायां स्त्री०।

**सप्तपाताल** न० समाहारद्विगुः पात्रादि। "अतलं वितलञ्चैव नितलञ्च क्रमादधः। महातलञ्च सुतलं पातालं सप्त कीर्त्तित" मित्युक्तेषु सप्तसु भूमेरधःस्थलोकेषु।

**सप्तप्रकृति** स्त्री०ब० व०सप्तसंख्याताःप्रकृतयः। साङ्ख्यसिद्धे महदहङ्कारसहितसूक्ष्मपञ्चभूतहेतुशब्दादितन्मात्रात्मके पदार्थ सप्तके "महदाद्याः प्रकृतिविकृतयः सप्त" इति साङ्ख्यकारिका षोडशपदार्थहेतुत्वात्प्रकृतित्वम् प्रकृतिकार्यत्वाच्च विकृतित्वमासाम्।

**सप्तभद्र** पु० सप्तसु स्थानेषु भद्रमस्य। शिरीषवृक्षे।

**सप्तम** त्रि० सप्तानां पूरणः मट्। येन सप्तसंख्या पूर्य्यते तस्मिन्नर्थे स्त्रियां ङीप्। सा च चन्द्रस्य सप्तमकलाया ह्रासवृद्धिरूपायां तिथौ च।

**सप्तरक्त** पु० सप्त रक्तानि प्रशस्तान्यस्य। "पाणिपादतले रक्ते नेत्रान्तरनखानि च। तालुकाधरजिह्वाश्च प्रशस्ता सप्तरक्त ते" त्युक्तस्थानेषु रक्ततावति जने।

**सप्तर्षि** पु० ब० व०। सप्त ऋषयः कर्म्म०। "मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः वशिष्ठश्चे"त्युक्तेषु सप्तसु ऋषिषु।

**सप्तर्षिमण्डल** त्रि० ६त०। आकाशे नित्यं ध्रुवनक्षत्रपरिभ्रामके नक्षत्रसप्तकात्मके नक्षत्रमण्डलभेदे "सप्तर्षिमण्डलं तस्माद्दृश्यते सर्व्वकोपरीति" पुराणम्।

**सप्तला** स्त्री० सप्तधा लाति ला-क। नवमालिकायां चर्म्मकषायां, गुञ्जायां, पाटलायाञ्च।

**सप्तशती** स्त्री० सप्तानां शतानां समाहारः। मार्कण्डेयपुराणान्तर्गते सप्तशतमन्त्रसमुदायात्मके देवीमाहात्म्यबोधके ग्रन्थभेदे "मध्ये सप्तशतीं जपेदिति" पुराणं तद्विभागो बृहदभिधाने वक्ष्यते।

**सप्तशलाक** पु० सप्त शलकाकारा रेखा यत्र। ज्योतिषोक्ते विवाहे-वर्ज्यदोषसूचके सप्तशलाकाकारितचक्रभेदे।

**सप्तशिरा** स्त्री० सप्त शिरा यस्याः। ताम्बूलवल्ल्याम्।

**सप्तसप्ति** पु० सप्त सप्तयोऽश्वा यस्य। सूर्य्ये,अर्कवृक्षे च। सप्ताश्वादयोऽप्यत्र।

**सप्तसागर** पु० ब० व० सप्तसंख्याताःसागराः।"नवनीतसुरासर्पिर्दधिदुग्धजलान्तका"इत्युक्तेषु सप्तसु सागरेषु। सप्त घृतादिकल्पिताः सागराख्य देयपदार्थायत्र। पुराणोक्ते स्वनामख्याते महादानभेदे लक्षणं बृहदभिधाने।

**सप्तांशु** पु० सप्त अंशवोज्वालायस्य।"कालीकरालीचेत्याद्युक्ते" सप्तज्वालावति वह्नौ। [वृक्षे च।

**सप्ताश्ववाहन** पु० सप्त अश्वाः वाहनान्यस्य। सूर्य्ये, अर्क-

**सप्ति** पु० सप-ति। अश्वे। ["चलसफरीविघट्टितोर्मिति"माघः।

**सफर** पु० सप-अरन् पृ०पस्य फः। (पुटी) मत्स्ये स्त्रीत्वमप्यत्र

**सफल** त्रि० सह फलेन सहस्य सः। अव्यर्थे,फलयुक्ते च।

**सबल** त्रि० सह बलेन सामर्थ्येन सैन्येन वा। सामर्थ्यान्विते सैन्ययुक्ते च।

**सब्रह्मचारिन्** पु० समानं ब्रह्म वेदग्रहणकालिकं व्रतं चरति चर-णिनि। एकगुरुसकाशात् वेदाध्ययनकाले तन्नियम्यसमानव्रताचारवति। [याम्।

**सभर्तृका** स्त्री० सह भर्त्रा पत्या। विद्यमानपतिकायां स्त्रि-

**सभा** स्त्री० सह भान्ति अभीष्टनिश्चयार्थमेकत्र यत्र गृहे यत्र। ब-हूनां समावेशनस्थाने, तदधिष्ठायिजनसमूहे च।

**सभाज** सेवने दर्शने च सक० प्रीतौ अ० अद० चु० उभ० सेट्। सभाजयति ते असभाजत्-त।

**सभाजन** न० सभाज-ल्युट्। गमनागमनादिकाले सुखानन्द-प्रीतिसाधने सम्भाषणे, पूजने च।

**सभासद्** पु० सभायां सीदति-क्विप्। समाजिके सभ्ये।

**सभास्तार** पु० सभां स्तृणाति स्तृ-अण्। सभ्ये।

**सभिक** पु० सभा द्यूतसभास्त्यस्य ठन्। द्यूतकारके

**सभीक** पु० सभा द्यूतं प्रयोजनमस्य ईकन्। द्यूतकारे।

**सभोचित** पु० सभा उचिता परिचिता यस्य। पण्डिते। सभायोग्ये त्रि०।

**सभ्य** पु० सभायां साधुः यत्। सामाजिके, द्यूतकारे च विश्व-स्ते त्रि०। [त्राणे च।

**सम्** अव्य० सो-क्विप्। सम्यगर्थे, प्रकर्षे, सङ्गतौ शोभने, सम-

**सम** त्रि० सम-अच्। समाने, तुल्ये, सर्वे, साधौ च (योड़) युग्मे, "समेऽङ्क्रिते वर्गे" इति लीलावती। समतयाख्यातेषु द्वितीयचतुर्थषष्ठादिषु राशिषु च। अतुल्येऽस्य सर्वना-मता। गीतवाद्ययोरेकत्राश्रये गायकहस्तादिचालनरूपे ताले न०।

**समक्ष** अव्य० अक्ष्णः समीपम् अव्ययी० अच्। चक्षुःसन्निकर्षे तदस्त्यस्य अच्। प्रत्यक्षविषये त्रि०।

**समगन्धक** पु० समांस्तुल्यभागेन निवेशितागन्धाः गन्धयुक्तद्र-व्याण्यत्र कप्। ललितधूपभेदे। [शीरे (वेनारमूल)

**समगन्धिक** पु० समः सर्वदा तुल्यरूपः गन्धोऽस्त्यस्य ठन्। उ-

**समग्र** त्रि० समं सकलं यथा स्यात्तथा गृह्यते ग्रह-ड। सकले।

**समङ्गा** स्त्री० समज्यतेऽनया सम्+अनुज-घञ्। मञ्जिष्ठायाम्

**समचित्त** त्रि० समं सर्वत्र समभावं चित्तं यस्य। सर्वत्र तुल्य-दर्शके तत्त्वज्ञानिनि।

**समज** न० समजत्यत्र सम्×अज-अप् व्यभावः। वने, समूहे पशूनां संघे, मूर्खवृन्दे च।

**समज्ञा** स्त्री० समस्मिन् सर्वत्र ज्ञायते ऽनया ज्ञा-कप्। कीर्त्तौ

**समज्या** स्त्री० सम्+अज-क्यप् न वीभावः। सभायाम्, की-र्त्तौ च। [प्रा०। औचित्ये न०।

**समञ्जस** त्रि० सम्यक् अञ्ज औचित्यं यत्र। उचिते, युक्ते च

**समदर्शिन्** त्रि० समस्मिन् सर्वत्र ब्रह्मभावेनाऽभिन्नतया पश्यति दृश-णिनि। सर्वत्र समदर्शके तत्त्वज्ञानिनि। "विद्यावि-नयसम्पन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" इति गीता। [नि त्रि०।

**समदृष्टि** स्त्री० कर्म०। सर्वत्र तुल्यदर्शने। ६ ब०। समदर्शि-

**समधिक** त्रि० सम्यक् अधिकः प्रा०। अत्यन्ताधिके।

**समन्त** पु० सम्यक् अन्तः स यत्र वा। सम्यगन्ते, सीमायाम् च।

**समन्ततस्** अव्य० समन्त+तसिल्। सर्वत्र विस्तारे।

**समन्तदुग्धा** स्त्री० समन्ततो दुग्धमस्याः। स्नुहीवृक्षे।

**समन्तपञ्चक** न० समन्तात् पञ्चकं नदपञ्चकं यत्र। तीर्थभेदे।

**समन्तभद्र** पु० समन्तात् भद्रमस्य। बुद्धे।

**समन्तभुज्** पु० समन्तात् भुङ्क्ते भुज-क्विप्। वह्नौ। [च।

**समन्तात्** अव्य० समन्त+आति। समन्ततस्त्यर्थे सर्वत्रविस्तारे

**समन्वित** त्रि० सम्+अनु+इण-क्त। युक्ते।

**समपद** न० समं पदं यस्मिन्। धन्विनां समपदनिवेशनपूर्वके "स्थानानि धन्विनां पञ्च" इत्युपक्रम्य "अन्वर्थं स्यात् समपद मित्युक्तं" अवस्थानभेदे। [स्थिते।

**समभिव्याहार** पु० सम्+अभि+वि×आ+हृ-घञ्। सा-

**समभिव्याहृत** त्रि० सम्+अभि+वि×आ+हृ-क्त। सहिते।

**समभिहार** पु० सम्+अभि+हृ-घञ्। पौनःपुन्ये "क्रियास-मभिहारेण विराध्यन्त" मिति माघः। [क्रान्तं द्वयमिति" रघुः

**समम्** अव्य० सम-अम्। साहित्ये, एकदेत्यर्थे, "सममेव समा-

**समय** पु० सम्×इण-अच्। काले, शपथे, आचारे सिद्धान्ते निर्देशे सङ्केते, भाषायां, अङ्गीकारे च।

**समया** अव्य० सम+इण-आ। नैकट्ये, मध्ये, च।

**समयाध्युषित** पु० समयः अध्युषितो यत्र। सूर्यतारारहित-काले "उदितेऽनुदिते चैव समयाध्युषिते तथेति" मनुः।

**समर** पु० न० सम्+ऋ-अप्। युद्धे।

**समरमूर्द्धन्** पु० ६त०। समरस्थाग्रे।

**समर्चन** न० सम्यक् अर्चनं प्रा०। सम्यक्पूजने। [पु०।

**समर्ण** त्रि० सम्+अर्द-क्त। सम्यक्पीड़िते। [प्रशस्ताभीष्टे

**समर्थ** त्रि० सम्+अर्थ-अच्। शक्ते, हिते च। सम्यगर्थः प्रा०।

**समर्थन** न० सम्+अर्थ-ल्युट्। इदमित्थमेवेति निश्चयहेतु-पन्यासेन निश्चायकव्यापारभेदे युच्। अशक्येऽध्यवसाये स्त्री०

**समर्द्धक** त्रि० समर्द्धयति सम्-ऋध-णिच्-ण्वुल्। इष्ट फल दातरि, देवादौ।

**समर्य्याद** त्रि० सह मर्यादया। सीमायाम्। समीपे पु०।

**समल** न० सम्यक् मलम्। विष्ठायाम्। सह मलेन। कलुषे त्रि०

**समवतार** पु० समवतीर्य्यते ऽनेन सम्+अव+तॄ-घञ्। ज-लावतरणसोपाने।

**समवर्त्तिन्** पु० समं वर्त्तते वृत–णिनि। यमे धर्मराजे।

**समवकार** पु० सम्+अव+कृ–घञ्। नाटकभेदे।

**समवाय** पु० सम्+अव+इण–अच्। समूहे, मेलने, न्यायोक्ते नित्ये द्रव्यादिषु जात्यादीनां संबन्धभेदे च।

**समवेत** त्रि० सम्+अव+इण–क्त। मिलिते, समूहान्विते न्यायोक्तेन समवायसम्बन्धेन स्थिते च।

**समष्टि** स्त्री० सम्+अश–क्तिन्। सम्यग्व्याप्तौ, समस्ततायाञ्च। कर्त्तरि क्तिच्। संघीभूते समस्ते पदार्थे।

**समष्ठि(ष्ठी)ल** पु० समं तिष्ठति स्था–इलच् पृ० वा दीर्घः। (गुड़िया) शाके। [शब्दभेदे च।

**समसन** न० सम्+अस–ल्युट्। समासे, संक्षेपे। [कृतसमासे

**समस्त** त्रि० सम्+अस–क्त। संक्षिप्ते, सकले, व्याकरणोक्ते

**समस्थ** त्रि० समं तिष्ठति स्था–क। समभावेन तुल्यतया स्थिते

**समस्थली** स्त्री० कर्म्म०। गङ्गायमुनयोर्मध्यस्थे अन्तर्वेदिदेशे।

**समस्या** स्त्री० समस्यते संक्षिप्यतेऽनया सम्+अस–क्यप्। संक्षेपेण उक्तस्य श्लोकपदादेः परकृतेन स्वकृतेन वा अवशेषेण भागान्तरेण संघटनार्थं कृते प्रश्ने।

**समा** स्त्री० समयति विकलयति भावान् सम–अच्–टाप्। वत्सरे अमरकृतास्य नित्यबहुवचनान्तताङ्गीकृता पाणिनिना तु समांसमां विजायतेइति सूत्रे एकवचनान्तता निर्दिष्टा।

**समांसमीना** स्त्री० समांसमां विजायते प्रसूते ख नि० खत्व समांसमामित्यत्र कालाधारे द्वितीया। प्रतिवर्षं प्रसूतायां गवि।

**समाकर्षिन्** पु० सम्+आ+कृष–णिनि। अतिदूरगामिनि गन्धे। सम्यगाकर्षणकर्त्तरि त्रि०। [कीर्त्तौ, संज्ञायाञ्च।

**समाख्या** स्त्री० समाख्यायतेऽनया सम्+आ+ख्या अङ्।

**समाघात** पु० समाहन्यतेऽत्र सम्+आ+हन–घञ्। युद्धे।

**समाज** पु० सम्+अज–घञ् व्यभावः। पशुभिन्नानां समूहे, सभायाम्, हस्तिनि च।

**समाधा** स्त्री० सम्+आ+धा–अङ्। निष्पत्तौ, विवादभञ्जने, पूर्वपक्षस्य सम्यगुत्तरानुगुणसिद्धान्तानुकूलतर्कादिना सम्यगवधारणे च। ल्युट्। समाधानमप्यत्र न०। तत्र चित्तैकाग्र्ये,ध्येयवस्तुनि निरन्तरस्थापनरूपे समाधौ च।

**समाधि** पु० सम्+आ+धा–कि। समाधायां, ध्येयवस्तुनि एकाग्रतया मनसःस्थापनरूपे ध्यानभेदे, वचनाभावे, नियमे च। [शब्दिते च।

**समाध्मात** त्रि० सम्+आ+ध्मा–क्त। सम्यग्गर्विते, सम्यक्

**समान** त्रि० सममानयति अन–अण्। तुल्ये, माधौ, एकस्मिन्नित्यर्थे यत्समानाधिकरणमितिचिन्तामणिः।

**समानोदक** पु० समानमेकं तर्पणादौ देयमुदकं यस्य। "समानोदकभावस्तु निवर्त्तताचतुर्दशादित्युक्ते" एकादशावधिचतुर्दशपुरुषपर्य्यन्ते ज्ञातिभेदे।

**समानोदर्य्य** पु० समाने उदरे भवः यत् वा न यादेशः। एकोदरभ्रातादौ। भगिन्यां स्त्री०।

**समाप** पु० सम्यक् आप्यतेऽत्र अच् समा० नि०। देवयजनस्थाने।

**समापन** न० सम्+आप–ल्युट्। समाप्तौ, परिच्छेदे, शेषे च

**समापन्न** त्रि० सम्+आ+पद–क्त। समाप्ते, प्राप्ते, क्लिष्टे,च। भावे क्त। समाप्तौ न०।

**समाप्त** त्रि० सम्+आप–क्त। अवसानप्राप्ते, सम्यक्प्राप्ते च।

**समाप्ति** स्त्री० सम्+आप+क्तिन्। अवसाने, समर्थने,प्राप्तौ च।

**समायोग** पु० सम्+आ+युज–घञ्। संयोगसमवायरूपादिसम्बन्धे,"कृपेर्द्दष्टिसमायोगादिति"पुराणम्। प्रयोजने च।

**समालम्बिन्** पु० समालम्बते सम्+आ+लबि–णिनि। भूचम्पके। समालम्बनकर्त्तरि त्रि०।

**समालम्भ** पु० सम्+आ+लभ–घञ् मुम् च। कुङ्कुमादिना गात्रलेपने। ल्युट्। तत्रैवार्थे न०।

**समावर्त्तन** न० समावर्त्तते गुरुकुलाद्येन सम्+आ+वृत–ल्युट्। वेदाध्ययनानन्तरं गार्हस्थ्याय गुरुकुलादागमनहेतुके संस्कारभेदे।

**समाविष्ट** त्रि० सम् आ+विश–क्त। युक्ते, मनोऽभिनिवेशवति, अभीष्टकर्त्तव्यकर्म्मणि चित्तैकाग्र्यविशेषयुक्ते च।

**समावृत्त** पु० सम्+आ+वृत–क्त। कृतसमावर्त्तनसंस्कारे।

**समावेश** पु० सम्+आ+विश–घञ्। बहूनामर्थानामेकत्र वाक्यादौ अवस्थापने, कर्त्तव्येऽभिनिवेशे च।

**समावेशित** त्रि०सम्+आ+विश–णिच्–क्त। कृतसमावेशने।

**समास** पु० सम्+अस–घञ्। संक्षेपे, समर्थने, समाहारे, व्याकरणोक्ते स्वादिपदानामेकपदतासंपादके पदसाधुतार्थके संस्कारभेदे च।

**समासक्त** त्रि० सम्+आ+सन्ज–घञ्। संयुक्ते, अत्यन्तासक्ते, अभिनिविष्टे च।

**समासङ्ग** पु० सम् आ+सन्ज–घञ्। संयोगे,सम्यगभिनिवेशे च

**समासवत्** पु० समास+अमत्वर्थे। तप् मस्य वः। व्याकरणोक्त समासयुक्तेशब्दे संक्षेपयुक्ते च समासेन तुल्यं वति। समासतुल्ये।

**समासादित** त्रि० सम्+आ+सद+णिच्–क्त। सारभाण्डे, निकटस्थिते त्रि०। [स्यावाम्।

**समासार्था** स्त्री० समासेन संक्षेपेणार्थोऽभिधेयतोयस्याः। सम-

**समाहित** त्रि॰ सम्+आ+धा-क्त । कृतसमाधौ, आहिते, प्रतिज्ञाते, निष्पन्ने, युद्धे च ।

**समाहृत** त्रि॰ सम्+आ+हृ-क्त । संगृहीते, एकत्रस्वीकृते ।

**समाहृति** स्त्री॰सम्+आ+हृ-क्तिन् । संक्षेपे,संग्रहे,समुच्चये च

**समाह्वय** पु॰ समाह्वयते सम्+आ+ह्वे-अच् आत्वाभावः । युद्धे आह्वाने प्राणिकरणकद्यूते च,'प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वय' इति स्मृतिः ।

**समाह्वा** स्त्री॰ समा-आह्वा यस्याः । गोजिह्वाख्ये ।

**समित्** स्त्री॰ समीयतेऽत्र सम्+इण् क्विप् । युद्धे ।

**समिता** स्त्री॰ सम्+इण्-क्त । गोधूमचूर्णे सङ्गते त्रि॰ ।

**समिति** स्त्री॰ सम्+इण-क्तिन् । सभायां, युद्धे च ।

**समिध्** स्त्री॰ समिन्धतेऽनया सम्+इन्ध-क्विप् । काष्ठे, होमीय काष्ठभेदे च विवरणं हव्यभिधाने ।

**समिध** पु॰ समिध्यते सम्+इन्ध-क । काष्ठे वह्नौ च ।

**समिन्धन** न॰ सम+इन्ध-ल्युट् । काष्ठे सम्यग्दीप्तौ च ।

**समीक** न॰ सम-ईकक् । युद्धे ।

**समीकरण** न॰असमःसमः क्रियतेऽनेन सम+च्वि+कृ-ल्युट् । बीजगणितप्रसिद्धे अज्ञातसंख्यानां यावत्तावतां संख्याज्ञानार्थं प्रक्रियाभेदे, तुल्यरूपतापादने च ।

**समीक्ष** न॰सम्यगीक्ष्यतेऽनेन घञ् । सांख्यदर्शने । भावे घञ् । पर्य्यालोचने, सम्यग्ज्ञाने च । अ । समीक्षाप्यत्र सत्त्वे बुद्धौ, मीमांसाशास्त्रे, यत्ने च स्त्री॰ टाप् ।

**समीक्ष्यकारिन्** त्रि॰ समीक्ष्य पर्य्यालोच्य करोति कृ-णिनि उप॰ । वस्तुस्वरूपपर्य्यालोचनपूर्व्वककार्य्यकारके ।

**समीचीन** त्रि॰ सम्यग्भवः सम्+अन्च-क्विप् ततः ख समः समिः अञ्चेरकारलोपे पूर्व्वपददीर्घः । यथार्थे, साधौ च सत्ये न॰ सत्यवति त्रि॰ ।

**समीप** त्रि॰ सङ्गता आपोऽत्र अच् समा॰ अत ईत्वम् । निकटे

**समीर** पु॰ सम्यक् ईरयति नोदयति सम्+ईर-अच् । वायौ पु॰ शमिवृक्षे ।

**समीरण** पु॰ सम्+ईर-ल्यु । वायौ, मरुवकवृक्षे, पथिके च

**समीरित** त्रि॰ सम्+ईर-क्त । कथिते, उच्चारिते 'चतुर्मुख समीरिते'ति कुमारः । [वाग्मिनि च ।

**समीहित** त्रि॰ सम्+ईह-क्त । अभीष्टे । [वाञ्छिते

**समुख** त्रि॰ सह मुखेन मुखव्यापारेण वा सहस्य सादेशः ।

**समुचित** त्रि॰ सम+उच-क्त । सम्यगुपयुक्ते समञ्जसे ।

**समुच्चय** पु॰ सम्+उद्+चि-अच् । तिलादीनां राशौ, परस्परनिरपेक्षाणामनेकेषामेकस्मिन् क्रियादावन्वये च । यथा देवदत्तो यज्ञदत्तश्च गच्छतीत्यत्र देवदत्तयज्ञदत्तयोः परस्परसापेक्षताभावेऽपि एकस्मिन् गमने अन्वयः । तद्वाचकश्च प्रायेण चकारः क्वचित् तथादिशब्दोऽपि ।

**समुच्चित** त्रि॰ सम्+उद्+चि-क्त । कृतसमुच्चये 'समुच्चितफलकामनाना'मिति विधिस्वरूपे गदाधरः ।

**समुच्च(चा)र** पु॰ सम्+उद्+चर-अप् घञ् वा । सम्यगुच्चारणे, सम्यक्त्यागे च । [विरोधे च ।

**समुच्छेद** पु॰ सम्+उद्+छिद-घञ् । विनाशे । [विरोधे,

**समुच्छ्र(च्छ्रा)य** पु॰ सम्+उद्+श्रि-अच् घञ् वा । अत्युन्नतौ,

**समुच्छ्रित** त्रि॰ सम्+उद्+श्रि-क्त । अत्युन्नते ।

**समुच्छलित** त्रि॰ सम्यक्+उच्छलितम् सम्+उद्+शल-क्त । समन्तात् विस्तीर्णे (छड़ान) 'समुच्छलितविभ्रमा गतिरि'ति काव्य प्र॰ । [प्रत्युज्जीविते च ।

**समुच्छ्वसित** त्रि॰ सम्+उद्+श्वस-क्त । सम्यगुच्छ्वासयुक्ते,

**समुच्छ्वास** पु॰ सम्+उद्+श्वस-घञ् । मुखनासिकाभ्यां प्राणवायोर्व्यापारे ।

**समुज्झित** त्रि॰ सम्+उज्झ-क्त । त्यक्ते । [सम्यगुद्गमने च ।

**समुत्क्रम** पु॰ सम्+उद्+क्रम-घञ् न वृद्धिः । ऊर्द्ध्वगमने,

**समुत्क्रोश** पु॰ सम्यक् उत्क्रोशति उच्चैः शब्दायते सम्+उद्+क्रुश-अच् । कुररीविहगे । भावे घञ् । अत्युच्चैःशब्दे ।

**समुत्थ** त्रि॰सम्यगुत्तिष्ठति सम्+उद्+स्था-क्त सस्य थः । सम्यगुत्पन्ने । [रोगे, उत्तोलने च ।

**समुत्थान** न॰ सम्+उद्+स्था-करणे ल्युट् सस्य थः । सम-

**समुत्पत्ति** स्त्री॰ सम्+उद्+पद-क्तिन् । समुद्भवे ।

**समुत्पन्न** त्रि॰ सम्+उद्+पद-क्त । समुद्भूते ।

**समुत्पाट** पु॰ सम्+उद्+पट-घञ् । उन्मूलीकरणे ।

**समुत्पाटित** त्रि॰ सम्+उद्-णिच्-पट-क्त । उन्मूलीकृते । [पु॰

**समुत्पिञ्ज** त्रि॰सम्+उद्+पिञ्ज-अच् । अत्याकुले । आकुलसैन्ये

**समुत्सर्ग** पु॰सम्यगुत्सर्गः । सम्+उद्+सृज-घञ् । सम्यक्त्यागे

**समुत्सुक** त्रि॰ सम्यगुत्सुकः प्रा॰ । अत्यन्तोत्सुके इष्टवस्तुलाभाय त्वरान्विते ।

**समुत्सृष्ट** त्रि॰ सम्+उद्+सृज-क्त । सम्यक्त्यक्ते । [तायाञ्च

**समुत्सेध** पु॰सम्+उद्+सिध-घञ् । अत्युन्नतौ, अतिस्फीत-

**समुदक्त** त्रि॰ सम्+उद्+अञ्च-क्त । कूपादेरुद्धृते जलादौ ।

**समुदय** पु॰ सम्+उद्+इण-अच् । समूहे, युद्धे,समुद्गमे,दिवसे च ज्योतिषोक्ते लग्ने न॰। घजन्तः समूहे पु॰। [आचारे च

**समुदाचार** पु॰ सम्+उद्+आ+चर-घञ् । अभिप्राये, सम्य

**समुदित** त्रि॰ सम्+उद्+इण-क्त । प्राप्तसंहतौ पदार्थे,

सम्+वद-कर्म्मणि क्त । सम्यक्कथिते ।
**समुदीरण** न० सम्+उद्+ईर-ल्युट् । सम्यक्कथने ।
**समुदीरित** त्रि० सम्+उद्+ईर-क्त । सम्यक्कथिते ।
**समुद्ग** पु० सम्+उद्+गम-ड । सम्पुटके सम्पुटाख्ये संश्लेषकारकपदार्थे । स्वार्थे कन् तत्रैव ।
**समुद्गम** पु०सम्+उद्+गम-घञ् न वृद्धिः । ऊर्द्ध्वगतौ,समुद्भवे च
**समुद्गीत** त्रि० सम्+उद्+गै-क्त । उच्चैर्गीते ।
**समुद्गीर्ण** त्रि० सम्+उद्+गॄ-क्त । वमिते, उत्तोलिते,कथिते च
**समुद्दिष्ट** त्रि० सम्यक् उद्दिष्टम् उद्+दिश-क्त । सम्यगुद्दे भवति पदार्थे 'तत्समुद्दिष्टं कर्मेति' संक्षिप्तसारः ।
**समुद्देश** सम्यक् उद्देशः उद्+दिश-घञ् । सम्यगभिसन्धौ ।
**समुद्धत** त्रि०सम्+उद्+हन-क्त । अत्यन्तप्रगल्भे, अत्यन्ताविनीते, समुद्गीर्णे च ।
**समुद्धरण** न० सम्+उद्+हृ-ल्युट् । उत्तोलने कूपादेर्जलोन्नयने, भुक्तान्नस्य वमने, उन्मूलने च । कर्म्मणि ल्युट् । वान्ते-अन्नादौ, सम्मूर्च्छिते च । [उन्मूलिते च ।
**समुद्धृत** त्रि० सम्+उद्+हृ-क्त । अपनीते, वान्ते, उत्तोलिते
**समुद्धर्तृ** त्रि० सम्+उद्+हृ-तृच् । वमनकारिणि, उन्मूलयितरि, उत्थापके, हृतद्रव्यस्य पुनरादानकर्त्तरि च ।
**समुद्भव** पु० सम्+उद्+भू-अप् । समुत्पत्तौ ।
**समुद्भूत** त्रि० सम्+उद्+भू-क्त । समुत्पन्ने ।
**समुद्यत** त्रि० सम्+उद्+यम-क्त । सम्यगुद्यमवति ।
**समुद्यम** त्रि० सम्+उद्+यम-घञ् न वृद्धिः । सम्यक्प्रयत्ने ।
**समुद्र** पु०सम्+उन्द-क्लेदने र,सम्+उद्+रा-क वा । स्वनामख्याते प्रचुरजले पदार्थे । सह मुद्रया मुद्रासहिते त्रि० 'बभौ मरुत्वान् विकृतः समुद्रः बभौ मरुत्वान् विकृतः समुद्रः' इति भट्टिः । भार्य्यां, भार्य्याञ्च स्त्री० टाप् ।
**समुद्रकफ** पु०समुद्रस्य कफ इव । जलधिफेने । [नद्याम् ।
**समुद्रकान्ता** स्त्री०६त० । पृक्कायां,नद्याञ्च। समुद्रप्रियादयो-
**समुद्रगा** स्त्री०समुद्रं गच्छति गम-ड । नद्याम् 'सर्व्वा नद्यः समुद्रगा' इति पुराणम् ।
**समुद्रगृह** न०समुद्र इव प्रचुरजलं गृहम् । जलयन्त्रगेहे ।
**समुद्रचुलुक** पु०समुद्र चुलुकः गण्डूषमितजलमिव अनायासेन पीतसमुद्रस्य । अगस्त्ये मुनौ । [राशे अमृते, चन्द्रे च ।
**समुद्रनवनीत** न०समुद्रस्य नवनीतमिव । समुद्रमन्थनोद्भूततया-
**समुद्रफेन** पु० ६त० । समुद्रस्य फेने ।
**समुद्रमेखला** स्त्री०समुद्रः मेखलेव वेष्टनाकारत्वात् यस्याः । पृथिव्याम् । समुद्ररसनादयोऽप्यत्र ।

**समुद्रयान** न०यायतेऽनेन या-ल्युट् ६त० । पोते समुद्रतरणसाधने नौकाभेदे ।
**समुद्रलवण** न० समुद्रजलजातं लवणम् । (करकच) लवणे
**समुद्रवह्नि** पु० ६त० । समुद्रस्थे अग्नौ वाड़वानले ।
**समुद्रवेला** स्त्री० ६त० । समुद्रस्य कूले ।
**समुद्रान्त** न०समुद्रस्यान्तः पर्य्यन्तदेशः साधनत्वेनास्त्यस्य अच् समुद्रः अन्तो यस्य वा । जातीफले । दुरालभायाम्, कार्पास्यां, पृक्कायां, यवासे च स्त्री० । समुद्रपर्य्यन्ते त्रि० ।
**समुद्राम्बरा** स्त्री० समुद्रः अम्बरमिव वेष्टनाकारः यस्याः । पृथिव्याम् । सागराम्बरादयोऽप्यत्र ।
**समु(द्रि)द्रीय** त्रि०समुद्र+भवार्थे घ छ वा । समुद्रभवे पदार्थे
**समुद्वह** त्रि०सम्+उद्+वह अच् । श्रेष्ठे,सम्यगुद्वहनकर्त्तरि च
**समुन्दन** न० सम्+उन्द-ल्युट् । सम्यगार्द्रीभावे (भिजा) ।
**समुन्न** न० सम्+उन्द-क्त । क्लिन्ने चार्द्रे ।
**समुन्नत** त्रि०सम्+उद्+नम-क्त । अत्युच्चे । शरभभेदे पु० ।
**समुन्नति** स्त्रि० सम्+उद्+नम-क्तिन् । उच्चतायाम् 'प्रायः पयोधरसमुन्नतिरत्र हेतुरि'त्युद्भटः ।
**समुन्नद्ध** त्रि० सम्+उद्+नह-क्त। गर्व्विते पण्डितम्मन्ये, प्रभौ समुद्भूते च । कर्म्मणि क्त। उत्तोल्य बद्धे । [पणे, समुद्भावने च
**समुन्नय** पु०सम्+उद्+नी-अच् । ऊर्द्ध्वनयने,सम्यग्ज्ञप्तौ,उत्क्षे
**समुपचित** त्रि० सम्यक् उपचितम् उप+चि-क्त। सुबलिनि कृते संवर्द्धिते च ।
**समुपजोषम्** अव्य० सम्+उप+जुष-अम् । अत्यन्तानन्दे ।
**समुपेयिवस्** त्रि० सम्+उप+इण-क्वसु । समीपगते ।
**समुपोढ** त्रि० सम्+उप+वह-क्त । समुद्गते संजाते च ।
**समुल्लेख** पु०सम्+उद्+लिख-घञ् । पादादिना भूम्यादेः खनने
**समूढ** त्रि० सम्+ऊह-वा वह-क्त । राशीकृते, अनपप्लुते 'समूढमस्य पांसुरे इति' ऋग्वेदः भुग्ने, दमिते, कृतविवाहे, शोधिते च । सह मूढेन मूढसहिते त्रि० ।
**समूरु** पु० सक्तौ सन्निहीनौ ऊरू यस्य । मृगभेदे । [भट्टिः
**समूल** त्रि० सह मूलेन । मूलसहिते 'समूलघातं न्यवधीदि'ति
**समूह** पु० सम्+ऊह-घञ् । समुदये ।
**समूहनी** स्त्री० समूह्यतेऽनया ल्युट् । सम्मार्ज्जन्याम् भावे-ल्युट् । संमार्ज्जने । सम्यगूहकरणे च न० ।
**समूह्य** पु० सम्+ऊह-ण्यत् । यज्ञियाग्नौ । [वृद्धे च ।
**समृद्ध** त्रि० सम्यक् ऋद्धः ऋध-क्त । अधिकसम्पत्तियुक्ते, अति
**समृद्धि** स्त्री० सम्यक् ऋद्धिः सम्+ऋध-क्तिन् । अतिसम्पत्तौ, वृद्धौ 'मधुरसमृद्धिसमेधिते'ति माघः ।

**समेत** त्रि॰ सम्+आ-इण-क्त । समागते, सङ्गते च ।
**समेधित** त्रि॰ सम्+एध-णिच्+क्त । 'संवर्द्धिते मधुसन्दिग्धसमेधितमेधयेति भावः ।
**समोदक** न॰ समम् अर्द्धभागेन तुल्यमुदकं यत्र । अर्द्धाम्बुसंयोगेन मथितदधिजाते तक्रभेदे । सह मोदकेन, मोदकसहिते त्रि॰ ।
**सम्पत्ति** स्त्री॰ सम्+पद-क्तिन् । अतिविभवे, अनुरूपतालाभे यस्य यद्रूपता उचिता तस्य तथाभवने च ।
**सम्पद्** स्त्री॰ सम्+पद-सम्प॰क्विप् । विभवे, सम्पत्तौ च ।
**सम्पन्न** त्रि॰ सम्+पद-क्त । साधिते, सम्पद्युक्ते च ।
**सम्पराय** पु॰ सम्+परा+इण-अच् । युद्धे, आपदि, उत्तरकाले च
**सम्परायिक** न॰ सम्परायाय आपदे हितम् ठन् । युद्धे । ठण् । साम्परायिकमप्यत्र ।
**सम्पर्क** पु॰ सम्+पृच-घञ् । सम्बन्धे ।
**सम्पर्किन्** त्रि॰ सम्+पृच-घिणुन् । सम्बन्धयुक्ते ।
**सम्पा** स्त्री॰ सम्यक् अतर्कितं पतति पत-ड । विद्युति ।
**सम्पाक** पु॰ सम्यक् पाको यस्मात् ५व॰ । आरग्वधवृक्षे तद्भोजने हि भुक्तान्नादेः सम्यक्पाको भवतीति वैद्यके प्रसिद्धम् धृष्टे, अल्पे, अर्भके, लम्पटे च त्रि॰ ।
**सम्पात** पु॰ सम्+पत-घञ् । पक्षिगतिभेदे सम्यक्पतने च ।
**सम्पाति** पु॰ सम्+पत-णिच्-इन् । जटायुषो ज्येष्ठभ्रातरि, पक्षिभेदे । स्वार्थे कन् । तत्रैव ।
**सम्पुट** पु॰ सम्+पुट-क । कुरुवकवृक्षे । सम्यक् पुटमिव उभयपार्श्ववर्त्ति यस्य । एकजातीयपदार्थे भिन्नजातीयस्य उभयतो व्याप्य स्थिते त्रि॰'सकामैः सम्पुटोजाप्य' इति तन्त्रम्
**सम्पुटक** पु॰ सम्पुटयति सम्+पुट-अच् स्वार्थे वुन् । समुद्गके मञ्जूषाख्ये (पेटरा) पदार्थविशेषे ।
**सम्पूर्ण** त्रि॰ सम्+पूर-क्त । परिपूर्णे, समग्रे च 'आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता एकादशीहि सम्पूर्णे'ति स्मृत्युक्ते एकादशीभेदे ।
**सम्पृक्त** त्रि॰ सम्+पृच-क्त । मिश्रिते, सम्बद्धे च ।
**सम्प्रणयन** न॰सम्+प्र+णी-ल्युट् । सम्यगग्निहिष्टतादेः शोधनाय संस्कारविशेषे, विधाने च ।
**सम्प्रति** अव्य॰ सम्+प्रति+समाहारद्वन्द्वः । इदानीमित्यर्थे ।
**सम्प्रतिपत्ति** स्त्री॰ सम्+प्रतिपद्यते क्तिन् । वाद्युक्तार्थविषयस्वीकरणे 'श्रुत्वाभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते स तु सम्प्रतिपत्तिः स्यादि'ति स्मृत्युक्ते व्यवहारे उत्तरभेदे च ।
**सम्प्रदातृ** त्रि॰ सम्+प्र+दा-तृच् । दानकर्त्तरि ।

**सम्प्रदान** न॰सम्+प्र+दा-भावे ल्युट् । सम्यक्प्रदाने । सम्प्रदीयते ऽस्मै ल्युट् । 'कर्म्मणा यमभिप्रैति स सम्प्रदानमिति पाणिन्युक्ते दानकर्म्मोद्देश्ये तच्च त्रिविधम् । 'अनिराकरणात्कर्त्तुस्त्यागाङ्गकर्म्मणेप्सितम् प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानताम्' इति । तत्र विष्णवे वस्त्रं ददातीत्यादौ अनिराकर्त्तृसम्प्रदानम्, याचकाय धनं ददातीत्यादौ प्रेरयितृ सम्प्रदानम्, गुरवे धनं ददातीत्यादौ अनुमन्तृ सम्प्रदानम् । [नार्थसमर्पने ।
**सम्प्रधारणा** स्त्री॰सम्+प्र+धृ-णिच्-युच् । युक्तायुक्तत्वविवेचने-
**सम्प्रयोग** पु॰ सम्+प्र+युज-घञ् । वृद्ध्यादिलाभेच्छया धनादिविनियोगे । 'विभागः सम्प्रयोगश्चे'ति स्मृतिः रमणे, सम्बन्धे च ।
**सम्प्रयोगिन्** त्रि॰ सम्+प्र+युज घिणुन् । कामुके कलाकेलिकारके, सम्यग्लाभार्थं धनादिविनियोजके च ।
**सम्प्रसाद** पु॰ सम्+प्र+सद-घञ् । योगादिशास्त्रोक्ते चित्तस्य नैर्मल्यसम्पादके प्रयत्नभेदे । भावे घञ् । सम्यक्प्रसन्नतायाम् ।
**सम्प्रसाधन** न॰ सम्+प्र+साध-णिच्-करणे ल्युट् । कटकादौ भूषणे । भावे ल्युट् । भूषणक्रियायाम् ।
**सम्प्रसारण** न॰ सम्+प्र+सृ-णिच्-ल्युट् । सम्यग्विस्तारसम्पादने, व्याकरणोक्ते यणः स्थाने जायमाने इक्संज्ञवर्णे च
**सम्प्रहार** पु॰ सम्प्रह्रियतेऽत्र सम्+प्र+हृ-घञ् । युद्धे भावे घञ् । सम्यक्प्रहरणे, गमने च । [रोगावस्थाभेदे च ।
**सम्प्राप्ति** स्त्री॰ सम्+प्र+आप-क्तिन् । सम्यक्प्राप्तौ वैद्यकोक्ते-
**सम्प्रैष** पु॰ सम्+प्र+इष-घञ् वा वृद्धिः । नियोगे । [भेदे
**सम्प्रोक्षण** न॰ सम्+प्र+उक्ष-ल्युट् । जलादिसेचनेन संस्कार
**सम्प्रोक्षित** त्रि॰ सम्+प्र+उक्ष-क्त । जलादिसेचनेन कृतसंस्कारे पदार्थे । [इति तकारमध्योऽपि तत्रैव ।
**सम्फाल** पु॰ सम्+फल+घञ् । मेषे । [इत्त्वम् । सम्फुल्ल
**सम्फुल्ल** त्रि॰ सम्+फुल्ल-अच् । विकसिते । सम्+फल-क्त अत
**सम्ब** सर्पणे भ्वा॰प॰सक॰सेट् । सम्बति असम्बीत् ।
**सम्ब** सम्बन्धे चु॰उभ॰सक॰सेट् । सम्बयति ते असससम्बत् त
**सम्ब** न॰ सम्ब-अच् । कृष्टक्षेत्रस्य प्रतिलोमकर्षणे ।
**सम्बद्ध** त्रि॰सम्+बन्ध-क्त । संबन्धिनि । भावे क्त । सम्यग्बन्धने न॰
**सम्बन्ध** पु॰ सम्+बन्ध-घञ् । संसर्गे, संयोगादौ, न्याये, सम्बद्धौ, सम्यग्बन्धने च सम्यग्बन्धो यस्मात् । समर्थे, हिते च त्रि॰
**सम्बर** न॰ सम्ब-अरन् । जले, बौद्धव्रतभेदे च । सेतौ, दैत्यभेदे, मृगभेदे, मीनभेदे, पर्वतभेदे च पु॰ ।
**सम्बरारि** पु॰ सम्बरस्य दैत्यविशेषस्य अरिः । कामदेवे ।
**सम्बरी** स्त्री॰सम्ब-अरन् ङीप् । मूषिकपर्ण्याम्, मतान्तर्यान्च ।

सम्बल न० सम्ब-कलच्। जले। पाथेये पु०न०।

स(श)म्बाकृत त्रि० स(श)म्बेन प्रतिलोमेन कृष्टं चेत्रं स(श)म्ब-डाच्+कृ-क्त। प्रतिलोमकृष्टे चेत्रादौ। भावे घञ्। प्रतिलोमकर्षणे

सम्बाध न० सम्यक् बाधा यत्र। नरकवर्त्मनि सम्+बाध-भावे घञ्। अन्योन्यसंघर्षे पु०।

सम्बुद्धि स्त्री० सम्+बुध-क्तिन्। सम्बोधनार्थे।

सम्बोध पु० सम्+बुध-घञ्। बोधे, भाषे, सम्यग्ज्ञाने च।

सम्बोधन न० सम्+बुध-ल्युट्। सम्यग्ज्ञाने। बुध-णिच्-ल्युट्। सम्यग्ज्ञापने 'स्थितस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते' इति व्याकरणोक्ते अन्यत्रासक्तस्याभिमुखीकरणाय अभीष्टक्रियासु विनियोगाय ज्ञापनादिरूपे व्यापारे च।

सम्भली स्त्री० सम्यक् भलते सम्+भल-अच् गौ०ङीष्। कुट्टिन्याम् परपुरुषेण सह अन्यस्त्रिया योजयित्र्याम्।

सम्भव पु० सम्+भू-अप्। उत्पत्तौ, आधेयस्याधारे समावेशनयोग्यत्वरूपे व्यापारे, उत्कटसन्देहे च। अपादाने अप्। हेतौ। कर्त्तरि अच्। मेलके त्रि०।

सम्भव्य पु० सम्+भू-कर्त्तरि यत्। कपित्थे, सम्यग्भाविनि त्रि०

सम्भाव पु० सम्+भू-घञ्। परिपूर्णतायाम्, समूहे, सामग्र्याञ्च

सम्भावन न० सम्+भू-णिच्-ल्युट्। अर्थालङ्कारभेदे, व्याकरणोक्ते क्रियासु योग्यताध्यवसाये लिङर्थभेदे, उत्कटकोटिकसंशयरूपे ज्ञानभेदे च। युच्। सम्भावनापि उक्तार्थे स्त्री०।

सम्भावित त्रि० सम्+भू-णिच्-क्त। सम्भवयुक्ते पदार्थे।

सम्भाषण न० सम्+भाष-ल्युट्। सम्यक्कथने, परस्परकथने च

सम्भिन्न त्रि० सम्+भिद्-क्त। विदलिते भेदान्विते सम्यग् विकसिते च 'सम्भिन्नमुकुल' इति वेणीसंहारः।

सम्भूति स्त्री० सम्+भू-क्त। विभवे ईश्वरस्यैश्वर्यभेदे च। 'सम्भूतिं य उपासते' इति श्रुतिः।

सम्भूयसमुत्थान न० सम्भूय+मिलित्वा सम्यगुत्तिष्ठन्त्यनेन। मिलित्वा वणिजां वाणिज्यादिकर्मकरणे विवादभेदे

सम्भृति स्त्री० सम्-भृ-क्तिन्। सम्यक् पोषणे।

सम्भेद पु० संभिद्यते संश्लिष्यतेऽत्र सम्+भिद्-आधारे घञ्। नद्योः सङ्गमस्थाने। भावे घञ् तत्सङ्गमे, सम्यग्भेदने, स्फुटने, मिलने ऐकरूप्ये च। 'सम्भेदे नान्यतरवैयर्थ्यमिति मीमांसा।

सम्भोग पु० सम्+भुज-घञ्। सम्यग्भोगे, सुरते, हर्षे, केलिनागरे, 'दर्शनस्पर्शनादीनि निषेवेते विलासिनौ। यत्रानुरक्तावन्योन्य सम्भोगः समुदाहृत' इत्युक्तलक्षणे शृङ्गारस्यावस्थाभेदे।

सम्भ्रम पु० सम्+भ्रम-घञ् न वृद्धिः। भयादिजनिते वेगे त्वरायां तद्धेतुके, भये, आदरे, अतिशयभ्रमे, भूले च।

सम्मति स्त्री० सम्-मन-क्तिन्। अनुमतौ, आत्माभीष्टे अभिलाषे च।

सम्मद पु० सम्-मद-घअर्थे क। हर्षे। अच्। हर्षयुक्ते त्रि०।

सम्मर्द पु० संमृद्यतेऽत्र सम्+मृद-घञ्। युद्धे। भावे घञ्। अन्योन्यसंघर्षे च।

सम्मान पु० सम्+मन-घञ्। आदरे।

सम्मानित स्त्री० सम्+मन-णिच्-क्त। कृतगौरवे, समादृते च

सम्मार्जन न० सम्+मृज-ल्यु। संशोधने।

सम्मार्जनी स्त्री० संमृज्यतेऽनया सम्+मृज-करणे ल्युट् ङीप्। धूल्याद्यपसारणार्थे पदार्थे (झाटा)

सम्मित त्रि० सम्+मा-क्त। सदृशे, तुल्यपरिमाणे च।

सम्मुख त्रि० सङ्गतं मुखम् प्रा०। अभिमुखागते।

सम्मुखीन त्रि० सम्मुख पतति ख। अभिमुखे पातिनि।

सम्मूर्च्छज न० सम्मूर्च्छात् जायते जन-ड। स्वरभेदे।

सम्मूर्च्छन न० सम्+मूर्च्छ-ल्युट्। सम्यग्विस्तारे, उन्नतौ, मोहे च। [योग शोधितेऽब्रादौ च।

सम्मृष्ट त्रि० सम्+मृज-क्त। मार्ज्जनयुक्ते। मक्षिकाद्यपसार-

सम्मोद पु० सम्+मुद-घञ्। हर्षे, प्रीतौ च।

सम्यच् अव्य० सम-अनुच-क्विप् समयादेशः। शोभने। सङ्गते, मनोज्ञे च त्रि०। सत्यवाक्ये न०। तद्वति त्रि०।

सम्राज् पु० सम्यक् राजते राज-क्विप् नानुस्वारः। कृतराजसूययज्ञे सर्व्वभूमीश्वरे नृपतौ।

सर न० सरति सृ-अच्। सरोवरे, जले च। लवणे, दध्यग्रे, दधिमस्तौ, तज्जाते नवनीते, वाणे च निर्भरे स्त्री० भावे अप्। भेदने, गमने च।

सरक पु०न० सृ-वुन्। मद्यपानपात्रे, मद्यपरिवेषणे, इक्षुजमद्ये, तत्पात्रे, अविरलपथिकपङ्क्तौ च।

सरघा स्त्री० सरं मद्यभेदं हन्ति हन-ड नि०। मधुमक्षिकायाम्

सरज न० सरात् जायते जन-ड। नवनीते।

सरजस् स्त्री० सह रजसा। ऋतुमत्यां स्त्रियाम् अव्ययी० रजोयुक्ते त्रि० अच् समा०। रजः साकल्ये।

सरट पु० सृ-अटन्। कृकलासे (काकलास)।

सरण न० सृ-ल्युट्। गमने, लोहमले च (गन्धभादाल) लतायाम्

सरणि(णी) स्त्री० सृ-अनि। पथि पङ्क्तौ प्रसारिण्यां।

सरपत्त्रिका स्त्री० सरे जले पत्त्रमस्यस्याः ठन्। पद्मे।

सरमा स्त्री० सह रमते। कुक्कुरयोषिति; विभीषणपत्न्याम्।

**सरयु** पु० सृ-अयु । वायौ । जङ् । अयोध्यान्तिकवाहिनदीभेदे स्त्री० ।
**सरल** पु० सृ-अलच् । पीतदारुणि धूपकाष्ठभेदे । उदारे, ऋजौ च त्रि० । त्रिपुटायां स्त्री० । [त्रिपुटायाञ्च ।
**सरलद्रव** पु० ६त० । सरलवृक्षनिर्यासे, (टारपीन) नदीभेदे,
**सरलाङ्ग** पु० सरलो वृक्षोऽङ्गं साधनं यस्य । श्रीवेष्टे गन्धद्रव्ये । [प्यल स्त्री० 'सरसीः परिशीलितुमि'ति नैषधम् ।
**सरस्** न०सृ-असि । जले,सरोवरे च । गौरा०ङीप् । सरसील्य
**सरस** न० सह रसेन जलेन आस्वादेन च । सरोवरे, रसान्विते,सार्द्रे च त्रि० । 'सरसां सरसां परिशुच्येति'भट्टिः । श्वेतत्रिवृतायां स्त्री० । [त्रिकण्टकवृक्षे (तेकाटासिजु) ।
**सरसम्प्रत** न० सरमिव निर्यासं सम्प्रतनोति सम्+प्र+तन-ड ।
**सरसिज** न० सरसि जायते जन-ड अलुक् स० । पद्मे 'सरसिजमनुविद्धमि'ति शकुन्तला ।
**सरसीरुह** न० सरस्यां सरोवरे रोहति रुह-क । पद्मे ।
**सरस्वत्** पु० सरांसि जलानि सन्त्यस्य मतुप् मस्य वः । सरोवरे, सागरे च नद्याम्, नदीभेदे,वाण्यां गवि, ज्योतिष्मत्यां ब्राह्म्याम्, सत्यां, देवीभेदे, सोमलतायाञ्च स्त्री०ङीप् ।
**सरा** स्त्री० सृ-अच् । निर्झरे ।
**सराव** पु० सरं जलमवति अव-अण् । जलाधारे मृण्मये पात्रभेदे (शरा) । सह रावेण, सशब्दे त्रि० ।
**सरि** पुंस्त्री० सृ-इन् । स्त्रीत्वपक्षे वा ङीप् । निर्झरे ।
**सरिका** स्त्री० सरोऽस्त्यस्याः सृ-वुन् वा । हिङ्गुपत्रिकायाम् ।
**सरित्** स्त्री० सृ-इति । नद्याम्, सूत्रे च ।
**सरित्पति** पु० ६त० । समुद्रे । [भावात् न तस्य दः । समुद्रे
**सरित्वत्** पु० सरित् स्वामित्वेनास्त्यस्य मतुप् मस्य वः पदत्वा-
**सरित्सुत** पु० ६त० । गङ्गापुत्रे भीष्मे । [दयोऽप्यत्र ।
**सरितांपति** पु० ६त० अलुक् स० । समुद्रे सरितांनाथा-
**सरिद्वरा** स्त्री० सरित्सु वरा श्रेष्ठा । गङ्गायाम् ।
**सरिल** न० सृ-इलच् । जले ।
**सरीसृप** पु० वक्रं सर्पति सृप-यङ् तस्य लुक्, अच् । सर्पवृश्चिकादौ, ज्योतिषोक्ते वृश्चिकादिराशौ च ।
**सरु** पु० सृ-उन् । खड्गादिमुष्टौ ।
**सरूप** त्रि० समानं रूपमस्य समानस्य सः । तुल्यरूपे सदृशे
**सरोज** न०सरसि जायते जन-ड । पद्मे सरोजातमात्रे त्रि०
**सरोजन्मन्** न०सरसि जन्म यस्य । पद्मे । तडागजातमात्रे त्रि०
**सरोजिनी** स्त्री० सरोजानां समूहः तद्विशिष्टदेशो वा इनि । पद्मसमूहे तद्युक्तदेशरूपायां पद्मलतायाम्, पद्माधारदीर्घिकायाञ्च ।
**सरोरुह्**(ह) सरसि रोहति रुह-क्विप् क वा । पद्मे ।
**सरोवर** पु० सरोभिर्जलैर्व्रियतेऽसौ वृ-अप् । तडागे ।
**सर्ग** पु० सृज-घञ् । स्वभावे, सृष्टौ, निर्मोचे काव्यादेः परिच्छेदे 'सर्गोऽयमादिर्गत' इति नैषधम् । निश्चये,'यदि सर्ग एष ते इति रघुः । मोहे,उत्साहे,अनुमतौ च । [दभिधा
**सर्गबन्ध** पु०सर्गैर्बध्यतेऽसौ बन्ध-घञ् । महाकाव्ये । लक्षणं तद्
**सर्ज्ज** अर्ज्जने भ्वा०पर०सक०सेट् । सर्ज्जति असर्ज्जीत् षोपदेशत्वाभावान्न षत्वम् ।
**सर्ज्ज** पु० सृज-अच् । शालवृक्षे, तद्रसे, (धुना) पीतसाले च ।
**सर्ज्जक** पु० सृज-ण्वुल् । पीतसाले, शालवृक्षे च ।
**सर्ज्जगन्धा** स्त्री० सर्ज्जस्येव गन्धो यस्याः । रास्नायाम् ।
**सर्ज्जन** न० सृज-ल्युट् । सैन्यपश्चाद्भागे, सृष्टौ च ।
**सर्ज्जनिर्यासक** पु० सर्ज्जस्य निर्यास इव कायति कै-क । राले
**सर्ज्जमणि** पु०सर्जस्य शालवृक्षस्य मणिरिव । (धुना) सर्जरसे
**सर्ज्जरस** पु० ६त० । शालवृक्षरसे (धुना) ।
**सर्ज्जि**(र्ज्जी)स्त्री०सृज-इन् वा ङीप् । नदीभेदे,तत्कूलजे सर्जिका क्षारे (साजिमाटि) । [नदीभेदे च ।
**सर्ज्जिका** स्त्री० सृज-ण्वुल् टाप् अत इत्वम् । सर्जिकाक्षारे,
**सर्जिकाक्षार** स्त्री०सर्जिकायाः क्षारः । स्वनामख्याते क्षारभेदे, (साजिमाटि) ।
**सर्ज्जिक्षार** पु० ६त० । (साजिमाटि) सर्जिकाक्षारे ।
**सर्ज्य** पु०सर्ज्जस्येदं यत् । सर्जरसे । सर्ज्ज-ण्यत् । अर्जनीये त्रि०
**सर्प** पु० सृप-अच् । नागकेशरे, भुजङ्गमे च 'सर्पापसर्प भद्रम्' इति भारतम् तज्जातिस्त्रियां ङीप् । भावे घञ् । गमने ।
**सर्पकङ्काली** स्त्री० सर्पस्येव कङ्कालमङ्गविशेषो यस्याः गौ० ङीप् । सर्पविषघातिन्यां लतायाम् ।
**सर्पगन्धा** स्त्री० सर्पाणां विषस्य गन्धो गन्धनं हिंसनं यस्याः पृ०व० । विषहारिण्यां लतायाम् । [हरीलतायाम् ।
**सर्पघातिनी** स्त्री० सर्पं सर्पविषं हन्ति हन-णिनि । सर्पविष
**सर्पतृण** पु० सर्पस्तृणमिवानायासच्छेद्यो यस्य । नकुले ।
**सर्पदंष्ट्र** पु० सर्पस्य दंष्ट्रेव पुष्पमस्य । तावदन्तीवृक्षे । सर्पस्य दंष्ट्रेव स्पर्शनात् दुःखदत्वात् । वृश्चिकालीलतायां स्त्री० ।
**सर्पदंष्ट्रिका** स्त्री० सर्पदंष्ट्राकारोऽस्त्यस्याः ठन् । अजशृङ्ग्याम्
**सर्पदण्डी** स्त्री० सर्पं दण्डयति दण्ड-अण् । गोरक्षीवृक्षे ।
**सर्पदन्ती** स्त्री० सर्पस्य दन्त इव पुष्पाण्यस्याः गौ० ङीप् । नागदन्तीवृक्षे । [कर्कोट्याम् ।
**सर्पदमना** स्त्री० सर्पान् दमयति दम-णिच् ल्युट् । वन्ध्या-
**सर्पपुष्पी** स्त्री०सर्पस्य सर्पदन्त इव पुष्पाण्यस्याः ङीप् । नागदन्त्याम्

**सर्पभुज्** पु० सर्पं भुङ्क्ते भुज-क्विप् । मयूरे ।

**सर्पराज** पु० सर्पाणां राजा टच् समा० । वासुकौ नागभेदे

**सर्पलता** स्त्री० सर्पाख्या लता । ताम्बूलीलतायाम् ।

**सर्पसत्र** न० सर्पेण होम्यद्रव्येण तन्नाशनार्थं वा सत्रम् । जनमेजयानुष्ठिते महाभारतप्रसिद्धे सर्पनाशनार्थे यज्ञभेदे ।

**सर्पसहा** स्त्री० सर्पं सहते सह-अच् । सर्पकङ्कालीलतायाम् ।

**सर्पहन्** पु० सर्पं हन्ति हन-क्विप् । नकुले ।

**सर्पाक्षी** स्त्री०सर्पस्येवाक्षि यस्याः षच् समा० । गन्धनाकुल्याम् ।

**सर्पाख्य** पु० सर्पस्याख्या यस्य । नागकेशरे, महिषकन्दभेदे च

**सर्पाङ्गी** स्त्री०सर्पस्येवाङ्गं यस्याः ङीप् । सर्पकङ्कालीलतायाम्

**सर्पादनी** स्त्री० सर्पः सर्पविषमद्यतेऽनया अद-ल्युट् ङीप् । नाकुल्याम् ।

**सर्पाराति** पु० ६त० । गरुडे, नकुले च सर्पारिप्रभृतयोऽप्यत्र

**सर्पावास** न० सर्पाणामावासो यत्र । चन्दनवृक्षे । ६त० । सर्पवासे पु० ।

**सर्पाशन** पु० सर्पमश्नाति अश-ल्युट् । मयूरे, गरुडे च ।

**सर्पिस्** न० सृप-इसि । घृते । [गमनकारके त्रि० ।

**सर्पिणी** स्त्री० सृप-णिनि । सर्पयोषिति, क्षुपभेदे च ।

**सर्पीष्ट** न० सर्पीणां भुजगीनामिष्टम् । चन्दनवृक्षे ।

**सर्पेष्ट** न० सर्पाणामिष्टम् । चन्दने । [ताम्र पत्रम् ।

**सर्व** सर्पणे भ्वा०प०सक०सेट् । सर्वति असर्वीत् अयोपदेश-

**सर्व** पु०सर्व-अच् । शिवे, विष्णौ च । सम्पूर्णे, सकले च त्रि० । असंज्ञायामस्य सर्वनामता । [भोक्तरि त्रि०।

**सर्वंसहा** स्त्री० सर्वं सहते खच् मुम् च । पृथिव्याम् । सर्व-

**सर्वकर्तृ** पु० सर्वं करोति कृ-तृच् । चतुर्मुखे ब्रह्मणि, परमेश्वरे च । ['संग्रामे सर्वकर्मीणादि'ति भट्टिः ।

**सर्वकर्मीण** त्रि०सर्वकर्मभ्योऽलं ख । सर्वकारणसमर्थे पदार्थे

**सर्वक्षार** पु० सर्वः क्षारमयः (सावान) । ख्याते पदार्थे ।

**सर्वग** न०सर्वं गच्छति गम-ड । जले । शिवे,परमेश्वरे, वायौ, आत्मनि च पु०। सर्वगामिनि त्रि०। प्रियङ्गुवृक्षे स्त्री०टाप् ।

**सर्वगन्ध** न० सर्वे गन्धा अत्र । 'चातुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् लवङ्गसहितञ्चैव सर्वगन्धं प्रकीर्त्तितमि'त्युक्ते गन्धद्रव्यसमूहे ।

**सर्वग्रन्थि** पु० सर्वत्र ग्रन्थिरियात । पिप्पलीमूले । [त्रि०

**सर्वङ्कष** पु०सर्वं कषति कष-खच् मुम् च। पापे। सर्वातिरेकिणि

**सर्वजनीन** त्रि० सर्वजनेषु विदितः ख । सर्वत्र विख्याते ।

**सर्वज्ञ** पु० सर्वं जानाति ज्ञा-क । शिवे, बुद्धे, परमेश्वरे च । सर्वज्ञानकर्त्तरि त्रि० । दुर्गायां स्त्री० ।

**सर्वतस्** अव्य० सर्व+तसिल् । समन्तत इत्यर्थे ।

**सर्वतिक्ता** स्त्री०सर्वतः तिक्ता । काकमाच्याम् ।

**सर्वतोभद्र** पु०न० सर्वतो भद्राणि सुखानि यस्य । चतुर्द्वारयुक्ते गृहभेदे, प्रतिष्ठादौ पूज्यदेवतानां मण्डलभेदे ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे, अलङ्कारोक्ते बन्धभेदात्मके चित्रकाव्ये च । सर्वतोभद्रमस्य । निम्बवृक्षे पु० । गाम्भार्य्यां, नटयोषिति च स्त्री० ।

**सर्वतोभद्रचक्र** न० सर्वतो भद्रं यत्र तादृशं चक्रम् । ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे ।

**सर्वतोभद्रबन्ध** पु० सर्वतोभद्राकारेण बन्धः । चित्रकाव्यभेदे ।

**सर्वतोभद्रमण्डल** न० सर्वतो भद्रनामकं मण्डलम् । शारदातिलकाद्युक्ते प्रतिष्ठादौ—पूज्यदेवतामण्डलभेदे ।

**सर्वतोमुख** न० सर्वतोमुखमस्य । जले । आकाशे, शिवे,ब्रह्मणि, परमेश्वरे, आत्मनि, ब्राह्मणे अग्नौ च पु० ।

**सर्वत्र** अव्य० सर्व-त्रल् । सर्वस्मिन् काले, देशे, दिशि चेत्यर्थे ।

**सर्वत्रग** पु०सर्वत्र गच्छति गम-ड । वायौ । सर्वत्रगामिनि त्रि

**सर्वत्रगामिन्** पु० सर्वत्र गच्छति गम-णिनि । वायौ सर्वत्र गन्तरि त्रि० । [छायां, हेतौ च ।

**सर्वथा** अव्य० सर्वप्रकारम् थाल् । सर्वप्रकारे, भृशे, प्रति-

**सर्वदमन** पु० सर्वान् दमयति दम-णिच्-ल्यु । दुष्मन्तपुत्रे भरतनृपे । सर्वदमनकर्त्तरि त्रि० ।

**सर्वदर्शिन्** पु० सर्वं समभावेन पश्यति दृश-णिनि । बुद्धे, परमेश्वरे च । सकलद्रष्टरि त्रि० ।

**सर्वदा** अव्य० सर्वस्मिन् काले देशे दिशि वा दाच् । सर्वस्मिन् कालादावित्यर्थे । [हृष्यादौ ।

**सर्वधुरीण** त्रि० सर्वां धुरं वहति ख । सकलभारवाहके

**सर्वनामन्** पु० सर्वेषां नाम । व्याकरणोक्ते कार्यविशेषार्थं कृतसंज्ञावति सर्वादिशब्दभेदे ।

**सर्वभक्षा** स्त्री० भक्ष-अण् उप० । अजायाम् सर्वभक्षके त्रि० ।

**सर्वमङ्गला** स्त्री० सर्वाणि मङ्गलान्यस्याः ५ब० । दुर्गायाम् ।

**सर्वमय** त्रि० सर्वात्मकः मयट् । सर्वात्मके । परमेश्वरे पु० ।

**सर्वमूषक** पु० सर्वं मुष्णाति मुष-ऊकन् ष्ट० । काले ।

**सर्वरस** पु० सर्वोरसमयः । (धुना) शालरसे वीणादिवाद्ये, पण्डिते च । कर्म० । लवणे रसे ।

**सर्वरसोत्तम** पु० सर्वेषु रसेषु उत्तमः । लवणे रसे ।

**सर्वरात्र** पु०सर्वा रात्रिः अच् समा०। रात्राह्नाहाः पुंसीति पुंस्त्वम् । सकलरात्रौ ।

**सर्वरी** स्त्री० सृ वनिप् ङीप् र च । रात्रौ ।

**सर्व्वर्त्तुपरिवर्त्त** पु० सर्व्वर्त्तूनां परिवर्त्तो यत्र । वत्सरे ।
**सर्व्वला(ली)** स्त्री० सर्व्वं लाति ला क वा गौरा० ङीष् । तोमराख्ये
**सर्व्वलिङ्गिन्** पु० सर्व्वेषां लिङ्गानि सन्त्यस्य इनि । वेदविरु-
द्धाचारिणां बौद्धादीनां लिङ्गवत्सु पाषण्डेषु ।
**सर्व्वलोह** पु० सर्व्वः लोहमयोऽवयवो यस्य । लौहमये वाणे ।
**सर्व्ववर्णिका** स्त्री० सर्व्वं वर्णयति वर्ण-ण्वुल् अत इत्वम् ।
गाम्भारीवृक्षे ।
**सर्व्वविद्** पु० सर्व्वं वेत्ति विद-क्विप् । परमेश्वरे । सर्व्वज्ञातरि त्रि०
**सर्व्ववेद** पु० सर्व्वे वेदा अधीतत्वेन सन्त्यस्य अच् । सर्व्ववेदाध्य-
यनकर्त्तरि । विद-अण् उप० । सर्व्वज्ञे त्रि० ।
**सर्व्ववेदस्** पु० सर्व्वाणि धनानि वेदयते लम्भयते पात्राय ददाति
विद-लाभे णिच्-असि । सर्व्वस्वदक्षिणाकविश्वजिन्नामक
यागकर्त्तरि ।
**सर्व्ववेशिन्** पु० सर्व्वेषां वेशो भार्य्यत्वेनास्त्यस्य इनि । नटे ।
**सर्व्वसङ्गत** पु० सर्व्वं सङ्गतमुचितं यस्य । षष्टिधान्ये । सर्व्वलो-
चिते त्रि० । [सर्व्वसैन्यसज्जीकरणेन युद्धयात्रायाम् ।
**सर्व्वसन्नहन** न० सर्व्वेषां सन्नहनं युद्धार्थं सज्जीकरणं यत्र ।
**सर्व्वसह** पु० सर्व्वं सहते अच् । गुग्गुलौ । सर्व्वसहिष्णौ त्रि०
**सर्व्वसिद्धि** पु० सर्व्वेषां सिद्धिरस्मात् । श्रीफले । सकलसाधने त्रि०
**सर्व्वस्व** न० कर्म० । सकलधने ।
**सर्व्वस्वदक्षिण** पु० सर्व्वस्वं दक्षिणा यत्र । विश्वजिन्नामकयागभेदे
**सर्व्वहित** न० सर्व्वेषां हितम् । मरिचे पु० व० । सकलहितहेतौ त्रि०
**सर्व्वाङ्गीण** त्रि० सर्व्वाङ्गाणि व्याप्नोति ख । सर्व्वावयवव्यापके
'सर्व्वाङ्गीणे तरलत्वे' इति भट्टिः । [णत्वम् । दुर्गायाम्
**सर्व्वाणी** स्त्री० सर्व्वस्य आनयति जीवं आ-नी-ड पूर्व्वपदादिति
**सर्व्वानुकारिणी** स्त्री० सर्व्वमनुकरोति अनु+कृ-णिनि ।
शालपर्ण्याम् । [ज्ञानिनि त्रि०
**सर्व्वानुभूति** स्त्री० सर्व्वेषामनुभूतिर्यत्र । श्वेतत्रिवृतायाम् तत्त्व-
**सर्व्वान्नभोजिन्** त्रि० सर्व्वेषामन्नं सर्व्वाण्यन्नानि वा भुङ्क्ते
भुज-णिनि । सर्व्वान्नभक्षके । [भक्षके ।
**सर्व्वान्नीन** त्रि० सर्व्वेषामन्नं सर्व्वमन्नं वा भुङ्क्ते ख । सर्व्वान्न-
**सर्व्वाभिसन्धिन्** पु० सर्व्वत्र आचरणे अभिसन्धास्त्यस्य इनि ।
सर्व्वत्राभिसन्धिमति जने ।
**सर्व्वाभिसार** पु० अभिस्रियते अत्र अभि+सृ-घञ् इत० ।
चतुरङ्गसैन्यसन्नाहेन युद्धयात्राभेदे । [मति त्रि०
**सर्व्वार्थसिद्ध** पु० सर्व्वेषु अर्थेषु सिद्धः । बुद्धे सकलाभीष्टसिद्धि
**सर्व्वाह्ण** पु० सर्व्वमहः टच् समा० ह्नादेशः णत्वम् । सकलदिने
**सर्व्वौघ** पु० सर्व्वेषां चतुरङ्गसैन्यानामोघो इन्दमभिसारो यत्र ।
ओघीभूतसर्व्वसैन्याभिसारे कर्म० । सर्व्वजलवेगे ।
**सर्व्वौषधि** स्त्री० कर्म० । 'कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्द-
नैः । मुराचन्दनकर्पूरैर्मुस्तैः सर्व्वौषधिः स्मृत'इत्युक्ते कुष्ठा-
दिद्रव्यवर्गे ।
**सर्व्वौषधिगण** पु० सर्व्वासामोषधीनां गणः । 'मुरामांसी
वचाकुष्ठं शैलेयं रजनीद्वयम् । शठीचम्पकमुस्ताश्च सर्व्वौषधि
गणः स्मृतः' इत्युक्ते द्रव्यगणे । [तैलभेदे ।
**सर्षप** पु० सृ-अप षुक् च । (सरिषा) शस्यभेदे । [स्नेहरूपे
**सर्षपतैल** न० सर्षपस्य स्नेहः सर्षप+स्नेहार्थे-तैलच । सर्षप-
**सल** न० सल-अच् । जले ।
**सलिल** न० सल-इलच् । जले ।
**सलिलकुन्तल** पु० सलिलस्य कुन्तल इव । शैवाले ।
**सलिलराशि** पु० ६त० । समुद्रे सलिलनिष्पाद्योऽप्यत्र ॥
**सलिलेन्धन** पु० सलिलमिन्धनमिव दाह्यं यस्य । वाडवानले ।
**सल्लकी** स्त्री० सल'बुक् लुक्च ङ० गौरा० ङीष् । शल्लक्याम् ।
**सव** पु० सूयते सू-अप् । यज्ञे, सन्ताने च । अप् । सूर्य्ये, अर्कवृक्षे
**सवन** न० सु-ल्युट् । यज्ञाङ्गे स्नाने, सोमनिष्पादनव्यापारे,
सोमपाने, यज्ञे, सोमनिष्पीडने, प्रसवे च ।
**सवयस्** त्रि० समानं वयो यस्य समानस्य सः । वयस्ये 'सवयो
भिरन्वित' इति रघुः ।
**सवर्ण** पु० समानोवर्णो यस्य । तुल्यरूपे, एकजात्याश्रये यथा-
विप्रस्य विप्रजातिः क्षत्रियस्य क्षत्रियजातिः । 'तुल्यास्यप्रयत्नं
सवर्णम्' इति व्याकरणोक्ते स्थानप्रयत्नाभ्यां तुल्यवर्णे च
यथा ककारस्य स्थानेन तुल्यो गकारादिः, प्रयत्नसाम्येन
चकारस्य ककारादिः जकारस्य गकारः सकारस्य षकारः
हकारस्य वर्गीयचतुर्था वर्णाः । सह वर्णेन वर्णसहिते त्रि०
**सवहा** स्त्री० सह वहेन । त्रिवृतायाम् ।
**सवासस्** त्रि० सह वाससा । वस्त्रत्यागविलम्बस्याक्षमे वेगवति
**सविकल्पक** न० सह-विकल्पेन कप् । वेदान्तोक्ते ज्ञातृज्ञेय-
भेदादिकल्पनासहिते ध्यानभेदे, न्यायोक्ते एकस्मिन् धर्म्मि
ण्यपरसंसर्गावगाहिनि ज्ञानभेदे च ।
**सविकाश** त्रि० सह विकाशेन । प्रफुल्ले, विकशिते, प्रकाशे च
**सवितृ** पु० सू-तृच् । जगत्स्रष्टरि परमेश्वरे 'तत् सवितुर्वरेण्य'
मिति श्रुतिः सूर्य्ये च । [न स्त्रष्टा साक्षिणी'इति नैषधम्
**सविध** त्रि० सह विधयति विध-क सहस्य सः । निकटे 'सविधेऽपि
**सविस्मय** त्रि० सह विस्मयेन । विस्मयापन्ने ।
**सवेश** त्रि० विशत्यत्र वेशोदेशः सह वेशेन । निकटे, वेशान्विते च
**सव्य** त्रि० षू+प्रेरणे यत् । वामे दक्षिणे, प्रतिकूले च विष्णौ पु० ।

**सव्यसाचिन्** पु॰ सव्येन वामेन सचति सच-णिनि । अर्ज्जुने सारथौ ।
**सव्येष्ठ** पु॰ सव्ये तिष्ठति स्था-क अलुक् स॰अम्बष्ठादि॰षत्वम् । [सारथौ ।
**सव्येष्ठृ** पु॰ सव्ये तिष्ठति स्था तृन् किच्च अलुक्स॰ षत्वम् ।
**ससत्वा** स्त्री॰ सह सत्वेन । नागदन्त्याम् । सत्वयुते त्रि॰ ।
**ससत्वा** स्त्री॰ सह सत्वेन । गर्भवत्यां स्त्रियाम्, प्राणियुक्ते त्रि॰
'न ससत्वेषु गर्त्तेष्वि'ति मनुः ।
**ससन** न॰ सस-हिंसने ल्युट् । यज्ञार्थं पशुहनने ।
**सस्य** न॰ सस-यत् । वृक्षादीनां फले, क्षेत्रगते धान्ये च ।
**सस्यसंवर** पु॰ सस्यं संवृणोति सम्+वृ-अच् । शालवृक्षे ।
**सस्यसंवरण** पु॰ सस्यं संवृणोति सम्+वृ-ल्यु । अश्वकर्णवृक्षे
**सह** अव्य॰ सह-अच् । साहित्ये, साकल्ये, सादृश्ये, यौगपद्ये, विद्यमानत्वे, समृद्धौ, सम्बन्धे, सामर्थ्ये च ।
**सह** पु॰सहते सह-अच् । अग्रहायणमासे भारादिसहिष्णौ त्रि॰
**सहकार** पु॰ सह युगपत् किरति सौरभम् दूरादौ कॄ-अण् । अतिदूरगामिसौरभान्विते आम्रे । भावे धञ् सहकरणे पु॰
**सहकारिन्** त्रि॰ सह सम्भूय करोति कार्य्यं कृ-णिनि । हेतुभेदे स्वभिन्ने स्वकार्य्यकारके हेतौ ।
**सहगमन** न॰ सह+गम-ल्युट् । सहमरणे, सह गमने च ।
**सहचर** पु॰ सह चरति चर-अच् । पीतझिण्ट्यां नीलझिण्ट्याञ्च । वयस्ये, प्रतिबन्धके, सहाये, अनुचरे च त्रि॰ 'सहचरमधुहस्तेति' कुमारः स्त्रियां ङीप् ।
**सहचरी** स्त्री॰ सह चरति चर ट । पीतझिण्ट्यां सहचरति धर्मम् चर-ट । धर्मपत्न्याम् ।
**सहज** पु॰सह जायते जन-ड । सहोदरे, निसर्गे च स्वभावसिद्धे 'सजजमाक्ततारवी'ति माघः सहोत्थितेच त्रि॰ज्योतिषोक्ते जन्मलग्नात् तृतीयस्थाने न॰ । [नेयादौ
**सहजमित** न॰ सहजं स्वभावसिद्धम् प्राकृतं मित्रम् । भागि
**सहजारि** पु॰ सहजः स्वभावसिद्धः अरिः । सापत्नभ्रातृपितृव्यपुत्रादौ ।
**सहदेव** पु॰ सह दीव्यति दिव-अच् । माद्रीसुते पाण्डवभेदे । बलायाम् दण्डोत्पले, शारिरोषधौ च स्त्री॰ गौ॰ ङीप् । सर्पाक्ष्याम् पीतदण्डोत्पलायाञ्च स्त्री॰टाप् ।
**सहधर्म्मिणी** स्त्री॰सह समानो धर्मोऽस्त्यस्या इनि । पत्न्याम्
**सहन** न॰ सह-ल्युट् । क्षमायां, तितिक्षायां, शीतोष्णादिद्वन्द्वधर्मसहने । सह-युच् । सहिष्णौ, क्षमाशीले पु॰ त्रि॰ ।
**सहपान** न॰ सह पानम् । एकत्र मद्यादिपाने ।
**सहभाविन्** त्रि॰ सह भवति भू-णिनि । सहाये ।
**सहभोजन** न॰ सह एकत्र भोजनम् । एकत्रस्थानाशनादौ ।
**सहमरण** न॰ सह मृतेन पत्या सह एकचितारोहणेन मरणम् । मृतपतिचितारोहणेन तत्सहितमरणे ।
**सहरसा** स्त्री॰ सह रसेन । मुद्गपर्ण्याम् । रसान्विते त्रि॰ ।
**सहस्** न॰सह-असि । बले, ज्योतिषि च मार्गशीर्षे मासे पु॰। 'सहसा सहसा ततवेपथुरिति' माघः ।
**सहसा** अव्य॰ सह+सो-डा । हठादित्यर्थे, अकस्मादित्यर्थे च।
**सहस्य** पु॰ सहसे बलाय हितः यत् । पौषमासे ।
**सहस्र** न॰ समानं हसति हस र । दशशतसङ्ख्यायां, बहुसङ्ख्यायां, तत्सङ्ख्यान्विते च । [णादयोप्यत्र ।
**सहस्रकर** पु॰सहस्रं कराः किरणाअस्य । सूर्य्ये सहस्रकिर-
**सहस्रकाण्डा** स्त्री॰ सहस्रं काण्डा यस्याः । श्वेतदूर्वायाम्
**सहस्रदंष्ट्र** पु॰ सहस्रं बहुसङ्ख्या दंष्ट्रा अस्य । पाठीनमत्स्ये (बोयाल) ।
**सहस्रदंष्ट्रिन्** पु॰ सहस्रं दंष्ट्राः सन्त्यस्य इनि । पाठीनमत्स्ये
**सहस्रधारा** स्त्री॰ सहस्रगुणिता धारा । देवतास्नानार्थबहुच्छिद्रयन्त्रनिःसृतबहुजलादिधारायाम् ।
**सहस्रनयन** पु॰सहस्रं नयनान्यस्य । इन्द्रे । सहस्रनेत्रादयोप्यत्र
**सहस्रपत्र** न॰ सहस्रं बहुसङ्ख्यकानि पत्राणि यस्य । पद्मे सहस्रपर्णादयोप्यत्र ।
**सहस्रपाद्** पु॰ सहस्रं बहवः पादा अस्य पाद्भावः । विष्णौ, परमेश्वरे च । 'सहस्राक्षः सहस्रपादि'ति पुरुषसूक्तम् ।
**सहस्रपाद** पु॰ सहस्रं पादाः किरणाश्चरणा वा सन्त्यस्य अच् । विष्णौ, सूर्य्ये अर्कवृक्षे च । [र्य्याज्र्जुने च
**सहस्रभुज** पु॰ सहस्रं बहवो भुजा अस्य । विष्णौ, कार्त्तवी-
**सहस्रमूर्द्धन्** पु॰सहस्रं बहवो मूर्द्धानोऽस्य । विष्णौ, सहस्रशीर्षादयोप्यत्र । [र्जुने, विष्णौ च
**सहस्रबाहु** पु॰ सहस्रं बाहवोऽस्य । वाणासुरे, कार्त्तवीर्य्या-
**सहस्रवीर्य्या** स्त्री॰सहस्रं बहूनि वीर्य्याण्यस्याः । दूर्व्वायाम्, महाशतावर्य्याञ्च ।
**सहस्रवेध** न॰ सहस्रं बहवो वेधा अस्य । चुक्रे ।
**सहस्रवेधिन्** न॰ सहस्रं विध्यति विध-णिनि । हिङ्गौ । अम्लवेतसे, कस्तूर्य्याञ्च पु॰ । सहस्रवेधकर्त्तरि त्रि॰ ।
**सहस्रशिखर** पु॰ सहस्रं बहूनि शिखराण्यस्य । विन्ध्यपर्वते
**सहस्रा** स्त्री॰सहस्रं बलानि सन्त्यस्याः अच् । अम्बष्ठायाम् ।
**सहस्रांशु** पु॰सहस्रमंशवो यस्य । सूर्य्ये,अर्कवृक्षे च । [ईश्वरे च
**सहस्राक्ष** पु॰सहस्रमक्षीणि यस्य षच् समा॰ । इन्द्रे, विष्णौ,
**सहस्रार** न॰सहस्रमाराः कोणा अस्य । शिरःस्थिते सुषुम्ना

नाडीमध्यस्थे सहस्रदलकमले । [न्यपादौ पाठीने च ।
**सहस्रिन्** पु० सहस्रं सैन्यानि सन्त्यस्य इनि । सहस्रसैन्ययुक्ते
**सहा** स्त्री०सहते सह-अच् । सहपर्ण्यां, घृतकुमार्य्यां, दण्डोत्पलायां, पृथिव्यां, गुक्षभिण्ट्याम्, रास्नायां, स्वर्णजीर्य्यां, सर्पकङ्काल्यां, नारीपुष्पे च ।
**सहाचर** पु० सह आचरति आ+चर-अच् । पीतभिण्ट्याम् ।
**सहाय** पु०सह एति इण-अच् । सहचरे, अनुकूले,'असावनुक्तोऽपि सहाय एवेति' कुमारः । [सहायसमुदाये च ।
**सहायता** स्त्री०सहायानां समूहः तभावो वा तल् । साहाय्ये
**सहार** पु० सह एकदैव ऋच्छति दूरं गच्छति सौरभेण ऋ-अच् । आम्रे । हारोहरणं सह हारेण । महाप्रलये ।
**सहारोग्य** त्रि० सह आरोग्येण । रोगशून्ये ।
**सहासन** न० सह आसतेऽत्र आस-ल्युट् । एकासने ।
**सहित** त्रि० सम्यक् हितः पृ० समोऽन्त्यलोपः । सम्यग्हिते सह-क्त वा इट्, सह-इतच् वा । समभिव्याहृते ।
**सहिष्ट** त्रि०सह-तृच् वा इट् । सहनशीले । इडभावे । सोढा।त्र स्त्रियां ङीप् ।
**सहित्र** न० सह्यतेऽनेन सह-इत्र । सहनसाधने धर्म्मभेदे ।
**सहिष्णु** त्रि० सह-इष्णुच् । सहनशीले । [विरुद्धधर्म्मद्वयसह
**सहिष्णुता** स्त्री० सहिष्णोर्भावः तल् । क्षमायाम् शीतोष्णादिने
**सहृदय** त्रि०सह-हृदयेन । प्रशस्तचित्ते, काव्यार्थभावनाधीनपरिपक्वबुद्धौ 'सहृदयधुरीणाः कतिपये'इति रसगङ्गाधरः
**सहृल्लेख** पु० हृदयस्य लेखः कालुष्यकरणं हृद्भावः सह हृल्लेखेन ।'विचिकित्सा तु हृदये यस्मिन् प्रजायते । सहृल्लेखन्तु विज्ञेयमि'त्युक्ते दूषितान्ने ।
**सहोक्ति** स्त्री०सह उक्तिः । सहकथने, एकोक्तौ, सह शब्दस्योक्तिर्यत्र । अर्थालङ्कारभेदे । [पर्णशालायाम् ।
**सहोटज** पु०न०।सहते आतपाद्यत्र सह-अच् कर्म०। मुनीनां
**सहोढ** पु० सह ऊढा येन । 'या गर्भिणी संस्क्रियते ज्ञाता ज्ञातापि वा सती । वोढुः स गर्भो भवति सहोढ इति चोच्यते' इति मनूक्ते अज्ञातगर्भायां परिणीतायां स्त्रियां जाते पुत्रभेदे,सहोढः सन् जायते जन-ड । सहोढजोऽप्युक्तार्थे । [भगिन्यां स्त्री०
**सहोदर** न० सह समानमुदरं यस्य । एकगर्भजाते भ्रातरि ।
**सह्य** न०सहायस्य भावः यत् नि० । साहाय्ये, 'तत्रार्थे सह्यमकरोदिति' पुराणम् सह भावे यत् । आरोग्ये, साम्ये माधुर्य्ये च । कर्म्मणि यत् । सोढव्ये त्रि०पुनाख्यदेशसमीपस्थे पर्व्वतभेदे पु० ।

**सा** स्त्री०सो-ड । गौर्य्यां, लक्ष्म्यां च ।
**सांख्य** न० संख्यायतेऽत्र संख्या सम्यग्ज्ञानं शास्त्रत्र अण् । सम्यग्दर्शने 'एषा तेऽभिहिता सांख्ये इति गीता संख्यां मूलप्रकृत्यादिपदार्थानां गणनमत्र प्रज्ञाद्यण् ।कपिलप्रणीते दर्शनशास्त्रे, परसवर्णे साङ्ख्यमप्युभयत्र साङ्ख्योक्तयोगे पु०।
**सांघातिक** त्रि० संघाताय हितम् ठञ् । सङ्घातकारके । ज्योतिषोक्ते जन्मनक्षत्रावधिषोडशनक्षत्रे च 'देहद्रविणवस्तूनां नाशः सांघातिके तये'ति ज्योतिषम् परसवर्णे साङ्घातिकमपि उभयत्र ।
**सांदृष्टिक** न० संदृष्टं प्रत्यक्षदृष्टमनुसरति ठञ् । दृष्टानुसारिन्यायभेदे, संदृष्टौ दृष्टमात्रः फलति ठञ् । सद्यःफले । परसवर्णे सान्दृष्टिकमप्युभयत्र । [कारके ।
**सांयात्रिक** पु०सम्यक् यात्रायै अलम् ठञ्। पोतेन वाणिज्य
**सांयुगीन** त्रि० संयुगे युद्धे साधुः ख । रणकुशले ।
**सांराविण** न० सम्+रु-भावे णिनि ततः स्वार्थेऽण् । व्याप्ते हट्टादिकोलाहले । [अण् । ज्योतिर्वेत्तरि, गणके ।
**सांवत्सर** पु०संवत्सरं तज्ज्ञानोपयोगिशास्त्रं वेत्ति अधीते वा
**सांवत्सरिक** त्रि०संवत्सरे भवः ठञ् । प्रतिवर्षकर्त्तव्ये श्राद्धे
**सांवादिक** पु० सम्यग्वादायालं ठञ् । नैयायिके ।
**सांशयिक** त्रि० संशयमापन्नः ठञ् । सन्दिहाने, संशययुक्ते, संशयविषये च । [भवे,संसारोपयोगिनि वा पदार्थे
**सांसारिक** त्रि०संसाराय हितम् तत्र भवो वा ठञ् । संसार-
**सांसिद्धिक** त्रि० संसिद्धिः स्वभावसिद्धिः तया निर्वृत्तं ठञ् । स्वभावसिद्धे । 'सांसिद्धिकमुदाहृतमि'ति भाषापरिच्छेदः ।
**साकम्** अव्य० सह अकति अक-अम् सादेशः । साहित्ये ।
**साकल्य** न० सकलस्य भावः ष्यञ् । समुदाये । स्वार्थे ष्यञ् । सकले, होमार्थं मिश्रितेषु तिलादिद्रव्येषु च ।
**साकाङ्क्ष** त्रि०सहाकाङ्क्षया । साभिलाषे, शाब्दबोधोपयोग्याःकाङ्क्षायुक्ते पदभेदे च ।
**साकार** त्रि०सह आकारेण मूर्त्या । मूर्त्तिविशिष्टे, सावयवे च
**साकुरुण्ड** पु० सकुरुण्ड एव स्वार्थेऽण् । सकुरुण्डवृक्षे ।
**साकेत** न० आकित्यते आकेतः सहाकेतेन । अयोध्यापुरे 'जनस्य साकेतनिवासिन' इति रघुः ।
**साक्तुक** पु०सक्तवे हितः ठक् । यवे । सक्तूनां समाहारः तस्येदम् वा ठक् । सक्तुसमूहे न० । तत्सम्बन्धिनि त्रि० ।
**साक्षात्** अव्य० सह अक्षति अक्ष-आति सादेशः, सह अक्षमतति अत-क्विप् वा । प्रत्यक्षे तद्विषये च 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति श्रुतिः ।

**साक्षात्कार** पु० साक्षात्+कृ-घञ् । प्रत्यक्षे ।

**साक्षिन्** त्रि० सह-अक्षि अस्य इनि साक्षात्द्रष्टा इनि वा नि० । साक्षाद्द्रष्टरि । स्त्रियां ङीप् । परमेश्वरे पु० 'साक्षी चेताः केवलोनिर्गुणश्चे'ति श्रुतिः । अयमेव साक्षिचैतन्यत्वेन वेदान्तपरिभाषादौ स्वीकृतः ।

**साक्ष्य** न० साक्षिणो भावः कर्म वा ष्यञ् । साक्षिकर्म्मणि, व्यवहारविषयवृत्तवृत्तान्तकथनरूपे तद्भावे च । 'यः साक्ष्यमनृतं वदेदि'ति स्मृतिः । [च ।

**सागर** पु०सगरैण निर्वृत्तः अण् । समुद्रे, मृगभेदे, सङ्ख्याभेदे

**सागरगामिनी** स्त्री०सागरं गच्छति गम+णिनि न णत्वम् । नद्यां, सूक्ष्मैलायाञ्च । [पृथिव्याम्

**सागरनेमि** स्त्री० सागरः नेमिरिव वेष्टनाकारो यस्याः ।

**सागरमेखला** स्त्री० सागरो मेखलेव यस्याः । पृथिव्याम्

**सागरालय** पु०सागर आलयो यस्य । वरुणे ।

**सागरोत्थ** न० सागराद् उत्तिष्ठति उद्+स्था क । सामुद्रलवणे

**साग्निक** पु०सहाग्निना अग्निहोत्रेण वा कप् । श्रौतस्मार्त्ताग्नियुक्ते, अग्निहोत्रिणि द्विजे च ।

**साङ्कर्य्य** न०सङ्करस्य भावः ष्यञ् । परस्पराभावसमानाधिकरणवृत्तित्वरूपे न्यायोक्ते जातिबाधके दोषभेदे, पूर्वोक्तसङ्करस्य धर्मे च

**साङ्ग** त्रि० सहाङ्गेन । अङ्गयुक्ते 'साङ्गं तत् क्रियते पुन'रिति स्मृ०

**साङ्केतिक** त्रि० सङ्केतेन निर्वृत्तः ठञ् । सङ्केते ।

**साङ्ग्रामिक** त्रि० संग्रामाय प्रभवति ठञ् । सेनापतौ, युद्धोपयोगिरथादौ च ।

**साचि** अव्य०सच-इण् । वक्रे, तिर्य्यगर्थे च । [मर्षवायाम् ।

**साचिवाटिका** स्त्री० साचि यथा तथा वटति ण्वुल् । श्वेतपु-

**साचीकृत** त्रि० असाचि साचि क्रियते स्म च्वि-नि० दीर्घः । वक्रीकृते 'साचीकृता चारुतरेण तस्थावि'ति कुमारः ।

**साट** प्रकाशने अद०चु०उ०स०सेट् । साटयति ते असमाटत् त

**साटोप** त्रि० सहाटोपेन । सगर्व्वे, विकटे च ।

**सात** सुखे अ०चु०उभ०अक०सेट् । सातयति ते असमातत् त

**सात** न० सात-अच् । सुखे । सन-क्त । दत्ते, नष्टे च ।

**सातला** स्त्री० सातं सुखं लाति ला-क । चर्मकषायाम् ।

**साति** स्त्री० सन-क्तिन् । अवसाने । दाने, तीव्रपीडायाञ्च ।

**सातीनक** पु० सतीनएव स्वार्थे अण् । सतीनकवृक्षे (मुद्गमटर

**सात्यकि** पु०सत्यकस्य वृष्णिवंश्यनृपस्यापत्यम् इञ् । शिनेर्नप्तरि सनागख्याते वृष्णिवंश्ये क्षत्रियभेदे । [विकृतदेशभेदे

**सात्वत्** पु० सत्त्वमेव सात्त्वमतति अत-क्विप् शक० । यादवा-

**सात्वत** पु० सत्त्वमेव सात्त्वमस्त्यस्य त सत्त्वगुणोपाधिके विष्णौ । सात्वतो देवता राजा अण् । विष्णौ, सात्वदेशाधिपे नृपे बहुषु तस्य लुक् 'भगवान् सात्वतां पति'रिति पुराणम् । 'सत्त्वं सत्त्वाश्रयं सत्त्वगुणं सेवेत केशवम् । योऽनन्यत्वेन मनसा सात्वतः समुदाहृत' इत्युक्ते वैष्णवे यदुवंश्ये अंशुपुत्रे नृपभेदे च । यदुवंश्योत्पन्नत्वेन शिशुपालमातरि स्त्री० ङीप् । सा च नाटकस्य वृत्तिभेदे च ।

**सात्विक** पु० सत्त्वात् सत्त्वगुणप्रधानात् विष्णोर्भवति ठञ् । चतुर्मुखे ब्रह्मणि तस्य विष्णुनाभिकमलजत्वात् तथात्वम् । सत्त्वमेव सात्त्वमस्त्यस्य ठन् । विष्णौ । सत्त्वगुणेन तत्कार्य्येण मनसा वा निर्वृत्तः ठञ् । सत्त्वगुणजाते, सत्त्वप्रधानमनोविशेषजाते च शृङ्गारादिरसानुगुणे भावभेदे च । सत्त्वप्रधाने जने त्रि० । 'आहाराः सात्त्विकप्रिया' इति गीता । दुर्गायां स्त्री० ङीप् ।

**सादनी** स्त्री० साद्यन्ते रोगा अनया सद-णिच् ल्युट् । कटुक्याम्

**सादि** पु० सद-इण् । सारथौ, योद्धरि च । अवसन्ने त्रि०

**सादिन्** पु० सद-णिनि । अश्वारोहणकर्त्तरि, गजारोहिणि, रथारोहिणि च । अवसन्ने त्रि० ।

**सादृश्य** न० सदृशस्य भावः ष्यञ् । तद्भिन्नत्वे सति तद्गतभूयोधर्मरूपे समानधर्मे, येन सह यस्य सादृश्यं प्रसिद्धं तत् तत्तद्भिधाने वक्ष्यते ।

**साधक** त्रि० साध-ण्वुल्, सिध-णिच्-ण्वुल् साधादेशः वा । साधनकर्त्तरि, तन्त्रोक्ते मन्त्रादिसिद्धिकारके शिष्ये च । 'साधकः सिद्धिमाप्नुयादि'ति तन्त्रम् ।

**साधन** न०साध्यतेऽनेन सिध-णिच्-ल्युट् साधादेशः । करणे, क्रियोत्पादके हेतुभेदे 'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृत'मित्युक्ते क्रियासाधकव्यापारवति करणे, सैन्ये, युद्धोपकरणे पुंचिह्ने, कारकभेदे, प्रमाणे, अनुमापके हेतौ च । भावे ल्युट् । मारणे, मृतसंस्कारे, अग्निदाने, गतौ, निष्पादने, अनुगमने, सिद्धौ च । कर्मणि ल्युट् । द्रव्ये, धने, मैत्रे च ।

**साधर्म्य** न० सधर्मस्य समानधर्मस्य भावः ष्यञ् । स्वकीयासाधारणधर्मरूपे लक्षणे 'यद्गतं यस्य साधर्म्यमि'ति भाषापरिच्छेदः । समानो धर्मोयस्य तस्य भावः ष्यञ् । समान धर्मे यथा पद्ममिव सुन्दरं मुखमित्यादौ सौन्दर्य्यम् ।

**साधारण** त्रि० सह धारणया स्वार्थेऽण् । तुल्ये, अनेक स्वावत्त्येकस्मिन् धने 'साधारणं समाश्रित्य यत् किञ्चिद्वाहनादिकमिति'स्मृतिः । स्त्रियां गौरा० ङीप् । सा च कुञ्चिकायां, वेश्यादिनायिकायाञ्च । न्यायोक्ते 'यः सपक्षे विपक्षे च

-भवेत् साधारणस्तु स' इत्युक्ते हेत्वाभासभेदे पु०। यथा वह्निमान् द्रव्यत्वादित्यादौ द्रव्यत्वहेतुः सपक्षे पर्व्वते,विपक्षे ह्रदादौ च स्थित इति साधारणः।

**साधारणधर्म्म** पु०कर्म०। 'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः। दमः क्षमार्ज्जवं दानं धर्म्मं साधारणं विदुरित्युक्ते' अहिंसादौ सर्व्ववर्णाश्रमतुल्ये धर्म्मे। न्यायाद्युक्ते संशयहेतौ समानधर्म्मे च रङ्गं रजतं नवेति संशये रङ्गरजतयोः सामान्यधर्म्मेश्चाकचिक्यशुभ्रत्वादिः।

**साधित** त्रि०सिध-णिच्-क्त। दापिते,प्रमाणादिनाऽवधारिते च 'साधितात् दशकं शत'मिति स्मृतिः निष्पादिते' शोधिते च

**साधिदैव** त्रि० सह अधिदैवेन सार्थेऽव्य० द्विपदबहु०। अधिदैवसहिते साधिभूतसाधियज्ञावपि परमेश्वरे।

**साधिष्ठ** त्रि०अतिशयेन साधुः बाढो वा इष्ठन् साधादेशः टिलोपो वा। अत्यन्तदृढे, अतिसाधौ, अतिशोभने च।

**साधिष्ठान** त्रि० सह अधिष्ठानेन। सन्निहिते तन्त्रोक्ते षट्चक्रमध्ये सुषुम्नामध्यस्थे चक्रभेदे न०।

**साधीयस्** त्रि० अतिशयेन साधुः बाढो वा साधादेशः टिलोपो वा। अत्यन्तदृढे,न्याय्ये, साधुतरे च। स्त्रियां ङीप्।

**साधु** त्रि० साध-उन्। उत्तमकुलजाते,सुन्दरे,मनोहरे, उचिते च। स्त्रियां वा ङीप्। मुनौ,जिने च 'न प्रहृष्यति सम्माने नावमाने न कुप्यति। न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षण'मित्याद्युक्तधर्म्मवति जने वार्द्धुषिके च पु०।

**साधुपुष्प** न० साधु पुष्पं यस्य। स्थलपद्मे।कर्म्म०। उत्तमकुसुमे

**साधुवाह** पु० कर्म०। विनीते सुशिक्षिते घोटके।

**साधुवादिन्** पु० साधु यथा तथा वदति णिनि। विनीतेऽश्वे सुन्दरवचनकर्त्तरि त्रि०।

**साधुवृक्ष** पु०कर्म०। कदम्बवृक्षे, वटवृक्षे, शोभनवृक्षमात्रे च

**साध्य** पु० सिध-णिच्-यत्। 'मनोमन्ता तथा प्राणो नरोऽपानश्च वीर्य्यवान्। निर्भयोनरकश्चैव दंशो नारायणो वृषः प्रभुश्चेति समाख्याताः साध्या द्वादश देवता'इत्युक्ते द्वादशसंख्यके गणदेवताभेदे, विष्कम्भादिषु योगेषु एकविंशे योगे च। साधनीये त्रि०। अष्टादशविवादेषु प्रमाणादिना उद्भाव्ये पदार्थे। 'प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्। निश्चितं लोकसिद्धञ्च पक्षं पक्षविदोविदुरित्युक्ते व्यवहारे साधनार्हे प्रतिज्ञेये पक्षे पु०।अनुमित्या साधनीये वह्न्यादौ च यथा वह्निमान् धूमादित्यादौ सिषाधयिषितः वह्निः साध्यः।साध्यमस्यास्ति अर्श आद्यच्। साध्यवति पक्षे पु० 'साध्यनिर्द्देशः प्रतिज्ञे'ति न्यायसूत्रम् साध्यवत्तया पक्षनिर्द्देश इति दीधितिकारः संख्यायें, तन्त्रोक्ते मन्त्रमाले,मायामन्त्रस्य स्वानुकूलताग्राहकचक्रस्थे द्वितीयपञ्चमादिके 'सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया मनीषिभि'रित्युक्ते मन्त्रभेदे च विस्तरो बृहदभिधाने।

**साध्यता** स्त्री० साध्यस्यानुमितिविधेयस्य भावः तल्। अनुमितिविधेयतारूपे न्यायोक्ते विषयताभेदे।

**साध्यतावच्छेदक** पु० साध्यतामवच्छिनत्ति विशेषयति अव+छिद-ण्वुल्। येन रूपेण यस्य साध्यतारूपा विषयता वर्त्तिनि धर्मे। यथा वह्निमान् धूमादित्यत्र वह्निः साध्यः तस्य साध्यतां वह्नित्वमवच्छिनत्तीति वह्नित्वं साध्यतावच्छेदकम्।

**साध्यसिद्धि** स्त्री० साध्यस्य सिद्धिः विनिर्णयः सिध-क्तिन्। साध्यस्य वह्न्यादेः अनुमित्यादिना साधनाधीने निर्णये, निष्पत्तौ, साध्यस्य प्रतिज्ञेयार्थस्य सिद्धिर्निर्णयो यत्र। व्यवहारे प्रतिज्ञातार्थस्य प्राड्विवाकादिभिः विनिर्णयरूपे व्यवहारपादे च।

**साध्वस** न० साधु+असति अस-अच्। भये।

**साध्वी** स्त्री० साधु-ङीप्। मेदायां, 'आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा। मृते म्रियते या पत्यौ साध्वी ज्ञेया पतिव्रते'त्युक्तलक्षणायां स्त्रियाञ्च।

**सानन्द** त्रि०सह आनन्देन। आनन्दसहिते 'सानन्दं नन्दिहस्ते'ति मालतीमाधवम्।

**सानु** पु०न० सन-ञुण्। पर्व्वतस्य समभूमिदेशे प्रस्थे, वने, वातसमूहे, पथि, अग्रे, कोविदे, अर्के, पल्लवे च।

**सानुज** न० सानौ जायते जन-ड। प्रपौण्डरीके। तुम्बुरुवृक्षे पु०। सहानुजेन अनुजसहिते त्रि०।

**सानुमत्** पु० सानुरस्त्यस्य मतुप्। पर्व्वते।

**सान्तपन** न० सन्तापयति सम्+तप०णिच् ल्युट् स्वार्थेऽण्। 'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सान्तपनं विदु'रित्युक्ते षडहसाध्ये व्रतभेदे।

**सान्तर** न०सह अन्तरेण सादेशः। विरले व्यवधानसहिते च

**सान्तानिक** त्रि० सन्तानः प्रयोजनमस्य ठक्। सन्तानसाधने विधानभेदे। [अवसान्त्वत् सान्त्वापयतीत्यन्ये।

**सान्त्व** आनुकूल्यकरणे चाद०पु०उभ०सक०सेट्। सान्त्वयति ते

**सान्त्व** न० सान्त्व-घञ्। अत्यर्थमधुरे,आनुकूल्ये, कोमलसम्प्रीतिदवाक्ये,प्रियवाक्यादिना क्रोधोपशमनरूपे,सान्त्वने च

**सान्त्वन** न० सान्त्व-ल्युट्। आनुकूल्यकरणे प्रियवादादिना क्रोधाद्युपशमने च। युच्। अत्रैव स्त्री०।

**सान्दीपनि** पु० सन्दीपनस्यापत्यम् इञ् । रामकृष्णयोराचार्ये अवन्तिपुरवासिनि मुनिभेदे । [मनोज्ञे च वने न० ।
**सान्द्र** त्रि० अदि-रक् सह अन्द्रेण । निबिडे, मृदौ, स्निग्धे,
**सान्द्रपुष्प** पु० सान्द्रं पुष्पमस्य । बिभीतकवृक्षे ।
**सान्द्रस्निग्ध** त्रि० सान्द्रं स्निग्धः [अतिहृद्ये अतिमनोहरे च
**सान्धिक** पु० सन्धा सुराद्यावनं शिल्पं वेत्ति ठक् । शौण्डिके सन्धिः प्रयोजनमस्य ठण् । सन्धिकर्त्तरि त्रि० ।
**सान्ध्य** त्रि० सन्ध्यायां भवः अण् । सन्ध्याकालिके ।
**सान्नाय्य** न० सन्नीयते सम्+नी-ण्यत् नि० । मन्त्रादिना संस्कार्ये घृतादौ । [ति' दुर्गावाहनमन्त्रः ।
**सान्निध्य** न० सन्निधिरेव ष्यञ् । नैकट्ये, 'सान्निध्यमिह कल्पये
**सान्निपातिक** त्रि० सन्निपातात त्रिदोषविकारात् आगतः तेन निर्वृत्तो वा ठक् । सन्निपाताज्जाते रोगे 'विकारे सन्निपातिके' इति कुमारः ।
**सान्न्यासिक** पु० सन्न्यासः प्रयोजनमस्य ठक् । सन्न्यासिनि ।
**सापत्न** पु० सपत्न एव स्वार्थे ष्यञ् । शत्रौ, सपत्न्यां भवः तस्या अपत्यं वा यञ् । सपत्नीपुत्रे । अण् । सापत्न्योऽप्युभयत्र
**सापिण्ड्य** न० सपिण्डस्य भावः ष्यञ् । दायाशौचग्रहणाद्युपयोगिनि ज्ञातिधर्मे सापिण्ड्यं साप्तपौरुषमि'ति स्मृतिः [ञ्चार्हे
**साप्तपदीन** न०सप्तभिः पदैः उच्चारितैर्निर्वृत्तम् खञ् । सख्ये सौ-
**साप्तपौरुष** त्रि०सप्त पुरुषान् व्याप्नोति अण् । सप्तपुरुषव्यापके
**साफल्य** न०सफलस्य भावः ष्यञ् । सार्थक्ये, सम्पूर्णतायाञ्च ।
**साम** सान्त्वने अद०चु०उ०स०सेट् । सामयति ते असासामत् त
**सामग** पु० साम तद्वेदं गायति । सामवेदाध्यायिनि ।
**सामगर्भ** पु० साम गर्भे यस्य । विष्णौ ।
**सामग्री** स्त्री० न० समग्रस्य भावः ष्यञ् स्त्रीत्वपक्षे ङीष् ङीषि यलोपः । समस्ततायाम् 'प्रायेण सामग्र्यविधा'विति कुमारः स्वार्थे ष्यञ् । कारणसमूहे, द्रव्ये च स्त्री० ।
**सामञ्जस्य** न० समञ्जसस्य भावः ष्यञ् । औचित्ये ।
**सामन्** न० सो-मनिन् । 'अग्निं दूतं वृणीमहे, इत्यादिके वेदभेदे, तल्लोकासु ऋक्षु गानभेदे 'ऋच्यध्यूढं साम गीयते इति' छान्दोग्यम् । राज्ञां 'साम भेदस्तथा दानं दण्डश्चे'-त्युक्ते शत्रुवशीकरणोपायभेदे, प्रियवाक्यादिना सान्त्वने च । मधुवन्वनरक्तौ स्त्री० ङीप् ।
**सामन्त** पु०संश्लिष्टोऽन्तः एकदेशो यस्य समन्तस्तस्येश्वरः अण् । स्वविषयानन्तरवर्त्तिदेशाधिपे नृपे । समन्तात् भवः अण् टिलोपः । 'ग्रामजाम (मण्डल) यं परस्परया भोक्ता: सामन्ता'वेति स्मृतिः । [काळोचिते च ।
**सामयिक** त्रि० समये भवः उचितो वा ठञ् । समयभवे,
**सामयोनि** पु० साम योनिरुत्पत्तिस्थानं यस्य । हस्तिनि, तेषाञ्च सामयोनित्वमुक्तं पालकाव्ये 'सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत । गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजा' इति । चतुर्मुखे ब्रह्मणि च ।
**सामर्थ्य** न० समर्थस्य भावः ष्यञ् । देहजे बले शक्तौ योग्यतायां, सङ्गतार्थतायाञ्च । [समवायसम्बन्धिनि त्रि० ।
**सामवायिक** पु०समवाये प्रसृतः ठञ् । मन्त्रिणि । तस्येदम् ठञ् ।
**सामाजिक** पु० समाजः सभावेशनं प्रयोजनमस्य । सभ्ये ।
**सामान्य** न०समानस्य भावः ष्यञ् । सादृश्यप्रयोजकधर्मे यथा मुखं पद्ममिव सुन्दरमित्यादौ सौन्दर्यादि । समानमेव स्वार्थे ष्यञ् । द्रव्यगुणकर्मसु तुल्यतया स्थितायां जातौ ।
**सामान्यलक्षणा** स्त्री०सामान्यं साधारणधर्मः लक्षणं यस्याः । न्यायोक्ते अलौकिकप्रत्यक्षसाधने उपायभेदे । यथा एकघटज्ञाने घटत्वरूपसामान्यधर्मज्ञानात् सकलस्य घटत्वतो ज्ञानम् । [रणस्त्रियां वेश्यायाम् ।
**सामान्या** स्त्री० समानैव स्वार्थे ष्यञ् अजा० टाप् । साधा-
**सामि** अव्य० साम-इन् । अर्द्धे 'सामिघटिते'ति नैषधम् ।
**सामिधेनी** स्त्री० सम्-इन्ध करणे ल्युट् नि० । अग्निसमिन्धनसाधने ऋग्भेदे, समित्काष्ठे च ।
**सामीप्य** न० समीपस्य भावः स्वार्थे वा ष्यञ् । नैकट्ये निकटे च 'सामीप्याश्लेषविषयैर्व्याप्याधारस्त्रिधा' इति व्याकरणम् ।
**सामुद्र** न० समुद्रे भवः अण् । (करकच) लवणे ।
**सामुद्रक** न०समुद्रेण प्रोक्तम् वुण् । हस्तादिरेखादिना स्त्रीपुंसशुभाशुभलक्षणज्ञापके ग्रन्थभेदे, 'वामभागे तु नारीणां दक्षिणे पुरुषस्य च निर्दिष्टं लक्षणं तेषां समुद्रेण यथोदितमिति' 'सामुद्रकसारसमुद्रणे'ति नैषधम् ।
**सामुद्रिक** त्रि० समुद्रेण प्रोक्तम् ठञ् । स्त्रीपुंसशुभाशुभलक्षणज्ञापके ग्रन्थे । ठण् । युद्धे परलोकसाधने त्रि०
**साम्परायिक** न०सम्परायाय आपदे परलोकाय वा हितम् ।
**साम्प्रतम्** अव्य० सम्+प्र+तन-अमुलुक् । उचिते ।
**साम्बर** न० सम्बरदेशे भवम् अण् । सम्बरदेशोद्भवे लवणे
**साम्भवी** स्त्री०सम्भवः अस्त्यस्य शम्भवाद्यण् गौ०ङीष् । रक्तलोध्रे
**साम्य** न० समस्य भावः ष्यञ् । तुल्यत्वप्रयोजके साधारणधर्मे
**साम्राज्य** न० सम्राजः भावः ष्यञ् । सार्वभौमत्वे 'भेजे साम्राज्यदीक्षितमिति रघुः 'सचाधिपत्यं राज्यं साम्राज्यं दशलक्षके' इत्युक्ते दशलक्षयोजनाधिराज्ये च ।

**साय** पु० सो-घञ्। दिनान्ते, वाणे च।

**सायंसन्ध्या** स्त्री० सायम् दिनान्ते सन्ध्या, तत्र सन्ध्यायते सम्+ध्यै-घञर्थे क वा। दिनान्तसन्ध्यायाम् दिनान्ते-उपास्य-देवताभेदे च। भावे अङ्। तत्रोपासनायाम्।

**सायक** पु० सो-ण्वुल्। वाणे-खड्गे च।

**सायन्तन** त्रि० सायम्भवः ष्युल् तुट् च। दिनान्तभवे। स्त्रियां ङीप्। "सायन्तनीं तिथिप्रणय" इति भट्टिः।

**सायपुङ्खा** स्त्री० सायकस्य पुङ्खोयस्याः ५ ब०। शरपुङ्खावृक्षे।

**सायम्** अव्य०सो-अमु।दिनान्ते"सायं सम्प्रति वर्त्तते"इत्युद्भटः

**सायाह्न** पु० सायोऽह्नः एक० त० टच् ह्नादेशः। दिनान्ते, "सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेदिति" स्मृत्युक्ते पञ्चधाविभक्तदिनस्य त्रिमूहूर्त्तात्मके पञ्चमे शेषेऽंशे च।

**सायुज्य** न० सह युनक्ति-युज-क्विप् सादेशः सयुङ् तस्य भावः ष्यञ्। सहयोगे, पञ्चविधमुक्तिमध्ये एकात्मत्वावस्थानरूपे मुक्तिभेदे च। [सारत् त।

**सार दौर्बल्ये** अद० चु० उभ० सक० सेट्। सारयति ते अस

**सार** न० सृ-घञ्, सार-अच् वा। जले, धने, न्याय्ये, नवनीते, लौहे,वने च। वले,स्थिरांशे, मज्जनि, वर्जसारे,वायौ, रोगे, अतिदृढे दध्यग्रे च पु० न०। श्रेष्ठे, वरे च त्रि०

**सारक** पु० सारयति रेचयति सृ-णिच्-ण्वुल्। जयपाले। रेचकद्रव्ये त्रि०।

**सारखदिर** पु० कर्म०। विट्खदिरे।

**सारगन्ध** पु० सारःश्रेष्ठोगन्धोयस्य। चन्दने।

**सारघ** न० सरघाभिर्निर्वृत्तम् अण्। मधुनि क्षौद्रे।

**सारङ्ग** पु० सृ-अङ्गच्। चातकखगे, हरिणे, गजे, भृङ्गे छत्रे, राजहंसे, चित्रमृगे, वाद्यभेदे,वस्त्रे,नानावर्णे, मयूरे कामदेवे, चापे, केशे, आभरणे, पद्मे, शङ्खे, चन्दने, कर्पूरे पुष्पे, कोकिले, मेघे, सिंहे, रात्रौ, भूमौ,दीप्तौ च। शारङ्गमप्यत्र पक०। शारङ्गोऽपि चित्रमृगादौ।

**सारङ्गिक** पु० सारङ्गं मृगं हन्ति ठक्। व्याधे।

**सारज** न० सारात् दध्यग्रात् जायते जन-ड। नवनीते।

**सारण** न० सृ-णिच्-ल्यु। गन्धभेदे, अतीसाररोगे, रावणसचिवे च। भद्रवलायाम्, आम्रातके च पु०।

**सारणि(णी)** स्त्री० सृ-णिच्-अनि वा ङीप्। क्षुद्रनद्यां, प्रसारिण्याम्, सङ्क्रमेण ग्रहगत्यादिबोधके ज्योतिषग्रन्थभेदे च।

**सारतरु** पु० सारप्रधानः तरुप्रधानस्तरुः। कदलीवृक्षे।

**सारथि** पु० सृ-अथिण्, सह रथेन सरथः घोटकः तत्र नियुक्तः इञ् वा। रथादिवाहनप्रेरके नियन्तरि।

**सारदा** स्त्री० सारं ददाति दा-क। सरस्वत्याम् "लिखति यदि गृहीत्वा सारदेति" पुष्पदन्तः। सारदातरि त्रि०।

**सारद्रुम** पु० साराढ्योद्रुमः। खदिरवृक्षे।

**सारभाण्ड** न० कर्म०। भक्तनिमपात्रे, श्रेष्ठपात्रे च। [वृक्षे।

**सारमूषिका** स्त्री० सारे मूषिकेवापहारकत्वात्। देवदाली

**सारमेय** पु० स्त्री० सरमायाः कश्यपपत्न्याः अपत्यम् ढक्। कुक्कुरे। तद्योषिति स्त्री०।

**सारलौह** न० लौहेषु सारः राज०। लौहसारे(इस्पात)।

**सारव** त्रि० सरय्वां भवः अण् नि०। सरयूनदीभवे।

**सारस** न० सरोऽभिजनोनियतवसतिरस्य अण्। पद्मे, कन्याभरणे च। सह रसेन स्वार्थे अण्। चन्द्रे, स्वनामख्याते पक्षिणि च पु०। तद्योषिति स्त्री०। सरस इदम् अण्। सरोवरसम्बन्धिनि त्रि०।

**सारसन** न० सारं सनोति सन-अच्। स्त्रीकट्याभरणे, काञ्च्याम्, कञ्चुकदाढर्यार्थं मध्यकाये निबद्धे, पट्टिकादौ च।

**सारस्वत** पु० सरस्वती देवताऽस्य, सरस्वत्या इदं वा अण्। विल्ववृक्षे, देशभेदे, पञ्चगौडमध्ये ब्राह्मणभेदे सरस्वती प्रतिपादितमुनिभेदे, ब्राह्मदिनरूपे कल्पभेदे च "सारस्वतस्य कल्पस्येति" पुराणम्। सरस्वतीसम्बन्धिनि "तस्यां पूर्वाह्णसमये कुर्यात् सारस्वतमिति" पुराणम्। सरस्वतीदेवताके च त्रि० "तत्प्रावनाय निर्वापयतः सारस्वतोद्विजै रिति" स्मृतिः।

**सारस्वतकल्प** पु० कर्म०। तन्त्रोक्ते सरस्वत्या उपासनार्थके विधानभेदे, तन्नामके-ब्रह्मदिने च। [दूर्वायाञ्च।

**सारा** स्त्री० सारयति सृ-णिच्-अच्। कृष्णत्रिवृतायाम्,

**साराल** पु० सारमालाति आ+ला-क। तिलवृक्षे।

**सारि(री)** पु० स्त्री० सृ-इण् स्त्रीत्वपक्षे वा ङीप्। पाशके "सारीं चरन्तीं सखि! मारयेति"नैषधम् पक्षिभेदे च।

**सारिका** स्त्री० सरति गच्छति सृ-ण्वुल्। पक्षिभेदे(शालिक)

**सारिणी** स्त्री० सृ-णिनि। सहदेवीलतायाम्,कार्पास्यां,दुरालभायां,कपिलशिंशपायां,प्रसारिण्यां, रक्तपुनर्नवायाञ्च।

**सारिवा** स्त्री० सारिरिव वाति वा-क। (अनन्तमूल) लताभेदे [भवः ठक्। विषभेदे।

**सारोष्ट्रिक** पु० सारः श्रेष्ठ उष्ट्रोयत्र सारोष्ट्रः देशभेदस्तत्र-

**सार्थ** पु० सृ-थन् स्वार्थेऽण्। समूहे,जन्तुसमूहे"स जयत्यरि-

सार्थसार्थकीर्त्ति" नैषधम् सह अर्थेन वाच्येन वा। वणिक्समूहे। धनिनि त्रि०। कन्। सार्थकः। अर्थयुक्ते जने त्रि० शब्दे पु०"सार्थकः स्वार्थबोधकदिति"शब्दशक्तिप्रकाशिका"

सार्थवाह पु० सार्थं वहति वह-अण्। वणिग्जने।

सार्द्र त्रि० सह आर्द्रेन। आर्द्रतायुक्ते। [अर्द्धयुक्ते त्रि०।

सार्द्धम् अव्य० सह+ऋध-अम्। साहित्ये। सह अर्द्धेन। सार्द्धः।

सार्प न० सर्पोदेवतास्य अण्। अश्लेषानक्षत्रे।

सार्पिष्क त्रि० सर्पिषा संस्कृतम् ठण्। घृतसंस्कृते व्यञ्जनादौ

सार्व्वजनीन त्रि० सर्वेषु जनेषु विदितः खञ् द्विपदवृद्धिः। सर्वलोकविदिते।

सार्व्वत्रिक त्रि० सर्वत्र भवम्: ठञ्। सर्वस्मिन् कालादौभवे।

सार्व्वधातुक न० सर्वधातून् व्याप्नोति ठञ्। व्याकरणोक्ते सर्वधातुप्रकृतिके तिङादौ प्रत्यये।

सार्व्वभौतिक त्रि० सर्वाणि-भूतानि व्याप्नोति ठञ् द्विपदवृद्धिः। सर्वभूतव्यापके।

सार्व्वभौम पु० सर्वस्या भूमेरीश्वरः सर्वासु भूमिषु विदितो वा अण्। चक्रवर्त्तिनि नृपे, उत्तरदिक्स्थे गजे च।

सार्व्वलौकिक त्रि० सर्वेषु लोकेषु विदितः ठञ् द्विपदवृद्धिः। सर्वलोकेषु विदिते "स रामः सार्व्वलौकिक"इति भट्टिः।

सार्व्वविभक्तिक त्रि० सर्वासु विभक्तिषु तदर्थे भवः-ठञ्। सर्वविभक्त्यर्थे विहिते तसिलादौ प्रत्यये।

सार्षप त्रि० सर्षपस्य विकारः अण्। सर्षपविकारतैलादौ "अदुष्टं सार्षपं तैलमिति, स्मृतिः"।

साल पु० सल-घञ्। वृक्षमात्रे, "रसालः सालः समदृश्यतेति"नैषधम् स्वनामख्याते वृक्षभेदे, प्राकारे च।

सालज पु० सालः कारणत्वेनास्त्यस्य पामादित्वात् न। सालनिर्यासे (धुना)।

सालनिर्यास पु० ६त०। (धुना) सर्ज्जरसे। [वृक्षे।

सालपर्णी स्त्री० सालस्येव पर्णान्यस्याः ङीप्। (सालपानि)

सालपुष्प न० सालस्येव पुष्पं यस्य। स्थलपद्मे।

सालभञ्जिका स्त्री० सालं भनक्ति भन्ज-ण्वुल्। काष्ठादिनिर्म्मिते कृत्रिमक्रीड़ासाधने पुत्तलिकायाम्, वेश्यायाञ्च।

सालरस पु० ६त०। (धुना) राले।

सालवेष्ट पु० सालं वेष्टयति वेष्ट-अण्। राले (धुना)।

साला स्त्री० सालः प्राकारोऽस्त्यस्याः अच्। गृहे।

सालाटक पु० सालायां टकइव। कुक्कुरे।

सालूर पु० सल-ऊरट् णिच्। भेके मण्डूके।

सालेय पु० सालायां भवः ढक्। मधुरिकायाम्।

सालोक्य न० समानोलोकोऽस्य तस्य भावः ष्यञ्। पञ्चविधमुक्तिमध्ये एकलोकसहवासरूपे मुक्तिभेदे। [नृपे।

साल्व पु० ब०व० सौमदेशे। तेषां राजा अण्। तद्देशाधिपे

साल्वहन् पु० साल्वं नृपं हतवान् हन-क्विप्। विष्णौ।

सावधान त्रि० सह अवधानेन। सचेतने, सतर्के, मनोभिनिवेशयुक्ते च।

सावन न०सवनं। सोमयागाङ्गं स्नानं तस्येदम् अण्। "अहोरात्रेण चैकेन सावनो दिवसः स्मृत" इति ज्योतिषोक्ते अहोरात्रात्मके दिवसे, सवनत्रयस्य अहोरात्रसाध्यत्वादहर्जातसम्बन्धित्वम्। तत्त्रिंशद्दिवसात्मके मासभेदे च पु० "विवाहादौ स्मृतः सौरः यज्ञेषु सावनोमत इति"स्मृतिः। "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तितः" इति सूर्य्यसिद्धान्तः।

सा(श्रा)वर पु० श(श्र)वरेण निर्वृत्तः अण्। पापे,अपवादे च।

सावर्ण पु० सवर्णायां सूर्य्यपत्न्यां संज्ञायां भवः अण्। सवर्णागर्भजे सूर्य्यजे अष्टमे मनौ। इञ्। सावर्णिरप्यत्र "सूर्य्यात्मजन्म समाख्यातः सावर्णिर्भविता मनुरिति"चण्डी।

सावित्र पु० सविता देवताऽस्य अण्। विप्रे। ऋत्विग्भेदे, स्त्री० ङीप्। "सावित्रीमात्रसारोऽपीति" स्मृतिः। सा च सत्यवतोभार्य्यायाञ्च। सवितृदेवताके चर्व्वादौ त्रि० यज्ञोपवीते न०। स्वार्थादौ अण्। सूर्य्ये। तस्येदम् अण्। महादेवे, गर्भे वसौ च पु०।

सावित्रीव्रत न० सावित्रीपूजनवद्भिर्कर्त्तव्यं व्रतम्। ज्यैष्ठकृष्णचतुर्द्दश्यां सावित्रीपूजनार्थे व्रते। [पवीते।

सावित्रीसूत्र न० सावित्रीदीक्षाकालिकं सूत्रम् शाक०। यज्ञो-

सास्ना स्त्री० सस-न णिच्। गोगलस्थिते लोमसंघातात्मके कम्बले। [करणे च।

साक्ष त्रि० सह अक्षेण। चक्षुर्ज्ञानान्विते। [सामानाधि

साहचर्य्य न० सहचरस्य भावः ष्यञ्। समभिव्याहारे, साहित्ये,

साहस न० सहसा बलेन निर्वृत्तम् अण्। बलेन कृते चौर्य्यस्त्रीसंग्रहादौ दुष्टकर्म्मणि,"सहसा क्रियते यत्तु तत् साहसमिति स्मृत मिति" स्मृतिः तच्च पञ्चविधम् "मनुष्यमारणं स्तेयं परदाराभिमर्षणम्। पारुष्यमनृतञ्चैव साहसं पञ्चधा स्मृतमिति" स्मृतिः। सहसा अविवेचनेन कृतम् कर्म्म। अविमृश्यकृतकर्म्मणि, त्रि०। साहसमत्रचरति अण्। स्मृत्युक्ते दण्डविशेषे,"शातीतिपणसाहस्रो दण्डउत्तमसाहसः।

तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः" इति स्मृतिः। "पाकयज्ञे तु साहस" इत्युक्ते अग्निभेदे च पु०।

**साहसिक** त्रि० साहसे प्रसृतः ठन्। मनुष्यमारणाद्यभिरते चौरे, पारदारिके, मिथ्यावादिनि, परुषवादिनि च।

**साहस्र** न० सहस्राणां समूहः अण्। सहस्रसमूहे। स्वार्थे अण्। सहस्रसङ्ख्यायाम् न०। सहस्रं परिमाणमस्य अण्। सहस्रसंख्यान्विते त्रि०। सहस्रसंख्यकगजसमूहे पु०।

**साहायक** न० सहायस्य भावः वुञ्। साहाय्ये।

**साहाय्य** न० सहायस्य भावः ष्यञ्। सहायतायाम्।

**साहित्य** न० सहितस्य भावः ष्यञ्। मेलने परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियान्वयित्वे, तुल्यवदेकक्रियान्वयित्वे, एकक्रियान्वयित्वे, बुद्धिविशेषविषयत्वे, काव्यभेदे च।

**साह्य** न० सहस्य भावः ष्यञ् सह-ण्यत् वा। सहत्वे सहनीये त्रि०।

**साह्वय** पु० सह आह्वयेनाभिधानेन। अभिधानसहिते "जगाम गजसाह्वयमिति" भारतम्। मेषादिप्राणिकरणद्यूतरूपे समाह्वये च।

**सिंह** पु० हिन्स-अच् पृ० वर्णविपर्य्ययः। स्वनामख्याते पशुभेदे, रक्तशोभाञ्जने, मेषादितः पञ्चमे राशौ च। पदान्तस्थः। श्रेष्ठार्थे।

**सिंहकेशर** पु० सिंहस्येव केशरोऽस्य। बकुले।

**सिंहतल** पु० सिंहस्येव तलमत्र। करद्वयमेलनरूपे अञ्जलौ।

**सिंहतुण्ड** पु० सिंहस्येव तुण्डः पुष्पमस्य। सेहुण्डवृक्षे।

**सिंहद्वार** न० सिंहचिह्नितं द्वारम्। पुरप्रवेशनयोग्ये द्वारे

**सिंहध्वनि** पु० सिंहस्येव ध्वनिः। सिंहतुल्यनादे सिंहनादादयोऽप्यत्र। ६त० सिंहस्य शब्दे। [वाद्यभेदे।

**सिंहनर्द्दिका** पु० सिंहइव नर्दति नर्द-ण्वुल्। (शिङ्गा)

**सिंहनादिका** स्त्री० सिंहमपि नादयति नद-णिच्-ण्वुल्। दुरालभायाम्।

**सिंहपर्णी** स्त्री० सिंहस्य पुच्छइव पर्णमस्याः ङीप्। वासकवृक्षे

**सिंहपुच्छिका** स्त्री० सिंहस्य पुच्छइव पत्राण्यस्याः-कप्, अत इत्वम्। (चुट्टचाकुले) वृक्षे।

**सिंहपुच्छी** स्त्री० सिंहस्य पुच्छइव पुष्पाणि पर्णानि वास्याः ङीप्। चित्रपर्ण्यां, पृश्निपर्ण्याम्, माषपर्ण्याञ्च।

**सिंहपुष्पी** स्त्री० सिंहस्य पुच्छइव पुष्पाण्यस्याः पृश्निपर्ण्याम्

**सिंहमुखी** स्त्री० सिंहस्य मुखमिव मुखस्यदन्त इव पुष्पमस्याः ङीप्। वासके। [वाहनादयोऽप्यत्र।

**सिंहयाना** स्त्री० सिंहोयानं वाहनं यस्याः। दुर्गायाम् सिंह-

**सिंहल** पु० सिंहोऽस्त्यत्र लच्। देशभेदे। तद्देशप्रभवत्वात् रङ्गे, रीतौ त्वचे च न०।

**सिंहलास्थान** पु० सिंहल आस्थानं यस्य। तालसदृशे वृक्षभेदे।

**सिंहवाहिनी** स्त्री० सिंहरूपो वाहो विद्यतेऽस्या इनि। दुर्गायाम्। [विक्रमे त्रि०।

**सिंहविक्रान्त** पु० सिंहइव विक्रान्तः। अश्वे। सिंहतुल्य

**सिंहविन्ना** स्त्री० सिंहइव विन्ना विद-क्त। माषपर्ण्याम्।

**सिंहसंहनन** त्रि० सिंहस्येव संहननमङ्गमस्य। वराङ्गयुक्ते सिंहतुल्य दृढाङ्गे, च। "सिंहसंहननो युवेति" रघुः।

**सिंहा(शिङ्घा)न** न० शिघि-आनच् पृ०। लौहमले।

**सिंहासन** न० सिंहचिह्नितमासनम्। राजासने चतूराजीक्रीडायां जयभेदे, योगासनभेदे च लक्षणं हृहदभिधाने।

**सिंहास्य** पु० सिंहस्यास्यमिवास्यस्यदन्तइव पुष्पं यस्य। वासके।

**सिंहिका** स्त्री०। काश्यपपत्न्यां राहुमातरि।

**सिंहिकासुत** पु० ६त०। राहौ सिंहिकापुत्रादयोऽप्यत्र।

**सिंही** स्त्री० हिनस्ति रोगान् हिन्स-अच् पृ०। वार्ताक्यां, कण्टकारिकायाम्, वासके, वृहत्यां, मुद्गपर्ण्याम्, राहुमातरि, च। सिंह+जातौ ङीप्। सिंहयोषिति।

**सिक** सेचने सौत्र० पर० सक० सेट्। सेकति असेकीत्।

**सिकता** स्त्री० ब० व०। सिक-अतच् किच्च। वालुकायाम्। सिकताः सन्त्यत्र अण् तस्य लुप्। सिकतायुक्तदेशे स्त्री०।

**सिकतामय** त्रि० सिकता+मयट्। वालुकामये तटादौ [देशे।

**सिकतावत्** त्रि० सिकताः सन्त्यत्र मतुप् मस्य वः। वालुकायुक्त-

**सिकतिल** त्रि० सिकताः सन्त्यत्र इलच्। वालुकायुक्तदेशे।

**सिक्थ** न० सिच-थक्। मधूच्छिष्टे, (मोम) नील्याञ्च। स्वार्थे कन्। तत्र, भक्तपुलाके, ग्रासे च पु०।

**सिक्य** न० सिक-यत्। (शिके) रज्जुनिर्मिते पदार्थे [कुली]।

**सिङ्घा (घा)न** न० शिघ-आनच् पृ०। नासिकामले। (सि-

**सिच्** त्रि० सिच-क्विप्। सेचनकर्त्तरि, कर्म्मणि क्विप्। वस्त्रे

**सिचय** पु० सिच-अयच् किच्च। वस्त्रे।

**सिञ्चिता** स्त्री० सिच-इतच् पृ०। पिप्पल्याम्

**सित** न० सो-क्त। रौप्ये, मूलके, चन्दने च। शरे, शुक्रग्रहे, शुक्लवर्णे च पु०। तद्वति, समाप्ते, बद्धे, ज्ञाते च त्रि०।

**सितकण्ठ** पु० सितः कण्ठोऽस्य। दात्यूहे, पक्षिणि।

**सितकर** पु० सितः करः किरणो यस्य। चन्द्रे, कर्पूरे च सितमयूखादयो ऽप्यत्र।

**सितकर्णी** स्त्री० सितः कर्ण इव पुष्पमस्याः ङीप्। वासके

**सितकुञ्जर** पु० सितः कुञ्जरोऽस्य। इन्द्रे। कर्म्म०। ऐरावतगजे

**सितगुञ्जा** स्त्री० कर्म्म०। श्वेतगुञ्जायाम्।

**सितच्छत्रा** स्त्री० सितं छत्रमिव पुष्पमस्याः। श्वेतपुष्पायाम्।

**सितच्छद** पु० सितश्छदःपक्षोऽस्य। हंसे। श्वेतदूर्व्वायां,स्त्री०।

**सितदर्भ** पु० कर्म्म०। श्वेतकुशे। [जीरके।

**सितदीप्य** पु० दीपयत्यग्निम् दीप–णिच्–यत् कर्म्म०। श्वेत-

**सितदूर्व्वा** स्त्री० कर्म्म०। श्वेतदूर्व्वायाम्।

**सितद्रु** पु० कर्म्म०। मोरटभेदे, शुक्लवर्णवृक्षे च।

**सितधातु** पु० कर्म्म०। कठिन्याम्।

**सितपक्ष** पु० सितः पक्षोऽस्य। हंसे। कर्म्म०। चन्द्रस्य वृद्धिकारक पञ्चदशतिथ्यात्मके शुक्ले पक्षे। [वृक्षे।

**सितपर्णी** स्त्री० सितानि पर्णान्यस्याः ङीप्। अर्कपुष्पिका

**सितपाटलिका** स्त्री० कर्म्म०। (श्वेतपारुल) वृक्षे।

**सितपुङ्खा** स्त्री० सितः पुङ्खोऽस्याः। श्वेतशरपुङ्खावृक्षे।

**सितपुष्प** न० सितानि पुष्पाण्यस्य। कैवर्त्तीमुस्तके। तगर-वृक्षे, काशे, श्वेतरोहितकवृक्षे च पु०। श्वेतापराजितायां स्त्री० ङीप्। मल्लिकायां स्त्री० टाप्। कर्म्म०। श्वेतपुष्पे न०।

**सितमरिच** न० कर्म्म०। शुभ्रमरिचे।

**सितमाष** पु० कर्म्म०। राजमाषे (वरवटी) [वायाम्।

**सितवर्षाभू** स्त्री० वर्षासु भवति भू–क्विप् कर्म्म०। श्वेतपुनर्न-

**सितसायका** स्त्री० सितः सायकोऽस्याः ५व०। शुभ्र-शरपुङ्खावृक्षे।

**सितशिम्बिक** पु० सिता शिम्बि र्यस्य कप्। गोधूमे,

**सितशूक** पु० सितः शुभ्रः शूकोऽस्य। यवे।

**सितशूरण** पु० कर्म्म०। वनशूरणे (वनओल)।

**सितसर्षप** पु० कर्म्म०। गौरसर्षपे। [शाके।

**सितसार(क)** पु० सितः सारोनिर्यासोऽस्य वा कप्। शालिञ्च-

**सिता** स्त्री० सो–क्त। शर्करायाम्।

**सिताखण्ड** पु० सितायाः खण्ड इव। मधुजातशर्करायाम्।

**सिताग्र** पु० सितमग्रं यस्य। कण्टके।

**सितादि** पु० सिताया आदिः कारणम्। गुड़े।

**सितापाङ्ग** पु० सितमपाङ्गं यस्य। मयूरे

**सिताब्ज** न० कर्म्म०। श्वेतकमले। सिताम्भोजादयोऽप्यत्र।

**सिताभ** पु० सिता आभा यस्य। कर्पूरे,चन्द्रे च। तक्रे स्त्री०

**सिताभ्र** पु० अभ्रइव सितः शुभ्रः राज०। कर्पूरे।

**सिताभ्रक** न० अभ्रकमिव सितम् राज०। कर्पूरे

**सितार्ज्जक** पु० कर्म्म०। श्वेततुलस्याम्।

**सितालक** पु० आलयति भूषयति अल–णिच्–ण्वुल् कर्म्म०। श्वेतमन्दारे! [श्वेतदूर्व्वायाम्

**सितालता** स्त्री० सिता सती आलतते आ+लत–अच्।

**सितावर** पु० सितं श्वेततामावृणोति आ+वृ–अच् (सुसुनि) शाकभेदे।

**सिति** पु० सो–क्तिच्। शुक्लवर्णे, कृष्णवर्णे च। तद्वति त्रि०।

**सितिमन्** पु० सितस्य भावः इमनिच्। शुभ्रतायाम्।

**सितिवार** पु० सितिं श्वेततां वृणोति वृ–अण्। सुनिषण्णके (सुसुनि)शाके।

**सितिवासस्** पु० सिति कृष्णं वासोऽस्य। बलदेवे।

**सितेतर** पु० सितादितरः। श्यामशालौ, कुलत्थे च श्यामेतर वर्णे पु० तद्वति त्रि०।

**सितोपल** पु० कर्म्म०। स्फटिके। कठिन्यां न०। शर्करायां स्त्री०

**सिद्ध** न० सिध–क्त। सैन्धवलवणे अकृत्रिमत्वात्तथात्वम् निष्पन्ने,पक्वे,, नित्ये च त्रि०। सिद्धिरस्यस्य अच्। व्यासादौ मुनौ देवयोनिभेदे च पु०। निश्चिते त्रि० विष्कम्भादिषु मध्ये द्वाविंशयोगे, गुड़े, कृष्णधुस्तूरे च पु०। ज्योतिषोक्ते यौगिनीदशामध्ये सप्तम्यां दशायां स्त्री०। तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठस्थाद्याक्षरयुक्ते मन्त्रभेदे पु०।

**सिद्धक** पु० सिद्धइव इवार्थे कन्। सिन्धुवारे, शालवृक्षे च

**सिद्धजल** न० सिद्धंपक्वं जलम्। काञ्जिके। सिद्धतोयादयोऽप्यत्र

**सिद्धदेव** पु० सिद्धानां देवः। महादेवे

**सिद्धधातु** पु० सिद्धः प्रसिद्धोधातुः। पारदे

**सिद्धपीठ** पु० न० कर्म्म०। "जातोयत्रबलिर्येन होमोवा कोटि-सङ्ख्यकः। महाविद्याजपाः कोट्यः सिद्धपीठः प्रकीर्त्तित" इति तन्त्रोक्ते स्थानभेदे।

**सिद्धपुर** न० कर्म्म०। "लङ्काकुमध्ये यमकोटिरस्याः प्राक् पश्चिमे रोमकपत्तनञ्च। अधोगतं सिद्धपुरञ्चेत्युक्तं" भूगो-लस्थेषु भूवृत्तपादान्तरितदेशस्थेषु चतुर्षु देवनिर्मितेषु पुरेषु मध्ये लङ्काधोभागस्थे पुरभेदे।

**सिद्धपुष्प** पु० सिद्धं नित्यं पुष्पं यस्य। करवीरवृक्षे।

**सिद्धप्रयोजन** पु० सिद्धं प्रयोजनं यस्मात् ५व०। गौरसर्षपे

**सिद्धरस** पु० सिद्धः प्रसिद्धोरसः। पारदे सिद्धोरसोऽत्र धातुमाले त्रि०।

**सिद्धविद्या** स्त्री० सिद्धा विद्या मन्त्रोऽस्याः। "काली तारा महाविद्या षोड़शी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी क-

मलात्मिका। एता दश महाविद्याः सिद्धविद्याः प्रकीर्त्तिताः” इति तन्त्रोक्तासु दशसु काल्यादिषु।

**सिद्धसाधन** न॰ सिद्धस्य निश्चितस्य साधनमनुमानम्। न्यायोक्ते सिषाधयिषाविरहकाले साध्यवत्त्वेन निश्चितस्य पुनरनुमानरूपे दोषे। सिद्धं साधयति ल्यु। श्वेतसर्षपे पु॰।

**सिद्धसाध्य** पु॰ सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधिद्वितीयकोष्ठस्थाद्याक्षरयुक्ते तन्त्रोक्ते मन्त्रभेदे।

**सिद्धसिद्ध** पु॰ तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धसिन्धु** स्त्री॰ ६ त॰। गङ्गायाम् सिद्धनद्यादयोऽप्यत्र।

**सिद्धसुसिद्ध** पु॰ तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधितृतीयकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धान्त** पु॰ सिद्धः निश्चितोऽन्तोयस्मात्। प्रमाणाद्युपन्यासेन पूर्व्वपक्षनिरासके सिद्धपक्षस्य स्थापनरूपे वाक्यस्तोमे, ज्योतिःशास्त्रभेदे च स च सूर्य्यसिद्धान्तः सोमसिद्धान्तादिः

**सिद्धारि** पु॰ तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधिचतुर्थकोष्ठस्थाद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धार्थ** (क) पु॰ सिद्धःअर्थोयस्मात्ः ५ब॰ वा कप्। श्वेतसर्षपे वटीवृक्षे च।६ब॰। प्रसिद्धार्थे त्रि॰। “सिद्धार्थं सिद्धसम्बन्धमिति” माघः।

**सिद्धि** स्त्री॰ सिध–क्तिन्। ऋद्धिनामौषधे, योगभेदे, अन्तर्द्धाने, निष्पत्तौ, पाके, पादुकायाम्, मोक्षे, सम्पत्तौ, अणिमाद्यष्टविधैश्वर्य्ये, बुद्धौ, साध्यवत्तया निश्चये च।

**सिद्धिद** पु॰ सिद्धिं ददाति दा–क। बटुकभैरवे। सिद्धिदातरि त्रि॰।

**सिद्धियोग** पु॰ सिद्धिहेतुर्योगः। “शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया। गुरौ पूर्णा च संयुक्ता सिद्धियोगः प्रकीर्त्तित” इति ज्योतिषोक्ते शुक्रादिवारयुक्तनन्दादौ

**सिध्म** न॰ सिध-मन् किच्च। किलासरोगे।

**सिध्मन्** न॰ सिध–मनिन् किच्च। किलासरोगे तद्रोगवति त्रि॰।

**सिध्मल** त्रि॰ सिध्मन्+अस्त्यर्थे लच्। किलासरोगवति। विकारे स्त्री॰। [नक्षत्रे।

**सिध्य** पु॰ कार्य्यं साधयति सिध–णिच्–कर्त्तरि यत् नि॰। पुष्य

**सिध्रक** पु॰ सेधति रोगान् सिध-रक् स्वार्थे कन्। (सुध) वृक्षभेदे “वनगिर्य्यो” रित्यादिसूत्रेण सिध्रकशब्दस्य पाणिनिना दीर्घविधानात् पुंस्त्वमेवास्य, अमरोक्तं स्त्रीत्वन्त्वपाणिनीयम्।

**सिध्रकावण** न॰ सिध्रकप्रधानं वनं णत्वम् दीर्घश्च। देवोद्याने।

**सिन** पु॰ सीयते बध्यते क्त सि-ग्रासे तस्य नः। ग्रासे, काणे च

**सिनी** स्त्री॰ सि-क्त तस्य नश्च स्त्रियां ङीप्। शुक्लवर्णस्त्रियाम्।

**सिनीवाली** स्त्री॰ सिनी श्वेतां चन्द्रकलां वलति धारयति अण् ङीप्। चतुर्द्दशीयुक्तायाममावास्यायाम्।

**सिन्दु(न्धु)क** पु॰ स्यन्दते स्यन्द–उ संप्रसारणञ्च पृ॰ दस्य वा धः स्वार्थे वा कन्। सिन्दुवारवृक्षे।

**सिन्दु(न्धु)वार** पु॰ सिन्धुं गजमदं वारयति तिक्तत्वात् वृ–अण्। (निसिन्दा)वृक्षे। “मुक्ताकलापीकृत सिन्दुवारमिति” कुमारःतस्य च श्वेतपुष्पत्वात् मुक्तातुल्यत्वम्।

**सिन्दूर** न॰ स्यन्द–ऊरन् संप्रसारणम्। स्वनामख्याते रक्तवर्णे चूर्णभेदे, वृक्षभेदे पु॰।

**सिन्दूरकारण** न॰ ६ त॰। सीसके। [सधवायाम् स्त्री॰।

**सिन्दूरतिलक** पु॰ सिन्दूरवर्णस्तिलकश्चिह्नभेदोयस्य। हस्तिनि

**सिन्दूरी** स्त्री॰ सिन्दूरवर्णानि पुष्पाणि सन्त्यस्याः अच् गौ॰ ङीष्। सिन्दूररोचन्यां, धातक्याञ्च।

**सिन्धु** पु॰ स्यन्द–उ संप्रसारणं दस्य धश्च। समुद्रे, नदभेदे, वृक्षे, श्वेतटङ्कणे, रागभेदे, गजमदे, देशभेदे च। तद्देशवासिनि पु॰ ब॰ व। नदीदेदे स्त्री॰।

**सिन्धुकफ** पु॰ सिन्धोःकफइव। समुद्रफेने। [श्वेतटङ्कणे।

**सिन्धुकर** न॰ सिन्धुदेशे कीर्य्यते क्रियते वा कॄ–कृ–वा अप्।

**सिन्धुखेल** पु॰ सिन्धुसमीपे खेलति खेल–अच्। सिन्धुदेशे।

**सिन्धुज** न॰ सिन्धुदेशे समुद्रे वा जायते जन–ड। सैन्धवलवणे। चन्द्रे, कर्पूरे च पु॰। लक्ष्म्यां स्त्री॰। सिन्धुजातादयोऽप्यत्र।

**सिन्धुनन्दन** पु॰ ६त॰। चन्द्रे, सिन्धुसुतादयोऽप्यत्र लक्ष्म्यां स्त्री॰।

**सिन्धुपुष्प** पु॰ सिन्धौ पुष्प्यति विकाशते पुष्प– अच्। शङ्खे।

**सिन्धुमन्थज** न॰ सिन्धुमन्थात् जायते जन–ड। सैन्धवलवणे, अमृते च।

**सिन्धुर** पु॰ सिन्धुर्मदजलमस्यास्ति र। हस्तिनि “मदान्धसिन्धुरघटेति” गङ्गास्तवः।

**सिन्धुलवण** न॰ सिन्धुदेशजातं लवणम्। सैन्धवलवणे।

**सिन्धुवारित** पु॰ सिन्धुः मदजलं वारितस्तिरस्कृतोयेन अतितिक्तत्वात्। सिन्धुवारवृक्षे। (निसिन्दा)

**सिन्धुवेषण** पु॰ विष–ल्यु ६त॰। गाम्भारीवृक्षे।

**सिन्धुसङ्गम** पु॰ सिन्धोः नद्योः नदीसमुद्रयोर्वा सङ्गमः। नद्योः नदीसमुद्रयोर्वा, मेलने। स यत्र। तदाधारदेशे त्रि॰।

**सिन्धूद्भव** न॰ सिन्धोः उद्भवति उद्+भू–अच्। सैन्धवलवणे

**सिन्धूपल** पु॰ सिन्धोरुपलइव। सैन्धवलवणे। क्लीवमित्यन्ये।

**सिप्र** पु॰ सप–रक् पृ॰। सरोवरभेदे, चन्द्रे, निदाघजले, घर्म्मे च उज्जयिनीसमीपस्थनदीभेदे स्त्री॰ “सिप्रा-

तरङ्गानिलकम्पितास्विति" रघुः ।

**सिम** पु० षि-मन् किच्च । सर्व्वस्मिन् इत्यर्थे, तदर्थेऽस्य सर्व्वनामता

**सिम्बा(म्बि)** स्त्री० शाम्यति क्षुदनया शम-बन् इत् वा पृ० । (छुटि) शिम्बायाम् इत्यन्यः । मस्त्रीनामगन्धद्रव्ये । वा ङीप् । ङीवन्तः । निष्पाव्याञ्च ।

**सिम्बिजा** स्त्री० सिम्बेर्जायते जन-ड । शमीधान्ये कलायादौ

**सिर** पु० सि-रक् । पिप्पलीमूले । नाद्याम् अम्बुवाहिन्याञ्च स्त्री० । [शल्लकीवृक्षे ।

**सिल्लकी** स्त्री० षि-क्विप् लक-अच् गौरा० ङीष् कर्म्म० ।

**सिहुण्ड** पु० सो-कि सिः छेदस्तं कुण्डते कण्टकादिततत्वात् कुडि-अण् । स्नुहीवृक्षे [तत्रैव ।

**सिह्ल** पु० स्निह-लक् पृ० । हक्कधूमाख्ये गन्धद्रव्ये । स्वार्थे कन् ।

**सिह्लकी** स्त्री० स्निह-लकक् पृ० गौ० ङीष् । शल्लकीवृक्षे ।

**सिह्लभूमि** स्त्री० सिह्लस्य गन्धद्रव्यस्य भूमिः । सल्लकीवृक्षे ।

**सीक** सेचने भ्वा० आ० सक० सेट् । सीकते असेकिष्ट । चङि न ह्रस्वः । अचोपदेशत्वात् षत्वम् ।

**सीक** स्पर्शे वा चु० उभ० पक्षे भ्वा० प० सक० सेट् । सीकयति ते सीकति असीसिकत् त असीकीत् । न षत्वम् ।

**सीकर** पु० सीक्यते सिच्यतेऽनेन सीक-अरण् । जलकणे ।

**सीता** स्त्री० सि-त पृ० दीर्घः । लाङ्गलपद्धतौ, जनकराजदुहितरि, भद्राश्ववर्षस्थितगङ्गायाञ्च ।

**सीतापति** पु० ६ त० । श्रीरामे ।

**सीतायाःपति** पु० ६त० अलुक्समा० । श्रीरामे "सीतायाः पतये नमः" इतिपुराणम् असमस्तत्वे पत्येति स्यात् ।

**सीत्कार** पु० सीदित्यव्यक्तस्य कारः सीत्+कृ-घञ् । अनुरागजे शब्दे ।

**सीत्कृत** न० सीत्×कृ-भावे क्त । सीत्कारे, अनुरागजशब्दे

**सीत्य** न० सीतया लाङ्गलपद्धत्या निर्वृत्तं यत् । धान्ये । सीतामर्हति यत् । हलकर्षणयोग्ये क्षेत्रादौ त्रि० ।

**सीधु** पु० सिध-उ पृ० । मद्ये "इक्षोः पक्वरसैः सिद्धः सीधुरित्यभिधीयते" इत्युक्ते मद्यभेदे च ।

**सीधुगन्ध** पु० सीधोरिव गन्धोऽस्य न इत् अनित्यत्वात् । बकुले ।

**सीधुपुष्प** पु० सीधुगन्धयुक्तं पुष्पमस्य । कदम्बे, बकुले च । धातक्यां स्त्री० ङीप् ।

**सीधुरस** पु० सीधोरिव रस आस्वादोऽस्य । आम्रवृक्षे ।

**सीमन्त** पु० सीम्नोऽन्तः शक० । (सिंथि) केशान्तर्गतवर्त्माकारे पदार्थे "षष्ठेऽष्टमे वा सीमन्त" इत्युक्ते गर्भावधिके षष्ठे अष्टमे वा मासि कर्त्तव्ये संस्कारभेदे च ।

**सीमन्तक** न० सीमन्ते कायति कै-क । सिन्दूरे । नरकावासे पु०

**सीमन्तिनी** स्त्री० सीमन्त+अस्त्यर्थे इनि । योषिति नार्य्याम् ।

**सीमन्तोन्नयन** न० सीमन्तस्य तदाख्यगर्भसंस्कारस्य उन्नयनमुन्नावनमत्र । स्मृत्युक्ते गर्भसंस्कारककर्म्मभेदे

**सीमन्** स्त्री० षि-इमनि पृ० न गुणादि । मर्य्यादायाम्, अवधौ, स्थितौ-क्षेत्रे, अण्डकोषे "सीम्नि पुष्पलकोक्तः" इति सिद्धान्तकौमुदी । वेलायाञ्च । [सीमन्शब्दार्थे च ।

**सीमा** स्त्री० सीमन्×डाप् । मर्य्यादायां, ग्रामादेरन्तभागे,

**सीमाविवाद** पु० सीमायां विवादः । अष्टादशसु विवादेषु मध्ये स्वनामख्याते विवादभेदे ।

**सीर** पु० षि-रक् पृ० । सूर्य्ये, अर्कवृक्षे, हले च । [जनकनृपे ।

**सीरध्वज** पु० सीरोहलः तच्चिह्नितो ध्वजोयस्य । चन्द्रवंश्ये

**सीरपाणि** पु० सीरः हलः पाणौ यस्य । बलदेवे

**सीरिन्** पु० सीरोहलोऽस्त्यस्यायुधत्वेन इनि । बलरामे

**सी(से)वन** न० षिव-ल्युट् नि० वा दीर्घः । सेवने तन्तुसन्ताने (सेओयान) [स्वार्थे कन् । तत्रार्थे

**सीस** न० षि-क्विप् पृ० सो-क कर्म० । (सीसे) धातुभेदे

**सीहुण्ड** पु० सिहुण्ड+पृ० दीर्घः । स्नुहीवृक्षे,

**सु** अव्य० षु-डु । पूजायाम्, अतिशये, कृच्छ्रे, अनुमतौ, समृद्धौ, अनायासे च ।

**सुकण्टका** स्त्री० सुष्ठु कण्टकोऽस्याः । घृतकुमार्य्याम् ।

**सुकण्डू** स्त्री० सु+कण्डू+यक् कु । कच्छूरोगे (चुलकाना)

**सुकन्द** पु० शोभनः कन्दोऽस्य । कशेरौ, शोभनकन्दयुक्ते त्रि० संज्ञायां कन् । पलाण्डौ

**सुकन्दिन्** पु० शोभनः हितकरः कन्दोऽस्त्यस्य इनि । वाराहीकन्दे, धरणीकन्दे, शूरणे, च । (ओल)

**सुकरा** स्त्री० सुखेन क्रियते दुह्यते वा सु+कृ-खल् । सुशीलायां गवि । सुखसाध्ये त्रि० । [कर्णयुक्ते त्रि० ।

**सुकर्णक** पु० सुष्ठु कर्ण इव कन्दोऽस्य कप् । हस्तिकन्दे । शोभन

**सुकर्णिका** स्त्री० सुष्ठु-कर्णाविव पर्णान्यस्याः कप् अत इत्वम् । मूषिकपर्ण्याम् । [वारुण्याम् (राखालशशा)।

**सुकर्णी** स्त्री० सुष्ठु कर्णाविव मञ्जर्य्यस्याः ङीप् । इन्द्र-

**सुकर्म्मन्** पु० सुष्ठु कर्म्म यस्मात् ५ ब० । विष्कम्भादिषु मध्ये सप्तमे योगे । शोभनकर्म्मवति त्रि० । प्रादि० । शोभने कर्म्मणि न०

**सुकल** पु० सुष्ठु कल्यते ख्यायतेऽसौ सु+कल+घञ् । दातृत्वभोक्तृत्वादिना विख्याते जने सुन्दरमधुराव्यक्तशब्दे च ।

**सुकाण्ड** पु० सुष्ठु काण्डोऽस्य । कारवेल्ले, सुन्दरकाण्डयुक्ते वृक्षे च काण्डीरलतायां स्त्री० । स्वार्थेकन् अतइत्वम् । तत्रैव

पुष्करमूले, उशीरे, सुरमर्य्यां,मद्दाशालौ, गन्धके, तुरुष्के च

**सुगन्धिकुसुम** पु० सुगन्धि कुसुमं यस्य। पीतकरवीरे। सग-न्धयुक्तपुष्पवति त्रि०।

**सुगन्धित्रिफला** स्त्री० त्रयवयवं लिखिरा वा फलं त्रिफलं सुगन्धि त्रिफलमस्यस्याःसाहस्येन च्यच्। जातीफले, पूगफले, लवङ्गकलिकाफले च

**सुगन्धिमूल** न० सुगन्धि मूलमस्य। उशीरे (वेना)

**सुगृहीतनामन्** पु० सुगृहीतं प्रातःकाले स्मरणीयं नाम यस्य। प्रातःस्मरणीये पुण्यकीर्त्तौ जने। [त्रि०

**सुग्रन्थि** पु० सुष्ठु ग्रन्थिर्यस्य। चोरकवृक्षे। सुन्दरग्रन्थिमति

**सुग्रीव** पु० सुष्ठु ग्रीवाऽस्य।श्रीकृष्णाश्वे, सूर्यपुत्रे वानरेश्वरे च। सुन्दरग्रीवावति त्रि०

**सुचक्षुस्** पु० सुष्ठु चक्षुरिव फलमस्य। उडुम्बरे, शोभनलो-चनेयुक्ते त्रि०। मा०। शोभने नेत्रे न०।

**सुचञ्चुका** स्त्री० सुष्ठु चञ्चुरिव शिखा यस्याः कप्। महाचञ्चुशाके

**सुचरित्रा** स्त्री० सुष्ठु चरित्रं यस्याः। पतिव्रतायां स्त्रियाम् सच्चरित्रवति त्रि०। मा०। सच्चरित्रे न०।

**सुचर्म्मन्** पु० सुष्ठु चर्म्मेव वल्कलमस्य। भूर्जवृक्षे सुन्दरचर्म्म वति त्रि०। मा०। सुन्दरे चर्मणि न०। [ङ्गायाम्।

**सुचित्रबीजा** स्त्री० सुचित्रं विचित्रं बीजं यस्याः। विड-

**सुचित्रा** स्त्री० मा०। चिर्भटायाम्। विचित्रे त्रि०।

**सुचिर** मा०। अत्यन्तचिरकाले, बहुकाले च।बहुकालभवे त्रि०

**सुचिरायुस्** पु०सुचिरं बहुकालिकमायुर्यस्य। देवे। बहुकाल-जीविनि त्रि०

**सुचेलक** पु० मा०। सूक्ष्मवस्त्रे। सुष्ठु चेलोऽस्य कप्। सूक्ष्मवस्त्र-धरे त्रि०। [जले न०

**सुजल** न० शोभनं जलं यस्मात् ५ब०। कमले। मा०। सुन्दरे

**सुजाता** स्त्री० सु+जन-क्त। तुवर्य्याम्। मनोज्ञे त्रि०।

**सुजीवन्ती** स्त्री० मा०। स्वर्णजीवन्त्याम् [अपोपदेशत्वान्न षः।

**सुट्ट अनादरे** चु० उ० सक० सेट्। सुट्टयति ते असुसुट्टत् त

**सुत** पु० स्त्री० सु-क्त। पुत्रे तनयायां। स्त्री० सा च दुरालभायाञ्च। उत्पन्ने, सम्बन्धे, निष्पीडिते च त्रि०।

**सु(सू)तक** न०। सु-(सू)-भावे क्त सु(सू)तं जननं तस्मादा गतम् कन्। जननाशौचे, मृताशौचमात्रे च "सुतके सूतके तथेति "मातुश्च सूतकं तत्स्यादिति" च स्मृतिः।

**सुतजीवक** पु० सुतं जीवयति धारणात् जीव-णिच्-ण्वुल्। पुत्रजीवकवृक्षे।

**सुतनु(नू)** पु० स्त्री० सुष्ठु तनुर्यस्याः वा ऊङ्।नार्य्याम्। "सुतनु! सत्यममलङ्करणाय ते" इतिमाघः।

**सुतपस्** पु० सुष्ठु तपति सु+तप-असि। सूर्य्ये। सुष्ठु तपोऽस्य मुनौ पु०। सुन्दरतपोयुक्ते त्रि० मा०। सुन्दरे तपसि न०।

**सुतपादिका** सुताः संहृताः पादाः मूलान्यस्याः कप् न पाद्भावः कपि अत इत्त्वम्। हंसपदीलतायाम्

**सुतराम्** अव्य० सु+अतिशयेऽर्थे आसु तरप्। अवधारितार्थस्य अतिशयोचितत्वे "धेन्वा तदध्यासितकातराच्या निरीक्ष्य-माणः सुतरां दयालुरिति" रघुः अत्र कातराच्या धेन्वा दृश्यमानत्वेन दयालुत्वस्य अतिशयौचित्यम् [लतायाम्।

**सुतर्कारी** स्त्री० सुतर्कात्कृच्छति ऋ-अण् ङीप्। देवदाली

**सुतल** पु० न० सुष्ठु तलं यत्र। पातालभेदे अट्टालिकाभेदे पु०।

**सुतहिबुकयोग** पु० सुते हिबुके च योगः ग्रहविशेषस्य। "सुतहिबुकवियद्विलग्नधर्म्मेष्वमरगुरुर्यदि दानवार्चितो वा। यदशुभमुपयाति तच्छुभं स्यात्" इत्युक्ते योगभेदे।

**सुतिक्त** पु० मा०। (क्षेतपापड़ा) पर्पटे अत्यन्ततिक्ते त्रि० कोषातक्यां स्त्री० संज्ञायां कन्। पारिभद्रे निम्बे भूनि-म्बे च पु०।

**सुतीक्ष्ण** पु० मा०। शोभाञ्जनवृक्षे,श्वेतशोभाञ्जने, मुनिभेदे च "सुतीक्ष्णमुनिनिकेतन" मितिभट्टिः। अत्युग्रे त्रि०।

**सुतुङ्ग** पु० मा०। नारिकेलवृक्षे ज्योतिषोक्ते ग्रहाणाम् उच्च-राशिषु अंशभेदेषु च विस्तरो वृहद्भिधाने। अतिशयोच्चे त्रि०

**सुतेजन** पु० सु+तिज-ल्यु। धन्वनि, वृक्षे।

**सुतेजस्** पु० सुष्ठु तेजोऽस्य। आदित्यभक्तायाम्। शोभन-तेजोयुक्ते त्रि० [लतायाम्

**सुतैला** स्त्री० सुष्ठु तैलं यस्याम् ७ब०। महाज्योतिष्मती

**सु(सू)त्रामन्** पु० सुष्ठु त्रायते सु+त्रै-मनिन् ष०। इन्द्रे

**सुत्वन्** पु० सुनोतिस्म सु-क्वनिप्।क्रताभिषेके क्रतयज्ञार्थस्नाने क्रतसोमनिष्पीडने च। [अपोपदेशत्वान्न षः।

**सुद** शोभायां सौ० प० सक० सेट् इदित्। सुन्दति असुन्दीत्।

**सुदग्धिका** पु० सुष्ठु दग्धमस्यस्य ठन्। सुदग्धानामवृक्षे।

**सुदण्ड** पु० सुष्ठु दण्डोयस्मात् ५ब०। वेत्रे

**सुदण्डिका** स्त्री० सुदण्डयति रोगान् ण्वुल्। गोरक्ष्याम्। (गोरक्षचाकुले) सुदण्डवत्यां स्त्रियाञ्च।

**सुदत्** पु० सुष्ठु दन्तोऽस्य वयसि दत्आदेशः। शोभनदन्तयुक्त-वयस्के गजादौ युवत्यां स्त्रियां ङीप्। "सुदतीजनमज्ज-नार्पितमिति"नैषधम्। वयो भिन्ने तु सुदन्तइत्येव नटादौ।

**सुदर्भा** स्त्री० सु+दृभ-घञ्। इक्षुदर्भावृक्षे। सुष्ठु दर्भोयत्र सुन्दरकुशयुते त्रि०।

सुदर्शन पु० सुष्ठु दृश्यते खलर्थे युच्। विष्णुचक्रे (मन्वगुलञ्च) लताभेदे, इन्द्रपुरे च अमरावत्यां स्त्री० ङीप्।

सुदल पु० सुष्ठु दलान्यस्य। चोरसोरटाहवृक्षे। शालपर्ण्यां स्त्री०

सुदामन् पु० सुष्ठु ददाति दा-मनिन्। मेघे, पर्वतभेदे (दरावत् पर्व्वत) गोपभेदे, समुद्रे, ऐरावते गजे, पुराणप्रसिद्धे श्रीकृष्णमित्रे विप्रभेदे च शोभनदातरि त्रि०। नदीभेदे स्त्री० तत्र वा ङीप्। सुदाम्नी।

सुदाय पु० सुष्ठु दीयते सु+दा-घञ्। यौतुकप्रसादादिना देये धने। सुष्ठु दायो यस्य। पितृप्रभृतौ ज्ञातौ।

सुदि अव्य० सुष्ठु दीव्यति सु+दिव-डि। शुक्लपक्षे।

सुदिन न० प्रादि०। प्रशस्तदिवसे। प्रशस्ते त्रि०।

सुदिनाह न० सुदिनं प्रशस्तमहः टच् समा०। प्रशस्तदिवसे।

सुदीर्घधर्म्मा स्त्री० सुदीर्घः अतिविस्तीर्णो धर्म्मो गुणविशेषो यस्याः केवलत्वाभावान्नानिच् डाप्। अमनपर्ण्याम्

सुदूर त्रि० प्रादि०। अतिदूरे। [कर्म्मणि च पु०

सुद्युम्न पु० वैवस्वतमनुपुत्रे। [विशेषे, अनन्ते नागे,विश्व-

सुधन्वन् त्रि० सुष्ठु धनुर्यस्य अनङ्। सुन्दरधनुर्द्धरे। राज-

सुधर्म्मन् स्त्री० सु+धृ मनिन्। देवसभायाम्। कुटुम्बिनि पु०

सुधर्मा स्त्री० सुष्ठु धर्मो यस्याः अनिच् समा० वा डाप्। देवसभायाम्। गौ० ङीप्। सुधर्म्मणीत्यप्यत्र।

सुधा स्त्री० सुष्ठु धीयते पीयते अर्य्यते वा धे,धा-वाक। अमृते। लेपनद्रव्ये (कलिचुन) मूर्वायाम्, स्नुह्यां, गङ्गायाम्, इष्टकायां, विद्युति, रसे,जले, धात्र्याम् हरीतक्याम् मधुनि, शालपर्ण्याञ्च।

सुधांशु पु० सुधेवाह्लादकाः अंशवोऽस्य। चन्द्रे,कर्पूरे च। सुधाकरादयोऽप्यत्र। [वासिते तैले।

सुधांशुतैल न० सुधांशुना कर्पूरेण वासितं तैलम्। कर्पूर-

सुधांशुरत्न न० ६त०। मौक्तिके तस्य चन्द्रप्रियत्वात्तथात्वम्।

सुधाङ्ग पु० सुधैवाप्यायनमङ्गमस्य। चन्द्रे,कर्पूरे च।

सुधाजीविन् पु० सुधां लेपनद्रव्यमाजीवति आ+जीव-णिनि। पलगण्डे (राज)।

सुधाधार पु० ६त०। चन्द्रे, कर्पूरे, अमृताधारपात्रे च।

सुधानिधि पु० सुधा निधीयतेऽत्र नि+धा-कि। चन्द्रे,कर्पूरे च

सुधापयस् पु० सुधा लेपनद्रव्यमिव शुभ्रं पयो निर्यासोऽस्य। स्नुहीवृक्षे।

सुधाभुज् पु० सुधां भुक्तवान् भुज-भूते क्विप्। देवे।

सुधाभृ(सू)ति पु० सुधा भ्रियते पुष्यते सूयते वाऽनेन भृ-सू-वा क्तिच्। यज्ञे, चन्द्रे, कर्पूरे च।

सुधामय न० सुधात्मकं लेपनद्रव्यात्मकं वा प्राचुर्य्ये मयट्। राजभवने सौधे। अमृतवदाह्लादकवाक्यादौ त्रि०। स्त्रियां ङीप्। [शर्करायाम्, कर्पूरे च।

सुधामोदक पु० सुधेव मोदयति मुद-णिच्-ण्वुल्। यवास-

सुधावर्षिन् पु० सुधां वर्षति वृष-णिनि। चन्द्रे,कर्पूरे, ब्रह्मणि च। [गम्भो यस्याः। त्रपुष्याम्।

सुधावास पु० ६त०। चन्द्रे, कर्पूरे च। सुधाया इव वासो

सुधासिन्धु पु० सुधामयः सिन्धुः। अमृतसमुद्रे।

सुधास्रवा स्त्री० सुधां स्रवति स्रु-अच्। दन्तीवृक्षे क्षुद्रजिह्वायाञ्च (आलजिभ)। [दयोऽप्यत्र।

सुधाहृत् पु० सुधां हरति हृ-क्विप्। गरुडे सुधाहारका-

सुधिति पु०स्त्री० सु+धा-क्तिच् न ह्यादेशः। कुठारे।

सुधी पु० सुष्ठु धीर्यस्य। पण्डिते। सुष्ठु धीः। सुन्दरबुद्धौ स्त्री०। सुष्ठु ध्यायति सु+ध्यै क्विप् नि०। सुबुद्धियुक्ते त्रि०

सुधोद्भव पु० सुधया सह उद्भवति उद्+भू-अच्। धन्वन्तरि वैद्यराजे। ५त०। हरितक्यां स्त्री०।

सुनन्द न० सुष्ठु नन्दयति सु+नन्द-अच्। बलरामयुषले श्रीकृष्णपार्श्वचरभेदे, राजगृहभेदे च। आनन्दजनके त्रि०। गोरोचनायाम्, उमायाम्, उमासखीभेदे, नार्य्याम्, अर्कपत्त्रीवृक्षे च (इपेरमूल) स्त्री०। [नेत्रयुक्ते त्रि०।

सुनयन पु० सुष्ठु नयने यस्य। मृगे। नार्यां स्त्री०। शोभन

सुनालक पु० सुष्ठु नालेन कायति कै-क। वकवृक्षे सुन्दरनालयुक्ते त्रि०।

सुनासिका स्त्री० सुष्ठु नासाऽस्त्यस्य ठन्। काकनासायाम्। प्रा०। सुन्दरनासिकायाम् स्त्री०।

सुनासी(शी)र पु० सुष्ठु नासी(शी)रः अग्रगसैन्यं यस्य। इन्द्रे

सुनासी(शी)र्य्य पु० सुना(शी)सीरो देवताऽस्य यत्। यज्ञभेदे। छ। सुनासी(शी)रीयोऽप्यत्र। [स्वार्थे कन् तत्रैव

सुनिषस्र न० सुष्ठु निषर्ष्यस्मी यस्मात् ५व०। (सुसुनि) शाके।

सुनिष्टप्त त्रि० सु+निस्+तप-क्त पत्वम्। अत्यन्तोद्दीप्ते, सन्तप्ते च

सुनीति स्त्री० सुष्ठु नीतिः यस्याः। ध्रुवमातरि, सुन्दरनीतियुक्ते त्रि०। प्रा०। सुन्दरनीतौ स्त्री०।

सुनील न० प्रा०। मणिभेदे (नीलम)। दाड़िमे, सुन्दरनीलवर्णे च पु०। तद्वति त्रि०। अतस्याम्, अपराजितायाम्, नरतीतृणे च स्त्री०। [घने, नीलरत्ने च।

सुनीलक पु० सुनीलमिव इवार्थे कन्। नीलभृङ्गराजे, नीला

सुन्द पु०। दैत्यभेदे, वानरभेदे च।

सुन्दर त्रि० सु+उन्द-अरन्-शक०। मनोहरे। स्त्रियां

ङीप्। सा च उत्तमस्त्रियां त्रिपुरसुन्दरीदेव्याञ्च।
कामदेवे, छन्दभेदे च (सुंदरि) पु०। [परिहिते त्रि०।
सुपक्व पु०सुन्दरं पच्यते कर्म्म पच-क्त तस्य वः। शोभनाम्रे सुन्दर
सुपच त्रि० सुखं सुखेन पच्यते पच-खल् न। लघु-
पाके द्रव्यमात्रे।
सुपत्त्र न० सुष्ठु पत्त्रमस्य। तेजपत्रे आदित्यपत्त्रे पु० सुन्दर
पत्त्रयुक्ते त्रि० रुद्रजटायां, शतावर्य्यां, शालपर्ण्यां शाल-
पगर्णाञ्च स्त्री०। [कायां स्त्री० अत इत्त्वम्।
सुपत्त्रक पु० सुष्ठु पत्त्रमस्य स्वार्थे कन्। शोभाञ्जनवृक्षे जतु-
सुपथ पु० सुष्ठु पन्थाः प्रा० अच् समा०। नर्म्मणि सदा-
चारे च सुष्ठु पन्था यत्र अच् समा०। सुन्दरपथयुक्ते त्रि०
सुपथिन् पु० प्रा० समासान्ताभावः। सत्पथे।
सुपद्मा स्त्री० सुष्ठु पद्यते पद-म। वचायाम्। पद्मिन्यां स्त्री०
सुपर्ण पु०सुष्ठु पर्णं पत्त्रं पक्षो वा यस्य। गरुडे सुन्दरपर्ण-
युक्ते त्रि० नागकेशरे पु०। बहुव्रीहौ कप्। आरग्वधे
वृक्षे, सप्तच्छदवृक्षे, गरुडे च। भाजपर्ण्यां, रेणुकायां,
पलाश्यां, स्वर्णजीवन्त्याञ्च स्त्री० कापि अत इत्त्वम्।
सुपर्णकेतु पु० सुपर्णो गरुडः केतुर्यस्य। विष्णौ।
सुपर्णी स्त्री० सुष्ठु पर्णान्यस्याः गौ० ङीप्। पद्मिन्यां,
गरुडमातरि च।
सुपर्णीतनय पु० ६त०। गरुडे। [सुन्दरे पर्व्वणि न०।
सुपर्व्वन् पु० सुष्ठु पर्व्व यस्य। देवे, वाणे, वंशे, धूमे च प्रा०।
सुपर्व्वा स्त्री० सुष्ठु पर्व्व यस्याः डाप्। श्वेतदूर्व्वायाम्।
सुपाक्य न० सुपाकमर्हति यत्। विड्लवणे।
सुपार्श्व पु० सुष्ठु पार्श्वोऽस्य। प्लक्षवृक्षे (पाकुड़) छन्दभेदे,
सम्पातिपुत्त्रे विहगभेदे च संज्ञायां कन्। गर्द्दभाण्डवृक्षे पु
सुन्दरपार्श्वान्विते त्रि०।
सुपिङ्गला स्त्री० प्रा०। ज्योतिष्मत्यां, जीवन्त्याञ्च। [त्रि०
सुपीत न०प्रा। गर्ज्जरे (गाजर)। सुन्दरपीतवर्णे पु०। तद्वति
सुपुट पु० सुष्ठु पुटमस्य। कोलकन्दे, विष्णुकन्दे च।
सुपुत्त्रिका स्त्री० सुष्ठु पुत्रः पत्रः यस्याः कप् अत इत्त्वम्।
जतुकायाम् (तेलोपोका)।
सुपुष्करा स्त्री० सुष्ठु पुष्करमस्यस्याः अच्। स्थलपद्मिन्याम्।
सुपुष्प न० प्रा०। लवङ्गकुसुमे, प्रपौण्डरीके, तूले, स्त्रीणां
रजसि च। 'सुपुष्परात्रीर्थी कुसुमधनुषोमन्दिरमि'ति स्मात्ता
नवः। सुष्ठु पुष्पमस्य। (पालताभान्दार) वृक्षे। कप्। शाट-
लायां स्त्री० अत इत्त्वम्।
सुपुष्पी स्त्री० सुष्ठु पुष्पमस्याः गौ० ङीप्। श्वेतापराजिता-
यां, शतपुष्पायाम्, शिम्बेयायां, द्रोणपुष्प्याञ्च।
सुपूर पु० सुष्ठु पूर्य्यते सु+पूर-क। बीजपूरे।
सुपूरक पु० सुष्ठु पूरयति पूर-ण्वुल्। वकवृक्षे।
सुप् स्त्री० व्याकरणपरिभाषिते सुप्रभृतौ प्रत्यये।
सुप्त न० स्वप-भावे क्त संप्रसारणम्। निद्रायां, शयने च। क-
र्त्तरि क्त। निद्रिते त्रि०।
सुप्तजन पु० सुप्तो जनो यत्र। अर्द्धरात्रे।
सुप्ति स्त्री० स्वप-क्तिन्। शयने,निद्रायाम्, स्वप्ने च 'करोति
सुप्तिर्जनदर्शनातिथिमि'ति नैषधम्।
सुप्रतिभा स्त्री० सुष्ठु प्रतिभा यस्याः ५ब०। सुरायाम् प्रा०।
उज्ज्वलबुद्धौ। ६ब०। तद्वति त्रि० [पादके छन्दोभेदे स्त्री०
सुप्रतिष्ठा स्त्री०प्रा०। प्रशंसायाम्। ६ब० तद्वति त्रि०। पञ्चाक्षर
सुप्रतीक पु० सुष्ठु प्रतीकं यस्य। ईशानकोणस्थिते दिग्गजे
शिवे,कामे च सुन्दराङ्गे त्रि०। प्रा०। सुन्दरेऽङ्गे न०।
सुप्रभा स्त्री० सुष्ठु प्रभा यस्याः। अग्निजिह्वाभेदे। सुन्दर-
दीप्तिमति त्रि०। प्रा०। शोभनदीप्तौ स्त्री०। [वाक्ये च
सुप्रभात न०प्रा०। शुभसूचकप्रातःकाले, तत्र पाठ्यमाङ्गल्य-
सुप्रयुक्तशर पु० सुप्रयुक्तः शरो येन। शीघ्रहस्ते वाणमोच-
नाभ्यासपाटवयुक्ते।
सुप्रयोगविशिख पु० सुष्ठु प्रयोगो निक्षेपो यस्य तादृशो
विशिखोयस्य। शीघ्रहस्ते वाणमोचनशीघ्रतारूपपाटवयुक्ते।
सुप्रलाप पु० सु+प्र+लप-घञ्। सुवचने।
सुप्रसन्न पु०सु+प्र+सद-क्त। कुबेरे। प्रसादयुक्ते त्रि०। संज्ञायां
कन्। कृष्णार्जके पु०। [विस्तारयुक्ते त्रि०
सुप्रसरा स्त्री० सु+प्र+सृ-अच्। प्रसारिण्यां-लतायाम्
सुप्रसाद पु० सुखेनानायासेन प्रसादो यस्य। शिवे। प्रा०।
सुन्दरप्रसन्नतायाम्।
सुफल पु० सुष्ठु फलमस्य। दाड़िमे, वदरे, मुद्गे, कर्णिकारे,
कपित्थे च। सुन्दरफलवति त्रि०। इन्द्रवारुण्यां कुष्मा-
ण्ड्यां, कदल्यां, कपिलद्राक्षायाञ्च स्त्री०।
सुवन्ध पु० सुखेन बध्यतेऽसौ बन्ध-घञ्। तिलवृक्षे।
सुभग पु० सुष्ठु भगः माहात्म्यादिः यस्य। चम्पके, अशोके,
रक्ताम्लाने, टङ्कणे च। सुन्दरे, प्रिये, शोभनैश्वर्य्ययुक्ते च
त्रि०। शैवलीफलायां, शालपर्ण्याम्, हरिद्रायां, नील-
दूर्व्वायां, तुलस्यां, प्रियङ्गौ, कस्तूर्य्यां, स्वर्णकदल्यां, वन-
मल्लिकायां, पतिप्रियायां स्त्रियां च स्त्री०।
सुभगम्भावुक त्रि० असुभगः सुभगोभवति भू-ख्युञ्
मुकञ्च मुम् च। प्रियम्भविष्णौ।

**सुभगासुत** पु० सुभगायाः पतिप्रियायाः सुतः । सौभागिनेये ।
**सुभङ्ग** पु० सुखेनानायासेन भज्यते निःसारत्वात् भञ्ज-घञ् । नारिकेलवृक्षे ।
**सुभट** पु० प्रा० । सुन्दरयोद्धरि ।
**सुभद्र** पु० सुष्ठु भद्रं यस्मात् । विष्णौ । द्व० । शोभनमङ्गलवति त्रि० । श्यामालतायाम् श्रीकृष्णस्य भगिन्याञ्च स्त्री० । कप् । देवरथे, बिल्ववृक्षे च पु० ।
**सुभद्राणी** स्त्री० सुभद्रं सुमङ्गलमानयति आ+नी-ड गौ० ङीप् णत्वम् । त्रायन्तीलतायाम् ।
**सुभद्रेश** पु० ६त० । अर्ज्जुने । सुभद्रापत्यादयोऽप्यत्र ।
**सुभाञ्जन** पु० सुष्ठु भाति भा-क्त कर्म्म० । शोभाञ्जनवृक्षे ।
**सुभिक्ष** त्रि० सुखेन लभ्या भिक्षा यत्र पर्य्याप्तान्नत्वात् । प्रचुरान्नवति कालादौ । [पुष्पिकायाम्
**सुभिक्षा** स्त्री० सुष्ठु भिक्ष्यते याच्यतेऽसौ सु+भिक्ष-अ । धातु-
**सुभीरक** पु० सुष्ठु भीः सुभीः तामीरयति विरहिणाम् ईर-ण्वुल् । पलाशवृक्षे ।
**सुभूति** पु० सुष्ठु भवति । सु-भू-क्तिच् । पक्षिभेदे । प्रा० । सुन्दरविभूतौ स्त्री० द्व० । तद्वति त्रि० । बिल्ववृक्षे पु० ।
**सुभृश** न० सुष्ठु भृशम् । अतिशये दार्ढ्ये । तद्वति त्रि० [त्रि०
**सुभ्रु(भ्रू)** स्त्री० सुष्ठु भ्रुर्यस्याः वा ऊङ् । नार्य्याम् सुन्दरभ्रुयुक्ते ।
**सुम** न० सुष्ठु मीयतेऽदः सु-मा-घञर्थे क । पुष्पे । चन्द्रे, कर्पूरे, नभसि च पु० ।
**सुमङ्गला** स्त्री० सुष्ठु मङ्गलं यस्याः ५ब० (माकड़हाता) वृक्षे सुमङ्गलयुक्ते त्रि० स्त्रियां ङीप् । 'सुमङ्गली इयं वधू'रिति श्रुतिः
**सुमदन** पु० सुष्ठु मदयति कोकिलान् मद-णिच् ल्यु । आम्रवृक्षे । [मधुररसयुक्ते त्रि०
**सुमधुर** न० प्रा० । अत्यन्तप्रियवाक्ये, सान्त्वनवाक्ये च । अति-
**सुमन** पु० सुष्ठु मन्यते मन-अप् । गोधूमे, धुस्तूरे च ।
**सुमनःपत्त्रिका** स्त्री० सुमनसः जात्या इव पत्त्रमस्याः कप् अत इत्त्वम् । जातीपत्त्रिकायाम् । [६त० । जातीफले
**सुमनःफल** पु० सुष्ठु मनो यस्मात् तादृक् फलमस्य । कपित्थे ।
**सुमनस्** न० सुष्ठु मनो यस्मात् यस्य वा । पुष्पे । ब० व० इत्यन्ये 'किं सेव्यते सुमनसां मनसापि गन्ध इति' रसगङ्गाधरः । मालत्यां स्त्री० । प्रशस्तचित्तयुक्ते त्रि० । प्रा० । प्रशान्ते मनसि न० ।
**सुमना** स्त्री० सुष्ठु मन्यते मन-अप् । मालतीवृक्षे ।
**सुमनोरजस्** न० ६त० । पुष्पधूलौ परागे । [त्रि०
**सुमित्रा** स्त्री० लक्ष्मणमातरि दशरथपत्नीभेदे । सुन्दरमित्रयुक्ते
**सुमुख** पु० सुष्ठु सुखमस्मात्, अस्य वा । गणेशे, पण्डिते शाकभेदे, नागभेदे, सिताऽर्जके, बर्बरे, वनवर्व्वरिकायाञ्च । सुप्रसन्नवदने, मनोहरे च त्रि० । स्त्रियां ङीप् ।
**सुमूल** पु० सुष्ठु मूलमस्य । श्वेतशोभाञ्जने । शालपर्ण्यां, पृश्निपर्ण्यां च स्त्री० । सुन्दरमूलयुक्ते त्रि० । संज्ञायां कन् । गर्ज्जरे न० । [सुन्दरमेखलान्विते त्रि०
**सुमेखल** पु० सुष्ठु मेखला यस्मात् ५ब० । मुञ्जवृक्षे, द्व० ।
**सुमेधस्** स्त्री० सुष्ठु मेधा यस्याः ५ब० असिच् । ज्योतिष्मतीलतायाम् द्व० । सुन्दरमेधायुक्ते त्रि० ।
**सुमेरु** पु० प्रा० । पर्व्वतभेदे, जपमालायां सीमाख्यगुटिकायाञ्च ।
**सुम्म(ह्म)** पु० सुम्भ-अच् प० । देशभेदे । तद्देशवासिनि पु० ब० व० ।
**सुयामुन** पु० यमुनाया इदम् सुष्ठु यामुनं शिवलेनास्त्यस्य अच् । विष्णौ, वत्सराजे, प्रासादविशेषे, पर्व्वतभेदे, मेघभेदे च ।
**सुयोधन** पु० सुखेन युध्यतेऽसौ सु+युध-युच् । धृतराष्ट्रराजसुते दुर्योधने ।
**सुर** पु० सुष्ठु राति ददात्यभीष्टं सु+रा-क । देवे, सूर्य्ये, पण्डिते च
**सुरकृता** स्त्री० ३त० । गुडूच्याम् । देवनिर्मिते त्रि० ।
**सुरक्तक** पु० सुरक्त इव कायति कै-क । कोषाम्रे, स्वर्णगैरिके च
**सुरगुरु** पु० ६त० । बृहस्पतौ ।
**सुरग्रामणी** पु० सुराणां ग्रामणीः नेता । इन्द्रे ।
**सुरङ्ग** न० सुष्ठु रङ्गो यस्मात् ५ब० । हिङ्गुले, (नर्णकमाटि) भेदे । प्रा० । नागरङ्गे, गर्त्तभेदे च ।
**सुरङ्गधातु** पु० सुष्ठु रङ्गो रञ्जनं यस्मात् कर्म्म० । गैरिके ।
**सुरङ्गिका** स्त्री० सुष्ठु रङ्गो रञ्जनं यस्याः ५ब०, कप् अत इत्त्वम् । मूर्व्वायाम् । [नागायाम्, रक्तशोभाञ्जने च ।
**सुरङ्गी** स्त्री० सुष्ठु रङ्गो यस्याः ५ब० गौ० ङीप् । काक-
**सुरज्येष्ठ** पु० ७त० । चतुर्मुखे ब्रह्मणि ।
**सुरञ्जन** पु० सुरञ्जयति सु+रञ्ज-णिच्-ल्यु । गुवाके ।
**सुरत** न० सु+रम भावे क्त । स्त्रीपुंसयोः सङ्गमरूपे रमणभेदे सु-रम-कर्त्तरि क्त । अत्यन्तरते त्रि० ।
**सुरता** स्त्री० सुराणां समूहः भावो वा त, तल् वा । देवसमूहे, देवत्वे च । सु+रम-क्त । अत्यन्तरतायां स्त्रियाञ्च ।
**सुरथ** पु० सुष्ठु रथोऽस्य । चन्द्रवंश्ये नृपभेदे 'सुरथो नाम राजाभूदि'ति चण्डी । सुन्दररथयुक्ते त्रि० । [दारुवृक्षे
**सुरदारु** न० सुरप्रियं सुरलोकपर्य्यन्तमुच्छ्रितं वा दारु । देव-
**सुरदीर्घिका** स्त्री० सुराणां दीर्घिकेव । गङ्गायाम् । सुरवाप्यादयोऽप्यत्र ।
**सुरदुन्दुभी** स्त्री० सुराणां दुन्दुभीवाह्लादकत्वात् । तुलस्याम्
**सुरद्रुम** पु० सुरप्रियो द्रुमः । देवदारुणि, देवनले च ।

सुरद्विष् पु० सुरान् द्वेष्टि द्विष-क्विप् । असुरे देवद्वेष्टरि त्रि०

सुरधनुस् न० ६त० । इन्द्रधनुषि ।

सुरधूप पु० सुरप्रियो धूपः । राले (धुना) ।

सुरन(ण)दी स्त्री० ६त०वा णत्वम् । गङ्गायाम् सुरधुन्यादयोऽप्यत्र

सुरनाल पु० सुरप्रियं नालमस्य । देवनलवृक्षे ।

सुरपति पु०६त० । इन्द्रे सुरेशादयोऽप्यत्र ।

सुरपथ पु० सुराणां पन्था यत्र अच् समा० । आकाशे

सुरपर्ण न० सुरप्रियं पर्णमस्य । सौगन्धिके ओषधिभेदे ।

सुरपर्णिक पु०स्त्री० । सुरप्रियं पर्णं शाक० तदस्त्यस्य ठक् । सुरपुन्नागे ।

सुरपर्णी स्त्री० सुरप्रियं पर्णं यस्याः ङीप् । पलाशीवृक्षे ।

सुरपादप पु० ६त० । कल्पवृक्षे सुरवृक्षादयोऽप्यत्र ।

सुरपुन्नाग पु० सुरप्रियः पुन्नागः । पुन्नागभेदे ।

सुरपुरी स्त्री० ६त० । अमरावत्यां सुरनगर्यादयोऽप्यत्र ।

सुरप्रिय पु०६त० । अगस्त्यवृक्षे, वृहस्पतौ, इन्द्रे च । जात्यां, स्वर्णकदल्याञ्च स्त्री० ।

सुरभि न० सु+रभ-इन् । स्वर्णे, सुन्दरे, गन्धाश्मान च । चम्पके, जातीफलवृक्षे, वसन्ते ऋतौ, 'स सुरभिं सुरभिं सुमनोभरैरिति माघः । सुगन्धे, शमीवृक्षे, कदम्बे, कण-गुग्गुलौ, गन्धतृणे, बकुलवृक्षे, राले, चैत्रे मासि, पण्डिते, गन्धफले च पु०। शल्लक्यां, रुद्रजटायां, मातृकाभेदे, गवि, सुरायां, नवमालिकायां, तुलस्यां, पृथिव्यां, गवां मातरि च स्त्री०वा ङीप् । धीरे, सद्गन्धयुक्ते, मनोहरे, विख्याते, च त्रि० ।

सुरभिका स्त्री० सुरभि+स्वार्थे कन् । (चापाकला) । वृक्षे ।

सुरभित्वच् स्त्री० सुरभिः त्वक् यस्याः । स्थूलैलायाम् ।

सुरभिदारु पु० सुरभि दारु यस्य । सरलवृक्षे ।

सुरभिपत्त्रा स्त्री० सुरभि पत्त्रमस्याः । जम्बूवृक्षे, राजजम्बूवृक्षे च

सुरभिवल्कल न० सुरभि वल्कलमस्य । गुडत्वचि (दारचिनि)

सुरभिस्रवा स्त्री० सुरभिः स्रवो निष्यन्दो यस्याः । शल्लक्याम्

सुरमृत्तिका स्त्री० सुरप्रिया मृत्तिका । तुवर्याम् ।(वर्णकमाटि)

सुरमेदा स्त्री० सुरप्रियो मेदोऽस्याः । महामेदायाम् ।

सुरर्षि पु० सुरप्रियः ऋषिः । नारदादिषु ऋषिषु ।

सुरलता स्त्री० सुरप्रिया लता । महाज्योतिष्मत्याम् ।

सुरलोक पु० सुराणां लोकः वासस्थानादिः । स्वर्गे । सुरभुवनादयोऽप्यत्र ।

सुरवर्त्मन् न० सुराणां वर्त्म यत्र । आकाशे ।

सुरवल्लभा स्त्री० ६त० । श्वेतदूर्वायाम् ।

सुरवल्ली स्त्री० सुरप्रिया वल्ली । तुलस्याम्

सुरवैरिन् स्त्री० ६त० । असुरे सुरविरोधिनि त्रि० । सुररिपुप्रभृतयोऽप्यत्र ।

सुरस न० सुखेन रस्यते सु+रस-अच् । बोले, त्वचे, गन्धतृणे, सिन्धुवारे मोचरसे च । प्रा० स्वादौ रसे । ६ब० । सुस्वादुरसयुक्ते त्रि० । तुलस्यां पु० स्त्री० । रास्नायां, नागमातरि, मिश्रेयायां, ब्राह्म्यां, महाशतावर्य्यां च स्त्री० ।

सुरसुन्दरी स्त्री० सुरप्रिया सुन्दरी । मेनकाद्यप्सरःसु, योगिनीभेदे च ।

सुरा स्त्री० सुर-क सु-रक् वा । मद्ये, चषके च ।

सुराकर पु० सुराया आकरः । मद्योत्पत्तिस्थाने ।

सुराचार्य्य पु० ६त० । वृहस्पतौ ।

सुराजक पु० सुष्ठु राजते राज-ण्वुल् । भृङ्गराजे । ६ब० कप् । सुन्दरराजान्विते त्रि० ।

सुराजन् पु० सुष्ठु पूजितो राजा न टच् । सुन्दरे राजनि । ६ब० । सुन्दरराजस्वामिके देशे त्रि० ।

सुराजीविन् पु० सुरां सुरासम्पादनमाजीवति आ+जीव णिनि । शौण्डिके । [श्यावदन्तक' इति स्मृतिः

सुराप त्रि० सुरां पिबति पा-क । मद्यपानकारके 'सुरापः

सुरापगा स्त्री० ६त० । गङ्गायाम् । सुरतरङ्गिण्यादयोऽप्यत्र ।

सुरापान न० सुरा पीयतेऽनेन पा-करणे ल्युट् । अवदंशे (चाटनी) सुरायाः पानं येषां णत्वम् । प्राच्यदेशस्थे जने पु०

सुराभाग पु० सुराया भागः अग्रभागः । सुरामण्डे ।

सुरामण्ड पु० ६त० । सुराया अग्रभागे ।

सुरारिहन्तृ पु० सुराणामरिं हन्ति हन-तृच् । विष्णौ ।

सुरार्ह न० सुरान् देवानर्हति अर्ह-अण् । हरिचन्दने ।

सुराष्ट्र पु० ६ब० देशभेदे (सुरट) ।

सुराष्ट्रज न०स्त्री० सुराष्ट्रदेशे जायते जन-ड । तुवरिकायाम् कृष्णमुद्गे, विषभेदे च पु० । तद्देशजातमात्रे त्रि० ।

सुराह्व पु० सुरपूर्व्विका आह्वा यस्य सुरान् आह्वयति गन्धेन आ+ह्वे-क वा । देवदारुवृक्षे, मरुवके, हरिद्रावृक्षे च ।

सुरङ्ग पु० सु+रञ्ज-अच् ष० । शोभाञ्जनवृक्षे ।

सुरूप न० सुन्दरं रूपमस्य । तूले । सुन्दररूपवति त्रि० पण्डिते पु० । शालपर्ण्यां भार्ग्याम् च स्त्री० । प्रा० । सुन्दरे रूपे न० ।

सुरूहक पु० सु+रुह-क्कुन् ष० । गर्द्दभाण्डे । [तुलस्यां स्त्री०

सरेज्य पु० इज्यते पूज्यते यज-क्यप् ६त० । वृहस्पतौ ।

सुरेन्द्र पु० सुराणामिन्द्रः श्रेष्ठः राजा वा । इन्द्रे सुरराजे ।

**सुरेभ** न० सु+रेभ-अच् । रङ्गे । (रांग) ।
**सुरेवट** पु० सुष्ठु रेवटः सु+रेव—अटन् वा । रामपूगे ।
**सुरेश्वर** पु० सुराणामीश्वरः । रुद्रे, इन्द्रे च । स्वर्गगङ्गायां, दुर्गायाञ्च स्त्री० ङीप् । [ब्राह्म्यां स्त्री० ।
**सुरेष्ट** पु० इत० । शाले, सुरपुन्नागे, शिवमल्लाम् च
**सुरोत्तम** पु० सुरेषूत्तमः । सूर्य्ये. देवश्रेष्ठे त्रि० ।
**सुरोत्तर** पु० सुरेषु तत्पूजनेषूत्तरः श्रेष्ठः । चन्दने ।
**सुरोद** पु० सुरेव उदकमस्य उदादेशः । सुरासमुद्रे ।
**सुलभ** त्रि० सुखेन लभ्यते सु+लभ-खल् । अनायासलभ्ये । माषपर्ण्यां, धूम्रपत्त्रायाञ्च स्त्री० ।
**सुलोचन** पु० सुष्ठु लोचनमस्य । हरिणे । सुन्दरनेत्रयुक्ते त्रि०
**सुलोमशा** स्त्री० सुलोमानि सन्त्यस्याः श । काकजङ्घावृक्षे सुलोमयुक्ते त्रि० । [मांसच्छदायाञ्च ।
**सुलोमा** स्त्री० सुष्ठु लोमान्यस्याः ङीप् । ताम्रवल्ल्याम्,
**सुलोहक** न० प्रा० । पित्तले । [त्रि०स्त्रियां ङीप् तस्य नच
**सुलोहिता** स्त्री०प्रा० । अग्निजिह्वाभेदे । सुरक्तवर्णे पु०तद्वति
**सुवक्त्र** पु०सुष्ठु वक्त्रं सेवनात् यस्मात् । वनवर्व्वर्याम् इव० । सुन्दराननयुक्ते त्रि० । प्रा० । सुन्दरे मुखे न० ।
**सुवचस्** त्रि० सुष्ठु वचोऽस्य । वाग्मिनि ।
**सुवर्चक** पु०सुष्ठु वर्चयति सु+वर्च-णिच्-ण्वुल् । सर्जिकाक्षारे
**सुवर्चला** स्त्री० सुष्ठु वर्चयति वर्च-णिच्-कलच् । सूर्य्यभार्यायाम्, अतस्याम्, आदित्यभक्तायां, ब्राह्मयाञ्च । देशभेदे पु० ।
**सुवर्च्चिक** पु०सुवर्च्च+अस्त्यर्थेठन् । सर्ज्जिकाक्षारे । जतुकायांस्त्री०
**सुवर्चिन्** पु० सु+वर्च्च-णिच्-णिनि । सर्ज्जिकाक्षारे ।
**सुवर्ण** न० सुष्ठु वर्णोऽस्य । स्वनामख्याते धातुभेदे, हरिचन्दने, स्वर्णगैरिके, धने, नागकेशरे । 'कर्षं सुवर्णस्य सुवर्णसंज्ञ' मित्युक्ते कर्षमिते काञ्चने च यज्ञभेदे, धत्तूरे कणगुग्गुलौ च पु० । सुष्ठु वर्णो रूपमक्षरं वास्य । सुरूपे सुन्दराक्षरयुक्ते च त्रि० । 'न सुवर्णमयी तनुः परं ननु वागपि तावकी तथे'ति नैषधम् ।
**सुवर्णक** न० सुवर्णमिव इवार्थे कन् । पित्तले, सुष्ठु वर्णोऽस्य कप् । सुन्दरवर्णयुक्ते त्रि० । [ल्याम् (चांपाकला) ।
**सुवर्णकदली** स्त्री० सुष्ठु वर्णो यस्याः कर्म० । स्वर्णवर्णकद-
**सुवर्णकार** पु० सुवर्णं सुवर्णमयभूषणादि करोति कृ-अच् । (सेकरा) स्वर्णकारे जातिभेदे ।
**सुवर्णगैरिक** सुवर्णमिव पीतं गैरिकम् । (वर्णकनाटि) गैरिकभेदे । [म्बल्याम् ।
**सुवर्णनकुली** स्त्री० सुवर्णमिव पीता नकुली । महाज्योति-
**सुवर्णप्रसव** न० सुवर्णस्य प्रसव इव । एलवालुके ।
**सुवर्णवणिज्** पु० सुवर्णस्य वणिक् क्रयविक्रयादिकर्त्ता । जातिभेदे (सोनारवेने) स्वर्णवणिक्प्रभृतयोऽप्यत्र ।
**सुवर्णयूथी** स्त्री० सुवर्णमिव पीता यूथी । पीतवर्णयूथिकायाम्
**सुवर्णवर्णा** स्त्री० सुवर्णस्येव वर्णो यस्याः । हरिद्रायाम् स्वर्णतुल्यवर्णयुक्ते त्रि० ।
**सुवर्णा** स्त्री० सुष्ठु वर्णो यस्याः । कालागुरुणि, वाद्यालके च स्वर्णक्षीर्य्यां, हरिद्रायाम्, आखुकर्ण्यां च स्त्री०ङीप् ।
**सुवयस्** स्त्री० सुष्ठु वयोऽस्याः । प्रौढायां स्त्रियाम् ।
**सुवल्लि(ल्ली)** स्त्री० प्रा० । सोमराजीलतायाम् ।
**सुवहा** स्त्री० सुखेन उह्यते वायुनासौ सु+वह-खल् । शेफालिकायां, रास्नायां, गोधापद्याम्, एलापर्ण्याम्, शल्लक्यां, वीणायां, त्रिवृतायाम्, रुद्रजटायां, हंसपद्यां, गन्धनाकुल्यां, मुसल्यां, नीलसिन्धुवारे च । सुखवाह्ये त्रि० ।
**सुवास** पु० सुष्ठु वासः । सद्गन्धे सुखनिवासे च । इव० । सद्गन्धयुक्ते, सन्निवासान्विते च त्रि० ।
**सुवासिनी** स्त्री० सुखेन वसति सु+वस-णिनि । चिरण्टयां चिरं पितृकुलवासिन्याम् स्त्रियाम् ।
**सुविद्** पु०सुष्ठु वेत्ति विद्-क्विप् । पण्डिते । सुष्ठु विद्यते लभ्यते विद्-लाभे क्विप् । गुणाढ्यायां स्त्रियाम् ।
**सुविद** पु० सु+विद्-क । कञ्चुकिनि ।
**सुविदत्** पु० सुविदं गुणाढ्यां स्त्रियमतति अत-क्विप् । नृपे
**सुविदल्ल** पु० सुविदत्तं राजानं लाति ला-क । अन्तःपुरेऽधिकृते, कञ्चुकिनि च । सुविदत्ता राज्ञः लीयते ला-क । अन्तःपुरस्थनार्य्याम् स्त्री० । [युक्ते त्रि० ।
**सुविनीता** स्त्री० सु+वि+नी-क्त । सुशीलायां गवि । सुविनय-
**सुवीज** पु० सुष्ठु वीज्यतेऽसौ वीज-क । (खसखस) वृक्षभेदे इव० । सुन्दरवीजयति त्रि० । प्रा० । सुन्दरे वीजे न० ।
**सुवीरक** न० सु+वीर ण्वुल् । सौवीराञ्जने ।
**सुवीराम्ल** न० सुवीरयति वीर्य्यान्वितं करोति सु+वीर-अच् कर्म० । काञ्जिके । [प्रा० । उत्तमे वीर्य्ये न० ।
**सुवीर्य्य** न० सुष्ठु वीर्य्यं यस्मात् । वदरीफले । वनकार्पास्यां स्त्री०,
**सुवृत्त** पु० सुष्ठु वृत्तः वर्त्तुलः । सूरणे (ओल) सुन्दरवृत्तान्विते त्रि० शतपत्त्र्यां, काकल्यां, द्राक्षायाञ्च स्त्री० ।
**सुवेगा** स्त्री० सुष्ठु वेगो वायुनिस्सारणवेगो यस्याः ५ब० । महाज्योतिष्मत्याम् ।
**सुवेल** पु०सुगता वेला समुद्रकूलं येन । त्रिकूटपर्व्वते । सुष्ठु वेला मर्य्यादा स्थितिः यस्य । शान्ते, प्रणते च त्रि० ।

सुवेश पु० सुखेन विश्यते उपभुज्यते सु+विश-घञ् । श्वेतेक्षौ
सुन्दरवेशयुक्ते त्रि० । [सुन्दरव्रतयुक्ते त्रि० ।
सुव्रता स्त्री० सुष्ठु व्रतं नियमो यस्याः । सुशीलायां गवि
सुशर्म्मन् पु० सु+शृ-मनिन् सुष्ठु शर्म्म सुखं यस्य । नृपभेदे
सुन्दरसुखवति त्रि० ।
सुशल्य पु० सुष्ठु दृढं शल्यं यस्मात् । खदिरे । [रक्ते च
सुशवी स्त्री० सु+शव-अच् गौरा०ङीष् । कारवेल्ले, कृष्णजी-
सुशाक न० सुष्ठु शाको यस्मात् ५ब० । आर्द्रके । तत्संयोगे
हि शाकस्य सुस्वादुता । सुष्ठु शाको यस्य । चञ्चु-
शाके, तण्डुलीये, (नटेशाक) भिण्डायाञ्च पु० ।
सुशिख पु० सुन्दरी शिखा यस्य । वह्नौ, चित्रकवृक्षे च
शोभन शिखायुक्ते त्रि० मयूरशिखायां स्त्री० ।
सुशीत न० प्रा० । पीतचन्दने अतिशीतलस्पर्शे । तद्वति त्रि०
सुशीतल न० प्रा० । गन्धतृणे अतिशीतगुणयुक्ते त्रि० ।
सुशीता स्त्री० प्रा० । शतपत्रयाम्, शीतगुणवत्यां स्त्रियां च ।
सुशीम पु०सु+श्यै मक् सम्प्रसारणञ्च । शीतस्पर्शे । तद्वति त्रि०
सुशील पु० सुन्दरं शीलमस्य । विष्णुपार्श्वचरभेदे शोभनचरि-
तान्विते त्रि० । [युक्ते त्रि०
सुश्रीक स्त्री० सुन्दरी श्रीरस्य कप् । सल्लकीवृक्षे । सुन्दरश्री-
सुश्रुत पु० सु श्रूयते सु+श्रु-क्त । विश्वामित्रमुनिपुत्रे चिकि-
त्साशास्त्रकर्त्तरि मुनिभेदे, तत्कृतग्रन्थे च । सुन्दरश्रुते त्रि०
'देवाकर्ण्य सुश्रुतेन चरकस्योक्तेनेति, नैषधम् ।
सुश्लिष्ट त्रि० सु+श्लिष-क्त । सुसंयुक्ते दृढमिलिते ।
सुषम पु०सुन्दरः समः प्रा०स० । शोभने, समे च परमायां
शोभायां स्त्री० । [जीरके, कृष्णजीरके च ।
सुषवी स्त्री० सु+सु-अच् गौ०ङीष् । कारवेल्ले, क्षुद्रकारवेल्ले,
सुषामन् त्रि० सुष्ठु साम यस्य सुषामादि०षत्वम् । सुसान्त्वने
स्त्रियां वा डाप् ङीप् च ।
सुषि स्त्री० शुष-इन् पृ० शस्य सः । शुषौ छिद्रे ।
सुषिर न० शुष-किरच् पृ० शस्य सः । छिद्रे । [त्रि०
सुषीम पु० सुष्ठु सीमा यस्य । शीतलस्पर्शे । तद्वति, मनोज्ञे च
सुषुप्त न० सु+स्वप-भावे क्त । 'यत्र सुप्तो न कञ्चन कामं
कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तमिति' श्रुत्युक्ते
ज्ञानमूढ्यावस्थाभेदे । कर्त्तरि क्त । तदवस्थान्विते त्रि०
सुषुप्ति स्त्री० सु+स्वप-क्तिन् । सुषीदति नाड्यां मनसः संयोग-
रूपे सर्व्वज्ञानशून्ये वेदान्तोक्ते सर्व्वपदार्थशून्ये च व्यवस्था-
भेदे 'सुषुप्तिकाले सकले विलीने' इति श्रुतिः ।
सुषुम्ना, स्त्री० सुषु शब्दमव्यक्तं म्नायति यत्र म्ना-क ।
तन्त्रोक्ते मेरुदण्डवाह्यस्थे इडापिङ्गलानाड्योर्मध्यस्थे सूक्ष्मे
नाडीभेदे ।
सुषेण पु० सुष्ठु सेनयति सेनां करोति अच् षत्वम् । कर-
मर्द्दके (करमचा) वेतसे, चिकित्सके-वानरभेदे च, त्रिवृति
स्त्री० ङीप् । कन् अत इत्त्वम् । कृष्णत्रिवृति स्त्री० ।
सुष्ठु अव्य० सु+स्था-कु । अतिशये, प्रशस्ते, सत्ये च ।
सुसंस्कृत त्रि० सु+सम्+कृ-क्त सुट् च । प्रयत्नेन घृतादि-
नानाद्रव्येण पक्वे व्यञ्जनादौ ।
सुसम्पद् स्त्री०प्रा० । सौभाग्ये सुष्ठु सम्पद् यस्य । सुसम्पद्युक्ते त्रि०
सुसार पु० सुष्ठु सारोऽस्य । रक्तखदिरे ।
सुसिकता स्त्री० प्रा० । शर्करायाम् । उत्तमवालुकायां ब०व०
सुस्थ त्रि० सुखेन तिष्ठति स्था-क । आरोग्येण युक्ते सुखिनि च
सुस्ना स्त्री० सु+स्नै-क । (खेसारी) शमीधान्यभेदे ।
सुस्नात त्रि० सुष्ठु स्नातः सु+स्ना-क्त । मङ्गलद्रव्येण कृतस्नाने
सुहित त्रि० सु+धा-क्त । तृप्ते, विहिते च । प्रा० । सुन्दरहिते
न० । ५ब० । अग्निजिह्वाभेदे स्त्री० ।
सुहृद् पु० सुष्ठु हृदयं यस्य मित्रार्थे हृदादेशः । मित्रे
ज्योतिषोक्ते लग्नाच्चतुर्थस्थाने च ।
सुहृदय त्रि० सुष्ठु हृदयं यस्य । प्रसन्नमनस्के । प्रा० । सुचित्ते न०
सुहृद्बल न० सुहृदेव बलम् । मित्ररूपे सैन्ये ।
सू स्त्री०सू-क्विप् । सूतौ, प्रसवे, क्षेपे प्रेरणे च ।
सूक न० सू-प्रेरणे क्विप् स्वार्थे कन् । उत्पले, वाणे, वाते च
सूकर पु० सू-इत्यव्यक्तं शब्दं करोति कृ-अच् । वराहे,
कुलालकारे, मृगभेदे च । वराहक्रान्तायां, वराहयोषिति च
स्त्री० ङीप् ।
सूक्त न० सु+वच-क्त । सुन्दरकथने, एकार्थप्रतिपादके एक-
दैवत्ये वेदमन्त्रसमुदाये च । यथा श्रीसूक्तं पुरुषसूक्तमित्यादि
तानि च वेदे बहूनि सन्ति तत्र महादानोपयोगीनि कति
चित् सूक्तानि तत्तद्दानादिप्रकृतौ अस्माभिः उद्धृतानि ।
'जप्यानि सूक्तानि तथैव चैषा'मिति वह्निपुराणम् ।
सूक्ष्म न० सूच—मन् । कतके, अध्यात्मपदार्थे, अलङ्कारभेदे
च । कतकवृक्षे पु० । अणुपरिमाणवति, अल्पे च त्रि० ।
सूक्ष्मकृष्णफला स्त्री० सूक्ष्मं कृष्णं फलं यस्याः । मधु-
जम्बूवृक्षे ।
सूक्ष्मतण्डुल पु० सूक्ष्मास्तण्डुलोऽस्य । (खसखस) इतिख्याते,
पिप्पल्यां स्त्री० । [कुशाग्रीयबुद्धौ ।
सूक्ष्मदर्शिन् त्रि० सूक्ष्मं पश्यति दृश-णिनि । अत्यन्तसूक्ष्मबुद्धौ
सूक्ष्मपत्र पु०सूक्ष्मं पत्रमस्य । धान्यके, वनजीरके, देवसर्षपे,

जतुबदरे, क्षुरपर्ण्यां, वनवर्ब्बुर्य्यां, वावलवृक्षे, लोहितेक्षौ च। शतपुष्पायां, यवानिकायां, लघुब्राह्म्यां दुरालभायां, आकाशमांस्याञ्च स्त्री०। कप् अत इत्त्वम्। तत्रैव।

**सूक्ष्मपिप्पली** स्त्री० कर्म्म०। वनपिप्पल्याम्।

**सूक्ष्मपुष्पा** स्त्री० सूक्ष्माणि पुष्पाण्यस्याः। यवतिक्तायाम्।

**सूक्ष्मफला** स्त्री० सूक्ष्मं फलमस्याः। भूम्यामलक्याम्।

**सूक्ष्मबदरी** स्त्री० कर्म०। भूमिबदर्य्याम्।

**सूक्ष्मभूत** न० कर्म०। वेदान्तप्रसिद्धे अपञ्चीकृते भूम्यादीनां पञ्चानां भूतानां सूक्ष्मांशभेदे।

**सूक्ष्ममूला** स्त्री० सूक्ष्मं मूलमस्याः। जयन्त्याम्।

**सूक्ष्मवल्ली** स्त्री० कर्म०। ताम्रवल्ल्यां, जतुकायाञ्च।

**सूक्ष्मवीज** पु० सूक्ष्मं वीजमस्य। (खसखस) ख्याते वृक्षे।

**सूक्ष्मशर्करा** स्त्री० कर्म०। वालुकायाम्।

**सूक्ष्मशाख** पु० सूक्ष्मा शाखाऽस्य। जालवर्वुरे।

**सूक्ष्मशालि** पु० कर्म०। अणुधान्ये श्यामाकादौ।

**सूक्ष्मा** स्त्री० सूक्ष–अच् टाप्। यूथिकायां, क्षुद्रैलायां, करुण्यां, वालुकायाञ्च।

**सूक्ष्मैला** स्त्री० कर्म०। क्षुद्रैलायाम् (गुजराटी एलाच्)।

**सूच** पैशुन्ये (अन्तर्दोहे) अद०चु०उभ०सक०सेट्। सूचयति ते असुसूचत् त।

**सूचक** त्रि० सूचयति अन्तर्द्रुह्यति सूच-ण्वुल्। पिशुने अन्तर्दोहवति, बोधके च। काके, कुक्कुरे, विड़ाले, पिशाचे, सिद्धिगणे, वृद्धे, नाटकप्रसिद्धे सूत्रधाराख्ये प्रधाननटे, कथके, सूक्ष्मशालौ च पु०।

**सूचन** न०सूच-ल्युट्। हिंसने, ज्ञापने च। युच्। तत्र, दृष्टौ, पीड़ायाम् अभिनये च स्त्री०।

**सूचि(ची)** स्त्री० सूच-इन् वा ङीप्। शिखायां, सीवनसाधने स्वनामख्याते लौहमयपदार्थे च। [सौचिकि (दरजि)।

**सूचिक** त्रि० सूचिः तया सीवनं शिल्पमस्य ठन्। सूच्या-

**सूचिका** स्त्री० सूचि+स्वार्थे कन्। सूच्याम् सूचिरिव इवार्थे कन्। हस्तिशुण्डायाम्। [मिततया सेव्यत्वात्तथात्वम्।

**सूचिकाभरण** न० वैद्यकोक्ते औषधभेदे तस्य च सूच्यग्र-

**सूचिकामुख** पु० सूचिवेव क्रमसूक्ष्मं मुखमस्य। शङ्खे।

**सूचिचैल** न० सूच्याकारं चैलम्। लीलावत्यां प्रसिद्धे सूच्याकारके चैलभेदे।

**सूचित** त्रि० सूच-क्त। कथिते, बोधिते, हिंसिते च।

**सूचिपत्रक** पु० सूचिरिव पत्रमस्य कप्। शितावरशाके सूचीदलादयोप्यत्र।

**सूचिपुष्प** पु० सूच्याकारं पुष्पं पुष्पाग्रं यस्य। केतकवृक्षे सूचीपुष्पादयोप्यत्र।

**सूचिशालि** पु० कर्म०। सूक्ष्मधान्ये श्यामाकादौ।

**सूचीपत्त्रा** स्त्री० सूचीव पत्त्रमस्याः। गण्डदूर्व्वायाम्।

**सूचीमुख** सूचीव मुखमस्य। सितकुशे। हीरके न०।

**सूच्यग्रस्थूलक** पु० सूच्यग्रमिव स्थूलः स्वार्थे कन्। (उलुखड़) तृणभेदे।

**सूत** पु० सू-प्रसवे प्रेरणे ऐश्वर्य्ये वा क्त। सूर्य्ये, । क्षत्रियजाते ब्राह्मणीगर्भजे वर्णसङ्करभेदे, तष्टरि, सारथौ बन्दिनि, मागधे ; लोमहर्षणाख्ये पुराणवक्तरि च पारदे पु०न०। प्रसूते, प्रेरिते च त्रि०।

**सूततनय** पु० सूतस्य तनयः। भारतप्रसिद्धे राधेये कर्णे सूतपुत्रादयोप्यत्र। तस्य सूतपालितत्वात्तथात्वम्।

**सूति** स्त्री० सू-क्तिन्। प्रसवे 'प्रबलैः सूतिमारुतैरिति' स्मृतिः सूयते कण्डुते सोमोऽत्र सू-आधारे क्तिन्। सोमाभिषवभूमौ।

**सूतिका** स्त्री० सू-क्त कन् अत इत्त्वम्। नवप्रसूतायां स्त्रियाम् 'उदक्यां सूतिकां विनेति' स्मृतिः।

**सूतिकागार** न० सूतिकाया निवासयोग्यमगारम्। सूतिकागृहे। सूतिकागृहादयोप्यत्र।

**सूतिकारोग** पु० ६त०। वैद्यकोक्ते रोगभेदे।

**सूतिकाषष्ठी** स्त्री० सूतिकागृहपूज्या षष्ठी शाक०। सूतिकागारे—प्रसवावधि षष्ठे दिवसे पूज्यायां षष्ठीदेव्याम्।

**सूत्थान** त्रि० सुष्ठु उत्थानम् उद्योगो यस्य। चतुरे, कर्म्मकुशले। [रसपाने च।

**सूत्या** स्त्री० सू-क्यप् नि०। यज्ञाङ्गस्नानभेदे, अभिषवे, सोम-

**सूत्याशौच** न० सूतिनिमित्तकमाशौचम्। जननाशौचे 'शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते' इति स्मृतिः।

**सूत्र** ग्रन्थने वेष्टने च अद०चु०उभ०सक०सेट्। सूत्रयति ते असुसूत्रत् त।

**सूत्र** न०सूत्र-अच्। वस्त्रसाधने तन्तौ, व्यवस्थायां, नाटकसाधने, प्रस्तावे 'स्वल्पाक्षरमसंदिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुरि'त्युक्ते शास्त्रभेदे च

**सूत्रकण्ठ** पु० सूत्रं कण्ठे यस्य। विप्रे, कपोते, खञ्जरीटे च।

**सूत्रधार** पु० सूत्रं नाट्यसाधनं धारयति धृ-णिच्-अण्। नाट्याङ्गसाधनयुक्ते नाटकप्रस्तावके प्रधाननटे, 'सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते' इति दशरूपकम् इन्द्रे, शिल्पिभेदे (सुतार) च।

सूत्रपुष्प पु० सूत्रगर्भं पुष्पं यस्य । कार्पासे । [(दरजी) ।
सूत्रभिद् पु० सूत्रं, भिनत्ति सूच्या, भिद-क्विप् । सूच्याजीवे
सूत्रयन्त्र न० सूत्रवापनयन्त्रम् । (तांत) सूत्रवापनयन्त्रे ।
सूत्रला स्त्री० सूत्रं लाति ला-क । तर्कुट्याम् (टेको) ।
सूद पु० सूदयति व्यागान् सूद-अच् । सूपकारके, व्यञ्जनभेदे सूपे, सारथ्ये, अपराधे, लोध्रे, पापे च ।
सूदन न०सूद-ल्युट् । हिंसने, निःक्षेपे, अङ्गीकारे च ।
सूदशाला स्त्री० ६त० । पाकशालायाम् ।
सून न० सू-क्त तस्य नः । पुष्पे, प्रसवे च । कर्त्तरि-क्त । विकसिते जाते च लि० ।
सूना स्त्री० सू-क्त तस्य नः । प्राणिवधस्थाने 'पञ्च सूना गृहस्थस्येति, मनुः तनयायाम्, गलशुण्डिकायाम् मांसविक्रये च ।
सूनु पु० सू-नु । पुत्रे अनुजे, सूर्य्ये, अर्कवृक्षे च कन्यायां-स्त्री० वा ऊङ् ।
सूनृत न० सुन्दयति अनेन सु+ऊन्द-त-घञर्थे क । सत्ये-प्रियेवाक्ये, मङ्गले च तद्वति लि० ।
सूप पु० सुखेन पीयते सु+पा-घञर्थे क पृ० । (दालि) व्यञ्जनभेदे सुवपति सु+वप-क पृ० । सूपकारे पाचके । आधारे क । भाण्डे । करणे क । सायके ।
सूपकार पु० सूपं करोति कृ-अण् । पाचके ।
सूपधूपन न सूपो धूप्यतेऽनेन । हिङ्गौ, सूपपाके हि हिङ्गुधूपदानं पाकशास्त्रे प्रसिद्धम् । [पर्णासे ।
सूपपर्णी स्त्री० सूपसाधनस्य मुद्गस्येव पर्णमस्याः ङीप् । मुद्ग-
सूपश्रेष्ठ पु० सूपेषु तत्साधनेषु श्रेष्ठः । मुद्गे ।
सूपाङ्ग न० सूपस्य तत्संस्कारकमङ्गमुपकरणम् । हिङ्गौ ।
सूर पु० सवति प्रेरयति कर्म्मणि लोकान् सू-क्रन् । सूर्य्ये, अर्कवृक्षे च । सूर-क । पण्डिते ।
सूरण पु० सूर-ल्युट् । सूरणे (ओल) ।
सूरत लि० सु+रम-क्त पृ० । दयालौ ।
सूरसूत पु० ६त० । अरुणे, गरुड़ाग्रजे ।
सूरि पु० सू-क्रिन् । सूर्य्ये, अर्कवृक्षे, यादवभेदे, पण्डिते च 'सदा पश्यन्ति सूरय' इति श्रुतिः राजसर्षपे स्त्री०ङीप् ।
सूरिन् पु० सूर-णिनि । पण्डिते । [अपोपदेशत्वान्न षः ।
सूर्क्ष(क्ष्य) अनादरे भ्वा०प०सक०सेट् । सूर्क्ष(क्ष्य)ति असूर्क्षीत्(क्ष्यीत्)
सूर्क्ष(क्ष्य)ण न० सूर्क्ष-(क्ष्य) ल्युट् । अनादरे ।
सूर्प पु०न० । शूर्प-पृ० शस्य सः । शूर्पशब्दार्थे ।
सूर्पणखा स्त्री० शूर्प इव नखा यस्याः पृ० शस्य सः णत्वम् । रावणभगिन्याम् ।

सूर्म्मि स्त्री०शूर्म्मि+पृ० शस्य सः । शूर्म्मिशब्दार्थे वा ङीप् ।
सूर्य्य पु० सृ-क्यप् नि० दीर्घश्च । दिवाकरे, अर्कवृक्षे, दानवभेदे च ।
सूर्य्यकान्त पु० सूर्य्यस्य कान्तः प्रियः । स्फटिकमणौ सूर्य्यसम्पर्कात् यत्राग्निसम्भवस्तस्मिन् मणौ च (आतसी) ।
सूर्य्यग्रहण न० सूर्य्यस्य राहुणा तदाक्रान्तभूच्छायया ग्रहणमाक्रमणम् । ज्योतिषोक्ते राहुप्रविष्टभूमिच्छायया सूर्य्यमण्डलस्य आक्रमणरूपे ग्रासे
सूर्य्यज पु० सूर्य्यात् जायते जन-ड । शनिग्रहे, यमे, वैवस्वते मनौ, सुग्रीववानरे च सूर्य्यपुत्रादयोऽप्यत्र । यमुनायां स्त्री० ।
सूर्य्यभक्त पु० सूर्य्यस्य भक्त इव प्रियः । बन्धूकवृक्षे ।
सूर्य्यमणि पु० सूर्य्यप्रियः मणिः । सूर्य्यकान्तमणौ ।
सूर्य्यलता स्त्री० सूर्य्यभक्ता लता । आदित्यभक्तायाम् ।
सूर्य्यवल्ली स्त्री० सूर्य्यतुल्यपुष्पिका वल्ली । अर्कपुष्पिकावृक्षे ।
सूर्य्यसारथि पु०६त० । अरुणे गरुडाग्रजे ।सूर्य्यसूतादयोऽप्यत्र
सूर्य्या स्त्री० सूर्य्यस्य भार्या टाप् । अमानुष्यां, संज्ञानाम्न्यां सूर्य्यभार्यायाम् । मानुष्यां कुन्त्यान्तु ङीप् । सूरीत्येव ।
सूर्य्यालोक पु० ६त० । आतपे रौद्रे ।
सूर्य्यावर्त्त पु० सूर्य्यं इवावर्त्तते आ+वृत-अच् । (हुड़हुड़िया) क्षुपभेदे (सुवर्चिया) शाके च आदित्यभक्तायां स्त्री० ।
सूर्य्याश्मन् पु० सूर्य्यप्रियः अश्मा । सूर्य्यकान्तमणौ ।
सूर्य्योढ पु० सूर्य्येण सूर्य्यास्तकालेन ऊढः प्रापितः वह-क्त । सूर्य्यास्तसमये आगतातिथौ ।
सृकाल पु० सृ कालन् कस्य नेत्त्वम् । शृगाले ।
सृक्क(न्) न० सृज-कन् कनिन् वा कस्य नेत्त्वम् । ओष्ठप्रान्तभागे 'सृक्कणी परिलेढि चेति' स्मृतिः । 'महाबाहुश्च शोभितो न्यसिंहवदिति ।'स्रोपात् कमध्यतायस्य ।
सृक्कन् न०सृज-क्वनिप् । ओष्ठप्रान्तभागे । पृ० सृक्किन् । अमल
सृग पु० सृ-गक् गस्य नेत्त्वम् । भिन्दिपालास्त्रे ।
सृगाल पु० सृ-गालन् गस्य नेत्त्वम् । जम्बूके, दैत्यभेदे च ।
सृजकाचार पु० सृजति यर्क्षसितं सृज-क ततः स्वार्थ कन् कर्म० । सर्ज्जिकाचारे । [सृष्टोत्यपि ।
सृणि पु० सृ-निक् । शत्रौ । अङ्कुशास्त्रे स्त्री० तत्र वा ङीप् ।
सृ(णि)णीका स्त्री० सृणि+कन् ईकन् वा । लालायाम् ।
सृति स्त्री०सृ-भावे क्तिन् । गमने । करणे क्तिन् । पथि । [च
सृत्वर त्रि० सृ-क्वरप् । गमनकर्त्तरि स्त्रियां ङीप् सा च मातरि
सृप गतौ भ्वा०पर०सक०अनिट् । सर्पति असृपत् । अबोप-

देशत्वान्न षः । [पृभद्रत्येव धातुः अषोपदेशत्वमस्य चिन्त्यम्
**सृभ** हिंसे भ्वा०पर०सक० सेट् क्त्वा वेट् । सर्भति असर्भीत् ।
**सृमर** पु० सृ-क्मरच् । मृगभेदे, गमनशीले त्रि० । [च ।
**सृष्ट** त्रि० सृज-क्त । निर्मिते, युक्ते, निश्चिते, बहुले, भूषिते त्यक्ते
**सृष्टि** स्त्री० सृज-क्तिन् । निर्माणे, विश्वस्य निर्माणे, स्वभावे, च । कर्म्मणि क्तिन् । सृज्यमाने 'या सृष्टिः स्रष्टुराद्येति' शकुन्तला । [गर्भदात्रीक्षुपे ।
**सृष्टिप्रदा** स्त्री० सृष्टिं सर्जनं गर्भं प्रददाति प्र+दा-क ।
**सेक** पु० सिच-घञ् । सेचने जलादिना आर्द्रीकरणे । [पात्रभेदे
**सेकपात्र** न० सिच्यतेऽनेन सिच-करणे घञ् कर्म० । (सेंउती)
**सेक्तृ** पु० सिञ्चति रेतः सिच-तृच् । पत्यौ । सेचके त्रि० ।
**सेचक** पु० सिञ्चति तोयेन पृथिवीम् सिच-ण्वुल् । मेघे, सेककर्त्तरि त्रि० ।
**सेचन** न० सिच-भावे ल्युट् । जलादिना आर्द्रीकरणे करणे ल्युट् । सेचन्यां, क्षुद्रसेकपात्र्यां स्त्री० ङीप् ।
**सेटु** पु० सिट्-उन् । (तरमुज) वृक्षे ।
**सेतु** पु० सि-तुन् । क्षेत्रादेर्जलधारणार्थे (आल) (जाङ्गाल) पदार्थे, वरुणवृक्षे, तन्त्रोक्ते प्रणवात्मके मन्त्रे च स्वार्थे कन् । वरुणवृक्षे ।
**सेतुबन्ध** पु० ६त० । लङ्कागमनार्थं श्रीरामेण नलकपिद्वारा कारिते समुद्रोपरि आलीबन्धे, क्षेत्रादेरालीबन्धे च ।
**सेतुभेदिन्** पु० सेतुं भिनत्ति भिद-णिनि । दन्तीवृक्षे ।
**सेतुवृक्ष** पु० सेतुनामको वृक्षः । वरुणवृक्षे सेतूपरिस्थे वृक्षे च
**सेल** न० सि-इलन् । (बेड़ि) निगडे ।
**सेना** स्त्री० सि-न सह इनेन प्रभुणा वा । सैन्ये । [रणे च ।
**सेनाङ्ग** न० ६त० । हस्त्यश्वरथपदातिसंघाते, सेनाया उपक-
**सेनाचर** पु० सेनायां चरति चर-ट । सेनागामिनि 'सेनाचरीभवदिभाननेति' नैषधम् । [सेनापतौ च ।
**सेनानी** पु० सेनां देवसेनां वा नयति नी-क्विप् । कार्त्तिकेये,
**सेनापति** पु० ६त० । कार्त्तिकेये, सैन्याध्यक्षे च ।
**सेनामुख** न० ६त० । सैन्याग्रे, हस्त्यश्वादिसंख्याविशेषे, '(हस्तिनः त्रयः रथाः त्रयः अश्वा नव पदातयः पञ्चदश एतत् समुदाये' । [यामिके सैन्ये ।
**सेनारक्ष** पु० सेनां रक्षति रक्ष-अण् । सेनारक्षाकारके
**सेफ** पु० सि-फ । शेफे पुंसोऽसाधारणचिह्ने ।
**सेमन्ती** स्त्री० सिम-झि गौ० ङीप् । (सेयोती) पुष्पवृक्षे ।
**सेलु** पु० सि-लु । श्लेष्मातकवृक्षे ।
**सेवक** पु० सीव्यति सिव-ण्वुल् । सीवनकर्त्तरि (दरजी) सेव-ण्वुल् । भृत्ये, दासे, अनुचरे च त्रि० ।
**सेवधि** पु० सेवं सेवनं दधाति धा-कि । शङ्खप्रभृतौ निधौ ।
**सेवन** न० सिव-सेव-वा ल्युट् । सूच्यादिना वस्त्रादेर्योजने आश्रयणे, उपभोगे, बन्धने, पूजने, भजने च । सीव्यतेऽनया ल्युट् । सूच्यां स्त्री० ङीप् ।
**सेवा** स्त्री० सेव-अ । भजने, आराधने, उपभोगे, आश्रयणे च
**सेवित** त्रि० सेव-क्त । पूजिते, आराधिते, आश्रिते, उपभुक्ते च
**सेव्य** न० सेव-ण्यत् । वीरणमूले । अश्वत्थे, हिज्जलवृक्षे च पु० सेवार्हे त्रि० । वन्दावृक्षे स्त्री० ।
**सैंहली** स्त्री० सिंहले देशे भवा अण् ङीप् । सिंहपिप्पल्याम्
**सैंहिक** पु० सिंहिकायां भवः ठक् । राहौ, तस्याः अपत्यम् ढक् । सैंहिकेयोऽप्यत्र । [सिकताप्रचुरदेशे त्रि० ।
**सैकत** न० सिकताः सन्त्यत्र अण् । वालुकाप्रचुरे नद्यादितटे
**सैकतेष्ट** न० सैकतं स्थानमिष्टं यस्य । आर्द्रके ।
**सैतवाहिनी** स्त्री० सितायाः शर्करायाः अयम् अण् सैतो मधुररसस्तं वहति वह-णिनि । बाहुदायां नद्याम् ।
**सैद्धान्तिक** पु० सिद्धान्तं वेत्ति ठक् । सिद्धान्ताभिज्ञे ।
**सैनापत्य** न० सेनापतेर्भावः कर्म वा यञ् । सेनापतिधर्मे, तत्कर्मणि च 'सैनापत्यमुपेत्य व' इति कुमारः ।
**सैनिक** पु० सेनायां समवैति ठक् । मिलिते हस्त्यश्वादौ ।
**सैन्धव** न० सिन्धुनदीसमीपे देशे भवम् अण् । लवणभेदे सिन्धोरदूरभवः । अण् । घोटके, तस्य सिन्धुदेशसमुद्रसमीपस्थारव्यदेशोद्भवत्वात् तथात्वम् ।
**सैन्धवघन** पु० सैन्धवमिव घनः । सैन्धवशिलावत् समन्तादेकरसात्मके चिदानन्दस्वरूपे परमेश्वरे ।
**सैन्य** पु० सेनायां समवैति ञ्य । मिलिते हस्त्यश्वादौ । सेनानां संघः ष्यञ् । सेनासमुदाये न० ।
**सैरन्ध्री** स्त्री० सीरं हलं धरति धृ-मूल० क मुम् च सैरन्ध्रः कृषकस्तस्येदं शिल्पकर्म अण् तदस्यास्ति अच् गौ० ङीष् । परगृहस्थे स्ववशे शिल्पकारिणि स्त्रीभेदे पृ० सैरिन्ध्रीत्यप्यत्र ।
**सैरिभ** पु० सीरे हले तद्वहने इभ इव शूरः शक० ततः स्वार्थेऽण् । महिषे, 'सेवे सैरिभमर्द्दिनीमिह महालक्ष्मीमिति' महालक्ष्मीध्यानम् । [स्त्रियाम् । स्वार्थे कन् तत्रैव ।
**सैरीय** पु० सीरस्येदम् अण् सैरं हलाकारमर्हति छण् ।
**सैरेय** स्त्री० सैरं सीराकारमर्हति ढक् । स्त्रियाम् । ढकञ् । सैरेयकोऽप्यत्र ।
**सैवाल** न० सेवायै मीनादीनामुपभोगाय अलति पर्याप्नोति अच्

सेवालः ततः स्वार्थे अण् । शैवाले स्वार्थे कन् । तत्रैव ।

**सोढ** त्रि० सह-क्त वा ढ्रभावः । क्षान्ते तितिक्षिते । कर्त्तरि क्त । शीतादिसहनशीले त्रि० ।

**सोढृ** त्रि० सह-तृच् वा ढ्रभावः । सहनकर्त्तरि क्षमाशीले

**सोत्कण्ठ** त्रि० सह उत्कण्ठया । औत्सुक्यान्विते अभीष्टलाभेच्छया विलम्बासहिष्णुत्वयुक्ते ।

**सोत्प्रास** न० उद्+प्र-अस-घञ् सह उत्प्रासेन । सोल्लुण्ठने, अन्यार्थकस्य वाक्यस्य अन्यार्थत्वकल्पनया तदुत्तरार्थके, वाक्ये, प्रियवाक्ये च । सशब्दहासे पु० ।

**सोदय** न०त्रि० सह उदयेन प्रादुर्भावेण वृद्ध्या, वा । प्रादुर्भूते, वृद्धियुक्ते, लाभयुक्ते (सुदयुक्ते) च । [भगिन्यां स्त्री० ।

**सोदर** पु० सह समानमुदरं यस्य । एकोदरभवे भ्रातरि-

**सोदर्य्य** पु० सह समाने उदरे शयिता यत् सादेशः । एकोदरजाते भ्रातरि । भगिन्यां स्त्री० ।

**सोनह** न० सु-विच् सवे नह्यते नह घञर्थे क । लशुने ।

**सोन्माद** पु० सह उन्मादेन । उन्मत्ते, उन्मादिष्णौ ।

**सोपप्लव** पु० सह उपप्लवेन । समाक्रान्तभूच्छायेन राहुणा योगरूपोपप्लवसहिते चन्द्रे तथाभूतचन्द्रच्छायायोगयुक्ते सूर्य्ये च । [गया कृतदानादौ ।

**सोपाधि(क)** सह उपाधिना वा कप् । उपाधियुक्ते प्रतिलाभा

**सोपान** न० उप-अन-भावे घञ् सह विद्यमानः उपानः ; उपरि गतिरनेन । आरोहणसाधने काष्ठादिनिर्म्मिते (पैठा) प्रभृतौ पदार्थे ।

**सोभाञ्जन** पु० शोभाञ्जन+पृ० । (शजना) वृक्षे ।

**सोम** पु० सू-मन् । चन्द्रे, कर्पूरे, कुवेरे, यमे, वायौ, वसुभेदे, जले, सोमलतौषधौ, तद्रसे, अमृते, दीधितौ च । सह उमया । शिवे, वानरेशे-सुग्रीवे च । [विष्णौ ।

**सोमगर्भ** पु० सोमस्य तदात्मकान्तरूपमोक्षस्य गर्भः स्थानम् ।

**सोमज** न० सोमात् तच्चरितौषधिस्वरसपानात् जायते जन-ड । दुग्धे चन्द्रजाते त्रि० । बुधे पु० ।

**सोमतीर्थ** न० सोमेन तपसा त्वा कृतं तीर्थम् । प्रभासतीर्थे ।

**सोमप** पु० सोमं तद्रसं पिबति पा-क । यज्ञे-सोमरसपानकर्त्तरि पितृगणभेदे ब० व० । पा-क्विप् सोमपाप्यत्र ।

**सोमपत्त्र** पु० सोमस्य ओषधिविशेषस्येव पत्त्रमस्य । (उलुखड़) तृणभेदे ।

**सोमपीति(थि)न्** पु० पीतमनेन इति सोमं पीती पृ० वा तस्य थः । यज्ञे-सोमरसपायिनि । पा-क्वनिप् । सोमपीवाप्यत्र ।

**सोमबन्धु** पु० सोमस्य बन्धुः, सोमो बन्धुरस्य वा । सूर्य्ये तद्वृद्धिकारत्वात् तस्य तथात्वम् चन्द्रजे बुध पु० कुमुद न० ।

**सोमभू** पु० सोम एव भूरुत्पत्तिस्थानं यस्य । बुधग्रहे, चन्द्रवंश्ये क्षत्रिये च । [यागभेदे ।

**सोमयाग** पु० सोमेन यागः । त्रिवर्षसाध्ये सोमरसपानाङ्गके

**सोमयाजिन्** पु० सोमेन यजते यज-णिनि । सोमयागकर्त्तरि

**सोमयोनि** न० सोमः योनिरस्य । चन्दनभेदे ।

**सोमराजी** स्त्री० सोमेन राजते राज-अच् गौ०ङीष् । (सोमराज) ओषधिभेदे । स्वार्थे कन् । सोमराजिकाप्यत्र । राज-णिनि । सोमराजीत्यप्यत्र पु० ।

**सोमलता** स्त्री० सू-मन् कर्म० । स्वनामख्यातायां लतायाम्

**सोमलतिका** स्त्री०सोमलतेव इवार्थे कन् अत इत्त्वम् । गुडूच्याम्

**सोमवंश** पु० सोमस्य वंशः । चन्द्रवंशे चन्द्रावधिके गोत्रपरम्पराजाते क्षत्रिये च । [श्वेतखदिरे, कट्फले च ।

**सोमवल्क** पु० सोमस्येव वल्कमस्य । करञ्जे, रीठाकरञ्जे,

**सोमवल्लिका** स्त्री० सोमवल्लीव इवार्थे कन् । सोमराज्याम् स्वार्थे कन् । सोमलतायाम् ।

**सोमवल्ली** स्त्री० सोमायास्तताय वल्ली । गुडूच्याम् । सोमरूपा वल्ली । सोमलतायाम् सोमराज्यां, ब्राह्म्यां, सुदर्शनायाञ्च ।

**सोमवार** पु० सोमस्वामिको वारः । चन्द्रस्वामिके दिने ।

**सोमविक्रयिन्** पु० सोमं विक्रीणाति वि+क्री-णिनि । सोम लतायाः तद्रसस्य वा विक्रेतरि ।

**सोमवृक्ष** पु० सोम इव वृक्षः । कट्फलवृक्षे, श्वेतखदिरे च ।

**सोमसार** पुः सोम इव शुभ्रः सारोऽस्य । श्वेतखदिरे ।

**सोमसिद्धान्त** पु० सोमकृतः सिद्धान्तः । चन्द्रप्रोक्ते ज्योतिष ग्रन्थभेदे । [सोमलतानिष्पीडने ।

**सोमसुत्** पु० सोमं सुतवान् सु-भूते क्विप् । यज्ञार्थं कृत

**सोमसुत्वन्** पु० सोमं सुतवान् भूते क्वनिप् । कृतसोमरसपाने

**सोमसुता** स्त्री० इत० । नर्मदानद्याम् । बुधे पु० । सोमोद्भवादयोऽप्यत्र पु० स्त्री० यथायथम् ।

**सोमसूत्र** न० सोमस्य जलस्य सूत्रमिव प्रणाली । जलनिर्गम प्रणाल्याम्, शिवलिङ्गस्यगौरीपट्टस्य जलनिर्गमस्थाने च 'सोमसूत्रं न लङ्घयेदिति' तन्त्रम् ।

**सोल्लुण्ठ** त्रि० सह उल्लुण्ठेन । भूमौ पार्श्वपरिवर्त्तादियुक्ते अश्वादौ अन्यार्थवाक्यस्य अन्यपरत्वयुक्ते वाक्ये च ।

**सोल्लुण्ठन** न० सह उल्लुण्ठनेन । अन्यथास्थितस्य अन्यरूपेण परिवर्त्तनसहिते वाक्ये (स्तुतिपरस्य निन्दापरता निन्दापरस्य च स्तुतिपरता इत्येवं रूपे वाक्ये) ।

**सौकर्य्य** न० सुकरस्य भावः ष्यञ् । अनायाससाध्यत्वे ।

**सौखसुप्तिक** त्रि० सुखसुप्तिं सुखेन शयनं पृच्छति ठञ् । प्रातःकाले सुखशयनप्रच्छके वैतालिकादौ ।

**सौख्य** न० सुखमेव चातु० ष्यञ् । सुखे । [तत्सम्बन्धिनि त्रि० ।

**सौगत** पु० सुगत एव अण् । सुगते बुद्धभेदे तस्येदमण् । सुग-

**सौगन्ध** न० सुष्ठु गन्धोऽस्य स्वार्थे अण् । कत्तृणे. रामकर्पूरे ।

**सौगन्धिक** न० सुष्ठु गन्धः सुगन्धः तस्येदम् ठञ् । कह्लारे । [सुगन्धौ ।

**सौगन्ध्य** न० सुगन्धस्य भावः ष्यञ् । सद्गन्धे । स्वार्थे ष्यञ् ।

**सौचिक** पु० सूचीं तत्कर्मसीवनमुपजीवति ठन् । (दरजी) सीवनकारके । [च । 'सौजन्यजन्यं यश' इत्युद्भटः ।

**सौजन्य** न० सुजनस्य भावः ष्यञ् । सुजनतायां सद्व्यवहारे

**सौण्डी** स्त्री० शुण्डाकारोऽस्त्यस्याः अण् ङीप् इ० यस्य सः । गजपिप्पल्याम् ।

**सौत** पु० पाणिन्यादिभिः सूत्रेण कर्मविशेषाय पठितः अण् । भ्वाद्यादिद्शगणीयभिन्नेषु सूत्रमात्रपठितेषु धातुषु ।

**सौत्रामणी** स्त्री० सूत्रामा इन्द्रो देवताऽस्य अण् सपूर्व-त्वात् न टिलोपः णत्वम् । इष्टिभेदे तत्र हि सुरापानं विप्राणामपि विहितम् 'सौत्रामण्यां सुरां पिबेदिति' श्रुतिः

**सौदामनी** स्त्री० सुदामा पर्वतभेदस्तेनैका दिक् तस्मात् भवत्वात् अण् । विद्युति । सा हि स्फटिकमयस्य सुदाम्नः पर्वतस्यैकदेशे जाता । अप्सरोभेदे च । सुदामा ऐरावत-गजस्तस्य पत्नी ङीप् । ऐरावतयोषिति । तत्र ङीपि अतोऽल्लोपे । सौदाम्नीत्यपि ।

**सौदायिक** न० सुदायात् बन्धुकुलात् आगतः ठञ् । "ऊढ़या कन्यया वापि पत्युः पितृगृहेऽथ वा । भर्त्तुः सकाशात् पित्रो र्वा लब्धं सौदायिकं स्मृतमिति, स्मृत्युक्ते स्त्रीधनभेदे 'सौदायिकं धनं प्राप्य स्वातन्त्र्यं परिकीर्त्तितमिति" स्मृतिः

**सौदास** पु० चन्द्रवंश्ये कल्माषपादे नृपतौ ।

**सौध** पु०न० सुधया लेपनद्रव्येण रक्तम् अण् । राजसदनभेदे सुधावर्णमर्हति अण् । रूप्ये न० । सुधासम्बन्धिनि त्रि० ।

**सौनिक** पु० सूना वध्यस्थानं तदुपलक्षितमांसादि पण्यमस्य ठञ् । मांसक्रयविक्रयोपजीविनि व्याधे (कसाइ) ।

**सौन्दर्य्य** न० सुन्दरस्य भावः ष्यञ् । चारुतायां, "अङ्ग-प्रत्यङ्गकानां यः सन्निवेशो यथोचितम् । सुश्लिष्टः सन्धिबन्धः स्यात् तत्सौन्दर्य्यमुदाहृतमि"त्युक्ते अङ्गादीनां मनोहरत्वे

**सौपर्ण** न० सुष्ठु पर्णानि तद्रूपमर्हति अण् । मरकतमणौ ।

**सौपर्णेय** पु० सुपर्ण्या विनतायाः अपत्यम् ढक् । गरुडे ।

**सौप्तिक** त्रि० सुप्तिकाले रात्रौ भवम् ठञ् । रात्रियुद्धे सुप्ता-नधिकृत्य कृतो ग्रन्थः ठञ् । महाभारतपर्व्वभेदे ।

**सौभ** न० सुष्ठु सर्व्वत्र लोके भाति भा-क स्वार्थे अण् । कामचारिणि, पुरे, हरिश्चन्द्रनृपपुरे च ।

**सौभद्र** पु० सुभद्रायां भवः अण् । सुभद्रापुत्रे अभिमन्यौ ।

**सौभद्रेय** पु० सुभद्राया अपत्यम् ढक् । सुभद्रासुते अभिमन्यौ ।

**सौभरि** पु० मुनिविशेषे ।

**सौभागिनेय** पु० सुभगाया अपत्यम् ढक् इनादेशः द्विपद-वृद्धिः । सुभगापुत्रे । तत्कन्यायां स्त्री० ङीप् ।

**सौभाग्य** न० सुभगस्य भावः ष्यञ् द्विपदवृद्धिः । प्रियत्वे स्वार्थे ष्यञ् । सिन्दूरे, टङ्कणे च । विष्कम्भादिषु मध्ये चतुर्थे योगे पु० । [ऐन्द्रजालिके ।

**सौभिक** पु० सौभं कामचारिपुरं तन्निर्माणं शिल्पमस्य ठञ् ।

**सौमनस्य** न० सुमनसो भावः ष्यञ् । प्रशस्तचित्तत्वे ।

**सौमनस्यायनी** स्त्री० सौमनस्यमयतेऽनया अय-ल्युट् ङीप् इत०। मालत्याम्, तत्कलिकायाञ्च । [लक्ष्मणे ।

**सौमित्र(त्रि)** पु० सुमित्रायां भवः अण्, बाह्वादि० इञ् वा।

**सौम्य** त्रि० सोमो देवताऽस्य अण् । सोमदेवताके टित्त्वात् स्त्रियां ङीप् । सोमइव शाखादित्वात् य स्वार्थे अण् । मनोहरे प्रियदर्शने अनुग्रे च त्रि० बुधे पु० । ततः स्वार्थिक प्रत्ययाभावे सोम्योऽप्ययम् । 'सदेव सोम्येदमग्र आसी'दिति श्रुतिः ज्योतिषोक्ते शुभग्रहे वृषादिसमराशौ, उडुम्बरवृक्षे' सोमपायिनि-विप्रे पु० । [मत्स्यराज ।

**सौम्यकृच्छ्र** पु० कर्म० सोमदेवताके कृच्छ्रसाध्ये व्रतभेदे । [शत-

**सौम्यगन्धी** स्त्री० सौम्यः अनुग्रः गन्धो यस्याः गौ० ङीप् ।

**सौम्यग्रह** पु० कर्म० । ज्योतिषोक्ते चन्द्रबुधगुरुशुक्ररूपे शुभग्रहे

**सौर** पु० सूरस्य इदम् सूरो देवतास्य अण् वा । सूर्यपुत्रे शनैश्चरे यमे च । सूर्यदेवताके त्रि० स्त्रियां ङीप् । सूरेण निर्वृत्तः अण् । एकैकराशौ तदंशेषु सूर्यगतिसाध्ये दिन-मासादौ त्रि० । 'विवाहादौ स्मृतः सौरः' इति स्मृतिः उडुम्बरवृक्षे पु० । [तुम्बुरुवृक्षे ।

**सौरज** पु० सूर्यदं सौर आलोकस्तस्मै जायते जन-ड ।

**सौरभ** न० सुरभेर्भावः अण् । सद्गन्धे, सौरभमस्यास्ति अच् । सुरभिरस्यास्ति अण् वा । कुङ्कुमे, बोले च न० ।

**सौरभेय** पु० सुरभेरपत्यम् ढक् । गवि स्त्रियां ङीप् । 'सौरभेयीश्च एव चेति' गोदानमन्त्रः तस्या इदम् ढक् । सुरभि सम्बन्धिनि त्रि० ।

**सौराष्ट्र** पु० सुष्ठु राष्ट्रमस्यास्ति प्रशा० अण् । (सुरट) देश-भेदे । सुराष्ट्रे भवः अण् । सुराष्ट्रदेशभवे त्रि० । विषभेदे न०

सौराष्ट्रिक न० सुराष्ट्रदेशे भवः ठक् । विषभेदे ।

सौरि पु० सूरस्यापत्यम् इञ् । शनैश्चरे 'सौरिवारेऽमृता-नोति' ज्योतिषम् ।

सौरिरत्न न० सौरिप्रियं रत्नम् शाक० । नीलके मणौ ।

सौरेय पु० सुरायै हितम् ढक् । शुक्लझिण्टाम् स्वार्थे कन् तत्रैव । [ताम्रमयद्रव्यनिर्माणकर्त्तरि (कांसारि)

सौल्विक त्रि० सुल्वं ताम्रपात्रादिनिर्माणं शिल्पमस्य ठक् ।

सौव त्रि० स्वस्येदम् अण् न वृद्धिः वात्पूर्वं औत् । आत्म-संबन्धिनि । [स्वग्रामभवे पदार्थे ।

सौवग्रामिक त्रि० स्वग्रामे भवः ठक् न वृद्धिः वात्पूर्वं औत् ।

सौवर्चल न० सुवर्चलदेशे भवम् अण् । कृष्णलवणे ।

सौवर्णभेदिनी स्त्री० सुवर्णस्य विकारः अण् सौवर्णमिव भिनत्ति प्रकाशते भिद-णिनि । प्रियङ्गौ ।

सौवस्तिक पु० स्वस्तिकरणे कुशलः ठक् न वृद्धिः वात्पूर्वं औत् । पुरोहिते ।

सौविद पु० सुविदन्ति सु+विद-क स्वार्थेऽण् । अन्तःपुररक्षके

सौविदल्ल पु० सुष्ठु विदन्तं विद्वांसमपि लाति ला-क स्वार्थेऽण् । अन्तःपुररक्षके ।

सौवीर पु० सुष्ठु वीरो यत्र सुवीरो देशभेदः तत्र भवः अण् । स्रोतोऽञ्जने । काञ्जिके, बदरे च न० स्वार्थे कन् । काञ्जिकभेदे न० । बदरवृक्षे पु० ।

सौवीरसार पु०न०कर्म० । स्रोतोऽञ्जने ।

सौवीराञ्जन न० सौवीराख्यमञ्जनम् । अञ्जनभेदे 'सौवीरन्तु यमैरामैः प्रकीर्णं निस्तुषैः कृतम् गोधूमैरपि सौवीरमि'त्या-द्युक्ते अञ्जनभेदे ।

सौष्ठव न० सुष्ठु भद्रं तस्य भावः अण् न टिलोपः । अति-शये 'स सौष्ठवौदार्यविशेषशालिनीमि'ति भारविः ।

सौहार्द न० सुहृदो भावः अण् । स्नेहे, मित्रत्वे च ।

सौहित्य न० सुहितस्य तृप्तस्य भावः ष्यञ् । तृप्तौ, 'नातिसौहि-त्यमापद्येदिति' स्मृतिः ।

सौहृद न० सुहृदो भावः अण् । मित्रत्वे बन्धुतायाम् ।

स्कद उत्प्लुत्य गतौ अक० उद्धृतौ, आप्लावे च सक० भ्वा०आ० सेट् इदित् । स्कन्दते अस्कन्दिष्ट । [न्दत् त

स्कन्द समाहारे अद०चु०उभ०सक०सेट् । स्कन्दयति ते अचस्क

स्कन्द गतौ शोषणे च भ्वा०पर०सक०अनिट् । स्कन्दति अस्क-दत् अस्कान्त्सीत् ।

स्कन्द पु० स्कन्दते उत्प्लुत्य गच्छति अच् । कार्त्तिकेये ।

स्कन्दन न० स्कन्द-ल्युट् । रेचने,क्षरणे,गतौ शोषणे च ।

स्कन्दांशक पु० स्कन्दस्यांश एवांशो यस्य कप् । पारदे । तयोः शिववीर्यजत्वादेकांशत्वम् ।

स्कन्ध पु० स्कद्यते आरुह्यते कर्मणि घञ् पृ० । अंसे (कांध) वृक्षस्य काण्डे (गुंडि) न्तृपे,व्यूहे, युद्धे,समूहे, काये,भद्रादौ, छन्दोभेदे, सौगतसिद्धेषु विज्ञानादिषु पञ्चसु 'सुन्नात्मस्कन्ध पञ्चकमि'ति माघः । पथि, ग्रन्थपरिच्छेदे च । 'स्कन्धे-द्वादशमियुक्तमि'ति भागवतविशेषणम् ।

स्कन्धतरु पु० स्कन्धप्रधानस्तरुः । नारिकेलवृक्षे ।

स्कन्धफल पु० स्कन्धे फलमस्य । नारिकेलवृक्षे, उडुम्बरवृक्षे च

स्कन्धबन्धना स्त्री० स्कन्धे बन्धनमस्याः । मधुरिकायाम् ।

स्कन्धरुह पु० स्कन्धात् रोहति रुह क । वटवृक्षे ।

स्कन्धवाह पु० स्कन्धेन वाहयति वह-णिच्-अच् । शकटादि-द्वारा स्कन्धवाहके वृषादौ । ल्यु । तत्रैव । [शाखायाम् ।

स्कन्धशाखा स्त्री० स्कन्धात् प्रभृति शाखा । वृक्षस्य प्रधान

स्कन्धशृङ्ग पु० स्कन्धपर्य्यन्तं शृङ्गमस्य । महिषे ।

स्कन्धावार पु० स्कन्धार्थमावारः आ+वृ-घञ् । युद्धार्थसमुक्त-सैन्यानां स्थापने, तदाधारे-कटके च । [भावे क्त । क्षरणे न०

स्कन्न त्रि० स्कन्द-क्त । च्युते, गलिते, क्षरिते, शुष्के, गते च ।

स्कन्भ प्रतिघाते क्र्या० स्वा०उ०सक०सेट् । स्कभ्नाति स्कभ्नोते स्कभ्नोति स्कभ्नुते । अस्कम्भीत् अस्कम्भिष्ट ।

स्कभ स्तम्भे भ्वा०आ०सक०सेट् इदित् । स्कम्भते अस्कम्भिष्ट ।

स्कु उद्धृतौ आप्लावने च क्र्या० स्वा०उ०सक०अनिट् । स्कुनाति स्कुनीते स्कुनोति स्कुनुते । अस्कौषीत् अस्कोष्ट ।

स्कुद आप्लावने उद्धृतौ च भ्वा०आ०सक०सेट् इदित् । स्कुन्दते अस्कुन्दिष्ट । [स्कुभ्नाति स्कुभ्नोति । अस्कुभीत् ।

स्कुन्भ रोधने सौ० क्र्या०स्वादि० कार्थभागी प०सक०सेट् ।

स्खद विदारे दि०आ०सक०सेट् । स्खद्यते अस्खदिष्ट घटादि० स्खदयति । [स्खलयति स्खालयति ।

स्खल चले भ्वा०प०सक०सेट् वा घटा० । स्खलति अस्खालीत्

स्खलन न० स्खल-भावे ल्युट् । चलने पतने ।

स्खलित न० स्खल—भावे क्त । कूटयुद्धादौ-प्रकृत्या वीरमर्य्या-दातः पतने स्खलनमात्रे च । कर्त्तरि क्त । चलिते त्रि०

स्तन मेघशब्दे अद० चु०उभ०सक०सेट् । स्तनयति ते अतस्तनत् त

स्तन पु० स्तन-अच् । (माइ) स्त्रीणाम् अङ्गभेदे ।

स्तनन न० स्तन-ल्युट् । ध्वनिमात्रे, मेघशब्दे, कुन्थनशब्दे च ।

स्तनन्धय पु० स्त्री० स्तनं धयति धे-खश् मुम् च । अतिशिशौ स्त्रियां ङीप् । [टाप् ।

स्तनप पु०स्त्री०स्तनं पिबति पा-क । अतिशिशौ बालके । स्त्रियां

स्तनभर पु० ६त० । स्थूलस्तनभारे तदाभोगे च ।

स्तनयित्नु पु० स्तन-इत्नु । मेघे, मुस्तके, मेघशब्दे, विद्युति, मृत्यौ, रोगे च ।

स्तनवृन्त पु०स्तनस्य वृन्तद्वाग्रम् । स्तनाग्रे स्तनशिखाद्योप्यत्र

स्तनान्तर न० स्तनयोरन्तरम् । हृदये, स्तनमध्ये च ।

स्तनाभोग पु० ६त० । स्तनस्य परिपूर्णतायाम् ।

स्तनित न० स्तन—भावे क्त । मेघशब्दे, सुरतादिशब्दे च । कर्त्तरि क्त । शब्दिते त्रि० ।

स्तन्भ रोधने क्र्या० स्वा० प० सक० सेट् क्त्वा वेट् । स्तभ्नाति स्तभ्नोति अस्तभत् अस्तम्भीत् ।

स्तन्य न० स्तने भवम् यत् । स्तनजाते दुग्धे ।

स्तब्धरोमन् पु० स्तब्धानि रोमाणि यस्य । शूकरे ।

स्तभ स्तम्भने जडीभावे अक० तत्करणे, क्रियानिरोधे च सक० भ्वा० आ० सेट् इदित् । स्तम्भते अस्तम्भिष्ट ।

स्तम्ब पु० स्था-अम्बच् किच्च ष्ट० । काण्डरहिते झिण्टिकादौ वृक्षे, तृणादौ, गुच्छे च ।

स्तम्बकरि पु० स्तम्बं गुच्छं करोति कृ-इन् । व्रीहिधान्ये ।

स्तम्बघन पु० स्तम्बो हन्यतेऽनेन हन-क नि० । स्तम्बोन्मूलके खनित्रादौ । [खनित्रादौ ।

स्तम्बघ्न त्रि० स्तम्बो हन्यतेऽनेन हन-घअर्थे क । स्तम्बोन्मूलके

स्तम्बेरम पु० स्तम्बे वृक्षादीनां काण्डे गुच्छे गुल्मे वा रमते अच् अलुक् स० । गजे । [जडीभावे पु० ।

स्तम्भ पु० स्तम्भ-अच् । (थाम) स्थूणायाम् । भावे घञ् ।

स्तम्भन न० स्तम्भ—जडीकरणे भावे ल्युट् । जडीकरणे । करणे ल्युट् । तन्त्रोक्ते जडीकरणसाधने प्रयोगभेदे ।

स्तम्भन पु० स्तम्भयति स्तम्भ—णिच्-ल्यु । कन्दर्पस्य पञ्चसु बाणेषु मध्ये बाणभेदे ।

स्तव पु० स्तु-अप् । प्रशंसायाम्, स्तुतौ च ।

स्तवक पु० स्तु-वुन्, स्था-अवक ष्ट० वा । गुच्छे ।

स्तावक त्रि० स्तु-ण्वुल् । स्तुतिकारके ।

स्तिमित न० स्तिम-भावे क्त । आर्द्रतायाम्,अचाञ्चल्ये च । कर्त्तरि क्त । अचञ्चले, आर्द्रे च त्रि० ।

स्तुत पु० स्तु-क्त । कृतस्तवे ।

स्तुति स्त्री० स्तु-क्तिन् । स्तवे ।

स्तुतिपाठक पु० स्तुतिं पठति पठ-ण्वुल् । राजादेर्वन्दिनि ।

स्तुन्भ रोधने सौ० क्र्या० स्वा० कार्य्यभागी पर० सक० सेट् क्त्वावेट् । स्तुभ्नोति स्तुभ्नाति । अस्तुम्भीत् ।

स्तूप पु० स्तू-पक् स्तूप-अच् वा । राशीकृते मृत्तिकादौ संघाते. वंशे, निष्प्रयोजने च ।

स्तुभ पु० स्तुन्भ-मूल० क । छागे । [ प्रीत् अस्तृत अस्तरिष्ट ।

स्तृ विस्तारे स्वा० उ० सक० अनिट् । स्तृणोति स्तृणुते अस्ता-

स्तृ प्रीतौ अक० रक्षणे सक० स्वा० प० अनिट् । स्तृणोति अस्तार्षीत् । अषोपदेशत्वान्न षः । [पदेशत्वान्न षः ।

स्तृक्ष गतौ भ्वा० पर० सक० सेट् । स्तृक्षति अस्तृक्षीत् । अषो-

स्तृह वधे तु० प० सक० वेट् । स्तृहति अस्तर्हीत् अस्तृक्षत् । अषोपदेशत्वान्न षः ।

स्तॄ आच्छादने क्र्या० स्वा० उ० सक० सेट् । स्तृणाति स्तृणीते अस्तारीत् अस्तरिष्ट अस्तरीष्ट अस्तीर्ष्ट । [स्तेनत्-त ।

स्तेन चौर्य्ये अद० चु० उभ० सक० सेट् । स्तेनयति-ते अति-

स्तेन पु० स्तेन-घञ् । चौर्य्ये । अच् । चोरे त्रि० ।

स्तेप क्षेपे चु० उभ० सक० सेट् । स्तेपयति-ते अतिस्तिपत्-त । अषोपदेशत्वान्न षः ।

स्तेम पु० स्तिम-घञ् । आर्द्रीभावे, स्नेहे च ।

स्तेय न० स्तेनस्य भावः यत् नि० । चौर्य्ये "प्रत्यक्षं वा परोक्षं वा रात्रौ वा यदि वा दिवा । यत् परद्रव्यहरणं स्तेयं तत्परिकीर्त्तित" मित्युक्ते परद्रव्यापहारे । [ङीप् ।

स्तेयिन् त्रि० स्तेयमस्त्यस्य इनि । परद्रव्यापहारके । स्त्रियां-

स्तैन(न्य) न० स्तेनस्य भावः अण्, ष्यञ् वा । चौर्य्ये परद्रव्यापहरणे । स्तेन एव स्वार्थे ष्यञ् । चोरे त्रि० । [भावे च ।

स्तैमित्य न० स्तिमितस्य भावः ष्यञ् । जाड्ये, स्नेहे, आर्द्री-

स्तोक पु० स्तुच-घञ् । चातके, जलबिन्दौ च । अल्पे त्रि० ।

स्तोकक पु० स्तोकाय जलाय कायति शब्दायते कै—क । चातके

स्तोत्र न० स्तु-ष्ट्रन् । स्तवे—गुणकर्म्मादिभिः प्रशंसने ।

स्तोभ पु० स्तुभ-घञ् । अर्थशून्ये गानादिस्वरपरिपूरणार्थे शब्दभेदे, यथा सामवेदे इडा, होइ, प्रभृतयः । हेलने, स्तम्भने च

स्तोम आत्मगुणाविष्करणे अद० चु० उभ० अक० सेट् । स्तोमयति-ते अतुस्तोमत्-त ।

स्तोम पु० स्तोम-घञ् स्तु-मन् वा । समूहे, यज्ञे, स्तवे, च, मस्तके, धने, शस्ये, लौहदण्डे च न० । वक्रे त्रि० ।

स्त्यान न० स्त्यै-भावे क्त तस्य नः । स्नेहे, घनत्वे, संहतौ, आलस्ये, प्रतिशब्दे च । कर्त्तरि क्त । संहतिकारके, ध्वनिकारके च त्रि० । [अषोपदेशत्वान्न षः

स्त्यै संहतौ ध्वनौ भ्वा० अक० अनिट् । स्त्यायति अस्त्यासीत् ।

स्त्री स्त्री० स्तु-ड्रट् । योषिति नार्य्याम् ।

**स्त्रीगवी** स्त्री० स्त्री चासौ गौश्च यच् समा०। (गाभि) रोहिण्याम्।

**स्त्रीचित्तहारिन्** पु० स्त्रियाश्चित्तं हरति हृ-णिनि। भाञ्जने। स्त्रीमनोहारके त्रि०।

**स्त्रीचिह्न** न० स्त्रिया असाधारणं चिह्नम्। योनौ

**स्त्रीचोर** पु० स्त्रियाः चोर इव। कामुके।

**स्त्रीजित** पु० स्त्रिया जितः जि-क्त। स्त्रीवश्ये।

**स्त्रीधन** न० ६त०। स्त्रीस्वत्वाश्रये द्रव्यमात्रे इतिमिताक्षरादयः। "अध्यग्न्यध्यावाहनिकं भर्त्तृदायं तथैव च। भ्रातादत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृत" मित्येवं परिगणिते स्त्रीस्वत्वाश्रये धने इति दायभागादयः।

**स्त्रीधर्म्म** पु० ६त०। ऋतौ नारीकुसुमविकाशे रजसि।

**स्त्रीधर्म्मिणी** स्त्री० स्त्रीधर्मोऽस्त्यस्या इनि। ऋतुमत्यां स्त्रियाम्

**स्त्रीपुंधर्म्म** पु० स्त्रियाः पुंसश्च धर्मः तमधिकृत्य व्यवहारो वा। स्त्रीपुंसयोः यथाशास्त्राचाररूपे धर्मे तद्विषयके अष्टादशसु विवादेषु मध्ये विवादभेदे "स्त्रीपुंधर्मोविभागश्चेति" स्मृतिः। [विवादभेदे।

**स्त्रीपुंस** पु० द्विव० स्त्री च पुमांश्च अच् समा०। मिलितयोः स्त्रीपुरुषयोः।

**स्त्रीपुंसलक्षणा** स्त्री० स्त्रीपुंसयोर्लक्षणमस्याम्। स्तनश्मश्रुप्रभृतिस्त्रीपुरुषचिह्नधारिण्यां स्त्रियाम्।

**स्त्रीप्रिय** पु० ६त०। आम्रवृक्षे। नारीप्रियमात्रे त्रि०।

**स्त्रीलिङ्ग** पु० स्त्रिया इव लिङ्गं तत्कार्यं यस्य। स्त्रीलिङ्गविहितव्याकरणोक्तसंस्कारयुक्ते शब्दभेदे। ६त० स्त्रीचिह्ने न०।

**स्त्रीवश** पु० ६त०। स्त्रीवशीभूते।

**स्त्रीविधेय** पु० ६त०। स्त्रीवशीभूते।

**स्त्रीसंग्रहण** न० स्त्रियाः संग्रहणं यत्र। परस्त्रीहरणरूपे-

**स्त्रीसभ** न० स्त्रीणां सभा क्लीवत्वम्। स्त्रीसमाजे।

**स्त्रीसेवा** स्त्री० ६त०। स्त्रीसम्भोगे, व्यवायधर्मेण नारीसेवने।

**स्त्रीस्वभाव** पु० स्त्रिया इव स्वभावो यस्य। अन्तःपुररक्षके महल्लके ६त०। स्त्रीणां शीले।

**स्त्रैण** न० स्त्रिया इदम् अण् नञ्। स्त्रीस्वभावे,"स्त्रैणेन नीता विकृतिं लघिम्नेति" भट्टिः। स्त्रीविधेये, स्त्रीसम्बन्धिनि च त्रि०।

**स्थ** त्रि० स्था-क। स्थितिशीले प्रायेण उत्तरपदस्थित एवायं प्रयुज्यते यथा पदस्थः मार्गस्थः निकटस्थ इत्यादि।

**स्थग** संवरणे भ्वा० पर० सक० सेट् घटा० ञिचि न वृद्धिः। स्थगति, अस्थगीत्। अषोपदेशत्वान्न षः।

**स्थगन** न० स्थग-ल्युट्। आच्छादने।

**स्थगित** त्रि० स्थग-क्त। आवृते तिरोहिते। [करङ्के।

**स्थगी** स्त्री० स्थग्यते ऽनया घञर्थे क गौ० ङीष्। ताम्बूलपात्रे

**स्थण्डिल** न० स्थल इलच् नुक् लस्य ड। चत्वरे, उन्नत्यवनति शून्ये समीकृते प्रदेशे "निषेदुषी स्थण्डिल एव केवले" इति कुमारः। यज्ञार्थं परिष्कृतस्थाने, होमार्थे कुण्डप्रतिनिधित्वेन वालुकादिभिः कर्त्तव्ये मण्डलभेदे च"नित्यं नैमित्तिकं कर्म्म स्थण्डिले वा समाचरेत्। हस्तमात्रं तु तत् कुर्यात् वालुकाभिः समन्ततः" इति तन्त्रम्।

**स्थण्डिलशायिन्** पु० स्थण्डिले चत्वरे शेते व्रतवशात् शीणिनि। व्रतार्थं चत्वरे शयितरि। "स्थण्डिलशायिनश्चेति" भट्टिः। [चत्वरे शयितरि।

**स्थण्डिलेशय** पु० स्थण्डिले शेते अच् अलुक् समा०। व्रतार्थं

**स्थपति** पु० स्था-क तस्य पतिः। कञ्चुकिनि,शिल्पिभेदे,(छुतार) कुवेरे,अधीशे,वृहस्पतिसवनामकयागकर्त्तरि च। सत्तमे त्रि०

**स्थपुट** त्रि० तिष्ठति स्था-क स्थं पुटं यत्र। विषमोन्नतप्रदेशे, "स्थपुटगतमपि क्रव्यमव्यग्रमत्तीति" मालतीमाधवम्। विषमस्थाने-सञ्चारिणि-जीवे पु०।

**स्थल** स्थाने भ्वा० पर० अक० सेट् ज्वला०। स्थलति अस्थालीत्। ष्ठलधातुनैवायं गतार्थ इत्यन्ये।

**स्थल** न० स्त्री० स्थल-अच्। जलशून्ये-अकृत्रिमे-भूभागे। स्त्रीत्वपक्षे ङीप्। "वनस्थलीमर्म्मरपत्रमोक्षा" इति कुमारः। अकृत्रिमाकृत्रिमप्रदेशमात्रे, कृत्रिमभूभागे च न०।

**स्थलकन्द** पु० स्थलजः कन्दः। (वनओल) अग्राम्यकन्दे।

**स्थलकमल** न० स्थलजातं कमलम्। स्थलपद्मे।

**स्थलकुमुद** पु० स्थले कुमुदमस्यस्य सादृश्येन अच्। करवीरे।

**स्थलपद्म** न० स्थलजातं पद्मं शाक०। स्वनामख्याते पुष्पवृक्षे। स्थलजं पद्ममिव। मानके पु०।

**स्थलपद्मिनी** स्त्री० स्थलपद्मानां समूहः तेषां सन्निकृष्टदेशो वा इनि। स्थलपद्मसमूहे तद्युक्तवृक्षे च। "ददर्श इनः स्थलपद्मिनीं नल" इति नैषधम्।

**स्थलमञ्जरी** स्त्री० स्थलस्य मञ्जरीव। अपामार्गे।

**स्थलशृङ्गाट** पु० स्थलजातः शृङ्गाटः शाक०। गोक्षुरे तस्य कण्टकावृतत्वात् तथात्वम्। [कुमार्य्याम्।

**स्थलेरुहा** स्त्री० स्थले रोहति रुह्-क अलुक् स०। घृत

**स्थलेशय** पु० स्थले शेते शी-अच् अलुक् स०। वराहरुरु प्रभृतौ पशौ-स्थलशायिनि त्रि०।

**स्थविर** न० स्था-किरच् स्थवादेशः। शैलेये गन्धद्रव्ये। चतुर्मुखे ब्रह्मणि पु०। अचले,स्थिरे,वृद्धे च त्रि०। महाश्रावण्यां स्त्री०।

**स्थविष्ठ** त्रि० अतिशयेन स्थूलः इष्ठन् लोपे गुणः। अतिवृद्धे- ईयसु स्थवीयानपि। अतिवृद्धे। स्त्रियां ङीप्।

**स्थाणु** पु० स्था नु पृ० णत्वम्। शिवे,शाखाशून्यवृक्षे च।अस्त्र- भेदे पु० स्थविरे त्रि०। [तरि।

**स्थाण्डिल** पु० स्थण्डिले शयिता ऽण्। व्रतार्थं स्थण्डिले शयि

**स्थान** न० स्था-ल्युट्। स्थितौ, सादृश्ये, अवकाशे, सन्निवेशे, वसतौ, ग्रन्थसन्धौ, भाजने, निकटे, व्याकरणोक्ते प्रसङ्गे, (आदिश्यमानस्य यणादेः कारणभूते इगादौ)। नीतिवेदि- नामुपचयापचयहीने साम्यावस्थाने च।

**स्थानचञ्चला** स्त्री० स्थाने स्थितावपि चञ्चला। वर्वरीवृक्षे अल्पवातेन चञ्चलत्वात्तस्यास्तथात्वम्।

**स्थानाध्यक्ष** त्रि० स्थाने अध्यक्षः। स्थानरक्षके।

**स्थानिक** त्रि० स्थानेऽधिकृतः ठक्। स्थानाध्यक्षे।

**स्थानिन्** त्रि० स्थानमस्यास्ति रक्ष्यत्वेन। स्थानरक्षके। स्थानं प्रसङ्गः अस्त्यर्थे इनि। व्याकरणोक्ते आदिश्यमानयणादेः कारणे इगादौ "स्थानिवदादेशोऽनल्विधाविति" पाणिनिः

**स्थानीय** न० स्थीयतेऽस्मिन् स्था-आधारे अनीयर्। नगरे, स्थानं वासमर्हति स्थानस्येदम् वा छ। वासयोग्ये, देशे स्थानसम्बन्धिनि च त्रि०।

**स्थाने** अव्य० स्था-ने। योग्यत्वे,औचित्ये च "स्थानेभवानेकनरा- धिपः सन्निति" रघुः। सत्ये, सादृश्ये, करणार्थे च॥

**स्थापत्य** पु० स्थपतिरेव स्वार्थे ष्यञ्। अन्तःपुररक्षके कञ्चुकि- प्रभृतौ। तस्य भावः ष्यञ्। स्थपतिधर्मे न०।

**स्थापन** न० स्था-णिच्-ल्युट्। आरोपणे, समाधौ, पुंसवनाख्ये गर्भसंस्कारे च युच्। स्थापनाप्यत्र स्त्री० सा च निवे- शने च। [पाठायाम्।

**स्थापनी** स्त्री० स्थाप्यतेऽनया स्था-णिच्-करणे ल्युट्।

**स्थापित** त्रि० स्था-णिच्-क्त। निश्चिते,निवेशिते,न्यस्ते च।

**स्थामन्** न० स्था-मनिन्। सामर्थ्ये, बले च।

**स्थायिन्** त्रि० स्था-णिनि। स्थितिशीले,अलङ्कारोक्ते रसानु- कूले रत्यादिभावे पु०। "विभावेनानुभावेन व्यक्तः सञ्चा- रिणा तथा। रत्यादी रसतामेति स्थायी भावः सचेतसा मिति" साहित्य०। [पु०।

**स्थायुक** त्रि० स्था-उकञ्। स्थितिशीले। एकग्रामाधिकृते

**स्थाल** न० स्थलति तिष्ठत्यन्नाद्यत्र आधारे घञ्। (थाल) अन्न- पात्रे। पाकपात्रे (हाँड़ि) स्त्री० गौ० ङीष्।

**स्थालीपाक** पु० स्थाल्यां पाकः। गव्यदुग्धेन स्थाल्यां कृते पाकभेदे तद्विधानं वृहदभिधाने।

**स्थालीपुलाक** पु० स्थाल्याः पुलाकास्तण्डुलाः सन्त्यत्र एक धर्मतोज्ञापकत्वेन अच्। मीमांसकोक्ते "स्थालीस्थास्तण्डु- लाएते सर्वे विक्लित्तिभागिनः। समकालाग्निसंयोगभागि- त्वात् प्रतिपन्नव" दित्यनुमानकल्पके न्यायभेदे यथा एकस्य- पाकदर्शनेन अन्येषां पाकज्ञानम् एवं एकरूपाणां सर्वेषा मेकधर्म्माक्रान्तत्वमित्येवंरूपोद्भावनम्। [साधने वृक्षभेदे।

**स्थालीवृक्ष** पु० स्थाल्यै-वृक्षः। अश्वत्थाकारे स्थालीनिर्म्माण

**स्थावर** त्रि० स्था-वरच्। अचञ्चले स्थिरे, वृक्षादौ, भूम्यादौ च "स्थावरं जङ्गमञ्चैव यद्यपि स्वयमर्ज्जितमिति" स्मृतिः। पर्वते पु०। धनुर्गुणे न०। [प्रगमे भवतीति वृहदभिधाने।

**स्थाविर** न० स्थविरस्य भावः अण्। वृद्धत्वे तच्च सप्ततिवर्षा-

**स्थासक** पु० स्था-स-स्वार्थादौ कन्। अलङ्कारे, चार्चिक्ये जलबुद्बुदे च। [भङ्गिः।

**स्थास्नु** त्रि० स्था-स्नु। स्थितिशीले, "स्थास्नुरिवाचिरप्रभेति

**स्थित** त्रि० स्था-क्त। स्थिते, ऊर्द्धस्थतया दण्डायमाने, "स्थितायां स्थानमाचरेदिति" रघुः निश्चले 'प्रतिज्ञायुक्ते स्थितिशालिनि च। [स्थाने च।

**स्थिति** स्त्री० स्था-क्तिन्। मर्य्यादायां, न्याय्यपथावस्थाने,

**स्थिर** पु० स्था-किरच्। पर्व्वते, देवे, वृक्षे, कार्त्तिकेये, शनौ, मोक्षे, वृषे, धववृक्षे, ज्योतिषोक्तेषु वृषसिंहवृश्चिककुम्भ- राशिषु च। कठिने,निश्चले च त्रि०। शाल्मलौ, काकोल्यां, पृथिव्यां, शालपर्ण्याञ्च स्त्री०।

**स्थिरगन्ध** पु० स्थिरोगन्धो यस्य। चम्पकवृक्षे। पाटलायां, केतक्याञ्च स्त्री०। स्थिरगन्धयुक्ते द्रव्यमात्रे त्रि०।

**स्थिरच्छद** पु० स्थिरश्छदोयस्य। भूर्ज्जपत्रवृक्षे। [दौ च।

**स्थिरच्छाय** पु० स्थिराच्छाया यस्य। वृक्षमात्रे छायाप्रधाने वटा-

**स्थिरजिह्व** पु० स्थिरा अचञ्चला जिह्वा यस्य। मत्स्ये। [लीवृक्षे

**स्थिरजीविता** स्त्री० स्थिरं जीवितमायुष्यं यस्याः। शाल्म

**स्थिरतर** त्रि० अतिशयेन स्थिरः तरप्। अत्यन्तस्थिरे। ईश्वरे पु०।

**स्थिरपत्र** पु० स्थिराणि पत्राण्यस्य। हिन्ताले,।

**स्थिरपुष्प** पु० स्थिरं पुष्पमस्य। चम्पकवृक्षे,बकुलवृक्षे च।

**स्थिरपुष्पिन्** पु० स्थिरं पुष्पमस्त्यस्य इनि। तिलकवृक्षे।

**स्थिरफला** स्त्री० स्थिरं फलं यस्याः। कुष्माण्ड्याम्।

**स्थिरमति** स्त्री० स्थिरा-मतिः। स्थिरचित्ते, स्थिरा मति- र्यस्य। स्थिरबुद्धियुक्ते त्रि० "अनिवेतः स्थिरमति रिति" गीता। [भेदे, चिरस्थायियौवनयुक्ते त्रि०।

**स्थिरयौवन** न० पु० स्थिरंयौवनमस्य। विद्याधरादौ देवयोनि

**स्थिररङ्गा** स्त्री० स्थिरोरङ्गो रागोयस्याः। नील्याम्।
**स्थिररागा** स्त्री० स्थिरोरागोरञ्जनं यस्याः। दारुहरिद्रायाम्
**स्थिरसाधनक** पु० स्थिरं साधयति ल्यु ततः कन्। सिन्दु-
वारवृक्षे।
**स्थिरसार** पु० स्थिरः सारोयस्य। (सेगुण) शाकवृक्षे।
**स्थिराङ्घ्रिप** पु० कर्म्म०। हिन्तालवृक्षे।
**स्थिरायुस्** पु० स्थिरमायुर्यस्य दीर्घकालस्थायित्वात्। शाल्मलि-
वृक्षे। चिरजीविनि त्रि०।
**स्थुड** वरणे तुदा० कुटा० पर० सक० सेट्। स्थुडति अस्थु-
डीत् तुस्थोड। अपोपदेशत्वान्न षः।
**स्थूणा** स्त्री० स्था-नक् ऊदन्तादेशः पृ०। (खुटी) गृहस्तम्भे
"स्थूणावशेषं गृहमिति" साहि० लौहप्रतिमायाञ्च।
**स्थूरिन्** पु० स्था-क्रन् किच्च स्थूरो वृषादिर्भारवाहकः स्थूरो
ऽस्त्यस्य सादृश्येन इनि। वृषादिवत्पृष्ठेन भारवाहके
ऽश्वे। स्थूरस्य भावः अण् स्थौरं तदस्यास्ति इनि।
स्थौरीत्यप्यत्र। [स्थूलत्-त।
**स्थूल** बृंहणे अद० चु० उभ० अक० सेट्। स्थूलयति-ते अतु-
**स्थूल** त्रि० स्थूल-अच्। पीवरे, (मोटा) कूटे, समूहे च न०
मनसे पु०। गजपिप्पल्याम्, एर्वारौ, वृहदेलायाञ्च स्त्री०।
स्वार्थे कन्। पीवरे त्रि०। संज्ञायां कन् (उलुखड़) तृणभेदे पु०
**स्थूलकङ्गु** पु० कर्म०। वरकधान्ये (वोरधान)।
**स्थूलकणा** स्त्री० कर्म०। स्थूलजीरके द्विव०। पीनकणवति त्रि०।
**स्थूलकण्टक** पु० स्थूलः कण्टकोऽस्य। जालबर्व्वुरे। संज्ञायां
कन् अत इत्वम्। शाल्मलीवृक्षे स्त्री०।
**स्थूलकण्टा** स्त्री० स्थूलः कण्टः कण्टकोऽस्याः। वृहत्याम्।
**स्थूलकन्द** पु० स्थूलः कन्दोऽस्य। रक्तलशुने, सूरणे, हस्ति-
कन्दे, मानके च। [वृहच्चञ्चौ त्रि०।
**स्थूलचञ्चु** पु० स्थूला चञ्चुरिव शिखाऽस्य। महाचञ्चुशाके।
**स्थूलजीरक** पु० कर्म०। जीरकभेदे (कालजिरा)।
**स्थूलताल** पु० कर्म०। हिन्ताले।
**स्थूलदण्ड** पु० स्थूलोदण्डोऽस्य। देवनले। स्थूलनालोऽप्यत्र।
**स्थूलदर्भ** पु० स्थूलं दर्ं दृभ्यतेऽनेन दृभ-घञ्। मुञ्जे (मुज)।
**स्थूलदला** स्त्री० स्थूलानि दलानि यस्याः। घृतकुमार्य्याम्।
**स्थूलनास** पु० स्थूला नासाऽस्य। शूकरे, स्थूलनासिकोऽप्यत्र। वृ-
हन्नासावति त्रि०। [स्थूलत्वात्तथात्वम्।
**स्थूलपट्ट** पु० स्थूलं पट्टं यस्मात्। कार्पासे तत्सूत्रजपट्टस्य
**स्थूलपाद** पु० स्थूलाः पीनाः पादा अस्य न षाद्भावः। गजे
श्लीपदरोगे च। [स्त्री०। यवतिक्तायां स्त्री० ङीप्।
**स्थूलपुष्प** पु० स्थूलं पुष्पं यस्य। वकवृक्षे। पर्व्वतजातापराजितायां
**स्थूलफल** पु० स्थूलं फलमस्य। शाल्मलीवृक्षे। वृहत्फलान्विते
त्रि०। शणपुष्प्यां स्त्री० ङीप्। [पृथिव्यादौ भूते।
**स्थूलभूत** न० कर्म०। वेदान्तोक्ते प्रत्येकमेकात्मकतामापन्ने
**स्थूलमरिच** न० कर्म०। कक्कोले।
**स्थूललक्ष(क्ष्य)** त्रि० स्थूलं लक्षयति दानाय संकल्पते, स्थूलं लक्ष्य
वाऽस्य। बहुदातरि। [कायाम्।
**स्थूलवर्त्मकृत्** पु० स्थूलं वर्त्म करोति कृ-क्विप्। ब्राह्मणयष्टि
**स्थूलवल्कल** पु० स्थूलं वल्कलमस्य। रक्तलोध्रे। स्थूलत्वचान्विते त्रि०
**स्थूलवृक्षफल** पु० स्थूलस्य वृक्षस्येव फलमस्य। स्निग्धपिण्डी-
तकवृक्षभेदे (मयना)।
**स्थूलवैदेही** स्त्री० विदेहे भवा अण् कर्म०। गजपिप्पल्याम्।
**स्थूलशाटक** पु० कर्म०। स्थूलवस्त्रे स्थूलशाटिकादयोऽप्यत्र स्त्री०।
**स्थूलशालि** पु० कर्म०। महाशालौ।
**स्थूलशीर्षिका** स्त्री० स्थूलं शीर्षं यस्याः कप् अत इत्त्वम्।
क्षुद्रपिपीलिकायाम्। [लता)।
**स्थूलषट्पद** पु० षट्पद इव स्थूलः राज०। वरेलायाम् (वो-
**स्थूलस्कन्ध** पु० स्थूलः स्कन्धोऽस्य। लकुचे।
**स्थूलांशा** स्त्री० स्थूलः अंशोऽवयवोऽस्याः। गन्धपत्त्रायाम्।
**स्थूलाम्र** पु० कर्म०। आम्रभेदे।
**स्थूलैला** स्त्री० कर्म्म०। वृहदेलायाम्।
**स्थूलोच्चय** पु० स्थूलानामुपलानामुच्चयोऽत्र। गण्डशैले। स्थू-
लस्य गजस्योच्चयः। गजमध्यगतौ। वरण्डे, गजद-
न्तच्छिद्रे च।
**स्थेय** पु० स्थीयते विवादनिर्णायकतयाऽसौ स्था-यत्। विवादे-
संशयनिर्णायके, (जुरी) पुरोहिते च। स्थिरे त्रि०।
**स्थेयस्** त्रि० अतिशयेन स्थिरः ईयसु स्थादेशः। स्थिरतरे
त्रि० स्त्रियां ङीप्। इष्ठन् स्थेष्ठो ऽप्यत्र त्रि०। सान्त्वने न०।
**स्थैर्य्य** न० स्थिरस्य भावः ष्यञ्। स्थिरतायाम्।
**स्थौणेय(क)** पु० स्थूणायां तत्समीपे भवः ढक्। ग्रन्थिपर्ण
नामगन्धद्रव्ये।
**स्थौल्य** न० स्थूलस्य भावः ष्यञ्। पीवरत्वे।
**स्नपन** पु० स्ना-णिच्-पुक् ल्युट्। जलादिनाऽभिषेककरणे
**स्नव** पु० स्नु-अप्। क्षरणे, क्षरणे च।
**स्नसा** स्त्री० स्नस-अच्। स्नायौ।
**स्नातक** पु० स्ना-भावे क्त स्नानं वेदाध्ययनानन्तरं समावर्त्तनाख्य

स्नानं तदस्यास्ति कन्। वेदाध्ययनानन्तरं गार्हस्थ्याय व्रत-समावर्त्तनाङ्गस्नाने।

**स्नातकव्रत** न० ६त०। स्नातककर्त्तव्ये स्मृत्युक्ते व्रतभेदे, "अलाभे चैव कन्यायाः स्नातकव्रतमाचरेदिति" स्मृतिः।

**स्नान** न० स्ना-ल्युट्। शोधने, अवगाहने मज्जने, च तच्च। मन्त्रादि कारणभेदादष्टविधं विस्तरो बृहदभिधाने।

**स्नानतृण** न० स्नानार्थं तृणम्। कुशे।

**स्नानीय** त्रि० स्नानाय हितम् छ। स्नानसाधने तैलोद्वर्त्तनादौ। [वायुवाहिनाडीभेदे।

**स्नायु** स्त्री० स्नाति-शुध्यति दोषोऽनया स्ना उण्। शरीरस्थे

**स्निग्ध** त्रि० स्निह-क्त। स्नेहयुक्ते, वयस्ये, मसृणे, चिक्कणे च। रक्तैरण्डे, सरलवृक्षे च पु०। भक्तमण्डे न०। मेदायां स्त्री०।

**स्निग्धतण्डुल** पु० कर्म्म०। षष्टिधान्ये।

**स्निग्धता** स्त्री० स्निग्धस्य भावः। स्नेहे, प्रियत्वे च। [वृक्षे च।

**स्निग्धदारु** पु० स्निग्धं दारु काष्ठमस्य। सरलवृक्षे, देवदारु

**स्निग्धपत्त्रक** पु० स्निग्धं पत्त्रमस्य कप्। घृतकरञ्जे, गुच्छकरञ्जे, गर्जरतृणे च। बदर्य्यां, पालक्यां, काश्मीर्य्याञ्च स्त्री०।

**स्निग्धपिण्डीतक** पु० कर्म्म०। मदनवृक्षभेदे, पिण्डीतकभेदे

**स्निग्धफला** स्त्री० स्निग्धं फलमस्याः। नाकुल्याम्।

**स्निट** स्नेहे चु० उ० सक० सेट्। स्नेटयति- असिस्निटत्-त। अषोपदेशत्वान्न षः। [भाग्येऽस्नायौ स्त्री०।

**स्नु** पु० सानु+स्नु आदेशः स्ना-कु वा। पर्व्वतस्य समभू-

**स्नुक्छद** पु० स्नुह्यति क्विप् क्रुतम् स्नुक्,छदोऽस्य। चीरकञ्चुकीवृक्षे।

**स्नुत** पु० स्नु-क्त। क्षरिते जलादौ।

**स्नुषा** स्त्री० स्नु-सक्। पुत्त्रवध्वाम्, स्नुहीवृक्षे च।

**स्नुह्(हा)** स्त्री० स्नुह-क्विप् वा टाप्। स्नुहीवृक्षे।

**स्नुहि(ही)** स्त्री० स्नुह-इन् वा ङीप्। (मनसासिज) वृक्षे। "स्नुहीविटपसंश्रिता मिति" पुराणम्।

**स्नेह** पु० स्निह-घञ्। प्रेमणि, तैलादिरसभेदे, न्यायोक्ते गुणभेदे च यद्वशात् दाहाद्युत्पत्त्यम्।

**स्नेहन** स० स्निह-णिच्-ल्युट्। तैलादिमर्द्दने अभ्यङ्गे।

**स्नेहप्रिय** पु० स्नेहः तैलादिः प्रियोऽस्य। प्रदीपे।

**स्नेहभू** स्त्री० ६त०। श्लेष्माख्ये देहस्थे धातुभेदे, स्नेहपात्रे च

**स्नेहरङ्ग** पु० स्नेहेन रज्यते रन्ज-कर्म्मणि घञ्। तिले।

**स्नेहवत्** त्रि० स्नेहोऽस्यस्य मतुप् मस्य वः। स्नेहयुक्ते स्त्रियां ङीप्। सा च मेदायां पु० स्त्री०।

**स्नेहविद्ध** न० स्नेहेन विद्धम्। देवदारुणि। [स्नेहकारणे न०।

**स्नेहबीज** पु० स्नेहाढ्यं बीजमस्य। प्रियालवृक्षे। ६त०।

**स्नेहाश** पु० स्नेहमश्नाति अश-अण्। प्रदीपे।

**स्नेहिन्** पु० स्निह-णिनि। वयस्ये बन्धौ, स्नेहयुक्ते त्रि०। स्त्रियां ङीप्। [सन्दिष्ट।

**स्पद** ईषत्कम्पे भ्वा० आ० अक० सेट् इदित्। स्पन्दते अ-

**स्पन्द** पु० स्पदि-घञ्। ईषच्चलने, ईषत्कम्पे, क्रियाभेदे च। नेत्रस्पन्दादौ शुभाशुभविवेचनं बृहदभिधाने।

**स्पर्द्ध** संहर्षे (पराभिभवेच्छायाम्) भ्वा० आत्म० अक० सेट्। स्पर्द्धते अस्पर्द्धिष्ट। [न्नतौ च।

**स्पर्द्धा** स्त्री० स्पर्द्ध-अ। संहर्षे पराभिभवेच्छायां, साम्ये, क्रमो-

**स्पर्श** ग्रहणे, स्तेये च चु० उ० सक० सेट्। स्पर्शयति ते अपस्पर्शत् त।

**स्पर्श** पु०-स्पर्श-स्पृश-वा अच् घञ् वा। न्यायोक्ते त्वगिन्द्रियग्राह्ये गुणभेदे, ग्रहणे, रोगे, युद्धे, गुप्तचरे, उपतापके च। वायौ पु० स्पर्शवो त्रि०। स्पृश-णिच्-अच्। दाने स्पृश्यन्ते। वायुना जिह्वाग्रादयोऽत्र,घञ्। कादिषु मावसानेषु वर्ग्यवर्णेषु पु०

**स्पर्शन** न० स्पर्श-स्पृश-वा ल्युट्। ग्रहणे, स्पर्शे च। णिच् ल्युट्। स्पर्शने, दाने च। स्पृश-कर्त्तरि ल्यु। वायौ पु०।

**स्पर्शलज्जा** स्त्री० स्पर्शमात्रेण लज्जते लज्ज-अच्। लज्जालुवृक्षे

**स्पर्शशुद्धा** स्त्री० स्पर्शे शुद्धा। शतमूल्याम्। [दाण्यत।

**स्पर्ष्टृ** त्रि० स्पृश-तृच्। उपतापयितरि। रोगे पु०। अस्थ। स्प-

**स्पश** ग्रन्थे बाधने च भ्वा० उभ० सक० सेट्। स्पशति-ते अस्पशीत्-अस्पाशीत्। अस्पशिष्ट। [रपस्पशेति" माघः।

**स्पश** पु० स्पश-अच्। चरनाले, युद्धे, गूढचरे, च। "राजनीति-

**स्पष्ट** त्रि० स्पश-क्त नि० इडभावः। व्यक्ते, स्फुटे च।

**स्पृ** प्रीतौ अक० प्रीणने रक्षणे पालने च सक० स्वा० पर० अनिट्। स्पृणोति अस्पार्षीत्।

**स्पृक्का** स्त्री० स्पृश-कक् पृ० शस्य कः। पृक्कायाम्।

**स्पृश** स्पर्शे तु० पर० सक० अनिट्। स्पृशति अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्। [ङीप्।

**स्पृशा** स्त्री० स्पृश-क। सर्पघातिनीवृक्षे। कण्टकार्य्यां स्त्री०

**स्पृष्ट** त्रि० स्पृश-क्त। कृतस्पर्शे। भावे क्त। स्पर्शे न०।

**स्पृष्टास्पृष्ट** न० स्पृष्टेन आ सम्यक् स्पृष्टम्। परस्परस्पर्शने।

**स्पृष्टास्पृष्टि** न० स्पृश-भावे-क्त नञ्+स्पृश-क्तिन्, स्पृष्टञ्च अस्पृष्टिश्च द्वयोः समाहारः। स्पर्शास्पर्शयोः। "नगरे ग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यतीति" स्मृतिः। [पस्पृहत् त

**स्पृह** इच्छायां अद० चुरा० उभ० सक० सेट्। स्पृहयति-ते अ-

**स्पृहणीय** त्रि० स्पृह-अनीयर्। वाञ्छनीये, स्लाघ्ये च "अहो वतासि स्पृहणीयवीर्य्य" इति कुमारः।

**स्पृहयालु** त्रि० स्पृह-आलुच्। स्पृहाशीले। [कुमारः।

**स्पृहा** स्त्री० स्पृह-अङ्। इच्छायाम् "मिथुने स्पृहावतीति"

**स्पृह्य** पु० स्पृह-यत्। मातुलङ्गवृक्षे। वाञ्छनीये त्रि०।

**स्फट** विशीर्णतायाम् अक० भ्वा० पर० सेट्। स्फटति अस्फटीत्-अस्फाटीत्। इदिदयमप्यत्रैवार्थे स्फण्टति अस्फण्टीत्।

**स्फट** पु० स्त्री० स्फट-अच्। सर्पफणायाम्। [भेदे।

**स्फटि(टी)** स्त्री० स्फट-इन् वा ङीप्। (फट्का। रि)वणिग्द्रव्य

**स्फटि(टी)क** पु० स्फटिरि(टी)व इवार्थे कन्। स्वनामख्याते मणौ स्वार्थेऽण्। स्फाटिकमप्यत्र न०। [स्फटिकमयपर्व्वते च।

**स्फटिकाचल** पु० स्फटिक इव शुभ्रः अचलः। कैलासपर्व्वते,

**स्फटिकाद्रिभिद्(द)** पु० स्फटिकाद्रिं स्फाटिकपर्व्वतं भिनत्ति साहश्यात् भिद-क्विप् क वा। कर्पूरे।

**स्फटिकाभ्र** पु० स्फटिकवर्णः अभ्र इव। कर्पूरे।

**स्फटिकारि** पु० ६त०। (फट्किरि) वणिग्द्रव्यभेदे तस्य स्फटिकतुल्यदीप्तिमत्त्वात्तथात्वम्। [अति-ते अपस्फण्डत्-त।

**स्फण्ड** परिहासे चु० उभ० अक० सेट् इदित्। स्फण्ड-

**स्फर** चले स्फूर्त्तौ च तुदा० प० अक० सेट्। स्फरति अस्फारीत्।

**स्फरण** न० स्फर-ल्युट्। स्फुरणे। [लीत्

**स्फल** चले स्फूर्त्तौ च तुदा० पर० अक० सेट्। स्फलति अस्फा-

**स्फाटिकोपल** पु० स्फटिकमेव अण् कर्म्म०। स्फटिके।

**स्फाति** स्त्री० स्फाय-क्तिन्। वृद्धौ।

**स्फाय** वृद्धौ भ्वा० आ० अक० सेट्। स्फायते अस्फायि-अस्फायिष्ट। निष्ठायामनिट् स्फीतः। [त्रि०।

**स्फार** पु० स्फाय-रक्। स्वर्णबुद्बुदे। विपुले, विकटे, प्रचुरे च

**स्फारण** न० स्फुर-णिच्-स्फारादेशः ल्युट्। विकाशने।

**स्फाल** पु० स्फल-घञ्। स्फूर्त्तौ। [कट्फले।

**स्फिग्घातन** पु० स्फिचं घातयति हन-स्वार्थे णिच्-ल्यु।

**स्फिच्** स्त्री० स्फाय-डिच्। कटिप्रोथे,तत्स्थे वातजे रोगभेदे च

**स्फिट** वृतौ हिंसे अनादरे च चु० उभ० सक० सेट्। स्फेटयति ते अपिस्फिटत् त।

**स्फिर** त्रि० स्फाय-किरच्। प्रचुरे, वृद्धे च।

**स्फीत** त्रि० स्फाय-क्त स्फीभावः। वृद्धे-समृद्धे च।

**स्फुट** भेदे चु० उभ० सक० सेट्। स्फोटयति ते अपुस्फुटत् त।

**स्फुट** विकाशे भ्वा० प० अक० सेट्। स्फोटति अस्फुटत् अस्फोटीत्। [पुस्फोट।

**स्फुट** विकाशे तु० कुटा० प० अक० सेट्। स्फुटति अस्फुटीत्

**स्फुट** विदलने भ्वा० आत्म० अक० सेट्। स्फोटते अस्फोटिष्ट

**स्फुट** स्रावे चुरा० उभ० अक० सेट्। इदित् स्फुण्टयति ते अपुस्फुण्टत् त।

**स्फुट** हिंसे चु० उभ० सक० सेट् प्रायेणाङ् पूर्व्वः। आस्फोटयति ते आपुस्फुटत् त। [अपुस्फुटत् त।

**स्फुट** विकाशे अद० चु० उभ० सक० सेट्। स्फुटयति ते

**स्फुट** त्रि० स्फुट-क। विकशिते, व्यक्ते, भिन्ने, शुक्ले च। ज्योतिषोक्तेषु मेषादिराशिषु अंशविशेषस्थितेषु सूर्य्यादिग्रहेषु पु० तेषां तत्तदंशकलादिषु गतौ स्त्री०। उत् मेघाया द्योतने न०। सर्पफणायां स्त्री०।

**स्फुटन** न० स्फुट-ल्युट्। विकशने, विदलीभावे च।

**स्फुटवन्धनी** स्त्री० स्फुटं वन्धनं यस्याः गौ० ङीष्। कपोतपद्याम्

**स्फुटित** त्रि० स्फुट-क्त। विकशिते, भिन्ने "दग्धे वा स्फुटितेऽथ वेति" पुराणम् व्यक्तीकृते, परिहासिते च।

**स्फुटि(टी)** स्त्री० स्फुट-इन् वा ङीप्। पादस्फोटरोगे (फोड़ा) कर्कटीफले च। (फुटि)। [इत् त।

**स्फुट्ट** अनादरे चु० उ० सक० सेट्। स्फुट्टयति ते अपुस्फु-

**स्फुड़** वरणे तु० कु० पर० सक० सेट्। स्फुडति अस्फुडीत् पुस्फोड़। [अस्फुण्डिष्ट।

**स्फुड** विकाशे भ्वा० आत्म० अक० सेट् इदित्। स्फुण्डते

**स्फुड** परिहासे चु० उ० सक० सेट् इदित्। स्फुण्डयति ते अपुस्फुण्डत् त।

**स्फुर** स्फूर्त्तौ तु० कुटा० प० अक० सेट्। स्फुरति अस्फुरीत् पुस्फोर। "चारु पुस्फोर वाङ्गरिति" भट्टिः।

**स्फुरण** न० स्फुर-ल्युट्। ईषत्सन्दने। युच्। तत्रैव स्त्री०।

**स्फुर्च्छ** विस्मरणे भ्वा० प० सक० सेट्। स्फूर्च्छति अस्फूर्च्छीत्

**स्फुर्ज** वज्रशब्दे भ्वा० प० अक० सेट्। स्फूर्जति अस्फूर्जीत्।

**स्फुल** स्फूर्त्तौ-चले च अक० सञ्चये सक० तुदा० कुटा० प० सेट् स्फुलति अस्फुलीत्। पुस्फोल।

**स्फुल** न० स्फुल-क। वस्त्रागारे (ताँबु)।

**स्फुलन** न० स्फुल-ल्युट्। स्फुरणे।

**स्फुलिङ्ग** पु० स्त्री० स्फुल-इङ्गच्, स्फुलदिति व्यक्तः शब्दो लिङ्गति गच्छति यस्मात् लिगि-वञ् पृ० वा। अग्निकणे।

**स्फुलिङ्गिनी** स्त्री० स्फुलिङ्ग+अस्त्यर्थे इनि। अग्निज्वालायाम्। स्फुलिङ्गयुक्ते त्रि०।

**स्फूर्जथु** पु० स्फुर्ज-अथु। वज्रपातशब्दे। [प्रतिभायाञ्च।

**स्फूर्त्ति** स्त्री० स्फुर्च्छ-स्फुर-वा क्तिन्। स्फुरणे विकशने

**स्फूर्त्तिमत्** पु० स्फूर्त्तिरस्यस्य मतुप्। पाशुपताख्ये शैवभेदे

प्रतिभायुक्ते विकाशयुक्ते च त्रि० ।

**स्फेयस्** त्रि० अतिशयेन स्फिरः, ईयसु स्फादेशः । अतिप्रचुरे, स्त्रियां ङीप् । इष्ठन् । स्फेष्ठोऽप्यत्र त्रि० ।

**स्फोट** पु० स्फुटत्यर्थो यस्मात् स्फुट–घञ् । व्याकरणोक्ते वर्णातिरिक्ते पूर्व्वपूर्व्ववर्णानुभवसहितचरमवर्णव्यङ्ग्ये अर्थप्रत्यायके अखण्डे शब्दभेदे "शृणोति य इमं स्फोटमिति" भागवतम् । "न स्फोटः प्रतीत्यप्रतीतिभ्यामिति" शारीरकसूत्रम् यथा च वर्णसमुदयानां नार्थबोधकत्वं तथा प्रपञ्चितमस्माभिः, शब्दार्थरत्ने । व्रणभेदे च (फोड़ा) ।

**स्फोटक** पु० स्फुट–ण्वुल् । (फोड़ा) व्रणभेदे विदारके च ।

**स्फोटन** न० स्फुट–ल्युट् । विदारणे, विकाशने च ।

**स्फोटनी** स्त्री० स्फुट्यतेऽनया स्फुट–ल्युट्, ङीप् । मणिवेधनकरणे यन्त्रभेदे (भोमरी) । [कन् । भल्लातके ।

**स्फोटबीजक** पु० स्फोटस्य व्रणभेदस्य बीजम् ततः स्वार्थे

**स्फोटायन** पु० स्फोटएवायनं अर्थबोधकतयाश्रयणं यस्य । अर्थबोधकत्वेन स्फोटाभ्युपगन्तरि वैयाकरणे मुनिभेदे "अवङ् स्फोटायनस्येति" पाणिनिः ।

**स्फ्य** न० स्फा–य यत् नि० । खड्गाकारे यज्ञार्थे काष्ठभेदे ।

**स्म** अव्य० स्मि–ड । अतीते, पादपूरणे च ।

**स्मय** पु० स्मि–अच् । गर्वे, अद्भुते च ।

**स्मर** पु० स्मरति प्रियमनेन स्मृ–अप् । कामदेवे । भावे अप् । स्मरणे । [योऽप्यत्र ।

**स्मरगृह** न० स्मरस्य गृहमिव । स्त्रीचिह्नभेदे स्मरमन्दिराद-

**स्मरण** न० स्मृ–ल्युट् । ज्ञातवस्तुनोऽनुभवाधीनसंस्कारजन्ये उद्बोधकसहकारेण जायमाने ज्ञानभेदे आध्याने चिन्तने च ।

**स्मरदशा** स्त्री० स्मरकृता दशा । कामिनां स्मरकृतासु नयनप्रीत्यादिषु दशसु दशासु । विस्तरो बृहदभिधाने ।

**स्मरप्रिया** स्त्री० ६त० । स्मरभार्य्यायां रतौ ।

**स्मरवीथिका** स्त्री० स्मरस्य वीथिकेव प्राप्तिहेतुत्वात् वेश्यायाम्

**स्मरहर** पु० स्मरं हरति नाशयति हृ–अच् । महादेवे स्मरहरादयोऽप्यत्र । [न हि स्त्रीणां स्मरोद्दीपनम् ।

**स्मराङ्कुश** पु० स्मरस्याङ्कुशवदुत्तेजकत्वात् । नखे, नखाघाते-

**स्मराम्र** पु० स्मरप्रिय आम्रः । राजाम्रे ।

**स्मरासव** पु० स्मरोद्दीपक आसवः । लालायाम् कामिनां तत्पाने हि स्मरोद्दीपनात्तस्यास्तथात्वम् ।

**स्मार्त्त** त्रि० स्मृतौ विहितः, स्मृतिं वेत्त्यधीते वा अण् । स्मृतिविहिते स्नानादौ "अन्योऽपि स्मार्त्तमाचरेदिति" "स्मार्त्तं वैदिकवत् चरेदिति" च स्मृतिः स्मृतिशास्त्राभिज्ञे च ।

**स्मि** अनादरे विस्मये च चु० आ० सक० सेट् । स्माययते असिस्मयत । अषोपदेशत्वात् न षः । अन्यतोविस्मये स्माययतीत्येव । अयं भ्वादिरपि अनिट् । स्मयते अस्मेष्ट ।

**स्मिट** अनादरे सक० स्नेहे अक० चु० उभ० सेट् । स्मेटयति ते असिस्मिटत् त ।

**स्मित** न० स्मि–क्त । ईषद्धासे "मुखं विकशितस्मितमिति" मालतीमाधवम् । विकशिते, विस्मिते च त्रि० ।

**स्मील** निमेषणे भ्वा० पर० अक० सेट् । स्मीलति अस्मीलीत्

**स्मृ** स्मरणे भ्वा० प० सक० अनिट् । स्मरति अस्मार्षीत् ।

**स्मृ** औत्सुक्ये भ्वा० प० सक० अनिट् घटा० । स्मरति अस्मार्षीत्

**स्मृत** त्रि० स्मृ–क्त । कृतस्मरणे स्मृतिविषये ।

**स्मृति** स्त्री० स्मृ–क्तिन् । अनुभूतवस्तुनउद्बोधकसहकारेण संस्काराधीने ज्ञानभेदे । स्मर्य्यते वेदधर्मोऽनेन करणे क्तिन् । धर्मशासनशास्त्रे वेदार्थानुभवजन्ये वेदार्थानुवादके मुनिप्रणीते वाक्यरूपे शास्त्रे । "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदा मिति" मनुः ।

**स्मृतिहेतु** पु० ६त० । संस्कारे वासनारूपे गुणभेदे ।

**स्मेर** त्रि० स्मि–रन् । विकशिते ईषद्धास्यान्विते च "भद्राजनः स्मेरमुखोभविष्यतीति" कुमारः । [अस्यन्त ।

**स्यद** पु० स्यन्द–घञर्थे क । वेगे । [स्यन्दते अस्यदत् अस्यन्दिष्ट

**स्यन्द** स्रवणे भ्वा० आ० लुङि, लृटि, लृङि च उभ० अक० वेट् ।

**स्यन्द** पु० स्यन्द–घञ् । क्षरणे, प्रस्रवे ।

**स्यन्दन** न० स्यन्द–भावे ल्युट् । क्षरणे । कर्त्तरि ल्यु । जले न० । रथे, तिनिसवृक्षे च पु० । [रथारोहेण योद्धरि ।

**स्यन्दनारोह** पु० स्यन्दनमारोहति युद्धार्थम्, आ+रुह अण् ।

**स्यन्दनि** पु० स्यन्द–अनि । तिनिशवृक्षे । ङीप् । लालायां स्त्री०

**स्यन्दिन्** त्रि० स्यन्द+णिनि । प्रस्रविणि । लालायां स्त्री० ङीप् ।

**स्यन्न** त्रि० स्यन्द–क्त । स्रुते जलादौ । [अस्यमीत् ।

**स्यम** ध्वनने भ्वा० पर० अक० सेट् ज्वलादि० फणादि० । स्यमति

**स्यम** वितर्के चु० उ० सक–सेट् । स्यामयति ते असिस्यमत् त ।

**स्यम** ध्याने अद० चु० उभ० सक० सेट् । स्यमयति असिस्यमत् त

**स्यमन्तक** पु० स्यम–झच् संज्ञायां कन् । श्रीकृष्णस्य हस्तस्थे मणिभेदे । तस्य गुणादिकं वृहदभिधाने वक्ष्यते ।

**स्यमीका** स्त्री० स्यम–ईकन् । वल्मीके । काले, मेघे च पु० ।

**स्यूत** त्रि० सिव–क्त । सूच्यादिना ग्रथिते वस्त्रादौ । सूत्ररचित पात्रे पु० । ष्ट्र० ओतु । स्योतोऽप्यत्र ।

**स्यूति** स्त्री० सिव–क्तिन् । सूच्यादिना वस्त्रादिसीवने ।

**स्यून** पु० सिव-नक्। सूर्ये, किरणे, सूच्यादिस्यूतवस्त्रव-स्त्रनिर्म्मिते पदार्थे (थुकड़ी) च।

**स्रंसन** न० स्रन्स-णिच्-ल्युट्। ऊर्द्ध्वगतस्याधोनयने पातने। युच्। स्रंसनाप्यत्र स्त्री०।

**स्रंसिन्** त्रि० स्रन्स-णिनि। अधःपतनशीले। पीलुवृक्षे पु०।

**स्रक** गतौ भ्वा० आत्म० सक० सेट् इदित्। स्रङ्कते अस्रङ्किष्ट।

**स्रग्वत्** त्रि० स्रक् माल्यमस्त्यस्य मतुप् मस्य वः जत्वम्। माल्य-वति। विनि। स्रग्वीत्यप्यत्र। उभयत्र स्त्रियां ङीप्।

**स्रज्** स्त्री० सृज्यते सृज-क्विन् नि०। माल्ये।

**स्रन्स** पतने भ्वा० आत्म० लुङि उ० अक० सेट् क्त्वावेट्। स्रंसते अस्रसत् अस्रंसिष्ट। ["नास्रसत् करिणां ग्रैव मिति" रघुः।

**स्रन्स** प्रमादे भ्वा० आ० अक० सेट् क्त्वावेट्। स्रंसते अस्रंसिष्ट।

**स्रम्भ** अनवधाने भ्वा० आ० अक० सेट् क्त्वावेट्। स्रम्भते अस्रम्भिष्ट। [म्भते अस्रभत् अस्रम्भिष्ट।

**स्रम्भ** विश्वासे भ्वा० आत्म० लुङि उ० सक० सेट् क्त्वावेट्। स्र-

**स्र(स्रा)व** पु० स्रु-अप् घञ् वा। क्षरणे। कर्त्तरि अच्। निर्झरे

**स्रवण** न० स्रु-ल्यु। मूत्रजले, घर्मे च। भावे ल्युट्। क्षरणे

**स्रवन्ती** स्त्री० स्रु-झिच् ङीप्। नद्याम् ओषधिभेदे, गुल्म-स्थाने च। शतृ। स्रवविशिष्टे त्रि०। स्त्रियां ङीप्।

**स्रवा** स्त्री० स्रु-अच्। मूर्वायाम्।

**स्रष्टृ** पु० सृज-तृच्। जगत्कर्त्तरि, चतुर्मुखे, शिवे च। सृष्टि-कर्त्तरि त्रि० स्त्रियां ङीप्।

**स्रस्त** त्रि० स्रन्स-क्त। च्युते पतिते।

**स्रस्तर** पु० स्रन्स-तरच् किच्च। आसने।

**स्राक्** अव्य० स्रु-डाक्। त्वरिते द्रागित्यर्थे। [त्रि०

**स्रावक** न० स्रावयति स्रु-णिच्-ण्वुल्। मरिचे। निःस्रावके-

**स्रिन्भ** हिंसे भ्वा० प० सक० सेट् क्त्वावेट्। स्रिम्भति अस्रिम्भीत्

**स्रिभ** हिंसे भ्वा० प० सक० सेट् क्त्वावेट्। स्रेभति अस्रेभीत्।

**स्रिव** शोषे अक० दिवा० प० गतौ सक० सेट् क्त्वावेट्। स्रिव्यति अस्रेवीत्। [स्रुवत्।

**स्रु** गतौ सक० क्षरणे अक० भ्वा० प० अनिट्। स्रवति अस्रु।

**स्रुग्दारु** पु० स्रुचे यज्ञपात्राय दारु यस्य। विकङ्कतवृक्षे।

**स्रुघ्न** पु० देशभेदे। सोऽस्यनिवासः अण्। गौ० ङीप्। सर्जि-काक्षारे स्त्री०। [वाङ्मात्रे यज्ञपात्रभेदे।

**स्रुच्** स्त्री० स्रु-क्विप् चिट् च। वटपत्राकृतौ विकङ्कतकाष्ठजे

**स्रुत** त्रि० स्रु-क्त। क्षरिते जलादौ, गते च। हिङ्गुपत्र्यां स्त्री०।

**स्रुव** पु० स्त्री० स्रु-क। खदिरकाष्ठभवे हस्तमिते यज्ञपात्रभेदे। सल्लक्याम्: मूर्वायाञ्च स्त्री०।

**स्रू** स्त्री० स्रु-क्विप् नि०। यज्ञपात्रभेदे। निर्झरे च।

**स्रै** विक्लृतौ-भ्वा० पर० अक० अनिट्। स्रायति अस्रासीत्

**स्रोत** न० स्रु-तन्। स्रोतसि वेगेन स्वतोजलनिःसरणे।

**स्रोतस्** न० स्रु-तसि। वेगेन स्वतोजलनिःसरणे रेतसि च।

**स्रोतस्वत्** त्रि० स्रोतोऽस्त्यस्य मतुप् मस्य वः। स्रोतोयुक्ते। नद्यां स्त्री० ङीप्। [तोयुक्ते त्रि०।

**स्रोतस्विनी** स्रोतस्+अस्त्यर्थे विनि ङीप्। नद्याम्। स्रो-

**स्रोतोञ्जन** न० स्रोतसि यमुनास्रोतोजलसन्निकृष्टसौवीर-देशे भवम् अञ्जनम्। सौवीरदेशजेऽञ्जने।

**स्रोतोवहा** स्त्री० स्रोतसा वहति सरति वह-अच्। नद्याम्।

**स्व** न० स्वन-ड। धने, आत्मनि ज्ञातौ च पु०। आत्मीये त्रि०। आत्मनि आत्मीये, चार्थेऽस्य सर्व्वनामता।

**स्वकम्पन** पु० स्वेनैव पराप्रयुज्यमान एव कम्पते कम्पि-युच्। वायौ। [स्पदेति" गीता।

**स्वकर्म्मन्** न० स्वस्य कर्म्म। स्ववर्णोचिते कृत्ये: "स्वकर्म्मनिरतः

**स्वकीय** त्रि० स्वस्येदम् छ कुक् च। आत्मीये। अत्र नित्यमेव कुक्, अकुक्युक्तप्रयोगस्तु अपाणिनीयः।

**स्वग** सर्पणे भ्वा० प० सक० सेट् इदित्। स्वङ्गति अस्वङ्गीत्।

**स्वगत** त्रि० स्वस्मिन् मनसि आत्मनि वा गतम् गम-क्त। मनोगते, आत्मगते च। नाटकाभिनये प्रतिपाद्यपुरुषं वर्ज्जयित्वा रङ्गभूमिस्थसामाजिकजनश्रवणयोग्ये वाक्ये न०। उच्चार्य्य तद्वदभिधाने।

**स्वगुप्ता** स्त्री० स्वेनैव गुप्ता। शूकशिम्ब्याम्, लज्जालुलतायाञ्च

**स्वच्छ** त्रि० सुष्ठु अच्छः प्रा०। अतिनिर्म्मले कालुष्यरहिते। कन्नायां, स्फटिके च पु०। श्वेतदूर्व्वायाम् स्त्री०।

**स्वच्छन्द** त्रि० स्वस्य छन्दोऽभिप्रायः स्वकृते यस्य। स्वाधीने

**स्वच्छपत्त्र** न० स्वच्छं पत्त्रं यस्य। अभ्रके।

**स्वच्छमणि** पु० कर्म०। स्फाटिके।

**स्वज** न० स्वस्मात् देहात् आत्मनो वा जायते। रुधिरे। पुत्रे पु० कन्यायां स्त्री० आत्मजाते त्रि०। [आत्मसम्भवलोके।

**स्वजन** पु० स्वस्येव जनोजननमेककुले यस्य। ज्ञातौ। ६त०।

**स्वठ** गतौ संस्कारेऽसंस्कारे च चु० उभ० सक० सेट्। स्वठ-यति-ते असिस्वठत्-त।

**स्वतन्त्र** त्रि० स्वस्य तन्त्रं वशीकारो यस्य। स्वाधीने अपराधीने

**स्वतस्** अव्य० स्व+तसिल्। आत्मन इत्यर्थे।

**स्वता** स्त्री० स्वस्य स्वकीयस्य भावः तल्। स्वकीयत्वे। "कामः स्वतां पश्यतीति" शकुन्तला।

**स्वत्व** न० स्वस्य भावः त्व। द्रव्यादिषु यथेष्टक्रयविक्रयादिक्रि-

यान्तु नियोजके धर्मभेदे,स्वामित्वे च तच्च द्रव्यगत मात्मगतञ्च
स्वदन न० स्वद-ल्युट्। आस्वादे, लेहने च। सुष्टु अदनम्। सुभक्षणे। [आचारादिधर्मे।
स्वधर्म्म स्वस्य वेदादिविहितोधर्म्मः। स्वातुरूपे वेदायुक्ते
स्वधा अव्य० स्वद-आ छन्दस धः। पितृदेवोद्देशेन हविस्त्यागे। स्वेन धयति धे-क आप्। मातृकाभेदे स्त्री० "नमःस्वधायै स्वाहायै" इति पितृगाथा।
स्वधप्रिय पु० स्वधाभिनां प्रियः शाक०। कृष्णतिले, स्वधोपलक्षितश्राद्धादिप्रिये पित्रादौ च। [गणे, देवे च।
स्वधाभुज् स्वधेत्यनेन त्यक्तद्रव्यं भुङ्क्ते भुज-क्विप्। पितृ-
स्वधि(ती) स्त्री० स्वेन धीयते धा-क्तिच् वा ङीप्। कुठारे परश्वधे। पृ०। श्वधितिरप्यत्र।
स्वन शब्दे भ्वा०पर० अक० सेट्-फणा०। स्वनति। अस्वनीत्-अस्वानीत्। अयं भूषणे वा घटा०। [नत्-त
स्वन ध्वाने अद० चु० उभ० अक० सेट्। स्वनयति-ते असस्व-
स्वन पु० स्वन-अप्। शब्दे। [मेघगर्जिते च न०
स्वनित त्रि० स्वन-कर्त्तरि-क्त। शब्दिते। भावे क्त। शब्दे,
स्वपन न० स्वप-ल्युट्। शयने,निद्रायाञ्च।
स्वपिण्डा स्त्री० स्वेनैव पिण्डः पिण्डाकारोऽस्यसाः अच्। पिण्डखर्जूर्य्याम्। [भेदे च।
स्वप्न पु० स्वप-नन्। निद्रायां, शयने, सुप्तस्य मानसिकज्ञान-
स्वप्नकृत् न० स्वप्नं निद्रां करोति कृ-क्विप्। (सुषुनि) शाके।
स्वप्नज् त्रि० स्वप-नजिङ्। शयनशीले।
स्वभाव पु० स्वस्य भावः। निसर्गे, नैसर्गिके-स्वकीये-धर्मे च।
स्वभावोक्ति स्त्री० स्वभावस्योक्तिरत्र। अलङ्कारोक्ते अर्थालङ्कार भेदे इत०। स्वभावस्य कथने। [ईश्वरे, कामे च।
स्वभू पु० स्वेनैव भवति भू-क्विप्। ब्रह्मणि, विष्णौ, शिवे,
स्वयंवर पु० स्वयमात्मना वरो वरणम्। "कन्ययात्मनैव स्वपतेर्वरणे,, सदसि स्वयंवर" इति नैषधम्। स्वयं वृणुते पतिम् वृ-अच्। आत्मनैव पतिवरणकर्त्र्यां कन्यकायां स्त्री०।
स्वयङ्कृत पु० स्वयमात्मना कृतः। कृत्रिमे पुत्रे, आत्मकृते त्रि०। "पूर्वजुष्टः स्वयंकृत" इति स्मृतिः।
स्वयङ्गुप्ता स्त्री० स्वयमात्मनैव गुप्ता। शूकशिम्ब्याम्।
स्वयन्दत्त पु० स्वयमात्मनैव न तु पितृमातृभ्यां दत्तः। दत्तात्मके पुत्रभेदे "दत्तात्मा तु स्वयन्दत्त" इति स्मृतिः।
स्वयम् अव्य० सु+अय-अमु। आत्मनेत्यर्थे।
स्वयम्भु पु० स्वयम्+ भू-डु। ब्रह्मणि।
स्वयम्भुवा पु० स्वयन्भवति भू-क। भूजम्बाखायाम्।
स्वयम्भू पु० स्वयं भवति भू-क्विप्। चतुर्मुखे ब्रह्मणि,कुचे च।
स्वर आक्षेपे अद० चुरा० उभ० सक० सेट्। स्वरयति-ते अससरत्-त।
स्वर् अव्य० स्वृ-विच्। स्वर्गे,"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पद" मित्युक्ते दुःखासंभिन्ने सुखसन्ताने, परलोके, देवावासे, शोभने च।
स्वर् पु० स्वर-अच्, स्वृ-अप् वा। उदात्तानुदात्तस्वरितरूपे वर्णोच्चारणयत्नभेदे,तादृशस्वरवत्त्वा च अकारादिषु व्यञ्जनभिन्नवर्णेषु शिक्षायामुक्ता। तन्त्रोक्ते प्राणादिवायोर्व्यापारभेदे, काकादिकृते वर्णाद्युच्चारणध्वनिविशेषे, निषादादिषु गानजध्वनिषु च। विस्तरो छन्दृदभिधाने।
स्वरपत्तन न० स्वराणां निषादादीनां गानध्वनिविशेषाणां पत्तनमाश्रयः। सामवेदे।
स्वरभङ्ग पु० स्वरस्य कण्ठध्वनिभेदस्य भङ्गो यस्मात्। रोगभेदे।
स्वरमण्डलिका स्वराणां मण्डलमस्त्यस्य ठन्। वीणायाम् इत०। स्वरसमूहे। [सृ-ण्वुल्। वीणायां, वंशाञ्च।
स्वरलासिका स्त्री० स्वरैः निषादादिभिः लसति न्त्यतीव ल-
स्वरस पु० स्वेन स्वभावेन रसः आस्वादः। शिलापिष्टकल्कभेदे, क्वाथभेदे च। स्वस्य रसः रागः। स्वाभिप्राये'स्वतात्पर्ये, वा क्यादौ-रचनाभङ्ग्यां च।
स्वराज् पु० स्वेनैव राजते राज-क्विप्। ईश्वरे "अर्थेष्वभिज्ञः स्वराडिति,, भागवतम्। वैदिकच्छन्दोभेदे च। [यत।
स्वरापगा स्त्री० स्वः स्वर्गस्थापगा। गङ्गायाम् स्वर्गापगादयो-
स्वरित पु० स्वरोजातोऽस्य इतच्। उदात्तानुदात्तसमाहाररूपे स्वरभेदे स्वर-क्त। स्वरयुक्ते त्रि०। [वृश्चिकभेदे च।
स्वरु पु० स्वृ-उ। वज्रे, यूपखण्डे, वाणे, यज्ञे, सूर्य्यकिरणे,
स्वरुचि त्रि० स्वस्यैव रुचिः प्रवर्त्तिका स्वकृत्ये यस्य। स्वतन्त्रे, इत०। स्वस्याभिलाषे स्त्री०।
स्वरूप न० स्वस्य रूपम्। स्वभावे। स्वमेव रूपम्। स्वात्मके पदार्थे स्वं यथार्थं रूपयति रूप-अण्। यथास्वरूपाभिज्ञे-पण्डिते पु०। स्वेन स्वभावेनैवरूपमस्य। मनोज्ञे, त्रि०।
स्वरूपसंबन्ध पु०स्वरूपं सम्बन्धः,स्वरूपयोर्वा सम्बन्धः। न्यायोक्ते,स्वात्मके सम्बन्धे, षट्पदार्थातिरिक्ते पदार्थभेदे, यथा प्रतियोगित्वम् विषयत्वमित्यादि।
स्वरोदय स्वरयाद्युदयोयत्र। स्वरस्य श्वासविशेषस्य शुभाशुभ स्वज्ञानसाधने तन्त्रशास्त्रभेदे।
स्वर्ग पु० स्वरिति गीयते गै-क सु+ऋज-घञ् वा। दुःखासम्भिन्ने सुखसन्ताने, देवानामावासस्थाने च।

स्वर्गनाथ पु० ६त०। इन्द्रे। स्वर्गपत्यादयोऽप्यत्र।
स्वर्गवधू स्त्री० ६त०। अप्सरसु।
स्वर्गाचल पु० स्वर्गलोकस्थोऽचलः। सुमेरुपर्व्वते। [त्रि०।
स्वर्गिन् पु० स्वर्गोऽस्त्यस्य भोग्यत्वेन इनि। देवे। स्वर्गवासिनि
स्वर्गौकस् पु० स्वर्गओको यस्य। देवे।
स्वर्जिक पु० सु+अर्ज्ज–घञ् अस्त्यर्थे ठन्। सर्ज्जिकाक्षारे। कर्म०। स्वर्जिकाक्षारादयोऽप्यत्र।
स्वर्ण न० सुष्ठु अर्णो वर्णोऽस्य। काञ्चने, धुस्तूरे, नागकेशरे, गौरवर्णशाके च। [सुवर्णस्य लेशे पु०।
स्वर्णकण न० स्वर्णमिव पीतःकणोऽस्य। कणगुग्गुलौ ६त०।
स्वर्णकाय पु० स्वर्णमिव पीतः कायोऽस्य। गरुड़े।
स्वर्णकार पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ–अण्। (सेकरा)जातिभेदे।
स्वर्णकेतकी स्त्री० स्वर्णमिव पीता केतकी। पीतकेतक्याम्।
स्वर्णक्षीरी स्त्री० स्वर्णमिव पीतं क्षीरं निर्यासोऽस्त्यस्य अच् गौ०ङीष्। ओषधिभेदे सा च मालवदेशे जायते। [भेदे।
स्वर्णगैरिक न० स्वर्णमिव पीतं गैरिकम्। (वर्णकमाटि) पदार्थ
स्वर्णग्रीवा स्त्री० नदीभेदेन।
स्वर्णचूड़ पु० स्वर्णमिव पीता चूड़ा यस्य। चाषपक्षिणि।
स्वर्णज न०स्वर्णात् जायते जन–ड। वङ्गे। स्वर्णजातमात्रे त्रि०।
स्वर्णजीवन्तीस्त्री० स्वर्णमिव पीता जीवन्ती।पीतपुष्पजीवन्त्याम्
स्वर्णदी स्त्री० स्वर्णं द्यति अपसारयति तुल्यवर्णत्वात् दो–क गौ० ङीष्। वृश्चिकाल्याम्। ६त०।गङ्गायाम्। [विकङ्कते च।
स्वर्णदीधिति पु० स्वर्णमिव भास्वरा दीधितिरस्य। अग्नौ,चि-
स्वर्णद्रु पु० स्वर्णमिव पुष्पादौ पीतो द्रुः। आरग्वधे।
स्वर्णपक्ष पु० स्वर्णमिव पीतः पक्षोऽस्य। गरुड़े।
स्वर्णपाटक पु० स्वर्णं पाटयति पट–णिच्–ण्वुल्। टङ्कणे।
स्वर्णपुष्प पु० स्वर्णमिव पीतं पुष्पमस्य। चम्पके, आरग्वधे, पु० स्त्री० स्त्रीत्वे ङीष्। सा च स्वर्णकेतक्याञ्च। सातलायाम् कलिकारी स्त्री० टाप्। [कदल्याम्।
स्वर्णफला स्त्री० स्वर्णमिव पीतं फलमस्याः। (चांपाकला) स्वर्ण
स्वर्णभृङ्गार पु० स्वर्णमिव स्वर्णमयो वा भृङ्गारः। पीतभृङ्गराजे स्वर्णमयकलसे च। [उपधातुभेदे।
स्वर्णमाक्षिक न० स्वर्णमिव पीतं माक्षिकम्। स्वनामख्याते
स्वर्णयूथी स्त्री० स्वर्णमिव पीता यूथी। पीतयूथिकायाम्।
स्वर्णलता स्त्री० स्वर्णमिव पीता लता। ज्योतिष्मत्याम्।
स्वर्णवर्णा स्त्री० स्वर्णमिव वर्णोरूपमस्याः। हरिद्रायाम्।
स्वर्णवल्काल पु० स्वर्णमिव पीतं वल्कलमस्य। शोनाकवृक्षे।

स्वर्णशेफालिका स्त्री० स्वर्णमिव पीता शेफालिका। पीतशेफालिकायाम्। [वर्णदेहे त्रि०।
स्वर्णाङ्ग पु० स्वर्णमिवाङ्गं फलपुष्पादि–यस्य। आरग्वधे। पीत-
स्वर्णारि पु० ६ त०। गन्धके तस्य स्वर्णमारकत्वात्तथात्वम्।
स्वर्त्त गतौ सक० दुःखेनजीवने अक० चु० उ० सेट्। स्वर्त्तयति ते असस्वर्त्तत् त। [अस्वर्द्दिष्ट।
स्वर्द्द प्रीतौ अक० प्रोक्षने लेहनेच सक० भ्वा० आत्म०सेट्। स्वर्द्दते
स्वर्भानव पु० स्वरिव भूमौ भानुर्दीप्तिरस्यास्य अच्। गोमेदमणौ
स्वर्भानु पु० स्वः स्वर्गे भानुर्दीप्तिरस्य। राहौ।
स्वर्लोक पु० स्वरेव लोकः भुवनम्। स्वर्गे, ६त०। स्वर्गस्थलोके।
स्वर्वापी स्त्री० स्वः स्वर्गस्य वापीव। गङ्गायाम्।
स्वर्वेश्या स्त्री० स्वः स्वर्गस्य वेश्या। मेनकाद्यप्सरसु।
स्वल्प त्रि० सुष्ठु अल्पम् प्रा०। अत्यल्पे क्षुद्रे।
स्वल्पकेशरिन्पु०स्वल्पः केशरोऽस्त्यस्यइनि। कोविदारवृक्षे।
स्वल्पपत्त्रक पु० स्वल्पं पत्त्रमस्य कप्। गौरशाके
स्ववासिनी स्त्री० स्वस्मिन् पित्रालये वसति वस–णिनि। चिरं पितृगृहादिवासिन्यामूढायामनूढायां वा स्त्रियाम्।
स्वसृ स्त्री० सु+अस–ऋन्। भगिन्याम्।
स्वस्क गतौ भ्वा० उ० सक० सेट्। स्वस्कति ते असस्वस्कत्।
स्वस्ति अव्य० सु–अस–क्तिच्, अस्तीति विभक्तिरूपकम् अव्ययं मादि० वा। क्षेमे, आशिषि,पुण्यादौ, स्वीकारसूचने च।
स्वस्तिक पु० न०। स्वस्ति शुभाय हितम् ठन्। "स्वस्तिकं प्राङ्मुखं यत् स्यादलिन्दात्तुगतं भवेत्। तत्पार्श्वानुगतौ चान्यौ तत्पर्य्यन्तगतोऽपर„इत्युक्तलक्षणे गृहभेदे, शितावरशाके, आसनबन्धभेदे, तण्डुलचूर्णनिर्म्मिते–त्रिकोणाकारे–द्रव्यभेदे च "इतं स्वस्तिकमिन्दूर" मित्यधिवासनद्रव्यज्ञापकवाक्यम्" चतुष्पथे पु०। [पु०। स्वस्तिवादिनि त्रि०।
स्वस्तिमुख पु० स्वस्ति सुखे आदौ यस्य। लेख्ये मन्त्रादौ। विप्रे
स्वस्तिवाचन न० स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कर्मारम्भे विघ्नोपशान्तये ब्राह्मणद्वारा कर्त्तव्यकर्मणां शुभता वाचने।
स्वस्तिवाचनिक त्रि० स्वस्तिवाचनाय हितं, ततआगतम्„तत्रभवं वा ठन्। स्वस्तिवाचनसाधने,तदुक्तिलब्धे,तत्संबन्धिनि च
स्वस्त्ययन न० स्वस्ति शुभस्यायनं लाभोयस्मात्। शुभार्थं क्रियमाणे वेदादिविहिते यज्ञयागादौ।
स्वस्थ त्रि० स्वः परलोके तिष्ठति स्वेन स्वभावेन सुखेन, वा तिष्ठति स्था–क विसर्गलोपः। स्वभावस्थे, स्वर्गस्थिते, विना यासेन सुखेनावस्थिते च। "स्वस्था भवन्तु मयि जीवति

धार्त्तराष्ट्रा" इति वेणीसंहारनाटकम् ।
**स्वस्रीय** पु० स्वसुरपत्यम् छ । भागिनेये भागिनेय्यां स्त्री० ।
**स्वागत** न० सुखेनागतम् सु+आ+गम्-क्त । सुखेनागमने "स्वागतं स्वानधीकारानिति, कुमारः तदस्यास्ति अच् । कुशले ।
**स्वाच्छन्द्य** न० स्वच्छन्दस्य भावः ष्यञ् । स्वाधीनत्वे स्वास्थ्ये च ।
**स्वातन्त्र्य** न० स्वतन्त्रस्य भावः ष्यञ् । स्वाधीनत्वे परानधीनत्वे ।
**स्वाति(ती)** पु० स्त्री० स्वेनैव अतति अत इन् स्त्रीत्वपक्षे वा ङीप् । अश्विन्यादिषु पञ्चदशे नक्षत्रे, सूर्य्यपत्नीभेदे च ।
**स्वाद** प्रीतौ अक० प्रीणने लेहने च सक० भ्वा० आ० सेट् । स्वादते आस्वादिष्ट ।
**स्वाद** पु० स्वद-स्वाद-वा घञ् । रसानुभवे, प्रीतौ, प्रीणने, लेहने च ।
**स्वादु** पु० स्वद-उण् । मधुररसे, गुडे, जीवकौषधौ च । च इष्टे, मधुरे, मनोज्ञे च त्रि० स्त्रियां वा ङीप् ।
**स्वादुकण्टक** पु० स्वादुः कण्टकोऽस्य । विकङ्कतवृक्षे ।
**स्वादुकन्दा** स्त्री० स्वादुः कन्दोऽस्याः । विदार्य्याम् ।
**स्वादुका** स्त्री० स्वादुना मधुररसेन कायति कै-क । नागदन्त्याम् ।
**स्वादुखण्ड** पु० स्वादुः सिष्टः खण्डोऽस्य । गुडे कर्म० मधुरे भागे ।
**स्वादुगन्धा** स्त्री० स्वादुरिष्टः गन्धोऽस्याः । रक्तशोभाञ्जने, भूमिकुष्माण्ड्याञ्च ।
**स्वादुपर्णी** स्त्री० स्वादूनि पर्णान्यस्याः ङीप् । दुग्धिकायाम् ।
**स्वादुपाका** स्त्री० स्वादुः पाकोऽस्याः । काकमाच्याम् ।
**स्वादुपिण्डी** स्त्री० स्वादुः पिण्डः पिण्डाकारं फलमस्याः । पिण्डखर्जूर्य्याम् ।
**स्वदुफल** स्त्री० स्वादु फलमस्य । कोविदार्य्याम् कर्म० । सिष्टे फले न० ।
**स्वादुमज्जन्** पु० स्वादुः मज्जा यस्य । पर्व्वतजे पीलौ ।
**स्वादुमांसी** स्त्री० स्वादु मांसमिव फलमस्याः । काकोल्याम् ।
**स्वादुमूल** न० स्वादु मूलमस्य । गर्जरे ( गाजर ) ।
**स्वादुरसा** स्त्री० स्वादुः रसो यस्याः । काकोल्याम्, मदिरायाम्, शतावर्य्यां, द्राक्षायाम्, आम्रातके च ।
**स्वादुलता** स्त्री० स्वाद्वी लता । विदार्य्याम् ।
**स्वाद्वम्ल** पु० स्वादुः अम्लः । दाड़िमे । [नभर्लृकादयोप्यत्र ।
**स्वाधीन** त्रि० स्वस्याधीनः । स्वायत्ते स्वतन्त्रे । [भेदे स्वाधी-
**स्वाधीनपतिका** स्त्री० स्वाधीनः पतिर्यस्याः कप् । नायिका—
**स्वाध्याय** पु० स्वः स्वकीयत्वेन विहितः अध्यायः द्विजानाम्, अधि+इङ्-कर्म्मणि घञ् । द्विजैः पाठ्ये वेदभागभेदे "स्वाध्यायोऽध्येतव्य" इति श्रुतिः । भावे घञ् । अवश्या पाठ्यवेदाध्ययने "स्वाध्यायो जप इत्युक्तो वेदाध्ययनकर्म्मणीति" स्मृतिः ।
**स्वान्त** न० स्वन-क्त । मनसि सहाये च, ।
**स्वाप** पु० स्वप-घञ् । निद्रायाम् शयने, अज्ञाने च ।
**स्वापतेय** । न० स्वस्य धनस्य पतिः तस्येदम् ढञ् । धने ।

**स्वाभाविक** त्रि० स्वभावादागतः ठञ् । स्वभावसिद्धे, स्त्रियां ङीप् ( "स्वाभाविकी" स्वच्छतेत्युद्भटः )
**स्वामिन्** त्रि० स्व+अस्त्यर्थे मिनि दीर्घश्च । अधिपतौ, ईश्वरे च । स्त्रियां ङीप् । हरे, विभौ, नृपे कार्त्तिकेये, भर्त्तरि, वात्स्यायनमुनौ, गरुडे, परमहंसे च पु० ।
**स्वायम्भुव** पु० स्वयंभुवोऽपत्यं, तस्येदम् वा अण् ओरोदिति वक्तव्ये ओर्गुण इति संज्ञापूर्व्वकविधानादनित्यत्वान्न गुणः उवङ् । स्वयम्भूपुत्रे प्रथमे मनौ, स्वयम्भूसम्बन्धिनि त्रि० "धाम स्वायम्भुवं ययुरिति" कुमारः । स्त्रियां ङीप् । सा च ब्राह्मयाञ्च ।
**स्वार्थिक** त्रि० स्वार्थे विहितः ठण् । स्वार्थविहिते व्याकरणोक्ते प्रत्यये ।
**स्वाराज्** पु० स्वः स्वर्गे राजते राज-क्विप् । इन्द्रे ।
**स्वाराज्य** न० स्वराजः स्वाराजो वा भावः ष्यञ् । ब्रह्मत्वे, इन्द्रत्वे च ।
**स्वारोचिष** पु० द्वितीये मनौ । "स्वारोचिषेऽन्तरे प्राप्ते" इति चण्डी ।
**स्वार्थ** पु० स्वस्य अर्थः प्रयोजनम् अभिधेयो वा । स्वप्रयोजने स्वाभिधेये च "सार्थकः स्वार्थबोधकृदिति" शब्दशक्ति० ।
**स्वास्थ्य** न० स्वस्थस्य भावः ष्यञ् । आरोग्ये, सन्तोषे, सुखे च ।
**स्वाहा** अव्य० सु+आ+ह्वे-डा नि० देवोद्देशेन हविस्त्यागे । अग्निभार्य्यायां "स्वाहयेव हविर्भुजमिति" रघुः मातृकाभेदे च स्त्री० "नमः स्वधायै स्वाहायै" इति पितृगाथा ।
**स्वाहाप्रिय** पु० ६त० । अग्नौ । स्वाहापत्यादयोप्यत्र ।
**स्वाहाभुज्** पु० स्वाहेतिमन्त्रेण त्यक्तद्रव्यं भुङ्क्ते भुज-क्विप् । देवे ।
**स्विद्** अव्य० स्विद-क्विप् । प्रश्ने, वितर्के, पादपूरणे च ।
**स्विन्न** त्रि० स्विद-क्त । घर्म्मयुक्ते, प्रस्वेदान्विते च । [अङ्गीकारे ।
**स्वीकार** पु० अस्वस्य स्वस्य कारः करणं स्व+च्वि+कृ-घञ् ।
**स्वीय** त्रि० स्वस्येदम् छ अपाणिनीयैरत्र न कुगिति मन्यते । स्वसम्बन्धिनि । नायिकाभेदे स्त्री० ।
**स्वुर्च्छ** विस्मृतौ स्वा० प० सक० सेट् । स्वूर्च्छति अस्वूर्च्छीत् ।
**स्वृ** शब्दे अक० उपतापे सक० भ्वा० प० वेट् । स्वरति अस्वारीत् अस्वार्षीत् ।
**स्वॄ** हिंसने क्र्या० प्वा० प० सक० सेट् स्वृणाति अस्वारीत् ।
**स्वेक** गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः । स्वेकते अस्वेकिष्ट ।
**स्वेच्छा** स्त्री० स्वस्येच्छा । स्वाभिलाषे ।
**स्वेच्छामृत्यु** पु० स्वेच्छया मृत्युर्यस्य । भीष्मे स्वेच्छाधीन मृत्युयुक्ते त्रि० ।
**स्वेद** पु० स्वेद-स्विद-वा, घञ् । पाकभेदे (सेका) घर्म्मे गात्रादितो जलादेः निष्यन्दने । [स्वेदजातमात्रे त्रि० ।
**स्वेदज** पु० स्वेदाज्जायते जन-ड । स्वेदजाते दंशादिजन्तौ ।
**स्वेदन** न० स्विद-णिच्-ल्युट् । गात्रादितो घर्म्मादेर्निस्सारणव्यापारे । ( भापरा ) ।

**स्वेदनी** स्त्री० स्विद्यते पच्यतेऽनया स्विद-ल्युट्। लौहपात्रभेदे (ताओया) संज्ञायां कन् टापि ह्रस्वः। स्वेदनिका। कन्दुरूपे पात्रे भर्ज्जनपात्रे स्त्री०। [च त्रि०।

**स्वैर** न० स्वस्य ईरम् ईर-अच् वृद्धिः। स्वेच्छायाम्। तद्वति मन्दे,

**स्वैरिन्** त्रि० स्वेनैव ईरयितुं शीलमस्य ईर-णिनि वृद्धिः। स्वेच्छाचारिणि स्वतन्त्रे। व्यभिचारिस्त्रियां स्त्री० ङीप्।

**स्वोपार्जित** त्रि० स्वेन उपार्जितम्। स्वयमर्ज्जिते धनादौ।

## ह

**ह** अव्य० हा-ड। पादपूरणे, सम्बोधने, नियोगे, क्षेपे, निग्रहे, प्रसिद्धौ च,। शिवे, जले, शून्ये, मङ्गले, आकाशे, रक्ते, स्वर्गे, पापहरणे, चन्द्रे, सकोपवारणे, शुष्के च पु०।

**हंस** पु० हस-अच्-पृ०। स्वनामख्याते पक्षिभेदे, निर्लोभनृपे, विष्णौ, सूर्य्ये, परमात्मनि, "हंसं तनौ सन्निहितं चरन्तमिति" नैषधम्। मत्सरे, यतिभेदे, मन्त्रभेदे, देहस्थवायुचेष्टाभेदे, अश्वभेदे, सुमेरुपर्व्वते, शिवे, अग्रस्थिते, श्रेष्ठे, विशुद्धे, अजपामन्त्ररूपे वर्णे च "हंकारेण बहिर्याति सकारेण विशेत्पुनः। हंसेति सततं मन्त्रं जीवो जपति सर्व्वदेति" तन्त्रम्।

**हंसक** पु० हंस इव कायति शब्दायते कै-क। पादकटके नूपूरादौ।

**हंसगामिनी** स्त्री० हंस इव मृदु गच्छति गम—णिनि। मृदुगामिन्यां स्त्रियाम्। हंसेन गच्छति णिनि ङीप्। ब्रह्माण्याम्।

**हंसनादिनी** स्त्री० "गजेन्द्रगमना तन्वी कोकिलालापसंयुता। नितम्बे गुर्व्विणी या स्यात् सा स्मृता हंसनादिनी"त्युक्तलक्षणायां नार्य्याम्।

**हंसपदी** स्त्री० हंसस्येव पादाः मूलान्यस्याः पाद्भावे स्त्रियां ङीपि पद्भावः। गोधातकोलतायाम्। छन्दोभेदे तु हंसपदा।

**हंसपाद** न० हंसस्य पादः तद्वर्णोऽस्त्यस्य अच्। हिङ्गुले।

**हंसमाला** स्त्री० ६त०। पङ्क्त्याकारेण स्थिते हंससमूहे, कादम्बे च।

**हंसरथ** पु० हंसः रथो वाहनं यस्य। चतुर्मुखे ब्रह्मणि हंसवाहनादयोप्यत्र।

**हंसलोमश** न० हंस इव लोमशं युक्तम्। कासीसे उपधातौ।

**हंसवती** स्त्री० हंसस्तत्पादाकारः अस्त्यस्याः मतुप् मस्य वः। हंसपद्याम्।

**हंसवीज** न० हंसस्य वीजमत्र। हंसडिम्बे।

**हंसाङ्घ्रि** पु० हंसस्याङ्घ्रिरिव लोहितत्वात्। हिङ्गुले।

**हंसारूढ़** पु० हंसमारूढः आ+रुह-क्त। ब्रह्मणि तच्छक्त्यां ब्रह्माण्यां स्त्री०। [छन्दोभेदे च।

**हंसी** स्त्री० हंसस्य भार्य्या ङीप्। हंसयोषिति द्वाविंशत्यक्षरपादके

**हंहो** अव्य० हमित्यव्यक्तं जहाति हा-डो। सम्बोधने "हंहो चिन्मयचित्तचन्द्रमणयं चन्द्रा इति दर्पे, दम्भे, प्रश्ने च।

**हञ्जे(ञ्जा)** अव्य० हमित्यव्यक्तं जप्यतेऽत्र जप-डे डा वा। नाट्यक्रियायां नटाभिनेयकृते चेटीसम्बोधने।

**हट** दीप्तौ भ्वा० प० अक० सेट्। हटति अहटीत्-अहाटीत्।

**हट्ट** पु० हट-ट टस्य नेत्वम्। क्रयविक्रयस्थाने "प्रतिहट्टपथे घरट्टजादिति" नैषधम्। [(हाटचोर) चौरभेदे।

**हट्टचौरक** पु० हट्टे प्रकाशिते स्थाने एव चौरः स्वार्थे कन्।

**हट्टविलासिनी** स्त्री० हट्टं विलासयति वि+लस-णिच्-णिनि ङीप्। गन्धद्रव्यभेदे, हरिद्रायाञ्च।

**हठ** कीलवन्धे बलात्कारे प्लुतौ च स्वा० पर० अक० सेट्। हठति। अहाठीत्-अहठीत्।

**हठ** पु० हठ-अच्। बलात्कारे, प्रसन्याञ्च।

**हठपर्णी** स्त्री० हठते प्लवते हठ-अच् हठं प्लवमानं पर्णं यस्याः ङीप्। शैवाले, कुम्भिकायाञ्च।

**हठयोग** पु० हठात्कारेण योगः। प्राणायामादिक्रियाभ्यासजे राजयोगं विनैव परमात्मसाक्षात्काररूपे चित्तवृत्तिरोधात्मके योगे।

**हठालु** पु० हठः प्लवमान, आलुरिव। कुम्भिकायाम्। (पाना)।

**हठी** स्त्री० हठ-अच् गौ० ङीप्। वारिपर्ण्याम् (पाना)।

**हडि** पु० हठ-इन् पृ०। पशुमारणसाधने काष्ठयन्त्रे (हाड़िकाठ)।

**हडिक** पु० हठ-इकक् पृ०। नीचजातिभेदे (हाड़ि)।

**हड्ड** न० हड-ड डस्य नेत्वम् पृ०। अस्थि-(हाड)। संज्ञायां कन्। नीचजातिभेदे (हाड़ि)।

**हण्डा** स्त्री० हन-डा डस्य नेत्वम्। बृहति-मृत्पात्रभेदे (हांड़ा) नाट्योक्तौ नीचसम्बोधने अव्य०।

**हण्डिका** स्त्री० क्षुद्रा हण्डा कन्। क्षुद्रे मृत्पात्रे (हांड़ि)।

**हण्डे** अव्य० हन-डे डस्य नेत्वम्। नाट्योक्तौ नीचसम्बोधने।

**हत** त्रि० हन-क्त। नाशिते, प्रतिहते, प्रतिबद्धे, आशारहिते, गुणिते च। भावे क्त, हनने, गुणने च न०।

**हतक** त्रि० हत इव नष्टप्रायत्वात् कन्। नष्टप्राये (मड़ा)।

**हताश** त्रि० हता आशा यस्य। आशाशून्ये, वन्ध्ये, निर्दये, पिशुने च।

**हति** स्त्री० हन-क्तिन्। हनने, मारणे, व्याघाते, अपकर्षे, गुणने च।

**हत्या** स्त्री० हन-क्यप्। मारणे, वधे, प्राणवियोगानुकूलव्यापारे "ब्रह्महत्या सुरापानमिति" स्मृतिः।

**हद** विष्ठोत्सर्गे भ्वा० आ० अक० सेट्। हदते अहदिष्ट।

**हन** वधे-गतौ च भ्वा० प० सक० अनिट्। हन्ति अवधीत्। "कुञ्जं हन्ति कृशोदरी"त्यादावालङ्कारिकास्तु गतौ निहतार्थतामाहुः।

**हनन** न० हन-ल्युट्। "स्यात् प्राणविच्छेदफलव्यापारो हननं स्मृत" मित्युक्ते, व्यापारे गुणने च।

**हनील** पु० हन-इन् ङीप् हन्यां लीयते ली-ड। केतकीवृक्षे।

**हनु(नू)** पु० स्त्री० हन–उन् वा ऊङ्। कपोलद्वयोपरिस्थे मुखभागे, हट्टविलासिन्यां, रोगे, अस्त्रभेदे, मृतौ च स्त्री०।

**हनु(नू)मत्** पु० हनु(नू)+अस्त्यर्थे मतुप्। रामस्य अनुचरे, अञ्जनागर्भजाते पवनतनये वानरभेदे।

**हन्त** अव्य० हन–त। हर्षे, अनुकम्पायां, विषादे, आर्त्तौ, वादे, सम्भ्रमे, वाक्यारम्भे, खेदे, परिच्छेदे, कल्पने च।

**हन्तकार** पु० हन्त हर्षस्य कारः करणं, हन्तेत्यस्य कारः उच्चारणम् वा कृ-घञ्। अतिथये देये-अन्ने, हन्तशब्दप्रयोगे च।

**हन्तृ** त्रि० हन–तृच्। हननकर्त्तरि सततहननानुशीलयितरि च स्त्रियां ङीप्। "महिषासुरहन्त्र्याश्चेति" पुराणम्।

**हन्न** त्रि० हद–क्त। कृतपुरीषोत्सर्गे।

**हम्** अव्य० हा–डम्। रुषोक्तौ, अनुनये च। [पृ०। हम्वाप्यत्र।

**हम्भा(म्मा)** स्त्री० हम्+भा–हम्म–अङ् वा। गवां ध्वनौ।

**हम्म** गतौ भ्वा० प० सक० सेट्। हम्मति। अहम्मीत्।

**हय** गतौ सक० क्रान्तौ अक० भ्वा० प० सेट्। हयति अहयीत्।

**हय** पु० हय–हि–वा अच्। घोटके।

**हयगन्ध** पु० हयस्येव गन्धोऽस्य। काचलवणे। अश्वगन्धायाम्, अजमोदायाञ्च स्त्री०।

**हयग्रीव** पु० हयस्येव दीर्घा ग्रीवाऽस्य। विष्णोरवतारभेदे, दैत्यभेदे च, "हयग्रीवसधोपेतं तद्वै भागवतं विदुरिति" पुराणम् दुर्गायां स्त्री०।

**हयग्रीवहन्** पु० हयग्रीवाख्यं दैत्यं हतवान् हन–क्विप्। विष्णौ।

**हयन** न० हि–ल्युट्। कर्णीरथे। [माषपर्ण्याम्।

**हयपुच्छी** स्त्री० हयस्य पुच्छाकारोऽस्त्यस्याः अच् गौ० ङीप्।

**हयप्रिय** पु० ६त० यवे, अश्वगन्धायां, खर्जूर्याञ्च स्त्री० अश्ववल्लभे त्रि०। हयेष्टादयोप्यत्र। [ण्वुल्। तत्रैव।

**हयमार** पु० हयं मारयति निषेवणात् मृ–णिच्–अण्। करवीरे,

**हयमारण** पु० हयं मारयति मृ–णिच्–ल्यु। अश्वत्थवृक्षे।

**हयवाहनसङ्कर** पु० हयस्य वाहनं चालनं सङ्किरति सम्×कॄ–अच्। रक्तकाञ्चने।

**हया** स्त्री० हयः हयगन्धोऽस्त्यस्याः अच्। अश्वगन्धायाम्।

**हयाध्यक्ष** पु० हयेषु तद्रक्षणेषु अध्यक्षः। अश्वरक्षणाधिकृते।

**हयानन्द** पु० हयमानन्दयति आ+नन्द–णिच्–अण्। मुद्गे।

**हयारि** पु० ६त०। करवीरे।

**हयाशना** स्त्री० हयैरश्यते अश–ल्युट्। सल्लकीवृक्षे।

**हयोत्तम** पु० हयेषु उत्तमः। अश्वरत्ने आजानेयेऽश्वे।

**हर** पु० हृ–अच्। रुद्रे, अग्नौ गर्द्दभे, विभाजके च "अन्योन्यहाराभिहतौ हरांशा" विति लीलावती। हृ-भावे अप्। हरणे, विभाजने च।

**हरगौरी** स्त्री० हरदेहार्द्धहरा गौरी। अर्द्धनारीश्वररूपे शिवपार्व्वत्योर्मूर्त्तिभेदे द्वन्द्व०। शिवपार्व्वत्योः द्वि० व०।

**हरण** न० हृ–भावे ल्युट्। स्थानान्तरकरणे, विभाजने च कर्मणि ल्युट्। यौतुकादौ देये धने।

**हरतेजस्** न० ६ त०। पारदे शिववीर्य्ये च। हरबीजादयोप्यत्र।

**हरशेखरा** स्त्री० हरस्य शेखरमावासत्वेनास्त्यस्याः अच्। गङ्गायाम्।

**हरि** पु० हृ–इन्। विष्णौ, सिंहे, सर्पे, वानरे, भेके, चन्द्रे, सूर्य्ये, वायौ, अश्वे, यमे, हरे, ब्रह्मणि, किरणे, नववर्षमध्ये वर्षभेदे, मयूरे, कोकिले, हंसे, शुकपक्षिणि, भर्त्तृहरिनामके वाक्यपदीयग्रन्थकारके-पण्डिते, इन्द्रे, पीते, पिङ्गलवर्णे, हरिद्वर्णे च। तद्वति त्रि० "हरिं विदित्वा हरिभिश्च वाजिभिरि'ति रघुः।

**हरिकेश** पु० हरिः पिङ्गलः केशोऽस्य। शिवे, शिवभक्तयक्षभेदे च। स एव तत्प्रसादात् काश्यां दण्डपाणित्वमाप्तवान् इति काशीखण्डे स्थितम्। [पुरीभेदे च।

**हरिगृह** न० ६त०। हरेर्विष्णुमूर्त्तेर्गृहम् हरिमूर्त्तिगृहे एकचक्र·

**हरिचन्दन** न० हरेरिन्द्रस्य प्रियं चन्दनम्, चन्दयति चदि ल्यु ६त० वा। देवतरुभेदे। हरेर्विष्णोः प्रियं चन्दनम्। श्वेतचन्दने गोशीर्षनामके-मलयैकदेशे-जाते चन्दनभेदे, ज्योत्स्नायां, कुङ्कुमे, सुन्दराङ्गे च न०।

**हरिण** पु० हृ–इनन्। स्वनामख्याते पशौ, शिवे, विष्णौ, हंसे, शुक्लवर्णे पाण्डुवर्णे च। तद्वति त्रि०।

**हरिणहृदय** पु० हरिणस्येव भीतं हृदयमस्य। भीरौ।

**हरिणाक्षी** स्त्री० हरिणस्येवाक्षि यस्याः ५त० षच् समा० ङीप्। हट्टविलासिनीनामगन्धद्रव्ये हरिणतुल्यनेत्रवति त्रि० स्त्रियां ङीप्। 'हरिणाक्षि! कटाक्षेणे'त्युद्भटः।

**हरिणाङ्क** पु० हरिणः शशनामको मृगोऽङ्कश्चिह्नं, अङ्के क्रोडे वा अस्य। चन्द्रे।

**हरिणी** स्त्री० हरितवर्णा स्त्री ङीप् तस्य नः। हरिद्वर्णायां स्त्रियां, स्वर्णप्रतिमायां, स्वर्णयूथ्यां, मञ्जिष्ठायां, वरुण्यां, वराहस्त्रियां, सप्तदशाक्षरपादके छन्दोभेदे च। हरिणस्य स्त्री० ङीप्। मृग्याम्।

**हरित्** पु० हृ–इति। नीलपीतमिश्रितवर्णे (पातारराङ्ग) पलाशवर्णे च तद्वति त्रि०। सूर्य्याश्वे, मुद्गे, सिंहे, सूर्य्ये विष्णौ च पु०।

**हरित** पु० हृ-इतच्। सिंहे, मन्थानतृणे, हरिद्वर्णे च। तद्वति त्रि०। स्त्रियां ङीप् तस्य नश्च। दूर्वायां, जयन्त्यां, हरिद्रायां, कपिलद्राक्षायां नीलदूर्वायाञ्च स्त्री० टाप्।

**हरितक** न० हरितेन वर्णेन कायति प्रकाशते कै-क। शाके।

**हरितशाक** पु० हरितं शाकमस्य। शोभाञ्जने।

**हरिताल** न० हरिवर्णस्य पीतवर्णस्य तालः प्रतिष्ठा यत्र। पीतवर्णे उपधातुभेदे 'स हरितालसमाननवांशुकमिति' माघः। पीतवर्णपक्षिभेदे पु० स्वार्थे कन्। हरिताले।

**हरितालिका** स्त्री० हरेस्तालो हस्ततालो यस्यां कप् अत इत्त्वम्। सौरभाद्रशुक्लचतुर्थ्याम्। हरितवर्णाय अलति पर्य्याप्नोति अल-ण्वुल्। दूर्वायाम्। अण् ङीप्। हरिताली। दूर्वायाम्, सा च आकाशरेखायां, खड्गलतायाञ्च।

**हरिताश्म** न० हरितवर्णमश्म अच् समा० (पेरीजा) मणिभेदे, तुत्थे, (तुंते) उपधातुभेदे च।

**हरित्पर्ण** न० हरिद्वर्णं पर्णमस्य। मूलके (मूला) हरिपर्णादयोप्यत्र।

**हरिदर्भ** पु० हरिः हरिद्वर्णो दर्भः। हरिद्वर्णे कुशे।

**हरिदश्व** पु० हरिन्नामकोऽश्वो यस्य। सूर्य्ये।

**हरिदेव** पु० हरिर्देवोऽधिष्ठात्री देवता अस्य। श्रवणानक्षत्रे।

**हरिद्गर्भ** पु० हरिद्वर्णो गर्भो यस्य। हरिद्वर्णे कुशे।

**हरिद्रव** पु० हरिवर्णः पिङ्गलवर्णो द्रवद्रव्ये। नागकेशररजसि।

**हरिद्रा** स्त्री० हरिं पीतवर्णं द्रवति द्रु-ड। स्वनामख्याते ओषधिभेदे।

**हरिद्रागणेश** पु० हरिद्रावर्णयुक्तो गणेशः। पीतवर्णे गणेशभेदे।

**हरिद्राभ** पु० हरिद्रेव आभाति आ+भा-क। पीतसाले (पियासाल) कर्बुरके, पीतवर्णे च। तद्वति त्रि०।

**हरिद्राराग** त्रि० हरिद्राया इव रागः रञ्जनमनुरागोऽस्य। अस्थिरानुरागे सौहृदे।

**हरिद्रु** पु० हरिः हरिद्वर्णो दलादिद्वारा, द्रुः। वृक्षमात्रे, दारुहरिद्रायाञ्च।

**हरिद्वार** न० हरेस्तत्प्राप्तेः द्वारं सेवनात्। स्वनामख्याते तीर्थभेदे।

**हरिनामन्** न० हरेर्नाम तदाख्यानं वा। हरिनामनि तदाख्याने च हरेरिव नामास्य। मुद्गे पु०।

**हरिनेत्र** न० हरेर्नेत्रमिव श्वेतपद्मे ६त०। विष्णोर्लोचने। हरेः सिंहस्येव नेत्रमस्य दीर्घत्वात्। पेचके पु०।

**हरिन्मणि** पु० हरिद्वर्णो मणिः। मरकते मणौ।

**हरिन्मुद्ग** पु० हरिद्वर्णो मुद्गः। शरदि पक्वमुद्गे।

**हरिप्रिय** न० हरेर्विष्णोः प्रियम्। कालीयके चन्दने, उशीरे च। कदम्बे, पीतभृङ्गराजे, विष्णुकन्दे, करवीरे, शङ्खे, बन्धूके, शिवे, वातुले च पु०। लक्ष्म्यां, तुलस्यां, पृथिव्यां, द्वादश्यां तिथौ च स्त्री०। हरिवल्लभे त्रि०।

**हरिवालुक** न० हरेर्विष्णोः प्रियम् वालुकम्। एलवालुके।

**हरिभक्त** त्रि० हरौ विष्णौ भक्तः। विष्णुभक्तिमति 'सर्व्वजीवेषु यो विष्णुं भावयेत् समभावतः। हरौ करोति भक्तिञ्च हरिभक्तः स च स्मृतः' इति पुराणोक्ते सर्व्वत्र समदृष्टिपूर्व्वकहरिसेवके पु०।

**हरिभद्र** न० हरिं भद्रयति सन्तर्पयति अच्। हरिवालुके।

**हरिभुज्** पु० हरिं भेकं भुङ्क्ते भुज-क्विप्। सर्पे।

**हरिमन्थ** पु० मथ्यते मन्थः एकदेशः हरिः पीतो मन्थो यस्य। चणके, तस्य बहुमन्थनेऽपि पीतत्वानपायात्तथात्वम्। हरिं सर्पं मथ्नाति मन्थ-अण्। गणिकारिकायाम् देशभेदे च।

**हरिमन्थक** पु० हरिः पीतो मन्थ एकखण्डो यस्य कप्। चणके।

**हरिमन्थज** पु० हरिमन्थे देशे जायते जन-ड। चणके, कृष्णमुद्गे च।

**हरिवंश** पु० ६त०। विष्णुवंशे, हरेर्वंशः आख्येयत्वेनास्त्यत्र अच् महाभारतान्तर्गते खिलरूपे ग्रन्थभेदे।

**हरिवर्ष** न० हरिनामकं वर्षम्। जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे।

**हरिवासर** न० हरिप्रियं वासरम्। एकादशीदिवसे, द्वादशीप्रथमपादे च। 'अन्नमाश्रित्य पापानि तिष्ठन्ति हरिवासरे' इति, 'द्वादश्याः प्रथमः पादो हरिवासरसंज्ञक'इति च पुरा०।

**हरिवाहन** पु० हरिं वाहयति स्थानान्तरं नयति वह+णिच् ल्यु। गरुडे ६त० वारिवाहनमप्यत्र न०।

**हरिवीज** न० हरेर्वीजमुत्पत्तिकारणत्वेनास्त्यस्य अच्। हरिताले 'हरितालं हरेर्वीजं लक्ष्म्या वीजं मनःशिले'ति वैद्यकम्।

**हरिशयन** न० हरेः शयनं निद्रा। विष्णुनिद्रायाम्। हरेः शयनं यत्र। तदुपलक्षिते काले स च 'मैत्राद्यपादे स्वपितीह विष्णु'रित्युपक्रम्य 'प्रबुध्यते मासचतुष्टयेने'त्यन्तेन दर्शितः आषाढस्य शुक्लद्वादश्यवधिकार्त्तिकशुक्लद्वादशीपर्य्यन्तरूपो मासचतुष्टयात्मकः। विस्तरो वृहदभिधाने।

**हरिश्चन्द्र** पु० हरिः चन्द्र इव ऋषौ सुट्। सूर्य्यवंश्ये त्रिशङ्कुपुत्रे नृपभेदे। ऋषिभिन्ने तु न सुट्। हरिचन्द्र एव।

**हरिश्चन्द्रपुर** न० ६त०। सौभनगरे।

**हरिसङ्कीर्त्तन** न० हरेर्हरिनाम्नः संकीर्त्तनं कथनम्। श्रीविष्णोर्नामोच्चारणे 'सकलं निष्फलं राजन्! हरिसङ्कीर्त्तनं विने'ति पुराणम्।

**हरिहय** पु० हरिवर्णो हयो यस्य। इन्द्रे 'हरिं विदित्वा हरिभिश्च वाजिभि'रिति रघौ तस्य हरिवर्णतुरगत्वमुक्तम्।

**हरिहर** पु० हरियुक्तो हरः। हरिहरयोः संश्लिष्टार्द्धदेहतया स्थिते मूर्त्तिभेदे। द्व०। शिवनारायणयोः द्वि० व०।

**हरिहरक्षेत्र** न० हरिहरयोः प्रियं क्षेत्रम्। गङ्गागण्डकीसङ्गमान्तिकदेशस्थे पाटलिपुत्रादुत्तरस्यां दिशि स्थिते तीर्थभेदे।

**हरीतकी** स्त्री० हरिं पीतवर्णं फलद्वारा इता प्राप्ता इण-क्त। संज्ञायां कन् गौ० ङीप्। स्वनामख्याते वृक्षे तस्याः फलम् अण् तस्य लुप्। हरीतकीफले स्त्री०। 'कदाचित् कुपिता माता नोदरस्था हरीतकी'ति वैद्यकम्।

**हरेणु** स्त्री० हृ-एनु। रेणुकानामगन्धद्रव्ये, कुलस्त्रियाञ्च। (मटर) सतीले पु०। स्वार्थे कन् तत्रैव।

**हर्त्तृ** त्रि० हृ-तृच्। हरणकारिणि। चौरे, सूर्य्ये च पु०।

**हर्म्य** न० हृ-यत् सुट् च। धनिनां गृहभेदे 'रम्यं हर्म्यतल'मिति प्रबोधचन्द्रोदयः।

**हर्य** क्लमे अक० गतौ सक० भ्वा० पर० सेट्। हर्यति अहर्यीत्।

**हर्य्यक्ष** पु० हरि पिङ्गलमक्षि यस्य पच् समा०। सिंहे, कुवेरे च।

**हर्य्यश्व** पु० हरिवर्णोऽश्वोऽस्य। इन्द्रे

**हर्ष** पु० हृष-घञ्। सुखे, इष्टाधिगमजन्यानन्दे।

**हर्षण** पु० हर्षयति अभीष्टदानात् हृष-णिच्-ल्यु। विष्कम्भादिमध्ये चतुर्दशे योगे। हर्षकारके त्रि०। हृष-ल्युट्। हर्षे न०।

**हर्षमाण** पु० हृष ताच्छील्ये चानश्। श्राद्धदेवभेदे हृष्टचित्ते। त्रि०

**हर्षिणी** स्त्री० हृष-णिच्-णिनि ङीप्। विजयायाम्। हर्षकारके त्रि०।

**हर्षित** त्रि० हर्षो जातोऽस्य इतच्। जातानन्दे।

**हल** विलेखे भ्वा० पर० सक० सेट् ज्वलादि०। हलति अहालीत्।

**हल** न० हल्यते कृष्यतेऽनेन हल-घञर्थे क। लाङ्गले।

**हलद्दी** स्त्री० हल-शतृ हलन्तं कृषकमपि दायति शोधयति दै-क गौ० ङीप्। हरिद्रायाम्।

**हलधर** पु० हलं धरति आयुधत्वेन धृ-अच्। बलरामे। कृषके त्रि० 'उन्मूलिता हलधरेण पदावघातैरि'त्युद्भटः।

**हलभूति** स्त्री० हलेन हलसाध्या भूतिः। कृषिवृत्तौ।

**हला** व्य० हेति लीयते ला-का। नाट्योक्तौ सखीसम्बोधने, सख्यां, पृथिव्यां, जले च।

**हलायुध** पु० हलेन आयुध्यति आ + युध क। बलदेवे।

**हलाहल** पु० हलेनेव आहलति विलिखति आ + हल-अच्। विषभेदे।

**हलि** पु० हल-इन्। वृहद्धले।

**हलिन्** पु० हलोऽस्त्यस्यायुधत्वेन इनि। बलरामे। कृषके त्रि०

**हलीन** पु० हलाय हितः ख। शाकवृक्षे (शेगुन)।

**हलीशा** स्त्री० हलस्य ईशा शक०। लाङ्गलदण्डे।

**हल्य** त्रि० हलं हलकर्षणमर्हति तस्येदं वा यत्। हलकृष्टे क्षेत्रादौ, हलसम्बन्धिनि च। हलानां समूहः यत्। हलसमूहे स्त्री०।

**हल्ल** विकाशे भ्वा० पर० अक० सेट्। हल्लति अहल्लीत्।

**हल्लक** न० हल्ल-ण्वुल्। रक्तकह्लारे (हेला)।

**हल्लीष** न० हल्ल-क्विप् लष-अच् पृ० कर्म०। स्त्रीणां मण्डलिकाकारनृत्ये। ततः कन्। तत्रैव।

**हव** पु० हु-अप् ह्वे-अप् पृ० वा। यज्ञे, आज्ञायां, होमे, आह्वाने च।

**हवन** न० हु-ल्युट्। होमे देवाद्युद्देशेन मन्त्रपूर्व्वकं वह्नौ हविःप्रक्षेपे।

**हवनी** स्त्री० हूयतेऽस्यां हु-ल्युट्। यज्ञकुण्डे।

**हवनीय** त्रि० हु-कर्म्मणि अनीयर्। होमद्रव्ये।

**हवा** अव्य० ह च वा च द्वन्द्व०। प्रसिद्धार्थे।

**हविरशन** पु० हविरश्नाति अश-युच्। वह्नौ।

**हविर्गन्धा** स्त्री० हविषो गन्धो यस्याम्। शम्याम् (शांइ)।

**हविर्गेह** न० हविषो गृहम्। यज्ञमण्डपसन्निकृष्टस्थे हवनीयद्रव्यस्थापनार्थे गेहे।

**हविर्मन्थ** पु० हविषे मथ्यतेऽसौ मन्थ-घञ्। गणिकारीवृक्षे।

**हविष्य** न० हविषे हितम् यत्। घृते, स्मृत्युक्ते हैमन्तिकादावन्ने च 'चेरुर्हविष्यं भुञ्जानाः' इति भागवतम्।

**हविष्यान्न** न० कर्म०। 'हैमन्तिकं सिताऽस्विन्नं धान्यं मुद्गास्तिला यवाः। कलायकङ्गुनीवारा वास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सिन्धुसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिडी जीरकञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्री फलान्यगुडमैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते' इत्युक्ते व्रतादौ भक्ष्यद्रव्यभेदे।

**हविस्** न० हूयते हु-कर्म्मणि, असुन्। घृते, हवनीयद्रव्यमात्रे च 'वपाया मेदसो हविषोनुब्रूहीति' श्रुतिः। भावे असुन्। होमे।

**हव्य** न० हु-कर्मणि यत्। देवयोग्यान्ने हवनीयद्रव्ये त्रि०। भावे यत् होमे न०। [स्विन्ने अन्ने चरौ।

**हव्यपाक** पु० हव्याय होमाय पाको यस्य। होमार्थं घृतादिमिश्रिते

**हव्यवाह** पु० हव्यं वहति देवान् वह-अण्। अग्नौ।

**हव्यवाहन** पु० हव्यं वाहयति वह-णिच्-ल्यु। वह्नौ।

**हव्याश** पु० हव्यमश्नाति अश-अण्। वह्नौ। ल्यु। हव्याशनोऽप्यत्र पु०।

**हस** हासे भ्वा० प० अक० सेट् सिचि न वृद्धिः। हसति अहसीत् दोषदर्शनपूर्व्वकहासे तु सकर्म्मकः 'स्थितावहस्येव पुरं मघोनः' इति भट्टिः।

**ह (हा)स** पु० हस-अप् घञ् वा। हासे सुखविकासनभेदे।

**हसन** न० हस-ल्युट्। प्रीत्या मुखकपोलादेर्विकाशने हास्ये।

**हसन्ती** स्त्री० हस-झ ङीप्। अङ्गारधानिकायां मल्लिकाभेदे, शाकिनीभेदे च। हस-शतृ ङीप्। हासिनि त्रि०। स्त्रियाम् ङीप्।

**हसित** न० हस-भावे क्त। हास्ये, कर्त्तरि क्तः। कृतहास्ये विकशिते च।

**हस्त** पु० हस-तन् न इट्। देहावयवभेदे (हात) चतुर्विंशत्यङ्गुलपरिमाणे 'यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिरिति' लीलावती। हस्तिशुण्डे च। अश्विन्यादिषु त्रयोदशे नक्षत्रे पु० स्त्री०। 'जाह्नवी हस्तयोगे' इति पुराणम् 'पुष्या हस्ता तथा स्वातिरि'ति ज्योतिषम्।

**हस्तामलक** न० हस्तस्थितमामलकम् आमलक्याः फलं तदिव वा। करावस्थितामलकफले, तद्वत् अनायासदृश्ये पदार्थे वेदान्तप्रसिद्धग्रन्थभेदे च। करामलकादयोप्यत्र।

**हस्तिक** न० हस्तिनां समूहः कन्। हस्तिसमूहे।

**हस्तिकर्ण** पु० हस्तिनः कर्ण इव पर्णमस्य अच्। एरण्डवृक्षे, पलाशभेदे, गणदेवताभेदे, हस्तिकन्दे, रक्तैरण्डे च। कन्। किंशुकभेदे।

**हस्तिकन्द** पु० हस्तिनः पदमिव कन्दोऽस्य। स्वनामख्याते कन्दभेदे।

**हस्तिकरञ्ज** पु० हस्तीव महान् करञ्जः। महाकरञ्जे।

**हस्तिकर्णदल** पु० हस्तिनः कर्ण इव दलमस्य। पलाशभेदे।

**हस्तिकोलि** पु० हस्तीव कोलिः । वदरीभेदे ।
**हस्तिघोषा** स्त्री० हस्तीव वृहती घोषा । वृहद्घोषायाम् ।
**हस्तिघोषातकी** स्त्री० हस्तीव बृहती घोषातकी । हस्तिघोषायाम् ।
**हस्तिचारिणी** स्त्री० हस्तीव चरति चर-णिनि । महाकरञ्जे ।
**हस्तिदन्त** पु० ६त० । करिदन्ते । तदाकारोऽस्त्यस्य अच् । मूलके न० । गृहभित्तिनिखातार्द्धे काष्ठनिर्मितकलिकाकारे पदार्थे नागदन्तादयोऽप्यत्र ।
**हस्तिदन्तफला** स्त्री० हस्तिदन्त इव फलमस्याः । एर्वारौ कर्कटीभेदे ।
**हस्तिन्** पु० हस्तः शुण्डादण्डोऽस्त्यस्य । गजे, चन्द्रवंश्ये नृपभेदे ।
**हस्तिनख** पु० हस्तिनो नख इव हस्तिना न खन्यते नञ् + खन-ड वा । पुरद्वारस्थे, मृत्कूटे, दुर्गद्वारावरोधनार्थे निम्नोन्नते खातोद्धृते मृद्राशौ च ।
**हस्तिनापुर** न० हस्तिना तदाख्यनृपेण चिह्नितं तत्कृतत्वात् पुरम् अलुक्स० । (दिल्ली) पुरभेदे ।
**हस्तिनी** स्त्री० हस्तिनः योषा ङीप् । करिण्याम् गजयोषिति स्त्रीभेदे च ।
**हस्तिप** पु० हस्तिनं पाति पा-क । हस्त्यारोहे । स्वार्थे कन् तत्रैव ।
**हस्तिपत्र** पु० हस्तिकर्ण इव पत्रमस्य । हस्तिकन्दवृक्षे ।
**हस्तिपर्णिका** स्त्री० हस्तिकर्ण इव पर्णमस्याः कप् अत इत्वम् । राजकोषातक्याम् ।
**हस्तिपर्णी** स्त्री० हस्तिकर्ण इव पर्णमस्या ङीप् । मोरटालतायां, कर्कट्याञ्च । [भेदे च ।
**हस्तिमद** पु० ६त० । करिकरनिःसृतमदजले । स इव । गन्धद्रव्य-
**हस्तिरोहणक** पु० हस्तीव रोहते ल्यु कन् । महाकरञ्जे ।
**हस्तिलोध्रक** पु० हस्तीव लोध्रः स्वार्थे कन् । लोध्रभेदे ।
**हस्तिविषाणी** स्त्री० हस्तिविषाणं गजदन्तस्तदाकारः मध्यभागो (थोड़) यस्याः गौ० ङीप् । कदल्याम् ।
**हस्तिशुण्डा (ण्डी)** स्त्री० हस्तिशुण्डस्तदाकारोऽस्त्यस्याः अच् वा गौ० ङीप् । (हातिशुड़ा) वृक्षे ।
**हस्तिश्यामाक** पु० हस्तीव स्थूलः श्यामाकः । स्थूलश्यामाके ।
**हस्ते** अव्य० हस्त + ए । पाणौ इत्यर्थे स्वीकारे च ।
**हस्त्यध्यक्ष** पु० ७त० । गजाध्यक्षे गजरक्षणादौ नियुक्ते च ।
**हस्त्यारोह** पु० हस्तिनमारोहति आ + रुह अण् । हस्तिपके ।
**हहा** पु० हेति शब्दं जहाति हा-क्विप् । गन्धर्व्वभेदे ।
**हा** त्यागे जु० प० स० अनिट् । जहाति अहासीत् निष्ठातस्य नः ।
**हा** गतौ जु० आ० स० अनिट् निष्ठातस्य नः । जिहीते अहासिष्ट ।
**हा** अव्य० हा-का । विषादे, शोके, पीडायां, कुत्सायाञ्च ।
**हाङ्गर** पु० हा विषादाय पीडायै वा अङ्गं राति रा-क । स्वनामख्याते जलजन्तुभेदे । [निर्मिते त्रि० ।
**हाटक** न० हट-ण्वुल् । देशभेदे । तत्रजे-स्वर्णे, धुस्तूरे च स्वर्ण-

**हान** न० हा भावे क्त । परित्यागे 'हिमहानकृता न कृते'ति भट्टिः ।
**हानि** स्त्री० हा-क्तिन् नि० निः । त्यक्तौ अपचये ।
**हायन** पु० स्त्री० अम्बु जहाति हा-ल्यु-नि० । व्रीहौ । भावं जहाति हा-ल्यु नि० । वत्सरे अग्निशिखायां स्त्री० ।
**हार** पु० हृ-कर्म्मणि घञ् । मुक्तामालाभेदे 'हारो नारोपितः कण्ठे" इति सीतावाक्यम् । हरतीति कर्त्तरि घञ् ण वा । भाजके, "अन्योन्यहाराभिहतौ हरांशौ" इति लीलावती ।
**हारक** पु० हृ-ण्वुल् । चौरे, कितवे, शाखोटकभेदे, भाजकाङ्के च । हरणकर्त्तरि त्रि० । [द्राक्षायाम् ।
**हारहारा** स्त्री० हार इव हरति आस्वादनात् हृ-अण् । कपि-
**हारहूरा** स्त्री० ह्वे-क्विप् हूः हार इव हूवं राति रा-क । द्राक्षायाम् । मद्ये पु० ।
**हारावली** स्त्री० हार इवावली । मुक्तावल्यां "शृङ्गारहारावली" इति गङ्गास्तवः । पुरुषोत्तमकृते कोषभेदे च ।
**हारि(री)** स्त्री० हृ-णिच्-इन् वा ङीप् । द्यूतादिभङ्गे तत्पराजये, पथिकसमूहे च ।
**हारिद्र** पु० हरिद्रया रक्तः अण् । कदम्बवृक्षे तत्पुष्पस्य पीतप्रायत्वात् तथात्वम् । हरिद्रारक्ते त्रि० ।
**हारिन्** त्रि० हारोऽस्त्यस्य इनि हृ-णिनि वा । हारके, हारविशिष्टे, मनोहारिणि च । "हारीण्यबलानां हारीण्यवलानाम्" इति भट्टिः ।
**हारीत** पु० हृ णिच्-ईतच् । स्मृतिकर्त्तरि मुनिभेदे । पक्षिभेदे, कितवे च ।
**हार्द** न० हृदयस्य कर्म युवा० अण् हृदादेशः । स्नेहे, प्रेमणि । हृदि भवः विदितो वा अण् । हृदयस्थे, हृदयवेद्ये च त्रि० ।
**हार्य्य** पु० ह्रियतेऽसौ हृ-ण्यत् । बिभीतकवृक्षे । हरणीये त्रि० ।
**हाल** पु० हलोऽस्त्यस्य अण् हल एव वा अण् । बलरामे, हले च ।
**हाला** स्त्री० हल-घञ् । मद्ये, तालरसजे मद्ये च ।
**हालाहल** पु० न० हालेव हलति हल + अच् । स्थावरविषभेदे, कीटभेदे च । मद्ये स्त्री० तत्र ङीप् ।
**हालिक** त्रि० हलेन खनति हलः प्रहरणमस्य तस्येदं वा ठक् ठञ् वा । हलकर्षके, हलेन योद्धरि, हलसम्बन्धिनि च ।
**हाव** पु० ह्वे-भावे घञ् नि० । आह्वाने, स्त्रीणां शृङ्गारभावजे चेष्टाभेदे च ।
**हास्तिक** न० हस्तिनां समूहः ठण् । हस्तिसमूहे ।
**हास्तिन** न० हस्तिना नृपेण निर्वृत्तं नगरम् अण् संयोगपरत्वादिनो न टिलोपः । हस्तिनापुरे ।
**हास्य** न० हस-ण्यत् । हासे, हसने, अलङ्कारोक्ते रसभेदे च ।
**हाहाकार** पु० हाहा इत्यस्य कारः कृ-भावे घञ् युद्धशब्दे, शोकध्वनौ च ।
**हि** वर्द्धने गतौ च स्वादि० पर० सक० अनिट् । हिनोति अहैषीत् ।

हि अव्य० हा-हि वा डि । हेतौ, अवधारणे, विशेषे, प्रश्ने, सम्भ्रमे, हेतूपदेशे, शोके, असूयायां, श्लोकपूरणे च ।

हिंसक पु० हिन्स-ण्वुल् । व्याघ्रादौ हिंस्रे पशौ, शत्रौ च । हिंसाकारके त्रि० ।

हिंसा स्त्री० हिन्स-अ । वधे, घातने, चौर्य्यादिकर्मणि च ।

हिंस्र त्रि० हिन्स-र । हिंसाशीले, घोरे च । भये, मांस्यां, काकादन्यां, जटामांस्यां, गवेधुकायां, शिवायाञ्च स्त्री० ।

हिक कूजने भ्वादि० उभ० अक० सेट् । हिकति ते अहिकीत् अहिकिष्ट ।

हिक्क हिंसायां चुरा० आ० सक० सेट् । हिक्कयते अजिहिक्कत ।

हिक्का स्त्री० हिक्क-अ । रोगभेदे (हेचकी) ।

हिङ्गु न० हिमं गच्छति गम-डु नि० । (हिङ्) रामठदेशोद्भवे वृक्षे यस्य निर्यासो हिङ्गुद्रव्यम् ।

हिङ्गुनाडिका स्त्री० हिङ्गुनो नाडीव इवार्थे कन् ह्रस्वः । नाडीहिङ्गौ ।

हिङ्गुनिर्यास पु० हिङ्गुन इव निर्यासोऽस्य । निम्बवृक्षे । ६त० । हिङ्गुवृक्षनिर्यासे (हिङ्) ।

हिङ्गुपत्र पु० हिङ्गुन इव पत्रमस्य । इङ्गुदीवृक्षे । (हिङ्पत्र) वृक्षभेदे [स्त्री० ङीप् ।

हिङ्गुपर्णी स्त्री० हिङ्गुन इव पर्णमस्या ङीप् । वंशपत्र्याम् ।

हिङ्गुल पु० न० हिङ्गु तद्वर्णं लाति + क । रक्तवर्णे वर्णकद्रव्यभेदे, वार्त्ताक्यां, वृहत्याञ्च स्त्री० ङीप् ।

हिङ्गुलु पु० न० हिङ्गु, तद्वर्णं लाति ला-डु । (हिङ्गुल) वर्णकद्रव्ये

हिङ्गुशिराटिका स्त्री० हिङ्गुन इव शिरां पत्रशिरामटति अट ण्वुल् अत इत्वम् । वंशपत्र्याम् ।

हिङ्गूल न० हिङ्गुल + पृ० । मधुरमूले (आलु) ।

हिज्ज पु० हिनोति हि-क्विप् तथा सन् जायते जन-ड कर्म० । हिज्जलवृक्षे ।

हिज्जल पु० हि-क्विप् हित् हितकारि जलं यस्य । वृक्षभेदे (हिजल) ।

हिड गतौ भ्रमणे भ्वादि० आत्म० सक० सेट् इदित् । हिण्डते अहिण्डिष्ट ।

हिडिम्ब पु० राक्षसभेदे स हि भीमेन हतः । तद्भगिन्यां स्त्री० ।

हिडिम्बजित् पु० हिडिम्बं राक्षसभेदं जितवान् जि-क्विप् । भीमसेने हिडिम्बशत्रुप्रभृतयोऽप्यत्र ।

हिडिम्बापति पु० ६त० । भीमसेने ।

हिण्डन न० हिडि-ल्युट् । भ्रमणे, रमणे, लेखने, च ।

हिण्डि(ण्डी) पु० हिडि-इरन् ईरन् वा । समुद्रफेने, वार्त्ताकौ, पुरुषे, रुचके च ।

हित त्रि० धा-क्त हि-क्त वा । गते, पथ्ये, इष्टसाधने, मङ्गले च ।

हितकारिन् त्रि० हितं करोति कृ-णिनि । शुभकारके ।

हितैषिन् त्रि० हितमिच्छति इष-णिनि । हितेच्छाकारिणि ।

हितोपदेश पु० हितस्य इष्टसाधनस्य उपदेशः । हितार्थे उपदेशे, विष्णुशर्मकृते नीतिग्रन्थभेदे च ।

हिन्ताल पु० हीनस्तालो यस्मात् पृ० (हंताल) वृक्षे ।

हिन्दोल पु० हिल्लोल + घञ् पृ० । दोलने, श्रावणशुक्लपक्षविहितदोलनयन्त्रेण भगवतो दोलनरूपे उत्सवभेदे, रागभेदे च ।

हिम न० हि-मक् । आकाशच्युतजलकणे, शीतलस्पर्शे । तद्वति त्रि० । सूक्ष्मैलायां, रेणुकायां, भद्रमुस्तायाम्, नागरमुस्तायां, पृक्कायाञ्च स्त्री० । अग्रहायणपौषमासात्मके ऋतुभेदे, चन्दनवृक्षे, चन्द्रे, कर्पूरे च पु० ।

हिमक पु० हिममिव कायति कै-क । विकङ्कतवृक्षे ।

हिमकर पु० हिमः करः किरणो यस्य हिमं करोति निषेवणात् कृ-अच् । चन्द्रे, कर्पूरे च । हिमकिरणादयोऽप्यत्र ।

हिमगिरि पु० हिममयो गिरिः हिमप्रधानो वा गिरिः । हिमालयपर्वते । हिमपर्वतादयोऽप्यत्र ।

हिमतैल पु० हिमवीर्य्यं तैलम् । कर्पूरजाते तैले ।

हिमदुग्धा स्त्री० हिमवीर्य्यकरं दुग्धमस्याः । क्षीरिण्याम् ।

हिमदुर्दिन न० हिमहेतुकं दुर्दिनम् । हिमपातेन दुःखकरे दिने कुज्झटिकायुक्तदिने ।

हिमद्रुम पु० हिमप्रधाने जायमानः द्रुमः । निम्बवृक्षे ।

हिमप्रस्थ पु० हिमः शीतलः प्रस्थो यस्य । हिमालयपर्वते ।

हिमवत् पु० हिमानि प्राचुर्य्येण सन्ति अत्र मतुप् मस्य वः । हिमालयपर्वते ।

हिमवालुक पु० हिममयो वालुकेव अंशो यस्य । कर्पूरे ।

हिमसंहति स्त्री० ६त० । हिमसमूहे, हिमेन कृतसङ्घाते (वरफ) पदार्थे च । [वृक्षे ।

हिमहासक पु० हिमं हसति शीतवीर्य्यत्वात् ण्वुल् । हिन्ताल-

हिमांशु पु० हिमा अंशवोऽस्य । चन्द्रे, कर्पूरे च ।

हिमांश्वभिख्य न० हिमांशोरिवाभिख्या शोभा यस्य । रौप्ये तस्य अतिशुभ्रत्वात्तथात्वम् ।

हिमागम पु० हिमस्यागमो यत्र । हेमन्ते अग्रहायणपौषमासात्मके ऋतौ । [गङ्गायाञ्च ।

हिमाद्रिजा स्त्री० हिमाद्रौ जायते जन-ड । क्षीरिण्यां, पार्वत्यां

हिमाद्रितनया स्त्री० ६त० । दुर्गायाम् । हिमाद्रिसुतादयोऽप्यत्र ।

हिमानी स्त्री० हिमानां संहतिः हिम-ङीप् आनुक् च । हिमसमूहे "आगता वत जरेव हिमानी" इत्युद्भटः ।

हिमाराति पु० ६त० । सूर्य्ये, अर्कवृक्षे, वह्नौ, चित्रकवृक्षे च ।

हिमालय पु० हिमानामालयः । हिमवत्पर्वते । हिमप्रधाने आलयो यस्य । शुक्लखदिरे, भूम्यामलक्याञ्च ।

हिमाब्ज न० हिमकाले जायते जन-ड । उत्पले ।

हिमावती स्त्री० हिमं सेवने हिमवीर्य्यं विद्यतेऽस्य मतुप् मस्य वः संज्ञायां दीर्घः । स्वर्णक्षीर्य्याम् ।

हिमाश्रया स्त्री० हिमं हिमवीर्य्यमाश्रयति आ + श्रि-अच् । स्वर्णजीवन्त्याम् । [कपिलद्राक्षायाम् ।

हिमोत्तरा स्त्री० हिममुत्तरं यस्याः सेवने शीतवीर्य्यकरत्वात् ।

हिमोद्भवा स्त्री० हिमप्रधानस्थाने उद्भवति उद्-भू-अच् । शट्याम् ।

**हिरण** न० हृ-ल्युट् नि० । रेतसि, स्वर्णे, वराटके च ।

**हिरणमय** त्रि० हिरण्यात्मकम् मयट् नि० । हिरण्यात्मके स्त्रियां ङीप् । "हिरणमयी शाल्मलीव" इति भट्टिः । नववर्षमध्ये वर्षभेदे न० । आदित्यमण्डलस्थे परमब्रह्मणि "य एष हिरणमयः पुरुषो दृश्यते हिरण्याक्षः" इति छान्दोग्यम् ।

**हिरण्य** न० हिरणमेव स्वार्थे यत् । सुवर्णे, धुस्तूरे, रेतसि, द्रव्ये, वराटके, अक्षये, मानभेदे, अकुप्ये, रजते, धने च ।

**हिरण्यकशिपु** पु० दैत्यविशेषे । स तु कश्यपात् दित्यां जातः ।

**हिरण्यकशिपुहन्** पु० हन्-क्विप् ६त० । विष्णौ ।

**हिरण्यकामधेनु** स्त्री० विधानेन हिरण्यरचिता कामधेनुः । तुलादिषोडशमहादानमध्ये दानार्थं हिरण्येन कल्पितायां धेनौ, उपचारात् तद्दाने च ।

**हिरण्यगर्भ** पु० हिरण्यं स्वर्णमयाण्डं गर्भ उत्पत्तिस्थानमस्य । चतुर्मुखे ब्रह्मणि तस्य हेमाण्डप्रभवत्वात्तथात्वम् "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति मनुः । तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना कल्पिते हिरण्यगर्भे, उपचारात्तद्दाने, शालग्राममूर्त्तिभेदे च ।

**हिरण्यवाह(हु)** पु० हिरण्यं वाहयति प्रापयति भक्तान् हिरण्यवर्णो बाहुरिव तरङ्गो वा यस्य । महादेवे, शोणे नदभेदे च ।

**हिरण्यरेतस्** पु० हिरण्यं रेतो यस्य । वह्नौ, चित्रकवृक्षे च । स्वर्णस्य वह्निरेतोभवत्वं भारतादावुक्तम् ।

**हिरण्याक्ष** पु० कश्यपस्य पुत्रे दैत्यभेदे ।

**हिरण्याश्व** पु० हिरण्यनिर्मितोऽश्वः । तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिकल्पितेऽश्वे, तद्दाने च ।

**हिरण्याश्वरथ** पु० हिरण्येन निर्मितः अश्वः तद्युक्तरथश्च । तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना कल्पिते सुवर्णमयाश्वयुक्तरथे, तद्दाने च ।

**हिरुक्** अव्य० हि-उकिक् रुट् च । वर्जने त्यागे ।

**हिल** हावकरणे तुदा० पर० अक० सेट् । हेलति अहेलीत् ।

**हिलमोचि(ची)** स्त्री० हिल-क मुच-इनि कर्म० वा ङीप् । (हिलेञ्चा) शाके । स्वार्थे कन् तत्रैव । [अजिहिल्लोलत् त ।

**हिल्लोल** दोलने अद० चुरा० उभ० सक० सेट् । हिल्लोलयति ते

**हिल्लोल** पु० हिल्लोल-अच् । तरङ्गे । घञ् । दोलने ।

**हिव** प्रीणने भ्वादि० पर० सक० सेट् इदित् । हिन्वति अहिन्वीत् ।

**हिवुक** न० हिवि+उकक् नि० । ज्योतिषोक्ते लग्नाच्चतुर्थे स्थाने ।

**हिस** वधे वा चुरा० उभ० पक्षे रुधा० पर० सक० सेट् इदित् । हिनस्ति हिंसयति ते अहिंसीत् अजिहिंसत् त ।

**ही** अव्य० हि-डी । विस्मये, दुःखे, विषादे, शोके च । वीप्सायां द्वित्वम् । विषादाद्यतिशये । [व्यवहारे प्रतिवादिभेदे पु० ।

**हीन** त्रि० पु० हा+क्त तस्य नः ईत्वम् । ऊने, निन्द्ये, अधमे च ।

**हीनवादिन्** पु० कर्म० । "पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः । वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः" इति स्मृत्युक्ते व्यवहारे वादिभेदे ।

**हीनाङ्ग** त्रि० हीनमङ्गं यस्य । स्वभावतो न्यूनाङ्गवति "हीनाङ्गं विकलाङ्गं च" इति स्मृतिः । स्त्रियां वा ङीप् ङीबन्तः । क्षुद्रपिप्पल्याञ्च ।

**हीन्ताल** पु० हीनस्तालो यस्मात् ५ब० । हिन्तालवृक्षे (हेताल) ।

**हीर** न० हृ-क नि० । वज्रे, हीरके च । शिवे, सर्पे, हारे, सिंहे च पु० । लक्ष्म्याम्, पिपीलिकायां, काश्मीर्य्याञ्च स्त्री० । स्वार्थे कन् । (हीरा) मणिभेदे ।

**हीराङ्ग** पु० हीरमिव दृढमङ्गमस्य । इन्द्रस्य वज्रे ।

**हील** न० ही-विस्मयं लाति ला-क । रेतसि ।

**हु** होमे, अदने च जुहो० पर० सक० अनिट् । जुहोति अहौषीत् ।

**हुङ्कार** पु० हुमित्यव्यक्तस्य कारः कृ-घञ् उप० । हुमित्यव्यक्तस्य प्रतिषेधसूचकशब्दस्योच्चारणे । "मौनव्रतं महाकष्टं हुङ्कारेणापि नश्यति" इति पुराणम् ।

**हुड** राशीकरणे सक० मज्जने संघाते च अक० तुदा० कुटा० पर० सेट् । हुडति अहुडीत् जुहोड ।

**हुड** राशीकरणे भ्वादि० आत्म० सक० सेट् इदित् । हुण्डते अहुण्डिष्ट । [अहोडिष्ट ।

**हुड** गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः । होडति ।

**हुड** पु० हुड-क । मेषे, चौरनिवारणार्थं भूमौ निखाते लौहकीलके च ।

**हुत** त्रि० हु-क्त । देवोद्देशेन मन्त्रद्वाराऽग्नौ प्रक्षिप्ते घृतादौ । भावे क्त । होमे न० । [चित्रकवृक्षे च ।

**हुतभुज्** पु० हुतं मन्त्रेण प्रक्षिप्तं घृतादि भुङ्क्ते भुज-क्विप् । अग्नौ,

**हुतवह** पु० हुतं घृतादिकं वहति प्रापयति देवान् प्रीत्यर्थम् । वह-अच् । अग्नौ, चित्रकवृक्षे च ।

**हुताश** पु० हुतमश्नाति अश-अण् । वह्नौ, चित्रकवृक्षे च । ल्यु । हुताशनोऽप्यत्र । स च कर्मविशेषविहितवह्नौ च ।

**हुति** स्त्री० हु-क्तिन् । होमे । [हुङ्कृत्य तुङ्कृत्य" इति स्मृतिः ।

**हुम्** अव्य० हु-डुमि । स्मरणे, प्रश्ने, अनुज्ञायां च । निवारणे, "गुरुं

**हुर्च्छ** कौटिल्ये भ्वादि० पर० सक० सेट् । हूर्च्छति अहूर्च्छीत् । ह्रस्वपाठवशात् हुर्च्छतीत्येवेत्यन्ये । [अहोलीत् ।

**हुल** हतौ संवरणे च भ्वादि० पर० सक० सेट् ज्वला० । होलति

**हुलहुली** स्त्री० हुल-क आभीक्ष्ण्ये द्वित्वं ङीप् । स्त्रीणां मङ्गलध्वनिभेदे (उलुउलु) ।

**हुहु(हू)** ह्वे-डु नि० । गन्धर्वभेदे । पृषो० हूहूरित्यप्यत्र ।

**हूङ्कार** पु० हुम्+कृ-घञ् । अवज्ञाहेतुके शब्दभेदे "हूङ्कारेणैव तं भस्म सा चकाराम्बिका ततः" इति चण्डी । [अहूडिष्ट ।

**हूड** गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः । हूडते

**हूत** त्रि० ह्वे-क्त सम्प्रसारणम् । आहूते कृताह्वाने ।

हूति स्त्री० ह्वे-क्तिन् सम्प्रसारणम् । आह्वाने ।

हून पु० ह्वे-नक् सम्प्रसारणं च । म्लेच्छजातिभेदे, तद्वासस्थानदेशभेदे च "हूनवङ्गखसेष्वेव नान्यदेशे कदाचन" इति ज्योतिषम् । तत्र प्रचलिते स्वर्णमुद्राभेदे इत्यन्ये ।

हूम अव्य० हु-डूम् । प्रश्ने, वितर्के, सम्मतौ, क्रोधे, भये, निन्दायाम्, अवज्ञायाञ्च ।

हूर्च्छन न० हुर्च्छ-ल्युट् । कौटिल्ये ।

हृ हरणे भ्वादि० उभ० द्विक० अनिट् । हरति ते अहार्षीत् अहृत ।

हृ बलात्कारहरणे जु० पर सक० अनिट् वैदिकः । जहर्त्ति अहार्षीत् ।

हृच्छय पु० हृदि शेते शी-अच् । कामदेवे । हृदयशायिनि त्रि० ।

हृच्छूल न० ६त० । शूलरोगभेदे । [ वीरवती" इति भट्टिः ।

हृणी कण्ड्वा० आत्म० सक० सेट् । हृणीयते अहृणीयत "हृणीयते

हृणीया स्त्री० हृणीय-अ । निन्दायाम् ।

हृत्कम्प पु० ६त० । भयादिहेतुके हृदयकम्पे ।

हृत त्रि० हृ-क्त । अपहृते, स्थानान्तरं गमिते च ।

हृत् त्रि० हृ-क्विप् तुक् च । हारिणि । पृषो० तस्य दः, हृदयस्य हृदादेशो वा । हृदये, मानसे च न० ।

हृदय न० हृ+कयन् दुक् च । मनसि, वक्षसि च । हृत् एति इण् अच् । परब्रह्मणि "हृद्ययं तस्माद्धृदयम्" इति श्रुतिः ।

हृदयग्रन्थि पु० हृदयस्य ग्रन्थिः । अविद्यासम्बन्धरूपे संसारबन्धे "भिद्यते हृदयग्रन्थिः" इति भागवतम् ।

हृदयङ्गम न० हृदयं गच्छति गम-खच् मुम् च । युक्तियुक्ते वाक्ये । मनोहरे त्रि० "हृदयङ्गममूर्त्तिस्त्वम्" इति भट्टिः ।

हृदयस्थान न० हृदयस्य मनसः स्थानं हृदयरूपं वा स्थानम् । वक्षःस्थले । [ तत्रैव ।

हृदयिक त्रि० हृदयं प्रशस्तमनोऽस्त्यस्य ठन् । प्रशस्तचित्ते । इनि

हृदयेश पु० ६त० । भर्त्तरि । [ रोमसंघे ।

हृदावर्त्त पु० हृदिस्थ आवर्त्तः । अश्वस्य हृदयस्थे आवर्त्ताकारे

हृदिका स्त्री० द्रोणश्यालकस्य कृपाचार्य्यस्य मातरि ।

हृदिकासुत पु० ६त० । द्रोणश्यालके कृपाचार्य्ये ।

हृदिस्पृश् त्रि० हृदि हृदये स्पृश्यतेऽसौ कर्मणि क्विन् अलुक् स० । हृद्ये मनोज्ञे । कर्त्तरि क्विन् । मर्मस्पृशि, दुःखदे च ।

हृद्गोल पु० पर्वतभेदे ।

हृद्य न० हृदि स्पृश्यते मनोज्ञत्वात् हृद्+यत् । गुडत्वचि ( दारचिनि ) । मनोज्ञे त्रि० । वृद्धिनामौषधौ स्त्री० ।

हृद्यगन्ध न० हृद्यो गन्धोऽस्य । क्षुद्रजीरके । बिल्ववृक्षे पु० । जात्यां स्त्री० । इत् समा० । हृद्यगन्धीत्यपि । क्षुद्रजीरके न० ।

हृद्रोग पु० ६त० । हृदयस्य रोगभेदे, कामे च ।

हृद्रोगवैरिन् पु० ६त० । अर्जुनवृक्षे ।

हृद्वण्टक पु० ६त० । हृदयस्य विभाजके, जठरे ।

हृल्लास पु० हृदयस्य लासो यत्र हृदादेशः । हिक्कारोगे तेन हि हृदयस्य स्फूर्त्तिरिव भवति ।

हृल्लेख पु० हृदयं लिखति स्पृशति लिख-अ हृदादेशः । ज्ञाने, तर्के, तन्त्रोक्ते मन्त्रभेदे च । औत्सुक्ये स्त्री० ।

हृष चित्तोत्साहे भ्वादि० पर० अक० सेट् । हर्षति अहर्षीत् ।

हृष हर्षे चित्तोत्साहे, दिवा० पर० अक० सेट् । हृष्यति अहृषत् अहर्षीत् ।

हृष मिथ्याकरणे भ्वादि० पर० सक० सेट् क्त्वा वेट् । हर्षति अहर्षीत् ।

हृषित त्रि० हृष-क्त वा इट् । प्रीते, विस्मिते, प्रहते, प्रणते, वर्मिते, जातरोमाञ्चे च ।

हृषीक न० हृष-ईकक् । विषयग्राहके चक्षुरादौ इन्द्रिये ।

हृषीकेश पु० ६त० । विष्णौ "अन्तर्यामिब्राह्मणे तस्य सर्वनियन्तृत्वोक्तेः सर्वेन्द्रियप्रवर्त्तकत्वादीशत्वम् । [ हते च ।

हृष्ट त्रि० हृष-क्त । प्रीते, जातहर्षे, जातरोमाञ्चे, विस्मिते, प्रति-

हृष्टमानस त्रि० हृष्टं प्रीतं मानसमस्य । हृष्टचित्ते ।

हृष्टरोमन् त्रि० हृष्टमिव जाताङ्कुरं रोम यस्य । जातरोमाञ्चे, पुलकिते ।

हृष्टि स्त्री० हृष-क्तिन् । आनन्दे, हर्षे, ज्ञाने च ।

हे अव्य० हा-डे । सम्बोधने, आह्वाने, असूयादौ च ।

हेठ विघाते भ्वादि० पर० सक० सेट् । हेठति अहेठीत् ।

हेठ भूतौ उत्पत्तौ च अक० पवित्रीकरणे सक० तुदा० पर० सेट् । हेठति अहेठीत् । [ अहेठिष्ट ।

हेठ बाधने भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः । हेठते

हेठ पु० हेठ-घञ् । बाधायाम्, विघाते च । [ अहेडिष्ट ।

हेड अनादरे भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः । हेडते

हेड वेष्टने भ्वादि० पर० सक० घटा० । हेडति अहेडीत् ।

हेति स्त्री० हन-करणे क्तिन् नि० । अस्त्रे, अग्निशिखायां, सूर्य्यकिरणे, तेजोमात्रे, साधने च ।

हेतु पु० हि-तुन् । कारणे, अनुमितिसाधने व्याप्ये फले च ।

हेतुता स्त्री० हेतोर्भावः तल् । हेतुत्वे, कार्य्यान्यवहितपूर्वक्षणे नियतकार्य्याधिकरणवृत्तित्वरूपे कारणत्वे, सङ्गतिविशेषे च "हेतुतावसरस्तथा" इति प्राञ्चः ।

हेतुमत् त्रि० हेतुरस्त्यस्य मतुप् । कार्य्ये । स्त्रियां ङीप् ।

हेत्वाभास पु० हेतुरिव आभासते आ+भास-अच् हेतोर्वा आभासः आ+भास-घञ् । दुष्टे हेतौ, हेतुदोषे च । स च दोषः पञ्चविधः—व्यभिचारः, विरुद्धता, असिद्धिः, सत्प्रतिपक्षता, बाधश्च । तादृशदोषेषु सत्सु अनुमितिर्नोदेति एतल्लक्षणोदाहरणादिकं वाचस्पत्ये । [ वर्णाश्वे, बुधे च पु० ।

हेम न० हि+मन् । स्वर्णे, धुस्तूरे, माषकपरिमाणे च । कृष्ण-

हेमकन्दल पु० हेमवर्णं कन्दं लाति ला+क । प्रवाले ।

हेमकान्ति स्त्री० हेम्न इव कान्तिरस्याः । दारुहरिद्रायाम् । स्वर्णतुल्यद्युतियुक्ते त्रि० । ६त० । स्वर्णस्य दीप्तौ स्त्री० ।

हेमकार पु० हेम तन्मयं भूषणं करोति कृ-अण् । स्वर्णकारे । वर्णसङ्करभेदे ( सेकरा ) ।

**हेमकिञ्जल्क** न० हेमेव पीतं किञ्जल्कं यस्य । नागकेशरे ।
**हेमकूट** पु० हेममयः कूटो यस्य । किंपुरुषवर्षस्थे पर्वतभेदे ।
**हेमकेतकी** स्त्री० हेमवर्णा केतकी । स्वर्णकेतक्याम् ।
**हेमक्षीरी** स्त्री० हेम इव पीतं क्षीरं यस्याः । स्वर्णक्षीर्य्याम् ।
**हेमगन्धिनी** । स्त्री० हेम्नः नागकेशरस्येव गन्धोऽस्त्यस्याः इनि ङीप् । रेणुकाख्ये गन्धद्रव्ये ।
**हेमगौर** पु० हेमेव गौरः पीतः । अशोकवृक्षे । स्वर्णतुल्यपीते त्रि० ।
**हेमतार** न० हेमं तारयति उत्कृष्टं करोति तॄ + णिच्-अण् । तुत्थे ।
**हेमदुग्धक** पु० हेमवर्णं दुग्धं निर्यासोऽस्य कप् । उडुम्बरे । स्वर्णक्षीर्य्यां स्त्री० वा ङीपि अत इत्वम् ।
**हेमदुग्धिन्** पु० हेमवर्णं दुग्धं निर्यासोऽस्त्यस्य इनि । उडुम्बरे ।
**हेमन्** न० हि-मनिन् । स्वर्ण-धातौ, धुस्तूरे, नागकेशरे, हिमे च ।
**हेमन्त** पु० न० । हि-झ मुट् च । अग्रहायणपौषमासात्मके ऋतौ ।
**हेमन्तनाथ** पु० हेमन्ते नाथ्यते याच्यते नाथ-कर्मणि घञ् । कपित्थे । [ स्वार्थे-कन् । तत्र, लोध्रे च ।
**हेमपुष्प** न० हेमवर्णं पुष्पमस्य । अशोकवृक्षे । चम्पकवृक्षे पु० ।
**हेमपुष्पी** स्त्री० हेमवर्णं पुष्पमस्याः ङीप् । मञ्जिष्ठायाम्, स्वर्णजीवन्त्याम्, इन्द्रवारुण्याम्, मुषल्याम्, कण्टकार्य्यांञ्च । संज्ञायां कन् ह्रस्वः । स्वर्णयूथिकायाम् स्त्री० ।
**हेमफला** स्त्री० हेमवर्णं फलमस्याः । स्वर्णकदल्याम् (चांपाकला) ।
**हेममालिन्** पु० हेमेव किरणानां मालास्त्यस्य इनि । सूर्य्ये ।
**हेमयूथिका** स्त्री० हेमवर्णा यूथिका । स्वर्णयूथिकायाम् ।
**हेमरागिणी** स्त्री० हेम्न इव रागोऽस्त्यस्या इनि ङीप् । हरिद्रायाम् ।
**हेमलता** स्त्री० हेमवर्णा लता । स्वर्णजीवन्त्याम् ।
**हेमशिखा** स्त्री० हेमवर्णा शिखा यस्याः । स्वर्णक्षीर्य्याम् ।
**हेमसार** न० हेम सारयति निर्मलीकरोति सृ-अण् । तुत्थे ।
**हेमहस्तिरथ** पु० हेमनिर्मितहस्तियुक्तो रथः । तुलापुरुषादिषोडशमहादानमध्ये दानार्थं कल्पिते स्वर्णमयहस्तियुक्ते रथे, तद्दाने च ।
**हेमाङ्ग** पु० हेमेव पीतमङ्गं यस्य । गरुडे, सिंहे, सुमेरौ, ब्रह्मणि, चम्पकवृक्षे, विष्णौ च । स्वर्णवर्णाङ्गयुक्ते त्रि० । हेमतुल्येऽङ्गे न० ।
**हेमाद्रि** पु० हेममयोऽद्रिः । सुमेरौ पर्वते । [ मर्दनयोग्ये त्रि० ।
**हेमाद्रिजरण** पु० हेमाद्रौ जीर्य्यति जॄ-ल्यु । स्वर्णक्षीर्य्याम् । हेम-
**हेय** त्रि० हा-यत् । त्याज्ये ।
**हेर** न० हि-रन् । हरिद्रायाम्, मुकुटभेदे च ।
**हेरम्ब** पु० हे शिवे रम्बति रबि-अच् अलुक् समा० । गणेशे ।
**हेरम्बजननी** स्त्री० ६त० । दुर्गायाम् । [ चिकायाम् ।
**हेलञ्चा** स्त्री० हिल-घञ् हेलं चिनोति चि-ड टाप् पृ० । हिलमो-
**हेलन** न० हिल-ल्युट् । अवज्ञायाम् ।
**हेला** स्त्री० हेड-अनादरे भावे अ डस्य लः । स्त्रीणां शृङ्गारभावजे "प्रौढेच्छा याऽतिरूढानां नारीणां सुरतोत्सवे । शृङ्गारशास्त्रतत्त्वज्ञैः हेला सा परिकीर्त्तिता" इत्युक्तचेष्टाविशेषे ।
**हेलि** पु० हिल-इन् । सूर्य्ये, अर्कवृक्षे च । णिनि । हेलीत्यप्यत्र ।

**हेष** अश्वशब्दे भ्वादि० आत्म० अक० सेट् चङि न ह्रस्वः । हेषते अहेषिष्ट ।
**हेषा** स्त्री० हेष-अ । घोटकानां शब्दे ।
**हेहै** अव्य० हे च है च द्व० । सम्बोधने ।
**है** अव्य० हा-कै । सम्बोधने, आह्वाने च ।
**हैतुक** त्रि० हेतौ प्रसृतः ठण् । हेतुवादरते, सयुक्तिकवाक्यवादिनि "त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्मपाठकः" इति स्मृतिः ।
**हैम** त्रि० हिमे भवं अण् । हिमजातमात्रे । भूनिम्बे पु० । हेम्नो विकारः अण् टिलोपः । स्वर्णविकारे स्वर्णमयपदार्थे ।
**हैमन** पु० हेमन्त एव हेमन्ते भवो वा अण् तलोपः । हेमन्ते काले । तत्र जाते त्रि० ।
**हैमवत** न० हिमवतोऽदूरभवो देशः तस्येदं वा अण् । भारतवर्षभेदे । *हिमालयसम्बन्धिनि त्रि० । विषभेदे पु० । तस्यापत्यं* तत्र भवो वा अण् । पार्वत्यां, हरीतक्यां, स्वर्णक्षीर्य्याम्, श्वेतवचायाञ्च स्त्री० ङीप् । [ कायाम् ।
**हैमा(मी)** स्त्री० हैमं तद्वर्णोऽस्त्यस्य अण् वा ङीप् स्वर्णयूथि-
**हैयङ्गवीन** न० ह्योगोदोहाद्भवम् ह्यस् + गो + ख नि० । नवनीते, पूर्वदिनदुग्धोद्भवे सद्योजाते घृते च ।
**हैहय** पु० देशविशेषे । तेषां राजा अण् । हैहयेश्वरे कार्त्तवीर्य्ये ।
**हो** अव्य० हे-डो नि० । सम्बोधने । [ होडते अहोडिष्ट ।
**होड** गतौ अनादरे च भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः ।
**होड** पु० होड-अच् । हुड-अच् वा । समुद्रगामिनौकाभेदे (हुडि), चौरचिह्ने च ।
**होतृ** पु० हु + तृच् । ऋग्वेदाभिज्ञे । होमकर्त्तरि त्रि० । स्त्रियां ङीप् "या हविर्या च होत्री" इति शकुन्तला ।
**होत्र** न० हु-ष्ट्रन् । होमे, हविषि, घृतादौ च । स्तुतौ स्त्री० टाप् ।
**होत्रिन्** पु० होत्रं होमोऽस्त्यस्य इनि । होमकर्त्तरि ।
**होत्रीय** न० होत्राय हितं होतुरिदं वा छ । हविर्गृहे । होतृसम्बन्धिनि त्रि० ।
**होम** पु० हु-मन् । देवतोद्देशेन वह्नौ घृतादित्यागरूपे हवने नित्यं गृहस्थकर्त्तव्येषु पञ्चसु यज्ञेषु मध्ये देवयज्ञे, श्राद्धीयविप्रपाणौ श्राद्धीयाग्रभागस्य मन्त्रेण दाने च ।
**होमकुण्ड** न० होमार्थं कुण्डम् । होमार्थे कुण्डे ।
**होमधान्य** न० होमोपयुक्तं धान्यम् । तिले, यवे च ।
**होमधूम** पु० होमजः धूमः । होमार्थाग्निजाते धूमे ।
**होमभस्मन्** न० होमजं भस्म । हुतद्रव्यजाते भस्मनि ।
**होमिन्** पु० होमोऽस्त्यस्य इनि । होमकर्त्तरि ।
**होम्य** त्रि० होमाय हितं यत् । होमोपयुक्ते घृतादौ ।
**होरा** स्त्री० हु-रन् । ज्योतिषोक्ते लग्ने, राश्यर्द्धभागे, होराज्ञापकशास्त्रभेदे, रेखायाञ्च ।
**होलका** स्त्री० हु-विच् लकति लक-अच् कर्म० । "अर्द्धपक्वे शमीधान्यैः स्तृणभ्रष्टैश्च होलका" इत्युक्ते तृणादिना अर्द्धपक्वे शमीधान्ये ।

हौलाका स्त्री० हु-क्विप् लक-घञ्। वसन्तोत्सवभेदे, "हौलाका कर्त्तव्येति, कल्पश्रुतिः" इति दायभागः।

ह्वौ अव्य० ह्वे + डौ नि०। सम्बोधने, आह्वाने च।

हौड अनादरे गतौ च भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः। हौडते अहौडिष्ट।

ह्नु चौर्य्ये अदा० आत्म० सक० अनिट्। ह्नुते अह्नोष्ट।

ह्मल चलने भ्वादि० पर० अक० सेट् घटा०। ह्मलति अह्मालीत्। प्रह्मलयति अनुपसर्गस्य वा ह्रस्वः।

ह्यस् अव्य० गतेऽहनि नि०। गतदिवसे।

ह्यस्तन त्रि० ह्यस् + भवार्थे ट्युल्तुट् च। गतदिवसभवे। त्यप्। ह्यस्त्योऽप्यत्र त्रि०। [ ह्रगति अह्रगीत्।

ह्रग संवरणे भ्वादि० पर० सक० सेट् घटा० सिचि न वृद्धिः।

ह्रद पु० ह्राद-अच् नि०। अगाधजलाशये।

ह्रदिनी स्त्री० ह्रदोऽस्त्यस्याम् इनि। नद्याम्।

ह्रप भाषणे चुरा० उभ० सक० सेट्। ह्रापयति ते अजिह्रपत् त।

ह्रस रवे भ्वादि० पर० सक० सेट्। ह्रसति अह्रसीत् अह्रासीत्।

ह्रसिष्ठ त्रि० अतिशयेन ह्रस्वः इष्ठन् ह्रसादेशः। अतिह्रस्वे।

ह्रसिमन् पु० ह्रस्वस्य भावः इमनिच् ह्रसादेशः। ह्रस्वतायाम्।

ह्रसीयस् त्रि० अतिशयेन ह्रस्वः ईयसु ह्रसादेशः। अतिह्रस्वे। स्त्रियां ङीप्। [ मात्राकालोच्चार्य्ये लघुवर्णे पु०।

ह्रस्व न० ह्रस-वन्। परिमाणभेदे। तद्वति, खर्वे च त्रि०। एक-

ह्रस्वकुश पु० कर्म०। श्वेतकुशे। ह्रस्वदर्भादयोऽप्यत्र।

ह्रस्वगर्भ पु० ह्रस्वो गर्भो यस्य। कुशे।

ह्रस्वगवेधुका स्त्री० कर्म०। नागवलायाम्।

ह्रस्वजम्बू स्त्री० कर्म०। क्षुद्रजम्बूवृक्षे।

ह्रस्वदा स्त्री० ह्रस्वैरपि दीयते छिद्यते दो-क। शल्लक्याम्।

ह्रस्वपत्रक पु० ह्रस्वं पत्रमस्य कप्। नगजमधूके (मौल)। अश्वत्थ्याम् स्त्री० टाप् अत इत्त्वम्।

ह्रस्वफला स्त्री० ह्रस्वं फलमस्याः। भूमिजम्बूवृक्षे।

ह्रस्वमूल पु० ह्रस्वं मूलमस्य। रक्तेक्षौ।

ह्रस्वाग्नि पु० ह्रस्वः अग्निरस्मात् ५त०। अर्कवृक्षे।

ह्रस्वाङ्ग पु० ह्रस्वमङ्गमस्मात् ५ब०। जीवकौषधे। ६ब०। वामने, खर्वे त्रि०। कर्म०। ह्रस्वे अङ्गे न०।

ह्राद स्वने भ्वादि० आत्म० अक० सेट्। ह्रादते अह्रादिष्ट।

ह्राद पु० ह्राद-घञ्। शब्दे। अच्। हिरण्यकशिपुपुत्रभेदे पु०। शब्दकारके त्रि०।

ह्रादिनी स्त्री० ह्राद + णिनि-ङीप्। विद्युति, वज्रे, नद्याम्, शल्लक्याञ्च। ह्रादविशिष्टे त्रि०।

ह्रास पु० ह्रस-घञ्। शब्दे, अपचये च। [ यिष्ट।

ह्रिणी लज्जायां,कण्ड्वा० आत्म० अक० सेट्। ह्रिणीयते अह्रिणी-

ह्रिणीया स्त्री० ह्रिणी-यक्-अ। लज्जायाम्।

ह्री लज्जायां जु० पर० अक० अनिट्। जिह्रेति अह्रैषीत्।

ह्री स्त्री० ह्री-क्विप्। लज्जायाम्।

ह्रीच्छ लज्जायां भ्वादि० पर० अक० सेट्। ह्रीच्छति अह्रीच्छीत्।

ह्रीजित त्रि० ३त०। लज्जाशीले।

ह्री(त)ण त्रि० ह्री-क्त वा तस्य नः। लज्जिते।

ह्रीवेर(ल) न० ह्रिये लज्जायै वेरमङ्गमस्य क्षुद्रत्वात् पृ० वा रस्य लः। (वाला) क्षुपभेदे। [ अह्रोडिष्ट।

ह्रुड गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः। ह्रोडते

ह्रूड गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः। ह्रूडति अह्रूडिष्ट। [ अह्रेपिष्ट।

ह्रेप गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः। ह्रेपते

ह्रेष सर्पणे भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः। ह्रेषते अह्रेषिष्ट। [ अह्रेषिष्ट।

ह्लेष सर्पणे भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः। ह्लेषते

ह्लेषा स्त्री० ह्लेष-अ। अश्वशब्दभेदे।

ह्लौड गतौ भ्वादि० आत्म० सक० सेट् चङि न ह्रस्वः। ह्लौडते अह्लौडिष्ट। [ ह्लगति अह्लगीत्।

ह्लग संवरणे भ्वादि० पर० सक० सेट् घटा० सिचि न वृद्धिः।

ह्लप भाषणे चुरा० उभ० द्विक० सेट्। ह्लापयति ते अजिह्लपत् त।

ह्लस रवे भ्वादि० पर० अक० सेट्। ह्लसति अह्लसीत् अह्लासीत्।

ह्लाद शब्दे भ्वादि० आत्म० अक० मोदने सक० सेट् निष्ठायामनिट्। ह्लादते अह्लादिष्ट।

ह्लाद पु० ह्लद + घञ्। आह्लादे, आनन्दे, सन्तोषे च।

ह्लादिनी स्त्री० ह्लाद-णिनि-ङीप्। विद्युति, वज्रे, ईश्वरशक्तिभेदे च। ह्लादविशिष्टे त्रि०।

ह्वल चलने भ्वादि० पर० अक० सेट् घटा०। ह्वलति अह्वालीत्। प्रह्वलयति अनुपसर्गस्य वा ह्रस्वः ह्वलयति ह्वालयति।

ह्वान ह्वे-ल्युट्। आह्वाने।

ह्वृ कुटिलीकरणे भ्वादि० पर० सक० अनिट्। ह्वरति अह्वार्षीत्।

ह्वे स्पर्द्धायां शब्दे च अक० आह्वानार्थे सक० भ्वादि० उभ० यजा० अनिट्। ह्वयति अह्वत्-अह्वत अह्वास्त।

ये शब्दाम्बुधिपारमापुरमलप्रज्ञातरीवैभवात् तानुद्दिश्य नमस्क्रियैव सततं तेभ्यो न चैषा क्रिया।
ये शास्त्रेऽकृतबुद्धयो निजधिया व्युत्पित्सवो मानवा नानाकोषनिरीक्षणे श्रमभियस्तेभ्यो मयैषा क्रिया॥
शब्दरत्नमयः कोषो मोषदोषमयोज्झितः। नानार्थोऽव्ययरूपाद्यो बहुधातुर्जयत्ययम्॥
पदानुशासने रतं मुनित्रयं हृदानतम्। अमुष्य भूमिमण्डले करोतु सुप्रचारणम्॥

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलितः शब्दस्तोममहानिधिः समाप्तः।